## ज्योतिःसारसागरे

विवाहे वर्जनीयाः पञ्च दोषाः

[1]पञ्च पाणिग्रहे दोषा वर्जनीयाः प्रयत्नतः ।
मृत्युः पौंश्चल्यवैधव्ये दारिद्र्यमनपत्यता ॥

## अनिर्दिष्टकर्तृकवचनानि

प्रश्नकरणप्रकारः, शुभाशुभग्रहयोगाः,
क्षुतानि शुभाशुभानि

[2]ज्योतिर्विदं समभ्यर्च्य नक्षत्रे वाऽथ नामनी ।
निवेद्य कन्यावरयोः परिपृच्छेत योग्यताम् ॥
[3]व्ययेशो यदि लग्नस्थो लग्नेशो व्ययगो भवेत् ।
तदा विवाहपृच्छायां विवाहो भवति ध्रुवम् ॥

लग्ने स्थिरे पापयुते नृनार्यो-
रुद्वाहसिद्धिर्न भवेत्कदाचित् ।
जीवेन दृष्टोऽथ शशी त्रिपञ्च-
सप्तायखस्थः कुरुते विवाहम् ॥

चन्द्रो लग्नपतिर्वाऽपि कन्यालाभाय कामगः ।
द्यूनपो लग्नगः शीघ्रं कन्यालाभाय जायते ॥
युग्मलग्नेऽब्जशुक्राभ्यां कन्याप्तिस्तद्युतेक्षिते ।
तथा वराप्तिः पुंलग्ने पुंग्रहैर्वोजगेऽर्कजे (?) ॥

[4]पृच्छाविलग्ने यदि राशिसंस्थे
दाक्षायणीशे मरणं वरस्य ।
वर्षेऽष्टमे स्यादथ लग्नगेऽब्जे
धरासुते सप्तमगे च शीघ्रम् ॥
क्षीणेन्दुभौमार्किदिवाकराणा-
मेकोऽपि लग्ने मरणाय खेटः ।
भवेद्ध्रुवं वत्सरपञ्चकेन
क्रूरग्रहे सप्तमगे वरस्य ॥

(१) चका. ७९८ (=) (पञ्च पाणिग्रहे दोषान्वर्जये-दैवचिन्तकः । दारिद्र्यं मृत्युवैधव्यं पौंश्चल्यमनपत्यताम् ॥ ); मपा. १६७ उत्तरार्धे (दारिद्र्यं मरणं व्याधिः पुंश्चल्यमन-पत्यता । ); विसौ. ५२ (=).
(२) संग. १९३.
(३) ज्योनि. १३९.
(४) ज्योनि. १४०.

[1]लग्नादिन्दुस्तृतीयास्तपञ्चकर्मायगो यदि ।
गुरुणा वीक्षितस्तर्हि भवेत्संबन्धकारकः ॥

तुलावृषकुलीरेषु संयुतेष्वीक्षितेषु च ।
निशानायकशुक्राभ्यां कन्यालाभो भवेद्ध्रुवम् ॥

व्ययेशो यदि लग्नस्थो लग्नेशो व्ययगो भवेत् ।
तदा विवाहकर्ता स्याद्दूराग्निर्विषमे शनौ ॥

यदि लग्नगतश्चन्द्रस्तस्मात्सप्तमगः कुजः ।
मासेऽष्टमे व्यतीते तु भवेन्मृत्युर्वरस्य च ॥

आयुर्लग्ने सुते पुत्रान् द्यूने वित्तं गुरुर्बुधः ।
ददातीह विवाहोक्तं योज्यं स्त्रीजातकोदितम् ॥

[2]स्वर्क्षं स्वलग्नं च तयोश्च नाथौ
तयोस्त्रिषष्ठायगृहं यदि स्यात् ।
नवांशकं वा स्वगृहं नृभं वा
प्रश्नोदये स्यात्कुशलं तदानीम् ॥

त्रिपञ्चायदशास्तेषु प्रश्नलग्नान्निशाकरः ।
संपत्करस्तु दम्पत्योर्गुरुणा यदि दृश्यते ॥

प्रश्नोदयाच्छशधरः परिणेतुरेव
वर्षेऽष्टमे निधनदो निधनारिसंस्थः ।
वर्षेषु सप्तसु यदोदयगौ च पापौ
मासाष्टके शनिकुजावुदयास्तसंस्थौ ॥

जामित्रसंस्थे म्रियते महीजे
प्रजाविहीना कुलटा च सूर्ये ।
सुरारिपूज्ये रजनीकरे वा
कन्याऽन्यरक्ता पतिघातिनी च ॥

[3]निषिद्धमग्रेक्षणदक्षिणे च (?)
धनक्षयं दक्षिणकर्णदेशे ।
तत्पृष्ठभागे कुरुतेऽभिवृद्धिं
क्षुतं कृकाट्यां शुभमामनन्ति ॥

(१) ज्योनि. ३०३–३०४.
(२) निप. २८२.
(३) विसौ. ४.

भोगाय वामश्रवणस्य पृष्ठे
कर्णे च वामे कथितं नयाय ।
सर्वार्थलाभाय च वामनेत्रे
जातं क्षुतं स्यात्क्रमशोऽष्टदिक्षु ॥
औषधे वाहनारोहे वसने शयनेऽशने ।
विद्यारम्भे बीजवापे क्षुतं शुभकरं भवेत् ॥
वरस्य कन्यावरणोद्यतस्य
कुमारिकायाः पतिमर्थयन्त्याः ॥
[1]आसने शयने दाने भोजने वस्त्रसंग्रहे ।
विवादे च विवाहे च क्षुतं सप्तसु शोभनम् ॥

(१) उत. १४१; संत. ८८६.

# कूटविचारः

## कूटगणना

### वसिष्ठः

[1]ज्ञातव्याश्चाष्टादश वर्गाः सम्यक्सदैव विदा ॥

[2]वर्गा दिनं गणमहेन्द्रवधूविदूर-
योन्याख्यराशितदधीशविवश्यनाड्यः ।
वेधाख्यभूतबहुलिङ्गविजातिगोत्र-
पक्ष्याययोगिनिसुधांशुयुजो दशाष्टौ ॥

[3]माहेन्द्रं गणकूटं च दिनकूटं च योनिजम् ।
स्त्रीदीर्घं रज्जुकूटं च वश्यं वर्णाख्यकूटकम् ॥
राशिराश्यधिपाख्ये च
वेधो नाड्यर्क्ष- ( ? ड्याख्य- )कूटकम् ।
भूतलिङ्गाख्यकूटं( ? टे ) च
जात्याख्यं पक्षिकूटकम् ॥
योगिनीगोत्रकूटे च कूटान्यष्टादशैव वा ।
दम्पत्योर्वृद्धिकारीणि यत्नाच्चिन्त्यानि शास्त्रतः ॥

[4]राशिकूटतदधीशमै( ?मि )त्रता-
स्त्रीविदूरगणयोनिनाडिकाः ।
दैवयोगवरगोत्रसमेताः
पाणिपीडनविधौ परिचिन्त्याः ॥

### नारदः

[5]अष्टधा राशिकूटं च स्त्रीदूरगणराशयः ।
राशीशयोनिवर्णाख्यरज्जवः पुत्रपौत्रदाः ॥

[6]दिनं गणं च माहेन्द्रं स्त्रीदीर्घं योनिरेव च ।
राशिराश्यधिपौ रज्जुर्वश्यं वेधो दश स्मृताः ॥

(१) वसं. ३२।२२३ ; प्रपा. ३१८ ( ज्ञातव्या विंशतिर्वर्गाः सम्यग्दैवविदा सदा ).

(२) वसं. ३२।१७५.

(३) विसौ. ३४.

(४) वसं. ३२।२२५ ; प्रपा. ३२३-३२४ मैत्रता ( सुहृत्त्वं ) नाडिकाः ( सुनाड्यः ).

(५) ज्योना. १२३ पृ. ५९.

(६) विसौ. ३४.



पुनश्च वर्णकूटं च माहेन्द्रं च ततः परम् ।
एते द्वादश योगाश्च प्रीतिभेदाः प्रकीर्तिताः ॥

### बृहस्पतिः

[1]दिनं गणं च माहेन्द्रं स्त्रीदीर्घं योनिरेव च ।
राशिराश्यधिपौ वश्यं रज्जुर्वेधश्च ते दश ॥

[2]पुनश्च वर्णकूटं च नाडीकूटमतः परम् ।
पुनश्च भूतं लिङ्गं च जातिगोत्रखगास्तथा ।
योगिन्यायौ च दैवं च पुनर्दश विशेषतः ॥

### गर्गः

[3]माहेन्द्रं गणकूटं च दिनकूटं च योनिजम् ।
स्त्रीदीर्घं रज्जुकूटं च वश्यं वर्णाख्यकूटकम् ॥
राशिराश्यधिपाख्ये च
वेधो नाड्याख्यकूटकम् ।
भूत( ? तं ) लिङ्गाख्यकूटं च
जात्याख्यं पक्षिकूटकम् ।
योगिनी गोत्रकूटं च
कूटान्यष्टादशैव तु ॥

### दैवज्ञमनोहरे

[4]वर्णश्च वश्यं च मिथश्च तारा
योनिश्च मैत्री खगयोर्गणश्च ।
भमेलको नाडिकशुद्धिरेते
यथोत्तरं स्युर्बलिनोऽष्टभेदाः ॥

(१) प्रपा. ३१९ योनिरेव ( योनिमेव ) राशिराश्यधिपौ ( राशी राश्यधिपो ) वेधश्च ( वेधाश्च ) ; विपा. ७४३ स्त्रीदीर्घं ( स्त्रीदैर्घ्यं ).

(२) प्रपा. ३१९ ; विपा. ७४३ ( पुनश्च भूतलिङ्गे च जातिगोत्रखगास्तथा । योगिन्यायौ च दैवं च पुनरष्टौ विशेषतः । पुनश्च वर्णकूटं च माहेन्द्रं च ततः परम् ॥ ).

(३) विपा. ७४३.

(४) संप्र. ७७३-७७४ ; ज्योनि. १४१ पटलसारे.

## पटलसारे

[1]वर्णश्च वश्यं वरदूरतारा
योनिर्गणः खेटसुहृत्त्वमेव ।
राशिश्च नाडी नवभेदकं स्या-
दसद्धकूटं च विलोकनीयम् ॥

## मुहूर्तचिन्तामणिः

[2]वर्णो वश्यं तथा तारा योनिश्च ग्रहमैत्रकम् ।
गणमैत्रं भकूटं च नाडी चैते गुणाधिकाः ॥

## अनिर्दिष्टकर्तृकवचनानि

[3]विप्राणां दशकूटं स्यात्क्षत्रियाणां तथाऽष्टकम् ।
वैश्यानामपि षड्भेदं शूद्राणां च चतुष्टयम् ॥

(१) ज्योनि. १४१. (२) मुचि. ६।२१.
(३) ज्योनि. ११४.

वर्णो वश्यं नृदूरं च वल्लभत्वं च तारकाः ।
योनिर्मि( ? मैं )त्रं गणो राशि-
र्नाडिकेति क्रमाद्दश ॥
तत्र दूरद्वयं हित्वा कूटं भेदाष्टकं भवेत् ।
तारादिषट्कं षड्भेदं परं
योनिच(योनेश्च)तुष्टयम् ॥
नाडीमैत्रे'वर्णगणौ राशिभे वश्ययोनिके ।
वर्णेष्वीक्ष्यं तु मुख्यत्वाच्छेषाणां दूरवर्गकौ ॥
[1]वर्णो वश्यं मिथस्तारा योनिर्ग्रहगणेष्टता ।
राशिकूटं नाडिकाः स्युरेकाधिकगुणा अमी ॥
[2]वर्णो वश्यं तारा योनिर्ग्रहगणभकूटनाडीति ।
ज्ञेया यथोत्तरं ते बलिनः स्त्रीपुंसयोर्घटने ॥

(१) संग. १९४.
(२) विसौ. ४२.

# कूटविचारपरिभाषा

## वसिष्ठः

[1]जन्मभं जन्मधिष्ण्येन नामधिष्ण्येन नामभम् ।
व्यत्ययेन यदा योज्यं दम्पत्योर्निधनप्रदम् ॥
अज्ञातजन्मनां नृणां नामभं परिकल्पयेत् ।
तेनैव चिन्तयेत्सर्वं राशिकूटादि पूर्ववत् ॥

## बृहस्पतिः

[2]दम्पत्योर्जन्मताराभ्यां नामर्क्षाभ्यामथापि वा ।
भमेलं चिन्तयेत्प्राज्ञः सुखसंतानवृद्धये ॥

(१) वसं. ३२।१९५-१९६ ; विसौ. ४० नामभं परिकल्पयेत् ( नामभे परिकल्पना ) पूर्ववत् (जन्मवत्).
(२) ज्योनि. १४०.

[1]व्यवहारराजसेवासंग्रामग्रामधाममन्त्रेषु ।
ज्ञातेऽपि जन्मराशौ फलमुक्तं
नामराशिव(शा)त् ॥
यत्पूर्वाभ्यासनामानि त्यक्त्वा दोषमवाप्नुयात् ।
बलाबलं हि तज्जं हि पूर्वनाम्ना तु योजयेत् ॥

## लघुवसिष्ठः

[2]जन्मर्क्षमृक्षमित्याहुर्नामर्क्षं वधिदण्डवत् (?) ।
यस्य जन्म न जानीयात्तस्य नाम्ना विधीयते ॥
कुर्यात्षोडश कर्माणि जन्मराशिबलान्वितः ।
सर्वाण्यन्यानि कर्माणि नामराशिबलान्विते ॥

(१) विसौ. ४०.
(२) विसौ. ४०.

### स्मृतिसंग्रहः

[१]वरस्य जन्मना सार्धं नाम वध्वा विचिन्तयेत् ।
न तु नाम्ना वरस्य स्यादङ्गनाजन्मचिन्तनम् ॥
जन्मना जन्म योज्यं च
नाम्ना नामैव योजयेत् ।
जन्मना नाम नो योज्यं
पुंजन्म स्त्रीषु नाम च ॥

### यवनमतम्

[२]यत्र स्थितः शीतकरो नराणां
स्याज्जन्मराशिं तमुदाहरन्ति ॥

### विवाहवृन्दावनम्

[३]जन्मलग्नमिदमङ्गमङ्गिनां
मेनिरे मन इतीन्दुमन्दिरम् ।
सौहृदं हि मनसोर्न देहयो-
र्मेलकस्तदयमिन्दुगेहयोः ॥

जन्मराश्योरेव मेलके युक्तिं कथयति— जन्मेति । देहिनां यत् जन्मलग्नं इदं अङ्गं शरीरं, तथा इन्दुमन्दिरं चन्द्रराशिः इति मनः मेनिरे । हि यतः सौहृदं मित्रत्वं मनसोरेव भवति, देहयोस्तु सौहृदं न भवति, तत् तस्मात् इन्दुगेहयोः वधूवरचन्द्रराश्योः अयं मेलकः स्यात्, न तु जन्मलग्नयोरित्यर्थः । लक्ष्मी.

[४]चन्द्रराशिवशमेव सौहृदं
सूक्ष्मयोरपि न किं नवांशयोः ।
एवमस्तु मकरांशगे रवौ
कर्कटेऽपि किमु नोत्तरायणम् ॥

यदि चन्द्रराश्योर्मेलकस्तर्हि सूक्ष्मयोस्तन्नवांशयोरपि कथं नेति दृष्टान्तेन कथयति— चन्द्रराशीति । चन्द्रराशिवशं वधूवरयोर्जन्मराश्यनुसारमेव सौहृदं कथितं तर्हि सूक्ष्मयोः तन्नवांशयोरपि कथं नेति । एवमस्तु एवं प्रश्नश्चेत्तदा मकरांशगे मकरनवांशस्थे रवौ सूर्ये कर्कटेऽपि उत्तरायणं किमु न भवति ? अयनादिकं यतो राशिवशादेव भवति, तस्मात् राश्योरेव मेलकोऽपि समुचित इत्यर्थः । लक्ष्मी.

मासषट्कमयनं च दक्षिणा-
दित्य एति तदिति श्रुतिर्जगौ ।
मूलसंक्रमसमां विवस्वतः
स्वस्वभङ्गिमृतवोऽपि बिभ्रति ॥

अयनादिकं राशिवशादेवेति सप्रमाणं आह—मासषट्कमिति । आदित्यः सूर्यः मासषट्कं दक्षिणा दक्षिणस्यां दिशि एति गच्छति तत् दक्षिणा अयनं इति श्रुतिः वेदः जगौ कथयतीत्यर्थः । तथा ऋतवः वसन्तादयः अपि विवस्वतः सूर्यस्य मूलसंक्रमसमां स्वस्वभङ्गिं स्वस्वाकृतिं बिभ्रति धारयन्ति । अतो मूलराशिवशादेव घटितविचारः समुचित इत्यर्थः । लक्ष्मी.

किं दिनर्क्षविरहे करग्रहो
नेष्यते तदुदयक्षणेष्वपि ।
स्थूलमेवमखिलं जगत्फलं
तद्विशेषयति सूक्ष्मतागतिः ॥

पुनः अन्यां युक्तिं कथयति— किमिति । दिनर्क्षविरहे विवाहविहितदिवसनक्षत्रालाभे तदुदयक्षणेषु तन्नक्षत्रमुहूर्तेषु अपि करग्रहः विवाहः किं नेष्यते ? एवमखिलं जगत्फलं स्थूलं, तत् स्थूलं फलं सूक्ष्मतागतिः विशेषयति, स्थूले सूक्ष्मतालाभश्चेत्तदा स्थूलफले विशेषतां प्रतिपादयतीत्यर्थः । लक्ष्मी.

अव्यवस्थितिरिति प्रतिवेलं
तत्तदूहनविकल्पसमूहैः ।
स्थूलमप्यनुसरन्ति कृतीन्द्राः
केवलं न रमणीयमणीयः ॥

यदि सूक्ष्मता स्थूलं विशेषयति तदा सूक्ष्मतैव किं न ग्राह्येत्यत्र हेतुं प्रतिपादयति— अव्यवस्थितिरिति । इति एवं सूक्ष्मताग्रहणे प्रतिवेलं प्रतिक्षणं तत्तदूहनविकल्पसमूहैः तत्तद्वेलाया ऊहनविकल्पास्तर्कवितर्ककल्पनाः तत्समूहैः अव्यवस्थितिः स्यात् । अतः कृतीन्द्राः गर्गादयः

(१) प्रपा. ३१९. (२) ज्योनि. ९९.
(३) विवृ. २११; ज्योनि. १४०; संग. १९४ गेहयोः (गोलयोः).
(४) विवृ. २१२-९.

स्थूलमप्यनुसरन्ति । केवलं अणीयः सूक्ष्मतरमेव न रमणीयं भवति । लक्ष्मी.

**भिन्नभिन्नफलभाग्भुवि भूया-**
**नेकधिष्ण्यदिनजोऽपि जनोऽयम् ।**
**सूक्ष्मताऽपि ननु तेन गरिष्ठा**
**सा च मूलमनुरुध्य विधेया ॥**

अथ सूक्ष्मफलस्य विशेषतां प्रतिपाद्य तद्ग्राह्यतां कथयति– भिन्नमिति । भुवि भूयान् बहुतरः अयं विद्यमानो जनः एकधिष्ण्यदिनजोऽपि एकनक्षत्रतिथ्युत्पन्नोऽपि भिन्नभिन्नफलभाक् दृश्यते, तेन सूक्ष्मताऽपि गरिष्ठा गरीयसी, किंच सा सूक्ष्मता मूलं स्थूलफलं अनुरुध्य एव विधेया विचार्या । लक्ष्मी.

**सूक्ष्मो नवांशाद्द्विरसांश एवं**
**त्रिंशल्लवस्तल्लवतोऽपि सूक्ष्मः ।**
**ततोऽपि लिप्तेत्यवलिप्तवाचां**
**दृगेतु कस्यां नियतौ समस्याम् ॥**

अथ केवलसूक्ष्मताग्रहणे अनवस्थां दर्शयति – सूक्ष्म इति । राशितो नवांशः सूक्ष्म उक्तः, नवांशादपि द्विरसांशः द्वादशांशः सूक्ष्मः, एवं तल्लवतः द्वादशांशतः अपि त्रिंशल्लवः सूक्ष्मः, ततोऽपि त्रिंशल्लवादपि लिप्ता षष्ट्यंशः इत्येवं अवलिप्तवाचां जनानां दृक् दृष्टिः कस्यां नियतौ समस्यां समाधानं एतु गच्छतु न कस्यामपीत्यर्थः, सूक्ष्मताया अवसानाभावात् । लक्ष्मी.

**अत्यन्तसूक्ष्मः स किलैकदेशो**
**येनाखिलानां भिदुरा फलर्द्धिः ।**
**नास्मादृशां दृग्विषयः स तस्मात्**
**मूलानुकूला व्यवहारसिद्धिः ॥**

अथ सूक्ष्मताया दुर्गमत्वं कथयति– अत्यन्तसूक्ष्म इति । स एकदेशः कालविभागः अत्यन्तसूक्ष्मः स्यात्, येन अखिलानां जनानां फलर्द्धिः फलसंपत्तिः भिदुरा भिन्ना भिन्ना भवति । स अत्यन्तसूक्ष्मप्रदेशः अस्मादृशां जनानां दृग्विषयो दर्शनयोग्यो न स्यात् । तस्मात् लोकानां व्यवहारसिद्धिः मूलानुकूला एवेति । लक्ष्मी.

**इति सति यदि मूले सूक्ष्मभावांशलब्धि-**
**स्तदखिलमपि सिद्धं नास्ति चेन्मूलसंपत् ।**
**तदुभयलवनाशो दुर्गमत्वादणूनां**
**परिणतिरिति रूढा कालमीमांसया नः ॥**

अथ सिद्धान्तमाह– इति सतीति । इत्येवं सति मूले अनुकूले स्थूलराश्यादौ, यदि सूक्ष्मभावांशलब्धिः, तत् तदा अखिलमपि सिद्धं स्यात् । चेत् मूलसंपत् नास्ति तदा अणूनां सूक्ष्मभागानां दुर्गमत्वात् तदुभयलवनाशः स्यात् । इति कालमीमांसया समयविवेकेन नः अस्माकं परिणतिः रूढा । अतो राश्योरनुकूलत्वे एव नवांशानुकूलत्वं विचार्यमिति सिद्धम् । लक्ष्मी.

### स्वरशास्त्रे

[1]**प्रसुप्तो येन जागर्ति**
**येनाऽऽगच्छति शब्दितः ।**
**तन्नाम्नश्चाऽऽदिमो वर्णो**
**ग्राह्यस्तस्माद्ध्रनिर्णयः ॥**
**न प्रोक्ता ङञणा वर्णा**
**नामादौ सन्ति ते न हि ।**
**चेद्भवन्ति तदा ज्ञेया**
**गजडास्ते यथाक्रमम् ॥**
[2]**खषौ सशौ बवौ चैव**
**ज्ञेयाविति परस्परम् ।**
**संयोगाक्षरजे नाम्नि**
**ग्राह्यं तत्राऽऽदिमाक्षरम् ॥**
[3]**बहूनि यस्य नामानि नरस्य स्युः कथंचन ।**
**तस्य पश्चाद्भवं नाम ग्राह्यं स्वरविशारदैः ॥**

### ज्योतिष्प्रकाशे

[4]**जन्मलग्नात्फलं सर्वमायुर्दायदशादिकम् ।**
**कीर्तितं मुनिभिस्तत्तु भमेलेऽनादृतं कथम् ॥**

(१) ज्योनि. ९९; संग. १९३ तन्नाम्नश्चाऽऽदिमो (तत्र नामादिमो).

(२) ज्योनि. ९९; संर. ८६१ सशौ (शसौ) ज्ञेयाविति (ज्ञेयावेतौ).

(३) ज्योनि. ९९.

(४) ज्योनि. १४०; संग. १९४ ऽनादृतं (नामभं).

### शार्ङ्गधरीये

[1]विवाहघटनं चैव लग्नजं ग्रहजं फलम् ।
नामभाच्चिन्तयेत्सर्वं जन्म न ज्ञायते यदा ॥

### पटलसारे

[2]जन्मज्ञानेऽपि चैकस्य द्वयोर्नाम्नोर्भमेलकः ।
चिन्त्यस्तत्रैव जन्मर्क्षाद्वीक्ष्यं लग्नेन्दुजं बलम् ॥
[3]यद्भकूटं वि( द्वि )पक्षाभ्यां
सगुणं स्यात्तदुत्तमम् ।
एकेन मध्यमं हीनं
केऽप्याहुस्तदभावतः ॥

### दीपिकायाम्

[4]जन्म न ज्ञायते येषां तेषां नाम्नो गवेष्यते ।
चक्रेऽवकहडे भांशे तन्नाडी कैश्चिदग्निभात् ॥

( १ ) ज्योनि. ९९ राजमार्तण्डः ; संर. ५२३ फलम् ( बलम् ) नामभा ( नामर्क्षा ) यदा ( यदि ).
( २ ) ज्योनि. ९९. ( ३ ) ज्योनि. १४१.
( ४ ) ज्योनि. ९९.

यदा स्त्रीजन्मसंपत्ति-
र्वरजन्म न लभ्यते ।
स्त्रियाः स्याज्जन्मतः शुद्धि-
र्नाम्नो मेलक्रिया तदा ॥

### अनिर्दिष्टकर्तृकवचनानि

[1]विवाहे सर्वमाङ्गल्ये यात्रादौ ग्रहगोचरे ।
जन्मराशेः प्रधानत्वं नामराशिं न चिन्तयेत् ॥

देशे ग्रामे गृहे युद्धे सेवायां व्यवहारके ।
नामराशेः प्रधानत्वं जन्मराशिं न चिन्तयेत् ॥

[2]काकिण्यां वर्गशुद्धौ च वादे द्यूते स्वरोदये ।
मन्त्रे पुनर्भूवरणे नामराशेः प्रधानता ॥

( १ ) ज्योनि. ९९ ; संग. १९३ ; संर. ५२३ ज्योतिर्निबन्धे.
( २ ) ज्योनि. ९९ ; संर. ५२३ वादे ( दाने ).

## वर्णकूटम्

### नारदः

[1]झषालिकर्कटा विप्रास्तदूर्ध्वाः क्षत्रियादयः ।
पुंवर्णराशेः स्त्रीराशौ समे हीने तथा शुभम् ॥
[2]वर्णज्येष्ठा तु या नारी वर्णहीनस्तु यः पुमान् ।
विवाहं यदि कुर्वीत तस्या भर्ता विनश्यति ॥
हीनवर्णे वरे उत्तमवर्णा नारी पतिघ्नी भवतीत्यर्थः ।
संप्र. ७७४
[3]झषालिकर्कटा विप्राः सिंहमेषतुला नृपाः ।
नृयुक्चापघटा वैश्या मृगकन्यावृषान्त्यजाः ॥

( १ ) ज्योना. २७।१३९ पृ. ६१ तथा ( ऽथवा ); विसौ. ३६ ; संप्र. ७७४.
( २ ) विसौ. ३६ ; संप्र. ७७४.
( ३ ) विसौ. ३६ नारदीयेऽपि कचित्पाठ इत्युक्तम् ; संप्र. ७७४ झषालि ( स्त्र्यालि ).

अत्र सर्वसंमतपक्षः प्रागुपन्यस्तः । अन्यत्र तु देशतो व्यवस्था । विसौ. ३६

### महेश्वरः

[1]झषालिकर्का द्विजराशयः स्यु-
स्तुर्योपरिष्टान्नृपवैश्यशूद्राः ।
क्रमेण गण्याः परतोऽखिलास्ते-
ऽधिको नृवर्णः शुभकृद्विवाहे ॥

### जगन्मोहने

[2]कर्कान्त्यवृश्चिका विप्राः क्षत्राः सिंहधनुस्तुलाः ।
मेषयुग्मघटा वैश्याः शूद्रा वृषमृगाङ्गनाः ॥

( १ ) विसौ. ३६.
( २ ) विसौ. ३६ ; संप्र. ७७४.

## कालप्रकाशिकायाम्

[1]कर्क्यन्त्यवृश्चिका विप्रा
राजा (? ज्ञः) सिंहधनुस्तुलाः ।
वृषकुम्भधरा (?) वैश्याः
शेषाः शूद्रास्तथैव च ॥
वर्णश्रेष्ठो वर्णहीने विवाहं नैव कारयेत् ।
यदि कुर्यात्तु मोहेन सद्यो भर्ता विनश्यति ॥

## विवाहवृन्दावनम्

[2]षट्कर्मणां शासितदेवदैत्यौ
राजन्यकस्याधिपती कुजार्कौ ।
विट्शूद्रयोश्चन्द्रबुधौ शनिश्च
संकीर्णपः स्त्रीनृषु वर्णमैत्री ॥

अथ ग्रन्थकारः स्वदेशाभिप्रायिकमैत्रीं कथयति— षट्कर्मणामिति । शासितदेवदैत्यौ गुरुशुक्रौ षट्कर्मणां ब्राह्मणानां अधिपती । कुजार्कौ राजन्यकस्य क्षत्रियस्याधिपती । चन्द्रबुधौ क्रमेण विट्शूद्रयोः अधिपती, वैश्यस्य चन्द्रः शूद्रस्य बुध इत्यर्थः । शनिश्च संकीर्णपः संकराणां हीनवर्णानां पतिः । एवं स्त्रीनृषु कन्यावरेषु वर्णमैत्री विचार्या । अर्थात् वधूवरयोः राशीशयोर्वर्णौ विलोक्यौ, तत्रोत्तमवर्णो वरः श्रेष्ठः, समवर्णः समः, हीनवर्णस्तु निकृष्टः इति । इयं वर्णमैत्री ग्रन्थकारेण स्वदेशाभिप्रायेणोक्ता, अन्यदेशेषु तु 'द्विजा झषालिकर्कटास्ततो नृपा विशोऽङ्घ्रिजाः । वरस्य वर्णतोऽधिका वधूर्न शस्यते बुधैः ॥' इत्यनेनैव वर्णमैत्री ग्राह्या ।

लक्ष्मी.

## मुहूर्तचिन्तामणिः

[3]द्विजा झषालिकर्कटा-
स्ततो नृपा विशोऽङ्घ्रिजाः ।
वरस्य वर्णतोऽधिका
वधूर्न शस्यते बुधैः ॥

मीनवृश्चिककर्कराशयो द्विजाः ब्राह्मणाः । ततः अनन्तरमन्ये मेषसिंहधनूराशयो नृपाः क्षत्रियाः । वृषकन्यामकराः विशो वैश्याः । मिथुनतुलाकुम्भाः अङ्घ्रिजाः शूद्राः । ततश्च वधूवरराशयोर्वर्णौ ज्ञात्वा वरस्य वर्णतः ब्राह्मणादिकात् वधूः अधिका ज्येष्ठवर्णा बुधैर्न शस्यते, किन्तु समा हीना वा शस्यते इत्यर्थः । पीटी.

## अनिर्दिष्टकर्तृकवचनानि

[1]कर्क्यन्त्यवृश्चिका विप्राः
क्षत्राः सिंहधनुक्रियाः ।
नक्रकन्यावृषा वैश्याः
शूद्रास्तौलिघटीयमाः ॥
वर्णश्रेष्ठा च या नारी वर्णहीनस्तु यः पुमान् ।
विवाहमेतयोः कुर्यात्तस्य भार्या विनश्यति ॥

[2]कर्कालिमीना विप्राः स्युः
क्षत्रियाः सिंहधन्वजाः ।
कन्यागोमकरा वैश्याः
शूद्रा युग्मतुलाघटाः ॥
सवर्णोऽधिकवर्णो वा वरः श्रेष्ठः स्त्रियो भवेत् ॥

[3]स्वराशिसंख्या दम्पत्यो-
र्वेदाप्ता शेषतः फलम् ।
उत्तमं स्यान्नृशेषेऽल्पे
मध्यं तुल्येऽधिकेऽधमम् ॥
मिनालिकर्कटा विप्रा
नृपाः सिंहाजधन्विनः ।
कन्यानक्रवृषा वैश्याः
शूद्रा युग्मतुलाघटाः ॥
वरे वर्णाधिके प्रीतिरुत्तमा स्त्री वरानुगा ।
समवर्णे मिथः सख्यं हीने स्नेहो न जायते ॥

---

(१) सस्मृ. ५५.
(२) विवृ. ३।१६.
(३) मुचि. ६।२२.

(१) प्रपा. ३२३.
(२) संग. १९४.
(३) ज्योनि. १४१.

## वश्यकूटम्

### वसिष्ठः

[1]वश्यास्त्यक्त्वा राशयोऽन्ये नृभाणां
सिंहं तस्याप्येकमन्ये विधेयाः ।
कीटं त्यक्त्वा लोकतोऽन्यत्प्रसिद्धं
वश्यावश्यं नैव तोयालयाश्च ॥

### बृहस्पतिः

[2]मेषस्य वश्यौ सिंहाली कर्किजूकौ वृषस्य तु ।
युग्मस्य कन्या वश्या स्यात्कर्किणश्चापवृश्चिकौ ॥
तुला सिंहस्य वश्या स्यात्कन्याया यममत्स्यभे ।
मृगकन्ये तु जूकस्य कर्की स्याद्वृश्चिकस्य तु ॥
मीनश्चापस्य वश्यः स्यान्मकरो मीनवश्यकृत् ।
कुम्भस्य कन्या वश्या स्यान्मीनो मेषस्य वश्यकृत् ॥
[3]एवं वश्यसमायोगे दम्पत्योः प्रीतिरुत्तमा ।
वश्याभावेऽपि दम्पत्योर्विवाहः कलहप्रदः ॥

अलिः वृश्चिकः । जूकः तुला । युग्मं मिथुनम् । यमो मिथुनम् । मत्स्यभं मीनः । संप्र. ७७५

एवं वश्यसमायोगे स्त्रीराशेः पुरुषस्य भे ।
वश्ययोगः शुभः प्रोक्तो दम्पत्योः शुभदः स्मृतः ॥
वश्यराशौ तु दम्पत्योः प्रेमभङ्गो न जायते ।
स्वामिदर्शनकाले च वश्यारूढोदयः शुभः ॥
स्वामिराशेर्गृहे वाऽपि वश्यराशिः शुभावहः ।
वश्यराशिप्रकारोऽयं पुरा पद्मासनोदितः ॥

### गर्गः

[4]सिंहाली कर्किजूकौ च कन्या वृश्चिककार्मुकौ ।
तुला मीनयमौ नक्रकन्ये कर्कटकस्तिमिः ॥
मेषकुम्भावजो नक्रो मेषादेर्वश्यराशयः ।
एतानि वश्यकूटानि दम्पत्योः सुखसंपदे ॥

(१) वसं. ३२।२०१.
(२) विसौ. ३६ (=); संप्र. ७७४–७७५.
(३) प्रपा. ३२२.
(४) प्रपा. ३२२; संप्र. ७७५ नक्रकन्ये कर्कटकः (नक्रः कन्याकर्कटकौ) सुख (शुभ); ज्योनि. १४१ संप्रवत्.

### महेश्वरः

[1]दम्पत्योस्त्रिनगेन्दुमार्गणमिता हित्वा शुभास्तारकाः
मर्त्यानां वशिनो विहाय मृगयं भक्ष्याश्च तोयोद्भवाः ।
हित्वैकं तु सरीसृपं मृगरिपोर्वश्यास्तथा प्राणिनो
वश्यावश्यमिहापरं च बभणुर्लोकप्रसिद्धं बुधाः ॥

### श्रीधरः

[2]मेषे वृश्चिकसिंहौ च वृषे कर्कटकस्तुला ।
मिथुने कन्यका वश्यं कर्कटे चापवृश्चिकौ ॥
सिंहे वश्यं तुला चैव युवत्यां मीनको यमः ।
तौल्यां वश्यं मृगश्चैव वृश्चिके कन्यकर्कटौ ॥
चापे मीनमिदं वश्यं मकरे मेषकुम्भकौ ।
कुम्भे मेषमिदं वश्यं मीने च मकरस्तथा ॥

### विवाहवृन्दावनम्

[3]चापाजौ वृषभेण कुम्भमिथुनौ कर्केण मेषः स्त्रिया
शैलाग्नी सविषेण कार्मुकहरी नक्रेण नित्यद्विषौ ।
तद्वत्कुम्भतुले झषेण वशगाः सिंहं विनाऽन्ये नृणां
तद्भोज्या जलचारिणो हरिवशाः सर्वे विना वृश्चिकम् ॥

(१) विसौ. ३६.
(२) प्रपा. ३२२; संप्र. ७७५ चापवृ (धनुवृ) कुम्भकौ (कुम्भयोः).
(३) विवृ. ३।१०; विसौ. ३७.

चापाजौ धनुर्मेषौ वृषभेण, कुम्भमिथुनौ कर्केण, मेषः स्त्रिया कन्यया, शलाग्नी तुलमिथुनौ सविषेण वृश्चिकेन, कार्मुकहरी धनुःसिंहौ नक्रेण मकरेण सह नित्यद्विषौ, तद्वत् कुम्भतुले झषेण मीनेन नित्यद्विषौ ज्ञेयौ। अथ वश्यमैत्रीं कथयति– सिंहं विनाऽन्ये सर्वे राशयो नृणां द्विपदानां वशगाः, जलचारिणः जलचरराशयः तद्भोज्याः तेषां नृराशीनां भक्ष्याः, तथा वृश्चिकं विना सर्वे राशयः हरिवशाः सिंहस्य वश्या भवन्ति।

लक्ष्मी.

## मुहूर्तचिन्तामणिः

[1]हित्वा मृगेन्द्रं नरराशिवश्याः
सर्वे तथैषां जलजास्तु भक्ष्याः।
सर्वेऽपि सिंहस्य वशे विनाऽलिं
ज्ञेयं नराणां व्यवहारतोऽन्यत् ॥

नरराशयो मिथुनकन्यातुलाः, एषां सर्वेऽपि मेषादयः सिंहं त्यक्त्वा वश्याः। ननु मनुष्याणां च जलचराः कथं वश्याः, यत उभयोः सहावस्थानाभाव इत्यत आह– तथेति। एषां नरराशीनां जलजाः कर्कमकरकुम्भमीनास्तु भक्ष्याः, किं पुनर्वश्या इति सूचयितुं तुशब्दः। सिंहस्य वशे अलिं वृश्चिकं विना सर्वे राशयो वश्याः। अन्यदनुक्तं चतुष्पदानां जलचराणां चतुष्पादजलचराणां वा परस्परं वश्यावश्यत्वं नराणां मनुष्याणां व्यवहारतो ज्ञेयम्।

पीटी.

(१) मुचि. ६।२३ जास्तु (जाश्च); संग्र. ७७५.

## मुहूर्तदर्पणे

[1]अलिमृगपती तौलीन्द्वृक्षे वधूमलिधन्विनौ
वणिगधिपतिं वीणामीनौ मृगं युवतीन्दुभे।
पुनरनिमिषं मेषोपान्त्यावजं मकरं क्रमात्
पदपरिमितान् राशीन् वश्यानजादिषु मन्वते ॥

## अनिर्दिष्टकर्तृकवचनानि

[2]विहाय सिंहं खलु मीनजा (?मानवा) नां
वश्यं भवत्येकमलिं विहाय।
सर्वे विधेया गजराजशत्रो-
रन्यस्य विद्यादपि लोकसिद्धात् ॥

[3]नृराशेर्जलजा भक्ष्या वश्याः सिंहं विना-
ऽखिलाः।
सिंहस्य सकला वश्या वर्जयित्वा तु वृश्चिकम्।
लोकादन्यद्विदित्वा तु वश्यावश्यं वदेद्बुधः ॥

[4]सर्वे वश्या नृजातेस्तु भक्ष्यस्थाने जलोद्भवाः।
सिंहं हित्वाऽथ सिंहस्य वश्यास्ते वृश्चिकं
विना ॥

(१) ज्योनि. १४१.
(२) प्रपा. ३२२.
(३) संग. १९४.
(४) ज्योनि. १४१.

# ताराकूटम्

## वसिष्ठः

[1] नवर्क्षपर्यायवशाद्वधूभ-
माद्यं वरर्क्षान्तमथो गणय्य ।
जन्मत्रिभं पञ्चमसप्तमं भं
त्यक्त्वाऽन्यभं शोभनमामनन्ति ॥

## नारदः

[2] स्त्रीभमारभ्य गणने नव पर्यायतः क्रमात् ।
जन्मत्रिपञ्चसप्तस्थं पुम्भं स्याद्वरनाशनम् ॥
पुम्भमारभ्य गणने स्त्रीभं जन्मादिके स्थले ।
स्त्रीविनाशो भवेत्तस्माद्दिनकूटं विवर्जयेत् ॥
[3] व्याधिं विपत्करं विद्याज्जन्मभाद्विपदि स्त्रियाः ।
प्रत्यरे पतिनाशः स्यात्प्रीतिनाशो धनक्षयः ॥
कर्मर्क्षाद्विपदाख्यर्क्षे कर्म किंचित्क्षयं व्रजेत् ।
प्रत्यरे चित्तदुःखं स्याद्वधर्क्षे व्याधिना हतिः ॥
आधानाद्विपदाख्यर्क्षे आरोग्यं लभते सदा ।
प्रत्यरे बहुरोगी स्याद्वधर्क्षे पुष्टिकृद्भवेत् ॥

दुष्टताराः

[4] अग्निसार्पौ वायुसार्पौ चित्राप्यौ मैत्रवासवौ ।
वसुयाम्यौ वारुणाग्नी वधवैनाशिके मृतिः ॥
इन्दुभाग्यावर्कमूले नैधनं वधनाशिके ।
ज्येष्ठार्यम्णौ पौष्णरौद्रौ वैरं वधविनाशिके ॥
दुष्पुत्रत्वं शूर्पमेधे शूर्पविष्णू सपत्नता ।
श्रोणाश्विन्योर्विशेषश्च वैधव्यं बुध्न्यसौम्ययोः ॥

शुभताराः

अर्यमार्द्रे भाग्यमैत्रे चित्रातिष्यौ सुखप्रदौ ।
हस्तादित्यौ वंशवृद्धिस्तन्नाशौ ज्येष्ठवारुणौ ॥

( १ ) वसं. ३२।१७६ .
( २ ) विसौ. ३४ ; संप्र. ७७६ .
( ३ ) प्रपा. ३१९ .
( ४ ) प्रपा. ३१९–३२० . 'अर्यमार्द्रे' इत्यादयः सार्धास्त्रयः श्लोकाः संभावनया नारदे निवेशिताः ।

ब्रह्माजपादौ पैत्राजौ बहुपुत्रत्वमाप्नुयात् ।
अश्वादित्यौ मरुद्वैश्वौ स्त्रीप्रसूतिं समश्नुते ॥
पौष्णवैश्वे तु भोगः स्यात्
संपन्मूलाजपादके ।
आप्यबुध्न्यौ च संप्रीतिः
सौभाग्यं याम्यतिष्यके ॥
वधवैनाशयोगे तु फलं कौशिकचोदितम् ॥
वैनाशिकं तु जन्मर्क्षाद्द्वाविंशर्क्षं विनाशदम् ।
अष्टाशीत्यंशकस्तत्र जन्मतस्तु विनाशदः ॥

## बृहस्पतिः

[1] आद्यांशं विपदाख्यर्क्षे प्रत्यरे च चतुर्थकम् ।
वधाख्ये च तृतीयांशं विना शेषाः सुशोभनाः ॥

## माधवीये

[2] अष्टाशीतितमोंऽशो
यस्मिन् जन्मादिगणनया भवति ।
वैनाशिकं तदृक्षं
त्यजन्ति केचित्तमेवांशम् ॥

## संग्रहे

[3] कन्यादिवरऋक्षान्तं पर्याये नवसंख्यया ।
समतारा शुभं चैव दिनकूटः प्रशस्यते ॥
[4] जन्मसंपद्विपत्क्षेमाः प्रत्यरः साधको वधः ।
मैत्रं परममैत्रं च जन्मर्क्षेषु पुनः पुनः ॥

( १ ) प्रपा. ३१९ ; संप्र. ७७६ आद्यांशं (आद्यसं-) प्रत्यरे (प्रत्यरौ) सुशोभनाः ( न शोभनाः ).
( २ ) प्रपा. ३२० .
( ३ ) प्रपा. ३१९ .
( ४ ) प्रपा. ३१९ : ३२८ (=) क्षेमाः प्र (क्षेमप्र) जन्मर्क्षेषु (जन्म चेति) ; संप्र. ७७६ जन्मसंपद्विपत्क्षेमाः प्रत्यरः ( जन्म संपत् विपत् क्षेम प्रत्यरिः ) जन्मर्क्षेषु ( जन्म चेति ).

[1]स्त्रियो वै जन्मताराया विपत्प्रत्यरनैधनाः ।
पर्याये प्रथमे वर्ज्या द्वितीयाद्यचतुस्त्रयः ।
तारास्त्याज्यास्तृतीये तु सर्वास्ताराः सुशोभनाः ॥

## विवाहवृन्दावनम्

[2]भीरुभादचलपञ्चतृतीया
शोकवैरविपदे वरतारा ।

अथ ताराविचारं कथयति– भीरुभात् कन्यानक्षत्रात् वरतारा वरनक्षत्रं अचलपञ्चतृतीया ( ७–५–३ ) क्रमेण शोकवैरविपदे ज्ञेया । लक्ष्मी.

## मुहूर्तचिन्तामणिः

[3]कन्यर्क्षाद्वरभं यावत्कन्याभं वरभादपि ।
गणयेन्नवहृच्छेषे त्रीष्वद्रिभमसत्स्मृतम् ॥

कन्याजन्मनक्षत्राद्वरनक्षत्रं यावत् गणयेत्, तथा वरनक्षत्रादपि कन्यानक्षत्रं गणयेत् । ततो विशिष्टेऽङ्के नवभिर्भक्ते यदवशिष्टं तच्च त्रिपञ्चसप्तमितं भवेत्तदाऽसत् अशुभदं स्मृतं, अन्यथा द्विचतुःषडष्टनवमितं चेत्स्यात्तदा शुभमिति अर्थादुक्तं भवति । यत्तु कश्यपेन– 'गणयेत् कन्यकाधिष्ण्यादावृत्त्या वरजन्मभम् । जन्मत्रिपञ्चसप्तर्क्षं हित्वाऽन्यर्क्षं शुभप्रदम् ॥' इति कन्यानक्षत्रादेव गणना उक्ता, अत एव– 'भीरुभादचलपञ्चतृतीयाः शोकवैरविपदो वरताराः' इति केशवार्केणाप्युक्ता, साऽत्यावश्यकत्वद्योतनार्था । तथाहि– द्वयोरपि परस्परनक्षत्रगणने शुभं चेच्छुभमेव अशुभं चेदशुभमेव । तत्रैकस्मादन्यतरनक्षत्रगणनयाऽशुभत्वेऽपि स्त्रीनक्षत्राद्वरनक्षत्रं त्वशुभं नापेक्षितमेवेति भावः ।

अत्र यद्यपि नारदादिभिर्जन्मतारा निषिद्धेत्युक्तं, तत् ग्रन्थकृता एकनक्षत्रे तावत् 'राश्यैक्ये चेद्भिन्नमृक्षं द्वयोः स्यान्नक्षत्रैक्ये राशियुग्मं तथैव' इति वक्ष्यमाणत्वान्नोक्तम् । दशमैकोनविंशतितारयोस्तु निषेधो दुष्टभकूटे ज्ञेयः । सद्भकूटे तु दोषाभाव इत्यर्थः । पीटी.

## अनिर्दिष्टकर्तृकवचनानि

[1]वधूवरर्क्षाद्गणयेदन्योन्यर्क्षं ग्रहैर्भजेत् ।
त्रिपञ्चसप्तशेषे स्यात्तारा दुष्टाऽन्यथा शुभा ॥
[2]वरभाद्गणयेद्यावत्कन्यर्क्षं कन्यभादपि ।
वरभं नवहृच्छेषास्ताराः सन्ति परस्परम् ॥
शुभदा जन्मतारा स्याद्द्वयोरेकर्क्षवर्जिता ।
निन्द्यास्त्रिपञ्चसप्त स्युः शेषाः श्रेष्ठा भकूटके ॥

( १ ) प्रपा. ३१९ याद्यच (याद्याश्च) तारास्त्या (पादास्त्या); संप्र. ७७६ प्रत्यर ( प्रत्यरि ) सुशोभनाः ( च शोभनाः ).
( २ ) विवृ. ३।२; विसौ. ३५. पीयूषधाराटीकायां ( ६।२४ ) तु 'भीरुभादचलपञ्चतृतीयाः शोकवैरविपदो वरताराः' इति पाठः ।
( ३ ) मुचि. ६।२४.

( १ ) संग. १९४.
( २ ) ज्योनि. १४२.

# योनिकूटम्

## वसिष्ठः

[1]अश्वेभमेषभुजगद्वयकुक्कुरौतु-
मेषौतुमूषकमथोन्दुरुगोलुलायाः ।
शार्दूलमाहिषगवारिमृगद्वयं श्वा
कीशोऽथ बभ्रुयुगकीशगजाश्वसिंहाः ॥

[1]गोकुञ्जराविति यथाक्रममाश्विनादि-
भानां भवन्ति खलु कल्पितयोनिरूपाः ।
एतद्विचार्यमखिलं सदसद्ग्रहज्ञ-
स्त्रिस्कन्धवित्प्रवरधीर्विबुधां वरिष्ठः ॥

( १ ) वसं. ३२।१८१ द्वयं श्वा ... ...सिंहाः (द्वयाश्वशाखामृगोक्षकपिपञ्चमुखाश्वसिंहाः ); विसौ. ३५; संप्र. ७७७.

( १ ) वसं. ३२।१८२; विसौ. ३५ पू.; संप्र. ७७७ पू.

[१]बभ्रूरगं श्वैणमिभेन्द्रसिंह-
मोत्वाखुसंज्ञं त्वजवानरं च ।
गोव्याघ्रमश्वोत्तममाहिषं च
वैरं नृनार्योर्नृपभृत्ययोश्च ॥

ओतुः बिडालः । लुलायो महिषः । गवारिर्व्याघ्रः । कीशो वानरः । बभ्रुर्नकुलः । युगं नक्षत्रद्वयम् । एवं द्वयशब्देऽपि द्रष्टव्यम् ।　　　　संप्र. ७७७

## नारदः

[२]अश्वेभमेषसर्पाहिश्वौतुमेषौतुमूषकाः ।
आखुगौर्महिषव्याघ्रौ कालो व्याघ्रो मृगद्वयम् ॥
श्वानः कपिर्बभ्रुयुग्मं कपिसिंहतुरङ्गमाः ।
सिंहगोदन्तिनो भानामेष योनिर्यथाक्रमात् ॥
वैरं( ?श्वैणं ) बभ्रूरगं मेषवानरं सिंहदन्तिनम् ।
गोव्याघ्रमाखुमार्जारं महिषाश्वं च शात्रवम् ॥
[३]अश्वौ शतभिषाश्विन्यौ रेवती भरणी गजौ ।
अग्निपुष्यावजौ प्रोक्तौ सर्पौ च मृगरोहिणी ॥
आर्द्रामूले तथा श्वानौ मूषकौ भगपैतृके ।
आदित्याही च मार्जारौ आपो विष्णुश्च मर्कटौ ॥
अहिर्बुध्न्यार्यमे गावौ मित्रज्येष्ठे मृगे तथा ।
वसुप्रोष्ठपदौ सिंहौ हस्तस्वाती च माहिषौ ॥
चित्रा विशाखा व्याघ्राख्येऽभिजिद्विश्वे च बभ्रुवौ ॥
वैरं स्यादश्वमहिषं श्वमृगं कपिमेषकम् ।
गोव्याघ्रं सर्पनकुलं मूषोतु मृगराड्गजम् ॥

## बृहस्पतिः

[४]एकयोनिषु संपत्त्यै दम्पत्योः संगमः सदा ।
भिन्नयोनिषु मध्यः स्यादरिभावो न चेत्तयोः ॥

(१) वसं. ३२।१८३ ; विसौ. ३५ ; संप्र. ७७७.
(२) ज्योना. २७।१३६–१३८ पृ. ६०–६१.
(३) संग. १९४–१९५.
(४) प्रपा. ३२१ ; विसौ. ३५ अत्रिः ; संप्र. ७७७ चेत्तयोः ( चैतयोः ) अत्रिः ; संग. १९५ मध्यः ( मध्यं ).

[१]अरिभावे कृतोद्वाहः शीघ्रं मरणमाप्नुयात् ।
उदासीने कृतं कर्म समत्वं धनपुत्रके ।
महारियोनिषु कृतं कुलक्षयकरं भवेत् ॥

## गर्गः

[२]एकयोनिषु कलहो गजयोः सिंहयोः शुनोः ।
महद्वैरेऽपि समता महिषस्य कपेस्तथा ॥
[३]केचित्स्वभावतः क्रूराः
केचिच्छान्तास्तथा समाः ।
योनिसत्त्वा भजन्त्यत्र
स्वस्वशीलं तथा मिथः ॥

## श्रीपतिः

[४]अश्वेभाजफणिद्वयं श्ववृषभुङ्मेषोतवो मूषक-
श्चाऽऽखुर्गौः क्रमशस्ततोऽपि महिषी व्याघ्री तथा सैरिभः ।
व्याघ्रैणौ मृगमण्डलौ कपिरथो बभ्रुद्वयं वानरः
सिंहाश्वौ मृगराट्पशुश्च करिणी योनिस्तु भानामियम् ॥
गोव्याघ्रं गजसिंहमश्वमहिषं श्वैणं च बभ्रूरगं
वैरं वानरमेषकं च सुमहत्तद्वद्बिडालोन्दुरु ।
लोकानां व्यवहारतोऽन्यदपि च ज्ञात्वा प्रयत्नादिदं
दम्पत्योर्नृपभृत्ययोरपि सदा वर्ज्यं शुभस्यार्थिभिः ॥
[५]एकयोन्यां शुभं विद्या-
द्भिन्नयोन्यां तु मध्यमम् ।
अधमं शत्रुयोन्यां स्यात्
दृष्ट्वा लोके वदेद्बुधः ॥

(१) प्रपा. ३२१, ३२२ ; संप्र. ७७७ भावे ( भाव ) प्रथमार्धम्.
(२) ज्योनि. १४२ ; संग. १९५ महिषस्य ( माहिषस्य ).
(३) ज्योनि. १४२.
(४) प्रपा. ३२०–३२१ ; निप. २८० (=).
(५) प्रपा. ३२१.

अस्यार्थः — अश्विशतभिषजौ अश्वौ । भरणीरेवत्यौ गजौ । पुष्यकृत्तिके मेषाजौ । मृगशीर्षरोहिण्यौ सर्पौ । मूलार्द्रे श्वानौ । पुनर्वस्वाश्लेषे मार्जारौ । मघापूर्वाफल्गुन्यौ मूषकौ । उत्तरोत्तराभाद्रपदे गावौ । स्वातीहस्तौ महिष्यौ । चित्राविशाखे व्याघ्रौ । ज्येष्ठानुराधे हरिणौ । पूर्वाषाढाश्रवणे वानरौ । उत्तराषाढाऽभिजितौ नकुलौ । पूर्वाभाद्रपदाधनिष्ठे सिंहौ । पूर्वमुक्ताः पुरुषाः । पश्चादुक्ताः स्त्रियः ।

तेषां वैरवर्ग उच्यते— गोव्याघ्रमित्यादि । अस्य फलम्— एकयोन्यामिति । प्रपा. ३२०–३२१

## विवाहवृन्दावनम्

[१]अश्वेभाजोरगाहिश्वखनकरिपवो मेष ओतुर्द्विराखु-
र्गोकाल्यौ व्याघ्रकालीपशुरिपुहरिणैणश्वकीशाः क्रमेण ।
द्वौ बभ्रू कीशसिंहौ तुरगमृगपतिच्छाग- मातङ्गमेवं
नेष्टा योनिः सवैरा वरयुवतिनपामात्ययो- रश्विनीतः ॥

अश्वः, इभो हस्ती, अजो मेषः, उरगः सर्पः, अहिः सर्पः, श्वा कुक्कुरः, खनकरिपुः मार्जारः, मेषः, ओतुर्मार्जारः, द्विर्द्विवारं आखुर्मूषकः, गौः, काली महिषी, व्याघ्रः, काली, पशुरिपुः व्याघ्रः, हरिणः, एणो हरिणः, श्वा, कीशो वानरः, द्वौ बभ्रू नकुलौ, कीशः, सिंहः, तुरगः घोटकः, मृगपतिः सिंहः, छागः, मातङ्गो हस्ती इत्येवं क्रमेण अश्विनीतः अश्विनीमारभ्य अष्टाविंशतिनक्षत्राणां योनिः कथिता, तत्र वरयुवति–नृपामात्ययोः सवैरा योनिः नेष्टा भवति । वैरं तु अश्वमहिषे, गजसिंहे, सर्पनकुले इत्यादौ परस्परं लोकव्यवहारतो ज्ञेयम् । लक्ष्मी.

## मुहूर्तचिन्तामणिः

[२]अश्विन्यम्बुपयोर्हयो निगदितः स्वात्यर्कयोः कासरः
सिंहो वस्वजपाद्भयोः समुदितो याम्या- न्त्ययोः कुञ्जरः ।
मेषो देवपुरोहितानलभयोः कर्णाम्बुनो- र्वानरः
स्याद्वैश्वाभिजितोस्तथैव नकुलश्चान्द्राब्ज- योन्योरहिः ॥
ज्येष्ठामैत्रभयोः कुरङ्ग उदितो मूलार्द्रयोः श्वा तथा
मार्जारोऽदितिसार्पयोरथ मघायोन्योस्तथै- वोन्दुरुः ।
व्याघ्रो द्वीशभचित्रयोरपि च गौरर्यम्ण- बुध्न्यर्क्षयो-
र्योनिः पादगयोः परस्परमहावैरं भयोन्यो- स्त्यजेत् ॥

अश्विनीशततारकयोः हयः अश्वः योनिः उक्तः । स्वातीहस्तयोः कासरो महिषः । वस्वजपाद्भयोः धनिष्ठापूर्वाभाद्रपदयोः सिंहः । याम्यान्त्ययोः भरणीरेवत्योः कुञ्जरो हस्ती । पुष्यकृत्तिकयोः मेषः अजः । कर्णाम्बुनोः श्रवणपूर्वाषाढयोः वानरः स्यात् । उत्तराषाढाभिजितोः नकुलः । चान्द्रं मृगः, अब्जयोनिः ब्रह्मा, तद्भं रोहिणी, तयोरहिः सर्पो योनिः । ज्येष्ठानुराधयोः कुरङ्गो हरिण उदितः । मूलार्द्रयोः श्वा कुकूकुरः । तथा पुनर्वस्वाश्लेषयोर्मार्जारः । अथ मघापूर्वाफल्गुन्योः उन्दुरुः । विशाखाचित्रयोः व्याघ्रः । (अर्यम्ण) उत्तराफल्गुनी बुध्न्यर्क्षं उत्तराभाद्रपदा तयोः गौर्योनिः । तथा, तथैव, अपिचेत्यादयः शब्दाः पादपूरणार्थाः । फलमाह— पादगयोरिति । एकस्मिन् पादे चरणे उक्तनक्षत्रयोन्योः परस्परं महावैरं भवेत्, अन्यथा नेत्यर्थः । यथा— 'अश्विन्यम्बुपयोर्हयो निगदितः स्वात्यर्कयोः कासरः' इति पादः । तत्रोक्तयोः भयोन्योः अश्वमहिषयोर्महावैरं भवेत् । एवं सिंहहस्तिनोरित्यादिष्वपि द्रष्टव्यम् । पीटी.

## ज्योतिष्प्रकाशे

[१]आग्नेयं मृत्युभं पूफा तथोपान्त्यद्वयं पृथक् ।
मैत्रोऽप्याभिजिदेषु स्त्री योनिः शेषेषु ना स्मृतः ॥

(१) विवृ. ३।८. (२) मुचि. ६।२५–२६.

(१) ज्योनि. १४२.

योनिवैरं सदा त्याज्यं स्त्रीपुंसोर्भिन्नलिङ्गयोः ।
एकलिङ्गजयोः प्रोक्तं मध्यमं नातिदोषदम् ॥

### अनिर्दिष्टकर्तृकवचनानि

[१]वारुणाश्विनयोरश्वयोनिर्याम्यान्त्ययोर्गजः ।
पुष्यकृत्तिकयोर्मेषः सर्पो रोहिणिसौम्ययोः ॥
मूलार्द्रयोः शुनो योनिर्बिडालोऽदितिसार्पयोः ।
मघाभगर्क्षयोराखुरर्यमोपान्त्ययोः पशुः ॥
चित्राविशाखयोर्व्याघ्रो महिषः स्वातिहस्तयोः ।
कर्णाप्ययोर्वानरश्च ज्येष्ठानूराधयोर्मृगः ॥

(१) ज्योनि. १४२.

विश्वर्क्षाभिजितोर्बभ्रुः
सिंहोऽजाङ्घ्रिधनिष्ठयोः ।
पशुपालकयोर्वीक्ष्यं
दम्पत्योर्नृपभृत्ययोः ॥
गोव्याघ्रमश्वमहिषं
श्वैणं गजसिंहमाखुमार्जारम् ।
अहिबभ्रु वानराजं
महत्त्यजेत्पुंस्त्रियोर्वैरम् ॥
महद्वैरं सदा त्याज्यं लोकतोऽन्यच्च चिन्तयेत् ।
तद्ग्रन्थान्तरतो ज्ञेयं न लोकव्यवहारतः ॥

## ग्रहमैत्रीकूटम्*

### वसिष्ठः

[१]रवेः समो ज्ञः सितसूर्यपुत्रा-
वरी परे ये सुहृदोऽम्बराटाः ।
चन्द्रस्य नारी रविचन्द्रपुत्रौ
मित्रे समाः शेषनभश्चराः स्युः ॥
[२]समौ सितार्की शशिजश्च शत्रु-
र्मित्राणि शेषाः पृथिवीसुतस्य ।
शत्रुः शशी सूर्यसितौ च मित्रे
समाः परे स्युः शशिनन्दनस्य ॥
[३]गुरोर्ज्ञशुक्रावरिसंज्ञकौ तौ
शनिः समोऽन्ये सुहृदो ग्रहेन्द्राः ।
शुक्रस्य मित्रे बुधसूर्यपुत्रौ
समौ कुजेज्यावितरावरी तौ ॥

* एतत्कूटविज्ञानौपयिको राशीशसंग्रहो महादोषप्रकरणे पापषड्वर्गदोषे करिष्यते ।

(१) वसं. ३२।१९७ परे ये (परेऽन्ये); विसौ. ३९; संप्र. ७७८.

(२) वसं. ३२।१९८; विसौ. ३९; संप्र. ७७८.

(३) वसं. २२।१९९ क्रावरिसंज्ञकौ तौ (क्रौ रिपुसंज्ञकौ तु) ग्रहेन्द्राः (भवन्ति); विसौ. ३९; संप्र. ७७८ कुजेज्या (कुजार्कौ).

[१]शनेः समो वाक्पतिरिन्दुसूनुः
शुक्रश्च मित्रे रिपवः परे स्युः ।
एवं ग्रहाणां चतुराननेन
शत्रुत्वमित्रत्वसमत्वमुक्तम् ॥
[२]अन्योन्यमित्रं शस्तं स्यात्सममित्रं तु मध्यमम् ।
उदासीनं कनिष्ठं स्यान्मृतिदं शात्रवं स्मृतम् ॥
शत्रुमित्रं च विज्ञेयं दम्पत्योः कलहप्रदम् ।
अन्योन्यं समशत्रुत्वं दम्पत्योर्विरहप्रदम् ॥
राशिनाथे विरुद्धेऽपि सबलावंशकाधिपौ ।
तन्मित्रेऽपि च कर्तव्यं दम्पत्योः शुभमिच्छता ॥
राशिनाथे विरुद्धेऽपि मित्रत्वे चांशनाथयोः ।
विवाहं कारयेद्धीमान्दम्पत्योः सौख्यवर्धनम् ॥

### नारदः

[३]सितार्कीज्येन्दुभौमा ज्ञो रिपुर्मित्रसमा रवेः ।
इन्दोर्न शत्रुरर्कज्ञौ कुजेज्यभृगुसूर्यजाः ॥

(१) वसं. ३२।२०० सूनुः शुक्रश्च (सूनुशुक्रौ च) परे स्युः (परेऽपि) एवं (ध्रुवं); विसौ. ३९; संप्र. ७७८.

(२) विसौ. ३९; संप्र. ७७८.

(३) ज्योना. २७।१३२–१३५ पृ. ६०.

कुजस्य ज्ञोऽर्कचन्द्रेज्याः शुक्रसूर्यसुतौ क्रमात् ।
ज्ञस्येन्दुरर्कशुक्रौ च कुजजीवशनैश्चराः ॥
गुरोर्ज्ञशुक्रौ सूर्येन्दुकुजाः स्युर्भास्करात्मजः ।
शुक्रस्येन्दुरवी ज्ञार्की कुजदेवेशपूजितौ ।
शनेरर्केन्दुभूपुत्रा ज्ञशुक्रौ देवपूजितः ॥

### बृहस्पतिः

[1]गुरुर्गुरुज्ञौ शुक्रज्ञौ व्यर्का व्याराश्च वीन्द्विनाः ।
व्यर्केन्द्ववनिजाः सर्वे सुहृदो रिपवः परे ॥
उत्तमो मित्रवर्गः स्यात्सममित्रं तु मध्यमम् ।
कनिष्ठः समवर्गः स्याद्वैरवर्गस्तु मारणः ॥
कलहः शत्रुमित्रत्वे वियोगः समशत्रुतः ।
जन्मनक्षत्रभागेशमित्रता चेच्छुभं तयोः ॥
स्त्रीपुंसोर्जन्मनक्षत्रे विभागांशेशयोरपि ।
वश्यभावे सर्वसंपत्साधको योग उत्तमः ॥
[2]दंपत्योर्जन्मलग्नाभ्यां यौ ग्रहावधिपौ मतौ ।
तयोः परस्परं मैत्रे सर्वसंपदुपस्थिता ।
औदासीन्ये मध्यमं स्यादरिभावे न शोभनम् ॥

### अत्रिः

[3]राशीशयोः सुहृद्भावे मित्रत्वे वांऽशनाथयोः ।
विवाहभावो दम्पत्योः पुत्रपौत्रप्रवर्धनः ॥

### बृहज्जातकम्

[4]शत्रू मन्दसितौ समश्च शशिजो मित्राणि शेषा रवे-
स्तीक्ष्णांशुर्हिमरश्मिजश्च सुहृदौ शेषाः समाः शीतगोः ।
जीवेन्दूष्णकराः कुजस्य सुहृदो ज्ञोऽरिः सिताकीं समौ
मित्रे सूर्यसितौ बुधस्य हिमगुः शत्रुः समाश्चापरे ॥
[1]सूरेः सौम्यसितावरी रविसुतो मध्यः परे त्वन्यथा
सौम्यार्की सुहृदौ समौ कुजगुरू शुक्रस्य शेषावरी ।
शुक्रज्ञौ सुहृदौ समः सुरगुरुः सौरस्य चान्येऽरयो
ये प्रोक्ताः स्वत्रिकोणभादिषु पुन-स्तेऽमी मया कीर्तिताः ॥

### यवनसंहितायाम्

[2]मित्राण्यर्काद्गुरुर्ज्ञेज्यौ ज्ञसितौ च विभानवः ।
व्यारा व्यर्केन्दवो व्यर्कचन्द्रारास्तु परेऽरयः ॥

### सत्यमतम्

[3]यथेशयोर्मिथो भावो दम्पत्योस्तादृशो भवेत् ।
दुष्टं कूटं शुभं मैत्र्या सद्भावैरपि शस्यते ॥

### विवाहवृन्दावनम्

[4]आपार्श्वकेन्द्रद्वयगाः प्रसूतौ
तत्कालमित्राणि मिथः खपान्थाः ।
न्यूनामपि स्त्रीनरभृत्यराज्ञां
तत्कालसख्यं विशिनष्टि मैत्रीम् ॥

अथ ग्रहाणां तात्कालिकमैत्रीं कथयति– आपार्श्वेति । प्रसूतौ जन्मकाले आपार्श्वकेन्द्रद्वयगाः स्वस्वपार्श्वकेन्द्र-द्वयमध्यस्थाः खपान्थाः ग्रहाः मिथः तत्कालमित्राणि भवन्ति, अर्थादन्ये शत्रवो भवन्ति । इदं तत्काल-सख्यं स्त्रीनरभृत्यराज्ञां स्त्रीनराणां भृत्यस्वामिनां च न्यूना-

---

(१) प्रपा. ३२२.

(२) प्रपा. ३२२; संग. १९५ मैत्रे (मैत्र्ये) औदासीन्ये (औदासीने).

(३) विसौ. ३४.

(४) बृजा. २।१६; प्रपा. ३२१ समश्च शशिजो (समः शशिसुतो) श्रीधरीये; ज्योनि. १४२ सत्यमतम्.

(१) बृजा. २।१७; प्रपा. ३२२ त्वन्यथा (बान्धवाः) स्वत्रिकोणभादिषु पुनस्तेऽमी (सुहृदस्त्रिकोणभवनात्तेऽमी) श्रीधरीये; ज्योनि. १४३ त्वन्यथा (चान्यथा) चतुर्थपादे (तत्कालेन दशायबन्धुसहजस्वान्त्येषु मित्रं स्थिताः) सत्यमतम्.

(२) ज्योनि. १४२.

(३) ज्योनि. १४३.

(४) विवृ. ३।१५; ज्योनि. १४३.

मपि मैत्रीं स्वाभाविकग्रहमैत्रीं विशिनष्टि विशेषयति। अर्थात् स्वाभाविकसमोऽपि तत्कालमैत्र्या मित्रं भवति, स्वाभाविकशत्रुस्तु तत्कालमैत्र्या समत्वं व्रजति, स्वाभाविकमित्रं तु अधिमित्रं भवतीत्यर्थः। लक्ष्मी.

**[1] सुरगुरुर्ज्ञगुरू कविकोविदौ**
**विरवयो विकुजा विरवीन्दवः।**
**अशशिसूर्यकुजाः सुहृदो रवे-**
**र्यवनयुक्तिरियं न यवीयसी ॥**

अथ यवनजातकोक्तग्रहमैत्रीं कथयति— सुरगुरुरिति। सुरगुरुः, ज्ञगुरू, कविकोविदौ, विरवयः, विकुजाः, विरवीन्दवः, अशशिसूर्यकुजाः, इति रवेः रविमारभ्य क्रमेण सप्तग्रहाणां सुहृदः मित्राणि स्युः। मित्रतोऽन्ये शत्रव इत्यर्थादेव सिध्यति। इयं यवनयुक्तिः न यवीयसी न लघुतरा अपि तु गरीयस्येव। लक्ष्मी.

**इदमुदीर्य वराहविरोचनो**
**निजमतेऽपि न दूषितवान्पुनः।**
**स बहु मन्यत एव यथातथं**
**जयति शास्त्रमिदं यवनेष्वपि ॥**

यवनयुक्तिः कथं न यवीयसीत्याह— इदमिति। वराहविरोचनः वराहमिहिरः अपि इदं उपर्युक्तं ग्रहमैत्रं निजमते बृहज्जातके उदीर्य उक्त्वा पुनर्न दूषितवान्। यवनेष्वपि इदं शास्त्रं यथातथं बहु अतिशयं जयतीति स वराहमिहिरः मन्यत एव स्वीकरोत्येवेति। लक्ष्मी.

**परमतं स्वमते विनिवेशितं**
**यदि न दूषितमादृतमेव तत्।**
**कलितकेवलसत्यमतः स त-**
**द्यवनयुक्तिषु नूनमनिस्पृहः ॥**

यवनमतं कथं मन्यते इत्याह— परमतमिति। यदि स्वमते विनिवेशितं परमतं न दूषितं तदा तत्परमतं आदृतमेव। स वराहमिहिरः कलितकेवलसत्यमतः कलितं संगृहीतं केवलं सत्यस्य सत्याचार्यस्य मतं येन सः तथोक्तः सन् यवनयुक्तिषु यवनाचार्योक्तिषु नूनं अनिस्पृहः स्पृहायुक्तः स्यात्। लक्ष्मी.

**किमबहुत्वमयं मिहिरो दिशन्**
**ग्रहसुहृत्त्वमिदं जगृहे हृदि।**
**उभयथाऽपि समं सति तन्मते**
**महति केऽपि भवेम वयं यतः ॥**

यवनयुक्तिषु स्पृहयैव वराहेण 'केषांचिदेवं मतम्' इत्यल्पमतत्वं प्रतिपाद्य न खण्डितमित्याह— किमिति। अयं मिहिरः इदं यवनोक्तं ग्रहसुहृत्त्वं दिशन् कथयन् हृदि मनसि अबहुत्वं अल्पमतत्वं किं जगृहे किं गृहीतवान्? अर्थादल्पमतत्वात् कथं न खण्डितम्? अत्रोच्यते— यतः तन्मते तस्य यवनस्य मते महति सति वयं केऽपि भवेम, सत्याचार्यमते महति सति वयं महान्त एवेत्युभयथाऽपि उभयत्रापि समं तुल्यं स्यात्। लक्ष्मी.

**बहुतरैः कृतमेव कृती स चे-**
**दनुससर्ति तदप्ययथातथम्।**
**पृथगपि द्विगुणे त्रिगुणे सकृत्**
**त्रिगुणमित्यबहूक्तिरियं यतः ॥**

स बहुसंमतमनुसरतीति चेत्तदप्यसंगतमेवेत्याह— बहुतरैरिति। स कृती वराहमिहिरः बहुतरैः कृतमेवानुससर्ति बहुसंमतमेवानुसरति इति चेत् तदप्ययथातथं असंगतं, यतः पृथक् द्विगुणे त्रिगुणे प्राप्ते अपि सकृत् त्रिगुणं इयं अबहूक्तिः अल्पजनोक्तिरेव। वराहमिहिरेण तु 'द्वित्रिगुणत्वे सकृत्त्रिगुणम्' इत्युक्तम्, अतः स न बहुसंमतावलम्बीति सिध्यति। तथाऽऽह कल्याणवर्मा— 'बहुताडनसंप्राप्तौ यां करोत्येकवर्गणाम्। वराहमिहिराचार्यैः सा न दृष्टा पुरातनैः ॥' इति। लक्ष्मी.

**अभिदुरावधिपौ सृजतः शुभं**
**शशिनवांशकयोरिति देवलः।**
**तदपि चारु न चारुषितैर्मुखै-**
**र्व्यवहरन्ति तथा वितथाशयाः ॥**

अथ नवांशसख्ये विशेषं कथयति— अभिदुराविति। शशिनवांशकयोः अभिदुरौ अभिन्नौ, मिथः

(१) विवृ. ३।१७-२३.

सुहृदौ वा अधिपौ शुभं सृजतः कुरुतः इति देवलो मुनिः कथितवान् । तत् देवलोक्तं चारु सुष्ठुतरं अपि आरुषितैः रोषपरिपूरितैर्मुखैः वितथाशयाः तुच्छहृदया जनाः तथा न व्यवहरन्ति चन्द्रनवांशसख्यं न स्वीकुर्वन्ति इत्यर्थः । लक्ष्मी.

**लवदृशैव हि लग्नदृशं विना**
**फलममंसत येऽपि करग्रहे ।**
**शशिनवांशसखित्वपराङ्मुखाः**
**किमलमस्तु गतानुगतं जगत् ॥**

पुनर्विशेषं कथयति– लवदृशेति । येऽपि आचार्याः लग्नदृशं विना लवदृशैव नवांशदृष्ट्यैव करग्रहे विवाहे फलं अमंसत मन्यन्ते स्म तेऽपि शशिनवांशसखित्वपराङ्मुखाः किं स्युः ? इत्यलमस्तु, जगत् गतानुगतं स्यात् । लक्ष्मी.

[1]**नवलवाधिपती उदयास्तयो-**
**रनिमिषार्चितचान्द्रमसायनौ ।**
**वरपतिंवरयोः समवैरिणौ**
**यदि तदिष्टफलेष्वपि फल्गुता ॥**

तत्र नवांशोपपत्तिव्याजेन यवनमैत्रीं द्रढयति— नवेति । उदयास्तयोः लग्नसप्तमभावयोः नवलवाधिपती नवांशस्वामिनौ यदि अनिमिषार्चितचान्द्रमसायनौ गुरुबुधौ सत्याचार्यमतेन समवैरिणौ भवतस्तत् तदा इष्टफलेष्वपि फल्गुता विफलता स्यात् । लक्ष्मी.

**तदुदयद्विपदांशनियामको**
**यवनसौहृदमाद्रियतां जनः ।**
**इतरथा कथमस्तु करग्रह-**
**स्तनुफलं हि लवानवलम्बते ॥**

अतो यवनोक्तसौहृदमेव ग्राह्यमित्याह—– तदिति । तत् तस्मात् उदयद्विपदांशनियामकः लग्ने द्विपदनवांशप्रयोजकः जनः यवनसौहृदमाद्रियताम् । इतरथा सत्याचार्योक्तग्रहमैत्र्या द्विपदभिन्ननवांशे करग्रहः विवाहः कथं स्यात् । हि यतः तनुफलं लवान् नवांशानवलम्बते आश्रयते । तथोक्तं प्राचीनैः 'लग्ने द्विपदगृहांशे शुभफलमन्यांशकोदये नेष्टम्' । लक्ष्मी.

**अथ रिपू यदि नोभयसप्तमौ**
**तदयशः कलशस्य किमागतम् ।**
**द्विपदतां दधतोऽथ शुभर्क्षता**
**यदि वृषानिमिषौ किमुपेक्षितौ ॥**

अथान्याशङ्कां तद्दोषं च कथयति– अथेति । अथ यदि उभयसप्तमौ रिपू न, समसप्तकयोः स्वभावमित्रत्वात्, तत् तदा द्विपदतां दधतः कलशस्य कुम्भस्य अयशः अशुभत्वं किमागतम् ? अथ नवांशग्रहणे यदि शुभर्क्षता शुभस्वामित्वमेव मुख्यं तर्हि वृषानिमिषौ वृषमीनौ शुभस्वामिनौ किं उपेक्षितौ परित्यक्तौ ? । लक्ष्मी.

**अमनुजाविति चेत्किमु शौनको**
**नवलवं झषमादृतवान्मुनिः ।**
**शुभगृहद्विपदास्तलवः स चेत्**
**भवतु तत्र किमस्तु तुलाधरः ॥**

पुनः प्रत्युत्तरं कथयति– अमनुजाविति । तौ वृषमीनौ अमनुजौ द्विपदभिन्नौ इति चेत् तर्हि शौनको मुनिः झषं नवलवं किमु आदृतवान् । तथा च तद्वाक्यम्– 'प्रहसितवदना च मीनांशे' इति । अथ स मीनः शुभगृहद्विपदास्तलवः शुभस्य गृहं, द्विपदोऽस्तलवो यस्य स तथोक्तः इति चेत् भवतु, तदा तत्र तुलाधरः तुलाराशिः किमस्तु लग्ने तुलनवांशः कथमस्त्वित्यर्थः । लक्ष्मी.

**द्विचरणः शुभभं च नवांशक-**
**स्तदयमेकतरः परिगृह्यते ।**
**इदमसंगतमङ्ग तवेरितं**
**जगति नैकवशात्किल सौहृदम् ॥**

अत्र पुनः प्रत्युत्तरं कथयति– द्विचरण इति । नवांशको द्विचरणः शुभभं च भवति, तदयं नवांशकः एकतरः द्विचरणो वा शुभभं वा परिगृह्यते, एवं त्वयोच्यते चेत्, तदा हे अङ्ग ! इदं तवेरितं त्वया कथितं असंगतमेव । किल यतो जगति संसारे एकवशात् सौहृदं न भवति । लक्ष्मी.

(१) विवृ. ४।१–८.

खचरयोः सखिता यदि कारणं
ध्वनति सा नितरां यवनाध्वनि।
कलशसिंहनवांशपशत्रुता
परिणमत्युभयोरपि शास्त्रयोः॥

अथ अत्र सिद्धान्तमाह— खचरयोरिति। यदि खचरयोः उदयास्तांशाधिपयोः सखिता मत्री एव कारणं स्यात्तदा सा सखिता ग्रहमैत्री यवनाध्वनि यवनाचार्यमार्गे नितरां ध्वनति शब्दायते सर्वत्र प्रसिद्धेत्यर्थः। सत्याचार्यमतेन धनुर्मिथुनयोः सखित्वाभावात् यवनमैत्रमेव साधुतरमिति भावः। कुम्भसिंहांशत्यागे युक्तिं कथयति— उभयोः यवनसत्याचार्ययोः द्वयोः अपि शास्त्रयोः कलशसिंहनवांशपशत्रुता परिणमति। अतो यवनमैत्र्याऽपि तत्त्याज्यता सिध्यति। अतो यवनमतमेव प्रधानमित्याचार्यस्याभिप्रायः। लक्ष्मी.

अथ तयोः समसप्तसुहृत्पथः
कथमसूक्ष्मगतिः स च नैकधा।
इह हि लग्नगतान्यनुमेनिरे
तदखिलैः खलखेटगृहाण्यपि॥

नवांशपतिमैत्री विचार्यते चेत्तर्हि राशिपतिमैत्री किं नेत्याह— अथेति। अथ तयोः यवनसत्याचार्यमतयोः समसप्तसुहृत्पथः कथं असूक्ष्मगतिः? अपि तु सूक्ष्मगतिरेव। स च सुहृत्पथः हि यत एकधा न, अपि तु तत्कालनिसर्गभेदात् द्विधाऽस्ति, तत् तस्मात् इह विवाहे अखिलैः समस्तैः यवनसत्यादिभिः खलखेटगृहाणि पापभानि अपि अनुमेनिरे, किं पुनः शुभग्रहाणीत्यर्थः। लक्ष्मी.

इति तुलाजितुमप्रमदाधनुः-
प्रथमखण्डमखण्डफलं जगुः।
सततमस्तपतिद्विषदीश्वरं
नवलवं बलवन्ध्यपतिं त्यजेत्॥

तत्रापि पूर्णशुभफलादिकत्वं प्रतिपादयति— इतीति। इति अस्मात् उपर्युक्तकारणात् तुलाजितुमप्रमदाधनुः-प्रथमखण्डं सततं अनवरतं अखण्डफलं पूर्णशुभफलं जगुः आचार्या ऊचुः। अथात्र विशेषं कथयति— अस्तपतिद्विषदीश्वरं अस्तपतेः सप्तमेशस्य द्विषत् शत्रुः ईश्वरो यस्य तं नवलवं तथा बलवन्ध्यपतिं बलेन वन्ध्यः पतिः यस्य तं नवलवं नवांशं च त्यजेत्। लक्ष्मी.

## मुहूर्तचिन्तामणिः

[1]मित्राणि द्युमणेः कुजेज्यशशिनः शुक्रार्कजौ वैरिणौ
सौम्यश्चास्य समो विधोर्बुधरवी मित्रे न चास्य द्विषन्।
शेषाश्चास्य समाः कुजस्य सुहृदश्चन्द्रेज्यसूर्या बुधः
शत्रुः शुक्रशनी समौ च शशभृत्सूनोः सिताहस्करौ॥

मित्रे चास्य रिपुः शशी गुरुशनिक्ष्माजाः समा गीष्पते-
र्मित्राण्यर्ककुजेन्दवो बुधसितौ शत्रू समः सूर्यजः।
मित्रे सौम्यशनी कवेः शशिरवी शत्रू कुजेज्यौ समौ
मित्रे शुक्रबुधौ शनेः शशिरविक्ष्माजा द्विषोऽन्यः समः॥

द्युमणेः सूर्यस्य भौमगुरुचन्द्राः मित्राणि, शुक्रशनी वैरिणौ, अस्य सूर्यस्य सौम्यो बुधः समः, न शत्रुर्न मित्रम्। एवं सर्वत्र व्याख्येयम्। विधोश्चन्द्रस्य बुधरवी मित्रे, च पुनरस्य विधोः द्विषन् शत्रुर्नास्ति, किन्तु शेषाः मङ्गलगुरुशुक्रशनयः समा एव। भौमस्य चन्द्रगुरुसूर्याः सुहृदः, बुधः शत्रुः, शुक्रशनैश्चरौ समौ। शशभृत्सूनोः बुधस्य सिताहस्करौ शुक्रसूर्यौ मित्रे, शशी चन्द्रः शत्रुः, गुरुशनिभौमाः समाः। गीष्पतेः गुरोः सूर्यभौमचन्द्राः

(१) मुचि. ६।२७-२८.

मित्राणि, बुधसितौ शत्रू, सूर्यजः शनिः समः । कवेः शुक्रस्य बुधशनी मित्रे, चन्द्रसूर्यौ शत्रू, कुजगुरू समौ । शनेः शुक्रबुधौ मित्रे, परे रविचन्द्रभौमाः शत्रवः, अन्यो बृहस्पतिः समः । पीटी.

### ज्योतिष्प्रकाशे

[1]राशीशौ सुहृदौ स्यातां जन्मकाले यदा तदा ।
ग्रहवैरेऽपि कर्तव्यं भकूटं मुनयो जगुः ॥

(१) ज्योनि. १४३; संग. १९६.

## गणकूटम्

### वसिष्ठः

[1]दस्रादितीज्यमृगमैत्रकरानिलान्त्य-
लक्ष्मीशभानि नव देवगणः प्रदिष्टः ।
पूर्वात्रयान्तकविधातृहरोत्तराणि
धिष्ण्यानि मानुषगणोऽत्र नव प्रदिष्टः ॥
[2]पितृद्विदैवाग्निशतेन्द्रमूल-
वस्वाहिचित्रर्क्षगणोऽसुराख्यः ।
देवासुराणां मनुजासुराणां
वैरं महत्स्नेहमथेतरेषाम् ॥

### नारदः

[3]तिस्रः पूर्वोत्तराधातृयाम्यमाहेशतारकाः ।
इति मर्त्यगणो ज्ञेयः स्यादमर्त्यगणः परः ॥
हयादित्यार्कवाय्वन्त्यमित्राश्वीज्येन्दुतारकाः ।
रक्षोगणः पितृत्वाष्ट्रद्विदैवत्येन्द्रतारकाः ।
वसुतोये समूलाहिकृत्तिकाभिर्युतास्ततः ॥
[4]दम्पत्योर्जन्मभे चैकगणे प्रीतिरनेकधा ।
मध्यमा देवमर्त्यानां राक्षसानां तयोर्मृतिः ॥
[5]स्ववर्गे चोत्तमं विद्यान्मध्यमं दैवमानुषम् ।
वैरं दितिजदेवेषु मरणं मानुषासुरे ॥
देवासुरगणे पुंसि यदि स्त्री मानुषे गणे ।
एतावुत्तममध्याख्यौ विपरीतौ न शोभनौ ॥

(१) वसं. ३२।१७७; विसौ. ३४; संप्र. ७७९.
(२) वसं. ३२।१७८; विसौ. ३४; संप्र. ७७९.
(३) ज्योना. २७।१२६-१२८ पृ. ६०.
(४) ज्योना. २७।१२९ पृ. ६०.
(५) विसौ. ३४; संप्र. ७७९-७८०.

राक्षसी यदि वा नारी नरो भवति मानुषः ।
मृत्युस्तत्र न संदेहो विपरीतः शुभावहः ॥
पुत्रमित्रकलत्रादियोगः स्वांशे सुशोभनः ।
मध्यमो नृसुरांशे च जघन्या देवराक्षसाः ॥

### श्रीधरः

[1]अश्वी मृगशिरो हस्तः स्वाती पुष्यपुनर्वसू ।
मैत्रश्रवणरेवत्य एते देवगणाः स्मृताः ॥
भरणी रोहिणी चैव आर्द्रा पूर्वात्रयं तथा ।
त्रीण्युत्तराणि विज्ञेया मानुषाः परिकीर्तिताः ॥
ज्येष्ठामूलमघाश्लेषाविशाखात्वाष्ट्रवारुणाः ।
कृत्तिका च धनिष्ठा च राक्षसास्तु प्रकीर्तिताः ॥
[2]स्वगणं चोत्तमं विद्यान्मध्यमं दैवमानुषम् ।
अधमं राक्षसं दैवं मृत्युर्मानुषराक्षसम् ॥

### विवाहवृन्दावनम्

[3]त्रियुग्मी रोहिण्या सह शिवयमर्क्षे
नरि सुरे
श्रुतिस्वातीमित्रादितिगुरुकरान्त्याश्वि-
शशिभम् ।
परं दैत्ये मृत्युर्दनुजमनुजाना-
मनिमिषैः
सह स्वैरं वैरं निर्ऋतितनयानां
परिणये ॥

(१) प्रपा. ३२० (=); संप्र. ७७९ राक्षसास्तु (राक्षस्यस्तु).
(२) प्रपा. ३२०.
(३) विवृ. ३।९.

अथ गणमैत्रीं कथयति- त्रियुग्मीति । रोहिण्या सह त्रियुग्मी त्रयाणां फाल्गुन्याषाढाभाद्रपदानां युग्मानां समाहारस्त्रियुग्मी पूर्वफाल्गुन्युत्तरफाल्गुनी पूर्वाषाढोत्तराषाढा पूर्वभाद्रपदोत्तराभाद्रपदेत्यर्थः । शिवयमर्क्षे आर्द्राभरण्यौ इति नक्षत्रनवकं नरि नरगणे, श्रुतिस्वातीमित्रादितिगुरुकरान्त्याश्विशशिभं, इति नक्षत्रनवकं सुरे देवगणे, तथा परं अवशिष्टनक्षत्रनवकं दैत्ये दैत्यगणे ज्ञेयम् । परिणये विवाहे दनुजमनुजानां दैत्यनराणां मृत्युः । निर्ऋतितनयानां राक्षसानां अनिमिषैः देवैः सह स्वैरं स्वाभाविकं वैरं स्यात् । अर्थात् देवमनुजयोः स्वस्वगणे च मित्रत्वं स्यात् । लक्ष्मी.

## मुहूर्तचिन्तामणिः

[१]रक्षोनरामरगणाः क्रमतो मघाहि-
वस्विन्द्रमूलवरुणानलतक्षराधाः ।
पूर्वोत्तरात्रयविधातृयमेशभानि
मैत्रादितीन्दुहरिपौष्णमरुल्लघूनि ॥

क्रमतः रक्षोनरामरगणाः वाक्यत्रयेणोच्यन्ते । मघा प्रसिद्धा । अहिः आश्लेषा । वसुः धनिष्ठा । इन्द्रः ज्येष्ठा । मूलं प्रसिद्धम् । वरुणः शततारका । अनलः कृत्तिका । तक्षा चित्रा । राधा विशाखा । एतानि भानि रक्षोगणः । पूर्वात्रयमुत्तरात्रयं वेत्येवं षड्भानि । विधाता रोहिणी । यमः भरणी । ईशः आर्द्रा । एतानि भानि नरगणो मनुष्यगणः । मैत्रमनुराधा । अदितिः पुनर्वसुः । इन्दुः मृगः । हरिः श्रवणः । पौष्णं रेवती । मरुत् स्वाती । लघूनि अश्विनीहस्तपुष्याः । एतानि भानि अमरगणो देवगणः । पीटी.

निजनिजगणमध्ये प्रीतिरत्युत्तमा स्या-
दमरमनुजयोः सा मध्यमा संप्रदिष्टा ।
असुरमनुजयोश्चेन्मृत्युरेव प्रदिष्टो
दनुजविबुधयोः स्याद्वैरमेकान्ततोऽत्र ॥

(१) मुचि. ६।२९-३०.

स्वस्वगणविद्यमानस्त्रीपुरुषनक्षत्रयोः सतोः अत्युत्कटोत्तमा प्रीतिः स्यात् । यथा राक्षसगणयोः स्त्रीपुंसयोस्तथा मनुष्यगणयोस्तथा देवगणयोर्वा परस्परमत्युत्कृष्टा प्रीतिः स्यादित्यर्थः । अमरा देवाः । मनुजा मनुष्याः । देवमनुष्यगणयोः स्त्रीपुंसयोः परस्परं प्रीतिर्मध्यमा नोत्कृष्टा संप्रदिष्टा । असुरमनुजयोः राक्षसमनुष्यगणयोः स्त्रीपुंसयोः मृत्युरेव प्रदिष्टः उक्तः । द्वयोर्वाऽन्यतरस्य वेत्याकाङ्क्षायां 'प्रबलेन दुर्बलं बाध्यते' इति न्यायेन मनुष्यगणस्यैव नाशः । दनुजविबुधयोः राक्षसदेवगणयोः स्त्रीपुंसयोः एकान्ततो निश्चयेन परस्परं वैरं स्यात् । पीटी.

## पटलसारे

[१]स्वगणे चोत्तमा प्रीतिर्मध्यमा देवमर्त्ययोः ।
असुरासुरयोर्वैरं मृत्युर्मानुषरक्षसोः ॥
रक्षोगणा यदा नारी नरो नरगणो भवेत् ।
तदोद्वाहो न कर्तव्यो यस्माद्वैधव्यदो ध्रुवम् ॥
वरस्तीव्रगणश्चापि कन्या च नृगणा भवेत् ।
दुष्टकूटे गुणाढ्येऽपि तत्र मृत्युर्न संशयः ॥

## अनिर्दिष्टकर्तृकवचनानि

[२]देमरामदमादेदेरारामममदरादराः ।
देरारामम देराराममदेति गणत्रयम् ॥
[३]अश्विनीमृगरेवत्यो हस्तपुष्यौ पुनर्वसू ।
अनुराधा श्रुतिः स्वाती कथितो देवतागणः ॥
तिस्रः पूर्वा उत्तराश्च तिस्रोऽप्यार्द्रा च रोहिणी ।
भरणी च मनुष्याख्यो गणश्च कथितो बुधैः ॥
कृत्तिका च मघाऽऽश्लेषा विशाखा शततारका ।
चित्रा ज्येष्ठा धनिष्ठा च मूलं रक्षोगणः स्मृतः ॥
स्वगणे परमा प्रीतिर्मध्यमा नरदेवयोः ।
नरराक्षसयोर्मृत्युः कलहो देवरक्षसोः ॥

(१) ज्योनि. १४३.
(२) ज्योनि. १४३.
(३) संग. १९६-१९७.

## राशिकूटम्

### वसिष्ठः

[1]षट्काष्टके मृत्युरथाङ्गनाया
राशौ नृनार्योर्नवपञ्चमेऽपि ।
अपत्यहानिर्नियतं च नैःस्वं
द्विर्द्वादशे प्रीतिरतः परेषाम् ॥
कनिष्ठं राशिकूटं यदेतच्च त्रिविधं स्मृतम् ।
व्यत्ययान्मध्यमं चैतदपरं मध्यमं सदा ॥
अन्योन्यशात्रवे त्याज्यः
त्याज्यः षट्काष्टकेऽपि च ।
नाडीदोषे भवेन्मृत्युः
गुणैः सर्वैः समन्वितः ॥
उत्तमे राशिकूटेऽपि समं शात्रवमेव वा ।
विवाहः शुभदो ज्ञेयो नापि मध्यकनिष्ठयोः ॥
स्त्रीदूरे समजामित्रे सहजायसुहृद्दशे ।
शत्रुः समः समो मित्रं मित्रं चेत्परमं सुहृत् ॥
नृयुक्कुलामेषघटाश्वसिंहाः
कुर्वन्त्यजस्रं खलु मित्रभावम् ।
स्वषष्ठसंख्याभवनैश्च तेऽपि
स्वस्वाष्टसंख्याभवनैकता वा ॥
[2]द्विर्द्वादशं शुभं प्रोक्तं मीनादौ युग्मराशिषु ।
मेषादौ युग्मराशौ च निर्धनत्वं न संशयः ॥
[3]द्विर्द्वादशेऽप्यदोषः स्यादंशकाद्दूरतः स्त्रियाः ।
धृत्यंशोऽत्यष्टिरंशो वा पुंसोंऽशः कन्यकां-
शकात् ॥

धृतिः अष्टादशः । अत्यष्टिः सप्तदशः । प्रपा. ३२१

[1]आयुष्यसंपत्सुखभोगसंप-
त्पुत्रार्थसंपत्पतिसौख्यसंपत् ।
सौभाग्यसंपद्धनधान्यसंप-
ज्झषादियुग्मे क्रमतः फलानि ॥
अजादियुग्मे क्रमतः फलानि
वैधव्यमृत्युर्वधबन्धनानि ।
वियोगसंतापमतीव दुःखं
वसिष्ठगर्गप्रमुखैः स्मृतानि ॥

### नारदः

[2]मृत्युः षष्ठाष्टके पञ्चनवमे त्वनपत्यता ।
नेष्टं ( ? नैःस्वं ) द्विर्द्वादशेऽन्येषु दम्पत्योः
प्रीतिरुत्तमा ।
[3]शत्रुषष्ठाष्टके मेषकन्ययोर्घटमीनयोः ।
चापोक्षयोर्नृयुक्कीटभयोः कुम्भकुलीरयोः ।
पञ्चास्यमृगयोश्चैव निन्दितं तदतीव तु ॥

### बृहस्पतिः

[4]एकादशत्रये चैव दशमे च चतुर्थके ।
मध्यमो दम्पतीयोगो मित्रभावेऽतिशोभनः ।
वश्यराशौ विद्यमाने योगोऽयं शोभनो मतः ॥
[5]पञ्चमनवमे शुभदौ
मेषहरी कर्किवृश्चिकौ प्रोक्तौ ।
समसप्तकेऽप्यशुभदौ
घटसिंहौ पाणिपीडने कथितौ ॥

---

(१) वसं. ३२।१८४,१८५,१८८, १९०–१९२; ज्योनि. १४५ नैकता वा ( नैस्तथैव ) 'नृयुक्तुलामेष' इत्येक एव श्लोकः.

(२) प्रपा. ३२१ (=) द्विर्द्वादशं शुभं प्रोक्तं ( द्विर्द्वादशाः शुभा ज्ञेया ) उत्तरार्धे ( मेषाद्ययुग्मराशौ तु निधनं स्यान्न संशयः ); विसौ. ३७ कश्यपवसिष्ठौ.

(३) प्रपा. ३२१ (=); विसौ. ३७ अंशकाद्दूरतः ( अंशके दूरतः ) ऽत्यष्टि ( ऽप्यष्टि ) कश्यपवसिष्ठौ; ज्योनि. १४५ ष्टिरंशो ( ष्टिकांशो ) संहितादीपके.

(१) विसौ. ३७.

(२) ज्योना. २७।१२९ पृ. ६०.

(३) ज्योना. २७।१३१–१३२; प्रपा. ३२१ शत्रुषष्ठाष्टके ( मित्रषष्ठाष्टकं ) चैव ... ... तीव तु ( स्त्रीणां जन्मराशेः शुभप्रदः ); ज्योनि. १४५ शत्रुषष्ठाष्टके ( मित्रषट्काष्टकं ) चैव ... ... तीव तु ( स्त्रीणां जन्मराशेः शुभावहम् ).

(४) प्रपा. ३२१.

(५) प्रपा. ३२१; संग. १९७.

### कश्यपः

[1]नृराशितोऽष्टमे षष्ठे पञ्चमे नवमे तथा ।
द्वादशे च द्वितीये च विवाहः पुत्रपौत्रदः ॥

नृयुक्तुलाश्वकुम्भालिसिंहाः कुर्वन्ति मित्रताम् ।
स्वषष्ठभवनेऽस्तोऽपि स्वाष्टभिः प्रीतिमुत्तमाम् ॥

[2]द्विर्द्वादशं शुभं प्रोक्तं मीनादौ युग्मराशिषु ।
मेषादौ युग्मराशौ च निर्धनत्वं न संशयः ॥

द्विर्द्वादशेऽप्यदोषः स्याद्ंशकाद्दूरतः स्त्रियाः ।
धृत्यंशोऽत्यष्टिरंशो वा पुंसोंऽशः कन्यकांशकात् ॥

आयुष्यसंपत्सुखभोगसंप-
त्पुत्रार्थसंपत्पतिसौख्यसंपत् ।
सौभाग्यसंपद्धनधान्यसंप-
ज्झषादियुग्मे क्रमतः फलानि ॥

अजादियुग्मे क्रमतः फलानि
वैधव्यमृत्युर्वधबन्धनानि ।
वियोगसंतापमतीव दुःखं
वसिष्ठगर्गप्रमुखैः स्मृतानि ॥

### शार्ङ्गधरः

[3]मीनालिभ्यां युते कीटे कुम्भे मिथुनसंयुते ।
मकरे कन्यकायुक्ते न कुर्यान्नवपञ्चकम् ॥
वरवध्वोर्मातृपित्रोर्जीवतोस्तद्विनाशकृत् ।
त्रिकोणं मीनकीटाद्यं न स्यादन्यत्र दूषणम् ॥

### लल्लः

[4]जातकमवलोक्य वदे-
न्नाडीयोगं विहाय दम्पत्योः ।
षट्काष्टकं त्रिकोणं
द्विर्द्वादशकं तु जन्मर्क्षात् ॥

(१) ज्योनि. १४५.
(२) विसी. ३७।१ कश्यपवसिष्ठौ.
(३) ज्योनि. १४५.
(४) विसी. ३७.

मरणं नाडीयोगं (?)
कलहः षट्काष्टके विपत्तिर्वा ।
अनपत्यता त्रिकोणे
द्विर्द्वादशकेऽपि दारिद्र्यम् ॥

समसप्तके विवाहे भवति सतीत्वं सुखं चैव ।
एकादशे तृतीये कुलवृद्धिर्भवति खे चतुर्थे च ॥

### वैद्यनाथः

[1]द्विषष्ठाभ्यां समो राशिर्विषमोऽष्टव्ययान्वितः ।
शुभो विलोमतो नेष्टः सिंहोऽपीष्टो बलान्वितः ॥

### श्रीधरीये

[2]एकराशौ सदा प्रीतिरैश्वर्यं समसप्तके ।
द्विर्द्वादशे तु वैधव्यं त्रिकोणे तु प्रजाक्षयः ॥
षष्ठाष्टके वियोगश्च मरणं कलहस्तथा ।
त्रिभवे सौख्यसंपत्तिश्चतुर्थदशमे शुभम् ॥

चतुर्थदशमं चैव त्रिभवं समसप्तकम् ।
दम्पत्योः शुभकृन्नूनं यद्यपि ग्रहशत्रुता ॥
द्विर्द्वादशे च मृत्युः स्यादायुर्द्वादशकद्विके ।
तृतीयैकादशे दुःखं सुखमेकादशत्रिके ॥
चतुर्थदशमे निःस्वं धनं दशचतुर्थके ।
पञ्चमे नवमे हानिः सौभाग्यं नवपञ्चमे ॥
षष्ठाष्टके पुत्रनाशः पुत्रलाभोऽष्टषष्ठके ।
समसप्ते च माङ्गल्यमेकराशौ तु संपदः ॥

मित्रत्वभावेऽपि विवाहयोगं
शुभं तु षष्ठाष्टकमुच्यते च ॥
[3]मेषेण कन्या धनुषा ककुद्मान्
तौल्या तिमिः कुम्भभृता कुलीरः ।
सिंहेन नक्रो नृयुगेन कौर्पिः
षष्ठाष्टके चापि शुभाय योगः ॥
कौर्पिः वृश्चिकः । प्रपा. ३२१

(१) ज्योनि. १४५.
(२) प्रपा. ३२१.
(३) प्रपा. ३२१ ; ज्योनि. १४५ तिमिः (मीनः) षष्ठाष्टके (षट्काष्टके); संग. १९७ षष्ठाष्टके (षष्ठाष्टमे).

## विवाहवृन्दावनम्

[1]व्यये न वित्तं न तपस्यपत्यं
नायुर्द्विषत्येव वधूवराणाम् ।
द्विर्द्वादशः पञ्चनवाष्टषष्ठो
जन्मर्क्षयोः सख्यविधिर्न दृष्टः ॥

तत्र आदौ सयुक्तिकं राशिमेलकमाह— व्यय इति । प्राचीनैः जन्मर्क्षयोः जन्मराश्योः द्विर्द्वादशः पञ्चनवाष्टषष्ठः पञ्चमनवमः अष्टषष्ठश्च सख्यविधिः सौहृदविधिः न दृष्टः । तत्र हेतुं कथयति— यतः व्यये अर्थस्यापगमे वित्तं धनं न भवति अतः व्यये द्वादशे वित्तं द्वितीयं भं न योज्यम् । तथा तपसि ब्रह्मचर्यादिनियमे अपत्यं संततिः न भवति अतः तपसि नवमराशौ अपत्यं पञ्चमं भं न योज्यं, तथा च द्विषति शत्रौ सति आयुः जीवनं न, इत्यतः द्विषति षष्ठे आयुः अष्टमं भं न योजनीयमिति वरकन्ययोः सेव्यसेवकयोर्वा जन्मर्क्षयोः द्विर्द्वादशे निर्धनत्वं, नवपञ्चमे अनपत्यता, षट्काष्टके मरणमिति फलं स्फुटमुपपद्यते । लक्ष्मी.

[2]पत्योर्विरोधे सति भृत्ययोः स्या-
न्मेलेऽप्यमेलस्तदलं भमैत्र्या ।
अत्रोच्यते किं न मिथो वधः स्या-
देकस्य सेनानरयोर्विरोधात् ॥

अथात्र प्रश्नं तदुत्तरं च कथयति—पत्योरिति । पत्योः स्वामिनोः विरोधे सति, भृत्ययोः मेलेऽपि अमेलः स्यात्, तत् तस्मात् भमैत्र्या अलं न प्रयोजनम् । अत्र अस्मिन् प्रश्ने उच्यते— एकस्य सेनानरयोः सैन्यपुरुषयोः मिथो विरोधात् किं वधो न स्यात् ? अपि तु वधः स्यादेव, अतो राशिमैत्रमेव प्रधानम् । लक्ष्मी.

अपश्यति स्वामिनि तद्वधश्चेत्
गृहेश्वराणां किमदृष्टमस्ति ।
अतोऽधिकं चेत्प्रभुसख्यमेव
ततो गतिः का समसप्तकस्य ॥

(१) विवृ. ३।१.
(२) विवृ. ३।१२–१४ ; विसौ. ३८ .

अत्र पुनः प्रत्युत्तरं कथयति— अपश्यतीति । स्वामिनि अपश्यति तद्वधः तयोः सेनानरयोः वधः चेत्, तर्हि गृहेश्वराणां राशिस्वामिनां खगानां किं अदृष्टम् ? न किमपि, अर्थात् सर्वं दृष्टमेव । अतः प्रभुसख्यमेवाधिकम् । एवं चेत्तदा समसप्तकस्य का गतिः ? इत्युच्यताम् । लक्ष्मी.

स्वभावमैत्री सखिता स्वपत्यो-
र्वशित्वमन्योन्यभयोनिशुद्धिः ।
परः परः पूर्वगमे गवेष्यो
हस्ते त्रिवर्गी युगपद्युतिश्चेत् ॥

अथात्र सिद्धान्तं कथयति— स्वभावमैत्रीति । राश्योः स्वभावमैत्री, स्वपत्योः सखिता, वशित्वं, अन्योन्यभयोनिशुद्धिः एषु चतुर्षु पदार्थेषु पूर्वगमे पूर्वालाभे परः परो गवेष्योऽन्वेषणीयः । अर्थादादौ स्वभावमैत्री समसप्तकादिका गवेष्या, तदलाभे स्वपत्योः सखिता मैत्री, तदभावे राश्योर्वशित्वं, तदलाभे भयोनिशुद्धिर्गवेष्या । चेत् युगपद्युतिः चतुर्णां प्राप्तिः तदा हस्ते त्रिवर्गी, त्रयाणां धर्मार्थकामानां वर्गाणां समाहारस्त्रिवर्गी स्यात् । लक्ष्मी.

## मुहूर्तचिन्तामणिः

[1]मृत्युः षष्ठाष्टके ज्ञेयोऽपत्यहानिर्नवात्मजे ।
द्विर्द्वादशे निर्धनत्वं द्वयोरन्यत्र सौख्यकृत् ॥

स्त्रीपुंसराश्योः परस्परं षष्ठाष्टमराशित्वे सति मृत्युर्ज्ञेयः । यथा मेषकन्ययोः ( मेषवृश्चिकयोः* ) । एवं नवात्मजे नवपञ्चमेऽपत्यानां बालानां हानिः नाशः स्यात् । यथा सिंहधनुषोः । एवं द्विर्द्वादशे सति निर्धनत्वं दारिद्र्यं स्यात् । यथा मेषवृषयोः । अन्यत्र तृतीयैकादशे चतुर्थदशमे समसप्तमे वा सौख्यकृत्पाणिपीडनं स्यात् । पीटी.

* अस्याग्रिमश्लोकगतापवादविषयत्वात् प्रामादिकमिदमुदाहरणमिति भाति ।

(१) मुचि. ६।३१ .

### ज्योतिष्प्रकाशे

[1] केचिन्नेच्छन्ति चैकांशं
केचिदिच्छन्ति मेलकम् ।
तत्राप्यङ्घ्रेर्घटीसाम्यं
त्यजेन्नो भिन्ननाडिकम् ॥
एकराशौ महाप्रीतिश्चतुर्थदशमे सुखम् ।
तृतीयैकादशे वित्तं सुप्रजाः समसप्तके ॥

### कालार्णवः

[2] सद्भकूटे तथाऽन्यस्मिन्नंशाद्वा राशितोऽथवा ।
संभवे वरदूरत्वं त्याज्यस्त–(? ज्यं त)त्राधिको गुणः ॥

### संग्रहे

[3] कन्याझषवृषवृश्चिक-
कर्कटमकराः शुभावहाः प्रोक्ताः ।
स्वैः स्वैरष्टमभवनै-
रेभिर्विदधीत सुप्रीतिम् ॥

### चिन्तामणिटीकायाम्

[4] विषमात्कन्यकाराशेः षष्ठं षष्ठाष्टकं न सत् ।
समात्षष्ठं शुभं ज्ञेयमष्टषष्ठं शुभं द्वयात् ॥

(१) ज्योनि. १४४ .
(२) ज्योनि. १४४ .
(३) प्रपा. ३२१ ; ज्योनि. १४५.
(४) संग. १९७.

### अनिर्दिष्टकर्तृकवचनानि

[1] कन्यामारभ्य गणने यदि षष्ठाष्टकं भवेत् ।
तद्व्यत्ययो वाऽपि भवेत्कन्यकाया मृतिस्तदा ॥
नवपञ्चमयोगो वा तद्विपर्यास एव वा ।
अनपत्या भवेन्नारी मृतवत्साऽपि वा भवेत् ॥
द्विर्द्वादशं तु कन्याया द्वादशद्वयमेव च ।
दरिद्रो वा भवेत्स्वामी देशान्तरगतोऽपि वा ॥
मीनादियुग्मे शुभदं मेषादौ त्वशुभं भवेत् ॥
मित्रषष्ठाष्टकं कीटमेषयोर्वृषजूकयोः ।
कर्किचापभयोर्मीनसिंहयोर्मृगयुग्मयोः ।
कन्यकाकुम्भयोरन्यत्प्रयत्नादिह वर्जयेत् ॥
समसप्तकयोगे च दशमे च चतुर्थके ।
एकादशे तृतीये वा विवाहः प्रीतिदायकः ॥
[2] द्विर्द्वादशं दरिद्रार्थं मृत्यवे च षडष्टकम् ।
नवपञ्चमकं राश्योर्वैपुत्र्याय परं शुभम् ॥
[3] एकराशौ च दम्पत्योः शुभं स्यात्समसप्तके ।
चतुर्थे दशमे चैव तृतीयैकादशे तथा ॥
[4] मकरे कर्कटे चैव कुम्भे सिंहे तथैव च ।
परस्परं सप्तमे च वैधव्यं तु विनिर्दिशेत् ॥
निर्धनत्वं वियोगो वा मेले द्विर्द्वादशे भवेत् ॥
त्रिकोणे त्वनपत्यत्वमपमृत्युः षडष्टके ॥

(१) विसौ. ३६–३७. (२) संग. १९७.
(३) निप. २७९ (=) चतुर्थे दशमे (चतुर्थदशके); संत. ८८४.
(४) ज्योनि. १४४ .

## नाडीकूटम्

### वसिष्ठः

[1] आवृत्तिभिर्भैस्त्रिभिरश्विभाद्यं
क्रमोत्क्रमात्संगणयेदुडूनि ।
यदैकपर्वण्युभयोश्च धिष्ण्ये
नेष्टा नृनार्योर्भृशमेकनाडी ॥

(१) वसं. ३२।२०२ येदुडूनि (येच्च भानि) यदैक (यद्येक); विसौ. ३९ .

[1] सा मध्यनाडी पुरुषं निहन्ति
तत्पार्श्वनाडी खलु कन्यकां च ।
आसन्नपर्यायसमागता चे-
द्वर्षेण साऽप्यन्तरिता त्रिवर्षैः ॥

(१) वसं. ३२।२०३ ; प्रपा. ३२० (=); विसौ. ३९ त्र (तु); संग. १९८ (=) विसौवत्.

[1]मध्यनाडी पतिं हन्ति
पार्श्वे नाड्यौ तु कन्यकाम् ।
तस्मान्नाडी सदा त्याज्या
दम्पत्योः शुभमिच्छता ॥

## नारदः

[2]चतुस्त्रिद्व्यङ्घ्रिभोत्थायाः कन्यायाः क्रमशोऽश्विभात् ।
वह्निभादिन्दुभान्नाडी त्रिचतुःपञ्चपर्वसु ।
गणयेत्संख्यया चैकनाड्यां मृत्युर्न पार्श्वयोः ॥

[3]त्रिरेखपक्षे गणयेद्भसंख्यया
चत्वारि पक्षे अभिजिद्युतानि ।
उभे च आरोह्यवरोहिणी तथा-
ऽवरोहि पञ्चाङ्गुलिवर्जितं च ॥

[4]एकनाडीविवाहश्च गुणैः सर्वैः समन्वितः ।
वर्जनीयः प्रयत्नेन दम्पत्योर्निधनं यतः ॥

मध्यनाडी पतिं हन्ति
पार्श्वनाडी तु कन्यकाम् ।
तस्मान्नाडी सदा त्याज्या
दम्पत्योः शुभमिच्छता ॥

[5]नाडीशुद्धिः कन्यकाकण्ठसूत्रं
ज्ञेयं तस्माच्चिन्तयेत्पूर्वमेव ।
पश्चाद्राशिश्चाधिपो मित्रभावं
विप्रादीनां मुख्यमेतत्सदैव ॥

(१) वसं. ३२।१८९.

(२) ज्योना. २७।१४०-१४१ ; प्रपा. ३२० (=) तृतीयार्धं नास्ति ; विसौ. ४० तृतीयार्धे (गणयेत्संख्यया चैकनाड्यां मृत्युर्न पार्श्वयोः । त्रिचतुःपञ्चभिर्मध्यनाड्यां मृत्युर्न पार्श्वयोः ॥) ; ज्योनि. १४६ तृतीयार्धं नास्ति ; संग. १९८ चैकनाड्यां (मध्यनाड्यां).

(३) प्रपा. ३२० रेख (रक्ष) उभे (उभौ) ; संग. १९८ येद्भसंख्यया (येदुडूनि).

(४) विसौ. ४०.

(५) प्रपा. ३२० (=) पू. ; विसौ. ४०.

## गर्गः

[1]नाडीकूटं तु संग्राह्यं कूटानां तु शिरोमणिः ।
ब्रह्मणा कन्यकाकण्ठसूत्रत्वेन विनिर्मितम् ॥
चतुष्पात्कन्यकाऋक्षं गणयेदश्विभादिकम् ।
त्रिभं सव्यापसव्येन भिन्नं पर्व शुभावहम् ॥
कन्यकर्क्षं त्रिपाच्चेत्स्याद्गणयेत्कृत्तिकादिकम् ।
चतुर्भिः पर्वभिस्तद्वदभिजित्तारकान्वितम् ॥
कन्यकर्क्षं द्विपाच्चेत्स्याद्गणयेत्सौम्यभादिकम् ।
पञ्चभिस्त्ववरोहे तु पञ्चमाङ्गुलिवर्जितम् ॥
संश्लिष्टा मध्यनाडी तु पुरुषं हन्ति वेगतः ।
संश्लिष्टा पार्श्वनाडी तु कन्यकां हन्त्यसंशयम् ॥
आसन्ना त्वेकनाडी स्यादासन्नमृतिदायिनी ।
दूरस्था चैकनाडी स्याद्दूरानिष्टकारिणी ॥

## वृद्धगर्गः

[2]यस्मादनर्थकलहामयमृत्यवः स्युः
पाणिग्रहादनु तयोः खलु नाडियोगे ।
तस्माच्चतुस्त्रियमलाङ्घ्रिषु भेषु नूनं
नाडीसमाजमिति चिन्त्यमनुक्रमेण ॥

[3]एकनाडीस्थिता यत्र गुरुर्मन्त्राश्च देवताः ।
तत्र द्वेषं रुजं मृत्युं क्रमेण फलमादिशेत् ॥
प्रभुः पण्याङ्गना मित्रं देशो ग्रामः पुरं गृहम् ।
एकनाडीस्थितं भव्यं विरुद्धं वेधवर्जितम् ॥

## वराहमिहिरः

[4]आद्यैकनाडी कुरुते वियोगं
मध्याख्यनाड्यामुभयोर्विनाशः ।
अन्त्या च वैधव्यमतीव दुःखं
तस्माच्च तिस्रः परिवर्जनीयाः ॥

(१) विसौ. ४०-४१.

(२) विसौ. ४०.

(३) ज्योनि. १४६.

(४) विसौ. ३९.

## स्वरोदये

[1]त्रिनाडीवेधनक्षत्रमश्विन्यार्द्रायुगोत्तराः ।
हस्तेन्द्रमूलवारुण्यः पूर्वभाद्रपदास्तथा ॥
याम्यसौम्यौ गुरुर्योनिश्चित्रामित्रजलाह्वयम् ।
धनिष्ठा चोत्तरा भाद्रा मध्यनाडी व्यवस्थिता ॥
कृत्तिका रोहिणी सर्पो मघा स्वातीविशाखके ।
उत्तरा श्रवणा पौष्णं पृष्ठनाडी व्यवस्थिता ॥
प्राङ्नाड्या वेधतो भर्ता मध्यनाड्योभयं तथा ।
पृष्ठनाडीव्यधे कन्या म्रियते नात्र संशयः ॥
प्रनष्टे जन्मभे यस्य तस्य नामर्क्षतो वदेत् ॥

## विवाहवृन्दावनम्

[2]रुद्रार्यमेन्द्रवरुणद्वयमश्विनी च
विश्वाग्निवायुफणिनां युगमन्त्यभं च ।
शेषाणि चेति नवकत्रयमेकयाते
जन्मोडुनी वरवधूनिधनाय नाडी ॥

रुद्रार्यमेन्द्रवरुणद्वयं, अश्विनी चेति प्रथमनवकम् । विश्वाग्निवायुफणिनां युग्मं अन्त्यभं चेति द्वितीयनवकम् । शेषाणि नक्षत्राणि च तृतीयनवकं इत्येवं नक्षत्राणां नवकत्रयं ज्ञेयम् । जन्मोडुनी कन्यावरयोर्जन्मनक्षत्रे एकयाते एकस्मिन्नवके प्राप्ते चेत् तदा वरवधूनिधनाय नाडी नाडीदोषो भवति । लक्ष्मी.

प्रमीयमाणोऽपि मतैर्मुनीनां
त्रिद्व्यङ्घ्रिनक्षत्रभुवः कुमार्याः ।
नाडीचतुःपञ्चतयस्य पक्षो
न क्षोदवीथीविषयत्वमेति ॥

कैश्चित् त्रिचरणद्विचरणनक्षत्रोत्पन्नकन्यायाः क्रमेण चतुर्नाडीपञ्चनाडीचक्रवेध उक्तः, स न ग्राह्य इत्याह- प्रमीयमाण इति । त्रिद्व्यङ्घ्रिनक्षत्रभुवः त्रिचरणद्विचरणनक्षत्रोत्पन्नायाः कुमार्याः कन्यायाः क्रमेण नाडीचतुःपञ्चतयस्य, नाडीचतुष्टयस्य, नाडीपञ्चकस्य पक्षः मुनीनां हारीतादिमहर्षीणां मतैः प्रमीयमाणोऽपि प्रमाणत्वं प्राप्तः अपि क्षोदवीथीविषयत्वं विचारपद्धतिगोचरत्वं नैति नागच्छति, सर्वदेशेऽनुपयुक्तत्वात् । यथाऽऽह वृद्धगर्गः- 'जाङ्गले च चतुर्माला पाञ्चाले पञ्चमालिका । त्रिमाला सर्वदेशेषु विवाहे ऋषिसंमता ॥' तथा च हारीतः- 'त्र्यङ्घ्रिभे द्व्यङ्घ्रिभे वध्वा जाताया गणयेत्क्रमात् । वह्निभादिन्दुभान्नाडीं चतुःपञ्चसु पर्वसु ॥' इति । लक्ष्मी.

## मुहूर्तचिन्तामणिः

[1]ज्येष्ठाऽर्यम्णेशनीराधिपभयुगयुगं
दास्रभं चैकनाडी
पुष्येन्दुत्वाष्ट्रमित्रान्तकवसुजलभं
योनिबुध्न्ये च मध्या ।
वाय्वग्निव्यालविश्वोडुयुगयुगमथो
पौष्णभं चापरा स्या-
द्दम्पत्योरेकनाड्यां परिणयनमस-
न्मध्यनाड्यां हि मृत्युः ॥

ज्येष्ठा प्रसिद्धा । अर्यम्णं उत्तराफाल्गुनी । ईशः आर्द्रा । नीराधिपः वरुणः, तद्भं शततारका । एभ्यो नक्षत्रेभ्यो युगयुगं द्वयंद्वयं ज्येष्ठामूलं उत्तराफाल्गुनी हस्तश्च आर्द्रा पुनर्वसुश्च शततारका पूर्वाभाद्रपदा चेत्यर्थः । दास्रभं अश्विनी च । एतन्नक्षत्रनवकं परस्परमेकनाडीत्युच्यते । पुष्यः प्रसिद्धः । इन्दुः मृगः । त्वाष्ट्रं चित्रा । मित्रः अनुराधा । अन्तकं भरणी । वसुः धनिष्ठा । जलभं पूर्वाषाढा । योनिः पूर्वाफाल्गुनी । बुध्न्यः अहिर्बुध्न्यः उत्तराभाद्रपदा च । एतन्नक्षत्रनवकं परस्परं मध्यनाडी इत्युच्यते । वायुः स्वाती, अग्निः कृत्तिका, व्यालः आश्लेषा, विश्वोडु उत्तराषाढा एभ्यो युगयुगं स्वाती विशाखा च कृत्तिका रोहिणी च आश्लेषा मघा च उत्तराषाढा श्रवणश्चेत्यर्थः, पौष्णभं रेवती च । एतन्नक्षत्रनवकं अपरा तृतीयनाडी इत्युच्यते । एतत्फलमाह- दम्पत्योः स्त्रीपुंसयोः एकनाड्यां परिणयनं असत् दुष्टफलं स्यात् । मध्यनाड्यां हि निश्चयेन मृत्युर्द्वयोरपि स्यात् । पीटी.

(१) संत. ८८३-८८४.
(२) विवृ. ३।६-७.

(१) मुचि. ६।३४.

### ज्योतिष्प्रकाशे

[1] निधनं मध्यमनाड्यां
दम्पत्योर्नैव पार्श्वयोर्नाड्योः ।
केऽप्याहुर्मध्यायाः
पादविभेदे न दोषाय ॥
करग्रहे पृष्ठनाड्यौ विनिन्द्ये इति यद्वचः ।
तत्क्षत्रियादिविषयं गौतम्या याम्यतस्तथा ॥

### रत्नकोशे

[2] आद्यनाडीव्यधे भर्ता मध्यनाडीव्यधे द्वयम् ।
पृष्ठनाडीव्यधे कन्या म्रियते नात्र संशयः ॥
समासन्ने व्यधे शीघ्रं दूरवेधे चिरेण तु ।
व्यधान्तरभमानेन वर्षं दुष्टं प्रजायते ॥
जठरे निर्धनत्वं च गर्भे मरणमेव च ।
पृष्ठे दौर्भाग्यमाप्नोति यस्मात्तां परिवर्जयेत् ॥

### अनिर्दिष्टकर्तृकवचनानि

[3] अश्विन्यार्द्रा शतभिषक्फल्गुनी चोत्तरा तथा ।
पूर्वाभाद्रपदा मूलं ज्येष्ठा हस्तः पुनर्वसुः ॥

(१) ज्योनि. १४६.
(२) ज्योनि. १४५-१४६.
(३) ज्योनि. १४५.

पूर्वाफल्गुनिका चित्रा धनिष्ठा भरणी मृगः ।
पूर्वाषाढाऽनुराधा च पुष्योऽहिर्बुध्न्यमेव च ॥

कृत्तिका रोहिणी स्वाती मघाऽऽश्लेषा च रेवती ।
श्रवणश्चोत्तराषाढा विशाखा चैकनाडिकाः ॥

[1] अश्विन्यार्द्रा हस्तमूलज्येष्ठाश्चोत्तरफाल्गुनी ।
पूर्वाभाद्रपदादित्यं शततारासाद्यनाडिका ॥

भरणी मृगपुष्यानुराधाश्चित्रा धनिष्ठिका ।
पूर्वाषाढोत्तरा भाद्रा मध्यमा पूर्वफाल्गुनी ॥

कृत्तिका श्रवणस्वाती विशाखा रेवती मघा ।
आश्लेषा रोहिणी चान्त्योत्तराषाढासु चेतरा ॥

[2] अश्विन्यादिषु धिष्ण्येषु
नाडीभेदो यदा भवेत् ।
विवाहस्तत्र कर्तव्यो
नाड्यैक्ये चाशुभप्रदः ॥

(१) संग. १९७-१९८.
(२) विसौ. ३९.

## माहेन्द्रकूटम्

### वसिष्ठः

[1] स्त्रीधिष्ण्यतो वेद४दिग१०द्रि७विश्व१३-
नृपा१६तिधृत्या१९कृति२२तत्त्व२५तुल्ये ।
पुंभे सति प्रीतिरतीव शश्वत्
माहेन्द्रकूटाच्च वधूवरस्य ॥

(१) वसं. ३२।१७९ माहेन्द्रकूटाच्च (महेन्द्रवर्गश्च); विसौ. ३५.

### गर्गः

[1] वध्वादीनां चतुःसप्त दशमश्च त्रयोदशः ।
षोडशैकोनविंशश्च द्वाविंशः पञ्चविंशतिः ।
एते माहेन्द्रकूटाश्च विवाहे कीर्तिता बुधैः ॥

### अनिर्दिष्टकर्तृकवचनम्

[2] स्त्रीभात्पुंभं चतुःसप्तदिग्विश्वैकोनविंशतौ ।
नृपत्याकृतितत्त्वे तु माहेन्द्रमिति कथ्यते ॥

(१) प्रपा. ३२०. (२) विसौ. ३४.

## स्त्रीवरदीर्घकूटम्

### वसिष्ठः

[1] स्त्रीधिष्ण्यतो भे नवके वरस्य
चाद्ये तयोर्वैरमथ द्वितीये ।
सामान्यमेतच्च वधूविदूषितं
तस्मात्तृतीये नवके विवाहः ॥

### नारदः

[2] स्त्रीधिष्ण्यादाद्यनवके स्त्रीदूरमतिनिन्दितम् ।
द्वितीये मध्यमं श्रेष्ठं तृतीये नवके भृशम् ॥

### दैवज्ञमनोहरे

[3] स्त्रीराशेर्वरभं दूरं कन्यादूरं शुभावहम् ।
व्यस्तं नृदूरमशुभं वश्यत्वात्तदपीष्टदम् ॥
कन्यादूरं शुभं प्रोक्तं वरदूरं न कारयेत् ॥

(१) वसं. ३२।१८०; विसौ. ३५ मथ (मथो) वधूविदूषितं ... ... विवाहः (वधूवरं च, श्रेष्ठं तृतीयं नवकं विवाहे).

(२) ज्योना. २७।१२५–१२६ पृ. ५९–६०; ज्योनि. १४७.

(३) विसौ. ३५; ज्योनि. १४७ (=) तृतीयार्धं नास्ति; संग. १९९ (=) वश्यत्वात्तदपीष्टदम् (अवश्यत्वान्न हीष्टदम्).

### विधिरत्ने

[1] स्त्रीजन्मतारकादूर्ध्वं त्रयोदशमितं भवेत् ।
पुंसो वा यदि जन्मर्क्षं स्त्रीदीर्घं तदपि स्मृतम् ॥
स्त्रीणां नक्षत्रमारभ्य पुंसो नक्षत्रकं भवेत् ।
त्रिभागं तत्र कर्तव्यं एकद्वित्रितयं फलम् ॥
प्रथमं पुत्रपौत्रं च द्वितीयं सर्वनाशनम् ।
तृतीयं बन्धनं प्रोक्तं स्त्रीदीर्घमिति चोच्यते ।
स्त्रीदीर्घे यदि चोद्वाहे स्त्रीनाशो भवति ध्रुवम् ॥

### डामरतन्त्रे

[2] भामिनीजन्मनक्षत्राद्द्वितीयं पतिजन्मभम् ।
न शुभं कर्तृनाशाय कथितं ब्रह्मयामले ॥

### अनिर्दिष्टकर्तृकवचने

[3] स्त्रीधिष्ण्यादतिदूरस्थं पुंभं स्त्रीदीर्घमुच्यते ।
नवकत्रितये ज्ञेयं नीचं मध्यममुत्तमम् ॥
[4] स्त्रीणां नक्षत्रमारभ्य पुंनक्षत्रं प्रगण्यते ।
त्रयोदशादूर्ध्वमृक्षं स्त्रीदीर्घं बहुलं भवेत् ॥

(१) विसौ. ३५.
(२) संग. १९९.
(३) विसौ. ३५.
(४) प्रपा. ३२०.

## रज्जुकूटम्

### अनिर्दिष्टकर्तृकवचनानि

[1] अश्विन्यादिचतुष्टयं क्रमवशात्
पूर्वं कनिष्ठादिकं
न्यस्येदङ्गुलिपर्वमूर्धनि नभस्येभ्यः
परं तारकम् ।
आरोहाक्रमणेऽवरोहणविधिं कुर्यात्
क्रमोऽयं वरः
पादोरूदरकण्ठमूर्धविषया
रज्जोरिमा रज्जवः ॥
पादरज्जौ प्रयाणं स्यादूरुरज्जौ धनक्षयः ।
उदरे पुत्रहानिः स्यात्कण्ठरज्जुः पतिं हरेत् ॥
दंपत्योर्मरणायैव शिरोरज्जुरिति स्मृतः ॥

(१) प्रपा. ३२२.

अश्विसार्पौ मघाज्येष्ठे मूलान्त्ये पादरज्जुकाः ।
याम्यतिष्यौ भाग्यमित्रे जलबुध्नी च जानुकाः ॥
अग्न्यदित्युत्तरेन्द्राग्नी विश्वाजाङ्घ्री च नाभिकाः ।
ब्रह्मेश्वरौ करस्वात्यौ मुकुन्दवरुणौ तथा ।
स्युः कण्ठरज्जवश्चन्द्रवसुचित्राः शिरोऽभिधाः ॥
[1]विधुबिम्बत्रयं कृत्वा तिर्यग्रेखाचतुष्टयम् ।
अश्विन्यादीनि धिष्ण्यानि वामपार्श्वादि विन्यसेत् ॥

(१) विसौ. ३५-३६.

गोमूत्रवद्विरचयेद्युतिमेषामनुक्रमात् ।
फलं नक्षत्रयोश्चिन्त्यं कन्यकावरयोरिदम् ॥

गलोदरकटीपादं रेखासु यदि संस्पृशेत् ।
एकरेखा भवेन्नाशो भिन्नरेखा सुशोभनम् ॥

वैधव्यं गलरेखायां क्रोडरेखाऽनपत्यता ।
दरिद्रता भवेत्कट्यां पादे वा जीवनाशनम् ॥

गलस्थितादिधिष्ण्येषु भिन्नरेखास्थितेषु च ।
दम्पत्योरायुरारोग्यं सुखसंपत्समृद्धयः ॥

## वेधकूटम्

### वसिष्ठः

[1]पूर्वाश्विन्योर्याम्यमैत्राख्ययोश्च
वह्नीन्द्राग्न्योर्वायुतोयेशयोश्च ।
विश्वेन्द्वोर्वै त्वाष्ट्रजाङ्घ्न्योर्हुताश-
विष्णवोर्विश्वादित्ययोर्जीववाय्वोः ॥
मूलाश्लेषातारयोः पौष्णपित्रो-
र्भाग्यर्क्षाहिर्बुध्न्ययोर्वै विवाहे ।
तोयेशाहिर्बुध्न्ययोराजपादा-
र्यम्णोर्वैरं सर्वदा वर्जनीयम् ॥

### अनिर्दिष्टकर्तृकवचनानि

[2]अश्विन्यादीनि ऋक्षाणि नवाद्यन्तानि च क्रमात् ।
ज्येष्ठान्तानि मघादीनि नव विध्युः परस्परम् ॥

(१) वसं. ३२।२०४-२०५.
(२) विसौ. ३९.

मूलादिपौष्णभान्तानि नव विध्युः परस्परम् ।
विद्धान्येतानि संत्यज्य दम्पत्योः पाणिपीडनम् ।
कुर्वीत यत्नतो विद्वान् वेधे वैधव्यमाप्नुयात् ॥
[1]अश्वियमाग्निविरिञ्चा
ज्येष्ठामैत्रद्विदैवपवमानाः ।
रुद्रादितिगुरुफणिनो
नारायणवैश्वदेवजलमूलम् ॥
पित्र्यभगार्यमहस्ताः
पौष्णोपान्त्यावजैकपाद्वरुणाः ।
विध्यन्ति प्रतिपादं
शशिवसुचित्रास्तथान्योन्यम् ॥
मूर्ध्नि वेधः पतिं हन्याद्बाहुवेधश्च योषितम् ।
कुक्षिवेधः सुतं हन्यादूरुवेधश्च बान्धवान् ।
पादवेधो धनं हन्यात्तस्मात्सर्वान्विवर्जयेत् ॥

(१) प्रपा. ३२२.

## भूतकूटम्

### वासिष्ठः

[1]दस्रर्क्षतो भानि भवन्ति पञ्च
गणा धराम्ब्वग्न्यनिलाम्बराणाम् ।
पञ्चर्तुभूतर्त्विषुभिः क्रमेण
वैरं जलाग्न्योरितरत्र वृद्धिः ॥

### अनिर्दिष्टकर्तृकवचनानि

[2]अश्विन्याद्यास्तु षट्ताराः पुनर्वस्वादयश्च षट् ।
हस्तादिपञ्चकं चैव ज्येष्ठाद्यं पञ्चकं तथा ॥
वस्वादिपञ्चकं भानां भूतकूटं धरादयः ।
स्त्रीपुंसोर्जन्मनक्षत्रे एकभूते शुभावहः ॥
धरातोयेऽतिसंपत्स्यात्तोयवाय्वोस्तु मध्यमः ।
अधमं वायुभूम्योः स्यादग्नितोयेऽधमाधमः ॥
शेषभूतेऽधमो योगः परस्परसमागमे ।
ज्ञेयानि भूतकूटानि दम्पत्योस्तु विवाहके ।

धरादयः पृथिव्यादिपञ्चभूतानि । प्रपा. ३२२

[1]दस्राद्दक्षाणि पञ्चर्तुभूतर्त्वक्षाणि वै क्रमात् ।
पृथिव्यादीनि वह्न्यम्बुवैरमन्यच्छुभावहम् ॥

(१) वसं. ३२।२०६ ; विसौ. ४१ गणा धराम्ब्वग्न्य (गन्धादितोयाग्न्य) पञ्चर्तु (भूतर्तु).
(२) प्रपा. ३२२–३२३.

(१) विसौ. ४१.

## लिङ्गकूटम्

### वासिष्ठः

[1]सार्पाच्चतुष्कं वसुवारिरुद्र-
त्वाष्ट्रत्रयं विश्वयमान्त्यशक्राः ।
स्त्रीलिङ्गतारा वरुणेन्दुमूलाः
नपुंसकाख्याः पुरुषाः पराः स्युः ॥
[2]स्वकीयलिङ्गेषु तयोः स्वजन्म-
धिष्ण्येषु संप्रीतिरतीव नित्यम् ।
युद्धं भवेद्व्युत्क्रमलिङ्गकेषु
सामान्यमन्यत्र नपुंसकेषु ॥

### बृहस्पतिः

[3]सार्पाच्चतुष्कं रौद्रं च याम्यं त्वाष्ट्रत्रिकं जलम् ।
विश्वेन्दुवासवं पौष्णं स्त्रीलिङ्गं समुदाहृतम् ॥
सौम्यवारुणमूलानि नपुंसकाह्वयानि च ।
शेषाः पुंलिङ्गतां यातास्ताराः शृणु शचीपते ॥
स्त्रीनक्षत्रेऽङ्गनाजन्म पुंनक्षत्रे पुमान्यदि ।
स संयोगः शुभः प्रोक्तो देवेन्द्रगुरुणा मतः ॥
न शुभं विपरीते तु मध्यमं स्त्रीनपुंसकम् ।
पुंनपुंसकमेवं स्यात्सर्वत्र द्विकयोगतः ॥

### गर्गः

[1]श्रवणाभिजिदादित्यहस्ततिष्याश्विनीयुताः ।
प्रोष्ठपादद्वयं चित्रा पुंताराश्च प्रकीर्तिताः ॥
वारुणं सौम्यमूले च नपुंसकसमाह्वयाः ।
शेषाः स्त्रियः समाख्यातास्ताराः स्युर्गुरुणा मताः ॥

### अनिर्दिष्टकर्तृकवचनम्

[2]वसूदकेशविश्वान्त्यत्वाष्ट्रत्रययमेन्द्रकाः ।
उरगादिचतुष्कं च स्त्रीलिङ्गे प्रीतिरुत्तमा ।
दम्पत्योर्व्युत्क्रमे लिङ्गे कलहः सर्वदा भवेत् ॥

(१) वसं. ३२।२०७ वरुणेन्दुमूलाः नपुंसकाख्याः (श्रवणेन्दुमूलतारा नपुंसाः) पराः (परे); विसौ. ४१; ज्योनि. ११०.
(२) वसं. ३२।२०८; विसौ. ४१ लिङ्गेषु तयोः (लिङ्गे ह्युभयोः) लिङ्गकेषु (लिङ्गके तु).
(३) प्रपा. ३२३.

(१) प्रपा. ३२३.
(२) विसौ. ४१.

## जातिकूटम्

### वसिष्ठः

[१]विप्रक्षमाधीश्वरविट्चतुर्था
ये पञ्चमाः संकरजाश्च षष्ठाः ।
जातिप्रभेदा इति दस्रभादि-
ऋक्षाण्यपि ब्राह्मणपूर्वकाणि ॥
[२]क्रमादजाङ्घ्रित्रितयं च शिष्टं
त्रैवर्णिकानां निखिलानि भानि ।
सम्यग्विचार्यैवमनुक्रमेण
जात्याख्यकूटे च फलं ब्रवीमि ॥
प्रीतिर्नृनार्योरतुलैकजात्यां
पुंजातितो हीनकुला समा स्त्री ।
स्त्रीजातितो हीनकुलः पुमांश्चेत्
विलोमजात्यामपि तीव्रवैरम् ॥

(१) वसं. ३२।२०९; विसौ. ४१–४२ र्था ये (र्थाचे) जाति (जातौ).
(२) वसं. ३२।२१०–२११; विसौ. ४२ कूटे च (कूटेऽत्र) रतुलैकजात्यां (रखिलैकजात्योः) तीव्रवैरम् (याति वैरम्).

### अनिर्दिष्टकर्तृकवचनानि

[१]अश्विनीरौद्रभाग्यादि पञ्च पञ्च च तारकाः ।
ततश्चतुश्चतुस्तारा जातयः षट् प्रकीर्तिताः ॥

ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैवानुलोमजाः ।
प्रतिलोमाश्च कथ्यन्ते पण्डितैर्जातयश्च षट् ॥

उत्तमः समजातिः स्यान्मध्यमस्त्वनुलोमजः ।
अधमः प्रतिलोमः स्याच्चण्डालोऽप्यधमाधमः ॥

[२]विप्रक्षत्रियविट्शूद्राः पञ्चमः संकरश्च षट् ।
दस्रादीनि च चत्वारि चत्वारि प्रतिजातिषु ॥

अजाङ्घ्रित्रितयं शिष्टं विप्रादित्रितयं क्रमात् ।
प्रशस्तमेकजातौ तु हीनस्त्रीग्रहणं सदा ॥

(१) प्रपा. ३२३.
(२) विसौ. ४१.

## पक्षिकूटम्

### वसिष्ठः

[१]भेरुण्डपिङ्गलककाकसुकुक्कुटानां
बर्ही तथाऽश्विमुखभानि गणाश्च पञ्च ।
बाणर्तुषट्शरशरैः क्रमशो विवाहे
भिन्ने गणे कलहमेकगणे प्रवृद्धिः ॥

(१) वसं. ३२।२१४; प्रपा. ३२३ कलहं (कलहः); विसौ. ४२.

## योगिनीकूटम्

### वसिष्ठः

[1]ब्रह्माणी कौमारी वाराही वैष्णवी च माहेन्द्री ।
चामुण्डा माहेशी श्रीलक्ष्मीश्चाष्टयोगिन्यः ॥

*पूर्ववदूर्ध्वं सर्वं योगिन्यैक्ये शुभोऽन्यथा त्वशुभः ।
वर्गो मुख्यतरः स्यात्सर्वेषां सर्वदा करग्रहणे ॥

* पूर्ववदिति आयकूटे इत्यर्थः ।

(१) वसं. ३२।२१६–२१७; विसौ. ४२ वर्गो मुख्यतरः स्यात् ( वर्गोऽयं मुख्यतरः ).

### अनिर्दिष्टकर्तृकवचनानि

[1]योगिनीनां तु सप्तानामनीकः सप्ततुल्यकः ।
एकयोगिनि नक्षत्रे शुभं तारा यदि द्वयोः ।
भिन्नयोगिनि ताराः स्युर्न शुभोऽयं विशेषतः ॥

[2]ब्रह्माणी चैव कौमारी वाराही वैष्णवी तथा ।
माहेन्द्री चैव चामुण्डा माहेशी च तथा रमा ॥
तारा दस्रादयस्त्वष्टौ साभिजिच्च पुनः पुनः ।
योगिन्यैक्ये समृद्धिः स्याद्भिन्नत्वेऽल्पं शुभं भवेत् ॥

(१) प्रपा. ३२३.
(२) विसौ. ४२.

## गोत्रकूटम्

### वसिष्ठः

[1]स्युः सप्तगोत्रा भचतुष्टयेन
गजाश्विसंख्याश्विमुखानि भानि ।
मरीचिवासिष्ठमहाङ्गिरोऽत्रि
पौलस्त्यसंज्ञाः पुलहः क्रतुश्च ॥

[2]यदैकगोत्रे कलहः स्वजन्मभे
संप्रीतिवृद्धिर्यदि भिन्नगोत्रे ।
एष प्रधानः खलु गोत्रवर्गः
सुचिन्तनीयः सततं नृनार्योः ॥

### अनिर्दिष्टकर्तृकवचनानि

[3]मरीचिगोत्रताराः स्युरश्विन्यादिचतुष्टयम् ।
वासिष्ठाः सौम्यताराद्या आश्लेषाद्यास्तथाऽङ्गिराः ॥

हस्ताद्यास्तु तथाऽत्रिः स्यात्पुलस्त्यो मैत्रभादयः ।
पुलहश्चैव विश्वाद्या भृगुर्वरुणभादयः ॥

एवं गोत्रोत्थभाद्यास्तु भिन्नगोत्रे शुभं भवेत् ।
सगोत्रे त्वशुभं विद्याद्गोत्रसंयोग उत्तमः ॥

वधूवरर्क्षे चैकर्षिगोत्रस्थमशुभं भवेत् ।
भिन्नर्षिगोत्रे शुभदं वरवध्वोर्विवाहके ॥

[1]मरीचिश्च वसिष्ठश्च ह्यङ्गिराश्चात्रिरेव च ।
पुलस्त्यः पुलहश्चैव क्रतुश्च मुनयः क्रमात् ॥

साभिजिदस्रभादीनि सप्त सप्त पुनः पुनः ।
भिन्नगोत्रेषु शुभदमेकगोत्रे कलिप्रदम् ॥

(१) वसं. ३२।२१२; विसौ. ४२ गजाश्विसंख्याश्वि ( गजाश्वसंख्याश्च ) महाङ्गि ( मथाङ्गि ).
(२) वसं. ३२।२१३ स्वजन्मभे ( त्वजस्रं ) सुचिन्त ( संचिन्त ); विसौ. ४२.
(३) प्रपा. ३२३.

(१) विसौ. ४२.

## आयकूटम्

### वसिष्ठः

[1]आया ध्वजाद्याः क्रमशोऽश्विपूर्व-
भान्यष्टभिर्भैश्च पुनः पुनः स्युः ।
त्रैवर्णिकं भत्रितयं च शिष्टं
प्रद्वेष एषां खलु पञ्चमेन ॥

### गर्गः

[2]ध्वजस्य ताराः संप्रोक्ता अश्विन्यादिचतुष्टयम् ।
सौम्याद्यब्धिरथाग्नौ च सर्पाद्याश्च हरौ तथा ॥

हस्ताद्याः शुनि चैवं स्याद्वृषे चेन्द्रा-
ग्निपूर्वकाः ।
मूलाद्याः खरताराः स्युर्वैष्णवाद्या गजस्य च ॥

पूर्वाप्रोष्ठपदाद्याः स्युर्वायसस्य त्रितारकाः ।
मित्रायेऽतिशुभं विद्यादर्यायै तु विनाशदः ।
समाये सम एव स्याद्दम्पत्योर्जन्मतारयोः ॥

स्ववर्गात्पञ्चमो रिपुरिति पूर्ववत् ज्ञेयम् ।

प्रपा. ३२३

(१) वसं. ३२।२१५ एषां (मेषां); प्रपा. ३२३ पूर्वभान्य (पूर्वा तान्य) भत्रितयं (च त्रितयं); विसौ. ४२ पूर्व (पूर्वा) भत्रितयं च (भिन्नतयैव).
(२) प्रपा. ३२३.

---

## सुधांशुयुक्कूटम्

### वसिष्ठः

[1]पावकदुर्गादिवसौ रविरमरपतिश्च सुरपदिशि ।
धर्मचतुर्मुखदिवसौ भूतनयः पावकश्च
वह्निदिशि ॥
गिरिसुतशिवदिवसौ वा सुरगुरुः
प्रेतपश्च याम्यायाम् ।
गणपतिहरिदिवसौ दिशि रवितनयः
कोणपश्च नैर्ऋत्याम् ॥

कामभुजङ्गमदिवसौ
असुरगुरुर्वारिपश्च वारुण्याम् ।
कलिगिरिजात्मजदिवसौ
प्रभञ्जनः शीतरुक्च वायव्याम् ॥
दिनपतिनिशिपतिदिवसौ दिनपसुतो
यक्षराडुदीच्यां च ।
वसुपितृदिवसौ नूनं स्वर्भानुरथ
चन्द्रमौलिरैशान्याम् ॥
अश्विन्याद्यास्ताराः पर्यायपरैरष्टभिश्च विज्ञात्वा ।
दम्पत्योर्दिगधीशग्रहनाथानां तिथीशानाम् ।
मित्रत्वे मित्रत्वं शत्रुत्वे शात्रवं च वैवाहे ॥

(१) वसं. ३२।२१८–२२३.

## दैवकूटम्

### अनिर्दिष्टकर्तृकवचनानि

[1]तारेशदेवताद्वन्द्वे परस्परममित्रताम् ।
याते विनाशो दम्पत्योर्मित्रतारा सुखं भवेत् ॥

दम्पत्योर्मित्रतारा तु शुभदा चेद्विवाहके ।
देवासुरेशतारासु दम्पत्योर्यदि तारके ।
विनाशः स्याद् द्वयोर्योगे मित्रे शेषे शुभावहम् ॥

(१) प्रपा. ३२३.

## पुस्त्रीकूटम्

### रत्नमालायाम्

[1]षट् पौष्णतो द्वादश शाङ्कराच्च
पौरन्दराद्भानि नव क्रमेण ।
पूर्वार्धमध्यापरभागयुञ्जि
चिरंतनज्यौतिषिकैः स्मृतानि ॥

पूर्वभागयुजि भे पतिः प्रियो
योषितामपरभागयोगिनि ।
स्त्री नृणां भवति मध्ययोगिनि
प्रेम नूनमुभयोः परस्परम् ॥

(१) ज्योनि. १४६; संग. १९९ शाङ्क (शङ्क).

## वर्गकूटम्

### मुहूर्तचिन्तामणिः

[1]अकचटतपयशवर्गाः
खगेशमार्जारसिंहशुनाम् ।
सर्पाखुमृगावीनां
निजपञ्चमवैरिणामष्टौ ॥

नामकर्मप्रकरणे 'चूचेचोलापदेष्वाद्ये' इत्यज्झल्रूपाः सर्वे वर्णा अस्माभिरभिहिताः । तत्राज्रूपः अवर्गः, कुचुटुतुपु इति पञ्चवर्गाः, एको यवर्गः, अन्यः शवर्गः । एवमष्टौ वर्गाः । तत्र अवर्गः खगेशस्य गरुडस्य, कवर्गो मार्जारस्य, चवर्गः सिंहस्य, टवर्गः शुनः कुक्कुरस्य, तवर्गः सर्पस्य, पवर्गः आखोः मूषकस्य, यवर्गः मृगस्य, शवर्गो मेषस्य । अत्र निजात् स्वस्मात् पञ्चमा वैरिणो येषां ते तथोक्ताः । गरुडसर्पयोः, मार्जारमूषकयोः, सिंहमृगयोः, श्वमेषयोः परस्परं महावैरमित्यर्थः । अत्र स्त्रीपुंसयोर्नक्षत्रद्वयं भक्ष्यभक्षकवर्गे चेद्भवेत्तदा न शुभम् । यदा त्वेकवर्गे उदासीनवर्गे वा स्यात्तदा शुभमेव । एतच्च स्वामिसेवकयोरपि विचार्यम् । पीटी.

(१) मुचि. ६।३५.

### अनिर्दिष्टकर्तृकवचनम्

[1]वर्गेशास्तार्क्ष्यमार्जारसिंहश्वसर्पमूषकाः ।
मृगश्च शशकस्तत्र स्ववर्गात्पञ्चमो रिपुः ॥

(१) ज्योनि. १४७; संग. १९९.

# कूटगुणविचारः

## मुहूर्तचिन्तामणिः

[1]वर्णो वश्यं तथा तारा योनिश्च ग्रहमैत्रकम् ।
गणमैत्रं भकूटं च नाडी चैते गुणाधिकाः ॥

एते राशिकूटभेदाः वर्णादिमैत्र्यां सत्यां गुणाधिकाः एकादिगुणाधिकाः स्युः । यथा वर्णमैत्र्यामेको गुणः, वश्ये द्वौ गुणौ, तारायां त्रयो गुणाः, योनिमैत्र्यां चत्वारः, ग्रहमैत्र्यां पञ्च, गणमैत्र्यां षट्, सद्भकूटे सप्त, नाडीभेदेऽष्टौ इत्यर्थः । पीटी.

## अनिर्दिष्टकर्तृकवचनानि

[2]एको गुणः सदृग्वर्णे तथा वर्णोत्तमे वरे ।
हीनवर्णे वरे शून्यं केऽप्याहुः सदृशे दलम् ॥
[3]सख्यं वैरं च भक्ष्यं च वश्यमाहुस्त्रिधा बुधाः ।
वैरे भक्ष्ये गुणाभावो द्वयोः सख्ये गुणद्वयम् ।
वश्यवैरे गुणश्चैको वश्यभक्ष्ये गुणार्धकम् ॥
[4]एकतो लभ्यते तारा शुभा चैवाशुभाऽन्यतः ।
तदा सार्धो गुणश्चैव ताराशुद्धौ मिथस्त्रयः ॥
[5]उभयोर्न शुभा तारा तदा शून्यं समादिशेत् ।
अष्टाविंशतिताराणां योनयश्च चतुर्दश ।
तत्र वैरं महद्वैरं सत्त्वानां स्वस्वभावत:
( ? ता ) ॥
मैत्रं चैवातिमैत्रं च विवाहे सत्त्वसादृशम् ।
महावैरे च वैरे च स्वभावे च यथाक्रमम् ।
मैत्रे चैवातिमैत्रे च खेन्दुद्वित्रिचतुर्गुणाः ॥
ग्रहमैत्रं सप्तभेदं गुणाः पञ्च प्रकीर्तिताः ।
तत्रैकाधिपतित्वे च मित्रत्वे गुणपञ्चकम् ॥
चत्वारः सममित्रत्वे द्वयोः साम्ये त्रयो गुणाः ।
मित्रवैरे गुणश्चैकः समवैरे गुणार्धकम् ॥
परस्परं खेटवैरे गुणशून्यं विनिर्दिशेत् ।
असद्भे सममित्रादौ ह्येका ग्राह्या
यथोदिताः ॥
गणभेदः सप्तविधो गुणाः षट्प्रमिता मताः ।
षड् गुणा गणसादृश्ये पञ्च स्युः सुरमानुषे ॥
नार्यां देवो नरः पुंसश्चत्वारो वा गुणास्त्रयः ।
देवराक्षसयोः शून्यं शून्यं च नररक्षसोः ॥
पुंसो रक्षोगणो यत्र नार्यां देवोऽथवा नरः ।
गुणौ द्वौ क्रमतश्चैको गुणो ग्राह्योऽन्यथा न हि ॥
सद्भकूटत्रयं प्रोक्तं दुष्टकूटत्रयं तथा ।
सप्तमं चैकराश्याख्यं गुणस्तेषामथोच्यते ॥
शून्यमेकांशके चैकराशौ सप्तैव भिन्नभे ।
एकराश्यृक्षके सप्त भिन्नराश्यैकभे शराः ॥
सद्भकूटेऽबलादूरे सप्त चापि नृदूरके ।
सद्भमैत्रेषु ते सप्त मैत्रहीने तु षड्गुणाः ॥
दुष्टकूटे च मित्राख्ये स्त्रीदूरेऽब्धिमिता गुणाः ।
नृदूरे दुष्टकूटे च मित्रसंज्ञे गुणान्विते ।
एको गुणोऽन्यथा शून्यं शून्यं निन्द्ये तु
दुष्टभे ॥
नाड्यन्तरं शुभं यत्र ग्राह्यं तत्र गुणाष्टकम् ।
नाडीदोषे गुणाभावः पूर्वाचार्यैरुदाहृतः ।
पृष्ठनाड्यंशभेदादिग्राह्यपक्षेऽपि खं गुणाः ॥
गणवैरे च भक्ष्ये च तथा योन्यां च वैरके ।
नैव ग्राह्या गुणास्तत्र शून्यं चैव विदुर्बुधाः ॥
गुणैः षोडशभिर्निन्द्यं मध्यमा विंशतेस्तथा ।
श्रेष्ठं त्रिंशद्गुणं यावत्परतस्तूत्तमोत्तमम् ॥
सद्भकूट इति ज्ञेयं दुष्टकूटेऽथ कथ्यते ।
निन्द्यं गुणैर्विंशतिभिर्मध्यमं पञ्चभिस्तथा ।
तत्परैः पञ्चभिः श्रेष्ठं ततः श्रेष्ठतरं गुणैः ॥
[1]वर्णो वश्यं मिथस्तारा योनिर्ग्रहगणेष्टता ।
राशिकूटं नाडिका: स्युरेकाधिकगुणा अमी ॥

(१) मुचि. ६।२१.
(२) ज्योनि. १४७; संग. १९४.
(३) ज्योनि. १४७; संग. १९४ गुणार्धकम् (गुणाधिकम्).
(४) ज्योनि. १४७; संग. १९४ चैवाशुभाऽन्यतः (चैवान्यतोऽशुभा) सार्धो गुण (सार्धगुण) ज्योतिर्निबन्धे.
(५) ज्योनि. १४७-१४८.

(१) संग. १९४.

## कूटापवादाः

### वसिष्ठः

[1]एकाधिपत्ये त्वथ मित्रभावे
स्त्रीपुंसराश्योर्नवरज्जुदोषे ।
षट्काष्टकादिष्वपि शर्मदं स्या-
दुद्वाहकर्माऽऽचरतोस्तयोश्च ॥
एकाधिपे मित्रभावेऽप्युद्वाहः शर्मदः सदा ।
द्विर्द्वादशे त्रिकोणे च न कदाचित्षडष्टके ॥
[2]अन्योऽन्यं शात्रवं यत्र दम्पत्योर्जन्मतस्तयोः ।
प्रीतिषष्ठाष्टमं त्याज्यमपि नूनं करग्रहे ॥
[3]द्विर्द्वादशे वा नवपञ्चमे वा
षष्ठाष्टके राक्षसयोषितो वा ।
एकाधिपत्ये भवनेशमैत्रे
वैरेऽपि पाणिग्रहणं विधेयम् ॥
[4]विवाहकरणे नृणामवश्यं वश्यमिष्यते ।
तदभावेऽपि राशिश्च गणरज्जुयुतः शुभः ॥
[5]योनेरभावे नोद्वाहः स तु कार्यो वियोगदः ।
राशिर्वश्यं च यद्यस्ति कारयेन्न तु दोषभाक् ॥
[6]स्त्रीदीर्घे रज्जुकूटे च राशौ नाड्यां स्थिते सति ।
ग्रहाणां मैत्र्यभावेऽपि विवाहः शुभदो भवेत् ॥

### नारदः

[7]एकाधिपे मित्रभावे शुभदं पाणिपीडनम् ।
द्विर्द्वादशे त्रिकोणे च न कदाचित्षडष्टके ॥

(१) वसं. ३२।१८६–१८७.
(२) वसं. ३२।१९३.
(३) विसौ. ३७; सग. १९७ षष्ठाष्टके (षडष्टके) योषितो (योषिता) वैरेऽपि (शुभाय).
(४) विसौ. ३६; संप्र. ७७६.
(५) प्रपा. ३२१ (=) रभावे (रभेदे) स तु कार्यो (कार्यः स तु); विसौ. ३५ अत्रिः; संप्र. ७७७.
(६) विसौ. ३९; संप्र. ७७८.
(७) ज्योना. २७।१३० पृ. ६०.

### बृहस्पतिः

[1]जन्मकर्मर्क्षनाथौ द्वौ मिथो मित्रे यदा तदा ।
वैनाशिकांशकोद्भूतदोषो भङ्गत्वमाप्नुयात् ॥
जन्मकर्मर्क्षनाथौ द्वौ तदंशस्थौ यदा तदा ।
वैनाशिकांशकोद्भूतदोषो भङ्गत्वमाप्नुयात् ॥
[2] एकराशौ पृथग्धिष्ण्ये पृथग्राशौ तथैकभे ।
गणं नाडीं नृदूरत्वं ग्रहवैरं न चिन्तयेत् ॥
[3]दोषापनुत्तये नाड्या मृत्युञ्जयजपादिकम् ।
विधाय ब्राह्मणांश्चैव तर्पयेत्काञ्चनादिना ॥
हिरण्मयीं दक्षिणां च दद्याद्वर्णादिकूटके ।
गावोऽन्नं वसनं हेम सर्वदोषापहारकम् ॥

### शौनकः

[4]वर्गवैरं योनिवैरं गणवैरं नृदूरकम् ।
दुष्टकूटफलं सर्वं ग्रहमैत्र्या विनश्यति ॥

### गर्गः

[5]स्त्रीदीर्घगणयोः सत्त्वे चन्द्रताराबले सति ।
असत्त्वं दिनकूटस्य न दोषं जनयेद्ध्रुवम् ॥

दिनकूटमिति ताराकूटस्यैव संज्ञान्तरम् । चन्द्रताराबलमत्र जन्मलग्नकालीनं वेदितव्यम् । संप्र. ७७७

[6]ग्रहमैत्री च राशिश्च विद्यते नियतं यदि ।
न गणाभावजनितं दूषणं स्याद्विरोधदम् ॥

(१) प्रपा. ३२०.
(२) ज्योनि. १४४.
(३) विसौ. ४३; संग. १९९ हारकम् (कारकम्) चूडामणौ.
(४) ज्योनि. १४७ मैत्र्या विनश्यति (मैत्रेण नश्यति); संग. १९८–१९९.
(५) विसौ. ३५; संप्र. ७७६–७७७.
(६) प्रपा. ३२० (=) (ग्रहमैत्रं च राशिश्च विद्यते नियतं यदि । न गणाभावजनितो दोषः कश्चन विद्यते ॥); विसौ. ३४.

[1] ग्रहमैत्री च रज्जुश्च स्यातां सज्जनसंमतौ ।
माहेन्द्रदोषो नास्तीति वाक्यमिन्द्रपुरोधसः ॥

[2] न खेटमैत्रं नो राश्यं न वर्णो न च तारकाः ।
सद्भकूटे परा प्रीतिर्न सा वज्रेण भिद्यते ॥

सद्राशिकूटं ग्रहमैत्रयुक्तं
शुभं भवेद्यद्यपि योनिवैरम् ।
योनौ गणे चेत्त्वनुकूलता स्यात्
शुभो विवाहो ह्यपि खेटवैरम् ॥

ग्रहमैत्रं शुभा तारा राशिवश्यं त्रिभिः शुभम् ।
षडष्टकं बुधाः प्राहुर्द्वाभ्यां द्व्यर्कत्रिकोणकम् ॥

[3] सद्भकूटे योनिवैरं मृत्युदं च परित्यजेत् ।
तत्र चेद्ग्रहयोः सख्यं नातिदुष्टं विदुर्बुधाः ॥

## मनुः

[4] ग्रहमैत्री च रज्जुश्च यदि नाडी पृथक् तयोः ।
विवाहः शुभदः कन्या राक्षसी वा नरो वरः ॥

## वराहः

[5] द्विर्द्वादशं नृदूरत्वं नाडीगणभयोनिता ।
न चिन्त्या खगवैरं च राशिकूटोत्तमं द्वयोः ॥

[6] रक्षोगणो यदि वरो नृगणा कुमारी
सद्राशिकूटखगमैत्रभयोनिशुद्धिः ।
यद्यस्ति तत्र शुभदं करपीडनं स्यात्
वामभ्रुवां खलु यदा न हि नाडियोगः ॥

[7] सद्भकूटं योनिशुद्धिर्ग्रहसख्यं गुणत्रयम् ।
एष्वेकतमसद्भावे कन्या रक्षोगणा शुभा ॥

(१) प्रपा. ३२०. इदं वचनं गर्गस्यैवेति न निर्णयः ।
(२) ज्योनि. १४४–१४५.
(३) ज्योनि. १४२.
(४) विसौ. ३४; संग. १९७ नरो वरः (वरो नरः).
(५) ज्योनि. १४४.
(६) ज्योनि. १४३.
(७) ज्योनि. १४३ ; संग. १९७ सख्यं (मैत्री).

## श्रीधरीये

[1] द्विर्द्वादशे पञ्चनवर्क्षयोगे
षष्ठाष्टके राक्षसयोषिदृक्षे ।
एकाधिपत्ये उभयोश्च मैत्रे
विवाहयोगं शुभदं वदन्ति ॥

## श्रीपतिः

[2] भवनपतिसुहृत्त्वं स्यात्तथैकाधिपत्यं
यदि भवनवशित्वं चैव षष्ठाष्टमेऽपि ।
शुभकृदिह विवाहोऽन्योन्यताराविशुद्धौ
यदि खलु फणिचक्रे स्यान्न नाडीसमाजः ॥

## विवाहवृन्दावनम्

[3] दृश्यते सुहृदभिन्नपतित्वं
क्षेत्रयोस्तदखिलेष्वपि मेलः ॥

अथास्य परिहारं कथयति–दृश्यत इति । चेत्क्षेत्रयोः राश्योः सुहृदभिन्नपतित्वं स्वामिसुहृत्त्वं ऐकाधिपत्यं वा दृश्यते तत्तदा अखिलेषु समस्तेषु द्विर्द्वादशादिषु अपि मेलः स्यात् ।　　लक्ष्मी.

[4] स्याद्राशिमैत्रीधुरि कुम्भहर्योः
करग्रहस्तद्ग्रहविग्रहेऽपि ।
तस्यामसत्यां मृगराजमीना-
वप्याहृतौ तद्ग्रहयोः सुहृत्त्वे ॥

राशिमैत्रग्रहमैत्रयोरन्यतरलाभेऽपि शुभत्वं कथयति–स्यादिति । कुम्भहर्योः कुम्भसिंहयोः समसप्तकत्वात् राशिमैत्रीधुरि राशिमैत्र्यां सत्यां तद्ग्रहविग्रहे तयोः स्वामिनोः शत्रुत्वे अपि करग्रहः स्यात् । तथा तस्यां राशिमैत्र्यां असत्यामपि तद्ग्रहयोः तत्स्वामिनोः सुहृत्त्वे मृगराजमीनौ आहृतौ षडष्टकत्वेऽपि स्वामिसुहृत्त्वात् सिंहमीनौ स्वीकृतावित्यर्थः ।　　लक्ष्मी.

(१) प्रपा. ३२१.
(२) प्रपा. ३२० ; विसौ. ३८ षष्ठाष्टमे (षट्काष्टके).
(३) विवृ. ३।२.
(४) विवृ. ३।११.

## दैवज्ञमनोहरे

[1]कन्यादूरं शुभं प्रोक्तं वरदूरं न कारयेत् ।
मिथ्यैतद्भाषितं पूर्वैर्ग्रहमैत्र्याऽथ नोऽशुभम् ॥

## विधिरत्ने

[2]स्त्रीदीर्घं यदि नोद्वाहे स्त्रीनाशो भवति ध्रुवम् ।
स दोषो नास्ति यद्यस्ति राशीशग्रहमित्रता ॥

## बुधवल्लभे

[3]ग्रहवैरं दुष्टकूटे सन्मेले योनिवैरकम् ।
त्याज्यं वैरं राशिवैरे तारादौष्ट्यं षडष्टके ॥
गणवैरं वल्लभत्वाद्वर्गोद्यर्कं त्रिकोणकम् ।
स्त्रीदूराद्दुष्टकूटश्च मैत्राः सर्वे गुणाः शुभाः ॥
न वर्णवर्गो न गणो न योनि-
र्द्विर्द्वादशे चैव षडष्टके वा ।
वरेऽपि दूरे नवपञ्चम वा
मैत्री यदि स्याच्छुभदो विवाहः ॥

## माधवीये

[4]जन्मेशकर्मेश्वरमित्रभावः
क्षिणोति वैनाशिकदोषमुग्रम् ॥

## राजमार्तण्डः

[5]भवेत्त्रिकोणे बहुपुत्रवित्ता
द्विर्द्वादशे चार्थमुपैति कन्या ।
षट्काष्टके सौख्यफलं विधत्ते
स्त्रीणां विवाहो ग्रहमित्रभावे ॥
मैत्री क्षेत्रपयोर्द्वयोर्यदि भवे-
देकाधिपत्येऽपि चेत्
तारा मित्रसुमित्रजन्मशुभदा
क्षेमा च संपत्करी ।
षष्ठाष्टे नवपञ्चमे व्ययधने
योगेऽपि पुंयोषितोः
प्रीत्यायुःसुतवृद्धिवित्तजनकः
कार्यो विवाहस्तदा ॥

[1]षष्ठाष्टके गोमिथुनं प्रदेयं
कांस्यं सरूप्यं नवपञ्चमेऽपि ।
वस्त्रं प्रदेयं कनकं स्वशक्त्या
द्विर्द्वादशे ब्राह्मणतर्पणं च ॥

## वैद्यनाथः

[2]एकभे च पृथग्राशौ पृथग्भे चैकराशिके ।
अंशान्नृदूरता त्याज्या कन्यादूरं शुभावहम् ॥

## स्वरोदये

[3]द्वयोजन्मभयोर्वेधे न कर्तव्यं कदाचन ।
एकराश्यादियोगे तु नाडीदोषो न विद्यते ॥

## मुहूर्तचिन्तामणिः

[4]प्रोक्ते दुष्टभकूटके परिणय-
स्त्वेकाधिपत्ये शुभो-
ऽथोराशीश्वरसौहृदेऽपि गदितो
नाड्यृक्षशुद्धिर्यदि ।
अन्यर्क्षेंऽशपयोर्बलित्वसखिते
नाड्यृक्षशुद्धौ तथा
ताराशुद्धिवशेऽथ राशिवशता-
भावे निरुक्तो बुधैः ॥

अथास्य दुष्टभकूटस्य परिहारं शार्दूलविक्रीडितेनाह — प्रोक्त इति । प्रोक्त दुष्टराशिकूटे सत्यपि चेद्द्वयोः स्त्रीपुरुषराश्योरेकाधिपत्ये एकस्वामित्वे परिणयो विवाहः

(१) विसौ. ३५ पू.; संग. १९९ (=).
(२) प्रपा. ३२० (=) नोद्वाहे (वोद्वाहे); विसौ. ३५ राशीशग्रह (राशिश्च गण).
(३) ज्योनि. १४६.
(४) प्रपा. ३२०.
(५) विसौ. ३८.

(१) निप. २८० (=) मेऽपि (के तु) उत्तरार्धे (द्विर्द्वादशाख्ये कनकान्नताम्रं विप्रार्चनं हेम च नाडिदोषे ।); विसौ. ४२ (=); ज्योनि. १४७ (षडष्टके गोमिथुनं प्रदद्या-त्कांस्यं सरौप्यं नवपञ्चमे च । देयं च वस्त्रं कनकाश्च युक्तं द्विर्द्वादशे ब्राह्मणभोजनं च ॥ ).
(२) ज्योनि. १४४.
(३) संत. ८८४.
(४) मुचि. ६।३२.

शुभो गदितः। यथा षष्ठाष्टके मेषवृश्चिकयोस्तुलावृषयोर्वा द्विर्द्वादशे मकरकुम्भयोः। नवपञ्चमे त्वेकाधिपत्याभावः। अथवा राशीश्वरयोः राशिस्वामिनोः सौहृदे मैत्रे परिणयः शुभो गदितः। यथा षष्ठाष्टके मीनसिंहयोरित्यादौ, नवपञ्चमे मेषधनुषोरित्यादौ, द्विर्द्वादशे मीनमेषयोरित्यादौ।

अथैवंविधेऽपि प्रीतिषष्ठाष्टकादिविषये नाडीदोषः सर्वथा त्याज्य एवेत्याह— नाड्यृक्षशुद्धिर्यदीति। 'ज्येष्ठार्यमेशनीराधिपयुगयुगम्' इत्यादिना वक्ष्यमाणानां त्रिविधनाडीनक्षत्राणां शुद्धिः स्त्रीपुरुषनक्षत्रस्थितिरेकस्यां कस्यामपि नाड्यां यदि न भवति तदा प्रीतिषष्ठाष्टकादि विधेयम्। यद्येकस्यां नाड्यां स्त्रीपुरुषनक्षत्रस्थितिस्तदा तु नैव विवाहः।

ननु यत्र नाडीनक्षत्रशुद्धिरस्ति, यथा भरणीहस्तयोः, षष्ठाष्टकं वर्तते, ग्रहमैत्री तु नास्ति, तत्र किं कार्यमत आह— अन्यर्क्षेंऽशपयोरिति। अन्यर्क्षे प्रीतिषष्ठाष्टकादिभ्योऽन्यराशौ। कोऽर्थः? राशिस्वामिनोः परस्परं शत्रुत्वे वा समत्वे वा षष्ठाष्टकादौ च सति अंशपयोस्तद्राशिनवांशस्वामिनोर्बलित्वसखिते स्यातां, बलित्वं च सखिता च, प्रथमाद्विवचनान्तं पदम्। बलित्वं सबलत्वमुच्चादिस्थितत्वेन सखिता परस्परमैत्री, ते उभे चेद्भवतः, सखितायां उपलक्षणत्वादेकाधिपत्यमपि, तदा विवाहः शुभो निरुक्तः।

अस्मिन्नपि पक्षे नाडीशुद्धिरपेक्षितैवेत्याह—नाड्यृक्षशुद्धौ तथेति। प्रागुक्तप्रकारेण नाडीनक्षत्रेषु स्त्रीपुरुषनक्षत्रयोरेकस्यां नाड्यामवस्थित्यभावश्चेत् तदा विवाहः शुभः। यथा भरणीहस्तयोः। सत्युभयविधविरोधे राशिनवांशयोः क्रमेण पञ्चमचतुर्थयोर्यौ स्वामिनौ सूर्यभौमौ तयोर्मैत्र्यप्यस्ति, स्वनवांशस्थितत्वात् सबलत्वमपि, तत्र विवाहः शुभफलदो निगदितः। यतोऽत्र स्त्रीपुंसनक्षत्रयोरेकनाड्यामवस्थित्यभावः। यदा त्वश्विनीहस्ताख्ये इव द्वयोर्नक्षत्रे स्यातां तदा नाडीनक्षत्रशुद्ध्यभावात् सकलगुणवत्त्वेऽपि विवाहो न भवति, किं पुनरेवंविधे विषये इति, 'सदा नाशयत्येकनाडीसमाजो भकूटादिकान् सप्तभेदान् प्रशस्तान्' इत्युक्तेः।

अथैतत्परिहारासंभवे परिहारान्तरमाह— ताराशुद्धिवशे इति। अत्रान्यर्क्षे इत्यनुवर्तते। प्राग्वदेव व्याख्येयमिदम्। एवंविधे विषये षष्ठाष्टकादौ च सति यदि स्त्रीपुंसनक्षत्रयोः परस्परं ताराशुद्धिवशे 'कन्यर्क्षाद्वरभं यावत्' इत्यादिना ताराशुद्धिरूपे वशे वश्यत्वे द्वितीयचतुर्थषष्ठाष्टमनवमतारासंज्ञके सति बुधैर्विवाहः शुभो निगदितः। अत्रोदाहरणानि बुधैर्ध्येयानि।

अथैतस्यापि परिहारस्यासंभवे परिहारान्तरमाह— अथ राशिवशताभावे इति। अत्रापि द्वयोः स्त्रीपुंसयोः राशिनाथविरोधादिके विषये षष्ठाष्टकादौ सति 'हित्वा मृगेन्द्रं नरराशिवश्याः' इत्यादिना पुरुषराशेः स्त्रीराशिवशताभावसत्त्वे (? वशताया भावे सत्त्वे) सति विवाहः शुभो निगदितः। 'यदि भवनवशित्वम्' इति श्रीपत्युक्तिश्च। अस्मिन्नपि पक्षे नाडीशुद्धिरपेक्षितैव, उक्तादेव हेतोः।

तदयमत्र निष्कृष्टोऽर्थः— षष्ठाष्टम–नवमपञ्चम–द्विर्द्वादशाख्येषु दुष्टभकूटेषु सत्सु परस्परं ग्रहमैत्र्येकः परिहारः। एकाधिपत्यं द्वितीयः। ग्रहवैरेऽप्यंशपयोः सबलत्वं मैत्री च तृतीयः। ताराशुद्धिश्चतुर्थः। राशिवश्यत्वं पञ्चमः। सर्वेष्वपि परिहारेषु नाडीशुद्धिरपेक्षितैव। नाडीविरोधसत्त्वे तु विवाहो नैव स्यादिति। पीटी.

**[1]मैत्र्यां राशिस्वामिनोरंशनाथ-**
**द्वन्द्वस्यापि स्याद्गणानां न दोषः।**
**खेटारित्वं नाशयेत्सद्भकूटं**
**खेटप्रीतिश्चापि दुष्टं भकूटम्॥**

दुष्टानां गणकूटभकूटग्रहकूटानां परिहारमाह— मैत्र्यामिति। स्त्रीपुंसराशिस्वामिनोर्मैत्र्यां सत्यां तथा राशिनवांशयोर्द्वन्द्वं युग्मं तस्यापि मैत्र्यां सत्यां गणानां दुष्टगणानां दोषो न स्यात्। स्त्री रक्षोगणा पुमान् मनुष्यगणो देवगणो वा तदा गणदोषो न स्यादित्यर्थः। सद्भकूटं शुभफलदं भकूटं राशिकूटं तृतीयैकादशादिकं खेटारित्वं ग्रहयोः शत्रुतासंबन्धिनं दोषं नाशयेत्।

(१) मुचि. ६।३३.

एवमेव खेटप्रीतिर्ग्रहमैत्री चापि दुष्टं भकूटं षष्ठाष्टकादिकसंबन्धिनं दोषं नाशयेदित्यर्थः । पीटी.

[१]राश्यैक्ये चेद्भिन्नमृक्षं द्वयोः स्या-
न्नक्षत्रैक्ये राशियुग्मं तथैव ।
नाडीदोषो नो गणानां च दोषो
नक्षत्रैक्ये पादभेदे शुभं स्यात् ॥

अथैवं कूटान्यभिधायेदानीं नक्षत्रराश्यैक्ये विशेषमाह- राश्यैक्ये इति । द्वयोः स्त्रीपुंसयोरेकराशित्वे सति यदि भिन्नमृक्षं स्यात्तदा नाडीदोषो गणानां च राक्षसमनुष्यगणानां च दोषो नास्ति । यथा एकस्मिन् राशौ शततारका पूर्वाभाद्रपदापादत्रयं च इत्येवंरूपो नक्षत्रभेदः । तथैव नक्षत्रैक्ये राशियुग्मं राशिद्वयं चेत् स्यात्तदाऽपि प्रागुक्तो दोषो न स्यात् । उपलक्षणत्वात्तारादोषोऽपि न भवेत् । यथा एकस्मिन्नेव नक्षत्रे पूर्वाभाद्रपदाख्ये पूर्वाभाद्रपदायाः प्रथमपादत्रयं कुम्भे चतुर्थचरणश्च मीने इत्येवंरूपो राशिभेदः । अथैकराशिनक्षत्रत्वेऽपवादमाह -नक्षत्रैक्ये इति । स्त्रीपुंसयोः राश्यैक्ये नक्षत्रैक्ये च यदि चरणभेदः, यथा भरण्याः प्रथमपादे पुंसो जन्म द्वितीयपादे स्त्रियाः, तदाऽपि शुभं कल्याणं स्यात् । पीटी.

## संग्रहे

[२]स्त्रीदीर्घगणसद्भावे दिनं यदि न विद्यते ।
तथाऽपि दिनमस्त्येव चन्द्रताराबलान्विते ॥

## ज्योतिश्चिन्तामणौ

[३]रोहिण्यार्द्रा मृगेन्द्राग्निपुष्यश्रवणपौष्णभम् ।
अहिर्बुध्न्यर्क्षमेतेषां नाडीदोषो न विद्यते ॥

## चूडामणौ

[४]दोषापनुत्तये नाड्या मृत्युञ्जयजपादिकम् ।
विधाय ब्राह्मणांश्चैव तर्पयेत्काञ्चनादिना ॥
हिरण्मयीं दक्षिणां च दद्याद्वर्णादिकूटकैः ।
गावोऽन्नं वसनं हेम सर्वदोषापकारकम् ॥

(१) मुचि. ६।३६.
(२) प्रपा. ३१९ ; विसौ. ३५ (=) ; संप्र. ७७६.
(३) ज्योनि. १४६.
(४) संग. १९९.

## ज्योतिष्प्रकाशे

[१]सदसद्राशिकूटेऽपि योनिवैरं न दोषकृत् ।
यदि स्यादबलायोनिः पुंसो योनिर्बलीयसी ॥
[२]निषिद्धमेलके शान्तिं कृत्वा दानं यथोदितम् ।
दत्त्वोद्वाहं प्रकुर्वीत प्रशस्तशकुनादिषु ॥

## संहितादीपके

[३]यदा तु कन्याभवनं द्वितीयं
षट्पञ्चमं स्यात्पुरुषस्य राशेः ।
तद्राशिनाथौ सुहृदौ समौ वा
सुहृत्समौ वा तदतीव शस्तम् ॥
[४]नभोगारिभावं हरेत्सद्भकूटं
विरुद्धं भकूटं हरेत्खेटमैत्री ।
सदा नाशयत्येकनाडीसमाजो
भकूटादिकान् सप्रभेदानप्रशस्तान् ॥
[५]भेशारिभावे गणवृत्त्यभावे
नाडीसमाजेऽपि कृतो विवाहः ।
भवेत्सुतप्रीतिसुखायुराप्त्यै
सद्राशिकूटे जगुरेवमन्ये ॥

## विवाहदीपिकायाम्

[६]आजौ जिता संधिलब्धा प्रीत्या दत्ता तथाऽध्वरे ।
स्वयमेवागता कन्या नैवास्तां शुद्धिमेलकौ ॥
बहूनामेकजातानां कन्यकानां करग्रहे ।
ज्येष्ठाया मेलकं वीक्ष्य लघ्वीनां नैव चिन्तयेत् ॥
आसुरादिविवाहेषु राशिकूटं न चिन्तयेत् ।
तथा व्यङ्गातिवृद्धानां दुर्भगाणां पुनर्भुवाम् ॥

(१) ज्योनि. १४२.
(२) ज्योनि. १४७.
(३) ज्योनि. १४५.
(४) विसौ. ३७ भेदान् प्रशस्तान् (भेदांश्च तेऽत्र) सप्तर्षिमते विवाहपटले; ज्योनि. १४५ विरुद्धं भकूटं हरेत्खेटमैत्री (तथा खेटमैत्री विरुद्धं भकूटम्).
(५) ज्योनि. १४५.
(६) ज्योनि. १४७.

## अनिर्दिष्टकर्तृकवचनानि

[1]वैनाशांशस्थराशीशजन्मेशौ मित्रभावनौ ।
वैनाशिकांशजो दोषो विनाशमुपगच्छति ॥

[2]द्विर्द्वादशं त्रिकोणं वा षष्ठाष्टममथापि वा ।
कन्यका राक्षसी वाऽपि दोषा येऽन्येऽपि केचन ॥

एकाधिपत्ये मैत्रे तु विवाहः शुभदस्तयोः ॥

[3]द्विर्द्वादशे त्रिकोणे च मैत्री क्षेत्रपयोर्यदि ।
कार्यस्तथापि संयोगो नवषष्ठाष्टके पुनः ॥

[4]रज्जुत्रिकोणस्त्रीदीर्घद्विर्द्वादशषड्ष्टसु ।
राशीशैक्यं च तन्मैत्रं दम्पत्योस्तत्सुखावहम् ॥

राश्यधिपे तु मित्रत्वं तस्मिन् राशौ प्रशस्यते ।
षष्ठाष्टकेऽपि शुभदं विवाहे गर्गसंमतम् ॥

[5]योनिनाडीगणानां च शुद्ध्या तद्राशिकूटकम् ।
युक्तं श्रेष्ठं गणाभावे खेटमैत्र्या भवेच्छुभम् ॥

[6]दम्पत्योरेकराशिः स्याद्भिन्नमृक्षं यदा तदा ।
गणदौष्ट्येऽप्येकनाड्यां विवाहः शुभदः स्मृतः ॥

नाडीगणौ नैकराशौ चिन्त्यौ भिन्नभयोर्यथा ।
कृत्तिकाकभयोर्द्वीशस्वात्योः पूभाजलेशयोः ॥

एकभे भिन्ननक्षत्रे न नाडीगणदुष्टता ।
वह्निभब्राह्मवत्प्रीतिः शतताराजपादवत् ॥

व्यवहितराश्योर्ऋक्षं यद्येकं जायते तत्र ।
नाडीदोषो वाच्यो मरणकरः सोऽपि दम्पत्योः ॥

[7]नक्षत्रभेदे राश्यैक्ये भैक्ये राशिद्वये सति ।
नक्षत्रैक्ये पादभेदे नाडीदोषादिकं न हि ॥

[1]माहेन्द्रे सति माङ्गल्यं दम्पत्योरभिवर्धते ।
अस्याभावेऽपि कल्याणं रज्जौ च ग्रहमैत्रके ॥

[2]नाडीवियोगे यदि चेद्विवाहः
करोति वैधव्ययुतां च कन्याम् ।
स एव माहेन्द्रदिनादियुक्तो
राशीशयोनीसहितो न दोषः ॥

[3]विवाहमाहुर्ग्रहमैत्रशून्यं
वियोगदं यद्ययमेव भूयः ।
स्त्रीदीर्घनाडीसहितः सरज्जुः
सराशिकश्चेत्सततं शुभाढ्यः ॥

स्त्रीदूरे समसप्ते च सहजाये सुहृत्तदा ।
शत्रुः समं समं मित्रं मित्रं हि परमं शुभम् ॥

[4]दीर्घाभावे विवाहश्चेत्स्त्रीविनाशकरः स्मृतः ।
ग्रहमैत्रे गणे राशौ सति चेत्स न दोषभाक् ॥

[5]रज्जुकूटं सदा चिन्त्यं तदभावे वियोगदम् ।
स्त्रीदीर्घनाडीराशीशगणा यदि न सन्ति हि ॥

[6]रज्जोरभावे यदि चेद्विवाहः
क्रियेत सद्यः स वियोगदश्च ।
तथाऽपि राशीशगणान्वितस्तु
स्त्रीदीघनाडीसहिते न दोषदः ॥

[7]आयुष्यं दिनशोभने शुभगणे वृद्धिश्च योनौ प्रियं
माहेन्द्रं बहुपुत्रपौत्रफलदं स्त्रीदीर्घतः सत्सुतः ।
राशिः स्यात्कुलवृद्धिकृच्छुभफलं मैत्रे तु वश्ये रति-
र्माङ्गल्यं बहुरज्जुके त्वथ मिथो वेधे फलं शोभनम् ॥

---

(१) प्रपा. ३२०.
(२) विसौ. ३६.
(३) विसौ. ३९.
(४) प्रपा. ३२१.
(५) ज्योनि. १४४.
(६) ज्योनि. १४३.
(७) संग. १९८.

(१) विसौ. ३४.
(२) प्रपा. ३२०. (३) प्रपा. ३२२.
(४) विसौ. ३५. (५) विसौ. ३६.
(६) प्रपा. ३२२; विसौ. ३६ सहिते न दोषदः (प्रयुतो न दोषः).
(७) प्रपा. ३२३; विसौ. ४१ वृद्धिश्च (सौख्यं च) फलदं (शुभदं).

## वर्णदेशादिभेदेन कूटव्यवस्था

### वसिष्ठः

[1]मुख्योऽग्रजानां ग्रहमित्रवर्गः
क्षमाधिपानां गणसंज्ञकश्च ।
विशां प्रधानं वनिताविदूरं
योन्याख्यवर्गश्च ततः परेषाम् ॥

### नारदः

[2]चतुर्नाडी त्वहल्यायां पाञ्चाले पञ्चनाडिका ।
त्रिनाडी सर्वदेशेषु वर्जनीया प्रयत्नतः ॥
[3]सारस्वतकतकरहाटककोङ्कणकाश्मीरवङ्गनीचेषु ।
नाडीयोगश्चिन्त्यः पाणिग्रहणे न चान्यत्र ॥
[4]जाङ्गले तु चतुर्माला पाञ्चाले पञ्चमालिका ।
त्रिमालाऽन्येषु देशेषु विवाहे मुनिसंमतम् ॥

### गर्गः

[5]ग्रहमैत्रं द्विजातीनां क्षत्राणां गणकूटकम् ।
वैश्यानां राशिकूटं च शूद्राणां योनिरेव च ॥
वर्णकूटादिषट्पञ्च मालवैर्दाक्षिणात्यकैः ।
पञ्च चत्वारि चोदीच्यैगौडैर्गर्गादिसंमतम् ।
पञ्चषट्पञ्चचत्वारि तत्तद्दिक्षु प्रकीर्तिताः ॥

### मनुः

[6]अहल्यायां चतुर्नाडीसंयोगः कालमृत्युदः ।
एष योगोऽन्यदेशेषु ह्यपमृत्युफलप्रदः ॥
पञ्चनाडीसमायोगः पाञ्चाले कालदण्डदः ।
इतरत्र समायोगो दुःखदारिद्र्यदोषकृत् ।
त्रिनाड्यां तु समायोगः सर्वत्रानिष्टकारकः ॥

(१) वसं. ३२।२२४ सज्ञकश्च (संज्ञकं च) वर्गश्च ततः (वर्गं सततं); विसौ. ३६.

(२) प्रपा. ३२० (=) त्वहल्यायां (तु बाह्लीके) प्रयत्नतः (विचक्षणैः); विसौ. ४०; संग. १९८ पञ्चनाडिका (पञ्च नाडिकाः).

(३) विसौ. ४०. (४) ज्योनि. १४६.

(५) प्रपा. ३२४. (६) विसौ. ४१.

### बादरायणः

[1]माहेन्द्रं गौडदेशे च मालवे रज्जुसंज्ञकम् ।
लाटे विदेहे नाडी स्याद्द्वयं काश्मीरमण्डले ॥
वेधः सौराष्ट्रविषये योगिकूटं तु दक्षिणे ।
योनिर्वै सिन्धुदेशे च ग्रहमैत्रं विदर्भके ।
पाञ्चाले गणकूटं स्यात्ताराकूटं तु मागधे ॥

### ज्योतिष्प्रकाशे

[2]करग्रहे पृष्ठनाड्यौ विनिन्द्ये इति यद्वचः ।
तत्क्षत्रियादिविषयं गौतम्या याम्यतस्तथा ॥

### कालविधाने

[3]ब्राह्मणानां दिनं श्रेष्ठं क्षत्रियाणां तथैव च ।
राशिकूटं तु वैश्यानां शूद्राणां योनिमेव च ॥

### कालप्रकाशिका

[4]ब्राह्मणानां दिनं श्रेष्ठं क्षत्रियाणां गणं तथा ।
राशिमैत्रं तु वैश्यानां शूद्राणां योनिमेव च ॥
कन्यादीर्घं तु वैश्यानां शूद्राणां योनिमेव च ॥

### अनिर्दिष्टकर्तृकवचनानि

[5]नाडीमैत्रे वर्णगणौ राशिभे वश्ययोनिके ।
वर्णेष्वीक्ष्यं तु मुख्यत्वाच्छेषाणां दूरवर्गकौ ॥
[6]विप्राणां दशकूटं स्यात्क्षत्रियाणां तथाऽष्टकम् ।
वैश्यानामपि षड्भेदं शूद्राणां च चतुष्टयम् ॥
वर्णो वश्यं नृदूरं च वल्लभत्वं च तारकाः ।
योनिर्मि(? मैं)त्रं गणो राशिर्नाडिकेति
क्रमाद्दश ॥
तत्र दूरद्वयं हित्वा कूटं भेदाष्टकं भवेत् ॥
तारादिषट्कं षड्भेदं परं योनिच-
(? योनेश्च-)तुष्टयम् ॥

(१) विसौ. ४१. (२) ज्योनि. १४६.

(३) सस्मृ. ५५. (४) सस्मृ. ५५

(५) ज्योनि. १४१, १४६.

(६) ज्योनि. १४१.

## एकराशिनक्षत्रविचारः

### वसिष्ठः

[1]एकराशौ पृथग्धिष्ण्ये चोत्तमं पाणिपीडनम् ।
एकधिष्ण्ये पृथग्राशौ लवैक्येऽपि च मृत्युदम् ॥
[2]एकगृहसंभवानां भवति विवाहः सुतार्थसंपत्त्यै ।
यद्युभयोरेकर्क्षे भवति यदा चांशको भिन्नः ॥
[3]दम्पत्योर्जन्मभे चैक्ये राशौ च निधनं तयोः ।
एकस्य च तथोद्वाहे किंचिद्भेदेऽपि वा न वा ॥

### नारदः

[4]एकराशौ पृथग्धिष्ण्ये दम्पत्योः पाणिपीडनम् ।
उत्तमं मध्यमं भिन्नराश्यैकर्क्षजयोस्तयोः ।
एकर्क्षे त्वेकराशौ च विवाहः प्राणहानिदः ॥

### भृगुः

[5]रोहिण्यार्द्रा मघेन्द्राग्नितिष्यश्रवणपौष्णभम् ।
उत्तरा प्रोष्ठपाच्चैव नक्षत्रैक्येऽपि शोभनाः ॥

### गर्गः

[6]एकराशौ द्विनक्षत्रे पुंस्तारा प्रथमा भवेत् ।
अतीव शोभना प्रोक्ता स्त्रीतारा चेद्विनश्यति ॥
[7]भवनद्वययुक्तर्क्षे पूर्वं पुंसां शुभावहम् ।
पश्चाद्भागं तथा स्त्रीणां व्यत्ययस्तु विनाशकृत् ॥

(१) वसं. ३२।१९४ एकराशौ (एकराशि) चोत्तमं (ऽप्युत्तमं) लवैक्ये (सवैक्ये); विसौ. ४०.

(२) विसौ. ४०.

(३) वसं. ३२।१६ वा न वा (वा न च); विसौ. १२ चैक्ये (चैव) निधनं (निधने) एकस्य च (एकस्यापि) नारदः.

(४) ज्योना. २७।१२४–१२५ पृ. ५९.

(५) प्रपा. ३१९ ग्नि (ग्नी); विपा. ७४४ प्रपावत्; ज्योनि. १४४; संग. १९८ उत्तरार्धे (अहिर्बुध्न्यस्तथाऽश्वी च शुभं भवति नान्यथा ।).

(६) प्रपा. ३१९ (=); विपा. ७४४ पुंस्तारा (पौरुषी); ज्योनि. १४३ (=).

(७) प्रपा. ३१९ (=); विपा. ७४४ उत्तरार्धे (पश्चाद्भागगतं स्त्रीणामन्यथा चेद्विनाशकृत् ।); ज्योनि. १४३ (=).

[1]नक्षत्रमेकं यदि भिन्नराशि-
स्तदा विवाहे च तयोर्विनाशः ।
पुंनामपूर्वं शुभदं विवाहे
पुत्रादिसंपत्तिविवृद्धिकारि ॥
[2]एकराशौ द्विनक्षत्रे कृत्तिकायाम्यतारके ।
धनिष्ठा शततारा च पुष्याश्लेषे च वर्जयेत् ॥

### वराहः

[3]भमेलं चिन्तयेत्प्रीत्यै दम्पत्योस्तत्र निर्णयः ।
तयोर्भराश्योरेकत्वे स्वान्तैक्यात्सा गरीयसी ॥

### भुजबलभीमः

[4]राशियुग्मे चैकराशौ भयोरैक्ये युगे तथा ।
पुमंशः पुरतः श्रेयान् प्रतीपस्तु न मे मतः ॥

### कालनिर्णये

[5]विशाखिकार्द्राश्रवणप्रजेश-
तिष्यान्त्यतत्पूर्वमघाः प्रशस्ताः ।
स्त्रीपुंसतारैक्यपरिग्रहे तु
शेषा विवर्ज्या इति संगिरन्ते ॥
[6]अजैकपान्मित्रवसुद्विदैव-
प्रभञ्जनान्त्यार्कभुजङ्गभानि ।
मुकुन्दजीवान्तकशक्रभानि
शुभानि योषिन्नरजन्मभैक्ये ॥

(१) विपा. ७४४.

(२) प्रपा. ३१९; विपा. ७४४ याम्यतारके (यस्य तारका) श्लेषे च (श्लेषं च); ज्योनि. १४३–१४४ धनिष्ठा शततारा (धनिष्ठाशततारे); संग. १९८ याम्यतारके (यस्य तारका).

(३) ज्योनि. १४४.

(४) ज्योनि. १४४.

(५) प्रपा. ३१९; ज्योनि. १४४.

(६) प्रपा. ३१९ अन्ये तु इत्युक्तम्; ज्योनि. १४४ शक्रभानि (भानि नूनं).

एवं च सति भरणी रोहिणी आर्द्रा पुष्यः आश्लेषा मघा हस्तः स्वाती विशाखा अनुराधा ज्येष्ठा श्रवणः धनिष्ठा पूर्वाभाद्रा उत्तराभाद्रा रेवती एतेषु षोडश-नक्षत्रेषु स्त्रीपुंसयोर्नक्षत्रैक्येऽपि शुभं भवतीत्यर्थः ।

प्रपा. ३१९.

### संग्रहे

[1]दम्पत्योरेकनक्षत्रे भिन्नपादे शुभावहम् ।
दम्पत्योरेकपादे तु वर्षान्ते मरणं ध्रुवम् ॥

### विवाहवृन्दावनम्

[2]नक्षत्रमेकं यदि भिन्नराश्यो-
रभिन्नराश्योर्यदि भिन्नमृक्षम् ।
प्रीतिस्तदानीं निबिडा नृनार्यो-
श्चेत्कृत्तिकारोहिणिवन्न नाडी ॥

अथैकराशौ एकनक्षत्रे च विशेषं कथयति—नक्षत्रमिति । यदि नृनार्योः वरकन्ययोः भिन्नराश्योः एकं नक्षत्रं, तथा यदि अभिन्नराश्योः एकराश्योः भिन्नं ऋक्षं नक्षत्रं तदा निबिडा प्रीतिः अतिशयं प्रेम भवति । एकराशौ चेत् कृत्तिकारोहिणिवत् भिन्नमृक्षं तदा नाडी न स्यात्, नाडीदोषो न भवतीत्यर्थः । यथाऽऽह भृगुः— 'दम्पत्यो-रेकराशिश्चेत् पृथगृक्षं यदा भवेत् । वसिष्ठोक्तो विवाहः स्याद्गणं नाडीं न चिन्तयेत् ॥ ' लक्ष्मी.

[3]पराशरः प्राह नवांशभेदा-
देकर्क्षराश्योरपि सौमनस्यम् ।
एकांशकत्वेऽपि वसिष्ठशिष्यो
नैकत्र पिण्डे किल नाडिवेधः ॥

अथ मतान्तरं कथयति— पराशर इति । एकर्क्षराश्यो-रपि नवांशभेदात् चरणभेदात् सौमनस्यं प्रीतिं पराशरः प्राह । वसिष्ठशिष्यस्तु एकांशकत्वेऽपि सौमनस्यं प्राह, यतः एकत्र पिण्डे एकस्मिन्नक्षत्रबिम्बे नाडिवेधो न भवति । लक्ष्मी.

नाग्निर्दहत्यात्मतनुं तथा हि
द्रष्टा स्वदृष्टेर्न हि दर्शनीयः ।
एकांशकत्वेऽपि समप्रभावा-
न्न भर्तृभार्याव्यवहारसिद्धिः ॥

चरणैकत्वे दोषाभावे दृष्टान्तमाह— नेति । यथा हि अग्निः आत्मतनुं स्वशरीरं तेजोरूपं न दहति, यथा च द्रष्टा स्वदृष्टेः दर्शनीयः दर्शनयोग्यः न भवति, तथा हि एकत्र पिण्डे नाडिवेधोऽपि न भवितुमर्हतीति वसिष्ठ-शिष्यः प्राह । तत्र दोषं कथयति— एवं एकांशकत्वे चरणैकत्वे समप्रभावात् तुल्याकारबलात् भर्तृभार्याव्यव-हारसिद्धिरपि न स्यात् । यत उक्तं जातकेषु— 'लग्नवां-शपतुल्यतनुः स्यात् ' इत्यादि । अतश्चरणकत्वे सौमनस्यं न भवितुमर्हतीत्याचार्यस्याभिप्रायः । लक्ष्मी.

### विधिरत्ने

[1]रोहिण्यार्द्रा मघेन्द्राग्नितिष्यश्रवणपौष्णभम् ।
आहिर्बुध्न्यं तथाऽष्टौ च शुभं भवति नान्यथा ॥

### अनिर्दिष्टकर्तृकवचनानि

[2]एकर्क्षे भिन्नराशौ च नृराशिः प्रथमो यदि ।
एकाधिपत्ये मैत्रे च विवाहो मध्यमो भवेत् ॥
एकर्क्षे चैकराशौ च विवाहस्त्वशुभप्रदः ।
संकोचे तु सदा कार्यो भिन्नपादो यदा तयोः ॥

[4]एकराशौ पृथग्धिष्ण्ये
पृथग्राशौ तथैकभे ।
एकांशेऽपि कृतोद्वाहः
श्रेष्ठो मध्योऽधमः क्रमात् ॥
एकराशौ शुभोद्वाह एकभांशे मृतिप्रदः ।
यदि स्याद्भिन्ननक्षत्रं शुभदः शौनकोऽब्रवीत् ॥

---

(१) प्रपा. ३१९; विपा. ७४५; ज्योनि. १४४ कालनिर्णये.
(२) विवृ. ३।३; विसौ. ४०; ज्योनि. १४४.
(३) विवृ. ३।४; विसौ. ४० पू.; ज्योनि. १४४ (=).

(१) विवृ. ३।५; विसौ. ४० उत्त.; ज्योनि. १४४ ( = ).
(२) ज्योनि. १४४; संग. १९८ आहिर्बुध्न्यं ( अहि-र्बुध्न्यः ) भृगुः.
(३) विसौ. ३९.
(४) ज्योनि. १४३.

# *कन्या—वरवरणकालः

## बौधायनगृह्यसूत्रम्

[1]उदगयन आपूर्यमाणपक्षे पुण्ये नक्षत्रे युग्मान् ब्राह्मणान् वरान् प्रहिणोति ॥

## आपस्तम्बगृह्यसूत्रम्

[2]इन्वकाभिः प्रसृज्यन्ते ते वराः प्रतिनन्दिताः ॥

( १ ) नक्षत्रप्रशंसार्था गाथा विवाहप्रकरणे वरप्रसङ्गार्थमुदाहृता। यदि वराः कन्याया वरयितारः कन्यावरणार्थं इन्वकाभिः प्रसृज्यन्ते ते वराः तैर्दुहितृमद्भिः प्रतिनन्दिताः सिद्धार्था भवन्ति। तस्मात् वरप्रसङ्गे प्रशस्तमिन्वका नाम नक्षत्रम् । 'इन्वकाशब्दो मृगशिरसि' इति स्वयमेव व्याख्यास्यति, तस्मात् ज्ञायते— स्मृत्यन्तरप्रसिद्धा लौकिक्येषेयं गाथा, न सूत्रकारस्य कृतिरिति ।

अनाकुला.

( २ ) इन्वकाभिः मृगशिरसि । 'नक्षत्रे च लुपि' ( पा. २।३।४५ ) इति सप्तम्यर्थे तृतीया । ये वराः वरयितारः मृगशिरसि प्रसृज्यन्ते कन्यावरणार्थं प्रेष्यन्ते, ते दुहितृमद्भिः प्रतिनन्दिताः प्रकर्षेण पूजिताः, सिद्धार्था भवन्तीत्यर्थः ।

ताद.

## भारद्वाजगृह्यसूत्रम्

[3]विज्ञायते तु खल्वेकेषामिन्वकाभिः प्रसज्यन्ते ते वराः प्रतिनन्दिताः ॥

## काठकगृह्यसूत्रम्

[4]कृत्तिकास्वातिपूर्वैरिति वरयेत् ॥

( १ ) कृत्तिकाश्च स्वातिश्च पूर्वाणि, तैर्वरयेत् कंचित्प्रयुञ्जीत, न तु स्वयं वृणुयादित्यौचित्यं णिचा दर्शयति ।

देव.

( २ ) भार्यां लब्धां सतीमुदगयने कृत्तिकास्वातिपूर्वैर्नक्षत्रैर्वरयेत् । कृत्तिकाश्च स्वातिपूर्वाणि च तानि कृत्तिकास्वातिपूर्वाणि । तैर्वरयेत् आत्मनो भार्यात्वेनाङ्गीकुर्यात् मयैषा भरणीया विभवानुसारेणेति ।

आदित्य.

## वाराहगृह्यसूत्रम्

[1]कृत्तिकास्वातिपूर्वैरिति वरयेत् ॥

## नारदः

[2]पञ्चाङ्गशुद्धिदिवसे चन्द्रताराबलान्विते ।
विवाहभस्योदये वा कन्यावरणमाचरेत् ॥

## कश्यपः

[3]पञ्चाङ्गशुद्धिदिवसे चन्द्रताराबलान्विते ।
विवाहोक्तेषु ऋक्षेषु कुजवर्जितवासरे ॥
मासाद्यदिवसं रिक्तामष्टमीं नवमीं तथा ।
त्यक्त्वाऽन्यदिवसे गन्धस्रक्तण्डुलफलादिभिः ॥
सह वृद्धद्विजगणो वरयेत्कन्यकां सतीम् ॥

## स्मृत्यन्तरम्

[4]कुर्याद्वैवाहिके मासि वाग्दानं द्विजसत्तमः ।
धिष्ण्ये वैवाहिके चैव मण्डपादि समाचरेत् ॥

धिष्ण्यं नक्षत्रम् । संर. ५३०

## वराहः

[5]पूर्वात्रयश्रवणमैत्रभवैश्वदेव-
हौताशवासवसमीरणदैवतेषु ।
द्राक्षाफलेक्षुकुसुमाक्षतपूर्णपाणि-
रश्रान्तशान्तहृदयो वरयेत्कुमारीम् ॥

---

* अत्रैव वाग्दानमन्त्रमूतम् ।

( १ ) बौगृ. १।१।१४.

( २ ) आपगृ. २।१६.

( ३ ) भागृ. १।१२.

( ४ ) कागृ. १४।२.

( १ ) वागृ. १०.

( २ ) ज्योना. २७।१ माचरेत् ( मिष्यते ); प्रपा. ३४५ भस्यो ( भेऽस्यो ); संप्र. ८१०; विपा. ७६१ शुद्धि ( शुद्ध ); ज्योनि. १४९ (=) माचरेत् ( मान्वयैः ? ).

( ३ ) संर. ५२९.

( ४ ) संर. ५३०.

( ५ ) विसौ. ५.

## महेश्वरः

[1]श्रवः श्रविष्ठा श्वसनानुराधा-
सविश्वपूर्वात्रयवह्निभेषु ।
निमित्तशुद्धां फलपुष्पपूर्णैः
शुभे मुहूर्ते वरयेत्कुमारीम् ॥
अशुभैस्त्रिषडायसंस्थितैः
शुभखेटैः सुतधर्मकेन्द्रगैः ।
यदि वोपचये गुरौ सिते
हरिजस्थे वरयेत्कुमारिकाम् ॥

कन्यावरणनक्षत्राणि लग्नशुद्धिं चाह महेश्वरः— श्रवः श्रविष्ठेति । विसौ. ५

## व्यवहारचण्डेश्वरः

[2]पूर्वात्रितयमाग्नेयमुत्तरात्रितयं तथा ।
रोहिणी तत्र वरणे भगणः शस्यते सदा ॥

## मुहूर्तचिन्तामणिः

[3]विश्वस्वातीवैष्णवपूर्वा-
त्रयमैत्रैर्वस्वाग्नेयैर्वा करपीडोचितऋक्षैः ।
वस्त्रालङ्कारादिसमेतैः
फलपुष्पैः संतोष्यादौ स्यादनु
कन्यावरणं हि ॥

कन्यावरणमुहूर्तं मत्तमयूरछन्दसा आह— विश्वेति । उत्तराषाढास्वातीश्रवणपूर्वात्रयानुराधाधनिष्ठाकृत्तिकानक्षत्रैः अथवा विवाहनक्षत्रैरुपलक्षिते काले वस्त्रालङ्कारादिभिः आदिशब्देन खाद्यमधुरवस्तुभिः समेतैः फलपुष्पैरादौ कन्यां संतोष्य अनु पश्चात् कन्यावरणं हि निश्चयेन स्यात् । पीटी.

[4]वरवृत्तिं वस्त्रयज्ञोपवीतादिना
ध्रुवयुतैर्वह्निपूर्वात्रयैराचरेत् ॥

## ज्योतिष्प्रकाशे

[5]विवाहभे स्वोदये वा कन्यावरणमाचरेत् ॥

(१) विसौ. ५. (२) विसौ. ६.
(३) मुचि. ६।१०.
(४) मुचि. ६।११; संग. २२०.
(५) सिन्धु. ११२८.

## चूडारत्ने

[1]वाग्दानं फलदानं च मासे वैवाहिके तथा ।
मधोः पौषस्य चोर्जस्य कर्तव्यं बहुले दले ॥

[2]विश्वर्क्षपूर्वात्रयकर्णयुग्म-
स्वात्यग्निमैत्रैश्च विवाहभैर्वा ।
प्रत्यङ्मुखः सन् वरयेत्कुमारीं
फलादिभिः प्राग्वदनां सुवेषाम् ॥

विश्वर्क्षं उत्तराषाढाः । पूर्वात्रयं पूर्वफल्गुनीपूर्वाषाढापूर्वप्रोष्ठपदाः । कर्णयुग्मं श्रवणं धनिष्ठाश्च । अग्निः कृत्तिकाः । मैत्रमनुराधाः । संर. ५३०

[3]धीधर्मकेन्द्रगैः सौम्यैः पापैः शत्रुत्रिलाभगैः ।
कन्याया वरणं कार्यं जीवे चोपचयस्थिते ॥

## अनिर्दिष्टकर्तृकवचनानि

[4]पुण्याहे च विवाहर्क्षे चित्रावस्वश्विविष्णुभे ।
लब्ध्वा चन्द्रबलं कुर्यान्निश्चयं सत्यया गिरा ॥

[5]वाग्दाने वरणे मौढ्यं न त्यजेद् गुरुशुक्रयोः ॥

[6]सुमुहूर्तो यदा न स्याल्लग्नात्पूर्वं तदा निशि ।
तैलं कृत्वा ततः कार्यं वरणं लग्नवासरे ॥

## शौनककारिका

[7]एवं निमित्तशुद्धां वरयेत्कन्यां यवीयसीं पुरुषः ।
दैवज्ञमुखात्प्राज्ञः सिद्धिं त्वधिगम्य नियमेन ॥

(१) संग. २१७.
(२) ज्योनि. १४९ प्राग्वदनां (प्राग्वदनीं); संग. २१९ सुवेषाम् (सुवेशाम्) चूडारत्ने; संर. ५३० युग्मस्वात्यग्नि (युग्माश्विन्यग्नि) खः सन् व (खस्तां व) ज्योतिर्निबन्धे.
(३) ज्योनि. १४९; संग. २१९ चूडारत्ने.
(४) ज्योनि. १४८; संग. २१८.
(५) ज्योनि. १४८.
(६) ज्योनि. १५८.
(७) विसौ. ५.

[1]कन्याप्रदानमेके विवाहतुल्यं वदन्ति कालज्ञाः।
लग्नं विना वसिष्ठः प्राह मुनिर्नारदश्चैवम् ॥

अत्र वरणं प्रार्थना, 'वृङ् संभक्तौ' इति धात्वर्थानुसरणात्। प्रदानं दानस्य प्रारम्भः, वाग्दानमिति यावत्। अत्रोभयत्र लग्नशुद्धेरावश्यकत्वाभावः, विवाहे त्वावश्यकता। विसौ. ५

(१) विसौ. ५; ज्योनि. १४९ मेके (मपरे) (=).

रेणुकारिका

[1]द्राक्षेक्षुपुष्पाक्षतपूर्णपाणिः
निमित्तशुद्धां वरयेत्कुमारीम्।
पूर्वात्रयस्वातिहुताशमैत्र-
वस्वृक्षगोविन्दसवैश्वभेषु ॥
लाभारित्रिगतैः पापैः
सौम्यैः केन्द्रत्रिकोणगैः।
गुरौ चोपचये लग्ने
भृगौ वा सौम्यवासरे ॥

(१) रेका. ५८,५९ पृ. ५२.

# विवाहमुहूर्तः

## कालमानविचारः

### वसिष्ठः

[1]ब्राह्मं च दिव्यं मनुपित्र्यमानं
सौरं च चान्द्रं गुरुसावनर्क्षम् ।
एषां नवानां च पृथक्पृथग्यत्
प्रयोजनं तत्क्रमशः प्रवक्ष्ये ॥

मानं विधातुः खलु नित्यमायुः-
प्रमाणविज्ञानविधौ च कार्यम् ।
गीर्वाणमन्वोरपि मानमेवं
पैत्र्ये च माने शशिनः प्रवृत्तम् ॥

षष्ट्यब्दजन्मप्रभवादिकानां
फलं च सर्वं गुरुमानतः स्यात् ।
मासे यदा तत्तपसीन्द्रवन्द्ये
त्वाद्ये लवे वासवतारकायाः ॥

सौरं च संक्रान्तिवशादिनस्य
नाक्षत्रमिन्दोर्भगणभ्रमाच्च ।
त्रिंशद्दिनं सावनमानमाद्य-
दिनादमान्तं खलु चान्द्रमानम् ॥

[2]दिनप्रमाणं त्वयनं च सर्वं
संक्रान्तिकालस्य विनिर्णयं च ।
कृतादिमानं निखिलग्रहाणां
यत्कर्म सौरेण विगृह्यतेऽत्र ॥

जीमूतगर्भं निखिलं सुसम्यक्
ऋक्षेण मानेन निरीक्षितव्यम् ।
नृगर्भवृद्धिः प्रबलर्तुकालं
यत्सूतकाद्यं खलु सावनेन ॥

(१) वसं. ११।१–४.

(२) वसं. ११।५,६; विसौ. ११ (दिनप्रमाणत्वय-नादिपूर्वं यत्कर्म सौरेण विगृह्यते तत् । ) एतावदेव.

[1]उद्वाहयद्वाहपनव्यप्रतिष्ठा-
तिथिव्रतक्षौरमहोत्सवाद्यम् ।
पर्वक्रिया वास्तुगृहप्रवेशः सर्वं
च चान्द्रेण विगृह्यते तत् ॥

### नारदः

[2]ब्राह्मं दैवं मानुषं च पित्र्यं सौरं च सावनम् ।
चान्द्रमार्क्षं गुरोर्मानमिति मानानि वै नव ॥
एषां तु नवमानानां व्यवहारोऽत्र पञ्चभिः ।
तेषां पृथक्पृथक्कार्यं वक्ष्यते व्यवहारतः ॥
ग्रहाणां निखिलं कार्यं गृह्यते सौरमानतः ।
वृद्धेर्विधानं स्त्रीगर्भं सावनेनैव गृह्यते ॥
प्रवर्षणं मेघगर्भो नाक्षत्रेण प्रगृह्यते ।
यात्रोद्वाहव्रतक्षौरतिथिवर्षादिनिर्णयः ॥
पर्ववास्तूपवासादि कृत्स्नं चान्द्रेण गृह्यते ।
गृह्यते गुरुमानेन प्रभवाद्यब्दलक्षणम् ॥
भचक्रगतिरार्क्षं स्यात्सावनं त्रिंशता दिनैः ।
सौरं संक्रमणं प्रोक्तं चान्द्रं प्रतिपदादिकम् ॥
तत्तन्मासैर्द्वादशभिस्तत्तदब्दो भवेत्ततः ।
गुरुचारेण संभूताः षष्ट्यब्दाः प्रभवादयः ॥

### बृहस्पतिः

[3]सावनं सूतकाद्येषु शुद्धमार्गे दशाफले ।
श्रौतकार्येषु सौरं हि चान्द्रं सकलकर्मसु ॥

(१) वसं. ११।७; विसौ. ९ सर्वं च (सर्वं हि); संग. २२८ ह्यते तत् (ह्यमेतत्) शेषं विसौवत्.

(२) ज्योना. ३।१–७ पृ. १३; विसौ. ९ वर्षादि-निर्णयः (वर्षेशनिर्णयम्) कृत्स्नं (कृच्छ्रं) 'यात्रोद्वाहव्रतक्षौर' इत्यादिः एक एव श्लोकः ।

(३) विसौ. ९.

### आश्वलायनः

[1]चौलोपनयगोदानसमावर्तविवाहकाः ।
व्यवहाराश्च सौरेण कार्या यात्रादयोऽपि च ॥

### कश्यपः

[2]उपवासव्रतोद्वाहयात्राक्षौरोपनायनम् ।
तिथिवर्षादि निखिलं चान्द्रमानेन गृह्यते ॥

### ऋष्यशृङ्गः

[3]विवाहव्रतयज्ञेषु सौरमानं प्रशस्यते ।
पार्वणेऽन्वष्टकाश्राद्धे चान्द्रमिष्टं तथाऽऽब्दिके ॥

### गर्गः

[4]विवाहोत्सवयज्ञेषु सारमानं प्रशस्यते ॥
[5]विवाहादौ स्मृतः सौरो यज्ञादौ सावनः स्मृतः ।
आब्दिके पितृकार्ये च चान्द्रमासः प्रशयस्यते ॥

### स्मृत्यन्तरम्

[6]एकोद्दिष्टविवाहादौ यज्ञादौ सावनः स्मृतः ।
आब्दिके पितृकार्ये च चान्द्रो मासः प्रशस्यते ॥

(१) आश्वस्मृ. (अध्यायः) ११ पृ. ८०.

(२) संम. ६५; कृभ. १०७६; संर. ४५९ निखिलं (लिखितं).

(३) चका. १९; विसौ. ९ पू.; संग. २२८ मानं (मासः) पू.

(४) चका. १९ सौर (सौरं); विसौ. ९.

(५) स्मृच. (श्रा.) ३७६; चका. १९ विवाहादौ स्मृतः सौरो (सौरमासो विवाहादौ) चान्द्र (चान्द्रो) ज्योतिर्गार्ग्यः; चश्रा. २८२ चान्द्रमासः प्रशस्यते (मासश्चान्द्रमसः स्मृतः) व्यासः; विसौ. ९ पू., वृद्धगर्गः; उत. १४२ (आब्दिके पितृकृत्ये च मासश्चान्द्रमसः स्मृतः । विवाहादौ स्मृतः सौरो यज्ञादौ सावनो मतः ॥) पितामहः; संत. ९०८ स्मृतः (मतः) पू., पितामहः; मुक्ता. ७०२; संम. ६५ विवाहादौ स्मृतः सौरो (सौरो मासो विवाहादौ) पू.; सिन्धु. १०७९ (=) (सौरो मासो विवाहादौ) एतावदेव; संग. २२८ यज्ञादौ (व्रतादौ) पू., वृद्धगर्गः; कृभ. १०७६ (=) सिन्धुवत्; संर. ४५९ संमवत्, पू.

(६) चका. १९.

### ब्रह्मपुराणम्

[1]तिथिकृत्ये च कृष्णादिं व्रते शुक्लादिमेव च ।
विवाहादौ च सौरादिं मासं कृत्ये विनिर्दिशेत् ॥

### कल्पद्रुमे

[2]त्रिंशद्दिनं सावन आर्क्ष इन्दो-
र्भभोगतः संक्रमतस्तु सौरः ।
दर्शावधिश्चैन्दव एष मासः
कृष्णादिको विन्ध्यत उत्तरस्याम् ॥

### अनिर्दिष्टकर्तृकवचनानि

[3]तपतीकृष्णयोर्मध्ये चान्द्रो मासः प्रशस्यते ।
अन्येषु सर्वदेशेषु सौरो व्रतविवाहयोः ॥
[4]विन्ध्याद्रेर्दक्षिणे भागे चान्द्रो मासः प्रशस्यते ।
उदग्भागे तु तस्यैव सौरं मानं विधीयते ।
अन्येषु सर्वदेशेषु मिश्रं मानं प्रकल्पयेत् ॥
[5]तिथिनैकेन दिवसश्चान्द्रमानेन कीर्तितः ।
अहोरात्रेण चैकेन सावनो दिवसः स्मृतः ॥
रविराश्यंशभोगेन सौरो दिवस उच्यते ।
चन्द्रनक्षत्रयोगेन नाक्षत्रो दिवसः स्मृतः ॥
चतुर्विधैश्च दिवसैर्मासोऽपि स्याच्चतुर्विधः ।
सौरः संक्रान्त्यवच्छिन्नः सावनस्त्रिंशता दिनैः ॥
चान्द्रौ राकान्तदर्शान्तौ नाक्षत्रो भान्त उच्यते ।
रवेर्द्वादशराशीनां भोगः सौराब्द उच्यते ॥
शतानि त्रीणि षष्ट्यन्तदिवसानां तु सावनः ।
त्रिंशत्तिथ्यात्मकैश्चान्द्रो मासैर्द्वादशभिर्भवेत् ॥
सप्तविंशतिभैर्भाब्दो मासैर्द्वादशभिर्भवेत् ।
बृहस्पतेरेकराशिभोगोऽब्दश्च बृहस्पतेः ॥
वेदव्रतवृषोत्सर्गमेखलोद्वाहमङ्गलम् ।
सौरमानेन कर्तव्यमभिषेकं नवाब्दिकम् ॥

(१) उत. १४२. (२) संग. २२८.

(३) विसौ. १०; संग. २२८ चान्द्रो मासः (मासश्चान्द्रः).

(४) विसौ. १०; संग. २२९ तस्यैव सौरं मानं (विन्ध्यस्य सौरमानं) तृतीयार्धं नास्ति.

(५) निप्र. ७३ ज्योतिःशास्त्रे इत्युक्तम्.

## वर्षविचारः

### वसिष्ठः

[1]कश्चिद्गृहाश्रमसमो न परोऽस्ति धर्मः
सोऽपि स्थितः सुगुणवृत्तयुताङ्गनासु ।
उद्वाहलग्नवशतो गुणवृत्तलब्धि-
स्तासां तथाविधसुलग्नमतः प्रवच्मि ॥
[2]अब्देषु युग्मेष्वपि कन्यकानां
स्वजन्मवर्षाच्छुभदो विवाहः ।
अयुग्मवर्षेषु शुभो नराणां
विपर्यये दुःखगदप्रदः सः ॥

### हारीतः

[3]अतिचारगते जीवे वृषेऽलौ मीनकुम्भयोः ।
यज्ञोद्वाहादिकं कुर्यात्तत्र कालो न लुप्यते ॥

### नारदः

[4]युग्मेऽब्दे जन्मतः स्त्रीणां प्रीतिदं पाणिपीडनम् ।
एतत्पुंसामयुग्मेऽब्दे व्यत्यये नाशनं तयोः ॥
पुंसां युग्मेऽब्दे स्त्रीणामयुग्मेऽब्दे इत्येवंरूपे व्यत्यये तयोर्वधूवरयोः पाणिपीडनं नाशकृद्भवतीत्यर्थः ।
संर. ४५६

### बृहस्पतिः

[5]मेषे वृषे झषे कुम्भे यद्यतीचारगे गुरौ ।
न तत्र कालदोषः स्यादित्याह भगवान् यमः ॥

(१) वसं. ३२।१.
(२) वस. ३२।२ ; विसौ. ६ दुःखगदप्रदः सः (दुष्टखगप्रहासः).
(३) संर. ४७०.
(४) ज्योना. २७।१ पृ. ५०-५१ ; प्रपा. ३१४ एतत् (तच्च); विसौ. ६ नाशनं (नाशदं); विपा. ७२८ एतत् (तत्तु); संकौ. १९७ नाशनं (नाशकृत्); ज्योनि. १४९; संव. १४४ संकौवत्; पुम. ४४६; संर. ४५६ संकौवत्.
(५) संग. २१५ (=) मेषे वृषे (वृषे मेषे) चारगे गुरौ (चारगो गुरुः) उत्तरार्धे (न तत्र काललोपः स्यादित्याह गालवो मुनिः ।); पुम. ४४९ संगवत्, क्रमेण वसिष्ठः,

### व्यासः

[1]ग्रहशुद्धिश्चाब्दशुद्धिर्दशवर्षावधिः स्मृता ।
दशवर्षव्यतिक्रान्ता कन्या शुद्धिविवर्जिता ।
तस्यास्तारेन्दुलग्नाभ्यां शुद्धौ पाणिग्रहो मतः ॥

### दक्षः

[2]युग्मेऽब्दे संप्रदा विद्याधर्मकामायुषां सदा ।
भर्तुरिष्टा ( ? र्द्विष्टा ) भवत्योजे वर्षे कन्या त्वसंशयम् ॥

### पराशरः

[3]युग्मेऽब्दे सम्पदः सौख्यं विद्या धर्मायुषी सदा ।
भर्तुर्दुष्टा भवत्योजे निषेकान्नात्र संशयः ॥

### शौनकः

[4]युग्मेऽब्दे सुखसंपत्
तस्या नाशो विधीयते विषमे ।
स्त्रीणां वरस्य विषमे
सुखसंपद्धर्मकामौ च ॥

### च्यवनः

[5]यदि भवेदतिचारगतो गुरु-
र्न पुनरेति निजप्रथमस्थितिम् ।
भवति लुप्तसमा झषकुम्भयो-
र्वृषभवृश्चिकयोर्यदि न स्थितः ॥
[6]मासान् दशैकादश वा प्रभुज्य
राशेर्यदा राशिमुपैति जीवः ।
भुङ्क्ते न पूर्वं च पुनस्तथापि
न लुप्तसंवत्सरमाहुरार्याः ॥

पीयूषधाराटीकायां बृहस्पतेरयं श्लोकः । तत्रत्य एव पाठोऽत्र स्वीकृतः ।

(१) विसौ. ६ कन्या शुद्धिविवर्जिता ( या कन्या शुद्धिवर्जिता ) प्रथमार्धं नास्ति, वात्स्यः ; संग. २०२–२०३.
(२) चका. ७८६. (३) विसौ. ६.
(४) विसौ. ६. (५) संर. ४६९.
(६) संग. २१५ स्तथापि (स्तथा हि) ; संर. ४६९.

## माण्डव्यः

[1]व्रतबन्धे विवाहे च
वत्सरपरिगणनमाहुराचार्याः ।
आधानपूर्वमेके
प्रसूतिपूर्वं सदाऽन्ये तु ॥

## स्मृत्यन्तरम्

[2]जन्मतो गर्भाधानाद्वा पञ्चमाब्दात्परं शुभम् ।
कुमारीवरणं दानं मेखलाबन्धनं तथा ॥

पञ्चमाब्दात्परमिति । पञ्चमाब्दात्परं यदयु- (द्यु-)ग्मं वर्षं तत्र कुमारीवरणादि शुभं भवतीत्यर्थः । तेन 'युग्मेऽब्दे जन्मतः' इत्यनेन न विरोधः ।

सरं. ४५६

## वराहः

[3]वात्स्यो वर्षमनोजमिच्छति तथा
रैभ्योऽयनं चोत्तरं
श्रीवासोऽन्त्यमृतुं विहाय मुनयो
माण्डव्यशिष्या जगुः ।
चैत्रं प्रोज्झ्य पराशरः कथयते
पौषं च दौर्भाग्यदं
आषाढादि चतुष्टयं तु शुभदं
कैश्चित्प्रदिष्टं बुधैः ॥

## श्रीपतिनिबन्धे

[4]अयुग्मवर्षेऽपि च दुर्भगत्वं
युग्मेऽपि वैधव्यमिति ब्रुवन्ति ।
तस्माच्च गर्भान्वितयुग्मवर्षे
विवाहिता स्यात्सुभगा सती च ॥

## लल्लः

[1]अतिचारगतो जीवस्तं राशिं नैति चेत्पुनः ।
लुप्तः संवत्सरो ज्ञेयः सर्वकर्मबहिष्कृतः ॥

पूर्वराशिशेषमतिक्रम्य राश्यन्तरसंचारोऽतिचारः, तं प्राप्तो गुरुः पुनः तं राशिं यदि नैति तदा लुप्तः संवत्सरः सर्वधर्मबहिष्कृतो ज्ञेय इत्याशयः । संकौ. २००

[2]पूर्वराशिं यदा त्यक्त्वा अपूर्णे वत्सरे गुरुः ।
लुप्तः संवत्सरो ज्ञेयः परगेहगतो यदा ॥

[3]यदाऽतिचारं सुरराजमन्त्री
करोति गोवृश्चिकमीनसंस्थः ।
नायात्यसौ यद्यपि पूर्वराशिं
शुभाय पाणिग्रहणं वसिष्ठः ॥

[4]मेषे वृषे मीनकुम्भे यद्यतीचारगो गुरुः ।
न तत्र काले लोपः स्यादित्याह गालवो मुनिः ॥

## भुजबलभीमः

[5]ग्रहशुद्धिमब्दशुद्धिं
शुद्धिं मासायनर्तुदिवसानाम् ।
अर्वाग्दशवर्षेभ्यो
मुनयः कथयन्ति कन्यकानाम् ॥

[6]एतत्परन्तु विज्ञेयमङ्गिरोवचनं यथा ।
कालात्यये च कन्यायाः कालदोषो न विद्यते ॥

---

(१) संत. ९२७.

(२) गभा. ६६ ; संर. ४५६ जन्मतो गर्भाधानाद्वा (गर्भाधानाज्जन्मतो वा) पराशरमाधवीये स्मृत्यन्तरे.

(३) विसौ. ६ श्रीवासोऽन्त्यमृतुं (स्त्रीणां दोषकरं); सिन्धु. १०७८ मनोज (मनून) कथयते (परिणये) आषाढादि (ह्याषाढादि) तु शुभदं (न हितदं) ज्योतिषे; कुभ. १०७७ मनोज (मनून) कथयते (परिणये) तु शुभदं (न हि तथा) ज्योतिषे.

(४) विसौ. ६.

(१) मपा. १६२ जीवस्तं (जीवः स्वं) चेत्पुनः (चेद्यदि) लुप्तः (लुप्त) ज्योतिःसारसागरे ; गभा. ६७ ; सिन्धु. १०७२ ; संकौ. २०० चेत्पुनः (चेद्यदि) ; संग. २१५ ; पुम. ४४८ कर्मबहिष्कृतः (कर्मसु गर्हितः) ; संर. ४६९ चेत्पुनः (चेद्यदि) सर्वकर्मबहिष्कृतः (गर्हितः सर्वकर्मसु) कृत्यचिन्तामणौ.

(२) संग. २१५.

(३) संकौ. २०० ; संर. ४६९ पूर्वार्धे (यदाऽतिचारं हि गुरुः करोति कुम्भालिसंस्थो वृषमीनसंस्थः ।) मदनरत्ने इत्युक्तम्.

(४) संकौ. २००.

(५) उत. १२४ ; संत. ८८२.

(६) संत. ८८२.

## राजमार्तण्डः

[1]अयुग्मे दुर्भगा नारी युग्मे तु विधवा भवेत् ।
तस्माद्गर्भान्विते युग्मे विवाहे सा पतिव्रता ॥

[2]मासत्रयादूर्ध्वमयुग्मवर्षे
युग्मे तु मासत्रयमेव यावत् ।
विवाहशुद्धिं प्रवदन्ति सन्तो
वात्स्यादयः स्त्रीजनिमासतश्च ॥

[3]ग्रहसंवत्सरशुद्धौ विवाहं शुभदं जगुः ।
अन्यथा ग्रहशुद्धौ वा न वर्षे केवले शुभे ॥
ग्रहसंवत्सरशुद्धौ नार्तः कालमपेक्षते ।
स्वस्थे सर्वमिदं चिन्त्यमित्याह भगवान्भृगुः ॥
चतुर्भिः षड्भिरष्टाभिर्दिग्भिर्द्वादशभिस्तथा ।
अब्दैरुद्वाहिता कन्या प्रतिष्ठां नैव गच्छति ॥

अत्र चतुराद्यब्दे निषेधो मासत्रयोत्तरकालपरः । अन्यथाऽष्टवर्षाया गौर्या दानेन ब्रह्मलोकावाप्तिः सुखधनसमृद्धिफलानि च स्मर्यमाणान्यनर्थकान्यापद्येरन् । विसौ. ६

[4]राजग्रस्ते तथा युद्धे पितॄणां प्राणसंशये ।
अतिप्रौढा च या कन्या नानुकूल्यं प्रतीक्षते ॥

अतिप्रौढा चेति । चकारादतिबालाऽपि, अस्याः पित्रोः प्राणसंशयानुरोधेन विवाह्यत्वात् । कुभ. १०६५

[1]अतिप्रौढा च या कन्या कुलधर्मविरोधिनी ।
अविशुद्धाऽपि सा देया लग्नचन्द्रबलैर्विना ॥

## विवाहपटले

[2]पञ्चमे सुतसुखाधिकभाग्या
भर्तृभोगरहिता खलु षष्ठे ।
सप्तमे पतिसुतान्विताऽष्टमे
रूपशीलसहिता मृगनेत्रा ॥

## कल्पद्रुमे

[3]चेत्पष्टया वाऽप्यथ मध्यगत्या
राश्यन्तरं यत्र च चान्द्रवर्षे ।
गुरुर्न यायादधिवत्सरोऽधि-
मासेन तुल्यः स शुभेषु वर्ज्यः ॥

## ज्योतिस्तन्त्रे

[4]ग्रहशुद्धिरब्दशुद्धिः कीर्तिता दशवत्सरम् ।
दृष्टैकादशवर्षाया लग्नं शंसन्ति सूरयः ॥
ग्रहशुद्धिर्यदा नास्ति ऋक्षशुद्धिस्तथैव च ।
धर्मभ्रष्टा तु सा नारी शुद्धिस्तस्या न भाव्यते ॥

## कृत्यचिन्तामणौ

[5]अतिचारगतो जीवः पूर्वभं नैव गच्छति ।
समचारेऽपि कर्माणि नैव तत्रैव संस्थिते ॥

## स्मृतिसंग्रहे

[6]लुप्ताब्ददोषोऽत्रिमतेन मध्ये
सोमोद्भवायाः सुरनिम्नगायाः ॥

सोमोद्भवा नर्मदा । सुरनिम्नगा गङ्गा । संर. ४६९

---

(१) गभा. ६६ ; उत. १२४ युग्मे तु (युग्मे च); विसौ. ६ उतवत्, चण्डेश्वरः ; सिन्धु. १०६४ ; रत्न. ५३–५४.

(२) गभा. ६६ युग्मे तु (युग्मेऽपि) मासतश्च (जन्ममासात्); उत. १२४ युग्मे तु (युग्मे च) उत्तरार्धे (विवाहशुद्धिं प्रवदन्ति सर्वे व्यासादयो ज्योतिषि जन्ममासात्); विसौ. ६ श्रीपतिनिबन्धे ; सिन्धु. १०६४ गभावत् ; रत्न. ५४ मासतश्च (जन्ममासात्).

(३) विसौ. ६.

(४) उत. १२४; सिन्धु. १०६५ राजग्रस्ते (राहुग्रस्ते) नानुकूल्यं प्रतीक्षते (चन्द्रलग्नबलेन तु). 'न तु कालं प्रतीक्ष्यते' इति राजमार्तण्डपुस्तकपाठः ।

(१) उत. १२४ अतिप्रौढा (अतिवृद्धा) लग्नचन्द्रबलैर्विना (चन्द्रलग्नबलेन तु); विसौ. ६ च या कन्या (तु या नारी) लग्नचन्द्रबलैर्विना (चन्द्रलग्नबलेन च) ज्योतिस्तन्त्रे. 'लग्नचन्द्रबलैर्विना' इति राजमार्तण्डपुस्तकस्थः पाठः ।

(२) संग. २००. (३) संग. २१६.

(४) विसौ. ६. (५) संर. ४६९.

(६) संर. ४६९.

# अयन-ऋतु-मासविचारः

## बौधायनगृह्यसूत्रम्

[1]उदगयन आपूर्यमाणपक्षे पुण्ये नक्षत्रे ... ॥

[2]सर्वे मासा विवाहस्य ॥

शुचितपस्तपस्यवर्जमित्येके ॥

शुचिः आषाढः, तपाः माघः, तपस्यः फाल्गुनः। अत्र स्मृत्युक्तानां मासानां सूत्रोक्तानां मासानां च परस्परविरोधात् देशाचारात् व्यवस्था। सूत्रे विहितानां श्रावणादीनां त्वासुरादिविषयत्वं द्रष्टव्यम्। देशाचारात् व्यवस्था। संर. ४५९-४६०

## बौधायनगृह्यपरिभाषासूत्रम्

[3]अथ हैकेषां विज्ञायतेऽह्नः पञ्चसु कालेषु कुर्वीतेत्युदगयन इत्येवेदमुक्तं भवति ॥

संवत्सरो वै देवानामहोरात्रम्। तस्यैतदुदगयनमहः दक्षिणायनं रात्रिः। तस्याह्नः पञ्चसु कालेषु कुर्वीतेति। तस्य प्रातःसंगवौ शिशिरवसन्तौ मध्यंदिनं ग्रीष्मः अपराह्णसायाह्ने वर्षाशरदौ। प्रातः सङ्गवे सायमिति विवाहं न कुर्वन्ति। काममितराणि ॥

## आश्वलायनगृह्यसूत्रम्

[4]उदगयन आपूर्यमाणपक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनगोदानविवाहाः ॥

(१) उदक् यदा गच्छत्यादित्यः तत् उदगयनं, तस्मिन् उदगयने। कुत एतत्? लोकप्रसिद्धत्वात्। देभा.

(२) अनेन चौलकर्मादीनां कालो विधीयते। * गानावृ.

[1]सार्वकालमेके विवाहम् ॥

(१) एके आचार्याः सर्वस्मिन् काले विवाहमिच्छन्ति। किं पुनः कारणम्? यदाऽतिवयसा (? वयाः) स्यात् काल उदीक्षमाणे दोष उपजायते। को दोषः? 'ऋतुमत्यां हि तिष्ठन्त्यां दोषः पितरमृच्छति' इति। एवमन्ये च लौकिका दोषाः संपद्यन्ते निग्रहादयः। एवमेतैरन्यैश्च कारणैः कालानियमः स्यात्। × देभा.

---

* शेषं देभावत्।

× गानावृ. देभावत्।

(१) बौगृ. १।१।१४.

(२) बौगृ. १।१।१८-१९; सिन्धु. १०७७-१०७८; आन. १७९ (सर्वे मासा विवाहस्य०) (एके०); सस्मृ. ५५; संर. ४५९.

(३) बौगृप. १।२।१२-१३.

(४) आगृ. १।४।१; अप. १।६१ माण (माणे); व्रक. ९५ कल्याणे (पुण्ये); स्मृसा. ४ (गोदान०) शेषं व्रकवत्; प्रपा. ३२७; संत. ८८२, ९२८ माण (माणे) चौलकर्मोप (चूडोप); उत. १२५ माण (माणे) चौल (चौड); विसौ. ८ पक्षे + (पुण्याहे): १६ (उदगयन आपूर्यमाणपक्षे पुण्याहे) एतावदेव; संप्र. ३५३, ३५८ न आपूर्य (नापूर्य); चम. १४; सम. १९,६४,६५; विपा. ७५२; संकौ. ११९: १२० (आपूर्यमाणपक्षे) एतावदेव: १९७; बाल. १।१४ पृ. ४५; संव. १४३; पुम. ४३६,४३७; बौवि. १।३।११; कुभ. ९१८: ११३४ (चौलकर्मोपनयनगोदानविवाहाः) एतावदेव; सर. १६६, १७०,४६०,४६२ (कल्याणे नक्षत्रे) एतावदेव: ४७४, ८९७.

(१) आगृ. १।४।२; व्रक. ९५ सार्व (सर्व); स्मृसा. ४ (सार्वकालिकमेवैके विवाहम्); प्रपा. ३२७; संत. ८८२, ९२८ (विवाहः सार्वकालिक इत्येके); उत. १२५ (विवाहः सार्वकालिक इत्यपरे); विसौ ८; मुक्ता. १४८ (सार्वकालिकमेके विवाहमिच्छन्ति); संम. ६५; विपा. ७१०,७५२ (सार्वकालिकमेके विवाहम्); संकौ. १९७; प्रका. ३५९; आन. १७९ मुक्तावत्; संव. १४३; कुभ. १०६३ विपावत्: ११३४; संर. ४६०.

( २ ) यत्तु ' सार्वकालमेके विवाहम् ' इति, तत् दक्षिणायनप्राप्त्यर्थमिति धर्मप्रकाशे पितामहचरणाः । आसुरादिविवाहविषयमिति केचित् ।

संम. ६५

( ३ ) पुनरुद्वाहे नोत्तरायणादिकालनियमः, ' सार्वकालिकमेके विवाहम् ' इत्याश्वलायनोक्तेः, ईदृशवचनस्य ईदृशस्थले एव चारितार्थ्यात् ।

कुभ. १०६३

## कौषीतकिगृह्यसूत्रम्

[1]उदगयन आपूर्यमाणपक्षे पुण्याहे कुमार्यै पाणिं गृह्णीयात् ॥

## आपस्तम्बगृह्यसूत्रम्

[2]उदगयनपूर्वपक्षाहःपुण्याहेषु कार्याणि ॥

( १ ) उदगयनादिविधानं दक्षिणायनादिप्रतिषेधार्थम् । समुच्चयश्चोदगयनादीनाम्, न विकल्पः ।

अनाकुला.

( २ ) उदगयनादयः प्रसिद्धाः । उदगयनेत्यादिरयं समासो द्वन्द्वः । तेषु कार्याणि । गार्ह्याणीति शेषः । एषां समुच्चयः, न विकल्पः । एतच्च सामान्यविधानं तत्र तत्र विशेषविधानेनापोद्यते नियम्यते च । एवमुदगयनादीनां विधाने सत्यपि क्वचिदनियमः प्रतिभासते, ' सर्व ऋतवो विवाहस्य ' ( आपगृ. २।१२ ) इति वचनात् । यदा दक्षिणायनेऽपि विवाहः स्यात्तदा समावर्तनं तत्कालसमीपकाल एव, इतरथा उदगयनसमावृत्तस्य शरदि विवाहे सति बहुकालव्यवधाने ' अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः ' इति निषेधातिक्रमप्रसङ्गात् ।

किंच, आश्वलायनगृह्ये ' उदगयन आपूर्यमाणपक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनगोदानविवाहाः ' ( आगृ. १।४।१ ) इत्यत्र चौलविकारत्वादेव गोदानस्य उदगयनप्राप्तौ पुनस्तत्र तद्विधिः तद्विकारान्तरे समावर्तने उदगयननियमनिवृत्त्यर्थं इति गम्यते । तथा बौधायनीये समावर्तनस्य चौलविकारत्वादेव आपूर्यमाणपक्षप्राप्तौ पुनस्तत्र तद्विधिरुदगयनानियमार्थं इति गम्यते । तथा गृहनिर्माणप्रवेशयोः ज्योतिःशास्त्रे दक्षिणायनस्यापि विधानात् अविगीतशिष्टाचाराच्च उदगयनानियमः । तथा अपरपक्षेऽप्यापञ्चम्याः ज्योतिःशास्त्रादेव शिष्टाः कर्माणि आचरन्ति । तथैव ज्योतिःशास्त्रादन्नप्राशनगृहनिर्माणप्रवेशान् रात्रावप्याचरन्ति । तथैव यदा पुण्याहाः ज्यौतिषोक्तदोषोपहतास्तदा अश्लीलेष्वपि तदुक्तगुणयुक्तेषु अविगानेन कर्माण्याचरन्ति । ज्योतिःशास्त्रमपि वेदाङ्गत्वादगृह्यमाणकारणत्वात् शिष्टपरिगृहीतत्वाच्च कल्पसूत्रादिवदादरणीयमेव । निर्णये तु शिष्टाः प्रमाणं सर्वत्र ।

ताद.

[1]सर्वऋतवो विवाहस्य शैशिरौ मासौ परिहाप्योत्तमं च नैदाघम् ॥

( १ ) एकाग्निविधिकाण्डे विवाहमन्त्राणां पूर्वमाम्नानात् विवाहमेव पूर्वं व्याख्यास्यन् तस्योदगयनादिनियमापवादेन कालमाह— सर्व इति । अथ विवाहविधिः प्रागुपनयनात् । शिशिरं परिहाप्येति वक्तव्ये शैशिरौ मासावित्युच्यते ' उत्तमं च नैदाघं ' इत्यत्र मासप्रतिपत्त्यर्थम् । अन्यथा दिवसोऽपि प्रतीयेत । सर्वर्तुविधानं उदगयनापवादः, पूर्वपक्षादयस्तु परिभाषाप्राप्ता विवाहेऽवस्थिता एव, यथा उपनयने वसन्तादिविधानम्, इति केचित् । अन्ये तु पूर्वपक्षादेरप्यपवादं मन्यन्ते । तेषामपरपक्षे रात्रौ च न निषिध्यते विवाहः ।

अनाकुला.

( २ ) सर्वे षड् ऋतवः प्रत्येकं मासद्वयरूपा विवाहस्य कालाः । द्वादशापि मासाः सापरपक्षादिकाः कार्त्स्न्येन काला इत्यर्थः । ऋतव इत्यनेन लक्षणया मासा एव विधित्सिताः, नर्तव इति कुतोऽवगम्यते ? उच्यते, शैशिरौ मासाविति मासपर्युदासात् । अन्यथा विधिपर्यु-

---

( १ ) कौगृ. १।५।५.

( २ ) आपगृ. १।२.

( १ ) आपगृ. २।१२ ; मुक्ता. १४८ सर्वऋतवो ( सर्वर्तवो ) ; सिन्धु. ९८८ ( सर्वऋतवो विवाहस्य ) एतावदेव : १०७७ ; आन. १७९ ; प्रका. ३५९ ( सर्वऋतवो विवाहस्य ) एतावदेव ; संर. ४५९.

दासयोरेकविषयत्वात् लघुत्वाच्च शिशिरं परिहाप्येति ब्रूयात् । प्रयोजनं तु विवाहस्य पूर्वपक्षादिनियमाभावः । यत्र पुनरुपनयनादौ एवंविधहेत्वभावात् ऋतोरेव विधित्सा, तत्र द्व्यवदानद्वारा पुरोडाशस्य यागसाधनत्ववत् सामान्यविध्यवरुद्धपूर्वपक्षादिद्वारेणापि ऋतोः कर्मसाधनत्वसिद्धेः पूर्वपक्षादिर्नियत एव । शिशिरस्यर्तोः यौ द्वौ मासौ माघफाल्गुनौ, निदाघस्य ग्रीष्मस्य यश्चोत्तमः अन्त्य आषाढः, तानेतांस्त्रीन् मासान् परिहाप्य वर्जयित्वा । अत्रोत्तममिति तमप्प्रत्ययात् यः सौरतोऽन्त्यो नैदाघः, यश्चाधिकमासतो द्वितीय आषाढः तावपि पर्युदस्तौ ।

ताद.

( ३ ) 'अत्र माघफाल्गुनाषाढवर्जं नव मासा मुख्यः कालः' इति सुदर्शनभाष्ये इडविलायां ब्रह्मविद्यातीर्थैश्चोक्तम् । बौधायनसूत्रेऽपि 'सर्वे मासा विवाहस्य, शुचितपस्तपस्यवर्जमित्येके' । तेन 'पूर्वोत्तरौ शिशिरसंबन्धिनौ मासौ पौषचैत्रौ विहाय' इति निर्णयामृतव्याख्यानं मौर्ख्यकृतमित्युपेक्ष्यम् । निशि चेत् सर्वेषु द्वादशस्वपि मासेषु उद्वहेदिति कालादर्शः । ये तु ज्योतिषे माघादिविधयस्ते गृह्यसूत्राणां द्विजपरत्वेन प्राबल्याच्छूद्रादिपराः ।

सिन्धु. १०७७-१०७८

## भारद्वाजगृह्यसूत्रम्

[1]उदगयन उपगृह्णीत । विज्ञायत उदगयनं देवानामिति । दैवं पुनरिदं कर्म । दक्षिणायन इत्यपरम् । विज्ञायते दक्षिणायनं पितॄणामिति । पितृसंयुक्तं पुनरिदं कर्म ॥

## काठकगृह्यसूत्रम्

[2]उदगयने भार्यां विन्देत ॥

उदगयने आदित्यस्य दक्षिणदिग्भागादुत्तरदिग्भागाभिमुखगमने सति । उत्तरायण इत्यर्थः । देभा.

( १ ) भागृ. १।११-१२.

( २ ) कागृ. १४।१.

## पारस्करगृह्यसूत्रम्

[1]उदगयन आपूर्यमाणपक्षे पुण्याहे कुमार्याः पाणिं गृह्णीयात् ॥

उदगयने उत्तरायणे, आपूर्यमाणपक्षे शुक्लपक्षे, पुण्याहे शोभने विष्ट्यादिरहितकाले दैवानि कर्माणि कुर्यात् । एवं हि श्रूयते— 'यत्रोदङ्ङावर्तते देवेषु तर्हि भवति' इति तस्मात्तत्र देवकर्मोचितम् । आपूर्यमाणः सोऽपि देवानामेव, तथा 'य एवापूर्यतेऽर्धमासः स देवानाम्' इति श्रुतेः । पुण्याहोऽपि । उदगयनादीनां समुच्चयः, तेन सर्वं देवकर्म उदगयने आपूर्यमाणपक्षे पुण्याहे कार्यम् । इदं चानुक्तकालविषयं सूत्रम् । यत्र नियतः कालो यथा 'सायं जुहोति' 'प्रातर्जुहोति' 'पौर्णमास्यां पौर्णमास्या यजेत' 'अमावास्यायाममावास्यया यजेत' इत्यादौ तत् तत्काले कार्यम् । न हि शुक्लपक्षे पुण्याहादौ अग्निहोत्राद्यनुष्ठानमिष्टं, अहरहरनुष्ठातव्यत्वात् । अत उपनयनचूडाकरणादीनि उदगयनादौ कार्याणि । अन्यानि तु येषु न समुच्चयः संभवति तानि यथासंभवमेतेषु कर्तव्यानि, यथा सर्पबलिरनाहिताग्न्याग्रयणमित्यादीनीति तन्त्ररत्ने । एवं पित्र्याणि दक्षिणायनेऽपराह्णे च । 'कुमार्याः पाणिं गृह्णीयात्' कुमार्या अक्षतयोन्याः पाणिं गृह्णीयात् वक्ष्यमाणेन विधिना विवाहं कुर्यात् । विंशतिप्रसूताव्युदासार्थं कुमारीग्रहणम् । स्मर्यते हि तस्याः पुनर्विवाहः ।

गभा.

## खादिरगृह्यसूत्रम्

[2]उदगयन-पूर्वपक्ष-पुण्याहेषु प्रागावर्तनादह्नः कालोऽनादेशे ॥

यस्मिन् क्षणे मकरं गच्छति सूर्यः ततः प्रभृति षण्मासा उदगयनम् । यस्मिन् क्षणे सूर्याचन्द्रमसौ सह वसतः तत ऊर्ध्वं यस्मिन् क्षणे तयोरेव परमो विप्रकर्षः

( १ ) पागृ. १।४।५ ; संत. ८८२ ( कुमार्याः पाणिं गृह्णीयात् ) एतावदेव ; उत. १४५ संतवत् ; विपा. ७५२ ; ४० ( भागः २ ) ( पुण्याहे० ) ; संदी. २६ ( भागः २ ).

( २ ) खागृ. १।१।२.

ततः प्राक् पूर्वपक्षः। ज्योतिःशास्त्रे कर्मयोग्यं यदह-रुक्तं तत्पुण्यमहः। तेषां द्वन्द्वसमासः अन्वये तेषा-मितरेतरयोगमाह। विभक्तिः (अङ्गत्वमाह) * । अतो येषु कर्मसु समुच्चितानामन्वयः संभवति तेषु समुच्चितानामेवाङ्गत्वं, येषु असंभवस्तेषु यथासंभवं द्वयोरेकस्य वाऽन्वयः। ननु सकृदुच्चरितस्य कथमने-कधान्वयः। सर्वकर्मणां अधिकृतत्वात् अर्थादावर्तते पदं, इतरेतरयोगविवक्षया च। समुच्चयसंभवेऽपि यज्ज्योतिः-शास्त्रे निषिद्धमहस्तद्वर्जनीयं उदगयनपूर्वपक्षावनादृत्यापि, दोषहेतुत्वात्। मध्यंदिनादूर्ध्वं अहरावर्तनमित्याहुः। ततः प्राक्। ग्रहणं (१ ग्रहाणां) वक्रा(क्री)भावेऽप्या-वृत्तिरस्ति, (अतः) अह्न इति विशिनष्टि। ननु 'प्रातराहुतिं हुत्वा, हविर्निर्वपेत्' (खागृ. २।१।८,९) इत्यनेनैव सिद्धम्। न सिध्यति, पूर्वकालनिषेधपरत्वा-त्तस्य। अपि च 'सर्वमहः प्रातराहुतेः स्थानम्' इति वचनात् अपराह्णेऽपि स्यात्। काल इति यथाऽन्ये दर्शादयः काला अधिकारहेतवः तथा अयमपि उक्तः कालोऽधिकारहेतुर्नाङ्गमात्रमिति गमयितुम्। अतोऽन्य-काले कृतमकृतमेव, न विगुणमात्रम्। विशेषादेशस्य बलीयस्त्वे सिद्धे अनादेश इति शास्त्रान्तरादेशस्य संग्रहणार्थम्। तत्र विरुद्धानां विकल्पः, यथा विवाहे सर्वकालत्वं, उपनयने च पञ्चमवर्षादि। अविरुद्धानां समुच्चयः, यथोपनयने वसन्तादि, सर्वेषु च मुहूर्तादि। एवं सर्वत्र। रुद्रभा.

## कौशिकगृह्यसूत्रम्

[1]यथाकामी वा ॥

## गृह्यपरिशिष्टम्

[2]धर्म्येषु विवाहेषु कालपरीक्षणं, नाधर्म्येषु ॥

* 'तेषां द्वन्द्वसमासः। अन्वये तेषामितरेतरयोगमाह विभक्तिः।' इति मूलं न संगच्छते।

(१) कौसू. १०।१।३ (७५।३).

(२) गभा ६७ ; विसौ. ९ धर्म्येषु (धर्म्येष्वेव) ; मुक्ता. १४८ धर्म्येषु (धर्म्येष्वेव) परीक्षणं (प्रतीक्षणं) ; सिन्धु. १०७९ ; संग. २२७ विसौवत् ; पुम. ४४६ काल (कालाकाल).

## बौधायनः

[1]यस्मिन्काले विरोधोऽस्ति
ज्यौतिषोक्तागमोक्तयोः।
ज्योतिषोक्तं विहायैव
स्मृतिचोदितमाचरेत् ॥

## वसिष्ठः

[2]दिनाधिपे मेषवृषालिकुम्भ-
नृयुङ्मृगाख्येषु गृहेषु संस्थे।
माघद्वये माधवशुक्रयोस्तु
मुख्योऽथवा कार्तिकसौम्ययोश्च ॥
[3]आर्द्रोदयादूर्ध्वमिनस्य कार्यं
नक्षत्रवृन्दे दशके कदाचित्।
मासोक्तकर्मेतरमङ्गलाद्यं
कुर्यान्न सुप्तेऽपि तथा मुरारौ ॥
[4]आर्द्रादिके स्वातिविरामकाले
नक्षत्रवृन्दे दशके स्थितेऽर्के।
विवाहचौलव्रतबन्धदीक्षा-
सुरप्रतिष्ठादि न कार्यमेव ॥

## नारदः

[5]सौम्यायनं मासषट्कं मृगाद्यं भानुभुक्तितः।
अहः सुराणां तद्रात्रिः कर्काद्यं दक्षिणायनम् ॥

(१) मुक्ता. १४८ ; आन. १८० (=) उत्तरार्धे (आगमोक्तं विहायैव ज्यौतिषोक्तं समाचरेत्।).

(२) वसं. ३२।३ ; विसौ. ९ नृयुङ्मृगाख्येषु गृहेषु संस्थे (नृयुग्मनक्राख्यधटर्क्षसंस्थे) शुक्रयोस्तु (शुक्रयोश्च) सौम्ययोश्च (मार्गयोश्च).

(३) वसं. ३२।१० उत्तरार्धे (मासोक्तकर्मान्तरमङ्गलाद्यं न बोधनेऽह्नि प्रकटं मुरारेः।) ; विसौ. १० आर्द्रोदयादूर्ध्व-मिनस्य कार्यं (आर्द्रादितः स्वातिविरामकाले).

(४) वसं. ३२।११ दिके स्वा (दिकस्वा) स्थितेऽर्के (तथैव) दीक्षासुरप्रतिष्ठादि न (नाद्यं सुरप्रतिष्ठा न च) ; संम. २२ स्थितेऽर्के (रविश्चेत्) बन्धदीक्षा (बन्धनाद्यं) ; संग. २२७ मेव (मेतत्) ; पुम. ४४७.

(५) ज्योना. ३।७८–८० पृ. १८–१९ ; विसौ. ११ यज्ञादि (मखादि) कर्तव्यं (विधेयं).

गृहप्रवेशवैवाहप्रतिष्ठामौञ्जिबन्धनम् ।
यज्ञादि मङ्गलं कर्म कर्तव्यं चोत्तरायणे ।
याम्यायनेऽशुभं कर्म मासप्राधान्यमेव च ॥
क्रमाच्छिशिरवसन्तग्रीष्माः स्युश्चोत्तरायणे ।
वर्षाः शरच्च हेमन्त ऋतवो दक्षिणायने ॥
[1]माघादिमासौ द्वौ द्वौ च ऋतवः शिशिरादयः ।
चान्द्रो दर्शावधिः सौरः संक्रान्त्या सावनो दिनैः ॥
[2]त्रिंशद्भिश्चन्द्रभगणो मासो नाक्षत्रसंज्ञकः ।
मधुश्च माधवः शुक्रः शुचिश्चापि नभाह्वयः ॥
नभस्य इष ऊर्जश्च सहाख्यश्च सहस्यकः ।
तपस्तपस्यः क्रमशश्चैत्रादीनां तु संज्ञकाः ॥
यस्मिन्मासे पौर्णमासी येन धिष्ण्येन संयुता ।
तन्नक्षत्राह्वयो मासः पौर्णमासी तदाह्वया ॥
[3]माघफाल्गुनवैशाखज्येष्ठमासाः शुभप्रदाः ।
मध्यमः कार्तिको मार्गशीर्षो वै निन्दिताः परे ॥
[4]न कदाचिद्दशर्क्षेषु भानोरार्द्राप्रवेशनात् ।
विवाहं देवतानां च प्रतिष्ठां चोपनायनम् ॥

(१) ज्योना. ३।८१ पू. १९ ; विसौ. ११ पू.

(२) ज्योना. ३।८२-८४ पू. १९.

(३) ज्योना. २७।२ पू. ५१ ; प्रपा. ३२७ शुभप्रदाः (शुभावहाः) शीर्षो वै (शीर्षको) ; गभा. ६६ शुभप्रदाः (शुभावहाः) उत्तरार्धे (कार्तिको मार्गशीर्षश्च मध्यमौ निन्दिताः परे ।) ; विसौ. ९ उत्तरार्धं गभावत् ; मुक्ता. १४७ प्रपावत्, व्यासः ; संम. ६५ शीर्षो वै (शीर्षको) ; सिन्धु. १०७६ उत्तरार्धं गभावत् ; विपा. ७५३ शुभप्रदाः (शुभावहाः) मध्यमः (मध्यमौ) शीर्षो वै (शीर्षको) ; संकौ. १९७ ; ज्योनि. १५२ ; संग. २२७ प्रपावत् ; पुम. ४४६ ; संर. ४५८ उत्तरार्धे (कार्तिको मार्गशीर्षश्च मध्यमावितरेऽधमाः ।).

(४) ज्योना. २७।३ पू. ५१ ; प्रपा. ३२७ ; संम. ६५ चोप (नोप) ; विपा. ७५३ विवाहं (विवाहो) प्रतिष्ठां (प्रतिष्ठा) ; ज्योनि. १५२ ; संग. २२७ विपावत् ; कुभ. १०७६ (=) पू. ; संर. ४५८.

(१) देशविशेषे मासान्तरेष्वपि विवाहो दृश्यते, स च देशाचारकुलाचाराभ्यां व्यवस्थापनीयः । न च स्मृत्यन्तरानुरोधादुपेक्षणीया देशकुलाचाराः, तेषामुत्सन्नशाखामूलकतया श्रुतिसिद्धत्वात् । तथा च रत्नमालायाम्- 'न शास्त्रदृष्ट्या विदुषा कदाचिदुल्लङ्घनीयाः कुलदेशधर्माः । मूलं हि तेषु च्युतवेदशाखा भूयानधर्मः स्थितिभङ्गदोषात् ॥' विसौ. ९

(२) अत्र यद्यपि शेषा निन्दितास्तथापि 'भानोरार्द्राप्रवेशनात्' इति पुनः श्रुत्या आषाढोऽभ्यनुज्ञात इति नवीनाः । अत्र च विधिनिषेधाः सौरमासाभिप्रायेण । यथोक्तं गर्गेण- 'सौरो मासो विवाहादौ यज्ञादौ सावनः स्मृतः' इति । कश्यपेन चान्द्रमानमप्युक्तम्- 'उपवासव्रतोद्वाहयात्राक्षौरोपनायनम् । तिथिवर्षादिलिखितं चान्द्रमानेन गृह्यते ॥' इति । इतरे चैत्राषाढश्रावणभाद्रपदाश्विनपौषाः । संर. ४५९

[1]अप्रबुद्धो हृषीकेशो यावत्तावन्न मङ्गलम् ।
उत्सवे वासुदेवस्य दिवसे नान्यमङ्गलम् ॥
[2]प्राजापत्यब्राह्मदैवा विवाहा आर्षसंयुताः ।
उक्तकाले तु कर्तव्याश्चत्वारः फलदायकाः ।
गान्धर्वासुरपैशाचराक्षसाख्यास्तु सर्वदा ॥

### व्यासः

[3]आषाढः प्रौष्ठपन्माघौ मार्गशीर्षस्तथैव च ।
चत्वारो दूषिता मासा वर्णसंस्कारकर्मणि ॥
मीने धनुषि सिंहे च स्थिते सप्ततुरङ्गमे ।
क्षौरमन्नं न कुर्वीत विवाहं मौञ्जिबन्धनम् ॥
माघफाल्गुनवैशाखज्येष्ठमासाः शुभावहाः ।
मध्यमः कार्तिको मार्गशीर्षको निन्दिताः परे ॥
[4]न कदाचिद्दशर्क्षेषु भानोरार्द्राप्रवेशनात् ।
पौषे चैत्रे शुचौ मार्गे नेति प्राह बृहस्पतिः ॥

(१) ज्योना. २७।६ पू. ५१ ; प्रपा. ३२७ ; विपा. ७५३ ; ज्योनि. १५२.

(२) विसौ. ५५.

(३) मुक्ता. १४७.

(४) मुक्ता. १४८ ; संर. ४६० (सार्वकालिकमिच्छन्ति विवाहं गौतमादयः ।) ज्योतिर्निबन्धे, एतावदेव.

श्रावणं केचिदिच्छन्ति नेच्छन्त्यन्ये महर्षयः ।
कन्याकुम्भकुलीरस्थे रवौ क्षौरं विवर्जयेत् ॥
आषाढादिचतुर्मासांश्चान्द्रान् पौषं च वर्जयेत् ।
सार्वकालिकमिच्छन्ति विवाहं गौतमादयः ॥
धर्म्या ये विवाहास्ते संमताः सार्वकालिकाः ॥
विष्णोः प्रस्वपनोत्थानमध्ये नैवोपनायनम् ।
विवाहं नैव कुर्वीत नैव कुर्यान्महोत्सवम् ॥
[1]माघफाल्गुनवैशाखे यदूढा मार्गशीर्षके ।
ज्येष्ठे चाषाढमासे च सुभगा वित्तसंयुता ॥
[2]श्रावणे वाऽपि पौषे वा कन्या भाद्रपदे तथा ।
चैत्राश्वयुक्कार्तिकेषु याति वैधव्यतां लघु ॥

### दक्षः

[3]राक्षसासुरगान्धर्वपैशाचा ब्राह्मणस्य तु ।
निषिद्धे तिथिमासेऽपि संमता इति निश्चयः ॥

### भरद्वाजः

[4]माघफाल्गुनवैशाखज्येष्ठाषाढमृगाह्वयाः ।
षडेते पूजिता मासाश्चातुर्वर्ण्यस्य नित्यशः ॥
अत्र विहितप्रतिषिद्धानामाषाढादीनां देशभेदेन व्यवस्थेति मदनरत्ने । संकौ. १९७

### लघुवसिष्ठः

[5]क्षौरं चैत्रे न कुर्वीत विवाहं गृहकर्म वा ॥

### गर्गः

[6]माङ्गल्येषु विवाहेषु कन्यासंवरणेषु च ।
दशमासाः प्रशस्यन्ते चैत्रपौषविवर्जिताः ॥

(१) गभा. ६६ चाषाढमासे च (चाषाढके चैव); सिन्धु. १०७६ चाषाढ (वाषाढ); प्रका. ३५९; संर. ४५९.

(२) गभा. ६६ वाऽपि (ऽपि च); सिन्धु. १०७६; प्रका. ३५९; संर. ४५९ लघु (ध्रुवम्).

(३) मुक्ता. १४८.

(४) मपा. १६२ ज्येष्ठा (ज्यैष्ठा) ज्योतिःसारसागरे; संकौ. १९७; पुम. ४४६; संर. ४५९ मृगाह्वयाः (मृगाभिधाः).

(५) विसौ. ९.

(६) सिन्धु. १०७७.



[1]... ... ... पुत्रोपेता तु कार्तिके ।
धनधान्यसुतोपेता सौम्ये भर्तृपरायणा ॥
[2]आषाढः प्रौष्ठपन्माघो मार्गशीर्षस्तथैव च ।
चत्वारो दूषिता मासा वर्णसंस्कारकर्मणि ॥
[3]अग्न्याधेयं प्रतिष्ठां च यज्ञदानव्रतानि च ।
देवव्रतवृषोत्सर्गचूडाकरणमेखलाः ॥
गमनं देवतीर्थानां विवाहमभिषेचनम् ।
यानं च गृहकर्माणि मलमासे विवर्जयेत् ॥

### वात्स्यः

[4]माघफाल्गुनवैशाखा ऐन्द्रः सौम्योऽनलस्तथा ।
षडेते पूजिता मासाश्चातुर्वर्ण्यस्य नित्यशः ॥
ऐन्द्रो ज्येष्ठः । सौम्यो मार्गशीर्षः । अनलः कार्तिकः । विसौ. ८
[5]माघमासे भवेदूढा कन्या सौभाग्यसंयुता ।
फाल्गुनोढा भवेत्साध्वी वैशाखे पुत्रिणी भवेत् ॥
[6]धर्मयुक्ता भवेज्ज्येष्ठे धनिनी कार्तिके भवेत् ।
देवपूजारता नित्यं मासे स्यात्सोमदैवते ॥
[7]उक्तवर्जेषु मासेषु विवाहं प्राप्नुयाद्यदि ।

(१) विसौ. ८.

(२) मुक्ता. १४७

(३) ज्योनि. ८३.

(४) विसौ. ८.

(५) चका. ७८६ दक्षः; विसौ. ८ भवेदूढा (भवेत्पूज्या) फाल्गुनोढा (फाल्गुने च) पुत्रिणी भवेत् (मासि पुत्रिणी); संकौ. १९७ माघमासे भवेदूढा (माघे मासे भवेदूढा); संग. २२८ विसौवत्; पुम. ४४६ व्यासः; संर. ४५८.

(६) चका. ७८६; विसौ. ८ धनिनी (संपन्ना) सोम (सौम्य); संकौ. १९७ दैवते (देवते); संग. २२८ विसौवत्; पुम. ४४६ देव (वर) व्यासः; संर. ४५८ संकौवत्.

(७) चका. ७८६ पूर्वार्ध (उक्तवर्जितेष्वन्येषु मासेषु प्राप्नुयाद्यदि ।) तदानीं (विवाहं) दक्षः; विसौ. ८; संग. २२८; पुम. ४४६ पूर्वार्धे (उक्तवर्जमथान्येषु मासेषु प्राप्नुयाद्यदि ।) तदानीं (विवाहं) व्यासः.

तदानीं कन्यका सा स्यात्सुतशीलार्थवर्जिता ॥

धनिनी स्वातन्त्र्येण धनसंग्रहवती । नित्यमिति भर्त्रादिशुश्रूषाद्यावृत्तिः सूचिता । सोमदेवतः मार्गशीर्षः । संकौ. १९७

## वात्स्यायनः

[1]विवाहकर्म नेच्छन्ति प्रसुप्ते शार्ङ्गधन्वनि ।
रुतावथ गतानां तु माण्डव्याद्या महर्षयः ॥ (?)

## शौनकः

[2]अयनद्वये समूढा भर्तारं नाभिनन्दते नारी ।
विषुवद्वयेऽपि विधवा षडशीतिमुखेषु सा म्रियते ॥

शौनकस्तु अयनसंधावृतुसंधौ च मङ्गलकर्मणां निषेधमाह । तद्यथा—अयनद्वये इति । विसौ. १०

[3]धनमानपरिभ्रष्टा चैत्रमास्यसती भवेत् ।
भर्तुः प्रियाऽतिधनिनी वैशाखे सुप्रजा भवेत् ॥

सुभगा ज्येष्ठे कन्या गुणोपपन्ना सुशीला च ।
आषाढे निःशौचा सुखोपपन्नेति वर्णयन्त्यपरे ॥

श्रावणमासे विधवां
केचिच्चेच्छन्ति पुत्रविभ्रष्टाम् ।
दुःशीला भाद्रपदे
सौभाग्यविवर्जिता नियतम् ॥

वन्ध्या वै चाश्वयुजे
मृतप्रजा धर्मवर्जिता चैव ।
तीक्ष्णा रोदनशीला
कुटिला वै कार्तिके मासि ॥

सौम्ये परवेश्मरता
कलहपरा संविभागशीला च ।
पौषे वित्तविहीना
वैधव्यं वा समाप्नोति ॥

शीलचरित्रोपेता
पुत्रवती चैव माघमासे तु ।
सुभगा धनधान्यवती
परिणीता फाल्गुने मासि ॥

परिणयकालः शुभदः
शरदि वसन्ते च विप्राणाम् ।
राजन्यवैश्ययोरपि
फलदो ग्रीष्मः सघनसमयः ॥

शूद्राणां शिशिरे वाऽन्यत्र संस्कार- (? संकर)
भवानाम् ।
अनुकूले ग्रहकाले विशेषतो धन्यतरमुक्ताम् ॥ ?

## आश्वलायनः

[1]वरोदगयनः कालः सर्वकर्मसु कुर्वताम् ।
दैवः पक्षस्तथा शुक्लः श्रेष्ठो वारो बृहस्पतेः ॥
कन्याकर्कटकुम्भेषु विवाहमपि यत्नतः ।
वर्जयेत्सर्वकालेषु विवाहं कारयेद्बुधः ॥
सुराणां पूर्वसंध्यात्वान्मासो भवति गर्हितः ।
कर्कटस्तौ च पैत्र्यत्वात्कन्याकुम्भौ च गर्हितौ ॥

## वराहः

[2]वात्स्यो वर्षमनोजमिच्छति तथा
रैभ्योऽयनं चोत्तरं
श्रीवासोऽन्त्यमृतुं विहाय मुनयो
माण्डव्यशिष्या जगुः ।
चैत्रं प्रोज्झ्य पराशरः कथयते
पौषं च दौर्भाग्यदं
आषाढादि चतुष्टयं तु शुभदं
कैश्चित्प्रदिष्टं बुधैः ॥

[3]हरौ प्रसुप्ते न च दक्षिणायने
न चैत्रमासे न च पौषसंज्ञके ॥

---

(१) चका. ७९२.
(२) विसौ. १०.
(३) विसौ. ८.

(१) आश्वस्मृ. (अध्यायः) ११ पृ. ८०.
(२) स्थलनिर्देशादि वर्षविचारप्रकरणे (संका. पृ. ८७४) द्रष्टव्यम् ।
(३) विसौ. ८.

### श्रीधरः

[1]शरद्वसन्तश्च शुभोऽग्रजानां
ग्रीष्मश्च राजन्यविशोः प्रशस्तः ।
शूद्रस्य वर्षाः शिशिरोऽखिलस्य
लोकस्य पाणिग्रहणे प्रदिष्टः ॥

[2]प्रशस्ताः सदा ज्येष्ठवैशाखमाघा-
स्तथा शस्यते फाल्गुनो वै मुनीन्द्रैः ।
विहायाधिमासं सदा दाक्षिणात्याः
शुभं मार्गशीर्षे च सोर्जे वदन्ति ॥

[3]पौषे च कुर्यान्मकरस्थितेऽर्के
चैत्रे भवेन्मेषगतो यदा स्यात् ।
प्रशस्तमाषाढकृतं विवाहं
वदन्ति गर्गा मिथुनस्थितेऽर्के ॥

[4]अर्के कर्कटकन्यकाघटधनु-
र्मुक्ते भृगौ मन्त्रिणि
स्फीतज्योतिषि शीतरोचिषि बलो-
द्रिक्ते विरिक्ते तिथौ ।
रोहिण्युत्तररेवतीपितृमरु-
न्मित्रेन्दुहस्तासुरे-
ष्वारार्कार्कजवासरादिरहिते-
षूद्वाहकर्मारभेत् ॥

अर्के सूर्ये कर्कटकन्यकाघटधनुःसंज्ञराशिभिः विमुक्ते मासि विवाहकर्मारभेदिति । प्रपा. ३२७

(१) विसौ. ९ ; संग. २२७.

(२) विसौ. ९ ; संग. २२८ शुभं मार्गशीर्षे च सोर्जे (सदा मार्गशीर्षे च सोर्जे).

(३) गभा. ६६ पौषे च (पौषेऽपि) नारदः ; विसौ. १०; सिन्धु. १०७७ गभावत्, वसिष्ठः ; संकौ. १९७ गभावत्, वसिष्ठः ; पुम. ४४६ वसिष्ठः ; संर. ४५९ गभावत्, वसिष्ठः.

(४) प्रपा. ३२७ ; विपा. ७५२ मुक्ते (युक्ते) ; संकौ. १९९ मुक्ते (युक्ते) बलो (नवो) सर्वग्रन्थेषु श्रीधरीये इत्युक्तम्.

### श्रीपतिः

[1]गृहप्रवेशत्रिदशप्रतिष्ठा-
विवाहचौलव्रतबन्धपूर्वम् ।
सौम्यायने कर्म शुभं विधेयं
यद्गर्हितं तत्खलु दक्षिणेऽपि ॥

[2]मृगादिराशिद्वयभानुभोगात्
षट् चर्तवः स्युः शिशिरो वसन्तः ।
ग्रीष्मश्च वर्षाश्च शरच्च तद्वत्
हेमन्तनामा कथितस्तु षष्ठः ॥

[3]नाषाढप्रभृतिचतुष्टये विवाहो
नो पौषे न च मधुसंज्ञके विधेयः ॥

[4]प्राजापत्यब्राह्मदैवार्षसंज्ञाः
कालेषूक्तेष्वेव कार्या विवाहाः ।
गान्धर्वाख्यश्चासुरो राक्षसश्च
पैशाचो वा सर्वकालं विधेयः ॥

### विधिरत्ने

[5]कन्याकुम्भकुलीरगे दिनकरे
कुर्यान्न पाणिग्रहम् ।
शेषाणि प्रवराणि यानि नितरां
मासानि पाणिग्रहे ॥

### महेश्वरः

[6]चूडाकर्मनृपाभिषेकनिलया-
ग्न्याधानपाणिग्रहान्
देवस्थापनमौञ्जिबन्धनविधीन्
कुर्यान्न याम्यायने ।
देवेज्यास्फुजितोस्तथाऽस्तमितयो-
र्बाल्ये च वार्धे तयोः
के तावभ्युदिते तथा ग्रहणतो
यावत्तिथिश्चाष्टमी ॥

(१) संग. २२७. (२) विसौ. ११.

(३) संग. २२७ ; पुम. ४४६ रत्नमालायां इत्युक्तम् ।

(४) विसौ. ९ रत्नमालायाम् ; ज्योनि. १५८ कालं (काले) रत्नमालायाम् ; संग. २२७.

(५) प्रपा. ३२७. (६) गभा. २३.

## विवाहवृन्दावनम्

[1]प्रावृड्वसन्तोर्जसहःकरग्रहः
परैरुदाहारि न हारि तन्मतम् ।
रवेरवैसारिणमुत्तरायणं
पुरन्धिपाणिग्रहणे परायणम् ॥

अथ विवाहेऽन्यमतं निरस्य स्वमतमाह—प्रावृडिति । परैः अन्याचार्यैः प्रावृड्वसन्तोर्जसहःकरग्रहः प्रावृड् वर्षा, वसन्तः प्रसिद्धः, ऊर्जः कार्तिकः, सहाः मार्गशीर्षः एषु करग्रहः विवाहः उदाहारि उक्तः, परं च तन्मतं न हारि न मनोहरम् । यतो रवेः सूर्यस्य अवैसारिणं मीनरहितं उत्तरायणं मकरादिराशिषट्कमेव पुरन्धिपाणिग्रहणे स्त्रीणां विवाहे परायणं श्रेष्ठं, बहुसंमतत्वात् ।

लक्ष्मी.

[2]चैत्रे मासि प्रतिपदि तिथौ
वासरेऽर्कस्य सर्वै-
र्मेषादिस्थैर्गगनगतिभि-
र्भूर्भुवःस्वःप्रवृत्तिः ।
एवं पौषे मृगमुखगते
भास्वति स्यान्न चासा-
वुक्तः श्रेयान् परिणयविधा-
विन्दुमासोऽस्ति तस्मात् ॥

तत्र सौरचान्द्रमासयोर्विचारं कथयति— चैत्रे इति । चैत्रे मासि प्रतिपदि तिथौ अर्कस्य वारे सर्वैर्गगनगतिभिः ग्रहैः मेषादिस्थैः सद्भिः भूर्भुवःस्वःप्रवृत्तिः बभूव । एवं पौषे मासे मृगमुखगते मकरादिस्थे भास्वति सूर्ये च न स्यात् । तस्मात् कारणात् परिणयविधौ विवाहविषये असौ इन्दुमासः चान्द्रमासः श्रेयान् अतिश्रेष्ठ उक्तोऽस्ति ।

लक्ष्मी.

नेष्टः पौषो मृगयुजि रवा-
वादृतश्चेत्प्रवीणै-
श्चारुश्चैत्रोऽप्यजसहचरे
भास्करे सुन्दरीणाम् ।
माण्डव्याद्यैः स्मृतशुभफल-
स्यास्य किं नोपयामे
मीनोऽपि स्यादविकृतफलः
फाल्गुनस्य प्रसङ्गात् ॥

अथ सौरचान्द्रयोर्विरोधे सयुक्तिकं निर्णयं कथयति —नेष्ट इति । सुन्दरीणां नारीणां उपयामे विवाहे मृगयुजि मकरस्थे रवौ पौषो नेष्टः स्यात् । चेत् यदि प्रवीणैः कैश्चित् पण्डितम्मन्यैः मृगेऽर्के पौषः आदृतः स्वीकृतः तदा अजसहचरे मेषगते भास्करे चैत्रोऽपि चारुः शुभः स्यात् । किंच माण्डव्याद्यैः आचार्यैः स्मृतशुभफलस्यास्य फाल्गुनस्य प्रसङ्गात् योगात् मीनोऽपि मीनस्थितार्कोऽपि अविकृतफलः न विकृतं फलं यस्य सः तथा किं न स्यात् ? अपि तु अविकृतफल एव स्यात् ।

लक्ष्मी.

[1]झषो न निन्द्यो यदि फाल्गुने स्या-
दजस्तु वैशाखगतो न निन्द्यः ।
मध्वाश्रितौ द्वावपि वर्जनीया-
वित्यादिवाचामियमेव युक्तिः ॥

अतोऽत्र सिद्धान्तमाह— झष इति । यदि फाल्गुने मासे झषः मीनस्थोऽर्कः तदा न निन्द्यः स्यात् । अजः मेषार्कस्तु वैशाखगतो न निन्द्यः स्यात् । मध्वाश्रितौ चैत्रमासगतौ द्वौ मीनमेषार्कौ अपि वर्जनीयौ, चान्द्रमासस्य प्राधान्यात् । इत्यादिवाचां इत्याद्युक्तवतां युक्तिः इयमेव कथितैव इत्यर्थः ।

लक्ष्मी.

[2]प्रायः सौरं मानमिष्टं विवाहे
तत्किं चान्द्रं मासमाहुः फलेन ।
यस्मात्सम्यक्तत्फलाप्तिस्तदक्ये
सौरो मासः केवलः किंचिदूनः ॥

---

(१) विवृ. १५.

(२) विवृ. १०११-२.

(१) विवृ. १०१३ ; विसौ. १० चतुर्थपादं विना ; सिन्धु. १०७९ पू. (=) ; संव. ९९ ; कुभ. १०७७ अजस्तु (मेषस्तु) पू. (=).

(२) विवृ. १०१४.

यदि चान्द्रमासस्य प्राधान्यं तदा पृथक् सौरमानं किमुक्तमित्याह- प्राय इति । प्रायः विशेषेण विवाहे सौरं मानमिष्टं, तत् तदा फलेन चान्द्रं मासं किमाहुः ? यस्मात् कारणात् तदैक्ये तयोः सौरचान्द्रयोः ऐक्ये तत्फलाप्तिः विवाहफललब्धिः सम्यक् संपूर्णा भवति । केवलः सौरो मासः किंचिदूनः स्यात् । लक्ष्मी.

[1]रवेरमीना मकरादिषड्गृही
करग्रहे मङ्गलकृन्मृगीदृशाम् ॥

रवेः सूर्यस्य अमीना मीनरहिता मकरादिषड्गृही मकरादीनां षड्गृहाणां समाहारः मकरादिषड्गृही, चैत्ररहितमुत्तरायणमित्यर्थः, मृगीदृशां स्त्रीणां करग्रहे विवाहे मङ्गलकृत् भवति । लक्ष्मी.

## राजमार्तण्डः

[2]माङ्गल्येषु विवाहेषु कन्यासंवरणेषु च ।
दश मासाः प्रशस्यन्ते चैत्रपौषविवर्जिताः ॥

[3]आषाढे धनधान्यभोगरहिता
नष्टप्रजा श्रावणे
वेश्या भाद्रपदे इषे च मरणं
रोगान्विता कार्तिके ।
पौषे प्रेतवती वियोगबहुला
चैत्रे मदोन्मादिनी
अन्येष्वेव विवाहिता सुतवती
नारी समृद्धा भवेत् ॥

## भुजबलभीमः

[4]मलमासादिकालानां विवाहाद्ये प्रयत्नतः ।
पुंसः प्रति सदा दोषात्सर्वदैव हि वर्ज्यता ॥

## भीमपराक्रमः

[5]अधिमासके विवाहं
यात्रां चूडां तथोपनयनादि ।
न कुर्यान्न सावकाश-
मङ्गल्यं न तु विशेषेज्याम् ॥

अत्र विवाहादिकीर्तनं निरवकाशमपि ( ? काश- स्यापि ) निषेधार्थं, अन्यथा सावकाशमित्यनेनैव सिद्धे- र्वैयर्थ्यात् । सावकाशं च संभवत्कालान्तरम्, अतो निरवकाशस्याप्यनन्यगतिकस्य प्रतिप्रसवोऽर्थात् सूचितः । संत. ८८५

## संग्रहे

[1]कार्तिकाश्वयुजौ मासावुद्वाहे दक्षिणायने ।
शंसन्ति श्रावणं चान्ये मासास्त्वन्ये विगर्हिताः ॥

## मुहूर्तचिन्तामणिः

[2]गीर्वाणाम्बुप्रतिष्ठा-
परिणयदहनाधानचौलोपवीत-
क्षोणीपालाभिषेको-
दवसितविशनं नैव याम्यायने स्यात् ॥

गीर्वाणाः देवाः । अम्बु जलम्, लक्षणया जलाशयः । तयोः प्रतिष्ठा । गीर्वाणप्रतिष्ठा जलाशयप्रतिष्ठा चेत्यर्थः । परिणयो विवाहः । दहनाधानं अग्न्याधानम् । चौलं प्रसिद्धम् । उपवीतं व्रतबन्धः । क्षोणीपालाभिषेको- दवसितविशनम् । क्षोणीपालाभिषेकः राजाभिषेकः । उदवसितविशनं गृहप्रवेशः, 'गृहं गेहोदवसितम्' इत्यमरेणाभिधानात् । अत्र समाहारद्वन्द्वः । एतानि कर्माणि, उपलक्षणत्वादन्यान्यप्यनियतकालानि शुभ- कर्माणि याम्यायने दक्षिणायने नैव स्युः ! स्यादित्येक- वचनं मूले समाहारद्वन्द्वैकत्वाभिप्रायम् । पीटी.

[3]मिथुनकुम्भमृगालिवृषाजगे
मिथुनगेऽपि रवौ त्रिलवे शुचेः ।
अलिमृगाजगते करपीडनं
भवति कार्तिकपौषमधुष्वपि ॥

अथैवं गुरुशुद्धिमुक्त्वा इदानीं विहितमासानाह- मिथुनेति । मिथुनकुम्भौ प्रसिद्धौ । मृगः मकरः । अलिर्वृश्चिकः । वृषः प्रसिद्धः । अजः मेषः । एतद्रा- शिगते रवौ सति । तत्रापि मिथुनस्थिते सूर्ये शुचेः

---

(१) विवृ. १।३.
(२) उत. १२४ माङ्गल्ये (मङ्गल्ये); संप्र. ३०० पूर्वार्धे (विवाहव्रतचूडादिमङ्गलेषु विशेषतः।); सिन्धु. १०७७.
(३) उत. १२४. (४) संत. ८८२.
(५) संत. ८८४-८८५.

(१) मुक्ता. १४८.
(२) मुचि. ५।२६.
(३) मुचि. ६।१३.

आषाढस्य त्रिलवे तत्तृतीयांशे आषाढशुद्धप्रतिपदमारभ्य दशमीपर्यन्तं करपीडनं विवाहो भवति । अर्थादितरराशिगते सूर्ये सति आषाढशुक्लदशम्यनन्तरं हरिशयने च सति विवाहो न स्यात् । अलिमृगाजाः प्राग्व्याख्याताः । एतद्राशिगते सूर्ये सति कार्तिकपौषमधुष्वपि करपीडनं भवति । यथा वृश्चिके कार्तिकः मकरे पौषः तथा मीने चैत्रोऽपीत्यर्थः । इदं तु सौरमासग्राहिणां मतम् । तदेतत् प्रागभिहितन्यायादुपेक्ष्यम् । अथ वा केवलमस्याङ्गीकारेण मध्यमत्वमङ्गीकृत्य कालान्तरानपेक्ष्यवश्यदेयकन्याविषयम् । पीटी.

### मुहूर्तसर्वस्वे

[1]सौम्यायने रवौ चैत्रहीने माघादिपञ्चके ।
आषाढाद्यत्रिभागे स्यान्मार्गशीर्षे परिग्रहः ॥

### ज्योतिर्निबन्धे

[2]चूडाव्रतविवाहादि गृहारम्भप्रवेशनम् ।
जनार्दने प्रसुप्ते तु न प्रकुर्वीत सर्वथा ॥

### सुप्रभेदे

[3]सर्वकाले विवाहः स्यान्माघप्रौष्ठविवर्जिते ॥

### दीपिकायाम्

[4]काम्यादिष्वखिलेषु कर्मसु परित्याज्यौ
क्षयाख्योत्तरासंक्रान्ती ॥

(१) संग. २२७. (२) संर. ४७५.
(३) सस्मृ. ५४. (४) संकौ. २०० ; संर. ४७०.

### अनिर्दिष्टकर्तृकवचनानि

[1]माघफाल्गुनवैशाखज्येष्ठमासाः शुभावहाः ।
विवाहे मार्गशीर्षोऽपि देवलस्य मतेन च ॥

[2]पौषेऽपि मकरस्थेऽर्के चैत्रे मेषगते रवौ ।
आषाढे मिथुनादित्ये केऽप्याहुः करपीडनम् ॥

[3]मीनराशिस्थिते सूर्ये विंशतिर्वासरे यदि ।
विवाहः शुभदश्चैत्रे न तु मेषे कदाचन ॥
यदि रविगतमीने विंशतिर्वासरे वा
न भवति खलु दोषश्चैत्रमासे विवाहे ।
यदि रविगतमेषे चैत्रमासे विवाहः
सकलशुभविनाशः सर्वदा वर्जनीयः ॥

[4]चान्द्रो दैवो मानुषो वा सौरो देशानुसारतः ।
शुचिः शुक्लनवम्यन्तो ग्राह्यो लग्ने च कार्तिकः ॥

### रेणुकारिका

[5]ज्येष्ठे माघे फाल्गुने माधवे च
केचिन्मार्गे कार्तिके स्याद्विवाहः ॥

(१) धप्र. ५८ शुभावहाः (शुभप्रदाः) च (तु) ; ज्योनि. १५२.
(२) धप्र. ५८ मेषगते (मीनगते) ; विसौ. १० ; ज्योनि. १५२.
(३) धप्र. ५८.
(४) ज्योनि. १५२.
(५) रेका. १ पृ. ४९.

## पक्षविचारः

### बौधायनगृह्यसूत्रम्

[1]उदगयन आपूर्यमाणपक्षे पुण्ये नक्षत्रे......॥

(१) बौगृ. १।१।१४.

### बौधायनगृह्यपरिभाषासूत्रम्

[1]अथास्य श्रेयोऽवाप्तिः । आपूर्यमाणपक्ष इति पूर्वपक्ष एवैष उक्तो भवति । सोमेनाऽऽपूर्यमाणेन व्याख्यातः ॥

(१) बौगृप. १।२।१०-११.

अहोरात्राणि वा वृद्धिमन्ति ह्रासवन्ति च भवन्ति । यत्राह्नां वृद्धिर्भवति स एवैष उक्तो भवतीति ॥

## आश्वलायनगृह्यसूत्रम्

[1]उदगयन आपूर्यमाणपक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनगोदानविवाहाः ॥

(१) आपूर्यमाणपक्ष इति । आपूर्यमाणस्य पक्षः आपूर्यमाणपक्षः । कस्य आपूर्यमाणस्येति ? चन्द्रमसः । एवं सति पक्षो नोपपद्यते । कथम् ? मासस्य पक्षो न चन्द्रमसः । तस्मादर्थानुपपत्तिः । अथ अन्यो विग्रहः, आपूर्यमाणश्चन्द्रमा यस्मिन् पक्षे इत्येवमस्तु । एवमपि समासो नोपपद्यते । तस्मादन्यथा विग्रहः । आपूर्यमाणश्चासौ पक्षश्च इत्येवमस्तु । केन पुनरापूर्यते पक्षः ? शुक्लेन ज्योतिषा । पूर्वोऽपि विग्रह उपपद्यते । कथम् ? स हि मासानां चार्धमासानां च कर्ता । तस्माच्चन्द्रमसोऽपि पक्ष उपपद्यते । तस्मिन्नापूर्यमाणपक्षे । देभा.

(२) आपूर्यमाणस्य चन्द्रस्य यः पक्षः स तथोक्तः स हि मासस्य च पक्षस्य च कर्ता । अथवा आपूर्यमाणश्चासौ पक्षश्च आपूर्यमाणपक्षः । स हि चन्द्ररश्मिभिरापूर्यते शुक्लपक्ष इत्यर्थः । गानाव्र.

## कौषीतकिगृह्यसूत्रम्

[2]उदगयन आपूर्यमाणपक्षे पुण्याहे कुमार्यै पाणिं गृह्णीयात् ॥

## आपस्तम्बगृह्यसूत्रम्

[3]उदगयनपूर्वपक्षाहःपुण्याहेषु कार्याणि ॥

## भारद्वाजगृह्यसूत्रम्

[4]पूर्वपक्ष उपगृह्णीत । विज्ञायते पूर्वपक्षो देवानामिति । दैवं पुनरिदं कर्म । अपरपक्ष इत्यपरम् । विज्ञायतेऽपरपक्षः पितॄणामिति । पितृसंयुक्तं पुनरिदं कर्म ॥

(१) आगृ. १।४।१. शेषः स्थलादिनिर्देशः अयनर्तुमासविचारे (संका. पृ. ८७६) द्रष्टव्यः ।

(२) कौगृ. १।५.

(३) आपगृ. १।२.

(४) भागृ. १।१२.

## पारस्करगृह्यसूत्रम्

[1]उदगयन आपूर्यमाणपक्षे पुण्याहे कुमार्याः पाणिं गृह्णीयात् ॥

## खादिरगृह्यसूत्रम्

[2]उदगयनपूर्वपक्षपुण्याहेषु प्रागावर्तनादह्नः कालोऽनादेशे ॥

## वसिष्ठः

[3]दिने दिने वृद्धिमुपागतत्वात्<br>बली हि चन्द्रः शुभ एव शुक्ले ।<br>तथैव कृष्णे विलयं गतत्वात्<br>पक्षापराधोत्खलु पाप एव ॥

[4]आपूयमाणपक्षे तु विवाहो ब्राह्मणस्य तु ।<br>इतरेषां तु वर्णानां कृष्णपक्षे विधीयते ॥

## नारदः

[5]शुक्लपक्षं प्रशंसन्ति विवाहे गौतमादयः ॥

अत्र शुक्लपक्षप्राशस्त्योक्त्याऽसंभवे कृष्णपक्षस्यापि ग्रहणमिति सूच्यते । संर. ४६०

[6]शुक्ले तु सुभगा मान्या कृष्णपक्षेऽनृतप्रिया ॥

## व्यासः

[7]त्रयोदशदिने पक्षे विवाहादि न कारयेत् ।<br>गर्गादिमुनयः प्राहुः कृते मृत्युस्तदा भवेत् ॥

आदिशब्देन उपनयनादि । संर. ४७०

(१) पागृ. १।४।५. शेषः स्थलादिनिर्देशः अयनर्तुमासविचारे (संका. पृ. ८७८) द्रष्टव्यः ।

(२) खागृ. १।१।२.

(३) वसं. ३२।५.

(४) चका. ७८६ ; विसौ. १६ ; संग. २३१—२३२ ; पुम. ४४६ पक्षे तु (पक्षे च).

(५) संर. ४६०.

(६) ज्योनि. १५२.

(७) संकौ. १९९ ; संर. ४७०.

## वात्स्यः

[1]सितपक्षे तु यशसा प्रकाशयति सा कुलम् ।
कन्योढा त्वसिताद्ये च त्र्यंशे शेषे च निर्धना ॥

## वात्स्यायनः

[2]पक्षतिथिक्षणकरणलग्नेन्द्वर्के लग्नताराभ्यः । (?)
पाणिग्रहणे योज्यास्तत्त्वविदैकादश पदार्थाः ॥

## आश्वलायनः

[3]दैवः पक्षस्तथा शुक्लः ॥
[4]ऊर्ध्वं यत्नेन पञ्चम्याः कृष्णपक्षं प्रवर्जयेत् ।
श्रौते स्मार्ते च मतिमान् सप्तमीस्थानमहापदि ॥ (?)

## वराहः

[5]श्रेष्ठं पक्षमुशन्ति शुक्लमसितं
चान्त्यं त्रिभागं विना ।

## मदनरत्ने

[6]पक्षस्य मध्ये द्वितिथी इते यदा
तदा भवेद्रौरवकालयोगः ।
पक्षे विनष्टे सकलं विनष्ट-
मित्याहुराचार्यवराः समस्ताः ॥
त्रयोदशदिने पक्षे नूनं संहरते जगत् ।
अपि वर्षसहस्रेण कालयोगः प्रकीर्तितः ॥

तत्र पक्षस्य चान्द्रदिनात्मकतिथिसमूहात्मकत्वात् पक्षपदसमभिव्याहारवशेन दिनपदं चान्द्रदिनपरम् । 'दिनेशादर्शनं दिनम्' इति च प्रसिद्धेस्तद्रहितक्षीणतिथ्योरदिनत्वमभिप्रेत्य तद्रवशिष्टत्रयोदशतिथ्यात्मकानि दिनानि यस्मिन्निति व्युत्पत्त्या त्रयोदशदिनत्वं पक्षस्य बोध्यम् । एवं च पक्षान्तर्गतयोः कयोरपि तिथ्योः क्षयेण तत्प्रसङ्गेऽपि 'पक्षस्य मध्ये द्वितिथी पतेतां' इति वचने पक्ष इति सप्तम्यप्रयोगेण मध्यपदप्रयोगेण आरम्भ-समाप्तित्वेन अभिप्रेते प्रतिपत्पञ्चदश्यौ न क्षयं यत्र गच्छतः तद्भिन्नयोः कयोश्चित्तिथ्योः क्षयेण स पक्षो निन्द्यत्वेनाभिप्रेत इति गम्यते । न च प्रतिपदः क्षये द्वितीयामारभ्य विशेष्यपक्षस्यापि संभव इति कृतबुद्धय एव विदांकुर्वन्तु । संकौ. १९९

## श्रीधरः

[1]स्फीतज्योतिषि शीतरोचिषि नवोद्रिक्ते ॥

शीतरोचिः चन्द्रः । नवोद्रिक्ते इति तद्विशेषणेन शुक्लपक्षविधिः । पूर्वविशेषणेन तत्रापि षष्ठ्यादेः प्राशस्त्यम् । अनेनैव कृष्णपक्षनिषेधः, तत्रापि पञ्चम्यन्तस्य न निषेध इति च ज्ञाप्यते, तत्र स्फीतज्योतिष्ट्वाच्चन्द्रस्य पूर्वोदाहृतशास्त्रान्तराच्च । संकौ. १९९

## संग्रहे

[2]शुक्लादावुपचयगे कृष्णादावपचयस्थिते चन्द्रे ।
द्वावप्यभीष्टफलदौ पक्षौ स्त्रीणां शशाङ्कबल-लाभात् ॥

## ज्योतिर्निबन्धे

[3]उपनयनं परिणयनं वेश्मारम्भादिपुण्यकर्माणि ।
यात्रां द्विक्षयपक्षे कुर्यान्न जिजीविषुः पुरुषः ॥

## अनिर्दिष्टकर्तृकवचनम्

[4]शुक्लपक्षं प्रशंसन्ति विशेषेणोत्तरायणम् ॥

---

(१) चका. ७८६ क्रमेण दक्षः ; विसौ. १६.
(२) चका. ७९२.
(३) आश्वस्मृ. (अध्यायः) ११ पृ. ८०.
(४) आश्वस्मृ. (अध्यायः) ११ पृ. ८०.
(५) मपा. १६२ तं चान्त्यं त्रिभागं विना (तस्याद्यं त्रिभागं तथा); विसौ. ११.
(६) संकौ. १९९ इते यदा (पतेतां); संर. ४७०.

(१) प्रपा. ३२७ ; विपा. ७५२ ; संकौ. १९९.
(२) प्रपा. ३२८.
(३) संकौ. १९९.
(४) चका. ७८६.

# तिथिविचारः

## कौषीतकिगृह्यसूत्रम्

[1]उदगयन आपूर्यमाणपक्षे पुण्याहे कुमार्यै पाणिं गृह्णीयात् ॥

## आपस्तम्बगृह्यसूत्रम्

[2]उदगयनपूर्वपक्षाहःपुण्याहेषु कार्याणि ॥

(१) पुण्याहाः देवनक्षत्राणि ज्योतिःशास्त्रे प्रसिद्धानि, यमनक्षत्राणि च तद्विहितानि ।

अनाकुला.

(२) पुण्याहास्त्वह्नो नवधा विभक्तस्यायुजो भागाः प्रातःसङ्गवमध्याह्नापराह्णसायंशब्दवाच्याः पुण्यनक्षत्रापरपर्यायाः पञ्च, 'समानस्याह्नः पञ्च पुण्यानि नक्षत्राणि' 'मित्रस्य सङ्गवः । तत्पुण्यं तेजस्व्यहः' (तैब्रा. १।५।३) इत्यादिश्रुतेः । युग्मास्त्वश्लीलाः, 'चत्वार्यश्लीलानि' (तैब्रा. १।५।३) इति श्रुतेः ।

केचित् कृत्तिकादिविशाखान्तानि देवनक्षत्राणि पुण्याहाः, 'यान्येव देवनक्षत्राणि । तेषु कुर्वीत यत्कारी स्यात् । पुण्याह एव कुरुते' (तैब्रा. १।५।२) इति श्रुतेः ।

ताद.

## हिरण्यकेशिगृह्यसूत्रम्

[3]अह्नः पञ्चसु कालेषु प्रातः सङ्गवे मध्यन्दिनेऽपराह्णे सायं वैतेषु यत्कारी स्यात्पुण्याह एव कुरुते ॥

पञ्चसु कालेषु प्रातरादिषु सायमन्तेषु । वाशब्दो ज्योतिर्ज्ञान(तिःशास्त्र)प्रसिद्धे काले विकल्पार्थः । एतेषु पुण्येषु मुहूर्तेषु 'देवस्य सवितुः प्रातः' इति प्रकृत्य 'समानस्याह्नः पञ्च पुण्यानि नक्षत्राणि' इति श्रुतेष्वन्तरालेषु चतुरोऽश्लीलान् कालान् रात्रिं च वर्जयित्वा, यत्कर्तव्यं कर्म तत्कर्तुं शीलं यस्य स यत्कारी, सर्वाणि कर्माणि तेष्वेव कालेषु करणशील इत्यर्थः, स पुण्याह एव प्रशस्त एव दिने कुरुते । तत्र प्रागुदयादेका नाडिकोर्ध्वं चैका प्रातरित्युच्यते । प्राक्प्रथमाहश्चतुर्भागान्तादेका नाडिकोर्ध्वं चैका सङ्गवः । प्रागहरर्धान्तादेका नाडिकोर्ध्वं चैका मध्यन्दिनः । प्राक्तृतीयाहश्चतुर्भागान्तादेका नाडिकोर्ध्वं चैका सोऽपराह्णः । प्रागस्तमयादेका नाडिकोर्ध्वं चैका तत्सायम् । अयं सर्वकर्मणां कालः, न विवाहस्यैव, यत्कारीति वचनात् अहोरात्राणामेवायं विकल्पः । पुण्यानि तिथिवारनक्षत्राणि कालज्ञानविदितान्येवोपादेयानि, प्रदर्शनार्थत्वात् चैतस्य विधानस्य । नक्षत्रेष्वपि 'यान्येव देवनक्षत्राणि तेषु कुर्वीत यत्कारी स्यात् । यत्पुण्यं नक्षत्रम् । तद्वट्कुर्वीत' इत्यादिवचनाद्देवनक्षत्राणि ज्योतिःशास्त्रविहितविवाहनक्षत्राविरोधीनि प्रशस्तानि द्रष्टव्यानि ।

मातृद.

## भारद्वाजगृह्यसूत्रम्

[1]पूर्वाह्ण उपगृह्णीत । विज्ञायते पूर्वाह्णो देवानामिति । दैवं पुनरिदं कर्म । मध्यन्दिन उपगृह्णीत । विज्ञायते मध्यन्दिनमृषीणामिति । ऋषिसंयुक्तं पुनरिदं कर्म । अथापि विज्ञायते तस्मान्मध्यन्दिने सर्वाणि पुण्यानि संनिपतितानि भवन्तीति । अपराह्ण उपगृह्णीत । विज्ञायतेऽपराह्णः पितॄणामिति । पितृसंयुक्तं पुनरिदं कर्म । अथापि विज्ञायते भगस्यापराह्ण इति । भगसंयुक्तं पुनरिदं कर्म । अथापि विज्ञायते तस्मादपराह्णे कुमार्यो भगमिच्छमानाश्चरन्तीति । पुण्याह उपगृह्णीत । अपि वै खलु लोके पुण्याह एव कर्माणि चिकीर्षन्ते । तस्मादश्लीलनामंश्चित्रे नावस्येन्न यजेत । यथा पापाहे कुरुते तादृगेव तदिति परिचष्ट एव पापाहम् ॥

(१) कौगृ. १।५.
(२) आपगृ. १।२.
(३) हिगृ. १९।६।१ ; संर. ४६२.

(१) भागृ. १।१२.

## पारस्करगृह्यसूत्रम्

[1]उदगयन आपूर्यमाणपक्षे पुण्याहे कुमार्याः पाणिं गृह्णीयात् ॥

## वसिष्ठः

[2]नन्दा च भद्रा च जया च रिक्ता
पूर्णेति सर्वास्तिथयः क्रमात् स्युः ।
शुक्लेऽधमामध्यमकोत्तमास्ताः
पक्षेऽसितेऽप्युत्तममध्यहीनाः ॥
नोद्वाहयात्रोपनयप्रतिष्ठा-
सीमन्तचौलाखिलवास्तुकर्म ।
गृहप्रवेशाखिलमङ्गलाद्यं
कार्यं हि मासादितिथौ कदाचित् ॥
सप्ताङ्गचिह्नानि नृपस्य वास्तु-
व्रतप्रतिष्ठाखिलमङ्गलानि ।
यात्राविवाहाखिलभूषणं यत्
कार्यं द्वितीयादितिथौ सदैव ॥
[3]शुक्ले द्वितीयादित एव कृष्ण-
पक्षे दशम्यन्तगन्ताः शुभाः स्युः ।
तास्वष्टमीस्कन्दगणेशदुर्गा-
श्चतुर्दशी चापि तिथिर्विवर्ज्या ॥

स्कन्दः षष्ठी, गणेशः चतुर्थी, दुर्गा नवमी ।
विसौ. १७

[4]एकादशी द्वितीया च पञ्चमी सप्तमी तथा ।
त्रयोदशी तृतीया च विवाहे तु शुभावहाः ॥
[5]चतुर्दशीं चतुर्थीं च नवमीं च विवर्जयेत् ।
एतासु विधवा कन्या भवत्याशु विवाहिता ॥

## नारदः

[1]मासान्ते पञ्च दिवसांस्त्यजेद्रिक्तामथाष्टमीम् ॥
[2]दिवा भर्तुः प्रिया रात्रौ पित्रर्चनरता च सा ॥

## बृहस्पतिः

[3]चतुर्दशी चतुर्थी च अष्टमी नवमी तथा ।
षष्ठी च द्वादशी चैव पक्षच्छिद्राह्वयाः स्मृताः ॥
क्रमादेतासु तिथिषु वर्जनीयाश्च नाडिकाः ।
भूताष्टमनुतत्त्वाङ्कदश शेषास्तु शोभनाः ॥

मुख्यतिथ्यलाभे वर्ज्यांशानाह बृहस्पतिः— चतुर्दशीति । विसौ. १७

## मनुः

[4]तिथयः शोभनाः सर्वाः
प्रोक्ता रिक्ताविवर्जिताः ॥

## व्यासः

[5]उग्रासनोग्ररिक्तासु तिथिषु स्यादमर्दिता ।
दुर्भगा चेति शेषासु सुतसौभाग्यसंयुता ॥
[6]अन्नप्राशनमातिथ्यं विवाहो वास्तुकर्म च ।
रात्रावहनि वा कुर्यात् शेषाण्यहनि कारयेत् ॥

## गर्गः

[7]प्रतिपद्दुःखजननी द्वितीया प्रीतिवर्धिनी ।
सौभाग्यदा तृतीया स्याच्चतुर्थी चार्थनाशिनी ॥

---

(१) पागृ. १।४।५. शेषः स्थलादिनिर्देशः अयनर्तुमासविचारे (संका. पृ. ८७८) द्रष्टव्यः ।

(२) वसं. १२।४-६.

(३) वसं. ३२।४ ; प्रपा. ३२९ शुक्ले (शुक्ल) स्वष्टमी (स्वष्टम); विसौ. १७ शुभाः स्युः (प्रशस्ताः) चापि (वाऽपि).

(४) विसौ १६; संग. २३१.

(५) विसौ. १६.

(१) ज्योना. २७।११ पृ. ५१ क्तामथाष्टमीम् (क्ता तथाष्टमी); ज्योनि. १५२.

(२) ज्योनि. १५२.

(३) विसौ. १७ च अष्टमी (वाऽष्टमी) च्छिद्राह्वयाः स्मृताः (च्छिद्राः प्रकीर्तिताः) द्वितीयश्लोकोत्तरार्धे (भूतांशमनुतत्त्वाशाः शेषांशेष्वपि शोभनाः ।); सिन्धु. ८३५–८३६ वसिष्ठः; संर. ८२१ स्मृताः (इमाः) वसिष्ठः.

(४) प्रपा. ३२९.

(५) चका. ७८६.

(६) मुक्ता. १४७.

(७) प्रपा. १६३ ज्योतिःसारसागरे ; विसौ. १६ वर्धिनी (वर्धनी) स्यात् (च); संकौ. १९८ वर्धिनी (वर्धनी) भारद्वाजः ; पुम. ४४६ लल्लः ; संर. ४६१ भरद्वाजः.

[1]पञ्चम्यां सुखवित्तानि षष्ठी विघ्नप्रदायिनी ॥
विद्याशीलसुखाप्तिः स्यात्सप्तम्यामफलाऽष्टमी ॥
[2]नवमी शोकफलदा आनन्दो दशमीदिने ।
सुखदैकादशी ज्ञेया सफला द्वादशी स्मृता ॥
[3]मानपुत्रौ त्रयोदश्यां चतुर्दश्यतिदुःखदा ।
फलं बहुविधं नित्यं पञ्चदश्यां विशेषतः ॥
[4]अमायां चैव भद्रायां करणे विष्टिसंज्ञिते ।
यः करोति विवाहं स शीघ्रं याति यमालयम् ॥

### वात्स्यः

[5]कल्याणं भवति प्रीतिः सौभाग्यं धनसंक्षयः ।
सुखार्थौ बहुविघ्नानि शीलसौख्यमकीर्तयः ॥
शोकामयौ मुदः सौख्यं भाग्यमेवात्मजाप्तयः ।
उपद्रवाः पूर्णफलं क्रमात्प्रतिपदादिषु ॥

(१) मपा. १६३ विघ्नप्रदायिनी (विघ्नप्रदा मता) ज्योतिःसारसागरे ; विसौ. १६ ; संकौ. १९८ भारद्वाजः ; पुम. ४४६–४४७ लल्लः ; संर. ४६१ भरद्वाजः.

(२) मपा. १६३ फलदा (भयदा) सफला द्वादशी (द्वादशी सफला) ज्योतिःसारसागरे ; विसौ. १६ आनन्दो (त्वानन्दो) ; संकौ. १९८ भरद्वाजः ; पुम. ४४६–४४७ आनन्दो (चानन्दो) सुखदै (दुःखदै) सफला (कुफला) लल्लः ; संर. ४६१ भरद्वाजः.

(३) मपा. १६३ चतुर्दश्यतिदुःखदा (चतुर्दश्यौ तु दोषदे) नित्यं (ज्ञेयं) अस्मिन् ग्रन्थे 'न चेह शुक्लप्रतिपदुदयन्ती निषिध्यते ।' इत्यधिकम्, ज्योतिःसारसागरे; विसौ. १६ मानपुत्रौ (पुत्रमानौ) ; संकौ. १९८ चतुर्दश्यतिदुःखदा (चतुर्दशी तु दोषदा) नित्यं पञ्चदश्यां (पञ्चदश्यां चैव) भारद्वाजः ; संग. २३१ उत्त. ; पुम. ४४७ चतुर्दश्यतिदुःखदा (चतुर्दश्यौ तु दुःखदे) लल्लः ; संर. ४६१ चतुर्दश्यतिदुःखदा (चतुर्दश्यां तु दुःखदः) नित्यं पञ्चदश्यां (पञ्चदश्यां चैव) भरद्वाजः.

(४) मपा. १६३ ज्योतिःसारसागरे ; विसौ. १६ चैव भद्रायां (वै चरोक्तायां) संज्ञिते (संज्ञके) ; संग. २३१ भद्रायां (रिक्तायां) संज्ञिते (संज्ञके).

(५) चका. ७८६–७८७ (=) भवति (भाविता) जाप्तयः (जादयः) क्रमात्प्रतिपदादिषु (शुक्ले प्रतिपदादयः) ; विसौ. १६.

### शौनकः

[1]प्रीतिजननी द्वितीया
प्रतिपत्कल्याणमङ्गली कथिता ।
अर्थापहा चतुर्थी
सौभाग्यफला तृतीया च ॥
बहुविघ्नकरा षष्ठी
सुतसुखदा पञ्चमी भवति ।
अष्टम्यामयशः स्यात्
कुलशीलसुखा च सप्तमी भवति ॥
आनन्दफला दशमी
नवमी शोकामयप्रदा चैव ।
स्याद्द्वादशी समफला
सुखार्थदैकादशी भवति ॥
पूर्णफला पञ्चदशी
त्रयोदशी मानपुत्रफलजननी ।
बहुलोपद्रवजननी
चतुर्दशी भवति नियमेन ॥
अत्रापि कृष्णपक्षे
नवमीमविवाहितां वदन्त्येके ।
उभयोस्तिथयः शस्ताः
सौभाग्यसखावहाः पञ्च ॥

### वराहः

[2]तिथौ च रिक्ते शशिनि क्षयं गते
रवीन्दुभौमार्किदिनेषु नो शुभम् ॥
[3]रिक्तां प्रोज्झ्य तिथिं तथर्त्वयनयोः
संधिं च शेषाः शुभाः ॥

### लल्लः

[4]अत्रापि कृष्णपक्षस्य दशमीमविवाहिकाम् ।
वदन्त्यन्ये तु दशमीमुभयोरविवाहिकाम् ॥

(१) विसौ. १६ ; संग. २३१ (प्रीतिजननी द्वितीया प्रतिपत्कल्याणमङ्गली कथिता ।) एतावदेव.

(२) विसौ. ८.

(३) मपा. १६२ प्रोज्झ्य (प्रोह्य) ; विसौ. ११.

(४) मपा. १६३ हिकाम् (हिकीम्) ज्योतिःसारसागरे ; पुम. ४४७ ; संर. ४६१.

अत्रापि उक्तासु तिथिष्वपि । अविवाहिकां विवाहानर्हाम् । उभयोः पक्षयोः । विहितप्रतिषिद्धत्वादृशम्या विकल्पः । संर. ४६१

## नृसिंहः

[1]रिक्ता पर्वाष्टमी वर्ज्या पौर्णमासी शुभावहा ॥

## विवाहपटले

[2]षष्ठी तथैव नवमी च चतुर्दशी च
द्वादश्यथाष्टमतिथिश्च तथा चतुर्थी ।
आद्यत्रिभागमवशिष्य तु कृष्णपक्षे
शेषास्तथा परिहृतास्तिथयो भवन्ति ॥

## विधिरत्ने

[3]पञ्चदश्यष्टमी रिक्ता
वर्ज्याश्चान्याः शुभाश्च ताः ।
केचित्कृष्णाष्टमीं प्राहुर्विवाहेषु वयोऽत्यये ॥

## विवाहवृन्दावनम्

[4]अमातिथिः पार्श्वतिथिद्वयेन
समं न माङ्गल्यमुपादधाति ।
लोकंपृणस्तत्र तिथेः प्रणेता
यस्मान्न पीयूषवपुर्वपुष्मान् ॥

अमा अमावास्या तिथिः पार्श्वतिथिद्वयेन चतुर्दश्या प्रतिपदा च समं सह माङ्गल्यं नोपदधाति । यस्मात् कारणात् तत्र लोकंपृणः तिथिप्रणेता पीयूषवपुः चन्द्रः वपुष्मान् प्रशस्तबिम्बः न भवति । लक्ष्मी.

उदेति चायं प्रतिपत्समाप्तौ
कृशोऽपि वर्धिष्णुतया प्रशस्तः ।
द्वीपान्तरस्थो विफलोऽपि ताव-
द्यावन्न पृथ्वीनयनाध्वनीनः ॥

(१) प्रपा. ३२९.

(२) प्रपा. ३२९ ; विसौ. १७ उत्तरार्धे (अन्त्यं त्रिभागमवशिष्टमिहान्त्यपक्षे शेषाः शुभाः परिणये तिथयो भवन्ति ।).

(३) प्रपा. ३२९ ; ज्योनि. १५२ शुभाश्च ताः (शुभावहाः).

(४) विवृ. ८।२३–२४.

केश्चित् चन्द्रबाल्यात् द्वितीयाऽपि निषिद्धा, तन्मतं दूषयति– उदेतीति । अयं चन्द्रः प्रतिपत्समाप्तौ उदेति, अतः कृशोऽपि स वर्धिष्णुतया प्रशस्तः स्यात् । द्वीपान्तरस्थः, अन्यत् द्वीपं द्वीपान्तरम्, तत्रस्थः देशान्तरदृष्टः अपि चन्द्रः तावद्विफलः यावत् पृथ्वीनयनाध्वनीनो न भवति, अर्थात् यावत् स्वदेशभूमिस्थितैर्जनैर्दृष्टो न भवति तावत् विफल एवेति । लक्ष्मी.

## मुहूर्तचिन्तामणिः

[1]नन्दा च भद्रा च जया च रिक्ता
पूर्णेति तिथ्योऽशुभमध्यशस्ताः ।
सितेऽसिते शस्तसमाधमाः स्युः
सितज्ञभौमार्किगुरौ च सिद्धाः ॥

अथ तिथीनां नन्दादिसंज्ञाः सफला आह– नन्दा चेति । नन्दाभद्राजयारिक्तापूर्णासंज्ञाः प्रतिपदादिपञ्चतिथयः स्वनामसदृशफलदाः स्युरित्येवंप्रकारेण सर्वाः षष्ठ्यादय एकादश्याद्याश्च तिथयो ज्ञेयाः । ताः सिते शुक्लपक्षे अशुभमध्यशुभफलप्रदाः स्युः । असिते कृष्णपक्षे शुभमध्यमाधमफलदाः स्युः । अथ चतुर्थचरणेन सिद्धियोगानाह– सिते इति । ताः कृतसंज्ञाः नन्दादितिथयः शुक्रबुधमङ्गलशनिगुरुवारेषु सिद्धाः सिद्धिकराः स्युः । यथा नन्दाशुक्रे सिद्धियोगः । एवं भद्राबुधे । जयाभौमे । रिक्ताशनौ । पूर्णागुरौ । पीटी.

वेदाङ्गाष्टनवार्केन्द्रपक्षरन्ध्रतिथौ त्यजेत् ।
वस्वङ्कमनुतत्त्वाशाशरा नाडीः पराः शुभाः ॥

अथ पक्षरन्ध्रतिथीः आवश्यकत्वे सति तन्निष्ठवर्ज्यघटीश्चाह– वेदाङ्गेति । चतुर्थी षष्ठी अष्टमी नवमी द्वादशी चतुर्दशी एताः पक्षरन्ध्रसंज्ञाः तिथयो ज्ञेयाः । आसु शुभकृत्यावश्यकत्वे सति क्रमादिमाः वस्वङ्कमनुतत्त्वाशाशरा नाडीस्त्यजेत् । यथा चतुर्थ्यामादिमा अष्ट घटिकास्त्याज्या इत्यर्थः । अथ परा उर्वरिता नाड्यः शुभकृत्ये शुभा ज्ञेयाः । पीटी.

(१) मुचि. १।४, ३६.

## ज्योतिर्निबन्धे

'विवाहमारभ्य चतुर्थिमध्ये
श्राद्धं दिनं दर्शदिनं यदि स्यात् ।
वैधव्यमाप्नोति तदाऽऽशु कन्या
जीवेत्पतिश्चेदनपत्यता स्यात् ॥

(१) 'फलं बहुविधं पञ्चदश्यां चैव विशेषतः' इति । पञ्चदशी पूर्णमासी, 'विवाहमारभ्य ...' इति ज्योतिर्निबन्धवचसा अमायां(? याः) विवाहभावनान्तर्भावनिषेधेन तत्र सुतरां विवाहनिषेधसिद्धेः । श्राद्धं तद्युक्तं दिनमिति विवाहमध्ये श्राद्धस्यैव निषेधः, न तु तद्रहिततत्तिथिमात्रस्य, 'विवाहमध्ये यदि चेत्क्षयाहस्तत्रास्य मुख्याः पितरो न यान्ति । वृत्ते विवाहे परतस्तु कुर्याच्छ्राद्धं स्वधाभिर्न तु दूषयेत्तम् ॥' इति शास्त्रान्तरस्य निर्विषयत्वापातात् । दर्शदिनमिति स्वरूपेण तिथिनिषेधः, तथा सत्येव पृथग्ग्रहणस्य सार्थकत्वात् । प्रेतश्राद्धसपिण्डीकरणानुमासिकानां तु विवाहादिनिमित्तकवृद्धिपूर्वकालप्रमीतविषयाणां प्राप्तकालानां कालेऽनुष्ठानेन अप्राप्तकालानामपकृष्यानुष्ठानेन च प्रेतस्य चतुःपुरुषपर्यन्तं सपिण्डानां वृद्धिश्राद्धविशिष्टतत्कर्मस्वधिकारः, 'प्रेतकर्माण्यनिर्वर्त्य चरेन्नाभ्युदयक्रियाम् । आ चतुर्थं ततः पुंसि पञ्चमे शुभदं भवेत् ॥' इति मेधातिथिवचनात् । संकौ. १९८

(२) श्राद्धं दिनं क्षयाहः । दर्शदिनं स्वरूपतः । यद्यपि तत्र श्राद्धस्याकरणात् श्राद्धोपलक्षितदिनलाभेन दशदिनमित्यनर्थकं, तथाऽपि विवाहमारभ्य चतुर्थीमध्ये श्राद्धाधिकारिणां श्राद्धदिनं तदनधिकारिणां दर्शदिनमित्यर्थान्न वैयर्थ्यम् । कृभ. ११०९

(१) गभा. ६८ श्राद्धं (श्राद्ध); संप्र. ८३७ दीपिकायाम्; सिन्धु. ११०९; संकौ. १९८; प्रका. ३५९ संग्रहे; पुम. ४५२ तदाऽऽशु (तदा तु); संर. ४६१.

'विवाहमध्ये यदि चेत्क्षयाह-
स्तत्र स्वमुख्याः पितरो न यान्ति ।
वृत्ते विवाहे परतस्तु कुर्यात्
श्राद्धं स्वधाभिर्न तु दूषयेत्तम् ॥

## अनिर्दिष्टकर्तृकवचनम्

'हित्वोभयोश्च नवमीं च चतुर्दशीं च
कृष्णस्थितामपि च पञ्चदशीं चतुर्थीम् ।
अन्येषु वै तिथिषु लग्नबलं विलोक्य
कन्याप्रदानमपि वृद्धिदमाहुरन्ये ॥

(१) गभा. ६८; संप्र. ८३७ चेत्क्षयाहस्तत्र स्वमुख्याः (तत्क्षयाहं श्रुत्वाऽश्रुमुख्याः) न तु (न च) (=); सिन्धु. ११०९; विपा. ७३५ (=); संकौ. १९८ तत्र स्वमुख्याः (तत्रास्य मुख्याः) (=); पुम. ४५२; संर. ४६१ (=) उत्त.

(२) प्रपा. ३२९.

# वारविचारः

## वसिष्ठः

'वाराः प्रशस्ताः शुभखेचराणां
सूर्यार्किवारौ खलु मध्यमौ तौ ।
त्याज्यः सदा भूमिसुतस्य वारः
कामार्कतिथ्योरपि तौ प्रदोषौ ॥

'पूर्णेन्दुशुक्रज्ञसुरेज्यवाराः
सर्वेषु कार्येषु सुपूजिताः स्युः ।
ये सूरसूर्यात्मजभौमवाराः
प्रोक्तेषु कार्येष्वपि शोभनाः स्युः ॥

(१) वसं. ३२।६; विसौ. १७ चतुर्थचरणो नास्ति.
(२) वसं. १३।१६.

## नारदः

'बुधजीवेन्दुशुक्राणां वासराः सर्वकर्मसु ।
सिद्धिदाः क्रूरवारेषु यदुक्तं कर्म सिध्यति ॥

## बृहस्पतिः

'रविवारे शुभं कर्म कर्तव्यं योगतः शुभे ।
योगाच्छुभे कुजे मन्दे कन्योद्वाहादि
कारयेत् ॥

(१) ज्योना. ५।१३ पृ. २३.
(२) प्रपा. ३३० कर्म (सर्वं) कन्योद्वा (कृष्युद्वा); विसौ. १८; संप्र. ७८१.

[1]पौष्णोत्तरामघाहस्तमूलश्रवणसप्तमाः ।
सूर्यवारयुता दोषहालाहालगणोद्धराः ॥
[2]मित्रोऽश्विन्यर्यमा पूषा
साहिर्बुध्न्या च रोहिणी ।
भौमवारेण संयुक्ता
योगाः स्युर्दोषघस्मराः ॥

श्रवण इति अभिजितोऽप्युपलक्षणम् । तेन सप्तमत्वं सिध्यति । अहिर्बुध्न्यः उत्तराभाद्रपदा । दोषघस्मराः दोषभक्षकाः । संप्र. ७८१

[3]कृत्तिका रोहिणी स्वाती शततारार्कि-
वारगाः ।
शुभयोगा महादोषकैरवादित्यवर्चसः ॥
[4]बार्हस्पत्यं च सावित्रं नैर्ऋतं सूर्यवारगम् ।
सर्वेषु शुभकार्येषु शुभाः स्युः शुभदाः स्मृताः ॥
चित्राश्रवणसौम्याः स्युर्यदि शीतांशुवारगाः ।
इमे चापि सुधायोगाः सर्वशोभनशोभनाः ॥
भाद्रपादाश्विनी चैव रोहिणी चोत्तरात्रयः ।
कुजवारेण संयुक्ताः सुधायोगा दिवौकसाम् ॥
विश्वाग्निमैत्रनक्षत्रं बुधवारेण संयुतम् ।
पञ्चमीसप्तमीयुक्तं सुधायोगः प्रकीर्तितः ॥
पूर्वाषाढापुनर्वस्वो रेवतीसंयुतो यदि ।
गुरुवारः सुधायोगस्त्रयोदश्या समायुतः ॥
स्वातीशतभिषग्भाग्यसहितो यदि नन्दया ।
शुक्रवारः सुधायोगः सर्वकर्मणि दोषहा ॥
रोहिणीवसुवायव्याः शनिवारेण संयुताः ।
भद्रया सहिता योगाः शुभाख्याः
शुभवृद्धिदाः ॥

(१) प्रपा. ३३० पौष्णोत्तरामघाहस्त (पौष्णोत्तराणि हस्तश्च) उत्तरार्धे (सूर्यवारयुता योगा दोषहालाहलोद्धराः).

(२) प्रपा. ३३० साहिर्बुध्न्या च (चाहिर्बुध्न्यश्च); संप्र. ७८१.

(३) प्रपा. ३३०; संप्र. ७८१-७८२ वारगाः (चारणाः) कैरवादित्यवर्चसः (कैरव्यादित्यवर्चसाः).

(४) प्रपा. ३३०-३३१.

एषु सर्वेषु योगेषु विवाहः शोभनप्रदः ।
दीर्घमाङ्गल्यसंपत्तिर्मोदते पुत्रवृद्धिभिः ॥

### व्यासः

[1]शनैश्चरदिने प्राप्ते यदा रिक्ता तिथिर्भवेत् ।
तस्मिन् विवाहिता कन्या सर्वसौख्यैः
समेधते ॥
[2]रिक्ता शनिदिने चेत्स्यात्स्थिता पतिगृहे सदा ।
चन्द्रस्य च दिनेऽप्येवं किन्तु सापत्न्य-
माप्नुयात् ॥
[3]रिक्तासु विधवा कन्या दर्शेऽपि स्या-
द्विवाहिता ॥
[4]बुधजीवेन्दुशुक्राणां दिनैरेतैर्विवाहिता ।
कन्या सुखमवाप्नोति पुत्रारोग्यधनान्विता ॥

### वृद्धगर्गः

[5]गुरुशुक्रेन्दुपुत्राणां दिनेषु परिणीयते ।
या कन्या सा भवेन्नित्यं भर्तुश्चित्तानुवर्तिनी ॥
[6]अर्कार्किभौमवाराणां दिनेषु कलहप्रिया ।
सापत्न्यं समवाप्नोति तुषारकरवासरे ॥

(१) दिनेत्यभिधानात् रात्रावभ्यनुज्ञा गम्यते । मपा. १६३

(१) मपा. १६६ यदा (यदि) सर्वसौख्यैः समेधते (पतिसंतानवर्धिनी) ज्योतिःसारसागरे; संत. ८८३ प्राप्ते यदा (चैव यदि) उत्तरार्धं मपावत्; विसौ. १७; संप्र. ७८१; संर. ४६४ सर्वसौख्यैः समेधते (पतिसंततिवर्धिनी) स्मृत्यन्तरम्.

(२) विसौ. १७; संप्र. ७८१.

(३) संत. ८८३.

(४) विसौ. १७; संग. २३१.

(५) चका. ७८७ वर्तिनी (सारिणी) (=); मपा. १६३ ज्योतिःसारसागरे; विसौ. १७ वर्तिनी (रञ्जनी); पुम. ४४७ लल्लः; संर. ४६४ ज्योतिर्निबन्धे.

(६) चका. ७८७ (=) अर्कार्किभौमवाराणां (अर्कतत्पुत्रभौमानां); मपा. १६३ ज्योतिःसारसागरे; विसौ. १७; संकौ. १९७ भौमवाराणां (भूमिपुत्राणां) पू., निर्णयामृते; संग. २३१; पुम. ४४७ लल्लः; संर. ४६४ ज्योतिर्निबन्धे.

(२) अत्र सर्वत्र (अस्मिन् प्रकरणे) दिनपदोपादानात् रात्रौ वारदोषाभावोऽवगम्यते इति केचिदाहुः। तदयुक्तं, दिनशब्दस्याहोरात्रपरत्वात्। अन्यथा बुधवारादीनां शुभफलमपि रात्रौ न स्यात्। कार्यविशेषे पापग्रहवारा अपीष्टफला रात्रौ निष्फलाः स्युरिति। दिनशब्दस्य अहोरात्रपरता 'त्रिंशद्दिनं सावनसंज्ञम्' इत्यादौ सुप्रसिद्धेति। रात्रौ वारदोषाभावस्तु वाचनिक एव। तथा च पठ्यते— 'न वारदोषाः प्रभवन्ति रात्रौ विशेषतो भौमशनैश्चरार्काः। अन्धं समासाद्य विलासिनीनां कटाक्षबाणा इव निष्फलाः स्युः॥'

विसौ. १८

## शौनकः

[1]सूर्यदिने हृतविभवा
विधवा संवत्सराद्वदन्त्येके।
मासात्परं शशिदिने
सापत्न्यं सौख्ययुक्ता च॥

बन्धुविहीनां विधनां
भ्रष्टचरित्रां च वत्सरात्कौजे।
सुभगा धनधान्यवती
बौधे मासैस्तु षोडशभिः॥

धनसौख्यपुत्रपौत्रैः
प्रवर्धते वत्सरद्वयाज्जीवे।
धनभोगवती शुक्रे
वर्षान्मासत्रयाद्वाऽपि॥

सौरदिने पतिरहिता
पञ्चभिरब्दैर्व्यतीतैस्तु।
संवत्सरे व्यतीते
धनरहितां दुर्भगां परे प्राहुः॥

मासेऽप्यथवैतेषां
कालेनानेन पाककर्निर्देशः।
ऋत्वयनाब्देषु तथा
विरिञ्चिवचनादृषीणां च॥

(१) विसौ. १७.

## वराहः

[2]रवीन्दुभौमार्किदिनेषु नो शुभम्॥
[3]आग्नेयग्रहवासरेषु कलहः
प्रीतिस्तु सत्सूत्तमा।
केचित्स्थैर्यमुशन्ति सौरिदिवसे
चन्द्रेऽपि सापत्नकम्॥

## लल्लः

[4]क्रूरग्रहदिनवारा
न शोभनाः सौरिमपहाय।
व्यतिपातविष्टिवैधृति-
वर्ज्याः शुभदाः करणयोगाः॥

## रत्नमालायाम्

[5]भौमसौररविवारवर्जिते
पाणिपीडनविधिर्विधीयते॥

## नृसिंहः

[6]बुधशुक्रेन्दुजीवानां वारेषु शुभदं भवेत्।
शुभानामंशकं श्रेष्ठं वर्गादि च विवाहके॥

## अनिर्दिष्टकर्तृकवचनम्

[7]न वारदोषाः प्रभवन्ति रात्रौ
विशेषतो भौमशनैश्चरार्काः।
अन्धं समासाद्य विलासिनीनां
कटाक्षबाणा इव निष्फलाः स्युः॥
[8]आरार्कार्कजवासरादिरहितेषूद्वाहकर्मारभेत्॥
एतेषां वाराश्चांशोदयाश्च वर्जनीया इति।

प्रपा. ३३०

## रेणुकारिका

[9]वारे शुक्रेन्द्वीज्यसौरीन्दुपुत्रे
चान्ये सौरीं वर्जयेयुः शशाङ्कम्॥

(१) विसौ. ८. (२) विसौ. ११.
(३) प्रपा. ३३०.
(४) सिन्धु. ११२६; प्रका. ३५९.
(५) प्रपा. ३३० जीवानां (जेन्दूनां); संकौ. ३९९ श्रेष्ठं (श्रेष्ठ); संर. ४६४.
(६) मपा. १६४ प्रथमः पादः, स्मरन्तीत्युक्तम्; विसौ. १८; संर. ४६४ सर्वं मपावत्.
(७) प्रपा. ३३०. (८) रेका. १ पृ. ४९.

# नक्षत्रविचारः

## बौधायनगृह्यसूत्रम्

[1]रोहिणी मृगशीर्षमुत्तरे फल्गुनी स्वातीति विवाहस्य नक्षत्राणि ॥

## बौधायनगृह्यपरिभाषासूत्रम्

[2]अथान्यत्रापि कुर्वन् भवति पुण्ये नक्षत्र इति । 'देवनक्षत्राणि वा अन्यानि । यमनक्षत्राण्यन्यानि । यानि देवनक्षत्राणि । तेषु कुर्वीत यत्कारी स्यात्' इत्येवेदमुक्तं भवति ॥

## आश्वलायनगृह्यसूत्रम्

[3]उदगयन आपूर्यमाणपक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनगोदानविवाहाः ॥

(१) कल्याणे नक्षत्रे । कल्याणमिति प्रशस्तम् । शास्त्राविरुद्धमित्यर्थः । तस्मिन् कल्याणे नक्षत्रे । एवमेतैः संयुक्तायां तिथौ चौलादीनि कर्माणि भवन्ति । अथ कर्मग्रहणं किमर्थम् ? सर्वकर्मणां प्रवृत्तिरुदगयने यथा स्यात्, यथा व्रतादेशादीनाम् । यदि कर्मग्रहणस्यायमर्थः चौलादीनां पृथग्ग्रहणमपार्थकम् । कस्मात् ? एतेषामपि कर्मग्रहणेनैव ग्रहणं भविष्यति । उच्यते । चौलादीनां ग्रहणं कर्तव्यमेव । किं कारणम् ? वक्ष्यति— 'तेषां पुरस्ताच्चतस्र आज्याहुतीर्जुहुयात्' इति । कथमेता आहुतयश्चौलादिषु स्युरिति । अतश्चौलादीनां पाठः । अथवा कर्मग्रहणं चौलार्थमेव चौलकर्मेति । 'तृतीये वर्षे चौलम्' इत्यत्र कर्मग्रहणं नास्ति । एकदेशग्रहणं तत्र द्रष्टव्यम् । अयमेव सुतरंभव उपपद्यते । अथ व्रतादेशेष्वयं कालो न प्राप्नोति । कस्मात् ? इहाग्रहणादिति । उच्यते । प्राप्स्यति । कुतः ? 'एतेन वापनादि' इति व्यपदेशात् । यदि तर्हि व्यपदेशेन कालोऽपि प्राप्नोति एवं तर्हि गोदानग्रहणं अपार्थकम् । कस्मात् ? चौलकर्मव्यपदेशात् 'एतेन गोदानं षोडशे वर्षे' इति । सत्यमेतत् । गोदानव्यपदेशात् कालः सिध्यति । तेन गोदान(? नार्थं ग्र)ग्रहणम् । अत्र किमर्थम् । तर्हि यत्र गोदानसंबन्धः स्वल्पोऽप्यस्ति तत्रापि कथमयं कालः स्यादित्यनेन गोदानग्रहणं क्रियते, 'यथा गौदानिकं कर्म कुर्वीत' इति । अत्र कर्मग्रहणात् कर्मैव कुर्वीत । ननु च तत्रापीदं कर्म प्रयुज्यते । तेन यथा दृष्टं यस्मिंश्च काले दृष्टं तस्मिन् काले भविष्यतीति । यत्नादत्ते कालस्तत्र न प्राप्नोति । तस्मात्तत्र हि 'गौदानिकं कर्म कुर्वीत' इति कर्मग्रहणात् कालो न प्राप्नोति । 'आचार्यसकाशे वाचं विसृजेत' इत्येवमादिषु यथा न भवति । कर्मग्रहणादेव कालान्तरे न प्राप्नुयात् । तत्र तेनायं यत्नः क्रियते । यदि समावर्तनार्थम्, तस्यैव ग्रहणं कर्तव्यम् । एवं तर्हि लघ्वर्थं गोदानग्रहणम् । देभा.

(२) ज्योतिःशास्त्राविरुद्धं कल्याणं नक्षत्रम् । चौलकर्मेति चौलस्यैव संज्ञान्तरं न तु व्रतादेशानामयं काल इष्यते । स कथं प्राप्नोति, उपनयनातिदेशात् । तर्हि अत्र गोदानग्रहणमपार्थकं, चौलातिदेशात् । उच्यते । समावर्तनार्थं गोदानग्रहणम् । 'गौदानिकं कर्म कुर्वीत' इति कर्मग्रहणं यथा कर्मणोऽन्यनियमे वाग्यमनादिकं निवर्तयति तथा कालमपि निवर्तयेत् । तस्माद्गोदानग्रहणं यत्र गोदानगन्धोऽप्यस्ति तत्रापि यथा स्यात् । तर्हि समावर्तनग्रहणमेव कार्यम् । उच्यते । लाघवार्थे गोदानग्रहणम् । गानावृ.

(३) अहरहः यस्मिन् कर्मणि यन्नक्षत्रं ज्योतिःशास्त्रविहितं तत् कल्याणम् । उदगयनादिविधानं दक्षिणायनादिप्रतिषेधार्थम् । अहनीति च वक्तव्यं रात्रौ मा भूदिति । समुच्चयश्चोदगयनादीनां, न विकल्पः । 'तृतीये वर्षे चौलम्' इतिवत् सिद्धे कर्मग्रहणं सर्वकर्मणामुदगयनादौ प्रवृत्त्यर्थम् । चौलादिग्रहणं तु

(१) बौगृ. १।१।२०.
(२) बौगृप. १।२।१४.
(३) आगृ. १।४।१. शेषः स्थलादिनिर्देशः अयनर्तुमासविचारे (संका पृ. ८७६) द्रष्टव्यः ।

'तेषां पुरस्ताच्चतस्र आज्याहुतीः' इत्यत्र चौलादीनामेव ग्रहणं यथा स्यादिति। नैमित्तिकानि तु निमित्तानन्तरमेव कार्याणि, यथा 'कपोतश्चेदगारमुपहन्यात्' इति। अपर आह– कर्मग्रहणं चौलेनैव संबध्यते चौलकर्मेति। 'तृतीये वर्षे चौलम्' इत्यत्र त्वेकदेशग्रहणं द्रष्टव्यं भीमसेनो भीम इतिवत्। तस्माच्चतुर्णामेव कालनियम इति। व्रतादेशनेषु तु भवति, 'एतेन वापनादिपरिदानान्तम्' इत्युपनयनातिदेशात्। एवं चौलातिदेशादेव सिद्धे गोदानग्रहणं यत्र गोदानगन्धोऽप्यस्ति तत्रापि कथमयं कालः स्यादिति। यथा समावर्तने 'गौदानिकं कर्म कुर्वीत' इति। समावर्तनग्रहणमेव तु न कृतं लाघवार्थम्। अना.

## आपस्तम्बगृह्यसूत्रम्

[1]सर्वाणि पुण्योक्तानि नक्षत्राणि ॥

(१) सर्वर्तुविधानस्य सर्वापवादत्वात् पुण्याहविधानार्थमिदम्। तथा च रात्र्यपरपक्षयोः विवाहप्रतिषेधः। एवमप्युक्तग्रहणमनर्थकम्। तत् क्रियते मुहूर्तपरिग्रहार्थं, यानि पुण्यानि नक्षत्राणि यानि पुण्योक्तानि मुहूर्तानि तानि सर्वाणि विवाहस्य यथा स्युरिति। तत्र नक्षत्राणि ज्योतिःशास्त्रादवगन्तव्यानि। प्रातः सङ्गवो मध्यंदिनोऽपराह्णः सायमित्येते मुहूर्ताः। अनाकुला.

(२) यानि ज्योतिषे पुण्योक्तानि शुभफलप्रदत्वेनोक्तानि नक्षत्राणि। नक्षत्रग्रहणस्य प्रदर्शनार्थत्वात्तिथ्यादीन्यपि तत्र पुण्योक्तानि सर्वाण्यत्रोपसंहर्तव्यानि। ताद.

[2]मघाभिर्गावो गृह्यन्ते* ॥

(१) यदि मघाभिः गावः क्रयादिना गृह्यन्ते ताश्च गावः प्रतिनन्दिता भवन्ति। तस्मात् गोपरिग्रहे मघाः प्रशस्ताः। अनाकुला.

(२) 'आर्षे दुहितृमते मिथुनौ गावौ देयौ' (आध. २।११।१८) इति वचनादार्षे विवाहे वरैर्दीयमाना गावो दुहितृमद्भिर्मघासु गृह्यन्ते। एतदुक्तं भवति– आर्षं विवाहं मघास्वेव कुर्यात्, न ब्राह्मादिवत् नक्षत्रान्तरेऽपीति। ताद.

[1]फल्गुनीभ्यां व्यूह्यते* ॥

(१) यदि फल्गुनीभ्यां व्यूह्यते सेना युद्धकाले सा च प्रतिनन्दिता भवति। तस्मात् सेनाव्यूहे प्रशस्ते फल्गुन्यौ। अविशेषात् पूर्वे उत्तरे च। सर्वत्र 'नक्षत्रे च लुपि' (पा. २।३।४५) इत्यधिकरणे तृतीया। अनाकुला.

(२) अत्र च वधूः फल्गुन्योरेव व्यूह्यते नीयते स्वगृहात्, न तु 'तां ततः' (आपगृ. ५।१३) इति वचनात् ब्राह्मादिवत्तदानीमेव।

केचित्– 'इन्वकाभिः' इत्यादि 'फल्गुनीभ्यां व्यूह्यते' इत्यन्तमुत्तरत्र इन्वकाशब्दस्य व्याख्यानात् शाखान्तरीया गाथेति कल्पयन्तः, मघासु गवां क्रयादिना स्वीकारः, सेनायाश्च युद्धे व्यूहः, अविशेषात् पूर्वयोरुत्तरयोर्वा फल्गुन्योरिति प्रकृतानुपयोगितया व्याचक्षते। ताद.

[2]यां कामयेत दुहितरं प्रिया स्यादिति तां निष्ट्यायां दद्यात्, प्रियैव भवति नेव तु पुनरागच्छतीति ब्राह्मणावेक्षो विधिः ॥

(१) यां दुहितरं पिता प्रियां कामयेत भर्तुरियं प्रिया स्यादिति, तां निष्ट्यायां नक्षत्रे दद्यात्। एवं दत्ता सा भवत्येव तस्य प्रिया। अयं चापरः अस्य नक्षत्रस्य गुणः – सा पितृगृहात् पुनरर्थिनी नागच्छति। पतिगृह एव तस्याः सर्वे कामाः संपद्यन्ते।

अन्ये तु निन्दामिमां मन्यन्ते। ब्राह्मणावेक्षो विधिरिति वचनात् अन्येऽपि स्मृत्यपेक्षा नक्षत्रविषयो भवन्ति। अन्यथा पुंसवने तिष्यवत् विवाहे इदमेव नक्षत्रं स्यात्। अनाकुला.

---

* हरदत्तमतेन नेदं विवाहपरं सूत्रम्।

(१) आपगृ. ३।१३; प्रका. ३५९; संर. ४६२.

(२) आपगृ. ३।१; संर. ४८०.

* हरदत्तमतेन नेदं विवाहपरं सूत्रम्।

(१) आपगृ. ३।२; संर. ४८०.

(२) आपगृ. ३।३; प्रका. ३५९ (इति ब्राह्मणावेक्षो विधिः०); संर. ४६३ आपस्तम्बबोधायनौ.

( २ ) इयं भर्तुः प्रिया स्यादिति यां दुहितरं पिता कामयेत तां निष्ट्यायां स्वातौ वराय दद्यात् । सा तस्य प्रियैव भवति । नेव तु नैव च रोगदारिद्र्यादिना पीड्यमाना अर्थिनी पुनः पितृगृहमागच्छति, स्वगृहे एव तस्याः सर्वे अर्थाः संपद्यन्ते इति ब्राह्मणावेक्षो विधिः । अत्रापि पूर्ववत् स्मार्तपुण्योक्तनक्षत्रविकल्पः । ताद.

[1]निष्ट्याशब्दः स्वातौ ॥

## मानवगृह्यसूत्रम्

**[2]रोहिणीमृगशिरःश्रवणश्रविष्ठोत्तराणीत्युपयमे तथोद्वाहे । यद्वा पुण्योक्तम् ॥**

रोहिणी ( ? मृगशिरःश्रवणश्रविष्ठोत्तराणि ) प्रशस्तानीति गम्यते । तथा स्वातौ । तथेति उद्वाहे च रोहिण्यादीनि शस्यन्ते । यद्वा पुण्योक्तम् । वाशब्दश्चार्थे । यच्च नक्षत्रं पुण्ये पुण्यसूचकेषु शास्त्रेषु पराशरादिविरचितेषु उक्तं तदपि शस्तं उद्वाहे । इतिकरणस्यैव अयं प्रपञ्चः यद्वा पुण्योक्तमिति । अष्टाभा.

## भारद्वाजगृह्यसूत्रम्

**[3]विज्ञायते तु खल्वेकेषामिन्वकाभिः प्रसृज्यन्ते ते वराः प्रतिनिन्दिताः ( ? नन्दिताः ) । मघाभिर्गावो गृह्यन्ते । फल्गुनीभ्यां व्यूह्यत इति । यां कामयेत दुहितरं प्रिया स्यादिति तां निष्ट्यायां दद्यात् । प्रियैव भवति नैव तु पुनरागच्छतीति विज्ञायते ॥**

## काठकगृह्यसूत्रम्

**[4]रोहिणी मृगशिरः श्रविष्ठा उत्तराणीत्युपयमे ॥**

( १ ) उपयमः स्वीकारः । तत्रैतान्यनुकूलानीत्यर्थः । देव.

( २ ) ततो वृतायां रोहिणी मृगशिरः श्रविष्ठा उत्तरा इत्येतानि नक्षत्राणि उपगमने प्रशस्तानि । आवि.

**यद्वा पुण्योक्तम् ।**

( १ ) पुण्यं ज्योतिःशास्त्रं यथासंभवमनुमन्तव्यमित्यर्थः । देव.

( २ ) यद्वा पुण्योक्तं ज्योतिःशास्त्रविहितं हस्तस्वात्यादि, तद्वा उपयमने विवाहे भवति । आवि.

## वाराहगृह्यसूत्रम्

**[1]मृगशिरःश्रविष्ठोत्तराणीत्युपयमेत् ॥**

## आग्निवेश्यगृह्यसूत्रम्

**[2]आपूर्यमाणपक्षे पुण्ये नक्षत्रे...... ॥**

## पारस्करगृह्यसूत्रम्

**[3]त्रिषु त्रिषूत्तरादिषु ॥**

**स्वातौ मृगशिरसि रोहिण्यां वा ॥**

( १ ) अस्मिन् अयनपक्षदिनानि नियम्य नक्षत्रनियममाह— त्रिषु ...... रोहिण्यां वा । उत्तरा आदिर्येषां तान्युत्तरादीनि तेषु कतिषु, त्रिषु त्रिषु, तथाहि— उत्तराफल्गुनी हस्तः चित्रा इति त्रीणि, उत्तराषाढा श्रवणं धनिष्ठा इति त्रीणि, तथा उत्तराभाद्रपदा रेवत्यश्विन्य इति त्रीणि । स्वातौ मृगशिरसि रोहिण्यां वा । एतेषां नक्षत्राणामन्यतमे इत्यर्थः । हभा.

( २ ) वाशब्दोऽवधारणे । एष्वन्यतमस्मिन् (?तमे) विवाहं कुर्यादित्यर्थः । यद्वा, वाशब्दः चकारार्थः । चशब्दश्च ज्योतिःशास्त्राद्युपात्तनक्षत्रसमुच्चयार्थः । * विभा.

---

( १ ) आपगृ. ३।५; अका. ३५९ ; संर. ४६३ बोधायनापस्तम्बौ.

( २ ) मागृ. १।७।५.

( ३ ) भागृ. १।१२.

( ४ ) कागृ. १४।१०–११.

* शेषं हभावत् ।

( १ ) वागृ. १०.

( २ ) आग्निगृ. १।६।१.

( ३ ) पागृ. १।४।६–७; उत. १४५ (स्वातौ... ... वा० ) ; संत. ८८२; विपा. ७५२; संदी. २७.

## गोभिलगृह्यसूत्रम्

[१]पुण्ये नक्षत्रे दारान् कुर्वीत ॥

( १ ) पुण्ये शोभने नक्षत्रे ज्योतिःशास्त्रोक्ते ।

मृदुला.

( २ ) नक्षत्रग्रहणात् तिथ्याद्यपेक्षया नक्षत्रमावश्यकमिति तद्भाष्ये । विवाहो दिवा कार्यः रात्रावपि केचित्कुर्वन्ति, तत्र कारणं न विद्म इति जयन्तः ।

संकौ. १९७

## कौशिकगृह्यसूत्रम्

[२]चित्रापक्षं तु वर्जयेत् ॥

मघासु हन्यन्ते गावः फल्गुनीषु व्युह्यत इति विज्ञायते मङ्गलं च ॥

## वसिष्ठः

[३]तिस्रोत्तरामूलमघान्त्यमैत्र-
प्राजेशचन्द्रार्कसमीरभेषु ।
सदा प्रशस्तः खलु कन्यकायाः
पाणिग्रहो वेधविवर्जितेषु ॥

पैतृकं मघाः । पौष्णं रेवतीनक्षत्रम् । प्राजेशं रोहिणी । चन्द्रः मृगशिरः । अर्कः हस्तः । समीरणः स्वाती ।

संर. ४६३

## नारदः

[४]पौष्णधात्रुत्तरामैत्रमरुच्चन्द्रार्कपैतृभैः ।
समूलभैरविद्धैस्तैः स्त्रीकरग्रह इष्यते ॥

( १ ) गोगृ. २।१।१; सत. ८८९ ; संकौ. १९७ पुण्ये ( पुण्य ) ; संव १४४; संर. ४६३ संकौवत् .

( २ ) कौसू. १०।१।४–५ ( ७५।४–५ ).

( ३ ) वसं. ३२।७; विसौ. १८ उत्तरार्धे ( तदा प्रशस्तः खलु कन्यकानां पाणिग्रहोऽन्येषु विवर्जितस्तु । ); संप्र. ७८२ विसौवत्; सग. २३१ विसौवत् ; पुमं. ४४७ समीरभेषु ( समीरणेषु ) कन्यकायाः ( कन्यकानां ) ; संर. ४६३ पूर्वार्धे ( मूलोत्तरापैतृकपौष्णमैत्रप्राजेशचन्द्रार्कसमीरणेषु । ) कन्यकायाः ( कन्यकानां ) .

( ४ ) ज्योना. २७।१२ पृ. ५१ ; ज्योनि. १५२.

## बृहस्पतिः

[१]सौम्यपैतृकहस्ताश्च मैत्रमूलाख्यवायवः ।
त्रीण्युत्तराणि पौष्णं च रोहिणी च शुभप्रदाः ।
अन्याश्च सर्वा वर्ज्याः स्युस्ताराः पाणिग्रहे सदा ॥

## गर्गः

[२]मघायाः प्रथमे पादे मूलस्य प्रथमे तथा ।
रेवत्याश्च चतुर्थांशे विवाहः प्राणनाशनः ॥

## वात्स्यः

[३]उत्तरात्रितयं सौम्यं प्राजापत्यं तथाऽऽनिलम् ।
हस्तो मूल तथा मैत्रं पूषदैवतमेव च ॥
विवाहे निर्दिशेद्धर्मयशोर्थी कालवित्सदा ।
उक्तवर्ज्येषु या मोहात्कन्यका परिणीयते ।
सा भर्तृमरणव्याधिशोकदारिद्र्यभागिनी ॥
[४]सावित्र्यानिल( ? सवित्रनिल )संयुक्तान्
मुहूर्तानपि निर्दिशेत् ।
समानदैवतैस्तुल्यं नक्षत्रैः फलमादिशेत् ॥
मुहूर्तेष्वभिजिद्वर्जं शुद्धाहे कालचिन्तकः ।
अष्टमो दिवसस्यैव योऽभिजित्संज्ञकः क्षणः ॥
सब्रह्मणा वरो नित्यं सर्वकालः शुभप्रदः ।
उपग्रहोदयाद्यैश्च पापैस्तैर्नहि बाध्यते ॥

## शौनकः

[५]यावज्जीवं कन्या
दयितेन सहोपभुज्य दुःखानि ।
पश्चादामयरोगैरश्विन्यां याति पञ्चत्वम् ॥

( १ ) प्रपा. ३२९ च शुभप्रदाः ( शोभनप्रदा ); संकौ. १९९ मूलाख्य ( मूलाश्वि ); प्रका. ३६० संकौवत् ; सर. ४६३ मूलाख्यवायवः ( मूलाश्विवासवाः ).

( २ ) ज्योनि. ७१, १५२.

( ३ ) विसौ. १८; सप्र. ७८२.

( ४ ) चका. ७८८–७८९.

( ५ ) मपा. १६४–१६६ ( यावज्जीवं तु कन्या सा भर्त्रा सह वियुज्यते । दुःखं पश्चादामरोगैरश्विन्यां याति पञ्चताम् ॥ )

याम्ये षड्भिर्मासैर्वैधव्यं याति निर्धनत्वं च ।
( वित्तमपहाय बहुशः समतीतात्रिनयर्क्ष-
कन्या ( ? ) ॥ )

धनकनकभूषणयुता
पाणिग्रहणं समेत्य बहुलासु ।
उपभुज्य च भर्तृसुखं
षष्ठेऽब्दे याति पञ्चत्वम् ॥

प्राजापत्ये सुभगा
भोगयुताऽतिप्रिया पत्युः ।
पुत्रधनानि च लभते
सा कन्या पञ्चमे वर्षे ॥

शुचिरनुकूला भर्तुः
प्रियंवदा सोमदैवत्ये ।
समतीत्याब्दत्रितयं
कुलद्वयस्यार्थतामेति ॥

आर्द्रासु सौम्यकर्मा
वर्षेणैकेन याति पञ्चत्वम् ।
आदित्ये त्रिभिरब्दै-
रूढा समुपैति पतिमन्यम् ॥

अब्दचतुष्कात्कन्या
कुलगुरुविद्वेषिणी भवति ।
पुष्ये कृपणा पतिसं-
त्यक्ता वैधव्यं वा समाप्नोति ॥

आश्लेषास्वपि कन्या
पाणिग्रहणे समेत्य भर्तारम् ।
सप्तभिरब्दैर्हन्यात्
कुलटात्वं वा समाप्नोति ॥

परिणयकालात्कन्या
पञ्चमवर्षे समेत्य धनधान्यम् ।
भवति त्रिवर्गयुक्ता
पितृभे पाणिग्रहं प्राप्ता ॥

भाग्ये सुखविभ्रष्टा
दासीत्वं याति निर्भया कन्या ।
अब्दत्रये व्यतीते
पतिमरणं याति नियमेन ॥

व्यपगतरोगा सुभगा
भोगवती सुप्रजा (?जाः) प्रिया भर्तुः ।
आर्यम्णे शशियुक्ते
कन्या वर्षद्वयेऽतीते ॥

हस्ते पाणिग्रहणं समेत्य कन्या पतिव्रता दक्षा ।
पत्युः सुखानि यच्छति नियतं तत्सप्तमे वर्षे ॥

---

याम्ये षड्भिर्मासैर्वैधव्यं याति निर्धनत्वं च । धनकनकभूषणयुता पाणिग्रहणे तु कृत्तिकायां च ॥ . . . पश्चात् षष्ठेऽब्दे याति पञ्चत्वम् । प्राजापत्ये सुभगा पतिव्रता भामिनी प्रिया भर्तुः ॥ शुचिरनुकूला भर्तुः प्रियंवदा सोमदैवते कन्या । आर्द्रापाणिग्रहणे वर्षेणैकेन याति पञ्चत्वम् । त्रिभिरब्दैरादित्ये कन्या समुपैति पतिमन्यम् ॥ अब्दचतुष्कात् कन्या कुलविद्वेषिणी भवति पुष्ये । आश्लेषास्वपि कन्या पाणिग्रहणे समेत्य भर्तारम् ॥ सप्तभिरब्दैर्दुष्येत् अथ कुलटात्वं समाप्नोति । भवति त्रिवर्गयुक्ता पित्र्ये पाणिग्रहे हि संप्राप्ते ॥ भाग्ये सत्यसौभाग्यं दासीत्वं याति निर्भया कन्या । अब्दैकेऽतिक्रान्ते पतिमरणं प्राप्नुयाच्चैव ॥ व्यपगतशोका सुभगा भोगवती सुप्रजा प्रिया भर्तुः । अर्यम्णि शशियुक्ते कन्या वर्षद्वयेनेतीति ॥ हस्ते पाणिग्रहणं समेत्य कन्या पतिव्रता नित्यम् । आत्मप्राणवियोगमवाप्नुयात्कन्यका चाब्दात् ॥ अथवा शीलभ्रंशं त्वाष्ट्रे प्राप्नोति बान्धवकुलात् । स्वातौ धर्मसमेता पतिदयिता बन्धुवल्लभा साध्वी ॥ ऐन्द्राग्न्याख्ये कन्या बुद्धिभ्रष्टा प्रयाति पतिमन्यम् । अब्दचतुष्केऽतीते मैत्रे कन्याऽऽप्नुयाद्धनं सौख्यम् ॥ भर्तुरवज्ञां कृत्वा दुःखान्यनुभूय शक्रभे कन्या । दशमेऽब्दे वैधव्यं प्रयाति यद्यष्टमे न मृता ॥ मूले सधना साध्वी पत्युरतिप्रियतमा प्रहृष्टा च । अशुचिरनाचारा दासरतान्यथा समेति भर्तारम् ॥ अब्दद्वयेन कन्या ज्ञेया सा पूर्वाषाढासु । विदधाति वैश्वदेवे भर्तुर्वित्तं च गुरुजनानुरता ॥ पाणिग्रहणमुपयाते श्रवणे नैकत्र सा रमते । विभ्रष्टस्मृतिशौचा मृत्युमुखं याति वसुदेवे ॥ ईर्षारोगेण हता यमसदनं याति वारुणे पश्चात् । आजैकपादे कन्या दुःशीला दुर्भगा दरिद्रा च ॥ अहिर्बुध्न्ये कन्या मणिकनकविभूषणं प्रभूतमाप्नोति । प्राप्नोति शीलं शौचं पौष्णे शय्यासनोपकरणानि ॥ ) ज्योतिःसारसागरे; विसौ. १८-१९.

अब्दात्प्राणवियोगं
त्वाष्ट्रे प्रतिभूतसंसर्गात् ।
त्यक्त्वा स्वज्ञातिकुलं
कामपरा याति दासत्वम् ॥
स्वातौ सुभगा धन्या
सुमनोज्ञा पत्युरभिमता चैव ।
समतीत्य मासमेकं
पूजामाप्नोति बन्धुकुलात् ॥
ऐन्द्राग्न्ये भे कन्या
मतिविभ्रष्टा समेति पतिमन्यम् ।
पश्चात्पञ्चभिरब्दैः
पञ्चत्वं याति रोगेण ॥
व्यपगतरोगा साध्वी
निपुणा गुरुदेवतोपचारज्ञा ।
अब्दचतुष्के गच्छेत्
मैत्रे कन्या धनसुखानि ॥
पत्युरवज्ञां कृत्वा
दुःखान्यनुभूय शक्रभे कन्या ।
दशमेऽब्दे वैधव्यं
प्रयाति यद्यष्टमे न मृता ॥
मूले निपुणा साध्वी
पत्युरभीष्टा प्रिया प्रचण्डा च ।
वर्षे चैकादशके
श्वशुरस्य कुलोन्नतिं कुरुते ॥
अशुचिरनाचाररता
गत्वा पुनरन्यमेति भर्तारम् ।
अब्दद्वये व्यतीते
पूर्वाषाढासु पञ्चत्वम् ॥
अपहरति वैश्वदेवे
पत्युरनर्थान् बहूनपि प्राप्तान् ।
धर्मक्रियार्थनिपुणा
यशस्विनी चाष्टमे वर्षे ॥
पाणिग्रहणमुपगता श्रवणे नैकत्र सा रमते ।
समीत्याब्दत्रितयं मृत्युवशं याति शक्रेण ॥

उपचरितेऽब्दचतुष्के
वित्तोपेताऽपि निर्धना कन्या ।
विगतसुखस्मितशौचा
मृत्युवशं याति वसुदैवे ॥
ईर्षारोगोपहता
यमसदनं याति वारुणे मासात् ।
क्लिलाद्रा प्रसव( सलिला )
रुषाष्टेऽब्दे याति पञ्चत्वम् ( ? ) ॥
आजैकपादे कन्या
दुःशीला दुर्भगा दरिद्रा च ।
भवति विद्यावार्वानियमा ( ? )
समतीतेऽब्दे द्वितीये च ॥
आहिर्बुध्न्ये कन्या
मणिकनकधनप्रभूतमासाद्य ।
वर्षेऽष्टमे व्यतीते
भर्तृकुलस्योन्नतिं कुरुते ॥
प्राप्नोति शीलं शौचं
पौष्णे यानासनोपभोगं च ।
सौभाग्यं चातिमहत्
किञ्चिन्न्यूने तृतीयेऽब्दे ॥
नक्षत्राणां कथिता
गुणदोषाः सर्वे एव सुनिगदिताः ।
ताराबलं च कथयेत्
चन्द्रबलं चात्र नियमेन ॥
हस्तः स्वाती मूलं
मघानुराधोत्तराणि पौष्णं वा ।
प्राजापत्यं मृगशिर
इति परिणयने शुभो भगणः ॥

**श्रीपतिः**

[1]मूलमैत्रमृगरोहिणीकरैः
पौष्णमारुतमघोत्तरान्वितैः ।
निर्व्यथाभिरुडुभिर्मृगीदृशां
पाणिपीडनविधिर्विधीयते ॥

---

( १ ) प्रपा. ३२९; सिन्धु. ११२६ पू., रत्नमालायाम्; प्रका. ३५९ सर्वं सिन्धुवत्.

निर्व्यथाभिः ग्रहानुपहताभिः । प्रपा. ३२९

## विवाहवृन्दावनम्

[1]ध्रुवानुराधामृगमूलरेवती-
करं मघा स्वातिरदूषणो गणः ।
रवेरमीना मकरादिषड्गृही
करग्रहे मङ्गलकृन्मृगीदृशाम् ॥

आदौ विवाहविहितनक्षत्राणि कथयति— ध्रुवेति । ध्रुवानुराधामृगमूलरेवतीकरं ध्रुवाणि अनुराधा मृगशिरा मूलं रेवती करो हस्तः एषां समाहारद्वन्द्वे नपुंसकत्वं, मघा, स्वातिः अयं गणः एकादशनक्षत्रसमूहः यदि अदूषणः दोषरहितः स्यात् तदा मृगीदृशां स्त्रीणां करग्रहे विवाहे मङ्गलकृत् स्यात् । तथा च रवेः सूर्यस्य अमीना मीनरहिता मकरादिषड्गृही मकरादीनां षड्गृहाणां समाहारो मकरादिषड्गृही चैत्ररहितमुत्तरायणमित्यर्थः, मृगीदृशां स्त्रीणां करग्रहे विवाहे मङ्गलकृद्भवति । लक्ष्मी.

प्राचेतसः प्राह शुभं भगर्क्षं
सीता तदूढा न सुखं सिषेवे ।
पुष्यस्तु पुष्यत्यतिकाममेव
प्रजापतेराप स शापमस्मात् ॥

विवाहे पूर्वाफाल्गुनीपुष्यौ कैश्चित् उक्तौ, तद्दोषं कथयति— प्राचेतस इति । प्रचेतसः अपत्यं प्राचेतसः मुनिः भगर्क्षं पूर्वाफाल्गुनीनक्षत्रं शुभं प्राह परन्तु तदूढा तस्मिन् भगर्क्षे विवाहिता सीता सुखं न सिषेवे, अर्थात् वनवासादि दुःखमेव प्राप्तवती, तस्मात् तत् त्याज्यमेव । पुष्यस्तु अतिकाममेव पुष्यति वर्धयति, अस्मात् स पुष्यः प्रजापतेः ब्रह्मणः शापमाप प्राप्तवान् । अतः पुष्योऽपि त्याज्य एवेत्यर्थः । लक्ष्मी.

[2]क्रूरोज्झितं द्विः शशिभोगतोऽर्वाक्
तदाप्यमाढ्यं च शुभं न भं स्यात् ।
त्र्यष्टार्कविंशं च कुजार्किभानु-
स्वर्भानुतः सत्रिविधाद्भुतं च ॥

क्रूरोज्झितं पापग्रहेण त्यक्तं, तदाप्यं पापग्रहेण प्राप्यं तेन पापेन आढ्यं च भं नक्षत्रं, तथा कुजार्किभानुस्वर्भानुतः क्रमेण त्र्यर्काष्टविंशं च भं तथा सत्रिविधाद्भुतं च नक्षत्रं द्विः शशिभोगतो द्विधा चन्द्रभोगात् अर्वाक् पूर्वं न शुभं स्यात् । अर्थात् एतत् सर्वं नक्षत्रं द्वितीये चन्द्रभोगे शुभं भवति । लक्ष्मी.

वैसाहगंशूव्यसमाप्तिसाग्रं
सक्रान्तिसाम्यं खलु वेधवच्च ।
स्वाशश्रमो भान्वभिरोपुनर्मूश्च
रेमृहाणां त्रिभिरुत्तरैः स्यात् ॥

वै–सा–ह–गं–शू–व्य–समाप्तिसाग्रं वैधृति–साध्य–हर्षण–गण्ड–शूल–व्यतिपातानां समाप्तौ साग्रं सावशेषं यन्नक्षत्रं, सक्रान्तिसाम्यं क्रान्तिसाम्येन सहितं यत्, वेधवच्च यन्नक्षत्रं तत् शुभं न स्यात् इति पूर्वश्लोकेनान्वयः । अथ वेधं कथयति— स्वाशश्रमो भान्वभिरोपुनर्मूः एषामाद्याक्षरोपलक्षितानां नक्षत्राणां मध्ये द्वयोर्द्वयोर्मिथः वेधः । तथा च रेमृहाणां रेवती–मृगशिरो–हस्तानां क्रमेण त्रिभिरुत्तरैः उत्तरफाल्गुन्युत्तराषाढोत्तरभाद्रपदाख्यैः वेधः स्यात् । लक्ष्मी.

### भुजबलभीमः

[1]रेवत्युत्तररोहिणीमृगशिरोमूलानुराधामघा-
हस्तस्वातिषु तौलिषष्ठमिथुनेषूद्यत्सु पाणिग्रहः ।
सप्ताष्टान्त्यबहिः शुभैरुडुपतावेकादशद्वित्रिगे
क्रूरैस्त्र्यायषडष्टगैर्न तु भृगौ षष्ठे कुजे चाष्टमे ॥

### संग्रहः ( संग्रहकारः )

[2]जन्मर्क्षात्पूर्वनक्षत्रं सप्तविंशतिमं भवेत् ।
सर्वकर्मविनाशः स्याच्चन्द्रो व्ययगतो यदि ॥

सप्तविंशतिनक्षत्रमेकराशिसमन्वितम् ।
सर्वेषु शुभदं प्रोक्तं विवाहोपनयादिषु ॥

---

( १ ) विवृ. १।३–४; ज्योनि. १५२ द्वितीयः श्लोकः.
( २ ) विवृ. १७।२–३.

( १ ) निप. २८३ (=); संत. ८८२.
( २ ) प्रपा. २१५ (=), ३२८.

### ज्योतिष्प्रकाशे

[1]कीर्तितो मुनिभिः सर्वैः पुष्यः सर्वार्थसाधकः ।
इति सत्यपि चोद्वाहे निन्दितः केन हेतुना ॥

### ज्योतिर्निबन्धे

[2]विवाहे गुरुपुष्यौ च प्रयाणे शनिरोहिणी ।
भौमाश्विन्यौ प्रवेशे च षण्मासान्मरणं ध्रुवम् ॥

### मुहूर्तचिन्तामणिः

[3]निर्वेधैः शशिकरमूलमैत्र्यपित्र्य-
ब्राह्मान्त्योत्तरपवनैः शुभो विवाहः ।
रिक्तामारहिततिथौ शुभेऽह्नि वैश्व-
प्रान्त्याङ्घ्रिश्रुतितिथिभागतोऽभिजित्स्यात् ॥

मृगशिरोहस्तमूलानुराधामघारोहिण्युत्तराफाल्गुन्युत्तराषाढोत्तराभाद्रपदास्वातीनक्षत्रैः निर्वेधैः वेधाख्यदोषरहितैः विवाहः शुभः शुभफलप्रदः । रिक्तामाः प्रसिद्धाः । आभिर्वर्जिततिथिषु शुभेऽह्नि शुभग्रहवासरेऽपि विवाहः शुभः । वैश्वं उत्तराषाढा तस्य अन्त्याङ्घ्रिः चतुर्थचरणः श्रुतेः श्रवणस्य पञ्चदशांशो मिलित्वा अभिजिद्योगः स्यात् । पीटी.

[4]कृष्णे पक्षे सौरिकुजार्केऽपि च वारे
वर्ज्ये नक्षत्रे यदि वा स्यात्करपीडा ।
संकीर्णानां तर्हि सुतायुर्धनलाभ-
प्रीतिप्राप्त्यै सा भवतीह स्थितिरेषा ॥

संकीर्णजातीनां विवाहे नियतं कालविशेषमाह—कृष्णे इति । कृष्णपक्षे शनिभौमार्कवारे विवाहोक्तनक्षत्रादिभिन्ननक्षत्रेषु, चकारात् 'व्याघातशूल' इत्यादिदुष्टयोगेष्वपि, यदि संकीर्णानां अनुलोमप्रतिलोमजानां करपीडा विवाहः स्यात्, तर्हि सा करपीडा सुतायुर्धनलाभप्रीतिप्राप्त्यै भवति । एषा स्थितिः आचारोऽस्ति । वाग्रहणमेतदभावे विवाहाद्यावश्यकत्वे च प्रागुक्तदिनेऽपि कार्यमिति सूचनार्थम् । पीटी.

(१) ज्योनि. १५२.
(२) सर. ४७५.
(३) मुचि. ६।५५.
(४) मुचि. ६।९४-९५.

गान्धर्वादिविवाहेऽर्काद्वेदनेत्रगुणेन्दवः ।
कुयुगाङ्गाग्निभूरामास्त्रिपद्यां न शुभाः शुभाः ॥

गान्धर्वादिदुष्टविवाहे त्रिपदीचक्रे नक्षत्रशोधनमाह—गान्धर्वादीति । गान्धर्वादिविवाहाः सलक्षणाः प्रागस्माभिरभिहिताः । तेषु अर्कात् सूर्याक्रान्तनक्षत्रमारभ्य चत्वार्यशुभानि । ततो द्वे शुभे । ततस्त्रीण्यशुभानि । तत एकं शुभम् । ततः एकमशुभम् । ततश्चत्वारि शुभानि । ततः षडशुभानि । ततस्त्रीणि शभानि । ततः एकमशुभम् । ततस्त्रीणि शुभानि । एतान्यष्टाविंशतिभानि त्रिपद्यामशुभान्येव (१) ज्ञेयानि । त्रयाणां पद्यानां समाहारस्त्रिपदी, तत्र । ब्रह्मविष्णुरुद्रपद्याभिधचक्रत्रये इत्यर्थः । पीटी.

## अनिर्दिष्टकर्तृकवचनानि

[1]मैत्रं पित्र्यं तथा वैश्वं ब्राह्मनैर्ऋतदैवतम् ।
अहिर्बुध्न्ययमौ वाऽपि पौष्णधातृनिशाकराः ॥

[2]आद्ये मघाचतुर्भागे नैर्ऋतस्याद्य एव च ।
रेवत्यन्तचतुर्भागे विवाहः प्राणनाशनः ॥

[3]षड्भागशेषेष्वन्येषु नक्षत्रेषु न शस्यते ।
स्वात्यन्त्येषु त्रिषु सदा पाणिग्रहणमिष्यते ॥

[4]हस्तोत्तराणि वायव्यं मैत्रमूले च रेवती ।
रोहिणी सौम्यपित्र्ये च शुभं पाणिग्रहे सदा ॥

[5]त्यजेद्विषुवतं यत्नाद्व्यतीपातायनं तथा ।
उत्पातदूषितं चर्क्षं वैधृतिं च विशेषतः ॥

(१) चका. ७८८.
(२) चका. ७८८; निप. २८३ रेवत्यन्त्य (रेवत्यन्ते) नाशनः (नाशकः); संत. ८८२ निपवत्; विसौ. १८ चतुर्वर्गचिन्तामणौ कालखण्डे; सप्र. ७८२ विसौवत्; संग. २३२ विसौवत्.
(३) चका. ७८८; विसौ. १८ शस्यते (दृश्यते) पू., चतुर्वर्गचिन्तामणौ कालखण्डे; संप्र. ७८२ सर्वं विसौवत्.
(४) चका. ७८८; संकौ. १९९ मैत्रमूले (मैत्रं मूलं) हेमाद्रौ; संर. ४६३ सर्वं संकौवत्.
(५) चका. ७८८, ७८९.

वैवाहिकर्क्षदैवत्यमुहूर्तेष्वपि जायते ।
पाणिग्रहः कुमारीणामभीष्टार्थफलप्रदः ॥
रोहिण्युत्तररेवतीपितृमरुन्मित्रेन्दुहस्तासुरेषु ॥
आसुरं मूलम् । - प्रपा. ३२९

[1]भगर्क्षं सर्वसौभाग्यकरं स्त्रीणां विशेषतः ।
कुतस्तर्हि वराहाद्यैर्गर्हितं पाणिपीडनम् ॥

### शौनककारिका

[2]आत्मनः कन्यकायाश्च जन्मर्क्षानुगुणे शुभे ।
नक्षत्रे गुणसंपन्ने तिथिवारभसंयुते ।
पुण्ये मुहूर्ते कुर्वीत विवाहं विधिवद्द्विजः ॥

(१) ज्योनि. १५२.
(२) शौका. २–३ पृ. ५५ ; वारभसंयुते ( वासरभे युते ); प्रपा. ३१८.

### रेणुकारिका

[1]स्वातौ मृगे मूलमघानुराधा-
पौष्णोत्तराब्राह्मयकरेषु भेषु ।
क्रूरैरविद्धेषु न लत्तया च
हतेषु नोत्पातविदूषिते स्यात् ॥

(१) रेका. २ पृ. ४९.

## योगकरणविचारः

### वसिष्ठः

[1]विष्कम्भः प्रीतिरायुष्मान्
सौभाग्यः शोभनाह्वयः ।
अतिगण्डः सुकर्माख्यो
धृतिः शूलोऽथ गण्डकः ॥
वृद्धिर्ध्रुवाख्यो व्याघातो हर्षणो वज्रसंज्ञकः ।
सिद्धियोगो व्यतीपातो वरीयान्
परिघः शिवः ॥
सिद्धिः साध्यः शुभः शुक्लो ब्रह्मैन्द्रो
वैधृताह्वयः ।
सप्तविंशतियोगास्ते स्वनामफलदाः स्मृताः ॥
विरुद्धयोगेषु य आद्यपादः
शुभेषु कार्येषु विसर्जनीयः ।
सवैधृताख्यो व्यतिपातयोगः
सर्वोऽपि नेष्टः परिघार्धमाद्यम् ॥
तिस्रस्तु नाडयः प्रथमे च वज्रे
गण्डातिगण्डेऽपि च षट् च षट् च ।
व्याघातयोगे नव पञ्च शूले
शुभेषु कार्येषु विवर्जनीयाः ॥
[2]आद्यं बवं बालवकौलवाख्ये
तत्तैतिलं तद्गरसंज्ञकं च ।
वणिक् च विष्टिः करणानि सप्त
चराणि यानि क्रमशो भवन्ति ॥
तिथ्यर्धमाद्यं शकुनिर्द्वितीयं
चतुष्पदं नागकसंज्ञितं च ।
किंस्तुघ्नमेतान्यचराणि कृष्ण-
चतुर्दशीपश्चिमभागतः स्युः ॥
[2]सवैधृता विष्टिरथाष्टमेन्दुः
स पापयोगः परिघार्धमाद्यम् ।
तिस्रोऽष्टकाश्चोक्तनिसर्गदोषाः
सर्वत्र वर्ज्याः खलु मङ्गलेषु ॥

(१) वसं. १५।१–५.
(१) वसं. १६।१–२.
(२) वसं. ३२।१९–२०.

[1]वैधृतके परिणीता
कन्या विकलेन्द्रिया व्यतीपाते ।
विष्टयां मरणं नित्यं
सुभगा षट्स्वपि च करणेषु ॥

### नारदः

[2]बवादिवणिगन्तानि शुभानि करणानि षट् ।
परीता विपरीता वा विष्टिर्नेष्टा तु मङ्गले ॥
स्थिराणि मध्यमान्येषां नेष्टे नागचतुष्पदे ॥
[3]मासान्ते पञ्च दिवसांस्त्यजेद्रिक्तामथाष्टमीम् ।
विष्टिं च परिघाद्यर्धं व्यतीपातं सवैधृतिम् ॥

### बृहस्पतिः

[4]शकुन्यादिचतुर्ष्वेषु करणेष्वपि विष्टिषु ।
कुलिकेषु शुभं वर्ज्यमशुभान्येव कारयेत् ॥
[5]गुणायुतैर्युतेऽप्यस्मिन् शकुन्यादिचतुष्टये ।
काले नैव शुभं सर्वं कृतं सम्यग्विनश्यति ॥

(१) मपा. १६६ वैधृतके (वैधृतिके) विष्टयां (विघात्) षट्स्वपि च (षट्स्वपि वरेषु) ज्योतिःसारसागरे; पुम. ४४७.

(२) ज्योना. ८।२, ४ पृ. ३०.

(३) ज्योना. २७।११ पृ. ५१ मथाष्टमीम् (तथाष्टमी) विष्टिं (षष्ठी) वैधृतिम् (वैधृतम्); ज्योनि. १५२ घाद्यर्धं (घस्यार्धं).

(४) प्रपा. ३३०; संप्र. ७८३ चतुर्ष्वेषु (चतुष्केषु); संग. २३२ संप्रवत्.

(५) प्रपा. ३३० तेऽप्यस्मिन् (तेऽन्यस्मिन्) नैव (- नेष्टं); संप्र. ७८३.

### शौनकः

[1]व्यतीपातवज्रवैधृति-
परिघे शूले च वित्तहानिः स्यात् ।
सौभाग्यसुखानि स्युः
प्रीत्यादिषु शेषयोगेषु ॥
[2]ध्रुवकरणैः शकुनाद्यैः
पाणिग्रहणे ध्रुवो भवति मृत्युः ।
मासान्मासत्रितयात्
विंशतिरात्रात्तथाऽब्दार्धात् ॥
[3]विष्णुपदेषु विगीता
कन्या विकलेन्द्रिया व्यतीपाते ।
वैधृतिविष्टयोर्भ्रष्टा
सुभगा शेषेषु करणयोगेषु ॥

### ज्योतिःसारसागरे

[4]दुष्टपूर्वमपहाय दिनार्धभागं
विष्टिप्रदुष्टमपि नष्टविधुं तिथिश्च ।
शेषाः शुभा निगदिता अशुभास्तथाऽन्ये
पूर्वोक्तमत्र सकलं हि विचिन्तनीयम् ॥

(१) विसौ. १९; संप्र. ७८२; संग. २३२ (वज्र०).

(२) मपा. १६६ (ध्रुवकरणैः शकुनाद्यैः पाणिग्रहणात् ध्रुवं मृत्युः ।) पू., ज्योतिःसारसागरे; विसौ. १९; संप्र. ७८३.

(३) विसौ. १०.

(४) मपा. १६६.

# ज्येष्ठमास—जन्ममासनक्षत्रादिविचारः

## वसिष्ठः

[1]स्वजन्ममासर्क्षतिथिक्षणेषु
वैनाशिकाद्यृक्षगणेषु भेषु ।
नोद्वाहमात्माभ्युदयाभिलाषी
नैवाद्यगर्भद्वितयं कदाचित् ॥

[2]ज्येष्ठे मासे ज्येष्ठयोर्वा नृनार्यो-
नैवोद्वाहः ........... ॥

## नारदः

[3]न जन्ममासे जन्मर्क्षे न जन्मदिवसेऽपि वा ।
आद्यगर्भसुतस्याथ दुहितुर्वा करग्रहः ॥

[4]ज्येष्ठे मासि तयोरेव निषेधः परिकीर्तितः ॥

[5]नैवोद्वाहो ज्येष्ठपुत्रीपुत्रयोश्च परस्परम् ।
ज्येष्ठमासे तयोरेको ज्येष्ठः श्रेष्ठश्च नान्यथा ॥

[6]दम्पत्योर्जन्मभे चैव राशौ च निधने तयोः ।
एकस्यापि तथोद्वाहे किञ्चिद्भेदं विनाऽपि वा ॥

---

(१) **वसं.** ३२।१५ ; **विसौ.** १३ भेषु ( चैवम् ) लाषी ( काङ्क्षी ) द्वितयं ( द्वितये ).

(२) **वसं.** ३२।१७.

(३) **ज्योना.** २७।७ पृ. ५१ आद्य ( नाद्य ) ; **प्रपा.** ३२८ पूर्वार्धे ( जन्ममासे न जन्मर्क्षे न जन्मदिवसेऽपि च । ) आद्य ( नाद्य ) स्याथ ( स्यात्र ) ; **विसौ.** १३ ऽपि वा ( तथा ) ; **संप्र.** ३५८ ; **विपा.** ७५३ ऽपि वा ( न च ) ; **मुक्ता.** १४७ पूर्वार्धे ( जन्ममासे च जन्मर्क्षे न च जन्मदिने तथा । ) ; **ज्योनि.** १५२ ऽपि वा ( ऽपि च ) आद्य ( नाद्य ) ; **पुम.** ४४७ स्याथ दु ( स्याद्यदु ) शेषं विसौवत् ; **संर.** ४६० पूर्वार्धे ( जन्ममासे च जन्मर्क्षे न जन्मदिवसेऽपि च । ).

(४) **विसौ.** १३.

(५) **ज्योना.** २७।८ पृ. ५१ उत्तरार्धे ( ज्येष्ठमासजयोरेकज्येष्ठे मासि हि नान्यथा । ) ; **विसौ.** १३ पू. ; **मुक्ता.** १४७ ज्येष्ठपुत्रीपुत्रयोश्च ( ज्येष्ठमासे दम्पत्योस्तु ) रेको ज्येष्ठः श्रेष्ठश्च ( रेकज्येष्ठः श्रेष्ठस्तु ) ; **ज्योनि.** १५२.

(६) **विसौ.** १२.

## बृहस्पतिः

[1]ज्येष्ठे न ज्येष्ठयोः कार्यं
नृनार्योः पाणिपीडनम् ।
तयोरेकतरे ज्येष्ठे
ज्येष्ठमासेऽपि कारयेत् ॥

## भरद्वाजः

[2]मार्गशीर्षे तथा ज्येष्ठे क्षौरं परिणयं व्रतम् ।
आद्यपुत्रदुहित्रोश्च यत्नेन परिवर्जयेत् ॥

[3]ज्येष्ठे ज्येष्ठस्य कुर्वीत भास्करे चानलस्थिते ।
नोत्सवादीनि कार्याणि
दिग्दिनानि च वर्जयेत् ॥

दशाहं चैव गर्गस्तु त्रिदशाहं बृहस्पतिः ।
अर्कभोग्याग्निभं यावन्मुनिः प्राह पराशरः ॥

## शातातपः

[4]कर्माधानक्षयोः पुंसां विवाहे जन्मभं विना ।
कन्याया जन्मभं श्रेष्ठं विना वाऽऽधानकर्मभे ॥

## पराशरः

[5]न ज्येष्ठा कन्यका यत्र ज्येष्ठः पुत्रो भवेद्यदि ।
व्यत्यये वा तयोस्तत्र ज्येष्ठमासः शुभप्रदः ॥

---

(१) **धप्र.** ५८ ( = ) ; **ज्योनि.** १५२ क्रमेण नारदः. पीयूषधाराटीकायां बृहस्पतिः ।

(२) **गभा.** ६६ मार्गशीर्षे ( मार्गे मासि ) आद्य ( ज्येष्ठ ) त्रोश्च ( त्रोस्तु ) क्रमेण नारदः ; **धप्र.** ५८ क्षौरं परिणयं व्रतम् ( विवाहं चोपनायनम् ) क्रमेण नारदः ; **विसौ.** १२ त्रोश्च ( त्रोस्तु ) : **संग.** २२९ ; **संव.** ८७.

(३) **विसौ.** १२ ; **संग.** २२९ अर्कभोग्याग्निभं ( अवलोक्याग्निभं ) चण्डेश्वरः.

(४) **प्रपा.** ३३०.

(५) **विसौ.** १३.

## अत्रिः

[1]जन्मर्क्षे जन्मदिवसे जन्ममासे शुभं त्यजेत् ।
ज्येष्ठमास्याद्यपुत्रस्य शुभं वर्ज्यं स्त्रिया अपि ॥

[2]मौञ्ज्युद्वाहप्रतिष्ठादीन् केचित्तत्रापि कुर्वते ॥

## अङ्गिराः

[3]मौञ्जीनिबन्धव्रतकर्मणी च
चूडाकृतिश्च प्रथमो विवाहः ।
स्नानं च पुंसः प्रथमस्य नेष्टं
ज्येष्ठाख्यमासेऽपि च जन्ममासे ॥

## गर्गः

[4]ज्येष्ठायाः कन्यकायाश्च ज्येष्ठपुत्रस्य वै मिथः ।
विवाहो नैव कर्तव्यो यदि स्यान्निधनं तयोः ॥

## वृद्धगर्गः

[5]आरभ्य जन्मदिवसं यावत्त्रिंशं दिनं भवेत् ।
जन्ममासः स विज्ञेयो गर्हितः सर्वकर्मसु ॥

[6]स्त्रीणां जन्मत्रयं श्रेष्ठं विवाहे च प्रशस्यते ।
पतिप्रिया च कल्याणी दीर्घायुश्च सुमङ्गला ॥

## वराहमिहिरः

[1]ज्येष्ठस्य ज्येष्ठकन्याया विवाहो न प्रशस्यते ।
तयोरन्यतरे ज्येष्ठे ज्येष्ठो मासः प्रशस्यते ॥

[2]द्वौ ज्येष्ठौ मध्यमौ प्रोक्तावेको
ज्येष्ठः शुभावहः ।
ज्येष्ठत्रयं न कुर्वीत विवाहे सर्वसंमतम् ॥

ज्येष्ठा कन्या ज्येष्ठो वरो ज्येष्ठमास इति ज्येष्ठत्रयम् । ज्येष्ठानक्षत्रेणापि ज्येष्ठत्रयम् । ज्येष्ठा नक्षत्रं ज्येष्ठो मासो ज्येष्ठा कन्या वरो वा ज्येष्ठ इत्येतं वा ज्येष्ठत्रयम् । ज्येष्ठचतुष्टये ज्येष्ठत्रयस्य सद्भावान्निषेधप्रवृत्तिरस्त्येव । ज्येष्ठस्य वरस्य ज्येष्ठकन्यायाश्च ज्येष्ठमासे विवाहो न प्रशस्यते । तयोर्मध्येऽन्यतरज्येष्ठत्वे तु प्रशस्यते इत्यर्थः ।

संर. ४६०

## लल्लः

[3]आधानर्क्षं शुभं प्रोक्तं दम्पत्योः परिणायने ।
कदाचित् कर्मभं पुंसां न
कदाचित्तु जन्मभम् ॥

हित्वैव च जन्मऋक्षं
द्वे तारे जन्मसंज्ञिते शुभदे ।

---

(१) प्रपा. ३२७ मास्याद्यपुत्रस्य (मासाद्यगर्भस्य); **गभा.** ६६ ज्येष्ठमास्याद्यपुत्रस्य (ज्येष्ठे मास्यादिगर्भस्य); **प्रर.** ९८ प्रपावत्; **चम.** १०९ प्रपावत्; **मुक्ता.** १४७ जन्मर्क्षे (जन्मभे) शेषं प्रपावत्; **सिन्धु.** १०७८ ज्येष्ठमास्याद्यपुत्रस्य (ज्येष्ठे मास्याद्यगर्भस्य): **विपा.** ७५३ पुत्रस्य (गर्भस्य); **संकौ.** १९७ (=) प्रपावत्, उत्त.; **आन.** १७९ मुक्तावत्; **प्रका.** ३५७ (=) प्रपावत्; **संर.** ४६० (=) उत्त. मुक्ताग्रन्थं वर्जयित्वा सर्वग्रन्थेषु 'रत्नकोशे' इत्युक्तम् ।

(२) **मुक्ता.** १४७.

(३) **मुक्ता.** १४७.

(४) **संग.** २२९.

(५) **संम.** २१ : **संग.** २३० दिवसं (दिवसात्) गर्हितः सर्वकर्मसु (सर्वकर्मसु गर्हितः) ग्रहकौमुद्याम्; **पुम.** ४४८ संगवत्; **संर.** १७२ दिनं भवेत् (दिनानि हि) गर्गः.

(६) **प्रपा.** ३३०.

(१) **गभा.** ६७ पराशरः; **विसौ.** १३ ज्येष्ठो मासः (ज्येष्ठमासे); **मुक्ता.** १४७ कन्याया (कन्यया) पू., गर्गः; **संम.** ६५ ज्येष्ठो मासः प्रशस्यते (ज्येष्ठमासो न शस्यते); **सिन्धु.** १०७८; **संकौ.** १९७; **प्रका.** ३५९ उत्त., चण्डेश्वरः; **संग.** २२९ संमवत्; **पुम.** ४४८; **संर.** ४६० ज्येष्ठो मासः (ज्येष्ठमासः).

(२) **गभा.** ६७ वेको ज्येष्ठः शुभावहः (वेकज्येष्ठं शुभावहम्) पराशरः : **विसौ.** १३ द्वौ ज्येष्ठौ (द्विज्येष्ठौ); **मुक्ता.** १४७ एको ज्येष्ठः शुभावहः (ज्येष्ठमेकं शुभावहम्) विवाहे सर्व (विवाहं बहु) गर्गः : **संम.** ६५ गभावत्; **सिन्धु.** १०७८–१०७९ गभावत्; **संकौ.** १९७ वेको ज्येष्ठः शुभावहः (वेकज्येष्ठं सुखावहम्); **प्रका.** ३५८ पराशरः; **संग.** २२९ वेको ज्येष्ठः (वेकज्येष्ठः); **पुम.** ४४८ संकौवत्; **संर.** ४६० संकौवत्.

(३) **प्रपा.** ३३०.

जन्मर्क्षोढा कन्या
न हि खलु भर्तुः शुभा भवति ॥
प्रीतिं च जन्मतारा
दम्पत्योर्जनयतितरां तारा ।
फलमथ संज्ञासदृशं
जनयति च शशाङ्कयुक्ता सा ॥

## श्रीपतिः

[1]जन्ममासि न तु जन्मभे तथा
नैव जन्मदिवसेऽपि कारयेत् ।
आद्यगर्भदुहितुः सुतस्य वा
ज्येष्ठमासि न हि जातु मङ्गलम् ॥

## शार्ङ्गधरः

[2]जन्मर्क्षे सति दारिद्र्यं वैरं जन्मतिथावपि ।
जन्ममासेऽपि दौर्भाग्यं जन्मलग्नं शुभावहम् ॥

## चण्डेश्वरः

[3]जन्मर्क्षे जन्ममासे वा तारायामथ जन्मनि ।
जन्ममासे जन्मलग्नेऽप्यूढा कन्या पतिव्रता ॥
[4]जन्ममासे तु पुत्राढ्या धनाढ्या जन्मभोदये ।
जन्मलग्ने भवेदूढा कन्या ( वृद्धा )
संततिसौख्यभाक् ॥

(१) प्रपा. ३२८; विसौ. १२ न तु ( न च ) न हि ( न तु ); वप्र. ५८ विसौवत्, ज्योतिःसारे ; मुक्ता. १४७ न तु ( न च ) सेऽपि ( से च ) न हि जातु मङ्गलम् ( न तु पाणिपीडनम् ) रत्नमालायाम् ; संम. ६५ न हि ( न तु ) उत्त. ; विपा. ७५३ सेऽपि ( से च ) न हि ( न तु ); ज्योनि. १०० विसौवत् ; संग. २३० जन्ममासि न तु जन्मभे तथा ( जन्मराशि न च जन्मभे तिथौ ) न हि ( न च ) रत्नमालायाम् .

(२) ज्योनि. १०० मासेऽपि ( मासे च ); संग. २३०.

(३) विसौ. १३. पीयूषधाराटीकायां तु च्यवनस्यायं श्लोकः, उत्तरार्धे ' जन्मलग्ने भवेदूढा पुत्राढ्या पतिवल्लभा ' इति पाठश्च ।

(४) विसौ. १३.

जन्मोदये जन्मस तारकासु
मासेऽथ वा जन्मनि जन्मभे वा ।
ऊढाङ्गना नैकविधानि धत्ते
सौख्यानि भोगं खलु बान्धवानाम् ॥
[1]मार्गे मासि तथा ज्येष्ठे क्षौरं परिणयं व्रतम् ।
ज्येष्ठपुत्रदुहित्रोस्तु यत्नेन परिवर्जयेत् ॥
[2]कृत्तिकास्थं रविं त्यक्त्वा ज्येष्ठे ज्येष्ठस्य कारयेत् ।
उत्सवादिषु कार्येषु दिनानि दश वर्जयेत् ॥

## भुजबलः

[3]जन्मनि मासि विवाहः
शुभदो जन्मर्क्षजन्मराश्योश्च ।
अशुभं वदन्ति गर्गाः श्रुतिवेधक्षौरयात्रासु ॥

## नृसिंहः

[4]कर्माधानर्क्षयोः पुंसां योषितां जन्मभे तथा ।
विवाहः शुभदः प्रोक्तो बहूनां संमतं त्विदम् ॥

## संग्रहः ( संग्रहकारः )

[5]विवाहे चोपनयने जन्ममासं विवर्जयेत् ।
विशेषाज्जन्मपक्षं तु वसिष्ठाद्यैरुदाहृतम् ॥

(१) मपा. १६२ ज्योतिःसारसागरे ; संसौ. ७४ मार्गे मासि तथा ज्येष्ठे ( ज्येष्ठे मासि तथा मार्गे ) त्रोस्तु यत्नेन ( त्रोश्च यत्नतः ) ( = ) ; संम. १९ मार्गे ( गर्भे ) विवाह-चण्डेश्वरः ; सिन्धु. १०७८ ; प्रका. ३५९ ; कृभ. ९१८ त्रोस्तु ( त्रोश्च ) ; संर. ४६० परिणयं (परिणयो ) : ८९८.

(२) गभा. ६६ ज्येष्ठे ज्येष्ठस्य ( ज्येष्ठपुत्रस्य ) क्रमेण नारदः ; संत. ९२३ उत्तरार्धे ( उत्सवानि च कार्याणि दिग्दिनानि च वर्जयेत् । ) ज्योतिषे ; विसौ. १३ दिषु कार्येषु ( दीनि कार्याणि ) तन्त्रान्तरेऽपि ; संसौ. ७४ (=) पू. ; संप्र. ३०१ पू., सारसंग्रहे ; सिन्धु. १०७८ ज्येष्ठे ज्येष्ठस्य ( ज्येष्ठपुत्रस्य ) ; संकौ. ११३ पू., सारसंग्रहे : १९८ पू., संग्रहोक्तेः इत्युक्तम् ; संग. २२९ : ६०९ पू., सारसंग्रहे ; संर. ४६० सिन्धुवत् , पू. : ८९८ सिन्धुवत् .

(३) विसौ. १३ यात्रासु ( मौञ्जीबन्धं च ) ; संसौ. ७७ स्मृत्यन्तरम् ; संप्र. ३०४ (=).

(४) प्रपा. ३३०.

(५) प्रपा. २१४ : ३२८ पूर्वार्धे ( विवाहं चोपनयनं जन्ममासे विवर्जयेत् । ) ; संसौ. १०९ चोपनयने ( मेखला-

## ऋक्षोच्चये

[1]न जन्ममासे न च चैत्रपौषे
क्षौरं विवाहो न च कर्णवेधः ।
विवाहवर्जं न च जन्ममासे
यात्राऽपि नेहेष्टफलेति सत्यः ॥

जन्ममासि विवाहानुज्ञा अनाद्यगर्भविषया इति द्रष्टव्यम् । संसौ. ७३

## अर्णवे

[2]कन्यकाजन्मनक्षत्रे विवाहः शोभनो भवेत् ।
कर्माधानर्क्षयोश्चैव पुंसो वर्ज्यस्त्रिजन्मसु ॥

## पृथ्वीचन्द्रोदये

[3]भे जन्मनो जन्मगृहे दिने वा
कुर्याद्विवाहं न च जन्ममासे ।
ज्येष्ठर्क्षज्येष्ठसुताङ्गनानां
मिथो विधेयं न तु जन्ममासे ॥

## अर्णवे

[4]अन्नप्राशनवैवाहे (?हं) पुंसो जन्मर्क्ष एव च ।
जन्ममासे च वर्ज्यं स्यान्नर्मदातीर उत्तरे ॥
नर्मदादक्षिणे भागे विवाहादिषु
( ? दि सु )मङ्गलम् ।
जन्ममासे शुभं प्रोक्तं बहूनां संमतं कृतम् ॥

## वृत्तशते

[5]न जन्मधिष्ण्ये न च जन्ममासे
न जन्मकालीनदिने विदध्यात् ।
ज्येष्ठे न मासि प्रथमस्य सूनो-
स्तथा सुताया अपि मङ्गलानि ॥

## राजमार्तण्डः

[1]जातं दिनं दूषयते वसिष्ठो
ह्यष्टौ च गर्गो नियतं दशात्रिः ।
जातस्य पक्षं किल भागुरिश्च
शेषाः प्रशस्ताः खलु जन्ममासि ॥
[2]जन्ममासे तिथौ भे च विपरीतदले सति ।
कार्यं मङ्गलमित्याहुर्गर्गभार्गवशौनकाः ॥
[3]जन्ममासनिषेधेऽपि दिनानि दश वर्जयेत् ।
आरभ्य जन्मदिवसाच्छुभाः
स्युस्तिथयोऽपरे ॥

## ज्योतिष्प्रकाशे

[4]जन्मभं कृषिनृपाभिषेचने
भूषणे नगरगेहकर्मणि ।
आद्यपत्यभुजि मौञ्जिबन्धने
पुंविवाह उदितं शुभं बुधैः ॥
विवाहे जन्मभं स्त्रीणां वर्जनीयं प्रयत्नतः ।
नैव पुंसामिति प्राहुर्ज्योतिर्नयविदो बुधाः ॥

## ज्योतिःसागरे

[5]कन्यावरौ यदि स्यातामाद्यगर्भसमुद्भवौ ।
तयोरेव भवेज्ज्येष्ठानक्षत्रं चापि वै यदि ॥

---

न्धे ) रत्नकोशे ; **संम.** २१ पू. ; **विपा.** ७५३ रत्नकोशे ; **ज्योनि.** १२२ ; **संर.** १७१ पू., स्मृत्यन्तरम् .

( १ ) **संसौ.** ७३ ; **संप्र.** ३०१.

( २ ) **प्रपा.** ३३०.

( ३ ) **विसौ.** १३.

( ४ ) **मुक्ता.** १४७.

( ५ ) **गभा.** २०१ ; **विसौ.** १३ मासे (मासि) कालीन ( कालीय ) महेश्वरः ; **संम.** १९ कालीन ( कालीय )

मासि ( मासे ) स्तथा ( स्तस्याः ) ; **सिन्धु.** ९३१ ; **विपा.** ४७२ वृत्तशतके ; **पुम.** ४४७ ; **कृभ.** ९१८ ; **संर.** १७२,८९८ कालीन ( कालीय ) ज्येष्ठे न मासि ( न ज्येष्ठ-मासि ).

( १ ) **गभा.** ६६–६७,२०१ ; **सिन्धु.** ९३१ ; **विपा.** ४७२ जन्ममासि (जन्ममासे); **संकौ.** १२० ; **संग.** २३० विपावत् ; **पुम.** ४३८ विपावत् ; ४४८ दूषयते ( वर्जयते ) ह्यष्टौ (अष्टौ) गर्गो (गार्ग्यो) जातस्य पक्षं ( तज्जन्मऋक्षं ) शेषाः प्रशस्ताः खलु जन्ममासि ( व्रते विवाहे गमने क्षुरे च ) ज्योतिर्ग्रन्थे.

( २ ) **गभा.** ६७, २०१ ; **सिन्धु.** ९३१ ; **विपा.** ४७२ अन्यत्रापि ; **संकौ.** १२० ; **संग.** २३०.

( ३ ) **गभा.** ६७ मासनि ( मासे नि ) : २०१ ; **सिन्धु.** ९३१ ; **विपा.** ४७२ अन्यत्रापि ; **संग.** २३०.

( ४ ) **संग.** २१०.

( ५ ) **धप्र.** ५८ ज्योतिरर्णवे ; **संग.** २२९.

ज्येष्ठमासि भवेद्वाऽपि ज्येष्ठापञ्चकमित्यथ ।
कुर्याद्यस्तु नरो मोहादाशु मृत्युर्भवेत्तयोः ॥
[1]ज्येष्ठाचतुष्टयं चैव ज्येष्ठात्रयमथापि वा ।
निषिद्धं स्यादथ ज्येष्ठाद्वितयं शुभदं भवेत् ॥

## कालादर्शे

[2]आद्यगर्भोत्थयोर्ज्येष्ठमासि नोद्वाहमाचरेत् ॥

## मुहूर्तचिन्तामणिः

[3]आद्यगर्भसुतकन्ययोर्द्वयो-
र्जन्ममासभतिथौ करग्रहः ।
नोचितोऽथ विबुधैः प्रशस्यते
चेद्द्वितीयजनुषोः सुतप्रदः ॥

आद्यगर्भजस्त्रीपुंसयोः मासप्रसङ्गात् जन्ममासादिप्रयुक्त-निषेधविधिमाह–आद्येति । यस्मिन् चान्द्रे मासे जन्म स जन्ममासः, जन्मतिथिमारभ्य त्रिंशत्तिथ्यात्मको मासो जन्ममासो वेति । यस्मिन् भे नक्षत्रे जन्म तज्जन्मभम् । यस्यां तिथौ जन्म सा जन्मतिथिः । उपलक्षणत्वा-त्तन्मुहूर्तोऽपि । तत्र आद्यगर्भसुतकन्ययोर्द्वयोः करग्रहो विवाहो नोचितो निषिद्ध इत्यर्थः । अथेति । द्वितीयजनु-षोरनाद्यगर्भयोश्चेद्विवाहस्तर्हि सुतप्रदो विबुधैः पण्डितैः प्रशस्यते । एतच्च तृतीयगर्भादावपि द्रष्टव्यम् । सर्वथा आद्यगर्भराहित्यं विवक्षितम् । पीटी.

ज्येष्ठद्वन्द्वं मध्यमं संप्रदिष्टं
त्रिज्ज्येष्ठं चेन्नैव युक्तं कदाऽपि ।
केचित्सूर्यं वह्निगं प्रोह्य चाहु-
र्नैवान्योऽन्यं ज्येष्ठयोः स्याद्विवाहः ॥

प्रसङ्गात् ज्येष्ठमासप्रयुक्तं विशेषमाह– ज्येष्ठद्वन्द्व-मिति । पुत्रो ज्येष्ठः, कन्या च ज्येष्ठा, मासोऽपि ज्येष्ठः, इत्येतत्त्रिज्येष्ठं ज्येष्ठत्रयमुच्यते । तत् कदापि नैव युक्तं नैव प्रशस्तम् । ज्येष्ठे मासे ज्येष्ठवधूवरयोर्नैव विवाहः कार्य इत्यर्थः । यदा त्वेकतरज्येष्ठत्वे ज्येष्ठमासेऽपि भवति । यदाह गुरुः– ' ज्येष्ठे न ज्येष्ठयोः कार्यं नृनार्योः पाणि-पीडनम् । तयोरन्यतरे ज्येष्ठे ज्येष्ठमासेऽपि कारयेत् ॥ ' इति । एतच्चान्यतर- ( तरेण ? ) ज्येष्ठत्वं द्विविधं–ज्येष्ठ-मासो ज्येष्ठो वरश्च, ज्येष्ठो मासः कन्या च ज्येष्ठा । एत-ज्ज्येष्ठद्वन्द्वं मध्यमं संप्रदिष्टम् । अगतिविषयमित्यर्थः । एको ज्येष्ठोऽन्यद्द्वयमज्येष्ठमुत्तममेव । केचित्तु ज्येष्ठ-मासाभावेऽपि वरकन्ययोः ज्येष्ठत्वमपि मध्यममाहुः । तदसत् । वधूवरान्यतरज्येष्ठ- ( ? त्व ) राहित्यं विव-क्षितं प्रागुक्ते तद्वाक्ये, न तु ज्येष्ठमासाभावेऽपि ( वधूवरयोर्ज्येष्ठत्वम् ) । द्वयोर्वधूवरयोः ज्येष्ठयोः सर्वथा निषिद्धो विवाहः । यदाह गर्गः– ' ज्येष्ठायाः कन्यका-याश्च ज्येष्ठपुत्रस्य वै मिथः । विवाहो नैव कर्तव्यो यदि स्यान्निधनं तयोः ॥ ' इति । तदेतदुक्तं ग्रन्थकृता— ' नैवान्योऽन्यं ज्येष्ठयोः स्याद्विवाहः ' इति । ज्येष्ठत्रय-निषेधस्त्वतिदोषाधिक्यसूचनार्थः । ( त्रिज्येष्ठे विवाह-निषेधापवादः– ) अथास्यापवाद उच्यते-- केचिदिति । सत्यावश्यकत्वे सूर्यं वह्निगं कृत्तिकास्थं प्रोह्य त्यक्त्वा ज्येष्ठमासेऽपि ज्येष्ठस्य वरस्य कन्याया वा विवाहः शुभः इति केचिदूचुः । एतच्च तुल्यन्यायत्वात् ' ज्येष्ठापत्यस्य न ज्येष्ठे ' इति सामान्यतो मङ्गलकृत्यनिषेधेऽपि द्रष्टव्यम् । पीटी.

## अनिर्दिष्टकर्तृकवचनानि

[1]व्रतबन्धं विवाहं च चूडां कर्णस्य वेधनम् ।
ज्येष्ठमासे न कर्तव्यं कल्याणं ज्येष्ठपुत्रगम् ॥
[2]तपतीकृष्णयोर्मध्ये मासश्चान्द्रः प्रकीर्तितः ।
कृष्णाया दक्षिणे तीरे जन्मतो जन्ममासकः ।
अन्येषु सर्वदेशेषु सौरो व्रतविवाहयोः ॥
[3]न जन्मभे जन्मदिने गृहे वा
कुर्याद्विवाहं न च जन्ममासे ।
ज्येष्ठर्क्षजज्येष्ठसुताङ्गनानां
मिथो विशेषान्न तु शुक्रमासे ॥

---

( १ ) धप्र. ५९ ज्योनिर्णये.
( २ ) मुक्ता. १४७.
( ३ ) मुचि. ६।१४,१५.

( १ ) विसौ. १३.
( २ ) संग. २२८ प्रकीर्तितः ( प्रशस्यते ) द्वितीयार्धं नास्ति, ज्योनिर्निबन्धे : २३०.
( ३ ) प्रपा. ३२८ शुक्र ( शुक्र ) ; विपा. ७५४ जन्म-दिने गृहे वा ( जन्मगृहे दिने वा ) ज्येष्ठर्क्षज ( ज्येष्ठर्क्षजे ).

( १ ) शुक्रमासे ज्येष्ठमासे । प्रपा. ३२८

( २ ) शुक्रमासः ज्येष्ठमासः । विपा. ७५४

[1]क्षौरं विवाहं मृगयां साहसं युद्धमेव च ।
व्रतबन्धं च दीक्षां च तद्गजाश्वादिरोहणम् ।
अध्वानं जलयानं च जन्ममासे विवर्जयेत् ॥

जन्ममासे तथा जन्मदिने जन्मत्रयेऽपि वा ।
हूणे वङ्गे त्यजेत्सर्वमन्यदेशे शुभावहम् ॥
अन्नप्राशनमुद्वाहं व्रतबन्धं च चौलकम् ।
जन्ममासे विवर्ज्यं स्यात्कलिङ्गे मागधे सदा ॥
मेषेऽर्के मागधे वर्ज्यमाषाढे दक्षिणे त्यजेत् ।
कर्तव्यं वङ्गदेशे तु मिथुनेनापि संयुतम् ॥
बर्बरे तु सदा वर्ज्यं फाल्गुनं निमिषान्वितम् ।
नान्यदेशे विवर्ज्यं स्याद्वसन्ते सर्वमङ्गलम् ॥
फाल्गुने मीनसंयुक्ते त्यजेत्सर्वत्र शोभनम् ।
नर्मदादक्षिणे देशे विवाहादिसुमङ्गलम् ।
जन्ममासे शुभं प्रोक्तं बहूनां संमतं त्विदम् ॥

( १ ) प्रपा. ३२८.

[1]ज्येष्ठपञ्चकमाचार्यस्त्यजेज्ज्येष्ठचतुष्टयम् ।
ज्येष्ठत्रयं निषिद्धं स्याज्ज्येष्ठद्वयं तु मध्यमम् ॥

[2]विवाहश्च कुमारीणां जन्ममासे प्रशस्यते ॥

पूजा मङ्गलवस्त्राणि विवाहो वास्तुसंग्रहः ।
जन्ममासे च कर्तव्यं क्षौराध्वानं तु वर्जयेत् ॥

यानि तु– ' विवाहश्च कुमारीणां...... वर्जयेत् ' इत्यादिवचनानि तानि द्वितीयादिगर्भोत्पन्नापत्यविषयाणि । पुम. ४४७

[3]आधानकर्मर्क्षमतीव शस्तं
वैवाहिके जन्मदिनं न पुंसाम् ।
तद्व्यत्यये श्रेष्ठमथाबलाया
आधानभं श्रेष्ठमतीव शस्तम् ॥

( १ ) धप्र. ५८.

( २ ) पुम. ४४७.

( ३ ) प्रपा. ३३०.

## लग्नशुद्धिविचारः*

### वसिष्ठः

[1]उद्वाहलग्नवशतो गुणवृत्तलब्धि-
स्तासां तथाविधसुलग्नमतः प्रवच्मि ॥

[2]लग्ने हि सर्वे शुभराशयश्च
शुभेक्षिता वाऽथ युताः शुभाः स्युः ॥

[3]गुणाधिकं दोषविहीनकालं
ज्ञात्वा विलग्नेशनवांशपस्य ।
बलाबलं खेचरिणां सुसम्य-
ग्विचार्य लग्नं प्रवदेदभिज्ञः ॥

[4]बले नृनार्योरिनजीवयोश्च
तारेन्दुवीर्ये सुदिने सुलग्ने ।
पञ्चेष्टकेऽर्केन्दुसुरेज्यमुख्ये
जामित्रशुद्धौ हिमदीधितेश्च ॥

[5]लग्नानां मिथुनः श्रेष्ठस्ततः कन्या ततस्तुला ।
तथा मेषादिलग्नास्तु विवाहे अफलाः स्मृताः ॥
अन्ये द्विचतुरादीनामंशा ग्राह्या मनीषिभिः ।
युग्मकन्यातुलायां तु न स्वांशो न परांशकः ॥
सुहृदः सौम्यषड्वर्गा लग्नसौम्य-
निरीक्षिताः ( तः ) ।
यो वा विवाहकालेषु प्रवेशे शुभकर्मणि ॥

### नारदः

[6]चन्द्रताराबल वीक्ष्य ग्रहषड्वर्गजं बलम् ॥
[1]तिथिरेकगुणा वारो द्विगुणस्त्रिगुणं च भम् ।
योगश्चतुर्गुणः पञ्चगुणं तिथ्यर्धसंज्ञकम् ॥

[2]ततो मुहूर्तो बलवान् ततो लग्नं बलाधिकम् ।
ततोऽतिबलिनी होरा द्रेष्काणोऽतिबली
ततः ॥

[3]ततो नवांशो बलवान् द्वादशांशो बली ततः ।
त्रिंशांशो बलवांस्तस्माद्वीक्ष्यते तद्बलाबलम् ॥

[4]शुभयुक्तेक्षिताः शस्ता विवाहेऽखिलराशयः ॥

[5]चन्द्रार्केज्यादयः पञ्च यस्य राशेस्तु खेचराः ।
इष्टास्तच्छुभदं लग्नं चत्वारोऽपि बलान्विताः ॥

[6]जामित्रशुद्ध्यकविंशन्महादोषविवर्जितम् ॥

[7]दम्पत्योर्द्वादशं लग्नं राशिर्वा यदि लग्नगः ।
अर्थहानिस्तयोर्यस्मात्तदंशस्वामिनं त्यजेत् ॥

[8]जन्मराश्युदयो नैव जन्मलग्नोदयः शुभः ।
तयोरुपचयस्थानं यदि लग्नगतं शुभम् ॥

---

* नवांशदोषविचारोऽपि द्रष्टव्यः ।

( १ ) वसं. ३२।१.

( २ ) वसं. ३२।४७ लग्ने हि सर्वे शुभ ( लग्नादिसर्वे खलु ) वाऽथ ( चाथ ); प्रपा. ३२५ लग्ने हि सर्वे शुभ ( लग्नाय सर्वे खलु ).

( ३ ) वसं. ३२।१३१ ; प्रपा. ३३९ दोष ( स्वल्प ) सुसम्यक् ( च सम्यक् ).

( ४ ) वसं. ३२।१३२ ; विसौ. ५४.

( ५ ) चका. ७९३–७९४.

( ६ ) ज्योना. २७।१५ पृ. ५१.

( १ ) ज्योना. २७।१५–१६ पृ. ५२ ; प्रपा. ३३९ पञ्चगुणं ( पञ्चगुणः ) संज्ञकं ( संज्ञकः ) बृहस्पतिः.

( २ ) ज्योना. २७।१६–१७ पृ. ५२ ; प्रपा. ३३९ ( ततो मुहूर्तो बलवांस्तस्मात्पश्येद्बलाबलम् । ) पू., बृहस्पतिः.

( ३ ) ज्योना. २७।१७–१८ पृ. ५२.

( ४ ) ज्योना. २७।१८ पृ. ५२ ; प्रपा. ३३९ ( शुभेक्षितयुताः शस्ता उद्वाहेऽखिलराशयः । ) बृहस्पतिः.

( ५ ) ज्योना. २७।१९ पृ. ५२ ; प्रपा. ३४० रोऽपि ( रो वा ).

( ६ ) ज्योना. २७।२० पृ. ५२ ; प्रपा. ३२८–३२९ वर्जितम् ( वर्जिते ) ; ज्योनि. १५३ वर्जितम् ( वर्जनम् ).

( ७ ) ज्योना. २७।५५–५६ पृ. ५४ ; प्रपा. ३३३ ; विसौ. २५ ; संप्र. ७८९ ; ज्योनि. ७३ ; संग. २४४.

( ८ ) ज्योना. २७।५६–५७ पृ. ५४–५५ पूर्वार्धे ( जन्मराश्युद्गमे चैव जन्मलग्नोदये शुभः । ) ; प्रपा. ३३३

[1]चन्द्रताराबलैर्युक्ते यदि पाणिग्रहो भवेत् ।
शुभलग्ने शुभैर्युक्ते तदा वृद्धिं विनिर्दिशेत् ॥
[2]स्वस्थे नरे सुखासीने यावत्स्पन्दति लोचनम् ।
तस्य त्रिंशत्तमो भागस्तत्परः परिकीर्तितः ॥
[3]तस्माच्छततमो भागस्त्रुटिरित्यभिधीयते ।
त्रुटेः सहस्रभागो यो लग्नकालः स उच्यते ॥
[4]देवोऽपि तं न जानाति किं पुनः प्राकृतो जनः ।
स कालो वाऽन्यकालो वा पूर्वकर्मवशाद्भवेत् ।
निमित्तमात्रं दैवज्ञस्तद्वशाच्च शुभाशुभम् ॥

## बृहस्पतिः

[5]शुभग्रहोदयर्क्षं वा शुभषड्वर्ग एव वा ।
वेदविज्ञानवाक्यं च महान्तः शुभदा गुणाः ॥

वेदविज्ञानवाक्यं वेति ( चेति ) । वेदस्य विज्ञानं येषां ते वेदविज्ञानाः वेदवेदाङ्गतत्त्वज्ञाः, तेषां वाक्यम् । अथवा विजानन्तीति विज्ञानाः । 'कृत्यल्युटो बहुलम्' इति कर्तरि ल्युट् । वेदस्य विज्ञाना वेदविज्ञाना इति स एवार्थः । तेषां वाक्यं, तत् सुमुहूर्तमस्त्वित्येवंरूपमित्यर्थः । अपि च वेदैः विज्ञायते इति वेदविज्ञानो वेदवेद्यो लक्ष्मीपतिः । बहुलग्रहणात्कर्मणि ल्युट् । तस्य लक्ष्मीपतेश्चरणस्मरणरूपं वाक्यं 'तदेव लग्नं' इत्यादि । एतदुक्तं भवति– मुहूर्तकाले* 'सुमुहूर्तमस्तु' 'तदेव लग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव । विद्याबलं दैवबलं तदेव लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि ॥' इति चोक्त्वा मुहूर्तं दद्यादिति । प्रपा. ३४२

## व्यासः

[1]मेषाद्या ये मया पूर्वमुक्ता द्वादश राशयः ।
तेषां कन्या तुला चैव मिथुनं च प्रशस्यते ॥

## देवलः

[2]षष्ठतौलिमिथुनांशकैः शुभैरप्रशस्तभवनोदयेष्वपि ।
स्त्रीकरग्रहविधिः प्रशस्यते जीवसौम्यभृगुसंश्रितेषु च ॥

## कश्यपः

[3]दुष्टं स्वजन्मलग्नं तज्जन्मराशिरनिष्टदः ।
लग्नगानि तयोः स्थानाच्छुभान्युपचयानि वै ॥

## गर्गः

[4]अधिमासकृतान्दोषानृतुपक्षायनोद्भवान् ।
मुहूर्तकरणोपेतांस्तिथ्युत्पातभवांश्च यान् ॥
ग्रहदृष्टिं दुराधर्षां द्रेक्काणांशकराशिजान् ।
गुरुशुक्रबुधा घ्नन्ति लग्ने सम्यग्व्यवस्थिताः ॥

## शौनकः

[5]गुर्वर्केन्दुबलोपेतं लग्नं चैव प्रदापयेत् ।
अन्यैस्तु बलसंयुक्तैर्न दातव्यं कथंचन ॥

---

पूर्वार्धे ( जन्मराश्युद्गमं नैव जन्मलग्नोदयं शुभम् । ); विसौ. २५ ; संप्र. ७८९ राश्युदयो नैव ( राश्युद्गमं चैवं ) दयः शुभः ( दयं शुभम् ) ; ज्योनि. ७३ राश्युदयो ( राश्युद्गमो ); संग. २४४ संप्रवत्.

( १ ) प्रपा. ३२८ ; विपा. ७५४ (=) यदि पाणिग्रहो भवेत् ( काले पाणिग्रहो यदि ).

( २ ) ज्योना. २७।१५६ पृ. ६२ स्पन्दति ( स्यन्दति ) ; प्रपा. ३४२ नरे ( सति ) ; ज्योनि. १०४ स्पन्दति ( स्यन्दति ) तत्परः परिकीर्तितः ( त्रुटिरित्यभिधीयते ) ; संर. ५३६.

( ३ ) ज्योना. २७।१५७ पृ. ६२ तस्माच्छततमो ( तत्पराच्छतमो ) भागो यो ( गो योंऽशो ) ; प्रपा. ३४२ ; ज्योनि. १०४ भागो यो ( भागोऽथ ) उत्त. ; संर. ५३७ तस्माच्छततमो ( तत्पराच्छतमो ).

( ४ ) ज्योना. २७।१५८–१५९ पृ. ६२ वाऽन्य ( ऽथान्य ) शाच्च ( शान्न ) ; प्रपा. ३४२ स कालो ( सुकालो ) ; ज्योनि. १०४ देवोऽपि ( ब्रह्माऽपि ) वाऽन्य ( ऽप्यन्य ) शाच्च ( शान्न ) ; संर. ५३७ वाऽन्य ( ऽप्यन्य ).

( ५ ) प्रपा. ३४२ ; संर. ५३७ दयर्क्षं ( दयर्क्षो ).

* अयं रत्नमालानूदितः प्रपापाठः । प्रपापुस्तके तु 'सुमुहूर्तमस्त्विति भवन्तो ब्रुवन्तु' 'तदेव लग्नं...' इति पाठः ।

( १ ) चका. ७९४–७९५.

( २ ) विसौ. १९.

( ३ ) ज्योनि. ७३.

( ४ ) चका. ७९५.

( ५ ) विसौ. ४८.

चतुर्भिः खेचरैर्देयं ( ? ) बलिभिः पञ्चभिः शुभम् ।
षड्भिश्चैवोत्तमं प्रोक्तं सप्तभिश्चोत्तमोत्तमम् ॥
[१]न दातव्यं प्रयत्नेन लग्नं राहुयुतं ध्रुवम् ।
लग्ने बहुगुणा दोषाः स्वल्पा नाशुभकारकाः ।
न क्षमः पावकस्यात्र शान्त्यै जलकणो यथा ॥
[२]पञ्चभिरिष्टैरिष्टं पुष्टमनिष्टैरनिष्टमादेश्यम् ।
स्थानादिबलसमृद्धैश्चतुर्भिरपि पठ्यते यवनैः ॥
[३]भुङ्क्ते पुरुषत्रितयं मेषांशे लग्नगे कन्या ।
कामयते वृषभागे गौरिव वृषभं न भवेत्तृप्ता ॥
पत्युः प्रियाऽतिधनिनी
मिथुनांशे लग्नगे कन्या ।
त्यक्त्वा पतिं विचरति
कुलीरभागेऽन्यदेशेषु ॥
पैतृककुलेषु निवसति
सिंहांशविवाहिता सकृत्पुत्रा ।
कन्याभागे कन्या
कुलद्वयस्योन्नतिं कुरुते ॥
अत्यन्तपुत्रवती सुभगा
साध्वी तुलांशगे कन्या ।
तीक्ष्णरोदनशीला
वृश्चिकभागेऽप्रिया भर्तुः ॥
धन्वंशके प्रवृद्धा
धनधान्यसुखैः सुपुत्रा च ।
मृगभागे पुरुषाणां
न याति तृप्तिं सुवृद्धाऽपि ॥
व्यभिचरति कुम्भभागे
वितते यज्ञेऽपि दीक्षिता नारी ।
चपला सौभाग्यवती
प्रहसितवदना च मीनांशे ॥

( १ ) विसौ. ५०.

( २ ) चका. ७९९ (पञ्चभिरिष्टं च पुष्टमनिष्टमादेशम् । स्थानादिबलसमेतैश्चतुर्भिरपि यवनैः ॥ ); विसौ. ४८ स्थानादि (कालादि) रपि पठ्यते (रथ चोच्यते) ; ज्योनि. १५४ (=).

( ३ ) विसौ २०.

सदसत्फलस्य पाक-
श्चरांशके षड्भिरेव मासैस्तु ।
स्थिरराश्यंशे वर्षाद्
द्विशरीरांशे फलं मासात् ॥

अथ प्रत्येकं नवांशफलान्याह शौनकः— भुङ्क्ते पुरुषत्रितयमिति । विसौ. २०

## भविष्यपुराणम्

[१]विलोक्य गोत्रनक्षत्रे राशिकूटादिकं शुभम् ।
सुलग्ने सुमुहूर्ते च दद्याच्चैव यथाविधि ॥

## वराहमिहिरः

[२]क्रिये कुमारी पररक्तचित्ता
विहीनवित्ता गवि गोत्रता च ।
कुलद्वयानन्दकरी तृतीये
कुलीरलग्ने कुलटा नृशंसा ॥
[३]हरौ प्रसूता सकृदाश्रिता पितुः
पतिप्रिया च श्वशुरस्य षष्ठे ।
रूपाभिमानार्थवती तुलाधरे
तथाऽलिनि क्रन्दति नित्यमस्थिरा ॥
[४]धनुषि कुलटा तत्पूर्वार्धे सतीत्यपरे जगुः ।
मृगघटझषेष्वन्यासक्ता जरामुपगच्छति ॥

क्रियः मेषः । गौः वृषः । तृतीयं मिथुनम् । कुलीरः कर्कः । हरिः सिंहः । षष्ठं कन्या । अलिः वृश्चिकः । मृगः मकरः । संप्र. ७८४

( १ ) चद्रा. १०८६ ; कृभ. १०६७ गोत्र ( जन्म ).

( २ ) प्रपा. ३३१ पररक्त ( परिरक्त ) वित्ता ( पुत्रा ) गोत्रता ( गोपनी ) ; मपा. १६७ क्रिये कुमारी पर ( मेषे कुमारेष्वनु ) क्रमेण ज्योतिःसारसागरे ; विसौ. १९ पररक्त ( अनुरक्त ) मुक्तावल्याम् ; संप्र. ७८४.

( ३ ) प्रपा. ३३१ दाश्रिता ( दाश्रये ) षष्ठे ( षष्ठके ) उत्तरार्धे ( तुलादिमेधार्थवती तुलाधरे तथाऽलिमे कर्दमबुद्धिरस्थिरा । ) ; मपा. १६७ पति ( पितुः ) क्रमेण ज्योतिःसारसागरे ; विसौ. १९ पति ( पत्युः ) मुक्तावल्याम् ; संप्र. ७८४.

( ४ ) प्रपा. ३३१ ; मपा. १६७ क्रमेण ज्योतिःसारसागरे ; विसौ. १९ मुक्तावल्याम् ; संप्र. ७८४.

### श्रीधरीये

[1]श्रेष्ठास्तौलियमाङ्गनाघटधनुर्गोकर्किकण्ठीरवा
मध्याः सौम्ययुतास्तथोर्ध्ववदनाः सर्वे
विवाहे हिताः।
सौम्याः केन्द्रधनायपुत्रसहिताः
पापास्त्रिषष्ठायगाः
पूज्याः शुक्रगुरू मृतावशुभदौ
शुद्धो भवेत्सप्तमः ॥
[2]जन्मयोगशकुनादिविस्तरे
गोचरेण शुभदे नृयोषितोः ।
संप्रदानसमये गुणान्विते
पाणिपीडनविधिर्विधीयते ॥
[3]गुणेषु दोषेष्वधिकं विचिन्त्य
यदा तु दोषा बहवस्त्यजेत्तत् ।
यदा गुणाः सन्ति तदा विधेयाः
सदोषकालाः सगुणाश्च नेह ॥
सदोषकालाः एकविंशतिमहादोषकालाः ।

प्रपा. ३४२

अर्थात्प्रकरणाद्यैश्च लिङ्गौचित्यादिभिः सदा ।
देशकालादिभिश्चैव वाक्येतरविरोधतः॥
अपवादादिभिर्वाक्यैः सामान्यैर्न विरोधतः ।
विचार्य सहसा लग्नं प्रदद्यात्तद्विवृद्धये ।
सर्वतः सर्वमालोक्य ज्ञानी कालं समादिशेत् ॥

### महेश्वरः

[4]कन्यातौलिनृयुग्मसंज्ञभवनां-
शोढा कुमारी सती
स्याच्छेषेष्वसती सती तु कथिता
धन्वंशके कैश्चन ॥
[5]लग्नांशो निजनाथदृष्टसहितः
पत्युः शुभार्थं भवेत्
वध्वाश्चांशकसप्तमं निजगृह-
स्वामीक्षितं वा शुभम् ॥

### विवाहपटले

[1]कन्यातुलायमघटेषु विवाहकर्म
श्रेष्ठं तदन्यभवनेष्वशुभावहं स्यात् ।
केचित् प्रशस्तमपि तेषु वदन्ति तज्ज्ञा
बाहुल्यभाग्यवति तच्चरभेषु योगात् ॥

### विश्वामित्रीये

[2]राशीनामपि सर्वेषां द्विपदा राशयः शुभाः ।
तेषामपि तुलाराशिर्मिथुनं च प्रशस्यते ॥

युक्ता च ग्रहसंपत्त्या हीना नैषा प्रशस्यते ।
स्वगृहस्वगृहोच्चस्थैः सूरिसोमजभार्गवैः ॥

संयुक्ता वीक्षिता वाऽपि
नान्ययुक्ता न वीक्षिता ।
होरा बलवती ग्राह्या
तत्राप्यूर्ध्वमुखाः शुभाः ॥

### मुहूर्तचिन्तामणिः

[3]भार्या त्रिवर्गकरणं शुभशीलयुक्ता
शीलं शुभं भवति लग्नवशेन तस्याः ।
तस्माद्विवाहसमयः परिचिन्त्यते हि
तन्निघ्नतामुपगताः सुतशीलधर्माः ॥

शुभं भर्त्रादेरनुकूलं शीलं स्वभावः तेन युक्ता भार्या त्रिवर्गस्य धर्मार्थकामरूपस्य करणं स्थानमस्ति । तस्याः सुलग्नवशेन शीलं शुभं भवति । यतः सुतशील-धर्माः तन्निघ्नतां विवाहाधीनतां उपगताः प्राप्ताः । अतो हि निश्चयेन विवाहसमयः परिचिन्त्यते विचार्यते इति ।
पीटी.

---

(१) प्रपा. ३३१ (=) ; संप्र. ७८३ उत्तरार्धं नास्ति ; संग. २३२ संप्रवत्.
(२) प्रपा. ३१८ : ३२७ (=).
(३) प्रपा. ३४२.
(४) विसौ. २०.
(५) विसौ. २१.

(१) प्रपा. ३३१ ; संप्र. ७८३ भाग्यवति (भोगरति) योगात् (योगाः).
(२) प्रपा. ३३१. अन्त्ययोर्द्वयोर्विश्वामित्रीयत्वे संदेहः.
(३) मुचि. ६।१ ; संव. १३८.

## लघुजातके

[1]अधिपयुतो दृष्टो वा
बुधजीवनिरीक्षितश्च यो राशिः ।
स भवति बलवान्यदा
युक्तो दृष्टोऽपि वा शेषैः ॥

## अनिर्दिष्टकर्तृकवचनानि

[2]यो जन्मनि जन्मगृहा-
दष्टमराशिस्थितो भवेत्खचरः ।
स विवाहलग्नवर्ती
शुभोऽप्यशुभं ददाति फलम् ॥

मीने मेषे चतुर्नाड्यश्चतुः सार्धं वृषे घटे ।
पञ्चपादो मृगे युग्मे पञ्चार्धं धन्विकर्कटे ।
पञ्चार्धं वृश्चिके सिंहे पञ्चपादस्तुलाङ्गना ॥

अथ लग्नप्रमाणम्— मीने मेष इति । एतत्तु साधारणम् । प्रपा. ३३१

[3]मीने मेषे तु गावीरा वृषे कुम्भे तु खे नरा ।
मृगे युग्मे च गवडी कर्के चापे च भूनलः ।
चौराङ्गा वृश्चिके सिंहे तुला कन्या च
रूकला (?) ॥

(१) संर. ४७१.
(२) चका. ७९९.
(३) प्रपा. ३३१.

पम्पाक्षेत्रप्रदेशे तु मेषादीनां विघटिकारूपेण विशेष उक्तः— मीने मेषे इति । प्रपा. ३३१

सौम्ययुतास्तथोर्ध्ववदनाः
सर्वे विवाहे हिताः ॥

एवं राशिजं फलमुक्त्वा ग्रहजं फलमाह— सौम्ययुता इति । सर्वे राशयः शुभयुक्ता ऊर्ध्वमुखा यदि शुभदाः । प्रपा. ३३१

[1]सुखघ्नं तुर्यमुद्वाहे द्वादशं वित्तनाशकृत् ।
जन्मभाज्जन्मलग्नाच्च मृत्युदं लग्नमष्टमम् ॥
चतुर्थं सगुणं देयं द्वादशं च गुणाधिकम् ।
सगुणं चाष्टमं लग्नं त्याज्यमंशस्तथाऽष्टमः ॥
जन्मर्क्षजन्मलग्नाभ्यां रन्ध्रेशावष्टमौ च यौ ।
विलग्नसंस्थितानेतांस्तद्द्वादशांशानपि त्यजेत् ॥

[2]मङ्गलं कौतुकं कृत्वा प्राशनं च यथोदितम् ।
हस्तालम्बनकं कुर्यात्स्वामिदृष्टे नवांशके ॥

[3]तदेव लग्नं सुदिनं तदेव
ताराबलं चन्द्रबलं तदेव ।
विद्याबलं दैवबलं तदेव
लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि ॥

(१) ज्योनि. १५३-१५४.
(२) विसौ. ५९.
(३) प्रपा. ३४२ ; संर. ५३७.

## महादोषगणना

### वसिष्ठः

[1]निमित्तसंयोगनिसर्गजानां
मध्ये महादोषचयं ब्रवीमि ॥
[2]पञ्चाङ्गदोषो रविसंक्रमश्च
ससग्रहः कर्तरिकांशदोषौ।
चन्द्रारिरिष्फाष्टमपापवर्गौ
कुजोऽष्टमस्थो भृगुः षट्कसंस्थः ॥
[3]गण्डान्तखार्जूरिकवारदोष-
विषाख्यनाड्योऽष्टमलग्नराशी।
अकालवृष्टिः कुमुहूर्तदोषो
महाव्यतीपातसवैधृतोत्थः ॥
[4]लग्नास्तजाता ग्रहणर्क्षजाताः
पापर्क्षविद्धर्क्षसमुद्भवा ये।
उत्पातभोल्का महदाख्यदोषाः
सर्वेषु देशेषु सदा विवर्ज्याः ॥
[5]एकोत्तरा विंशतिरत्र दोषाः
स्वसंहितायां च पितामहेन।
तस्मिन्महादोषचयेऽपि कार्यं
कृतं च तन्नाशमुपैत्यवश्यम् ॥

(१) वसं. ३२।२०.

(२) वसं. ३२।२१ ससग्रहः (ससंग्रहः); विसौ. २० कांशदोषौ (काख्यदोषः) कुजोऽष्टमस्थो भृगुः षट्कसंस्थः (कुजाष्टमाख्यो भृगुषट्कदोषः).

(३) वसं. ३२।२२,२३ पातस (पातज); विसौ. २०.

(४) वसं. ३२।२३,२४; विसौ. २० स्तजाता (स्तशुद्धिः) र्क्षजाताः (र्क्षजातः) : ३२ (महदाख्यदोषाः सर्वेषु देशेषु सदा विवर्ज्याः) एतावदेव.

(५) वसं. ३२।२२,२४; विसौ. २१ त्यवश्यम् (ति नूनम्) : ३२ चयेऽपि (भयेऽपि) उक्त.

### नारदः

[1]एकविंशतिदोषाणां नामरूपफलानि च।
पितामहोक्तं संवीक्ष्य तानि वक्ष्ये समासतः ॥
[2]पञ्चाङ्गशुद्धिरहितो दोषस्त्वाद्यः प्रकीर्तितः।
उदयास्तशुद्धिहीनो द्वितीयः सूर्यसंक्रमः ॥
[3]तृतीयः पापषड्वर्गो भृगुः षष्ठः कुजोऽष्टमः।
गण्डान्तं कर्तरी रिष्फषडष्टेन्दुश्च संग्रहः ॥
[4]दम्पत्योरष्टमं लग्नं राशिर्विषघटी तथा।
दुर्मुहूर्तो वारदोषः खार्जूरिकसमाङ्घ्रिभम् ॥
[5]ग्रहणोत्पातभं क्रूरविद्धर्क्षं क्रूरसंयुतम्।
कुनवांशो महापातो वैधृतिश्चैकविंशतिः ॥

### विवाहपटले

[6]ज्ञेयाश्च दोषा उदयास्तहीनो
लग्नं तथा वा द्विपदोंऽशकश्च (?)।
अर्कार्किभौमैः शशिना प्रयोगो
वैवाहिके कर्मणि वृद्धदोषाः ॥

(१) ज्योना. २७।२०–२१ पृ. ५२ महोक्तं (महोक्तान्) तानि वक्ष्ये (तान् वक्ष्येऽत्र); प्रपा. ३२९; विसौ. २०; संप्र. ७८४–७८५; ज्योनि. १५३ पृ.

(२) ज्योना. २७।२१–२२ पृ. ५२; प्रपा. ३२९; विसौ. २०; संप्र. ७८५; ज्योनि. ६९ हीनो (रहितो).

(३) ज्योना. २७।२२-२३ पृ. ५२ षष्ठः (षट्के) संग्रहः (संग्रहाः); प्रपा. ३२९ संग्रहः (सग्रहः); विसौ. २० कुजोऽष्टमः (कुजाष्टमः); संप्र. ७८५ कुजोऽष्टमः (कुजाष्टमः); ज्योनि. ६९ प्रपावत्.

(४) ज्योना. २७।२३–२४ पृ. ५२ तथा (भवम्) उत्तरार्धं (दुर्मुहूर्तो वारदोषाः खार्जूरीकः समाङ्घ्रिजः।); प्रपा. ३२९; विसौ. २० दुर्मुहूर्तो वारदोषः (कुमुहूर्तो वारदोषाः); संप्र. ७८५; ज्योनि. ६९.

(५) ज्योना. २७।२४–२५ पृ. ५२; प्रपा. ३२९; विसौ. २०; संप्र. ७८५; ज्योनि. ६९.

(६) विसौ. ५२.

## १ पञ्चाङ्गदोषः

### वसिष्ठः

[1]क्रमशस्तिथिवारर्क्षयोगतिथ्यर्धसंज्ञकम् ।
तत्पञ्चाङ्गमिति प्रोक्तं पुण्यमर्केन्दुसंभवम् ॥

पञ्चाङ्गसंज्ञप्रभवः स दोष-
स्तस्मिन्कृतं मङ्गलसंचयं यत् ।
दहत्यमोघं निखिलं च यद्व-
द्दावानलो विस्तृतकाननं यत् ॥

### नारदः

[2]तिथिवारर्क्षयोगानां करणस्य च मेलनम् ।
पञ्चाङ्गमस्य संशुद्धिः पञ्चाङ्गं समुदाहृतम् ॥

[3]तच्छुद्धिहीने यत्कर्म तन्निरर्थकमीरितम् ।
त्यजेत्पञ्चाष्टिकं चापि विषसंयुक्तदुग्धवत् ॥

पञ्च अष्टयो यस्मिन्निति पञ्चाष्टिकम् । अष्टिः हानिः दोष इति यावत् । संप्र. ७८५

पञ्चाङ्गदोषपरिहारोपायः

[4]योगस्य हेम करणस्य च धान्यमिन्दोः
शङ्खं च तण्डुलमणी तिथिवारयोश्च ।
ताराबलाय लवणं वसु गां च राशे-
र्दद्याद्द्विजाय कनकं शुचि नाडिकायाः ॥

---

(१) वसं. ३२।३५-३६.

(२) ज्योना. २७।२५-२६ पृ. ५२ ; प्रपा. ३२९ उत्तरार्धे ( पञ्चाङ्गमस्य या शुद्धिः पञ्चशुद्धिरुदाहृता । ) ; विसौ. २१ ( तिथिवारर्क्षकरणयोगाः पञ्चाङ्गसंज्ञिताः । ) पू. ; संप्र. ७८५ ( तिथिवारर्क्षकरणयोगाः पञ्चाङ्गसंज्ञिताः । पञ्चाङ्गस्य च या शुद्धिः पञ्चशुद्धिरुदाहृता ॥ ) ; ज्योनि. ६९ उत्तरार्धे ( पञ्चाङ्गमस्य शुद्धिस्तु पञ्चाङ्गशुद्धिरीरिता । ) ; संग. २३१ संप्रवत्, वीरमित्रोदये.

(३) ज्योना. २७।२६ पृ. ५२ ( यस्मिन् पञ्चाङ्गदोषोऽस्ति तस्मिंल्लग्नं निरर्थकम् । ) पू. ; प्रपा. ३२९ ज्योनावत्, पू. ; विसौ. २१ पू. ; संप्र. ७८५ ; ज्योनि. ७० पूर्वार्धे ज्योनावत्, पञ्चाष्टिकं चापि ( पञ्चेष्टिकं वाऽपि ) ; संग. २३१ चापि ( वाऽपि ) वीरमित्रोदये.

(४) ज्योनि. ७०.

### कश्यपः

[1]त्रिप्रकारेण सा शुद्धिर्न चेल्लग्नं च निन्दितम् ।
अपि पञ्चाष्टिकं लग्नमनेकगुणसंयुतम् ।
त्यजेद्यथा शुनाऽऽघ्रातं तथा हव्यं घृतप्लुतम् ॥

---

## २ संक्रान्तिदोषः

### वसिष्ठः

[2]विषुवतोऽयनतोऽपि दिनत्रयं
हरिपदे षडशीतिमुखेषु च ।
पूर्वतोऽपि परतोऽपि संक्रमा-
न्नाडिकाश्च खलु षोडश षोडश ॥

[3]संक्रान्तिदोषेऽप्यचिरात्कृतो य
उद्वाहपूर्वोऽखिलमङ्गलौघः ।
लाक्षासमूहो ज्वलदग्निमध्ये
विलीयते यद्वदशेषकूटः ॥

[4]यदा यत्र प्रवेशः स्यात्तदा तद्राशिसंक्रमः ।
तस्मिन्नपि तदा त्याज्या नाड्यः षोडश षोडश ॥

विषुवदिति मेषतुले । अयनमिति मकरकर्कटौ । हरिपद इति वृषसिंहवृश्चिककुम्भाः । षडशीतिमुख इति मिथुनकन्याधनुर्मीनाः । प्रपा. ३३२

---

(१) ज्योनि. ७०.

(२) वसं. ३२।३७ ; प्रपा. ३३२ ( विषुवदयनयोर्दिवसत्रयं हरिपदे षडशीतिमुखेऽपि च । पूर्वतोऽपि परतोऽपि संक्रमात्पुण्यकालघटिकास्तु षोडश ॥ ) ; विसौ. १२ (=) प्रपावत्, उत्त. ; संप्र. ७८६ पूर्वार्धे ( विषुवतोरयनयोर्दिनत्रयं हरिपदेषु षडशीतिमुखेषु । ) षोडश षोडश ( षोडश त्यजेत् ) ; विपा. ७५५ (=) पूर्वार्धे संप्रवत्, षोडश षोडश ( षोडशेति च ).

(३) वसं. ३२।३८ ( संक्रान्तिदोषे त्वचिरात्कृतं यदुद्वाहपूर्वाखिलमङ्गलौघम् । लाक्षासमूहं ज्वलिताग्निमध्ये विलीयते यद्वदशेषकोटिः ॥ ) ; प्रपा. ३३२. पीयूषधाराटीकायां 'यद्वदशेषकूटः' इत्यत्र 'तद्वदशेषमेतत्' इति पाठः ।

(४) वसं. ३२।३९.

## नारदः

[1]त्याज्याः सूर्यस्य संक्रान्तेः पूर्वतः परतः सदा।
विवाहादिषु कार्येषु नाड्यः षोडश षोडश ॥

अत्र संक्रान्तिपदं हरिपदषडशीतिमुखपरं, विषुवदयनयोर्दिनत्रयस्य परिहार्यत्वस्मरणात्। संप्र. ७८६

## कश्यपः

[2]यत्कृतं मङ्गलं तत्र नाशमायात्यसंशयम् ॥

## ज्योतिष्प्रकाशे

[3]अर्वाक् षोडश नाड्यः संक्रान्तेः पुण्यदाः परतः।
उपनयनव्रतयात्रापरिणयनादौ विवर्ज्यास्ताः ॥

## मुहूर्तचिन्तामणिः

[4]विषुवायनेषु परपूर्वमध्यमान्
दिवसांस्त्यजेदितरसंक्रमेषु हि।
घटिकास्तु षोडश शुभक्रियाविधौ
परतोऽपि पूर्वमपि संत्यजेद्बुधः ॥

सूर्यसंक्रमणाख्यं दोषमाह— विषुवेति। विषुवं तुलामेषसंक्रान्ती। अयने कर्कमकरसंक्रान्ती। एवं चतसृषु विषुवायनाख्यासु संक्रान्तिषु परपूर्वमध्यमान् गतागामिवर्तमानान् दिवसान् बुधः शुभक्रियाविधौ विवाहयज्ञोपवीतादिशुभकार्येषु त्यजेत्। इतरेष्वष्टसंक्रमेषु संक्रमकालात्परतः अग्रेऽपि पूर्वं प्रागपि षोडशघटिकाः मिलित्वा द्वात्रिंशद्घटिकास्त्यजेत्। किं तद्दिनत्रयं त्याज्यम्? किं संक्रान्तिकालात् प्राग्दिनत्रयं, उत तदनन्तरं, उत मध्यमं वा? इति पक्षत्रयसंभवे निर्णयमाह गुरुः— अयने विषुवे पूर्वं परं मध्यं दिनं त्यजेत्। अन्यसंक्रमणे पूर्वापराः षोडशनाडिकाः ॥' इति। अयं च निषेधः सायनसंक्रान्तिष्वपि ध्येयः। यदाह वसिष्ठः— 'यदाऽयनप्रवेशः स्यात्तदा तद्राशिसंक्रमः। तस्मिन्नपि दिने त्याज्या नाड्यः षोडश षोडश ॥' इति। शौनकः— 'अयनद्वये समूढा भर्तारं नाभिनन्दते नारी। विषुवद्द्वयेऽपि विधवा षडशीतिमुखेषु सा म्रियते ॥ विष्णुपदेषु विगीता कन्या विकलेन्द्रिया व्यतीपाते। वैधृतिविष्टयोर्भ्रष्टा सुभगा शेषेषु करणेषु ॥' इति। विगीता पुंश्चलीत्याद्यभिशापेन प्रसिद्धा। पीटी.

देवव्यङ्कर्तवोऽष्टाष्टौ
नाड्योऽङ्काः खनृपाः क्रमात्।
वर्ज्याः संक्रमणेऽर्कादेः
प्रायोऽर्कस्यातिनिन्दिताः ॥

संक्रान्तिप्रसङ्गात्सकलग्रहाणां संक्रान्तिघटीराह—देवेति। अर्कादेः सूर्यादेः ग्रहसमूहस्य एता घटिकास्त्याज्याः। यथा सूर्यस्य संक्रमणकालात् प्राक् पश्चाच्च मिलित्वा त्रयस्त्रिंशद्घटिकास्त्याज्याः। एवं चन्द्रस्य द्वे घटिके, भौमस्य नव, बुधस्य षट्, गुरोरष्टाष्टौ अष्टाशीतिः, शुक्रस्याङ्काः नव, शनेः खनृपाः षष्ट्यधिकशतघटिका वर्ज्याः। तत्र अर्कस्य घटिकाः प्रायः बाहुल्येन अतिनिन्दिताः। पीटी.

[1]अयने विषुवे पूर्वं परं मध्यं दिनं त्यजेत्।
अन्यसंक्रमणे पूर्वाः पराः षोडश नाडिकाः ॥

## अनिर्दिष्टकर्तृकवचनम्

[2]रव्यादीनां संक्रमे रामरामा
द्वौ(?द्वे) नन्दाः स्युस्तर्कनाड्योऽष्टनागाः।
नाड्योऽङ्काः स्युः खाङ्क(?खाङ्ग)चन्द्राः क्रमेण
वर्ज्याः प्रायोऽर्कस्य दुष्टाः प्रदिष्टाः ॥

---

(१) ज्योना. २७।२९ पृ. ५२–५३; प्रपा. ३३२; संप्र. ७८६ सदा (तथा); विपा. ७५५ (=) संक्रान्तेः (संक्रान्तौ); ज्योनि. ७०.

(२) ज्योनि. ७०.

(३) गभा. ६८; सिन्धु. १०८०; पुम. ४४९ पूर्वार्धे (अर्वाक् षोडश नाड्यस्तु संक्रान्तेः परतः पराः।) परिणयनादौ (विवाहादौ); संर. ४७५.

(४) मुचि. ६।७९–८०.

(१) संग. २३२ चिन्तामणौ इत्युक्तम्.

(२) संग. २३३.

## ३ सग्रहदोषः ( संग्रहदोषः )

### वासिष्ठः

[1]आदित्यभूमिपुत्राद्यैः संयुक्तश्चन्द्रमा यदा ।
सग्रहाख्यो महादोषो हालाहलविषोपमः ॥
यः पापखेटोद्भवसग्रहाख्यो
दोषः स लग्नोत्थगुणान् समस्तान् ।
निहन्ति मत्तेभगणाननेका-
नेकोऽपि सिंहः प्रबलश्च यद्वत् ॥
[2]दारिद्र्यं रविणा कुजेन मरणं
सौम्येन न स्युः प्रजाः
दौर्भाग्यं गुरुणा सितेन सहिते
चन्द्रेऽथ सापत्न्यकम् ।
प्रव्रज्याऽर्कसुतेन सेन्दुजगुरौ
वाच्छन्ति केचिच्छुभं
व्याधैर्मृत्युरसद्ग्रहैः शशियुतै-
र्दीर्घः प्रयासः शुभैः ॥

### नारदः

[3]शशाङ्के ग्रहसंयुक्ते दोषः संग्रहसंज्ञकः ।
तस्मिन् संग्रहदोषे तु विवाहं नैव कारयेत् ॥
[4]सूर्येण संयुते चन्द्रे दारिद्र्यं भवति ध्रुवम् ।
कुजेन मरणं व्याधिः सौम्येन त्वनपत्यता ॥
[5]दौर्भाग्यं गुरुणा युक्ते सापत्न्यं भार्गवेण तु ।
प्रव्रज्या सूर्यपुत्रेण राहुणा कलहः सदा ॥
[1]केतुना संयुते चन्द्रे नित्यं कष्टं दरिद्रता ।
पापद्वययुते चन्द्रे दम्पत्योर्मरणं भवेत् ॥
[2]शुभग्रहयुते चन्द्रे स्वोच्चस्थे मित्रराशिगे ।
दोषाय न भवेल्लग्नं दम्पत्योः श्रेयसे सदा ॥
[3]स्वक्षेत्रगः स्वोच्चगो वा मित्रक्षेत्रगतो यदि ।
पापग्रहयुतश्चन्द्रः करोति मरणं तयोः ॥
[4]स्वक्षेत्रगे स्वोच्चगे वा मित्रक्षेत्रगते यदि ।
युतिर्दोषाय न भवेद्दम्पत्योः श्रेयसे तदा ॥
[5]संग्रहे प्रोक्तनक्षत्रे विवाहो नैव शोभनः ।
राशिभेदे न दोषः स्यादेकतारास्वपीन्द्र (?) सः ॥
एकस्मिन्नपि धिष्ण्ये भिन्ने राशौ
खलग्रहे शशिनि ।
तच्चन्द्रर्क्षे कुर्याद्विवाहयात्रादिकं सर्वम् ॥

### बृहस्पतिः

[6]विधौ शुभरते सौम्यैर्दृष्टे वर्गे निजे सताम् ।
सक्रूरे दुःस्थितं दोषं व्यपोहति विधुस्तदा ॥

---

( १ ) वसं. ३२।४०–४१.

( २ ) वसं. ३२।४२ ; प्रपा. ३३३ व्याधैर्मृ ( ज्ञार्यैर्मृ ) दीर्घः प्रयासः ( दीर्घप्रवासः ) ; ज्योनि. ७२ चन्द्रेऽथ ( चन्द्रे च ) दीर्घः प्रयासः ( दीर्घप्रवासः ) मुहूर्तदर्पणे.

( ३ ) ज्योना. २७।४७–४८ पृ. ५४ ग्रहसंयुक्ते ( पापसंयुक्ते ) ; प्रपा. ३३३ संग्रहसंज्ञकः ( सग्रहसंज्ञितः ) संग्रहदोषे ( सग्रहदोषे ) ; संप्र. ७८८ ; ज्योनि. ७२.

( ४ ) ज्योना. २७।४८–४९ पृ. ५४ सौम्येन ( विबुधे ); प्रपा. ३३३ ; संप्र. ७८८ ; संग. २३३.

( ५ ) ज्योना. २७।४९–५० पृ. ५४ युक्ते ( चैव ) सूर्य ( रवि ) ; प्रपा. ३३३ ; संप्र. ७८८–७८९ प्रव्रज्या ( प्रकृत्या ) कलहः ( कलहं ) ; ज्योनि. ७२ उत्त. ; संग. २३३ तु ( च ) शेषं संप्रवत्.

( १ ) ज्योना. २७।५०–५१ पृ. ५४ कष्टं ( कष्ट ) ; प्रपा. ३३३ पू. ; संप्र. ७८९ कष्टं ( कष्ट ) द्वय ( ग्रह ) ; ज्योनि. ७२ कष्टं ( कष्ट ) पू. ; संग. २३३ द्वय ( ग्रह ).

( २ ) ज्योना. २७।५१–५२ पृ. ५४ मित्र ( राहु ) श्रेयसे सदा ( मरणप्रदम् ) ; प्रपा. ३३३ ; संप्र. ७८९ ; ज्योनि. ७३ श्रेयसे ( प्रेयसे ) ; संग. २३३.

( ३ ) ज्योना. २७।५२–५३ पृ. ५४ मित्रक्षेत्रगतो यदि ( मित्रग्रहयुते तथा ) पापग्रहयुतश्चन्द्रः ( यदि पापग्रहश्चन्द्रः ) ; प्रपा. ३३३ यदि ( ऽपि वा ) ; संप्र. ७८९ ; ज्योनि. ७२ ; संग. २३३.

( ४ ) विसौ. ३०. पीयूषधाराटीकायां तु पूर्वार्धे 'स्वक्षेत्रगः स्वोच्चगो वा मित्रक्षेत्रगतो विधुः' इति पाठः ।

( ५ ) ज्योनि. ७३.

( ६ ) ज्योनि. ७३.

[1]स्वगृहविधुगृहस्थः सौम्यभागस्थितो वा
गुरुरुपचययातः स्वांशगो वा बलाढ्यः।
अपि गुरुतरदोषा यान्ति नाशं यथैव
श्रुतिरपि समधीता पापनाशाय दृष्टा ॥

[2]उदयभवनतोऽरित्र्यायगा दीप्तपापा
निजगृहगतसौम्याः प्राणिनः कण्टकस्थाः।
यदि शशिनि शुभस्थे कर्मणि प्रस्थिते वा
निजमुदयगदोषं नाशयेच्छीतरश्मिः ॥

### मुहूर्तचिन्तामणिः

[3]चन्द्रे सूर्यादिसंयुक्ते दारिद्र्यं मरणं शुभम् ।
सौख्यं सापत्न्यवैराग्यं पापद्वययुते मृतिः ॥

सूर्ययुक्ते चन्द्रे दारिद्र्यं स्यात् । भौमादियोगे मरणादिफलं क्रमेण स्यादित्यर्थः । पीटी.

### मुहूर्तदर्पणे

[4]भूपाद्भयं रिपुभयं व्यसनं प्रवासं
वित्तक्षयं विदरणं च शुभक्रियासु ।
कर्तुः करोति शशभृत्क्रमशोऽर्कपूर्वै-
रेवं ग्रहैः सह विशन्नुडुमेकराशौ ॥

### अनिर्दिष्टकर्तृकवचनानि

[5]लग्ने केन्द्रे त्रिकोणे वा शुभस्थाने बलान्विते ।
पापांशेन्दूत्थदोषौघं विजहाति न संशयः ॥

[6]स्ववर्गस्थः शुभः केन्द्रे त्रिकोणे वा स्वतुङ्गगः ।
विधौ पापांशगे दोषान् जहाति बलसंयुतः ॥

(१) प्रपा. ३३६ ; संप्र. ७९७ गृहस्थः सौम्यभागस्थितो वा (गृहोद्यत्सौम्यभागस्थितश्चेत्) गो वा (गोऽसौ) अपि (यदि).

(२) प्रपा. ३३६ ; संप्र. ७९७-७९८ गा दीप्त (गादित्य) कर्मणि (कर्मणा).

(३) मुचि. ६।४५.

(४) ज्योनि. ७२.

(५) प्रपा. ३३६ लग्ने (लग्नात्) शुभस्थाने बलान्विते (शुभः स्थाने बलान्वितः) शेन्दूत्थ (शेनोत्थ); संप्र. ७९८.

(६) प्रपा. ३३६; संप्र. ७९८.

[1]गुरुः स्वकीयवर्गस्थो बलवान् कण्टकस्थितः ।
पश्यन् स क्रूरशीतांशुं तं दोषं विलयं नयेत् ॥

[2]क्रूरग्रहयुतश्चन्द्रः शुभांशे शुभकर्मकृत् ।
शुभदृष्टो यदा नाशं स पापोत्थं फलं नयेत् ॥

---

## ४ कर्तरीदोषः

### वसिष्ठः

[3]लग्नस्य पृष्ठाग्रगयोरसाध्वोः
सा कर्तरी स्यादृजुवक्रगत्योः ।
तावेव शीघ्रौ यदि वक्रचारौ
न कर्तरी चेति पितामहोक्तिः ॥

[4]यः कर्तरी नाम महान् स दोषो
लग्नोद्भवानेकशुभग्रहोत्थान् ।
गुणान्निहन्ति प्रबलानशेषान्
व्याघ्रो यथा गोसमितिं समस्ताम् ॥

[5]क्रूरग्रहमध्यगते लग्ने चन्द्रेऽथवा करग्रहणम् ।
ते यमसदनाभिमुखं गमनं चेच्छन्ति कन्यायाः ॥

[6]पापयोः कर्तरीकर्त्रोर्नीचशत्रुगृहस्थयोः ।
यदा चास्तगयोर्वाऽपि कर्तरी नैव दोषदा ॥

(१) प्रपा. ३३६ कण्टकस्थितः (लग्नकेन्द्रगः) शीतांशुं तं दोषं (शीतांशुस्तद्दोषं); ज्योनि. ७२.

(२) प्रपा. ३३६.

(३) वसं. ३२।४३ लग्नस्य (लग्नेऽस्य); प्रपा. ३३३ ब्राह्मे; विसौ. २२ शीघ्रौ (सौम्यौ) चेति (सेति); ज्योनि. ७२ पितामहोक्तिः (वदन्ति गार्ग्याः) राजमार्तण्डः.

(४) वसं. ३२।४४ महान् स (महान् हि); प्रपा. ३३३ नेकशुभग्रहोत्थान् (नंशगुणान् समस्तान्) ब्राह्मे; विसौ. २२ यः कर्त (यत्कर्त) नेकशुभ (नंशकग) गुणान्निहन्ति प्रबलानशेषान् (निहन्ति सर्वान्प्रबलान्गुणौघान्).

(५) वसं. ३२।४५ ; प्रपा. ३३३ ग्रहणम् (ग्रहणे) चेच्छन्ति (वाञ्छन्ति) बृहस्पतिः ; विसौ. २२ ग्रहम (द्वयम) (ते०) चेच्छन्ति कन्यायाः (वाञ्छन्ति कन्यानाम्); संग. २४५ चेच्छन्ति (वाञ्छन्ति).

(६) वसं. ३२।४६ ; प्रपा. ३३३ गयोर्वाऽपि (मयो वाऽपि) बृहस्पतिः; विसौ. २२ चास्त (वाऽस्त); संप्र. ७८८; ज्योनि. ७२ शत्रु (राशि) बादरायणः; संग. २४५.

[1]विधौ धनायगे शुभग्रहेऽथवाऽन्त्यगे गुरौ ।
न कर्तरी भवत्यहो जगाद बादरायणः ॥

[2]एकार्गलोपग्रहपातलत्ता-
जामित्रकर्तर्युदयादिदोषाः ।
नश्यन्ति चन्द्रार्कबलोपपन्ने
लग्ने यथाऽर्काभ्युदयेऽन्धकारः ॥

## नारदः

[3]लग्नस्य पृष्ठाग्रगयोरसाध्वोः
सा कर्तरी स्यादृजुवक्रगत्योः ।
तावेव शीघ्रं यदि वक्रचारौ
नो कर्तरीति न्यगदन्मुनीन्द्रः ॥

[4]लग्नाभिमुखयोः पापग्रहयोरुभयस्थयोः ।
सा कर्तरीति विज्ञेया दम्पत्योर्गलकर्तरी ॥

[5]कर्तरीदोषदुष्टं यल्लग्नं तत्परिवर्जयेत् ।
अपि सौम्यग्रहैर्युक्तं गुणैः सर्वैः समन्वितम् ॥

## बृहस्पतिः

[6]लग्नाद् द्विरिष्फगौ क्रूरौ त्र्यमेतत्समांशगम् ।
तदा कर्तरिजो दोषो नान्यथा भावजं फलम् ॥

## बादरायणः

[1]न हि कर्तरिजो दोषः सौम्ययोर्यदि जायते ।
शुभग्रहयुतं लग्नं क्रूरयोर्नास्ति कर्तरी ॥

## लल्लः

[2]क्रूरयोरितरयोश्च कर्तरी
नो शुभा तनुशशाङ्कयोर्न तत् ।
लग्नमाह शुभयोश्च कर्तरी
पापयोश्च शुभमध्यवर्तिनी ॥

## विवाहवृन्दावनम्

[3]खलकृता तनुरोहिणिमित्रयो-
र्दुरधरा विधुरां कुरुते वधूम् ॥

अथ दुरधरा(कर्तरी)दोषं कथयति— खलकृतेति । तनुरोहिणिमित्रयोः लग्नचन्द्रयोः खलकृता पापग्रहजनिता दुरधरा कर्तरी वधूं विधुरां दुःखिनीं कुरुते ।
लक्ष्मी.

## राजमार्तण्डे

[4]व्यये मार्गगतिः क्रूरो
वक्री क्रूरो धने यदि ।
तौ च लग्नांशतुल्यौ चेत्तदा घोराख्यकर्तरी ॥
महाविघ्नप्रदा ज्ञेया विवर्ज्या शुभकर्मणि ।
इति सत्यपि लग्नं चेच्छुभाढ्यं
नैव दोषकृत् ॥
क्रूरकर्तरिसंयुक्तं लग्नं चन्द्रं न च त्यजेत् ।
केन्द्रत्रिकोणसंस्थेषु गुरुभार्गववित्सु च ॥

## मुहूर्तचिन्तामणिः

[5]लग्नात्पापावृज्वनृजू व्ययार्थस्थौ यदा तदा ।
कर्तरी नाम सा ज्ञेया मृत्युदारिद्र्यशोकदा ॥

---

(१) ज्योनि. ७१ (=) धनायगे (धनोपगे); संग. २४५.

(२) वसं. ३२।१२९ ऽन्धकारः (तु दोषाः); ज्योनि. ७२,१५३.

(३) ज्योना. २७।४३ पृ. ५३–५४; संग. २४५ वक्रगत्योः (वक्रयोश्च) शीघ्रं (शीघ्रौ) नो कर्तरीति न्यगदन्मुनीन्द्रः (न कर्तरी चेति पितामहोक्तिः).

(४) ज्योना. २७।४४ पृ. ५४ पाप (पार्श्व) गैल (र्गत); प्रपा. ३३३; विसौ. २२; संप्र. ७८८; ज्योनि. ७१ योरुभयस्थयोः (योर्ऋजुवक्रयोः).

(५) ज्योना. २७।४५ उत्त.; प्रपा. ३३३; विसौ. २२; संप्र. ७८८ यल्लग्नं तत् (यत्तच्छ्यं); ज्योनि. ७१.

(६) ज्योनि. ७१ लग्नाद् (लग्न); संग. २४५ मेतत् (मेव) शगम् (शकम्) जो दोषो (दोषाऽयं) नारदीये.

(१) ज्योनि. ७२.

(२) ज्योनि. ७१.

(३) विवृ. ५।७.

(४) ज्योनि. ७२. पीयूषधाराटीकायां प्रथमतृतीयश्लोकौ गर्गस्य नाम्ना निर्दिष्टौ.

(५) मुचि. ६।४४.

कर्तरीदोषमाह— लग्नादिति । यदा पापग्रहौ लग्नात् व्ययार्थस्थौ ऋज्वनृजू द्वादशस्थः पापग्रहो मार्गगतिः द्वितीयस्थः पापग्रहो वक्री स्यात्तदा कर्तरी नाम दोषः । इयं कर्तरी चन्द्रस्यापि द्रष्टव्या । अत्र लग्नादित्युपलक्षणात् सर्वेषामपि भावानां कर्तरी दोषो ध्येयः । तत्र लग्ने कर्तरी यदा महादोषकरी, लग्नभङ्गाधायकत्वात् । तस्या अन्यत्र तादृशदोषाभाव इति तत्त्वम् । पीटी.

[1]पापौ कर्तरिकारकौ रिपुगृहे
नीचास्तगौ कर्तरी-
दोषो नैव ... ... ... ... ... ॥

तत्र कर्तर्यपवाद उच्यते । यौ ग्रहौ क्रूरौ कर्तरी-कारकौ रिपुगृहे शत्रुगेहे स्थितौ नीचेऽस्तगौ स्वनीचराशिस्थितौ अस्तंगतौ वा तदा कर्तरी नैव स्यात् । पीटी.

### ज्योतिःसागरे

[2]पापमध्यगते चन्द्रे पापसंपर्कगेऽपि वा ।
शुभकर्म न कर्तव्यं तथा लग्ने कदाचन ॥
भवति यदा तुहिनांशुः
क्रूरद्वयमध्यगो विलग्ने वा ।
यात्रादीनि तदानीं
नोपदिशेदिष्टकर्माणि ॥

### भास्करव्यवहारे

[3]क्रूरयोः सौम्ययोर्वाऽन्त-
र्लग्नं वा यदि वा शशी ।
विवाहे कर्तरी ज्ञेया शुभक्रूरान्तरे तथा ॥

### फलप्रदीपे

[4]क्रूरयोः कर्तरी नेष्टा महाविघ्नप्रदा ध्रुवम् ।
सौम्ययोर्नातिदुष्टा स्यान्मध्यमा
पापसौम्ययोः ॥

(१) मुचि. ६।८८.
(२) ज्योनि. ७१.
(३) ज्योनि. ७१.
(४) ज्योनि. ७१.

### अनिर्दिष्टकर्तृकवचने

[1]यदि युजि सितपक्षे कृष्णपक्षे तथौजे
शुभदिनयुततिथ्यां शोभनांशे विधौ च ।
गतवति बहुदोषाः कर्तरीत्यादयो ये
लयमथ समियुस्ते पापवत्कृच्छ्रकर्तुः ॥
[2]क्रूरद्वयस्यान्तरगं विलग्नं
मृतिप्रदं चन्द्रमसं च रोगदम् ।
शुभैर्धनस्थैरथ वाऽन्त्यगे गुरौ
न कर्तरी स्यादिह भार्गवा विदुः ॥

---

## ५ नवांशदोषः

### वसिष्ठः

[3]लग्ने हि सर्वे शुभराशयश्च
शुभेक्षिता वाऽथ युताः शुभाः स्युः ।
नवांशकास्तौलिनृयुग्युवत्य-
श्चापाद्यभागः शुभदो न चान्ये ॥
[4]द्विभर्तृका मेषनवांशके स्यात्
वृषांशके स्यात्पशुशीलयुक्ता ।
धनान्विता पुत्रवती तृतीये
कुलीरकांशे कुलटाऽप्यजस्रम् ॥
[5]सिंहांशके सा पितृमन्दिरस्था
कन्यांशके वित्तयुता सुशीला ।
तुलांशके सर्वगुणास्पदा सा
कीटांशके निःस्वतरा विशीला ॥

(१) प्रपा. ३३६.
(२) ज्योनि. ७१.
(३) वसं. ३२।४७ लग्ने हि सर्वे शुभ ( लग्नादिसर्वे खलु ) वाऽथ ( चाथ ); प्रपा. ३३५ लग्ने हि सर्वे शुभ ( लग्नाय सर्वे खलु ) शुभदो ( च शुभो ).
(४) वसं. ३२।४८ ; प्रपा. ३३५-३३६ पशु ( पति ); विसौ. २० ऽप्यजस्रम् ( ऽतिहिंस्रा ) ; संप्र. ७८४ विसौवत् ; संग. २३२ विसौवत्.
(५) वसं. ३२।४९ ; प्रपा. ३३६ स्पदा सा ( सदा स्यात् ) ; विसौ. २० ; संप्र. ७८४ पू. ; संग. २३२ विशीला ( कुशीला ).

[1]चापांशकाद्ये धनिनी द्वितीये
भागेऽन्यसक्ता मलिना गदाढ्या ।
निःस्वा मृगांशे विगुणा घटांशे
विभर्तृका योगरता विशीर्णा ॥

[2]मीनांशके भर्तृसुतार्थहीना
शुभग्रहैर्युक्तनिरीक्षितेऽपि ।
तस्मात्सदैवोक्तनवांशकेषु
कुर्याद्विवाहं गुणसंप्रवृद्धयै ॥

[3]अन्त्यांशकश्चेद्धि शुभांशकानां
मध्ये य एको न शुभप्रदः सः ।
स एव वर्गोत्तमसंज्ञितश्चेत्
शुभप्रदश्चाखिलमङ्गलेषु ॥

[4]वर्गोत्तमं विनान्त्यांशो विवाहे न शुभप्रदः ।
वर्गोत्तमश्चेदन्त्यांशः पुत्रपौत्राभिवृद्धिदः ॥

[5]नवांशदोषः सकलं गुणौघं
लग्नोत्थसौम्यग्रहसंभवं च ।
ध्रुवं निहन्तीव वृकोऽजसंघं
षड्वर्गजं सौम्यवियच्चराणाम् ॥

## नारदः

[6]तुलामिथुनकन्यांशा धनुराद्यर्धसंयुताः ।
एते नवांशाः शुभदा यदि नान्त्यांशकाः खलु ॥

(१) वसं. ३२।५० मलिना (मलिनी); प्रपा. ३३६ धनिनी (शुभदा); विसौ. २० द्वितीये (द्वितीय) गदाढ्या (गदात्मा); संप्र. ७८४ विसौवत्; संग. २३२ विसौवत्.

(२) वसं. ३२।५१; प्रपा. ३३६ पू.; विसौ. २० वृद्धयै (वृद्धौ); संप्र. ७८४ विसौवत्; संग. २३२.

(३) वसं. ३२।५२ श्चेद्धि (श्चेद्धि); विसौ. २० श्चेद्धि (श्चेत्तु) संज्ञित (संज्ञक); संप्र. ७८४ संज्ञित (संज्ञक); संग. २३२ श्चेद्धि (श्चेद्धि) संज्ञित (संज्ञक).

(४) वसं. ३२।५३; विसौ. २० न्त्यांशो विवाहे (न्त्यांशे विवाहो) पू.; संप्र. ७८४ विसौवत्, पू.; संग. २३२ विसौवत्, पू.

(५) वसं. ३२।५४.

(६) ज्योना. २७।६९ पू. ५५ राद्यर्ध (रंशार्ध); प्रपा. ३३५ (=); संप्र. ७९४ राद्यर्ध (रन्त्यार्ध); ज्योनि. ७६ (=) संप्रवत्.

[1]अन्त्यांशास्तेऽपि शुभदा यदि वर्गोत्तमाह्वयाः ।
अन्ये नवांशा न ग्राह्या यतस्ते कुनवांशकाः ।
कुनवांशकलग्नं यत्त्याज्यं सर्वगुणान्वितम् ॥

यस्मिन्यस्मिन् कार्ये ये नवांशा उक्तास्तेभ्योऽन्ये तस्मिंस्तस्मिन् कार्ये कुनवांशा इति ज्ञेयम् ।

ज्योनि. ७६

## व्यासः

[2]मेषाद्या ये मया पूर्वमुक्ता द्वादश राशयः ।
तेषां कन्या तुला चैव मिथुनं च प्रदृश्यते ॥
कन्यातुलासुमेषेषु (?) लग्नेष्वन्त्यांशके न तु ।
अतोंऽशके फलं कृत्स्नं वदतो मे निशामय ॥
मेषांशकेऽथ कन्याऽन्यकुमारगतमानसा ।
वृता वृषभगे साद्य(?) युग्मांशे शीलसंयुता ॥
वेश्या कुलीरभागे स्यात्तीव्ररोषा तथैव च ।
सक्तप्रशस्ता सिंहांशे पितृवेश्मरता तथा ॥
रूपशीलगुणोपेता कन्यांशे स्यात्कुमारिका ।
ऋणान्विता तुलस्यांशे दुःशीला मलदूषिता ॥
वेश्या-कुलमुखीत्यन्ते वृश्चिकांशेऽतिकोपना ।
चतुर्थवर्गे कुलटा मृगकुम्भऋषांशके (?) ।
सुवृद्धया ह्यन्यसक्ता स्यात्कन्या नास्त्यत्र संशयः (?) ॥

## वराहमिहिरः

वर्गोत्तमलक्षणम्

[3]वर्गोत्तमाश्चरगृहादिषु पूर्वमध्य-
पर्यन्तगाः शुभफला नवभागसंज्ञाः ॥

(१) ज्योना. २७।७० पू. ५५-५६; प्रपा. ३३५ (=) अन्त्यांशास्तेऽपि शुभदा (अप्यन्त्यांशाः शुभतरा) कुनवांशकलग्नं (कुनवांशः कुलग्नं); संप्र. ७९४; ज्योनि. ७६ (=).

(२) चका. ७९४-७९५.

(३) प्रपा. ३३५ मध्य (मध्यात्); संप्र. ७९४; संव. ९९.

### विवाहवृन्दावनम्

[1]इति तुलाजितुमप्रमदाधनुः-
प्रथमखण्डमखण्डफलं जगुः ।
सततमस्तपतिद्विषदीश्वरं
नवलवं बलवन्ध्यपतिं त्यजेत् ॥ *

[2]चरलवं चरवेश्मगमुत्सृजेत्
मृगतुलाधरगे मृगलक्ष्मणि ।
युवतिरत्र भवेत्कृतकौतुका
मदनवत्यनवत्यजनोन्मुखी ॥

अथ चरत्रययोगे दोषमाह— चरलवमिति । मृगलक्ष्मणि चन्द्रे मृगतुलाधरगे सति चरवेश्मगं चरलग्नगतं चरलवं चरनवांशमुत्सृजेत् त्यजेत् । यतोऽत्र कृतकौतुका विवाहिता युवतिः मदनवती कामातुरा सती अनवत्यजनोन्मुखी अनवस्य पुरातनस्य भर्तुः त्यजने उन्मुखी उत्सुका भवति । लक्ष्मी.

[3]अशुभकृत्खलगः खलु योंऽशको
जनुरनेहसि नेह सितांशुगे ।
तनुगतेऽपि शिवं युवयोषयो-
र्बलवतो लवतो न भयं क्वचित् ॥

जन्मकालिकपापगतनवांशदोषं तदपवादं च कथयति —अशुभेति । जनुरनेहसि जन्मकाले अशुभकृत्खलगः योंऽशकः नवांशः अस्ति इह अस्मिन्नवांशे सितांशुगे चन्द्रगते तनुगते लग्नस्थे अपि वा, युवयोषयोः कन्या-वरयोः शिवं शुभफलं न स्यात् । परं च बलवतो लवतः बलयुक्तान्नवांशात् क्वचित् भयं न स्यात् ।
लक्ष्मी.

### मुहूर्तचिन्तामणिः

[4]कार्मुकतौलिककन्यायुग्मलवे झषगे वा ।
यर्हि भवेदुपयामस्तर्हि सती खलु कन्या ॥

अथोदयास्तशुद्धिः प्रागुक्ता, तत्रावसरप्राप्तान् विहित-नवांशानाह— कार्मुकेति । कार्मुकं धनुः । तौलिकं तुला । कन्या प्रसिद्धा । युग्मं मिथुनम् । एषामंशे नवांशे झषगे वा मीननवांशे वा विकल्पेन । वाशब्दः स्वकीय-मतसूचनार्थः । धनुरादिनवांशाः सर्वमुनिसंमता इत्यर्थः । तेष्वंशेषु यर्हि यदा उपयामो विवाहो भवेत्तर्हि कन्या विवाहोत्तरं सती पतिव्रता खलु निश्चयेन स्यात् ।
पीटी.

अन्त्यनवांशे न च परिणेया
काचन वर्गोत्तममिह हित्वा ।
नो चरलग्ने चरलवयोगं
तौलिमृगस्थे शशभृति कुर्यात् ॥

अथ विहितनवांशे क्वचिन्निषेधमाह— अन्त्येति । विहितनवांशेष्वपि यथा मेषलग्ने धनुर्नवांशोऽन्तिमः इत्येवंविषये लग्नान्तिमनवांशे काचन कन्या न परिणेया न विवाह्या । परंतु वर्गोत्तममपि ( ? मिह ) नवांशं हित्वा । तत्र विवाह उचित एव । तथा मिथुनलग्ने मिथुनांशोऽन्तिमोऽपि वर्गोत्तमः शुभः । अन्यच्च— नो चरलग्ने इति । तौलिमृगस्थे तुलामकरस्थे शशभृति चन्द्रे सति चरलग्ने विहितचरलवयोगे नो कुर्यात् । यथा मेषलग्ने तुलांशः ( ? शे ) । पीटी.

### अनिर्दिष्टकर्तृकवचनानि

[1]तुलामिथुनकन्यांशा धन्वंशोऽपि शुभप्रदः ।
विवाहेऽस्तगतस्यांशो वर्ज्यः पापेन्दुयुक्तथा ॥
तनुपेऽस्तंगते नाशो दम्पत्योरंशपे तथा ।
सक्रूरेंऽशे च हानिः स्यादंशे चन्द्रयुते मृतिः ॥
धनुः सिंहश्च मेषादिर्वृषकन्ये मृगादिके ।
कुम्भमीनौ तुलाद्ये च कर्क्याद्यौ मीनवृश्चिकौ ॥
वर्गोत्तमादृते देयाश्चरमे न नवांशकाः ।
चरलग्ने चरांशे च तुलामकरगे विधौ ॥
चरमांशोऽपि गोमेषहरितौलिघटेषु च ।
सबलेषु च सद्योगे देय इत्यपरे जगुः ॥

---

* व्याख्यानं कूटविचारप्रकरणे ( संका. पृ. ८४१ ) द्रष्टव्यम् ।

( १ ) विवृ. ४।८.
( २ ) विवृ. ४।१७ ; विसौ. २१.
( ३ ) विवृ. ४।१९.
( ४ ) मुचि. ६।८४-८५.

( १ ) ज्योनि. १५२.

[5]लग्नदोषांशदोषा ये दोषाः षड्वर्गजाश्च ये।
हन्ति तांल्लग्नगो जीवो मेघसंघमिवानिलः ॥

---

## ६ षडष्टरिप्फचन्द्रदोषः

### वसिष्ठः

[2]विधोस्तु षष्ठाष्टमरिप्फदोषः
करोति नाशं विविधं गुणौघम्।
लग्नांशसौम्यग्रहजं च यद्वत्
सुरालवः पावनपञ्चगव्यम् ॥
[3]षष्ठेऽष्टमे द्वादशगे शशाङ्के
स्थिते ग्रहा वर्धयितुं न शक्ताः।
विवाहसुत्सन्नजनित्रिमुच्चै-
र्वत्सं यथा वत्सलवान् स्वकीयम् ॥
[4]जन्मेशमृत्युराशीशौ मिथो मित्रे यदा तदा।
जन्माष्टमस्थचन्द्रोत्थो दोषो भङ्गत्वमाप्नुयात् ॥

### नारदः

[5]षडष्टरिप्फगे चन्द्रे लग्नादोषः स्वसंज्ञितः।
तल्लग्नं वर्जयेद्यत्नाज्जीवशुक्रसमन्वितम् ॥
[6]उच्चगे नीचगे वाऽपि मित्रगे शत्रुराशिगे।
अपि सर्वगुणोपेतं दम्पत्योर्निधनप्रदम् ॥

---

(१) ज्योनि. ७६.

(२) वसं. ३२।५५ यद्वत् (तद्वत्); विसौ. २२ विधोस्तु (विधोश्च) गव्यम् (गव्ये).

(३) वसं. ३२।५६ षष्ठेऽष्टमे द्वादशगे (षष्ठाष्टमद्वादशके) शक्ताः (शेकुः) वान् स्वकीयम् (वत्सकीयम्); विसौ. २२.

(४) प्रपा. ३३३; संप्र. ७८८ उत्तरार्धे (जन्माष्टमर्क्षे चन्द्रश्च दोषो भङ्गं समाप्नुयात्।); संग. २४७ उत्तरार्धे (जन्माष्टमर्क्षे चन्द्रश्च दोषो भङ्गमवाप्नुयात्।).

(५) ज्योना. २७।४५–४६ पृ. ५४; प्रपा. ३३३; विसौ. २२ लग्नादोषः स्वसंज्ञितः (लग्नदोषः स उच्यते) जीवशुक्रसमन्वितम् (अपि शुक्रेज्यसंयुतम्); संप्र. ७८८ स्वसंज्ञितः (स्वसंज्ञकः); ज्योनि. ७२ संप्रवत्; संग. २४६ संप्रवत्, वीरमित्रोदये.

(६) ज्योना. २७।४६–४७ पृ. ५४; प्रपा. ३३३ मित्रगे (मित्रभे); विसौ. २२; संप्र. ७८८ वाऽपि (चापि); ज्योनि. ७२ निधनप्रदम् (मृत्युदं यतः); संग. २४६.

### विवाहवृन्दावनम्

[1]कन्यकावितरणाय पूरुषः
पात्रमात्रमिति नैन्दवं बलम्।
केचिदस्य वितरन्ति कोविदाः
को विदां किल करोतु तन्मनः ॥

तत्रादौ अन्येषां मतं दूषयति– कन्यकेति। कन्यकावितरणाय कन्यादानाय पूरुषः वरः 'पात्रमात्रं' इत्यस्मात् केचित् कोविदाः पण्डिता अस्य वरस्य ऐन्दवं बलं चन्द्रबलं न वितरन्ति न ददति, न विचारयन्तीत्यर्थः। तन्मनः तेषां कोविदानां मनः को विदां करोतु ? को जानातु ?। लक्ष्मी.

ईदृशं यदि ततः प्रतिग्रह-
ग्राहिणोऽस्य किमभिप्रपञ्चितैः।
सांशनाडिगणयोनिशुद्धिभि-
र्जन्मलग्नभवनव्ययाष्टगैः ॥

अथ दोषं कथयति– ईदृशमिति। 'पात्रमात्रत्वाद्वरस्य चन्द्रबलं न देयम्' यदि ईदृशं तदा प्रतिग्रहग्राहिणः अस्य वरस्य सांशनाडिगणयोनिशुद्धिभिः, तथा जन्मलग्नभवनव्ययाष्टगैरित्यादिभिः अभिप्रपञ्चितैः किम् ? यदि अंशनाडिगणादीनां शुद्धिर्विलोक्यते तदा चन्द्रबलमपि विचार्यमेव, चेत्प्रतिग्राहित्वात् चन्द्रबलं न विचार्यं तर्हि योनिनाड्यादीनां शुद्धिरपि न विचार्येत्यर्थः। लक्ष्मी.

लाग्निको नवलवः पुमन्तकृत्
स्वामिना यदि न युक्तवीक्षितः।
संगमं दिशति दीर्घनिद्रया
पत्युरिन्दुतनुकामगो ग्रहः ॥

लाग्निको नवलवः लग्नगतो नवांशः यदि स्वामिना युक्तवीक्षितः न भवेत्तदा पुमन्तकृत् वरनाशकरो भवति। इन्दुतनुकामगः चन्द्रलग्नाभ्यां सप्तमस्थः ग्रहः पत्युः दीर्घनिद्रया मृत्युना संगमं दिशति ददाति। लक्ष्मी.

---

(१) विवृ. ६।१–११.

चन्द्रमस्युपचयात्परिच्युते
चारुगोचरचरैः परैरपि ।
कर्तुरायतिशुभं सभङ्गुरं
निर्दिशन्ति सितशौनकादयः ॥
एवमादिफलवादिनो नृणा-
मैन्दवं बलमुशन्ति किं न ते ।
भानुरप्युपचये नृजन्मतो
यन्मतोक्तिषु तदिष्टमेव नः ॥

चन्द्रमस्युपचयात् परिच्युते क्षीणे सतीत्यर्थः परैः भौमादिग्रहैः चारुगोचरचरैः शुभस्थानस्थितैः अपि कर्तुः वरस्य आयतिशुभं भविष्यशुभफलं सभङ्गुरं नश्वरं इति सितशौनकादयः निर्दिशन्ति कथयन्ति । एवमादिफलवादिनः इत्याद्युपर्युक्तफलवक्तारो ये जनाः सन्ति ते नृणां पुरुषाणां ऐन्दवं बलं चान्द्रं बलं किं न उशन्ति ? किं नेच्छन्ति ? ये चन्द्रादुक्तफलानि स्वीकुर्वन्ति ते चन्द्रबलमपि स्वीकुर्वन्त्वित्यर्थः । तथा यन्मतोक्तिषु नृजन्मतः पुरुषजन्मराशितः उपचयेषु स्थितो भानुः शुभः, तत् नः अस्माकमपि इष्टमेव । लक्ष्मी.

न त्रिवर्गपतिना नरेण चेत्
कन्यया शशिबलं समाप्यते ।
दीयते यदिह गोमहीमहि-
ष्यादि तर्हि दिश तस्य तद्बलम् ॥

अथान्यप्रकारेणापि दोषं कथयति— नेति । त्रिवर्गपतिना धर्मार्थकामस्वामिनाऽपि नरेण शशिबलं चन्द्रबलं न समाप्यते, कन्ययैव यस्या दानं भवति तयैव शशिबलं समाप्यते चेत्तदा गोमहीमहिष्यादि यत् वस्तु दीयते विवाहकाले वराय समर्प्यते तस्य गोमहिष्यादेः सर्वस्य तद्बलं चन्द्रबलं दिश प्रयच्छ । इत्यतिप्रसङ्गदोषो दर्शितः । अतो वरस्यापि चन्द्रबलं ग्राह्यम् ।
लक्ष्मी.

इन्दुरिन्दुवदनानुगं बलं
यच्छतीह युवतिग्रहो यतः ।
सन्नृणामपि कथं षडष्टगः
खण्डयत्ययमसून्प्रसूतिषु ॥

इन्दुः चन्द्रः इन्दुवदनानुगं युवत्यनुसारं बलं यच्छति, यतः स युवतिग्रहः स्त्रीग्रह इति चेत् , तदा अयं चन्द्रः प्रसूतिषु जन्मसमयेषु षडष्टगः सन्नृणां पुरुषाणां असून् प्राणान् कथं खण्डयति नाशयति ? अतः पुरुषस्यापि चन्द्रबलं ग्राह्यमेवेति । लक्ष्मी.

होरयाऽपि हिमरश्मिरादृतः
पुंस्फलेषु सुनफानफादिषु ।
अत्रिराह बहुलेऽपि तारकां
तारकापतिबले बलीयसीम् ॥

होरया जातकशास्त्रेण अपि पुंस्फलेषु पुरुषफलेषु सुनफानफादिषु योगेषु हिमरश्मिः चन्द्रः आदृतः । अतश्चन्द्रबलं ग्राह्यमेवेत्यर्थः । तथा अत्रिः मुनिः बहुले कृष्णपक्षे अपि तारकापतिबले सत्येव तारकां बलीयसीमाह । सत्येव चन्द्रबले तारा बलवती भवति, अतश्चन्द्रबलं वरस्यापि ग्राह्यमित्यर्थः । लक्ष्मी.

प्रोषिते विकलवर्ष्मणि प्रिये
तोलिलिः स्त्रियमियेष कार्यिणीम् ॥
अस्तु किन्तु न पतिप्रतीपतां
साऽन्यथा घटयितुं पटीयसी ॥

पुनरन्यमतमुपन्यस्य दूषयति— प्रोषिते इति । प्रिये स्वामिनि प्रोषिते देशान्तरं गते सति, विकलवर्ष्मणि रुग्णशरीरे सति वा तोलिलिः मुनिः स्त्रियं कार्यिणीं कार्याधिकारिणीं इयेष ऐच्छत् । अस्तु सा कार्यकारिणी भवतु, किन्तु सा स्त्री तारा वा अन्यथा पतिप्रतीपतां स्वामिवैपरीत्यं घटयितुं कर्तुं न पटीयसी न क्षमा । अतः सत्येव चन्द्रानुकूलत्वे ताराबलं ग्राह्यमिति सिध्यति । लक्ष्मी.

क्रौर्यमेति बहुले स केवलं
नैव पश्यतितमाममां वसन् ।
नास्ति चैष यदि तत्र तत्कथं
तत्कृता जनिषु रिष्टरौद्रता ॥

कृष्णपक्षेऽपि चन्द्रो न विनश्यतीत्याह—क्रौर्यमिति । बहुले कृष्णपक्षे स चन्द्रः क्रौर्यं क्रूरत्वं एति गच्छति । तथा अमां वसन्नपि नैव नश्यतितमां अतिशयेन नैव नश्यति । यदि च एष चन्द्रः तत्र तस्याममायां नास्ति

अतिशयेन नष्टः, तत्तदा जनिषु जन्मकालेषु तत्कृता रिष्टरौद्रता रिष्टक्रूरता कथं स्यात् ? अतोऽमायां चन्द्रो न नश्यति, किंच प्रकाशविहीनो भवति । लक्ष्मी.

पार्श्वगे निजपतौ कुटुम्बिनी
दुर्बलेऽपि तदभीष्टकार्यकृत् ।
तारकाऽपि शशिनोऽनुकूलता-
संभवे भवति पक्षपातिनी ॥

ताराबले सिद्धान्तं कथयति– पार्श्वगे इति । दुर्बलेऽपि निजपतौ पार्श्वगे निकटवर्तिनि सति कुटुम्बिनी तत्स्त्री तदभीष्टकार्यकृत् तस्य स्वभर्तुरभीष्टकार्यकारिणी भवति । तथैव तारकाऽपि शशिनः चन्द्रस्य अनुकूलतासंभवे पक्षपातिनी भवति । अतः कृष्णपक्षेऽपि चन्द्रानुकूलत्वे एव ताराबलं ग्राह्यमिति सिद्धम् । लक्ष्मी.

## मुहूर्तचिन्तामणिः

[1]नीचे नीचनवांशके शशिनि
रिष्फाष्टारिदोषोऽपि न ।

षडष्टद्वादशस्थानचन्द्रापवाद उच्यते । शशिनि चन्द्रे (नीचे) नीचनवांशके वा सति रिष्फाष्टारिदोषोऽपि द्वादशाष्टमशत्रुस्थानस्थितचन्द्रदोषोऽपि न स्यात्, 'नीच-राशिगते चन्द्रे नीचांशकगतेऽपि वा । चन्द्रे षष्ठारि-( ? ष्टाष्ट )रिष्फस्थे दोषो नास्ति न संशयः ॥' इति कश्यपोक्तेः । पीटी.

## मुहूर्तदर्पणे

[2]कवौ गुरौ वा बलिनि स्थिते तनौ
शुभेन दृष्टः शुभवर्गगः शशी ।
विवर्धमानः शुभकृच्च नोऽशुभं
करोति तिष्ठन्नपि वाऽष्टरिष्फयोः ॥

---

(१) मुचि. ६।८८.
(२) ज्योनि. ७२.

## ७ पापषड्वर्गदोषः

### वसिष्ठः

[1]लग्नं तदर्धं च ततस्त्रिभागो
नवांशकश्च द्विदशांशकश्च ।
त्रिंशांशकश्चेति हि वर्गषट्कं
शुभं शुभव्योमचराधिपत्यम् ॥

[2]यः पापषड्वर्गभवो हि दोषः
पञ्चाङ्गसौम्यग्रहलग्नजातम् ।
गुणौघमम्भोधिममोघबाणः
शुष्यत्यशेषं त्विव राघवस्य ॥

[3]पापषड्वर्गजो दोषः सकलं गुणसंचयम् ।
हन्ति यद्वद्घानीकं हरिरित्यक्षरद्वयम् ॥

[4]त्रिंशद्भागं लग्नमितं तदर्धतुलिता तु होराख्या ।
लग्नतृतीयो भागो द्रेष्काणः स्यान्नवांशको नवमः ॥
द्वादशभागो द्वादशमस्त्रिंशत्तमस्त्रिंशदंशः स्यात् ।
षड्वर्गो भवति सदा शुभखचरसमुद्भवः
शुभदः ॥

पापसमुत्थस्त्वशुभ-
स्तस्माद्ग्राह्यस्तु सौम्यषड्वर्गः ।
शुभकर्मणि सततं संत्याज्यः पापाह्वयो वर्गः ॥
चापनृयुग्घटवृषभाः
कर्कटकन्यान्त्यराशयः शुभदाः ।
शुभभवनत्वादन्ये
त्वशुभग्रहत्वादशोभनाः पञ्च ॥

[5]क्रमशस्तिथिराश्यादि चन्द्रलग्नादितः क्रमात् ।
एष पुष्करभागो हि लग्नादेः क्रौर्यसंभवम् ।
दोषं विनाशयत्याशु हरिः पापमिव स्मृतः ॥

---

(१) वसं. ३२।१३५ द्विदशांश (द्विरसांश) शुभं शुभ (शुभाशुभं); विसौ. ५४.
(२) वसं. ३२।५७; विसौ. २२ त्विव (खलु).
(३) वसं. ३२।५८ ; विसौ. २२.
(४) वसं. ३३।१५–१८.
(५) विसौ. २१.

द्रेष्काणमुदयं वाऽपि होरां वा द्वादशांशकम् ।
क्रूरं विनाशयत्येष विना तु नवमांशकम् ॥

क्रूरं विलग्नकं वाऽपि क्रूरद्रेष्काण एव च ।
पुष्करस्यास्य भागस्य महिमा विवृतायते ॥

ईश्वरस्य प्रभावेण विषं हालाहलं तथा ।
वर्गोत्तमोऽपि न ग्राह्यः शुभकर्मफलेप्सुभिः ॥

### नारदः

[1]त्रिंशद्भागात्मकं लग्नं होरा तस्यार्धमुच्यते ।
लग्नत्रिभागो द्रेष्काणो नवमांशो नवांशकः ॥

[2]द्वादशांशो द्वादशांशस्त्रिंशांशस्त्रिंशदंशकः ।
षड्वर्गाः कथिता ह्येते तेषामीशा इमे स्मृताः ॥

[3]सिंहस्याधिपतिर्भानुश्चन्द्रः कर्कटकेश्वरः ।
मेषवृश्चिकयोर्भौमः कन्यामिथुनयोर्बुधः ॥

धनुर्मीनद्वयोर्मन्त्री शुक्रो वृषतुलेश्वरः ।
शनिर्मकरकुम्भेश इत्येते राशिनायकाः ॥

[4]मेषवृश्चिकयोर्भौमस्तुलावृषभयोः सितः ।
कन्यामिथुनयोर्बोधः कर्कटस्य पतिः शशी ॥

चापान्त्ययोर्गुरुः स्वामी शनिर्मकरकुम्भयोः ।
रविः सिंहस्य चैतेषामंशानामधिपा इमे ॥

[5]सिंहेशोऽर्कः कुलीरेशः शशी भौमोऽज-
कीटयोः ।

ज्ञो नृयुक्कन्ययोर्जीवो मीनधन्वोर्घटोक्षयोः ।
उशना कुम्भझषयोः शनिर्भेशा नवांशपाः ॥

(१) ज्योना. २७।३० पृ. ५३; प्रपा. ३३२ द्रेष्काणो (द्रेक्काणो) नवमांशो (नवांशोऽपि); विसौ. २२; संप्र. ७८६ नवमांशो (नवांशोऽपि); संग. २४४ संप्रवत्.

(२) ज्योना. २७।३१ पृ. ५३ पू.; प्रपा. ३३२ पू.; विसौ. २२; संप्र. ७८६; संग. २४४.

(३) ज्योना. २७।३१–३३ पृ. ५३.

(४) विसौ. २२; संप्र. ७८६; संग. २४४ योर्बोधः (योर्बुधः) चैतेषा (वै तेषा).

(५) प्रपा. ३३२.

[1]शुक्रचन्द्रज्ञगुरवः शुभा ह्यन्ये शुभेतराः ।
क्षीणः शशी तथाऽन्ये च पापयुक्तो
बुधोऽशुभः ॥

[2]होरार्केन्द्वोरोजराशौ समभे चन्द्रसूर्ययोः ॥

[3]होरयोरोजराशौ तु रवीन्दू क्रमतः पती ।
समराशौ तु चन्द्राकौं होरेशौ क्रमतो वदेत् ॥

[4]स्युर्द्रेष्काणेषु चाऽऽद्येषु नव राशीश्वराः
क्रमात् ॥

[5]नवमांशा मेषसिंहचापेष्वजादयः क्रमात् ।
क्रमाद्गोमृगकन्यासु ज्ञेयाः स्युर्मकरादयः ॥
तुलामिथुनकुम्भेषु स्युः क्रमेण तुलादयः ।
अलिकर्कटमीनेषु क्रमात्स्युः कर्कटादयः ॥
[6]अजमृगतौलिचन्द्रभवनादिनवांशविधिः ॥

मेषसिंहधनुषेष्वजादय-
स्तौलिकुम्भमिथुने तुलादयः ।
कन्यकावृषमृगे मृगादयो
मीनकर्क्यलिषु कर्कटादयः ॥
अंशका नवनव व्यवस्थिता
द्वादश प्रतिगृहं गृहादयः ॥

[7]लग्नराशिं समारभ्य द्वादशांशेश्वराः क्रमात् ।
कुजार्कीज्यज्ञशुक्राणां बाणेष्वष्टाद्रिमार्गणाः ।
भागाः स्युर्विषमे ते तु समराशौ विपर्ययात् ॥

(१) विसौ. २२; संप्र. ७८६; संग. २४४.

(२) ज्योना. २७।३३ पृ. ५३; प्रपा. ३३२ होरा (होरे).

(३) विसौ. २२; संप्र. ७८६; संग. २४४–२४५.

(४) ज्योना. २७।३४ पृ. ५३; प्रपा. ३३२ (स्युर्द्रेक्काणा लग्नपञ्चनवराशीश्वराः क्रमात् ।); विसौ. २२; संप्र. ७८६; संग. २४५.

(५) ज्योना. २७।३४ पृ. ५३ अशुद्धिबहुलः पाठः; विसौ. २२; संप्र. ७८६–७८७; संग. २४५.

(६) प्रपा. ३३२ क्रमेण नारदः.

(७) ज्योना. २७।३५ पृ. ५३ लग्नराशिं समारभ्य (आरभ्य लग्नराशेस्तु) तृतीयार्धं नास्ति; प्रपा. ३३२ लग्नराशिं समारभ्य (आरभ्य लग्नराशेस्तु); विसौ. २२–२३; संप्र. ७८७; संग. २४५.

[1]षड्वर्गः शुभदः श्रेष्ठो विवाहस्थापनादिषु ॥

[2]षड्वर्गो भवति सदा
शुभखचरसमुद्भवः शुभदः।
पापसमुत्थस्त्वशुभ-
स्तस्माद्ग्राह्यस्तु सौम्यषड्वर्गः ॥

[3]सौम्यः स्वमित्रजः श्रेष्ठो रिपुक्रूरभवोऽशुभः।
क्रूरमित्रभवो मध्यो मिश्रैर्मिश्रफलं च तैः ॥

पुष्कर(ल)भागाः

[4]एकविंशो मनुजिनमुनि चेति त्रिवारतः।
आवृत्ताः पुष्करा भागा मेषादीनां शुभा इमे ॥

[5]त्रिंशद्भागेषु दम्पत्योरुद्वाहे शुभवर्धनात्।
लग्नानां पुष्कलाख्यांशान्वक्ष्ये शास्त्रानुसारतः ॥
एकविंशांशको मेषे वृषभे च चतुर्दशः।
यमे सप्तदशांशः स्यात्सप्तमः कर्कटे मतः ॥
एकोनविंशः सिंहे च कन्यायामष्टमोंऽशकः।
चतुर्विंशस्तुलायां तु कौर्पे चैव चतुर्दशः ॥
त्रयोविंशो धनुष्ये च मकरे तु चतुर्दशः।
एकोनविंशकः कुम्भे मीनेंऽशः सप्तमो भवेत् ॥
एतेंऽशाः शोभना ज्ञेयाः शुभकार्येषु सर्वदा।
हितैषिभिर्ज्यौतिषिकैः सर्वशास्त्रार्थवेदिभिः ॥

अभिजिद्भागाः

एकविंशतिमो भागो मेषस्याभिजिदुच्यते।
वृषे चतुर्दशो भागो यमे सप्तदशांशकः ॥
भागोऽष्टमः कुलीरे स्याद्धरेरष्टादशांशकः।
कन्यायां वसुभागस्तु चतुर्विंशस्तु तौलिभे ॥
द्वादशो वृश्चिके भागश्चापे सप्तदशांशकः।
अभिजिन्नाम भागः स्यादाकोकेरे चतुर्दशः ॥
कुम्भे षड्विंशकांशः स्यान्मीने वस्वंशको भवेत्।
सर्वे दोषा विनश्यन्ति नात्र कार्या विचारणा ॥

(१) प्रपा. ३३२.
(२) विसौ. २३ ; संप्र. ७८७ वसिष्ठस्याप्ययं श्लोकः.
(३) लग. २४५.
(४) विसौ. २३.
(५) प्रपा. ३३२.

## विवाहवृन्दावनम्

[1]राश्यंशाः शशिभूगुणेक्षणहता-
स्तिथ्यभ्रभूदिक्शरै-
र्भक्ता भार्धदृकाणनन्ददिनकृ-
द्भागा गृहं यस्य यत्।
त्रिंशांशाः सितसौम्यजीवरविज-
क्ष्माजन्मनां व्युत्क्रमा-
दोजर्क्षेषु शराश्वसर्पमरुतः
पञ्चेति षड्वर्गिका ॥

अथ होरादिषड्वर्गं कथयति– राश्यंशाः इति। राश्यंशाः लग्नस्य ग्रहस्य वा राशिभुक्तांशाः, शशिभूगुणेक्षणहताः पृथक्क्रमेण तिथ्यभ्रभूदिक्शरैः भक्ताः क्रमशः भार्धदृकाणनन्ददिनकृद्भागाः होरा-दृक्काण-नवांश-द्वादशांशाः भवन्ति। तथा यस्य यद्गृहं तत्तस्य गृहम्। समराशिषु सितसौम्यजीवरविजक्ष्माजन्मनां क्रमेण शराश्वसर्पमरुतः पञ्च इति त्रिंशांशाः स्युः, ओजर्क्षेषु व्युत्क्रमात् त्रिंशांशा ज्ञेयाः, इति इयं षड्वर्गिका स्यात्। लक्ष्मी.

कुजकवीन्दुजचन्द्ररवीन्दुजाः
सितकुजेज्ययमार्किजसूरयः।
भवनपा लवपाश्च तदादय-
स्त्वजमृगाननतौलिकुलीरकाः ॥

अथ राश्यधिपान् कथयति– कुजेति। कुजकवीन्दुजचन्द्ररवीन्दुजाः सितकुजेज्ययमार्किजसूरयः क्रमेण भवनपा मेषादिराश्यधिपाः लवपाः नवांशस्वामिनश्च स्युः। तथा अजमृगाननतौलिकुलीरकाः क्रमात् तदादयः तेषां नवांशानामादयः आदिराशयः स्युः। लक्ष्मी.

होरे समेऽब्जखगयोर्विषमे रवीन्द्वो-
र्दृक्काणकाः प्रथमपञ्चनवेश्वराणाम्।
स्युर्द्वादशांशपतयः स्वगृहाच्छुभानि
भानि ग्रहाश्च निजमित्रशुभांशभाजः ॥

अथ होरादृकाणद्वादशांशान् कथयति– होरे इति। समे समराशौ अब्जखगयोः चन्द्रसूर्ययोः, विषमे रवीन्द्वोः क्रमेण होरे भवतः। तथा प्रथमपञ्चनवेश्वराणां

(१) विवृ. ८।१३–१५.

द्रकाणका भवन्ति । स्वगृहात् स्वराशिमारभ्य द्वादशांशपतयः स्युः । शुभानां भानि शुभानि, निजमित्रगृहांशभाजो ग्रहाश्च शुभा भवन्ति । लक्ष्मी.

[२]होराः क्रूराः सौम्यवर्गाधिके स्यु-
र्लग्ने मोघाः सौम्यवारे च रात्र्याम् ।
पापारिष्टं निष्फलं शक्तिभाजां
स्यात्षड्वर्गे लग्नगे सद्ग्रहाणाम् ॥

पापहोराया निष्फलत्वं कथयति– होरा इति । सौम्यवर्गाधिके लग्ने क्रूराः होराः पापग्रहसंबन्धिहोराः मोघाः निष्फलाः स्युः । एवं सौम्यवारे शुभग्रहाणां दिने रात्र्यां च क्रूराः होराः निष्फला भवन्ति । तथा शक्तिभाजां सद्ग्रहाणां षड्वर्गे लग्नगे सति पापारिष्टं निष्फलं स्यात् । लक्ष्मी.

## श्रीधरः

[२]मेषवृश्चिकपतिर्महीसुतो
भार्गवो वृषतुलाधरेश्वरः ।
बोधनस्तु मिथुनाङ्गनापति-
र्भास्करिर्मकरकुम्भनायकः ॥
सिंहकर्कटकयोरिनोडुपौ
मीनधन्वपतिरिन्द्रपूजितः ।
अंशका नवनव व्यवस्थिताः
शौनकादिमुनिभिः प्रकीर्तिताः ॥

## मुहूर्तचिन्तामणिः

[३]कुजशुक्रसौम्यशशिसूर्यचन्द्रजाः
कविभौमजीवशनिसौरयो गुरुः ।
इह राशिपाः क्रियमृगास्यतौलिके-
न्दुभतो नवांशविधिरुच्यते बुधैः ॥

तत्रैते भौमशुक्रबुधचन्द्रसूर्यबुधशुक्रभौमगुरुशनिशनिगुरवः क्रमेणेह षड्वर्गे राशिपा मेषादिराशीनां स्वामिनः । क्रियेति । क्रियो मेषः, मृगास्यं मकरः, तौलिकं तुला, इन्दुभं कर्कः एभ्यो राशिभ्यो द्वादशस्वपि राशिषु नवांशविधिर्बुधैरुच्यते । मेषे मेषादेव । वृषे मकरादेव । मिथुने तुलातः । कर्के कर्कादेव । एवं सिंहेऽपि मेषादेव । एवं कन्यादिष्वपि राशिषु मकरादित एव । एवमेव धनुरादिष्वपीत्यर्थः । पीटी.

समगृहमध्ये शशिरविहोरा
विषमभमध्ये रविशशिनोः सा ॥

पञ्चदशभागात्मिकैका होरा । समराशिमध्ये प्रथमा चन्द्रस्यापरा सूर्यस्य, विषमराशिमध्ये प्रथमा रवेरपरा चन्द्रस्येत्यर्थः । पीटी.

शुक्रज्ञजीवशनिभूतनयस्य बाण-
शैलाष्टपञ्चविशिखाः समराशिमध्ये ।
त्रिंशांशको विषमभे विपरीतमस्मा-
द्द्रेष्काणकाः प्रथमपञ्चनवाधिपानाम् ॥

त्रिंशांशद्रेष्काणानाह— शुक्रेति । समराशिमध्ये क्रमेण प्रथमतः पञ्चानामंशानां शुक्रः स्वामी, ततः शैलानां सप्तानां ज्ञो बुधः, ततोऽष्टानां जीवो गुरुः, ततः पञ्चानां शनिः, ततो विशिखा बाणाः पञ्च, तेषां भूतनयो भौमः । शुक्रज्ञेत्यादि समाहारद्वन्द्वः । विषमभे तु अस्मात्समराशेर्विपरीतं ज्ञेयम् । यथा प्रथमतः पञ्चानां भौमः, ततः पञ्चानां शनिः, ततोऽष्टानां गुरुः, ततः सप्तानां बुधः, ततः पञ्चानां शुक्र इत्यर्थः । अयमेव त्रिंशांशकसंज्ञ इति । द्रेष्काणका इति । अत्र प्रमाणम्– दशांशा द्वादशसु राशिषु प्रथमो द्रेष्काणः प्रथमस्य स्वराश्यधीशस्य, द्वितीयो द्रेष्काणः स्वराशितः पञ्चमराशीश्वरस्य, तृतीयः स्वराशितो नवमराशीश्वरस्य । यथा वृषे प्रथमो द्रेष्काणो वृषाधीशशुक्रस्य, द्वितीयः कन्याधीशबुधस्य, तृतीयो मकराधीशशनेरित्यर्थः ।

पीटी.

स्याद्द्वादशांश इह राशित एव गेहं
होराऽथ दृक्कनवमांशकसूर्यभागाः ।
त्रिंशांशकश्च षडिमे कथितास्तु वर्गाः
सौम्यैः शुभं भवति चाशुभमेव पापैः ॥

द्वादशांशं षड्वर्गोपसंहारं (च) सफलमाह– स्यादिति । इह षड्वर्गे, द्वादशांशः सार्धमंशद्वयं, तत्स्वराशित एवेष्टांशान्तं गणितं सत् यस्तद्राशिस्वामी स

(१) विवृ. ८।९.
(२) प्रपा. २२१ ; संप्र. ७७८–७७९.
(३) मुचि. ६।३७–४०.

द्वादशांशेश्वरः । ' आरभ्य लग्नराशेस्तु द्वादशांशेश्वरः क्रमात् ' इति नारदोक्तेः । अन्यच्चरणत्रयं स्पष्टतरम् । तस्मात् सौम्यपापग्रहषड्वर्गसांकर्ये सति सौम्यषड्वर्गत्रिभ्योऽधिकश्चेच्छुभः, त्रिभ्यो हीनश्चेदशुभ इत्यर्थः । पीटी.

### अनिर्दिष्टकर्तृकवचने

[१]लग्नस्य भागो जीवः स्यात्षड्वर्गो देह उच्यते ।
ग्रहाश्चावयवाः प्रोक्ता इति शास्त्रविदो विदुः ॥
एतद्विलक्षणश्चाथ षड्वर्ग इति गीयते ।
तत्र यत्क्रियते कर्म तत्सर्वं निष्फलं भवेत् ॥

---

## ८ कुजाष्टमदोषः

### वसिष्ठः

[२]लग्नस्य भौमाष्टमसंस्थदोषो
निहन्ति तान्सर्वगुणान्विशिष्टान् ।
यथाऽनृतं धर्मचयानशेषा-
नतः परं किं च वधूवरौ च ॥

[३]लग्नात्कुजाष्टमो दोषो
नाशयत्यखिलान् गुणान् ।
यथा लग्नांशसंभूतान्कलुषं धर्मसंचयम् ॥

[४]तनुजातान् गुणनिचया-
न्निहन्ति भौमाष्टदोषः सः ।
दम्पत्योरपि मरणं
करोति यद्वद्विषान्नसंयोगः ॥

### नारदः

[१]कुजाष्टमो महादोषो लग्नादष्टमगे कुजे ।
शुभत्रययुतं लग्नं त्यजेत्तुङ्गगते यदि ॥

### कश्यपः

[२]अस्तगे नीचगे भौमे शत्रुक्षेत्रगतेऽपि वा ।
कुजाष्टमोद्भवो दोषो न किंचिदपि विद्यते ॥

### मुहूर्तचिन्तामणिः

[३]भौमेऽस्ते रिपुनीचगे न हि
भवेद्भौमोऽष्टमो दोषकृत् ॥

अष्टमभौमदोषापवाद उच्यते । भौमे अस्ते अस्तंगते रिपुनीचगे शत्रुगृहे( ? हगे ) वा स्वनीचगृहगे वा सति अष्टमो न दोषकृत्स्यात् । पीटी.

### अनिर्दिष्टकर्तृकवचने

[४]लग्ने व्यये च पाताले सप्तमे चाष्टमे कुजे ।
कन्या हरति भर्तारं भर्ता हरति कन्यकाम् ॥
[५]सर्वान् गुणान्निहन्त्याशु विलग्नादष्टमः कुजः ।
असत्यभाषणं यद्वदखिलान् धर्मसंचयान् ॥

---

## ९ भृगुषट्कदोषः

### वसिष्ठः

[६]विलग्नराशेर्भृगुषट्कदोषः
करोति नाशं विविधान् गुणौघान् ।
आधिः क्रमाद्यद्वदशेषधातून्
मित्राधिमित्रग्रहजानशेषान् ॥

---

( १ ) विसौ. २३ क्रमेण गर्गः ( ? ).

( २ ) वसं. ३२।५९ तान्सर्व ( तत्सर्व ) ; विसौ. २४ लग्नस्य ( लग्नोत्थ ).

( ३ ) वसं. ३२।६० ; विसौ. २४ संचयम् ( संचयान् ) नारदः.

( ४ ) वसं. ३२।६१ विषान्नसंयोगः ( पराङ्गनायोगः ) ; विसौ. २४ भौमाष्टदोषः सः ( भौमोऽष्टमो राशौ ).

( १ ) ज्योना. २७।३७ ; प्रपा. ३३२ तुङ्गगते ( तत्तुङ्गके ) ; विसौ. २४ कुजाष्टमो ( कुजोऽष्टमे ) तुङ्गगते यदि ( तत्तुङ्गगेऽपि वा ) ; संप्र. ७८७ कुजाष्टमो ( कुजोऽष्टमो ) त्यजेत्तुङ्गगते ( त्यजेन्न तुङ्गगे ) ; ज्योनि. ७० तुङ्गगते ( तत्तुङ्गगे ) ; संग. २४७ ज्योनिवत्.

( २ ) ज्योनि. ७० ; संग. २४७ ( = ).

( ३ ) मुचि. ६।८८.

( ४ ) संग. १८६ ; संव. १३९ सप्तमे ( जामित्रे ) उत्तरार्धे ( कन्या भर्तृविनाशाय भर्ता कन्याविनाशदः । ).

( ५ ) विसौ. २४.

( ६ ) वसं. ३२।६२–६३ ; विसौ. २४ मित्राधि ( मित्राति ) द्राग्वि ( स्याद्वि ).

भृगुषट्काख्यो दोषो
वरवध्वोर्द्राग्वियोगकृन्नूनम् ।
कन्यां विवाहितां तां
भर्तृघ्नीं वा करोत्यचिरात् ॥

## नारदः

[1]भृगुषष्ठाह्वयो दोषो लग्नात्षष्ठगते सिते ।
उच्चगे शुभसंयुक्ते तल्लग्नं सर्वथा त्यजेत् ॥
[2]लग्नाच्छुक्रो भवेत्षष्ठो भृगुषट्क इतीरितः ।
संनिहन्ति गुणान् सर्वानाधिर्धातूनिव क्रमात् ॥

## कश्यपः

[3]नीचराशिगते शुक्रे शत्रुक्षेत्रगतेऽपि वा ।
भृगुषष्ठाह्वयो दोषो नास्ति तत्र न संशयः ॥

## मुहूर्तचिन्तामणिः

[4]सितेऽरिनीचगृहगे तत्षष्ठदोषोऽपि न ॥

षष्ठशुक्रापवाद उच्यते । सिते शुक्रे अरिनीचगृहगे शत्रुगृह( ? हगे ) स्वनीचगृहगे वा सति तत्षष्ठदोषो भृगुषट्कदोषोऽपि न स्यात् । पीटी.

## १० गण्डान्तदोषः

### वसिष्ठः ।

[5]यदन्तरालं पितृसार्पधिष्ण्ये
मूलेन्द्रयोरश्विनपौष्णयोश्च ।
भसंधिगण्डान्तमिति त्रयं तत्
यामप्रमाणं शुभकर्म हन्ति ॥

नक्षत्रगण्डान्तः

[1]अहिवासवपौष्णाना-
मन्त्ययामार्धमृक्षसंधिः स्यात् ।
पितृमूलाश्विभाना-
मादौ यामार्धमृक्षगण्डान्तम् ॥

तिथिगण्डान्तः

पुनः पुनः पञ्चमषष्ठतिथ्यो-
र्यदन्तरालं प्रहारार्धकालः ।
तल्लग्नजातं गुणसंचयं य-
त्क्ष्वेडं यथा हन्ति नरं हि नूनम् ॥

लग्नगण्डान्तः

लग्नान्तरालं घटिकार्धमेत-
त्कुलीरहर्योरलिचापयोश्च ।
मीनाजयोः सर्वगुणान्निहन्ति
लोभो यथा सर्वगुणान्नरस्य ॥

## नारदः

तिथिगण्डान्तः

[2]पूर्णानन्दाख्ययोस्तिथ्योः संधिर्नाडीद्वयं सदा ।
गण्डान्तं मृत्युदं जन्मयात्रोद्वाहव्रतादिषु ॥

लग्नगण्डान्तः

[3]कुलीरसिंहयोः कीटचापयोर्मीनमेषयोः ।
गण्डान्तमन्तरालं स्याद्घटिकार्धं मृतिप्रदम् ॥

---

( १ ) ज्योना. २७।३६ पृ. ५३ सर्वथा ( सर्वदा ); प्रपा. ३३२ षष्ठा ( षट्का ); संप्र. ७८७ षष्ठाह्वयो ( षष्ठाष्टमो ) त्षष्ठगते ( दष्टगते ); ज्योनि. ७० सर्वथा ( सर्वदा ); संग. २४७.

( २ ) विसौ. २४.

( ३ ) ज्योनि. ७० नीचराशिगते शुक्रे ( नीचगे तत्तुरीये वा ); संग. २४७ (=) नीचराशिगते शुक्रे ( नीचगते तुरीये वा ) षष्ठाह्वयो ( षट्कस्थितो ). 'नीचराशिगते शुक्रे' इति पीयूषधारापाठः.

( ४ ) मुचि. ६।८८.

( ५ ) वसं. ३२।६४ त्रयं तत् याम (द्वयं तन्नाड्यः); विसौ. २४ सार्पधिष्ण्ये ( सार्पयोस्तु ) भसंधि ( तत्संधि ) त्रयं (द्वयं).

( १ ) वसं. ३२।६५–६७ ; विसौ. २४.

( २ ) ज्योना. २७।३८ पृ. ५३ ; प्रपा. ३३२ ; गभा. १६६ सदा ( तथा ) ज्योतिर्निबन्धे ; संप्र. ७८७ ; सिन्धु. ८४८ सदा ( तथा ) ; ज्योनि. ७० (=) ; संग. २४० सिन्धुवत्.

( ३ ) ज्योना. २७।४० पृ. ५३ ; प्रपा. ३३२ ; गभा. १६६ मन्तरालं स्यात् ( मन्तरं कालं ) ज्योतिर्निबन्धे ; संप्र. ७८७–७८८ ; सिन्धु. ८४८–८४९ ; ज्योनि. ७० (=) मन्तरालं ( मन्तराले ) ; संग. २४१.

नक्षत्रगण्डान्तः

[1]सार्पेन्द्रपौष्णभेष्वन्त्यषोडशांशा भसंधयः ।
तदग्रभेष्वाद्यपादा भानां गण्डान्तसंज्ञकाः ॥

[2]उग्रं च संधित्रितयं गण्डान्तत्रितयं महत् ।
मृत्युप्रदं जन्मयानविवाहस्थापनादिषु ॥

### गर्गः

[3]मघायाः प्रथमे पादे मूलस्य प्रथमे तथा ।
रेवत्याश्च चतुर्थेंऽशे विवाहः प्राणनाशनः ॥

### च्यवनः

[4]तिथ्यादीनां संधिदोषं तथा गण्डान्तसंज्ञितम् ।
हन्ति लाभगतश्चन्द्रः केन्द्रगा वा शुभग्रहाः ॥

### सूर्यसिद्धान्ते

[5]सार्पेन्द्रपौष्णधिष्ण्यानामन्त्याः पादा भसंधयः ।
तदग्रभेषु पादार्धं गण्डान्तं नाम कीर्त्यते ॥

### रत्नमालायाम्

[6]पौष्णाश्विन्योः सार्पपित्रर्क्षयोश्च
यच्च ज्येष्ठामूलयोरन्तरालम् ।
तद्गण्डान्तं स्याच्चतुर्नाडिकं हि
यात्राजन्मोद्वाहकालेष्वनिष्टम् ॥

(१) ज्योना. २७।४१ पृ. ५३ ; प्रपा. ३३२ ( सार्पेन्द्रपौष्णनामान्त्यषोडशांशकसंधयः । तदग्रेष्वाद्यपादेषु पादगण्डान्तसंज्ञितम् ॥ ); गभा. १६६ सार्पेन्द्र (सार्पैन्द्र) शांशा भसंधयः ( शांशेन संधयः ) ज्योतिर्निबन्धे ; संप्र. ७८७ उत्तरार्धे ( तदग्रेष्वाद्यपादांशभानां गण्डान्तसंज्ञकाः । ) ; सिन्धु. ८४९; ज्योनि. ७० (=) संज्ञकाः ( संज्ञिताः ) ; संग. २४०.

(२) ज्योना. २७।४२ पृ. ५३ गण्डान्तत्रितयं ( गण्डान्तद्वितयं ) ; प्रपा. ३३२ च संधि ( भसंधि ) गण्डान्तत्रितयं महत् ( गण्डान्तं त्रितयं भवेत् ) ; संप्र. ७८७ ; ज्योनि. ७० (=) ; संग. २४० उग्रं ( उक्तं ) गण्डान्त ( गंण्डान्ते ).

(३) ज्योनि. ७१.

(४) ज्योनि. ७१,७८.

(५) ज्योनि. ७०.

(६) गभा. १६६ ज्योतिर्निबन्धे ; सिन्धु. ८४९–८५० ; ज्योनि. ७१.

### लल्लः

[1]अन्त्यः सार्पेन्द्रपौष्णानामाद्यः पित्राश्विमूलजः ।
जन्मोद्वाहप्रयाणे च मृत्यवेऽमी षडंशकाः ॥

### विवाहवृन्दावनम्

[2]संधौ पुरन्ध्री शुचमेति वन्ध्या
मृतप्रजा वा यदि संधिसंधिः ।
वदन्ति वात्स्या ऋतुना विमूढां
निशीथमध्यंदिनसंधिषूढाम् ॥

अथोक्तसंधिसमये विवाहफलं कथयति–संधाविति । संधौ तिथिनक्षत्रयोगानां संधिकाले विवाहे सति पुरन्ध्री शुचं शोकं एति प्राप्नोति, यदि संधिसंधिस्तदा मृतप्रजा भवेत् । तथा निशीथमध्यंदिनसंधिषु ऊढां विवाहितां कन्यां ऋतुना विमूढां आर्तवविहीनां वात्स्या वदन्ति ।
लक्ष्मी.

शूलवैधृतवरीयसां च यत्
पञ्चमेषु च तिथिष्ववान्तरम् ।
रेवतीन्द्रफणिभोद्भवं तद-
प्यागताद्द्विगुणमुत्सृजेत्सुधीः ॥

अथ शूलादिदुष्टयोगसंधीनां विशेषं कथयति– शूलेति । शूलवैधृतवरीयसां योगानां यत् पूर्वसाधितं अवान्तरं, पञ्चमेषु तिथिषु पञ्चमीदशमीपञ्चदशीषु च यदवान्तरं, रेवतीन्द्रफणिभोद्भवं च यदवान्तरं, तदपि आगतात् पूर्वसाधितात् द्विगुणं सुधीः उत्सृजेत् त्यजेत् ।
लक्ष्मी.

नक्षत्रयोगतिथिसंधिषु नाडिकैका
तिथ्यष्टविंशतिपलैः सहितोभयत्र ।
कर्कालिमीनतनुसंधिषु दिक्पलानि
त्याज्यानि शेषविवरेष्वपि पञ्च पञ्च ॥

अथ मध्यगत्या नक्षत्रादिसंधिघटिका आनीय कथयति–नक्षत्रेति । नक्षत्रयोगतिथिसंधिषु क्रमेण तिथ्यष्टविंशतिपलैः सहिता एका नाडिका उभयत्र नक्षत्रयोग-

(१) ज्योनि. ७०.

(२) विवृ. ८।२०–२२.

तिथ्यन्तात् पूर्वं पश्चाच्च त्याज्या । कर्कालिमीनतनुसंधिषु उभयत्र दिक्पलानि त्याज्यानि । शेषविवरेषु शेषाणां वृषादिलग्नानां विवरेषु संधिषु अपि पञ्च, पञ्च पलानि त्याज्यानि । लक्ष्मी.

## राजमार्तण्डः

[1]याम यवनाधिपतिस्तदर्धभागं च भागुरिः प्राह ।
दण्डप्रमितं गण्डं पूर्वं परतोऽङ्गिरामीशः ॥

## मुहूर्तचिन्तामणिः

[2]ज्येष्ठापौष्णभसार्पभान्त्यघटिका-
युग्मं च मूलाश्विनी
पित्र्यादौ घटिकाद्वयं निगदितं
तद्गस्य गण्डान्तकम् ।
कर्काल्यण्डजभान्ततोऽर्धघटिका
सिंहाश्वमेषादिगा
पूर्णान्ते घटिकात्मकं त्वशुभदं
नन्दातिथेश्चादिमम् ॥

गण्डान्तदोषमाह- ज्येष्ठेति । गण्डान्तं नाम संधिविशेषः । स चानेकविधः नक्षत्रसंधिस्तिथिसंधिर्लग्नसंधिः तथा योगसंधिः करणसंधिर्वर्षसंधिरयनसंधिरृतुसंधिर्मासंधिः पक्षसंधिः दिनसंधी रात्रिसंधिः मध्याह्नसंधिः प्रातःसंधिः सायंसंधिः निशीथसंधिश्च । तत्र तिथिनक्षत्रलग्नविशेषाणां यः संधिर्नियतकालः स गण्डान्तसंज्ञः । अन्येषां तु संधिर्नियतकालसंधिशब्दवाच्य एव । तत्रादौ नक्षत्रगण्डान्तमुच्यते- ज्येष्ठेति । ज्येष्ठा प्रसिद्धा । पौष्णभं रेवती । सार्पभं आश्लेषा । एषामन्ते घटिकाद्वयम् । तथा मूलाश्विन्यौ प्रसिद्धे । पित्र्यं पितरो देवताऽस्येति पित्र्यं मघा । एषामादौ घटिकाद्वयं च गण्डान्तं नाम । यथा रेवत्यश्विन्योराश्लेषामघयोर्ज्येष्ठामूलयोरन्तरालवर्तिघटीचतुष्टयं नक्षत्रगण्डान्तमशुभदमित्युत्तरार्धेनान्वयः ।

लग्नगण्डान्तमुच्यते- कर्केति । कर्कः प्रसिद्धः । अलिर्वृश्चिकः । अण्डजो मीनः, 'मीनो वैसारिणोऽण्डजः' इत्यभिधानात् । एषां भानां लग्नानामन्ततः । सप्तम्यन्तात्तसिः । अन्ते अर्धघटिका । तथा सिंहमेषौ प्रसिद्धौ । अश्वो धनुः । एषां लग्नानामादिभूतार्धघटिका गण्डान्तं नाम । तथा कर्कसिंहयोर्वृश्चिकधनुषोर्मीनमेषयोर्वा लग्नयोरन्तरवर्तिन्येका घटिका लग्नगण्डान्तमशुभमित्यर्थः ।

तिथिगण्डान्तमुच्यते- पूर्णान्ते इति । पूर्णाः पञ्चमीदशमीपञ्चदश्यः, तासामन्ते घटिकैका, तथा नन्दा प्रतिपत्षष्ठ्येकादश्यः, तासामादिभूतैका घटिका तिथिगण्डान्तं नाम । यथा पञ्चमीषष्ठयोर्दशम्येकादश्योः पञ्चदशीप्रतिपदोर्वा तिथ्योरन्तरालवर्तिघटीद्वयं तिथिगण्डान्तमशुभमित्यर्थः । पीटीं.

## ज्योतिःसागरे

[1]अश्विनीपौष्णमूलादौ त्रिवेदनवनाडिकाः ।
रेवतीशाक्रसार्पान्ते मासशक्रशिवास्त्यजेत् ॥

कथयति वराहमिहिरो
विलोक्य वाक्यानि गण्डविषये च ।
गण्डं दण्डप्रमितं
पूर्वं पश्चात्तयोर्मध्यात् ॥

## रत्नकोशे

[2]आद्यः पितृमूलाश्विषु
पौष्णेन्द्रभुजङ्गभेषु चान्त्यभवः ।
षोडशभागो नेष्टस्तावत्कालस्तु गण्डान्तः ॥

मूलाश्विनीमघानां
प्रथमांशे संस्थिता तु यमदंष्ट्रा ।
भुजगेन्द्ररेवतीनामन्त्ये सैवापरा घोरा ॥

---

(१) ज्योनि. ७०.
(२) मुचि. ६।४३.

(१) ज्योनि. ७०,७१.
(२) ज्योनि. ७०.

## ११ खार्जूरदोषः (एकार्गलदोषः)*

### वसिष्ठः

[1]खार्जूरचक्रस्य समाङ्घ्रिदोषो
विलग्नसंभूतगुणानशेषान् ।
शुभग्रहोत्थानपि तान्निहन्ति
दारिद्र्यमेकं गुणसंहतिं यत् (? यथा) ॥

[2]खरकरतुहिनांश्वोर्दृष्टिसंपातजात-
स्त्वनलयमशरीरी सूद्रिरन्वह्निसंघान् ।
भुवि पतति जनानां मङ्गलध्वंसनार्थं
गुणगणशतसंघैरप्यवार्योऽग्निकोपः ॥

### नारदः

[3]एकार्गलः समाङ्घ्रिश्चेत्तत्र लग्नं विवर्जयेत् ।
अपि शुक्रेज्यसंयुक्तं विषसंयुक्तदुग्धवत् ॥
एकार्गलो नाम सूर्याचन्द्रमसोर्दृष्टिपातः । प्रपा. ३३४

[4]व्याघातशूलपरिघपातपूर्वेषु सत्स्वपि ।
गण्डातिगण्डकुलिशवैधृत्या सहितेषु च ॥

[5]अदितीन्दुमघाद्याद्यमूलमैत्रेज्यभानि च ।
ज्ञेयानि सह चित्राभिर्मूर्ध्नि भानि
यथाक्रमात् ॥

[6]लिखेदूर्ध्वगतामेकां तिर्यग्रेखास्त्रयोदश ।
तत्र खार्जूरिके चक्रे कथितं मूर्ध्नि भं न्यसेत् ।
भान्येकरेखागतयोः सूर्याचन्द्रमसोर्मिथः ।
एकार्गलो दृष्टिपाताच्चाभिजिद्वर्जितानि वै ॥
लाङ्गले कमठे चक्रे फणिचक्रे त्रिनाडिके ।
अभिजिद्गणना नास्ति चक्रे खार्जूरिके तथा ॥

### श्रीपतिः

[1]चक्रे तस्मिन्नेकरेखास्थितेन
ज्ञेयं विद्धं नूनमृक्षं ग्रहेण ।
कैश्चित्तत्राप्युच्यते पादवेधो
भानां चिन्त्यं चात्र लत्ताहतं च ॥

[2]एकामूर्ध्वगतां त्रयोदश तथा
तिर्यग्गताः स्थापये-
द्रेखाश्चक्रमिदं बुधैरभिहितं
खार्जूरिकं तत्र तु ।
व्याघातादिषु मूर्ध्नि भं तु कथितं
तत्रैकरेखास्थयोः
सूर्याचन्द्रमसोर्मिथो निगदितो
दृक्पात एकार्गलः ॥

[3]व्याघातशूलपरिघव्यतिपातपूर्व-
गण्डातिगण्डकुलिशेषु सवैधृतेषु ।
आदित्यचन्द्रपितृसार्पभदस्रमूल-
मैत्राख्यपुष्यसुरवर्धकिभानि मूर्ध्नि ॥

अस्यार्थः– पूर्वो विष्कम्भः । कुलिशं वज्रः । सुरवर्धकिभं चित्रा । शेषाः प्रसिद्धाः । एतेषु पूर्वार्धोक्तेषु व्याघातादिषु नवसु योगेष्वन्यतमेन योगेन यथाक्रममपरार्धोक्तेषु पुनर्वस्वादिषु नवसु नक्षत्रेष्वन्यतमं नक्षत्रं योजयित्वा तन्नक्षत्रं मूर्ध्नि लेखनीयम् । तदारभ्य प्रादक्षिण्येन सर्वाणि नक्षत्राणि सर्वेषु रेखाग्रेषु लेखनीयानि । तत्र सूर्याचन्द्रमसौ एकरेखास्थौ यदा भवेतां

* अत्रापेक्षितः पादवेधादिविचारो ग्रहणभादिदोषप्रकरणे द्रष्टव्यः ।

(१) वसं. ३२।६८ ; विसौ. २३ नशेषान् (नथेथान्) अपि तान् (स तथा) गुणसंहतिं यत् (तु यथा गुणौघान्).

(२) विसौ. २३.

(३) ज्योना. २७।६५ पृ. ५५ ; प्रपा. ३३४ एकार्गलः समाङ्घ्रिश्चेत् (एकार्गलसमाङ्घ्रिश्च) ; संप्र. ७९२ प्रपावत् ; ज्योनि. ७५ (=).

(४) विसौ. २३.

(५) ज्योना. ७।५ पृ. २९ मघाद्याद्य (मघाश्लेषा) ; विसौ. २३ (ज्ञेयानि कार्याणि).

(६) ज्योना. ७।६–८ चक्रे खार्जूरिके तथा (चक्रपाते विशेषतः) ; विसौ. २३ चक्रे खार्जूरिके तथा (चक्रपाते विशेषतः). ' चक्रे खार्जूरिके तथा ' पीयूषधारापाठः ।

(१) प्रपा. ३३४.

(२) प्रपा. ३३४ ; संप्र. ७९२ रेखाश्चक्र (रेखाचक्र) एकार्गलः (एकार्गले) ; संग. २३४ रेखाश्चक्र (रेखाचक्र).

(३) प्रपा. ३३४ ; संप्र. ७९२ पूर्व (पूर) चन्द्र (चान्द्र) पुष्य (तिष्य) ; संग. २३४ चन्द्र (चान्द्र) पुष्य (तिष्य).

तदा मिथस्तद्दृष्टिपातजनितः एकार्गलदोषो भवेदिति ।
प्रपा. ३३५

## त्रिविक्रमः

[1]विरुद्धनामयोगेषु साभिजिद्विषमर्क्षगः ।
अर्कादिन्दुस्तदा योगो निन्द्य एकार्गलाभिधः ॥

## विवाहवृन्दावनम्

[2]विद्धा त्रयोदशभिरूर्ध्वगतैकरेखा
खार्जूरिकं तदिह शीर्षभतो भचक्रे ।
न्यस्ते सहाभिजिति तारकराजभान्वो-
स्तुल्यर्क्षगम्यगतयोर्नयनार्गलेयम् ॥

अथैकार्गलादोषमाह— विद्धेति । ऊर्ध्वगतैकरेखा त्रयोदशभिः तिर्यग्रेखाभिः विद्धा सती खार्जूरिकं चक्रं भवति । तदिहास्मिन् चक्रे शीर्षभतः वक्ष्यमाणशीर्षनक्षत्रात् सहाभिजिति अभिजित्सहिते भचक्रे न्यस्ते सति तुल्यर्क्षगम्यगतयोः तारकराजभान्वोः सूर्यचन्द्रयोः एकरेखास्थयोरियं नयनार्गला एकार्गलाख्यदोषो भवति । रविचन्द्रयोर्मध्ये एकस्य नक्षत्रं यावद्गतं तावदेवान्यस्य गम्यं चेत्तदैवायं दोषः इत्यनेनात्र पादवेधः सूचितः ।
लक्ष्मी.

[3]शीर्षभं भवति रूपसंयुता
दुष्टयोगमितिरर्धिता सती ।
शेषिणी यदि च सार्धविश्वयु-
ङ्मङ्गलं गलति सार्गले विधौ ॥

अथ शीर्षनक्षत्रज्ञानं तथैकार्गलाफलं चाह— शीर्षभमिति । इयमर्गला व्याघातादिदुष्टयोगे सति ज्ञेयेति । दुष्टे योगे सति सा दुष्टयोगमितिः विष्कम्भादिदुष्टयोगावधिसंख्या रूपसंयुता एकयुता अर्धिता सती शीर्षभं शीर्षनक्षत्रं भवति । यदि साऽर्धिता शेषिणी शेषसहिता भवेत्, तदा सार्धविश्वयुक् सार्धत्रयोदशसहिता सती शीर्षभं ज्ञेयम् । एवं विधौ चन्द्रे सार्गले सति मङ्गलं विवाहादिशुभकार्यं गलति नश्यति ।
लक्ष्मी.

(१) विसौ. २३.
(२) विवृ. १।१४ ; विसौ. २३-२४.
(३) विवृ. १।१५ ; विसौ. २४.

[1]त्यक्त्वा गतैष्यस्य परे तु हेतु-
मुज्झन्ति नक्षत्रमशेषमेव ।
एकार्गलस्यैव हि सा च भङ्गी
संध्यागतं यद्गलहस्तयन्ति ॥

अथार्गलायामन्याचार्यमतं कथयति— त्यक्त्वेति । परे श्रीपत्याद्याचार्यास्तु गतैष्यस्य हेतुं त्यक्त्वा अशेषं समस्तं एव नक्षत्रं उज्झन्ति त्यजन्ति, हि यस्मात् ते संध्यागतं संध्योदितं सूर्याच्चतुर्दशं नक्षत्रं यत् यद्वत् समस्तमेव गलहस्तयन्ति त्यजन्ति सैव एकार्गलस्यापि भङ्गी रचनायुक्तिः । यद्वत् संध्योदितं सूर्येण चरणविद्धमपि समस्तमेव नक्षत्रं त्यजन्ति तद्वदेवैकार्गलगतमपि समस्तमेव त्यजन्तीत्यर्थः ।
लक्ष्मी.

[2]एकार्गलः साभिजितीन्दुतोऽर्कः
समेऽस्ति योगेष्वशुभाह्वयेषु ।

अशुभाह्वयेषु वैधृत्यादिषु योगेषु इन्दुतः चन्द्रनक्षत्रात् अर्कः सूर्यः साभिजिति समे समसंख्यनक्षत्रे अस्ति चेत् तदा एकार्गलः स्यात् ।
लक्ष्मी.

## मुहूर्तचिन्तामणिः

[3]व्याघातगण्डव्यतिपातपूर्वे
शूलान्त्यवज्रे परिघातिगण्डे ।
एकार्गलाख्यो ह्यभिजित्समेतो
दोषः शशी चेद्विषमर्क्षगोऽर्कात् ॥

खार्जूरदोषमाह । अन्त्यो वैधृतिः । अन्ये प्रसिद्धाः । यस्मिन् दिने व्याघातादिके विरुद्धे दुष्टयोगे सति अर्कात् अर्कनक्षत्रात् शशी चन्द्रः अभिजित्समेतो विषमे विषमसंख्याके ऋक्षे नक्षत्रे स्यात्तदा खार्जूरचक्रोत्पन्नः एकार्गलाख्यो दोषः स्यात् । यदा समे स्यात्तदा न दोष इत्यर्थः । नारदस्तु अभिजिद्वर्जितं चक्रमाह । तत्र त्रिविक्रमकेशवार्कवाक्ययोः समूलत्वस्य शिष्टसंमतत्वान्नारदादिवाक्यैः सह विकल्पः । ततोऽनयोः पक्ष-

(१) विवृ. १।१६.
(२) विवृ. १७।४.
(३) मुचि. ६।६२.

योर्यथादेशाचाराद्व्यवस्थेति युक्तं प्रतीमः ।

पीटी.

---

## १२ वारदोषः

### वसिष्ठः

[1]यामार्धं यमघण्टकश्च कुलिक-
श्चेत्येव वारोद्भवा
दोषा लग्नतदंशसौम्यखचर-
प्रोद्भूतसर्वान् गुणान् ।
निघ्नन्त्येव यथा शरीरमखिलं
दोषात्रयः प्रोत्कटा-
श्चान्योऽन्या गुणसंचयानपि महा-
यामार्धतुल्याः पृथक् ॥

[2]निधनं प्रहारार्धे तु निःस्वत्वं यमघण्टके ।
कुलिके सर्वनाशः स्याद्रात्रावेते न दोषदाः ॥

[3]कुलिके निधनं विद्याद्यमघण्टेऽर्थनाशनम् ।
यामार्धे कार्यनाशश्च प्रोक्तो यामार्धसंख्यया ॥

[4]निशासु वारप्रभवा हि दोषा-
स्त्याज्याः सदा कौङ्कणसंज्ञदेशे ॥

### नारदः

[5]निन्दिता वारदोषा ये सूर्यवारादिषु क्रमात् ।
अपि सर्वगुणोपेतास्ते वर्ज्याः सर्वमङ्गले ॥

[1]आद्यः षष्ठो द्वितीयोऽस्मात्तस्मात्षष्ठस्तृतीयकः ।
षष्ठः षष्ठश्चेतरेषां कालहोराधिपाः स्मृताः ।
सार्धनाडीद्वयेनैव दिवारात्रौ यथाक्रमात् ॥

नारदो वारदोषं कालहोराविभागेनाह—आद्य इति ।

विसौ. २३

### बृहस्पतिः

[2]वारेशे सबले वाऽपि बलाढ्ये लग्नगे शुभे ।
कुलिकोदयदोषस्तु विनश्यति न संशयः ॥
वाराधीशे बलोपेते विधौ वा बलसंयुते ।
अर्धप्रहरसंभूतो दोषो वै नात्र विद्यते ॥
शुभे केन्द्रगते चन्द्रे शुभांशे वा शुभेक्षिते ।
लग्नगे सबले वाऽपि कुलिकस्तु विलीयते ॥
अर्धप्रहरपूर्वार्धे मध्यं तु यमघण्टके ।
कुलिकान्त्यघटीं त्यक्त्वा शेषेषु शुभमाचरेत् ॥

### गर्गः

[3]तत्र निन्दितवारो यो वारदोषः स उच्यते ।
वारदोषो वरं हन्ति मार्जारो मूषकं यथा ॥
स्थूले शुभेऽपि सूक्ष्मः स्या-
दशुभस्त्याज्य एव सः ।
सूक्ष्मे शुभेऽपि स्थूलश्चे-
दशुभस्त्याज्य एव सः ।
तस्माद्वारौ स्थूलसूक्ष्मौ शुभौ ग्राह्यौ विजानता ॥

[4]विन्ध्यस्योत्तरकूले तु यावदा तुहिनाचलम् ।
यमघण्टकदोषोऽस्ति नान्यदेशेषु विद्यते ॥
मत्स्याङ्गमगधान्ध्रेषु यमघण्टस्तु दोषकृत् ।
काश्मीरे कुलिकं दुष्टमर्धयामस्तु सर्वतः ॥

[5]क्रूरवारे क्रूरहोरा न शस्ता इति मङ्गले ।
नातिदुष्टा शुभे वारे रात्रौ स्वल्पफला मता ॥

---

(१) वसं. ३२।७६ ; विसौ. २३ प्रथमे पादे (यामार्धो यमघण्टकः कुलिक इत्येते च वारोद्भवाः) तदंश (नवांश) दोषात्रयः (दोषत्रयं) चान्योऽन्या (अन्योन्यं).

(२) वसं. ३२।७७ ; प्रपा. ३३४ नाशः (दोषः) बृहस्पतिः ; विसौ. २३ ; संप्र. ७९१ बृहस्पतिः .

(३) विसौ. २३ ; संप्र. ७९१.

(४) प्रपा. ३३४ ; संप्र. ७९१ कौङ्कण (टङ्कण).

(५) ज्योना. २७।६४ पूर्वार्धे (वारमध्ये तु ये दोषाः सूर्यवारादि तु क्रमात् ।) ; प्रपा. ३३४ सर्वमङ्गले (शुभमङ्गले) ; संप्र. ७९१ निन्दिता (न हिता) ; संग. २४१ संप्रवत् .

(१) ज्योना. ५।१८-१९ ; विसौ. २३.

(२) ज्योनि. ७५; संग. २४३ कोदय (को दिन) चिन्तामणिटीकायामपि इत्युक्तम्.

(३) विसौ. २३.

(४) संग. २४२.

(५) ज्योनि. ७७.

### श्रीपतिः

[1]अहनि निशि गजांशः स्वो दिनेशादिकानां
भवति तु गुरुभौमज्ञार्किकाले क्रमेण ।
प्रभवति यमघण्टः कण्टकः कालवेला
कुलिक इति विरुद्धस्तत्परार्धं निषिद्धम् ॥

### वैद्यनाथः

[2]न लग्नं सचतुर्वर्गं दृश्यते कालहोरया ।
अपि षड्वर्गसंशुद्धं कुलिकेन विहन्यते ॥

### महेश्वरः

[3]मार्तण्डोदयतः स्मृता दिनपते-
र्यामार्धनाथा ग्रहा
मार्तण्डात्मजभोग उत्तरलव-
स्तज्ज्ञैः शुभे कर्मणि ।
त्याज्योऽसौ कुलिकोऽथ सूर्यदिवसा-
दन्यैश्च शक्रार्कदि-
ग्वस्वङ्गाब्धियमैः स्मृताः कुरहितैः
रात्रौ तु तिथ्यंशकैः ॥

### संग्रहः ( संग्रहकारः )

[4]अहःप्रमाणं वसुधा विभज्य
तद्वारपस्य प्रथमान्त्यभागौ ।
शेषाः षडंशाः क्रमशोऽपि नेयाः
शनेस्तु भागं कुलिकं वदन्ति ॥
[5]शन्यंशः कुलिको ज्ञेयो गुर्वंशो यमघण्टकः ।
अर्धप्रहरः सौम्यांशो ह्यर्कांशः कालसंज्ञकः ॥

अस्यार्थः— वारस्य अहःप्रमाणं अष्टधा विभजेत् । तत्र प्रथमान्त्यभागौ वाराधिपस्य अंशौ । शेषाः क्रमेण तत्तद्ग्रहांशा भवन्ति । यः शन्यंशः स कुलिको भवति । यो बृहस्पत्यंशः स यमघण्टको भवति । यः सौम्यांशः सोऽर्धप्रहरसंज्ञकः । यस्त्वादित्यांशः स कालसंज्ञको भवति । प्रपा. ३३४

[1]अर्धप्रहरकादौ तु मध्ये तु यमघण्टके ।
कुलिकेऽन्त्ये विवर्ज्याः स्यु-
स्तिस्रो द्वे एकनाडिका ॥

दिवाऽपि त्याज्यकालप्रमाणमाह संग्रहकारः— अर्धप्रहरकादाविति । प्रपा. ३३४

### चूडारत्ने

[2]वेदाद्रिद्विशराष्टाग्निरसा यामार्धकाः क्रमात् ।
आदित्यादौ शुभे त्याज्या
दिवैव न तु निश्यपि ॥

### दीपके

[3]दशेन्द्रौ रवौ नागसूर्यौ हिमांशौ
दर्शतू कुजे वेदनागौ च सौम्ये ।
गुरौ व्यङ्गभूपा भृगौ वेदशक्रौ
नृपार्काश्विनो मन्दवारे च कालः ॥
एतेऽपि सत्कर्मणि वर्जनीया
दिवा निशायामपि षोडशांशाः ।
नृपांशकं पञ्चदशांशकं वा
नान्यो गुणः कश्चिदपाकरोति ॥

### रत्नकोशे

[4]ये द्युवारास्ते नागा
दिवा यथोक्तास्तथैव ते रात्रौ ।
कालः कुलिको ज्ञेयः सरोजशङ्खोक्तवेलायाम् ॥
छाया घटीचतुर्भागो नाड्यर्धमुदयः स्मृतः ।
वेला नाडीत्रिभागस्तु शेषः कालः प्रकीर्तितः ॥
छायोदयस्तु वेला कालश्चेति प्रकीर्तितो मुनिभिः ।

---

( १ ) ज्योनि. ७५.
( २ ) ज्योनि. ७७.
( ३ ) ज्योनि. ७५.
( ४ ) प्रपा. ३३४; संप्र. ७९१ तद्वारपस्य प्रथमान्त्यभागौ ( तद्वारगः स्यात्प्रथमोऽन्त्यभागः ) भागं कुलिकं ( भागाः कुलिकाः ).
( ५ ) प्रपा. ३३४ ; संप्र. ७९१.

( १ ) प्रपा. ३३४ मध्ये तु ( मध्यमे ) ; संप्र. ७९२.
( २ ) ज्योनि. ७५.
( ३ ) ज्योनि. ७५.
( ४ ) ज्योनि. ७५.

कुलिकश्चतुरङ्गोऽयं ज्ञेयः स्वयशोर्थिना विदुषा ॥
महतीं पीडां क्लेशं
मृत्युसमामापदं तथा मृत्युम् ।
कुलिकः करोति नियतं
चतुर्विधोऽयं यथोद्दिष्टः ॥

## संहिताप्रदीपे

[1]यथा दिवार्धप्रहरा न शस्ता-
स्तथैव रात्रावपि केचिदूचुः ।
व्येको निशायां शुभदोऽथ वर्ज्यो
दिवार्धयामस्तु मतं बहूनाम् ॥

## मुहूर्तचिन्तामणिः

[2]सूर्यादिवारे तिथयो भवन्ति
मघा विशाखा शिवमूलवह्नि ।
ब्राह्मं करोऽर्काद्यमघण्टकाश्च
शुभे विवर्ज्या गमने त्ववश्यम् ॥

अथ यमघण्टः । मघा, विशाखा, शिवः आर्द्रा, मूलम्, वह्निः कृत्तिका । समाहारद्वन्द्वः । ब्राह्मं रोहिणी, करो हस्तः । एतानि नक्षत्राणि अर्कात् सूर्यादिवारेषु यमघण्टाः स्युः । यथा रवौ मघा यमघण्टः । सोमे विशाखा । भौमे आर्द्रा । बुधे मूलम् । गुरौ कृत्तिका । शुक्रे रोहिणी । शनौ हस्तः ।

अत्र पाठान्तरम्– ' सूर्यादिवारे तिथयो हि पित्र्य-द्वीशेशमूलाग्निविरिञ्चिहस्ताः । भवन्ति सूर्याद्यमघण्टकाश्च शुभे विवर्ज्या गमने त्ववश्यम् ॥ ' इति । अयं पाठः साधीयान् । प्राक्पाठे हि कतिचिन्नक्षत्राणि पूर्वार्धे द्वे तूत्तरार्धे इत्यसामञ्जस्यात् । एते दग्धादियोगाः शुभे शुभकार्ये विवर्ज्याः त्याज्याः । तुर्विशेषे । गमने यात्रायां तु अवश्यं वर्ज्याः । पीटी.

[3]कुलिकः कालवेला च यमघण्टश्च कण्टकाः ।
वाराद्द्विघ्ने क्रमान्मन्दे
बुधे जीवे कुजे क्षणः ॥

अथ कुलिककालवेलायमघण्टकण्टकदोषानाह–कुलिक इति । वारात् वर्तमानवारात् मन्दे शनैश्चरे गणिते सति योऽङ्को भवेत्तस्मिन् द्विगुणे योऽङ्कस्तत्संख्यः क्षणो मुहूर्तः कुलिको भवति । एवं वर्तमानवारात् बुधे जीवे कुजे गणिते ततो द्विगुणिते सति योऽङ्कः स क्रमात् कालवेलायमघण्टकण्टकसंज्ञकाः दुष्टमुहूर्ताः स्युः । यथा रवितः शनिः सप्तसंख्याकः स द्विगुणश्चतुर्दश जाताः । अतस्तत्संख्याको मुहूर्तः कुलिकसंज्ञो रविवारे भवति । एवं रवावष्टमो मुहूर्तः कालवेला, तथा रवौ दशमो मुहूर्तो यमघण्टः, तथा रवौ षष्ठो मुहूर्तः कण्टकसंज्ञ इत्यर्थः । एवं सोमवारादावपि कुलिककालवेलायम-घण्टकण्टकाः स्युरित्यर्थः । पीटी.

[1]वारस्त्रिघ्नोऽष्टभिस्तष्टः सैकः स्यादर्धयामकः ॥

वारः इष्टो वारस्त्रिघ्नः सैकः अष्टभिस्तष्टः शेषितो योऽङ्कः सोऽर्धयामाख्यो दोषः स्यात् । पीटी.

शक्रार्कदिग्वसुरसाब्ध्यश्विनः कुलिका रवेः ।
रात्रौ निरेकास्तिथ्यंशाः
शनौ चान्त्योऽपि निन्दिताः ॥

वारदोषभेदं कुलिकमाह– शक्रेति । रवेरिति ल्यब्लोपे पञ्चमी । रविमारभ्य सर्ववारेषु क्रमादुक्तसंख्यास्तिथ्यंशा मुहूर्ताः कुलिकाः स्युः । यथा दिवसे रवौ १४, सोमे १२, भौमे १०, बुधे ८, गुरौ ६, शुक्रे ४, शनौ २ । रात्रावेते निरेकाः कार्याः । यथा रवौ १३, सोमे ११, भौमे ९, बुधे ७, गुरौ ५, शुक्रे ३, शनौ १ । शनौ त्वन्त्योऽपि रात्रेः पञ्चदशोऽपि मुहूर्तः कुलिकः । एते कुलिका निन्दिताः । पीटी.

## मुहूर्तसर्वस्वे

[2]अर्कवारे चतुर्थश्च सोमे सप्तमितस्तथा ।
द्वितीयो भौमवारे तु बुधवारे तु पञ्चमः ॥
अष्टमो गुरुवारे स्यात्तृतीयः शुक्रवासरे ।
शनौ षष्ठो ह्यर्धयामः
शुभे त्याज्यो मनीषिभिः ॥

---

(१) ज्योनि. ७५.
(२) मुचि. १।९. टीकायां पाठान्तरमपि द्रष्टव्यम् ।
(३) मुचि. १।३७ ; संग. २४२ चिन्तामणौ.

(१) मुचि. ६।६४–६५.
(२) संग. २४१–२४२.

प्रहरस्य चतुर्थांशं रविवारे चतुर्दशम् ।
सोमे तु द्वादशं भौमे दशमं च बुधेऽष्टमम् ॥
षष्ठार्के वेदनवममेकनेत्रं रवेर्दिनात् ॥
दुर्मुहूर्तं दिवा रात्रावष्टमं भृगुसोमयोः ।
भौमवारे सप्तमं च सर्वकार्ये विलोकयेत् ॥

## अनिर्दिष्टकर्तृकवचनानि

[1]पापग्रहोऽपि वारेशो लग्नन्त्यायारिवित्तगः ।
स्ववारकथितं दोषं न शुभोपरि यच्छति ॥

[2]पापग्रहोऽपि वारेशो
लग्नाद्दुश्चिक्यगः शुभान् ।
दद्यात्ताराजितो वक्री शुभकर्माणि वृत्रहन् ॥

दुश्चिक्यं तृतीयस्थानम् । संप्र. ७९८

[3]सौम्यग्रहेऽथ वारेशे बलाढ्ये लग्नगेऽथवा ।
कुलिकोदयदोषोऽत्र नास्तीति श्रुतिचोदितम् ॥

[4]शुभांशे शुभकार्यस्थोऽशुभः केन्द्रे शुभेक्षितः ।
लग्नादुपचये चन्द्रो यमघण्टकनाशनः ॥

[5]त्रिकोणे कण्टके वाऽपि शुभस्तिष्ठेद्बलान्वितः ।
यमघण्टकदोषोऽपि नात्र स्याच्चन्द्रलग्नयोः ॥

शुभकर्मगते चन्द्रे शुभांशे शुभवीक्षिते ।
यमघण्टकसंभूतो दोषो नैवात्र विद्यते ॥

---

(१) प्रपा. ३३७ लग्नन्त्याया (लग्नान्त्याया) शुभोपरि यच्छति (शुभो वा प्रयच्छति); संप्र. ७९८.

(२) प्रपा. ३३७ उत्तरार्धे (दद्यात्पराजितो वक्री शुभकर्माणि वृत्रहन् ।); संप्र. ७९८ शुभान् (शुभाव्).

(३) प्रपा. ३३७; संप्र. ७९८.

(४) प्रपा. ३३७ स्थोऽशुभः केन्द्रे (स्थः शुभकेन्द्रे); संप्र. ७९८ घण्टक (कण्टक).

(५) प्रपा. ३३७.

## १३ विषघटीदोषः

### वसिष्ठः

[1]खाक्षा जिना व्योमगुणाः खवेदाः
५० २४ ३० ४०
इन्द्राः कुदस्राः खगुणा नखाश्च ।
१४ २१ ३० २०
दन्ताः खरामाः खयमाः पुराणाः
३२ ३० २० १८
क्ष्माबाहवो विंशतिरब्धिचन्द्राः ॥
२१ २० १४

[2]इन्द्रास्तु काष्ठा मनवः षडक्षा
१४ १० १४ ५६
वेदाश्विनो व्योमभुजा दशाऽऽशाः ।
२४ २० १० १०
नागेन्दवो भूपतयोऽब्धिदस्रा
१८ १६ २४
व्योमाग्नयो दस्रमुखर्क्षकाणाम् ॥
३०

[3]आभ्यः परस्ताद्विषनाडिकाख्या-
स्त्याज्याश्चतस्रः खलु शोभनेषु ।
विषाख्यनाडीषु कृतं शुभं यद्
विनाशमायात्यचिराच्च सर्वम् ॥

[4]कुर्वन्ति नाशं विषनाडिकास्ता
लग्नाश्रितानंशगुणान् विशेषान् ।
जन्तून् यथा कुष्ठभगन्दरार्श-
व्याघातशूलक्षयवातरोगाः ॥

कुर्वन्त्युद्वाहितां कन्यां विधवां वत्सरत्रयात् ।
अन्यस्मिन्मङ्गले ताश्च निधनं वाऽथ निर्धनम् ॥

---

(१) वसं. ३२।७८ ; विसौ. २५ व्योमगुणाः (बिन्दुगुणाः) इन्द्राः (शक्राः) खयमाः (करजाः).

(२) वसं. ३२।७९ ; विसौ. २५ वेदाश्विनो (वेदाक्षिणी).

(३) वसं. ३२।८० ; विसौ. २५ शोभनेषु (मङ्गलेषु) चिराच्च (चिरेण).

(४) वसं. ३२।८१–८२ ; विसौ. २५ रार्शव्याघात (राश्मर्याध्मान).

## नारदः

[1]खमार्गणा वेदपक्षाः खरामा व्योमसागराः ।
अब्धिचन्द्रा रूपदस्राः खरामा व्योमबाहवः ॥

[2]द्विरामाः खाग्नयः शून्यदस्राः कुञ्जरभूमयः ।
रूपपक्षा व्योमदस्रा वेदचन्द्राश्चतुर्दश ॥
शून्यचन्द्रा वेदचन्द्राः षडक्षा वेदबाहवः ।
शून्यदस्राः शून्यचन्द्राः शून्यचन्द्रा गजेन्दवः ॥

[3]तर्कचन्द्रा वेदपक्षाः खरामाश्चाश्विभात्क्रमात् ।
आभ्यः पराः स्युश्चतस्रो नाडिका विषसंज्ञिताः ।
विवाहादिषु कार्येषु वर्ज्यास्ता विषनाडिकाः ॥

[4]ऋक्षाद्यन्तघटीमितं विषमानेन ताडितः ।
षष्टिभिर्हरते लब्धं पूर्वऋक्षेण योजयेत् ॥

(१) ज्योना. २७।५७–५८ पृ. ५५ व्योमसागराः (शून्यसागराः) अब्धि (वार्धि); प्रपा. ३३३ अब्धि (वार्धि); संप्र. ७८९; ज्योनि. ७४ प्रपावत्; संग. २३३; कुभ. ८५९ (=) प्रपावत्.

(२) ज्योना. २७।५८–५९ पृ. ५५; प्रपा. ३३३; संप्र. ७९०; ज्योनि. ७४; संग. २३३; कुभ. ८५९ (=).

(३) ज्योना. २७।५९–६० पृ. ५५ षडक्षा (षट्पञ्चा); प्रपा. ३३३ षडक्षा वेदबाहवः (षट्पञ्चाशत्त्रयीकराः); संप्र. ७९० शून्यचन्द्रा गजे (पूर्णचन्द्रा गजे); ज्योनि. ७४ संप्रवत्; संग. २३३ संप्रवत्; कुभ. ८५९ (=) संप्रवत्.

(४) ज्योना. २७।६०–६१ पृ. ५५ संज्ञिताः (संज्ञिकाः); प्रपा. ३३३ द्वितीयार्धे (एभ्यः पराश्चतस्रः स्युर्नाडिका विषसंज्ञिताः ।) वर्ज्यास्ता विषनाडिकाः (विषनाडीर्विवर्जयेत्); संप्र. ७९० चतस्रो नाडिका (घटिकाश्चतस्रो) वर्ज्यास्ता विषनाडिकाः (विषनाडीश्च वर्जयेत्); ज्योनि. ७४ वर्ज्यास्ता विषनाडिकाः (विषनाडीस्तु वर्जयेत्) द्वितीयार्धं संप्रवत्; संग. २३३ द्वितीयार्धे (आभ्यः पराः स्युर्घटिकाश्चतस्रो विषसंज्ञिकाः ।) तृतीयार्धं नास्ति; कुभ. ८५९ (=) श्विभात्क (श्विनीक) द्वितीयार्धे (एभ्यः पराः स्युर्घटिकाश्चतस्रो विषसंज्ञिताः ।).

(५) ज्योना. २७।६२ पृ. ५५.

## बृहस्पतिः

[1]चन्द्रो विषघटीदोषं हन्ति केन्द्रत्रिकोणगः ।
लग्नं विना शुभैर्दृष्टः केन्द्रे वा लग्नपस्तथा ॥

## दैवज्ञमनोहरे

[2]तिथीषुनागाद्रिगिरीषुवारिधि-
१५ ५ ८ ७ ७ ५ ४
गजाद्रिदिक्पावकविश्ववासवाः ।
८ ७ १० ३ १३ १४
मुनीभसंख्या प्रथमातिथेः क्रमात्
७ ८
परं विषं स्याद्घटिकाचतुष्टयम् ॥

[3]नखा द्वयं द्वादश दिक् च शैला
२० २ १२ १० ७
बाणाश्च तत्त्वानि यथाक्रमेण ।
५ २५
सूर्यादिवारेषु परं चतस्रो
नाड्यो विषं स्यात्खलु वर्जनीयम् ॥

[4]विवाहादिषु कार्येषु विषनाडीश्च वर्जयेत् ।
केन्द्रे कोणेऽङ्गहीने चेदिन्दुर्विषविनाशकृत् ॥

## फलप्रदीपे

[5]यात्राविवाहादिषु मङ्गलेषु
सर्वेषु नूनं विषनाडिकाश्च ।
कुर्वन्ति कर्तुर्मरणं हि शीघ्रं
कृतप्रमाणायुष एव धात्रा ॥

(१) ज्योनि. ७४.
(२) ज्योनि. ७४ (=) गिरीषु (गिरीश) विश्ववासवाः (दिक् च भास्कराः) विषं स्यात् (विषाख्यं); संग. २३४ मुनीभसंख्या (मुनिभिसंख्या); कुभ. ८५८ (=) गिरीषु (गिरीश) वारिधि (वारिधिः) विश्ववासवाः (दिक् च भास्करः) विषं स्यात् (विषाख्यं).
(३) ज्योनि. ७४ (=) नखा द्वयं द्वादश (विंशच्चतुर्दश) उत्तरार्धे (सूर्यादिवारेषु भवत्यनन्तरं नाड्यो विषाख्यं घटिकाचतुष्टयम् ।); संग. २३४; कुभ. ८५९ (=) बाणाश्च (बाणश्च) शेषं ज्योनिवत्.
(४) संग. २३४.
(५) ज्योनि. ७४.

विषघटिकोक्तध्रुवका
नक्षत्रगतैष्ययोगसंगुणिताः ।
खरसहृता स्पष्टाः स्यु-
स्ताभ्यो घटिकाचतुष्टयं च तथा ॥

अन्यथा पञ्चपञ्चाशद्घोगपक्षे मूलस्य विषघटिकाभाव एव । ज्योनि. ७४

विषनाड्युत्थितं दोषं हन्ति सौम्यर्क्षगः शशी ।
मित्रदृष्टोऽथ वा स्वीयवर्गस्थो लग्नगोऽपि वा ॥

## मुहूर्तचिन्तामणिः

[1]खरामतोऽन्त्यादितिवह्निपित्र्यभे (३०)
खवेदतः के रदतश्च सार्पभे । (४०, ३२)
खबाणतोऽश्वे धृतितोऽर्यमाम्बुपे (५०, १४)
कृतेर्भगत्वाष्ट्रभविश्वजीवभे ॥ (२०)
मनोर्द्विदैवानिलसौम्यशाक्रभे (१४)
कुपक्षतः शैवकरेऽष्टितोऽजभे । (२१, १६)
युगाश्वितो बुध्न्यभतोययाम्यभे (२४)
खचन्द्रतो मित्रभवासवश्रुतौ ॥ (१०)
मूलेऽङ्गबाणाद्विषनाडिकाः कृता (५६, ४)
वर्ज्याः शुभेऽथो विषनाडिका ध्रुवाः ।
निघ्ना भभोगेन खतर्कभाजिताः (६०)
स्फुटा भवेयुर्विषनाडिकास्तथा ॥

विषघटीदोषमाह । रेवतीपुनर्वसुकृत्तिकामघानक्षत्रेषु खरामतः त्रिंशद्घटिकोत्तरं कृताश्चतस्रो घटिका विषनाडिकाः शुभे कार्ये वर्ज्याः स्युरिति तृतीयश्लोकेनान्वयः । एवं सर्वत्र व्याख्येयम् । के रोहिण्याम् । कृतेर्विंशतेः । अजभे पूर्वाभाद्रपदायाम् । अन्यानि पदानि स्पष्टानि । तदेवं षष्टिघटीरूपे नक्षत्रभोगे ध्रुवकाश्चतस्रो विषनाडिकाश्च प्रोक्ताः ।

न्यूनाधिकत्वे तु स्पष्टीकरणमुच्यते- अथो इति । विषनाडीनां ध्रुवाः खरामत इत्येवमादयो नक्षत्रभोगेनेष्टेन निघ्नाः खतर्कैः षष्ट्या भाजितास्ततो विषनाडिका ध्रुवाः स्पष्टा भवेयुरित्यर्थः । अत्रोपपत्तिस्त्रैराशिकेन । यदि घटीषष्ट्यात्मकभभोगेन इमे ध्रुवका इमाश्चतस्रो विषनाडिकाश्च लभ्यन्ते, तदेष्टभभोगेन किमिति ? तत्र ध्रुवा विषनाडिकाश्चेष्टभभोगेन गुण्याः षष्ट्या भाज्या इति फलितम् । पीटी.

---

## १४ अष्टमलग्नदोषः

### वसिष्ठः

[1]यस्याष्टलग्ने तदधीश्वरे वा
राशौ तदीशेऽथ विलग्नगे वा ।
स मृत्युमाप्नोति तदा मनोज-
स्त्रिनेत्रभालाम्बकवह्निनेव ॥

अष्टलग्ने इत्यत्र वृत्त्यन्तर्गतोऽष्टशब्दः पूरणप्रत्ययान्तार्थपरः । यथा 'अमलकमलराशेस्त्र्यंशपञ्चांशषष्ठैः' इत्यत्र त्रिपञ्चशब्दौ तृतीयपञ्चमपरौ । तथा चाष्टमे लग्ने, अर्थाज्जन्मलग्नत एव, ( तस्मिन् ? ) तदीशे वा विलग्नगे अर्थात् विवाहलग्नगते मृत्युः स्यात् । अथ वा राशौ अष्टमराशौ जन्मराश्यपेक्षया, तदीशे वा लग्नगते मृत्युः स्यात् । वृत्त्यन्तर्गतस्याप्यष्टशब्दस्य यथाकथंचिदनुषङ्गमाश्रित्य व्याख्येयम् । विसौ. २६

[2]द्वादशं भवति जन्मलग्नतो
लग्नमर्थहरमत्र योषिताम् ।
अष्टमं पुनरतोऽपि मृत्यवे
राशितोऽपि फलमेतदेव च ॥

---

( १ ) मुचि. ६।४९-५१.

( १ ) वसं. ३२।८३ ; प्रपा. ३३३ तदीशेऽथ (तदीशे च ) तदा ( यथा ); विसौ. २६ प्रपावत्; ज्योनि. ७३ तदीशेऽथ ( तदंशेऽथ ).

( २ ) वसं. ३२।८४ ; विसौ. २६.

जन्मोदयराश्यपेक्षया द्वादशमपि लग्नं दोषकरमित्यपि वसिष्ठ एवाऽऽह– द्वादशमिति। अत्र पूर्वश्लोकेनैव गतार्थत्वात् पुनरष्टमलग्नस्य दोषकथनं अष्टमेशाष्टमस्थग्रहसंयोगजनितदोषापेक्षया अष्टमौ लग्नराशी सर्वथा दुष्टफलाविति दूषितम्। विसौ. २६

[1]जन्मोदयर्क्षान्निधने विलग्ने
तदीश्वरेणोपगतेऽथवा स्यात्।
कृतो विवाहो भयमृत्युकारी
त्रातुं विधाताऽपि न तां समर्थः ॥

[2]त्याज्यं तयोर्नैधनभं विलग्नं
तदंशकं वाऽथ तदीश्वरं च।
तस्मात्स्वजन्मर्क्षनवांशयोश्च
लग्नांशकौ नैधनगौ विवर्ज्यौ ॥

[3]जन्मेशाष्टमलग्नेशौ मिथो मित्रे व्यवस्थितौ।
जन्मराश्यष्टमर्क्षोत्थदोषो नश्यति भावतः ॥

[4]जन्मेशाष्टमलग्नेशौ मिथो मित्रे यदा खगौ।
लग्नेशो वाऽष्टमेशः स्यात्तदा दोषो न विद्यते ॥

## नारदः

[5]दम्पत्योरष्टमं लग्नमष्टमो राशिरेव वा।
यदि लग्नगतः सोऽपि दम्पत्योर्मरणप्रदः ॥

[1]स राशिः शुभयुक्तोऽपि लग्नं वा शुभसंयुतम्।
लग्नं विवर्जयेद्यत्नात्तदंशांश्च तदीश्वरान् ॥

## बृहस्पतिः

[2]जन्मेशाष्टमलग्नेशौ मिथो मित्रे व्यवस्थितौ।
जन्मराश्यष्टमर्क्षोत्थदोषो नश्यति भावतः ॥

[3]चतुर्थं द्वादशं लग्नं शस्तं यदि गुणान्वितम्।
अष्टमं तु न कर्तव्यं यदि सर्वगुणान्वितम् ॥
अयं निषेधो जन्मेशरन्ध्रपौ वैरिणौ यदा।
परस्परं ततो (? यदा) मित्रे तदा दुष्टफलं न हि ॥

## पराशरः

[4]संत्यजेन्नैधनं लग्नं दम्पत्योर्जन्मराशितः।
तदीश्वरोऽपि यत्रास्ते तं राशिं वर्जयेद्बुधः ॥
जन्मराश्यंशतो वाऽपि जन्मलग्नांशतोऽपि वा।
अष्टमौ राशिलग्नांशौ त्याज्यौ शुभफलेप्सुभिः ॥
जन्मलग्नादितो जन्मराशेर्वा द्वादशं त्यजेत् ॥

## कश्यपः

[5]जन्मेशाष्टमलग्नेशौ मिथो मित्रे व्यवस्थितौ।
जन्मराश्यष्टमर्क्षोत्थदोषो नश्यति भावतः ॥

## महेश्वरः

[6]जन्मर्क्षादुदयाच्च लग्नभवनं स्यादष्टमं मृत्यवे ॥

---

(१) वसं. ३२।८५; प्रपा. ३३३ तां (तं); विसौ. २५; ज्योनि. ७३ दयर्क्षान्निधने (दयर्क्षं निधनं) णोपगते (णापगते) तां (तान्).

(२) वसं. ३२।८६; विसौ. २५ तदीश्वरं च (तदंशकं वा); ज्योनि. ७३ लग्नांशकौ नैधनगौ विवर्ज्यौ (लग्नांशको नैधनगो विवर्ज्यः।) उत्त.

(३) वसं. ३२।८७; विसौ. २७ (जन्मराश्यष्टमक्षोत्था दोषा नश्यन्ति भावतः।) उत्त.; ज्योनि. ७३ मर्क्षोत्थ (मस्थोत्थ) भावतः (भावजः). कश्यपबृहस्पत्योरपि विद्यते एतत्सदृशः श्लोकः।

(४) विसौ. २५.

(५) ज्योना. २७।५३-५४ पृ. ५४ अष्टमो (त्वष्टमो) वा (च); प्रपा. ३३३; विसौ. २५ वा (च) गतः सोऽपि (गतस्थोऽपि); संप्र. ७८९; संग. २४३ वा (च).

(१) ज्योना. २७।५४-५५ पृ. ५४ तदंशांश्च तदीश्वरान् (तदंशाश्च तदीश्वराः); प्रपा. ३३३ (स्वराशिग्रहयुक्तं तु लग्नं वा शुभसंयुतम्। लग्नं विवर्जयेद्यत्नादंशान्तं तत्तदीश्वरात्॥); विसौ. २५ संयुतम् (वीक्षितम्); संप्र. ७८९ युक्तोऽपि (संयुक्तो); संग. २४३ संप्रवत्.

(२) प्रपा. ३३३; संप्र. ७८९ कश्यपबृहस्पती; संग. २४४ त्थदोषो (त्थो दोषो) कश्यपबृहस्पती.

(३) ज्योनि. ७४.

(४) विसौ. २५.

(५) संप्र. ७८९ कश्यपबृहस्पती; संग. २४४ त्थदोषो (त्थो दोषो) कश्यपबृहस्पती.

(६) विसौ. २५.

### कालदीपे

[1]कर्तुः षष्ठं त्यजेल्लग्नं क्षौरोद्वाहगतीर्विना ।
मूर्तिं व्ययं च सर्वत्र एकमित्राधिपाद्दते ॥

### शाकल्यसंहितायाम्

[2]शान्तिकं पौष्टिकं विद्यादानभोजनपूर्वकम् ।
जीवितेच्छुर्न कुर्वीत जातु लग्नेऽष्टमे स्वभात् ॥

### विवाहवृन्दावनम्

[3]जननलग्नभयोर्मृतिशासितु-
मृतिगतस्य च राशिनवांशकाः ।
तनुगता यदि तत्तनुते वधू-
रतिलका तिलकाय जलाञ्जलिम् ॥

जननलग्नभयोः जन्मलग्नजन्मराशिभ्यां मृतिशासितुः अष्टमेशस्य, मृतिगतस्य अष्टमस्थानस्थितस्य च राशिनवांशकाः तनुगताः लग्नस्थिता यदि स्युः, तत् तदा वधूः अतिलका स्वामिरहिता सती तिलकाय स्वामिने जलाञ्जलिं तनुते विधवा भवतीत्यर्थः । लक्ष्मी.

[4]व्यलिवृषं जननर्क्षविलग्नयो-
र्भवनमष्टममभ्युदितं त्यजेत् ।
सितपुलस्तिमतेन तदीशता
तनुसमेति समेति न दूषणम् ॥

अथाष्टमलग्नदोषं तत्परिहारं च कथयति– व्यलिवृषमिति । जननर्क्षविलग्नयोः जन्मराशिलग्नाभ्यां व्यलिवृषं वृषवृश्चिकभिन्नं अष्टमभवनं अभ्युदितं लग्नगतं त्यजेत् । यतः तदीशता तयोर्वृषवृश्चिकयोरीशता स्वामिता तनुसमा तत्स्वाम्येव लग्नस्यापि स्वामीत्यर्थः, इत्यस्मात् सितपुलस्तिमतेन दूषणं न समेति नागच्छति । लक्ष्मी.

(१) प्रपा. ३३३ ; संप्र. ७८९ दृते (दतः) ; संग. २४४ संप्रवत्.
(२) ज्योनि. ७३.
(३) विवृ. ४।१५ ; विसौ. २५.
(४) विवृ. ४।१६ ; विसौ. २५.



### फलप्रदीपे

[1]त्यजन्ति वै नैधनभं तथैके
तदंशकं चोभयमेव चान्ये ।
तस्मात्स्वजन्मर्क्षविलग्नयोश्च
लग्नांशकौ नैधनगौ विवर्ज्यौ ॥

### दोषविवेके

[2]अन्योन्यमित्रे यदि जन्मरन्ध्र-
राशीश्वरौ चेदपि चैकदेशः ।
जन्मर्क्षतो रन्ध्रविलग्नदोषो
नश्येत्तदा द्वादशतुर्यहोरा ॥

### चूडामणौ

[3]लग्नं चा( ? व्य )लिवृषं त्याज्य-
मष्टमं शुभकर्मसु ।
तत्राप्येकेशताऽस्त्येव ततः शस्तं न दोषकृत् ॥
न दोषोऽष्टमलग्नस्य यदि जन्मेशरन्ध्रपौ ।
सुहृदौ चेत्तदा कार्यं मङ्गलं मुनयो विदुः ॥

### मुहूर्तचिन्तामणिः

[4]जन्मलग्नभयोर्मृत्युराशौ नेष्टः करग्रहः ।
एकाधिपत्ये राशीशे मैत्रे वा नैव दोषकृत् ॥

अथाष्टमलग्नदोषं सापवादमाह– जन्मेति । जन्मलग्नजन्मराश्योः संबन्धिनि मृत्युराशावष्टमलग्ने करग्रहो नेष्टः । अथाष्टमलग्नदोषपरिहारमाह–एकेति । जन्मराशिजन्मलग्नयोरन्यतरस्य विवाहलग्नस्य च स्वाम्यैक्ये सति, यथा मेषवृश्चिकयोः, तथा तयोः राशीश्वरयोः मैत्रे, यथा सिंहमीनयोः । अत्र हि सूर्यगुर्वोरन्योन्यप्रीतिरस्ति । एतादृशविषये लग्नाष्टमदोषकृद्विवाहो न स्यात् । पीटी.

[5]मीनोक्षकर्कालिमृगस्त्रियोऽष्टमं
लग्नं यदा नाष्टमगेहदोषकृत् ।
अन्योन्यमित्रत्ववशेन सा वधू-
र्भवेत्सुतायुर्गृहसौख्यभागिनी ॥

(१) ज्योनि. ७३. (२) ज्योनि. ७३.
(३) ज्योनि. ७३–७४.
(४) मुचि. ६।४६.
(५) मुचि. ६।४७ ; संग. २४४ पू.

उक्षा वृषः। स्त्री कन्या। अन्ये प्रसिद्धाः। एते राशयो यद्यष्टमलग्नानि स्युः, यथा सिंहान्मीनः, तुलातो वृषः, धनुषः कर्कः, मेषात् वृश्चिकः, मिथुनात् मकरः, कुम्भात् कन्या अष्टमलग्नं, तदाऽष्टमगेहदोषकृन्न भवेत्। कुत इत्यत आह– अन्योन्येति। प्रागुक्तपरस्परप्रीतिवशेन। इदं चोपलक्षणं मेषवृश्चिकयोः तुलावृषभयोश्चैकाधिपत्यात्। एवं सति सा वधूः परिणीता कन्या सुतायुर्गृहसौख्यभागिनी स्यात्। पीटी.

[1]मृतिभवनांशो यदि च विलग्ने
तदधिपतिर्वा न शुभकरः स्यात्।
व्ययभवनं वा भवति तदंश-
स्तदधिपतिर्वा कलहकरः स्यात्॥

अथ अष्टमलग्नदोषप्रसङ्गात् जन्मराशिजन्मलग्नाभ्यामष्टमेशस्य तदंशस्य च लग्नस्थितत्वदोषं तथा द्वादशभवनदोषमाह– मृतीति। अष्टमभवननवांशो यदि विलग्ने स्यात् अथवा अष्टमभवनस्वामी विलग्ने स्यात् तदा शुभकरो न स्यात्। व्ययभवनं जन्मलग्नजन्मराशिभ्यां द्वादशं भवनं अथवा व्ययांशः अथवा व्ययस्वामी यदि लग्ने स्यात्तदा कलहकृत् स्यात्। पीटी.

### मुहूर्तदर्पणे

[2]स्वकीयजन्माष्टमराशिपत्यो-
र्मैत्र्यां न जन्माष्टमराशिदोषः।
जन्मेशकर्मेश्वरमित्रभावः
क्षिणोति वैनाशिकदोषमुग्रम्॥

---

## १५ अकालवृष्टिदोषः

### वसिष्ठः

[3]अकालवृष्टिप्रभवः स दोषः
करोति मृत्युं शुभकार्यकर्तुः।
त्रातुं यथा सर्वगुणास्त्वशक्ता-
स्तं बन्धुवर्गा विषवह्निदग्धम्॥

(१) मुचि. ६।४८.
(२) ज्योनि. ७४.
(३) वसं. ३२।८८.

[1]अकालवृष्टिप्रभवः स दोषः
करोति मृत्युं वरकन्ययोश्च।
सीतावियोगप्रभवः सुदीर्घः
कोपो यथा दाशरथेर्दशास्यम्॥

### नारदः

[2]अकालजा भवेयुश्चेद्विद्युन्नीहारवृष्टयः।
प्रत्यर्कपरिवेषेन्द्रचापाभ्रध्वनयो यदि।
दोषाय मङ्गले नूनं न दोषायैव कालजाः॥

### श्रीपतिः

[3]पौषादिचतुरो मासान् प्राप्ता वृष्टिरकालजा।
व्रतं यात्रां विवाहं च वर्जयेत्सप्त वासरान्॥
[4]चातुर्मास्ये निवृत्ते तु चक्रपाणौ समुत्थिते।
अकालवृष्टिं जानीयाद्यावन्न स्वपते हरिः॥

### मुहूर्तचिन्तामणिः

[5]यदि मा:सु चतुर्षु पौषमासा-
दिषु वृष्टिर्हि भवेदकालवृष्टिः।
पशुमर्त्यपदाङ्किता न यावद्
वसुधा स्यान्न हि तावदेव दोषः॥

अथाकालवृष्ट्याख्यं दोषं सलक्षणमाह– यदीति। पौषादिषु चतुर्षु पौषमाघफाल्गुनचैत्राख्येषु मासेषु यदि वृष्टिर्भवेत्सा अकालवृष्टिः स्यात्। पौषादयश्चत्वारो मासाः वृष्ट्यकालः। तत्र भवा वृष्टिरकालवृष्टिरुच्यते। यदाह राजमार्तण्डः–– ‘पौषादिचतुरो मासान् प्राप्ता वृष्टिरकालजा’ इति। तत्र अकालवृष्ट्यां जातायां यदि वसुधा पृथ्वी यावत्पशवो गवादयो मर्त्या मनुष्यास्तेषां

(१) वसं. ३२।८९; विसौ. २७ प्रभवः स (प्रभवस्तु) सीतावि (पितुर्वि); संग. २४० मुहूर्तचिन्तामणौ.
(२) गभा. ६७ न दोषायैव (अदोषायैव); सिन्धु. १०८०.
(३) गभा. ६७ प्राप्ता (प्रोक्ता) पू., लछ; संसौ. १२४; सिन्धु. १०८० मासान् प्राप्ता (मासाः प्रोक्ता) पू., लछ; विपा. ७५५ (=) प्राप्ता (ज्ञेया).
(४) संसौ. १२४.
(५) मुचि. ११।९६.

प्रदेश्चरणैरङ्किता चिह्निता न भवति तावदकालवृष्टिदोषो नास्ति। यदा पशुचरणाङ्किता वसुधा स्यात्तदा अकालवृष्टेर्दोषवत्त्वमस्त्येव। पीटी.

[1]पौषादिमासेषु चतुर्षु वृष्टि-
भवेद्यदाऽकालभवा हि वृष्टिः।
पदाङ्किता स्यात्पशुमर्त्यपादै-
र्धरा तदा वृष्टिजदोषमाहुः॥

## १६ कुमुहूर्तदोषः (दुर्मुहूर्तदोषः)

### वसिष्ठः

[2]करोति निःस्वं कुमुहूर्तदोषः
कुमारमुद्वाहितमाशु नूनम्।
सप्ताङ्गराज्योद्धतराजरत्नं
नलं यथा द्यूतमिवात्मकर्म॥

[3]वरस्य लक्ष्मीं निखिलां निहन्ति
संवत्सरार्धात्कुमुहूर्तदोषः।
दुर्वाससः शाप इव प्रमत्त-
महेन्द्रलक्ष्मीमसमां समग्राम्॥

[4]अर्यम्णो भानुवारे शशधरदिवसे
राक्षसब्राह्मसंज्ञौ
पित्र्याग्नी द्वौ कुजाहे शशिसुतदिवसे-
ऽथाभिजित्संज्ञकः सः।
जीवाहे राक्षसाख्यो भृगुसुतदिवसे
ब्राह्ममैत्रावहीशौ
सौरावेते विवर्ज्यास्त्वधननिधनदा
मङ्गले दुर्मुहूर्ताः॥

[1]द्युरात्रिमध्यं खिलमङ्गलेषु
यदाऽर्धकालः परिवर्जनीयः।
तदाऽभिजिद्ब्राह्ममुहूर्तकत्वा-
द्दोषदः सोऽपि शुभप्रदः सः॥

### नारदः

[2]भास्करादिषु वारेषु ये मुहूर्ताश्च निन्दिताः।
विवाहादिषु ते वर्ज्या अपि लक्षगुणैर्युताः॥

### कश्यपः

[3]अह्नः पञ्चदशो भागो मुहूर्तोऽथ तथा निशि॥

### श्रीपतिः

[4]रुद्राहिमित्रपितरो वसुवारिविश्वे
वेधा विधिः शतमखः पुरुहूतवह्नी।
नक्तंचरेशवरुणार्यमयोनयश्च
प्रोक्ता दिने दश च पञ्च तथा मुहूर्ताः॥

[5]निशामुहूर्ता गिरिशाजपादा-
हिर्बुध्न्यपूषाश्वियमाग्नयश्च।
विधातृचन्द्रादितिजीवविष्णु-
तिग्मद्युतित्वष्टृसमीरणाश्च॥

---

(१) संग. २४०.

(२) वसं. ३२।९० ; विसौ. २७ निःस्वं (नष्टं) ज्योद्धत (ज्योत्कट) नलं यथा द्यूतमिवात्मकर्म (नयं यथा द्यूतकिरातकर्मा) ; संप्र. ७९१ निःस्वं (नष्टं) ज्योद्धत (ज्योत्कट) नलं यथा द्यूतमिवात्मकर्म (नयं यथा द्यूतकिरातवर्मा).

(३) वसं. ३२।९१ ; विसौ. २७ वरस्य (वारस्य) रार्धात् (रार्धे) मसमां (ममलां) ; संप्र. ७९०–७९१ पूर्वार्धं विसौवत्.

(४) वसं. ३२।९२ ; विसौ. २७ अर्यम्णो (आर्यम्णो) शशधर (शशिधर) पित्र्याग्नी द्वौ (पित्र्याग्नेयौ) र्ज्यास्त्वधन (र्ज्याः सतत) ; संप्र. ७९० ब्राह्ममैत्रावहीशौ (राक्षसब्राह्ममैत्राः) शेषं विसौवत्.

(१) वसं. ३२।११०.

(२) ज्योना. २७।६३ पृ. ५५ दिषु ते (दिशुभे) लक्ष (लग्न) ; प्रपा. ३३४ ; संप्र. ७९० ; ज्योनि. ७४ उत्तरार्धे (अपि सर्वगुणोपेतास्ते वर्ज्याः सर्वमङ्गले।) ; संग. २४१ वीरमित्रोदये.

(३) संप्र. ७९० ; संग. २४१.

(४) प्रपा. ३३४ ; संप्र. ७९० विश्वे (विश्वाः) ; संग. २४१ योनयश्च (णो भगश्च).

(५) प्रपा. ३३४ त्वष्टृ (त्वाष्ट्र) ; संप्र. ७९० ; संग. २४१.

[1] अर्यम्णोऽर्के तुहिनकिरणे राक्षसब्राह्मसंज्ञौ
पित्राग्नेयौ क्षितिसुतदिने चन्द्रपुत्रेऽभिजिच्च ।
पित्र्यब्राह्मौ भृगुसुतदिने राक्षसाप्यौ च जीवे
भौजङ्गाद्यौ सवितृतनये वर्जनीया मुहूर्ताः ॥

## मुहूर्तचिन्तामणिः

[2] सूर्ये षट्स्वरनागदिङ्मनुमिता-
श्चन्द्रेऽब्धिषट्कुञ्जरा-
ङ्कार्का विश्वपुरन्दराः क्षितिसुते
व्यब्ध्यग्नितर्का दिशः ।
सौम्ये व्यब्धिगजाङ्कदिङ्मनुमिता
जीवे द्विषड्भास्कराः
शक्राख्यास्तिथयः कलाश्च भृगुजे
वेदेषु तर्कग्रहाः ॥
दिग्भास्करा मनुमिताश्च शनौ शशिद्वि-
नागा दिशो भवदिवाकरसंमिताश्च ।
दुष्टः क्षणः कुलिककण्टककालवेलाः
स्युश्चार्धयामयमघण्टगताः कलांशाः ॥

अथ सूर्यादिवारेषु शिष्याणां सद्य एव दोषज्ञानार्थं दुर्मुहूर्तादिनामकान् मुहूर्तानाह– सूर्ये इति । रविवारे षष्ठसप्तमाष्टमदशमचतुर्दशसंख्या मुहूर्ता निन्द्याः । सोमवारे चतुर्थ-षष्ठाष्टम-नवम-द्वादश-त्रयोदश-चतुर्दश-मुहूर्ता निन्द्याः । भौमे द्वित्रिचतुःषड्दशसंख्या मुहूर्ता निन्द्याः । बुधे द्विचतुरष्टनवदशचतुर्दशसंख्या मुहूर्ता निन्द्याः । गुरौ द्विषड्द्वादशचतुर्दशपञ्चदशषोडशसंख्या मुहूर्ता निन्द्याः । शुक्रे चतुःपञ्चषट्नवदशद्वादशचतुर्दशसंख्या मुहूर्ता निन्द्याः । शनौ एकद्विवसुदशैकादशद्वादशसंख्याका मुहूर्ता निन्द्याः । एषु मुहूर्तेषु केषुचिद् दुष्टक्षणो दुर्मुहूर्तो ज्ञेयः । केषुचित् कुलिककण्टककालवेलाः स्युः । केषुचिदर्धयामयमघण्टाः स्युः । तत्प्रमाणमाह– कलांशा इति । कलांशाः षोडशांशाः । दिनस्येति शेषः । यस्मिन् दिने कुलिकादिजिज्ञासा तद्दिने यद्दिनमानं तत् षोडशभिर्भाज्यम् । यल्लब्धं घटीपलात्मकं तन्मुहूर्तपरिमाणम् । तेषु मुहूर्तेषु यथासंभवं दुर्मुहूर्तादयो दोषा ज्ञातव्याः । तथाहि– रवौ चतुर्दशसंख्यो मुहूर्तो दुर्मुहूर्तः कुलिकश्च । षष्ठः कण्टकसंज्ञः । सप्तमाष्टमावर्धयामाख्यौ । तत्र अष्टमः कालवेलाख्यश्च । दशमो यमघण्टाख्यः । एवं सोमवारादिष्वपि बोद्धव्यम् ।
पीटी.

[1] गिरिशभुजगमित्राः पित्र्यवस्वम्बुविश्वे-
ऽभिजिदथ च विधाताऽपीन्द्र इन्द्रानलौ च ।
निर्ऋतिरुदकनाथोऽप्यर्यमाऽथो भगः स्युः
क्रमश इह मुहूर्ता वासरे बाणचन्द्राः ॥

दुर्मुहूर्तदोषं विवक्षुरादौ दिवामुहूर्तानाह–गिरिशेति । अत्र बाणचन्द्रा इत्युक्तेर्मुहूर्तस्य पार्थक्येन लक्षणं नोक्तम् । गिरिशो महादेवः । भुजगः सर्पः । मित्रः सूर्यविशेषः । पित्र्यवस्वम्बुविश्वे प्रसिद्धाः । अष्टमः अभिजित् । ततो विधाता ब्रह्मा, इन्द्रः, इन्द्रानलौ । अत्र समुदितयोर्व्यासज्यवृत्ति देवतात्वम् । ततश्च मुहूर्तस्वामिनः इत्यपेक्षितम् । पित्र्येति नक्षत्राभिधानादयुक्तं प्रतिभाति । अथवा नक्षत्रतदीशयोरभेदोपचारात् स्वामिनि वृत्तिः । निर्ऋती राक्षसः । उदकनाथो वरुणः । अर्यमा भगश्चेमौ सूर्यविशेषौ । इत्येते बाणचन्द्राः पञ्चदश वासरे मुहूर्ताः स्युः । यदाह नारदः–– ‘ दिवामुहूर्ता रुद्राहिमित्राः पितृवसूदकम् । विश्वे विधातृब्रह्मेन्द्रा इन्द्राग्न्यसुरतोयपाः । अर्यमा भगसंज्ञश्च विज्ञेया दश पञ्च च ॥ ’ इति ।
पीटी.

शिवोऽजपादादष्टौ स्युर्भेशा अदितिजीवकौ ।
विष्णवर्कत्वष्टृमरुतो मुहूर्ता निशि कीर्तिताः ॥

रात्रिमुहूर्तानाह– शिव इति । प्रथममुहूर्तस्वामी शिवः । ततोऽजपादादष्टौ भेशा नक्षत्रस्वामिनो मुहूर्तेशाः स्युः । यथा अजपादः अहिर्बुध्न्यः पूषा अश्विनौ यमः अग्निः ब्रह्मा सोम इत्यष्टौ । ततो दशमेशोऽदितिः । जीवको गुरुः, स्वार्थे कः । विष्णवर्कत्वष्टृमरुतः प्रसिद्धाः । एते निशि मुहूर्ताः प्रकीर्तिताः । मुनिभिरिति शेषः । यदाह नारदः– ‘ ईशाजपादहिर्बुध्न्यपूषाश्वियमवह्नयः । धातृ-

(१) प्रपा. ३३४.
(२) मुचि. १।३८–३९.
(१) मुचि. ६।५२–५३.

चन्द्रादितीज्याख्यविष्णवर्कत्वष्टृवायवः ॥ ' इति ।
पीटी.

[1]रवावर्यमा ब्रह्मरक्षश्च सोमे
कुजे वह्निपित्र्ये बुधे चाभिजित्स्यात् ।
गुरौ तोयरक्षौ भृगौ ब्राह्मपित्र्ये
शनावीशसार्पौ मुहूर्तौ निषिद्धाः ॥

अथावसरप्राप्तान्निषिद्धमुहूर्तानाह– रवाविति । रवेर्वारेऽर्यमा लक्षणया अर्यमस्वामिकचतुर्दशसंख्याको मुहूर्तो निषिद्धः । एवं सोमवारे ब्रह्मरक्षः । ब्रह्मरक्षःस्वामिकौ मुहूर्तौ निषिद्धौ । एवं सर्वत्र व्याख्येयम् । पदानि स्पष्टार्थानि । ईशः महादेवः । पीटी.

---

## १७ महापात–वैधृति–दोषः

### वसिष्ठः

[2]दोषो महापात इति प्रसिद्धः
सवैधृतो हन्ति वधूं वरं च ।
तं रक्षितुं लग्नगुणा अशक्ताः
स्वबान्धवास्तेऽशनिनोपघातम् ॥

[3]शास्त्रात्समानीतमहातिपातः
सवैधृतो हन्ति वधूं वरं च ।
त्रिःसप्तवारानिव जामदग्न्य-
क्रोधोऽचिरात्क्षत्रकुलं समस्तम् ॥

### नारदः

[4]सवैधृतव्यतीपातौ महापातावुभौ सदा ।
परिघस्य तु पूर्वार्धं सर्वकार्येषु गर्हितम् ॥
[5]यस्मिन्दिने महापातस्तद्दिनं वर्जयेच्छुभे ।
अपि सर्वगुणोपेतं दम्पत्योर्मृत्युदं यतः ॥

---

(१) मुचि. ६।५४ ; संग. २४१ क्रमेण श्रीपतिः.
(२) वसं. ३२।९३ ; विसौ. २७ णा अश (णास्त्वश).
(३) वसं. ३२।९४ वारानिव (वाराणि च) ; विसौ. २७.
(४) ज्योना. ७।२९.
(५) ज्योना. २७।७१ शुभे (बुधैः) पृ. ५६ ; प्रपा. ३३६ ; संप्र. ७९४ ; संग. २३६.

### बृहस्पतिः

[1]महागणितमार्गस्थो व्यतीपातोऽतिदोषदः ।
बलवद्गुणसंपन्नोऽप्यसौ कुलविनाशनः ॥

यन्नक्षत्रं पातमध्यस्य काल-
स्तन्नक्षत्रं वर्जनीयं समस्तम् ।
यावत्तावत्पातकालः पुरस्तात्
पश्चाद्वर्ज्यं सर्वकार्येषु नूनम् ॥

### सूर्यसिद्धान्ते

[2]एकायनगतौ स्यातां सूर्याचन्द्रमसौ यदा ।
तद्युतौ मण्डले क्रान्त्योस्तुल्यत्वे वैधृताभिधः ॥
विपरीतायनगतौ चन्द्रार्कौ क्रान्तिलिप्तिकाः ।
समास्तदा व्यतीपातो भगणार्धे तयोर्युतौ ॥
तुल्यांशजालसंपर्कात्तयोस्तु प्रवहाहतः ।
तादृक्क्रोधोद्भवो वह्निर्लोकाभावाय जायते ॥

### सिद्धान्तशिरोमणौ

[3]पातस्थितिकालान्तर्मङ्गलकृत्यं न शस्यते तज्ज्ञैः ।
स्नानजपहोमदानादिकमत्रोपैति खलु वृद्धिम् ॥

### संग्रहे

[4]महापातस्य वैधृत्या यावत्कालं स्थितिर्भवेत् ।
तावत्कालं त्यजेत्पूर्वं तावत्कालं त्यजेत्परम् ॥

### विवाहवृन्दावनम्

[5]त्रिभागशेषे ध्रुवनाम्नि चैन्द्रे
त्र्यंशे गते संप्रति संभवोऽस्य ।
मानार्धयोगाधिकमिन्दुभान्वोः
क्रान्त्यन्तरं चेन्न तदैष दोषः ॥

ध्रुवनाम्नि योगे त्रिभागशेषे सति, ऐन्द्रे योगे च त्र्यंशे गते सति संप्रति अस्मिन् समये अस्य क्रान्तिसाम्यस्य संभवः स्यात् । इन्दुभान्वोः क्रान्त्यन्तरं

---

(१) प्रपा. ३३६.
(२) संप्र. ७९५ ; संग. २३६.
(३) संग. २३६.
(४) प्रपा. ३३६ ; संप्र. ७९५ ; संग. २३६.
(५) विवृ. १।२४.

मानार्धयोगाधिकं चेत् तदा एष दोषो न स्यात्। चन्द्रार्कयोर्बिम्बयोगार्धादल्पे क्रान्त्यन्तरे सति दोष इत्यर्थः। लक्ष्मी.

### भीमपराक्रमे

[1]वैधृतिव्यतिपातौ यौ
क्रान्तिसाम्येऽर्कचन्द्रयोः।
सत्कर्मारम्भणं तत्र मरणं व्यसनं विदुः॥

### संहिताप्रदीपे

[2]ब्रह्मणोऽन्ते ध्रुवस्याऽऽदौ प्रायः पातस्य संभवः।
स तु मङ्गलकार्याणि विनाशयति निश्चितम्॥

### ग्रहप्रदीपे

[3]मानैक्यखण्डादयमान्तरेऽल्पे
शुभानि कार्याणि निहन्ति पातः।
स्नाने जपे होमविधौ च दाने
करोत्यनन्तं फलमेव कर्तुः॥

### मुहूर्तचिन्तामणिः

[4]पञ्चास्याजौ गोमृगौ तौलिकुम्भौ
कन्यामीनौ कर्क्यली चापयुग्मे।
तत्रान्योन्यं चन्द्रभान्वोर्निरुक्तं
क्रान्तेः साम्यं नो शुभं मङ्गलेषु॥

सूर्यचन्द्रक्रान्तिसाम्यापरपर्यायं महापातदोषमाह—पञ्चास्येति। पञ्चास्याजौ सिंहमेषौ। अन्ये प्रसिद्धाः। एषु राशियुग्मेषु चन्द्रभान्वोः पाठक्रमेण व्युत्क्रमेण वा स्थितयोः क्रान्तिसाम्यं निरुक्तं, तन्मङ्गलेषु नो शुभं स्यात्। पीटी.

---

(१) ज्योनि. ७६.
(२) ज्योनि. ७६.
(३) ज्योनि. ७६.
(४) मुचि. ६।६१.

## १८ उदयास्तदोषः

### वासिष्ठः

[1]लग्नास्तशुद्धिस्तु महान्स दोषः
करोति मृत्युं वरकन्ययोश्च।
त्रातुं यथा लग्नगुणास्त्ववशक्ता-
स्तं बन्धुवर्गा इव सर्पदष्टम्॥
[2]इष्टोदयांशे निजपत्यदृष्टे
वरस्य मृत्युस्तनुसंयुते वा।
अस्तांशकेऽप्येवमदृष्टयुक्ते
स्वस्वामिना नाशमुपैति कन्या॥
[3]उदयांशः स्वनाथेन मित्रसौम्येन वा युतः।
प्रेक्षितो वा तथाऽस्तांशो दम्पत्योः पुत्रपौत्रदः॥

### नारदः

[4]लग्नलग्नांशकौ स्वस्वपतिना वीक्षितौ युतौ।
न चेद्वाऽन्योन्यपतिना शुभमित्रेण वा तथा॥
[5]वरस्य मृत्युः स्यात्ताभ्यां सप्तसप्तोदयांशकौ।
एवं तौ वीक्षितयुतौ मृत्युर्वध्वाः करग्रहे॥

### श्रीपतिः

[6]उदयगतनवांशः स्वेशदृष्टो युतो वा
न भवति यदि मृत्युः स्यात्तदानीं वरस्य।
परिणयसमये चेदेवमस्तोदयांशः
स्वपतिसहितदृष्टो मृत्युकारी च वध्वाः॥

---

(१) वसं. ३२।९५; विसौ. २७ शुद्धिस्तु महान् (शुद्ध्या रहितः) तं बन्धु (स्वबन्धु).
(२) वसं. ३२।९६; विसौ. २७ वा (च).
(३) वसं. ३२।९७ वा युतः (संयुतः); प्रपा. ३३१ युतः (पुनः) बृहस्पतिः; विसौ. २८.
(४) ज्योना. २७।२७ पृ. ५२ युतौ (शुभौ); प्रपा. ३३१ न चेद्वाऽन्यो (नो चेदन्यो); संप्र. ७८५; ज्योनि. ७० (=); संग. २४३ शुभ (शुद्ध).
(५) ज्योना. २७।२८ पृ. ५२ स्यात्ताभ्यां (परमः) एवं तौ (एवं तैः); प्रपा. ३३१; संप्र. ७८५ वीक्षितयुतौ (न युतौ दृष्टौ); ज्योनि. ७० (=) संप्रवत्; संग. २४३ संप्रवत्.
(६) प्रपा. ३३१.

## विवाहवृन्दावनम्

[1]लवपतिः कुरुते लवलग्नयोः
पतिमृतिं त्रिवसुव्ययवित्तगः ।
नवलवास्तपतिः प्रतिहन्त्यसून्
मृगदृशश्च तदस्तभयोस्तथा ॥

अथ लग्नसप्तमयोः शुद्धिं कथयति– लवपतिरिति । लवपतिः नवांशस्वामी लवलग्नयोः त्रिवसुव्ययवित्तगः पतिमृतिं वरमरणं कुरुते । तथा नवलवास्तपतिः नवांशसप्तमेशः तदस्तभयोः नवांशसप्तमात् लग्नसप्तमाद्वा तथा त्रिवसुव्ययवित्तगः मृगदृशः कन्यायाः असून् प्राणान् प्रतिहन्ति नाशयति । लक्ष्मी.

उभयदृक्फलदा बलदार्ढ्यतो
लवदृगुद्वहते कियदूनताम् ।
तदिह केवललग्नदृशः फलं
शकलितं कलितं यवनेश्वरैः ॥

उभयदृक् उभयस्य लग्नस्य नवांशस्य च दृष्टिः बलदार्ढ्यतो बलदृढत्वात् कारणात् फलदा विशिष्टफलप्रदा स्यात् । लग्नदृक् केवलनवांशदृष्टिः कियदूनतां किंचिन्न्यूनतां उद्वहते । तत् तस्मात् इह विवाहे केवललग्नदृशः फलं यवनेश्वरैः शकलितं खण्डितं अर्धितं कलितं कथितमित्यर्थः । लक्ष्मी.

स्पृशति किं न कदाचिददृश्यता-
मवयवोऽवयविन्यवलोकिते ।
अमतकेवललग्नदृशां न तत्
मतमतर्कसहं समुपास्महे ॥

उक्तार्थमेव द्रढयति– अवयविनि अवलोकिते सति कदाचिदवयवः किं अदृश्यतां न स्पृशति ? अपि तु स्पृशत्येव । तत् तस्मात् अमतकेवललग्नदृशां न मता केवललग्नदृक् येषां तेषां जनानां मतं न अतर्कसहं युक्तियुतमेवेत्यर्थः, वयं समुपास्महे सम्यक् मन्यामहे । लक्ष्मी.

(१) विवृ. ४।९–१४; विसौ. २१.

ननु नवांशकमंशपतिर्निजं
कलयतीह विलग्नविलोकने ।
यमवलोकयते स तनोः पृथक्
यदि तदिष्टफलाय जलाञ्जलिः ॥

इह विवाहकाले अंशपतिः विलग्नविलोकने सति निजं नवांशकं कलयति पश्यति । नवांशपतिः यमवलोकयते स तनोः लग्नात् पृथक्, यद्येवं तदा तदिष्टफलाय जलाञ्जलिः स्यात् लग्नफलमपि नष्टमेवेत्यर्थः । लक्ष्मी.

अपृथगस्ति स चेन्ननु पश्यता
तनुमसावधिपेन निरूपितः ।
हृदयहारदृशेन मृगीदृशः
प्रणयिना तरलस्तरलद्युतिः ॥

ननु अहो चेत् स नवांशः अपृथक् लग्नान्तर्गत एवास्ति, तदाऽसौ नवांशः तनुं पश्यताऽधिपेन स्वामिना निरूपितः दृष्ट एव । केन क इव ? मृगीदृशः स्त्रियाः हृदयहारदृशा हृदयहारे दृक् दृष्टिर्यस्य तेन प्रणयिना प्रियेण तरलद्युतिः तरलो हारमध्यस्थमणिरिव । हारे दृष्टे तन्मध्यस्थो मणिरपि यथा दृष्टो भवति, तथैव लग्ने दृष्टे तदन्तर्गतनवांशोऽपि दृष्ट एवेत्यर्थः । लक्ष्मी.

तनुपतिस्तनुमस्तमथास्तपो
यदि न पश्यति नश्यति तत्कृतम् ।
इति परः परमत्र मते पतेत्
लवतरौ बत रौद्र इवाशनिः ॥

अथ परमतं दूषयति– यदि तनुपतिः तनुं, तथा अस्तपोऽस्तं सप्तमं न पश्यति तदा तत्कृतं शुभफलं नश्यति इति परः प्राह । परं, बत इति खेदे, अत्र मते लवतरौ नवांशरूपवृक्षे रौद्रः कठोर इव अशनिः वज्रं पतेत् । लक्ष्मी.

## मुहूर्तचिन्तामणिः

[1]यदा लग्नांशेशो लवमथ तनुं पश्यति युतो
भवेद्वाऽयं वोढुः शुभफलमनल्पं रचयति ।
लवद्यूनस्वामी लवमदनभं लग्नमदनं
प्रपश्येद्वा वध्वाः शुभमितरथा ज्ञेयमशुभम् ॥

(१) मुचि. ६।७६–७८.

अथावसरप्राप्तामुदयास्तशुद्धिमाह–– यदेति । यदा लग्नांशेशो लग्नांशस्तस्येशः स्वामी लवं नवांशं पश्यति वा अथवा नवांशेन सह युतो वा भवेत्तदा वोढुर्वरस्यानल्पं बहु शुभफलं रचयति । यथा– मेषलग्ने मिथुनांशस्तदीशो बुधः तुलायां मिथुनं पश्यति तत्र तिष्ठति वा । अयमुदयशुद्धेः प्रथमः कल्पः । तदलाभे तु लग्नांशेशस्तनुं लग्नं पश्यति लग्नेन सह युतो वा भवेत्तदाऽपि वोढुः शुभफलमनल्पं स्यात् । यथा मेषलग्ने एव मिथुननवांशस्वामी बुधो मकरे स्वनवांशं न पश्यति किन्तु लग्नं पश्यति, मेषे एव तिष्ठति । अयमुदयशुद्धेः द्वितीयः प्रकारः । लवेति । लवद्यूनस्वामी बलवान्नवांशात् द्यूनं सप्तमनवांशस्तत्स्वामी लवमदनभं लवान्मदनभं सप्तमनवांशं पश्यति तेन सह युतो वा भवेत्तदा वध्वाः अनल्पं शुभं रचयति । यथा मिथुननवांशात् सप्तमो धनुरंशस्तदधीशो गुरुः मेषे धनुः पश्यति तत्र तिष्ठति वा । अयमस्तशुद्धेः प्रथमः प्रकारः । तदलाभे तु लवद्यूनस्वामी लग्नमदनं सप्तमभवनं पश्यति युतः सप्तमभवनेन सह युतो वा भवेत्तदा वध्वाः शुभम् । यथा गुरुः कर्के स्वनवांशं न पश्यति, किन्तु सप्तमभवनं तुलां पश्यति, अथवा तुलायामेवास्ति । अयमस्तशुद्धेर्द्वितीयः प्रकारः । इतरथेति । इतरथा यदा लग्नांशेशो लवं तनुं वा न पश्यति तत्र युतो वा न स्यात्तदा वरस्याशुभं मृत्युः स्यात् । यदा तु अस्तांशेशोऽस्तांशमस्तभवनं लवं तनुं वा न पश्यति तत्र युतो वा न स्यात्तदा कन्याया अशुभं मृत्युरित्यर्थः । पीटी.

लवेशो लवं लग्नपो लग्नगेहं
प्रपश्येन्मिथो वा शुभं स्याद्वरस्य ।
लवद्यूनपोंऽशद्युनं लग्नपोऽस्तं
मिथो वेक्षते स्याच्छुभं कन्यकायाः ॥

नवांशस्वामी नवांशं प्रपश्येल्लग्नस्वामी लग्नं प्रपश्येत्तदा वरस्य शुभं स्यात् । अथवा मिथः परस्परं लवस्वामी लग्नं लग्नेशो लवं च पश्येत्तदाऽपि वरस्य शुभं स्यात् । एवं लवद्यूनपो नवांशात् मदननवांशस्वामी अंशद्यूनं अंशसप्तमराशिमीक्षते, लग्नपो लग्नस्वामी अस्तं लग्नात्सप्तमभवनमीक्षते तदा कन्यायाः शुभं स्यात् । वा अथवा मिथः अंशसप्तमाधीशो लग्नसप्तमं वीक्षते लग्नात्सप्तमाधीशोंऽशसप्तममीक्षते तदाऽपि कन्यायाः शुभं स्यात् । अत्रोदाहरणं स्पष्टत्वान्नोक्तमस्माभिः । अन्यथात्वे दम्पत्योरशुभमित्यर्थः । पीटी.

लवपतिशुभमित्रं वीक्षतेंऽशं तनुं वा
परिणयनकरस्य स्याच्छुभं शास्त्रदृष्टम् ।
मदनलवपमित्रं सौम्यमंशद्युनं वा
तनुमदनगृहं चेद्वीक्षते शर्म वध्वाः ॥

पूर्वोक्तप्रकारेण उदयास्तशुद्धेरभावेऽपि तृतीयप्रकार उच्यते– लवपतीति । शुभमित्रं शुभं च तन्मित्रं चेति कर्मधारयः । लवपतेः लग्ननवांशेशस्य शुभग्रहः सोमबुधगुरुशुक्राणामन्यतमश्चेत् मित्रं स्यात् स चेदंशं स्वनवांशं तनुं लग्नं वा वीक्षेत तदा परिणयनकरस्य शास्त्रदृष्टं वसिष्ठोक्तं पुत्रपौत्रादिप्राप्तिरूपं शुभं फलं स्यात् । एवं मदनलवस्य अस्तांशेशस्य मित्रं सौम्यं चेत्स्यात्तच्चांशद्यूनं अंशाल्लग्ननवांशात् द्यूनं सप्तमनवांशं चेद्वीक्षते वा अथवा तनुमदनगृहं लग्नात्सप्तमभवनं चेद्वीक्षते तदा वध्वाः शास्त्रदृष्टं शर्म स्यात् । यद्युभयत्रापि नवांशस्वामिनो मित्रं पापग्रहश्चेत् तस्य दृष्टिः अशुभैवेति फलितोऽर्थः । पीटी.

---

## १९,२०,२१ ग्रहणभ-उत्पातभ-क्रूरग्रहविद्धभ-दोषाः

### वसिष्ठः

[1]उत्पातभोपप्लवभोग्रखेट-
विद्धर्क्षतद्धं ( ? ) वरकन्ययोस्तु ।
विनाशदं लग्नगुणास्त्वशक्ता-
स्त्रातुं यथा पातकिनं स्वकीयाः ॥

[2]उत्पातभं ग्रहणभं क्रूरविद्धस्थितं च भम् ।
दहतीव शुभं कर्म राघवाग्निशरोऽम्बुधिम् ॥

---

( १ ) वसं. ३२।९८ ; विसौ. २६ पूर्वार्धे ( उत्पातपापग्रहभोगखेटविद्धर्क्षदुष्टं वरकन्ययोश्च । ).

( २ ) वसं. ३२।९९ ; विसौ. २६ दहतीव ( दहत्येव ).

[1]रेखाश्चोर्ध्वाः पञ्च तिर्यक् च पञ्च
द्वे द्वे रेखे कोणयोरत्र चक्रे ।
*क्रमान्न्यसेच्छम्भुकोणे द्वितीये
रेखायां भान्यग्निभात्साभिजिच्च ॥
चक्रे तस्मिन्नेकरेखास्थितेन
तद्विद्धर्क्षं खेचरेण प्रदिष्टम् ।
क्रूरैर्विद्धं सर्वधिष्ण्यं विवर्ज्यं
सौम्यैर्विद्धं नाखिलं पाद एव ॥
[2]पादेन पादं विनिहन्ति तस्य
राशेर्नवांशं हि नकांशकेन ।
ग्रहोऽपि पादेन न कृत्स्नधिष्ण्यं
नवांशकेनापि न कृत्स्नधिष्ण्यम् ॥
न सर्वराशेरुदयो विलग्नं
वेधो न सर्वर्क्षभवः कदाचित् ।
इष्टांशकं लग्नमुशन्ति तज्ज्ञा
विरुद्धपादा अपि भस्य शस्ताः ॥
पादेन दूष्यं सकलं च धिष्ण्यं
चेद्धिष्ण्यदोषाद्गणं च कृत्स्नम् ।
गणस्य दोषात्सकलं च दूष्य-
मतिप्रसङ्गः स्थितपाद एव ॥
विषप्रदिग्धेन हतस्य पत्रिणा
मृगस्य मांसं शुभदं क्षतादृते ।
तथैव पादो न शुभोऽवशिष्टाः
पादाः शुभाश्चेति पितामहेन ॥
अतोऽन्त्यपादमादिगो द्वितीयगस्तृतीयकम् ।
तृतीयगो द्वितीयकं चतुर्थगस्तु चादिमम् ॥
भिनत्ति वेधकृद्ग्रहो न चान्यपादमादरात् ।
असंभवाच्छशीनयोर्दृशोः समत्वमत्र वै ॥
पाद एव न शुभः शुभग्रहै-
र्विद्ध इत्यखिलशास्त्रमतं हि ।
क्रूरविद्धभयुतं न शोभनं
शोभनेषु सकलं न पादतः ॥

* 'क्रमान्न्यस्येच्छम्भुकोणद्वितीयरेखाया भान्यग्निभात्साभिजिन्ति ।' इति भवितुं युक्तम् ।

(१) वसं. ३२।८–९. (२) वसं. ३२।६९–७५.

[1]पञ्चशलाकाचक्रे
पाणिग्रहणस्य वेधविधिरुक्तः ।
शस्तः शुभमित्रकृतः सप्तशलाकाभिरन्यत्र ॥
[2]लग्ने गुरुः सौम्ययुतेक्षितो वा
लग्नाधिनाथो भवगस्तथा वा ।
कालाख्यहोरा तु यदा शुभस्य
भवेधदोषस्य तदा हि भङ्गः ॥
[3]गन्तव्यधिष्ण्यं खलु भुक्तभं यत्
क्रूरैर्महोत्पातविदूषितं यत् ।
चन्द्रोपभोगादमलं तदानीं
शुभेषु कार्येषु शुभप्रदं च ॥
[4]चन्द्रशुक्रसमायोगादुडूनि शुभतामियुः ।
विशेषाच्छुक्रसंयोगाद्ग्रहयुक्तबृहस्पतेः ॥
[5]ग्रहयुक्ते तु नक्षत्रे तदैव यदि चन्द्रमाः ।
तयोर्मध्ये व्रजेत्पीडां
दोषान्सर्वान् व्यपोहति ॥

## नारदः

[6]ग्रहणोत्पातभं त्याज्यं मङ्गलेषु ऋतुत्रयम् ।
यावच्च रविणा भुक्त्वा मुक्तं तद्दग्धकाष्ठवत् ॥
[7]उत्पातग्रहणादूर्ध्वं सप्ताहमखिलग्रहे ।
नाखिले त्रिदिनं नेष्टं नेष्टं तद्भमृतुत्रयम् ॥

(१) विसौ. २९.
(२) संग. २३८.
(३) प्रपा. ३३० भुक्तभं (मुक्तभं) क्रूरैः (खरैः); विसौ. २७ तं यत् (तं तत्) तदानीं... शुभप्रदं च (शुभेषु सर्वेषु कार्येषु हितं वदन्ति).
(४) प्रपा. ३३०; संकौ. १९९ पू., बृहस्पतिवसिष्ठौ.
(५) प्रपा. ३३०; संकौ. १९९ व्रजेत् (व्रजन्) बृहस्पतिवसिष्ठौ.
(६) ज्योना. २७।६६–६७ पृ. ५५; प्रपा. ३३५ रविणा (राहुणा); संप्र. ७९२ मुक्तं (मुक्त); संग. २१६ पू.
(७) ज्योना. २७।९ पृ. ५१ नेष्टं नेष्टं तद्भं (मात्रं तदा नेष्टं); प्रपा. ३३५; संप्र. ७९३ तद्भमृतु (तद्दृतु); संग. २१६.

[1]मङ्गलेषु त्यजेत्क्रूरविद्धर्क्षं क्रूरसंयुतम् ।
अखिलर्क्षं पञ्चगव्यं सुराबिन्दुयुतं यथा ॥

[2]पाद एव शुभैर्विद्धमशुभैरेव कृत्स्नभम् ।
क्रूरविद्धयुतं धिष्ण्यं निखिलं नैव पादतः ॥

[3]आद्येनान्त्यपदं बाध्यमन्त्येनाद्यं तु बाध्यते ।
द्वितीयेन तृतीयं स्यात्तृतीयेन द्वितीयकम् ॥

[4]तिर्यक्पञ्चोर्ध्वगाः पञ्च रेखे द्वे द्वे च कोणयोः ।
द्वितीयशम्भुकोणेऽग्नि-
धिष्ण्यं चक्रे च विन्यसेत् ।
भान्यतः साभिजित्येक-
रेखाकोणे च विद्धभम् ॥

## बृहस्पतिः

[5]मुक्तं युक्तं ग्रहैर्यत्र काङ्क्षितं च त्रिभं भवेत् ।
दग्धज्वालाः सधूमाः स्युः क्रमाद्दोषेषु
दुस्तराः ॥

पापग्रहणस्थनक्षत्रपृष्ठे पूर्वत्र द्वयं खरम् ।
एतास्तारा विवर्ज्याः स्युः शुभकर्मणि सर्वदा ॥
असंख्याता ग्रहा नित्यं दुर्ज्ञेया
भानुना खराः ।
अत एवार्कसंयुक्तं क्षेत्रं सर्वप्रमाददम् ॥
दग्धक्रमेण यत्क्षेत्रं त्रिंशता दिवसैस्तु तत् ।
पूर्वभावमथाऽऽयाति यथा वृक्षास्तु नीरदैः ॥

(१) ज्योना. २७।६७–६८ पृ. ५५ क्रूरविद्धर्क्षं ( क्रूरं विद्धं भं ); प्रपा. ३३५ विद्धर्क्षं ( विद्धभं ) अखिलर्क्षं ( अपि लक्षं ); संप्र. ७९३.

(२) ज्योना. २७।६८–६९ पृ. ५५ शुभैरेव ( शुभं चैव ); प्रपा. ३३५ पाद एव ( पादमेव ); संप्र. ७९३ अशुभैरेव ( भाशुभं नैव ) विद्ध ( विद्धं ) पादतः ( याचतः ).

(३) प्रपा. ३३५ पूर्वार्धे ( आद्येऽन्त्यं पदं बाध्यमन्त्येनाद्यं तु बाधते) ; संप्र. ७९३.

(४) ज्योना. २७।७६–७७ द्वितीयार्धे ( द्वितीयं शम्भुकोणेऽग्निभचक्रं तत्र विन्यसेत् । ) कोणे च ( खेटेन ). पीयूषधाराटीकापाठः स्वीकृतोऽत्र ।

(५) प्रपा. ३२९.

[1]वत्सरेण तदर्धेन तस्मादर्धेन यान्ति ये ।
मन्दजीवकुजैर्दग्धा राशयः पूर्वजं गुणम् ॥

[2]बुधेनाक्रान्तभं सद्यः प्रकृतिं याति वृक्षवत् ।
उत्पातैः पीडितास्ताराः षण्मासैः
प्रकृतिं ययुः ॥

[3]राहुकेतुविमुक्तं यद्ग्रहचक्रनिपीडितम् ।
वत्सरार्धेन शुध्येत ग्रहयुद्धहतं च भम् ॥

[4]अप्रकाशग्रहैर्युक्तं सद्यो दोषाव्यपोहति ।
मुक्तं शुभग्रहैर्यत्तच्छुभत्वं त्रिदिनैर्व्रजेत् ॥

[5]यस्मिन्भेऽस्तमयं यान्ति ग्रहास्तद्भं त्रिमासतः ।
शुद्धत्वमुपयातीति वज्रिन् पद्मासनोदितम् ॥

[6]ग्रहनक्षत्रयोगेन यदुक्तो दोषसंचयः ।
तद्दिनं सर्वकार्येषु शुभेषु परिवर्जयेत् ॥
यदुक्तमिदमृक्षेषु तारासु च खगैर्युताः ।
चापल्यमपवादैस्ते दोषाः शोभनतामियुः ॥

## कश्यपः

[7]क्रूरविद्धं युतं धिष्ण्यं क्रूराक्रान्तं च कृत्स्नभम् ।
मणिहेममयं हर्म्यं भूताक्रान्तमिव त्यजेत् ॥
क्रूरैर्विमुक्तं भोग्यर्क्षं क्रूराक्रान्तं च विद्धभम् ।
भुक्त्वा यावन्न शशिना मुक्तं तावन्न शोभनम् ॥

[8]रव्यङ्गारकभास्करि-
भोगापन्नं विधूमितं शिखिना ।
ग्रहभिन्नं ग्रहयुद्धं
सोपप्लुतमुल्कयाऽभिहतम् ॥

(१) प्रपा. ३२९ ; संकौ. १९९ तस्मादर्धेन ( तस्याप्यर्धेन ) बृहस्पतिवसिष्ठौ.

(२) प्रपा. ३२९.

(३) प्रपा. ३२९ चक्र (वक्र) ; संकौ. १९९ हतं ( युतं ) बृहस्पतिवसिष्ठौ.

(४) प्रपा. ३२९.

(५) प्रपा. ३२९ ; संकौ. १९९ बृहस्पतिवसिष्ठौ.

(६) प्रपा. ३२९.

(७) संग. २३८.

(८) ज्योनि. ४५.

ग्रहणगतं चैव तथा
पश्चात्संध्यागतं च विद्धर्क्षम् ।
त्रिविधोत्पातैर्दुष्टं पीडितमृक्षं विजानीयात् ॥

**माण्डव्यः**

[1]चन्द्रातिरिक्तखचरैर्यद्यत्र वेधसंभवः ।
चिताभूमिं तदा नारी भर्त्रा सह विशेद्ध्रुवम् ॥
[2]विद्धे दग्धे ज्वलिते सधूमिते चापि चन्द्रर्क्षे ।
यात्राप्रवेशमङ्गलविवाहकर्माणि नेष्यन्ते ॥
धिष्ण्यं सौम्यग्रहैर्विद्धं पादमात्रं परित्यजेत् ।
क्रूरैस्तु सकलं त्याज्यमिति वेधविनिश्चयः ॥

**वात्स्यः**

[3]भुक्तं भोग्यं तथा क्रान्तं
विद्धं पापग्रहेण भम् ।
माङ्गल्येषु च कार्येषु यत्नतः परिवर्जयेत् ॥

**वराहः**

[4]नक्षत्रमपटुकिरणं पश्चात्संध्यागतं ग्रहैर्भिन्नम् ।
क्रूरनिपीडितयुता तद्दूषितं चाशुभं सर्वम् ॥
दिनकरकराभितापा-
दृक्षमवाप्नोति सुमहतीं पीडाम् ।
भवति च पश्चाच्छुद्धं
कनकमिव हुताशपरितापात् ॥
[5]यथा धनुर्मुक्तशरेण विद्धो
दृढेन देहावयवैकदेशे ।
निपीडितः स्यात्पुरुषस्तथा तत्
नक्षत्रमप्येवमथाऽऽमनन्ति ॥
क्रूरेण विद्धं त्वथवाऽपि युक्तं
त्यजेत्समग्रं भमुशन्ति सन्तः ।
द्वाभ्यां शुभाभ्यामपि विद्धयुक्तं
विवाहयात्राव्रतमङ्गलेषु ॥

क्रूरेण वा सौम्यग्रहेण वाऽत्र
विद्धं युतं चाखिलमेव वर्ज्यम् ।
तद्दुष्टचन्द्रर्क्षमुदाहरन्ति
सप्तर्षिकात्यायनशौनकाद्याः ॥
केचिद्द्विता( ? )नलमुखे स्थितमप्यदग्धं
धिष्ण्यं समस्तमपि काष्ठमिव त्यजन्ति ।
पाताहतं च तमसा विहितोपमर्दं
विद्धं युतं च रविभास्करिकेतुभौमैः ॥
अथान्त्यपादमादिगो द्वितीयगस्तृतीयकम् ।
तृतीयगो द्वितीयकं चतुर्थगोऽपि चादिमम् ॥
भिनत्ति चांशकं ग्रहः सुवेधतोऽङ्घ्रिमुच्चकैः ।
इहैवमूचतुर्मुनी वसिष्ठसूनुजैमिनी ॥
बाणाग्रदृष्टिपाताद्यद्वल्लक्ष्यं भिनत्ति धानुष्कः ।
तद्वत्समग्रदृष्टिर्वेधो धिष्ण्यं प्रदूषयति ॥
सम्यग्दृष्टिनिपातं हि यस्मिंस्तु कुरुते ग्रहः ।
स वेधो कीर्तितः सद्भिर्न वेधोऽन्यादृशो
भवेत् ॥

यदैकदेशेऽल्पतमेऽपि दग्धे
दग्धः पटो यद्वदियं प्रसिद्धिः ।
ग्रहेन्दुबिम्बैककलाप्रमाणं
तथा भवेधोऽपि च सुप्रसिद्धः ॥
विद्धंयुतं वा ह्युसदा भयप्रदं
विहाय तच्छेषमतो हितं च ।
विवाहकाले प्रवदन्ति नार्याः
सुतायुरारोग्यशुभप्रदं च ॥
पञ्चोर्ध्वतिर्यक्प्रभवाश्च रेखा
द्वे द्वे च कोणेषु हुताशभादेः ।
विद्धे युते चैकशलाकयेन्दोः
कुर्यान्न तत्रोद्वहनादि किंचित् ॥
[1]रविवेधे वैधव्यं पुत्रविनाशं करोति कुजवेधः ।
वन्ध्या पण्डितवेधे दीक्षाकरणं
करोति गुरुवेधः ॥

---

( १ ) संत. ८८३.
( २ ) ज्योनि. ४४.
( ३ ) विसौ. २६.
( ४ ) विसौ. २६.
( ५ ) विसौ. २८–२९.

( १ ) विसौ. २९ ; संप्र. ७९४ दासी ( दासीं ) संभूते ( संभूतः ).

भृगुसुतवेधे पुत्री दासी रविजेन्दुराहुसंभूते ॥

[1]विद्धे युते वा तुहिनांशुधिष्ण्ये
सौम्यग्रहैः स्याद्बहुपुत्रनाशः ।
वैधव्यदुःखं यमपीडनं च
क्रूरैर्युवत्याः शिखिना च दास्यम् ॥

यच्छौनकः प्राह शशी सुहृद्भि-
र्विद्धः सकष्टो धनमानदाता ।
तन्नेति यस्माच्छुभदा विमुक्ताः
शराः शरीरे परमापदे स्युः ॥

### श्रीपतिः

[2]ऊर्ध्वा रेखाः पञ्च तिर्यक्स्थिताश्च
द्वे द्वे रेखे कोणयोरत्र चक्रे ।
अग्नेर्धिष्ण्यं शम्भुकोणे द्वितीये
नाड्यां न्यस्येद्भ्रान्यतः साभिजिन्ति ॥

[3]अन्त्ये पादे वैश्वदेवाह्वयस्य
विष्णोर्धिष्ण्यस्याद्यपादे चतस्रः ।
नाड्यो भुक्तिः साऽभिजित्संज्ञिता स्यात्
तत्स्थे खेटे रोहिणीनां च वेधः ॥

वैधव्यं दिनबान्धवस्य जगती-
सूनोरपत्यक्षयः
सौम्यस्यार्थपरिच्युतिः सुरगुरो-
र्हानिस्तथा दुःखकम् ।
प्रव्रज्यं भृगुजन्मनः पति-
परित्यागश्च सौरेः पुनः
नारीणां गणिकात्वमेव तमसः
केतोश्च वेधाद्द्विधोः ॥

### लल्लः

[4]चक्रे सप्तशलाकाख्ये वेधः सर्वसु कर्मसु ।
त्याज्य एव विवाहे च तथैव पञ्चरेखजः ॥

हैमेन लोहदण्डेन दुःखं तुल्यं हि ताडनात् ।
तथैव सदसद्भिद्धो दोषोऽशुभस्तयोः समः ॥

क्रूरविमुक्तं दग्धं क्रूरयुतं ज्वलितधूमितं पुरतः ।
एकशलाकाद्युचरं सवेधमृक्षं विजानीयात् ॥

[1]बालग्रहदृष्टिपाता-
द्यद्वल्लक्ष्यं भिनत्ति धानुष्कः ।
समपादगतश्चैवं वेधेनाङ्घ्रिं प्रदूषयति ॥

### वैद्यनाथः

[2]वेधमाद्यन्तयोरङ्घ्र्योरन्योन्यं द्वितृतीययोः ।
क्रूरैरपि त्यजेत्पादं केचिदूचुर्महर्षयः ॥

### भीमपराक्रमः

[3]वैश्वान्त्यश्चरणोऽच्युतर्क्षघटिका
आद्याश्चतस्रोऽभिजित् ।
तत्स्थे ब्राह्ममथान्त्यमर्यमगते
याम्यस्थिते मित्रभम् ।
सौम्यं वैश्वगते मघा श्रवणगे-
ऽहिर्बुध्न्यभं हस्तगे
मूलस्थेऽदितिभं च वारुणगते
स्वाती च विद्धा ग्रहैः ॥

वेधोक्तर्क्षगतो यदा दिविचरो
वेधस्तदा चेतरे
वक्रे सप्तशलाकजे निगदितो
वेधोऽन्यदा सूरिभिः ।
आद्यद्वित्रिचतुर्थके निगदितः
पादे ग्रहोऽधिष्ठितः
पादस्यादितृतीयगस्तु कुपित-
स्यान्यैस्तु भेदः क्रमात् ॥

---

(१) विसौ. २९.
(२) प्रपा. ३३५.
(३) प्रपा. ३३५ क्रमेण श्रीपतिः.
(४) ज्योनि. ४४.

(१) ज्योनि. ४५.
(२) ज्योनि. ४४.
(३) विसौ. २८.

## विवाहवृन्दावनम्

[1]याम्योत्तराः प्रागपराश्च पञ्च
द्वे द्वे च रेखे रचयेद्विदिक्षु ।
विदिग्द्वितीयार्गलिताग्नितारः
सहाभिजित्तत्र भवेद्भवर्गः ॥

अथ विवाहे पञ्चशलाकावेधमाह–याम्योत्तरा इति । पञ्च याम्योत्तराः, पञ्च प्रागपराश्च रेखाः, द्वे द्वे रेखे च विदिक्षु कोणेषु रचयेत् । तत्र तस्मिन् चक्रे विदिग्द्वितीयार्गलिताग्नितारः विदिशि द्वितीयया रेखया अर्गलिता बद्धा अग्नितारा कृत्तिका यस्य स तथोक्तः सहाभिजित् अभिजित्सहितः भवर्गः नक्षत्रसमूहः भवेत् । लक्ष्मी.

[2]तस्मिन्नभिन्नाग्रगतं भिनत्ति
ग्रहो विवाहर्क्षमशेषमेव ।
स्त्रीपुंसयोरायुरसौम्यवेधः
सौम्यव्यधो हन्ति सुखानि शश्वत् ॥

तस्मिन् चक्रे ग्रहः अभिन्नाग्रगतं एकरेखाग्रगतं विवाहर्क्षं अशेषमेव समस्तमेव भिनत्ति वेधयति, तत्रापि असौम्यवेधः पापग्रहवेधः स्त्रीपुंसयोः कन्यावरयोः आयुः हन्ति, सौम्यव्यधः शुभग्रहवेधः शश्वत् सर्वदा सुखानि हन्ति नाशयति । लक्ष्मी.

[3]वैश्वदैवतचतुर्लवः श्रवः-
पञ्चभूलव इहाभिजिन्मितिः ।
अन्यतः परिणयादयं व्यधः
सप्तरेखवलये विलोक्यते ॥

अभिजिन्मानं, सप्तशलाकावेधं चाह– वैश्वदैवतेति । वैश्वदैवतचतुर्लवः उत्तराषाढचतुर्थांशः श्रवःपञ्चभूलवः श्रवणस्य पञ्चदशांशः इह अभिजिन्मितिः स्यात् । अयं व्यधः वेधविचारः परिणयादन्यतः विवाहादन्यत्र सप्तरेखवलये सप्तशलाकके चक्रे विलोक्यते । लक्ष्मी.

[1]स किल वेधविधिर्द्वितृतीययो-
श्चरणयोर्मिथ आदिचतुर्थयोः ।
अशुभविद्धमशेषमुडु त्यजेत्
चरणगं शुभवेधमसंपदि ॥

स वेधविधिः द्वितृतीययोः चरणयोः तथा आदि-चतुर्थयोश्चरणयोः मिथः परस्परं ज्ञेयः । अशुभविद्धं पापग्रहविद्धं उडु नक्षत्रं अशेषं समस्तं त्यजेत् । तथा असंपदि अन्यनक्षत्रालाभे आवश्यके शुभवेधं शुभग्रहवेधं चरणगं यस्मिन् चरणे वेधस्तं चरणमेव त्यजेत् । लक्ष्मी.

[2]यदशुभैर्गतगम्यमधिष्ठितं
यदपि च त्रिविधाद्भुतदूषितम् ।
तरणितारकतोऽपि चतुर्दशं
तदखिलेऽपि खलं शुभकर्मणि ॥

यत् नक्षत्रं अशुभैः पापग्रहैः गतं भुक्तं, गम्यं भोग्यं, अधिष्ठितं युतं, यदपि च त्रिविधाद्भुतदूषितं त्रिविधैः दिव्यभौमान्तरिक्षैः अद्भुतैः उत्पातैः दुष्टं, तरणितारकतः सूर्यनक्षत्रतः चतुर्दशं तदखिलेऽपि समस्तेऽपि शुभकर्मणि खलं दुष्टं स्यात् । लक्ष्मी.

[3]क्षताहृते दिग्धशरार्दितस्य
शस्तं मृगस्यामिषमेवमन्ये
क्रूराङ्घ्रिवेधाय पदं वदन्ति
तेनैव तेषां निजपक्षहानिः ॥

[4]विश्लेषमायाति यथाऽसुभिः स्वै-
रेणः शरेणैकदिशि क्षतोऽपि ।
तथाऽङ्घ्रिवेधादपि तारकाणां
क्रूरस्य नश्येद्बलरूपसंपत् ॥

(१) विवृ. १।६; विसौ. २९ तारः......भवेद्भवर्गः (तारं तत्रालिखेत्साभिजितं भवर्गम्); संप्र. ७९४ रचयेत् (विचरेत्) शेषं विसौवत्.

(२) विवृ. १।७; विसौ. २९ सौम्यव्यधो (सौम्यग्रहो); संप्र. ७९४ विसौवत्.

(३) विवृ. १।८.

(१) विवृ. १।९; विसौ. ३१ उक्त.

(२) विवृ. १।१०. (३) विवृ. १।१८.

(४) विवृ. १।१९; विसौ. २८ रूप (सत्त्व); ज्योनि. ४४ क्रूरस्य (नरस्य).

अथ केश्चित् पादवेधे युक्तिरुक्ता तां दूषयति— क्षतादिति । यथा दिग्धशरेण विषाक्तबाणेन अर्दितस्य मृगस्य आमिषं मांसं क्षतादृते क्षतं विना अन्यत् शस्तं, एवमन्ये आचार्याः क्रूराङ्घ्रिवेधाय पदं दृष्टान्तं वदन्ति, परं च तेनैव दृष्टान्तेन तेषां निजपक्षहानिः स्यात् । तां हानिं दर्शयति— यथा शरेण एकदिश्यपि एकस्मिन्नङ्ग-विभागेऽपि क्षतः विद्धः एणः मृगः स्वैः असुभिः सर्वप्राणैः विश्लेषं वियोगं आयाति मृत्युं प्राप्नोतीत्यर्थः । तथैव क्रूरस्य पापग्रहस्य अङ्घ्रिवेधात् तारकाणां नक्षत्राणां अपि बलरूपसंपत् नश्येत् । अत एव पापविद्धं समस्तमेव नक्षत्रं त्यजेदिति भावः ।

लक्ष्मी.

[1]यस्मिन्नृक्षे वीक्ष्यते सैंहिकेयो
भेदस्ताराखेटयोर्यत्र वा स्यात् ।
आषण्मासं तत्र लग्नेन्दुभाजि
भ्राजिष्णु स्यान्नो शुभं कर्म किंचित् ॥

अथ ग्रहभेदादिगतनक्षत्रदोषं कथयति— यस्मिन्निति । यस्मिन् ऋक्षे सैंहिकेयो राहुः वीक्ष्यते दृश्यते, ग्रहणं भवतीत्यर्थः । यत्र वा ताराखेटयोः मङ्गलादिकयोर्द्वयोर्ग्रहयोः भेदः योगः, तत्र नक्षत्रे लग्नेन्दुभाजि लग्नस्थे चन्द्रकान्ते वा आषण्मासं षण्मासपर्यन्तं किंचित् शुभं कर्म भ्राजिष्णु शोभनं न स्यात् । लक्ष्मी.

[2]उत्पातपापग्रहमुक्तमृक्षं
यदीन्दुराक्रम्य पुनर्भुनक्ति ।
तदा तदर्हं सकलेषु कर्मसु
त्यजेत्समक्रान्तितनू रवीन्द्वोः ॥

पापमुक्तनक्षत्रस्य शुद्धिं पातदोषं चाह— उत्पातेति । उत्पातपापग्रहमुक्तं त्रिविधोत्पातेन पापग्रहेण ( च ) त्यक्तं, ऋक्षं नक्षत्रं यदि इन्दुः चन्द्रः आक्रम्य पुनः द्वितीयवारं भुनक्ति, तदा तत् नक्षत्रं सकलेषु कर्मसु अर्हं योग्यं भवति । तथा रवीन्द्वोः समक्रान्तितनू तुल्यक्रान्ती सकलेषु कर्मसु त्यजेत् । लक्ष्मी.

[1]स्फुरददूषणभूषणकान्तयो
यदि भवन्ति मृगाङ्कमृगीदृशः ।
करमवाप्य वरः सुतनोस्तदा
शुभरसं भरसंभृतमश्नुते ॥

अथ नक्षत्रशुद्धिप्रशंसामाह— स्फुरदिति । यदि मृगाङ्कमृगीदृशः मृगाङ्कस्य चन्द्रस्य मृगीदृशः स्त्रियः ताराः नक्षत्राणीत्यर्थः । स्फुरददूषणभूषणकान्तयः अस्तादिदोषरहिता भवन्ति तदा सुतनोः कुमार्याः करमवाप्य पाणिग्रहं कृत्वा वरः भरसंभृतं अतिशयं शुभरसं सुखभोगं अश्नुते लभते इत्यर्थः । लक्ष्मी.

## भुजबलः

[2]भपादवेधो यदि दुष्टमृक्ष-
मृक्षेण तद्वद्द्वितयं सपादम् ।
तेनापि संपर्कवशाद्भचक्रं
माङ्गल्यकार्ये कथमत्र कार्यम् ॥

## रत्नकोशे

[3]विषप्रदिग्धेन हतस्य पत्रिणा
मृगस्य मांसं शुभदं क्षतादृते ।
यथा तथाऽत्राप्युडुपाद एव
प्रदूषितोऽन्यत्त्रितयं शुभावहम् ॥

## राजमार्तण्डः

[4]यस्मिन्पादे ग्रहस्तिष्ठे-
च्छुभो वा यदि वाऽशुभः ।
तेनाङ्घ्रिणा भपादो यो
विद्धो नेष्टः परे शुभाः ॥

( १ ) विवृ. ११२२.
( २ ) विवृ. ११२३ ; विसौ. २६ मुक्तमृक्षं ( दूषितं भं ) सकलेषु कर्मसु ( किल मङ्गलेषु ).

( १ ) विवृ. ११२५.
( २ ) विसौ. ३०.
( ३ ) विसौ. २८ षितोऽन्य ( षितान्य ) विवाहवृन्दावने इत्युक्तम् ; ज्योनि. ४५ शुभदं ( सुखदं ).
( ४ ) ज्योनि. ४५.

[1]भवेत्संध्यागतं पश्चादस्तमेष्यद्दिनत्रयम् ।
दिनानि पञ्च पूर्वेण तत्कृतं कर्म वर्जयेत् ॥

### दीपिकायाम्

[2]कृत्तिकादि चतुःसप्तरेखाराशौ परिभ्रमन् ।
ग्रहश्चेदेकरेखास्थो वेधः सप्तशलाकजः ॥
वैश्वस्य चतुर्थेंऽशे श्रवणादौ लिप्तिकाचतुष्के च ।
अभिजित् तत्स्थे खचरे विज्ञेया रोहिणी विद्धा ॥
[3]कर्णवेधे विवाहे च व्रते पुंसवने तथा ।
प्राशनेऽन्नस्य चूडायां विद्धमृक्षं विवर्जयेत् ।

### व्यवहारोच्चये

[4]सप्तसप्त विनिपात्य रेखिका-
स्तिर्यगूर्ध्वमथ कृत्तिकादिकम् ।
लेखयेदभिजिता समन्वितं
चैकरेखगमनेन विध्यते ॥
यस्याः शशी सप्तशलाकभिन्नः
पापैरपापैरथवा विवाहे ।
उद्वाहवस्त्रेण तु संवृताङ्गी
श्मशानभूमिं रुदती प्रयाति ॥

### ज्योतिष्प्रकाशे

[5]दोषैर्मुक्तं तु नक्षत्रं कर्मयोग्यं च तद्भवेत् ।
भानुना शशिना वाऽपि भुक्तं सोम्यग्रहैरपि ॥

### मुहूर्तचिन्तामणिः

[6]वेधोऽन्योन्यमसौ विरिञ्च्यभिजितो-
र्याम्यानुराधर्क्षयोः
विश्वेन्द्वोर्हरिपित्र्ययोर्ग्रहकृतो
हस्तोत्तराभाद्रयोः ।
स्वातीवारुणयोर्भवेन्निर्ऋतिभा-
दित्योस्तथोफान्त्ययोः
खेटे तत्र गते तुरीयचरणा-
द्योर्वा तृतीयद्वयोः ॥

वेधदोषं पञ्चशलाकाचक्रोद्धारनिरपेक्षं स्पष्टार्थमाह— वेध इति । विरिञ्चिः रोहिणी । रोहिण्यभिजितोः ग्रहैः क्रूराक्रूरैः कृतो वेधोऽन्योन्यं परस्परं भवेत् । रोहिणीस्थे ग्रहे अभिजिद्विद्धः, अभिजित्स्थे रोहिणी विद्धेत्यर्थः । एवं सर्वत्र व्याख्येयम् । पदानि स्पष्टार्थानि । चरणवेधमाह— खेट इति । तत्र तस्मिन् नक्षत्रे विद्यमाने ग्रहे सति यदि चतुर्थपादेऽस्ति तदा परनक्षत्रस्य प्रथमपादे वेधः । यदि तृतीयपादे तदा द्वितीयचरणस्य वेधः । एवं यदि द्वितीयपादे तदा तृतीयपादस्य वेधः । यदि प्रथमपादे तदा चतुर्थपादस्य वेध इत्यर्थः । पीटी.

शाक्रेज्ये शतभानिले जलशिवे
पौष्णार्यमर्क्षे वसु-
द्वीशे वैश्वसुधांशुभे हयभगे
सार्पानुराधे तथा ।
हस्तोपान्तिमभे विधातृविधिभे
मूलादिती त्वाष्ट्रभा-
ऽजाङ्घ्री याम्यमघे कृशानुहरिभे
विद्धेऽद्रिरेखे मिथः ॥

केचित् सप्तशलाकाचक्रे वेधमाहुः । तदर्थं चक्रन्यासं विनैव वेधदोषमाह—शाक्रेति । अद्रिरेखे सप्तशलाकाख्ये चक्रे शाक्रेज्ये ज्येष्ठापुष्यनक्षत्रे मिथः परस्परं क्रूराधिष्ठितत्वेन विद्धे ज्ञेये । एवं जलशिवे पूर्वाषाढार्द्रे विद्धे ज्ञेये । एवं सर्वत्र व्याख्येयम् । वैश्वसुधांशुभे उत्तराषाढामृगशिरसी, हयभगे अश्विनीपूर्वाफाल्गुन्यौ, उपान्तिमभं अन्त्यस्य समीपमुपयाति उत्तराभाद्रपदा । अन्यत् स्पष्टम् । पीटी.

ऋक्षाणि क्रूरविद्धानि क्रूरमुक्तादिकानि च ।
भुक्त्वा चन्द्रेण मुक्तानि शुभार्हाणि प्रचक्षते ॥

क्रूराक्रान्तादिनक्षत्रदोषं सापवादमाह— ऋक्षाणीति । क्रूरग्रहैर्विद्धानि ऋक्षाणि, तथा क्रूरैर्मुक्तानि त्यक्तानि । आदिशब्दात् क्रूराक्रान्तानि क्रूरगन्तव्यानि च । चकारस्यानुक्तसमुच्चयार्थत्वात् त्रिविधोत्पातैः दूषितानि ऋक्षाणि ज्ञेयानि । तानि यदि चन्द्रेण भुक्त्वा मुक्तानि

(१) विसौ. २६. (२) संत. ८८३.
(३) विसौ. २८ ; संत. ८८३ नेऽन्नस्य ( ने चाद्य ).
(४) विसौ. २९. (५) ज्योनि. ४५-४६.
(६) मुचि. ६।५६-५८.

तदा शुभार्हाणि प्रचक्षते वदन्ति, मुनय इति शेषः ।

पीटी.

## अनिर्दिष्टकर्तृकवचनानि

पञ्चशलाकावेधः

[1]अश्विनी पूर्वफाल्गुन्या भरणी चानुराधया।
अभिजिच्चैव रोहिण्या कृत्तिका च विशाखया ॥
मृगश्चोत्तरषाढेन पूर्वाषाढा तथाऽऽर्द्रया ।
पुनर्वसुश्च मूलेन तथा पुष्यो हि ज्येष्ठया ॥
धनिष्ठया तथाऽऽश्लेषा मघाऽपि श्रवणेन च ।
रेवत्युत्तरफाल्गुन्या हस्तेनोत्तरभाद्रपत् ॥
स्वात्या शतभिषा विद्धा चित्रया पूर्वभाद्रपत् ।
विद्धान्येतानि वर्ज्यानि विवाहे भानि कोविदैः ॥
रविवेधे च वैधव्यं कुजवेधे कुलक्षयम् ।
बुधवेधे भवेद्वन्ध्या प्रव्रज्या गुरुवेधतः ॥
अपुत्रा शुक्रवेधेन सौरे चान्द्रे च दुःखिता ।
राहौ परस्ता नारी केतौ स्वच्छन्दचारिणी ॥
वेधमाद्यन्तयोरङ्घ्रयोरन्योन्यं द्वितृतीययोः ।
पादमेव शुभैर्विद्धे पापविद्धेऽखिलं त्यजेत् ॥
क्रूरैरपि त्यजेत्पादं केचिदूचुर्महर्षयः ।
उपान्त्यपादो ह्यभिजिच्छ्रवणाद्यघटीयुगम् ॥

सप्तशलाकावेधः

पूर्वापराः सप्त रेखास्तथा याम्योत्तराः कुरु।
ईशानात्कृत्तिकादीनि साभिजित्सहितं लिख ॥
एकरेखास्थयोर्वेधं सर्वकार्ये विलोकयेत् ।
वधूप्रवेशने दाने वरणे पाणिपीडने।
वेधः पञ्चशलाकाख्योऽन्यत्र सप्तशलाककः ॥
[2]त्यजेद्विषुवतं यत्नाद्व्यतीपातायनं तथा ।
उत्पातदूषितं चर्क्षं वैधृतिं च विशेषतः ॥
[3]यथा हि चण्डालधृतैकहस्तो
मज्जन्नगाधेऽपि सरित्प्रवाहे ।
भवेन्न पूतः शशिभोगतोऽपि
तथा न शुध्येदुडु पापयुक्तम् ॥

(१) संग. २३६–२३७.
(२) चका. ७८८.
(३) विसौ. २६.

कुजभेदनव( च )क्रदूषित-
ग्रहणप्राप्तमथार्कमागतम् ।
उदयास्तमितग्रहं विना
द्युतिहीनं ग्रहरश्मिपीडितम् ॥
अथ यावदतिग्मरश्मियोगं
प्रकृतिविपर्यययोगमागतम् ॥
स्वस्थानवारोत्सृष्टं च दुष्टमृक्षं प्रचक्षते ।
एतेभ्यो विपरीतं यत्तत्क्लिष्टं समृद्धये ॥

## महादोषसामर्थ्यम्

### वसिष्ठः

[1]लग्नं महादोषविदूषितं यत्
न तद्गुणास्त्राणविधौ समर्थाः ।
राजावधूतं पुरुषं च यद्व-
दन्ये जना बन्धुजनाश्च सर्वे ॥
[2]लग्नस्थजीवज्ञसितप्रजाता
गुणाः परित्रातुमनीश्वरास्तत् ।
लग्नं महादोषविदूषितं यद्-
भ्रष्टं द्विजं बन्धुजना यथैव ॥
[3]लग्नांशसौम्यग्रहवर्गजा ये
गुणाः समर्था न च रक्षितुं तत् ।
लग्नं महादोषविदूषितं य-
च्छूद्रार्थयज्ञा इव यायजूकम् ॥
[4]मित्राधिमित्रोच्चगृहांशजाता
गुणास्त्वशक्ताः परिरक्षितुं तत् ।
लग्नं महादोषविदूषितं य-
द्धर्मा यथाऽधर्मपरं द्विजेन्द्रम् ॥

(१) वसं. ३२।१०० राजावधूतं ( राज्ञा धूतं तं ); विसौ. २७.
(२) वसं. ३२।१०१ मनीश्वरास्तत् ( मशेकुरेव ); प्रपा. ३३६ त्रातु ( ज्ञातु ) यद्भ्रष्टं द्विजं ( यद्दुष्टं जनं ).
(३) वसं. ३२।१०२; प्रपा. ३३६ समर्था ( समस्ता ) शूद्रार्थ ( सिद्धार्थ ); विसौ. २७ यच्छूद्रार्थयज्ञा इव यायजूकम् ( तद्भूभ्रष्टं द्विजं बन्धुजना यथैव ).
(४) वसं. ३२।१०३ तत् ( यत् ); प्रपा. ३३६; विसौ. २७ तत् ( यत् ) धर्मा यथाऽधर्मपरं द्विजेन्द्रम् ( गुणा यथा पातकिनं च सर्वे ).

[1]वर्गोत्तमांशोद्भवचन्द्रजाता
गुणास्तदुद्धर्तुमिहासमर्थाः ।
लग्नं महादोषविदूषितं यद्
गुणा यथा निर्गुणिनं च सर्वे ॥

[2]लग्नं महादोषविदूषितं य-
दवाप्य सौम्यग्रहकेन्द्रजाताः ।
व्यर्था गुणाः पूर्णसुधाकरस्य
करा जनानन्दकरा इवान्धम् ॥

[3]अवाप्य वन्ध्याः सुगुणास्तदन्धं
लाभस्थखेटस्य गृहोच्चजाताः ।
लग्नं महादोषविदूषितं य-
त्कटाक्षपाता इव सुन्दरीणाम् ॥

[4]धनत्रिकोणस्थशुभग्रहोत्थ-
गुणा निरर्थास्तदवाप्य सर्वे ।
लग्नं महादोषविदूषितं य-
द्विबीजिनं यद्वदपत्ययोगः ॥

[5]अयं गुणो दोषममुं निहन्ती-
त्युक्तं हि यत्रोभयनामपूर्वम् ।
गुणः स एवान्यगुणो न शक्तो
दोषोऽपि तद्वद्गुणघातुकः सः ॥

(१) वसं. ३२।१०४ ; प्रपा. ३३६ तदुद्ध (समुद्ध) पू.

(२) वसं. ३२।१०५ ; प्रपा. ३३६ पू.

(३) वसं. ३२।१०६.

(४) वसं. ३२।१०७ ; प्रपा. ३३६ ग्रहोत्थ (ग्रहोत्था) योगः (योगाः).

(५) वसं. ३२।१०८ ; विसौ. २७ त्युक्तं (त्युक्त्वा) उत्तरार्धे (गुणः स दोषाभिभवे समर्थो दोषोऽपि तद्वद्गुणघातकस्तु ।).

[1]एकविंशन्महादोषास्त्वेते ब्रह्ममुखोदिताः ।
कदाचिन्नैव सीदन्ति गुणानां कोटिकोटिभिः ।
तस्मादेतेषु दोषेषु कदाचिन्नाचरेच्छुभम् ॥
[2]विवाहे विधवा नारी मरणं व्रतबन्धने ।
ग्रामनाशः प्रतिष्ठायां सीमन्ते गर्भनाशनम् ॥
नवान्नभोजने मृत्युः कृषौ तत्फलनाशनम् ।
कर्तृनाशो गृहारम्भे प्रवेशे पतिनाशनम् ॥

## नारदः

[3]हन्त्येकोऽपि महादोषो गुणलक्षमपीह सः ।
पावनं पञ्चगव्यस्य पूर्णकुम्भं सुरालवः ॥

## फलप्रदीपे

[4]महादोषा विवाहे च वैधव्यं भङ्ग आहवे ।
विद्यारम्भे च मूर्खत्वं यात्रायां मार्गरोधनम् ॥
व्रते च कर्मबाह्यत्वं रोगश्च क्षुरकर्मसु ।
नवान्नप्राशने भैक्ष्यं गृहारम्भे सुखक्षयः ॥
दैन्यं गेहप्रवेशे च वन्ध्यात्वं गर्भशोभने ।
कृषिकर्मणि वैफल्यं ग्रामकार्ये नृपोऽपरः ॥
राज्यनाशः प्रतिष्ठायामग्न्याधानेऽग्निनाशनम् ।
पट्टाभिषेके दारिद्र्यं हानिर्वाणिज्यकर्मणि ॥
विरोधः स्वामिसेवायां हरणं च विभूषणे ।
दारिद्र्यं मरणं हानिं सर्वकार्ये विदुर्बुधाः ॥

## ज्योतिश्चिन्तामणौ

[5]महादोषे कृतं कर्म महादोषकरं भवेत् ।
तस्माच्छुभेषु कार्येषु महादोषान्परित्यजेत् ॥

(१) वसं. ४२।१०७-१०८ ; विसौ. २९ तृतीयार्धं नास्ति.

(२) वसं. ४२।१०९-११०.

(३) ज्योना. २७।१४८ पू. ६१.

(४) ज्योनि. ६९.

(५) ज्योनि. ६९.

## अल्पदोषगणना

### वसिष्ठः

[1]उपग्रहो लत्तभपातितर्क्षे
शुभग्रहैर्विद्धविदूषितं यत् ।
विरुद्धयोगेषु विरुद्धनाड्यो
द्युराशयश्च ग्रहजन्मधिष्ण्यम् ॥

[2]या मासदग्धास्तिथयो विलग्ना-
न्यन्धानि शून्यानि च बाधिराणि ।
द्युदग्धलग्नानि सपङ्गुकाण-
ज्वालामुखा बन्धनमासतिथ्योः ॥

[3]प्रत्यर्कनीहारमहेन्द्रचाप-
विद्युल्लताभूभ्रमणाभ्रघोषाः ।
मरुत्प्रचारः परिवेषकम्प-
प्रतीन्दुवैवर्ण्यमथेन्दुभान्वोः ॥

[4]सुचारवारर्क्षकमृत्युघात-
हालाहलोत्पातमहीचलाद्याः ।
एतेऽल्पदोषाः क्रमशस्तथैषां
देशव्यवस्था क्रियतेऽथ सम्यक् ॥

### नारदः

[1]अनुक्ताः स्वल्पदोषाः स्युर्विद्युन्नीहारवृष्टयः ।
प्रत्यर्कपरिवेषेन्द्रचापाम्बुघनगर्जनम् ॥
[2]लत्तोपग्रहपाताख्या मासदग्धाह्वया तिथिः ।
दग्धलग्नान्धकाणाख्याः पङ्गुसंज्ञाश्च राशयः ॥
[3]एवमाद्यास्ततस्तेषां व्यवस्था क्रियतेऽधुना ।
अकाले संभवन्त्येते विद्युन्नीहारवृष्टयः ॥
प्रत्यर्कपरिवेषेन्द्रचापाभ्रध्वनयो यदि ।
दोषाय मङ्गले नूनमदोषायैव कालजाः ॥

### बृहस्पतिः

[4]अथातः संप्रवक्ष्यामि दोषाणां रूपलक्षणम् ।
तथा तेषां बलं चैव यथोवाचाम्बुजासनः ॥
नाशयोगस्तथा मृत्युयोगो दग्धस्तथैव च ।
विषदग्धाग्नियोगाश्च ग्रहजन्मर्क्षमेव च ॥
शकटो ग्रहयोगश्च शनियोगो विषं तथा ।
गरयोगस्तथा पक्षच्छिद्रं नक्षत्रलुञ्छनम् ॥
अपरो धीनिरोधश्च दिनमृत्युस्तथैव च ।
वारनक्षत्रयोगश्च काणान्धर्क्षं तथैव च ॥
विषलग्नाख्ययोगश्च पञ्चार्कार्किस्तथैव च ।
मासशून्यस्तथा शून्यराशिदिग्दाह एव च ॥

---

(१) वसं. ३२।२५ ; प्रपा. ३३७ हो लत्तभपातितर्क्षे ( होल्कानिलपाति चर्क्षे ) द्युराशयश्च ( दूराशयश्च ) ; विसौ. ३२ लत्तभपातितर्क्षे ( लत्तितपातितर्क्षे ) तं यत् ( तं च यत् ).

(२) वसं. ३२।२६ मुखा बन्धनमासतिथ्योः ( मुखो-द्बन्धनमासतिथ्यः ) ; प्रपा. ३३७ या मास ( ये मास ) द्युदग्ध ( दुर्दग्ध ) ; विसौ. ३२.

(३) वसं. ३२।२७ कम्प ( कम्पः ) ; प्रपा. ३३७ ताभू ( ताभ्र ) ; विसौ. ३२ मथेन्दुभान्वोः ( मथैवमाद्याः ).

(४) वसं. ३२।२८ पूर्वार्धे ( द्युवारवारर्क्षजमृत्युघातहाला-हलोत्था तु महानलाद्याः । ) ऽथ सम्यक् ( सुसम्यक् ) ; प्रपा. ३३७ ; विसौ. ३२ वसंवत् , उत्त.

(१) ज्योना. २७।७२ ; प्रपा. ३३७ वृष्टयः ( वृष्टिभिः ) घन ( धर ) ; ज्योनि. ७९ घन ( धर ).

(२) प्रपा. ३३७ ; ज्योनि. ७९ काणाख्याः ( बधिर ).

(३) ज्योना. २७।७३–७४ पृ. ५६ ; प्रपा. ३३७ स्ततस्तेषां ( स्तथैतेषां ) अकाले संभवन्त्येते ( अकालजा भव-न्त्येते ) अदोषायैव ( न दोषाय च ) ; गभा. ६७ अकाले संभवन्त्येते ( अकालजा भवेयुश्चेत् ) प्रथमार्धं नास्ति ; सिन्धु. १०८० अदोषायैव ( न दोषायैव ) शेषं गभावत् , प्रथमार्धं नास्ति ; विपा. ७५४–७५५ षायैव ( षाय च ) शेषं गभावत् , प्रथमार्धं नास्ति ; ज्योनि. ७९ ततस्तेषां (यतस्तेषां ) अकाले संभवन्त्येते ( अकालजा भवन्त्येता ).

(४) प्रपा. ३३७.

रक्तस्थूणस्तथा पातो व्यतीपातस्तथैव च ।
दिवा ऋक्षप्रकाशश्च महाशूलस्तथैव च ॥
चन्द्रार्कयोगो भूकम्पः कण्टकः स्थूणसंज्ञकः ।
अदृश्यग्रहचारश्च ग्रहरश्मिस्तथैव च ।
पापग्रहसुसंयुक्तराशिरित्येवमादयः ॥

### व्यवहारोच्चये

[1]वेधश्च लत्ता च तथा च पातः
खार्जूरवेधो दशयोगचक्रम् ।
युतिश्च जामित्रमुपग्रहाश्च
बाणाख्यवज्रे दश चैव दोषाः ॥

---

## १ उपग्रहदोषः

### वसिष्ठः

[2]दिनकरभात्सप्तमभं
भूकम्पं पञ्चमर्क्षमतिविद्युत् ।
शूलोपग्रहमष्टमभं
दशमर्क्षं चाशनिं च विज्ञेयम् ॥
केतुरुपग्रहदोष-
स्त्वष्टादशमं च दण्डसंज्ञश्च ।
पञ्चदशं दशनवमं
चोल्कापातं चतुर्दशं पातः ॥
मेघो( मोहो )पग्रहदोषो
निर्घातकम्पसंज्ञवज्रनिभः ।
एकोत्तरविंशतिभा-
दुक्ताः क्रमशो ह्युपग्रहा दोषाः ॥
हिमकिरणे त्वेषु युते शुभकार्यं मृत्युदं नृणाम् ।
उद्वाहादिषु सततं विचार्य लग्नं वदेद्धीमान् ॥

### नारदः

[1]भूकम्पः सूर्यभात्सप्तमर्क्षे विद्युच्च पञ्चमे ।
शूलोऽष्टमे च दशमेऽशनिरष्टादशे ततः ॥
[2]केतुः पञ्चदशे दण्डश्चोल्का एकोनविंशतिः ।
निर्घातपातसंज्ञश्च ज्ञेयः स नवपञ्चमे ॥
[3]मोहनिर्घातकम्पाश्च कुलिशं परिवेषकम् ।
विज्ञेयं चैकविंशर्क्षादारभ्य च यथाक्रमम् ॥
चन्द्रयुक्तेषु भेष्वेषु शुभकर्म न कारयेत् ॥

### वराहः

[4]उपग्रहर्क्षेषु विवाहिता स्त्री
सूर्यर्क्षतो दुर्भगतामुपैति ॥

### विवाहवृन्दावनम्

[5]भूकम्पः सप्तमर्क्षे भवति सवितृभा-
त्पञ्चमे विष्कमुल्का
शूलं चैवाष्टसंख्येऽशनिरिति दशमे
केतुरष्टादशे च ।
दण्डाख्यः पञ्चसंख्ये सनवदशमिते
नूनमुल्का प्रदिष्टा
धिष्ण्ये द्विःसप्तसंख्ये मुनिभिरभिहित-
श्चात्र निर्घातपातः ॥
भादेकविंशतिमितात्कथितास्तु मोह-
निर्घातकम्पकुलिशाः परिवेषयुक्ताः ।
एष्विन्दुगेषु न शुभं खलु कर्म कार्यं
सिद्धिं प्रयाति दहनास्त्रविषादिसाध्यम् ॥

---

( १ ) विसौ. २९ खार्जूर ( खर्जूर ); संप्र. ७९५; सिन्धु. १०७९ तथा च ( तथैव ) खार्जूर ( खर्जूर ) ग्रहाश्च ( ग्रहश्च ) दश चैव ( च दशैव ).

( २ ) वसं. २१।१–४.

( १ ) ज्योना. १०।१ पृ. ३१ ततः ( तथा ); विसौ. ३१ सप्तमर्क्षे ( सप्तमर्क्षं ) पञ्चमे ( पञ्चमम् ) दशमे ( नवमे ).

( २ ) ज्योना. १०।२ पृ. ३१ चोल्का ( उल्का ) पू.; विसौ. ३१ पञ्चमे ( पञ्चके ).

( ३ ) ज्योना. १०।३–४ पृ. ३१; विसौ. ३१ वेषकम् ( वेषकः ) शुभ ( शुभं ).

( ४ ) विसौ. ३१.

( ५ ) संप्र. ७९६–७९७.

## मुहूर्तचिन्तामणिः

[1]शराष्टदिक्छक्रनगातिधृत्य-
स्तिथिर्धृतिश्च प्रकृतेश्च पञ्च ।
उपग्रहाः सूर्यभतोऽब्जतारा:
शुभा न देशे कुरुबाल्हिकानाम् ॥

अथ उपग्रहदोषमाह– शरेति । सूर्यभतः सूर्याक्रान्त-नक्षत्रात् अब्जतारा: चन्द्रनक्षत्राणि पञ्चाष्टदशचतुर्दशसप्तैकोनविंशतिपञ्चदशाष्टादशैकविंशतिद्वाविंशतित्रयोविंशतिचतुर्विंशतिपञ्चविंशतिसंख्याकाः चेत् स्युः तदा उपग्रहनामका दोषाः स्युः । प्रकृतिः एकविंशतिः ।
पीटी.

## अनिर्दिष्टकर्तृकवचनानि

[2]गृहप्रवेशे दारिद्र्यं विवाहे मरणं भवेत् ।
प्रस्थाने विपदः प्रोक्ता उपग्रहदिने यदि ॥
[3]सूर्यभात्पञ्चसप्ताष्टदिगिन्द्रतिथयो धृतिः ।
नवेन्दवः स्वर्गतः स्युः पञ्च नो भान्युपग्रहाः ॥
[4]उपग्रहेषु लत्तायां तथा चण्डायुधाह्वये ।
ग्रहोऽस्ति यत्प्रमाणांशे विद्धोंऽशस्तत्प्रमाणकः ॥

---

## २ लत्तादोषः

### नारदः

* [5]पुरतः पृष्ठतोऽर्काद्या दिनर्क्षं लत्तयन्ति च ।
अर्काकृतिगुणाङ्गर्तुबाणाष्टनवसंख्यभम् ॥

### वराहः

[6]सूर्यो द्वादशमृक्षं षष्ठं गुरुरवनिजस्तृतीयं तु ।
संलत्तयति दिवाकरपुत्रोऽष्टममग्रतः पादैः ॥

पश्चाद्द्वाविंशतिभं पौर्णिमचन्द्रस्तु पञ्चमं
शुक्रः ।
स्वर्भानुरपि च नवमं सप्तममृक्षं शशाङ्कसुतः ॥
[1]रविलत्ता वित्तहरी नित्यं कौजी
विनिर्दिशेन्मरणम् ।
चान्द्री नाशं कुर्याद्बौधी नाशं वदत्येवम् ॥
सौरी मरणं कथयति बन्धुविनाशं बृहस्पतेर्लत्ता ।
मरणं लत्ता राहोः कार्यविनाशं भृगो-
र्वदन्ति बुधाः ॥

### श्रीपतिः

[2]ऋक्षं द्वादशमुष्णरश्मिरवनीसूनुस्तृतीयं गुरुः
षष्ठं चाष्टममर्कजश्च पुरतो हन्ति स्फुटं लत्तया ।
पश्चात्सप्तममिन्दुजश्च नवमं राहुः सितः पञ्चमं
द्वाविंशं परिपूर्णमूर्तिरुडुपः संताडयेन्नेतरत् ॥

### विवाहवृन्दावनम्

[3]रविनखैर्मितमर्कविधुन्तुदौ
मुनिभिरिन्दुरखण्डलमण्डलः ।
हुतवहाकृतिषड्जिनदन्तिभिः
क्षितिसुतादभिलत्तयति ग्रहः ॥

अथ लत्तादोषं कथयति– रविनखैरिति । अर्कविधुन्तुदौ सूर्यराहू क्रमेण रविनखैर्मितं द्वादशं विंशतितमं नक्षत्रं अभि संमुखं लत्तयतः, रविः स्वाक्रान्तात् द्वादशं, राहुश्च विंशतितमं नक्षत्रं लत्तयतीत्यर्थः । अखण्डलमण्डलः पूर्णमण्डलः इन्दुः चन्द्रः मुनिभिर्मितं सप्तमं नक्षत्रं अभिलत्तयति । तथा क्षितिसुतात् मङ्गलमारभ्य ग्रहः क्रमेण हुतवहाकृतिषड्जिनदन्तिभिर्मितं नक्षत्रं अभिलत्तयति । लक्ष्मी.

---

* 'सूर्यः पुरतः, चन्द्रः पृष्ठतः, एवंक्रमेण भौमादयोऽपि पुरतः पृष्ठतश्च लत्तयन्तीत्यर्थः' इति पीयूषधारा ।

(१) मुचि. ६।६३.
(२) विसौ. ३१.
(३) संग. २३९.
(४) संग. २४०.
(५) ज्योना. २७।७७-७८ पृ. ५६.
(६) विसौ. ३१.

(१) विसौ. ३१ चान्द्री नाशं (चान्द्री दुःखं) वदन्ति बुधाः (वदति); संग. २३९.
(२) प्रपा. ३३५; संप्र. ७९५ जश्च पु (जः स्वपु) जश्च न (जः स्वन) नेतरत् (नेतरः); संग. २३८ संप्रवत्.
(३) विवृ. १।११; विसौ. ३१.

[1]इति सति द्युसदामभिलत्तने
यदनुलत्तनमुक्तमृषिव्रजैः ।
तदुडुपश्चिमपूर्वविभागयो-
रनधिकाधिकदोषविवक्षया ॥

पूर्वाचार्यैः पृष्ठलत्तनं यदुक्तं तत्कारणं कथयति— इति सतीति । इति एवं द्युसदां ग्रहाणां अभिलत्तने संमुखलत्तने सति ऋषिव्रजैः मुनिगणैः अनुलत्तनं पृष्ठलत्तनं यदुक्तं, तत् उडुपश्चिमपूर्वविभागयोः नक्षत्रस्योत्तरार्धपूर्वार्धयोः अनधिकाधिकदोषविवक्षया उक्तम् । अर्थात् संमुखलत्तने नक्षत्रोत्तरार्धेऽल्पदोषः पूर्वार्धेऽधिकदोषः, पृष्ठलत्तने नक्षत्रस्योत्तरार्धे अधिकदोषः, पूर्वार्धे अल्पदोष इत्यर्थः । लक्ष्मी.

[2]उडुनि निर्दलिते शुभलत्तया
न फलमस्ति बलस्य गलत्तया ।
अशुभलत्तितमत्ति तदूढयो-
र्धनसुतानसुतापकरं परम् ॥

अथ लत्तादोषस्य फलमाह— उडुनीति । उडुनि नक्षत्रे शुभलत्तया निर्दलिते सति बलस्य गलत्तया फलं नक्षत्रोक्तं शुभं फलं नास्ति । अशुभलत्तितं नक्षत्रं तु तदूढयोः तत्र विवाहितयोः कन्यावरयोः परं असुतापकरं प्राणसंतापदं भवति, धनसुतानत्ति खादयति नाशयतीत्यर्थः । लक्ष्मी.

### मुहूर्तचिन्तामणिः

[3]ज्ञराहुपूर्णेन्दुसिताः स्वपृष्ठे
भं सप्तगोजातिशरैर्मितं हि ।
संलत्तयन्तेऽर्कशनीज्यभौमाः
सूर्याष्टतर्काग्निमितं पुरस्तात् ॥

अथ लत्तादोषमाह— ज्ञेति । सप्त प्रसिद्धाः, गावो नव, जातयो द्वाविंशतिः, शराः पञ्च, एतैर्मितं भं स्वाक्रान्तनक्षत्रात् ज्ञराहुपूर्णेन्दुसिताः स्वपृष्ठे संलत्तयन्ते । यथा बुधः सप्तमं, राहुर्नवमं, पूर्णेन्दुः पूर्णिमान्तचन्द्रो द्वाविंशम् । तच्च गतकृष्णपक्षे पञ्चमीषष्ठीसप्तमीनामन्यतमस्यां संभवति । शुक्रः पञ्चमं स्वपृष्ठे लत्तयतीत्यर्थः । अर्कशनीज्यभौमाः क्रमेण पुरस्तादग्रे सूर्याष्टतर्काग्निमितं संलत्तयन्ते । यथा सूर्यः स्वाक्रान्तनक्षत्रात् द्वादशं शनिरष्टमं गुरुः षष्ठं भौमस्तृतीयमं अग्रतो लत्तयतीत्यर्थः ।

अत्र राहोः सदा वक्रित्वात् नवमगणना क्रमेणैव ग्राह्या । यथा अश्विन्यां राहुः आश्लेषां लत्तयति, संमुखलत्तावादिमतेऽपि वक्रगामिना राहुणा संमुखं अश्विनीरेवतीत्यादिगणनया विंशतितमं भं आश्लेषैव, न त्वन्यथा आश्रयितव्यमिति सांप्रदायिकाः । पीटी.

---

## ३ पातदोषः ( चण्डीशचण्डायुधदोषः )

### वासिष्ठः

[1]रविभादहिपितृमित्र-
त्वाष्ट्रभहरिपौष्णभेषु गणितेषु ।
अश्विनिभादिन्दुयुते
तावति वै पतति गणनया पातः ॥
अयमपि पातो दोष-
श्चण्डीशचण्डायुधाह्वयो ज्ञेयः ।
अखिलेषु मङ्गलेष्वपि
वर्ज्यो यस्माद्विनाशदः कर्तुः ॥

### नारदः

[2]सूर्यभात्सार्पपित्रर्क्षत्वाष्ट्रमित्रान्त्यभेषु च ।
सविष्णुभेषु क्रमशो दस्रभाच्चन्द्रसंयुते ॥
धिष्ण्ये तावतिसंख्येऽत्र दुष्टयोगः पतत्यसौ ।
चण्डीशचण्डायुधाख्ये तस्मिन्नैवाचरेच्छुभम् ॥

( १ ) विवृ. १।१२ ; विसौ. ३१ ; संग. २३९.
( २ ) विवृ. १।१३ ; विसौ. ३१.
( ३ ) मुचि. ६।५९.

( १ ) वसं. २१।५–६.
( २ ) ज्योना. १०१४–६ पृ. ३१.

### श्रीपतिः

[1]सूर्याधिष्ठितभाद्भुजङ्गपितृभ-
त्वाष्ट्रेषु मैत्रे श्रुतौ
पौष्णे च क्रमशोऽश्विभाद्गणनया
शीतांशुना संयुते ।
धिष्ण्ये तावतिथे पतत्यवितथे
चण्डीशचण्डायुधं
तस्मिन्नात्महितेप्सुभिर्निगदितं
कार्यं न कार्यं बुधैः ॥

अस्यार्थः— सूर्याक्रान्तनक्षत्रमारभ्य नक्षत्राणि रेखारूपाणि लिखेत् । तन्मध्ये आश्लेषाचित्रामघानुराधाश्रवणरेवतीषु संकेतमन्यं कुर्यात् । पश्चादश्विन्यादिगणनया तावतिथे संकेतस्थाने पतितनक्षत्रे तीक्ष्णं रुद्रायुधं पतति । संप्र. ७९५–७९६

### त्रिविक्रमः

[2]साध्यहर्षणशूलानां वैधृतिव्यतिपातयोः ।
यद्भं गण्डस्य चान्ते स्यात्तत्पातेन
निपातितम् ॥

### विवाहवृन्दावनम्

[3]यदन्तगं हर्षणसाध्यशूल-
गण्डव्यतीपातकवैधृतीनाम् ।
तत्रैव चन्द्रोडुनि चण्डमैश-
मस्त्रं पतेन्मङ्गलभङ्गलक्ष्म ॥

अथ चण्डायुधदोषमाह— यदिति । हर्षणसाध्यशूलगण्डव्यतीपातकवैधृतीनां अन्तगं यन्नक्षत्रं तत्रैव तस्मिन्नेव नक्षत्रे ऐशं ईशसंबन्धि चण्डमस्त्रं पतेत्, तत् मङ्गलभङ्गलक्ष्म मङ्गलस्य शुभस्य भङ्गकारकं ज्ञेयम् ।
लक्ष्मी.

(१) विसौ. ३१ ; संप्र. ७९५.
(२) विसौ. ३१.
(३) विवृ. ११२०–२१.

गंशूविवव्यातिषु षट्शरत्रि-
त्रिनन्दषट्का घटिकाः क्रमेण ।
ध्यंशं त्यजेत्पारिघमिन्दुभान्वोः
पर्वण्यतीते दिनसप्तकं च ॥

अथ दुष्टयोगानां वर्ज्यघटिकाः, ग्रहणदुष्टसमयं चाह— गमिति । गंशूविवव्यातिषु गण्डशूलविष्कम्भवज्रव्याघातातिगण्डेषु क्रमेण षट्शरत्रित्रिनन्दषट्काः घटिकास्त्यजेत् । पारिघं परिघस्येदं पारिघं ध्यंशं अर्धं त्यजेत् । तथा इन्दुभान्वोः पर्वणि ग्रहणे अतीते गते सति दिनसप्तकं च त्यजेत् । लक्ष्मी.

### मुहूर्तचिन्तामणिः

[1]हर्षणवैधृतिसाध्यव्यतिपातकगण्डशूलयोगानाम् ।
अन्ते यन्नक्षत्रं पातेन निपातितं तत्स्यात् ॥

पातदोषमाह— हर्षणेति । व्यतिपातक इति स्वार्थे कः । हर्षणेत्यादिषड्योगानामन्ते यत् चन्द्रनक्षत्रं भवेत् तत् पातेन चण्डीशचण्डायुधाख्येन निपातितं स्यात् । यदाह त्रिविक्रमः — 'साध्यहर्षण ... निपातितम् ॥' इति । नारदेन प्रकारान्तरेणैतत्प्रकारसंपादकः पातोऽभिहितः — 'सूर्यभात्सार्पं ... पातदुष्टभम् ॥' वसिष्ठेनापि— 'रविभादहिपितृ ... यस्माद्विनाशदः कर्तुः ॥' इति । (एषु) पद्येषु यद्यपि हर्षणादीनामुपादानं नास्ति, तथापि अभिहिताश्लेषादिनक्षत्रसाहित्येन पाताभिधानात्तत्तुल्यसंख्याकेष्वेव योगेषु पातसंभवो जायते इति मत्वा हर्षणादीनामुक्तिः । यद्येवं व्यतीपातवैधृतिभ्यां स्वीयभोगघटिकात्मकाभ्यां तिथिनक्षत्रादिकं सर्वमेव सामान्यतो निन्द्यमुक्तं, तत्किमत्रानयोर्योगयोः पुनर्ग्रहणेन । उच्यते— यदा नक्षत्रयोगयोः तुल्यकाले एव प्रवृत्तिनिवृत्ती, तदाऽनयोर्योगयोरुपादानं व्यर्थमेव । यदा तु सूर्योदयादारभ्य कियद्घटिकत्वं दुष्टयोगयोः नक्षत्रभोगस्तु सूर्योदयादेव बहुकालव्यापी, तदा पातासंभवे तावत्कालस्यैव निषेधः सामान्यवाक्यात्, पातसंभवे हि संपूर्णस्य नक्षत्रस्य निषेधो यथा स्यादिति तयोर्दुष्टयोगयोः

(१) मुचि. ६।६० ; संग. २३९ (=).

पुनरुपादानं कृतम् । एवमन्येष्वपि योगेषु पातसंभवे संपूर्णनक्षत्रस्य निषेधो यथा स्यादित्यनयोः दुष्टयोगयोः पुनरुपादानं त्याग इत्यर्थः । अयं च सर्वोऽपि विचारः एकार्गलदोषेऽपि द्रष्टव्यः । यदा तु पातैकार्गलौ न स्तस्तदा दुष्टयोगानामुक्तादिमघटीत्यागः कर्तव्य इति । पीटी.

[1]पातोपग्रहलत्तासु नेष्टोऽङ्घ्रिः खेटपात्समः ॥

पातः चण्डीशचण्डायुधाख्यो दोषः । उपग्रहः प्रागुक्त एव । लत्ता ' शराहुपूर्णेन्दु ' इत्यादिनोक्ता । तत्र खेटपात्समः ग्रहचरणतुल्यो नक्षत्रचरणोऽनिष्टः । पीटी.

---

## ४ दग्धतिथिदोषः

### वसिष्ठः

[2]एकान्तरा हि तिथयो दिवसाद्द्वितीया-
चापान्त्ययोर्वृषभकुम्भभयोश्च तद्वत् ।
कर्काजयोर्मिथुनकन्यकयोश्च कीट-
हर्योस्तुलामकरयोः खलु मासदग्धाः ॥
[3]मासदग्धासु तिथिषु कृतं यन्मङ्गलादिकम् ।
तत्सर्वं नाशमायाति ग्रीष्मे कुसरितो यथा ॥

### मुहूर्तचिन्तामणिः

[4]चापान्त्यगे गोघटगे पतङ्गे
ककाजगे स्त्रीमिथुने स्थिते च ।
सिंहालिगे नक्रधटे समाः स्यु-
स्तिथ्यो द्वितीयाप्रमुखाश्च दग्धाः ॥

पञ्चाङ्गदोषविशेषं दग्धतिथ्याख्यमाह— चापेति । तत्तद्राशियुग्मे पतङ्गे सूर्ये स्थिते द्वितीयाप्रमुखाः शुक्लकृष्णपक्षसाधारणाः समास्तिथ्यो दग्धाः स्युरिति वाक्यार्थः । यथा चापान्त्यगे धनुर्मीनगते सूर्ये द्वितीया दग्धा, गोघटगे सूर्ये चतुर्थी, कर्काजगे कर्कमेषगे सूर्ये षष्ठी, स्त्रीमिथुने कन्यामिथुनस्थिते सूर्ये अष्टमी, सिंहालिगे सूर्ये दशमी, नक्रधटे मकरतुलागते सूर्ये द्वादशी दग्धेत्यर्थः । पीटी.

---

## ४ अ वज्रदोषः

### अनिर्दिष्टकर्तृकवचने

[1]तिथिं वारं च नक्षत्रं नवभिश्च समन्वितम् ।
सप्तभिस्तु हरेद्भागं शेषाङ्के फलमादिशेत् ॥
त्रिशेषे तु जलं विद्यात्पञ्चशेषे प्रभञ्जनः ।
सप्तशेषे वज्रपातो ज्ञेयं वज्रस्य लक्षणम् ॥

अथ वज्रम् । वज्रं नाम दग्धा तिथिरिति केचित् । पञ्चाङ्गदोष इत्यपरे । अन्ये तु स्वतन्त्रमेव योगं वज्राख्यं वर्णयन्ति— 'तिथिवारं च ...... लक्षणम् ॥ ' इति । तदयुक्तम्, मूलाभावात् । कश्चित्तु महापातं वज्रपदेन आह । विसौ. ३२

---

## ५ पङ्ग्वन्धकाणबधिराख्यलग्नदोषाः

### वसिष्ठः

[2]मेषादिरन्धकं षट्कं चत्वारो बधिराः स्मृताः ।
द्वौ पङ्गू वेति विज्ञेयावित्येतद्राशिलक्षणम् ॥
[3]मेषो वृषो मृगेन्द्रश्च दिवसेऽन्धाः प्रकीर्तिताः ।
नृयुक्कर्कटकन्याश्च रात्रावन्धाः प्रकीर्तिताः ॥
तुला च वृश्चिकश्चैव दिवसे बधिरौ तथा ।
धनुश्च मकरश्चैव बधिरौ निशि कीर्तितौ ॥
कुम्भमीनौ च पङ्गू द्वौ दिवा रात्रौ यथाक्रमम् ॥

### बृहस्पतिः

[4]स्वर्क्षेऽव्ययगतं भानुमपि पश्येद्धरासुतः ।
सोऽन्धतां न गुरोर्दद्याद्यदीन्दुः सत्क्रियारतः ॥

---

(१) मुचि. ६।६४.

(२) वसं. १२।२५. पीयूषधाराटीकायां तु ' एकान्तरा दिनपतौ दिवसा द्वितियापूर्वान्त्यचापधरयोर्घटमौक्षयोश्च । ' इति पूर्वार्धे पाठः ।

(३) वसं. १२।२६.

(४) मुचि. ६।६६.

(१) विसौ. ३२ ; संग. २४० (=) प्रभञ्जनः (प्रभञ्जनम्) वज्रपातो (वज्रपातं).

(२) पीयूषधाराटीकास्थोऽयं श्लोकः (मुचि. ६।८१) संगत्यर्थमत्र संगृहीतः ।

(३) संग. २४३.

(४) प्रपा. ३३८.

लग्नेशे बलसंयुक्ते लग्नार्थव्ययगे त्रिगे ।
चन्द्रे च शुभकार्यस्थे नाचार्योऽन्धत्वमाप्नुयात् ॥

## मुहूर्तचिन्तामणिः

[२]घस्रे तुलाली बधिरौ मृगाश्वौ
रात्रौ च सिंहाजवृषा दिवान्धाः ।
कन्यानृयुक्कर्कटका निशान्धा
दिने घटोऽन्त्यो निशि पङ्गुसंज्ञः ॥

पङ्ग्वन्धकाणबधिराख्यान् लग्नदोषानाह– घस्र इति । घस्रे दिवसे तुलाली तुलावृश्चिकौ बधिरौ स्मृतौ । मृगाश्वौ मकरधनुषौ रात्रौ बधिरौ, न तु दिवसे । सिंहाजवृषा दिवान्धाः दिवसे अन्धा उक्ताः, न तु रात्रौ । कन्यानृयुक्कर्कटा निशान्धा रात्र्यन्धाः, न तु दिवान्धाः । घटः कुम्भो दिने पङ्गुसंज्ञो न तु रात्रौ । अन्त्यो मीनो निशि पङ्गुसंज्ञो न तु दिने । अनेन यस्मिन्काले लग्नस्य योऽन्धपङ्ग्वादिदोष उक्तस्तस्मिन्नेव काले तल्लग्नं दोषावहं न कालान्तरे इत्युक्तं भवति । पीटी.

बधिरा धन्वितुलालयोऽपराह्णे
मिथुनं कर्कटकोऽङ्गना निशान्धाः ।
दिवसान्धा हरिगोक्रियास्तु कुब्जा
मृगकुम्भान्तिमभानि संध्ययोर्हि ॥

परमते पङ्ग्वन्धान् लग्नदोषानाह– बधिरा इति । धन्वितुलालयो धनुस्तुलावृश्चिका अपराह्णे दिवसस्यान्तिमे तृतीयविभागे बधिराः स्मृताः । मिथुनकर्कटकन्या निशान्धाः स्मृताः । हरिगोक्रियाः सिंहवृषमेषास्तु दिवसे अन्धाः स्मृताः । मृगकुम्भान्तिमभानि मकरकुम्भमीनाः संध्ययोः प्रातःसायंसंध्ययोर्हि निश्चयेन कुब्जाः पङ्गवः स्मृताः । अत्र मूलवाक्यं नोपलभ्यते । पीटी.

[३]दारिद्र्यं बधिरतनौ दिवान्धलग्ने
वैधव्यं शिशुमरणं निशान्धलग्ने ।
पङ्ग्वङ्गे निखिलधनानि नाशमीयुः
सर्वत्राधिपगुरुदृष्टिभिर्न दोषः ॥

अथैषां प्रयोजनं सापवादमाह– दारिद्र्यमिति । स्पष्टार्थं पद्यम् । पङ्ग्वङ्गे पङ्गुलग्ने । पीटी.

---

## ६ दशयोगदोषाः

### *लल्लः

[१]यस्मिन्नृक्षे रविस्तिष्ठेद्यस्मिन्नृक्षे शशी तथा ।
द्वयोर्योगे हृते धिष्ण्यैः शेषाः स्यात्
( ? स्युः ) खादितो दश ॥
शून्यवेदर्तुरूपाणि दिग्रुद्रतिथयो धृतिः ।
ऊनविंशा नखाश्चेति दश योगाः प्रकीर्तिताः ॥
[२]मरुन्मेघाग्निभूपालचौरमृत्युरुजोऽशनिः ।
कलिर्हानिर्दशोद्वाहे दोषास्त्याज्याः सदा बुधैः ॥
[३]विवाहादौ प्रतिष्ठायां व्रते पुंसवने तथा ।
कर्णवेधे च चूडायां दशयोगं बिवर्जयेत् ॥

### व्यासः

[४]शुक्रेण गुरुणा वाऽपि संयुतं दृष्टमेव च ।
दशयोगसमायुक्तमपि लग्नं शुभावहम् ॥

### भरद्वाजः

[५]गुरौ लग्नाधिपे शुक्रे सवीर्ये लग्नकेन्द्रगे ।
दश दोषा विनश्यन्ति यथाऽग्नौ तूलराशयः ॥

### भुजबलः

[६]यो दशयोगहते भे कर्म शुभं वाञ्छते कर्तुम् ।
स दहनघृतमिव नचिरात्प्रविलीनत्वं नरो याति ॥

---

(१) प्रपा. ३३८. अस्य वचनस्य बार्हस्पत्यत्वे संदेहः ।
(२) मुचि. ६।८१-८२.
(३) मुचि. ६।८३ ; संग. २४३.

* दोषापवादस्वरूपात्पूर्वं दोषस्वरूपज्ञानमावश्यकमतः क्रमविपर्यासः कृतः ।
(१) विसौ. ३०.
(२) विसौ. ३० ; संप्र. ७९६ भूपालचौरमृत्यु (भूपाला मृत्युश्चौरो ) दोषास्त्याज्याः ( संत्याज्यास्ते ) ; संग. २३५ संप्रवत्.
(३) विसौ. ३०.
(४) विसौ. ३० ; संग. २३५-२३६ शुक्रेण गुरुणा ( गुरुणा भृगुणा ).
(५) विसौ. ३०.
(६) विसौ. ३०.

## दीपिकायाम्

[1]तिथ्यङ्गवेदैकदिगूनविंश-
भैकादशाष्टादशविंशसंख्याः ।
इष्टोडुना सूर्ययुतोडुना च
योगादमूश्चेद्दशयोगदोषाः ॥

## व्यवहारोच्चये

[2]शून्यैकवेदर्त्तवो दशरुद्रयुक्ताः
पञ्चैकनागशिशिराश्च नवैकखाब्धि ।
सोऽध्यर्क्षमिन्दुयुतभानुसमन्वितं च
भागश्च देय उडुभिर्दशयोगचक्रम् ॥

## मुहूर्तचिन्तामणिः

[3]शशाङ्कसूर्यर्क्षयुतेर्भशेषे
खं भूयुगाङ्गानि दशेशतिथ्यः ।
नागेन्दवोऽङ्केन्दुमिता नखाश्चेत्
भवन्ति चैते दशयोगसंज्ञाः ॥

दशयोगदोषानाह– शशाङ्केति । चेद्यदि चन्द्रसूर्यनक्षत्रयोर्युतेः योगात् भैः सप्तविंशत्या भक्तात् यः शेषस्तस्मिन् शून्यैकचतुःषड्दशैकादशपञ्चदशाष्टादशैकोनविंशतिविंशतिसंख्याके सति एते अङ्काः दशयोगसंज्ञा भवन्ति । नान्ये इत्यर्थः । शिष्टानां दशानामङ्कानामभिहितत्वाद्दशयोग इत्यन्वर्थसंज्ञा । पीटी.

वाताभ्राग्निमहीपचोरमरणं
रुग्वज्रवादाः क्षति-
र्योगाङ्के दलिते समे मनुयुते-
ऽथौजे तु सैकेऽर्धिते ।
भं दास्रादथ संमितास्तु मनुभी
रेखाः क्रमात्संलिखेत्
वेधोऽस्मिन्ग्रहचन्द्रयोर्न शुभदः
स्यादेकरेखास्थयोः ॥

दशयोगानां फलं तदपवादं चाह– वातेति । शून्यशेषे वातदोषः स्यात्, एकशेषे अभ्रात् मेघात्, चतुर्ष्वेवशिष्टेषु अग्नेः, षट्सु महीपात् राज्ञः, दशसु चौरात्, एकादशसु मरणं द्वयोरन्यतरस्य वा, पञ्चदशसु रुक्, अष्टादशसु वज्रं, एकोनविंशेषु वादः कलिर्झकटक इति यावत्, विंशतिशेषे क्षतिः द्रव्यनाशः स्यात् । अथापवाद उच्यते– योगाङ्क इति । खभूयुगाङ्गादिरूपे योगाङ्के समे युग्मसंख्याके सति दलिते अर्धीकृते सति मनुभिः चतुर्दशभिर्युते योगाङ्के तदा दास्रात् अश्विनीतो भं नक्षत्रं स्यात् । यथा समांशके दशयोगः १० अर्धितः ५ मनुयुतः १९ मूलनक्षत्रं जातम् । अथ योगाङ्के ओजे अयुग्मसंख्याके सति सैके एकयुक्ते ततोऽर्धिते अश्विनीतो भं स्यात् । यथा विषमाङ्कः पञ्चदशयोगः १५ सैकः १६ अर्धितः ८ पुष्यनक्षत्रं जातम् । अथेत्यनन्तरं मनुभिः संमिताः चतुर्दशरेखास्तिर्यक्क्रमात् संलिखेत् । तद्यथा – अनेन प्रकारेण यन्नक्षत्रमागतं तत आरभ्य साभिजिन्नक्षत्रवृन्दं अस्मिंश्चक्रे लेख्यम् । तत्र ग्रहाः स्वाक्रान्तनक्षत्रे स्थाप्याः, दिननक्षत्रे च चन्द्रः । एवं सति यदि ग्रहचन्द्रावेकरेखास्थौ स्यातां, तयोः तादृशयोः परस्परावलोकनरूपो वेधो न शुभदः । पीटी.

## अनिर्दिष्टकर्तृकवचनानि

[1]योगाङ्के विषमे सैके समे सवसुलोचने ।
दलीकृतेऽश्विनीपूर्वं दशयोगमुदाहृतम् ॥

दशयोगे महाचक्रे प्रमादाद्यदि (?) विध्यते ।
क्रूरैः सौम्यग्रहैर्वाऽपि दम्पत्योरेकनाशनम् ॥

[2]लग्नेशवागीशसुरारिवन्द्यै-
र्बलान्वितैः संयुतवीक्षिताश्च ।
कार्पाससंघा इव वह्निमध्ये
दशाख्ययोगा विलयं प्रयान्ति ॥

---

( १ ) संत. ८८३ दिगून ( दशोन ) दोषाः ( भङ्गः ); विसौ. ३०.
( २ ) संप्र. ७९६ ; संग. २३५.
( ३ ) मुचि. ६।७०–७१.

( १ ) विसौ. ३०.
( २ ) संग. २३५.

## ७ युतिदोषः

### विवाहवृन्दावनम्

[1]यस्मिन्भवने चन्द्र-
स्तस्मिन्यदि जायते ग्रहः कश्चित् ।
युतिरतिदोषः स तदा-
ऽशुभयुक्ते केचिदिच्छन्ति ॥

---

## ८ जामित्रदोषः

### वसिष्ठः

[2]पुंसवनं गृहकरणं
पाणिग्रहणं तथोपनयनं च ।
चन्द्रात्सप्तमभवने
रविरविजकुजादिभिर्नेष्टम् ॥
स्त्रीणां विवाहे वरणैरुपेताः
पत्युः प्रणाशं विहगा विदध्युः ।
त्यक्त्वा बुधं दैत्यगुरुं गुरुं च
निशाकरादस्तगृहं प्रपन्नाः ॥
चन्द्रात्सप्तमराशिगे दिनकरे
त्यक्ता धनैः कन्यका
भौमे च प्रमदा प्रयाति विलयं
सौरे च वन्ध्या सरुक् ।
जीवः शुक्रशशाङ्कजौ शुभकराः
केचिद्विदन्ति क्रमात्
भर्तृप्रोज्झितदीक्षितास्तभवने
नित्यं प्रवासान्विता ॥

### लल्लः

[3]पापात्सप्तमगः शशी यदि भवे-
त्पापेन युक्तोऽथवा
यत्नेनापि विवर्जयेन्मुनिमते
दोषोऽपि संकथ्यते ।
उद्वाहे विधवा व्रतेषु मरणं
शूलं च पुंस्कर्मणि
यात्रायां विपदो गृहेषु दहनः
क्षौरेऽपि रोगो महान् ॥
[1]मित्रालये मित्रसमीक्षितो वा
मित्रांशके मित्रसमाश्रितो वा ।
क्रूरग्रहादस्तमितोऽपि सोमः
समीहितार्थं वितरेन्नराणाम् ॥

### भुजबलः

[2]यात्राविवाहादिशुभक्रियासु
क्रूरग्रहादस्तमितः शशाङ्कः ।
शुभैर्विहीनोऽपि बहुप्रकारं
करोति नाशं नचिरं नराणाम् ॥

### विवाहवृन्दावनम्

[3]क्रूरस्य भार्धान्तरमृक्षमेव
मनिष्टमित्येष विशेषवादः ।
पापाच्चतुःपञ्चलवेषु चान्द्रं
जामित्रमस्मात्खलु पर्यणंसीत् ॥

अथ कैश्चित् क्रूरात् षड्भान्तरितनक्षत्रं दूषितं, तत्तु चान्द्रजामित्रपरिणतमेवेत्याह— क्रूरस्येति । एवं क्रूरस्य पापग्रहस्य भार्धान्तरं षड्भान्तरितं ऋक्षं नक्षत्रं अनिष्टमित्येष केषांचिदाचार्याणां विशेषवादः स्यात् । स तु अस्मात् पापात् चतुःपञ्चलवेषु चतुःपञ्चाशन्नवमांशेषु चान्द्रं चन्द्रसंबन्धि जामित्रमेव पर्यणंसीत् चन्द्रजामित्रेणैव परिणत इत्यर्थः । लक्ष्मी.

[4]उशना गुरुरिन्दुनन्दनः
शशिजामित्रगपापतापहृत् ।
नवपञ्चमकेन्द्रमित्रभ-
प्रणयी पुष्टदृशा विधुं स्पृशन् ॥

---

(१) संप्र. ७९६.
(२) विसौ. ३२. एतेषां श्लोकानां वासिष्ठत्वे संदेहः । राजमार्तण्डग्रन्थे एते श्लोकाः समुपलभ्यन्ते ।
(३) विसौ. ३३.

(१) विसौ. ३३ क्रमेण लल्लः.
(२) विसौ. ३०.
(३) विवृ. १।१७ ; विसौ. ३०.
(४) विवृ. १३।११ ; विसौ. ३०.

अथ जामित्रदोषे विशेषमाह— उशनेति । उशना शुक्रः, गुरुः, इन्दुनन्दनो बुधः नवपञ्चमकेन्द्रमित्रभप्रणयी नवमपञ्चमकेन्द्रस्थो मित्रराशिगतः पुष्टदृशा विधुं चन्द्रं स्पृशन् पश्यन् शशिजामित्रगपापतापहृत् पापकृतचन्द्रजामित्रदोषापहारको भवति । अत्र केन्द्रं सप्तमरहितं ज्ञेयम् । तथा चोक्तम्— 'हरिजदिवसचन्द्रात्सप्तमक्रूरदोषक्षयकृदमरपूज्यः सोमपुत्रः सितो वा । उदयहिबुकधर्मव्योमपुत्रालयस्थो यदि च सकलदृष्ट्यालोकयेच्छीतरश्मिम् ॥' लक्ष्मी.

[1]हिमरश्मिनवांशकात्खलो
यदि खेटः शरसायकांशके ।
अयमन्यगुणैर्न हन्यते
निबिडैरप्युपसर्गडम्बरः ॥

हिमरश्मिनवांशकात् खलः खेटो यदि शरसायकांशके पञ्चपञ्चाशत्तमे नवांशके स्यात् तदाऽयं उपसर्गडम्बरः पूर्णजामित्रदोषाडम्बरः निबिडैः संपूर्णैरप्यन्यगुणैर्न हन्यते । लक्ष्मी.

## राजमार्तण्डः

[2]पापात्सप्तमगः शशी यदि भवेत्पापेन युक्तोऽथवा
यत्नेनापि विवर्जयेन्मुनिमते दोषो ह्ययं कथ्यते ।
यात्रायां विपदो गृहे सुतवधः क्षौरे च रोगोद्भवो
वैधव्यं विवहे व्रते च मरणं शूलं च पुंस्कर्मणि ॥

[3]तुङ्गत्रिकोणभवनेऽवनिजे निजे वा
सौम्याधिमित्रगृहगोऽपि तदीक्षितो वा ।
जामित्रवेधजनितानपहत्य दोषान्
दोषाकरः सुखमनेकविधं विधत्ते ॥

(१) विवृ. १३।१२ ; विसौ. ३० निबिडै (निखिलै); संग. २४६ (=) हिमरश्मि (शशिलग्न).

(२) संत. ८८३.

(३) संत. ८८३ नपहत्य (नप्रहाय); विसौ. ३३.

[1]स्वोच्चेऽथवा स्वभवने स्फुरदंशुजालः
सौम्यालये हितगृहे शुभवर्गगो वा ।
जामित्रकादिपरिसंचितदोषराशिं
हत्वा ददाति बहुशः सुखमेव चन्द्रः ॥

## मुहूर्तचिन्तामणिः

[2]लग्नाच्चन्द्रान्मदनभवनगे
खेटे न स्यादिह परिणयनम् ।
किंवा बाणाशुगमितलवगे
जामित्रं स्यादशुभकरमिदम् ॥

जामित्रदोषमाह— लग्नादिति । विवाहलग्नाच्चन्द्राद्वा सप्तमं भवनं गृहं, तत्र गते खेटे परिणयनं न स्यात् । अस्यापवादमाह— किंवेति । किंवाशब्दो विकल्पे । पूर्वं ग्रहाधिष्ठितराशेः सप्तमराशिस्थितत्रिंशद्भागात्मकं लग्नं चन्द्रश्च निषिद्ध इत्युक्तम् । इदानीं तदधिष्ठितराशिनवांशमारभ्य बाणाशुगाः पञ्चपञ्चाशत्, तन्मितनवांशगे लग्ने चन्द्रे च सति जामित्रं सूक्ष्मं स्यात् । यथा मेषराशौ पञ्चमनवांशे भौमोऽस्ति, तस्मात्तुलायां पञ्चमनवांशस्थं लग्नम्, चन्द्रोऽपि निषिद्धः । अन्येऽष्टौ नवांशाः शुभाः । एवंविधं सूक्ष्मं जामित्रमिदमशुभकरं स्यात् । पीटी.

## ज्ञानमञ्जर्याम्

[3]लग्नाधिपः सप्तमराशिसंस्थः
क्रूरोऽपि सौम्यो यदि वा विवाहे ।
तदा महादोषशतं निहन्ति
पुत्रादिसौख्यं सुभगां करोति ॥

जामित्रगो यदि भवेदुशना बुधश्च
गीर्वाणवन्द्यसचिवः सितपक्षचन्द्रः ।
कन्याविवाहसमये परिहृत्य दोषान्
सौभाग्यदाः शुभगदा (? शुभखगाः) खलु काव्यमुख्याः ॥

(१) विसौ. ३३ ; संग. २४६ कादिपरिसंचित (कारिपरिचिन्तित).

(२) मुचि. ६।६७.

(३) संग. २४६.

## अनिर्दिष्टकर्तृकवचनानि

[1]जामित्रं द्विविधं प्रोक्तं गर्गगालवगौतमैः ।
तस्माल्लग्नाच्च चन्द्राच्च जामित्रं परिवर्जयेत् ॥

[2]लग्नस्थाः शुभखचराः कुर्वन्ति विवाहिताम् ।
सप्तभिरब्दैः क्रूराश्च विलग्नगा विधवाम् ॥

सप्तमगाः सकलखगाः
सप्तभिरब्दैः सप्तमासैश्च ।
दम्पत्योः सह मरणं
यमरक्षितमपि ( ? तयोरपि ) कुर्वन्ति ॥

[3]क्रूरो वा यदि वा सौम्यो लग्नाचन्द्राच्च खेचरः ।
एकोऽपि यदि जामित्रे समांशे शोकदो भवेत् ॥

विधवा ससपत्न्यर्काद्वन्ध्या जामित्रगं फलम् ।
दुष्टाऽमान्या दुर्भगा वा वेश्या गर्भस्रवा
क्रमात् ॥

जामित्रं न प्रशंसन्ति गर्गदेवलकश्यपाः ।
यदि ते बलहीनाः स्युः प्रध्वंसाभावतां ययुः ॥

जामित्रगा यदि खगा उशना बुधो वा
गीर्वाणनाथसितपक्षगशीतरश्मी ।
कन्याविवाहसमये परिहृत्य दोषं
पुत्रान्वितं शुभकराः सुखमाशु दद्युः ॥

लग्नाच्छीतकराद्ग्रहा शुनगता
नेष्टा विवाहे स्मृताः
कैश्चित्त्वाद्यनवांशकादिषुशरै-
स्तुल्ये नवांशे स्थिताः ॥

लग्नत्रिकोणसहजायगतश्चरद्वि-
र्जामित्रदोषगणनां भृगुराशु हन्यात् ।
धीधर्मकण्टकगतः स्फुरदंशुजालो
जीवोऽतिजीवयति लग्नगुणान्स धत्ते ॥

---

## ९ बाणदोषः

### च्यवनः

[1]रवौ रोगं कुजे वह्निं शनौ च नृपपञ्चकम् ।
वर्ज्यं पुनः कुजे चौरं बुधवारे च मृत्युदम् ॥

### दैवज्ञमनोहरे

[2]संक्रान्तियातांशकनन्दशेष-
स्तर्काग्निरूपाष्टयुगैः समेतः ।
तष्टो ग्रहै रोगहुताशभूप-
स्तेना मृतिश्चेति च पञ्च बाणाः ॥

### ज्योतिष्प्रकाशे

[3]नृपाख्यं नृपसेवायां गृहगोपेऽग्निपञ्चकम् ।
याने चौरं व्रते रोगं विवाहे मृत्युपञ्चकम् ॥

[4]रोगं चौरं त्यजेद्रात्रौ दिवा राजन्यपञ्चकम् ।
संध्ययोर्मृत्युदं त्याज्यं सर्वदा वह्निपञ्चकम् ॥

[5]तैलं रोगेऽनले होमं दद्यात्किंचिन्नृपेऽर्हणाम् ।
चौरे द्रव्यं जलं मृत्यौ पञ्चकारिष्टशान्तये ॥

[6]नाग ( ? रोग )मृत्यू सदा त्याज्यौ
संध्ययोर्बाह्लिकैर्जनैः ।
तत्रापि यत्र लग्नं चेद्बलाढ्यं तत्र निष्फलम् ॥

बृहस्पतीन्दुभौमार्कशुक्रवारेषु पञ्चकम् ।
चोरेनाग्निरुजो मृत्युसंज्ञितं वर्जयेच्छुभे ॥

---

( १ ) संप्र. ७९६ ; संग. २४६.

( २ ) संग. २४६.

( ३ ) ज्योनि. १५३.

( १ ) विसौ. ३२ ; संप्र. ७९७ फलप्रदीपे ; ज्योनि. ७८.

( २ ) विसौ. ३१. पीयूषधाराटीकायां कश्यपः ।

( ३ ) संप्र. ७९७ ; ज्योनि. ७८ गृहगोपे ( गृहे गोपे ) विवाहे मृत्युपञ्चकम् ( त्यजेन्मृत्युं करग्रहे ) ; संग. २३९ ( = ) विवाहे मृत्युपञ्चकम् ( त्यजेन्मृत्युं करग्रहे ) .

( ४ ) विसौ. ३२ राजन्य (राजाग्नि) उत्तरार्धे ( उभयोः संध्ययोर्मृत्युमन्यकाले न निन्दितम् । ) ; संप्र. ७९७; ज्योनि. ७८ विसौवत्.

( ५ ) संप्र. ७९७.

( ६ ) ज्योनि. ७८.

### सप्तर्षिमते

[1]गततिथियुतलग्नं पञ्चधा स्थापनीयं
तिथिरविदशनागैर्वेदयुक्तं क्रमेण ।
नवहृतशरशेषे बाणसंज्ञाः क्रमेण
रुगनलनृपचौराः पञ्चमो मृत्युसंज्ञः ॥

### ज्योतिश्चिन्तामणौ

[2]तिथिवारभलग्नाङ्को रसाग्न्यब्जाष्टवेदयुक् ।
नन्दाप्तः पञ्चशेषे रुग्वह्निराट्चोरमृत्युकृत् ॥
यद्वा गताहलग्नाङ्कः सदा मृत्युर्दिवाऽग्निराट् ।
रुक्चौरौ निशि शेषैक्ये नवाप्ते नागपञ्चकम् ॥
संक्रान्तिभाद्भवति येष्टविलग्नसंख्या
मासादियाततिथिभिः सहिताङ्कभक्ता ।
स्याच्छेषके खलु शुभे कुसुमैः क्रमेण
मृत्य्वग्निभूमिपतितस्कररोगभीतिः ॥

### मुहूर्तचिन्तामणिः

[3]लग्नेनाढ्या याततिथ्योऽङ्कतष्टाः
शेषे नागव्यब्धितर्केन्दुसंख्ये ।
रोगो वह्नी राजचौरौ च मृत्यु-
र्बाणश्चायं दाक्षिणात्यप्रसिद्धः ॥

बाणदोषमाह— लग्नेनेति । शुक्लपक्षप्रतिपदमारभ्य गततिथ्यः लग्नेनाढ्याः युक्ताः कृत्वा अङ्कैर्नवभिस्तष्टाः, शेषे नागसंख्ये अष्टसंख्ये रोगाख्यो बाणः, एवं द्विसंख्ये शेषे वह्न्याख्यः, चतुःसंख्ये शेषे राजाख्यः । तर्काः षट्, तत्संख्ये शेषे चौराख्यः । एकसंख्ये शेषे मृत्युसंज्ञो बाणः । अयं च दाक्षिणात्येषु महाराष्ट्रदेशीयेषु लोकेषु प्रसिद्धः । तेन देशाचारव्यवस्थया बाणस्य त्यागः, न तु प्राच्योदीच्यपाश्चात्यानाम् । पीटी.

रसगुणशशिनागाब्ध्याढ्यसंक्रान्तियातां-
शकमितिरथ तष्टाङ्कैर्यदा पञ्च शेषाः ।
रुगनलनृपचौरा मृत्युसंज्ञश्च बाणो
नवहृतशरशेषे शेषकैक्ये सशल्यः ॥

प्राच्यमतेन बाणं सापवादमाह— रसेति । अथशब्दः पादपूरणे । रसगुणशशिनागाब्धिभिः आढ्या चासौ संक्रान्तियातांशकमितिश्चेति कर्मधारयसमासः । स्पष्ट-निरयनांशसूर्यसंक्रान्तिभुक्तांशानां मितिः संख्या पञ्चधा स्थाप्या । कलादिकमुपेक्ष्यम् । सा क्रमेण षट्त्र्येकाष्ट-चतुर्भिराढ्या संयोज्या अङ्कैर्नवभिस्तष्टा सती यदा पञ्च शेषाः यस्मिन् स्थले पञ्च अवशिष्यन्ते तत्र क्रमेण रुगादिर्बाणः ज्ञेयः । यथा आदौ पञ्चशेषे रोग-बाणः, द्वितीये पञ्चशेषे अग्निबाणः, तृतीये पञ्चशेषे राजबाणः, चतुर्थे पञ्चशेषे चौरबाणः, पञ्चमे पञ्चशेषे मृत्युबाणः । तस्मात्तस्माद्भयं भवतीत्यर्थः । यदाह कश्यपः— ‘संक्रान्तियातांशकनन्दशेषस्तर्काग्निरूपाष्टयुगैः समेतः । तष्टो ग्रहै रोगहुताशभूपस्तेना मृतिश्चेति च पञ्च बाणाः ॥’ पञ्चेति पृथक् पदम् । पञ्च चेत् शिष्यन्ते तदा बाणाः स्युरित्यर्थः । तत्र बाणो द्विविधः, एकः काष्ठशल्योऽपरो लोहशल्यः । तत्राभिहितो बाणः काष्ठशल्य उच्यते । अस्य नाम प्राच्याख्यो बाण इत्याहुः । तेन तादृशे बाणे लग्ने तथा पीडा न भवेत्तदर्थं तदप-वादभूतो लोहशल्यसहितो बाण उच्यते— नवेति । यानि प्रागागतानि शेषाणि तेषामैक्ये नवहृते पश्चा-च्छरशेषे पञ्चशेषे सति सशल्यः लोहशल्यसहितो बाणः स्यात् । पञ्चव्यतिरिक्ते शेषे शल्यरहितो दुष्टबाणः । अयं च तुल्यन्यायत्वात्प्राक्पद्योक्तेऽपि बाणे सशल्यो बाणो ज्ञेयः । पीटी.

रात्रौ चौररुजौ दिवाऽग्निनृपती
त्याज्यौ सदा संध्ययो-
र्मृत्युश्चाथ शनौ नृपो विदि मृति-
र्भौमेऽग्निचौरौ रवौ ।

---

(१) विसौ. ३२; संप्र. ७९७ स्थापनीयं (स्थापितं स्यात्) उत्तरार्धे (नवहृतशरशेषं यत्र तत्पञ्चकं स्याद्रुगनलनृप-चौरं मृत्युदं वर्जनीयम् ।) ब्रह्मयामले; ज्योनि. ७७–७८ (गततिथियुतलग्नं पञ्चधा कर्मभूमौ तिथिरविदशनागाम्भोधि-युक्तं क्रमेण । नवहृतमिषुशेषं शोभने वर्जनीयं रुगनलनृपचोर-मृत्युदं पञ्चकं स्यात् ॥) ब्रह्मयामले.

(२) ज्योनि. ७८.

(३) मुचि. ६।७२–७४ ‘रात्रौ चौररुजौ’ इत्यादिः पाठः पीयूषधारातो धृतः । आदर्शमुद्रितपुस्तकपाठस्तु ‘रात्रौ चौररुजौ दिवा नरपतिर्वह्निः सदा संध्ययोः’ इति ।; संग. २३९ (=) तृतीयश्लोको नास्ति.

रोगोऽथ व्रतगेहगोपनृप-
सेवायानपाणिग्रहे
वर्ज्याश्च क्रमतो बुधैरुगनल-
क्ष्मापालचौरा मृतिः ॥

समयभेदेन वारभेदेन कार्यभेदेन वा त्रिविधं बाणपरिहारमाह– रात्राविति । तत्र तावत् कालभेदेन परिहारः – रात्रौ चौररुजौ बाणौ त्याज्यौ । दिवा दिवसे अग्निनृपती वह्निराजबाणौ त्याज्यौ । संध्ययोः प्रातःसायं-संध्ययोः सदा मृत्युबाणस्त्याज्यः । अर्थवशाद्विभक्ति-विपरिणामः । वारभेदेन परिहारः – अथेति । अथ शनौ शनिवारे नृपबाणः । विदि बुधवारे मृतिबाणः । भौमे अग्निचौरबाणौ, रवौ रोगबाणः । त्याज्य-स्त्याज्याविति यथायोग्यं संबन्धः । कार्यभेदेन परिहार उच्यते– अथेति । क्रमतः एतेषु शुभकर्मसु एते बाणा वर्ज्याः । यथा–व्रते यज्ञोपवीते रुक्, गेहं गृहं, तस्य गोप आच्छादनं तत्र अनलः अग्निः, नृपसेवायां क्ष्मापालः राजा, याने यात्रायां चौरः, पाणिग्रहे मृतिर्बाणो वर्ज्य इत्यर्थः । पीटी.

## ज्योतिर्निबन्धे

[1]गततिथ्या युतं लग्नं नवभक्तावशेषकम् ।
त्रिपञ्चाद्रिखसंख्यं चेत्पञ्चकं न तदा भवेत् ॥
एकावशेषे मृत्युः स्याद्द्वयोर्वह्निः प्रकीर्तितः ।
चतुर्षु तु भवेद्राजा षट्सु चोरः प्रकीर्तितः ॥
रोगोऽष्टसु समाख्यातः शेषं निष्पञ्चकं स्मृतम् ।
मृत्युं विवाहविच्छुक्रसंध्यासु परिवर्जयेत् ॥
वह्निं परित्यजेद्भौमगृहारम्भदिनेषु तु ।
राजानं स्वामिसेवेन्दुमन्दद्युषु परित्यजेत् ॥
धराजगुरुयात्रासु चोरं तु परिवर्जयेत् ।
रोगं परित्यजेदर्के रात्रौ मौञ्जीनिबन्धने ॥
मृत्युः सर्वत्र वर्ज्यः स्यादिति केचिन्मनीषिणः ।
वर्तमाना तिथिर्लग्नं हर्म्ययात्राव्रतेषु तु ॥
अन्यत्रेता तिथिर्लग्नं मेषादीन्यपि केचन । (१)
बलिष्ठं यदि लग्नं स्यात्तदैतद्दोषकृन्न हि ॥

## अनिर्दिष्टकर्तृकवचने

[2]व्रते विवर्जयेद्रोगं गृहगोपेऽग्निपञ्चकम् ।
यात्रायां राजचौराख्ये विवाहे मृतिपञ्चकम् ॥
[3]सदाऽर्कवारे त्यज रोगपञ्चकं
सोमे नृपस्याऽऽरदिनेऽग्निपञ्चकम् ।
गुरौ तु चोरस्य भृगौ मृतिप्रदं
बुधे शनौ पञ्चकदुष्टता न हि ॥

---

## १० परिवेषभूकम्पादिदोषाः

### नारदः

[3]देवता यत्र नृत्यन्ति पतन्ति प्रज्वलन्ति च ।
मुहू रुदन्ति गायन्ति प्रस्विद्यन्ति हसन्ति च ॥
[4]वमन्त्यग्निं तथा धूमं स्नेहं रक्तं पयो जलम् ।
अधोमुखाश्च तिष्ठन्ति स्थानात्स्थानं व्रजन्ति च ॥
[5]एवमाद्या हि दृश्यन्ते विकाराः प्रतिमासु च ।
गन्धर्वनगरं चैव दिवा नक्षत्रदर्शनम् ॥
[6]महोल्कापतनं काष्ठतृणरक्तप्रवर्षणम् ।
गन्धर्वगेहं दिग्दाहं भूमिकम्पं दिवा निशि ॥
[7]अनग्नौ च स्फुलिङ्गाश्च ज्वलनं च विनेन्धनम् ।
निशीन्द्रचापमण्डूकशिखरं श्वेतवायसः ॥

---

(१) संर. ४७०-४७१.

(१) विसौ. ३२.

(२) ज्योनि. ७८.

(३) ज्योना. ३४।१ पृ. ८० ; संग. २१७ लन्ति च (लन्ति वा).

(४) ज्योना. ३४।२ पृ. ८० ; संग. २१७ स्नेहं (लेहं).

(५) ज्योना. ३४।३ पृ. ८० ; संग. २१७ द्या हि (द्यास्त्र) दर्शनम् (मण्डलम्).

(६) ज्योना. ३४।४ पृ. ८० गेहं दिग्दाहं (गेहे दिग्धूमं) ; संग. २१७.

(७) ज्योना. ३४।५ पृ. ८० ; संग. २१७ ङ्गाश्च (ङ्गाः स्युः) वायसः (वायसम्).

[1]दृश्यन्ते विफुलिङ्गाश्च गोगजाश्वोष्ट्रगात्रतः ।
जन्तवो द्वित्रिशिरसो जायन्ते वा वियोनिषु ॥
[2]प्रतिसूर्याश्चतसृषु स्युर्दिक्षु युगपद्रवेः ।
जम्बूकग्रामसंवासः केतूनां च प्रदर्शनम् ॥
काकानामाकुलं रात्रौ कपोतानां दिवा यदि ।
अकाले पुष्पिता वृक्षा दृश्यन्ते फलिता यदि ॥
कार्यं तच्छेदनं तत्र ततः शान्तिर्मनीषिभिः ।
एवमाद्या महोत्पाता बहवः स्थाननाशदाः ॥
[3]बलवान्केन्द्रगो जीवः परिवेषोत्थदोषहा ।
एकादशस्थः शुक्रश्चेद्बलवान्सौम्यवीक्षितः ॥

### वराहमिहिरः

[4]चण्डाशनिमहीकम्पसंध्यानिर्घातनिःस्वनाः ।
परिवेषरजोधूमरक्तार्कास्तमयोदयाः ॥
द्रुमेभ्योऽनुरसस्नेहमधुपुष्पफलोद्गमाः ।
गोपक्षिमदवृद्धिश्च शुभाय मधुमाधवे ॥

(१) ज्योना. ३४।६ पृ. ८१; संग. २१७ वा वि (वाऽपि).
(२) ज्योना. ३४।७–९ पृ. ८१.
(३) प्रपा. ३३८.
(४) संग. २१७ चण्डा (चण्डी) मयोदयाः (मनोदयाः) द्रुमेभ्योऽनु (द्रुमे स्यात्र) द्रुमाः (द्रुमः); संर. ४७३.

## अनिर्दिष्टकर्तृकवचनानि

[1]कण्टके च शुभस्तिष्ठेत्त्रिकोणे वा बलान्वितः ।
शुभवर्गेऽपि लग्नेन्द्वोः परिवेषोत्थदोषहा ॥

कण्टकः केन्द्रस्थानम् । प्रपा. ३३८

स्वत्रिकोणस्वराशिस्थः केन्द्रे चाऽऽये च यः शुभः ।
परिवेषगतं दोषं विनाशयति नान्यथा ॥

लग्ने केन्द्रे शुभः स्वोच्चे स्ववर्गे वा बली यदि ।
चन्द्रश्च शुभकार्यस्थो न दोषः परिवेषतः ॥

सूर्ये दूषितराशीशः स्वलग्ने च स्ववर्गगः ।
यदा तदा न दोषाय परिवेषो घनादृते ॥

(१) प्रपा. ३३८.

# देशभेदेन दोषव्यवस्था

## वसिष्ठः

[1]उपग्रहर्क्षं कुरुबाह्लिकेषु
कलिङ्गवङ्गेषु च पातितं भम् ।
सौराष्ट्रशाल्वेषु च लत्तितं भं
देशेषु वर्ज्यं शुभविद्धभं च ॥

[2]निषिद्धयोगद्युनराशिजाता
निषिद्धनाड्यो ग्रहजन्मभं च ।
निशासु वारप्रभवादिदोषा-
स्त्याज्याः सदा कौङ्कणसंज्ञदेशे ॥

[3]ये मासदग्धादिदशैव दोषा
विवर्जनीयाः खलु मध्यदेशे ।
दुःस्वप्नदुर्दर्शनदुर्निमित्तं
दुःशाकुनाद्यास्त्वपि यत्र तत्र ॥

[4]प्रत्यर्कपूर्वा दशपूर्वदोषा-
स्त्याज्याः सदा मागधगौडयोश्च ।
नानाभिधानास्तिथिवारजाता
नक्षत्रवारप्रभवाश्च दोषाः ॥

[5]ते हूणवङ्गाङ्गखशेषु वर्ज्याः
शेषेषु देशेषु न ते निषिद्धाः ।
तस्मात्तु तेष्वेव विवर्जितास्ते
देशेषु चान्येषु न दोषदाः स्युः ॥

(१) वसं. ३२।२९ ; विसौ. ३२.

(२) वसं. ३२।३० ; प्रपा. ३३४ प्रभवादि (प्रभवा हि) उत्त. ; विसौ. ३३ निशासु वारप्रभवादि (निशादिवान्ध्यप्रभवाश्च) उत्त. ; संप्र. ७९१ कौङ्कण (टङ्कण) शेषं प्रपावत्, उत्त.

(३) वसं. ३२।३१ ; विसौ. ३३ पू.

(४) वसं. ३२।३२ ; विसौ. ३२ नानाभिधानाः (निषिद्धयोगाः) दोषाः (येऽत्र) उत्त. : ३३ उत्त., व्यवहारोच्चये.

(५) वसं. ३२।३३ ; विसौ. ३२ ते हूणवङ्गाङ्गखशेषु (हूणेषु वङ्गेषु खशेषु) पू. : ३३ हूणवङ्गाङ्ग (हूणवङ्गेषु) पू.

[1]सर्वैधृता विष्टिरथाष्टमेन्दुः
सपापयोगः परिघार्धमाद्यम् ।
तिस्रोऽष्टकाश्चोक्तनिसर्गदोषाः
सर्वत्र वर्ज्याः खलु मङ्गलेषु ॥

## नारदः

[2]सौराष्ट्रशाल्वदेशेषु लत्तितं भं विवर्जयेत् ।
कलिङ्गवङ्गदेशेषु पातितं भमुपग्रहम् ॥

[3]बाह्लिके कुरुदेशे चान्यस्मिन्देशे न दूषणम् ।
तिथयो मासदग्धाख्या दग्धलग्नानि यान्यपि ॥

[4]मध्यदेशे विवर्ज्यानि न दूष्याणीतरेषु च ।
पङ्ग्वन्धकाणलग्नानि मासशून्याश्च राशयः ।
गौडमालवयोस्त्याज्या अन्यदेशे न गर्हिताः ॥

## गर्गः

[5]विन्ध्यस्योत्तरकूले तु यावदा तुहिनाचलम् ।
यमघण्टकदोषोऽस्ति नान्यदेशेषु विद्यते ॥
मत्स्याङ्गमगधान्ध्रेषु यमघण्टस्तु दोषकृत् ।
काश्मीरे कुलिकं दुष्टमर्धयामस्तु सर्वतः ॥

(१) वसं. ३२।१९–२०.

(२) ज्योना. २७।७९ पृ. ५६ ; प्रपा. ३३७ सौराष्ट्रशाल्वदेशेषु (सौराष्ट्रे शाल्वदेशे च) वङ्गदेशेषु (वङ्गदेशे च); ज्योनि. ७९.

(३) ज्योना. २७।८० पृ. ५६ यान्यपि (तान्यपि); प्रपा. ३३७ (बाह्लीके कुरुदेशे च नास्मिन्देशे च दूषणम् । तिथयो या मासदग्धा दग्धलग्नानि यान्यपि ॥); ज्योनि. ७९ यान्यपि (तान्यपि).

(४) ज्योना. २७।८१–८२ पृ. ५६ ; प्रपा. ३३७ तरेषु च (तरेषु तु); ज्योनि. ७९ मालव (मागध) शेषं प्रपावत् ; संग. २४३ पङ्ग्वन्धकाणलग्नानि (काणपङ्ग्वन्धबधिर) कश्यपः.

(५) संग. २४२.

### वराहः

[1]युतेर्दोषो भवेद्गौडे जामित्रस्य च यामुने ।
वेधदोषस्तु विन्ध्याख्ये देशे नान्यत्र केचन ॥
सौराष्ट्रसाल्वेषु च लातितं भं
कलिङ्गवङ्गादिषु पातितं भम् ।
उपग्रहाख्यं कुरुबाह्लिकेषु
त्यजेच्च सर्वत्र सवेधमृक्षम् ॥
मध्यदेशे न गण्यन्ते नाडीवेधादयः सदा ।
देशेष्वन्येषु ते चिन्त्या ब्रुवते काश्यपादयः ॥
मागधे चैव लाटाख्ये वङ्गे तमे (?)
च कोङ्कणे ।
कर्णाटे द्राविडे चोले नाडीवेधो न गण्यते ॥

### मुहूर्तचिन्तामणिः

[2]उपग्रहर्क्षं कुरुबाह्लिकेषु
कलिङ्गवङ्गेषु च पातितं भम् ।
सौराष्ट्रशाल्वेषु च लत्तितं भं
त्यजेत्तु विद्धं किल सर्वदेशे ॥

(१) विसौ. ३३.
(२) मुचि. ६।६९ ; संग. २४० ज्योतिर्निबन्धे.

केषांचिद्दोषाणां देशभेदेन परिहारभूतं वसिष्ठपद्यमेवाह– उपग्रहर्क्षमिति । कुरवो बाह्लीकाश्च पश्चिमदेशाः, तेषु उपग्रहदोषाक्रान्तभं त्यजेत् । न तदतिरिक्तसर्वदेशेषु । अन्यत्र शुभमेवेत्यर्थः । कलिङ्गा वङ्गाश्च प्राग्देशौ । बहुवचनात् मगधाङ्गादयोऽपि । तेषु चण्डीशचण्डायुधापरपर्यायं पातं त्यजेत्, न तु क्रान्तिसाम्यरूपं पातम्, तस्य महापात इति व्यवहारात् । सौराष्ट्रशाल्वदेशौ पश्चिमदेशविशेषौ । बहुवचनात् ग्रामबाहुल्यं, तेषु लत्तितं लत्ता संजाता अस्य तद्भं परित्यजेत् । विद्धं क्रूरेण शुभेन वा पञ्चशलाकादिचक्रद्वारा भिन्नं भं भूतलवर्तिसर्वदेशेषु त्यजेत् । किल निश्चयेन । न त्वस्य देशभेदेन परिहारः । पीटी.

# दोषापवादाः

## वसिष्ठः

[1]उक्ताखिलं दोषनिरूपणं य-
न्निरूपणं स्वल्पमहागुणानाम् ।
वक्ष्येऽन्यपक्षस्य विदूषणार्थं
स्वपक्षसंस्थापननिर्णयार्थम् ॥

[2]मित्राधिमित्रस्वगृहोच्चमूल-
त्रिकोणवर्गोत्तमगग्रहोत्थाः ।
तदंशकेन्द्रोपचयत्रिकोण-
महादशाधीशबलाधिकोत्थाः ॥

[3]लग्नांशकाधीशशुभावलोक-
संयोगतद्वर्गजतद्गुणोत्थाः ।
ये सिद्धयोगामृतसिद्धयोगा-
स्तिथिप्रजाताश्च महागुणाः स्युः ॥

[4]ये चान्यसामान्यगुणाः सदैव
स्वभावसंसिद्धगुणप्रदास्ते ।
किञ्चाल्पदोषानपि लग्नजातान्
हन्तुं न शक्ताश्च कदाचिदेव ॥

[5]मित्रर्क्षगो मित्रनवांशगो वा
शुभग्रहस्तेन निरीक्षितो वा ।
यदा विलग्नोपगतः स खेट-
श्चेद्धन्ति दोषानपि लग्नजातान् ॥

(१) वसं. ३२।१११; विसौ. ५२ ऽन्यपक्षस्य (ऽस्य सापत्न्य).

(२) वसं. ३२।११२; विसौ. ५२ मित्राधि (मित्राति) पू.

(३) वसं. ३२।११३; विसौ. ५३ (लग्नस्य लग्नांशशुभावलोकसंयोगषड्वर्गशुभग्रहोत्थाः । ये सिद्धियोगास्तिथिवारजाता नक्षत्रजाताश्च महागुणाश्च ॥).

(४) वसं. ३२।११४; विसौ. ५३ ये चान्य (येऽन्ये च).

(५) वसं. ३२।११५–११६; विसौ. ५३ दैत्य (सैन्य).

शुभोऽधिमित्रर्क्षगतस्तदंश-
संस्थोऽपि वा तेन निरीक्षितो वा ।
स लग्नदोषोपचयं निहन्ति
रामो यथा रावणदैत्यवृन्दम् ॥

[1]स्वक्षेत्रगः स्वस्य नवांशगो वा
शुभग्रहः सौम्यनिरीक्षितो वा ।
स लग्नगो यत्र निहन्ति दोषान्
पञ्चाननो यद्वदिभेन्द्रवृन्दान् ॥

[2]उच्चस्थितः स्वोच्चनवांशगो वा
शुभः स्वमित्रेण निरीक्षितो वा ।
स केन्द्रगो यत्र निहन्ति दोषान्
हरिस्मृतिर्यद्वदशेषपापान् ॥

[3]मूलत्रिकोणर्क्षगतस्तदंश-
संस्थः शुभो वाऽप्यथ मित्रदृष्टः ।
विलग्नगो यत्र निहन्ति दोषान्
पापं यथा चन्द्रधरे प्रणामः ॥

[4]वर्गोत्तमस्थशुभखेचरसंयुतं वा
लग्नं च तेन खचरेण निरीक्षितं यत् ।
तत्सर्वदोषनिचयं विनिहन्ति सद्य-
स्तार्क्ष्यः समस्तमहिसंघमिव प्रतापात् ॥

(१) वसं. ३२।११७; प्रपा. ३३८ वृन्दान् (वृन्दम्); विसौ. ५३ नवांशगो (नवांशके) शुभग्रहः (सौम्यग्रहः).

(२) वसं. ३२।११८; प्रपा. ३३८ स्वोच्च (सौम्य); विसौ. ५३ पापान् (पापम्).

(३) वसं. ३२।११९; विसौ. ५३ वाऽप्यथ (वाऽप्यधि) विलग्नगो (स लग्नगो) धरे (धर).

(४) वसं. ३२।१२०; प्रपा. ३३८–३३९ पूर्वार्धे (वर्गोत्तमस्य शुभखेचरसंयुतं वा लग्नं भवेन्निखिलखेचरवीक्षितं यत् ।); विसौ. ५३ तं यत् (तं वा).

[1]लग्नं स्वनाथशुभमित्रनवांशगं च
तस्याधिमित्रशुभखेटनवांशगं वा ।
तत्तुङ्गसंज्ञितनवांशकगं यदा वा
हन्तीव दोषनिचयं कुलिशं नगौघम् ॥

[2]लग्नेशसौम्यखचरोऽस्तगृहं विहाय
केन्द्रस्थितो यदि गतोऽखिलदोषवृन्दम् ।
एकोऽपि हन्त्युपचयोपगतस्त्रिकोण-
संस्थोऽपि यद्वदनिलोऽभ्रचयं समस्तम् ॥

[3]पापोऽपि लग्नाधिपतिस्त्रिषष्ठ-
लाभस्थितः स्थानबलाधिकश्च ।
लग्नोत्थदोषान्निखिलान्निहन्ति
पापानि यद्वत्परमाक्षरज्ञः ॥

[4]त्यक्त्वास्तकेन्द्रे( ? ) स्थितसौम्यखेट-
स्त्रिकोणगो वाऽप्यथ लाभसंस्थः ।
दोषानशेषानुदयांशजातान्
निहन्ति यद्वत्तिमिरं दिनेशः ॥

[5]बलाधिकः सौम्यनभश्चरो यः
कुटुम्बसंस्थोऽपि निहन्ति दोषम् ।
लग्नोद्भवं विष्णुपदाब्जतोयं
यथाऽघसंघं शुभवर्गगोऽपि ॥

[6]यः सिद्धियोगो विनिहन्ति दोषान्
पापेक्षितोपग्रहलत्तपातान् ।
लग्नेन्दुजामित्रघनप्रचार-
नीहारविद्युत्परिवेषजांश्च ॥

[1]दोषानशेषानमृताख्ययोगो
निहन्ति लोभो गुणवृन्दमेकः ।
प्रत्यर्कयोगर्क्षतिथीन्द्रचाप-
कुवारपङ्ग्वन्धभवांश्च तद्वत् ॥

[2]सिद्धा तिथिर्हन्ति समस्तदोषान्
यान्मासशून्यानपि मासदग्धान् ।
दिनप्रदग्धानपि चान्यदोषा-
नेकादशी यद्वदशेषपापान् ॥

[3]एकार्गलोपग्रहपातलत्ता-
जामित्रकर्तर्युदयादिदोषाः ।
नश्यन्ति चन्द्रार्कबलोपपन्ने
लग्ने यथार्काभ्युदयेऽन्धकारः ॥

[4]ये लग्नदोषाः कुनवांशदोषाः
पापैः कृता दृष्टिनिपातदोषाः ।
लग्ने गुरुस्तान्विमलीकरोति
फलं यथाऽम्भः कतकद्रुमस्य ॥

[5]नक्षत्रदोषं कुनवांशदोषं
गण्डान्तदोषं च मुहूर्तदोषम् ।
विरुद्धपञ्चांशविलग्नदोषं
निशाकरो लाभगतो निहन्ति ॥

[6]गुणाधिकं दोषविहीनकालं
ज्ञात्वा विलग्नेशनवांशपस्य ।
बलाबलं खेचरिणां सुसम्यक्
विचार्य लग्नं प्रवदेदभिज्ञः ॥

---

( १ ) वसं. ३२।१२१ ; विसौ. ५३ तत्तुङ्ग ( तत्तुंभ ).

( २ ) वसं. ३२।१२२ ; विसौ. ५३ यदि गतो ( तनुगतो ).

( ३ ) वसं. ३२।१२३ ; विसौ. ५३ पापोऽपि ( पापो वि ) निखिलान् ( अखिलान् ).

( ४ ) वसं. ३२।१२४ ; विसौ. ५३ केन्द्रे ( केन्द्र ) वाऽप्यथ ( वा धन ).

( ५ ) वसं. ३२।१२५ ; प्रपा. ३३९ ऽपि निहन्ति ( विनिहन्ति ) ; विसौ. ५३ प्रपावत्.

( ६ ) वसं. ३२।१२६ ; विसौ. ५३ विनिहन्ति ( स निहन्ति ); ज्योनि. १५३ उत्त.

( १ ) वसं. ३२।१२७ ; विसौ ५३ उत्तरार्धे ( वार-क्षयोगर्क्षतिथिप्रजाता यथा कुठारोऽनिशितोऽपि वृक्षान् । ); ज्योनि. १५३ पू.

( २ ) वसं. ३२।१२८ ; विसौ. ५३ यान्मासशून्यानपि ( मासाख्यशून्यानपि ).

( ३ ) वसं. ३२।१२९ येऽन्धकारः ( ये तु दोषाः ); ज्योनि. १५३.

( ४ ) वसं. ३२।१३० पापैः कृता ( पापग्रहैः ); ज्योनि. ७९.

( ५ ) ज्योनि. ७९.

( ६ ) वसं. ३२।१३१ ; प्रपा. ३३९ दोष ( स्वल्प ) सुसम्यक् ( च सम्यक् ).

## नारदः

[1]दोषो न प्रभवत्येको गुणानां परिसंचये ।
एको यथा तोयबिन्दुरुदार्चिषि हुताशने ॥

[2]बृहस्पतिः केन्द्रगतः शुक्रो वा यदि वा बुधः ।
एकोऽपि दोषविलयं करोत्येव सुशोभनम् ॥

[3]गुरुरेकोऽपि लग्नस्थः सकलं दोषसंचयम् ।
विनाशयति घर्मांशुरुदितस्तिमिरं यथा ॥

[4]एकोऽपि लग्नगः काव्यो बुधो वा यदि लग्नगः ।
नाशयत्यखिलान् दोषान् तूलराशिमिवानलः ॥

[5]गुरुरेकोऽपि केन्द्रस्थः शुक्रो वा यदि वा बुधः ।
दोषसंघान्निहन्त्येव केसरीवेभसंहतिम् ॥

दोषाणां शतकं हन्ति बलवान् केन्द्रगो बुधः ।
अपहाय शुनं शुक्रो द्विगुणं लक्ष्मङ्गिराः ॥

[6]लग्नदोषाश्चन्द्रदोषा दोषाः षड्वर्गजाश्च ये ।
हन्ति तान् लग्नगो जीवो मेघसंघमिवानिलः ॥

[7]केन्द्रत्रिकोणगे जीवे शुक्रे वा यदि वा बुधे ।
दोषा विनाशमायान्ति पापानीव हरिस्मृतेः ॥

[1]गुरुर्बली त्रिकोणस्थः सर्वदोषविनाशकृत् ।
निहन्ति निखिलं पापं प्रणाम इव शूलिनः ॥

[2]मुहूर्तपापषड्वर्गकुनवांशग्रहोत्थिताः ।
ये दोषास्तान् निहन्त्येव यत्रैकादशगः शशी ॥

[3]नाशयत्यखिलान्दोषान् यत्रैकादशगो रविः ।
गङ्गायाः स्नानतो भक्त्या सर्वपापानि
वा चिरात् ॥

[4]दुर्लग्नदुर्मुहूर्तोत्था दुर्निमित्तांशजातयः ।
ते सर्वे विलयं यान्ति केन्द्रस्थाने बृहस्पतौ ॥

[5]चापोपसूर्यनीहारमेघगर्जनसंभवाः ।
दोषा नाशं ययुः सर्वे केन्द्रस्थाने बृहस्पतौ ॥

[6]ये दोषा मासदग्धाख्यास्तिथिदग्धसमुद्भवाः ।
ते सर्वे नाशमायान्ति केन्द्रस्थाने बृहस्पतौ ॥

[7]बलवान् केन्द्रगो जीवः परिवेषोत्थदोषहा ।
एकादशस्थः शुक्रश्चेद्बलवान् सौम्यवीक्षितः ॥

---

(१) ज्योना. २७।८४–८५ पृ. ५७.

(२) ज्योना. २७।७५ पृ. ५६ ; प्रपा. ३३८ उत्तरार्धे ( एतेषां दोषसंघानां करोत्येव विनाशनम् । ) ; संप्र. ७९९ प्रपावत् ; संग. २४२ केन्द्रगतः ( केन्द्रगो वा ) उत्तरार्धे ( [illegible]षां दोषसंघानां करोत्येव न संशयः । ).

(३) ज्योना. २७।१०४–१०५ पृ. ५८ ; प्रपा. ३३८ ; संप्र. ७९९ ; ज्योनि. ८० लग्नस्थः ( केन्द्रस्थः ); संग. २४२.

(४) ज्योना. २७।१०५–१०६ पृ. ५८ ; प्रपा. ३३८ खिलान् दोषान् ( खिलं दोषं ) ; ज्योनि. ८० बुधो वा यदि लग्नगः ( गुरुर्वा यदि वा बुधः ).

(५) ज्योना. २७।१०६–१०८ पृ. ५८.

(६) ज्योना. २७।१०८–१०९ पृ. ५८ ; प्रपा. ३३८ ; ज्योनि. ७६ लग्नदोषाश्चन्द्रदोषा ( लग्नदोषांशदोषा ये ).

(७) ज्योना. २७।१०९–११० पृ. ५८ शुक्रे वा यदि वा बुधे ( शुक्रो वा यदि वा बुधः ) ; प्रपा. ३३८.

(१) ज्योना. २७।११०–१११ पृ. ५८ ; प्रपा. ३३८ रुर्बली त्रि ( रुर्भवत्रि ) नाशकृत् ( नाशनम् ) निहन्ति ( करोति ).

(२) ज्योना. २७।१११–११२ ; प्रपा. ३३७ (=); संप्र. ७९८ (=) ये दोषा ( प्रदोषा ) ; ज्योनि. ७५ ; संग. २४५ पाप ( लग्न ) ग्रहोत्थिताः ( ग्रहोद्भवाः ) हन्त्येव ( हन्त्येको ) चूडामणौ.

(३) ज्योना. २७।११२–११३ पृ. ५९ ; प्रपा. ३३९ गङ्गायाः ( गङ्गायां ) पापानि वा ( पापमिवा ); ज्योनि. ८० प्रपावत्.

(४) प्रपा. ३३६ पूर्वार्धे ( दुर्लग्नदुर्निमित्तोत्था दुर्मुहूर्तांशजाश्च ये । ) ; ज्योनि. ७५.

(५) ज्योना. २७।११३–११४ पृ. ५९ चापोप ( वायूप ).

(६) ज्योना. २७।११४–११५ दग्धस ( लग्नस ) नाशमायान्ति ( विलयं यान्ति ) ; प्रपा. ३३८.

(७) ज्योना. २७।११५–११६ पृ. ५९ शुक्रश्चेत् ( शुक्रोऽयं ) सौम्य ( शुभ ) ; प्रपा. ३३८.

[1]त्रिविधोत्पातजान्दोषान् हन्ति केन्द्रगतो गुरुः ।
स्थानादिबलसंपूर्णः पिनाकी त्रिपुरं यथा ॥

[2]लग्नलग्नांशसंभूतान्बलवान्केन्द्रगो गुरुः ।
भस्मीकरोति तान् दोषानिन्धनानीव पावकः ॥

[3]अब्दायनर्तुमासोत्था ये दोषाः पक्षसंभवाः ।
ते सर्वे विलयं यान्ति केन्द्रस्थाने बृहस्पतौ ॥

[4]लग्नलग्नांशनाथौ द्वौ वाऽऽयगौ वाऽपि केन्द्रगौ ।
राशिं निहन्ति दोषाणामिन्धनानीव पावकः ॥

[5]उक्तानुक्ताश्च ये दोषास्तान्निहन्ति बली गुरुः ।
केन्द्रसंस्थः सितो वाऽपि भुजङ्गान्
गरुडो यथा ॥

[6]वर्गोत्तमगते लग्ने सर्वे दोषा लयं ययुः ।
परमाक्षरविज्ञाने कर्माणीव न संशयः ॥

[7]दुःस्थानस्थग्रहकृताः पापखेटसमुद्भवाः ।
ते सर्वे लयमायान्ति केन्द्रस्थाने बृहस्पतौ ॥

[8]उच्चस्थो गुरुरेकोऽपि लग्नगो दोषसंचयम् ।
हन्ति पापान् हरिदिने उपवासव्रतं यथा ॥

(१) ज्योना. २७।११६–११७ पृ. ५९ ; प्रपा. ३३८ जान्दोषान् ( जं दोषं ) संपूर्णः पिनाकी त्रिपुरं ( संपन्न-स्त्रिनेत्रस्त्रिपुरं ).

(२) ज्योना. २७।११८ पृ. ५९ पू. ; प्रपा. ३३६ भस्मीकरोति तान् ( भस्मसात्कुरुते ).

(३) प्रपा. ३३७.

(४) ज्योनि. ८०.

(५) ज्योना. २७।११९ पृ. ५९ भुजङ्गान् ( भुजङ्गं ) ; प्रपा. ३३९ ; ज्योनि. ८० उत्तरार्धे ( केन्द्रत्रिकोणगो वाऽपि शुक्रो विष्णुर्यथाऽसुरान् । ).

(६) ज्योना. २७।१२० पृ. ५९.

(७) ज्योना. २७।१२१ पृ. ५९ ; प्रपा. ३३८ दुःस्थानस्थग्रहकृताः ( दुःस्थानस्था ग्रहाः क्रूराः ) सर्वे लय-मायान्ति ( दोषा विलयं यान्ति ).

(८) ज्योना २७।१२२ पृ. ५९ पापान् ( दोषान् ) ; प्रपा. ३३६.

[1]दोषदुष्टं सदा कालं तं
निमार्ष्टुं न शक्यते ।
अभिधातु ( ? अपि धातुः )रतो न्याय्यं
दोषाल्पत्वं गुणोत्कटम् ॥

[2]परित्यज्य महादोषान् शेषयोर्गुणदोषयोः ।
गुणाधिकः स्वल्पदोषः स कालो मङ्गलप्रदः ॥

## बृहस्पतिः

[3]चन्द्रादित्यौ शुभांशस्थौ बलाढ्यौ
स्वोच्चगौ यदा ।
महादोषसमाख्याता दोषा भङ्गं ययुस्तदा ॥

[4]गुरुः सर्वगुणोपेतो लग्नात्केन्द्रे स्ववर्गगः ।
दोषाणां लक्षहन्ता स्याल्लग्नस्थः सर्वदोषहा ॥
शुक्रो दशसहस्राणि बुधो दशशतानि च ।
लक्षमेकं च दोषाणां गुरुः केन्द्रे व्यपोहति ॥
केन्द्रगो वा त्रिकोणे वा
ज्ञो वा शुक्रोऽथवा गुरुः ।
सर्वदोषान् हरत्येव पापं विष्णोः स्मृतिर्यथा ॥
स्वोच्चे स्ववर्गे सद्भावे
शुभः पापोऽपि वा भवेत् ।
उदितो दोषविच्छेत्ता हरिरेको यथा गजान् ॥
आग्नेयाख्यगृहेष्वेको विक्रमायारिगो बली ।
स्वतुङ्गगः स्ववर्गस्थो दोषसंघविनाशनः ॥
तिथिभग्रहवारादौ ये दोषाश्चोदिताः परैः ।
ते सर्वे नाशमायान्ति जीवशुक्रेक्षणोदये ॥
लग्नाधिपो यदा केन्द्रे लग्नादुपचयेऽथवा ।
शुभो वाऽप्यथ वा क्रूरस्तदा दोषा लयं ययुः ॥
यस्य दोषस्य यः कर्ता स्ववर्गे स्वोच्चगोऽपि वा ।
शुभदृष्टः स एकस्थं ( ? एकस्तं )
दोषं संहरति स्फुटम् ॥

(१) ज्योना. २७।८२–८३ पृ. ५६ ( दोषदुष्टः सदा कालस्तं स्पष्टं च न शक्यते । अपि धातुरतोऽन्यार्थे दोषाल्पत्वं गुणोदयः ॥ ) ; प्रपा. ३३७–३३८.

(२) ज्योना. २७।८३–८४ पृ. ५६ ; प्रपा. ३३८.

(३) प्रपा. ३३७.

(४) ज्योनि. ७९–८०.

[1]यस्य लग्नर्क्षचन्द्रर्क्षौ गुरोः सप्तमपञ्चमौ।
तृतीये वा स दोषाणामपवादविनाशनः॥
यस्य लग्नर्क्षचन्द्रर्क्षाद्रविर्विपदि वा स्थितः।
प्रत्यरे वा वधे वाऽसौ दोषाणामपवादहा॥
यस्य सर्वग्रहाः सन्ति दुःस्थाने गोचरे तथा।
दोषापवादा नश्यन्ति दोषास्तत्र बलाधिकाः॥
[2]दोषाश्च गणिताः सर्वे गुणेभ्यो बलिनः कलौ।
तथापि दोषा नश्यन्ति स्वापवादैर्गुणैरपि॥
दोषा ये स्वापवादैस्तु स्वरूपाभावमाययुः।
यथा पापा ययुः सर्वे प्रायश्चित्तैरभावताम्॥

### माण्डव्यः

[3]ये दोषा ग्रहयोगदृष्टिजनिता
ये मासपक्षोद्भवा
ये जामित्रमुहूर्तवारविहिता
येऽर्कार्किवक्रैः कृताः।
ये चैव ग्रहलत्तयैव विहिता
ये दुष्टलत्तो(?लग्नो)त्थिता-
स्तान् हत्वा शुभदौ सुरासुरगुरू
केन्द्रत्रिकोणस्थितौ॥
लग्नांशदोषा ग्रहजातदोषा
वर्गोद्भवास्तिथ्युडुयोगजाताः।
केन्द्रत्रिकोणेषु सितज्ञजीवै-
र्नश्यन्ति सिंहैरिव नागयूथम्॥
उल्कानिपातपरिवेषशिवाशनीनां
विद्युद्द्विकालघनगर्जितदुर्दिनानाम्।
नीहारवृष्टिकुचलप्रतिभास्कराणां
दोषो विनश्यति सितेज्ययुते विलग्ने॥
उत्पातपातपरिघप्रतिसूर्यबिम्बो-
त्थाकालवृष्टिघनगर्जितमारुतानि।
दिग्धूमदाहपरिवेषकुकम्पचाप-
दोषाः क्षयं ययुरमर्त्यगुरौ विलग्ने॥

(१) प्रपा. ३३९.
(२) प्रपा. ३३७.
(३) ज्योनि. ७९.

### लल्लः

[1]लग्ने गुरुः सौम्ययुगीक्षितो वा
लग्नाधिपो लाभगतो यदा स्यात्।
कालाख्यहोरा तु यदा शुभा चेत्
भवेच्च दोषस्य तदा हि भङ्गः॥

### मुहूर्तचिन्तामणिः

[2]एकार्गलोपग्रहपातलत्ता-
जामित्रकर्तर्युदयास्तदोषाः।
नश्यन्ति चन्द्रार्कबलोपपन्ने
लग्ने यथाऽर्काभ्युदये तु दोषा॥

अथ एकार्गलादिमहादोषाणामुक्तानां लग्नान्तराभावे सति अपवादभूतं साक्षात् वसिष्ठवचनमेवाह— एकार्गलेति। एवंविधा दोषा नश्यन्ति। कदा? विवाहलग्ने, चन्द्रार्कबलं स्वोच्चमित्रादिराशिस्थितत्वरूपं विहितस्थानस्थितत्वं च, तेनोपपन्ने सहिते सति। अत्र दृष्टान्तमाह— यथेति। अर्कस्य सूर्यस्य अभ्युदये दोषा रात्रिः यथा नश्यतीत्यर्थः। गाढान्धकारयुक्ता अपि रात्रिरेकाकिना सूर्यस्योदयेन स्वयमेव नश्यति। अत एव दोषापदं प्रयुक्तम्। निशादिप्रयोगे तु साधारण्येन शुक्लपक्षीयाया अपि रात्रेः संभवाच्चन्द्रेणैव कियत्तमसो निरस्तत्वाद-वशिष्टान्धकारनाशे सूर्यस्यापुरुषार्थत्वापत्तेरिति कैमुतिकन्यायमपि सूचयति दोषापदम्। वसिष्ठवाक्यस्य मन्वादिवाक्यवत् प्रामाण्यान्न संमत्यन्तरापेक्षा। पीटी.

[3]पापौ कर्तरिकारकौ रिपुगृहे
नीचास्तगौ कर्तरी-
दोषो नैव सितेऽरिनीचगृहगे
तत्षष्ठदोषोऽपि न।

(१) ज्योनि. ७९.
(२) मुचि. ६।६८ ; संग. २४० तु दोषा (ऽतिदोषाः) ज्योतिर्निबन्धे.
(३) मुचि. ६।८८–९१.

भौमेऽस्ते रिपुनीचगे न हि भवेद्-
भौमोऽष्टमो दोषकृत्
नीचे नीचनवांशके शशिनि
रिष्फाष्टारिदोषोऽपि न ॥

अथ लग्नभङ्गिकर्तर्यादिमहादोषाणां अपवादं शार्दूलविक्रीडितेनाह— पापाविति । तत्र कर्तर्यपवाद उच्यते । कर्तरीयोगलक्षणं 'लग्नात् पापौ' (६।४४) इत्यादिना उक्तम् । यौ ग्रहौ क्रूरौ कर्तरिकारकौ रिपुगृहे शत्रुगेहे स्थितौ नीचेऽस्तगौ स्वनीचराशिस्थितौ अस्तंगतौ वा तदा कर्तरीदोषो नैव स्यात् । अथ षष्ठशुक्रापवाद उच्यते । सिते शुक्रे अरिनीचगृहगे शत्रुगृहे स्वनीचगृहगे वा सति तत्षष्ठदोषो भृगुषट्कदोषोऽपि न स्यात् । अथ अष्टमभौमदोषापवाद उच्यते । भौमे अस्ते अस्तंगते रिपुनीचगे शत्रुगृहे वा स्वनीचगृहगे वा सति अष्टमो भौमो न दोषकृत् स्यात् । अथ षडष्टद्वादशस्थानचन्द्रापवाद उच्यते । शशिनि चन्द्रे नीचे वा नीचनवांशके वा सति रिष्फाष्टारिदोषोऽपि द्वादशाष्टमशत्रुस्थानस्थितचन्द्रदोषोऽपि न स्यात् । पीटी.

अब्दायनर्तुतिथिमासभपक्षदग्ध-
तिथ्यन्धकाणबधिराङ्गमुखाश्च दोषाः ।
नश्यन्ति विद्गुरुसितेष्विह केन्द्रकोणे
तद्वच्च पापविधुयुक्तनवांशदोषः ॥

अथ विवाहे अब्ददोषाद्यनेकदोषाणामपवादमाह— अब्देति । अब्ददोषः लुप्ताब्दादिः, अयनदोषः दक्षिणायनादिः, ऋतुदोषः वर्षर्त्वादिः, तिथिदोषो रिक्तादिः, मासदोषः, भं नक्षत्रदोषः क्रूरसहितादिः, पक्षदोषः त्रयोदशदिनात्मकादिः, दग्धतिथिः प्रसिद्धा 'चापान्त्यगे' इत्यादिना उक्ता, अन्धकाणबधिराख्यानि अङ्गानि लग्नानि, तन्मुखाः । तदादयोऽन्ये अकालवृष्ट्याद्या दोषाः । विद्गुरुसितेषु केन्द्रकोणे । केन्द्रं सप्तमस्थानरहितं विवक्षितं, जामित्रदोषस्य सत्त्वात् । अत एवोक्तमग्रे 'त्रिकोणे केन्द्रे वा मदनरहिते' इति । कोणे नवपञ्चमे सत्सु नश्यन्ति । तद्वचेति । तथा यदि पापः क्रूरो विधुयुक्तराशेर्नवांशे स्यात् यथा चन्द्रो मेषे सूर्यनवांशः, तदा तत्कृतदोषो नश्यति । पीटी.

केन्द्रे कोणे जीव आये रवौ वा
लग्ने चन्द्रे वाऽपि वर्गोत्तमे वा ।
सर्वे दोषा नाशमायान्ति चन्द्रे
लाभे तद्वद्दुर्मुहूर्तांशदोषाः ॥

अथोक्तानुक्तदोषाणां बहूनपरिहारानाह— केन्द्र इति । केन्द्रे कोणे । केन्द्रं प्रसिद्धम् । कोणं नवपञ्चमम् । तत्र च जीवो गुरुः स्यात्तदा सर्वे दोषा नाशमायान्ति । उपलक्षणत्वाद्बुधशुक्रावपि । तत्राऽपि लग्नाख्यकेन्द्रस्यातिबलत्वात्तत्र स्थितो जीवः सर्वारिष्टहरः । अथवा आये एकादशे रवौ सति दोषनाशः । अथवा लग्ने वर्गोत्तमे स्वनवांशयुक्ते । यथा मिथुने मिथुनांशश्चेत्तदा दोषनाशः । अथवा चन्द्रे वर्गोत्तमे स्वनवांशस्थिते वा सति दोषनाशः । द्वितीयवाशब्दस्य अनुक्तसमुच्चयार्थत्वाच्चन्द्रो लग्नादुपचयस्थाने चेत्स्यात्तदाऽपि सर्वदोषनाशः । एवं क्रमेण परिहारत्रयमुक्तम् । चन्द्रे इति । तद्वत्तेनैव प्रकारेण दुर्मुहूर्ताः 'रवावर्यमा' इत्यादयः, अंशदोषाः पापग्रहनवांशाख्याः ते सर्वे चन्द्रे लाभे एकादशस्थानस्थिते सति नाशमायान्ति । पीटी.

त्रिकोणे केन्द्रे वा मदनरहिते दोषशतकं
हरेत्सौम्यः शुक्रो द्विगुणमपि लक्षं सुरगुरुः ।
भवेदाये केन्द्रेऽङ्गप उत लवेशो यदि तदा
समूहं दोषाणां दहन इव तूलं शमयति ॥

अथैवं विशिष्यदोषाभिधानपूर्वकं विशेषपरिहारानभिधायेदानीं सामान्यतो दोषसमुदायस्यैकपरिहारमाह— त्रिकोण इति । त्रिकोणे९।५, केन्द्रे सप्तमरहिते १।४। १० यदि सौम्यो बुधस्तिष्ठेत्तदा दोषशतकं हरेत् । उक्तस्थानस्थितः शुक्रोऽपि द्विगुणं दोषशतकं दोषद्विशतं हरेत् । तथोक्तस्थानस्थितो गुरुरपि लक्षं दोषान् हरेत् । अत्र शतशब्देनानेकसंख्या विवक्षिता भवेदिति । अङ्गपः लग्नस्वामी । उतशब्दो वार्थे । लवेशो लग्नगतांशनाथो वा आये केन्द्रे यदा भवेत्तदा सः दोषाणां समूहं शमयति । तत्र दृष्टान्तः— दहनः अग्निः तूलं कार्पासमिव शमयति । पीटी.

## अनिर्दिष्टकर्तृकवचनानि

[1]वर्गोत्तमगते लग्ने ये दोषा लग्नसंभवाः ।
ते सर्वे विलयं यान्ति ग्रीष्मे कुसरितो यथा ॥
लग्नांशे लग्नसंयुक्ते शुभांशे शुभवीक्षिते ।
समागतः शुभः सौम्यैर्दोषो नश्येत्स्वभावतः ॥
[2]केन्द्रत्रिकोणगाः सौम्याः स्ववर्गस्था बलान्विताः ।
नाशयन्ति तदा दोषान् गृहरश्मिसमुत्थितान् ? ॥
मासशून्याह्वयास्तारा राशयो वा विषाह्वयाः ।
स्वामिजीवबुधैर्दृष्टा युता वा नैव दोषदाः ॥
केन्द्रत्रिकोणयोः सौम्यो बलवांश्च स्ववर्गगः ।
मासशून्यकृतं दोषं राशिशून्यं विनाशयेत् ॥
दग्धमृत्युसमाख्याश्च होरास्वामिदशायुताः ।
बलवद्गुरुदृष्टा वा युता वा नैव दोषदाः ॥
अर्के स्वर्क्षे च तुङ्गस्थे शुभग्रहनिरीक्षिते ।
भूमिकम्पादयः सूर्यदोषा भङ्गं ययुस्तदा ॥
शुभयोगेऽर्कवारेण नक्षत्रे सहिते सदा ।
योगा धूमादयः पञ्च भङ्गं गच्छन्ति दोषदाः ॥
भास्कराङ्गारकौ स्वोच्चस्ववर्गस्थौ शुभेक्षितौ ।
कण्टकस्थूणनामाऽपि दोषो गच्छति भग्नताम् ॥
बुधे स्वतुङ्गे वर्गे वा शुभग्रहनिरीक्षिते ।
महाकण्टकनामाऽयं दोषो गच्छति भङ्गताम् ॥

(१) प्रपा. ३३६.
(२) प्रपा. ३३८.

[1]न सकलगुणसंपल्लभ्यतेऽल्पैरहोभि-
र्बहुतरगुणयोगं योजयेन्मङ्गलेषु ।
प्रभवति न हि दोषो भूरिभावे गुणानां
सलिललव इवाग्नौ संप्रदीप्तेन्धने वा
गुणशतमपि दोषः कश्चिदेको विरुद्धः
क्षपयति यदि नान्यस्तद्विरोधी गुणोऽस्ति ।
घटमिव परिपूर्णं पञ्चगव्यस्य शक्त्या
मलिनयति सुराया बिन्दुरेकोऽपि सर्वम् ॥

[2]सामान्येनोदिता दोषा भङ्गास्तेषां तु तद्विदैः ।
यदि ते बलहीनाश्चेत्प्रध्वंसाभावतां ययुः ॥

जन्मर्क्षाज्जन्मलग्नर्क्षादपवादकरो ग्रहः ।
तत्काले यदि दुःस्थाने दोषभङ्गक्षमो न सः ॥

[3]स्वकर्मर्क्षाल्लग्नादुपचयगता यद्यशुभदा-
स्तदा पापैर्युक्तं निखिलमशुभं नैव समियात् ।
अनिष्टस्थानस्थैर्दिवसपतिना सद्भिरथवा
विनश्यन्त्यत्रोक्ता विषकुलिकदोषाः शुभफलाः ॥

यस्य दोषस्य यः कर्ता स्ववर्गस्थोच्चगो यदि ।
शुभदृष्टः स एवास्य भङ्गं दोषस्य यच्छति ॥

(१) विसौ. ५२.
(२) ज्योनि. ८०.
(३) प्रपा. ३४०-३४१.

# विवाहलग्नजन्मलग्नकालीनग्रहबलाबलविचारः

## वसिष्ठः

[1]मृत्युर्नैःस्व्यं बहुविधधनं
भ्रातृहानिः प्रजानां
व्याधिः सौख्यं बहुविधमतो
भर्तृहानिश्चिरायुः ।
श्रेयोहानिर्भवति हृदय-
व्याधिरर्थागमश्च
भानौ स्त्रीणामतिशयरुजा
लग्नभावादिसंस्थे ॥

[2]नाशः संपद्बहुविधयशो
बन्धुसंपत्प्रजाप्तिः
शस्त्रान्मृत्युर्भवति नचिरा-
द्दीर्घसापत्न्यबाधा ।
प्रव्रज्यात्वं दुहितृजननं
वैभवं भोगभाक्त्वं
दास्यं स्त्रीणां तुहिनकिरणे
लग्नभावादिसंस्थे ॥

[3]मृत्युः शोको बहुविधधनं
भ्रातृवैरं कुबुद्धि-
र्लक्ष्मीप्राप्तिर्भवति मरणं
चोभयोर्वंशनाशः ।
स्त्रीणां द्वेषो व्यसननिरतिः
पुत्रपौत्रार्थसिद्धि-
र्भीतिर्भूमेर्बलिनि तनये
लग्नभावादिसंस्थे ॥

[1]प्रीतिर्वृद्धिः सुगुणनिरतिर्बन्धुपूजा सुताप्ति-
र्निर्वैपक्ष्यं तनयरहितत्वं तनुत्यागचिन्ता ।
धर्मे बुद्धिर्भवति धरणीलाभमत्यन्तवृद्धि-
र्हानिः स्त्रीणां हिमकरसुते लग्नभावादिसंस्थे ॥

[2]लक्ष्मीप्राप्तिर्भवति सुयशः प्रीतिरन्योन्यवृद्धि-
रिष्टावाप्तिर्बहुविधभयं चाश्रमाणां विरक्तिः ।
पापासक्तिः सुकृतनिरतिर्भूरिलाभः सुरेज्ये
स्त्रीणां सौख्यं रिपुकृतभयं लग्नभावादिसंस्थे ॥

[3]भोगप्राप्तिर्विविधविभवः
स्वैरवृत्तिर्महत्त्वं
धर्माधिक्यं भवति निधनं
सर्वनाशो व्यसुत्वम् ।
युद्धप्रीतिर्बहुविधगुणः
सर्वसंपत्समृद्धि-
र्निःस्वं स्त्रीणामुशनसि तथा
लग्नभावादिसंस्थे ॥

---

(१) **वसं.** ३२।१४५ नैःस्व्यं (नैःस्वं) हृदय (हृदये); **प्रपा.** ३३९ सौख्यं बहुविधमतो (मान्यैरतिशयधनं); **विसौ.** ४५; **ज्योनि.** १५४ गमश्च (गमत्वं) शेषं प्रपावत्.

(२) **वसं.** ३२।१४६ बन्धुसंपत् (बन्धुवृद्धिः) प्रव्रज्यात्वं (प्रव्रज्यत्वं) जननं वैभवं (जनितात्वं धनं); **प्रपा.** ३३९ प्रव्रज्यात्वं (प्रव्रज्यत्वं); **विसौ.** ४५ बन्धुसंपत् (बन्धुवृद्धिः) वैभवं (वर्धनं); **ज्योनि.** १५४ बन्धुसंपत् (बन्धुवृद्धिः) जननं वैभवं (जनितृत्वं धनं).

(३) **वसं.** ३२।१४७ वंश (वित्त) द्वेषो (द्वेष्यं); **प्रपा.** ३३९ द्वेषो (द्वेषं); **विसौ.** ४५; **ज्योनि.** १५५.

(१) **वसं.** ३२।१४८; **प्रपा.** ३३९ तनय (विनय); **विसौ.** ४५ तनुत्यागचिन्ता (तथा भर्तृनाशः) लाभम (लब्धिर); **ज्योनि.** १५५ प्रीतिर्वृद्धिः (प्रीतिबुद्धिः).

(२) **वसं.** ३२।१४९; **प्रपा.** ३३९ रिष्टा (रर्था); **विसौ.** ४५; **ज्योनि.** १५५.

(३) **वसं.** ३२।१५० युद्धप्रीति (तथ्ये प्रीति) निःस्वं (रस्वं) तथा (तदा); **प्रपा.** ३३९–३४० वृत्ति (वृद्धि); **विसौ.** ४५ युद्धप्रीति (तीर्थप्रीति) निःस्वं (रस्वं); **ज्योनि.** १५५ धर्माधिक्यं (द्युम्नाधिक्यं) व्यसुत्वम् (व्ययोत्वम्) युद्धप्रीति (तथ्यप्रीति) निःस्वं (रस्वं).

[1]स्वच्छन्दत्वं कदशनरतिर्वल्लभत्वं विशील्यं
व्याधिः सुश्रीर्मृतिरथ सुखं गर्भपातप्रवृत्तिः ।
द्यूतासक्तिर्भवति रविजे वैभवं वक्त्ररोगः
स्वर्भानौ वा शिखिनि च तथा लग्नभावादिसंस्थे ॥

[2]सर्वे जामित्रसंस्था विदधति मरणं
सौरिसूर्यौ प्रशस्तौ
षष्ठाष्टत्र्यायसंस्थौ भवरिपुसहज-
स्थोऽपि भौमः शशाङ्कः ।
लग्नान्त्याष्टारिवर्ज्यः परिणयनविधौ
ज्ञोऽन्त्यमृत्युर्विवर्ज्य
शुक्रेज्यौ वा सुतायास्पदनवमगतौ
भ्रातृशुक्रोऽपि नेष्टः ॥

[3]लग्नस्थाः शुभखचराः
कुर्वन्ति विवाहितां सुपुत्रवतीम् ।
सप्तभिरब्दैः क्रूरा-
श्चन्द्रश्च विलग्नगो विधवाम् ॥

[4]धनसौख्यवतीं सुभगां
धनगाः सौम्यग्रहाः सचन्द्राश्च ।
क्रूरा द्वितीयसंस्था
धनहीनां वत्सरैस्त्रिभिः कन्याम् ॥

[5]विलिताः सचन्द्रसौम्या-
स्तृतीयगा वित्तसौख्यवतीम् ।
पापास्तृतीयसंस्थाः
सततं सौभाग्यपुत्रवतीम् ॥

[1]बन्धुस्थाश्चन्द्रयुताः
शुभखचरा भर्तृवल्लभां साध्वीम् ।
अशुभाश्चतुर्थसंस्था
दुःशीलां दुर्भगां च कुर्वन्ति ॥
[2]तनयगताः सेन्दुशुभा
बहुतनयां मानिनीं सुशीलवतीम् ।
अशुभखगास्तनयगता
विपुत्रवतीं वा विवादशीलवतीम् ॥
[3]सप्तभिरब्दैर्विधवां
शशिशुक्रौ षष्ठगौ कुरुतः ।
सततं पापासक्तां
ज्ञेज्यौ पापाः प्रभूतशीलवतीम् ॥
[4]सप्तमगाः सकलखगा
सप्तभिरब्दैः ससप्तमासैश्च ।
दम्पत्योः सह मरणं
यमरक्षितमपि च कुर्वन्ति ॥
[5]अष्टमगौ शशिभौमौ
धनरहितां तां च पञ्चभिर्वर्षैः ।
शुभखचराः कापटिका-
मितरे साध्वीं चिरंजीवीम् ॥
[6]नवमगताः शुभखचराः
शशिसहिता भोगभाग्यसौख्यवतीम् ।
अशुभखगाः खलचित्तां
परनिरतां पापवादिनीं चैव ॥

(१) वसं. ३२।१५१; प्रपा. ३४० विशील्यं (विशीलं) रविजे (विरहो) शिखिनि च तथा (ग्रहविमुशिशौ) दिसंस्थ (दिकेषु); विसौ. ४५ च तथा (यदि वा); ज्योनि. १५५ विशील्यं (विशीलं).

(२) वसं. ३२।१५२.

(३) वसं. ३२।१५३; विसौ. ४९.

(४) वसं. ३२।१५४; विसौ. ४९ धनहीनां वत्सरै (धनरहितामब्दकै).

(५) वसं. ३२।१५५; विसौ. ४९ पू.

(१) वसं. ३२।१५६; विसौ. ४९ भर्तृ (बन्धु).

(२) वसं. ३२।१५७; विसौ. ४९ विपुत्रवतीं वा विवाद (विपुत्रसौख्यां विवाद).

(३) वसं. ३२।१५८; विसौ. ४९.

(४) वसं, ३२।१५९; विसौ. ४९ ससप्तमासैश्च (विपन्नसौभाग्याम्) यमरक्षितमपि (पापा वित्तं सुखं ?).

(५) वसं. ३२।१६०; विसौ. ४९ उत्तरार्धं (शुभखचरा नवमगताः कापटिका शीलहीना च ।).

(६) वसं. ३२।१६१; विसौ. ४९ भोगभाग्यसौख्यवतीम् (भाग्यभोगवतीम्) परनिरतां पापवादिनीं (परनरगां पूर्वादिनीं ?).

[1]दशमगताः शुभखेटाः
शशिसहिता भर्तृपूजितां साध्वीम् ।
अशुभखगाः प्रतिकूलां
मलिनाङ्गीं कर्कशां मृषाऽभिरताम् ॥

[2]लाभगता निखिलखगा
बहुविधधनधान्यपुत्रपौत्रवतीम् ।
पतिभक्तां शीलवतीं
न नीचगास्तारिराशिगाश्च तथा ॥

[3]व्ययगो दुग्धाब्धिभवः
करोति विधवां च पञ्चभिर्वर्षैः ।
मानविहीनां सौम्याः
पापाः कुर्वन्ति नीचवृत्तवतीम् ॥

[4]सत्खचराः सदसच्च
स्थानस्वशुभफलान्यफलम् (?) ।
सम्यग्ज्ञात्वाऽथ तयोः
शुभफलमधिकं प्रगृह्णीयात् ॥

तत्राधिकफलवृन्दे
विनाशमायाति दोषचयम् ।
यद्वच्छशाङ्ककिरणे
कलङ्कमखिलं तथैव सदा ॥

देशे च काले च तथा शरीरे
राज्येऽपि चाऽऽपद्यपि यत्र यत्र ।
भावान्तरं तत्परिकल्पनीयं
गान्धर्ववैवाहचतुष्टयार्थम् ॥

लग्ने भावाश्चोदितास्तेषु तिष्ठन्
लग्नस्थः संस्तानतीतो द्वितीयः ।
खेटैस्त्वेवं शेषराशीषु शेषा
भावाः सम्यक्कल्पनीयाः क्रमेण ॥

[1]स्वनीचगाः शत्रुगृहस्थिताश्च
तदंशगाश्चास्तमिता ग्रहेन्द्राः ।
दातुं न शक्ताः स्वफलं विलग्ने
दष्टुं भुजङ्गा इव मन्त्रविद्धाः ॥

[2]मरणं साहसं तीव्रं दास्यं दौःशील्यमेव च ।
चन्द्रयोगे ग्रहाः कुर्युः रविरक्तार्किभार्गवाः ॥

नैपुण्यं कुलपूज्यत्वं पौंश्चल्यं व्याधिमेव च
बुधजीवयुताः कुर्युः कर्तुश्चैव यथाक्रमात् ॥

द्वाभ्यां त्रिभिश्चतुर्भिर्वा दारुणैः सहितः पुनः ।
दारिद्र्यं मरणं वाऽपि कन्यायाः कुरुते ध्रुवम् ॥

व्रजत्यन्त्यजने नारी गैरिकाम्बरभूषिता ।
विदेशं वा व्रजेद्यत्र सौम्यैश्चैव युतः शशी ॥

ब्राह्मणं कुरुते जारं शुक्रजीवसमागमे ।
जीवभास्करयोः स्नातं व्रतस्थं कुरुते पतिम् ॥

देवेशसौम्ययोर्योगे त्यक्त्वा बन्धून् पतिं तथा ।
करोति तस्करं जारं कन्या नैवात्र संशयः ॥

विलग्नांशः स्वनाथेन यद्युद्वाहे न दृश्यते ।
पुंविनाशस्ततोऽत्रांशे यद्येवं योषितस्ततः ॥

दशमतृतीये नवपञ्चमे चतुर्थाष्टमे कलत्रे च ।
पश्यन्ति पादवृद्ध्या फलानि चैव प्रयच्छन्ति ॥

## नारदः

[3]त्रिषडायगताः पापाः षष्ठाष्टमकुजो वधूम् ।
कुर्वन्त्यायुर्धनारोग्यपुत्रपौत्रसमन्विताम् ॥

त्रिकोणकेन्द्रखत्र्याये शुभं कुर्वन्ति खेचराः ।
द्यूनकेन्द्रभगः शुक्रं हित्वा पुत्रधनान्विताम् ॥

[4]धनत्रिबन्धुतनयधर्मखायेषु चन्द्रमाः ।
करोति सुतसौभाग्यभोगयुक्तां विवाहिताम् ॥

---

(१) वसं. ३२।१६२ ; विसौ. ४९ शुभखेटाः शशिसहिता (शशिसहिताः शुभखेटाः)।

(२) वसं. ३२।१६३ ; विसौ. ४९ बहुविधधनधान्यपुत्रपौत्रवतीम् (बहुधनधान्यार्थपुत्रवतीम्) शीलवतीं (शीलयुतां) गाश्च तथा (गाः खेटाः)।

(३) वसं. ३२।१६४ ; विसौ. ४९.

(४) वसं. ३२।१६५–१६८.

(१) वसं. ३२।१३४.

(२) चका. ७९३–७९४.

(३) ज्योना. २७।१००–१०२ पृ. ५८.

(४) ज्योना. २७।१०२-१०३ पृ. ५८ तनयधर्मखायेषु (तनया धर्मज्ञायेषु) ; ज्योनि. १५४ तनयधर्मखायेषु (तनयाधर्माज्ञायेषु)।

[1]अस्तगा नीचगाः शत्रुराशिगाश्च पराजिताः ।
न शक्तास्ते फलं दातुं दानमश्रोत्रिये यथा ॥

## बृहस्पतिः

[2]पातालाम्बरपञ्चमे द्विनवमे लग्ने च सौम्यग्रहाः
क्रूराः षष्ठगतः शशी धनगतः सर्वे त्रिरेकादशे ।
जामित्रे ग्रहवर्जिते न च भृगुः षष्ठे कुजश्चाष्टमे
षष्ठाष्टान्त्यशशी विवाहसमये शेषेषु ते शोभनाः ॥

[3]अनिष्टस्थानस्थोऽप्यतिशुभद एवाशुभगतः
शुभांशस्थः सौम्योदितबलदृशा वा हिततनुः ।
तदानीं चन्द्रोऽतिप्रथितशुभकृच्चेद्बलयुतः
स्वतुङ्गस्वर्क्षस्थो यदि शुभकरः किं पुनरयम् ॥

ग्रहाः सर्वे लग्नादशुभगदितस्थानसहिताः
स्वतुङ्गे वा स्वर्क्षे यदि समियुरुत्कृष्टबलिनः ।
तदा तेनैवास्मिन्कथितमखिलं दद्युरशुभं
भवे युक्ताः प्रोक्तं शुभमतितरां दद्युरखिलम् ॥

एवमुक्तेषु ग्रहयोगेषु सत्सु दृष्टिविशेषेण स्थानविशेषेण ग्रहयोगविशेषेण चन्द्रकर्मविशेषेण च पूर्वोक्तशुभाशुभफलमन्यथा भवतीत्युच्यते । तत्र बृहस्पतिः–अनिष्टस्थानस्थ इति । प्रपा, ३४०

[4]जीवेन शुक्रेण बुधेन वा युता
होरा बलाढ्या शुभकर्मणीन्दोः ।
तेष्वेव नीचारिगृहांशकादि-
स्थितेषु दोषाय बलक्षयाय ॥

## वृद्धगर्गः

[5]समीक्ष्य जातकं यत्नादानुकूल्यं ययोर्भवेत् ।
तयोर्विवाहं कुर्वीतान्यथाऽसौ दोषभाग्भवेत् ॥

(१) ज्योना. २७।१०३–१०४ पृ. ५८ ; प्रपा. ३४१ (=) न शक्तास्ते फलं (अशक्ताः स्वफलं).
(२) प्रपा. ३३९.
(३) प्रपा. ३४०.
(४) प्रपा. ३४१.
(५) विसौ. ३३–३४.

लग्नादियोगजा दोषा दम्पत्योर्नाशहेतवः ।
तत्पापभागी पित्रादिरतो योगान्विचिन्तयेत् ॥

कन्यायाः सप्तमं लग्नाद्बलवत्पापवीक्षितम् ।
बलवत्पापयुक्तं च पतिघ्नं वत्सराष्टकम् (१ के)॥

अस्तगो यदि कन्याया भौमो वा शनिरेव च ।
वत्सरान्ते पतिं हन्यादुभौ चेदतिनिश्चयात् ॥

सप्तमो यदि सौरश्चेद्बलवद्बुधवीक्षितः ।
वर्षत्रयात्पतिं हन्यादथवा वत्सरद्वयात् ॥

लग्नजामित्रयोः शत्रुः सप्तमो यदि तिष्ठति ।
तच्छत्रुवीक्षणाद्वाऽपि नारीसौभाग्यहानिदः ॥

पापेन युक्तो दृष्टो वा क्रूरश्चन्द्रोऽस्तगो यदि ।
बाल्ये वैधव्यकर्तृत्वाद्वर्जनीयः प्रयत्नतः ॥

कन्यायाः सप्तमाधीशो
नीचो वाऽस्तंगतोऽपि वा ।
पराजितो वा यस्येशो नास्मै देया मृतिर्यतः ॥

कन्याया अष्टमस्थाने यः कश्चित्पापखेचरः ।
तत्तद्धातूद्भवो रोगस्तत्पतेः स्यादिति ध्रुवम् ॥

एतेषां परिहारस्तु जीवः स्याद्बुधशुक्रयोः ।
बलसंयुक्तयोर्योगो दृष्टिर्वा कथिता बुधैः ॥

सप्तमाष्टमयोरीशौ प्रोक्तर्क्षे प्रबलौ यदि ।
गुरुज्ञवीक्षितौ वाऽपि सर्वारिष्टनिबर्हणौ ॥

लग्नायभ्रातृजामित्रस्थानेषु बलवान् गुरुः ।
यदि सा बहुपुत्राढ्या धनसौभाग्यसंयुता ॥

एवमेव वरस्यापि ग्रहयोगादि चिन्तयेत् ।
वाच्यं शुभाशुभं तद्वत्कन्यकाविषयं च तत् ॥

स्वजातकोक्तमार्गेण समालोक्य शुभाशुभम् ।
गृह्णीत शुभयुक्तां तां कुलद्वितयपावनीम् ॥

## वात्स्यः

[1]जामित्रनाथे शत्रुस्थे कन्योढा पतिवैरिणी ।
श्वश्रूश्वशुरयोः शुक्रसूर्यौ चेच्छत्रुभाषितौ ॥

(१) विसौ. ५२.

## वात्स्यायनः

[1]रविणा चन्द्रयुक्तेन नारी वैधव्यमाप्नुयात् ।
भौमेन ह्रियते चौरैः शुक्रे पापं समाचरेत् ॥
रहस्यनिपुणा सौम्ये त्यक्तलज्जा रतिप्रिया ।
पतिमन्यं व्रजेत्क्षिप्रं केतुसंदर्शनाश्रिते ॥
[2]गुरुश्चन्द्रश्च जामित्रे तिष्ठेद्यदि बलान्वितः ।
धनसौभाग्यपुत्रांश्च लभते नात्र संशयः ॥
[3]मणिमुक्ताप्रवालैश्च सुवर्णाभरणैः शुभैः ।
शोभतेऽनुमता शिष्टा गुरुणा यदि वीक्ष्यते ॥
[4]सा तु भर्तुः प्रिया नित्यं बुधे चन्द्रेऽथ सप्तमे ।
आदित्येन तु वैधव्यं महादारिद्र्यमेव च ॥
[5]दृष्टे चन्द्रे च भौमे च
न कुर्याद्यामिशासनम् ( ? ) ।
वन्ध्या वा मृतवत्सा वा शनैश्चरनिरीक्षिते ॥
[6]क्रूरेण युक्तोऽथ विलोकितो वा
शुभप्रदश्चापि शशी विवाहे ।
न तुष्टिमुत्पादयितुं समर्थो
दारा यथाऽन्धस्य सुदर्शनीयाः ॥

## शौनकः

[7]लग्नेशे ( ? ग्नस्थे )ऽर्के कन्या
विधवा संवत्सरेऽष्टमे भवति ।
सकलकनकादियुक्ता षष्ठेऽब्दे निर्धना धनगे ॥
बन्धुजनेभ्यः पूजां त्रिंशद्वर्षाणि सहजगे त्वर्के ।
बन्धुवियुक्ता कन्या यावज्जीवं हिबुकसंस्थे ॥

पञ्चमभावस्थरवौ
त्रयोदशेऽब्दे त्वपत्यसंयोगम् ।
प्राप्नोति धनं षष्ठे त्र्यब्दादूर्ध्वं सुतांश्चैव ॥
संवत्सरेण विधवां सप्तमराशौ दिवाकरः कुरुते ।
दम्पत्योः सहमरणं निधनस्थेऽर्केऽष्टसप्तत्या ॥
* नवमे त्वधर्मयुक्ता
त्र्यब्दादूर्ध्वं तथाऽऽयगः सविता ।
संवत्सरे व्यतीते वामाङ्गरुजा व्ययस्थेऽर्के ॥
लग्नस्थे हिमरश्मौ मृत्युं कुर्यात्त्रयोदशे मासे ।
अब्दाद्धनसौभाग्यं करोति चन्द्रो धने नार्याः ॥
चन्द्रस्तृतीयराशौ सौभाग्यकरस्तु यावदायुष्यम् ।
बन्धुश्वशुरवियुक्तां चतुर्थसंस्थः शशी कुरुते ॥
अब्दादेकं तनयं ततः परं न प्रसूयते सुतगे ।
अब्दचतुष्कान्मृत्युर्दम्पत्योः षष्ठगे चन्द्रे ॥
कन्यास्तिस्रो जनयति
सापत्न्यं चैव सप्तमे शशिनि ।
मासत्रयेण विधवां निधनस्थश्चन्द्रमाः कुरुते ॥
जनयित्वा षट्पुत्रा-
न्नवमस्थे शशिनि सप्तमं पुत्रम् ।
भुक्त्वैवं दश वाऽष्टौ
दशमस्थे त्यजति तां कन्याम् ॥
लग्नादेकादशगः कन्यामिन्दुर्धनान्वितां कुरुते ।
उद्धृत्य खादति धनं
चन्द्रे व्ययसंस्थिते कन्या ॥
भौमः सद्यो विधवां
लग्नस्थोऽब्देन सौम्यदृग्योगात् ।
दशरात्रादग्निभयं
द्वितीयगेऽब्दान्नृपभयं च ॥

---

( १ ) चका. ७९२–७९३.
( २ ) चका. ७९३ ; विसौ. ३२.
( ३ ) चका. ७९३ ; विसौ. ३२–३३ उत्तरार्धे (शोभिता तु सदा तिष्ठेद्गुरुणाऽपि निरीक्षिते ।).
( ४ ) चका. ७९३ ; विसौ. ३३ चन्द्रेऽथ ( चन्द्रस्य ) पू.
( ५ ) चका. ७९३.
( ६ ) विसौ. ३३.
( ७ ) विसौ. ४६–४८.

* श्लोकोऽयं व्याकुलः, दशमभावफलस्यासंग्रहात्, 'आयगः सविता' इति प्रथमाया अनन्वयाच्च । 'कारयति धनविवृद्धिं त्र्यब्दादूर्ध्वं तथाऽऽयगः सविता' इत्येतावन्मात्रं पीयूषधारायामुद्धृतम् । ( मुचि. ६।८७ )

सहजस्थे भूमिसुते
सौभाग्यकरस्तु यावदायुष्यम् ।
बन्धुजनविप्रयोगं
हिबुकस्थोऽङ्गारकोऽब्देन ॥
भौमः पञ्चमराशौ
व्यवस्थितः पुत्रवर्जितां कुरुते ।
संवत्सरेण विपुलं
धनागमं शत्रुसंस्थस्तु ॥
जामित्रगतः कन्या-
मुपपातकभागिनीं कुरुते ।
भौमस्त्रयोदशाब्दा-
न्निधनस्थः पुत्रवर्जितां कुरुते ॥
त्र्यब्दात्पतिविभ्रष्टां
नवमस्थोऽङ्गारकः परामिरताम् ।
कन्यामधिगततत्त्वां दशमस्थः पञ्चभिर्वर्षैः ॥
मणिकाञ्चनरत्नाढ्या-
मेकादशगः कुजोऽब्दषट्केन ।
हानिं मासत्रितयात्करोति महतीं व्यये भौमः ॥
लग्नस्थः शशितनयः
सौभाग्यसुखप्रदो भवत्यचिरात् ।
पश्यति सुतात्सुतानपि द्वितीयगे चन्द्रपुत्रे तु ॥
पत्युः सहोदराणां
सहजस्थोऽतिप्रियां बुधः कुरुते । *
सप्तमगः सप्ताब्दा-
द्भर्तारमरिन्दमं भजति कन्या ॥
मासत्रयेण कन्या
निधनस्थे ज्ञे याति पञ्चत्वम् ।
एकादशभिर्वर्षै-
र्नवमस्थस्तपसि संस्थितां कुरुते ॥
कन्यामद्भुतकुहकां दशमस्थो वर्षविंशत्या ।
सौभाग्ययुतां कन्यां
बहुप्रजामायगः करोति बुधः ॥

* चतुर्थपञ्चमषष्ठस्थानफलवचनानि आदर्शपुस्तके न सन्ति ।

व्ययगस्त्वेवं कन्यां प्रव्रजितां द्वादशे वर्षे ।
लग्नस्थे देवगुरौ मनोरमां सुप्रजां प्रियां भर्तुः ॥
धनगे गुरौ धनाढ्या
मृतमप्यनुयाति भर्तारम् ।
बन्धुश्वशुरकुलानां
धनहानिः स्यात्तृतीयगे मासात् ॥
बन्धुजनस्य तु पूज्यां कन्यामब्देन हिबुकस्थः ।
जनयत्यष्टौ पुत्रान्
पञ्चमराशौ व्यवस्थितो जीवः ॥
उभयकुलानन्दकरीं करोति नचिराद्गुरुः षष्ठे ।
शीलचरित्रोपेतां
करोति पत्युः कलत्रगोऽद्वेष्याम् ॥
दम्पत्योर्निधनस्थः सप्तदशाब्दाद्वियोगकरः ।
पितृदेवतार्चनरतामत्यन्तपतिप्रियां गुरुर्नवमः ॥
दशमो गुरुः कुलस्त्री-
योगं संपन्नमङ्गलां वाऽपि ।
श्वशुरपतिसहोदराणा-
मतिप्रियामायगो गुरुः कुरुते ॥
शौचाचारभ्रष्टामधर्मयुक्तां गुरुर्व्ययगः ।
लग्नस्थेनोशनसा
दुर्लभमाप्नोति चैकपत्नीत्वम् ॥
धन्या धनगे शुक्रे कृपणत्वं प्राप्नुयान्नारी ।
दुश्चिक्यगते कन्या
त्र्यब्दाद्भर्तुः कनीयसा(?सो) भजते ॥
हिबुकस्थेऽब्दचतुष्काद्बान्धवगोत्रार्थलाभकरी ।
बहुपुत्रां नाल्पधनां पञ्चमगो भार्गवः कुरुते ॥
दम्पत्योर्वैरकरः षष्ठस्तु भवेत्त्रिभिर्वर्षैः ।
जामित्रगतोऽवश्यं
त्र्यब्दाददतिदुर्भगां करोति भृगुपुत्रः ॥
पञ्चत्वं नयति भृगुर्निधनस्थः सप्तभिर्वर्षैः ।
नवमस्थः षण्मासा-
त्सौभाग्यसुखप्रदो भवत्युशना ॥
वर्षद्वयेन दशमः कुलसुतधनभोगवृद्धिकरः ।
आयगतो दशरात्रा-
त्सौभाग्यसुखप्रदो विनिर्दिष्टः ॥

व्ययगः स एव दुष्टः सौभाग्यसुखार्थधर्महरः ।
कामयति नीचवर्णान्
लग्नस्थे रविसुते बहून् पुरुषान् ॥
धनगे धनैर्विमुक्ता पञ्चभिरब्दैर्विवर्णतनुः ।
धनधान्यपुत्रयुक्तां पञ्चमसंवत्सरात्तृतीयस्थः ॥
अल्पयशस्कां कन्यां प्रसवत्रितयं हिबुकसंस्थः ।
एकादशभिर्वर्षैस्त्रिकोणगोऽर्किः करोति हृद्रोगम् ॥
षष्ठः षड्भिर्मासैरसपत्नीं कन्यकां कुरुते ।
सप्तमगे कन्यायाः पतति गर्भस्त्वनेकशोऽर्कसुते ॥
निधनगतार्किः कुर्यादामययुक्तां वियुक्ताङ्गीम् ।
उपवासव्रतनियमै-
र्विवर्जितां नवमगः करोति शनिः ॥
पापां कर्मणि दशमे (?मः)
षष्ठेऽब्दे कन्यकां धनैर्युक्ताम् ।
आयगतोऽर्किः कन्यां
त्रिवर्गयोग्यां करोति षण्मासात् ॥
सोमकुलेऽपि हि जातां द्वादशगो मद्यपां कुरुते ।
शनिवद्विधुन्तुदस्य तु विज्ञेयं सदसदतिविज्ञैः ॥
प्रश्नोद्वाहविलग्ना-
च्छुभाशुभं कन्यकासु निर्देश्यम् ॥
अधिरिपुनां वार्क्षगता (?)
भावफलं घ्नन्ति शत्रुसंदृष्टाः ।
कालादिबलसमृद्धास्तद्वेव संवर्धयन्त्याशु ॥
[1]उदयनवांशः पुंसां तद्वत्स्त्रीणां स्वनाथसंदृष्टः ।
सर्वाणि हन्त्यरिष्टान्यकालमृत्युं विनाशयति ॥
लग्नेन्दू वरराशौ
केन्द्रस्थायायिनौ यदा बलिनः (?) ।
योषिद्ग्रहसंदृष्टे पतिद्वयं प्राप्नुयान्नारी ॥
क्रूरग्रहसंदृष्टे
युग्मस्थे शशिनि भजति पतिमन्यम् ।
स्त्रीणामन्यत्रगते सौम्यैर्दृष्टे शुभं भवति ॥

(१) विसौ. ४८-४९.

सूर्यार्किकेतुपातै-
र्विद्धे चन्द्रे विलग्नराशौ वा ।
क्रूरनवांशे विग्रहमन्योन्यं भवति दम्पत्योः ॥
पुरुषग्रहैस्तु बलिभिः
स्त्रीणामतिवल्लभः पुमान्भवति ।
योषिद्ग्रहैस्तु वनिता सर्वैरन्योन्यसंभोग्यम् ॥
लग्नपतौ रिपुभवने
नीचैर्वा गुरुसितार्करजनिकरैः ।
बलरहिते द्यूने वा स्त्रीणां न भवन्त्यपत्यानि ॥
एकोऽपि राजमहिषीं
कुरुते स्वोच्चस्थितः सुदृष्टः ।
उपचयगः परिणयने संयुक्तो वाऽधिमित्रेण ॥
[1]सूर्यचन्द्रार्किभूपुत्रा लग्नस्था विषमुच्यते ।
सप्तमाष्टमगाः सौम्याः क्रूरा लग्नव्ययोपगाः ॥
निधनस्थो यदा चन्द्रो योगोऽयमशुभो भवेत् ।
पापैर्वा खेचरैरन्यैर्यदि चेन्दुः समन्वितः ॥
न दातव्यं प्रयत्नेन लग्नं राहुयुतं ध्रुवम् ॥

## वराहमिहिरः

[2]मूर्तौ करोति विधवां दिनकृत्कुजश्च
राहुर्विपन्नतनयां रविजो दरिद्राम् ।
शुक्रः शशाङ्कतनयश्च गुरुश्च साध्वी-
मायुःक्षयं च कुरुतेऽथ विभावरीशः ॥
कुर्वन्ति भास्करशनैश्चरराहुभौमा
दारिद्र्यदुःखमतुलं नियतं द्वितीये ।
वित्तेश्वरीमविधवां गुरुशुक्रसौम्या
नारीं प्रभूततनयां कुरुते शशाङ्कः ॥
सूर्येन्दुभौमगुरुशुक्रबुधास्तृतीये
कुर्युः सदा बहुसुतां धनभागिनीं च ।
व्यक्तं दिवाकरसुतः सुभगां करोति
मृत्युं ददाति नियतं खलु सैंहिकेयः ॥

(१) विसौ. ५०.

(२) संप्र. ७९९ ; संग. २४७-२४८.

स्वल्पं पयः स्रवति सूर्यसुते चतुर्थे
दौर्भाग्यमुष्णकिरणः कुरुते शशी च ।
राहुः सपत्नमपि च क्षितिजोऽल्पवित्तां
दद्याद्भृगुः सुरगुरुश्च बुधश्च सौख्यम् ॥

[1]नष्टात्मजां रविकुजौ खलु पञ्चमस्थौ
चन्द्रात्मजो बहुसुतां गुरुभार्गवौ च ।
राहुर्ददाति मरणं शनिरुग्ररोगान्
कन्याप्रसूतिमचिरात्कुरुते शशाङ्कः ॥

[2]षष्ठाश्रिताः शनिदिवाकरराहुजीवाः
कुर्युः कुजश्च सुभगां श्वशुरेषु भक्ताम् ।
चन्द्रः करोति विधवामुशना दरिद्रा-
मृद्धां शशाङ्कतनयः कलहप्रियां च ॥

[3]सौर्यारजीवबुधराहुरवीन्दुशुक्रा
दद्युः प्रसह्य खलु सप्तमराशिसंस्थाः ।
वैधव्यबन्धनवधक्षयवित्तनाशं
व्याधिप्रवासमरणानि यथाक्रमेण ॥

स्थानेऽष्टमे गुरुबुधौ नियतं नियोगं
मृत्युं शशी भृगुसुतश्च तथैव राहुः ।
सूर्यः करोत्यविधवां सरुजां महीजः
सूर्यात्मजो धनवतीं पतिवल्लभां च ॥

[4]धर्मे स्थिता भृगुदिवाकरभूमिपुत्रा
जीवश्च धर्मनिरतां शशिजस्त्वरोगाम् ।
राहुश्च सूर्यतनयश्च करोति वन्ध्यां
कन्याप्रसूतिमटनं कुरुते शशाङ्कः ॥

(१) संप्र. ७९९–८०० प्रसूति ( विनाश ); संग. २४८ संप्रवत्. 'प्रसूतिम्' इति बृहत्संहितापाठः.

(२) संप्र. ८०० मृद्धां ( मस्यां ); संग. २४८ संप्रवत्. 'ऋद्धां' इति बृहत्संहितापाठः.

(३) संप्र. ८०० वध ( कुल ); संग. २४८ संप्रवत्. 'वध' इति बृहत्संहितापाठः.

(४) संप्र. ८०० जस्त्वरोगां ( जः सरोगां ) वन्ध्याम् ( वन्धं ) मटनं ( जठरां ); संग. २४८ जस्त्वरोगां ( जः सरोगां ) मटनं ( जठरां ). बृहत्संहितापाठः.

[1]राहुर्नभस्तलगतो विधवां करोति
पापे रतां दिनकरश्च शनैश्चरश्च ।
मृत्युं कुजोऽर्थरहितां कुलटां च चन्द्रः
शेषा ग्रहा धनवतीं सुभगां च कुर्युः ॥
आये रविर्बहुसुतां सधनां च चन्द्रः
पुत्रान्वितां क्षितिसुतो रविजो
धनाढ्याम् ।
आयुष्मतीं सुरगुरुः शशिजः समृद्धां
राहुः करोत्यविधवां भृगुरर्थयुक्ताम् ॥
[2]अन्ते गुरुर्धनवतीं दिनकृद्दरिद्रां
चन्द्रो धनव्ययकरीं कुलटां च राहुः ।
साध्वीं भृगुः शशिसुतो बहुपुत्रपौत्रां
पानप्रसक्तहृदयां रविजः कुजश्च ॥
[3]क्रूरेऽष्टमे विधवता निधनेश्वरोंऽशे
यस्य स्थितो वयसि तस्य समे प्रदिष्टा ।
सत्स्वर्थगेषु मरणं स्वयमेव तस्याः
कन्यालिगोहरिषु चाल्पसुतत्वमिन्दौ ॥
पापेऽस्ते नवमगतग्रहस्य तुल्यां
प्रव्रज्यां युवतिरुपैत्यसंशयेन ।
उद्वाहे वरणविधौ प्रदानकाले
चिन्तायामपि सकलं विधेयमेतत् ॥
[4]नन्दो भद्रो जीवो
जीमूतः स्थावरो जयो विजयः ।
व्यालो रसातलमुखः
क्षयस्तमोऽन्यः कृतान्तश्च ॥
सौम्ये लग्ने नन्दः
शुक्रे भद्रस्तथा गुरौ जीवः ।
आद्यान्त्यौ जीमूतः
स्थावर इति मध्यमान्त्याभ्याम् ॥

(१) संप्र. ८००–८०१ ; संग. २४९.

(२) संप्र. ८०१ धनव्यय ( धनक्षय ) पानप्रसक्तहृदयां ( यां च प्रशस्तहृदयां ); संग. २४९ संप्रवत्. बृहत्संहितापाठः.

(३) संग. १८६ ( बृहज्जातकम् २४।१४,१६ ).

(४) विसौ. ५१–५२.

बुधशुक्राभ्यां तु जयः
सर्वैर्विजयो भवत्युदयसंस्थैः ।
दिनकरयोगाद्व्यालो
भौमेन रसातलः क्षयः शनिना ॥
तमसा तमो निरुक्तो
भवति हि केतौ कृतान्तश्च ॥
त्रिषु नन्दादिषु राज्ञी
चतुर्षु वाऽतः परं महादेवी ।
व्यालाद्येषु च पञ्चसु
विधवा शोच्या दरिद्रा च ॥
ऊढा तदैव कन्या
देवीनाम समाप्नुयादचिरात् ।
भवति च नरेन्द्रजननी
भर्तुः प्राणप्रिया नन्दे ॥
भद्रे पाणिग्रहणं
यदि नाम कुमारिका समुपयाति ।
सा त्वचिरान्नृपशब्दं
करोति भर्तुः कुलस्यापि ॥
परिणीता जीवाख्ये
कन्या विजयाय कीर्तिता भर्तुः ।
प्राप्नोति सा त्रिवर्गं
कुलद्वयं साऽपि नन्दयति ॥
जीमूते परिणीता
विपुलान् भोगान् महाफलान् भुक्त्वा ।
दृष्ट्वा च पुत्रपौत्रान्
सह भर्त्रा याति सुरलोकम् ॥
स्थावरयोगे कन्या
परिग्रहमेति विपुलमैश्वर्यम् ।
आवहति सदा कन्या
निषेव्यमाणा सपत्नीभिः ॥
विजये वाऽथोद्वाहं
प्राप्नोति सुतान् यशोऽर्थलाभं वा ।
वंशस्य च प्रतिष्ठां
परतः पतिनैति सुरलोकम् ॥

जययोगे परिणीता भर्तुः प्राणप्रिया भवति ।
सुतवित्तसौख्यशीलैः संयुक्ता धर्मनिरता वा ॥
व्याले व्यालाकरा (?)
पाणिग्रहमेत्य कन्यका दैवात् ।
दारिद्र्यदुःखयुक्ता
नैकस्मिन् पुंसि सा रमते ॥
पातालनाम्नि गदिता
पाणिग्रहणेऽर्धपञ्चमान् मासान् ।
संप्राप्य दोषमतुलं
परतः प्राणान् परित्यजति ॥
क्षयमासाद्योद्वाहे
कन्या वर्षद्वयात्पतिं हत्वा ।
नीचेन तु सह भर्त्रा
दहति च जाराग्निना गोत्रम् ॥
पाणिग्रहस्तमसि चेल्लग्ने गुणतोऽतिसंपन्ने ।
अब्दात्क्षपयति वंशं यद्यपि जाता सुरेन्द्रेण ॥
यदि खलु कृतान्तयोगे
परिणयमायाति कन्यका दैवात् ।
स्वस्वसुतबन्धुवर्गं
क्षपयत्यचिरेण कालेन ॥
सप्तैतान् शशियोगान्
मतिमान् संचिन्त्य सर्वभावेषु ।
बलवत्स्वबलेषु तदा
युञ्जीतान्यत्र तु विवाहात् ॥

सर्वभावेषु आधानोपनयनाद्येषु । एते सप्त नन्दादियोगाः चन्द्रेण संयोगे उपनयनादौ प्राशस्त्यमावेदयन्ति न तु विवाहे इत्युत्पलः । विसौ. ५२

गुरुसितयोरुच्चगयो-
रेकतमे वा विलग्नगे कन्या ।
राज्ञी भवति नचिरादेवं गुरुसौम्ययोश्चोढा ॥

विवाहकाले गुरुशुक्रयोरुच्चगयोः यत्रतत्रावस्थाने एको योगः । अनयोर्मध्ये एकतरे उच्चगृहे लग्नवर्तिनि द्वितीयो योगः । एवं गुरुबुधयोरपि ज्ञेयमित्युत्पलः । विसौ. ५२

### लल्लः

[1]सौम्यास्त्रिकोणकेन्द्रस्थानानुगा यदा बलिनः ।
योषिद्ग्रहसंदृष्टाः पतिद्वयं याति सा नारी ॥
इष्टा भवति बन्धूनां भर्तुः श्रेष्ठा तथैव च ।
ब्रह्मणि स्थिरचित्ता च शशाङ्के स्थिरराशिके ॥
क्रूरग्रहसंदृष्टे युग्मस्थे शशिनि याति पतिमन्यम् ।
स्त्रीणामन्यत्र गते सौम्यैर्दृष्टे शुभं भवति ॥

### श्रीधरीये

[2]क्रूरांशकाः क्रूरसमागताश्च
क्रूरेक्षिताः क्रूरफला भवन्ति ।
नीचारिगा मूढगता विलग्ने
शुभग्रहा अप्यशुभप्रदाः स्युः ॥
सौम्यग्रहसंयुक्तः क्रूरोऽपि च सौम्यतामेति ।
सौम्योऽपि क्रूरयुतः क्रूरो भवतीति शास्त्रविदः ॥
तथैव बलहीनस्य वर्गं क्रूरग्रहस्य तु ।
योजयेत्कार्यसिद्ध्यर्थं लग्नं सर्वत्र शुध्यति ॥

### महेश्वरः

[3]राह्वर्केन्दुकुजैर्मृतिस्तनुगतैः
सौम्यैश्च केन्द्रस्थितै-
श्चन्द्रेणाष्टरिपुस्थितेन रविणा
जामित्रसंस्थेन वा ।
लग्नाच्छीतकराद्ग्रहा द्युनगता
नेष्टा विवाहे स्मृताः
कैश्चित्त्वाद्यनवांशकादिषु शरै-
स्तुल्ये नवांशे स्थिताः ॥

[4]लग्नस्योदितभागगस्तनुफलं
धत्ते ग्रहो योऽतिग-
स्तान् भागान् स भवेद्द्वितीय इतरे-
ष्वेवं स्मृता कल्पना ॥

(१) विसौ ५–६.
(२) प्रपा. ३४१.
(३) विसौ. ४९.
(४) विसौ. ५०.

### त्रिविक्रमः

[1]त्याज्या लग्नेऽब्धयो मन्दा-
त्षष्ठे शुक्रेन्दुलग्नपाः ।
रन्ध्रे चन्द्रादयः पञ्च
सर्वेऽस्तेऽब्जगुरू समौ ॥

### नृसिंहः

[2]लग्नस्था गुरुशुक्रज्ञाः शुभाः शेषा विनाशदाः ।
पापा द्वितीये न शुभाः सौम्याः सर्वे सुखावहाः ॥
तृतीयस्थानगाः सर्वे सर्वसौख्यप्रदाः सदा ।
जीवज्ञशुक्रास्तोयस्थाः शुभाः शेषा मृतिप्रदाः ॥
पापाः सुतस्था न शुभाः सौम्याः सर्वे शुभप्रदाः ।
षष्ठे पापग्रहाः श्रेष्ठाः सर्वे दुःखप्रदाः शुभाः ॥
सर्वे सप्तमराशिस्था विशेषेण विवर्जिताः ।
मन्दज्ञार्काः शुभा रन्ध्रे शेषाः सर्वे मृतिप्रदाः ॥
धर्मस्था ज्ञार्किभौमाश्च निन्द्याः शेषाः शुभावहाः ।
नभःस्था जीवशुक्रज्ञाः शुभाः शेषा मृतिप्रदाः ॥
आयस्थानगताः सर्वे विशेषेण शुभप्रदाः ।
व्ययस्थाः शुक्रजीवज्ञाः शुभाः शेषा व्ययप्रदाः ॥
अशुभस्य गृहे चन्द्रस्तस्य निन्द्यतमो भवेत् ।
अशुभास्ते शुभाः प्रोक्ताः स्वोच्चमित्रस्ववर्गगाः ॥

### विवाहपटले

[3]यथाऽमृतीयत्युदितप्रयोगा-
द्विषं विषीयत्यमृतं च तद्वत् ।
स्वभाववीर्यं परिहृत्य तस्माद्
ग्रहाः फलं योगभवं भजन्ते ॥
तस्माद्विवाहे यात्राया-
मादेशे जातके तथा ।
ग्रहयोगफलं वाच्यं
शेषमन्यद्विनिष्फलम् ॥

(१) विसौ. ४९.
(२) प्रपा. ३३९.
(३) विसौ. ५०–५१.

श्रीवत्सशङ्खध्वजचक्रवापी-
खण्डेन्दुकूर्मा मुसलं धनुश्च ।
आनन्दसंज्ञः परशुर्गजश्च
प्रोवाच योगानिति वामदेवः ॥

लाभेऽर्कभौमौ रिपुगोऽर्कसूनुः
श्रीवत्सयोगो यदि वित्त इन्दुः ।
सौम्यास्तपस्येव विवाहिता स्त्री
सुतार्थकल्याणकरी च पत्युः ॥

पातालधर्माम्बरसंस्थितेषु
सौम्येषु योगस्त्विह शङ्खनामा ।
स्यादत्र नारी सुभगा सुखाढ्या
विवाहिता स्यात्सुखशालिनी च ॥

मूर्तिस्थितेषु ध्वजमाहुराद्याः
सौम्येषु पापेष्वथ नैधनर्क्षे ।
सौख्यत्रिवर्गप्रतिपत्तियुक्ता
कुलद्वयानन्दविधायिनी स्यात् ॥

अदृश्यदृश्यार्धगतैर्विलग्ना-
दसौम्यसौम्यैः क्रमशस्तु चक्रम् ।
चद्राच कन्येह विवाहिता स्त्री
भवत्यवश्यं विटवृन्दसक्ता ॥

केन्द्रैरसद्भिः क्रमशो निरुद्धै-
र्वापी विलग्नादमृतद्युतेर्वा ।
ऊढाऽत्र नारी पितृवेश्मसक्ता
पत्युः पिता दुःखमतीव धत्ते ॥

बालेन्दुरायारितृतीयगेषु
भास्वन्महीनन्दनसूर्यजेषु ।
स्वबन्धुदत्तार्थचयैः पतिं स्वं
प्रीणाति साध्वीह वधूः सुभाग्या ॥

धनव्ययस्थौ शनितिग्मरश्मी
मृतौ शशी भूमिसुतः सुतस्थः ।
कूर्मस्तदाऽस्मिन् विसुखाऽनपत्या
विवाहिता स्याद्विधवा च नारी ॥

भौमः सुतस्थोऽर्कसुतो व्ययस्थ-
श्छिद्रे शशी स्यान्मुसलं तदानीम् ।
विवाहयात्रागृहसंनिवेशान्
कुर्वन्नवाप्नोति वधं सबन्धम् ॥

क्रूरेषु वित्तव्ययगेषु लग्नात्
धनुर्भवेत्सत्सु मूर्तिस्थितेषु ।
ऊढा भवेद्वारविलासिनी स्यात्
विषेण वाऽस्त्रेण पतिं निहन्यात् ॥

कन्याख्यलग्नात्सहजे यदीन्दु-
मृगास्यसंस्थौ सितवाक्पती चेत् ।
आनन्दयोगस्तदिह (? गोऽत्र वधूः) स्वभर्तु-
रानन्दकर्त्री स्वपितुस्तथोढा ॥

सितार्कमन्देष्वरिरिःफबन्धु-
स्थितेषु योगः परशुः प्रदिष्टः ।
विवाहिता स्त्री श्रयतीह वैरं
स्वभर्तृवंशार्तिदमन्यसक्तिम् ॥

धर्मव्ययप्रागुदयस्थितेषु
जीवोशनःसोमसुतेषु* हस्ती ।
स्त्रीभोगकर्तुर्मदमत्तकुम्भ-
भृङ्गावलीदन्तिघटां विधत्ते ॥

## विवाहवृन्दावनम्

[1]अरिपराक्रमलाभविनाशगो
रविरविश्रमसौख्यसुतार्थदः ।
मदनमूर्तिशयः शयसंग्रहे
मृगदृशामशनिः शनिराहुवत् ॥

तत्र ग्रहाणां शुभाशुभस्थानानि कथयति— अरीति । मृगदृशां स्त्रीणां शयसंग्रहे पाणिग्रहणे अरिपराक्रमलाभविनाशगः षष्ठतृतीयैकादशाष्टमस्थानस्थः रविः अविश्रमसौख्यसुतार्थदः अनायाससुखपुत्रधनप्रदः स्यात् । तथा मदनमूर्तिशयः सप्तमलग्नयोर्गतः अशनिः वज्रमिव घातकः स्यात् । किंवत् ? शनिराहुवत्, शनिराहू यद्वदेषु

---

* विवाहवृन्दावनापेक्षयेदं मतान्तरं वा 'जीवे शनौ सोमसुते तु' इति वा शुद्धिः कल्पनीया ।

(१) विवृ. ५।१ ; विसौ. ४९ अरि (पर).

स्थानेषु तद्वदित्यर्थः । अर्थात् शनिराह्वोरपि रवितुल्यमेव फलं स्यात् । केतुफलमपि राहुवज्ज्ञेयम् । लक्ष्मी.

[1]त्रिधनलाभसुखेषु शुभः शशी
निधनमूर्तिरिपुष्वतिगर्हितः ।
अशुभशुक्रसखः स खनत्यसून्
दिनकरोनकरो न करोति शम् ॥

त्रिधनलाभसुखेषु स्थितः शशी शुभः स्यात् । निधनमूर्तिरिपुषु अष्टमलग्नषष्ठेषु स शशी अतिगर्हितः अत्यन्तदुष्टः स्यात् । शेषस्थानेषु सामान्यगर्हितः इत्यर्थात् सिध्यति । तथा स चन्द्रः अशुभशुक्रसखः अशुभशुक्राभ्यां सहितः असून् प्राणान् खनति नाशयति । तथा दिनकरोनकरः दिनकरेण ऊनाः कराः यस्य सः सूर्येण सहास्तमितः शं सुखं न करोति । लक्ष्मी.

[2]अवनिजस्त्रिभवारिषु वृद्धये
मृतिकरो मृतिमूर्तिमदाश्रितः ।
इह नभोयुजि जीवदृशं विना
च्युतनया तनयामिषभुग्वधूः ॥

अवनिजः मङ्गलः त्रिभवारिषु वृद्धये भवति, तथा मृतिमूर्तिमदाश्रितः मृतिकरो भवति । इह अस्मिन् मङ्गले नभोयुजि दशमस्थानस्थे सति जीवदृशं गुरुदृष्टिं विना वधूः स्त्री च्युतनया नीतिरहिता तनयामिषभुक् संतानघातिनी भवतीत्यर्थः । जीवदृष्टिश्चेत्तदा शुभफलं स्यादित्यर्थात् सिध्यति । लक्ष्मी.

व्ययगृहं विरहय्य हिमांशुजः
सकलवेश्मसु वेश्मसुतार्थदः ।
स नियतं विदधाति वधूवरं
यमकरे मकरेङ्गितमृत्युगः ॥

हिमांशुजः बुधः व्ययगृहं विरहय्य त्यक्त्वा सकलवेश्मसु वेश्मसुतार्थदः स्यात् । स बुधः मकरेङ्गितमृत्युगः सप्तमाष्टमस्थानस्थितः वधूवरं नियतं यमकरे विदधाति मृत्युं प्रापयतीत्यर्थः । लक्ष्मी.

गुरुरनन्त्यमदेषु मुदं श्रियं
सृजति कालगृहे गृहभङ्गदः ।
अशुभकृन्मकरेऽपि करग्रहे
न मृगराजगतो जगतो हितः ॥

गुरुः विवाहे अनन्त्यमदेषु द्वादशसप्तमरहितेषु स्थानेषु स्थितः मुदं हर्षं श्रियं संपत्तिं च सृजति करोति । कालगृहे अष्टमस्थाने स्थितः गृहभङ्गदः गृहं भार्या, तद्विनाशको भवतीत्यर्थः । मकरे अपि स्थितो गुरुः अशुभकृत्स्यात् । मृगराजगतः सिंहस्थितः गुरुः जगतः संसारस्य हितो न भवति । लक्ष्मी.

सहसपत्ननिमीलनमन्मथे
प्रथमदेवगुरुर्गुरुभीतिकृत् ।
वहति शेषगृहेषु महोत्सवं
व्ययगतः समतां स मतान्तरात् ॥

प्रथमदेवगुरुः शुक्रः सहसपत्ननिमीलनमन्मथे स्थितः गुरुभीतिकृत् महाभयकारकः स्यात् । शेषगृहेषु महोत्सवं वहति ददाति । मतान्तरात् व्ययगतः द्वादशस्थः स शुक्रः समतां वहति शुभाशुभं न ददातीत्यर्थः । लक्ष्मी.

[1]द्युमणिजीवलवोदयशासिना-
मुडुपतेरिति पञ्चबलीं विना ।
परिणमन्ति फलानि चलभ्रुवां
फलविरिञ्चि विरिञ्चिकृतान्यपि ॥

ग्रहबलेषु केषां बलानामावश्यकतेत्याह– द्युमणीति । द्युमणिजीवलवोदयशासिनां रविगुरुनवांशेशलग्नेशानां उडुपतेः चन्द्रस्य च इति पञ्चबलीं विना चलभ्रुवां स्त्रीणां विरिञ्चिकृतानि ब्रह्मलिखितानि अपि फलानि फलविरिञ्चि शुभरहितानि परिणमन्ति । लक्ष्मी.

व्ययगृहं बुधभार्गवजीवयुग्
यदि न तत्कुलमित्रजनेष्वपि ।
कृपणता नरनीरजनेत्रयो-
रिति न शक्रमते क्रमते मतिः ॥

---

(१) विवृ. ५।२ ; विसौ. ४९ मुखेषु ( गृहेषु ).
(२) विवृ. ५।३–६ ; विसौ. ४९–५०.

(१) विवृ. ५।१०–११.

इन्द्रमतेन द्वादशस्थबुधगुरुशुक्राणां फलं कथयति— व्ययगृहमिति। व्ययगृहं द्वादशस्थानं यदि बुधभार्गवजीवयुक् न भवेत्तदा नरनीरजनेत्रयोः वरकन्ययोः तत्कुलमित्रजनेषु तयोर्वधूवरयोः कुलेषु मित्रजनेषु च कृपणता स्यात् इति शक्रमते इन्द्रवचने मतिः अस्माकं बुद्धिः न क्रमते न चलतीत्यर्थः। लक्ष्मी.

[1]चक्रस्यार्धे प्राचि पश्चात्क्रमेण
क्रूराक्रूरैश्चक्रमित्यामनन्ति।
अत्रोढायाः सुभ्रुवः स्वैरिणीत्वे
भ्राम्यत्युच्चैश्चक्रवच्चित्तवृत्तिः॥

तत्राऽऽदौ चक्रयोगं तत्फलं चाह— चक्रस्येति। चक्रस्य राशिमण्डलस्य प्राचि पश्चादर्धे क्रमेण क्रूराक्रूरैः चक्रं चक्रनामयोगं ( १ गः ) इति आमनन्ति, आचार्या इति शेषः। दशमभावमारभ्य चतुर्थभावपर्यन्तं चक्रस्य पूर्वार्धम्, चतुर्थाच्च दशमपर्यन्तं पश्चिमार्धम्, तत्र क्रमेण पापशुभैः स्थितैः चक्रनामयोगो भवतीत्यर्थः। अत्र अस्मिन् योगे ऊढाया विवाहितायाः सुभ्रुवः कन्यायाः चित्तवृत्तिः स्वैरिणीत्वे पुंश्चलीत्वविषये उच्चैः चक्रवत् भ्राम्यति, सा स्त्री पुंश्चली भवतीत्यर्थः। लक्ष्मी.

[2]तनुनिमीलनगैश्च शुभाशुभै-
र्ध्वज इतीह कृतोद्वहना वधूः।
सगुणलाभवती भवतीङ्गितैः
प्रियमनोयमनोन्मुखविभ्रमा॥

शुभाशुभैः क्रमेण तनुनिमीलनगैः लग्नाष्टमस्थितैः ध्वज इति योगो भवति। इह अस्मिन् ध्वजयोगे कृतोद्वहना वधूः सगुणलाभवती भवति। तथा च इङ्गितैः स्वचेष्टितैः प्रियमनोयमनोन्मुखविभ्रमा प्रियस्य स्वामिनो मनः प्रियमनः, तस्य यमनं आकर्षणं, तत्रोन्मुखो विभ्रमो विलासो यस्याः सा तथोक्ता भवति। लक्ष्मी.

अखिलकेन्द्रसखैः खलखेचरै-
र्भवति वापिरिहार्पितपुंस्करा।
युवतिरुज्झितकान्तगृहा गृहे
जनयितुः कुरुते कुरतोत्सवान्॥

अखिलकेन्द्रसखैः खलखेचरैः सर्वेषु केन्द्रेषु स्थितैः पापग्रहैः वापिः वापिनामयोगो भवति। इह अस्मिन् योगे अर्पितपुंस्करा अर्पितः पुंसे करो यया सा तथोक्ता युवतिः उज्झितकान्तगृहा त्यक्तपतिभवना सती जनयितुः पितुः गृहे कुरतोत्सवान् कुरुते। लक्ष्मी.

गगनतोयतपःसु शुभैर्भृगु-
र्गदति शङ्खमशं स्खलयत्यसौ।
धनयशोनयशोभितनुश्रियां
परिणयेन पयोरुहचक्षुषाम्॥

गगनतोयतपःसु दशमचतुर्थनवमेषु शुभैः शुभग्रहैः सद्भिः भृगुः मुनिः शङ्खं शङ्खनामयोगं गदति। असौ योगः धनयशोनयशोभितनुश्रियां धनयशोनयैः शोभिनी तनुः ( १ तनुश्रीः ) यासां ताः धनयशोनयशोभितनुश्रियः, तासां तथोक्तानां पयोरुहचक्षुषां कमलनेत्राणां स्त्रीणां अशं दुःखं स्खलयति निराकरोति। लक्ष्मी.

एकादशे कुजरवी रविजः सपत्ने
वित्ते विधुस्तपसि शेषनभश्चराश्चेत्।
श्रीवत्स एष सुखयत्यपि रूपरिक्तां
सौभाग्यभोगभरभङ्गितरङ्गिताङ्गीम्॥

एकादशे कुजरवी, सपत्ने षष्ठे रविजः, वित्ते द्वितीये विधुः, तपसि नवमे शेषनभश्चराश्चेत् तदा श्रीवत्सो नाम योगः स्यात्। एष योगः रूपरिक्तां रूपहीनां अपि सौभाग्यभोगभरभङ्गितरङ्गिताङ्गीं सौभाग्यभोगस्य भरः भारः, तस्य भङ्गी रचना, तया तरङ्गितानि अङ्गानि यस्यास्तां तथोक्तां स्त्रियं सुखयति। लक्ष्मी.

सौम्या मूर्तौ स्वान्तराद्योरसौम्याः
कुर्युर्योगं कार्मुकं कन्यकाऽस्मिन्।
हत्वा कान्तं कान्तवेषा विषाद्यै-
र्वेश्यारामं रंरमीति स्वरत्या॥

( १ ) विवृ. ११।१ ; विसौ. ५०.
( २ ) विवृ. ११।२–१२.

मूर्तौ लग्ने सौम्याः शुभग्रहाः, स्वान्तराश्योः द्वितीयद्वादशभावयोः असौम्याः पापग्रहाः कार्मुकं योगं कुर्युः। अस्मिन् कार्मुकयोगे विवाहिता कन्यका कान्तवेषा मनोहरस्वरूपा विषाद्यैः विषशस्त्रादिभिः कान्तं स्वामिनं हत्वा वेश्यारामं वेश्यां रमयतीति वेश्यारामस्तं वेश्यागामिनं पुरुषं रंरमीति अतिशयेन रमयतीत्यर्थः।

सूनौ शुक्रः साङ्गिरा गौररश्मि-
दुश्चिक्ये स्यादङ्गनाभ्युद्गमश्चेत्।
आनन्दोऽयं सुन्दरी सान्द्रसौख्या
तेनाऽऽनन्दं वंशयोर्विस्तृणाति॥

सूनौ पञ्चमभावे शुक्रः, दुश्चिक्ये तृतीये साङ्गिरा* गौररश्मिः सगुरुश्चन्द्रः, चेत् अङ्गनाभ्युद्गमः कन्यालग्नं, तदाऽयं आनन्दो नाम योगः स्यात्। तेन योगेन सुन्दरी सान्द्रसौख्या सती वंशयोः आनन्दं विस्तृणाति विस्तारयति। लक्ष्मी.

व्ययरिपुहिबुकेषु वक्रशुक्र-
द्युमणिसुतैः क्रमशः कुठार एषः।
इह विहरति संहृतस्ववंशा
विटपटले पटलेखिताभिसारा॥

वक्रशुक्रद्युमणिसुतैः क्रमशः व्ययरिपुहिबुकेषु स्थितैः एषः कुठारः कुठाराख्ययोगः स्यात्। इह अस्मिन्कुठारयोगे विवाहिता कन्या संहृतस्ववंशा संहृतो नाशितः स्ववंशो यया सा तथोक्ता पटलेखिताभिसारा पटे वस्त्राञ्चले लेखितोऽभिसारो यस्याः सा तथोक्ता सती विटपटले जारसमूहे विहरति क्रीडते। लक्ष्मी.

रविकविरविजेन्दुभिः क्रमेण
व्ययधनषण्निधनेषु कूर्म एषः।
इह विहितकरग्रहा गृहाणि
भ्रमति भुजिष्यतया परःशतानि॥

रविकविरविजेन्दुभिः क्रमेण व्ययधनषण्निधनेषु स्थितैः एष कूर्मः कूर्मनामा योगः स्यात्। इह अस्मिन् योगे विहितकरग्रहा कृतविवाहा भुजिष्यतया भुजिष्यायाः परिचारिकायाः भावो भुजिष्यता, तया परःशतानि शतेभ्योऽधिकानि गृहाणि भ्रमति। लक्ष्मी.

भवपरिभवविक्रमैः क्रमेण
द्युमणिमहीसुतसौरिभिः सनाथैः।
परिणमति दलेन्दुरिन्दुमुख्याः
कुलयुगलोद्धृतिधुर्यतां विधास्यन्॥

भवपरिभवविक्रमैः एकादशषष्ठतृतीयैः क्रमेण द्युमणिमहीसुतसौरिभिः सनाथैः सहितैः इन्दुमुख्याः चन्द्रवदनायाः कन्यायाः कुलयुगलोद्धृतिधुर्यतां विधास्यन् करिष्यन् दलेन्दुः अर्धचन्द्रयोगः परिणमति भवतीत्यर्थः। लक्ष्मी.

व्ययनिधनतनूषु मन्दचन्द्रा-
रुणकिरणैर्मुसलं जगुर्मुनीन्द्राः।
इह वृष्णिकुलान्तके कुमारी
कुलमारी न च काऽपि कार्यसिद्धिः॥

व्ययनिधनतनूषु क्रमेण मन्दचन्द्रारुणकिरणैः स्थितैः मुनीन्द्राः मुसलं योगं जगुः। इह अस्मिन् वृष्णिकुलान्तके मुसले योगे विवाहिता कुमारी कुलमारी कुलनाशिनी भवति। तथा च काऽपि कार्यसिद्धिर्न भवति। लक्ष्मी.

तनुनवभवगैः क्रमेण योगो
बुधविबुधार्चितपङ्गुभिर्गजः स्यात्।
इह युवतिरहंकृता कृतार्थान्
वितरति दैवतदैवतत्परा वा॥

बुधविबुधार्चितपङ्गुभिः क्रमेण तनुनवभवगैः लग्ननवमैकादशस्थैः गजः गजाख्यो योगः स्यात्। इह अस्मिन् योगे विवाहिता युवतिः स्त्री अहंकृता अहङ्कारयुक्ता सती कृतार्थान् उपार्जितार्थान् वितरति ददाति, वा दैवतदैवतत्परा दैवतानि देवाः, दैवं भाग्यं, तत्परा भवति। लक्ष्मी.

---

* वस्तुतस्तु 'कन्याख्यलग्नात्सहजे यदीन्दुर्मृगास्यसंस्थौ सितवाक्पती चेत्' इति विवाहपटलवाक्यसंवादात् 'साङ्गिराः' इति पूर्वान्वयि।

[1]चिरञ्जीवां जीवः कविरविरलानङ्गसुभगां
शशाङ्कोर्वीपुत्रौ यमयुवतिपार्श्वप्रणयिनीम् ।
बुधो भर्तुर्भक्तां मृगदृशमशीलां शनिरपि
त्रयीमूर्तिर्मूर्तौ सृजति शिखिशस्त्रादिनिधनाम् ॥

मूर्तौ लग्ने जीवो गुरुः मृगदृशं स्त्रियं चिरञ्जीवां सृजति करोति । कविः शुक्रः अविरलानङ्गसुभगां अविरलेनानङ्गेन कामेन सुभगां सौभाग्यवतीं सृजति । शशाङ्कोर्वीपुत्रौ चन्द्रभौमौ यमयुवतिपार्श्वप्रणयिनीं यमगृहगामिनीं सृजतः । बुधो भर्तुः स्वामिनो भक्तां सृजति । शनिः अशीलां शीलरहितां सृजति । त्रयीमूर्तिः सूर्यः मूर्तौ लग्ने स्थितः शिखिशस्त्रादिनिधनां शिखिना अग्निना, शस्त्रादिना च निधनं यस्यास्तां तथोक्तां सृजति करोति । लक्ष्मी.

नितान्तधनिनीं धने सितसितांशुजीवेन्दुजा
रुजादहनदस्युभिर्विधुरितां धरानन्दनः ।
सुतेष्वपि मितम्पचां मलिनमूर्तिमर्कात्मजः
स्त्रियं सहजदुर्भगां जनयति द्युतीनां पतिः ॥

अथ द्वितीयभावगतग्रहाणां फलानि– नितान्तेति । धने द्वितीयभावे सितसितांशुजीवेन्दुजाः स्त्रियं विवाहितां कन्यां नितान्तधनिनीं अतिधनवतीं जनयन्ति । धरानन्दनः मङ्गलः रुजादहनदस्युभिर्विधुरितां दुःखितां जनयति । अर्कात्मजः शनिः सुतेषु आत्मजेषु अपि मितम्पचां कृपणां मलिनमूर्तिं जनयति । द्युतीनां पतिः सूर्यः सहजदुर्भगां स्वभावदुर्भगां जनयति । लक्ष्मी.

इनशनी सहजे सधनां वधूं
तनुधनां सचिवः सुभगां शशी ।
सुकृतिनीं कुरुतः कुजसोमजौ
नयति देवरि देवरिपूपनीः ॥

अथ तृतीयभावगतग्रहाणां फलानि– इनशनी इति । सहजे तृतीयभावे स्थितौ इनशनी सूर्यशनैश्चरौ वधूं स्त्रियं सधनां धनयुक्तां कुरुतः । सचिवो बृहस्पतिः तनुधनां स्वल्पधनवतीं, शशी सुभगां करोति । कुजसोमजौ मङ्गलबुधौ सुकृतिनीं पुण्यवतीं कुरुतः । तथा देवरिपूपनीः देवरिपून् दैत्यान् उपनयत्यसौ देवरिपूपनीः शुक्रः वधूं स्त्रियं देवरि देवरे नयति प्रापयति, देवरगामिनीं करोतीत्यर्थः । लक्ष्मी.

[1]दारिद्र्यं रविरवनीसुतो वराङ्ग-
व्याघातं गुरुभृगुजेन्दुजाः प्रभुत्वम् ।
बाल्येऽब्जः प्रियवियुतिं शनिः स्तनाम्भः-
शून्यत्वं सृजति सुखे सुवासिनीनाम् ॥

अथ चतुर्थभावगतग्रहाणां फलानि– दारिद्र्यमिति । सुखे चतुर्थभावे स्थितो रविः सुवासिनीनां स्त्रीणां दारिद्र्यं सृजति करोति । अवनिसुतो मङ्गलो वराङ्गव्याघातं वराङ्गस्य भगस्य व्याघातं भङ्गं सृजति । गुरुभृगुजेन्दुजाः प्रभुत्वं, अब्जः चन्द्रः बाल्ये बाल्यावस्थायां प्रियवियुतिं स्वामिवियोगं, शनिः स्तनाम्भःशून्यत्वं स्तन्यदुग्धशून्यत्वं सृजति । लक्ष्मी.

सत्पुत्रामसुरसुरेज्यसोमपुत्राः
पुत्रारिं रविरसुतप्रजां द्विजेन्द्रः ।
शोकार्तामवनिसुतः सुतस्थ ऐनिः
संताने सततरुजं सृजेत्कुमारीम् ॥

पञ्चमभावगतग्रहाणां फलानि– सदिति । असुरसुरेज्यसोमपुत्राः गुरुशुक्रबुधाः सुतभावस्थाः कुमारीं सत्पुत्रां सृजेयुः । रविः सुतस्थः पञ्चमस्थः पुत्रारिं पुत्रघातिनीं सृजेत् । द्विजेन्द्रः चन्द्रः पञ्चमस्थः असुतप्रजां कन्यासंततिं, अवनिसुतः मङ्गलः शोकार्तां, ऐनिः शनिः सुतस्थः संताने संततौ सततरुजं कुमारीं सृजेत् । लक्ष्मी.

विधुर्निधनमिन्दुजः परभयं जयं भानुमान्
कुजः कुशलमर्कभूर्विगतवैरितां वैरिगः ।
रिपुत्वमुशनाः समं सहचरेण चारुभ्रुवां
व्यनक्ति वचसां पतिः पतिमजातशत्रुश्रुतिम् ॥

अथ षष्ठभावस्थग्रहाणां फलानि– विधुरिति । वैरिगः षष्ठभावगतो विधुः चन्द्रः चारुभ्रुवां स्त्रीणां निधनं मरणं,

(१) विवृ. १२।१–३; विसौ. ४५ शशाङ्को (मृगाङ्को).

(१) विवृ. १२।४–१२; विसौ. ४६ बाल्येऽब्जः (बालेन्दुः).

इन्दुजो बुधः परभयं शत्रुभयं, भानुमान् सूर्यो जयं, कुजः कुशलं, अर्कभूः शनिः विगतवैरितां शत्रुरहितत्वं, उशनाः शुक्रः सहचरेण समं स्वामिना सह रिपुत्वं, वचसां पतिः बृहस्पतिः पतिं भर्तारं अजातश्रुतिं न जाता शत्रुश्रुतिर्यस्य तथाभूतं व्यनक्ति प्रकटयति ।

लक्ष्मी.

बुधो वन्ध्यामिन्दुः परिचितसपत्नीपरिभवां
गलद्गर्भां पङ्गुः परनररतां दानवगुरुः ।
अवीरामस्तेऽर्को गुरुरमरसेवाव्यसनिनीं
विवाहे माहेयः स्त्रियमतिरजस्कां जनयति ॥

अथ सप्तमभावगतग्रहाणां फलानि— बुध इति । विवाहे अस्ते सप्तमभावे बुधः स्त्रियं वन्ध्यां, इन्दुः परिचितसपत्नीपरिभवां सपत्नीक्लेशयुतां, पङ्गुः शनिः गलद्गर्भां, दानवगुरुः शुक्रः परनररतां, अर्कः अवीरां पतिरहितां, गुरुः अमरसेवाव्यसनिनीं देवाराधनतत्परां, माहेयो मङ्गलः अतिरजस्कां प्रदरव्याधियुतां जनयति ।

लक्ष्मी.

सितसितकिरणेज्या मृत्यवे मृत्युवेश्म-
न्यनवरतसुखायुःसंपदे सूर्यसौरी ।
भवति पतिशरीरद्रोहकृद्रौहिणेयो
द्रुहिणगृहमुखीनां यक्ष्मणे क्षोणिजन्मा ॥

अथ अष्टमस्थानस्थग्रहाणां फलानि— सितेति । मृत्युवेश्मनि अष्टमस्थाने सितसितकिरणेज्याः द्रुहिणगृहमुखीनां कमलवदनानां स्त्रीणां मृत्यवे मरणाय भवन्ति । सूर्यसौरी अनवरतसुखायुःसंपदे भवतः । रौहिणेयो बुधः पतिशरीरद्रोहकृद्भवति । क्षोणिजन्मा कुजः यक्ष्मणे राजयक्ष्मरोगाय भवति ।

लक्ष्मी.

शशिसुतगुरुशुक्राः सान्द्रसौभाग्यलीलां
सरलहसितकान्तस्वान्तकेलिं कुमारीम् ।
रविरविसुतवक्राः कैतवाक्रान्तशीलां
तपसि तुहिनरश्मिः स्त्रीसवित्रीं करोति ॥

अथ नवमस्थानस्थग्रहाणां फलानि— शशीति । तपसि नवमस्थाने शशिसुतगुरुशुक्राः कुमारीं सान्द्रसौभाग्यलीलां सरलहसितकान्तस्वान्तकेलिं च कुर्वन्ति । रविरविसुतवक्राः कैतवाक्रान्तशीलां कपटयुतस्वभावां कुर्वन्ति । तुहिनरश्मिः चन्द्रः स्त्रीसवित्रीं कन्याप्रसवां करोति ।

लक्ष्मी.

शनिरनियमशौचां कन्यकामन्यकार्यै-
र्विधुरतिविधुराङ्गीं शाकिनीं व्योम्नि वक्रः ।
रचयति रविरुग्रां कोविदः कार्मणज्ञा-
मविकृतसुकृतश्रीमालिनीमार्यशुक्रौ ॥

अथ दशमभावगतग्रहाणां फलानि— शनिरिति । व्योम्नि दशमस्थाने स्थितः शनिः कन्यकां अनियमशौचां रचयति । विधुः चन्द्रः अन्यकार्यैः अतिविधुराङ्गीं अत्यन्तविकलाङ्गीं, वक्रो मङ्गलः शाकिनीं मांसादिभक्षणतत्परां, रविः उग्रां दुःशीलां, कोविदः बुधः कार्मणज्ञां कार्मणं क्षुद्रकर्म जानातीति तथाभूतां, आर्यशुक्रौ अविकृतसुकृतश्रीमालिनीं पूर्णपुण्यसंपत्तिसहितां रचयतः । मालिनीति छन्दोऽपि सूचितम् ।

लक्ष्मी.

एकादशे दशशतांशुमुखा सुखानि
रत्नाम्बरद्रविणभोगभरोन्मुखानि ।
पाणिग्रहे ददति दीर्घदृशां ग्रहेन्द्राः
सर्वेऽपि सर्वभवनेष्वबला न किञ्चित् ॥

अथैकादशभावगतग्रहाणां फलानि— एकादश इति । पाणिग्रहे विवाहे एकादशे स्थाने दशशतांशुमुखाः रव्यादयः सर्वेऽपि ग्रहेन्द्राः दीर्घदृशां मृगलोचनानां स्त्रीणां रत्नाम्बरद्रविणभोगभरोन्मुखानि सुखानि ददति । अबला निर्बला ग्रहाः सर्वेष्वपि भावेषु किञ्चिदपि फलं न ददति । अर्थात् सबला ग्रहा एवोक्तं फलं दातुमर्हन्ति, नाबला इति ।

लक्ष्मी.

व्यये शुभाः सद्व्ययकर्षितां शनिः
सुरारुचिं रचयति दुर्विधां विधुः ।
अदक्षिणावयवरुजं कुजो रवि-
र्विरूपयत्यतिरुचिरामपि स्त्रियम् ॥

अथ द्वादशस्थानस्थितग्रहाणां फलानि— व्यय इति । व्यये द्वादशस्थाने शुभाः शुभग्रहाः चन्द्रबुधगुरुशुक्राः सद्व्ययकर्षितां स्त्रियं रचयति । शनिः सुरारुचिं, विधुः दुर्विधां दुष्टकार्यां, कुजः अदक्षिणावयवरुजं वामाङ्ग-

रोगिणीं, रविः अतिरुचिरां अतिसुन्दरीं अपि स्त्रियं विरूपयति रूपहीनां करोति । रुचिरेति छन्दोऽपि सूचितम् । लक्ष्मी.

[1]इति मुनिजनमतमतनुवितर्कं
प्रतिगृहचरखचरोद्यदुदर्कम् ।
परिविगणय्य विशेषमशेषं
फलमिदमूह्यमनुज्झितरेखम् ॥

अथ फलानां प्राशस्त्यं कथयति– इतीति । इति एवमुक्तं मुनिजनमतं अतनुवितर्कं अतनुः बहुः वितर्कः यस्य तत्, प्रतिगृहचरखचरोद्यदुदर्कं प्रतिराशिगतखचराणां उद्यन् उदर्को भाविफलं यस्मिन् तदिदं अशेषं समस्तं फलं विशेषं परिविगणय्य सम्यग्विचार्य अनुज्झितरेखं नोज्झिता रेखा येन तत् तथोक्तं ऊह्यं ज्ञेयम् । लक्ष्मी.

[2]षट्त्र्यायेष्वशुभाः शुभाय निधन-
द्यूनान्त्यवर्जं परे
त्र्यायार्थेषु शशी मृतौ शनिरवी
भङ्गाय तत्रापरे ।
क्रूरद्यूनवृतान्विते शशितनू
अस्ते सितज्ञौ विधु-
र्लग्ने सोमसिताधिपा द्विषि सितः*
सेन्दुर्विनष्टोंऽशपः ॥

तत्रादौ भावफलोपसंहारादिकं कथयति– षडिति । षट्त्र्यायेषु स्थानेषु अशुभाः पापग्रहाः शुभाय भवन्ति, अर्थादन्यभावेषु अशुभाय भवन्ति । परे शुभग्रहाः निधनद्यूनान्त्यवर्जं अष्टमसप्तमद्वादशस्थानानि वर्जयित्वा अन्यस्थानेषु शुभाय भवन्ति । त्र्यायार्थेषु शशी चन्द्रः शुभाय भवति । मृतौ अष्टमे शनिरवी शुभाय भवतः । तत्राष्टमेऽपरे चन्द्रकुजबुधगुरुशुक्राः भङ्गाय भवन्ति । शशितनू चन्द्रलग्ने क्रूरद्यूनवृतान्विते क्रूरेण पापेन द्यूनं सप्तमस्थानं वृतं आक्रान्तं ययोस्ते तथा क्रूरेणान्विते युक्ते भङ्गाय भवतः । अस्ते सप्तमे सितज्ञौ भङ्गाय भवतः । विधुर्लग्ने, सोमसिताधिपाः सोमः चन्द्रः, सितः शुक्रः, अधिपाः लग्नद्रेष्काणांशस्वामिनः, ते द्विषि षष्ठभावे भङ्गाय, तथा सेन्दुः चन्द्रसहितोंऽशपो लग्नांशपतिर्नष्टोऽस्तंगतो भङ्गाय लग्नभङ्गकारको भवतीत्यर्थः । लक्ष्मी.

* 'सितः' इति पदं टीकाकृतो दृष्टेर्भ्रष्टम्, अतस्तेन 'सेन्दुर्विनष्टोंऽशपः' इत्येकैव कोटिः कृता । वस्तुतस्तु 'सेन्दुः सितः' 'विनष्टोंऽशपः' इति कोटिद्वयमिति भाति ।

(१) विवृ. १२।१३.

(२) विवृ. १३।१–२.



अतुर्यकायकेन्द्रगः सुहृत्स्वसौम्यवर्गयुक् ।
सुहृच्छुभेक्षितः शुभः शशी मयूखमांसलः ॥

अथ सप्तम–दशम–स्थानस्थचन्द्रस्य विशेषमाह– अतुर्येति । अतुर्यकायकेन्द्रगः तुर्यकायाभ्यां चतुर्थलग्नाभ्यामन्यत् तत्केन्द्रं चेति अतुर्यकायकेन्द्रं, तत्र गतः सप्तमदशमभावस्थः सुहृत्स्वसौम्यवर्गयुक् सुहृच्छुभेक्षितः मयूखमांसलः अंशुपूर्णः शशी शुभः स्यात् । लक्ष्मी.

[1]शशितनयसिताभ्यां नन्दभद्रावुभाभ्यां
जय इति तनुयाते जीव इत्येष जीवे ।
असुरसुरगुरुभ्यां स्थावरो ज्ञेज्यशुक्रै-
र्विजय इति विशुक्रं तं च जीमूतमाहुः ॥

अथ शुभयोगान् कथयति– शशितनयेति । शशितनयसिताभ्यां बुधशुक्राभ्यां तनुगताभ्यां क्रमेण नन्दभद्रौ योगौ भवेताम् । बुधेन लग्नगतेन नन्दः, शुक्रेण भद्र इत्यर्थः । उभाभ्यां बुधशुक्राभ्यां लग्नगताभ्यां जय इति योगः स्यात् । जीवे गुरौ तनुयाते लग्नगते इत्येष जीवो नाम योगः स्यात् । असुरसुरगुरुभ्यां तनुगताभ्यां स्थावरो नाम योगः । ज्ञेज्यशुक्रैः तनुगतैः विजयो नाम योगः स्यात् । विशुक्रं तं विजयं जीमूतं योगमाहुराचार्याः । बुधगुरुभ्यां लग्नगताभ्यां जीमूतो नाम योग इत्यर्थः । लक्ष्मी.

इति शुभफलयोगाः सप्त सप्तर्षिमुख्यै-
र्मुनिभिरभिहितास्ते जन्मयात्रास्वपि स्युः ।
भजति युवतिरेभिर्भूपसीमन्तिनीत्वं
ग्रहयुतिबलयोगादुत्तराधर्यमस्मिन् ॥

(१) विवृ. १३।३–५ ; विसौ. ५१ तमश्लोकं (तमरतु).

अथैषां योगानां फलं कथयति– इतीति । इति एवं सप्तर्षिमुख्यैः विवाहे सप्त शुभफलयोगा अभिहिताः कथिताः । ते योगा जन्मयात्रास्वपि शुभफलाः स्युः । एभिः नन्दादिभिर्योगैः युवतिः भूपसीमन्तिनीत्वं राजपत्नीत्वं भजति । अस्मिन् शुभफले ग्रहयुतिबलयोगात् उत्तराधर्ये आधिक्यं न्यूनत्वं च स्यात् । लक्ष्मी.

दिनकररुधिराभ्यां व्यालपातालवक्त्रौ
क्षय इति रविपुत्रे सैंहिकेये तमस्कम् ।
तनुगृहयुजि केतावन्तकस्तेषु शोक-
व्यसनविधनताभिस्तप्यते पङ्कजाक्षी ॥

अथाशुभयोगान् कथयति– दिनकरेति । दिनकररुधिराभ्यां रविकुजाभ्यां तनुगृहयुक्ताभ्यां क्रमेण व्यालपातालवक्त्रौ योगौ भवतः । रविणा व्यालः, कुजेन पातालवक्त्र इत्यर्थः । रविपुत्रे तनुगृहयुजि लग्नगते क्षय इति योगः, सैंहिकेये राहौ लग्नगते ( तमस्कनामा योगः, केतौ ) अन्तक इति योगः स्यात् । तेषु व्यालादियोगेषु पङ्कजाक्षी स्त्री शोकव्यसनविधनताभिः तप्यते । लक्ष्मी.

'तनुतुहिनमरीच्योरङ्गनाखेटदृष्टौ
चरगृहगतयोः स्यात्कान्तयुग्मं कुमार्याः ।
अविदिशि बलिनश्चेद्यायिनो युग्म इन्दा-
वशुभदृशमुपेते कन्यका त्वन्यकाम्या ॥

अथान्यौ दुष्टयोगौ कथयति– तन्विति । तनुतुहिनमरीच्योः लग्नचन्द्रयोः चरगृहगतयोः अङ्गनाखेटदृष्टौ शुक्रदृष्टौ सत्यां चेत् यायिनो ग्रहाः बलिनोऽविदिशि विदिशोऽन्या अविदिक् तस्यां, लग्नचतुर्थसप्तमदशमेषु इत्यर्थः, स्थितास्तदा कुमार्याः कन्यायाः कान्तयुग्मं पतिद्वयं भवति । तथा इन्दौ चन्द्रे युग्मे समराशौ स्थिते अशुभदृशमुपेते सति कन्यका अन्यकाम्या अन्यः काम्यो यस्याः सा तथोक्ता भवति । लक्ष्मी.

नरः प्रियो नीरजलोचनानां
नरग्रहैरुत्कटकान्तिवीर्यैः ।
नारी नृणां चित्तहरा स्वभोगै-
र्नारीनभोगैर्बलशालिभिस्तु ॥

अथ पुंस्त्रीग्रहबलवशेन फलान्तरमाह– नर इति । नरग्रहैः गुरुरविकुजैः उत्कटकान्तिवीर्यैः अतिप्रकाशबलयुतैः सद्भिः नीरजलोचनानां कन्यानां नरः भर्ता प्रियो भवति । नारीनभोगैः स्त्रीग्रहैः चन्द्रशुक्रैः, पूज्यार्थत्वाद्बहुवचनं, बलशालिभिस्तु नारी स्त्री स्वभोगैः नृणां स्वामिनां चित्तहरा प्रिया भवति । लक्ष्मी.

पतिरस्तपतिर्विरोचनः
श्वशुरस्तत्प्रमदा मदग्रहः ।
अबला बलिनो दिशन्त्यमी
सुदृशां तेष्वशुभं शुभं क्रमात् ॥

अथ पतिश्वशुरादीनां फलान्तराण्याह– पतिरिति । सुदृशां सुलोचनस्त्रीणां अस्तपतिः सप्तमेशः पतिः, विरोचनः सूर्यः श्वशुरः, मदग्रहः शुक्रः तत्प्रमदा श्वशुरस्त्री श्वश्रूः भवति । अमी पत्यादिग्रहाः अबला बलिनः क्रमात् तेषु पत्यादिषु अशुभं शुभं च दिशन्ति, अबलाः अशुभं, बलिनः शुभं दिशन्तीत्यर्थः । लक्ष्मी.

शशिसूर्यसुतावनीसुतै-
ररिनीचास्तगतैः करग्रहे ।
अपि तन्वधिपेन तप्यते
निरपत्या नियतं नितम्बिनी ॥

करग्रहे विवाहे शशिसूर्यसुतावनीसुतैः अरिनीचास्तगतैः तन्वधिपेन लग्नेशेनापि अरिनीचास्तगतेन नितम्बिनी स्त्री निरपत्या संतानरहिता सती तप्यते । इदं फलं सप्तमभावे हीनबले सति बोध्यं, यतः शौनकः– ' लग्नपतौ रिपुभवने नीचे वा रविसुतावनिजैः । बलरहिते च द्यूने स्त्रीणां न भवन्त्यपत्यानि ॥ ' लक्ष्मी.

कवेस्तृतीयस्य शुभाय रेखा
लग्नं नभस्थो न भनक्ति भौमः ।
तद्वद्व्यये सौरिरपीति रीति-
र्जनेषु जागर्तितरां कुतस्त्या ॥

लोकेषु काचिद्रीतिः शास्त्रविरुद्धाऽस्ति तां निन्दति– कवेरिति । तृतीयस्य कवेः शुक्रस्य शुभाय रेखा भवति, नभस्थो दशमस्थो भौमो लग्नं न भनक्ति, तद्वत् सौरिः शनिः अपि व्यये लग्नं न भनक्ति, इतीयं रीतिः जनेषु

( १ ) विवृ. १३।६–१४.

लोकेषु कुतस्त्या जागर्तितराम् ? इति न जाने, अर्थादियं रीतिः शास्त्रविरुद्धा निर्मूलाऽस्ति इति ।

लक्ष्मी.

उशना गुरुरिन्दुनन्दनः
शशिजामित्रगपापतापहृत् ।
नवपञ्चमकेन्द्रमित्रभ-
प्रणयी पुष्टदृशा विधुं स्पृशन् ॥

अथ जामित्रदोषे विशेषमाह– उशनेति । उशना शुक्रः, गुरुः, इन्दुनन्दनः बुधः नवपञ्चमकेन्द्रमित्रभप्रणयी नवमपञ्चमकेन्द्रस्थो मित्रराशिगतः पुष्टदृशा विधुं चन्द्रं स्पृशन् पश्यन् शशिजामित्रगपापतापहृत् पापकृतचन्द्रजामित्रदोषापहारको भवति । अत्र केन्द्रं सप्तमरहितं ज्ञेयम् । तथा चोक्तम्– 'हरिजदिवसचन्द्रात्सप्तमक्रूरदोषक्षयकृदमरपूज्यः सोमपुत्रः सितो वा । उदयहिबुकधर्मव्योमपुत्रालयस्थो यदि च सकलदृष्ट्याऽऽलोकयेच्छीतरश्मिम् ॥'

लक्ष्मी.

हिमरश्मिनवांशकात्खलो
यदि खेटः शरसायकांशके ।
अयमन्यगुणैर्न हन्यते
निबिडैरप्युपसर्गडम्बरः ॥

हिमरश्मिनवांशकात् खलः खेटो यदि शरसायकांशके पञ्चपञ्चाशत्तमे नवांशके स्यात् तदा अयं उपसर्गडम्बरः पूर्णजामित्रदोषाडम्बरः निबिडैः संपूर्णैरप्यन्यगुणैर्न हन्यते ।

लक्ष्मी.

मोघाः शिखिदग्धबीजव-
द्योगाः केऽपि शरीरधारिणः ।
दृढगूढफलोदयाः परे
पर्णाकीर्णहुताशराशिवत् ॥

अथ उक्तयोगानां सफलत्वमफलत्वं च आह–मोघा इति । केऽपि योगाः शरीरधारिणः प्रत्यक्षा अपि शिखिदग्धबीजवत् मोघाः विफला भवन्ति । परे अन्ये केचिद्योगाः पर्णाकीर्णहुताशराशिवत् पर्णाच्छादिताग्निसमूह इव दृढगूढफलोदयाः दृढगूढः प्रच्छन्नः फलोदयो येषां ते तथोक्ता भवन्ति । सबलग्रहसंबन्धियोगाः सफलाः, विबलग्रहसंबन्धियोगा विफला भवन्तीत्यर्थः ।

लक्ष्मी.

इति यः प्रतिकूलकारक-
ग्रहभावांशनिवेशदृष्टिभिः ।
तन्वादिफलेषु दत्तदृक्
स प्राप्नोत्यवतंसतां सताम् ॥

इत्युपर्युक्तप्रकारेण यः दैवज्ञः प्रतिकूलकारकग्रहभावांशनिवेशदृष्टिभिः तन्वादिफलेषु दत्तदृक् भवति स दैवज्ञः सतां अवतंसतां भूषणत्वं प्राप्नोति ।

लक्ष्मी.

## संहितासारे

[१]अवैधव्यकरैर्योगै-
र्विवाहपटलोदितैः ।
वरायाऽऽयुष्मते देया
कन्या वैधव्ययोगजा ॥
प्रारब्धानामनारब्ध-
कर्मणां विरतिर्यथा ।
आत्मज्ञानात्तथा दोषा
नन्दाद्यैर्विलयं ययुः ॥

## ज्योतिःसागरे

[२]कन्याचापे तथा सिंहे
कर्के शुक्रो यदा भवेत् ।
न दोषः षष्ठशुक्रस्य
पाणिग्रहे शुभावहः ॥

## मुहूर्तचिन्तामणिः

[३]व्यये शनिः खेऽवनिजस्तृतीये
भृगुस्तनौ चन्द्रखला न शस्ताः ।
लग्नेट्कविग्लौश्च रिपौ मृतौ ग्लौ-
र्लग्नेट्शुभाराश्च मदे च सर्वे ॥

(१) ज्योनि. १६०.
(२) संर. ४६४.
(३) मुचि. ६।८६-८७,९३.

सर्वथा लग्नभङ्गयोगमाह–व्यय इति । व्यये द्वादशस्थाने स्थितः शनिः न शस्तः । खे दशमे अवनिजो मङ्गलो न शस्तः । तृतीये भृगुः शुक्रः न शस्तः । तनौ लग्ने चन्द्रः खलाः पापग्रहाश्च न शस्ताः । लग्नेट् लग्नस्वामी कविः शुक्रः ग्लौः चन्द्रश्च रिपौ षष्ठस्थाने न शस्तः । ग्लौश्चन्द्रः, लग्नेट्, शुभाः चन्द्रबुधगुरुशुक्राः, आरो भौमश्च एते मृतौ अष्टमस्थाने न शस्ताः । लग्नेट् च पुनः सर्वे सूर्यादयो ग्रहाः मदे सप्तमस्थाने न शस्ताः निषिद्धाः । अर्थादन्येषु स्थानेषु ग्रहाः समीचीनाः, तत्र केषुचित्स्थानेषु शुभा एव, केषुचिन्मध्यमा एवेत्येतदपि वक्ष्यति । पीटी.

त्र्यायाष्टषट्सु रविकेतुतमोऽर्कपुत्रा-
स्त्र्यायारिगः क्षितिसुतो द्विगुणायगोऽब्जः ।
सप्तव्ययाष्टरहितौ ज्ञगुरू सितोऽष्ट-
त्रिद्यूनषड्व्ययगृहान् परिहृत्य शस्तः ॥

अथैवं निषिद्धस्थानान्यभिधायेदानीं रेखादातॄन् ग्रहानाह–त्र्यायेति । तृतीयैकादशाष्टमषष्ठस्थानेषु रविकेतुतमोऽर्कपुत्राः शस्ताः शुभफलदातारः । त्र्यायारिगः तृतीयैकादशषष्ठस्थानस्थितः क्षितिसुतो भौमः शस्तः । अब्जः चन्द्रः द्विगुणायगः द्वितीयतृतीयैकादशस्थः शस्तः । ज्ञगुरू बुधबृहस्पती सप्तमद्वादशाष्टमातिरिक्तस्थानस्थितौ शस्तौ, उक्तस्थानानामशुभत्वात् अनुक्तस्थानानां च शुभदातृत्वात् । सित इति । अष्टमतृतीयसप्तमषड्द्वादशस्थानानि परिहृत्य त्यक्त्वाऽन्येषु स्थानेषु सितः शुक्रः शस्तः । पीटी.

श्वश्रूः सितोऽर्कः श्वशुरस्तनुरत्तनु-
र्जामित्रपः स्याद्दयितो मनः शशी ।
एतद्बलं संप्रतिभाव्य तान्त्रिक-
स्तेषां सुखं संप्रवदेद्विवाहतः ॥

ग्रहवशेन श्वशुरादिविभागज्ञानं सप्रयोजनमाह–श्वश्रूरिति । शुक्रः श्वश्रूः । सूर्यः श्वशुरः । अत्र कन्यानिमित्तशुभाशुभस्य विचारास्पदत्वात्तस्याः कन्यायाः श्वश्रूः वरमाता, श्वशुरो वरपिता, तनुः लग्नं, तनुः स्वशरीरं, जामित्रपः सप्तमाधीशः दयितः भर्ता ज्ञेयः । शशी मनो ज्ञेयम् । एतद्बलं एतेषां शुक्रादीनां बलं विचार्य तान्त्रिकः, तन्त्रं सिद्धान्तः, तं वेत्ति तान्त्रिकः सिद्धान्तवेत्ता ज्योतिर्वित् विवाहतो विवाहादनन्तरं तेषां श्वश्र्वादीनां सुखं स्यादिति प्रवदेत् । पीटी.

## ज्योतिर्निबन्धे

[1]भौमदुष्टा तु या कन्या भौमदुष्टवराय च ।
तत्तद्ग्रहजदोषोत्था तत्तद्ग्रहवराय वै ॥

## लग्नचन्द्रिकायाम्

[2]द्वादशे चाष्टमे भौमे क्रूरे तत्रैव संस्थिते ।
लग्नस्थे सिंहिकापुत्रे रण्डा भवति कन्यका ॥

## होरामकरन्दे

[3]मूर्तौ तुर्येऽष्टमे भौमे सप्तमेऽन्त्ये च जन्मनि ।
भर्तुर्योषिद्विनाशः स्यात्स्त्रियो भर्तुर्विनाशनम् ॥
एवंविधे कुजे संस्थे विवाहो न कदाचन ।
कार्यो वा गुणबाहुल्ये कुजे वा तादृशे द्वयोः ॥

## अनिर्दिष्टकर्तृकवचनानि

[4]यथोक्तकालदुर्लभे गुणेषु विफलेषु च ।
दोषापवादाभावेन योगोऽभीष्टप्रदः शुभः ।
विवाहे शुभदा योगाः कथिताश्चतुराननैः ॥
बुधे स्वराशिगे लग्नेऽनस्तगेऽतिबलैर्युते ।
विवाहे शुभदो योगो नन्दनामातिशोभनः ॥
शुक्रश्चातिबलैर्युक्तः स्वराशिरुदितो यदि ।
बलिना गुरुणा दृष्टो भद्रो योग उदाहृतः ॥
स्वर्क्षे भावबलैर्युक्ते जीवे लग्नगते तदा ।
बुधे सिते वा केन्द्रस्थे योगो जीवाह्वयः शुभः ॥
बुधजीवौ यदा क्वापि राशावतिबलान्वितौ ।
ससितावुदितो (? तौ) योगो जीमूतो नाम
शोभनः ॥

---

(१) संग. १८७.
(२) संग. १८६.
(३) संग. १८७.
(४) प्रपा. ३४०.

शुक्रजीवौ यदा लग्ने सहितौ बलिनौ तदा ।
योगोऽयं स्थावरो नाम विवाहसमये शुभः ॥

यदा शुक्रबुधौ सार्धमुदितौ प्रबलौ तदा ।
विवाहे शुभदो योगो जयो नामातिशोभनः ॥

यदा ज्ञजीवशुक्राश्च सहिता लग्नगास्तदा ।
बलिनो यदि योगोऽयं विजयो नाम योगराट् ॥

मानुष्यभोदये दृष्टे शुभैर्बलसमन्वितैः ।
चन्द्रे शुभकरे तस्मिन् विवाहः शोभनप्रदः ॥

चन्द्रे लग्ने वीक्षितेन भौमेनार्थसमे स्थिते ।
इन्दावपरिवेषस्थे मृत्युवर्ज्यं शुभं भवेत् ॥

जीवोदये बलैर्विद्धे सिते रन्ध्रे रिपौ रवौ ।
विवाहे शुभदो योगो दंपत्योर्वृद्धिदो भवेत् ॥

बलवद्रविभौमौ द्वौ दशमैकादशं गतौ ।
लग्ने सितज्ञौ प्राणाढ्यौ जीवे पुत्रगते शुभः ॥

गुरौ बलयुते लग्ने कर्मणीन्दौ शुभे रते ।
एकादशे रवौ शुक्रे दशमेऽजी(?ती)वशोभनः ॥

लग्नारिकर्ममृत्युस्था जीवार्किसितरात्रिपाः ।
क्रमाद्बलयुताः सर्वे योगः परिणये शुभः ॥

त्रिधर्मैकादशस्थाश्चेदारजीवार्कजाः क्रमात् ।
बलवन्तो विवाहस्य योगोऽयं संपदालयः ॥

गुरुशुक्रौ यदा लग्ने चन्द्रे स्वांशगृहं गते ।
विवाहसमये योगः पुत्रमाङ्गल्यवृद्धिदः ॥

गुरुर्धने ज्ञशुक्रौ द्वौ पञ्चमे रिपुभे रवौ ।
बलिनो न स्मरेत्कश्चिद्योगोऽतीव शुभप्रदः ॥

सोमे तृतीयगे मन्दे षष्ठे वैकादशे स्थिते ।
दशमे च रवौ योगो जीवक्षेत्रोदये तदा ॥

लग्ने वा दशमस्थौ वा ज्ञशुक्रौ वाऽऽयगे रवौ ।
केन्द्रत्रिकोणगे जीवे योगः शुभकरस्तदा ॥

लग्नगः शुभदः कश्चित्त्रिषडायेषु पापकः ।
बिलिनौ तौ शुभकरौ योगोऽयं दोषहा स्वयम् ॥

शुभो वा यदि वा पापो भवेत्केन्द्रे बली शुभः ।
शुभांशे शुभकृच्चन्द्रः शुभदो योगराडयम् ॥

लग्ने तृतीयगृहषष्ठमदाष्टमेषु
जीवो धराजरविजौ शशिजो रविश्च ।
चन्द्रः सितश्च यदि वीर्ययुतः क्रमेण
योगो विवाहसमये शुभवृद्धिदाता ॥

केन्द्रत्रिकोणभवने यदि शोभनैकः
स्वोच्चस्ववर्गसहितो बलवान् प्रदीप्तः ।
पापस्तथाविधगुणस्त्रिषडायगश्च
योगो विवाहसमये बहुपुत्रदाता ॥

[1]स्वोच्चातिशुभवर्गा ये तिष्ठन्त्यशुभदा अपि ।
तेऽतीव संप्रयच्छन्ति श्लाघनीया यतस्ततः ॥

[2]स्वनीचारिषु वर्गे ये तिष्ठन्ति शुभदा अपि ।
ते चापि शुभदाः सर्वे सर्वत्र शुभकर्मणि ॥

वक्रस्वोच्चगतानां तु फलं त्रिगुणितं भवेत् ।
वर्गोत्तमे स्वराशौ च स्वांशकस्वत्रिकोणयोः ॥

गतानां द्विगुणं विद्यात्स्वहोरां रविशीतगोः ।
स्वनीचस्थे च मूढे च तस्यार्धं फलमीरितम् ।
शत्रुक्षेत्रे स्वभावोनं फलं स्यात्तु तदर्धकम् ॥

[3]लग्नराशियुक्तो जामित्रगतश्च वार्जितो राहुः ।
लग्नस्थे वैषम्यं जामित्रगते च कन्यकामरणम् ।
राशियुक्ते प्रव्रज्यास्ता न त्रितये ( ? ज्या
स्थानत्रितये ) सदा वर्ज्यः ॥

प्राग् लग्नगे मृत्युः स्याद्धनहानिर्द्वितीयगे ।
दुश्चिक्येऽर्थविवृद्धिः स्याद्बन्धुनाशश्चतुर्थगे ॥

सुतनाशः सुतस्थे स्याद्भर्तृवृद्धिस्तथाऽरिगे ।
जामित्रस्थे च वैधव्यमायुर्वृद्धिस्तथाऽष्टमे ॥

धर्मगे धनहानिः स्यात्कर्मगेऽर्के विशीलता ।
लाभः स्यादायगे भानौ व्ययो द्वादशगे
भवेत् ॥

चन्द्रे व्ययप्रिया लग्ने द्वितीये धनिनी भवेत् ।
तृतीये सुभगा साध्वी बन्धौ बन्धुप्रिया भवेत् ॥

---

( १ ) प्रपा. ३४०.

( २ ) प्रपा. ३४१.

( ३ ) चका. ७९५–७९८ ' आचार्यः ' इत्युक्तम् ।

सुतस्थे कन्यका माता षष्ठस्थे मृत्युमाप्नुयात् ।
जायास्थे ससपत्नी स्यान्मृत्यौ
मृत्युमवाप्नुयात् ॥
कन्या प्रजावती धर्मे विकारस्थार (?)-
कर्मणि ।
भर्तृप्रियोपयुक्ता च शशिन्येकादशे स्थिते ॥
वर्गाणि (?) द्वादशे च स्यात्कन्यका
शीतदा शनौ (? शीतदीधितौ) ।
अनिष्टग्रहणं यातौ (?)
प्रशस्तफलदः शशी ॥
सौम्यांशकस्थो मैत्रेण दृश्यते चेद्बलीयसा ।
वैधव्यं लग्नगे भौमे कन्यका मृत्युमाप्नुयात् ॥
अग्निचौरभयार्ता स्याद्द्वितीयस्थे धरासुते ।
तृतीयस्थेऽर्थसंपन्ना बन्धुहृष्टा चतुर्थगे ॥
पुत्रहीना सुतस्थे स्यादरिगे सुतभागिनी ।
सप्तमस्थे महीपुत्रे पुंश्चली खलसंयुता ॥
असृक्स्रावं धरासूनौ मृत्युस्थे
कन्यकाऽऽप्नुयात् ।
नवमे भर्तृविद्विष्टा दशमे कुहकप्रिया ॥
धनान्विता तथाऽऽयस्थे नष्टार्था
व्ययगे भवेत् ।
लग्नस्थे चन्द्रपुत्रे स्याद्धर्मज्ञा सुप्रजाः स्थिरा ॥
स्वकुटुम्बरता नित्यं धनस्थे सोमनन्दने ।
श्वश्रूश्वशुरयोः पूजा तृतीयस्थे शशाङ्कजे ॥
चतुर्थे बन्धुपूजा स्यात्सुभगा धनसंयुता ।
बहुपुत्रा सुतस्थे स्याद्धतशत्रुस्तथाऽरिगे ॥
कष्टामापदमाप्नोति पुत्रहानिं तथैव च ।
सप्तमस्थेऽष्टमस्थे च रोगार्ता दुःखभागिनी ॥
तपोरता धर्मगे स्यान्मायाशीला च कर्मणि ।
सुतभृत्यधवोपेता भाग्ये द्वादशगे भवेत् ॥
कन्या सद्व्ययसंयुक्ता शशाङ्कतनये सदा ।
गुरौ लग्नगते कन्या धर्मशीला बहुप्रजा ॥
सुदीर्घमायुराप्नोति निधनं निधने भवेत् ।
अतिप्रमुदिता जीवे दुश्चिक्यस्थे भवेत्सदा ॥

सबन्धुवृद्धिं जानीयात्सर्वकामगुणान्विताम् ।
सुशीलस्था चतुर्थस्थे पञ्चमस्थे बहुप्रजा ॥
सपत्नीयुक्ता षष्ठस्थे बद्धमूला स्ववेश्मनि ।
विरूपा दुर्भगा स्वार्था व्यनक्ति
विमलं यशः ॥ (१)
सुतकर्मसु संसिद्धिं प्राप्नोति दशमे गुरौ ।
विचित्रमाल्याभरणा पुत्रयुक्ता च कन्यका ॥
सुवर्णमणिवज्राढ्या भवत्येकादशे गुरौ ।
व्ययस्थे सततोदारा ददात्यर्थमतन्द्रिता ॥
आयुर्धर्मादिभिर्युक्ता लग्नस्थे भृगुनन्दने ।
प्रभूतगुणयुक्ता स्यात्कृपणा च धनाश्रिते ॥
पुंश्चली देवररता कन्या शुक्रे तृतीयगे ।
यत्र सा भूषिता कन्या सुरूपा धनसंयुता ॥
नित्यं चतुर्थगे शुक्रे पञ्चमस्थे बहुप्रजा ।
पत्युश्च बन्धुवर्गस्याविराढ्या (?) षष्ठगे भृगौ ॥
बन्धकी सप्तमस्थे स्याद्भार्गवे लोकगर्हिता ।
व्याध्यर्दिता भवेच्छुक्रे मृत्युस्थे यमसाधनम् ॥
भार्गवे नवमस्थे स्याद्धर्मयुक्ता प्रियंवदा ।
सत्कर्मयुक्ता दशमे शुक्रे धर्मपरायणा ॥
विधवाऽर्थान्विता त्याज्या भवत्येकादशे भृगौ ।
व्ययस्थे भार्गवे कन्या व्ययशीला प्रजायते ॥
सौरे लग्नगते कन्या पुंश्चली दुर्भगा कृशा ।
निर्धना कृपणा दीना धनस्थेऽर्कात्मजे भवेत् ॥
पुनर्हीनार्तिदुःखार्ता हृद्रोगेण च पीडिता । (?)
पञ्चमस्थे सुपुत्रा स्यात्षष्ठस्थे हतशात्रवा ॥
गर्भस्रावार्दिता नित्यं सप्तमस्थेऽर्कनन्दने ।
अष्टमस्थेऽर्कपुत्रे स्यान्नित्यमामयवर्जिता ।
नष्टधर्मव्रता कन्या धर्मस्थेऽर्कात्मजे भवेत् ॥
चतुर्थसप्तमस्थश्च मृत्युवैषम्यकृद्भवेत् ।
राहुगेहेष्वथान्येषु निष्फलः स्याद्व्ययस्थितः ॥
[1]आषष्ठतः खनवमायगताश्च सौम्याः
शस्ताः षडायसहजाष्टमभेषु पापाः ।
पाणिग्रहे त्रिसुखलाभधनेषु चन्द्रः
षष्ठः सितो निधनगो न शुभो महीजः ॥

(१) ज्योनि. १५४.

रन्ध्रे कुजे सौम्यखगे च मृत्युः
षष्ठाष्टगे लग्नपतौ च मृत्युः ।
तृतीयगे देवरगा च शुक्रे
केऽप्याहुरन्ते शुभदौ सितेज्यौ ॥

त्रिकोणसप्तमाम्बरव्ययोपगो विलग्नतः ।
हिमद्युतिः शुभर्क्षगः शुभेक्षितश्च शोभनः ॥

नेष्टौ षष्ठाष्टमौ लग्नादंशनाथविलग्नपौ ।
तथा द्रेष्काणनाथश्च चन्द्रश्च मरणप्रदः ॥

नातिदुष्टाः शुभा द्यूने तथा लग्नेश्वरो व्यये ।
द्रेष्काणेशस्तथा रन्ध्रे क्षीणेन्दुर्मध्यमे धने ॥
निधनचतुष्टयसंस्थे पापद्वयमध्यगे क्षपानाथे ।
निधनं प्रयाति नियतं देवैरपि रक्षिता कन्या ॥
वैरिवारे शुभः खेटो लग्नगोऽप्यशुभायते ।
मित्रवारे तु पापोऽपि शुभदः स्यान्न संशयः ॥
अरिनीचर्क्षगे शुक्रे श्वश्र्वार्के श्वशुरेण च ।
कलत्रेंऽशे च पत्या हि स्याद्विरोधो
मृगीदृशाम् ॥

# गुर्वर्कबलविचारः

### वसिष्ठः

[1]बले नृनार्योरिनजीवयोश्च
तारेन्दुवीर्ये सुदिने सुलग्ने ।
पञ्चेष्टकेऽर्केन्दुसुरेज्यमुख्ये
जामित्रशुद्धौ हिमदीधितेश्च ॥

[2]यत्रार्कगुर्वोरपि नैधनान्त्य-
जन्मादिदुःस्थानगयोर्द्वयोर्वा ।
एकस्य पूजामपि तत्र कृत्वा
पाणिग्रहं कार्यमतः सुसम्यक् ॥

[3]बन्धौ तृतीये रिपुराशिसंस्थे
वाञ्छन्ति पूजां दशमे सुरेज्ये ।
नेच्छन्ति पूजां जनिगे व्ययस्थे
पुरातना अष्टमगेऽपि सूरौ ॥

बन्धुः चतुर्थः, रिपुराशिः षष्ठः, जनिः जन्मराशिः, व्ययः द्वादशो राशिः । संकौ. १२१.

### नारदः

[4]विवाहे बलमावश्यं दम्पत्योर्गुरुसूर्ययोः ।
तत्पूजा यत्नतः कार्या दुष्फलप्रदयोस्तयोः ॥

(१) वसं. ३२।१३२ ; विसौ. ५४.

(२) वसं. ३२।१३३ ; प्रपा. ३१८ ; विसौ. ५४ ; ज्योनि. १५०.

(३) ससौ. १०१ क्रमेण भारद्वाजः ; संप्र. ३७२ वाञ्छन्ति ( इच्छन्ति ) अष्टम ( द्वादश ) : ८०२-८०३ लल्लः ; संकौ. १२१ वाञ्छन्ति ( इच्छन्ति ) ; संर. १७६.

(४) ज्योना. २७।१३ पृ. ५१ ; प्रपा. ३१८ तत्पूजा यत्नतः कार्या (न चेत्पूजां प्रकुर्वीत) ; विपा. ७४३ प्रपावत्, बृहस्पतिः ; संकौ. १९९ उत्तरार्धे ( चेत्पूजां यत्नतः कुर्याद्- दुर्बलप्रदता तयोः । ) ; ज्योनि. १५० दुष्फल ( दुर्बल ); प्रका. ३६० संकौवत् ; संग. २०१ यत्नतः ( बलतः ) दुष्फल ( दुर्बल ) ; संर. ४६५ संकौवत्.

[1]गोचरं वेधजं चाष्टवर्गजं रूपजं बलम् ।
यथोत्तरं बलाधिक्यं स्थूलं गोचरमार्गजम् ॥

[2]कन्यकावरयोः सर्वे ग्रहाः शोभनतां गताः ।
यदि तत्रैव कर्तव्यो विवाहः शुभमिच्छता ॥

[3]विशेषादमरेशस्य गुरौ यातेऽङ्गनाविधौ ।
शुभस्थानगते तस्मिंस्तत्र कर्तव्यतामियात् ॥

जन्मविक्रमतोयारिमृत्युकर्मव्यये गुरौ ।
वैधव्यं याति सा कन्या वरस्य विधिरीदृशः ॥

विक्रमः तृतीयः, मृत्युः अष्टमः, तर्कः षष्ठः (?), व्ययः द्वादशः । प्रपा. ३१७

### बृहस्पतिः

[4]झषचापकुलीरस्थो जीवोऽप्यशुभगोचरः ।
अतिशोभनतां दद्याद्विवाहोपनयादिषु ॥

[5]कन्यकाजन्मलग्नेन्द्वोर्द्वादशाष्टमजन्मभाक् ।
(चतुर्थदशमे जीवो जन्मभ्रातृगतोऽशुभः ।)
अन्यत्र शुभदो जीवो गौरीवयसि सप्तमे ॥

[6]पुंसो भानुस्त्रिषष्ठाये शनिभौमौ च शोभनौ ।
अन्यत्र शान्तिमेतेषां कृत्वा कर्म समारभेत् ॥

(१) ज्योना. २७।१४ पृ. ५१ पूर्वार्धे ( गोचरं वा वेधजं चाष्टवर्गरूपजं बलम् । ) ; संग. २०३.

(२) प्रपा. ३१७ ; विपा. ७४२.

(३) प्रपा. ३१७.

(४) प्रपा. २१४ : ३१७ रस्थो जीवोऽप्य ( रस्थे जीवेऽप्य ) गोचरः ( गोचरे ) ; गभा. ६७,२०१ ; संप्र. ३७३ झष ( पूष ) ; सिन्धु. ९३०,१०६७ ; विपा. ४७१ ; ज्योनि. १२१,१५० ; संग. २०२ ; संर. ४६५.

(५) प्रपा. ३१७.

(६) प्रपा. ३१८ उत्तरार्धे ( अन्यत्र शान्तिहोमेषु तेषां कृत्वा समारभेत् । ) ; संप्र. ८०३ ; विपा. ७४२ रभेत् ( चरेत् ).

[1]द्विजन्मकालवत्कृत्वा शान्तिं सर्वगते गुरौ ।
विवाहश्चापि कर्तव्यो गृहस्थाश्रमशोभनः ॥

## देवलः

[2]नष्टात्मजा धनवती विधवा कुशीला
पुत्रान्विता हतधवा सुभगा विपुत्रा ।
स्वामिप्रिया विगतपुत्रधवा धनाढ्या
वन्ध्या भवेत्सुरगुरौ क्रमशोऽभिजन्मा ॥

## गर्गः

[3]स्त्रीणां गुरुबलं श्रेष्ठं पुरुषाणां रवेर्बलम् ।
तयोश्चन्द्रबलं श्रेष्ठमिति गर्गेण भाषितम् ॥

[4]चन्द्रताराबलं मुख्यं दम्पत्योः पाणिपीडने ।
मुख्यं गुरुबलं वध्वा वरस्येष्टं रवेर्बलम् ॥

[5]जन्मत्रिदशमारिस्थः पूजया शुभदो गुरुः ।
विवाहेऽथ चतुर्थाष्टद्वादशस्थो मृतिप्रदः ॥

[6]सर्वत्रापि शुभं दद्याद्द्वादशाब्दात्परं गुरुः ।
पञ्चषष्ठाब्दयोरेव शुभगोचरता मता ॥

( १ ) प्रपा. ३१८.

( २ ) गभा. ६७ हतधवा ( हृतधवा ) जन्मा ( जन्म ); सिन्धु. १०६७ ; विपा. ६५६ विधवा ( सुभगा ) विगत-पुत्रधवा ( विकलपुत्रधना ) क्रमशोऽभिजन्मा ( पुरुषश्च नारी ) ज्योतिःशास्त्रे ; संग. २०२ हतधवा ( हृतधवा ).

( ३ ) प्रपा. ३१८ भाषितम् (निश्चितम्) ; गभा. ६७ ; विसौ. ४४ उत्तरार्धे (तयोश्चन्द्रबलं श्रेष्ठमेष शास्त्रविनिश्चयः । ); संप्र. ८०२ प्रपावत् ; सिन्धु. १०६६ ; विपा ७४२ तयोः ( द्वयोः ) शेषं प्रपावत् ; ज्योनि. १५० प्रपावत् ; संग. २०२ श्रेष्ठमिति ( ग्राह्यमिति ) शेषं विपावत् ; संर. ४६४.

( ४ ) संकौ. १९९ ; प्रका ३६० ; पुम. ४४७ ; संर. ४६५.

( ५ ) गभा. ६७ ; धप्र. ४० उत्तरार्धे ( चतुर्थे द्वादशे जीवे द्विगुणं पूजयेद्गुरुम् । ); सिन्धु. १०६६ ; ज्योनि. १५० ; संग. २०२ हेऽथ ( हे च ) ज्योतिर्निबन्धे ; पुम. ४४७ ज्योतिर्निबन्धे ; संर. ४६४.

( ६ ) प्रपा. ३१७–३१८ बृहस्पतिः ; गभा. ६७ ; सिन्धु. १०६७ ; ज्योनि. १५० बृहस्पतिः ; संग. २०३ (=) पू. ; संर. ४६५.



[1]सप्तमात्पञ्चवर्षेषु स्वोच्चस्वर्क्षगतो यदि ।
अशुभोऽपि शुभं दद्याच्छुभदर्क्षेषु किं पुनः ॥

[2]रजस्वलायाः कन्याया गुरुशुद्धिं न चिन्तयेत् ।
अष्टमेऽपि प्रकर्तव्यो विवाहस्त्रिगुणार्चनात् ॥

[3]अर्कगुर्वोर्बलं गौर्या रोहिण्यर्कबला स्मृता ।
कन्या चन्द्रबला प्रोक्ता वृषली लग्नतोबला ॥

[4]मीने धनुषि सिंहे च स्थिते सप्ततुरङ्गमे ।
क्षौरमन्नं न कर्तव्यं विवाहं गृहकर्म च ॥

[5]मौञ्जीबन्धे विवाहे च प्रतिष्ठायां विशेषतः ।
गोचरेणैव कर्तव्यं वेधादिकमकारणम् ॥

वैधं वामवेधप्रयुक्तम् । संकौ. १२१

## शौनकः

[6]अर्केऽनुकूले सुरपूजिते च
वृद्धिं प्रपन्ने भृगुनन्दने च ।
भवन्ति नार्यः सुतसौख्यसंप-
त्सौभाग्यभाजः क्षतशत्रुपक्षाः ॥

( १ ) प्रपा. ३१८ सप्तमात् ( सप्ताब्दात् ) अशुभोऽपि ( अशुभेऽपि ) बृहस्पतिः ; गभा. ६७ ; सिन्धु. १०६७ भदर्क्षेषु ( भऋक्षेषु ) ; ज्योनि. १५० सप्तमात् ( सप्ताब्दात् ) बृहस्पतिः ; संर. ४६५.

( २ ) गभा. ६७ ; सिन्धु. १०६७ ; ज्योनि. १५० लायाः कन्याया ( ला यदा कन्या ) बृहस्पतिः ; संर. ४६५.

( ३ ) गभा. ६७ ; सिन्धु. १०६७ ; ज्योनि. १५० ; संर. ४६५.

( ४ ) विसौ. ९ कर्तव्यं ( कुर्वीत ) ; सम. १०६ मन्नं ( मत्र ) वृद्धगार्ग्यः ; पुम. ४४७ सर्वं समवत् ; संर. ४६६ सर्वं समवत्.

( ५ ) संसौ. १०५ ; संकौ. १२१ वेधादिक ( वैधं बल ) राजमार्तण्डः ; संव. ९८ मौञ्जीबन्धे ( व्रतबन्धे ) ; संर. १७५ पू., राजमार्तण्डः .

( ६ ) चका. ७९९.

## वराहमिहिरः

[1]गुरुशुद्ध्या विना चैव या कन्या परिणीयते ।
दुर्भगा विमुखा शौण्डा सा शीघ्रं विधवा भवेत् ॥

गुरौ रवौ वा विषमास्पदस्थे
स्त्रियो विपर्यस्तफलं लभन्ते ।
वराग्र्यलाभे च तथाऽतिकाले
पूजाभिषेकैः शुभदो विवाहः ॥

दुश्चिक्यजन्मारिखमध्यभेषु
जन्मर्क्षतो वाञ्छति वज्रपाणेः ।
पूजां पुरोधा न स एव काङ्क्ष-
त्यथाष्टमप्रान्त्यरसातलस्थः ॥

पूजाभिलाषं प्रति निःस्पृहेऽपि
कुर्याद्गुरौ शुद्धिविवर्जितेऽपि ।
वराग्र्यलाभे शुभदं विवाहं
वदन्ति गर्गच्यवनादिमुख्याः ॥

कुर्याद्धेममयीं गुरोः प्रतिकृतिं
कर्षैश्चतुर्भिः पुनः
पीतैर्गन्धविलेपनादिभिरतः
पीताम्बरैः पूजयेत् ।
अश्वत्थीयसमिद्बृहस्पतिभवै-
र्मन्त्रैश्च होमे कृते
पीडा तस्य न जायते गुरुकृता
यस्यापि शुद्धिर्न हि ॥

उच्चत्रिकोणस्वगृहादिसंस्थे
सद्गोचरस्थैः शुभखेचरैश्च ।
उद्वाहिता स्यात्सुतवित्तयुक्ता
गुर्विन्दुसूर्येष्वथवा कुमारी ॥

सुरगुरुबलमबलानां
पुरुषाणां तीक्ष्णरश्मिबलमेतत् ।
चन्द्रबलं दम्पत्योरवलोक्य वियोजयेल्लग्नम् ॥

(१) विसौ. ४३ ; संप्र. ८०२ 'गुरौ रवौ वा' 'दुश्चिक्यजन्मारि' 'पूजाभिलाषं प्रति' इति श्लोकत्रयमेव।

सोमात्मिकाश्च प्रमदाः पुमांसः
सूर्यात्मकाश्चेत्युदिता महद्भिः ।
तस्मात्स्त्रियाश्चन्द्रबलं विचिन्त्यं
विशेषतोऽत्रार्कबलं च पुंसाम् ॥
आदित्यवाक्पतिविशुद्धिविवर्जितेऽपि
षड्वर्गशुद्धिसहिते विमले विलग्ने ।
कन्यातिकालकृतदूषणमात्रचित्तैः
कार्यो विवाह इति च च्यवनोऽ-
ब्रवीच्च ॥

[2]गौडाः सूर्यबलं प्राहुर्दाक्षिणात्या गुरोर्बलम् ।
मालवा लग्नमिच्छन्ति लाटानां स्थानजं बलम् ॥

## लल्लः

[3]द्वादशदशमचतुर्थे
जन्मनि षष्ठाष्टमे तृतीये च ।
प्राप्ते पाणिग्रहणे जीवे वैधव्यमाप्नोति ॥
[4]बृहस्पतौ शोभनगोचरस्थे
विवाहमिच्छन्ति हि दाक्षिणात्याः ।
रवौ शुभस्थे प्रवदन्ति गौडा
न गोचरा मालवके प्रमाणम् ॥

## सारावल्याम्

[4]सर्वे अप्यनुकूलाः शशिसूर्यौ
नैव गोचरविशुद्धौ ।
अप्यूढा शक्रवधूर्यमस्य धनदस्य वा कुलटा ॥
गुरौ न जन्माष्टमगे विवाहः
शनैश्चरे जन्मगते तथैव ।
न चाष्टमे शीतकरे च कुर्या-
द्रवौ वरान्नैधनगे प्रयत्नात् ॥

(१) चका. ७९०.

(२) चका. ७९२ प्राप्ते (प्राप्ता) ग्रहणे (ग्रहणं) सारावल्याम् ; प्रपा. ३१७ षष्ठाष्टमे (षष्ठेऽष्टमे) प्राप्ते पाणिग्रहणे (पाणिग्रहणे प्राप्ते) ; संप्र. ८०२ ; सिन्धु. १०६७; संर. ४६५.

(३) चका. ७९० स्थे प्र (स्थे च) गोचरा (गोचरो) वराहः ; पुम. ४४७ ; संर. ४६५.

(४) चका. ७८९.

[1]राशिर्न ज्ञायते यस्य नापि लग्नस्य निश्चयः ।
लग्ने सूर्यो बली यस्मिन् तत्र सर्वं प्रशस्यते ॥
सौरस्त्वेकबलो ज्ञेयो माहेयो द्विबलः स्मृतः ।
त्रिबलस्तु बुधो ज्ञेयश्चतुर्गुणबलो गुरुः ॥
शुक्रः पञ्चबलो ज्ञेयश्चन्द्रः षड्बल उच्यते ।
सर्वग्रहबलैर्नित्यं तुल्य एवं दिवाकरः ॥
यात्राविवाहकालेषु कार्येषु विविधेषु च ।
यत्र सूर्यबलं नास्ति नास्ति सर्वं ततो बलम् ॥
पुंसामर्कः स्मृतो योनिर्योषितामम्तद्युतिः ।
अतो नृयोषितोराप्तं बलं सूर्यशशाङ्कजम् ॥

## विवाहवृन्दावनम्

[2]योषितां गुरुपतङ्गगोचरे
शोभने शुभकरः करग्रहः ।
अष्टवर्गविधिना तदत्यये
सूर्यशुद्धिमपरे नृणां जगुः ॥

अथ गोचराष्टकवर्गयोर्बलाबलं कथयति— योषितामिति । योषितां नारीणां गुरुपतङ्गगोचरे शोभने गोचरयुक्त्या गुरुबले सूर्यबले च सति करग्रहो विवाहः शुभकरः स्यात् । तदत्यये गोचरविधिना स्त्रीणां गुरुसूर्यबलालाभे सति अपरे अन्ये अष्टवर्गविधिना नृणां वराणां सूर्यशुद्धिं जगुः । लक्ष्मी.

अष्टवर्गफलमेव जातके
नास्य किं परिणयेऽपि मुख्यता ।
सत्यमुद्वहनजन्मशास्त्रयो-
रन्यता मुनिभिरेव संस्मरे ॥

अथ गोचरस्यैव कथं मुख्यतेति कथयति— अष्टवर्गेति । जातके होराशास्त्रे अष्टवर्गफलमेवास्ति, अतः परिणये विवाहेऽपि अस्य अष्टवर्गफलस्य मुख्यता किं न स्यात् ? इति सत्यं, उद्वहनजन्मशास्त्रयोः विवाहजातकशास्त्रयोः अन्यता भिन्नता मुनिभिरेव संस्मरे स्मृतेत्यर्थः । लक्ष्मी.

क्रूरमष्टममरिष्टमिष्टदं
सप्तमं शुभमुशन्ति जन्मनि ।
नेयमुद्वहनरीतिरित्यसा-
वत्र गोचरपथो रथोद्धतः ॥

अत्रोदाहरणं कथयति— क्रूरमिति । जन्मनि जन्मकाले जातके अष्टमं क्रूरं पापग्रहं अरिष्टदं अशुभप्रदं, सप्तमं सप्तमस्थानस्थं शुभं शुभग्रहं इष्टदं शुभप्रदं उशन्ति कथयन्ति । इयं उद्वहनरीतिः विवाहविधिः न भवति । इत्यस्मात् कारणादत्र विवाहे असौ गोचरपथः रथोद्धतः रथैरुद्धतः उद्घुष्टः परम्परागतः स्फुट एवेत्यर्थः । लक्ष्मी.

## राजमार्तण्डः

[1]वन्ध्या वित्तविवर्जिता पतिहिता
दौर्भाग्यदुःखोत्तरा
स्वल्पापत्यवती पतिप्रियतमा
बन्धुच्युता बन्धकी ।
निःस्वा सौख्यसमन्विता सुतधन-
प्रीत्यन्विता निःसुखा
व्यूढाऽनुक्रमशः सहस्रकिरणे
जन्मादिराशिस्थिते ॥
जन्माष्टमद्वादशगः सुरेज्यो
वैधव्यदः स्त्रीक्षयकृत् त्रिषष्ठः ।
दौर्भाग्यदाता दशमश्चतुर्थः
शेषेषु सौभाग्यसुखार्थसंपत् ॥
[2]अष्टवर्गविशुद्धेषु गुरुशीतांशुभानुषु ।
व्रतोद्वाहौ तु कर्तव्यौ गोचरे न कदाचन ॥
अष्टवर्गेण ये शुद्धास्ते शुद्धाः सर्वकर्मसु ।
सूक्ष्माऽष्टवर्गसंशुद्धिः स्थूला शुद्धिस्तु गोचरे ॥

---

(१) चका. ७९१–७९२.
(२) विवृ. १०|५-७.

(१) निप. २८२–२८३ (=). राजमार्तण्डग्रन्थस्थौ श्लोकावेतौ ।
(२) संग. २०३ ; संव. ९८.

[1]दम्पत्योर्द्विनवाष्टराशिरहिते
दारानुकूले रवौ
चन्द्रे चार्ककुजार्किशुक्रवियुते
मध्येऽथ वा पापयोः ।
त्यक्त्वा च व्यतिपातवैधृतिदिनं
विष्टिं च रिक्तां तिथिं
क्रूराह्ायनचैत्रपौषरहिते
लग्नांशके मानुषे ॥

## मुहूर्तचिन्तामणिः

[2]गुरुशुद्धिवशेन कन्यकानां
समवर्षेषु षडब्दकोपरिष्टात् ।
रविशुद्धिवशाच्छुभो वराणा-
मुभयोश्चन्द्रविशुद्धितो विवाहः ॥

अथ कन्याविवाहकालं ग्रहशुद्धिं चाऽऽह– गुर्विति । कन्यकानां विवाहः षडब्दकोपरिष्टात् षड्वर्षातिक्रमानन्तरं समवर्षेषु युग्मवर्षेषु सत्सु गुरुशुद्धौ सत्यां शुभः । अर्थात् पुरुषाणां विषमवर्षेषु रविशुद्धौ विवाहः शुभः । उभयोः स्त्रीपुंसयोः चन्द्रविशुद्धितो विवाहः शुभः स्मृतः । पीटी.

## चूडारत्ने

[3]चारातिचारवक्रे च राशौ याति बृहस्पतिः ।
शुद्धिं दद्यात्स तत्रैव विवाहे योषितामपि ॥
[4]कन्योद्वाहे गुरुदिने गुरुः पूज्यो द्विजातिभिः ।
पुत्रोद्वाहे व्रतत्वाच्च शूद्रादिः पूजयेत्क्वचित् ॥
केचिदाहुर्गुरोः शुद्धिर्नान्येषां गणकोत्तमाः ।
विवाहे ह्यन्त्यजातीनां चण्डालानां
च पौल्कसाम् ॥
[5]पुमांसोऽर्कात्मकाः प्रोक्ताः
स्त्रियः सोमात्मिका यतः ।
तस्मात्पुंसां शुभो भानुर्भवविक्रमखारिगः ॥

(१) निप. २८३ (=) ; संत. ८८३.
(२) मुचि. ६।१२.
(३) संग. २०२.
(४) संग. २०३. (५) संग. २०८.

## मुहूर्तमुक्तावल्याम्

[1]विवाहोऽर्केज्यशुद्ध्या स्यात्
व्रतं चैवाखिलं विधोः ॥

## अनिर्दिष्टकर्तृकवचनानि

[2]उपनयनं विप्राणां
गोदानविवाहमङ्गलादीनि ।
कुर्याद्बलवति चन्द्रे
जीवे च रवौ च नियमेन ॥

[3]सुतहिबुकवियद्विलग्नधर्मे-
ष्वमरगुरुर्यदि दानवार्चितो वा ।
यदशुभमुपयाति तच्छुभत्वं
शुभमपि वृद्धिमुपैति तत्प्रभावात् ॥

[4]गुरुर्द्विपञ्चसप्तायनवस्थः शुभदः स्मृतः ।
पूजया दिक्त्रिषष्ठाद्यो नार्काष्टादिगतः शुभः ॥

[5]अस्तार्थपुत्रायतपःसु जीवे
स्वोच्चे निजर्क्षे यदि संस्थिते वा ।
विवाहकाले रमयेव विष्णू
रमेत भार्यासहितः सदैव ॥

[6]द्विपञ्चसप्तनन्देशस्थितो जीवः शुभप्रदः ।
द्विजानां मेखलाबन्धे कन्यायाश्च करग्रहे ॥

[7]वरस्य भास्करं लग्नं कन्यायाश्च गुरोर्बलम् ॥
[8]रविगुरुशुद्धौ व्रतोद्वाहौ ॥

(१) संग. २०१.
(२) प्रपा. ३२८.
(३) निप. २८३.
(४) विपा. ६५६.
(५) प्रपा. ३१७.
(६) धप्र. ४० ( द्विपञ्चमसप्तमनवमस्थितो जीवः शुभप्रदः । व्रतबन्धे तु पुत्रस्य कन्यायाश्च परिग्रहे ॥ ) शिरोमणौ ; पुम. ४४७ ज्योतिर्निबन्धे.
(७) कुभ. १०७०.
(८) संप्र. ८०४ स्मृत्यन्तरम्.

## शौनककारिका

[1]कन्यकोद्वाहकाले चेदानुकूल्यं न विद्यते।
ब्राह्मणस्योपनयने गुरोर्विधिरुदाहृतः॥
[2]ब्राह्मणस्योपनयने नानुकूलो भवेद्रविः।
तस्य शान्तिं प्रवक्ष्यामि मन्त्रौषधिविधानतः॥

(१) शौका. १ पृ. ९५ चेदानुकूल्यं (तु सानुकूलं); प्रपा. ३१८ चेत् (तु); गभा. ९८ कन्यकोद्वाहकाले चेत् (कन्योद्वाहस्य काले तु); विसौ. ४३; संप्र. ८०३; सिन्धु. १०६८ प्रपावत्; विपा. ६५५, चेत् (तु) न विद्यते (गुरोर्न चेत्) नयने (नायेऽपि); संकौ. १४३ प्रपावत्; ज्योनि. १५१ प्रपावत्; प्रका. २६९ प्रपावत्; संग. २०३ (=) पूर्वार्धे (कन्योद्वहनकाले तु सानुकूल्यं गुरोर्न चेत्।); संव. १११ प्रपावत्.

(२) शौका. १ पृ. ९६ प्रवक्ष्यामि (च वक्ष्यामि); प्रपा. ३१८ नानुकूलो (नानुलोमो); संप्र. ८०३–८०४; विपा. ६६२ नानुकूलो (नानुकूल्ये) मन्त्रौषधिविधानतः (उक्तां चैव महर्षिभिः); ज्योनि. १५१; संग. २०८ मन्त्रौषधिविधानतः (उक्तां चैव महर्षिभिः); कुभ. १०७०.

अत्रोपनयनं विवाहस्याप्युपलक्षणम् 'रविगुरुशुद्धौ व्रतोद्वाहौ' इति स्मरणात्। संप्र. ८०४

## रेणुकारिका

[1]शुद्धिर्यस्या न विद्येत कन्याया वज्रभृद्गुरोः।
तदा तत्पूजनात् शुद्धिर्न बन्ध्वष्टमरिष्फगो॥
अतिकालाद्वराल्लोभाद्दुर्भिक्षाद्देशविप्लवात्।
इच्छन्ति द्विगुणां पूजां विवाहे गालवादयः॥

(१) रेका. १०८–१०९ पृ. ५५.

# चन्द्र—ताराबलविचारः*

## नारदः

[1]भूबाणनन्दहस्ताश्च रसदिग्वह्निशैलजाः ।
वेदा वसुशिवादित्या घातचन्द्रो यथाक्रमम् ॥

[2]यात्रायां युद्धकार्येषु घातचन्द्रं विवर्जयेत् ।
विवाहे सर्वमाङ्गल्ये चौलादौ व्रतबन्धने ।
घातचन्द्रो नैव चिन्त्य इति पाराशरोऽब्रवीत् ॥

## वराहमिहिरः

[3]कृषिभवनविवाहे पट्टबन्धाभिषेके
प्रथमयुवतिशय्याऽऽभूषणे वाऽऽधिपत्ये ।
नगरगृहप्रवेशे जन्मचन्द्रः प्रशस्तः
इति वदति वराहः क्षौरयात्रां विहाय ॥

[4]ताराबलं मागधीयाः श्रयन्ति
कुर्वन्ति तारेन्दुबलेन माद्राः ।
तथोत्तरा मौकुलसंनिकृष्टा
माण्डव्यतित्तीरतुषारकेषु ॥

ग्रहर्क्षयोगास्तिथिवारयोगाः
शुभाऽशुभा ये कथिताः प्रभूताः ।
वङ्गेषु तत्प्रोक्तफला भवन्ति
नान्येषु देशेषु विचिन्तनीयाः ॥

* ताराकूटं गुर्वर्कबलविचारप्रकरणं च द्रष्टव्यम् ।

(१) गभा. ६७ नन्द (नव) रस (रसो) चन्द्रो (चन्द्रा); सिन्धु. १०७९; विपा. ७४५ (=); संग. २०९ (=) नन्द (नन्दा); संर. ४७५ नन्द (नव) शैलजाः (पर्वताः).

(२) गभा. ६७ युद्ध (शुभ); सिन्धु. १०७९; विपा. ७४५ (=); संग. २०९ (=); संर. ४७५.

(३) संग. २१०.

(४) चका. ७९१.

## श्रीपतिः

[1]शुक्ले पक्षे शीतरश्मिर्बलीयान्
न प्राधान्यं तारकायास्तु तत्र ।
शक्त्या युक्ते विद्यमाने च कान्ते
न स्वातन्त्र्यं योषितः क्वापि दृष्टम् ॥

[2]न खलु बहुलपक्षे शीतरश्मेः प्रभावः
कथितमिति हि तारावीर्यमार्यैः प्रधानम् ।
अतिविकलशरीरे प्रेयसि प्रोषिते वा
प्रभवति खलु भर्तुः सर्वकार्येषु योषा ॥

## रत्नमालायाम्

[3]एकपञ्चनवयुग्मषड्दश-
त्रीणि सप्तचतुरष्टलाभगः ।
द्वादशोऽजवृषभादिराशितो
घातचन्द्र इति कीर्तितो बुधैः ॥

## सारावल्याम्

[4]सर्वे अप्यनुकूलाः शशिसूर्यौ
नैव गोचरविशुद्धौ ।
अप्यूढा शक्रवधूर्यमस्य धनदस्य वा कुलटा ॥

[5]यत्र चन्द्रश्च तारा च द्वावेतौ बलवत्तरौ ।
दोषास्तत्र प्रलीयन्ते यदि स्युः
सर्वतोऽपगाः ॥ (?)

(१) प्रपा. ३२८ शुक्ले (शुक्ल); विपा. ७५४ च (हि); संग. २१० रश्मिर्बलीयान् (रश्मिप्रधानं) यास्तु (याश्च) कान्ते (पत्यौ) चूडारत्ने.

(२) प्रपा. ३२८; विपा. ७५४ रश्मेः प्र (रश्मिप्र) मार्यैः (मत्र) प्रभवति (भवति हि); संग. २११ रश्मेः प्र (रश्मिप्र) मार्यैः (मार्यैः).

(३) गभा. ६७; सिन्धु. १०७९.

(४) चका. ७८९.

(५) चका. ७९२.

नष्टे शुक्रे तथा चन्द्रे गुरावस्तमुपागते ।
न विवाहो न यात्रा वै नैव दानं समाचरेत् ॥

### विवाहपटले

[1]न कृष्णपक्षे शशिनः प्रभाव-
स्ताराबलं तत्र शुभं प्रदिष्टम् ।
देशान्तरस्थे विकले च पत्यौ
सर्वाणि कार्याणि करोति योषा ॥
चन्द्रेऽनुकूलेऽथ बलान्विते वा
तारा विरुद्धा प्रकरोत्यवश्यम् ।
संतापमृत्युं च तथाऽर्थनाशं
सम्यग्विरक्ता प्रमदेव भर्तुः ॥
तस्माच्च तारां बहुलेऽत्र पक्षे
केचिच्च शुक्लेऽपि हि चिन्तयन्ति ।
ताराबलं प्राप्य सदाऽनुकूला
सुखाय यस्माद्युवती नृणां स्यात् ॥

### विवाहवृन्दावनम्

[2]कन्यकावितरणाय पूरुषः
पात्रमात्रमिति नैन्दवं बलम् ।
केचिदस्य वितरन्ति कोविदाः
को विदां किल करोतु तन्मनः ॥

अथ चन्द्रबलाध्यायः । तत्रादौ अन्येषां मतं दूषयति– कन्यकेति । कन्यकावितरणाय कन्यादानाय पूरुषः वरः पात्रमात्रं इति अस्मात् केचित् कोविदाः पण्डिताः अस्य वरस्य ऐन्दवं बलं चन्द्रबलं न वितरन्ति न ददति, न विचारयन्तीत्यर्थः । तन्मनः तेषां कोविदानां मनः को विदांकरोतु को जानातु । लक्ष्मी.

ईदृशं यदि ततः प्रतिग्रह-
ग्राहिणोऽस्य किमभिप्रपञ्चितैः ।
सांशनाडिगणयोनिशुद्धिभि-
र्जन्मलग्नभवनव्ययाष्टगैः ॥

अथ दोषं कथयति– ईदृशमिति । पात्रमात्रत्वात् वरस्य चन्द्रबलं न देयम्, यदि ईदृशं तदा प्रतिग्रहग्राहिणः अस्य वरस्य सांशनाडिगणयोनिशुद्धिभिः, तथा जन्मलग्नभवनव्ययाष्टगैरित्यादिभिः अभिप्रपञ्चितैः किम् ? यदि अंशनाडिगणादीनां शुद्धिर्विलोक्यते तदा चन्द्रबलमपि विचार्यमेव, चेत् प्रतिग्राहित्वात् चन्द्रबलं न विचार्यं तर्हि योनिनाड्यादीनां शुद्धिरपि न विचार्येत्यर्थः । लक्ष्मी.

[1]लग्निको नवलवः पुमन्तकृत्
स्वामिना यदि न युक्तवीक्षितः ।
संगमं दिशति दीर्घनिद्रया
पत्युरिन्दुतनुकामगो ग्रहः ॥

चन्द्रमस्युपचयात्परिच्युते
चारुगोचरचरैः परैरपि ।
कर्तुरायतिशुभं सभङ्गुरं
निर्दिशन्ति सितशौनकादयः ॥

एवमादिफलवादिनो नृणा-
मैन्दवं बलमुशन्ति किं न ते ।
भानुरप्युपचये नृजन्मतो
यन्मतोक्तिषु तदिष्टमेव नः ॥

लग्निको नवलवः लग्नगतो नवांशः यदि स्वामिना युक्तवीक्षितः न भवेत्तदा पुमन्तकृत् वरनाशकरो भवति । इन्दुतनुकामगः चन्द्रलग्नाभ्यां सप्तमस्थः ग्रहः पत्युः दीर्घनिद्रया मृत्युना संगमं दिशति ददाति ।

चन्द्रमसि उपचयात् परिच्युते क्षीणे सतीत्यर्थः, परैः भौमादिग्रहैः चारुगोचरचरैः शुभस्थानस्थितैः अपि कर्तुः वरस्य आयतिशुभं भविष्यच्छुभफलं सभङ्गुरं नश्वरं इति सितशौनकादयः निर्दिशन्ति कथयन्ति ।

एवमादिफलवादिनः इत्याद्युपर्युक्तफलवक्तारो ये जनाः सन्ति ते नृणां पुरुषाणां ऐन्दवं बलं चान्द्रं बलं किं न उशन्ति ? किं नेच्छन्ति ? ये चन्द्रादुक्तफलानि स्वीकुर्वन्ति ते चन्द्रबलमपि स्वीकुर्वन्त्वित्यर्थः । तथा– यन्मतोक्तिषु नृजन्मतः पुरुषजन्मराशित उपचयेषु स्थितो भानुः शुभः तत् नः अस्माकमपि इष्टमेव । लक्ष्मी.

---

( १ ) विसी. ४४.
( २ ) विवृ. ६।१–२ ; विसी. ४४.

( १ ) विवृ. ६।३–५.

[1]न त्रिवर्गपतिना नरेण चेत्
कन्यया शशिबलं समाप्यते ।
दीयते यदिह गोमहीमहि-
ष्यादि तर्हि दिश तस्य तद्बलम् ॥

अथान्यप्रकारेणापि दोषं कथयति— नेति । त्रिवर्गपतिना धर्मार्थकामस्वामिना अपि नरेण शशिबलं चन्द्रबलं न समाप्यते, कन्ययैव यस्या दानं भवति तयैव शशिबलं समाप्यते चेत्, तदा गोमहीमहिष्यादि यद्वस्तु दीयते विवाहकाले वराय समर्प्यते तस्य गोमहिष्यादेः सर्वस्य तद्बलं चन्द्रबलं दिश प्रयच्छ । इत्यतिप्रसङ्गदोषो दर्शितः, अतो वरस्यापि चन्द्रबलं ग्राह्यम् । लक्ष्मी.

इन्दुरिन्दुवदनानुगं बलं
यच्छतीह युवतिग्रहो यतः ।
सन्नृणामपि कथं षडष्टगः
खण्डयत्ययमसून् प्रसूतिषु ॥

इन्दुः चन्द्रः इन्दुवदनानुगं युवत्यनुसारं बलं यच्छति, यतः स युवतिग्रहः स्त्रीग्रहः इति चेत्, तदा अयं चन्द्रः प्रसूतिषु जन्मसमयेषु षडष्टगः सन्नृणां पुरुषाणां असून् प्राणान् कथं खण्डयति नाशयति ? अतः पुरुषस्यापि चन्द्रबलं ग्राह्यमेवेति । लक्ष्मी.

[2]होरयाऽपि हिमरश्मिरादृतः
पुंस्फलेषु सुनफानफादिषु ।
अत्रिराह बहुलेऽपि तारकां
तारकापतिबले बलीयसीम् ॥

होरया जातकशास्त्रेण अपि पुंस्फलेषु पुरुषफलेषु सुनफानफादिषु योगेषु हिमरश्मिश्चन्द्र आदृतः । अतश्चन्द्रबलं ग्राह्यमेवेत्यर्थः । तथा अत्रिः मुनिः बहुले कृष्णपक्षेऽपि तारकापतिबले सत्येव तारकां बलीयसीमाह । सत्येव चन्द्रबले तारा बलवती भवत्यतश्चन्द्रबलं वरस्यापि ग्राह्यमित्यर्थः । लक्ष्मी.

(१) विवृ. ६।६–७ ; विसौ. ४४.
(२) विवृ. ६।८ ; विसौ. ४४ उत्त.

[1]प्रोषिते विकलवर्ष्मणि प्रिये
तोलिलिः स्त्रियमियेष कार्यिणीम् ।
अस्तु किंतु न पतिप्रतीपतां
साऽन्यथा घटयितुं पटीयसी ॥

पुनरन्यमतमुपन्यस्य दूषयति— प्रोषित इति । प्रिये स्वामिनि प्रोषिते देशान्तरं गते सति, विकलवर्ष्मणि रुग्णशरीरे सति वा तोलिलिः मुनिः स्त्रियं कार्यिणीं कार्याधिकारिणीं इयेष ऐच्छत् । अस्तु सा कार्यकारिणी भवतु, किन्तु सा स्त्री तारा वा अन्यथा पतिप्रतीपतां स्वामिवैपरीत्यं घटयितुं कर्तुं न पटीयसी न क्षमा । अतः सत्येव चन्द्रानुकूलत्वे ताराबलं ग्राह्यमिति सिध्यति । लक्ष्मी.

[2]क्रौर्यमेति बहुले स केवलं
नैव नश्यति तमाममां वसन् ।
नास्ति चैष यदि तत्र तत्कथं
तत्कृता जनिषु रिष्टरौद्रता ॥

बहुले कृष्णपक्षे सः चन्द्रः क्रौर्यं क्रूरत्वं एति गच्छति । तथा अमां वसन्नपि नैव नश्यतितमाम् अतिशयेन नैव नश्यति । यदि च एष चन्द्रः तत्र तस्याममायां नास्ति अतिशयेन नष्टः तत्तदा जनिषु जन्मकालेषु तत्कृता रिष्टरौद्रता रिष्टक्रूरता कथं स्यात् ? अतोऽमायां चन्द्रो न नश्यति, किंच ( ? किंतु ) प्रकाशविहीनो भवति । लक्ष्मी.

[3]पार्श्वगे निजपतौ कुटुम्बिनी
दुर्बलेऽपि तदभीष्टकार्यकृत् ।
तारकाऽपि शशिनोऽनुकूलता-
ऽसंभवे भवति पक्षपातिनी ॥

दुर्बलेऽपि निजपतौ पार्श्वगे निकटवर्तिनि सति कुटुम्बिनी तत्स्त्री तदभीष्टकार्यकृत् तस्य स्वभर्तुरभीष्टकार्यकारिणी भवति । तथैव तारकाऽपि शशिनः

(१) विवृ. ६।९ ; विसौ. ४५.
(२) विवृ. ६।१०.
(३) विवृ. ६।११ ; विसौ. ४५.

चन्द्रस्य अनुकूलताऽसंभवे* पक्षपातिनी भवति । अतः कृष्णपक्षेऽपि चन्द्रानुकूलत्वे एव ताराबलं ग्राह्यमिति सिद्धम् । लक्ष्मी.

## चूडारत्ने

[१]करणभगणदोषं वारयोगादिदोषं
तिथिकुलिकयमार्धं राहुकेत्वोश्च दोषम् ।
रविशशिकुजदोषं सौम्यशुक्रेज्यदोषं
हरति सकलदोषं रोहिणीयुक्तचन्द्रः ॥
[२]तीर्थयात्राविवाहान्नप्राशनोपनयादिषु ।
माङ्गल्ये सर्वकार्येषु घातचन्द्रं न चिन्तयेत् ॥

## रत्नसंग्रहे

[३]प्रयाणे प्राणसंदेहो भैषज्ये मरणं ध्रुवम् ।
विवाहे विधवा नारी जन्मेन्दुफलमीदृशम् ॥

## ज्योतिर्निबन्धे

[४]अभिषेके प्रवेशे च चौलान्नव्रतबन्धने ।
पाणिग्रहे प्रयाणे च चन्द्रो द्वादशगः शुभः ॥
[५]विवाहे गर्भसंस्कारे स्त्रीणां विधुबलं भवेत् ।
इतरत्र तु भर्तुः स्यादिति विद्वत्प्रभाषितम् ॥
प्रायेण सर्वत्र विलोकयन्ति
चान्द्रं बलं गोचरतो विशुद्धम् ।
लोके यतश्चन्द्रबलं प्रधानं
शास्त्रेषु मुख्यं खलु लग्नमेव ॥
एकतस्तु ग्रहाः सर्वे एकतः शशलाञ्छनः ।
ततोऽधिकतरश्चन्द्रस्तस्माचन्द्रं परीक्षयेत् ॥

[१]विवाहचौलव्रतबन्धयज्ञे
पट्टाभिषेके च तथैव राज्ञाम् ।
सीमन्तयात्रासु तथैव जाते
नो चिन्तनीयः खलु घातचन्द्रः ॥
[२]क्षीणेन्दुः कुलनाशाय स्त्रीविनाशाय भार्गवः ।
जीवः पुरुषनाशाय यदि पाणिग्रहो-भवेत् ॥

## अनिर्दिष्टकर्तृकवचनानि

[३]गोचरशुद्धाविन्दुं कन्याया यत्नतः शुभं वीक्ष्य ।
तिग्मकिरणं च पुंसः शेषैरबलैरपि विवाहः ॥
[४]पाणिपीडनविधेरनन्तरं
भर्तुरेव हि विधोर्बलादिकम् ।
चिन्तनीयमिह योषितां कचि-
न्नाष्टमङ्गलमृते मनीषिभिः ॥
[५]जन्मत्रिरसकामायदशमस्थः शुभः सदा ।
चन्द्रमाः शुक्लपक्षे च द्विपञ्चनवगः शुभः ॥
[६]कुद्विवेदाङ्गनागाङ्कमिता तारा शुभावहा ।
शुक्ले च पञ्चमीं यावच्चन्द्रताराबलं शुभम् ॥
[७]जन्म संपद्विपत्क्षेमा प्रत्यरिः साधिका मृतिः ।
मैत्राऽतिमैत्रा ताराः स्युर्नव त्रिर्जन्मभात्क्रमात् ॥
[८]जन्मसंपद्विपत्क्षेमाः प्रत्यरः साधको वधः ।
मैत्रं परममैत्रं च जन्मर्क्षेषु पुनः पुनः ॥
[९]बली कर्मगतश्चन्द्रो बलवच्छुभवीक्षितः ।
विपत्प्रत्यरबाधर्क्षत्रिजन्मर्क्षोत्थदोषहा ॥
[१०]जन्मकर्मर्क्षनाथौ द्वौ मिथो मित्रे यदा तदा ।
वैनाशिकर्क्षसंभूतदोषा भङ्गं ययुस्तदा ॥

---

* अत्र असंभवपदमाभिप्रयतट्टीकाकृतोऽयमभिप्रायः— ' शशिनः प्रातिकूल्ये तारकाऽपि शशिनः पक्षपातिनी संवादिनी प्रतिकूलेत्यर्थः, भवति । ' इति । अयं च टीकाकृतोऽभिप्रायस्तस्यैव भाषाटीकायां स्पष्टः । स्वरसविरोधात्तु नायमर्थो मनोरमः । वस्तुतस्तु— ' शशिन आनुकूल्ये सत्येव तारकाऽपि पक्षपातिनी अनुकूला भवति ' इत्येव सरलोऽर्थः ।

( १ ) संग. २१०.
( २ ) संग. २०९.
( ३ ) संग. २१०.
( ४ ) विसौ. ४४ (=) उत्त. ; संग. २१०.
( ५ ) संर. ४६४–४६५.

( १ ) गभा. ६७ पट्टाभि ( महाभि ) ; सिन्धु. १०८०.
( २ ) पुम. ४४७ क्रमेण लङ्घः (?) ; संर. ४६४ कुल ( फल ).
( ३ ) निप. २८२. ( ४ ) विसौ. ४४.
( ५ ) संग. २०९. ( ६ ) संग. २११.
( ७ ) संग. २११.
( ८ ) प्रपा. ३२८ क्षेमाः प्र ( क्षेमप्र ) जन्मर्क्षेषु ( जन्म चेति ). ताराकूटं द्रष्टव्यम् ।
( ९ ) प्रपा. ३२८ ; विसौ. ४५ कर्मगत ( कण्टकग ) रबाधर्क्ष ( रिनक्षत्र ).
( १० ) प्रपा. ३२८ ; विसौ. ४५ कर्मर्क्ष (कर्मभ) वैना ( विना ) ययुः ( जगुः ).

# सिंहस्थ—मकरस्थगुरुनिर्णयः

## वसिष्ठः

[1]भागीरथ्युत्तरे कूले गौतम्या दक्षिणे तथा।
विवाहो व्रतबन्धश्च सिंहस्थेज्ये न दुष्यति॥
[2]विवाहो दक्षिणे कूले गौतम्या नेतरत्र तु॥

(१) सिंहस्थगुरोरपवादो वसिष्ठेनोक्तः— विवाहो दक्षिणे इति। गभा. ६७

(२) एतेन— 'विवाहो दक्षिणे कूले गौतम्या नेतरत्र तु' इति वासिष्ठं वाक्यान्तरमपि व्याख्यातम्, विवाहस्य व्रतोपलक्षणत्वात्। इतरत्र गोदागङ्गान्तराले, न गङ्गोत्तरे, तत्र पूर्ववाक्येन विधानात्। संप्र. ८०६

(३) अत्र विवाहव्रतबन्धौ एव न निषिद्धौ, आभ्यामन्यानि शुभकर्माणि निषिद्धान्येव, अपवादस्य संकोचाश्रयत्वात् उपलक्षण(?णा)योगात्।
संग. २१३

[3]पाणेस्तु ग्रहणं कार्यं सिंहस्थो वाक्पतिर्यदा।
भानौ मेषगते शस्तमित्याहुः शौनकादयः॥

सिंहगते सुरमन्त्रिणि कन्या
मेषगते तपने परिणीता।
भूषणरत्नयुता च सुशीला
सत्यवती सुतकीर्तिसमेता॥
[4]सिंहेऽपि भगदैवत्ये गुरौ पुत्रवती भवेत्।
अत्यन्तं सुभगा साध्वी धनधान्यसमन्विता॥

---

(१) गभा. ६७; संप्र. ८०६ बन्धश्च (बन्धो वा); सिन्धु. १०७२; प्रका. ३५९; संग. २१३ रत्नसंग्रहे; संर. ४६७ संप्रवत्.

(२) गभा. ६७; संप्र. ८०६, ८०७; सिन्धु. १०७२ गौतम्या (गौतम्यां); संग. २१२ कूले (तीरे).

(३) संप्र. ८०८.

(४) चका. ७९२ सिंहेऽपि भगदैवत्ये (सिंहे च भगदेवत्ये) अत्यन्तं (अत्यन्त) समन्विता (पतिप्रिया) सारावल्याम्; संप्र. ८०८; ज्योनि. ९३ दैवत्ये (देवत्ये) भृगुः; संर. ४६७ (=) पू.

(१) कालविशेषेणापि प्रतिप्रसवमाह वसिष्ठः—— पाणेस्तु ग्रहणं ... धनधान्यसमन्वितेति।
संप्र. ८०८

(२) भगदैवत्यं पूर्वे फल्गुन्यौ। भगदैवत्यप्रथमपादस्य सिंहांशत्वेन परित्याज्यत्वात्तद्व्यतिरिक्तं भगदैवत्यं ग्राह्यम्। संर. ४६७

[2]नीचराशिगतो जीवः प्रशस्तः सर्वकर्मसु।
निचांशकगतस्त्याज्यो यस्मादंशेषु नीचता॥

## नारदः

[3]न गुरौ सिंहराशिस्थे सिंहांशकगतेऽपि वा॥
[3]गुरौ तु सिंहराशिस्थे भगे भाग्यवती भवेत्।
पैत्र्येऽर्यमर्क्षे सा नारी विवाहे विधवा भवेत्॥

एतन्नर्मदोत्तरविषयम्। मुक्ता. १४७

[4]माघ्यां यदि मघा न स्यात्सिंहे गुरुरकारणम्॥
अकारणं विवाहे अनिषेधक इत्यर्थः।
संर. ४६७

## गौतमः

[5]कण्ठीरवस्थे धिषणे विवाहं
कुर्यान्न यात्राव्रतबन्धदीक्षाः।
गोदावरीं चोत्तरतो हि दोषो
गोदावरीदक्षिणतो न दोषः॥

---

(१) संप्र. ८०९ व्यवहारचण्डेश्वरः; पुम. ४४९; कृभ. १०७२.

(२) ज्योना. २७४ पृ. ५१.

(३) मुक्ता. १४७.

(४) पुम. ४४८ यदि मघा (मघा यदा); कृभ. १०७२; संर. ४६७ यदि मघा न स्यात् (यदा यदा न स्युः) ज्यौतिषे.

(५) प्रपा. ३१७; संप्र. ८०७ यात्राव्रतबन्धदीक्षाः (यात्रां व्रतबन्धदीक्षाम्) रीं चोत्तरतो हि दोषो (रीमुत्तरतो हि दोषा) दोषः (सन्ति); विपा. ७३९–७४० यात्रा (यात्रां) दीक्षाः (दीक्षाम्) उत्तरार्धं संप्रवत्.

यच्च 'कण्ठीरवस्थे......' इति गौतमवाक्ये सामान्यतो 'गोदावरीमुत्तरतः' इत्युक्तम्, तत् गोदा-गङ्गान्तरालविषयं द्रष्टव्यम्, 'गोदाभागीरथीमध्ये' इति पराशरस्मरणात्। संप्र. ८०७

## व्यासः

[1]नर्मदोत्तरदेशे तु सिंहस्थे देवमन्त्रिणि।
विवाहं नैव कुर्वीत निषेधो नास्ति दक्षिणे॥

## देवलः

[2]व्रतबन्धनं प्रतिष्ठां विवाहमथ मन्दिरप्रवेशं च।
यात्रां च याम्यदेशे कुर्यादार्ये न सिंहांशे॥

(१) आर्यः बृहस्पतिः। प्रपा. ३१७

(२) यद्यपि (यदपि?)— 'व्रतबन्धप्रतिष्ठां' इति देवलेन याम्यदेशे इति सामान्यतोऽभिहितम्, तदपि भागीरथ्या याम्ये इति द्रष्टव्यम्। एतेन 'याम्यदेशे यात्राम्' इत्यन्वयो निरस्तः। संप्र. ८०७

(३) सिंहस्थे गुरौ सर्वदेशेषु विवाहादि सर्वमपि कर्म न कार्यमित्यर्थः। कुभ. १०७२

## पराशरः

[3]गोदाभागीरथीमध्ये नोद्वाहः सिंहगे गुरौ।
मघास्थे सर्वदेशेषु तथा मीनगते रवौ॥

(१) **प्रपा. २०३** विवाहं नैव (शुभकर्म न) ग्रन्थान्तरे; **मुक्ता. १४७**; **सिन्धु. ९२२** प्रपावत्, ज्योतिर्निबन्धे; **ज्योनि. ११९** देशे तु (देशस्थे) शेषं प्रपावत्, गर्गः; **संकौ. ११३** विवाहं नैव (शुभं कर्म न) पारिजाते; **आन. १७९** देशे (तीरे).

(२) **प्रपा. ३१७**; **संप्र. ८०७** बन्धनं (बन्ध) विवाहमथ (विवाह); **विपा. ७४०** बन्धनं (बन्धं) विवाहमथ (विवाहं); **कुभ. १०७२** बन्धनं (बन्धं) विवाहमथ (विवाहं) दार्ये (दार्यो) स्कन्दपुराणम्.

(३) **गभा. ६७**; **संप्र. ८०६** मघास्थे सर्वदेशेषु (मघासंस्थे सर्वदेशे); **सिन्धु. १०७२**; **प्रका. ३५९ पू.**; **पुम. ४४९**; **संर. ४६६.**

## गर्गः

[1]गुरौ सिंहस्थिते चैव सूर्ये च धनुषि स्थिते।
विवाहमपि नेच्छन्ति मुनयः काश्यपादयः॥

धनुर्गतेऽर्के विवाहनिषेधः द्वितीयविवाहनिषेधपरः, यतः प्रथमस्य तत्र दक्षिणायनत्वेन निषेधो विहितः। मुक्ता. १४७

[2]न गुरौ सिंहराशिस्थे सिंहांशकगतेऽपि वा।
क्षौरमन्नं न कुर्वीत विवाहं गृहकर्म च॥

[3]भागीरथ्युत्तरे कूले गोदावर्याश्च दक्षिणे।
व्रतोद्वाहादिकर्माणि सिंहस्थेऽपि न दुष्यति॥

कुर्वन्निति शेषः। संप्र. ८०६

[4]वृत्रशत्रुसचिवेऽपि सिंहगे
मेषगे च तपने करग्रहम्।
या लभेत भवतीह साऽचला
सौख्यमेति सुभगत्वमक्षयम्॥

## वात्स्यः

[5]वक्रे चैवातिचारे त्रिदशपतिगुरौ
देवपूज्ये च लुप्ते
गुर्वादित्येऽधिमासे दिवसकरविधोः
संगमे चैत्रपौषे।
धिष्ण्ये केतूद्गमे वा शरदि सुरगुरौ
सिंहसंस्थेऽमरेज्ये
वर्षे लुप्तेऽपि चोढा सुनियतमरणं
देवकन्याऽपि भर्तुः॥

(१) **चका. ७८९** उत्त., सारावल्याम्; **मुक्ता. १४७.**

(२) **प्रपा. २०३** तेऽपि वा (तेऽथ वा) च (वा); **संप्र. ३११ : ८०५** च (वा) : **८०८ पू.**; **ज्योनि. ११९** च (वा).

(३) **संप्र. ८०६**; **ज्योनि. ९२** कूले (तीरे) कर्माणि सिंहस्थेऽपि (कर्मादि सिंहसंस्थे).

(४) **ज्योनि. ९३** साऽचला (साऽबला) वृद्धगर्गः; **संग. २१३** ग्रहम् (ग्रहः) या (यो).

(५) **संप्र. ८०५** विधोः (विधौ) मरणं (मरणा); **पुम. ४४८** देवपूज्ये च (दैत्यपूज्ये वि) ऽमरेज्ये (मनोज्ञे) चोढा सुनि (चोक्तं स नि) देवकन्याऽपि (कन्यकायाश्च) लल्लः.

[1]गुरौ हरिस्थे न विवाहमाहु-
हारीतगर्गप्रमुखा मुनीन्द्राः।
यदा तु माघी मघसंयुता स्यात्
तदा न कन्योद्वहनं वदन्ति ॥

## वात्स्यायनः

[2]सिंहस्थिते सुरगुरावधिमासके च
ज्येष्ठे तथाऽऽद्यतनुजस्य तथा सुतायाः।
कुर्वीत नार्कगुरुनीचगयोर्विलग्न-
जन्मस्थयोश्च निखिलान्यपि मङ्गलानि ॥

## शौनकः

[3]गुर्वादित्ये व्यतीपाते वक्रातीचारगे गुरौ।
नष्टे शशिनि शुक्रे वा बाले वृद्धेऽथ वा गुरौ ॥
पौषे चैत्रेऽथ वर्षासु शरद्यधिकमासके।
केतूद्गमे निरंशेऽर्के सिंहस्थेऽमरमन्त्रिणि ॥
विवाहव्रतयात्रादिपुरहर्म्यगृहादिकम्।
क्षौरं विद्योपविद्यां च यत्नतः परिवर्जयेत् ॥
[4]मेषस्थे दिवसकरे सिंहस्थे वज्रपाणिसचिवे च।
यस्याः परिणयनमसौ साध्वी सुखसंपदोपेता ॥
[5]विन्ध्यस्योत्तरदेशे तु नीचारिस्थो बृहस्पतिः।
व्रतादौ मासमेकं तु परित्यज्य ततः शुभम् ॥

(१) संप्र. ८०५; पुम. ४४८ यदा तु (यदा न) तदा न (तदा च) राजमार्तण्डे दक्षः; संर. ४६७ उत्तरार्धे (मघायुता स्याद्यदि नैव माघी तदा च कन्योद्वहनं वदन्ति।) ज्यौतिषे.

(२) चका. ७९२; ज्योनि. ९२ तनुजस्य तथा सुतायाः (तनयस्य कुमारिकायाः) गुरु (गत) जन्मस्थ (जन्मेश) कालनिर्णये.

(३) गभा. ६७ पुरहर्म्य (पुनर्हर्म्य); सिन्धु. १०७१; संग. २११ गुर्वादित्ये (गुर्वादित्य) वक्राती (वक्राति) शेषं गभावत्.

(४) ज्योनि. ९३.

(५) पुम. ४४९.

## शौनकीयपटले

[1]वरलाभातिकालाभ्यां दुर्भिक्षाद्देशविप्लवात्।
विवाहोऽदक्षिणे तीरे भागीरथ्याश्च दक्षिणे ॥
गोदावर्युत्तरे तीरे भागीरथ्याश्च दक्षिणे।
विवाहादि न कुर्वीत सिंहसंस्थे च वाक्पतौ ॥
[2]सिंहे गुरौ सिंहनवांशकोर्ध्वं
गोदावरीदक्षिणकूलजातैः।
उद्वाहकालात्ययदोषभीतैः
कार्यो विवाहश्च्यवनो ब्रवीति ॥

यत्तु– 'सिंहस्थिते सिंहनवांशके वा' इति वाक्येन गोदादक्षिणस्थितानां उद्वाहकालात्ययेऽपि अनुद्वाहप्रसङ्गेन गोदादक्षिणस्थत्वविशेषणानर्थक्येन दक्षिणदेशविवाह-कालात्ययरूपनिमित्तद्वयपरमेव वाच्यम् (?)।
संप्र. ८०७

## कश्यपः

[3]हरिनीचारिभागेऽपि व्रतोद्वाहादि मङ्गलम्।
न निषिद्धं यदि स्वोच्चे स्वभे वा संस्थितो गुरुः ॥

## मत्स्यः

[4]सिंहस्थिते सुरगुरावधिमासके च
ज्येष्ठे तथाऽऽद्यतनयस्य तु शुक्रगुर्वोः।
मौढ्ये तथा स्थविरबालकयोश्च कुर्यात्
जन्मस्थिते सुरगुरौ न हि मङ्गलानि ॥

## माण्डव्यः

[5]इष्टापूर्तं च चौलादिसंस्कारा वास्तुकर्म च।
अन्यानि शुभकर्माणि न कुर्यात् सिंहगे गुरौ ॥

(१) ज्योनि. ९२.

(२) संप्र. ८०७ (=) सिंहे गुरौ सिंहनवांशकोर्ध्वं (सिंहस्थिते सिंहनवांशके वा); ज्योनि. ९२; संर. ४६६ ज्योतिर्निबन्धे.

(३) ज्योनि. ९३; पुम. ४४९ यदि स्वोच्चे स्वभे वा (यदा स्याच्चेत्स्वभे चेत्).

(४) मुक्ता. १४७.

(५) ज्योनि. ९२; संग. २१२ (=) (इष्टं पूर्तं च चौलादिसंस्कारान् वास्तुकर्म च। न कुर्याद् सिंहयाते तु गुरौ देवपुरोहिते ॥); संर. ४६६.

[1]मघाऋक्षं परित्यज्य यदा सिंहे गुरुर्भवेत् ।
तत्राब्दे कन्यका चोढा सुभगा सुप्रिया भवेत् ॥

### अगस्त्यः

[2]सिंहस्थिते देवगुरौ विवाहं
नेच्छन्ति यात्रामुपनायनं वा ।
कलिङ्गवङ्गेष्वथ मागधेषु
दोषः प्रयुक्तो न तथाऽन्येदेशे ॥

सिंहस्थिते इति पदं सिंहांशकपरं वेदितव्यम्, सिंहसिंहांशगस्यैव कलिङ्गादौ निषेधात् । संप्र. ८०८

### स्कन्दपुराणम्

[3]सिंहस्थिते गुरौ राजन् विवाहादि न कारयेत् ।
मकरस्थे न कर्तव्यं यदीच्छेदात्मनः शुभम् ॥*

मकरस्थे इत्यत्रापि नेत्यस्यानुषङ्गः । पुम. ४४८

### गरुडपुराणम्

[4]यदि सिंहगतो जीवो नैव कल्याणमाचरेत् ।
मकरस्थे तु कर्तव्यं नात्र कार्या विचारणा ॥ *

### वामनपुराणम्

[5]वापीकूपतडागादि निषिद्धं सिंहगे गुरौ ।
मकरस्थे तु तत्कार्यं न दोषः काललोपतः ॥ *

### देवीपुराणम्

[6]यथा सिंहस्थिते जीवे तथैव मकरस्थिते ।
देवागारतडागादिव्रतोद्यानगृहाणि च ।
विवाहादि महाभाग महाभयकरं भवेत् ॥

मकरस्थे इति मकरे मकरांशस्थे इति व्याख्येयम् । तथा च व्यवहारचण्डेश्वरः – 'नीचराशिगतो जीवः प्रशस्तः सर्वकर्मसु । नीचांशकगतस्त्याज्यो यस्मादंशेषु नीचता ॥' । अत एव वामनपुराणे– 'वापीकूपतडागादि निषिद्धं सिंहगे गुरौ । मकरस्थे तु तत्कार्यं न दोषः काललोपतः ॥' इति मकरांशव्यतिरिक्तमकरस्थे एव दोषाभावकीर्तनं पर्यवस्यति । काललोपः कालदौष्ट्यम् । स्कन्दपुराणेऽपि– 'सिंहस्थिते गुरौ ...... दात्मनः शुभम् ॥', गरुडपुराणेऽपि– 'यदि सिंहगतो ... कार्या विचारणा ॥' इति । एतदपि वाक्यद्वयं पूर्वेण व्याख्यातम्, निषेधस्य मकरांशविषयत्वात् । संप्र. ८०९

* देवीपुराणवचने संप्रव्याख्यानं द्रष्टव्यम् ।

(१) संर. ४६७.
(२) प्रपा. ३१७ उपनायनं वा (यमुनातटान्ते); संप्र. ८०८; विपा. ७३९ उपनायनं वा (मुनयो व्रतं च).
(३) संप्र. ८०९ स्थे न (स्थे तु); पुम. ४४८ विवाहादि न (विवाहं नैव) स्थे न (स्थेऽपि) ज्योतिर्निबन्धे; कुभ. १०७२ विवाहादि न (विवाहं नैव).
(४) संप्र. ८०९.
(५) संप्र. ८०९. (६) संप्र. ८०९.

[1]मकरस्थो यदा जीवो वर्जयेत्पञ्चमांशकम् । *
शेषेष्वपि च भागेषु विवाहः शोभनो मतः ॥

### श्रीपतिः

[2]यदि गुरुरतिचारी जीवसंवत्सरान्ते
भवति च अधिमासे सिंहसंस्थे च जीवे ।
अनुगतरविरास्ते नीचगे निर्जिते वा
ह्युपनयनमनिष्टं यज्ञयात्राविवाहाः ॥

### लल्लः

[3]उद्यानचूडाव्रतबन्धदीक्षा-
विवाहयात्रादिवधूप्रवेशम् ।
तडागकूपत्रिदशप्रतिष्ठां
बृहस्पतौ सिंहगते न कुर्यात् ॥

* पञ्चमांशस्य वृषभांशत्वात् वचनान्तरैर्मकरे मकरांशस्यैव निषिद्धत्वाच्च चिन्त्योऽयं पाठः । 'प्रथमांशकम्' इति, 'मकरांशकम्' इति वा पाठः संभवति ।

(१) संर. ४६६.
(२) प्रपा. ३१६–३१७ चारी जीव (चारोऽतीव) च अधि (तदधि); संप्र. ८०५ गुरुरतिचारी (गुरुरविचारे); विपा. ७३९ ह्युप (उप).
(३) संप्र. ८०४.

[1]नीचस्थे वक्रसंस्थे त्वतिचरणगते
बालवृद्धेऽस्तगे वा
संन्यासो देवयात्रा व्रतनियमविधिः
कर्णवेधश्च दीक्षा ।
मौञ्जीबन्धो नराणां परिणयनविधि-
र्वास्तुदेवप्रतिष्ठा
वर्ज्याः सद्भिः प्रयत्नात्त्रिदशपतिगुरौ
सिंहराशिस्थिते च ॥

[2]माघी च मघसंयुक्ता मघायां च गुरुर्यदा ।
महामाघस्तदा प्रोक्तो व्रतोद्वाहं च वर्जयेत् ॥

[3]गुरुर्मघायां पुरुषं निहन्ति
भाग्ये स्त्रियं हन्ति वदन्ति गर्गाः ।
सिंहस्य चान्त्योत्तरपादसंस्थ-
स्तथा स जीवश्च सुतं निहन्ति ॥

[4]गोदावर्युत्तरतो यावद्भागीरथीतटं याम्यम् ।
तत्र विवाहो नेष्टः सिंहस्थे देवपतिपूज्ये ॥

विवाह इति व्रतबन्धस्याप्युपलक्षणम् । संप्र. ८०६

[5]नर्मदापूर्वभागे तु शोणस्योत्तरदक्षिणे ।
गण्डक्याः पश्चिमे भागे मकरस्थो
न दोषभाक् ॥

### श्रीधरीये

[1]नर्मदोत्तरभागेषु सिंहस्थेऽमरपूजिते ।
विवाहादि न कुर्वीत नायं दोषोऽस्ति दक्षिणे ॥

[2]सिंहराशौ सिंहभागे यावत्तिष्ठति वाक्पतिः ।
नर्मदायाम्यकोणेषु न दोषो दक्षिणापथे ॥

### सारावल्याम्

[3]यथा पौषे तथा चैत्रे केचिदिच्छन्ति सूरयः ।
तथा सिंहगते जीवे विवाहं बादरायणः ॥

### सप्तर्षिपटले

[4]मघां त्यक्त्वा यदा गच्छे-
त्फल्गुनीं च बृहस्पतिः ।
पुत्रिणी धनिनी कन्या
सौभाग्यं सुखमेधते ॥

### दैवज्ञमनोहरः

[5]मागधे गौडदेशे च सिन्धुदेशे च कोङ्कणे ।
व्रतं चूडां विवाहं च वर्जयेन्मकरे गुरौ ॥

यत्तु दैवज्ञमनोहरेणाभिहितम्— 'मगधे गौडदेशे च' इति, तत् दोषगौरवाभिप्रायेण । अन्यथा सामान्य-निषेधेनैव सिद्धौ विशेषनिषेधानर्थक्यापत्तेः । उपसंहार-पक्षे सामान्यनिषेधाप्रवृत्त्या प्रतिप्रसवासंगतेश्च ।
संप्र. ८०९-८१०

### राजमार्तण्डः

[6]सिंहे गुरौ परिणीता
पतिमात्मानमात्मजान् हन्ति ।
क्रमशस्त्रिषु पित्रादिषु वसिष्ठगर्गादयः प्राहुः ॥

(१) लता. ३३ त्वति (ऽप्यति) वृद्धेऽस्त (वृद्धास्त) देवयात्रा (यज्ञयात्रा) वेधश्च (वेधोऽपि) नराणां (ऽङ्गनानां) दामोदरीये; संप्र. ८०४-८०५; पुम. ४४८ त्वति (ऽप्यति) वृद्धेऽस्त (वृद्धास्त) नराणां (ऽथ चूडा).

(२) संप्र. ८०६.

(३) प्रपा. ३१७; विपा. ७३९ भाग्ये (भगे) स जी (च जी).

(४) संप्र. ८०६; संर. ४६७.

(५) मपा. १६२ मे भागे (मे पारे) मनुः; संप्र. ८०९; संग. २१४ गण्डक्याः पश्चिमे भागे (कालिन्द्या दक्षिणे तीरे): २१४ उत्तरार्धे (गण्डक्याः पश्चिमे तीरे नक्रस्थेज्यो न दोषकृत्।) चूडामणौ; पुम. ४४९ मे भागे (मे पारे) दोषभाक् (दोषकृत्); संर. ४६६ मे भागे (मे तीरे).

(१) मुक्ता. १४७; आन. १७९ भागेषु (भागे तु).

(२) मुक्ता. १४७.

(३) चका. ७९०.

(४) ज्योनि. ९३; संग. २१३ फल्गुनीं (फाल्गुनीं).

(५) संप्र. ८१०. मागधे (मगधे); संग. २१४ व्रतं चूडां (व्रतचूडा) चूडामणौ; संर ४६६ ज्योतिःसंग्रहे.

(६) संर. ४६७.

[1]सिंहे यदा तिष्ठति देवपूज्यः
पापं तदा वत्सरमादिशन्ति ।
वैधव्यमाप्नोत्यचिरेण कन्या
विवाहिता स्याद्यदि माधवेन ॥
यात्रां चूडां विवाहं श्रुतिविवरविधिं
शङ्खसद्मप्रवेशं
प्रासादोद्यानहर्म्यं सुरनरभवना-
रम्भविद्याविधानम् ।
मौञ्जीबन्धं प्रतिष्ठां मणिकनकरदा-
भूषणं कुर्वते ये
मृत्युः सिंहस्थितेऽज्ये गुरुदिनकरयो-
रेकराशिस्थयोश्च ॥

[2]सिंहराशौ तु सिंहांशे यदा भवति वाक्पतिः ।
सर्वदेशेष्वयं त्याज्यो दम्पत्योर्निधनप्रदः ॥
[3]सिंहराशौ तु सिंहांशे यदा भवति वाक्पतिः ।
नर्मदोत्तरकूले तु न दोषो दक्षिणामुखे ॥
सिंहे सिंहांशगे जीवे कलिङ्गे गौडगुर्जरे ।
कालमूर्तिरयं योगो दम्पत्योर्निधनप्रदः ॥

राजमार्तण्डोऽपि निमित्तविशेषेण देशविशेषे व्यतिरेकमुखेन प्रतिप्रसवमाह– 'सिंहराशौ तु सिंहांशे' इत्यादि । तुशब्दोऽवधारणे । तेन नर्मदोत्तरकूले एव दोषो न दक्षिणामुखे इत्यर्थः, 'विवाहो दक्षिणे कूले गौतम्या नेतरत्र तु' इति वसिष्ठस्मरणात् । अनेन नर्मदोत्तरकूले एव न दोष इत्यन्वयभ्रमो निरस्तः, तस्य गङ्गागोदान्तरालदेशत्वेन सर्वविषयनिषेधविषयत्वात्, गौतमीयदक्षिणकूले विधानाच्च । एतावान् परं विशेषो यदत्र नर्मदोपादानं, वासिष्ठे गोदोपादानमिति । दक्षिणकूलत्वं त्वविशिष्टम् । 'सिंहे सिंहांशगे' इति सिंहराश्यन्तर्गतसिंहांशे इति द्रष्टव्यम्, 'सिंहराशौ तु सिंहांशे' इति पूर्ववाक्ये वैशिष्ट्याभिधानात् । यत्तु 'न गुरौ सिंहराशिस्थे सिंहांशकगतेऽपि वा' इति विकल्पाभिधानं, तत् राश्यन्तर्गतसिंहांशकाभिप्रायेण, अन्यथा सिंहराशिस्थनिषेधे विकल्पानुपपत्तेः ।

संप्र. ८०७–८०८

## कालनिर्णये

[1]शान्तिकं पौष्टिकं यात्राप्रतिष्ठोद्वाहपूर्तकम् ।
न कुर्यात्सर्वमाङ्गल्यं सिंहस्थे च बृहस्पतौ ॥

## कालविधाने

[2]सिंहस्थितः सुरगुरुर्यदि नर्मदाया-
स्तद्वर्जयेत्सकलकर्मसु सौम्यभागे ।
विन्ध्यस्य दक्षिणदिशि प्रवदन्ति चाऽऽर्याः
सिंहांशके मृगपतावपि वर्जनीयम् ॥

## मुहूर्तचिन्तामणिः

[3]अस्ते वर्ज्यं सिंहनक्रस्थजीवे वर्ज्यं ... ॥
यत् अस्ते गुर्वादेरस्ते वर्ज्यमुक्तं तत् सिंहनक्रस्थजीवे सिंहस्थगुरौ मकरस्थगुरौ च वर्ज्यं निषिद्धम् । पीटी.
[4]सिंहे गुरौ सिंहलवे विवाहो
नेष्टोऽथ गोदोत्तरतश्च यावत् ।
भागीरथीयाम्यतटं हि दोषो
नान्यत्र देशे तपनेऽपि मेषे ॥

अथ सिंहस्थगुरोः प्रकारत्रयेण परिहारमाह–सिंहे इति । अथ प्रथममंशभेदेन परिहार उच्यते– गुरौ सिंहस्थिते सत्यपि सिंहांशे तृतीयांशसहितत्रयोदशांशकेभ्योऽनन्तरं १३।२० तृतीयांशसहितांशत्रयं ३।२० पञ्चमो नवांशः सिंहांशस्तत्र गुरौ सति विवाहो नेष्टो निषिद्धः । अथ देशभेदेन द्वितीयः परिहार उच्यते– गोदोत्तरतः, गोदा गोदावरी नदी, तस्या उत्तरदिशि, भागीरथी गङ्गा, तस्या याम्यतटं दक्षिणकूलं यावन्मर्यादीकृत्य गोदावरी-

(१) संप्र. ८०५.
(२) संर. ४६६.
(३) संप्र. ८०७.

(१) ज्योनि. ९२ यात्रा (यात्रां) पूर्तकम् (पूर्वकम्) सिंहस्थे च (सिंहसंस्थे); संग. २१२ (=) पूर्वार्धे (शान्तिके पौष्टिके यात्रा प्रतिष्ठोद्वाहपूर्वकम् ।) सिंहस्थे च (सिंहे याते); संर. ४६६.
(२) पुम. ४४८.
(३) मुचि. ११४८.
(४) मुचि. ११४९.

गङ्गान्तरालवर्ती यो देशस्तत्र सिंहस्थगुरुर्वर्ज्यः, नान्यत्र देशे अन्येषु देशेषु न सिंहस्थगुरुदोषः। सूर्यराशिवशेन तृतीयः परिहार उच्यते– तपनेऽपि मेषे सूर्ये मेषराशौ विद्यमाने सति वा सिंहस्थगुरोर्दोषो नास्ति। पीटी.

[1]मघादिपञ्चपादेषु गुरुः सर्वत्र निन्दितः।
गङ्गागोदान्तरं हित्वा शेषाङ्घ्रिषु न दोषकृत्॥
[2]मेषेऽर्के सद्व्रतोद्वाहौ गङ्गागोदान्तरेऽपि च।
सर्वः सिंहगुरुर्वर्ज्यः कलिङ्गे गौडगुर्जरे॥

सिंहराशिगतगुरुनिषेधवाक्यानां प्रतिप्रसववाक्यानां च निर्गलितार्थमनुष्टुब्द्वयेनाऽऽह–मघादिपञ्चेति। श्लोकद्वयं स्पष्टार्थम्। पीटी.

[3]रेवापूर्वे गण्डकीपश्चिमे च
शोणस्योदग्दक्षिणे नीच इज्यः।
वर्ज्यो नायं कौङ्कणे मागधे च
गौडे सिन्धौ वर्जनीयः शुभेषु॥

अथ मकरस्थितगुरोः प्रकारद्वयेन परिहारमाह– रेवापूर्व इति। रेवा नर्मदानदी, तस्याः पूर्वभागे, गण्डकी नदी, तस्याः पश्चिमे च भागे, शोणनदस्योत्तरे दक्षिणे च भागे, नीच इज्यः मकरस्थगुरुर्न वर्ज्यः। एषु देशेषु मकरस्थितगुरोर्दोषो नास्ति। तदुक्तं लल्लेन– 'नर्मदापूर्वभागे तु शोणस्योत्तरदक्षिणे। गण्डक्याः पश्चिमे भागे मकरस्थो न दोषभाक्॥' अर्थादन्येषु देशेषु निषिद्ध एव। तद्देशज्ञानार्थं द्वितीयः परिहारः– अयं मकरस्थितगुरुः कौङ्कणे देशे मागधे देशे च गौडदेशे सिन्धुदेशे, अटकाख्यनगराधस्तात् सिन्धुर्नाम नदोऽस्ति, तत्पारे शुभेषु शुभकृत्येषु वर्ज्यो निषिद्धः। पीटी.

## रत्नसंग्रहे

[4]मृगराशिगते जीवे दिनषष्टिं परित्यजेत्॥

(१) मुचि. ११५०.
(२) मुचि. ११५१; संग. २१३ द्वाहौ (द्वाहे).
(३) मुचि. ११५२.
(४) संग. २१४.

## ज्योतिर्निबन्धे

[1]मङ्गलानीह कुर्वीत सिंहस्थो वाक्पतिर्यदा।
भानौ मेषगते सम्यगित्याहुः शौनकादयः॥

मङ्गलशब्देन व्रतोद्वाहौ। संग. २१३

## अनिर्दिष्टकर्तृकवचनानि

[2]सिंहस्थं मकरस्थं च गुरुं यत्नेन वर्जयेत्॥
[3]सिंहस्थेऽपि मघासंस्थं गुरुं यत्नेन वर्जयेत्।
अन्यत्र सिंहभागे तु विवाहादि विधीयते॥
[4]गर्भाधानादिकाः सर्वाः प्राशनान्ताः क्रियाश्च याः।
कर्तव्याः सर्वदेशेषु सिंहस्थे च बृहस्पतौ॥
क्रियमाणं हि प्रत्यब्दे कुलधर्मादिकं च यत्।
सर्वदेशेषु कर्तव्यमित्याहुः सिंहगे गुरौ॥
माघमासे पौर्णमासी मघायुक्ता यदा भवेत्।
सिंहस्थस्य गुरोर्दोषस्तस्मिन् वर्षे न चान्यथा॥
[5]सिंहस्थे देवगुरौ मेषस्थे यदि भवेत्सहस्रांशुः।
मङ्गलकार्यं कुर्यादिति नारदपराशरौ वदतः॥

## रेणुकारिका

[6]सिंहस्थिते गुरौ चेत्स्यात्कथंचित्कारणान्तरात्।
विवाहो दक्षिणे तीरे गौतम्या नेतरत्र तु॥

(१) संग. २१३; संर. ४६८ कुर्वीत (कुर्वन्ति).
(२) मपा. १६२ ज्योतिःशास्त्रे; गभा. ६७; सिन्धु. १०७२ मदनपारिजाते ज्योतिःसागरे; संग. २१२; संर. ४६६ ज्योतिर्ग्रन्थे.
(३) मपा. १६२ स्थेऽपि (स्थे तु) ज्योतिःशास्त्रे; संग. २१३ भागे तु (भागेऽपि) ज्योतिःसारे; पुम. ४४८ भागे तु (भागेषु) ज्योतिर्निबन्धे; कृभ. १०७२–१०७३ दि विधीयते (दिकमाचरेत्); संर. ४६६ ज्योतिर्ग्रन्थे.
(४) संग. २१३–२१४.
(५) ज्योनि. ९३.
(६) रेका. १०७ पृ. ५५.

# गुरुशुक्रादीनां बाल्यादिविचारः

## वसिष्ठः

[1]प्रागुद्गतोऽह्नित्रयं शिशुः स्याद्
वृद्धो दशाहं दिशि तत्र शुक्रः।
पश्चाद्दशाहं शिशुरत्र वृद्धः
पञ्चाहमार्योभयतस्तु पक्षम् ॥

[2]वृद्धत्वमिन्दोस्त्रिदिनं दिनार्धं
बालत्वमस्तत्वमहर्द्वयं च।
अस्ते विधौ मृत्युमुपैति कन्या
बालेऽन्यसक्ता विधवा च वृद्धे ॥

[3]येनोक्तमेकं दिवसं शिशुत्व-
मित्येतदिन्दोस्तदयुक्तमत्र।
महत्त्वशीघ्रत्वसुधामयत्वात्
दिनार्धमित्यब्जजनिष्ठितत्वात् ॥

[4]विवाहे व्रतबन्धे च यात्रायां गृहकर्मणि।
गुरावस्तमिते शुक्रे ध्रुवं मृत्युं विनिर्दिशेत् ॥

[5]गुरुर्नष्टः पतिं हन्या-
च्छुक्रो नष्टस्तु कन्यकाम्।
चन्द्रे नष्टे उभौ हन्ति
विवाहे तौ (? तान्) विवर्जयेत् ॥

पश्चादभ्युदितो बालो दशाहं प्राग्दिनत्रयम्।
पक्षं वृद्धस्तु पूर्वेण पञ्चाहं पश्चिमे सितः ॥
विचित्तमुपयाति नाशं बलप्रतापौ
दक्षिणे त्वयने ? ॥

(१) वसं. ३२।१२.

(२) वसं. ३२।१३ ; ज्योनि. ८२ (=) वृद्धे (वृद्धौ); संव. ८५.

(३) वसं. ३२।१४.

(४) चका. ७९० गृह (व्रत) ध्रुवं मृत्युं विनिर्दिशेत् (जातश्च परिणीयते ?) ; पुम. ४४८.

(५) चका. ७९०.

सं. १२९

## नारदः

[1]विवाहं देवतानां च प्रतिष्ठां चोपनायनम्।
नास्तंगते सिते जीवे न तयोर्बालवृद्धयोः ॥

[2]पश्चात्प्रागुदितः शुक्रो दशत्रिदिवसं शिशुः।
वृद्धः पञ्चदिनं पक्षं गुरुः पक्षं च सर्वतः ॥

[3]अतिपातिषु कार्येषु राज्ञां तत्कर्मकारिणाम्।
विवाहादीनि कार्याणि मौढ्येऽपि
गुरुशुक्रयोः ॥

[4]शान्तिं कृत्वा तयोस्तद्वच्छुक्रदेवेन्द्रमन्त्रिणोः।
होमैर्दानैर्जपैर्वाऽपि तयोरुदितमन्त्रकैः ॥

[5]समदृष्टिर्गुरोः( रुः )शुक्रस्तन्मासे
तु प्रयत्नतः।
विवाहादि न कुर्वीत नर्मदातीर उत्तरे ॥

नारदेन देशभेदेन समसप्तकदोषोऽपि विवाहे उक्तः—समदृष्टिरिति। संर. ४८६

## बृहस्पतिः

[6]प्राक्पश्चादुदितः शुक्रः पञ्चसप्तदिनं शिशुः।
विपरीतं तु वृद्धत्वं तद्वदेव गुरोरपि ॥

(१) ज्योना. २७।३–४ पृ. ५१.

(२) ज्योना. २७।५ पृ. ५१ ; प्रपा. ३१७ दिवसं (दिवसः) च (तु) ; विपा. ७४१ च (तु).

(३) प्रपा. ३१७ ; विपा. ७४१ अतिपा (आतिपा) बृहस्पतिः ; ज्योनि. १५० बृहस्पतिः.

(४) प्रपा. ३१७ ; मुक्ता. ३४ तयोस्तद्वत् (तयोर्वाऽपि) बृहस्पतिः ; विपा. ७४१ बृहस्पतिः ; ज्योनि. १५० दानै (दीपै) बृहस्पतिः ; आन. १९५ मुक्तावत्, बृहस्पतिः.

(५) संर. ४६८.

(६) मपा. १६८.

[1]यद्येकस्यापि मूढत्वे शुभकर्म न दोषकृत् ।
द्वयोर्मूढत्वमेवोक्तं दोषदं गुरुशुक्रयोः ॥
[2]द्विजन्मादिशुभे कार्ये शुक्रमौढ्यं न दोषदम् ।
त्रैवर्णिकानामेवोक्तं दोषदं गुरुशुक्रयोः ॥
[3]क्षत्रियाणां विशेषेण भृत्यानां राजसेविनाम् ।
मौढ्यदोषं न पश्येत दीक्षणामेव कारयेत् ॥
[4]यदा जीवसितौ चक्रे परस्परनिरीक्षितौ ।
सप्तमस्थौ तदा दोषो मूढत्वादतिरिच्यते ॥

### गर्गः

[5]शुक्रो गुरुः प्राक्परतश्च बालो
विन्ध्ये दशावन्तिषु सप्तरात्रम् ।
वङ्गेषु हूणेषु च षट् च पञ्च
शेषे च देशे त्रिदिनं वदन्ति ॥

अत्र देशभेदेन (आपदा च *) व्यवस्थामाह गार्ग्यः—शुक्रो गुरुरिति । अस्मिन् वचने येऽधिककालाः ते देशभेदेन व्यवस्थिता इति न विरोधः । (शुक्रो गुरुश्च चेत् प्राक् पूर्वस्यां दिशि अपरस्मिन् पश्चिमस्यां दिशि अर्ककालः अर्केण सूर्येण युक्तः सन् बालत्वादि प्राप्तस्तदा तन्निमित्तकालः अर्ककालः— इति प्रागपरार्ककाल इत्यस्य व्याख्यानं आदर्शपुस्तकटिप्पण्यां वर्तते । )

मपा. १६८–१६९.

[6]नामान्नप्राशनं चौडं विवाहं मौञ्जिबन्धनम् ।
निष्क्रमं जातकर्माणि काम्यं वृषविसर्जनम् ॥

* मपाग्रन्थे अतःपरं 'बहवो दर्शिताः कालाः' इति मिहिरवचनमुद्धृतम् । तदपेक्षयेदं स्यात् ।

(१) प्रपा. ३१७; विपा. ७४१; ज्योनि. १५ द्वयो (तयो).

(२) प्रपा. ३१७; विपा. ७४१; ज्योनि. १५०.

(३) प्रपा. ३१७ दीक्षणा (दीक्षाणा); विपा. ७४१ प्रपावत्; ज्योनि. १५० पश्येत (पश्येत्तु).

(४) प्रपा. ३१७; विपा. ७४१ चक्रे (वक्रे); ज्योनि. १५० रीक्षितौ (रीक्षकौ) सप्तमस्थौ (समभस्थौ), 'चक्रे' इत्यत्र 'वक्रौ' इत्यपि पाठः.

(५) मपा. १६८ प्राक्परतश्च बालो (प्रागपरार्ककालो); संव. ८५.

(६) संत. ८८५.

अस्तंगते गुरौ शुक्रे बाले वृद्धे मलिम्लुचे ।
उपायनमुपारम्भं व्रतानां नैव कारयेत् ॥
[1]नित्ययाने गृहे जीर्णे प्राशने परिधानके ।
वधूप्रवेशमाङ्गल्ये न मौढ्यं गुरुशुक्रयोः ॥
गुरुभार्गवयोरस्तदोषो जातिचतुष्टये ।
नैव संकरजातीनां शिशुत्वं वार्धकं तथा ॥

### वात्स्यः

[2]गुरुभार्गवयोर्मौढ्ये बाल्ये वै वार्धकेऽपि च ।
व्रतोद्वाहप्रतिष्ठादि शुभं कर्म विवर्जयेत् ॥

### माण्डव्यः

[3]त्यजेद्दशाहं शिशुवृद्धयोश्च
सितेज्ययोश्चेति वदन्ति गर्गाः ।
कालांशतुल्यानि दिनानि चैके
सप्ताहमन्ये त्वपरे त्रिरात्रम् ॥

### अगस्त्यः

[4]एको मूढो भवेदन्यः स्वोच्चमित्रांशगो यदि ।
स्वराशिमूर्तिगश्चैव मूढदोषो विनश्यति ॥

मूर्तिगः लग्नगः । प्रपा. ३१७

### वराहमिहिरः

[5]बहवो दर्शिताः काला ये बाल्ये वार्धकेऽपि वा ।
ग्राह्यास्तत्राधिकाः शेषा देशभेदात्तथाऽऽपदा ॥

### लल्लः

[6]पश्चादभ्युदितो बालो दशाहं प्राग्दिनत्रयम् ।
पक्षं वृद्धस्तु पूर्वे च पञ्चाहं पश्चिमे स्थितः ॥
[7]अस्तमिते भृगुतनये नारी म्रियते बृहस्पतौ पुरुषः ।
दम्पत्योः सह मरणं पाणिग्रहणोदिते केतौ ॥

(१) ज्योनि. ८१.

(२) संर. ४६८.

(३) ज्योनि. ८०.

(४) प्रपा. ३१७; विपा. ७४०; ज्योनि. १५०.

(५) मपा. १६९.

(६) प्रपा. ३१७; विपा. ७४२ पूर्वे च (पूर्वत्र).

(७) प्रपा. ३१७; विपा. ७४०; ज्योनि. १५०.

## सारावल्याम्

[1]व्रतबन्धं द्विजातीनामुद्वाहं सुन्दरीषु च ।
गुरावस्तमिते नित्यं न कुर्याद्भार्गवे तथा ॥
[2]नष्टे शुक्रे तथा चन्द्रे गुरावस्तमुपागते ।
न विवाहो न यात्रा वै नैव दानं समाचरेत् ॥

## विवाहवृन्दावनम्

[3]क्षिपति सप्त दिनान्युदयास्तयोः
सुरगुरुश्च भृगुश्च गतैष्ययोः ।
इह युगेऽपि युगस्य करग्रहः
स्फुटममङ्गलदो गलदोजसि ॥

अथ गुरुशुक्रयोर्बाल्यादिदोषं कथयति— क्षिपतीति । सुरगुरुः, भृगुश्च गतैष्ययोः उदयास्तयोः उदये गते, अस्ते एष्ये सतीत्यर्थः । सप्त दिनानि क्षिपति शुभकार्यं विनाशयतीत्यर्थः । तथा इह अस्मिन् युगे गुरुशुक्रद्वये गलदोजसि निर्बले अपि युगस्य वधूवरद्वयस्य करग्रहः विवाहः स्फुटं अमङ्गलदो भवति । लक्ष्मी.

शिशुजरत्वमहान्युदयास्तयो-
र्दश चतुर्दश चाङ्गिरसः स्फुटम् ।
उशनसो दश पञ्च च पश्चिमे
गतिवशात्त्रिदशाहमपश्चिमे ॥

अथात्र विशेषं कथयति— शिश्विति । अङ्गिरसः गुरोः उदयास्तयोः दश चतुर्दश अहानि दिनानि क्रमेण स्फुटं शिशुजरत्वं बाल्यवृद्धत्वं स्यात् । उशनसः शुक्रस्य गतिवशात् पश्चिमे दशपञ्चदिनानि अपश्चिमे पूर्वस्मिन् त्रिदशाहं क्रमेण उदयास्तयोः शिशुजरत्वं स्यात् । लक्ष्मी.

## संग्रहे

[4]गोदावर्यां गयायां च श्रीशैले मलकार्जुने ।
अयने विषुवे चैव चातुर्मास्यव्रतेषु च ॥
उत्सवेषु च सर्वेषु सीमन्त ऋतुकर्मसु ।
सुरासुरेज्ययोश्चैव मौढ्यदोषो न विद्यते ॥

(१) चका. ७८९. (२) चका. ७९२.
(३) विवृ. ५।८–९.
(४) ज्योनि. ८१ मलकार्जुने (ग्रहणद्वये) न्त ऋतु (न्तऋतु); संग. २१४–२१५.

[1]समदृष्टिर्गुरोः शुक्रे नर्मदोत्तरतो भवेत् ।
नर्मदायाम्यभागे तु समदृष्टिर्न विद्यते ॥

अस्य (गुरुशुक्रयोः समसप्तकदोषस्य) देशविभाग उच्यते संग्रहे— समदृष्टिरिति । प्रपा. ३१७

[2]बालः शुक्रो हरेत्कन्यां क्षीणः शुक्रः पतिं हरेत् ।
बालो बृहस्पतिः पुंसां क्षीणः स्त्रीणां न शोभनः ॥

## ज्योतिःसारसागरे

[3]बाले शुक्रे वृद्धे शुक्रे वृद्धे जीवे नष्टे जीवे ।
बाले जीवे जीवे सिंहे सिंहादित्ये जीवादित्ये ॥
[4]तथा मलिम्लुचे मासि सुराचार्येऽतिचारगे ।
वापीकूपविवाहादिक्रियाः प्रागुदितास्त्यजेत् ॥

## ब्रह्मसिद्धान्ते

[5]रविणा संधिरन्येषां ग्रहाणामस्त उच्यते ।
अर्वागूर्ध्वमवस्था स्यान्मौढ्याद्वार्धकशैशवे ॥

## दामोदरीये

[6]प्राग्बालो दिवसत्रयं दशदिनं
पश्चात्सितो वृद्धताम्
पक्षे वासरपञ्चके च लभते
पक्षे गुरुः सर्वतः ।
तत्पश्चाद् गुरुशुक्रयोर्विमलयोः
कुर्याद्विवाहं सिते
कृष्णे वासरपञ्चकं च शिववन्न
स्याद्दशाहः परः ॥

(१) प्रपा. ३१७; विपा. ७४१ विद्यते (दुष्यति); ज्योनि. १५०.
(२) प्रपा. ३१७; विपा. ७४१.
(३) मपा. १६७ वृद्धे जीवे नष्टे जीवे (जीवे नष्टे वृद्धे जीवे) सिंहादित्ये जीवादित्ये (जीवादित्ये सिंहादित्ये); सिन्धु. १०७१.
(४) मपा. १६७–१६८ विवाहादि (तडागादि); सिन्धु. १०७१; संर. ४६८ मपावत्, कृत्याचिन्तामणौ.
(५) मपा. १६८.
(६) मपा. १६८.

कालनिर्णये

[1]वापीकूपतडागयानगमनं
चौलं प्रतिष्ठां व्रतं
विद्यामन्दिरकर्णवेधनमही-
दुर्गं वनं सेवनम् ।
तीर्थस्नानविवाहशान्तिहवनं
मन्त्राग्निदेवेक्षणं
देवेज्ये च जिजीविषुः परिहरे-
दस्तंगते भार्गवे ॥

रत्नकोशे

[2]अस्तमिते भृगुतनये नारी म्रियते
बृहस्पतौ पुरुषः ।
दम्पत्योः सह मरणं ह्युदिते केतौ करग्रहणे ॥
नष्टे चन्द्रे तथा शुक्रे नष्टे चैव बृहस्पतौ ।
मङ्गलानि तथोद्वाहं त्वरितोऽपि न कारयेत् ॥

वृत्तशते

[3]बालः शुक्रो दिवसदशकं
पञ्चकं चैव वृद्धः
पश्चादह्नां त्रितयमुदितः
पक्षमैन्द्र्यां क्रमेण ।
जीवो वृद्धः शिशुरपि सदा
पक्षमन्यैः शिशू तौ
वृद्धौ प्रोक्तौ दिवसदशकं
चापरैः सप्तरात्रम् ॥

मुहूर्तचिन्तामणिः

[4]वाप्यारामतडागकूपभवनारम्भप्रतिष्ठे व्रता-
रम्भोत्सर्गवधूप्रवेशनमहादानानि सोमाष्टके ।
गोदानाग्रयणप्रपाप्रथमकोपाकर्मवेदव्रतं
नीलोद्वाहमथातिपन्नशिशुसंस्कारान्
सुरस्थापनम् ॥

दीक्षामौञ्जिविवाहमुण्डनमपूर्वं देवतीर्थेक्षणं
संन्यासाग्निपरिग्रहौ नृपतिसंदर्शाभिषेकौ गमम् ।
चातुर्मास्यसमावृती श्रवणयोर्वेधं परिक्षां त्यजेत्
वृद्धत्वास्तशिशुत्व इज्यसितयोर्न्यूनाधिमासे तथा ॥

कालाशुद्धौ निषेध्यवस्तून्याह– वाप्यारामेति । वापी दीर्घिका । आरामः उपवनम् । तडागः पुष्करिणी । कूपः प्रसिद्धः । भवनं गृहम् । एतेषामारम्भप्रतिष्ठे, आरम्भः निर्माणम्, प्रतिष्ठा उत्सर्गः । तत्र गृहप्रतिष्ठा गृहप्रवेशो ज्ञेयः । व्रतारम्भोत्सर्गौ व्रतानां अनन्तशिवरात्रिव्रतादीनामारम्भः, उत्सर्गः अनन्तव्रतादीनामुद्यापनम् । महादानानि षोडश महादानानि । सोमः सोमयागः । अष्टका अष्टकाश्राद्धम् । गोदानं केशान्तसंज्ञं कर्म । आग्रयणं नवान्नेष्टिः । प्रपा जलशाला । प्रथमकोपाकर्म प्रथममारभ्यमाणं श्रावणीकर्म । वेदव्रतं महानाम्न्यादित्रयं महानाम्नीव्रतं उपनिषद्व्रतं महाव्रतं च । नीलोद्वाहः नीलशब्दवाच्यः काम्यो वृषोत्सर्गः, न त्वेकादशाहे क्रियमाणः, तस्य तदैव विहितत्वात् मुहूर्तविचारानुन्मेषः । अतिपन्नशिशुसंस्काराः अतिपन्नाः अतिक्रान्ताः जातकर्मनामकर्मादयः शिशूनां संस्काराः । दीक्षाः मन्त्रग्रहणादिकाः । मुण्डनं चौलम् । अपूर्वं देवेक्षणं तीर्थेक्षणं च । अग्निपरिग्रहः अग्निहोत्रं अग्न्याधानम् । चातुर्मास्यं चातुर्मास्याख्यो यागः । समावृतिः समावर्तनं मौञ्जीमोक्षः । श्रवणयोः वेधः कर्णवेधः । परीक्षा तप्तमाषादिरूपा, दिव्यमिति यावत् । अन्यानि कर्माणि नामतः स्पष्टानि । एतानि सर्वाणि कर्माणि त्यजेत् न कुर्यात् । इज्यसितयोः बृहस्पतिशुक्रयोर्वृद्धत्वे अस्ते शिशुत्वे बाल्ये च तथा न्यूनाधिमासे क्षयमासे अधिकमासे च न कुर्यात् । अयं च निषेधः प्रथमोपक्रान्तकृत्येषु, न तु नित्यवदारब्धवार्षिकयात्रादौ ।
पीटी.

[1]नो वा बाल्यास्तवार्द्धक्ये
सुरगुरुसितयोर्नैव केतूदये स्यात्
पक्षं वार्धं च केचि-
ज्जहति तमपरे यावदीक्षां तदुग्रे ॥

(१) ज्योनि. ८१.
(२) ज्योनि. ८१.
(३) ज्योनि. ८० ; संग. २१४.
(४) मुचि. ६।४६,४७.

(१) मुचि. ५।२६ ; संव. ८४.

अथ सुरगुरुसितयोः बृहस्पतिशुक्रयोः बाल्यास्तवार्द्धक्ये बालत्वे अस्ते वार्धक्ये च, एतानि कर्माणि नो वा कुर्यात् । इदं प्रागुक्तमपि पुनर्लिखितं तत्स्मरणाविच्छेदार्थम् । मूलवाक्यान्यपि प्रागेवोक्तान्यस्माभिः । केतूदये धूमकेतूदये शुभकर्माणि नैव भवन्ति । तदुक्तं चण्डेश्वरेण- 'केतोरस्तदिनादूर्ध्वं सप्ताहं मङ्गलं त्यजेत् । यावत्केतूदयस्तावदशुद्धः समयो हि सः ॥' इति । अत्र केचित् केतूदये जाते सति पक्षं पञ्चदश दिनानि जहति वर्जयन्ति । उक्तं च वराहेण- 'दृष्टः षोडशवासरान्न शुभदः कैश्चित् प्रदिष्टः शिखी' इति । शिखी केतुः । दृष्ट इति वचनात् यावन्न दृष्टस्तावददोष इत्यर्थः । अत्र ग्रन्थकृता एकदिनत्यागोऽक्षरबाहुल्यभीतेः कृतः । केचित्तु वा पक्षान्तरे । अर्धं पक्षार्धं सप्त दिनानि केतूदयानन्तरं जहति । तदप्युक्तं वराहेण- 'केतूदये सप्त दिनानि चोर्ध्वं विवाहयात्रादिषु गर्हितानि । दिनानि शेषाणि वदन्ति नूनं शुभानि रैभ्यप्रमुखा मुनीन्द्राः ॥' इति ।

ननु कैश्चित्केतूदयदर्शनं यावन्मङ्गलकृत्यानि निषिद्धानि । अन्यैस्तु केतूदयानन्तरं षोडशाष्टौ वा दिनानि निषिद्धानि । तत्कथमनयोर्वाक्ययोरेकवाक्यतेत्यत आह— तमिति । अपरे आचार्याः तं केतुं यावदीक्षां यावद्दर्शनं यज्जहति तदुग्रे केतौ द्वित्रिचूडे तामसकीलकादावतिदुष्टफले द्रष्टव्यम् । तेन भिन्नविषयत्वाद्दोषाभावः । वयं तु ब्रूमः— यावद्दर्शनं केतूदयो निषिद्ध इत्युक्तं तदुग्रे ब्रह्मपुत्राख्ये केतौ महादुष्टफले ज्ञेयम् । * पीटी.

[१]पुरः पश्चाद् भृगोर्बाल्यं त्रिदशाहं च वार्धकम् ।
पक्षं पञ्चदिनं ते द्वे गुरोः पक्षमुदाहृते ॥

अथ गुरुशुक्रयोः बाल्ये वार्धक्ये च शुभं कर्म त्याज्यम् । तत्र अवसरप्राप्तां तदीयदिनसंख्यामनुष्टुभा आह - पुरः पश्चादिति । भृगोः शुक्रस्य पुरः पूर्वस्यां दिशि उदितस्य पश्चाद्वा तत्र यथासंख्यं बाल्यं स्यात् । पूर्वस्यां त्रिदिनं पश्चाद्दशाहं बालत्वं शुक्रस्येत्यर्थः । च पुनः भृगोर्वार्धक्यं वृद्धत्वं पूर्वस्यां पक्षं पञ्चदशदिनानि पश्चात् पञ्च दिनानि । गुरोः ते द्वे बाल्यवार्धक्ये पक्षमुदाहृते कथिते । * पीटी.

[१]ते दशाहं द्वयोः प्रोक्ते कैश्चित्सप्तदिनं परैः ।
त्र्यहं त्वात्ययिकेऽप्यन्यैरर्धाहं च त्र्यहं विधोः ॥

अथ परमते बाल्यं वार्धक्यं चानुष्टुभाऽऽह— ते दशाहमिति । दिङ्नियमं त्यक्त्वा द्वयोः गुरुशुक्रयोः ते बाल्यवार्धक्ये दशाहं दशदिनं प्रोक्ते कैश्चित् । परैस्तु सप्तदिनं बाल्यवार्धक्ये गुरुशुक्रयोः प्रोक्ते । अन्यैरपि पुनस्त्र्यहं त्रिदिवसं बाल्यवार्धक्यं प्रोक्तम् । अथैषां वाक्यानां गतिमाह— आत्ययिके इति । अत्ययः कार्यावश्यंभावः सः प्रयोजनं यस्येति 'प्रयोजनम्' इति ठञ् । लग्नान्तराभावे समयशुद्ध्यभावे वा अतीतकालस्य बटोः अवश्यदेयायाः कन्याया गुणवद्वरोपलब्धौ वा यथासंभवं दशसप्तत्रिदिनानां त्याग उदितो नान्यथेत्यर्थः । वयं तु देशभेदेनैषां वाक्यानां व्यवस्थां ब्रूमः । तदाह गर्गः— 'शुक्रो गुरुः प्राक् परतश्च बालो विन्ध्ये दशावन्तिषु सप्तरात्रम् । वङ्गेषु हूणेषु च षट् च पञ्च शेषे तु देशे त्रिदिनं वदन्ति ॥' इति । चन्द्रस्य विशेषमाह— अर्धाहमिति । विधोस्तु बाल्यवार्धके क्रमेण अर्धाहं त्र्यहं च भवतः । बाल्यं अर्धं दिनं वार्धक्यं त्रिदिनं चन्द्रस्येत्यर्थः । * पीटी.

## मुहूर्तगणपतिः

[२]जलाशयसुरारामप्रतिष्ठाव्रतबन्धनम् ।
अग्न्याधानं विवाहं च चौलं राज्याभिषेचनम् ।
नवगृहप्रवेशादीन्न कुर्याद्दक्षिणायने ॥
गुरुभार्गवयोरस्ते बाल्यवार्धकयोरपि ।
दशाहं पश्चिमे बाल्यं पञ्चाहं वार्धकं भृगोः ॥
प्राच्यां तु त्रिदिनं बाल्यं पक्षं वार्धकमुच्यते ।
पक्षं बाल्यं च वार्धक्यं गुरोस्त्याज्यं
शुभे सदा ॥

* संव. पीटीगतम् ।

( १ ) मुचि. ५।२७ ; संव. ८४.

* संव. पीटीगतम् ।

( १ ) मुचि. ५।२८ ; संव. ८४.

( २ ) संव. ८९.

दशाहं बाल्यवार्द्धक्यं परे सप्ताहमूचिरे ।
त्र्यहं त्वावश्यके कृत्ये केचिद्भार्गवजीवयोः ।
अर्धाहं बाल्यमब्जस्य वार्धकं त्रिदिनं विदुः ॥

प्राच्यां नेत्रेषुदृग्घस्रान् दृश्यो भवति भार्गवः ।
वसुशैलमितांस्तत्र यातोऽस्तं नैव दृश्यते ॥

खबाणाब्धिमितान् घस्रान् प्रतीच्यां दृश्यते भृगुः ।
तत्रैवार्ककरग्रस्तो नवाहानि न दृश्यते ॥

प्रायो वाचस्पतिर्मासं भवत्यक्ष्णामगोचरः ।
प्राच्यामुदयते मासं याति पश्चात्तु वत्सरात् ॥

## अनिर्दिष्टकर्तृकवचनानि

[1]पश्चिमायां दिशि सितो बालः स्याद्दश वासरान् ।
वृद्धः पञ्च दिनान्यैन्द्र्यां त्रिदिनं पक्षमेव च ॥

शिशुवृद्धौ जीवसितावुभयत्राप्युदीरितौ ।
अन्यैः पञ्चदशाहानि दशान्यैः सप्त चापरैः ॥

[2]चौलोपनयने चैव विवाहोद्यापनादिकम् ।
वेदारम्भं गृहारम्भं महारुद्रं तथैव च ॥

देवतानां प्रतिष्ठां च गोदानं स्नातकं च यत् ।
व्रतप्रारम्भणं चैव नववध्वाः प्रवेशनम् ॥

वास्तुकर्म महायज्ञमुपाकरणमेव च ।
विलम्बितप्रेतकार्यं महादानादिकं च यत् ॥

बाले वा यदि वा वृद्धे शुक्रे चास्तमिते गुरौ ।
मलमासेऽपि चैतानि वर्जयेद्देवदर्शनम् ॥

[1]गुरोर्भृगोरस्तबाल्ये वार्धके सिंहगे गुरौ ।
वक्रिजीवेऽष्टविंशेऽह्नि गुर्वादित्ये दशाहिके ॥
पूर्वराशावनायातातिचारिगुरुवत्सरे ।
प्राग्राशिगन्तृजीवस्य चातिचारे त्रिपक्षके ॥
कम्पाद्यद्भुतसप्ताहे नीचस्थेज्ये मलिम्लुचे ।
भानुलङ्घितके मासि क्षये राहुयुते गुरौ ॥
पौषादिकचतुर्मासे चरणाङ्कितवर्षणे ।
एकेनाह्ना चैकदिने द्वितीयेन दिनत्रये ॥
तृतीयेन तु सप्ताहे मङ्गल्यानि जिजीविषुः ।
विद्यारम्भकर्णवेधौ चूडोपनयनोद्वहान् ॥
तीर्थस्नानमनावृत्तं तथाऽनादिसुरेक्षणम् ।
परीक्षारामयज्ञांश्च पुरश्चरणदीक्षणे ॥
व्रतारम्भप्रतिष्ठे च गृहारम्भप्रवेशने ।
प्रतिष्ठारम्भणे देवकूपादेर्वर्जयन्ति च ॥

---

(१) गभा. २४.
(२) संग. २१४.

(१) संत. ८८२ ज्योतिषे.

# वक्रातिचारगगुरुनिर्णयः*

## हारीतः

[1]अतिचारगते जीवे वृषेऽलौ मीनकुम्भयोः ।
यज्ञोद्वाहादिकं कुर्यात्तत्र कालो न लुप्यते ॥

## वसिष्ठः

[2]यात्रोद्वाहौ प्रतिष्ठां च गृहचूडाव्रतादिकम् ।
वर्जयेद्यत्नतश्चैव जीवे वक्रातिचारगे ॥
[3]अतिचारगते जीवे वर्जयेत्तदनन्तरम् ।
विवाहादिषु कार्येषु अष्टाविंशतिवासरान् ॥

## राजमार्तण्डः

[4]वक्रातिचारगे जीवे वर्जयेत्तदनन्तरम् ।
व्रतोद्वाहादिचूडायामष्टाविंशतिवासरान् ॥

वक्रातिचारयोः अपवादमाह राजमार्तण्डः– वक्रातिचारग इति । वक्रातिचारयोः अष्टाविंशतिवासरवर्जनं अत्यन्तसंकटविषयकं बोध्यम्, ' प्राग्राशिगतजीवस्य चातिचारस्त्रिपक्षकः ' इत्यनेन गुरोस्ताहशातिचारे पक्षत्रयपर्यन्तमेव तत्कर्मवर्जनस्य उक्तत्वात् ।

संर. ४६९

* गुरुशुक्रादीनां बाल्यादिविचारप्रकरणमपि ( संका. पृ. १०२५ ) द्रष्टव्यम् ।
( १ ) संर. ४७०.
( २ ) संर. ४६८.
( ३ ) गभा. ६७ ; सिन्धु. १०७९ ; पुम. ४४९ विवाहादिषु ( व्रतोद्वाहादि ).
( ४ ) संग. २१२ चूडामणौ ; संर. ४६९.

## दीपिकायाम्

[1]त्रिकोणजायाधनलाभराशौ
वक्रातिचारेण गुरुः प्रयातः ।
यदा तदा प्राह शुभे विलग्ने
हिताय पाणिग्रहणं वसिष्ठः ॥

त्रिकोणेत्यादिकमर्थात् पाणिग्रहीतुरेव । त्रिकोणं नवमः पञ्चमश्च राशिः । जाया सप्तमराशिः । धनं द्वितीयो राशिः । लाभ एकादशो राशिः, तत्रेत्यर्थः ।

संर. ४७०

## कृत्यचिन्तामणौ

[2]अतिचारगते जीवे वक्रे चैव बृहस्पतौ ।
कामिनी विधवा प्रोक्ता तस्मात्तौ परिवर्जयेत् ॥

## मुहूर्तचिन्तामणिः

[3]अस्ते वर्ज्यं सिंहनक्रस्थजीवे
वर्ज्यं केचिद्वक्रगे चातिचारे ॥

## अनिर्दिष्टकर्तृकवचनम्

[4]प्राग्राशिगतजीवस्य चातिचारस्त्रिपक्षकः ॥

( १ ) संग. २१२ शुभे विलग्ने ( शुभं विलग्नं ) चूडामणौ ; संर. ४७०.
( २ ) संर. ४६९.
( ३ ) मुचि. ५।४८.
( ४ ) संर. ४६९.

# गुर्वादित्याख्यदोषविचारः

## वसिष्ठः

[1]रविक्षेत्रगते जीवे जीवक्षेत्रगते रवौ ।
वर्जयेत्सर्वकार्याणि व्रतस्वस्त्ययनानि च ॥

## गर्गः

[2]एकराशिगतौ सूर्यजीवौ स्यातां यदा तदा ।
गुर्वादित्याख्यदोषोऽयं गर्हितः सर्वकर्मसु ॥

## शौनकः

[3]एकराशिगतौ सूर्यजीवौ स्यातां यदा पुनः ।
व्रतबन्धविवाहादि शुभकर्माखिलं त्यजेत् ॥

एतच्च एकनक्षत्रावच्छेदेन एकराशिगतत्वे बोध्यम्, 'एकराशिगतौ स्यातामेकर्क्षविषये यदि । गुर्वादित्यौ तदा त्याज्या यज्ञोद्वाहाहिकाः क्रियाः ॥' इतिवचनैकवाक्यत्वात् । संर. ४६८

## होराप्रकाशे

[4]रविक्षेत्रं तु पैत्र्यर्क्षं गुरुक्षेत्रं च रेवती ।
मिथः क्षेत्रगतौ तौ चेन्नश्येत किल मङ्गलम् ॥

## मुहूर्तकल्पद्रुमे

[5]गुरुदिवाकरयोर्युजि मङ्गलं
न शुभकृद्धिषणेऽपि च नीचगे ।
मगधनीवृतिकोङ्कणगौडके
परमनीचलवात्स बहिः शुभः ॥

(१) चका. ७८९ कार्याणि (कर्माणि) च (वा) सारावल्याम्; ज्योनि. ९२ उत्तरार्धे (न कुर्याच्छुभकर्माणि व्रतोद्वाहमुखानि च ।) होराप्रकाशे; पुम. ४४८; संग. २११-२१२ उत्तरार्धे (गुर्वादित्यः स विज्ञेयः सर्वकर्मसु गर्हितः ।) रत्नसंग्रहे.

(२) संग. २१२. (३) संर. ४६८.

(४) ज्योनि. ९२ चेन्नश्येत (च नश्येतां); संग. २१२ रत्नसंग्रहे; पुम. ४४८ गुरुक्षेत्रं च (जीवक्षेत्रं तु) पू., ज्योतिर्निबन्धे.

(५) संग. २१२.

## मुहूर्तचिन्तामणिः

[1]गुर्वादित्ये विश्वघस्रेऽपि पक्षे
प्रोचुस्तद्वद्दन्तरत्नादिभूषाम् ॥

अथ केचित् गुर्वादित्ये गुरुसहिते आदित्ये सूर्ये, एकराशिगतौ गुरुसूर्याविति यावत्, स गुर्वादित्यः तस्मिन्नपि सर्वमस्तोक्तं शुभकर्म वर्ज्यम् ।

यत्तु गुरुवचनम्– 'गुरुक्षेत्रगतो भानुर्भानुक्षेत्रगतो गुरुः । गुर्वादित्यः स विज्ञेयो गर्हितः सर्वकर्मसु ॥' इति, तदविचारितरमणीयम् । तथाहि– गुरुक्षेत्रे धनुर्मीनौ, तत्र भानुः सूर्यो गुर्वादित्य इति यत्, तदसत्, धनुरर्कस्य दक्षिणायनत्वादेव निषेधसिद्धेः, तथा मीनार्कस्य तु यज्ञोपवीतव्यतिरिक्तकार्यमात्रे निषेधसिद्धेः । तथा भानुक्षेत्रं सिंहः, तत्र गतो गुरुर्गुर्वादित्य इति चेत्, न, तत्र सिंहस्थगुरुत्वादेव निषेधसिद्धेः । अथ गणितवशेन यस्मिन्नेव गुरुक्षेत्रे भानुस्तस्मिन्नेव राशौ गुरुः स गुर्वादित्य इति, तन्न, संभवत्येकवाक्यतायां भिन्नवाक्यताकरणस्य वैयर्थ्यापत्तेः । पीटी.

## अनिर्दिष्टकर्तृकवचने

[2]एकराशिगतौ स्यातामेकर्क्षविषये यदि ।
गुर्वादित्यौ तदा त्याज्या यज्ञोद्वाहादिकाः क्रियाः ॥
गुर्वादित्ये दशाहे तु व्रतोद्वाहादि वर्जयेत् ॥

'गुर्वादित्ये दशाहे तु' इत्यनेन यत्कर्मवर्जनमुक्तं तद्भिन्ननक्षत्रविषयं बोध्यमिति । यदि चैकर्क्षघटितविशेषवचनसहकारेण मुन्यन्तरोक्तसामान्यवचनस्याप्येकस्यैव निषेधविधेः कल्पनालाघवात्तदेकवाक्यत्वानुरोधेन विशेषविधिपरत्वं कल्प्यते तदा विभिन्ननक्षत्रविषये तयोरेकराशिस्थत्वं बोध्यमिति नवीनाः ।

संर. ४६८

(१) मुचि. १।४८.
(२) संर. ४६८.

# गोधूलिकादिलग्नविचारः

## वसिष्ठः

[1]मध्यंदिनगते भानौ मुहूर्तोऽभिजिदाह्वयः ।
योऽष्टमः सर्वदोषघ्नस्त्वन्धकारं यथा रविः ॥

[2]सूर्याच्चतुर्थं यल्लग्नमभिजित्संज्ञकं तु तत् ।
सर्वदोषं निहन्त्याशु पिनाकी त्रिपुरं यथा ॥

[3]सर्वदेशेष्विदं मुख्यं सर्ववर्णेषु सर्वदा ।
सर्वदोषहरं यद्वद्धरिरित्यक्षरद्वयम् ॥

[4]सूर्यात्सप्तमलग्नं यद्गोधूलिकमिति स्मृतम् ।
सर्वदोषहरं यद्वत्पापं गङ्गाजलं यथा ॥

[5]गोधूलिकं योगलग्नं भावलग्नं च कल्पितम् ।
गान्धर्वादिविवाहेषु वैश्योद्वाहेषु योजयेत् ॥

## नारदः

[6]चतुर्थमभिजिल्लग्नमुदयर्क्षात्तु सप्तमम् ।
गोधूलिकं तदुभयं विवाहे पुत्रपौत्रदम् ॥

[7]प्राच्यानां च कलिङ्गानां मुख्यं गोधूलिकं स्मृतम् ।
अभिजित्सर्वदेशेषु मुख्यं दोषविनाशकृत् ॥

[1]मध्यंदिनगते भानौ मुहूर्तोऽभिजिदाह्वयः ।
नाशयत्यखिलान् दोषान् पिनाकी त्रिपुरं यथा ॥

[2]मध्यंदिनगते भानौ सकलं दोषसंचयम् ।
दहत्येवाभिजिल्लग्नं तूलराशिमिवानलः ॥

## अत्रिः

[3]मुख्यो विवाहः पूर्वाह्णे मध्याह्ने चोत्तमोत्तमः ।
निशायां मध्यमः प्रोक्तस्त्वपराह्णे तु गर्हितः ॥

## वराहमिहिरः

[4]प्रातर्विवाहः शुभदो द्विजानां
मध्यंदिने क्षत्रकुलोद्भवानाम् ।
वैश्याह्वयानामपराह्णकाले
प्रदोषकाले खलु शूद्रजातेः ॥

[5]प्राच्याः प्रायो हीनवर्णाः सगोपाः
संध्याकालं प्राहुरिष्टं त्वशेषम् ।
यावच्छान्तिं गोरजो नाभ्युपैति
तावत्तेषां चित्तशुद्धिर्विवाहे ॥

---

( १ ) **वसं.** ३२।२२६ ; **विसौ.** ५६.

( २ ) **वसं.** ३२।२२७ ; **विसौ.** ५६ तु तत् ( च तत् ).

( ३ ) **वसं.** ३२।२२८ ; **विसौ.** ५६.

( ४ ) **वसं.** ३२।२२९ ; **विसौ.** ५६ गङ्गाजलं यथा ( गङ्गास्मृतिर्हरेत् ).

( ५ ) **वसं.** ३२।२३० ; **विसौ.** ५६ गोधूलिकं योगलग्नं ( गोधूलिकायां यल्लग्नं ) द्वाहेषु ( द्वाहे च ) ; **संग.** २४९ उत्त., नारदः.

( ६ ) **ज्योना.** २७।१४४ पृ. ६१ ; **प्रपा.** ३३१ ; **विसौ.** ५५ ; **संप्र.** ७८३ ; **ज्योनि.** १५४.

( ७ ) **ज्योना.** २७।१४५ पृ. ६१ ; **प्रपा.** ३३१ ; **विसौ.** ५५ शकृत् ( शनम् ) ; **संप्र.** ७८३ प्राच्यानां ( प्रख्यानं ) मुख्यं दो ( मुख्यदो ) ; **ज्योनि.** १५४ गोधूलिकं ( साधारणं ) ; **संग.** २४९ पू.

( १ ) **ज्योना.** २७।१४६ पृ. ६१ ; **प्रपा.** ३३१ खिलान् दोषान् ( खिलं दोषं ) ; **विसौ.** ५५ ; **संप्र.** ७८३ प्रपावत् ; **ज्योनि.** १५४ प्रपावत्.

( २ ) **ज्योना.** २७।१४७ पृ. ६१ दहत्येवाभिजिल्लग्नं ( करोति दोषमभिजित् ) ; **प्रपा.** ३३१ अन्यच्च इत्युक्तम् ; **विसौ.** ५५ न संपूर्णश्लोकः ; **संप्र.** ७८३ संहितान्तरेऽपि ; **ज्योनि.** १५४ दहत्येवाभिजिल्लग्नं ( करोति नाशमभिजित् ) राशि ( संघ ).

( ३ ) **विसौ.** ५८ ; **संम.** ७२ ; **कृभ.** ११२६ क्तस्त्वप ( क्तः अप ).

( ४ ) **विसौ.** ५६.

( ५ ) **विसौ.** ५६ ; **निप.** २८४ (=) उच्चैर्गवां खुरपुटोच्छलितै ( ऋद्धे गवां खुरपुटोद्गलितै ). 'संध्यातपारुणित' इत्येक एव श्लोकः । राजमार्तण्डग्रन्थेऽपि एते श्लोकाः सन्ति ।

संध्यातपारुणितपश्चिमदिग्विभागे
व्योम्नि स्फुरद्विमलतारकसंनिवेशे ।
उच्चैर्गवां खुरपुटोच्छलितै रजोभि-
र्गोधूलिरेष कथितो भृगुजेन योगः ॥

गोधूलिं त्रिविधां वदन्ति मुनयो
नारीविवाहादिके
हेमन्ते शिशिरे प्रयाति मृदुतां
पिण्डीकृते भास्करे ।
ग्रीष्मेऽर्धास्तमिते वसन्तसमये
भानौ गतेऽदृश्यतां
सूर्ये चास्तमुपागते भवति सा
प्रावृट्शरत्कालयोः ॥

[1]गोपैर्यष्ट्याहतानां खुरपुटदलिता
या तु धूलिर्दिनान्ते
सोद्वाहे सुन्दरीणां विपुलधनसुता-
रोग्यसौभाग्यकर्त्री ।
तस्मिन्काले न चर्क्षं न च तिथिकरणं
नैव लग्नं न योगः
ख्यातः पुंसां सुखार्थं शमयति दुरिता-
न्युत्थितं गोरजस्तु ॥

### श्रीपतिः

[2]प्रायेण गोपाः सह हीनवर्णैः
प्राच्याश्च संध्यासमये विवाहम् ।
शंसन्ति यावत्समुपैति शान्तिं
न गोखुरोत्खातरजोवितानम् ॥

(१) विसौ. ५६ विपुल (विविध) न चर्क्षं (न ऋक्षं) भागुरिः; संप्र. ८०१ या तु धूलि (या च भूमि) न चर्क्षं (न ऋक्षं) सुखार्थं (सुखार्थे) न्युत्थितं (न्युच्छ्रितं); संग. २५० संप्रवत्, वीरमित्रोदये.

(२) विसौ. ५८.

### लल्लः

[1]लग्नं यदा नास्ति विशुद्धमन्य-
द्गोधूलिकं साधु तदा वदन्ति ।
लग्ने विशुद्धे सति वीर्ययुक्ते
गोधूलिकं नैव फलं विधत्ते ॥
[2]शुभाशुभयुतं सर्वं राशेर्दोषं त्वनिन्दितम् ।
विहाय लग्नविच्छेषं गोधूलिं प्राह भागुरिः ॥

### विवाहवृन्दावनम्

[3]प्राचीं कुङ्कुमचर्चितामिव दिशं
मुक्ताफलस्रग्विणीं
कौसुम्भांशुकभासिनीमिव दिशं
प्राचेतसीं दर्शयन् ।
यावद्याति करग्रहं सह रविः
संध्याकुरङ्गीदृशा
तावन्मङ्गलमङ्गलग्नसुरभी-
रेणोः करं गृह्णतः ॥

तत्र गोधूलिकालं दर्शयन् स्वकवित्वकौशलं दर्शयति—प्राचीमिति । यावत् रविः सूर्यः मुक्ताफलस्रग्विणीं प्राचीं दिशं कुङ्कुमचर्चितामिव, प्राचेतसीं प्रतीचीं दिशं च कौसुम्भांशुकभासिनीमिव दर्शयन् संध्याकुरङ्गीदृशा संध्यैव कुरङ्गीदृक् वधूस्तया करग्रहं याति तावत्पर्यन्तं अङ्गलग्नसुरभीरेणोः अङ्गे लग्ना सुरभीणां धेनूनां रेणुः धूलिः यस्यास्तस्याः कुमार्याः करं पाणिं गृह्णतः वरस्य मङ्गलं शुभं भवति । लक्ष्मी.

उत्कर्णतर्णकविलोकनवल्गुवल्ग-
त्पीनस्तनोद्धृषितदुर्धरधेनुधूलिः ।
गोधूलिकं सृजति गोपपृथग्जनानां
दोषैर्महद्भिरपि लग्नमनूनमन्यैः ॥

(१) विसौ. ५७; निप. २८४ गोधूलिकं साधु तदा वदन्ति (गोधूलिकां साधु समामनन्ति) पू.

(२) विसौ. ५७. पूर्वश्लोकः अयं च श्लोकः राजमार्तण्डेऽपि स्तः ।

(३) विवृ. ९।१–२; विसौ. ५८.

अथ गोधूलिलक्षणं तदधिकारिणश्चाह— उत्कर्णेति। उत्कर्णतर्णकविलोकनवल्गुवल्गत्पीनस्तनोद्धूषितदुर्धरधेनुधूलिः, उत् ऊर्ध्वौ कर्णौ यासां ताः उत्कर्णाः, ताश्च तर्णकानां विलोकनेन वल्गवः शोभमानाः वल्गन्त्यः पीनस्तनाः उद्धूषिताः दुर्धराश्च ता धेनवश्च तासां धूलिः गोधूलिकं लग्नं सृजति। इदं गोधूलिलग्नं गोपपृथग्जनानां गोपाश्च पृथग्जनाः हीनवर्णाश्च तेषां अन्यैर्महद्भिर्दोषैः अनूनं सहितं अपि शुभं भवति।

लक्ष्मी.

[1]गोधूलिकेऽपि विधुमष्टमषष्ठमूर्तौ *
यन्मोचयन्ति तदयं स्वरुचिप्रपञ्चः।
पञ्चाङ्गशुद्धिमयमेव विवाहधिष्ण्यै-
र्यस्मादिदं सततमस्तगते पतङ्गे॥

केचित् गोधूलिकेऽपि षष्ठाष्टमचन्द्रं त्यजन्ति तन्निरस्यति— गोधूलिक इति। गोधूलिकेऽपि अष्टमषष्ठमूर्तौ अष्टमषष्ठयोर्मूर्तिः देहो यस्य तं विधुं चन्द्रं यन्मोचयन्ति केचित्, तदयं तेषां स्वरुचिप्रपञ्चः स्वरुच्यैव प्रपञ्चो व्यामोहनं स्यात्। इदं गोधूलिकं विवाहधिष्ण्यैः विवाहविहितनक्षत्रैः पञ्चाङ्गशुद्धिमयमेव ग्राह्यम्। यस्मादिदं सततं सर्वदा अस्तगते सप्तमस्थे पतङ्गे सूर्ये सत्येव भवति। गोधूलिलग्ने विवाहविहितनक्षत्रे सति पञ्चाङ्गशुद्धिरेव विलोक्या न पुनर्लग्नशुद्धिरित्यर्थः।

लक्ष्मी.

[2]नांशो न लग्नमिह दृष्टयुतं स्वभर्त्रा
नार्कारसौरतमसामपि सङ्गभङ्गः।
किं चन्द्रचारभयमेकमिहास्तु किंचि-
न्नात्र प्रमाणवचनं किमपि श्रुतं नः॥

* अत्र 'मूर्तिम्' इति विधुपदसमानाधिकरणं पाठमाश्रित्य केवलं षष्ठस्याष्टमस्य च विधोर्मोचनीयत्वं टीकाकृताऽभिहितम्। वस्तुतस्तु चिन्तामण्याद्यनेकग्रन्थसंवादात् विसौ. पीटी. इत्यादौ सप्तम्यन्तपाठोपलम्भाच्च लग्नगतस्यापि विधोर्वर्जनीयत्वं विवक्षितम्। स्त्रीलिङ्गैकवचनं तु 'सहिता' इति मध्यमपदलोपेनोपपादनीयम्।

(१) विवृ. ९।३ मूर्तौ (मूर्तिं); विसौ. ५७.

(२) विवृ. ९।४.

(१) इह अस्मिन् गोधूलिके अंशः नवांशः स्वभर्त्रा दृष्टयुतो न, लग्नं च स्वभर्त्रा दृष्टयुतं न भवतु। तथा च अर्कारसौरतमसां रविकुजशनिराहूणां अपि सङ्गभङ्गः सङ्गेन योगेन भङ्गः न भवति (? तु)। इह अस्मिन् एकं चन्द्रचारभयं पुनः किमस्तु। अत्र किंचित् प्रमाणवचनमपि नः अस्माकं न श्रुतम्। लक्ष्मी.

(२) ज्योतिःसंहितासारे—'षष्ठाष्टमे मूर्तिगते शशाङ्के...' इति। एतेन 'स्वरुचिप्रपञ्चः' इति, 'नात्र प्रमाणवचनं किमपि श्रुतं नः' इति (च) यत्केशवार्केणोक्तं तच्चिन्त्यम्, एतादृशानां वचनानां मूलभूतानामुपलम्भात्। विसौ. ५८

[1]सार्कं शनौ विरवि चित्रशिखण्डिसूनौ
तत्केवलं कुलिकयामदलोपलम्भात्।
प्रायेण संकरभुवामशुभर्क्षपक्ष-
क्रूरक्षणेषु शुभकृत्करपीडनं स्यात्॥

अत्र किं विलोक्यमित्याह— सार्कमिति। तत् गोधूलिकं शनौ शनिदिने सार्कं सूर्यसहितं ग्राह्यम्। चित्रशिखण्डिसूनौ गुरुदिने विरवि, अस्तंगतेऽर्कबिम्बे ग्राह्यमित्यर्थः। तदपि केवलं कुलिकयामदलोपलम्भात् कुलिकस्य यामदलस्य (च) उपलम्भः प्राप्तिः, तस्मात् *। अत्र प्रायेण विशेषेण संकरभुवां हीनवर्णानां अशुभर्क्षपक्षक्रूरक्षणेष्वपि करपीडनं शुभकृत् स्यात्, किं पुनः पञ्चाङ्गादिशुद्धौ सत्यामित्यर्थः। लक्ष्मी.

[2]अत्रोभयत्र घटिकादलमिष्टमाहु-
र्ग्राह्यस्तदम्बरमणेरपि नार्धबिम्बः।
कालार्गलानियतये तपनार्धबिम्ब-
वेलाव्यवस्थितिरियं रचयांबभूवे॥

सार्कं शनावित्यादि यदुक्तं तत्परिमाणं कथयति— अत्रेति। अत्र गोधूलिके उभयत्र बिम्बार्धास्तमयात् पूर्वं

* शनिवारेऽस्तात्परं कुलिकप्राप्तेः, गुरुवारेऽस्तात्पूर्वमर्धयामप्राप्तेश्चेति प्रथमपादार्थहेतुरित्येतट्टीकाकृत एव भाषाटीकायां स्पष्टम्।

(१) विवृ. ९।५; विसौ. ५८.

(२) विवृ. ९।६; विसौ. ५६ माहुर्ग्राह्यः (मुक्तं ग्राह्यं) नार्धबिम्बः (चार्धबिम्बात्).

पश्चाच्च घटिकादलं घट्यर्धं (? अर्धघटी) इष्टमाहुः। तत् तस्मात् अम्बरमणेः सूर्यस्य अर्धबिम्बः अर्धं बिम्बं यस्मिन् सः अपि कालो न ग्राह्यः। इयं तपनार्धबिम्ब-वेलाव्यवस्थितिः कालार्गलानियतये ऋषिभिः रचयांबभूवे रचितेत्यर्थः। लक्ष्मी.

## सारावल्याम्

[1]षष्ठो विलग्नाद्रविरष्टमो वा
भागो मुहूर्तो यदि युज्यते च।
सूर्येन्दुताराबलसंप्रयुक्ता
गोधूलिका सर्वफलप्रदात्री॥
लग्नशुद्धिर्यदा न स्याद्यौवनं तु प्रशस्यते।
तदा तु सर्ववर्णानां कालो गोधूलिकः स्मृतः॥

## दैवज्ञमनोहरे

[2]घटीलग्नं यदा नास्ति तदा गोधूलिकं शुभम्।
शूद्रादीनां बुधाः प्राहुर्न द्विजानां कदाचन॥
[3]महादोषान् परित्यज्य प्रोक्तधिष्ण्यादिकेषु च।
कारयेद्गोरजो यावत्तावल्लग्नं शुभावहम्॥
[4]कुलिकं क्रान्तिसाम्यं च
मूर्तौ षष्ठेऽष्टमे शशी।
पञ्च गोधूलिके त्याज्या
अन्ये दोषाः शुभावहाः॥
[5]मन्दवारे न कर्तव्यं बुधैर्लग्नं निशामुखे।
गुरोर्वारेऽपि कर्तव्यमस्तं याते दिवाकरे॥
क्रूरमुक्तं च भोग्यं च भं विद्धं कुदिनादिकम्।
लग्नं क्रूरयुतं चांशं संध्यालग्ने न चिन्तयेत्॥
[1]ग्रहान् लग्नादिभावस्थान् जामित्रं
च न चिन्तयेत्।
द्विजानामपि संध्यायामंशशुद्धिं विलोकयेत्॥
[2]लग्नशुद्धिर्यदा न स्याद्यौवने समुपस्थिते।
तदा वै सर्ववर्णानां लग्नं गोधूलिकं शुभम्॥
[3]दिनान्ते सूर्यबिम्बार्धे पूर्वभेऽत्र घटीदलम्।
कालार्गले च वेलायां धात्रोद्वाहाय निर्मितम्॥
अनागतेऽर्केऽर्कदिने शनौ च
त्रिभागनष्टे शशिशुक्रयोश्च।
सूर्यार्धबिम्बे शुभदं च जीवे
लग्नं कुजे ज्ञे च मुखं रजन्याः॥
भानोः कुङ्कुमसंकाशाद्यावत्ताराप्रकाशनम्।
यावच्च गोरजो व्योम्नि तावल्लग्नं स्मृतं परैः॥
कालं हित्वा सर्वदेशे लग्ने शस्तोऽभिजित्क्षणः।
अम्भोधिमथनोत्पन्नां यतोऽत्र कमलां हरिः।
उद्ववाह तदाद्यं तल्लग्नं गोधूलिकं स्मृतम्॥
[4]केऽप्याहुर्गोरजो नेष्टं तनौ कामेऽष्टमे कुजे।
रिपौ शुक्रे गुरोर्वारे न चैतद्बहुसंमतम्॥

## राजमार्तण्डः

[5]ऋक्षेऽशुभेऽपि शशिनि प्रतिकूलभेऽपि
पापेक्षिते क्षितिसुतेऽपि विलग्नगेऽपि।
गोधूलियोगमपरे परिकीर्तयन्ति
स्त्रीणामपत्यधनसौख्यवहं विवाहे॥
[6]नास्मिन् ग्रहा न तिथयो न च विष्टितारा
ऋक्षाणि नोपजनयन्ति कदाऽपि विघ्नम्।
अव्याहतः सततमेव विवाहकाले
यात्रासु चायमुदितो भृगुजेन योगः॥

---

(१) चका. ७९१.

(२) विसौ. ५७; ज्योनि. १५५ (=) शुभम् (स्मृतम्); संग. २४९ (=) ज्योनिवत्; संर. ५३७ ज्योतिर्निबन्धे.

(३) विसौ. ५७; ज्योनि. (=) १५५.

(४) विसौ. ५७; ज्योनि. १५५-१५६ (=) षष्ठेऽष्टमे (षष्ठाष्टगः).

(५) ज्योनि. १५६ (=). ज्योतिर्निबन्धे अनिर्दिष्टकर्तृकावप्येतौ श्लोकौ दैवज्ञमनोहरवचनसंदष्टत्वादत्रैव संगृहीतौ। एवमग्रे 'दिनान्ते सूर्य०' इत्यादयोऽपि।

(१) विसौ. ५७; ज्योनि. १५६ (=) च न (नैव).

(२) विसौ. ५७ पूर्वार्धे (लग्नशुद्धिर्यदा नास्ति कन्या यौवनशालिनी।); ज्योनि. १५६ (=); संर. ५३७ ज्योतिर्निबन्धे.

(३) ज्योनि. १५६ (=).

(४) विसौ. ५७ केऽप्याहु (अत्राहु); ज्योनि. १५६ (=).

(५) विसौ. ५६. (६) निप. २८४ (=).

## ब्रह्मयामले

[1]मध्यादभ्यधिकं विवाहसमये
नेच्छन्ति कर्णाटकाः
पाण्ड्याः केरलमालवाश्च मगधाः
पूर्वाह्णकालेऽपि वा ।
सिन्धुर्बर्बरसूरसेननिवहे
रात्रौ त्यजेन्मङ्गले
गङ्गानार्मदकौरवे जनपदे
गोधूलिकां संत्यजेत् ॥

## ज्योतिःसंहितासारे

[2]षष्ठाष्टमे मूर्तिगते शशाङ्के
गोधूलिके मृत्युमुपैति कन्या ।
कुजेऽष्टमे मूर्तिगतेऽथवाऽस्ते
वरस्य नाशं प्रवदन्ति गर्गाः ॥
षष्ठाष्टमे चन्द्रजचन्द्रजीवे
क्षोणीसुते वा भृगुनन्दने वा ।
मूर्तौ च चन्द्रे नियमेन मृत्यु-
र्गोधूलिकं स्यादिह वर्जनीयम् ॥
यत्र चैकादशे चन्द्रो
द्वितीये वा तृतीयगः ।
गोधूलिका सा विज्ञेया
शेषा धूलिरिति स्मृता ॥

## मुहूर्तचिन्तामणिः

[3]नास्यामृक्षं न तिथिकरणं नैव लग्नस्य चिन्ता
नो वा वारो न च लवविधिर्नो मुहूर्तस्य चर्चा ।
नो वा योगो न मृतिभवनं नैव जामित्रदोषो
गोधूलिः सा मुनिभिरुदिता सर्वकार्येषु शस्ता ॥

एवं लग्ननिर्णयमभिधायेदानीं घटिकालग्नसाधनं बहुगणितसाध्यं गोधूलिकथनं च गणितप्रयासरहितं वक्तुमवशिष्यते । तत्र सूचीकटाहन्यायेन गोधूलिप्रशंसामाह– नेति । स्पष्टार्थमिदं पद्यम् । ननु– सकलदोषनिराकरणेनातिप्रशंसनाद्गोधूल्याः घटिकालग्नानां महादोषनिराकरणपूर्वकमभिहितानां वैयर्थ्यप्रसङ्गः । न च गोधूल्यभावे घटीलग्नमवकाशवदिति वाच्यम् । गोधूल्यभावो हि दोषसत्त्वे सति स्यात् । 'न ऋक्षं न च तिथिकरणम्' इत्यादिना (? इत्यादेः) स्थूलसूक्ष्मसकलदोषापवादार्थत्वात् तस्या दोषलेशो नास्ति । उच्यते– यत्, अयं 'न ऋक्षम्' इत्यादिः स्तुत्यर्थवादः, तेन गोधूल्याः प्रशंसायां तात्पर्यं, न तु विधिः । अन्यथा निषिद्धेषु अमावास्याभद्राभरण्यादिष्वपि गोधूलिलग्नं भवितुं युक्तं स्यात् । सामान्यवैयर्थ्यापत्तेरिष्टापत्तिरपि वक्तुमशक्या । तस्मात् अभिहितनिथ्यादिष्वेव यावच्छक्याखिलदोषपरिहारपूर्वकं घटीलग्नं कार्यम्, तदभावे गोधूलिलग्नं कार्यम् ।

पीटी.

पिण्डीभूते दिनकृति हेमन्ततौं
स्यादर्धास्ते तपसमये गोधूलिः ।
संपूर्णास्ते जलधरमालाकाले
त्रेधा योज्या सकलशुभाख्ये कार्ये ॥

अथ शीतकालादिभेदेन गोधूलिभेदमाह– पिण्डीभूते इति । हेमन्ताख्ये ऋतौ । हेमन्तशब्देन शीतकाल उपलक्ष्यते । मार्गशीर्षादिमासचतुष्टये इत्यर्थः । तत्र दिनकृति सूर्ये पिण्डीभूते *ओदनगोलकसदृशे, संध्यायां नीहाराद्यावृतत्वेन निष्प्रभे इत्यर्थः । तस्मिन्समये गोधूलिर्ज्ञेया । तथा तपसमये उष्णकाले चैत्रादिमासचतुष्टये सूर्ये अर्धास्ते अर्धबिम्बस्य दृश्यत्वे अदृश्यत्वे च सति गोधूलिः । जलधरा मेघाः तेषां माला समूहस्तस्योत्पादके काले वर्षाकाले श्रावणादिमासचतुष्टये सूर्ये

(१) विसौ. ५७.
(२) विसौ. ५८.
(३) मुचि. ६।९९–१०१.

* नास्ति संध्यायां रक्तस्य सूर्यस्यौदनगोलकसादृश्यसंभवः । नीहाराद्यावरणेऽपि रक्तिम्न एवापकर्षः, न श्वैत्योपलम्भः । किंच, उत्तरावच्छेदकद्वयानुरोधेन नीहाराद्यावरणप्रयुक्तनिष्प्रभत्वावच्छिन्नसूर्यस्य गोधूल्यवच्छेदकत्वमयुक्तम्, कथमप्यस्तासंबन्धात्, अनियतनीहाराद्यावरणस्यावच्छेदकप्रवेशे प्रमाणस्यानुक्तेश्च । तस्मादेवं व्याख्यातुमुचितम्– 'पिण्डीभूते वर्तुलाकारे, दृश्यमाने अवयवेनाप्यस्तमप्राप्ते इत्यर्थः ।' इति ।

संपूर्णमस्तमदर्शनं यस्य तादृशे सति गोधूलिः । जलधरमालाशब्देन छन्दोऽपि सूचितम् । न केवलमियं विवाह एव, किंतु सकलशुभाख्ये समस्ते शुभनामके कार्येऽपि ज्ञेया । पीटी.

अस्तं याते गुरुदिवसे सौरे सार्के
लग्नान्मृत्यौ रिपुभवने लग्ने वेन्दौ ।
कन्यानाशस्तनुमदमृत्युस्थे भौमे
वोढुर्लाभे धनसहजे चन्द्रे सौख्यम् ॥

अथ गोधूलिसमये अवश्यवर्ज्यदोषानाह– अस्तं याते इति । गोधूलिरित्यनुवर्तते । गुरुदिवसे बृहस्पतिवारे सूर्ये अस्तं याते सूर्यास्तादनन्तरं गोधूलिः शुभा स्यात्, न तु सूर्यास्तात्पूर्वमर्धघटिकं गोधूलिलग्नं कार्यम्, अर्धयामसद्भावात् । तथा सौरे शनिवारे सार्के सूर्यदर्शनसहिते गोधूलिः शुभा, न तु सूर्यास्तादनन्तरम्, कुलिकसद्भावात् । उपलक्षणत्वात् क्रान्तिसाम्यमपि त्याज्यम् । तथा लग्नात्सायंकालीनलग्नात् मृत्यौ अष्टमे रिपुभवने षष्ठे वा लग्ने एव वा चन्द्रे सति कन्यानाशः स्यात् । लग्नस्थे मदनस्थे मृत्युस्थे वा भौमे सति वोढुः वरस्य नाशो भवति । चन्द्रे लाभस्थे धने द्वितीयस्थे सहजे तृतीयस्थे वा सति स्त्रीपुरुषयोः सौख्यं स्यात् । पीटी.

## भूपालवल्लभे

[1]विप्रस्य घटिकाऽलाभे दातव्यं गोरजो बुधैः ।
संकीर्णे गोरजः शस्तं पदेषु (? परेषु) द्वितयं शुभम् ॥

## मुहूर्तमालायाम्

[2]लग्नाष्टषष्ठगं चन्द्रं कुजं लग्नमदाष्टगम् ।
क्रान्तिसाम्यं च कुलिकं गोधूल्यां यत्नतस्त्यजेत् ॥

(१) संग. २४९.
(२) संग. २५०.

# ग्रहणादिषु वर्ज्यकालविचारः

## वसिष्ठः

[1]ज्येष्ठे मासे ज्येष्ठयोर्वा नृनार्यो-
नैवोद्वाहो नोपरागाद्भुतेषु ।
सर्वग्रासे सप्तरात्रं तदर्धं
खण्डे त्याज्यं चाद्भुते सप्तरात्रम् ॥

[2]ग्रस्तोदये चोर्ध्वमनिष्टमादौ
ग्रस्तास्तमानेऽप्युडुमासषट्कम् ।
नाडयश्चतस्त्रस्तिथिऋक्षयोगे
संधिर्द्विपादं करणस्य संधिः ॥

[3]पक्षोऽब्दसंधिस्त्रिदिनं च मास-
संधिस्त्रिनाड्यः खलु संध्ययोश्च ॥

[4]सौराब्दान्ते त्यजेत्पक्षं
चान्द्रे तु नवभं त्यजेत् ।
सावनान्तेऽष्टभं त्याज्यं
नाक्षत्रे पौष्णभत्र्यहम् ॥
मिथुनान्ते त्र्यहं त्याज्यं धनुरन्ते तथैव च ।
कन्यान्ते चाप्यहोरात्रं पक्षं वर्षान्ततस्त्यजेत् ॥

[5]सर्वग्रासे दिनान्यष्टौ सर्वकार्येषु वर्जयेत् ।
षड्दिनानि त्रिभागोने अर्धग्रासे चतुर्दिनम् ।
चतुर्थांशे त्रिरात्रं स्याद्ग्रहणे चन्द्रसूर्ययोः ॥

## नारदः

[6]उत्पातग्रहणादूर्ध्वं सप्ताहमखिलग्रहे ।
नाखिले त्रिदिनं नेष्टं नेष्टं तद्भमृतुत्रयम् ॥

( १ ) वसं. ३२।१७.

( २ ) वसं. ३२।१८ ; विसौ. १० योगे संधिर्द्विपादं ( योगसंधिस्तदर्धं ) उत्त.

( ३ ) वसं. ३२।१९ ड्यः खलु सं ( ड्योभयसं ) ; विसौ. १०.

( ४ ) विसौ. १०. ( ५ ) संर. ४७३.

( ६ ) ज्योना. २७।९ पू. ५१ नेष्टं नेष्टं तद्भ ( मात्रं तदा नेष्ट ) ; प्रपा. ३३५ ; संप्र. ७९३ तद्भमृतु ( तद्द्युतु ) ; संग. २१६.

[1]ग्रस्तास्ते त्रिदिनं पूर्वं पश्चाद्ग्रस्तोदये तथा ।
संध्याकाले त्रित्रिदिनं निःशेषे सप्तसप्त च ॥

## बृहस्पतिः

[2]प्राकृतोऽब्दो गुरोरब्दः सौराब्दस्त्रिविधाः समाः ।
तेषामादौ तथा चान्त्ये त्र्यहं चैव शुभे त्यजेत् ॥

[3]घटिकाद्वयमृक्षान्ते मासान्ते च दिनत्रयम् ।
वर्षान्ते वर्जयेत्पक्षं ग्रहणाद्दिनसप्तकम् ॥
ऋक्षान्ते पुत्रनाशः स्यान्मासान्ते तु धनक्षयः ।
वर्षान्ते वर्गनाशः स्याद्ग्रहणे सर्वनाशनम् ॥

[4]पश्चादेवोपरागे तु दोषः स्यान्नैव पूर्वतः ।
गृहदाहादयो दोषा यथा स्युर्दहनात्परम् ॥

[5]उल्कापाते महापाते महाशनिनिपातने ।
नभोऽशनिनिपाते च भूकम्पपरिवेषयोः ॥
ग्रामोत्पाते शिवाशब्दे दुर्निमित्ते न शोभनम् ।
केतवो यत्र दृश्यन्ते सधूमा वा पृथग्विधाः ॥
ग्रहाणां ग्रहणे चैव वर्जयेद्दिनसप्तकम् ।
युद्धे ग्रहाणामन्योन्यं निर्घाते वा कुकम्पने ।
महोत्पातयुतात्कालात्सप्तरात्रं शुभं त्यजेत् ॥

[6]ग्रस्तास्ते त्रिदिनं पूर्वं पश्चाद्ग्रस्तोदये तथा ।
खण्डग्रासे त्रित्रिदिनं निःशेषे सप्तसप्त च ॥

( १ ) ज्योना. २७।१० पू. ५१ ; प्रपा. ३३५ ग्रस्तास्ते ( ग्रस्तेऽस्ते ) संध्याकाले ( संध्यायां तु ) ; संप्र. ७९३ निःशेषे ( विशेषे ) शेषं प्रपावत्.

( २ ) ज्योनि. ७८.

( ३ ) प्रपा. ३२९ ; विसौ. १० च दिन ( तु दिन ) ग्रहणात् ( ग्रहणे ).

( ४ ) प्रपा. ३३५ ; संप्र. ७९३.

( ५ ) प्रपा. ३३५ सधूमा वा पृथग्विधाः ( सधूमाये पृथग्द्वयोः ) शुभं ( शुभे ) ; संप्र. ७९३ ग्रहणे ( ग्रहणं ).

( ६ ) संग. २१६ पू. ; संर. ४७१.

## भृगुः

[1]कम्पादौ क्षत्रे वैश्ये च सप्ताहं ब्राह्मणे त्र्यहम् ।
शूद्रे त्वर्धदिनं प्रोक्तं सर्वकार्येषु वै भृगुः ॥

## अङ्गिराः

[2]सर्वग्रासे तु सप्ताहमर्धग्रासे दिनत्रयम् ।
त्रिद्व्येकाङ्गुलतो ग्रासे दिनमेकं विवर्जयेत् ॥

## कश्यपः

[3]ग्रस्तोदये परो दोषो ग्रस्तास्तेऽर्वाक्शशीनयोः ।
द्युनिशार्धे तूभयं तत्खण्डाखण्डव्यवस्थया ॥

द्युनिशार्ध इत्यनेन दिवाखण्डे निशाखण्डे च सूर्यस्य चन्द्रस्य च ग्रस्तास्ताभ्युदययोः असंभवेनैव तयोरभावः सूचित इति । उभयं तदित्यादि । दिनेषु खण्डग्रासे एकैकस्मिन् स्थले पूर्वत्र परत्रापि दिनत्रये दिनत्रये दोषः, संपूर्णग्रासे तु पूर्वं परस्ताच्च सप्तदिनेषु दोष इत्युभयं तदित्येतदर्थो बोध्यः, बृहस्पतिवचनैकवाक्यत्वात् । अत एव ' चन्द्रसूर्योपरागेषु त्र्यहं प्राक्तु शुभं त्यजेत् । सप्ताहमशुभं पश्चात्स्मृतं ग्रहणसूतकम् ॥ ' इति वचनेन यत्पूर्वं त्र्यहे शुभवर्जनमुक्तं तत् संकटविषयकं सर्वग्रासविषयकं च बोध्यम्, परत्र सप्तरात्रोत्कीर्तनात् । शक्तिविषये पूर्वार्धं खण्डग्रासविषयकम् । तद्विषय एव पूर्णग्रासविषयकं परार्धमिति । ' त्र्यहं प्रागशुभं त्यजेत् ' इतिपाठे प्राक्त्र्यहमशुभं भवति तस्मिन्नशुभे त्र्यहे त्यजेत् । किमित्याकाङ्क्षायां योग्यतया शुभमिति शेषः । ' त्र्यहं प्राक्तु शुभं त्यजेत् ' इतिपाठे त्वग्रिममशुभपदं त्र्यहमित्यत्राप्यन्वेति । शुभपदं त्वस्त्येवेति ज्ञेयम् । संर. ४७२

## गर्गः

[4]दिग्दाहे दिनमेकं च ग्रहे सप्त दिनानि तु ।
भूकम्पे च समुत्पन्ने त्र्यहमेव तु वर्जयेत् ॥

[1]उल्कापाते त्रिदिवसं धूमे पञ्च दिनानि च ।
वज्रपाते चैकदिनं वर्जयेत्सर्वकर्मसु ॥

अत्र च ' अनिष्टे त्रिविधोत्पाते ' इत्यनेन सप्त दिनानि वर्ज्यान्युक्तानि । गर्गेण तु दिग्दाहोत्पातवज्रपातयोरेकदिनवर्जनमुक्तम् । यत्र च पूर्वं मतभेदेन न्यूनाधिकमुक्तं तत्र विरोधस्तु तत्तत्कर्मणां सापेक्षनिरपेक्षत्वेन परिहरणीयः । संर. ४७३

[2]दर्शनादर्शनाद्राहुकेत्वोः सप्तदिनं त्यजेत् ।
यावत्केतूद्गमस्तावदशुभः समयो भवेत् ॥

[3]ग्रहे रवीन्द्वोरवनिप्रकम्पे
केतूद्गमोल्कापतनादिदोषे ।
व्रते दशाहानि वदन्ति तज्ज्ञा-
स्त्रयोदशाहानि वदन्ति केचित् ॥

अत्र ग्रहकाले भूकम्पादिसमाहारे अधिकदिनानि वर्ज्यान्याह भोजराजः– ग्रहे इति । व्रत इत्युपलक्षणं विवाहादीनाम् । अत्र ग्रहणसमये भूकम्पादीनां भूयसां समाहारे त्रयोदशाहमशुद्धम्, तदल्पसमाहारे दशाहमिति बोध्यम् । संर. ४७३

[4]चन्द्रसूर्योपरागेषु त्र्यहं प्रागशुभं भवेत् ।
सप्ताहमशुभं पश्चात् स्मृतं ग्रहणसूतकम् ॥ *

( ' चन्द्रसूर्योपरागेषु ' ) इति वचनेन यत्पूर्वं त्र्यहे शुभवर्जनमुक्तं तत्संकटविषयकं सर्वग्रासविषयकं च

---

( १ ) संर. ४७२.

( २ ) संम. २४ विवर्ज ( तु वर्जे ); संग. २१६; संर. १७९, ४७३.

( ३ ) संग. २१६ पू. ; संर. ४७२.

( ४ ) गभा. ६८ ; सिन्धु. १०८० ; पुम. ४४९ ; संर. ४७३ मेकं च ( मेकं तु ) तु ( च ) उत्तरार्धे ( भूकम्पे च समुद्भूते त्र्यहानि परिवर्जयेत् । ).

* संर.व्याख्यानं ' ग्रस्तोदये परो दोषो ' इति कश्यपवचने द्रष्टव्यम् ।

( १ ) गभा. ६८ ; सिन्धु. १०८० ; पुम. ४४९ दिनानि च ( दिनानि तु ); संर. ४७३ त्रिदिवसं ( च त्रिदिनं ) चैकदिनं ( दिनं त्वेकं ).

( २ ) गभा. ६८ ; सिन्धु. १०८०-१०८१.

( ३ ) गभा. २०२; संसौ. १२४; संम. २४ विवाहचण्डेश्वरः ; सिन्धु. ९३८ ; विपा. ४७५ ; संकौ. १२३ ; संग. ६४८ ; संर. १७९ : ४७३ भोजराजः.

( ४ ) संम. २४ सूतकम् ( शूलकम् ); संग. २१६ प्रागशुभं भवेत् ( पूर्वं शुभं त्यजेत् ) मुहूर्तचिन्तामणिटीकायाम् ; कुभ. ९३८ रागेषु ( रागे तु ); संर. १७९ : ४७२ (=) प्रागशुभं भवेत् ( प्राक्तु शुभं त्यजेत् ).

बोध्यम्, परत्र सप्तरात्रोत्कीर्तनात्। शक्तिविषये पूर्वार्धं खण्डग्रासविषयकम्, तद्विषय एव पूर्णग्रासविषयकं परार्धमिति। 'त्र्यहं प्रागशुभं त्यजेत्' इतिपाठे प्राक्त्र्यहमशुभं भवति, तस्मिन्नशुभे त्र्यहे त्यजेत्। किमित्याकाङ्क्षायां योग्यतया शुभमिति शेषः। 'त्र्यहं प्राक्तु शुभं त्यजेत्' इतिपाठे त्वग्रिममशुभपदं त्र्यहमित्यत्राप्यन्वेति। शुभपदं त्वस्त्येवेति ज्ञेयम्। संर. ४७२

## वराहमिहिरः

[1]केतूदये सप्तदिनानि चोर्ध्वं
विवाहयात्रादिषु गर्हितानि।
दिनानि शेषाणि वदन्ति नूनं
शुभानि रैभ्यप्रमुखा मुनीन्द्राः॥

## लल्लः

[2]निर्घाते क्षितिचलने ग्रहयुद्धे तमोदृशौ।
अशुभे पञ्चदिवसमन्यत्रैकदिनं त्यजेत्।
दुःस्वप्ने दुर्निमित्तादौ न कदाचिच्छुभं भवेत्॥

## शार्ङ्गधरः

[3]निर्घाते क्षितिचलने ग्रहयुद्धे राहुदर्शने चैव।
आ पञ्चदिनात्कन्या परिणीता नाशमुपयाति॥

[4]उल्कापातेन्द्रचापप्रबलघनरजो-
धूमनिर्घातविद्युद्-
वृष्टिप्रत्यर्कदोषादिषु सकलबुधै-
स्त्याज्यमेवैकरात्रम्।
दुःस्वप्ने दुर्निमित्ते ह्यशुभफलदृशो
दुर्मनोभ्रान्तबुद्धौ
चौले मौञ्जीनिबन्धे परिणयनविधौ
सर्वदा त्याज्यमेव॥

(१) संव. ८४.

(२) विपा. ७५५.

(३) गभा. ६७ (=); सिन्धु. १०८०.

(४) गभा. ६७ (=) फलदृशो (तरदशे); सिन्धु. १०८०.

## चण्डेश्वरः

[1]दाहे दिशां चैव धराप्रकम्पे
वज्रप्रपातेऽथ विदारणे च।
केतौ तथोल्कांशुकणप्रपाते
त्र्यहं न कुर्याद्व्रतमङ्गलानि॥

[2]केतोरस्तदिनादूर्ध्वं सप्ताहानि परित्यजेत्।
यावत्केतूदयस्तावदशुद्धः समयो भवेत्॥
इदं ब्रह्मपुत्राख्योग्रकेतुविषयमिति धर्मप्रकाशे। संम. २४

## हेमाद्रौ

[3]त्रयोदश्यादिकं वर्ज्यं दिनानां नवकं ध्रुवम्।
माङ्गल्येषु समस्तेषु ग्रहणे चन्द्रसूर्ययोः॥
द्वादश्यादितृतीयान्तो वेध इन्दुग्रहे स्मृतः।
एकादश्यादिकः सौरे चतुर्थ्यन्तः प्रकीर्तितः।
खण्डग्रहे तयोः प्रोक्तमुभयत्र दिनद्वयम्॥

## सारावल्याम्

[4]ग्रहणद्वयमध्यस्थं ग्रहणादौ सप्तरात्रमपि वृत्तम्।
यात्राविवाहसमयं मनसाऽपि न चिन्तयेत्प्राज्ञः॥

## विवाहवृन्दावनम्

[5]गं-शू-वि-व-व्याऽतिषु षट्शरत्रि-
त्रिनन्दषट्का घटिकाः क्रमेण।
द्व्यंशं त्यजेत्परिघमिन्दुभान्वोः
पर्वण्यतीते दिनसप्तकं च॥

अथ दुष्टयोगानां वर्ज्यघटिकाः, ग्रहणदुष्टसमयं चाह— गमिति। गं-शू-वि-व-व्याऽतिषु गण्ड-शूल-

(१) गभा. २०२; संसौ. १२५ केतौ (धूमे); सिन्धु. ९३८; विपा. ४७५ पातेऽथ (पाते च); संग. ६४८; संर. १७९ विपावत्.

(२) संम. २४ व्यवहारचण्डेश्वरः; संव. ८४ सप्ताहानि परित्यजेत् (सप्ताहं मङ्गलं त्यजेत्) दशुद्धः समयो भवेत् (दशुद्धः समयो हि सः).

(३) संग. २१६.

(४) चका. ७८९.

(५) विवृ. १।२१.

विष्कम्भ-वज्र-व्याघातातिगण्डेषु क्रमेण षट्-शर-त्रि-त्रि-नन्द-षट्का घटिकाः त्यजेत् । पारिघं, परिघस्येदं पारिघं व्यंशं अर्धं त्यजेत् । तथा इन्दुभान्वोः पर्वणि ग्रहणे अतीते गते सति दिनसप्तकं च त्यजेत् ।

लक्ष्मी.

[1]यस्मिन्नृक्षे वीक्ष्यते सैंहिकेयो
भेदस्ताराखेटयोर्यत्र वा स्यात् ।
आषण्मासं तत्र लग्नेन्दुभाजि
भ्राजिष्णु स्यान्नो शुभं कर्म किंचित् ॥

अथ ग्रहभेदादिगतनक्षत्रदोषं कथयति— यस्मिन्निति । यस्मिन् ऋक्षे सैंहिकेयः राहुः वीक्ष्यते दृश्यते, ग्रहणं भवतीत्यर्थः, यत्र वा ताराखेटयोः मङ्गलादिकयोः द्वयोर्ग्रहयोः भेदः योगः, तत्र नक्षत्रे लग्नेन्दुभाजि लग्नस्थे चन्द्राक्रान्ते वा आषण्मासं षण्मासपर्यन्तं किंचित् शुभं कर्म भ्राजिष्णु शोभनं न स्यात् । लक्ष्मी.

[2]भजेत्तु भुक्त्यन्तरभुक्तियोगैः
पृथक्पृथक् षष्टिगुणान् गुणाग्नीन् ।
तिथीभयोगान्तरनाड्य इन्दोः
पुण्या रवेः पुण्यतमास्त्विमाः स्युः ॥

अथ तिथिनक्षत्रयोगानां संधिकालमाह— भजेदिति । षष्टिगुणान् गुणाग्नीन् पृथक् पृथक् भुक्त्यन्तरभुक्तियोगैः भजेत् क्रमेण तिथी-भ-योगान्तरनाड्यः स्युः । एतदुक्तं भवति, षष्टिगुणितत्रयस्त्रिंशतं चन्द्रार्कभुक्त्यन्तरेण भजेत् फलं तिथिसंधिघट्यः, चन्द्रभुक्त्या भजेत् फलं नक्षत्रसंधिघट्यः, चन्द्रार्कभुक्तियोगेन भजेत् फलं योगनाड्यो भवन्तीत्यर्थः । इमाः एवं प्रकारेण साधिताः अन्तरनाड्यः इन्दोः पुण्याः, रवेस्तु पुण्यतमाः स्युः । एतदुक्तं भवति— त्रयस्त्रिंशतं षष्ट्या संगुण्य चन्द्रगत्या भजेत् लब्धफलं चन्द्रसंक्रान्तिकाले संधिनाड्यः, सूर्यगत्या भजेत् फलं सूर्यसंक्रान्तिकाले संधिनाड्यो भवन्ति, ताश्चन्द्रस्य सामान्यपुण्यप्रदाः, रवेस्तु पुण्यतमा भवन्तीत्यर्थः । लक्ष्मी.

( १ ) विवृ. १।२२ ; विसौ. २८ वीक्ष्यते ( दृश्यते ).
( २ ) विवृ. ८।१६.

[1]तत्संधयोऽङ्गाङ्गघटीसमाः स्यु-
र्द्विसंगुणाश्चेद्विषुवायनीयाः ।
स संधिसंधिः खलु यत्र शेषः
शून्यं भवेदेष विशेषपुण्यः ॥

अथ ऋतुसंधिकालं कथयति— तत्संधय इति । तत्संधयः तेषां ऋतूनां संधयः अङ्गाङ्गघटीसमाः षट्षष्टिनाडितुल्याः स्युः । विषुवायनीयाश्चेत् तदा द्विसंगुणाः द्विगुणितषट्षष्टिघट्यः भवन्ति । यत्र राशिद्वयभागतक्षणकाले यदा शेषः शून्यं भवेत् स कालः संधिसंधिः स्यात् । एष संधिसंधिः विशेषपुण्यो भवेत् ।

लक्ष्मी.

[2]संधौ पुरन्ध्री शुचमेति वन्ध्या
मृतप्रजा वा यदि संधिसंधिः ।
वदन्ति वात्स्या ऋतुना विमूढां
निशीथमध्यन्दिनसंधिपूढाम् ॥

अथोक्तसंधिसमये विवाहफलं कथयति— संधाविति । संधौ तिथिनक्षत्रयोगानां संधिकाले विवाहे सति पुरन्ध्री शुचं शोकं एति प्राप्नोति, यदि संधिसंधिस्तदा मृतप्रजा भवेत् । तथा निशीथमध्यन्दिनसंधिषु ऊढां विवाहितां कन्यां ऋतुना विमूढां आर्तवविहीनां वात्स्या वदन्ति ।

लक्ष्मी.

[3]शूलवैधृतवरीयसां च यत्
पञ्चमेषु च तिथिष्ववान्तरम् ।
रेवतीन्द्रफणिभोद्भवं तद-
प्यागताद्द्विगुणमुत्सृजेत्सुधीः ॥

अथ शूलादिदुष्टयोगसंधीनां विशेषं कथयति— शूलेति । शूलवैधृतवरीयसां योगानां यत् पूर्वसाधितं अवान्तरं, पञ्चमेषु तिथिषु पञ्चमीदशमीपञ्चदशीषु च यदवान्तरं, रेवतीन्द्रफणिभोद्भवं च यदवान्तरं, तदपि आगतात् पूर्वसाधितात् द्विगुणं सुधीः उत्सृजेत् त्यजेत् ।

लक्ष्मी.

( १ ) विवृ. ८।१९ ; विसौ. ११.
( २ ) विवृ. ८।२० ; विसौ. ११.
( ३ ) विवृ. ८।२१-२२ ; विसौ. १२.

नक्षत्रयोगतिथिसंधिषु नाडिकैका
तिथ्यष्टविंशतिपलैः सहितोभयत्र ।
कर्कालिमीनतनुसंधिषु दिक्पलानि
त्याज्यानि शेषविवरेष्वपि पञ्च पञ्च ॥

अथ मध्यगत्या नक्षत्रादिसंधिघटिका आनीय कथयति— नक्षत्रेति । नक्षत्रयोगतिथिसंधिषु क्रमेण तिथ्यष्टविंशतिपलैः सहिता एका नाडिका उभयत्र नक्षत्रयोगतिथ्यन्तात् पूर्वं पश्चाच्च त्याज्या । कर्कालिमीन-तनुसंधिषु उभयत्र दिक्पलानि त्याज्यानि । शेषविवरेषु शेषाणां वृषादिलग्नानां विवरेषु संधिषु अपि पञ्च, पञ्च पलानि त्याज्यानि । लक्ष्मी.

[1]अमातिथिः पार्श्वतिथिद्वयेन
समं न माङ्गल्यमुपादधाति ।
लोकंपृणस्तत्र तिथेः प्रणेता
यस्मान्न पीयूषवपुर्वपुष्मान् ॥

अथ चान्द्रमाससंधिमाह- अमातिथिरिति । अमा अमावास्या तिथिः पार्श्वतिथिद्वयेन चतुर्दश्या प्रतिपदा च समं सह माङ्गल्यं नोपदधाति । यस्मात् कारणात्तत्र लोकंपृणः तिथिप्रणेता पीयूषवपुश्चन्द्रः वपुष्मान् प्रशस्त-बिम्बः न भवति । लक्ष्मी.

उदेति चायं प्रतिपत्समाप्तौ
कृशोऽपि वर्धिष्णुतया प्रशस्तः ।
द्वीपान्तरस्थो विफलोऽपि तावत्
यावन्न पृथ्वीनयनाध्वनीनः ॥

केश्चित् चन्द्रबाल्यात् द्वितीयाऽपि निषिद्धा, तन्मतं दूषयति- उदेतीति । अयं चन्द्रः प्रतिपत्समाप्तौ उदेति, अतः कृशोऽपि स वर्धिष्णुतया प्रशस्तः स्यात् । द्वीपान्तरस्थः अन्यत् द्वीपं द्वीपान्तरं तत्रस्थः देशान्तरदृष्टः अपि चन्द्रः तावत् विफलः, यावत् पृथ्वीनयनाध्वनीनो न भवति अर्थात् यावत् स्वदेशभूमिस्थितैर्जनैर्दृष्टो न भवति तावत् विफल एवेति । लक्ष्मी.

(१) विवृ. ८।२३–२४.

## राजमार्तण्डः

[1]पौषादिचतुरो मासान् जाता वृष्टिरकालजा ।
व्रतं यात्रां विवाहं च वर्जयेत्सप्तवासरान् ॥

[2]अनिष्टे त्रिविधोत्पाते सिंहिकासूनुदर्शने ।
सप्तरात्रं न कुर्वीत यात्रोद्वाहादि मङ्गलम् ॥

[3]एकरात्रं परित्यज्य कुर्यात्पाणिग्रहं ग्रहे ।
प्रयाणे सप्तरात्रं तु त्रिरात्रं व्रतबन्धने ॥

अत्र च कर्मभेदेन शक्तभेदेन च दिनमर्यादामाह भोजराजः—– अनिष्ट इति । त्रिविधेति दिव्यभौमनाभ-सेत्यर्थः । अयं च उत्पातादौ सप्तरात्रनिषेधः क्षत्रिय-वैश्यविषयकः । तथा च भृगुः– ' कम्पादौ क्षत्रे वैश्ये च सप्ताहं ब्राह्मणे त्र्यहम् । शूद्रे त्वर्धदिनं प्रोक्तं सर्व-कार्येषु वै भृगुः ॥ ' इति । अनिष्ट इति कीर्तनात् शुभोत्पाते सप्तरात्रं न, किंतु तत्रैकरात्रम्, ' शुभोत्पात-प्रदुष्टं दिनम् ' इति वचनात् । संर. ४७२

## अद्भुतसागरे

[4]अथ दिवसत्रयमध्ये मृदु पानीयं यदा भवति ।
उत्पातदोषशमनं तदैव शं प्राहुराचार्याः ॥

## संबन्धतत्त्वे

[5]भूकम्पादेर्न दोषोऽस्ति वृद्धिश्राद्धे कृते सति ।
ततः पूर्वं चोक्तदोष इति ज्योतिर्विदो विदुः ॥

(१) बाल. १।१४ (=).

(२) संग. २१७ (=) पूर्वार्धे (त्रिविधोत्पाततश्चोर्ध्वं सिंहिकासुतदर्शने ।); संर. ४७२,४७४ भोजराजः.

(३) संर. ४७२ : ४७४ निर्देशमात्रम्, भोजराजः.

(४) गभा. ६८ अथ (अथ यदि); सिन्धु. १०८१ शं प्राहु (संप्राहु); संर. ४७४.

(५) गभा. ६८ पू.; संत. ८८५ दोषोऽस्ति (दोषोऽत्र) पू., मत्स्यसूक्ते; उत. १२६ दोषोऽस्ति (दोषोऽत्र) सति (ऽपि वा) मत्स्यसूक्ते; सिन्धु. १०८१ पू.; विपा. ७५५ (=); संर. ४७४ पू.

### ज्योतिर्निबन्धे

[1]पञ्च दिनानि वसिष्ठ-
स्त्रिदिनं गर्गस्तु कौशिकस्त्वेकम् ।
यवनाचार्यस्य मतं
पञ्चमुहूर्तान् दूषयति राहुः ॥

[2]इरावत्या विपाशायाः शतद्र्वास्तीरभूमिषु ।
तथा त्रिपुष्करे देशे विवाहादिषु वर्जयेत् ।
होलिकाप्राग्दिनान्यष्टौ शुभार्थं मतिमाञ्जनः ॥

देशभेदेन विवाहादिषु होलिकाष्टदिनवर्जनमप्युक्तं ज्योतिर्निबन्धे—इरावत्या इति। इरावत्यादिनद्यश्च पश्चिमदेशे प्रसिद्धाः । होलिका फाल्गुनपूर्णिमा, ततः प्राग्दिनाष्टकं वर्जयेदित्यर्थः । संर. ४७५

[3]केतोरस्तदिनादूर्ध्वं सप्तरात्राणि वर्जयेत् ।
ब्रह्मपुत्रोद्गमे चैव व्रतं यात्रां च मङ्गलम् ॥

### मुहूर्तचिन्तामणिः

[4]विपाशेरावतीतीरे शुतुद्र्याश्च त्रिपुष्करे ।
विवाहादिशुभे नेष्टं होलिकाप्राग्दिनाष्टकम् ॥

अथ विवाहादिशुभकृत्ये होलिकाष्टकनिषेधमाह—विपाशेति । विपाशा इरावती चैते नद्यौ पश्चिमदेशे प्रसिद्धे । एतयोः नद्योः तीरे तीरवर्तिदेशेषु, तथा शुतुद्रुर्नदी, साऽपि तत्रैव प्रसिद्धा, तस्या अपि तीरवर्तिदेशेषु तथा त्रिपुष्कराख्ये देशे च होलिका फाल्गुनपौर्णमास्यामग्निदाहः, ततः प्राग्दिनाष्टकं विवाहादिशुभकृत्ये नेष्टं निषिद्धमित्यर्थः । पीटी.

### कालमृतसंग्रहे

[1]अब्देषु क्षयवत्सरो न शुभकृ-
त्पक्षोऽब्दसंधौ तथा ।
पञ्चाहानि तु मासयोर्दिवसयो-
र्नक्षत्रयोर्योगयोः ।
यामार्धं घटिकाद्वयं करणयो-
र्लग्नद्वये नाडिके
संध्यायां घटिकात्रयं तु घटिके
त्याज्ये तु संधौ निशः ॥

### अनिर्दिष्टकर्तृकवचनानि

[2]उपरागनिवृत्तौ तु यावत्स्यात् दिनसप्तकम् ।
रवीन्द्वोर्दृष्टिपाते च क्रूरग्रहयुते च भे ।
अग्न्याधानं विवाहादि मङ्गलं न समाचरेत् ॥

[3]तथोदयास्ते माङ्गल्ये दिनानां नवकं त्यजेत् ।
खण्डग्रहे ग्रहदिने तथा पूर्वापरं दिनम् ॥

---

(१) संम. २४ ; संर. ४७३ गर्गस्तु ( गर्गश्च ) मतं ( मुहूर्तं ) मुहूर्तान् ( मुहूर्तानि ).

(२) संर. ४७५.

(३) संव. ८४.

(४) मुचि. ११४० ; संर. ४७५ अर्वाचीनग्रन्थस्थं पद्यमित्युक्तम्.

(१) संर. ४७५.

(२) गभा. २४ तु ( च ) अग्न्याधानं ( अग्न्याधेयं ) द्वितीयार्धं नास्ति ; विपा. ७४२.

(३) विपा. ७४२.

# विवाहाङ्गकालः

## बौधायनगृह्यशेषसूत्रम्

[1]आसप्तमात् प्रजाकाम आषष्ठात् पुत्रनाशनम् ।
पञ्चमे भक्तिकामानां विष्णोः सर्वात्मनस्तथा ॥
चतुर्थे चाङ्कुरं विद्यात्
पापीयान् जायते तु सः ।
त्रियहे सर्वकामानां
सद्यो वाऽप्यङ्कुरार्पणम् ॥
[2]इत्याह भगवान् बोधायनः ॥
[3]गर्भवर्जोत्सवात् पूर्वमयुगेऽह्यङ्कुरार्पणम् ।
प्रदोषे वाऽथ सायाह्ने गुणाधिक्येऽह्नि वेष्यते ॥

## नारदः

[4]कर्तव्यं मङ्गलेष्वादौ मङ्गलायाङ्कुरार्पणम् ।
नवमे सप्तमे वाऽपि पञ्चमे दिवसेऽपि वा ॥

नवमे मङ्गलदिनात्पूर्वं नवमदिने इत्यर्थः, एवं सप्तमादौ द्रष्टव्यम् । संप्र. २६४

[5]तृतीये बीजनक्षत्रे शुभवारे शुभोदये ॥

बीजनक्षत्रं बीजावापनक्षत्रं वक्ष्यमाणम् ।

संप्र. २६४

[1]प्रदोषकाले कुर्वीत पूर्वाह्णे वा न रात्रिषु ।
वास्तुकर्मणि काले च स्याद्दिवैवाङ्कुरार्पणम् ॥
[2]नवत्रिषष्ठो नववारकः शुभो
न वर्णकेनापि विवाहमण्डपः ॥

( १ ) तत्रैव विशेषान्तरम्-- नवत्रिषष्ठ इति । नववारकः अङ्कुरार्पणं इति तत्रैव व्याख्यातम् । * वर्णकेनैव अनुकल्पतया मण्डपनिर्माणमपि नवमादिदिने न कार्यम्, मुख्यकल्पेन तन्निर्माणं तु तेषु दिनेषु सुतरां न कार्यमिति तदाशयः । विवाहार्थो मण्डपो वर्णकेनैव क्रियमाणो न शुभः, अन्यार्थस्तु वर्णकेनैव क्रियमाणोऽपि शुभ इत्यन्ये ।

संकौ. २०८

( २ ) मण्डपादिनिर्माणे दिनान्याह नारदः-- नवेति । नवमे तृतीये षष्ठे च दिवसे नववारको न शुभः । × संर. ५२५

## बृहस्पतिः

[3]आत्यन्तिकेषु कार्येषु कार्यं सद्योऽङ्कुरार्पणम् ॥

अतित्वरायां सद्यो दिवैव, 'आत्यन्तिकेषु कार्येषु सद्योऽह्न्यङ्कुररोपणम्' इति बृहस्पत्युक्तेरिति केचित् ।

संर. ४८

---

( १ ) बौगृशे. ४।१८।१४,१५ ; हिगृशे. १।३।७ त्रियहे ( त्र्यहे वा ).

( २ ) बौगृशे. ४।१८।१६.

( ३ ) बौगृशे. ५।२।११ ; हिगृशे. १।६।२६.

( ४ ) ज्योना. २३।१ मङ्गलायाङ्कु ( मङ्गलेषु क ) वाऽपि ( मासि ) ; गभा. १०० ज्योतिर्निबन्धे ; संसौ. ९४ मङ्गलेष्वादौ ( मङ्गलस्यादौ ) ; संप्र. २६३ संसौवत् ; सिन्धु. ११२७ ; विपा. ११ ( भा. २ ) उत्त., शौनकः ; ज्योनि. १२० ; संग. २२० ज्योतिर्निबन्धे ; संर. ५२६.

( ५ ) ज्योना. २३।२ तृतीये बीज ( तृतीयबीज ) ; गभा. १०० ज्योतिर्निबन्धे ; संसौ. ९४ ; संप्र. २६४ ; सिन्धु. ११२७ ; विपा. ११ ( भा. २ ) शौनकः ; ज्योनि. १२० ; संग. २२१ ज्योतिर्निबन्धे ; संर. ५२६.

* " वस्तुतस्तु वृन्दावनाद्यनेकग्रन्थसंवादानुरोधेन 'न वर्णको नापि' इत्येव मूलपाठः संभवति । वर्णकः रङ्गवल्ली, सोऽपि उक्तदिनेषु न कार्य इति तदर्थः । " इत्येषोऽस्माकं प्रज्ञोन्मेषः । तथा 'षष्ठो' इत्यत्र 'षष्ठे' इति पाठः अर्थानुरोधेन व्याख्यानतश्च संभाव्यते ।

× शेषं कौस्तुभानुवादः ।

( १ ) संसौ ९६ रत्नमालायाम् ; संप्र. २६४ : २६५ पू.

( २ ) सकौ. २०८ केनापि ( केनैव ) 'तत्रैव ( कृष्णभट्टीये )' इत्युक्तम् ; संर. ५२५.

( ३ ) गभा. १०० ; संसौ. ९६ ; संप्र. २६४ ; सिन्धु. ११२८ ; संग. २२१ ; संर. ४८ द्वितियचरणे ( सद्योऽह्न्यङ्कुररोपणम् ).

## वात्स्यः

[1]कण्डनदलनयवारक-
मण्डपमृद्वेदिवर्णकाद्यखिलम् ।
तत्संबन्धि गतागतमृक्षे वैवाहिके कुर्यात् ॥

## स्मृत्यन्तरम्

[2]धिष्ण्ये वैवाहिके चैव मण्डपादि समाचरेत् ॥

## दैवज्ञमनोहरः

[3]चित्रा विशाखा शततारकाऽश्विनी
ज्येष्ठाभरण्यौ शिवभाचतुष्टयम् ।
हित्वा प्रशस्तं फलतैलवेदिका-
प्रदानकं कण्डनमण्डपादिकम् ॥

[4]मूलेन्द्ररुद्रश्रवणार्कपौष्ण-
विश्वेशचित्राऽनलरेवतीषु ।
संस्थापनं काञ्जिककुण्डिकाया
वारे रवेर्भूमिसुतस्य शस्तम् ॥

## शार्ङ्गधरीये

[5]दलनकण्डनमण्डनवेदिका-
गृहसंमार्जनवारकमण्डपाः ।
करतलग्रहमध्यगतागतं
तदखिलं विदधीत विवाहभे ॥

विवाहकृत्यं निखिलं विवाहभे
विलोकयेन्नात्र बलं हिमद्युतेः ।
नवत्रिषष्ठेऽह्नि विवाहपूर्वतो
न वर्णको मण्डपतैलमङ्गलम् ॥

(१) चका. ८०० यवारक (यवाङ्कुर); संप्र. ८१८ यवार (पवार); सिन्धु. ११२७ व्यासः; विपा. ९ (भागः २) व्यासः; पुम. ४५१; संर. ५२६ काद्य (कान्य) व्यासः.

(२) संर. ५३०.

(३) संप्र. ८१८; सिन्धु. ११२६; संर. ५२५.

(४) संग. २२१.

(५) संर. ५२६–५२७.

## विवाहवृन्दावनम्

[1]स्युर्जनाश्रययवोप्तिवर्णिकाः
षण्णवत्रिदिवसेषु नाग्रतः ॥

(१) यवोप्तिः अङ्कुरारोपणाख्यं कर्म । जनाश्रयो मण्डपः । संर. ५२५

(२) अग्रतः विवाहदिनात् पूर्वं षण्णवत्रिदिवसेषु जनाश्रययवोप्तिवर्णिकाः न स्युः न भवेयुः । पश्चात् मण्डपाद्युद्वासनमपि एतन्मितेषु दिनेषु नो कार्यम् । अन्यव्यवस्था आचारतो ज्ञेया । लक्ष्मी.

[2]भतिथिवारफलानि पदे पदे
विरचितानि परैरिति नोचिरे ।
सकलकर्मसु यस्तदुपक्रमः
स हि विवाहभ एव शुभे दिने ॥

सकलकर्मसु दलनकण्डनादिसमस्तविवाहाङ्गकृत्येषु परैः अन्याचार्यैः भतिथिवारफलानि पदे पदे विरचितानि, इत्येवं प्रकारेणात्र नोचिरे अस्माभिर्नोक्तानीत्यर्थः। हि यतः यस्तदुपक्रमः तेषां दलनकण्डनादिसकलकर्मणां उपक्रमः स शुभदिने विष्टिमहापातादिदोषरहितदिवसे विवाहभे विवाहविहितनक्षत्रे एव स्यात् । तथा च श्रीपतिः– ‘विवाहकृत्यं निखिलं विवाहभे विलोकयेन्नैव बलं हिमद्युतेः’ इत्यादि । लक्ष्मी.

## मुहूर्तचिन्तामणिः

[3]विधोर्बलमवीक्ष्य वा दलनकण्डनं वारकं
गृहाङ्गणविभूषणान्यथ च वेदिकामण्डपान् ।
विवाहविहितोडुभिर्विरचयेत्तथोद्वाहतो
न पूर्वमिदमाचरेत्त्रिनवषण्मिते वासरे ॥

अथैवं महता ग्रन्थसंदर्भेण विवाहे सकलमहादोषरहितां दिनशुद्धिमभिधायेदानीं ततः प्राक्कर्तव्यानामावश्यककर्मणां दिनशुद्धिमाह— विधोरिति । अत्र विधोः

(१) विवृ. १४।३१; विसौ. ५८ वर्णिकाः (वर्णकाः); संप्र. ८१८ विसौवत्; संर. ५२५ विसौवत्.

(२) विवृ. १५।६.

(३) मुचि. ६।९६.

चन्द्रस्य बलमवीक्ष्य अगृहीत्वा । वाग्ग्रहणात्सत्यवकाशे चन्द्रबलं ग्राह्यम् । दलनं गोधूमादेः पिष्टीकरणम् । कण्डनं तण्डुलादेः मुसलाद्याघातादिना शोधनम् । एतयोः द्वन्द्वैकवद्भावः । वारकः मङ्गलकलशः । गृहाङ्गणविभूषणानि गृहभूषणानि चूर्णगैरिकचित्रादिलेखादीनि । अङ्गणभूषणं संमार्जनगोमयाद्यालेपः । अथ अनन्तरं वेदिका चत्वरं वधूवरयोरुपवेशनार्थं स्थलविशेषः । मण्डपः गृहाच्छादनं कटादिना वितानादिना वा । बहुवचनात् कटाहाद्यारोहणहरिद्राचन्दनकाञ्जिकाधारणादिसकलशुभप्रारम्भान् । एतानुद्वाहतः पूर्वं विवाहोक्तैरुडुभिः नक्षत्रैः पञ्चाङ्गशुद्धिसहिते दिने रचयेत् । उपलक्षणत्वात् यज्ञोपवीतादावपि ततः पूर्वं विवाहविहितनक्षत्रैरेतानभिहितशुभकर्मप्रारम्भान् विरचयेत् । तथा इदमुक्तकार्यजातं त्रिनवषण्मिते तृतीय-नवम-षष्ठमिते वासरे दिने पूर्वं नाऽऽचरेत् । पीटी.

[1]सूर्येऽङ्गनासिंहधटेषु शैवे
स्तम्भोऽलिकोदण्डमृगेषु वायौ ।
मीनाजकुम्भे निर्ऋतौ विवाहे
स्थाप्योऽग्निकोणे वृषयुग्मकर्के ॥

अथ प्राच्यशिष्टसंमतं मण्डपादौ स्तम्भनिवेशनमाह-सूर्य इति । कन्यासिंहतुलास्थिते सूर्ये शैवे ईशानकोणे, वृश्चिकधनुर्मकरस्थिते सूर्ये वायौ वायुकोणे, मीनमेषकुम्भस्थिते सूर्ये निर्ऋतिकोणे, वृषमिथुनकर्कस्थिते सूर्ये अग्निकोणे स्तम्भः स्थाप्य इत्यर्थः । पीटी.

[2]मेषादिराशिजवधूवरयोर्घटोश्च
तैलादिलापनविधौ कथिताऽत्र संख्या ।
शैला दिशः शरदिगक्षनगाद्रिबाणा
बाणाक्षबाणगिरयो विबुधैस्तु कैश्चित् ॥

कैश्चित्तैलादिलापने दिनसंख्यानियम उक्तस्तमाह-मेषादीति । स्पष्टम् । इदं देशविशेषे औदीच्यादौ प्रसिद्धम् । पीटी.

(१) मुचि. ६।१८ ; संग. २२३ (=).
(२) मुचि. ६।११०.

## कालविधाने

[1]हस्तस्वातीविरिञ्चासुरपितृमुरजि-
न्मित्रपौष्णार्यसार्पे
पाथोनाथोत्तरासु क्रिययुवतिधनु-
र्वृश्चिकान् भद्ररिक्ते ।
हित्वा पर्वासुरेज्यामरगुरुशशिवि-
द्वारलग्नांशके स्या-
दुप्तर्क्षे बीजवापः शशिनि शुभयुते
चाष्टमे शुद्धियुक्ते ॥

विरिञ्चः रोहिणी । असुरः मूलम् । पितरः मघा । मुरजित् श्रवणः । आर्यः पुष्यः । पाथोनाथः शततारका । क्रियः मेषः । युवतिः कन्या । वित् बुधः । संप्र. २६७

## चूडारत्ने

[2]चुल्यादिकर्म शच्यार्चा गृहसंमार्जनादिकम् ।
सर्वं विवाहभैः कार्यं विवाहाङ्गतयाऽऽगतम् ॥

## अनिर्दिष्टकर्तृकवचनानि

[3]यस्याङ्गं यददोऽङ्गिनो गदितभे
कुर्यादिहेन्दोर्बलं
नाऽऽलोक्यं तु विवाहतस्त्र्यरिनवाह्नि
प्राङ्न कुर्यादिदम् ॥

अस्यार्थः--यस्य कर्मणो यदङ्गं, अदः इदमङ्गिनो मुख्यस्य गदितभे उक्तनक्षत्रे कुर्यात् । इह अस्मिन् अङ्गभूते कर्मणि इन्दोः चन्द्रस्य बलं नाऽऽलोक्यं न विचारणीयम् । तत्र विवाहे विशेषः- विवाहतो विवाहदिनात् प्राक् त्र्यरिनवाह्नि तृतीयषष्ठनवमेऽह्नि, इदमङ्गं विवाहाङ्गं न कुर्यात् । संर. ५२६

[4]दलनं कण्डनं चैव व्यञ्जनं मोदकानि च ।
यवारमण्डपौ वेदी कुङ्कुमं वर्णकं तथा ॥

(१) संप्र. २६६-२६७.
(२) संग. २२१.
(३) संर. ५२६ ज्योतिर्निबन्धे विशेषः इत्युक्तम् ।
(४) ज्योनि. १५८ ; संग. २२१ मण्डपौ (मण्डपं) वर्णकं (वर्णकः) चूडारत्ने ; संर. ५२६ यवारमण्डपौ वेदी (यवारं मण्डपो वेदिः) ज्योतिर्निबन्धे.

[1]कार्यं विवाहाङ्गमिदं विवाहभै-
युंजन्ति नात्रेन्दुबलाबलं बुधाः ।
षष्ठे तृतीये नवमेऽह्नि लग्नतः
पूर्वं न वर्णो न यवारमण्डपौ ।।

दलनं गोधूमादेः पिष्टकरणम् । कण्डनं तण्डुलादेर्मुसलाघातादिना शोधनम् । व्यञ्जनं पर्पटादि । मोदकानि घृतपाचितान्नानि । यवारो( रं ) यवारकः ( कं ) 'चिकसा' इति । वारक इत्यपि पाठः । वारको मङ्गलकलशः । मण्डपो जनाश्रयः । वेदिः वधूवरयोरुपवेशनार्थं चत्वरम् । कुङ्कुमं गन्धादि । वर्णकं चूर्णगैरिकचित्रलेखनादि । अनेन मार्जनोपलेपनादिकमपि संग्राह्यम् । संर. ५२७

[2]अङ्गानि वरणादीनि प्रधानं पाणिपीडनम् ।
तस्माल्लग्नदिने सर्वं वरणाद्यं तु कारयेत् ।।
[3]विवाहर्क्षे शुभदिने वेदिः कार्या समण्डपा ।।

### शौनककारिका

[4]रात्रौ मुहूर्ते कल्याणे कारयेदङ्कुरार्पणम् ।।

अत्र रात्रिशब्दः प्रदोषपरः । 'प्रदोषकाले कुर्वीत पूर्वाह्ने वा न रात्रिषु' इति नारदेन रात्रिनिषेधात् । संप्र. २६५

[5]आ सप्तमात् प्रजा जाता आषष्ठं पुत्रनाशनम् ।
पञ्चमे भक्तिमान् विष्णोः सर्वकामफलप्रदे ।।
चतुर्थे चाङ्कुरं विद्यात् पापीयान् जायते तु सः ।
त्रियहे सर्वकामानामङ्कुराहनि चोद्यते ।।

आसप्तमादित्यत्राऽऽङ् सप्तमस्यैव दिनस्य संपूर्णतामाचष्टे नान्यावधित्वम् । एवमाषष्ठमित्यत्रापि । जातेत्यत्र प्रत्ययार्थं भूततामपहाय प्रकृत्यर्थो जननमात्रं विवक्षितम् । अङ्कुरं अङ्कुरार्पणं विद्यात् कुर्यादित्यर्थः । त्रियह इत्यत्र यणूस्थाने इयङ् छान्दसः । सर्वकामानां प्राप्तिरिति शेषः । संप्र. २६६

[1]सद्योऽङ्कुरार्पणं वाऽपि सद्यः कर्तुं समाहितः ।।
[2]ओषधीनां तु सर्वासां चन्द्रः प्रोक्तोऽधिदैवतम् ।
तस्मात्सर्वप्रयत्नेन रात्र्यां स्यादङ्कुरार्पणम् ।।

रात्रावङ्कुररोपणे हेतुमप्याह स एव– ओषधीनामिति । हिर्हेतौ । संर. ४८

[3]वास्तुकर्मणि चौले च दिवा स्यादङ्कुरार्पणम् ।
अन्यत्र रात्रौ कुर्वीत न तथाऽह्नि कदाचन ।।

---

( १ ) **ज्योनि.** १५८ ; **संग.** २२३ उत्त., चूडारत्ने ; **संर.** ५२६ ज्योतिर्निबन्धे.

( २ ) **ज्योनि.** १५८ ; **संग.** २२३ उत्त., चूडारत्ने.

( ३ ) **संकौ.** २०८.

( ४ ) **शौका.** १० पृ. ३१ ; **प्रपा.** १२ ; **संप्र.** २६५ ; **विपा.** १२ ( भागः २ ) ; **संर.** ४८ द्वितीयचरणे ( प्रथमेऽङ्कुररोपणम् ).

( ५ ) **शौका.** १४,१५ पृ. ३१ पञ्चमे भ ( पञ्चमाद्भ ) प्रदे ( प्रदम् ) त्रियहे ( त्रिहते ) मङ्कुराहनि चोद्यते ( मङ्कुरो ह न विद्यते ) ; **प्रपा.** १२ प्रजा जाता आषष्ठं ( प्रजाता वा आ षष्ठात् ) पञ्चमे भ ( पञ्चमाद्भ ) चाङ्कुरं ( चाङ्कुरे ) तु सः ( सुतः ) त्रियहे ( त्र्यहे च ) ; **संप्र.** २६६ ; **विपा.** १२ (भागः २) प्रजा जाता आषष्ठं ( प्रजानाश आषष्ठात् ) पञ्चमे ( पञ्चमात् ) विष्णोः ( विष्णौ ) त्रियहे ( त्र्याहे ).

( १ ) **शौका.** १७ पृ. ३१ ; **प्रपा.** १२ सद्यो ( अथो ) ; **संप्र.** २६६ ; **विपा.** १३ ( भागः २ ) समा ( समी ).

( २ ) **शौका.** २० पृ. ३१ तु ( च ) रात्र्यां स्यादङ्कु ( तेन रात्र्यङ्कु ) ; **प्रपा.** १२ ; **संप्र.** २६६ रात्र्यां स्यादङ्कु ( तेन रात्र्यङ्कु ) ; **विपा.** १३ ( भागः २ ) शौकावत् ; **संर.** ४८ तु ( हि ) रात्र्यां स्यादङ्कुरार्पणम् ( रात्रावङ्कुररोपणम् ).

( ३ ) **विपा.** १३ ( भागः २ ).

# लग्नपत्रिकालेखनपूजनविचारः

---

## अनिर्दिष्टकर्तृकवचनानि

[1]सुदिने गणकः स्वस्थो विलिख्य लग्नपत्रिकाम् ।
पात्रे तण्डुलसंपूर्णे गणेशं पूजितं न्यसेत् ॥
तदग्रे धारयेत्पात्रीं तन्मन्त्रेण प्रतिष्ठयेत् ।
ततो मन्त्राक्षता देया वध्वाः पित्रे वरस्य च ॥

आदौ संतोष्य दैवज्ञं गृह्णीयाल्लग्नपत्रिकाम् ।
ततो ग्रहार्चनं कुर्यान्नान्दीश्राद्धादिकं तथा ॥
यस्य नास्ति विवाहादौ विश्वासो दैवविद्द्विजे ।
तस्यावश्यं महाविघ्नं जायते मुनिशासनात् ॥
मन्त्रे तीर्थे द्विजे देवे दैवज्ञे भेषजे गुरौ ।
यादृशी भावना यस्य सिद्धिर्भवति तादृशी ॥

---

(१) संग. २५१.

# घटिकापात्रादिविचारः

## वासिष्ठः

[1]शास्त्रोक्तमार्गेण सुलग्नकालं
स्फुटं समानीय जलादियन्त्रैः ।
संलभ्य तं मङ्गलसूक्ष्मकालं
संवीक्षयेत्तत्र मिथोऽर्धदृष्ट्या ॥

[2]अर्धोदयं प्रातरिनस्य वीक्ष्य
यन्त्रं प्रदद्याज्जलपूर्णपात्रे ।
अलङ्कृते गन्धसुपुष्पवस्त्र-
फलाक्षतैर्दैववविदं च पूज्य ॥

[3]षडङ्गुलोत्सेधसमं सुवृत्तं
कृतं मुखं सद्विरसाङ्गुलं यत् ।
पलैस्तु शुल्बैर्दशभिर्जलस्य
पूर्णं पलैः षष्टिभिरम्बुयन्त्रम् ॥
यत्त्र्यंशमाषत्रय एव वृत्तां
शलाकया मध्यमभागविद्धाम् ।
समुद्रसंख्याङ्गुलदीर्घपात्रे
दद्यान्मयूरं नरवानराद्यम् ॥
व्यासाङ्गुलत्रिगुणमायतमिष्टशङ्को-
र्वृत्तं तदेव परिधिश्च तदेव तस्य ।
व्यासाङ्गुलार्धदलमङ्गुलमानमिष्टं
सर्वत्र शङ्कुपरिकल्पनमेवमेव ॥

## नारदः

[4]एवं संचिन्त्य गणितशास्त्रोक्तं लग्नमानयेत् ।
तल्लग्नं जलयन्त्रेण दद्याज्ज्यौतिषिकोत्तमः ॥

(१) वसं. ३२।१३६ ; विसौ. ५५.

(२) वसं. ३२।१३७ प्रातरिनस्य ( चास्तमिनस्य ) ; विसौ. ५५ प्रदद्यात् ( निदध्यात् ) च पूज्य ( प्रपूज्य ).

(३) वसं. ३२।१३८–१४०.

(४) ज्योना. २७८५–८६ पृ. ५७ ; ज्योनि. १५६.

[1]षडङ्गुलमितोत्सेधं द्वादशाङ्गुलमायतम् ।
कुर्यात्कपालवत्ताम्रपात्रं तद्दशभिः पलैः ॥
[2]पूर्णं षष्ट्या जलपलैः षष्टिर्मज्जति वासरे ॥
[3]माषत्रयत्र्यंशयुतस्वर्णवृत्तशलाकया ।
चतुर्भिरङ्गुलैरायतया विद्धं परिस्फुटम् ॥
[4]कार्येणाभ्यधिकः ( ? ) षड्भिः पलैस्ताम्रस्य भाजनम् ।
द्वादशं मुखविष्कम्भमुत्सेधः षड्भिरङ्गुलैः ॥
स्वर्णमानेन वै कृत्वा चतुरङ्गुलकात्मिका ।
मध्यभागे तया विद्धा नाडिका घटिका स्मृता ॥

(१) ज्योना. २७८६–८७ पृ. ५७ ; प्रपा. ३४१ त्सेधं ( त्सेधो ) मायतम् ( माननम् ) ; गभा. १०१ ; विसौ. ५५ मायतम् ( माननम् ) पात्रं तद्दश ( सुपात्रं दश ) ; सिन्धु. ११३४ कपाल ( पाताल ) पलैः ( फलैः ) ; विपा. ४० ( भागः २ ) कपाल ( पाताल ) ; ज्योनि. १५६ ; संर. ५३५ कपाल ( कमल ).

(२) ज्योना. २७८७ पृ. ५७ षष्ट्या ( षष्टिः ) ; प्रपा. ३४१ पूर्णं ( पूर्ण ) वासरे ( वासरात् ) ; विसौ. ५५ पूर्णं षष्ट्या ( पूर्णा षष्टिः ) ; ज्योनि. १५६ पूर्णं ( पूर्णे ) वासरे ( वासरात् ).

(३) ज्योना. २७८८ पृ. ५७ माषत्रय ( माषमात्र ) ; प्रपा. ३४१ माषत्रयत्र्यंशयुत ( माषत्रयं त्र्यंशयुतं ) उत्तरार्धे ( चतुर्भिरङ्गुलैरायै तथा सिद्धमतिस्फुटम् । ) ; विसौ. ५५ परिस्फुटम् ( स्फुटं न्यसेत् ) ; ज्योनि. १५६ परिस्फुटम् ( अतिस्फुटम् ) ; संर. ५३५ उत्तरार्धे ( वेदाङ्गुलैः संमितया तया विद्धमतिस्फुटम् । ).

(४) ज्योना. २७८९–९० पृ. ५७.

[1]ताम्रपात्रे जलैः पूर्णे मृत्पात्रे वाऽथवा शुभे ।
गन्धपुष्पाक्षतैः सार्द्रैरलङ्कृत्य प्रयत्नतः ॥

[2]तण्डुलस्थे स्वर्णयुते वस्त्रयुग्मेन वेष्टिते ।
मण्डलार्धोदयं वीक्ष्य रवेस्तत्र विनिक्षिपेत् ॥

[3]मन्त्रेणानेन पूर्वोक्तलक्षणं यन्त्रमुत्तमम् ॥

[4]एकान्तपक्षेऽनिलवार्जितेऽस्मिन्
दध्यक्षतैः पूजितमण्डले च ।
कुण्डे च पूर्णे घटिका प्रवाह्या
सूर्यार्धबिम्बे ह्युदितेऽस्तगे वा ॥

[5]मुख्यं त्वमसि यन्त्राणां ब्रह्मणा निर्मितं पुरा ।
भव भावाय दम्पत्योः कालसाधनकारणम् ॥

[6]संस्तुत्यैवं घटी तोये यां दिशं प्रति गच्छति ।
पूर्वाशादिफलं कुर्यात्स्थिता मध्ये धनप्रदा ॥

[1]सौभाग्यं निधनं नार्या अपमृत्यू रुजान्विता ।
भर्तृप्रिया च वेश्या च मान्या वित्तसुता-
न्विता ॥

[2]उत्तरेशानपूर्वासु घटी पूर्णा शुभप्रदा ।
दिक्षु शेषासु कन्याया मग्ना वैधव्यदायिनी ॥

[3]अथवा साधयेत्कालं द्वादशाङ्गुलशङ्कुना ॥

[4]न्यग्रोधखदिराश्वत्थरक्तचन्दनवृक्षजम् ।
श्रीखण्डागरुवृक्षोत्थमृजुं शङ्कुमकल्मषम् ॥

द्वादशाङ्गुलमुत्सेधं परिणाहे षडङ्गुलम् ।
एवं लक्षणसंयुक्तं कल्पयेत्कालसाधने ॥

[5]व्यासत्रिगुणपरिधिः परिधेः सममायतम् ॥

[6]व्यासाब्ध्यंशोऽङ्गुलं प्रोक्तमिति शङ्कु-
प्रमाणकम् ।
अन्ययन्त्रप्रयोगा ये दुर्लभाः कालसाधने ॥

[7]मुहूर्ते मङ्गले प्राज्ञो यन्त्रच्छायादिनाऽथवा ॥

[8]एवं सुलग्ने दम्पत्योः कारयेत्सम्यगीक्षणम् ।
दिवा वा यदि वा रात्रौ विवाहदिवसे शुभे ॥

## वात्स्यः

[9]ताम्रपात्रं त्रिवलिकं षडङ्गुलसमायुतम् ॥

---

(१) ज्योना. २७।९१ पू. ५७ ; प्रपा. ३४१ मृत्पात्रे वाऽथवा शुभे (गन्धपुष्पैरलङ्कृते) पू. ; गभा. १०१ पू. ; विसौ. ५५ सर्वं प्रपावत् ; सिन्धु. ११३४ पू. ; विपा. ४० (भागः २) पू. ; ज्योनि. १५६ ; संर. ५३६ जलैः पूर्णे (वारिपूर्णे) वाऽथ (ऽप्यथ) पू.

(२) ज्योना. २७।९२ पू. ५७ ; प्रपा. ३४१ ; गभा. १०१ उत्त. ; विसौ. ५५ (तण्डुलस्थे रत्नयुते शुचिभूमावदर्पितेः । मण्डलस्योदयं वीक्ष्य जले पात्रं विनिक्षिपेत् ॥) ; सिन्धु. ११३४ उत्त. ; विपा. ४१ (भागः २) उत्त. ; ज्योनि. १५६ ; संर. ५३६ उत्त.

(३) ज्योना. २७।९३ पू. ५७ ; प्रपा. ३४१ ; विसौ. ५५ ; ज्योनि. १५६.

(४) ज्योनि. १५६.

(५) ज्योना. २७।९३–९४ पू. ५७ ; प्रपा. ३४१ ; गभा. १०१ भव भावाय (भावाभावाय) ; विसौ. ५५ गभावत् ; संप्र. ८०२ (=) निर्मितं (निर्मिता) शेषं गभावत् ; सिन्धु. ११३४ ; ज्योनि. १५६ भव भावाय (भावभावाय) ; संर. ५३६ गभावत्.

(६) ज्योनि. १५६ ; संर. ५३६ (=) संस्तुत्यैवं (प्रार्थिता सा).

(१) ज्योनि. १५६–१५७ ; संर. ५३६ (=) मृत्यू (मृत्यु) भर्तृप्रिया (भर्तुः प्रिया) वेश्या (वश्या) सुता (सुखा).

(२) ज्योनि. १५७ ; संर. ५३६ (=).

(३) विसौ. ५५ ; ज्योनि. १५७ ; संग. २५१ (=).

(४) ज्योना. २७।१५९–१६१ पू. ६२.

(५) ज्योनि. १५७.

(६) ज्योना. २७।९४–९५ पू. ५७ ; ज्योनि. १५७.

(७) विपा. ४१ (भागः २).

(८) ज्योना. २७।९५ पू. ५७ पू. ; प्रपा. ३४१ ; विसौ. ५५ पू. ; ज्योनि. १५७ पू.

(९) चका. ८००.

## शौनकः

[1]ताम्रकपलविंशत्या
कटोरिकां सुसमवर्तुलां कृत्वा ।
द्वादशमुखविष्कम्भां
द्वादशतिथ्य( ? ) ङ्गुलानि निम्नां च ॥
अथवा समां शलाकां
चतुरङ्गुलमायतां सुवृत्तां च ।
कुर्याच्चतुर्थभागैकेन युतां सुवर्णस्य ॥
कलशस्य बुध्नमध्ये
शलाकया लक्षयेत्ततो यत्नात् ।
लक्षणमात्रं छिद्रं कुर्यात्तीक्ष्णेन शस्त्रेण ॥
अधिका धननाशकरी
पुत्रकलत्रार्थनाशिनी हीना ॥

## वामनः

[2]दशपलशुल्बकपाले
समघनवृत्ते षडङ्गुलोत्सेधे ।
द्वादशमुखपरिणाहे
जलपलषष्टिप्रपूरणी घटिका ॥
[3]चतुरङ्गुलशलाकां वृत्तां कुर्यात्सुवर्णपादेन ।
तत्परिमितया छिद्रे तलस्थिते शोभना
घटिका ॥

सुसूक्ष्मोऽन्तो यस्य तत् । षोडशमाषपरिमितं सुवर्णं तस्य पादश्चतुर्थांशो माषचतुष्टयपरिमितः ।

संर. ५३५

(१) विसौ. २.

(२) चका. ७९९ शुल्ब ( शुल्क ) पराशरः ; संप्र. ८०१ शुल्व ( शुद्ध ) समघन... त्सेधे ( संशुद्धान्ते षडङ्गुलोच्छ्राये ) जलपलषष्टिप्रपूरणी ( षष्ट्यम्बुपलपरिमिता ) ; संग. २५० संप्रवत् ; संर ५३५ ( दशपलसिद्धकमले सुसूक्ष्मान्ते षडङ्गुलोच्छ्राये । द्वादशाङ्गुलपरिणाहे षष्ट्या पलैः पूरिता घटिका ॥ ).

(३) संप्र. ८०१ कां वृत्तां ( कावृत्तं ) तलस्थिते ( जलस्थिते ) ; संग. २५० कां वृत्तां ( कया वृत्तं ) ; संर. ५३५ कां वृत्तां ( कावृत्तं ).

## सिद्धान्तशिरोमणौ

[1]घटदलरूपा घटिता
घटिका ताम्री तले पृथुच्छिद्रा ।
द्युनिशनिमज्जनमित्या
द्युनिशं भक्तं घटीमानम् ॥

## विवाहपटले ( सप्तर्षिमते )

[2]गन्धैः पुष्पैश्च नैवेद्यैर्धूपैश्च विविधैः फलैः ।
पूजयित्वा विधानेन निक्षिपेद्घटिकां जले ॥

[3]प्रपूजयेद्दैवविदं स्वशक्त्या
गन्धादिपुष्पाम्बरदक्षिणाभिः ।
संपूजिते दैवविदि प्रतुष्टे
तुष्यन्ति सर्वा ग्रहदेवताश्च ॥

[4]दुर्विज्ञेयः काल-
स्तस्य च रूपं न शक्यते ज्ञातुम् ।
घटयति हि तत्प्रमाणं
घटिका तेनोच्यते मुनिभिः ॥

## अनिर्दिष्टकर्तृकवचनानि

[5]यद्रूपं प्रथमं करोति घटिका
पूर्वादिदिक्षु क्रमात्
सौभाग्यं निधनं यशोविरहितं
युक्तं च रोगैः क्रमात् ।
कन्या वल्लभतामुपैति नियतं
या निश्चला सर्वदा
स्यात्साध्वी सुतवित्तबन्धुसहिता
नन्दत्यलं भूतले ॥

(१) विसौ. २.

(२) विसौ. ५५.

(३) विसौ. ५५ सर्वा ( सर्वे ) ; संर. ५३६.

(४) विसौ. ५५.

(५) संप्र. ८०२ भूतले ( भूतलम् ) ; संग. २५१ वीरमित्रोदये ; संर. ५३६ ज्योतिर्निबन्धे.

[1]प्रागुदक्प्रवणे देशे गोमयेनोपलेपिते ।
मृन्मयं कुण्डिकायुग्मं स्थापयेदव्रणं शुभम् ॥

[2]कुङ्कुमाक्तेन सूत्रेण परिवेष्ट्य परस्परम् ।
स्वच्छेन वारिणा पूर्णं तण्डुलानामथोपरि ॥

[3]निश्चले सलिले पश्चात्कुण्डिकायां जलोपरि ।
स्थापयेद्घटिकायन्त्रं सूर्यबिम्बानुदर्शनात् ॥

(१) संप्र. ८०१ ; संग. २५० वीरमित्रोदये ; संर. ५३५.

(२) संप्र. ८०१ स्वच्छेन (स्थले च) ; संग. २५० संप्रवत्, वीरमित्रोदये ; संर. ५३५.

(३) संप्र. ८०१ पश्चात्कुण्डिकायां (स्थाप्य कुण्डिकाया) ; संग. २५० संप्रवत्, वीरमित्रोदये ; संर. ५३५.

[1]यन्त्राणां मुख्ययन्त्रं त्वमिति धात्रा पुरा कृतम् ।
दम्पत्योरायुरारोग्यसुपुत्रधनहेतवे ।
जलयन्त्र त्वमेतस्मादिष्टसिद्धिप्रदं भव ॥

## रेणुकारिका

[2]यन्त्राणां मुख्यरूपाऽसि ब्रह्मणा निर्मिते घटि ।
दम्पत्योः शुभकालाप्तिं कुरु त्वं सृष्टिकारिके ॥

प्रश्नु(१ स्तु)त्यैवं घटीं नीरे
प्रक्षिपेत्कुण्डिके शुभे ।
अर्धोदितेऽर्धास्तमिते सूर्यबिम्बे दृशं गते ॥

(१) संग. २५१.

(२) रेका. १११,११२ पृ. ५६.

# नागबलिः

## वराहमिहिरः

[1]विवाहस्य निवृत्तिस्तु चतुर्थेऽहनि रात्रिषु ।
तासु नागबलिः कार्यो विप्राशीर्वाचनं तथा ॥

एतद्गृहप्रवेशनं विवाहव्रते संपूर्णे चतुर्थे दिवसे नागबलिं कृत्वा कर्तव्यम् । तथा च वराहमिहिरः— विवाहस्येति । प्रपा. ४२३

## शौनकः

[2]अथातः संप्रवक्ष्यामि शौनकोऽहं द्विजन्मनाम् ।
दम्पत्योरभिवृद्ध्यर्थं नागबल्याख्यमुत्सवम् ॥
चतुर्थदिवसे रात्रौ तस्य कालः प्रकीर्तितः ।
यस्मिन्स्यादाहुतिक्षेपस्तदारभ्य प्रकीर्तितः ।
चतुर्थदिवसे तस्मिन् रात्रौ कुर्यान्महोत्सवम् ॥

## यज्ञपार्श्वः

[3]चतुर्थे दिवसे रात्रौ लिखेन्मानसरोवरम् ।
हिरण्यगर्भं तन्मध्ये गन्धपुष्पाक्षतादिभिः ॥

(१) प्रपा. ४२३ वाचनं (वेचनं); संम. ७३; विपा. १३१ (भागः २) प्रपावत्.
(२) प्रपा. ४२३.
(३) प्रपा. ४२३ : ४२५ चतुर्थे (चतुर्थ); संम. ७३ मानस (मानःस); विपा. १३१ (भागः २) चतुर्थे (चतुर्थ) मानसरोवरम् (मानसवापिकाम्) बैजवापायनः ; कृभ. ११५० संमवत्.

[1]संपूज्याप्सरसश्चैव सोमगन्धर्वपावकान् ।
संपूज्य रथहस्त्यादीनारोप्य स्वगृहं प्रति ।
संवेशनादिकं कर्म अन्यथा तु भवेद्द्वयम् ॥

[2]ततो नागबलिं कृत्वा रात्रौ संवेशनं शुभम् ॥

संवेशनं प्रवेशनम् । एष नागबलिः श्वशुरगृह एव कार्यः । 'संपूज्य रथहस्त्यादीनारोप्य स्वगृहं प्रति' इति नियमात् । एतदुक्तं भवति— विवाहव्रतसमाप्त्यनन्तरमुक्तप्रकारेण नागबलिं कृत्वा पर्वसंक्रमादिवर्जिते काले गृहप्रवेशनं कर्तव्यमिति । प्रपा. ४२५

(१) प्रपा. ४२३ : ४२५ हस्त्यादी (वस्त्रादी) भवेद्द्वयम् (व्रजेद्द्वयम्); संम. ७३ रथह (वाऽश्वह) भवेद्द्वयम् (व्रजेद्द्वयम्); विपा. १३१ (भागः २) पावकान् (राक्षसान्) रथ (शुक) भवेद्द्वयम् (व्रजेद्द्वयम्) बैजवापायनः ; कृभ. ११५० रथ (चाश्व) संवेश (प्रवेश).
(२) प्रपा. ४२५.

# वधूगृहप्रवेशकालः

### वसिष्ठः

[1]अथोढभार्यस्य गृहं विविक्षो-
यात्रानिवृत्तस्य च वच्मि कालम् ।
निर्माय नूत्नं गृहमन्यपूर्वं
गृहं च पुंसः प्रविविक्षतश्च ॥

[2]षष्ठेऽष्टमे वा दशमे दिने वा
विवाहमारभ्य वधूप्रवेशः ।
पञ्चाङ्गसंशुद्धिदिनं विनाऽपि
विधावसद्गोचरगेऽपि कार्यः ॥

[3]शुभकाले गृहप्राप्तौ वर्धन्ते सर्वसंपदः ।
असत्काले गृहप्राप्तौ सर्वनाशं गृहं व्रजेत् ॥

### नारदः

[4]आरभ्योद्वाहदिवसात्षष्ठे वाऽप्यष्टमे दिने ।
वधूप्रवेशः संपत्त्यै दशमेऽथ समे दिने ॥

[1]तथा मासे च वर्षे च तत ऊर्ध्वं न शोभनः ॥

(१) षष्ठस्य विहितप्रतिषिद्धत्वाद्विकल्पः । अयं च युग्मदिनविधिः पञ्चमदिनादूर्ध्वं षोडशदिनादर्वाक् द्रष्टव्यः, 'षोडशवासरान्तात्' इति वक्ष्यमाणत्वात् । तदूर्ध्वं विषमे मासि विषमे संवत्सरे वा कार्यः, समे दोषश्रवणात् । तथोक्तं तेनैव– 'समे वर्षे समे मासे यदि नारी गृहं व्रजेत् । आयुष्यं हरते भर्तुः सा नारी मरणं व्रजेत् ॥' अयं युग्मवत्सरनिषेधः पञ्चमवत्सरादर्वाक् द्रष्टव्यः । ऊर्ध्वं त्वनियमः । तथा चोक्तं संग्रहे–विवाहमारभ्येत्यादि । संप्र. ८३९–८४०

(२) 'षष्ठे वियोगामयदुःखदः स्यात्' इति निषेधस्तु सति संभवे द्रष्टव्यः ।
विपा. १३४ (भागः २)

[2]समे वर्षे समे मासि यदि नारी गृहं व्रजेत् ।
आयुष्यं हरते भर्तुः सा नारी मरणं व्रजेत् ॥

[3]व्ययनं द्वितयं (?) जन्ममासाग्रदिवसानपि ॥
संत्यज्य प्रतिशुक्रेऽपि यात्रा वैवाहिकी शुभा ।

---

(१) **प्रपा.** ४२७ मन्यपूर्वं गृहं च पुंसः (मन्यशुक्रमपूर्वगेहं) कालप्रदीपे ; **विसौ.** ६०.

(२) **वसं.** ३२।२४३ षष्ठेऽष्टमे (षष्ठाष्टमे) ; **विसौ.** ५९ दिनं विनाऽपि (दिनादिके च) ; **संप्र.** ८३९ वृद्धवसिष्ठः ; **सिन्धु.** ११४८ षष्ठेऽष्टमे (षष्ठाष्टमे) शुद्धि (शुद्ध) वृद्धवसिष्ठः ; **संकौ.** २२९ वसंवत्, वृद्धवसिष्ठः ; **संग.** ३२४ वृद्धवसिष्ठः ; **संव.** १७७ वसंवत्, वृद्धवसिष्ठः ; **संर.** ५६६ वृद्धवसिष्ठः.

(३) **विसौ.** ५९ ; **संम.** ७३ गृहप्राप्तौ (गृहे प्राप्तौ) सर्वसंपदः (संपदः सदा) सर्वनाशं गृहं व्रजेत् (सर्वनाशो गृहे भवेत्) कालदीपे ; **विपा.** १३१ (भागः २) (=) (शुभे काले गृहे प्राप्ते वर्धन्ते संपदः सदा । असत्काले गृहे प्राप्ते सर्वनाशो गृहे भवेत् ॥).

(४) **ज्योना.** २७।१६१–१६२ पृ. ६२ ; **प्रपा.** ४२६ ; **संप्र.** ८३९ ; **संम.** ७३ ; **सिन्धु.** ११४७ ; **विपा.** १३४ (भागः २) वाऽप्यष्टमे दिने (वाऽप्यथवाऽष्टमे) ; **संकौ.** २२९ ; **ज्योनि.** १६४ ; **संग.** ३२४ ; **संव.** १७३, १७४ ; **पुम.** ४५५ ; **संर.** ५६६ मेऽथ समे दिने (मे दिवसे दिने) शेषं विपावत्.

(१) **विपा.** १३४ (भागः २) ; **संर.** ५६६ शोभनः (शोभनम्).

(२) **प्रपा.** ४२६ समे वर्षे (समवर्षे) यदि (यत्र) ; **संप्र.** ८४० मासि (मासे) ; **संम.** ७३ समे वर्षे (समवर्षे) ; **सिन्धु.** ११४८ ; **विपा.** १३६ (भागः २) गृहं व्रजेत् (गृहं विशेत्) भर्तुः (पत्युः) मरणं व्रजेत् (मृतिमाप्नुयात्) ; **संकौ.** २२९ मासि (मासे) मरणं व्रजेत् (मृत्युमाप्नुयात्) ; **ज्योनि.** १६४ वृद्धनारदः ; **संव.** १७७ संप्रवत् ; **पुम.** ४५५ संप्रवत् ; **संर.** ५६८ मरणं व्रजेत् (मृतिमाप्नुयात्).

(३) **ज्योना.** २७।१६२ पृ. ६२.

## बृहस्पतिः

[1]कालः पटुतरो नृणां गृहस्थानां शुभाय वै ।
गृहप्रवेशनादेव गृहस्थस्य गृहस्थितिः ॥

तत् गृहप्रवेशनं विवाहव्रते संपूर्णे चतुर्थे दिवसे नागबलिं कृत्वा कर्तव्यम् । प्रपा. ४२३

[2]विवाहदिवसात्पश्चाच्चतुर्थे दिवसे स्त्रियाः ।
उपप्रवेशनं कुर्यात्कृत्वा होमावशेषितम् ॥
[3]कुलीरकन्यकाकुम्भे दिनेशे न विशेद्गृहम् ।
ग्रामं वा नगरं वाऽपि स्वगृहं वा नराधिपः ॥
[4]प्रविशेत्समये सौम्ये विनाशः स्यादशोभने ।
नगरग्रामगेहानां प्रवेशास्त्रिविधा हरेत् ! ॥
सपूर्वापूर्वद्वन्द्वाख्यास्त्रिविधं नैव कारयेत् ।
कन्याकुम्भकुलीरे च कृते सर्वविनाशनम् ॥
कुम्भकर्कटयोः कृत्वा कदाचित्परिहृत्य च ।
अवश्येऽपि न कर्तव्यं परित्यागेऽपि सर्वदा ।
कन्यकायां रवौ कुर्वन् पुरदारपशुक्षयः ॥

अत्र कुम्भमासनिषेधः तन्मासविवाहव्यतिरिक्तविषयः । प्रपा. ४२६

[5]पृष्ठगं दक्षिणस्थं वा भृगुं कृत्वा विशेद्गृहम् ।
पुरतो वामतो वाऽपि
शुक्रं कृत्वा न चाऽऽविशेत् ।
मूढस्थे भृगुजे सर्वप्रवेशो नैव शोभनः ॥
[6]सिते स्वतुङ्गस्वक्षेत्रयुते दोषो न विद्यते ।
एकगेहे चतुःशाले विवाहे यज्ञकर्मणि ।
प्रजारिष्टे च कलहे प्रतिशुक्रो न दुष्यति ॥

(१) प्रपा. ४२३ ; विपा. १३० (भागः २) पटुतरो (शुभतरो) गृहस्थितिः (गृहस्थता).

(२) विसौ. ६०.

(३) प्रपा. ४२६ ; विपा. १३४ (भागः २) स्वगृहं (पत्तनं); संर. ५६८ विपावत्.

(४) प्रपा. ४२६.

(५) प्रपा. ४२६ ; संर. ५६८ पृष्ठगं (पृष्ठस्थं) गृहम् (सदा) द्वितीयार्धे (पुरतो वामतश्चापि प्रतिशुक्रं न वै विशेत् ।) तृतीयार्धं विना, ज्योतिष्प्रकाशे.

(६) प्रपा. ४२६.

एकग्रामे पुरे वाऽपि दुर्भिक्षे राष्ट्रविप्लवे ।
उद्वाहे तीर्थयात्रायां प्रतिशुक्रो न विद्यते ॥
[1]कश्यपेषु वसिष्ठेषु भृग्वत्र्याङ्गिरसेषु च ।
भारद्वाजेषु वत्सेषु प्रतिशुक्रो न विद्यते ॥
[2]बालानामातुराणां च गमने रक्षणाय तु ।
प्रतिशुक्रफलं नास्ति स्त्रीणां भर्तुर्गृहं प्रति ॥
वधूः संप्रविशेद्धानौ भर्तुः शोभनगोचरे ।
दम्पत्योर्जन्मधिष्ण्यानि विशेषेण विवर्जयेत् ॥
[3]शुभनामसु तारासु सर्वासु प्रविशेद्गृहम् ।
शुभांशे शुभवारेषु शुभदृष्टे स्थिरांशके ॥
यदि लग्नाधिपः सौम्यः सुबली सौम्यवीक्षितः ।
वृषभे प्रविशेद्भूत्यै शेषेषु स्थिरराशिषु ॥
शुभदृष्टे युते वाऽपि वीर्योत्कर्षसमाह्वयः ।
वृषांशकोदये सर्वप्रवेशः शोभनस्तदा ।
चरोदयेषु सर्वेषु वृषांशः स्यात्सुशोभनः ॥

## अत्रिः

[4]प्रविशेत् भ्रात्रष्टमशुद्धियुक्ते ॥

## गर्गः

[5]वधूप्रवेशः प्रथमे तृतीये
शुभप्रदः पञ्चमकेऽथवाऽह्नि ।
द्वितीयके वाऽथ चतुर्थके वा
षष्ठे वियोगामयदुःखदः स्यात् ॥

(१) प्रपा. ४२६ कश्य (काश्य) भृग्वत्र्याङ्गिरसेषु (भृगुष्वप्यङ्गिरःसु); विपा. १३३ (भागः २) वत्सेषु (वात्स्येषु) मत्स्यपुराणम्; ज्योनि. १९६ त्र्याङ्गि (त्र्यङ्गि) भार (भर) वत्सेषु (वात्स्येषु) वसिष्ठः ; कृभ. ११४९ त्र्याङ्गि (त्र्यङ्गि) च (वा) गुरुचरणाः; संर. ५६९ सर्वं विपावत्.

(२) प्रपा. ४२६. (३) प्रपा. ४२७.

(४) प्रपा. ४२५.

(५) गभा. १०५ (=); प्रर. ११५ (=) ऽथवाऽह्नि (तथाऽह्नि) ; संप्र. ८३९; संम. ७३ (=); सिन्धु. ११४८ प्रयोगरत्ने ; विपा. १३१-१३२ (=); संकौ. २२९ प्ररवत्, प्रयोगरत्ने ; प्रका. ३७१ लल्लः ; संग. ३२४ प्रथमे (प्रथमः) ; संव. १७७, १७८ प्रयोगरत्ने ; संर. ५६६ स्मृत्यन्तरम्.

प्रयोगरत्ने तु 'वधूप्रवेशः......' इत्युक्तम्, तत्र मूलं चिन्त्यम्। सिन्धु. ११४८

[1]व्यतीपाते च संक्रान्तौ ग्रहणे वैधृतावपि।
श्राद्धं विना शुभं नैव प्राप्तकालेऽपि मानवः।
अमासंक्रान्तिविष्ट्यादौ प्राप्तकालेऽपि नाऽऽचरेत्॥

नियतकालेऽपि कदाचिन्निषेधमाह गर्गः—व्यतीपात इति। संप्र. ८४१

### माण्डव्यः

[2]नित्ययाने गृहे जीर्णे प्राशनान्तेषु सप्तसु।
वधूप्रवेशमाङ्गल्ये न मौढ्यं गुरुशुक्रयोः॥

### छागलः

[3]वैशाखे सुभगा प्रभूतविभवा मार्गे च पुत्रान्विता
फाल्गुन्ये प्रियवल्लभा प्रियजना नित्योत्सवापूरणी।

वन्ध्या निर्धनदुर्भगा विहरिणी स्वाप्तैर्गता नित्यशो
भुङ्क्ते देवसुताऽपि दुःखमतुलं वेश्मान्यमासे वधूः॥

### स्मृत्यन्तरम्

[1]वधूप्रवेशो न दिवा प्रशस्तो राजप्रवेशो न निशि प्रशस्तः।
दिवा च रात्रौ च गृहप्रवेशः प्रकीर्तितस्तु त्रिविधः प्रवेशः॥

[2]दिनक्षयादिदोषेषु वध्वा वेशो गृहे न सन्॥

### संग्रहे

[3]विवाहमारभ्य वधूप्रवेशो युग्मे तिथौ षोडशवासरान्तात्।
ऊर्ध्वं ततोऽब्देऽयुजि पञ्चमान्ता-दतः परस्तान्नियमो न चास्ति॥

[4]वधूप्रवेशो युग्मायां तिथौ षोडशवासरात्॥

---

(१) प्रपा. १६३; गभा. १०५ : १७२ तृतीयार्धमात्रम्; प्रर. ११६; संसौ. ५५ प्राप्तकालेऽपि मानवः (प्राप्ते काले विधीयते) तृतीयार्धं नास्ति; संप्र. २३४–२३५, ८४१; संम. १७ नैव प्राप्तकालेऽपि मानवः (कर्म प्राप्तकालेऽपि नाऽऽचरेत्) तृतीयार्धं नास्ति; सिन्धु. ९०४ तृतीयार्धमात्रम् : ११५०; विपा. ३०९ तृतीयार्धमात्रम्; संकौ. १०१, २३०; ज्योनि. ११२; प्रका. १९१, ३७१; संग. ५५५–५५६; संव. ६० सर्वं संमवत् : ६८, १७८; पुम. ४३४ विना (कुर्यात्) तृतीयार्धं नास्ति : ४५५; कुभ. ९०४ विना (कुर्यात्); संर. ६८५, ८३३ तृतीयार्धमात्रम् : ८५१.

(२) गभा. १०५ लग्नः; प्रर. ११५ प्रवेश (प्रवेशे); संप्र. ८४०; सिन्धु. ११४९ प्ररवत्; विपा. १३२ (भागः २) प्ररवत्; संकौ. २२९; प्रका. ३७१ लग्नः; संग. ३२६; संव. १७८; संर. ५६९ गुरुशुक्रयोः (भृगुजीवयोः).

(३) प्रपा. ४२६; मपा. १८६ विभवा (धनिनी) प्रियजना नित्योत्सवापूरणी (प्रियतमा नित्यं प्रिया पुत्रिणी) विहरिणी स्वाप्तैर्गता (विरहिणी सोद्वेगता) चतुर्थपादे (नूनं देवसमाऽपि दुःखमतुलं लेभेऽन्यमासे गता) सुरेश्वरः; विसौ. सं. १३३

६० विभवा (जननी) नित्योत्सवापूरणी (नित्यं प्रिया पुत्रिणी) विहरिणी स्वाप्तैर्गता नित्यशो (विरहिणी चान्यत्रगा मित्रगा) चतुर्थपादे (नूनं देवसुता फलं च लभतेऽप्युक्तान्यमासे गता) चण्डेश्वरे.

(१) धप्र. ४९ (=) राज (नृप) तु (स्यात्); संप्र. ८४१; संग. ३२६ (=); संर. ५६७ राजप्र (नवप्र) दिवा च रात्रौ च (रात्रौ दिवा स्यात्तु) प्रकीर्तितस्तु (स कीर्तितः स्यात्) स्मृतिसागरे.

(२) विपा. १३३ (भागः २); संर. ५६७.

(३) प्रपा. ४२६ तिथौ (दिने) उत्तरार्धे (तदूर्ध्वेमब्दे युजि पञ्चमान्तात्ततः परस्तान्नियमो न चास्ति।); संप्र. ८४०; सिन्धु. ११४७–११४८ ऽयुजि (युजि); विपा. १३६ (भागः २) उत्तरार्धे (तदूर्ध्वमासेषु च पञ्चमान्तात्ततः परस्तान्नियमो न चास्ति।) श्रीपतिः; संकौ. २२९; ज्योनि. १६४ ऊर्ध्वं ततोऽब्देऽयुजि (तदूर्ध्वमब्दे युजि); संग. ३२५; संव. १७३, १७७; संर. ५६८ सर्वं विपावत्.

(४) विपा. १३४ (भागः २).

## वराहमिहिरः

[1]शुद्धैर्द्वादशकेन्द्रनैधनगतैः पापैस्त्रिषष्ठायगै-
र्लग्ने केन्द्रगते तथा सुरगुरौ दैतेयपूज्येऽपि वा।
सर्वारम्भफलप्रसिद्धिरुदये राशौ च कर्तुः शुभे
नृग्रामस्थिरभोदये च भवने कार्यः प्रवेशोऽपि वा॥

## श्रीपतिः

[2]त्रिकोणकेन्द्रगैः शुभैस्त्रिषष्ठलाभसंश्रितैः।
असद्ग्रहैः स्थिरोदये गृहं विशेद्बले विधोः॥

## रत्नमालायाम्

[3]हस्तेन्दुमैत्रश्रवणाश्विति ष्य-
पौष्णश्रविष्ठाश्च पुनर्वसू च।
श्रेष्ठानि धिष्ण्यानि कृतप्रयाणे
त्यक्त्वा त्रिपञ्चादिमसप्तताराः॥
चित्राविशाखानिलसार्पयाम्य-
वायव्यपित्र्येश्वरदैवतानि।
यात्रास्वनिष्टान्यपराणि भानि
स्मृतानि नेष्टानि न निन्दितानि॥

## लल्लः

[4]स्वभवनपुरप्रवेशे देशानां विप्लवे तथोद्वाहे।
नववध्वा गृहगमने प्रतिशुक्रविचारणा नास्ति॥
[5]एकग्रामे पुरे वाऽपि दुर्भिक्षे राष्ट्रविप्लवे।
विवाहे तीर्थयात्रायां प्रतिशुक्रो न दुष्यति॥

(१) प्रपा. ४२५.
(२) प्रपा. ४२५.
(३) संर. ५६७.
(४) मपा. १८७ पुर (पुनः) गृहगमने (गृहागमने) बादरायणः; गभा. १०५; प्रर. ११५; विसौ. ६१ (=) वध्वा गृहगमने (वध्वागमने च); संप्र. ८४०; सिन्धु. ११४८; विपा. १३२ (भागः २); संकौ. २२९; ज्योनि. १९६ विप्लवे (विग्रहे); प्रका. ३७१; संग. ३२६; संव. १७७–१७८; संर. ५६८ प्रवेशे (प्रदेशे).
(५) विसौ. ६१ (=); ज्योनि. १९६ विवाहे (उद्वाहे) दुष्यति (विद्यते); संग. ३२६ संग्रहे; संव. १७९ बादरायणः.

## विवाहपटले (जयतुङ्गे)

[1]वधूप्रवेशः प्रथमेऽत्र वर्षे
तथा तृतीयेऽप्यथ पञ्चमे वा।
सूर्येन्दुदेवेज्यबलेन कुर्यात्
पुंसो मुनिर्गौतम आह सत्यम्॥

एतस्यैव नववधूप्रवेशस्यापरैर्द्विरागमनव्यवहारः कृतः, अस्ति चास्य उभयरूपतेति। तदेतदयुक्तम्, शब्दार्थनिरुक्तिविरोधात्। न हि प्रागनागमने एव च द्विरागमनव्यपदेशो युज्यते, द्विरिति सुचा द्वितीयावृत्तिबोधनात्। तस्मात् पूर्वं नववधूप्रवेशे जाते तदनन्तरं परावृत्य पितृगृहं प्राप्तायास्तस्या द्विरागमनव्यपदेशो युक्तः प्रतिभाति। लोके तु द्विविधोऽपि व्यवहारो देशविशेषेणोपलभ्यते। (तत्र वधूप्रवेशश्चार्षे न विवाहो द्विरागमने शिष्टाचारतो व्यवस्थित इति प्रतीमः। तत्रायं वधूप्रवेशो विवाहावसरपरिप्राप्त इति होपवर्ण्यते?)।
विसौ. ५९

[2]मार्गशीर्षे तथा माघे माधवे ज्येष्ठसंज्ञके।
सुप्रशस्तो भवेद्वेश्मप्रवेशो नवयोषिताम्॥

## ऋक्षोच्चये

[3]तिष्यादित्यसमीरणादितिवसु-
त्रीण्युत्तराण्यश्विनी
रोहिण्यः शशलाञ्छनेऽपि शुभदे
मेषालिकुम्भे रवौ।
कन्यामन्मथमीनभे नववधू-
यानं वृषे तौलिके
देवाचार्यसितेन्दुसौम्यदिवसे
शुद्धे गुरौ भास्करे॥

(१) विसौ. ५९.
(२) विसौ. ६० सुप्रशस्तो (सुप्रसन्नो); संप्र. ८४०; सिन्धु. ११४७ सुप्रशस्तो (सुप्रशस्ते) जयतुङ्गे; संकौ. २२९ सिन्धुवत्, जयन्तः; संग. ३२५; संव. १७४ सिन्धुवत्, जयन्तः; पुम्र. ४५५ (=) सिन्धुवत्; संर. ५७० जयन्तः.
(३) विसौ. ६०.

[1]संवेशनं तुर्यदिने चतुर्दशी-
पर्वाष्टमीसंक्रमवर्जिते च ।
कन्या विनैवं तदसंभवं भजे-
दुद्वाहकालं हरिवारणेऽपि (?) ॥

[2]वाराः सौम्यग्रहाणां च वधूसंचालने शुभाः ॥

## मुहूर्तसंग्रहे

[3]रेवतीहस्तमित्राश्विरोहिणीचन्द्रवासवाः ।
त्रीण्युत्तराणि मूलं च वैष्णवं शततारका ॥
पैतृकं च तथा श्रेष्ठं संवेशनविधौ तथा ।
रिक्तापर्वाष्टमीविष्टिवर्ज्याः शेषाः शुभावहाः ॥
[4]चराः श्रेष्ठास्तथा चान्याः
शेषाः सर्वाः शुभावहाः ।
विवाहवत्समाख्याता वारवर्गांशकादयः ॥
मूलत्रिकोणस्वगृहस्वमित्र-
स्वोच्चे तथा जीवसितज्ञमन्दाः ।
तल्लग्नके यः कुरुते प्रवेशं
स पुत्रपौत्रैर्वसुभिर्विभाति ॥
मित्रोच्चकोणस्वगृहेषु जीवे
तद्वत्सिते ज्ञे सहवर्गयुक्ते ।
संवेशनं यः कुरुते निशायां
सुरेन्द्रकान्तिं स दधाति भूमौ ॥
[5]शुभांशे शुभवारेषु शुभदृष्टे शुभांशके ।
निशि प्रवेशासंपत्तौ दिवा वा शोभनो भवेत् ॥

(१) प्रपा. ४२५ संक्रमवर्जिते च (संक्रमपातवर्जिते) पू., कालदीपे ; विसौ. ६० ; विपा. १३१ (भागः २) सर्वं प्रपावत्.

(२) विसौ. ६०.

(३) प्रपा. ४२५ ; विपा. १३२–१३३ हस्तमित्राश्वि (मित्रहस्ताश्वि) चन्द्र (चान्द्र) तारका (तारकाः) रिक्ता... वर्ज्याः (रिक्ताः पर्वाष्टमी विष्टिर्वर्ज्याः) ; संर. ५६७ चन्द्र (चान्द्र) तारका (तारकाः) संवेशन (प्रवेशन) रिक्ता ... वर्ज्याः (रिक्ताः पर्वाष्टमी विष्टिर्वर्ज्याः).

(४) प्रपा. ४२५.

(५) विपा. १३३ (भागः २) ; संर. ५६७.

## चन्द्रिकायाम्

[1]न शुक्रदोषो न सुरेज्यदोष-
स्ताराबलं तत्र न चिन्तनीयम् ।
नवोढकन्या च नवप्रसूता
दीपोत्सवे मासि गृहप्रवेशः ॥
नष्टे च शुक्रे विषमे च चन्द्रे
याम्यायने भास्करपर्वसंस्थे ।
गुरौ च सिंहे ह्यधिके च मासे
दीपोत्सवे सिद्धिकरः प्रवेशः ॥

## ज्योतिष्प्रकाशे

[2]नवोढायास्तु वैधव्यं यदुक्तं संमुखे भृगौ ।
तदेव विबुधैर्ज्ञेयं केवलं तु द्विरागमे ॥

## ज्योतिषार्णवे

[3]त्रिषडायगताः पापाः शुभास्तूपचये शुभाः ।
नवमस्थश्चन्द्रपुत्रः षट्सप्तमगतो भृगुः ॥
त्रिषडायगतो जीवो विशेषेण विवर्जितः ।
अष्टमस्था ग्रहाः सर्वे मृतिं दद्युः प्रवेशने ॥

## व्यवहारतत्त्वे

[4]पौष्णात्कभाच्च श्रवणाच्च युग्मे
हस्तत्रये मूलमघोत्तरासु ।
पुष्ये च मैत्रे च वधूप्रवेशो
रिक्तेतरे व्यर्ककुजे च शस्तः ॥

कभं रोहिणी, व्यर्ककुजे रविभौमेतरवारेष्वित्यर्थः ।
विपा. १३३ भागः २

(१) विसौ. ६१.

(२) गभा. १०५ तु द्वि (तद्द्वि) ; प्रर. ११५ तदेव (तदेवं) ; संप्र. ८४०–८४१ ; संम. ७३ तदेव (तदेवं) केवलं (अन्यथा) ; सिन्धु. ११४९ ; विपा. १३२ (भागः २) ; संकौ. २३० प्ररवत् ; प्रका. ३७१ ; संव. १७८ ; पुम. ४५५ ; संर. ५६९ प्ररवत्.

(३) प्रपा. ४२५.

(४) विसौ. ५९ ; संप्र. ८४० ; सिन्धु. ११४९ कभाच्च (कराच्च) ; विपा. १३३ (भागः २) ;

## राजमार्तण्डः

[1]ज्येष्ठाषाढश्रावणभाद्रा-
श्विनमाघकार्तिकाश्चैत्रः ।
पौषोऽप्यनिष्टफलदः
प्रथमागमने नववधूनाम् ॥

[2]भर्तुः शोभनगोचरे हिमकरे
नास्तङ्गते भार्गवे
सूर्ये कीटघटाजगे शुभदिने
पक्षे च कृष्णेतरे ।
हित्वा दिक्प्रतिलोमगौ बुधसितौ
लालाटिकं दिक्पतिं
चाऽऽनीता गुणशालिनी नववधू-
र्नित्योत्सवैर्मोदते ॥

## मुहूर्तचिन्तामणिः

[3]समाद्रिपञ्चाङ्कदिने विवाहात्
वधूप्रवेशोऽष्टिदिनान्तराले ।
शुभः परस्ताद्विषमाब्दमास-
दिनेऽक्षवर्षात्परतो यथेष्टम् ॥

अथ वधूप्रवेशप्रकरणं व्याख्यायते । तत्र वधूप्रवेशो नाम नूतनपरिणीतायाः कन्यायाः प्रथमतः करिष्यमाणो भर्तृगृहप्रवेश इति । अधुनाऽवसरप्राप्तत्वात्तन्मुहूर्तमाह— समाद्रीति । विवाहात् विवाहदिवसादारभ्य अष्टिदिनानि षोडशादनानि, तेषामन्तराले समाद्रिपञ्चाङ्कदिने, सम-

दिनानि द्वितीयचतुर्थषष्ठाष्टमदशमद्वादशचतुर्दशषोडश-संख्यानि, विषममध्ये सप्तमपञ्चमनवमदिनानि, तेषु वधूप्रवेशः वध्वाः नूतनपरिणीतायाः कन्यायाः भर्तृगृह-प्रवेशः शुभः शुभफलप्रदः । यदाह नारदः— 'आरभ्योद्वाहदिवसात्षष्ठे वाऽप्यष्टमे दिने । वधूप्रवेशः संपत्त्यै दशमेऽथ समे दिने ॥' षष्ठादीनां समत्वादेव ग्रहणे पुनस्तदुक्तिः अतिप्राशस्त्यसूचनार्थम् । ज्योतिर्निबन्धे तु विशेषः— 'वधूप्रवेशनं कार्यं पञ्चमे सप्तमे दिने । नवमे च शुभे वारे सुलग्ने शशिनो बले ॥' इति ।

परस्तात् प्रतिबन्धवशात् षोडशदिनाभ्यन्तरे वधू-प्रवेशो न जातस्तदा तदनन्तरं विषमाब्दमासदिने विषमवर्षे प्रथमतृतीयपञ्चमवर्षे विषममासे विवाह-मासात् प्रथमतृतीयपञ्चमसप्तमनवमैकादशमासेषु, विषम-दिनानि सप्तदशादीनि, तेषु वधूप्रवेशः शुभः ।

तत्रापि यदि प्रतिबन्धवशात्कालातिक्रमः पञ्चवर्षा-त्मको जातस्तदा पञ्चवर्षादनन्तरं यथेष्टं, वर्षादिनियमो नास्ति, किंतु दोषरहिते काले वधूप्रवेशो विधेयः । तदुक्तं च संग्रहे— 'विवाहमारभ्य वधूप्रवेशो युग्मे दिने षोडशवासरान्तः । ऊर्ध्वं ततोऽब्देऽयुजि पञ्चमान्तं पुनः परस्तान्नियमो न चास्ति ॥' अत्र अब्दे अयुजीति पदच्छेदो द्रष्टव्यः । तदुक्तं विवाहपटले— 'वधूप्रवेशः प्रथमेऽत्र वर्षे तथा तृतीयेऽप्यथ पञ्चमे वा । सूर्येन्दु-देवेज्यबलेन कुर्यात्पुंसो मुनिर्गौतम आह सत्यम् ॥' इति । समवर्षे दोषस्मरणाच्च । यदाह धर्मशास्त्रे नारदः— 'समे वर्षे समे मासे यदि नारी गृहं व्रजेत् । आयुष्यं हरते भर्तुः सा नारी मरणं व्रजेत् ॥' इति । अयं युग्मवत्सरनिषेधः पञ्चवर्षात् प्राग् ज्ञेयो न पश्चात्, तद्वाक्यस्य प्रागभिधानात् । पीटी.

[1]ध्रुवक्षिप्रमृदुश्रोत्रवसुमूलमघानिले ।
वधूप्रवेशः सन्नेष्टो रिक्तारार्के बुधे परैः ॥

वधूप्रवेशे नक्षत्रादिशुद्धिमाह— ध्रुवेति । ध्रुवाणि रोहिण्युत्तरात्रयं च । क्षिप्राणि अश्विनीपुष्यहस्ताः । मृदूनि

संकौ. २३० रिक्तेतरे (रिक्तेतर); संग. ३२५; संव. १७८; पुस. ४५५ कभाच्च श्रवणाच्च (वैधात्राच्छ्रवणाच्च) रिक्तेतरे व्यर्ककुजे (रिक्ते च रव्यार्किकुजे) ज्योतिष्प्रकाशे; संर. ५६७.

(१) विसौ. ६०.

(२) मपा. १८७ पक्षे च (पक्षे तु) लालाटिकं (लालाटगं) मोदते (नन्दते) बादरायणः; विसौ. ६१ शोभनगोचरे हिमकरे (गोचरशोभने दिनपतौ) चाऽऽनीता (वाऽऽनीता); संग ३२५ (=) पक्षे च (पक्षेऽपि).

(३) मुचि. ७।१; संग. ३२५ यथेष्टम् (यथेच्छम्); संव. १७३.

(१) मुचि. ७।२; संग. ३२५ (=) परैः (ऽपरैः); संव. १७३.

चित्राऽनुराधारेवतीमृगाः । श्रोत्रं श्रवणः । वसुः धनिष्ठा । मूलं प्रसिद्धम् । अनिलः स्वाती । एषु भेषु वधूप्रवेशः सन् शुभफलदः । रिक्ताः प्रसिद्धाः ४।९।१४ तिथयः । तथा आरार्कौ भौमरविवारौ । तत्र नेष्टो न शुभः । रिक्तारार्के इति समाहारद्वन्द्वः । अर्थादन्यासु तिथिषु अर्काराभ्यामन्यवारेषु च वधूप्रवेशः प्रशस्त इत्यर्थः । उक्तं च व्यवहारतत्त्वे- 'पौष्णात्कभाच्च श्रवणाच्च युग्मे हस्तत्रये मूलमघोत्तरासु । पुष्ये च मैत्रे च वधूप्रवेशो रिक्तेतरे व्यर्ककुजे च शस्तः ॥' इति । कभं रोहिणी । बुधे परैरिति । अन्यैः शिष्टैः बुधवारे वधूप्रवेशो नेष्यते । कस्मिंश्चिद्देशे शिष्टाचारो यत् बुधवारे वधूप्रवेशो न विधीयते । केचिदत्र हेतुमपि वर्णयन्ति यत् बुधो नपुंसक इति । तच्चिन्त्यम् । शनेरपि नपुंसकत्वात्तस्यापि निषेधो वाच्यः स्यात् । पीटी.

[1]नगरप्रवेशविषयाद्युपद्रवे
करपीडने विबुधतीर्थयात्रयोः ।
नृपपीडने नववधूप्रवेशने
प्रतिभार्गवो भवति दोषकृन्न हि ॥

अथ प्रतिशुक्रापवादमाह- नगरेति । नगरप्रवेशे, विषयो देशः, आदिशब्देन ग्रामः, तस्योपद्रवे अन्यराजकृतोपद्रवे सति, दुर्भिक्षादिना वोपद्रवे सति गन्तव्यदिशि प्रतिशुक्रदोषो नास्ति । करपीडने विवाहोद्देशेन यात्रायां सत्यां वा । विबुधाः देवाः, तेषां यात्रा, यथा नगरकोटयात्रा देवयात्रा, तीर्थयात्रा प्रयागादिका, तयोः । नृपपीडने नृपात् राज्ञः सकाशात्पीडने पीडायां दण्डादिकृतायां सत्याम् । नववधूप्रवेशने नूतनपरिणीतायाः कन्याया भर्तृगृहप्रवेशे । एतेषामन्यतमे सति भार्गवः संमुखदोषकृन्न हि भवति । पीटी.

## भास्करव्यवहारे

[2]रात्रौ विवाहभे शस्तः सन्मुहूर्ते स्थिरोदये ।
वधूप्रवेशो नैवात्र प्रतिशुक्राद्भयं विदुः ॥

(१) मुचि. ८।३ ; संव. १७९.
(२) ज्योनि. १६४.

ऋक्षैर्वैवाहिकैः शुद्धैर्दम्पत्योश्च शुभप्रदम् ।
वधूप्रवेशनं कार्यं पञ्चमे ह्यकृतं यदि ॥

मूलपुष्यमृदुस्वातिस्थिराश्विश्रुतिवासवे ।
पितृभे च करे नारी प्रविष्टा पुत्रिणी भवेत् ॥

[1]नैकस्मिन्वत्सरे कार्यौ गृहोद्वाहौ कथंचन ।
नवीनमन्दिरे कन्यां नवोढां न प्रवेशयेत् ॥

गेहशब्देन गेहारम्भः प्रवेशश्च गृह्यते ।
संर. ४९३

## ज्योतिर्निबन्धे

[2]वधूप्रवेशस्तु निशि प्रशस्तो
नवप्रवेशस्तु दिवा प्रशस्तः ।
रात्रौ दिवा सज्जगृहप्रवेशः
प्रोक्तो भरद्वाजमुनीन्द्रमुख्यैः ॥

[3]कविज्ञवारे स्वगृहाद् ध्रुवर्क्षे
कान्ताप्रयाणं न कदाचिदेव ।
धनस्य नाशः कविवासरे स्यात्
पुत्रस्य नाशो ध्रुवसौम्यवासरे ॥

## मुहूर्तगणपतिः

[4]लग्नादह्नि समे पञ्चसप्तकेऽप्यथ षोडशात् ।
ततस्त्वा पञ्चमाद्वर्षादोजाहे मासि वत्सरे ॥
यथेच्छं तु ततो वध्वाः प्रवेशः शुभदः स्मृतः ।
श्रवणद्वितये मूलेऽनुराधारोहिणीमृगे ॥
हस्तत्रये मघापुष्ये त्र्युत्तरे रेवतीद्वये ।
प्रवेशः शुभदो वध्वाः सोमे शुक्रे गुरौ शनौ ॥
मध्यो बुधे कुजेऽर्के तु नेष्टो रिक्तातिथौ तथा ।
शुभे वर्गे बलोपेते लग्ने चांशे शुभः स्मृतः ॥

(१) ज्योनि. १६४ वत्सरे (वासरे); संग. ३२६ ज्योतिर्निबन्धे ; संर. ४९३ गृहो (गेहो) पू., ज्योतिर्ग्रन्थे.
(२) संर. ५६७.
(३) संर. ५७०.
(४) संव. १७४.

## अनिर्दिष्टकर्तृकवचनानि

[1]विवाहमारभ्य वधूप्रवेशो
मध्ये शुभः षोडशवासरस्य ।
निषिद्धतारातिथियोगदोषो
न त्वत्र चैतन्मुनयो वदन्ति ॥

आ षोडशदिनादर्वाक् नववध्वाः प्रवेशने ।
तिथिवासरताराणां दोषस्तत्र न विद्यते ॥

[2]विवाहमारभ्य वधूप्रवेशो
युग्मे तिथौ षोडशवासरान्तात् ।
न वाऽत्र ऋक्षं न तिथिर्न योगो
न वारशुद्ध्यादि विचारणीयम् ॥

[3]विवाहमारभ्य वधूप्रवेशो
युग्मे दिने षोडशवासरान्ते ।
अयुग्मदिवसे यदि पञ्चमेऽह्नि
शस्तस्तदूर्ध्वं न दिवा प्रशस्तः ॥

[4]वधूप्रवेशनं कार्यं पञ्चमे सप्तमे दिने ।
नवमे च शुभे वारे सुलग्ने शशिनो बले ॥

(१) धप्र. ४९ ज्योतिःशास्त्रे इत्युक्तम्.

(२) संकौ. २३०.

(३) धप्र. ४९.

(४) धप्र. ४९ दिने (ऽपि वा); ज्योनि. १६४; संग. ३२४ ज्योतिर्निबन्धे; संव. १७३ सुलग्ने (शुभलग्ने) ज्योतिर्निबन्धे.

[1]उद्वाहे चतुरष्टषड्दशदिने
श्रेष्ठं वधूप्रवेशनं
मासेषु द्विचतुःषडष्टदशसु
श्रीपुत्रआयुःप्रदम् ।
वर्षेषु द्विचतुःषडष्टमशुभं
पञ्चाब्दमुख्याः परैः
पूर्वा पुण्यमनोरथा विभवदा
वधूप्रवेशो भवेत् ॥ ?

[2]शशिनि भवति पुत्री भास्करे वित्तनाशो
बहुवसु रविसूनौ भूमिपुत्रे विनाशः ।
बुधगुरुभृगुवारे सर्वकामार्थलक्ष्मी-
रिति वदति विवाहे मालिनी वृत्तिरेषा ॥
प्रवासतः प्रवेशतो नवम्यसौख्यदा तिथिः ।
यतस्ततोऽपि वर्जयेन्नरः समस्तकेऽपि ताम् ॥

### रेणुकारिका

[3]ततो वधूप्रवेशनं वरालये पितुर्गृहात् ।
भवेद्विवाहभे विधौ शुभग्रहैः समीक्षिते ॥
[4]इदं वधूप्रवेशनं त्रिविक्रमादिसूरयः ।
चतुर्थिकर्मणः पुरा वदन्ति सौम्यवासरे ॥

### जयन्तकारिका

[5]नववध्वाः प्रवेशस्तु रात्रौ शस्ततरः सदा ॥

(१) धप्र. ४९. (२) विसौ. ६०.
(३) रेका. १ पृ. ७१.
(४) रेका. २४ पृ. ७२.
(५) संकौ. २२९.

# चतुर्थीकर्मकालः

## वात्स्यः

[1]वैवाहिके तु दिवसे शुभे वाऽथ तिथौ शुभे ।
जामित्रराशौ कन्याया लग्ने शुभसमन्विते ।
चतुर्थिकां प्रकुर्वीत विधिदृष्टेन कर्मणा ॥

## देवलः

[2]संवेशने यदा जीवः सोमो ज्ञो वा भृगोः सुतः ।
आद्यै( ? स्त्र्याद्यै )र्युक्तस्ततो जारा बलवद्ग्रह-
जातयः ॥

## वराहमिहिरः

[3]स्वजामित्रोदये लग्ने शुभे कार्या चतुर्थिका ।
स्ववर्णसदृशा जारास्त्र्याद्यैरेकर्क्षसंस्थितैः ॥
इह चतुर्थिकाशब्देन प्रथमसंप्रयोगो लक्षितः ।
विसौ. ५९

(१) चका. ८००; संप्र. ८१८ द्वितीयार्धं विना; सिन्धु. ११२७ चतुर्थिकां (चतुर्थिकं) व्यासः, द्वितीयार्धं विना; पुम. ४५१.
(२) विसौ. ५९.
(३) विसौ. ५९.

## विवाहपटले

[1]स्वांशोदये सद्ग्रहवीक्षिते च
कुर्याच्चतुर्थीं च दिने चतुर्थे ।
स्ववर्णतुल्याश्च भवन्ति जारा-
स्त्र्याद्यैर्ग्रहैरेकगृहोपगैर्वा ॥

## रेणुकारिका

[2]ब्रवीम्यथ विवाहाङ्गं चतुर्थीकर्म विस्तरात् ।
विवाहतश्चतुर्थेऽह्नि रात्रेरपरभागतः ॥

## अनिर्दिष्टकर्तृकवचनम्

[3]कन्यासु सोमाद्युपभुक्तदोष-
प्रशान्तये कर्म चतुर्थिकाख्यम् ।
कुर्वीत पाणिग्रहणाच्चतुर्थे
दिने रजन्याः परतो विभागे ॥

(१) विसौ. ५९.
(२) रेका. १ पृ. ६९.
(३) संकौ. २२९.

# देवकोत्थापनम्

## नारदः

¹समे च दिवसे कुर्याद्देवकोत्थापनं बुधः ।
षष्ठं च विषमं नेष्टं मुक्त्वा पञ्चमसप्तमौ ॥

समेषु षष्ठं विषमेषु पञ्चमसप्तमातिरिक्तं दिनं नात्रेष्टमित्यर्थः । गभा. १०५

## ज्योतिर्निबन्धे

²प्रतिष्ठादिनमारभ्य यावत्षोडश वासराः ।
देवकोत्थापनं कार्यमुद्वाहे च व्रते दश ॥

उद्वाहे षोडश दिनानि, मौञ्जीबन्धे दश दिनानि काल इत्यर्थः । एतेषु दिवसेषु पञ्चमसप्तमातिरिक्तं विषमं दिनं, समेषु षष्ठं दिनं च वर्जयित्वाऽवशिष्टेऽन्यतम-

(१) गभा. १०५ ; प्रर. ११५ ; धप्र. ४९ मुक्त्वा (त्यक्त्वा) ; सिन्धु. ११४३ ; विपा. १४२ (भागः २) ; संकौ. १५२ ; प्रका. ३१८ ; संग. ३२२ षष्ठं च विषमं (षष्ठे च विषमे) ; संव. १२७ ; पुम. ४५४ ; संर. ५८५. विधानपारिजातग्रन्थं विहाय अन्येषु सर्वग्रन्थेषु अनिर्दिष्टकर्तृकमिदं वचनम् ।

(२) विपा. १४२ (भागः २) ; संर. ५८५.

दिवसे स्थापितदेवतानामुद्वासनं पुण्याहादिवाचनं च उपनयनवत्कुर्यात् ।

यत्तु मुहूर्तमार्तण्डटीकायां विवाहदिनमारभ्य नवत्रिषष्ठदिवसेषूद्वासनमपि न कार्यमित्युक्तं तन्मण्डपस्य, न तु देवकादेरिति द्रष्टव्यम् । संर. ५८५–५८६

## भास्करव्यवहारे

¹देवतोत्थापनं कार्यं समे तु दिवसे शुभैः
(? बुधैः) ।
षष्ठं च विषमं नेष्टं मुक्त्वा पञ्चमसप्तमम् ॥

## अनिर्दिष्टकर्तृकवचनम्

²विवाहादिपञ्चसु च चतुर्थेऽह्नि विसर्जनम् ॥

चतुर्थेऽहनि मातृविसर्जनम् । अन्यत्र कर्मान्ते । उक्तं च– विवाहादिपञ्चसु चेति । मातृणामिति शेषः । विसर्जनं यावत् पारम्पर्यनियमयुक्तैर्भवितव्यम्, इति वासुदेवपद्धतौ । श्रीवत्सभट्टकृतवाक्यसंग्रहेऽप्येवम् । गङ्गाधरपद्धतावप्येवमेव । संग. ४२४

(१) ज्योनि. १६४.

(२) संग. ४२४.

# मण्डपोद्वासनकालः

## नारदः

[1]मण्डपोद्वासनं कार्यं समे तु दिवसे बुधैः ।
षष्ठं च विषमं नेष्टं मुक्त्वा पञ्चमसप्तमौ ॥

## मुहूर्तचिन्तामणिः

[2]युग्मे घस्रे षष्ठहीने च पञ्च-
सप्ताहे स्यान्मण्डपोद्वासनं सत् ॥

(१) संप्र. ८४५–८४६ ; संम. ७३ पूर्वार्धे (समे च दिवसे कुर्यान्मण्डपोद्वासनं बुधः ।) प्रयोगरत्ने. प्रयोगरत्ने तु 'समे च दिवसे कुर्याद्देवकोत्थापनं बुधः' इति पाठ उपलभ्यते ।

(२) मुचि. ६।९७.

मण्डपोद्वासनादिदिननियममाह—युग्म इति । विवाहोत्तरं युग्मे समे द्वितीयचतुर्थादिके घस्रे दिने षष्ठदिवसहीने, तथा विषमे तु पञ्चमे सप्तमे चाहनि दिवसे मण्डपोद्वासनं देवकोत्थापनं सत् शुभफलदातृ स्यात् । पीटी.

## अनिर्दिष्टकर्तृकवचनम्

[1]प्रतिष्ठादिनमारभ्य षोडशाहाच्च मध्यतः ।
मण्डपोद्वासनं कुर्यादुद्वाहे च व्रते दश ॥

विवाहे षोडशाहमध्ये उपनयने दशाहमध्ये इत्यर्थः । संग. ३२२

(१) धप्र. ४९–५० ; संग. ३२२ कुर्यात् (कार्यं) धर्मप्रवृत्तौ.

## बृहस्पतिः

* [1]कश्यपेषु वसिष्ठेषु भृग्वत्र्याङ्गिरसेषु च ।
भारद्वाजेषु वत्सेषु प्रतिशुक्रो न विद्यते ॥

## बादरायणः

§ [2]नीहारांशुधनोत्तरादितिगुरुब्रह्मानुराधाश्विनी-
शक्रे भास्करवायुविष्णुवरुणत्वाष्ट्रे प्रशस्ते तिथौ ।
कुम्भाजालिगते रवौ शुभकरे प्राप्तोदये भार्गवे
जीवज्ञास्फुजितां दिने नववधूवेश्मप्रवेशः शुभः ॥

अस्यार्थः— नीहारांशुः मृगशीर्षम् । वसुः धनिष्ठा । उत्तरा उत्तरात्रयम् । अदितिः पुनर्वसुः । गुरुः पुष्यः । ब्रह्मा रोहिणी । पौष्णः रेवती । भास्करः हस्तः । वायुः स्वाती । वारुणं शतभिषक् । हरिः श्रवणम् । त्वाष्ट्रं चित्रा । शेषे प्रसिद्धे । आस्फुजित् शुक्रः ।

प्रपा. ४२७

[1]अस्तं गते भृगोः पुत्रे तथा संमुखमागते ।
नष्टे जीवे निरंशौ च नैव संचालयेद्वधूम् ॥

पृष्ठे भृगौ पुत्रवती प्रयाणे
कान्तां कुलीनां सुभगां करोति ।
अग्रे सुदुःखं विदधाति शुक्रो
वैधव्यशोकः खलु नास्ति चित्रम् ॥

[2]पूर्वतोऽभ्युदिते शुक्रे यायाद्दक्षिणपश्चिमे ।
पश्चादभ्युदिते चैव यायात्पूर्वोत्तरे दिशौ ॥
[3]चैत्रे पौषे हरौ सुप्ते गुरौ वाऽस्ते मलिम्लुचे ।
नवोढागमनं नैव कृते पञ्चत्वमाप्नुयात् ॥

## चण्डेश्वरः

[4]पित्र्यागारे कुचकुसुमयोः संभवो वा यदि स्यात्
पत्युः शुद्धिर्न भवति रवेः संमुखो वाऽथ शुक्रः ।
शस्ते लग्ने गुणवति तिथौ चन्द्रताराविशुद्धौ
स्त्रीणां यात्रा भवति सफला सेवितुं स्वामिसद्म ॥

## दैवज्ञमनोहरे

[5]उपचयस्थाने जीवे भृगौ केन्द्रमुपाश्रिते ।
शुद्धे लग्ने शुभाक्रान्ते गन्तव्यं पतिमन्दिरम् ॥

---

* वचनमिदं यद्यपि सर्वैर्निबन्धकारैर्वधूप्रवेशप्रकरणे उद्धृतम्, अस्माभिरपि तत्र संगृहीतम्, तथापि वचनान्तरैर्वधूप्रवेशे सर्वगोत्रिसाधारणस्य प्रतिशुक्रदोषाभावस्य बोधनात् काश्यपादिविशेषविषयस्यास्य वचनस्य फलतो द्विरागमादौ प्रतिशुक्रदोषाभावबोधने पर्यवसानसंभावनयाऽत्र पुनः संगृहीतम् । पीयूषधारादयोऽत्र संवादिनः ।

§ वचनमिदं प्रयोगपारिजाते प्रथमवधूप्रवेशे संयोजितम् । प्रथमप्रवेशस्यात्र प्रथमप्रतीतिः । इतरैस्तु द्विरागमे । द्विरागमेऽपि नववधूप्रवेशादिशब्दानां वृत्तिः क्वचिन्निश्चीयते । अतोऽत्र विषयसंमोहः । एवमन्येष्वपि केषुचिद्वचनेषु । निबन्धकृतोऽनुसृत्य तु संगृहीतान्यत्र ।

(१) स्थलादिनिर्देशः वधूगृहप्रवेशकालप्रकरणे (संका. पृ. १०५६) द्रष्टव्यः ।

(२) **मपा.** १८६–१८७ ब्रह्मानु (त्वाष्ट्रानु) त्वाष्ट्रे (ब्राह्मे) जीवज्ञा (जीवारा) वेश्म (सद्म); **प्रपा.** ४२६–४२७ धनोत्तरा (वसूत्तरा) शक्रे (पौष्णे) विष्णुवरुणत्वाष्ट्रे (वारुणहरित्वाष्ट्रेषु) प्रशस्ते (शस्ते); **सिन्धु.** ११५० धनोत्तरा (दिनोत्तरा); **विपा.** १४४–१४५ (भागः २) धनोत्तरा (दिनोत्तरा) जीवज्ञास्फुजितां (देवेज्येनविदां); **संकौ.** २३० प्राप्तोदये (ऽनष्टे गुरौ) शेषं सिन्धुवत्; **संव.** १८० सिन्धुवत्; **पुम.** ४५५ (=) ब्रह्मानु (ब्राह्मानु) जीवज्ञास्फुजितां दिने (जीवज्ञासुरपूजिते); **संर.** ५७० विपावत्.

(१) **विसौ.** ६१.

(२) **मपा.** १८७ यायाद्दक्षिणपश्चिमे (प्रयायाद्दक्षिणोत्तरे); **विसौ.** ६१.

(३) **विसौ.** ६१.

(४) **विसौ.** ६१ चन्द्रिकायाम्; **संग.** ३२६; **संव.** १८०.

(५) **विसौ.** ६१. पीयूषधाराटीकायां बादरायणस्यायं श्लोकः । विवाहसौख्येऽपि न सम्यक् ऋषिनिर्णयो भवति ।

[1]मलिम्लुचे तथा पौषे शुक्रे संमुखदक्षिणे ।
पितुः स्थानस्थिता नारी न गच्छेत्पति-
मन्दिरम् ॥
गुर्विण्या बालकेनापि नववध्वा द्विरागमे ।
पदमेकं न गच्छेत्तु शुक्रे संमुखदक्षिणे ॥
गुर्विणी स्रवते गर्भं बालस्य मरणं भवेत् ।
नवा वधूर्भवेद्वन्ध्या शुक्रे संमुखदक्षिणे ॥
[2]संमुखे श्वशुरं हन्ति दक्षिणे हानिकारकः ।
पृष्ठतो वामतश्चैव शुक्रः प्रोक्तः शुभावहः ॥

## कालप्रदीपे

[3]निर्गमान्नवमे मासि तथा च नवमेऽहनि ।
रिक्तासु निन्द्ययोगेषु भानुभानुजवारयोः ॥
[4]अग्रदक्षिणभागस्थे चण्डरश्मौ सितेऽथवा ।
निद्रालौ केशवे व्यङ्गे राशौ चापि प्रभाकरे ॥
[5]चरलग्नेऽथवा कुम्भे क्रूरदृष्टेऽथवा युते ।
वामपृष्ठस्थिते चन्द्रे नैव शस्तं प्रवेशनम् ॥
[6]ध्रुवक्षिप्रमृदुष्विन्दोः स्थिरांशे चोदये विशेत् ।
स्वजन्योच्चक्षये क्षत्रे सुभार्गवे स्थिरांशके ॥
जन्मतोऽनुपचये विलग्नगे
पापखेचरयुतेऽथ वीक्षिते ।
हानिशोकरिपुरोगपीडनं
जायते खलु गृहं विविक्षताम् ॥

अत्र ( ' अग्रदक्षिणभागस्थे ' इत्यत्र ) दक्षिणशुक्रो न शोभन इत्युक्तं, बार्हस्पत्ये त्वनुकूल इत्युक्तम् । अत्र वृद्धाचारतो व्यवस्था द्रष्टव्या । प्रपा. ४२६

( १ ) **विसौ.** ६१–६२.

( २ ) **विसौ.** ६२ ; **ज्योनि.** १६४ संमुखे श्वशुरं ( संमुखस्तु सुखं ) भास्करव्यवहारे.

( ३ ) **प्रपा.** ४२७ ; **संर.** ५६८ तथा च नवमेऽहनि ( तथैव नवमे दिने ) ज्योतिष्प्रकाशे.

( ४ ) **प्रपा.** ४२६ निद्रालौ ( निद्राणे ) चापि ( वाऽपि ) फलप्रदीपे ; ४२७ राशौ ( रात्रौ ) ; **संर.** ५६८ ( अग्रदक्षिणभागस्थे चन्द्रे शस्तं न वेशनम् । ) ज्योतिष्प्रकाशे.

( ५ ) **प्रपा.** ४२६ फलप्रदीपे ; ४२७.

( ६ ) **प्रपा.** ४२७.

## कालदीपे

[1]गव्यूतिहीने त्वथ नैव निर्गमा-
न्मासे दिने वा नवमे पुनर्विशेत् ॥

( १ ) गव्यूतिः क्रोशयुगं सा हीना न्यूनाऽवधिभूता यस्य देशस्य स गव्यूतिहीनः, तस्मिन् देशविषये निर्गमात् निर्गममासं तद्दिवसं वाऽपेक्ष्य । ल्यब्लोपे पञ्चमी । नवमे मासि दिने वा ग्रामगेहादिकं न प्रविशेदिति । प्रपा. ४२७

( २ ) नवमदिननवममासनिषेधस्य देशव्यवस्थोक्ता कालप्रदीपे— गव्यूतिहीने त्वथेति । संर. ५६८

## दीपिकायाम्

[2]स्त्रीशुद्ध्याऽजघटालिसंयुतरवौ
काले विशुद्धे भृगु
संत्यज्य प्रतिलोमगं शुभदिने
यात्राप्रवेशोचिते ।
त्यक्त्वाऽहस्तु निरंशकं प्रथमतो
वध्वाः प्रवेशागमौ
कुर्यादेकपुरादिषु प्रतिभृगो-
र्नेच्छन्ति दोषं बुधाः ॥

## ऋक्षोच्चये

[3]माघफाल्गुनवैशाखे शुक्लपक्षे शुभे दिने ।
गुर्वादित्यविशुद्धौ स्यान्नित्यं पत्नीद्विरागमः ॥

## व्यवहारचण्डेश्वरे

[4]गुरुभास्करयोर्वारे केवलस्यैव वा रवेः ।
द्विरागमनमिच्छन्ति पतिशुद्धौ तु नान्यथा ॥

( १ ) **प्रपा.** ४२७ ; **संर.** ५६८ कालप्रदीपे.

( २ ) **विसौ.** ६०.

( ३ ) **मपा.** १८६ माघ ( मार्ग ) सुरेश्वरः ; **विसौ.** ६० उत्त., व्यवहारोच्चये ; **सिन्धु.** ११५० ; **विपा.** १४४ ( भागः २ ) पत्नी ( पत्न्याः ) ज्योतिर्निबन्धे; **संकौ.** २३० ; **ज्योनि.** १६४ माघ ( मार्ग ) भास्करव्यवहारे ; **संव.** १८० ; **पुम.** ४५५ ( = ) पत्नी ( कृत्वा ) ; **संर.** ५७० पत्नी ( पत्न्याः ).

( ४ ) **विसौ.** ६०.

कुम्भाजालिगते भानौ निर्गमः सौम्यवासरे ।
यायात्सौम्यदिने नारी नवोढा पतिमन्दिरम् ॥

## वृत्तशते

[1]नैतेषां प्रतिशुक्रयानमशुभं
ये वत्सभृग्वङ्गिरो-
भारद्वाजवसिष्ठकश्यपकुलो-
त्पन्नास्तथाऽत्रेः कुले ।
दुर्भिक्षे विषयप्लवे प्रतिसिते तस्मा-
(सितो न स्याद्वि ? )द्विवाहे तथा
तीर्थानां गमने तथैकनगरे
ग्रामे च सौम्ये तथा ॥

नवोढायाश्च वैधव्यं यदुक्तं संमुखे भृगौ ।
तदत्र विबुधैर्ज्ञेयं केवलं तु द्विरागमे ॥

मासेऽधिके वाऽपि हरौ प्रसुप्ते
द्वितीयवर्षे गुरुशुक्रमौढ्ये ।
नवोढजाया-नवमन्दिरे च
द्विरागमं संमुखगेऽस्तगे वा ॥

## सारसंग्रहे

[2]षष्ठेऽष्टमे द्विदशविंशचतुष्टयेऽपि
अष्टादशे वसुयुगे च चतुर्दशे वा ।
वर्षे यदा नववधूगमनं च शीघ्रं
वैवस्वतं गमयति स्वपतिं स्वबन्धुम् ॥

द्वितीये म्रियते भर्ता चतुर्थे परगामिनी ।
षष्ठे संवत्सरे नारी दुर्भगा भवति ध्रुवम् ॥

श्वश्रूं हन्त्यष्टमे वर्षे श्वशुरं दशमे तथा ।
संप्राप्ते द्वादशे वर्षे पतिं हन्ति न संशयः ॥

(१) संकौ. २३० ; संव. १८० (=) (तीर्थानां गमने तथैकनगरे ग्रामे च सौम्यं तथा) एतावदेव.

(२) विसौ. ६१.

## भीमपराक्रमे

[1]एकग्रामे चतुःशाले दुर्भिक्षे राष्ट्रविप्लवे ।
स्वामिना नीयमानायाः प्रतिशुक्रो न विद्यते ॥

पत्या सह गमने प्रतिशुक्रदोषो नास्ति, तदुक्तं भीमपराक्रमे- स्वामिनेति । विपा. १३३ (भागः २)

## ज्योतिषप्रकाशे

[2]वामे शुक्रे नवोढायाः सुखं हानिश्च दक्षिणे ।
धनं धान्यं च पृष्ठस्थे सर्वनाशः पुरःस्थिते ॥
[3]नवोढायास्तु वैधव्यं यदुक्तं संमुखे भृगौ ।
तदेव विबुधैर्ज्ञेयं केवलं तु द्विरागमे ॥
[4]पूर्वतोऽभ्युदिते शुक्रे प्रयायाद्दक्षिणापरे ।
पश्चादभ्युदिते चैव यायात्पूर्वोत्तरे दिशि ॥

तथा भाद्रपदमासमारभ्य पूर्वादिमुख्यदिक्षु प्रतिदिशं मासत्रयं कपाटं ज्ञेयम् । चैत्रमारभ्य पूर्वाद्यष्टदिक्षु मुख्यदिशि मासद्वयम्, विदिक्ष्वेकमासं क्रमेण कण्टकं जानीयात् । इदं द्वयं ग्रामान्तरे नववधूगमने वर्ज्यम् ।
गभा. १०५

## राजमार्तण्डः

[5]ज्येष्ठाषाढश्रावणभाद्राश्विनमाघकार्तिकाश्चैत्रः ।
पौषोऽप्यनिष्टफलदः प्रथमागमने नववधूनाम् ॥

(१) विपा. १३३ ( भागः २ ) विद्यते ( दोषभाक् ) ; ज्योनि. १९६ मानायाः ( मानानां ) ; कुभ. ११४९ (=) उत्त. ; संर. ५६९.

(२) गभा. १०५ ; प्रर. ११५ ; संप्र. ८४० ; संम. ७३ पुरः ( पुरा ) ; सिन्धु. ११४९ ; विपा. १३२ ( भागः २ ) ; संकौ. २२९ ; प्रका. ३७१ ; संग. ३२५ ; संव. १७८ ; पुम. ४५५ ; संर. ५६९.

(३) स्थलादिनिर्देशः वधूगृहप्रवेशकालप्रकरणे ( संका. पृ. १०५९ ) द्रष्टव्यः ।

(४) मपा. १८७ णापरे ( णोत्तरे ) क्रमेण बादरायणः ; गभा. १०५ पूर्वोत्तरे ( पूर्वापरे ) ; प्रर. ११६ ; संप्र. ८४१ ; सिन्धु ११४९ ; विपा १३२ ( भागः २ ) ; संकौ. २३० णापरे ( णे परे ) ; प्रका. ३७१ ; संग. ३२६ णापरे ( णेऽपरे ) वीरमित्रोदये ; संव. १७८ ; पुम. ४५५ प्रयायाद्दक्षिणापरे ( यायाद्दक्षिणपश्चिमे ) ; संर. ५६९.

(५) विसौ. ६०.

[1]भर्तुः शोभनगोचरे हिमकरे
नास्तङ्गते भार्गवे
सूर्ये कीटघटाजगे शुभदिने
पक्षे च कृष्णेतरे ।
हित्वा दिक्प्रतिलोमगौ बुधसितौ
लालाटिकं दिक्पतिं
चाऽऽनीता गुणशालिनी नववधू-
र्नित्योत्सवैर्मोदते ॥

## मुहूर्तचिन्तामणिः

[2]चरेदथौजहायने घटालिमेषगे रवौ
रवीज्यशुद्धियोगतः शुभग्रहस्य वासरे ।
नृयुग्ममीनकन्यकातुलावृषे विलग्नके
द्विरागमं लघुध्रुवे चरेऽस्रपे मृदूडुनि ॥

अथ द्विरागमप्रकरणं व्याख्यायते । तत्र पूर्वं नववधूप्रवेशे जाते तदनन्तरं परावृत्यापि पितृगृहप्राप्ताया अपि वध्वा यथेष्टवर्षाणि स्थितायाः पुनर्भर्तृगृहप्रवेशो द्विरागमशब्दवाच्यः । अयमाचारः प्राच्योदीच्यपाश्चात्यानामेवेति । अधुनाऽवसरप्राप्तत्वात्तन्मुहूर्तमाह— चरेदिति । वधूप्रवेशकथनानन्तरं पुनर्वधूप्रवेशः द्विरागमनं वक्ष्यमाणनक्षत्रादिषु चरेत् कुर्यात् । कदा ? ओजहायने विषमवर्षे प्रथमे तृतीये पञ्चमे वा वर्षे सति । तथा घटालिमेषगे कुम्भवृश्चिकमेषस्थिते रवौ । तथा वरस्य रवीज्यशुद्धियोगतः रवेः सूर्यस्य इज्यस्य गुरोः शुद्धियोगतः । शुभग्रहस्य सोमबुधगुरुशुक्राणामन्यतमस्य वासरे सति । मिथुनमीनकन्यातुलावृषाणामन्यतमे लग्ने शुभग्रहावलोकिते शुभयुक्ते वा सति । लघूनि अश्विनीपुष्यहस्ताः । ध्रुवाणि प्रसिद्धानि । चराणि श्रवणादित्रयपुनर्वसुस्वात्यः । अस्रपः राक्षसः, तद्भं मूलम् । मृदूनि प्रसिद्धानि । एषु भेषु द्विरागमः प्रशस्त इत्यर्थः । पीटी.

(१) मपा. १८७ पक्षे च ( पक्षे तु ) लालाटिकं ( लालाटगं ) मोदते ( नन्दते ) बादरायणः; विसौ. ६१ शोभनगोचरे हिमकरे ( गोचरशोभने दिनपतौ ) चाऽऽनीता ( वाऽऽनीता ); संग. ३२५ (=) पक्षे च ( पक्षेऽपि ).

(२) मुचि. ८।१,२ ; संव. १७८, १७९.

दैत्येज्यो ह्यभिमुखदक्षिणे यदि स्यात्
गच्छेयुर्न हि शिशुगर्भिणीनवोढाः ।
बालश्चेद्व्रजति विपद्यते नवोढा
चेद्वन्ध्या भवति च गर्भिणी त्वगर्भा ॥

द्विरागमने संमुखशुक्रदोषमाह— दैत्येज्य इति । यदि दैत्येज्यः शुक्रः अभिमुखदक्षिणे गन्तव्यदिगभिमुखे गन्तुर्दक्षिणभागे वा स्थितः स्यात् तदा शिशुः बालः, गर्भिणी गर्भवती, नवोढा नूतनपरिणीता, इत्येते न गच्छेयुः । यदि व्रजेत्तदा बालः विपद्यते म्रियते । गर्भिणी त्वगर्भा गर्भरहिता स्यात्, गर्भस्रावयती भवेत् । नूतनपरिणीता नवोढा वन्ध्या अपत्यसंभवरहिता स्यात् । यदि शुक्रः पूर्वस्यामुदितः पूर्वदिशि गन्तुः संमुख एव, पश्चिमे गन्तुः पृष्ठे, दक्षिणे गन्तुर्वामे, उत्तरे गन्तुः दक्षिणे स्यात्, तदा पूर्वोत्तरे दिशौ न गच्छेत्, किंतु पश्चिमदक्षिणे दिशौ गच्छेत् । यदि पश्चिमायामुदितः शुक्रः पश्चिमां गन्तुः संमुखः, एवं दक्षिणां गन्तुः दक्षिणः, पूर्वां गन्तुः पृष्ठे, उत्तरां गन्तुर्वामः, तदा पश्चिमदक्षिणे दिशौ न यायात्, किंतु पूर्वोत्तरे दिशौ गच्छेत् । केचिद्दीपोत्सवप्रतिपदि नक्षत्रादिनियमं विनैव वधूप्रवेशं वाञ्छन्ति । उक्तं च— 'अस्तङ्गते गुरौ शुक्रे सिंहस्थे वा बृहस्पतौ । दीपोत्सवबलेनैव कन्या भर्तृगृहं विशेत् ॥' इति, तदेतच्छिष्टाचारतो ज्ञेयम् । पीटी.

[1]पित्र्ये गृहे चेत्कुचपुष्पसंभवः
स्त्रीणां न दोषः प्रतिशुक्रसंभवः ।
भृग्वङ्गिरोवत्सवसिष्ठकश्यपा-
त्रीणां भरद्वाजमुनेः कुले तथा ॥

प्रौढस्त्रीणां द्विरागमने तथा गोत्रपरत्वेन च प्रतिशुक्रापवादान्तरमाह— पित्र्य इति । * पितुरिदं पित्र्यम्

* इदमनवधानमूलम्, 'वाय्वृतु०' इति सूत्रस्य 'साऽस्य देवता' इत्यधिकारावरुद्धत्वात् । तस्मात् यथाकथंचित् 'पितुरागतम्' इत्यर्थमुपपाद्य 'पितुर्यच्च' इति यता पित्र्यशब्दो व्युत्पादनीयः । 'पितुरिदम्' इत्यर्थस्य विवक्षणे तु 'पैत्रम्' इत्येव साधु ।

(१) मुचि. ८।४ ; संव. १७९ ; कृभ. ११४८ स्त्रीणां ( तदा ) पू.

'वाय्वृतुपित्रुषसो यत्' इति यत्प्रत्ययः। तस्मिन् पित्र्ये गृहे कुचौ स्तनौ, पुष्पं ऋतुः, तत्संभवः स्यात्तदा स्त्रीणां प्रतिशुक्रसंभवदोषो नास्ति। उपलक्षणत्वाद्दर्तुः सूर्यगुरुशुद्धिराहित्यसंभवोऽपि दोषो नास्तीत्यर्थः। अथ भृगुः अङ्गिरा वत्सो वसिष्ठः कश्यपोऽत्रिश्च एते ऋषयः तेषां कुले वंशे तथा भरद्वाजमुनेः कुले। कोऽर्थः? भृग्वङ्गिरोवत्सवसिष्ठकश्यपात्रिवंशोत्पन्नानां तथा भरद्वाजवंशोत्पन्नानामपि प्रतिशुक्रसंभवो दोषो नास्ति। यदाह बादरायणः— 'कश्यपेषु वसिष्ठेषु चात्रिभृग्वङ्गिरःसु च। भारद्वाजेषु वात्स्येषु प्रतिशुक्रो न दुष्यति॥' इति। अयं चापवादो यात्रामात्रसाधारणः, न द्विरागमने एव, संमतिवाक्ये विशेषानुक्तेः। पीटी.

[1]यावच्चन्द्रः पूषभात्कृत्तिकाद्ये
पादे शुक्रोऽन्धो न दुष्टोऽग्रदक्षे॥

कालविशेषे प्रतिशुक्रापवादमाह— यावदिति। चन्द्रो यदा पूषभात् रेवतीनक्षत्रादारभ्य कृत्तिकाद्ये पादे, रेवत्यश्विनीभरणीकृत्तिकाप्रथमचरणे यावच्चन्द्रस्तिष्ठति तावच्छुक्रोऽन्धो ज्ञेयः। दृष्टोऽपि शुक्रो दर्शनकार्यं न करोतीत्यर्थः। तदेवाऽऽह— न दुष्ट इति। शुक्रोऽन्धो यदा भवेत्तदा अग्रे संमुखे दक्षिणभागे च दुष्टो न स्यात्। पीटी.

## ज्योतिःसागरे

[2]पौष्णादिवह्निपादेषु यावत्तिष्ठति चन्द्रमाः।
तावच्छुक्रो भवेदन्धः संमुखं गमनं शुभम्॥
[3]रेवत्यादिमृगान्तेषु यावत्तिष्ठति चन्द्रमाः।
तावच्छुक्रो भवेदन्धः संमुखं गमनं शुभम्॥

## मुहूर्तगणपतिः

[4]विवाहाद्विषमे वर्षे कुम्भमेषालिगे रवौ।
बलिन्यर्के विधौ जीवे शुभाहे चाश्विनीमृगे॥

(१) मुचि. ११।४०; कुभ. ११४८ पादे (तावत्).
(२) विपा. १३४ (भागः २); संर. ५६९.
(३) संर. ५६९.
(४) संव. १८०.

रेवतीरोहिणीपुष्ये त्र्युत्तरे श्रवणत्रये।
हस्तत्रये पुनर्वस्वौ तथा मूलानुराधयोः॥
कन्यामीनतुले युग्मे वृषे प्रोक्तबलान्विते।
लग्ने पद्मदलाक्षीणां द्विरागमनमिष्यते॥
संमुखे दक्षिणे शुक्रे नो गच्छेत्तु कदाचन।
गर्भिणी तु विगर्भा स्यान्नवोढा वन्ध्यतामियात्॥
बालकश्चेद्विपद्येत विगेहादपि चेद्व्रजेत्।
सिंहस्थे वा गुरौ शुक्रे संमुखे संगतेऽपि वा।
शुभो दीपोत्सवे वध्वाः प्रवेशः पतिमन्दिरे॥
एकस्मिन्नगरे ग्रामे देशे राजाद्युपद्रवे।
दुर्भिक्षे तीर्थयात्रायां नववध्वाः प्रवेशने।
विवाहे नैव दोषाय प्रतिशुक्रस्तथा बुधः॥
अत्र्यङ्गिरोवसिष्ठानां वत्सकश्यपयोर्भृगोः।
भरद्वाजमुनेर्गोत्रे प्रतिशुक्रो न दुष्यति॥
पित्र्यागारे यदि स्त्रीणां स्तनपुष्पोद्गमो भवेत्।
गमनं प्रतिशुक्रेऽपि प्रशस्तं पतिवेश्मनि॥

## अनिर्दिष्टकर्तृकवचनानि

[1]धनं हानिः सुखं नाशो भोगो वैरं ततः सुखम्।
प्रथमाब्दात्फलं ज्ञेयं क्रमाद्वध्वा द्विरागमे॥
[2]नवबालवती नारी नवोढा चैव गर्भिणी।
न गच्छेत्पदमेकं तु संमुखे भार्गवे सति॥
पितृवेश्मगता नारी सूयते तत्र सा यदि।
नैव गच्छेद्गृहं भर्तुः सार्भका संमुखे भृगौ॥
[3]प्रतिशुक्रकृतो दोषो नूतने गमने नृणाम्।
राज्ञां विजययात्रायां नान्यदा दोषमावहेत्॥
यात्रोक्त ऋक्षलग्नादौ राहौ दक्षिणपृष्ठगे।
विवाहोक्तदिने मासे यायात्पतिनिकेतनम्॥

(१) विसौ. ६१; ज्योनि. १६४ धनं हानिः (धान्यहानिः) ततः सुखम् (ततः शुभम्) ध्वा द्विरागमे (ध्वाः प्रवेशने) भास्करव्यवहारे.
(२) संग. ३२५.
(३) कुभ. ११४९.

राहुः पूर्वादिकाष्ठासु मासैर्मार्गादिभिस्त्रिभिः ।
यात्ययं दक्षिणावृत्त्या नेष्टः संमुखवामतः ॥

[1]भार्गवे प्रतिमुखे नववध्वा
भर्तृगेहगमनं द्वितीयकम् ।
वर्जयेच्च शुभदं शुभग्रहैः
सत्स्थितैरुदितजीवशुक्रयोः ॥

आषाढचैत्राधिकपुष्यमासे
सिंहस्थितेज्ये गुरुभार्गवास्ते ।
पाणिग्रहादूर्ध्ववधूप्रवेश-
मेकादशाहे मुनयो वदन्ति ॥

(१) संकौ. २३०.

विवाहदिनमारभ्य रुद्रा वा नृपवासराः ।
द्विरागमनकाले च प्रतिशुक्रो न विद्यते ॥

द्विरागमं प्रकुर्वीत जीवे शुक्रे च संमुखे ॥

[1]अस्तङ्गते गुरौ शुक्रे सिंहस्थे वा बृहस्पतौ ।
दीपोत्सवबलेनैव कन्या भर्तृगृहं विशेत् ॥

केचित् दीपोत्सवप्रतिपदि नक्षत्रादिनियमं विनैव वधूप्रवेशं वाञ्छन्ति । उक्तं च--अस्तङ्गते गुराविति । संव. १७९

(१) संव. १७९.

# विवाहानन्तरं वध्वाः पित्रादिगृहनिवासविचारः

## ज्योतिर्निबन्धे

[1]उद्वाहात्प्रथमे शुचौ यदि वसे-
द्भर्तुर्गृहे कन्यका
हन्यात्तज्जननीं क्षये निजतनुं
ज्येष्ठे पतिज्येष्ठकम् ।
पौषे च श्वशुरं पतिं च मलिने
चैत्रे स्वपित्रालये
तिष्ठन्ती पितरं निहन्ति न भयं
तेषामभावे भवेत् ॥

[2]विवाहात्प्रथमे पौषे आषाढे चाधिमासके ।
भर्तुर्गृहे वसेन्न स्त्री चैत्रे तातगृहे तथा ॥

आषाढो ज्येष्ठोपलक्षकः, अधिकः क्षयोपलक्षकः ।

संग. ३२७

## मुहूर्तचिन्तामणिः

[3]ज्येष्ठे पतिज्येष्ठमथाधिके पतिं
हन्त्यादिमे भर्तृगृहे वधूः शुचौ ।
श्वश्रूं सहस्ये श्वशुरं क्षये तनुं
तातं मधौ तातगृहे विवाहतः ॥

(१) गभा. १०९ ; सिन्धु. ११४६–११४७ ; संकौ. २२९ ; विपा. १४४ ( भागः २ ) ज्योतिर्निबन्धे गर्गः ; संर. ५७०. मुहूर्तमार्तण्डग्रन्थस्थोऽयं श्लोकः ।

(२) गभा. १०५ भर्तुर्गृहे ( भर्तृगृहे ) : १०९ उत्तरार्धे (न सा भर्तृगृहे तिष्ठेच्चैत्रे पितृगृहे तथा । ); प्रर. ११६ (=); धप्र. ५० मासके ( मासिके ) भर्तुर्गृहे वसेन्न स्त्री ( नैव भर्तृगृहे वासः ); संप्र. ८४१ संग्रहे ; सिन्धु. ११४७ उत्तरार्धे ( न सा भर्तुर्गृहे तिष्ठेच्चैत्रे पितृगृहे तथा । ); संकौ. २२९ मासके ( मासिके ) शेषं सिन्धुवत् ; प्रका. ३७१ ; संग. ३२६-३२७ भर्तुर्गृहे वसेन्न स्त्री ( न सा भर्तृगृहे तिष्ठेत् ) ; संव. १७४ संगवत् ; पुम. ४५५ (=) उत्तरार्धे ( न सा भर्तृगृहे तिष्ठेच्चैत्रे पितृगृहे तथा । ); संर. ५७० (=) चाधि ( वाऽधि ) वसेन्न स्त्री ( वसेन्नैव ).

(३) मुचि. ७।३ ; संव. १७३.

विवाहानन्तरं प्रथमं केषुचिन्मासेषु वध्वाः पित्रादिगृहनिवासे फलमाह–ज्येष्ठ इति । विवाहतः विवाहादनन्तरं भर्तृगृहे स्थिता यदि आदिमे प्रथमे ज्येष्ठे मासि तिष्ठन्ती वधूः पतिज्येष्ठं भर्तृभ्रातरं हन्ति । एवमादिमेऽधिके मासि स्थिता वधूः पतिं भर्तारं हन्ति । आदिमे शुचौ आषाढे श्वश्रूं भर्तुर्जननीं हन्ति । आदिमे पौषे श्वशुरं भर्तुः पितरं हन्ति । आदिमे क्षये क्षयमासे भर्तृगृहे तिष्ठन्ती तनुं निजशरीरं हन्ति । म्रियते इत्यर्थः । तथा आदिमे मधौ चैत्रे तातगृहे पितृगृहे तिष्ठन्ती तातं पितरं हन्तीत्यर्थः । यदि कन्यायाः पित्राद्यभावस्तदा तत्तन्मासे तत्तद्गेहावस्थितौ सत्यामपि न कोऽपि दोष इत्यर्थः । तस्मान्नववध्वा विवाहानन्तरं ज्येष्ठाषाढपौषाधिकमासक्षयमासेषु भर्तृगृहे न स्थातव्यम्, किंतु पितृगृहे एव स्थातव्यम्, एवं चैत्रे मासि पितृगृहे न स्थातव्यम्, किंतु भर्तृगृहे एव स्थातव्यमिति फलितोऽर्थः । तदुक्तं ज्योतिर्निबन्धे– ' विवाहात्प्रथमे पौषे आषाढे चाधिमासके । न सा भर्तृगृहे तिष्ठेच्चैत्रे पितृगृहे तथा ॥ ' आषाढो ज्येष्ठोपलक्षकः । अधिमासः क्षयमासोपलक्षकः । अत्र प्रमाणं प्रागुक्तमिति ।

पीटी.

## मुहूर्तगणपतिः

[1]उद्वाहात् प्रथमे ज्येष्ठे यदि पत्युर्गृहे वसेत् ।
पत्युर्ज्येष्ठं तदा हन्ति पौषे तु श्वशुरं तथा ॥

श्वश्रूं साऽऽषाढमासे तु चाधिमासे स्वकं पतिम् ।
आत्मानं तु क्षये मासि तातं तातगृहे मधौ ॥

(१) संव. १७४.

# द्वितीयादिविवाहकालः

## वसिष्ठः

द्वितीयादिविवाहेषु वर्षं मासश्च

[1]भार्याहीनस्तु वैवाहं कुर्यात्तस्मिंस्तु वत्सरे।
वत्सरान्तरिते कुर्यादयनान्तरितेऽपि वा।
युग्मेऽप्ययुग्ममासे वा शौनको मुनिरब्रवीत्॥

## गर्गः

द्वितीयादिविवाहेषु वर्षम्

[2]भार्यान्तरविवाहः स्यादयुग्मे वत्सरे शुभः।
युग्मे भर्तृविनाशाय गार्ग्यस्य वचनं यथा॥
[3]मृते जनन्यां जनकेऽङ्गनायां
द्वितीयवर्षे प्रकरोति शोभनम्।
करोति मोहात्प्रथमे तु हानिं
वदन्ति गर्गात्रिपराशराद्याः॥

## मनुः

द्वितीयादिविवाहेषु वर्षम्

[4]प्रजावत्यां च भार्यायां मृतायां ब्राह्मणस्य तु।
प्रथमाब्दे न कुर्वीत विवाहोऽशुभदो यतः॥

(१) मुक्ता. १५२; आन. १८२ वैवाहं (वैवाह्यं) द्वितीयार्धं नास्ति.

(२) धप्र. ५६ उत्तरार्धे (युग्मे भर्तुर्विनाशः स्याद्गर्गस्य वचनं यथा॥) संग्रहे; मुक्ता. १५२; आन. १८२.

(३) धप्र. ५६; विपा. ७७० (=) (मृते जनन्या जनकेऽङ्गना वा वर्षे द्वितीये न करोति मङ्गलम्। करोति मर्त्यः प्रकरोति शोभनं वदन्ति गर्गाङ्गिरकश्यपाद्याः॥).

(४) धप्र. ५६ विवाहोऽशुभदो यतः (विवाहः शुभकृद्भवेत्); कुभ. ११५५ (=) प्रजावत्यां (सपुत्रायां) प्रथमाब्दे न कुर्वीत (प्रथमे न तु कर्तव्यो).



## संग्रहकारः (स्मृतिसंग्रहः)

द्वितीयादिविवाहेषु वर्षं मासश्च

[1]प्रमदामृतिवासरादितः
पुनरुद्वाहविधिर्वरस्य च।
विषमे परिवत्सरे शुभो
युगले चापि मृतिप्रदो भवेत्॥

(१) एष द्वितीयादिविवाहः पूर्वपत्नीसद्भावे यथालाभकाले कर्तव्यः। सा तु मृता चेत्कालविशेषोऽभ्यनुज्ञायते संग्रहे–प्रमदेति। $प्रपा. ३८८

(२) मृतपत्नीकस्य द्वितीयादिविवाहे कालविशेष उक्तो ज्योतिर्निबन्धे–प्रमदेति। चस्त्वर्थे। अपिरेवकारार्थकः। संर. ५९३

[2]पत्नीवियोगे प्रथमे च वत्सरे
नो चेद्द्विवर्षे पुनरुद्वहेत्सः।
अयुग्ममासे तु शुभप्रदः स्यात्
वसिष्ठगर्गादिभिरप्यभाणि॥

$गभा., प्रर., विपा., संग. प्रपावत्।

(१) प्रपा. ३८८ वासरा (वत्सरा) युगले चापि (युगुले चेत्तु); गभा. १०७; प्रर. ११८ मृति (मृत) युगले (युगुले); धप्र. ५६ (प्रमदामृतवत्सरादिकः पुनरुद्वाहविधिर्यदा भवेत्। विषमे परिवत्सरे शुभः समवर्षे तु मृतिप्रदो भवेत्॥); सिन्धु. ११५४; विपा. ६१ (भागः २); संग. ३३३; संव. १७३; संर. ५९३ युगले (युगुले) ज्योतिर्निबन्धे.

(२) धप्र. ५६ वत्सरे (वर्षे) उत्तरार्धे (अयुग्ममासेऽप्यशुभप्रदं स्याद्वसिष्ठगर्गात्रिपराशराद्याः॥); कुभ. ११५४ (=).

[१]पत्नीवियोगे प्रथमे च वर्षे
नो चेद्विवाहः पुनरुद्वहेच्च ।
समे च वर्षे विषमे च मासे-
ऽप्युद्वाहकं स्याच्छुभदं प्रशस्तम् ॥

[२]अपुत्रिणी मृता भार्या तस्या भर्तुर्विवाहकम् ।
युग्माब्दे युग्ममासे वा विवाहः शुभदो भवेत् ॥

(१) प्रपा. ३८८ 'अन्यच्च' इत्युक्त्वा श्लोकोऽयं संगृहीतो मूलपुस्तके.

(२) धप्र. ५६ ; कुभ. ११५४ (=) अपुत्रिणी (अपुत्रा चेत्) भवेत् (मतः).

अर्कविवाहे वारनक्षत्रदिनभागाः

[१]आदित्यदिवसे वाऽपि हस्तर्क्षे वा शनैश्चरे ।
शुभे दिने वा पूर्वाह्णे कुर्यादर्कविवाहकम् ॥

(१) प्रपा. ३८७ ; गभा. १०७ ; प्रर. ११८ (=) 'अन्यत्रापि' इत्युक्तम् ; संप्र. ८७६ 'स एव' इत्युक्तम् ; शाम. ५२ ; विपा. ६२ (भागः २) (=) ; संग. ३३४ विधानपारिजाते ; संव. १४९ 'अन्यत्रापि' इत्युक्तम् ; संर. ५९३ दिने वा (दिने च) ब्रह्मपुराणे.

## ॥ विवाहज्योतिषं समाप्तम् ॥

# $कर्मपरिभाषा

## आश्वलायनश्रौतसूत्रम्

प्राक्चेष्टताया नित्यत्वम्

**§ [1]तस्य नित्याः प्राच्यश्चेष्टाः ॥**

षट् सूत्राणि सर्वार्थानि, तदर्थं तस्येति विशेषणं कृतम्। असत्यस्मिन् होतुः प्रकृतत्वात्तस्यैवेमे विधयः स्युः। अस्मिंस्तु सति संनिकृष्टविषयत्वात् सर्वनाम्नः तीर्थेन विहारप्रपदनार्हो यः कर्ता विहितस्तस्यैवेमे विधयो भवन्तीति तस्येति विशेषणं कृतवानाचार्यः। नित्या इत्यनेन प्राक्चेष्टताया नित्यत्वं न विधातव्यम्, विहितत्वादेव स्वरूपनित्यत्वयोरपि सिद्धत्वात्। अतस्तस्यैषोऽर्थः— तस्य बाह्यानां चेष्टानामुपरमेऽपि मनोवाक्काययन्त्रणादयो नित्या एवेति। प्राच्य इति शब्दः पूर्वदिग्वाची पुंसि बहुवचनान्तः। चेष्टा इति क्रियावाची स्त्रियां बहुवचनान्तः। तत्र प्राच्य इत्यत्र पुंसः प्राक्त्वेन संबन्धात्कर्तुः प्राङ्मुखत्वं विधीयते। चेष्टाशब्दगतबहुवचनेनास्य बहुत्वस्य सामानाधिकरण्यादेव चेष्टानां प्राक्त्वं विधीयते। तासाममूर्तत्वात्स्वतः प्राक्त्वासंभवात्तत्साधनेषु प्रागग्रता तासां च प्राच्येवापवर्ग इत्येवं विधिबलाद्भवति। एतदुक्तं भवति— यो यस्तीर्थेन विहारं प्रपन्नस्तस्य तस्य प्राङ्निष्क्रमणान्मनोवाक्काययन्त्रणादयो नित्याः स्युः, कर्तुश्च प्राङ्मुखत्वम्, चेष्टानां च प्रागपवर्गता, तत्साधनानां च प्रागग्रतेति विषमसूत्रप्रणयनेन 'व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणम्' इत्येषा परिभाषा संगृहीता भवति। गानाद्व.

अङ्कधारणाया नित्यत्वम्

**अङ्कधारणा च ॥**

अङ्कम् ऊरूपस्थः, तस्य करणं 'दक्षिणोत्तरिणोपस्थेन' (आश्रौ. १।१।३) इति वक्ष्यमाणरूपं धारणेत्युच्यते। सा च नित्या भवेत्। उपवेशनकालादारभ्य आ कर्मपरिसमाप्तेरविच्छेदेन कार्येत्यर्थः। अङ्कधारणस्योपवेशनाङ्गत्वेन प्राप्तस्य अदृष्टार्थतापरिहारायैव नित्यत्वेऽपि प्राप्ते तन्नित्यतावचनं 'न पत्नीसांयाजिके अनिरस्य तृणम्' इत्येवमादिषूपवेशनेषु मन्त्रनिषेधेऽपि वक्ष्यमाणस्योपवेशनप्रकारस्य नित्यत्वेन प्रापणार्थं मन्त्रविध्यसंबन्धेष्वप्यग्निहोत्रादिषु वक्ष्यमाणलक्षणस्यैवोपवेशनस्य प्रापणार्थं च। गानाद्व.

यज्ञोपवीतशौचयोर्नित्यत्वम्

**यज्ञोपवीतशौचे च ॥**

पूर्वस्य ('यज्ञोपवीत्याचम्य' १।१।१) यज्ञोपवीतग्रहणस्य स्मार्तानां प्रापणार्थत्वान्निवीतप्राचीनावीतयोर्मानुषपैतृकयोः कर्मणोः स्मार्तत्वेन प्राप्तौ सत्यां नियमार्थमिदमुच्यते। यत्र निवीतप्राचीनावीते विधीयेते तत्रैव

---

$अत्र होमतदितरसर्वकर्मसाधारण्यः परिभाषाः संगृहीताः। होममात्रसंबन्धिन्यो होमकालेऽनुष्ठेय— वर्जनीयार्थरूपाः 'तूष्णींहोमेषु प्रजापतिध्यानम्, होममन्त्राणां स्वाहाकारान्तता, इन्धनदोषाः, इन्धने वर्जनीया वृक्षाः' इत्येतादृश्यः परिभाषा अग्निमुखप्रकरणे संगृहीताः।

§यद्यपीमाः परिभाषाः श्रौतप्रकरणपठितत्वात्केवलश्रौतकर्मसंबन्धिन्य इत्याभासते, तथापि गृह्यकर्मभिरप्यासां संबन्धमभिप्रैति सूत्रकार इत्यवगम्यते शिष्टाचारादिहेतुभ्यः। वृत्तिकारादयोऽपि सूत्रकारस्येममभिप्रायं वर्णयन्ति 'उक्तानि वैतानिकानि गृह्याणि वक्ष्यामः' इति गृह्यप्रथमसूत्रे। तथा च वृत्तिः— 'उक्तानुकीर्तनं संबन्धकरणार्थम्। संबन्धकरणे प्रयोजनम्— कथं सौत्र्यः परिभाषाः प्राप्नुयुरिति' इति। अतोऽत्र संगृहीताः। एवं श्रौतसूत्रान्तरोक्ता अपि साधारण्यः परिभाषाः संगृहीताः। तथा, 'ऋचं पादग्रहणे' इत्यादयः सूत्रग्रन्थपरिभाषा अपि सूत्रग्रन्थतोऽर्थबोधोपकारायात्र संगृहीताः। श्रौतसूत्रपठितत्वाच्छ्रौतान्येवोदाहरणानि व्याख्यातृभिरुदाहृतानीति मन्तव्यम्।

(१) आश्रौ. १।१।१.

ते भवतो न मानुषं पैतृकं वा कर्म दृष्ट्वेति तयोर्विध्यभावे यज्ञोपवीतमेवेति नियम्यते । देशस्याङ्गप्रधानार्थत्वादिडादिभक्षणादेश्चाङ्गत्वादस्य च विहारदेशे प्राप्तौ सत्यामेवं शौचग्रहणेन नियम्यते— क्रत्वर्थमप्यशुचित्वसंपादि यत्तद्विहारान्निष्क्रम्य बहिः कर्तव्यम्, अन्तर्विहारे शुचिरेव नित्यं स्यादिति । गानावृ.

विहारे कर्मकाले विहारस्य अपृष्ठतःकरणम्

**विहारादव्यावृत्तिश्च तत्र चेत्कर्म ॥**

व्यावृत्तिः पृष्ठतः कृतिः । न विहारं पृष्ठतः कुर्यात्तत्र चेद्विहारे कर्म कुर्वन्भवेत् । प्रयोगमध्येऽपि कर्म कुर्वतामेवायं नियमो नोपरतकर्मणामित्यर्थः । अतो विहारव्यावृत्तिनिषेधात् ‘ पश्चादस्योपविश्य पश्चात्स्वस्य धिष्ण्यस्योपविशति ’ इति ‘ पश्चादुत्तरवेदेरुपविश्याध्वर्युः ’ इत्येवमादौ मध्यरेखाया अपक्रम्योत्तरत उपविशेत् । चशब्दस्त्रिषु सूत्रेषु नित्यत्वानुकर्षणार्थः । तत्र चेत्कर्मेति वचनाद्ब्रह्मणोऽप्ययं नियमो भवेत् । उत्तरसूत्राङ्गं चेदं पदत्रयम् । तेन ब्रह्मणो दक्षिणाङ्गव्यापारः सिद्धो भवति । गानावृ.

एकाङ्गवचनम् अङ्गावचनं वा यत्र तत्र दक्षिणाङ्गस्य साधनता

**एकाङ्गवचने दक्षिणं प्रतीयात् ॥**

एकशब्दः केवलप्रवचनः । एकं च तदङ्गं च एकाङ्गम् । सव्यदक्षिणभेदेन द्वित्वयोगि यदङ्गं हस्तादि तस्य द्वित्वेन विना वचने सति दक्षिणमेवाङ्गं साधनं विद्यात् । द्वित्वयोगे द्वाभ्यां कुर्यात् । एकवचनबहुवचने कर्त्रेकत्वबहुत्वापेक्षे । एकत्वादीनामन्यत्रोपयोगात्केवलाङ्गवचनमेव दक्षिणप्रत्ययस्य निमित्तमित्यर्थः । हस्तेन वा पादेन वेत्युदाहरणम् । गानावृ.

**अनादेशे ॥**

द्वित्वयोगिनोऽङ्गस्य अनादेशे क्रियामात्रविधान इत्यर्थः । तत्रापि दक्षिणं विद्यात् । ‘ प्रपद्यतेऽभिक्रम्याङ्गुलीरङ्गुलीभिः ’ इत्युदाहरणानि । चक्षुरादेरनङ्गत्वात्तेष्वयं नियमो नास्ति । अवयवविशेषाश्रया हि शक्तयश्चक्षुरादय उच्यन्ते नावयवा इति । गानावृ.

पादग्रहणे ऋग्बोधः

**[१]ऋचं पादग्रहणे ॥**

पादशब्दोऽत्र मूलवाची । ऋचो मूलग्रहणे ऋचं विद्यात्, नान्तमध्ययोर्ग्रहणे । ‘ प्र वो वाजा अभिद्यवः ’ ‘ अग्निर्नेता त्वं सोम क्रतुभिः ’ इत्युदाहरणानि । गानावृ.

सूक्तादिन्यूनपादग्रहणे सूक्तबोधः

**सूक्तं सूक्तादौ हीने पादे ॥**

अत्र पादशब्दो गायत्र्यादीनां भागवाची । सूक्तादौ हीने पादे गृह्यमाणे सूक्तं विद्यात् । ‘ त्वमग्ने वसूँ ’ ‘ त्वं हि क्षैतवत् ’ इत्याद्युदाहरणानि । गानावृ.

पादाधिकग्रहणे तृचबोधः

**अधिके तृचं सर्वत्र ॥**

अधिके पादे गृह्यमाणे तृचं विद्यात्सर्वत्र सूक्तादावसूक्तादौ चेत्यर्थः । ‘ अग्न आ याहि वीतये गृणानः ’ ‘ इळेऽन्यो नमस्यस्तिरः ’ इत्याद्युदाहरणानि । गानावृ.

मन्त्राणामुपांशुप्रयोगो जपादौ

**जपानुमन्त्रणाप्यायनोपस्थानान्युपांशु ॥**

सर्वत्रशब्दोऽत्रापि संबध्यते, मध्यगतस्य विशेषाग्रहणात्प्रयोजनवत्त्वाच्च । अस्मिन् शास्त्रे यानि जपादीनि तान्युपांशु प्रयोक्तव्यानि । गानावृ.

**मन्त्राश्च कर्मकरणाः ॥**

चशब्देनात्र सर्वत्रेत्युपांश्विति चानुकृष्यते । मन्त्राः कर्मकरणाश्च सर्वत्रोपांशु प्रयोक्तव्याः । उपांशुत्वस्येदं लक्षणम्— ‘ करणवदशब्दममनःप्रयोग उपांशु ’ इति । जपादीनां षण्णां लक्षणमुच्यते— ‘ जपमुच्चारणं विद्यात् क्रत्वर्थमपि तद्भवेत् । अर्थतः कार्यलाभश्चेदर्थ एव क्रतोर्भवेत् ॥ मन्त्रमुच्चारयन्नेव मन्त्रार्थत्वेन संस्मरेत् । शेषिणं तन्मना भूत्वा स्यादेतदनुमन्त्रणम् ॥ एतदेवाभि-

---

(१) आश्रौ. १।१।१ ; प्रपा. ५५ ( सर्वत्र, जपानुमन्त्रणाप्यायनोपस्थानान्युपांशु , मन्त्राश्च कर्मकरणाः ) एतावदेव.

मन्त्रस्य लक्षणं चेक्षणाधिकम् । अद्भिः संस्पर्शनाधिक्या-त्तदेवाऽऽप्यायनं स्मृतम् ॥ उपस्थानं तदेव स्यात् प्रणतिस्थानसंयुतम् । बाह्यं कार्यं यदेतेषु मन्त्रकाले क्रियेत तत् ॥ कर्मणः करणास्ते स्युर्विहितार्थप्रकाशनात्( ? शनम् ) । मन्त्रेण कृत्वा मन्त्रान्ते क्रियते कर्म येषु तु ॥ इदं कार्यमनेनेति न क्वचिद् दृश्यते विधिः । लिङ्गादेवेदमर्थत्वं येषां ते मन्त्रसंज्ञिताः ॥ ' । अनुमन्त्रणग्रहणेनाभिमन्त्रणमपि गृह्यते । अनुमन्त्रणाप्यायनोपस्थानानां कर्मकरणत्वाविशेषेऽपि यत् पृथग्ग्रहणं तत् ' ( तन् ? )मन्त्रान्ते कर्मारम्भः ' इति कर्मकरणधर्मो यः स तेषु न भवतीत्येवमर्थम् । तेन मन्त्रोच्चारणसमकालमेव तेषु क्रिया भवति । गानावृ.

अपवादस्य प्रसङ्गाद्बलीयस्त्वम्

**प्रसङ्गादपवादो बलीयान् ॥**

सामान्यविधेर्विशेषविधिर्बलीयानित्यर्थः । लोकवेदप्रसिद्धस्य न्यायस्य वचनप्रयोजनं सर्वेऽपवादाः प्रसङ्गस्यैव बाधका नापवादाः सावकाशत्वे परस्परं बाधका इत्येवमर्थम् । अतः स्वादुष्किलीयास्वाहावोत्तरयोः प्रणवयोर्यौ मद्वत्प्रतिगरौ तयोः प्रणवरूपप्रतिगरौ न बाधकौ भवतः । गानावृ.

विहिताकरणान्यथाकरणयोः प्रायश्चित्तम्

[1]**विध्यपराधे प्रायश्चित्तिः ॥**

विधिशब्देन विहितमुच्यते । अपराधोऽन्यथाभावः, अभावो वा । विहितस्याकरणेऽन्यथाकरणे च प्रायश्चित्तिः कर्तव्या । प्रायो विनाशः । चित्तिः संधानम् । विनष्टसंधानं प्रायश्चित्तिरित्युक्तं भवति । विध्यपराधे प्रायश्चित्तिरिति वचनादपराधे सति तदर्थतया विहितमस्ति चेत्तदेव कर्तव्यम् । तन्नास्ति चेद्व्याहृतिहोमः कर्तव्यः, 'तस्मादेषैव यज्ञे प्रायश्चित्तिः कर्तव्या' इति वचनात् । विध्यपराध इति वचनाद्विधिसंपादने प्रायश्चित्तिर्नास्ति । यथा 'यदि वाऽस्याग्निहोत्र उपसन्ने' इत्याद्यन्तरागमननिषेधावसरे यजमानस्यान्तरागमनं विहितम्, तस्मिन् गमन इत्यर्थः । कालश्च प्रायश्चित्तानां नैमित्तिकत्वान्निमित्तानन्तरं कर्तव्यानीत्युत्सर्गः । गानावृ.

(१) आश्रौ. १।३।१०.

विहिताभावेऽन्यस्य प्रतिनिधानम्

**शिष्टाभावे प्रतिनिधिः ॥**

शिष्टं विहितमित्यर्थः । तस्याभावे प्रतिनिधिरुपादातव्यः । अभाव इत्येतावतैव सिद्धे शिष्टग्रहणं यत्कार्यार्थतया यच्छिष्टं तस्य स्वरूपसत्तायामपि तत्कार्याशक्तौ प्रतिनिधिरुपादातव्य एवेत्येवमर्थम् । 'अर्थद्रव्ययोर्विरोधेऽर्थो बलीयान्' इत्ययमपि न्यायोऽर्थादत्र व्युत्पादितो भवति । इदं चापरम्— कार्यसामर्थ्ये सति न गुणसंपादनार्थमुपादातव्य इति व्यतिरेकाल्लभ्यते । अत्रापि न्यायान्तरं व्युत्पादितं भवति, 'द्रव्यगुणविरोधे द्रव्यं बलीयः' इति । प्रतिनिधीयत इति प्रतिनिधिः । एतदुक्तं भवति— यत्कार्यार्थतया यद्विहितं तस्य तत्कार्याशक्तौ तस्य यत्प्रतिरूपं तत् तत्कार्यकरणायोपादातव्यमिति । अनेन प्रकारेण सदृशप्रतिनिधिरुक्तो भवति । न्यायादेवायमर्थो लभ्यते । शिष्टाभावे प्रतिनिधिरिति वचनस्येदं प्रयोजनम्— प्रतिनिधिप्रयोगेऽपि विहितस्वरूपापचाराद्विध्यपराधशङ्कानिवृत्त्यर्थम् । अतस्तत्र प्रायश्चित्तिर्न कर्तव्या । विधिशक्तिरेव तत्रैवंरूपा विपरिणमते नात्र विध्यपराधोऽस्तीति । एवमर्थं सूत्रप्रणयनम् । गानावृ.

## शाङ्खायनश्रौतसूत्रम्

त्रैवर्णिकानामेव यज्ञेऽधिकारः

[1]**स त्रयाणां वर्णानाम् ॥**

यज्ञमिति द्वितीयान्तं प्रकृतमिह प्रथमया विपरिणम्यते । तदर्थः स इति निर्देशः । स यज्ञः त्रयाणां भवतीति वाक्यशेषः । अथवा सच्छब्दः साधुवाची पूर्वपदम् । त्रयाणामित्युत्तरपदम् । तेनैतदुक्तं भवति— शोभनानां त्रयाणां वर्णानां यज्ञेऽधिकारः । तदेवमङ्गहीनाश्रोत्रियषण्ढशूद्रवर्जमधिकारः सिद्धो भवति । किं पुनः कारणमर्थिनः समर्थाश्च शूद्राः प्रतिलोमाश्च नाधिक्रियन्ते । उच्यते ।

(१) शाश्रौ. १।१।२–१४.

श्रुतिदर्शनात् । 'अयज्ञियान् वा एतद्यज्ञेन प्रसजति शूद्रांस्त्वत्' इति शतपथे (५।३।२।२)। आभा.

**ब्राह्मणक्षत्रिययोर्वैश्यस्य च ॥**

ब्राह्मणश्च क्षत्रियश्च ब्राह्मणक्षत्रियौ, तयोः । यः शूद्यां जातः पुत्रस्तस्यावर्णत्वान्न प्राप्नोति । वैश्यस्य च । यः करण्यामुत्पद्यते तस्य च न प्राप्नोति । तदर्थं वचनम् । आभा.

अनिर्दिष्टाधिकारिकं कर्म सर्वसाधारणम्

**असंयुज्य विधीयमानं साधारणम् ॥**

संयोगः संबन्धः इदमस्येति विशेषनिर्देशः । तमकृत्वा यद्विधीयते तत् साधारणं भवति । परिभाषासूत्रमेतन्न्यायप्राप्तम् । अत्रोदाहरणम्— दर्शपूर्णमासौ त्रयाणां वर्णानाम्, अन्वाहार्यश्चतुर्णामृत्विजाम् । आभा.

आर्थोऽपि संबन्धः कर्मतत्संबन्धिनोर्व्यवस्थापकः

**संयोगाद्व्यवतिष्ठते ॥**

संयोगः असाधारण्येन व्यपदेशः । तेन हेतुना संयुज्याप्युच्यमानं व्यवतिष्ठते व्यवस्थितविषयं भवति । आर्थश्चात्र संयोगोऽभिप्रेतो न शाब्दः । तद्यथा— पुरोधाकामयशो ब्राह्मणस्य, सोमाङ्गमग्निचयनम्, दीक्षासंयोगात् । आभा.

देवकर्मसु यज्ञोपवीतमधिकारिविशेषणम्

**यज्ञोपवीती देवकर्माणि करोति ॥**

विशिष्टसंनिवेशः श(? वेशश)रीरसूत्रो यज्ञोपवीती शिष्टप्रसिद्धः । तथा च मनुः— 'उद्धृते दक्षिणे पाणावुपवीत्युच्यते बुधः । सव्ये प्राचीनमावीती निवीती कण्ठसज्जने ॥' (मस्मृ. २।६३) । ईदृशो यज्ञोपवीती देवार्थानि कर्माणि हविःप्रक्षेपप्रभृतीनि तदङ्गानि च इत्थंभूतः करोति । कुतः ? 'उपवीतं देवानामुपव्ययते देवलक्ष्ममेव तत्कुरुते' इति (तैसं. २।५।११।१) वचनात् । आभा.

पित्र्यकर्मसु प्राचीनावीतमधिकारिविशेषणम्

**प्राचीनापवीती पित्र्याणि ॥**

प्राचीनापवीती कृतापसव्य इत्यर्थः । पितॄणामिमानि पित्र्याणि, पिण्डपितृयज्ञश्राद्धादीनि । तानि प्राचीनापवीती कुर्यात् । कर्मग्रहणमनुवर्तते । तेन 'उदीरताम्' इति शंसने न प्राचीनावीती । कर्तृधर्मश्चायम् । 'प्राङ्न्यायानि' इत्यत्र कर्मधर्मः । तेन सर्वसाधनानां दक्षिणाचारता । अतो योगभेदेनोक्तम् । आभा.

कर्मकर्तुः स्वाधिकाराव्यावृत्तिः

**आचमनप्रभृति येनाधिकरणेन संयुज्येत न तेन व्यावर्तेत ॥**

येनाधिकरणेन हौत्रादिना संयुज्येत संबध्येत तेनाऽऽचमनप्रभृति । नान्यथा । तेन च संयुक्तः प्रवृत्तकर्मा न व्यावर्तेत । व्यावर्तनं भ्रमणम्, तन्न कुर्यात् । तथा च कात्यायनः— 'विवृत्याऽऽवृत्य वेतरथावृत्तिः' । आभा.

कर्म कर्मान्तरेण न व्यवधातव्यम्

**न च व्यवेयात् ॥**

यज्ञं यज्ञान्तरेण, 'विच्छिन्दति ह वा एतद्यज्ञम्' इति श्रुत्यन्तरात् । अथवा तदधिकरणं हौत्रादि पदार्थान्तरेण न व्यवेयात् न च व्यवदध्यात् । चशब्दाद्गार्हपत्याहवनीयौ च । आभा.

**इत्यावृतां लक्षणा ॥**

यज्ञोपवीतीत्यादिका आवृतां लक्षणा । आवृच्छब्देन कर्माण्यभिधीयन्ते । लक्षणा प्रायोवृत्तिरित्यर्थः । केषांचित् 'लक्षणोद्देशः' इति सूत्रच्छेदः । तेषामप्ययमेवार्थः । आभा.

इतिकर्तव्यता पाठक्रमेणानुष्ठेया

**उद्देशः ॥**

इत्यावृतामिति वर्तते । उद्दिश्यते पठ्यते । आम्नाय इत्येकोऽर्थः । य उद्देशः पाठक्रमो ब्राह्मणे सूत्रे वा तेनैव क्रमेणाऽऽवृतः कर्तव्याः । न तु क्रतूनां पाठक्रमेणानुष्ठानं सर्वस्वारपराकयोर्मध्ये पाठात् । आभा.

विशेषवचनाभावे उत्तरतोऽनुष्ठानम्

**उत्तरत उपाचारः ॥**

यज्ञाधिकारोऽनुवर्तते । यज्ञे सर्वत्र अवचने उत्तरत उपाचारः । उपाचारः अनुष्ठानम्, 'उत्तरतउपाचारो वै यज्ञः' इति श्रुतेः । क्वचिद्वचनेऽपि स्वस्य धिष्ण्यस्य पश्चादुपविशेत् समीपे, उपाङ्प्रयोगात्, न दूरे ।
आभा.

दैवकर्मसु पूर्वदिक्संबन्धः

**प्राङ्न्यायानि देवकर्माणि ॥**

प्रागित्यप्ययं दिक्शब्दः । न्यायशब्दो धर्मपर्यायः, आचारपर्यायो वा । यत्र देवार्थानि कर्माणि तत्र प्रागेव । कर्मणि प्राची दिगङ्गीकर्तव्या । आभा.

पित्र्यकर्मसु दक्षिणदिक्संबन्धः

**दक्षिणान्यायानि पित्र्याणि ॥**

पितॄणाममूनि, पितरो वा देवता येषां तानि दक्षिणाचारेण कर्तव्यानि । आभा.

जुहोतिचोदिते सर्पिर्द्रव्यम्

[1]**जुहोतीत्युक्ते सर्पिः प्रतीयेत ॥**

परिभाषेयं द्रव्यनियमार्था । वक्ष्यति– 'ब्रह्मा जुहोति' 'प्रवृताहुती जुहोति' इति । एवमादौ सर्पिः घृतं विलीनं जानीयात् । इतिकरणात् प्रत्ययान्तरेणाप्युक्ते । तद्यथा– 'विप्रुषां होमः' 'सुसमिद्धे जुहुयुः' इत्येवमादौ सर्वत्र ।
आभा.

मन्त्रभेदे कर्मभेदः

**मन्त्रपृथक्त्वात् कर्मपृथक्त्वम् ॥**

कर्म प्रधानम्, मन्त्रो गुणभूतः । तस्य गुणस्य भेदादश्रुतोऽपि गुणी साहचर्यादनुमीयते । सूत्रानारम्भे एकार्थानाम् 'इदमापः' इत्येवमादीनां विकल्पः स्यात्, नानार्थानाम् 'उद्भ्रियमाण' 'अमृताहुतिम्' इत्येकस्यामेव क्रियायां मन्त्रसमुच्चयः स्यात् । स मा भूदिति सूत्रारम्भः । आभा.

(१) शाश्रौ. १।२।२१, २४–२६, २९.

इति-स्वाहा-नमःशब्दैर्मन्त्रपरिच्छेदः सूत्रेषु

**इतिकरणश्च मन्त्रान्ते ॥**

'कं प्रपद्ये तं प्रपद्ये' इत्येवमादौ मन्त्रे भिन्नवाक्येऽपि सूत्राम्नायोक्तः इतिकरणो द्रष्टव्यो मन्त्रान्तज्ञापनाय । चकारः समुच्चयार्थः । अतश्च केषांचित्स्वाहाकारः । केषांचिन्नमस्कारः । केषांचिदसिशब्दः । आभा.

मन्त्रकरणककर्मसु मन्त्रान्तेन कर्मादेः संयोगः

**मन्त्रान्तेन करणेषु कर्मणः संनिपातनम् ॥**

करणशब्दोऽत्राधिपूर्वो द्रष्टव्यः । अतोऽधिकरणेषु 'होतृचमसेऽवनयति' इत्येवमादिषु 'हुते त्वा भक्षितम्' इति मन्त्रान्तेनावनयनकर्मणः संनिपातनम् । मन्त्रस्यान्तः कर्मणः आदिः । एवमनुष्ठानम् । अधिकरणेष्विति वचनादाप्यायनोपस्थानपर्युक्षणादिष्वनियमः, अधिकरणाभावात् । संनिपातनमिति यत्रैकत्र निपातनं संभाव्यते तत्र, न तु क्रियमाणानुवादिषु, भिन्नदेशावस्थानात् कर्त्रोः ।
आभा.

**इत्येतत्सार्वयज्ञिकम् ॥**

इतिकरणोऽत्र परिसमाप्त्यर्थः । यदनुक्रान्तमेतत्सर्वयज्ञेषु भवतीत्यर्थः । ननु असंयुज्यविधानात्सिद्धम् । सत्यम्, किंतु गृह्यारण्यक–ऋग्विधानोक्ते न प्राप्नोति । तदर्थं वचनम् । आभा.

## आपस्तम्बपरिभाषासूत्रम्

त्रैवर्णिकस्यैवाधिकारो यज्ञे

[1]**स त्रयाणां वर्णानां ब्राह्मणराजन्ययोर्वैश्यस्य च ॥**

स खलु यज्ञः श्रेयःसाधनत्वात् यो निःश्रेयसार्थी तस्य प्राप्तः, श्रेयोर्थित्वेऽपि शूद्रस्य मा भूदितीदमारभ्यते । ननु ब्राह्मणराजन्यवैश्यानामित्येतदेव सूत्रमस्तु । स त्रयाणां वर्णानामित्यनर्थकम् । वैश्यस्येत्यसमासेन ग्रहणं चानर्थकम् । उच्यते । पूर्वसूत्रे यज्ञमिति द्वितीयान्तेन कर्मतया निर्दिष्टत्वादस्मिन् सूत्रे कर्मतयाऽनुवृत्तिर्मा भूदिति स

(१) आपप. १।२, २५, २७–२८, ३०–३१, ४०–४५, ४७.

इति निर्दिष्टः। त्रयाणामिति वचनं ब्राह्मणस्य भार्यात्वेन शास्त्रान्तरविहिताभ्यां क्षत्रियवैश्याभ्यां 'वसन्ताधाने ज्योतिष्टोमादिषु च ब्राह्मणस्य सहाधिकारार्थं त्रयाणां परस्परसहितानामधिकार इति। यद्वा, ब्राह्मणभार्यायाः शूद्रायाः पतिप्रयुक्तसहाधिकारमाशङ्क्य तस्याः प्रतिषेधार्थं त्रयाणामेवाधिकारो न शूद्राया इति, 'रमणायैव साऽथ न धर्माय' इति वसिष्ठवचनात्। वर्णग्रहणमिन्द्रवरुणादीनां देवानां तिरश्चां च पश्वादीनामृषीणां च वसिष्ठादीनामधिकारनिवृत्त्यर्थम्। वैश्यस्येत्यसमासनिर्देशः 'एतेन द्वौ त्रीन् वा याजयेत्' इत्यनेकयजमानेष्वहीनेषु वैश्येन सहानयोरधिकारनिवृत्त्यर्थम्। चकारो निषादस्थपतेस्त्रैवर्णिकस्याप्यधिकारसमुच्चयार्थः। हवृ.

जुहोतिचोदिते आज्यं द्रव्यम्, जुहूर्होमसाधनम्, तदसंभवे स्रुवः

**जुहोतीति चोद्यमाने सर्पिराज्यं प्रतीयात्॥**

जुहोतीति प्रत्यक्षचोदनायामप्रत्यक्षचोदनायां च गव्यमाज्यं प्रतीयात्। प्रत्यक्षचोदना 'आहुतीर्जुहोति' इति। अप्रत्यक्षचोदना 'आघारमाघारयति' इति। सर्पिराज्यमिति पदद्वयोपादानसामर्थ्यात् घृतजातिवचनोऽपि सर्पिःशब्द उत्सर्पणक्रियाप्रधानः परिगृह्यते। किं तदुत्सर्पणम्? समर्थशीलनमित्यर्थः। तच्च गव्यमेव, 'तस्माद्गवि सतोभयेन भुञ्जते' इति वाक्यशेषात्। हवृ.

**जुहूं पात्रम्॥**

प्रतीयादित्यनुवर्तते। हूयते अनया इति जुहूः इति होमक्रियानिमित्ते आकृतिविशेषे जुहूशब्दो रूढः। जुहूशब्दः पात्रं हूयमानद्रव्याधारमाहेत्यर्थः। हवृ.

**व्यापृतायां स्रुवेण॥**

व्यापृता जुहूः आज्यान्तरधारणेन अन्येन वा कारणेन। स्रुवस्य होमविशेषे दृष्टत्वात् जुह्वा असंभवे स्रुवेण होमो युक्त इति न्यायपूर्वोऽयमुद्देशः। अतो यत्रान्यज्जुहूस्थानीयं जुह्वाकृति पात्रं तत्र तेनैव होमो न स्रुवेण। पशौ वसाहोमहवण्या, सोमे प्रचरण्येति। उक्तं च भारद्वाजेन— 'प्रचरण्या होमः' इति। हवृ.

यावज्जीवं यज्ञपात्रधारणम्

**आधानप्रभृति यावज्जीवं पात्राणि धार्यन्ते॥**

आधानं प्रभृतिः उपक्रमो यस्य तदाधानप्रभृति। जीवनं जीवः। यावति काले जीवो यजमानस्य तस्य कालस्य यावज्जीवमिति। पात्राणि यज्ञपात्राण्युच्यन्ते। तेषामन्त्यकर्मणि विनियोगः 'उरसि ध्रुवाम्' इत्यादि। अरण्योरपि यावज्जीवं धारणम्, 'ज्योग्जीवन्त उत्तरामुत्तरां समाम्' इति मन्त्रवर्णात्, भारद्वाजवचनाच्च। हवृ.

प्रतिकर्म पात्रसंस्कारावृत्तिः

**तेषां प्रतितन्त्रं संस्कारः॥**

प्रतितन्त्रं संस्कारः प्रक्षालनमुष्णेन वारिणा, 'स्रुक्स्रुवाणां शुद्धिरुष्णेन वारिणा' इति मनुवचनात्, भारद्वाजवचनाच्च। प्रक्षालनं प्रकृतौ विहितमेव। यद्वा, संमार्जनादयः संस्काराः पात्राणामभेदेऽपि प्रतितन्त्रमावर्तन्त इत्यर्थः। हवृ.

कर्मणि मन्त्राणां नानध्यायः

**स्वाध्यायेऽनध्यायो मन्त्राणां न कर्मण्यर्थान्तरत्वात्॥**

वेदस्य ग्रहणार्थं गृहीतस्य च धारणार्थं च यदुच्चारणं तत् स्वाध्याय इत्युच्यते। अनध्यायः अध्ययननिषेधः स्वाध्याय एव भवति, न कर्मणि। अर्थः प्रयोजनम्। अर्थादन्यत् अर्थान्तरम्, तस्य भावः अर्थान्तरत्वम्, तस्मात्। प्रयोजनान्तरत्वादित्यर्थः। स्वाध्यायस्य वेदग्रहणं तद्धारणं वा प्रयोजनम्। कर्ममन्त्राणां क्रत्वर्थनिर्वृत्तिः। हेतुवचनं कर्मण्यपि प्रयोजना(? नान)न्यत्वे अध्ययनप्रतिषेधार्थम्। यत्तु धर्मशास्त्रे वचनम्, (तत्)अमावास्यायाम(? मन)ध्ययनविधिप्रतिषेधार्थम्। यद्वा, अमावास्यादिषु मन्त्राणाम(? मन)ध्ययनप्रतिषेधः श्रुतिबलीयस्त्वेनैव सिद्धः, स्मार्तत्वादनध्ययनविधेः। अत इदं कूष्माण्डहोमादीनामविहितकालादीनां मन्त्रेष्वनध्ययनप्रतिषेधार्थम्। यद्वा— 'पद्यु ह वा एतच्छ्मशानं यच्छूद्रः।

तस्माच्छूद्रसमीपे नाध्येतव्यं कदाचन ' इति शास्त्रा-( ? स्त्राद )नध्ययनस्य श्रौतेषु कर्मसु निषेधार्थमिदमारब्धम् । हवृ.

प्रतिमन्त्रं कर्मभेदः

**एकमन्त्राणि कर्माणि ॥**

एकस्य कर्मण एको मन्त्र इत्यौत्सर्गिको विधिः । 'या जाता ओषधयः' इति चतुर्दशभिरोषधीर्वपति इत्युदाहरणम् । तत्रैकेन मन्त्रेणैकस्या ओषधेर्वापः । तथा 'देवाञ्जनमगन् यज्ञः' इति सप्त मन्त्राः षण्णामाहुतीनां प्रगीताः । तत्रान्त्यो विकल्पार्थः । हवृ.

संख्यायुक्तेषु व्यापारावृत्तिरूपेषु च कर्मसु सकृन्मन्त्रोच्चारणम्

**अपि संख्यायुक्तचेष्टापृथक्त्वनिर्वर्तीनि ॥**

एकमन्त्राणीत्यनुवर्तते । संख्यायुक्तानि । चेष्टाया भेदः चेष्टापृथक्त्वम् । तेन निर्वर्तन्ते इति चेष्टापृथक्त्वनिर्वर्तीनि । संख्यायुक्तानि च चेष्टापृथक्त्वनिर्वर्तीनि च । संख्यायुक्तानां 'त्रिः प्रोक्षणम्' उदाहरणम् । तथा 'द्विरवद्यति' इति । चेष्टापृथक्त्वनिर्वर्तिनामवघातः । मुसलस्योद्यमननिपतनैर्बहुभिः कर्माङ्गभूतो निर्वर्तते इति । एतान्येकमन्त्राणि सकृदुच्चरितमन्त्राणीत्यर्थः । हवृ.

एककालावच्छेदेन कण्डूयनाद्यावृत्तावपि न मन्त्रावृत्तिः

**कण्डूयनस्वप्ननदीतरणाववर्षणामेध्यप्रतिमन्त्रणेषु च तद्वत्कालाव्यवेतेषु ॥**

'विषाणे विष्यैतम्' इति कृष्णविषाणयाऽङ्गानां कण्डूयनम् । तत्र कण्डूषु बह्वीषु युगपदुपस्थितासु न प्रत्यङ्गं मन्त्रावृत्तिः । स्वप्नः । 'अग्ने त्वं सु जागृहीति स्वप्स्यन्' इति । तत्रानेन मन्त्रेणाऽऽहवनीयमभिमन्त्र्य प्रसुप्तस्य स्वापमध्ये प्रबुद्धस्य पुनःस्वापे न मन्त्रावृत्तिः । नद्यास्तरणं नदीतरणं 'देवीराप इत्यवगाहते' इति, 'तीर्त्वोत्तरां जपेत्' इति च नदीतरणोदाहरणम् । तत्र बहुस्रोतस्कायामपि नद्यां सकृदेव मन्त्रः । न प्रतिस्रोतो मन्त्रावृत्तिः । अववर्षणम् अभिवर्षणम् "'उन्दतीर्बलं धत्त' इत्यववृष्टः" इति । बहुष्वपि वर्षबिन्दुषु युगपत्पतितेषु सकृदेव मन्त्रः, न प्रतिबिन्दु मन्त्रभेदः । अमेध्यम् अशुचि श्वपुरीषादि । तस्य प्रतिमन्त्रणम् 'अबद्धं मन इत्यमेध्यं दृष्ट्वा जपति' इति विहितम् । अनेनैवाङ्गेन जपतिचोदना चातुःस्वर्यार्था व्याख्येया । बहुष्वमेध्येषु युगपद्दृष्टेषु सकृदेवाभिमन्त्रणम् । व्यवायो विच्छेदः । न व्यवेतानि कालेनाविच्छिन्नानि कालाव्यवेतानि । कालेनाविच्छिन्नेषु युगपत्कालीनेष्वित्यर्थः । कालभेदेन तेषु मन्त्रा आवर्तन्ते । हवृ.

प्रयाणे सकृन्मन्त्रपाठः

**प्रयाणे त्वाऽर्थनिवृत्तेः ॥**

अर्थनिवृत्तेः इति वा पाठः* । अर्थनिवृत्तिः प्रयोजननिवृत्तिः । 'भद्रादभि श्रेयः' इत्येतदुदाहरणम् । तत्र आ देवयजनप्राप्तेः सकृदेव प्रयाणमन्त्रः । हवृ.

अदृष्टसंस्कारकेष्वपि सकृदेव मन्त्रपाठः

**असंनिपातिकर्मसु च तद्वत् ॥**

यानि कर्माणि द्रव्याश्रयाणि द्रव्ये प्रत्यक्षं विकारान् जनयन्ति तानि संनिपातीनि, अवघातः पेषणं श्रपणमिति । यैस्तु द्रव्ये प्रत्यक्षो विकारो नोत्पद्यते तान्यसंनिपातीनि, अभिमन्त्रणानुमन्त्रणजपोपस्थानावेक्षणानि । तेष्वपि सङ्ख्यायुक्तानि तद्वत् ( ? संख्यायुक्तादिवत् ) सकृन्मन्त्र इत्यर्थः । 'अपां क्षये' इति ग्राव्णामनुमन्त्रणमुदाहरणम् । तत्र सकृन्मन्त्रमुक्त्वा सर्वेषां ग्राव्णामनुमन्त्रणम् । भिन्नपीठानामप्यङ्गविरोधे ( ? असंनिपातिनामपि लिङ्गविरोधे ) मन्त्रा आवर्तन्ते, यथा– 'सूर्यज्योतिर्विभाहि' इति पुरोडाशाभिमन्त्रणम् । हवृ.

वचनादेकस्यापि कर्मणो बहुमन्त्रकत्वम्

**वचनादेकं कर्म बहुमन्त्रम् ॥**

वचनं 'चतुर्भिरभ्रिमादत्ते' इति । तत्र बहुभिर्मन्त्रैः एकमादानं क्रियत इति । हवृ.

* 'अर्थनिर्वृत्तेः' इति पाठः प्रथमं गृहीतः, स्पष्टार्थत्वात्स न व्याख्यातः, व्याख्यानं त्रुटितं वेति कल्प्यते ।

मन्त्रान्त– कर्मारम्भयोः संयोगः

[१]**मन्त्रान्तैः कर्मादीन् संनिपातयेत् ॥**

मन्त्राणामन्ताः मन्त्रान्ताः । कर्मणामादयः कर्मादयः । संनिपातः संगमः । यत्र स्वाहाकारो वषट्कारो वा मन्त्रस्यान्ते प्रयुज्यते, तत्र ताभ्यामेव कर्मादिसंनिपातः । हवृ.

सूत्रे मन्त्रप्रतीकं कृत्स्नमन्त्रपरम्

**आदिप्रदिष्टा मन्त्राः ॥**

आदिः प्रदिष्टः येषां ते आदिप्रदिष्टाः । इह सूत्रे 'प्रेयमगात्' इत्यादयो मन्त्रा आदिमात्रनिर्देशाः, न कृत्स्नपठिताः, यद्वा, वेदविषयेयं परिभाषा वेदवदेव सूत्रेष्वपि द्रष्टव्या । पारक्षुद्रगतानां मन्त्राणां कृत्स्नपाठो वाक्यावसाननिवृत्त्यर्थः । तत्राप्यादिप्रदेशे वाक्यावसानमेव 'लोकोऽसि स्वर्गोऽसि इत्यनुवाकेन प्रतिमन्त्रम्' इति । 'यदस्य पारे रजसः' इति पाशुकप्रायश्चित्ते वाक्यावसानेनैव कर्तव्यम् । न चाग्निकाण्डगतस्यायं विनियोगः, प्रकरणान्तरगतत्वात् । हवृ.

प्रतीकात्प्रतीकं यावदेकमन्त्रता

**उत्तरस्याऽऽदिना पूर्वस्यावसानं विद्यात् ॥**

आदिमात्रपठिता इह मन्त्रा इत्युक्तम् । कस्तेषामन्त इत्याह– उत्तरस्याऽऽदिना पूर्वस्यावसानं विद्यात् । प्रकरणान्तरविनियोगात् पूर्वस्यान्त इति ज्ञानम् । यथा 'महीनां पयोऽसि' इति 'दुग्धम्' इत्यन्तेन पृषदाज्यस्य ग्रहणम्, 'यावती द्यावापृथिवी' इति दधिघर्मे विनियोगात् । 'अग्नेर्भस्मास्यग्नेः पुरीषमसि' इत्यन्तेन संभारनिवपनम्, 'अग्नेर्ह्येतत्पुरीषं यत्संभाराः' इत्यर्थवाददर्शनात् । 'दिवो वा विष्णो' इति 'उत सव्यात्' इत्यन्तो मन्त्रः, 'आशीर्पदयर्चा' इति श्रुतेः । हवृ.

राद्रादिकर्मोत्तरमुदकोपस्पर्शनम्

**रौद्रराक्षसनैर्ऋतपैतृकच्छेदनभेदननिरसनात्माभिमर्शनानि च कृत्वाऽप उपस्पृशेत् ॥**

(१) आपप. २।१, ३–४, ९, १५–१८, २६–२९, ३९.

रुद्रो देवता यस्य तत् रौद्रम् । एवं राक्षसादयः । छेदनं द्वैधीकरणम् । भेदनं विदारणम् । आत्माभिमर्शनम् आत्मोपकारकं कर्म । रुद्रोपकारकं कृत्वोदकस्पर्शनं कार्यम् । यथा 'यो भूतानामधिपतिः' । 'रौद्रेणानीकेन' इत्यत्र नोपस्पर्शनम्, अनीकविशेषणत्वात् । 'रक्षसां भागधेयम्' इत्यत्रोपस्पर्शनं कर्तव्यम्, 'तुषैः फलीकरणैर्देवहविर्यज्ञेभ्यो रक्षांसि निरभजन् तस्मान्महायज्ञः' इति बह्वृचश्रवणात् । 'वैश्वानरे हविरिदं जुहोमि' इत्यत्रोपस्पर्शनम्, पितृतृप्तिकरत्वान्मन्त्रस्य । 'शुन्धतां लोकः पितृषदनः' इति पैतृकम् । तथा 'पितृणाꣳ सदनमसि' इति । छेदनभेदनयोर्धात्वन्तरोपात्तयोरपि । तच्च न रौद्रा(? द्राद्य)र्थम्, उपयोक्ष्यमाणत्वात्तत्संस्कारस्य, संस्कारस्वभावत्वाच्च । 'तुषैरेव रक्षांसि निरवदयते । अप उपस्पृशति मेध्यत्वाय' इति । तथा नैर्ऋतेष्टिकोपधाने 'मार्जयित्वोपतिष्ठन्ते मेध्यत्वाय' (तैसं. ५।२।४।४) इति । न चात्राङ्गि(? ङ्गाङ्गि)भावो बोध्यते । 'केशानङ्गं वासश्चाऽऽलभ्याप उपस्पृशेत्' इति । तथा 'नीवीं च परिधायाप उपस्पृशेत्' इति । तस्मादुपरितनप्रयोगाङ्गमेतदुदकोपस्पर्शनमवधारितम् । अतः सर्वरौद्रे सर्वराक्षसे सर्वपित्र्ये च निवर्तते । यत्र रौद्रादीनां नैरन्तर्येण वा करणम्, तत्रापि न प्रतिरौद्रं न प्रतिपित्र्यं रौद्रपित्र्याणां वा करणम्, तत्रापि न प्रतिरौद्रं न प्रतिपित्र्यं वोदकस्पर्शनम्, अन्त एव सकृदुपस्पर्शनम् । अतः पित्र्ये बलिहरणे नोपस्पर्शनम्, कृत्वैव रौद्रं बलिहरणमुपस्पृशेत् । तथोपनयने प्रतिदिशं केशवपने वपनान्ते एवोपस्पर्शनम् । निरसने धात्वन्तरोपात्तेऽपि भवति । यथा– 'वेदिकरणानि तूष्णीं परास्याप उपस्पृश्य मन्त्रेणोपस्थानम्' । धर्मशास्त्रविहितस्य केशाङ्गवाससामालम्भे उदकोपस्पर्शनस्य उपसंग्रहार्थश्चकारः । यद्वा, भरद्वाजोपदिष्टखननपरिलेखनयोरुदकस्पर्शनस्य । हवृ.

देवकर्मणां प्राक्संस्थत्वं प्रदक्षिणक्रियत्वमुदक्संस्थत्वं यज्ञोपवीत्यधिकारिकत्वं च

**प्रागपवर्गाण्युदगपवर्गाणि वा यज्ञोपवीती प्रदक्षिणं दैवानि कर्माणि करोति ॥**

अपवर्गः परिसमाप्तिः। प्राक् अपवर्गः येषां तानि प्रागपवर्गाणि। उदक् अपवर्गः येषां तान्युदगपवर्गाणि। यज्ञार्थमुपवीतम्, 'अजिनं वासो वा' इति ब्राह्मणे व्याख्यातम्। देवा देवता येषां तानि दैवानि। यत्कर्म दैवं पित्र्यकर्मणोऽङ्गं तत्रापि दैवधर्म इति ख्यापनार्थं कर्माणीत्यधिकवचनम्। यथा साकमेधे पित्र्येषु (? पित्र्येष्टौ) प्रयाजादीनाम्, मासिश्राद्धे आघारादेः। हवृ.

पित्र्यकर्मणां दक्षिणसंस्थत्वमप्रदक्षिणक्रियत्वं प्राचीनावीत्यधिकारिकत्वं च

**प्राचीनावीती प्रसव्यं दक्षिणापवर्गाणि पित्र्याणि ॥**

प्राचीनमावीतं प्राचीनावीतम्। तदपि 'एतदेव विपरीतं प्राचीनावीतम्' इति ब्राह्मणे व्याख्यातम्। ततः दक्षिणः अपवर्गः येषां तानि दक्षिणापवर्गाणि। यत्कर्म पित्र्यं दैवस्याङ्गभूतं तत्र पित्र्यधर्मो विज्ञेयः। स्मृतिसिद्धयज्ञोपवीतप्राचीनावीतयोर्भ्रेषमध्ये स्मार्तभ्रेषे समस्ताभिर्व्याहृतिभिरेको होमः, 'यद्यविज्ञाता सर्वव्यापद्वा' इति बह्वृचश्रुतेः। अविज्ञाता ऋग्यजुःसामाविहितत्वेन अविज्ञाता, अप्रत्यक्षश्रुतिमूलेत्यर्थः। हवृ.

समस्तानां रज्जूनामप्रदक्षिणावेष्टनपूर्वकं प्रदक्षिणं संयोजनम्

**यानि शुल्वानि समासं गच्छन्ति प्रसव्यं तान्यावेष्ट्य प्रदक्षिणं समस्येत् ॥**

शुल्वानि रज्वः समासं गच्छन्ति 'द्विगुणा त्रिवृत् त्रिगुणा' इति 'पवित्रम्' इति च, तानि पूर्वमप्रदक्षिणमावेष्ट्य प्रदक्षिणं संयोजयेत्। हवृ.

असमस्तानां रज्जूनां प्रदक्षिणमात्रं संयोजनम्

**अथ यानि न समस्यन्ते प्रदक्षिणं तानि ॥**

बर्हिःसंनहनमिध्मसंनहनं चोदाहरणम्। हवृ.

एकप्रकरणगतप्रधानानां समानाङ्गकत्वम्

**एकप्रकरणे चोद्यमानानि प्रधानानि समानविधानानि ॥**

प्रकरणं फलवदपूर्वम् (प्रधानं समानविधानम् ?)। विधीयन्ते इति विधानानि अङ्गानि। एकस्मिन् प्रकरणे चोद्यमानानि (आग्नेयादीनि) प्रधानानि समानाङ्गानि। तेषामन्योन्यं प्रकृतिविकृतिभावो नास्तीत्यर्थः। यद्वा— प्रधानान्येव समानविधानानि, न वैमृधः। वैमृधो विकृतिरेवेति व्याख्यायते। हवृ.

प्रकरणमङ्गप्रधानभावनियामकम्

**प्रकरणेन विधयो बध्यन्ते ॥**

प्रकरणं फलवदपूर्वमेव। तेन संनिहिता धर्मा बध्यन्ते। यस्य फलवत्कर्मणः सकाशे ये धर्मा आम्नातास्ते तदर्था एव सर्वे इत्यर्थः। अतो दर्शपूर्णमासयोर्विहिता धर्मास्तदर्था एव, नाग्निहोत्रसौर्याद्यर्थाः। हवृ.

विशेषवचनाभावे अङ्गानां सर्वप्रधानसाधारणत्वम्

**अनिर्देशात्साधारणानि ॥**

अनिर्देशः विशेषाश्रुतिः। अन्यस्य कारणस्याभावे सर्वेषां प्रधानानां संनिहितान्यङ्गानि साधारणानि भवन्ति। पर्यग्निकरणादयः प्रयाजादयश्चोदाहरणम्। यद्वा— अङ्गानां प्रधानानां साधारणान्यङ्गानि। आज्यधर्मा वेदिधर्माश्चोदाहरणम्। अतः (ते) अङ्गानां प्रधानहविषां च साधारणा भवेयुः। तस्मादनूयाजकाले आज्ये दुष्टे पुनराज्यसंस्काराः क्रियन्ते। हवृ.

विशेषवचनमङ्गप्रधानभावव्यवस्थापकम्

**निर्देशाद्व्यवतिष्ठन्ते ॥**

निर्देशः विशेषवचनम्। विशेषवचनात् प्रधानविशेषे एव धर्मा व्यवतिष्ठन्ते। 'पयसा मैत्रावरुणं श्रीणाति' 'स्रुवेण पुरोडाशमनक्ति' इति चोदाहरणम्। हवृ.

अनुपदिष्टाङ्गकस्य प्रधानस्यातिदिष्टाङ्गकत्वम्

**सहाङ्गं प्रधानम् ॥**

अङ्गैः सह वर्तते इति सहाङ्गम्। अङ्गोपदेशशून्यं प्रधानं दर्शपूर्णमासादिभ्योऽतिदिष्टैरङ्गैरङ्गसहितं भविष्यतीत्यर्थः। सौर्यत्रिकद्रुकादय उदाहरणम्। हवृ.

निर्दिष्टदेशकालकर्तृकस्य प्रधानस्य तद्देशकालकर्तृकत्वमेव

[1]**देशे काले कर्तरीति निर्दिश्यते ॥**

'सहाङ्गं प्रधानम्' इत्यधिक्रियते। तथा उपरितन-सूत्रगतं यत्पदमपि प्रतिकृष्यते। देशविशेषे कालविशेषे कर्तृविशेषे च यत्प्रधानं निर्दिश्यते तत्स्वकीयैरङ्गैः सह निर्दिष्टं प्रतीयादित्यर्थः। 'विषम आलभेत' इति देश-स्योदाहरणम्। तत्र षड्ढोतृपश्विष्टियूपाहुत्यादयोऽपि विषमे एव क्रियेरन्। तथा प्राचीनप्रवण एव पञ्चहोत्रादयः। 'शरदि वाजपेयेन यजेत' इति कालस्योदाहरणम्। तत्र सौत्रामण्या मैत्रावरुण्याश्च शरदेव कालः। 'परिस्रजी होता भवति' इति कर्तुरुदाहरणम्। तत्र बृहस्पतिसवे साग्निचित्ये परिस्रजित्वं विधीयमानं सौत्रामण्या मैत्रा-वरुण्याश्चोपादीयते। यदा वाजपेयाङ्गं बृहस्पतिसवो भवति, तदाऽपि शरत्काले क्रियते। तस्यातिदेशतो वसन्तकालः प्राप्तः। वाजपेयाङ्गस्य शरत्कालत्वा-दभिन्नयोगत्वात् बृहस्पतिसवस्येति। हवृ.

सामान्यशब्दाः प्रधानभूतविशेषपराः, न अङ्गभूतविशेषपराः

**स्वशब्दं यत् ॥**

'देशे काले कर्तरीति निर्दिश्यते' इति वर्तते। स्वः शब्दो यस्यासौ स्वशब्दः इति विग्रहः, सामर्थ्या-पेक्षत्वात् स्वशब्दस्य। किञ्चित्प्रधानं स्वशब्देन गृह्यते, यथा 'सौर्यः' 'निरूढः' इति। किंचित्प्रधानं पर-शब्देन गृह्यते (यदन्याङ्गभूतं यथा 'सौत्रामणी' 'मैत्रावरुण्यामिक्षा' इति), प्रधानशब्दचोदितत्वादङ्ग-प्रधानविधेः। अयमस्य सूत्रस्यार्थः— यत्र 'देशे काले कर्तरि' इति निर्दिश्यते तत्र स्वशब्दमेव निर्दिष्टं वि-जानीयात्, न परशब्दमित्यर्थः। 'मध्येऽग्नेराज्याहुतीः' इति देशस्योदाहरणम्। तत्र प्रधानभूता एवाऽऽहुतयोऽ-ग्नेर्मध्यदेशे विधीयन्ते। 'यदीष्ट्या यदि पशुना यदि सोमेन' इति कालस्योदाहरणम्। तत्रेष्टिपशुसोमानां निरूढसौर्यादयः स्वशब्दा एव निर्दिश्यन्ते, न पर-शब्दाः सौत्रामणीमैत्रावरुण्यादयः। अङ्गभूताः इष्टयः पशवो वा सहाङ्गा न निर्दिश्यन्त इत्यर्थः। अङ्गभूतत्वात् तयोर्न भवति सद्यस्कालता। तथा 'पशुबन्धेन यक्ष्यमाणः षड्ढोतारम्' इति कर्तुरुदाहरणम्। तत्र स्वशब्दा एव निरूढादयः पशुबन्धेन गृह्यन्ते, न परशब्दा अग्नीषोमी-यादयः। अतस्तेषु न भवति षड्ढोता। हवृ.

दर्वीहोमानां यावदुपदिष्टाङ्गकत्वम्

**अपूर्वो दर्वीहोमः ॥**

अपूर्व इति प्रकृतिरभिधीयते। न विद्यते पूर्वः यस्य सः अपूर्वः। दर्वीति होमानां विशेषनामधेयम्, ब्रह्मौदन-होमे पाकयज्ञहोमेषु च दर्व्या होम इति अपूर्वो दर्वीहोमः न कुतश्चिद्धर्मान् गृह्णाति, यावदुपदिष्टाङ्ग इत्यर्थः। हवृ.

होमेषु मन्त्राणां स्वाहाकारान्तता

**जुहोतिचोदनः स्वाहाकारप्रदानः ॥**

जुहोतिशब्देन चोदना यस्य सः जुहोतिचोदनः। क्वचित्प्रत्यक्षेण जुहोतिशब्देन चोदना, यथा— 'नारिष्ठान् जुहोति' इति। क्वचित्परोक्षेण, यथा— 'आघारावाघा-रयति' इति। स्वाहाकारेण प्रदानमस्मिन्निति स्वाहाकार-प्रदानः। सर्वस्यैव मन्त्रस्यान्ते स्वाहाकारः। यस्य मन्त्र-स्याऽऽदावन्ते वा पठित एव स्वाहाकारस्तत्र तेनैव प्रदानम्। यत्र पुनर्मन्त्रमध्य एव स्वाहाकारः पठितस्तत्रान्ते स्वाहा-कारेण प्रदानम्। यथा— 'देवा गातुविदः' इति। 'पुरस्तात्स्वाहाकृतयो वा अन्ये देवा उपरिष्टात्स्वाहा-कृतयोऽन्ये' इति द्वयोरेव नियमात्। यत्राऽऽदावन्ते वा स्वाहाकारः पठ्यते, यथा— 'स्वाहा त्वा सुभवः सूर्याय' इति, यत्र वषट्कारप्रदाने मन्त्रो विहितः, यथा 'जातवेदो वपया' इति, तत्र न मन्त्रान्ते स्वाहाकारः कर्तव्यः। यत्राप्यमन्त्रको होमस्तत्रापि स्वाहाकारेणैव प्रदानम्। यथा 'अथैनेध्वर्युः संस्रावेणाभिजुहोति' इति। यत्र तूष्णीमिति वचनं तत्र स्वाहाकारोऽपि नास्ति, यथा 'सकृदेव सर्वं तूष्णीं जुहुयात्' इति। हवृ.

---

(१) आपप. ३।१–४,४५–५३.

देवतासामान्यात् हविःसामान्यं बलीयः

**हविर्देवतासामान्ये हविर्बलीयः ॥**

हविश्च देवता च हविर्देवते, तयोः सामान्यं हविर्देवतासामान्यम् । हविःसामान्ये देवतासामान्ये च ( यदा ? ) प्रकृतिनियमं प्रति विरुध्यमाने हविःसामान्येन प्राकृतविध्यन्तनियम इत्यर्थः । प्राजापत्यः पुरोडाश उदाहरणम् । तत्र हविःसामान्येन पुरोडाशधर्मा भवेयुः । देवतासामान्येनोपांशुयागधर्माः । तथा सौम्यचरावाज्यभागयोः हविःसामान्येनोपांशुयागविकारत्वम् । नाग्नीषोमीयविकारधर्माः । 'अथैकेषां सोमाय पितृमत आज्यम्' इत्यत्राप्युपांशुयाजधर्मत्वम् । हवृ.

द्रव्यसंस्कारयोर्द्रव्यं बलीयः

**द्रव्यसंस्कारविरोधे द्रव्यं बलीयः ॥**

द्रव्यं च संस्कारश्च द्रव्यसंस्कारौ, तयोर्विरोधो द्रव्यसंस्कारविरोधः । तत्र द्रव्यं बलीयः । यथा गवामभावे गोपयस उपलब्धिः, अजाश्च पयस्विन्यः संभवन्ति । तत्र संस्कारत्यागेन गोपय एव गृह्यते न पुनः संस्कारार्थमजापयो गृह्यते । परे तु संस्कारान्पयसि कुर्वन्ति । 'संस्काराः पयसि क्रियन्ते । गव्ये पयसि क्रियन्ते पूर्वे च मन्त्रा जप्याः' इति बोधायनश्च । हवृ.

अर्थद्रव्ययोरर्थो बलीयान्

**अर्थद्रव्यविरोधेऽर्थो बलीयान् ॥**

अर्थः प्रयोजनम् । यथा पशुनियोजनार्थे समर्थः खादिरो न लभ्यते समर्थाः कदरादय एवोपादीयेरन् । न त्वन्याश्रयापेक्षाः खदिराः । हवृ.

अतिदिष्टेष्वेव मन्त्रेषूहः , नोपदिष्टेषु

**न प्रकृतावूहो विद्यते ॥**

प्रकृतौ लिङ्गसंख्याविरोधेऽपि नोह्यते । प्रकृतिग्रहणं चात्रोपदेशोपलक्षणार्थम् । उपदिष्टा मन्त्रा नोह्यन्ते, अतिदिष्टा एवोह्यन्ते इत्यर्थः । 'चितः स्थ' इत्युदाहरणम् । तत्र बहुवचनान्तेन मन्त्रेणैकं कपालमुपधीयते । 'उखे उपदधाम्यहम्' इत्येका उखा उपधीयते । 'अवदानानि ते प्रत्यवदास्यामि' इति द्वयोरप्यवदानयोर्नोह्यते । विकृतावप्येषामनूह एव, जात्यभिधानात् । उक्तं चाऽऽश्वलायनेन— 'सर्वेषु यजुर्निगदेषु । प्रकृतौ समर्थनिगमेषु' ( आश्रौ. १।३।२ ) इति । अवदानानीति कस्माज्जमदग्न्यर्थो न भवति । संनिहितानि त्रीण्यवदानानीति । अवदानशब्दः द्वयोरप्यवदानयोस्तावदविरुद्धः । केवलं संख्यागुणो विरुध्यते । न हि गुणानुरोधेन प्रधानशब्दस्य निवृत्तिरुपपद्यते । यत्र तु प्रधानशब्द एव विरुध्यते तत्र निवर्तते मन्त्रः , यथा— 'इमौ पर्णं च दर्भं च' इति शमीशाखायाम् । 'व्रीहीणां मेध सुमनस्यमानः' इति यवमये । यत्र द्वयोः समवेतयोरेवैकवचनं तत्रासौ मन्त्रः प्रतिहविरावर्तते, यथा— 'यज्ञोऽसि सर्वतः श्रितः' इति, यथा— 'इषे त्वेति बर्हिषी आदत्ते' इति । प्रकृतिग्रहणस्योपलक्षणत्वात् 'उदुस्र तिष्ठ' इत्येवमादीनां स्त्रीपशौ द्विप्रभृतिषु चानूहेनैव प्रवृत्तिः सिद्धा । सारस्वते तु द्वादशकपाले सरस्वतो हुतमिति न प्रवर्तते, लिङ्गविशिष्टस्यैवोपदिष्टत्वात् । यत्र तु प्रकृतावलिङ्गसलिङ्गौ, यथा तैत्तिरीयाणामेकस्मिन्नुपरवे 'वैष्णवान् खनामि' इति बहुवचनान्तो मन्त्रः , मैत्रावरुणीयानाम् 'एकवदुपरवमन्त्रान्' इत्येकवचनान्तो मन्त्रः , तत्र एकवचनान्त एव विकृतावतिदिश्यते । समर्थवचने संभवत्यसमर्थस्यानतिदेशादित्यौपदेशिकाः । हवृ.

विकृतौ स्तुतिनिन्दापदवर्जं यथार्थमूहः

**विकृतौ यथार्थमूहोऽर्थवादवर्जम् ॥**

यथा यथा अर्थः यथार्थम् । यथा अन्वारम्भणीयादक्षिणायां 'ब्रह्माणौ ब्रह्माणौ स्थो ब्रह्मणे वां मा मा हिꣳसिष्टमहुतौ मह्यं शिवौ भवतम्' इति । ब्रध्नमन्त्रस्तु नोह्यते, द्रव्यस्यानेकत्वेऽपि विभागस्यैकत्वात् । 'इयं स्थाली' इति तु लुप्यते, स्थाल्यभावात् । 'सहस्रधारावुत्सावक्षीयमाणौ तौ दध्नतुः पृथिवीमन्तरिक्षं दिवं च ताभ्यां मिथुनाभ्यामतितराणि मृत्युम्' इति । 'ब्राह्मणा इमौ गावौ' इति । 'रुद्राय गाम्' इत्यनूहेन मन्त्रप्रतिग्रहः , प्रकृत्यर्थत्वान्मन्त्रस्य । पत्नीपदस्य जात्यभिधानादनूहः । द्विपशुप्रयोगे 'पशू हव्यम्' इत्यूह्यते । 'आज्यं

दधि स्थः' इत्यूह्यते, न पुनः 'आज्यदधिनी स्थः' इति । 'आज्येन दध्नोदेहि' इति संप्रैषः, दधिसंस्कारार्थत्वात् । असंस्कारपक्षे प्रकृतिवत् । तथा 'अदिती स्थोऽच्छिद्रपत्रे' इति संस्कारपक्षे । 'तेजसी स्थस्तेजोऽनु प्रेतम्' 'अग्नेर्जिह्वे स्थः सुभुवौ देवानां धाम्नेधाम्ने देवेभ्यो यजुषेयजुषे भवतम्'। 'आज्यं दधि स्थः सत्यायुषी स्थः सत्येन वामभिघारयामि' 'तयोर्वा भक्षीय' इत्यादि । 'अद्भिराज्यं दध्याज्येन दध्नाऽपः ... संविदानः'। 'इमे स्थाल्यौ घृतस्य दध्नः पूर्णे'। 'इयं स्थाली दध्नः पूर्णा' इति वा । 'इमौ स्रुवस्वधिती अभिजीह्वतः'। 'दिवं च तेनानडुहाऽतितराणि मृत्युम्' इति। 'ब्राह्मणा अयं वोऽनड्वान्'। 'अग्नेर्वोऽपन्नगृहस्य'। सोमेष्टिषु आगुराशीस्थाने 'एयमगन्नाशीर्दोहकामा' इत्यूहः। अस्य यज्ञस्याऽऽगुरः आगूःकरणस्य उदृचं समाप्तिं अशीयेत्याशिषामागुरः । अत एव 'सा मे सत्याशीः' इत्येतन्निवर्तते । सोमे अग्नीषोमीये 'तिस्रः समिधो यज्ञायुरनुसंचरान्' इत्यूहः। 'शतं ते राजन्' इति याजमानं प्रत्यगाशिष्ट्वात्। 'भुवनमसि वि प्रथस्वापो यष्ट्य इदं नमः'। 'युनज्मि वो ब्रह्मणा दैव्येन' । इन्धानास्त्वेति पदद्वयस्य लोपः, अपामिन्धनाभावात् । 'अद्रयः स्थ मानुषा इदं शमिद्ध्वम्'। 'तृतयः स्थ गायत्रं छन्दः'। 'पयस्या मां धिनोतु' इति पयस्यायाम्, 'मित्रावरुणाभ्यां पयस्याम्' इत्युत्पत्तौ श्रवणात् । 'शतमिन्द्राय शरदः' इति महेन्द्रयाजिनोऽप्यविकृतः । 'समापो अद्भिरग्मत' इति पयसि निवृत्तः । 'इडाऽस्मानुवस्तां घृतेन' इत्यत्र मांसस्य विकारो नेष्यते, 'सा यत्र यत्र न्यक्रामत्तद्घृतमपीड्यत' इति देवताख्यापनपरत्वात् । 'घृतेन यस्याः पदे पुनते देवयन्तः' इत्यर्थवादत्वात् । तथा 'इदमिन्द्रियम्' इत्यर्थवादत्वाद्वपायां नोह्यते । 'अन्वेनं माता मन्यताम्' इत्यर्थवादत्वान्नोह्यते । एवमन्यान्यपि मन्त्रपदानि स्तुत्यर्थानि निन्दार्थानि वा । तानि वर्जयित्वा विकृतौ यथार्थमूह इत्यर्थः । हृव्र.

**परवाक्यश्रवणादर्थवादः ॥**

अर्थवादानामनूहे हेतुः— परवाक्यश्रवणात्, परस्य वाक्यं परवाक्यम्, तच्छ्रवणात् विध्यर्थवाक्यश्रवणादित्यर्थः । तस्मात्तस्य वाक्यस्य स्वार्थे तात्पर्याभावान्नोह्यते । 'अन्वेनं माता मन्यताम्' इति पश्वर्थवाक्ये श्रवणान्नोह्यते । एव मन्यान्यपि मन्त्रपदानि । 'सूर्यं ते चक्षुः' इत्येवमादयो नोह्यन्ते, संज्ञप्तपशुवियुक्तस्य चक्षुषस्तेजसोऽभिधानात् । येषां शब्दानामुभयथा प्रवृत्तिर्लोके दृश्यते 'शोभनमेषां चक्षुः, शोभनान्येषां चक्षूंषि' इति ते संसर्गिण इत्यपरे । यत्र सगुणा देवता चोद्यते तत्र गुणशब्दोऽप्यूहे प्रक्षेप्तव्यः । यथा 'अग्नये शुचये' इति । सगुणद्रव्यचोदनायां तु गुणशब्दस्य प्रक्षेपो नेष्यते । ततः कृष्णग्रीवशब्दो वपासंप्रैषादिषु न प्रयुज्यते । तथा दक्षिणायां गोशब्द एव प्रयुज्यते, न मिथुनप्रथमजादिपराः शब्दाः प्रक्षेप्तव्याः । हृव्र.

मुख्याभावे सदृशस्यैव प्रतिनिधेयत्वम्

**शिष्टाभावे सामान्यात्प्रतिनिधिः ॥**

शिष्टं विहितं द्रव्यं व्रीह्यादयः, तेषामभावे द्रव्यान्तरं नीवारादि प्रतिनिधाय नित्यं नैमित्तिकं च कर्म प्रयोक्तव्यम् । कस्मात्? सामान्यात् । यस्माद्विहितद्रव्यस्य प्रतिनिधीयमानद्रव्यस्य च सादृश्यं शक्यते संपादयितुम्, तस्माच्छिष्टाभावे सदृशप्रतिनिध्युपादाने मुख्यद्रव्यावयवभूता एवोपात्ता भवेयुरिति प्रतिनिधिः शास्त्रार्थः । काम्यमपि कर्म प्रक्रान्तं प्रतिनिधिना समापनीयम्, प्रक्रान्तस्य कर्मणः पूर्वाधिकारापगमेऽपि प्रक्रमनिमित्ताधिकारत्वेनावश्यपरिसमाप्यत्वात् । यत्र प्रतिनिध्युपादानार्थं प्रवृत्तस्य मुख्यमेव द्रव्यं लभ्यते तत्र तन्मुख्यमेवोपादेयम् । यत्र प्रतिनिधिं समादाय केषुचित्संस्कारेष्वनुष्ठितेषु मुख्यलाभः तत्र प्रतिनिधिनैव समाप्यम् । यत्र सदृशद्रव्यस्य प्रतिनिहितस्य नाशः तत्र मुख्यसदृशमेवोपादद्यात्, न प्रतिनिहितस्य सदृशम् । सोमापचारे प्रतिनिधिष्वपि नष्टेषु सोमसंभवे सोम एवोपादेयः, तदसंभवे सदृश एवेति । यत्र सदृशस्य प्रतिनिहितस्य

नाशस्तत्र मुख्यसद्भावे मुख्यमेवोपादद्यात्, न प्रतिनिहितस्य सदृशम्। यत्र सदृशबुद्धिरुपजायते, तस्यैव प्रतिनिधित्वेनोपादानम्। हवृ.

मुख्यधर्माणामेव प्रतिनिधावनुष्ठानम्

**तद्धर्मा च स्यात्॥**

यद्धर्म मुख्यद्रव्यं प्रतिनिहितमपि तद्धर्मकमित्यर्थः। अतः प्रोक्षणादयः प्रतिनिहितेषु नीवारेषु क्रियन्ते। 'व्रीहीणां मेध' इति चाविकारेण प्रयुज्यते। सांनाय्यप्रतिनिधित्वेन ऐन्द्रो माहेन्द्रो वा पुरोडाशो नियम्यते तदाऽपि मुख्यधर्मत्वेन स्रुवेणैवावदानं पुरोडाशस्य न हस्तेन, प्रतिनिधेर्मुख्यधर्मप्राप्तेः। हवृ.

अंशतो द्रव्यनाशे शेषेणैव कर्मसमापनम्

**मात्रापचारे तच्छेषेण समाप्नुयात्॥**

मात्रा परिमाणम्। तदपचारः परिमाणाभावः। स्कन्नावशिष्टेषु व्रीहिषु अश्वशफमात्रस्य पर्याप्तेषु स्कन्नशेषेणैव समाप्नुयादित्यर्थः। यदा तु द्विरवदानमात्रस्य पर्याप्तास्तदा लौकिका व्रीहयः स्कन्नशिष्टेषु प्रक्षेप्तव्याः। व्रीह्युपादानकाले यस्याश्वशफमात्रा व्रीहयो न लभ्यन्ते, तस्यापि मात्रापचारेणैव परिसमाप्तिः। यस्य तु नीवारा अश्वशफमात्रपर्याप्ताः सन्ति व्रीहयो द्व्यवदानमात्रपर्याप्तास्तत्र व्रीहिभिर्नीवारान् संसृज्य निर्वापः कर्तव्यः, यावत्संभवं मुख्यपरित्यागे कारणाभावात् मुख्यावयवलाभकृतत्वाच्च प्रतिनिधेः। हवृ.

स्वाम्यग्निदेवतामन्त्रकर्मणां न प्रतिनिधिः, माषादीनां च निषेधात् न प्रतिनिधित्वम्

[1]**स्वामिनोऽग्नेर्दैवतायाः शब्दात्कर्मणः प्रतिषेधाच्च प्रतिनिधिर्निवृत्तः॥**

पूर्वोक्तस्य प्रतिनिधेरपवादः प्रतिपाद्यते। स्वामिनो यजमानस्य पत्न्या वा। तत्राङ्गत्वाभावाद्यजमानस्य पत्नीमरणे पत्न्यन्तरोपादानेन वा अपत्नीकत्वेन वा कर्मणः परिसमाप्तिर्नाङ्गीक्रियते। का वार्ता द्विपत्नीके प्रयोगे अन्यतरमरणे? तत्र परिसमाप्तिमेव न्यायविदो मन्यन्ते, एकयाऽपि पत्न्या सहाधिकारसिद्धेः, पत्नीकार्यनि(?निर्)वृत्तेश्च। अग्नेः आहनीयादेः। तत्र आहवनीयादेरभावे नाग्न्यन्तरं प्रतिनिधातव्यम्। नाप्युदके वा भूमौ वा होमः। अननुष्ठानमेव मन्यन्ते। एवं देवताऽपि न प्रतिनिधेया। शब्दात् मन्त्रात्। न मन्त्रे च विस्मृते मन्त्रान्तरं प्रतिनिधेयम्। अमन्त्रकमेव कर्मानुष्ठीयते। कर्मणः प्रयाजादेः। न प्रयाजादेरसंभवे प्रोक्षणानुष्ठानं प्रतिनिधिः। प्रतिषेधात् 'अयज्ञिया वै माषा वरकाः कोद्रवाश्च' इति। न माषादीनां यज्ञे विनियुक्तानां प्रतिषेधोऽयम्, माषादीनां विनियोगाभावात्। न चाविहितद्रव्यतया यज्ञेषु प्राप्तस्य माषादेर्निषेधः संभवति, सर्वत्र यागहोमयोः सामान्यतो विशेषतो वा आज्यादेर्विनियुक्तत्वात्। संभवति माषादेः सदृशस्य विनियुक्तस्यासंभवे माषादेः प्रतिनिधित्वेन प्राप्तिः। अतः प्रतिनिधिविषय एवायं 'अयज्ञिया वै माषा वरकाः कोद्रवाः' इत्येवावधारितम्। अतो यदाऽपि वरककोद्रवयोरपचरितद्रव्यसादृश्यं तदाऽपि प्रतिषेधात्ताभ्यां प्रतिनिधिर्निवर्तते। अन्यदेव द्रव्यमीषत्सदृशमप्युपादेयमित्यर्थः। एवं वाऽत्र— प्रतिषिध्यते इति प्रतिषेधः इति कर्मसाधननिर्देशोऽयम्, 'खण्डां कृष्णां लक्ष्णां च नोपदध्यात्' इति प्रतिषिद्धत्वात्खण्डादेः प्रतिनिधिर्निवर्तते। मुख्येष्टकाभावे खण्डादीनां संभवे ताभिरेव चेतव्यम्, नाश्मना प्रतिनिहितेन चेतव्यमित्यर्थः। अशृङ्गस्य पशोश्छिन्नकर्णस्यान्धस्य भग्नदन्तस्य वाऽऽपन्नदन्तस्य वा कूटादियुक्तस्य संभवे मुख्यपशोरसंभवे कृत्वा प्रायश्चित्तं कूटादीनामेवाऽऽलम्भः, न जात्यन्तरस्य प्रतिनिहितस्येति। हवृ.

प्रत्याम्नानप्रतिषेधार्थलोपैः प्राकृतपदार्थनिवृत्तिर्विकृतौ

**त्रिभिः कारणैः प्रकृतिर्निवर्तते प्रत्याम्नानात्प्रतिषेधादर्थलोपाच्च॥**

प्रत्याम्नानं प्रकृतिप्राप्तस्यार्थस्य स्थाने अर्थान्तरोपदेशः। प्रतिषेधः 'नार्षेयं वृणीते न होतारम्' इति। अर्थः प्रयोजनम्, तदसंभवात्। 'शरमयं बर्हिः' इति प्रत्याम्नानस्योदाहरणम्। अर्थलोपाच्चरौ पेषणादिनिवृत्तिः। अपरे

(१) आपप. ४।१,२,९–१४.

अन्यत्त्रयं निवृत्तिकारणमाहुः—नियमः परिसंख्यानं भूतोपदेश इति । यथा— विकल्पेन व्रीहियवयोः (प्राप्तयोः) 'व्रीहिमयः पुरोडाशः' इति पुनर्नियमविधानाद्यवनिवृत्तिः । गृहमेधीये आज्यभागादिषु प्राप्तेषु पुनराज्यभागविधानं परिसंख्यायते प्रयाजादिनिवृत्त्यर्थम् । 'खलेवाली यूपः' इति यूपकार्ये खलेवालीविधानाच्छेदनादिनिवृत्तिः । त्रिभिरिति निवृत्तिकारणनियमादेव तेषामपि तत्रैवान्तर्भावः । पशुपुरोडाशे प्रत्याम्नानादेव निवृत्तिः । गृहमेधीये पुनर्विहितपदार्थकार्येणैव कथंचिदङ्गपूर्तेः अर्थलोपादेवेतरनिवृत्तिः । छिन्नं तष्टमुच्छ्रितं निखातं च काष्ठं खलेवाली इति तत्रार्थलोपादेव छेदनादीनां निवृत्तिः । हृद्व.

यज्ञफलयज्ञाङ्गफलयोः संकल्पस्याऽऽदौ कर्तव्यता

**क्रत्वादौ क्रतुकामं कामयेत ॥**

काम्यत इति कामः फलम् । क्रतुफलस्य कामो वर्तमानः क्रतुं प्रयुङ्क्ते, न भूतो न भविष्यन् । न च कामयेत इति विधिः, स्वतःसिद्धत्वात् । यतः क्रत्वादौ वर्तमानः क्रतुं प्रयुङ्क्ते, अतस्तत्संकल्पः क्रत्वादौ कर्तव्यः । हृद्व.

**यज्ञाङ्गादौ यज्ञाङ्गकामम् ॥**

'कामयेत' इत्यनुवर्तते । क्रतुकामवद्यज्ञाङ्गकामोऽपि भवति । यज्ञाङ्गादौ वर्तमानो यज्ञाङ्गं प्रयुङ्क्ते, अतो यज्ञाङ्गफले संकल्पस्तदादौ कर्तव्यः । हृद्व.

मन्त्रकर्मणोर्न्यूनाधिकसंख्यत्वे व्यवस्था

**अल्पीयांसो मन्त्रा भूयांसि कर्माणि तत्र समशः प्रविभज्य पूर्वैः पूर्वाणि कारयेदुत्तरैरुत्तराणि ॥**

यत्र अल्पीयांसो मन्त्राः कर्माणि भूयांसि, यथा काम्यानामिष्टीनाम् 'उभा वामिन्द्राग्नी' 'इन्द्राग्नी नवतिं पुरः' इति याज्यानुवाक्यायुगल( ? लद्वय )माम्नातम् । 'ऐन्द्राग्नमेकादशकपालम्' इति षडाम्नातानि । तद्युगलद्वयं समशः प्रविभज्य कर्माणि च पूर्वेण युगलेन पूर्वाणि त्रीणि कारयेत्, उत्तरैरु( ? उत्तरेणो )त्तराणि । एवं 'विहव्या उपदधाति' इति विहिता दश मन्त्राः । धिष्ण्येष्टकोपधानकर्माणि बहूनि । तत्र समशः प्रविभज्य पूर्वैः पूर्वाणि कारयेदुत्तरैरुत्तराणि । हृद्व.

**अल्पीयांसि कर्माणि भूयांसो मन्त्रास्तत्र प्रतिमन्त्रं कुर्यादवशिष्टा विकल्पार्था यथा यूपद्रव्याणीति ॥**

अग्नौ चतुर्दशौषधिवपनकर्माणि । 'या जाता ओषधयः' इति वपनार्था मन्त्रा बहवः । तत्राऽऽदितो मध्यतोऽन्ततो वा अव्यवहितैश्चतुर्दशभिर्मन्त्रैः प्रतिमन्त्रं प्रथमेन प्रथमवपनं द्वितीयेन द्वितीयमिति । एवं चतुर्दश वपनानि कुर्यात् । अवशिष्टा विकल्पार्थाः प्रयोगान्तरेऽर्थवन्तः, यथा यूपद्रव्याणि पलाशाद्याम्नातानि विकल्प्यन्ते पशुबन्धे । इतिकरणं दृष्टान्तान्तरप्रदर्शनार्थं व्रीहियववच्च विकल्प इति । हृद्व.

**अन्ताल्लोपो विवृद्धिर्वा ॥**

यत्र अतिदेशप्राप्तानां मन्त्राणां बहुत्वम्, कर्मणामल्पत्वम्, तत्राऽऽदित आरभ्य प्रवृत्तेरन्तादारभ्य लोपः । आश्विने द्विकपाले आद्याभ्यां मन्त्राभ्यां कपालोपधानम् । उत्तरेषां लोपः । तैः कर्म न क्रियते । ऋतव्यमन्त्रैः होत्रियधिष्ण्योपधाने कर्तव्ये, इष्टकानां द्वादशपक्षे, तेषां मन्त्राणां संविभागे च पञ्चमदशमयोर्द्विरावृत्तिः, षोडशपक्षे चतुरावृत्तिः कर्तव्या । हृद्व.

उपदिष्टातिदिष्टाङ्गयोः क्रमव्यवस्था

**प्रकृतेः पूर्वोक्तत्वादपूर्वमन्ते स्यात् ॥**

प्रकृतेः प्रकृत्यङ्गस्य क्लृप्तक्रमस्य प्रधानप्रयोगवाक्यविहितत्वात् तत्प्राकृतं यथाक्रमं पूर्वं प्रयोक्तव्यम् । अपूर्वम् अक्लृप्तक्रमं तुल्यजातीयानामन्ते स्यात्, यथा 'सोऽत्र जुहोति' इति सर्वहोमानामन्ते प्राक्स्विष्टकृतः समिष्टयजुषोऽप्यन्तलाभाय । हृद्व.

## कात्यायनश्रौतसूत्रम्

कर्माधिकारव्याख्यानप्रतिज्ञा

[1]अथातोऽधिकारः ॥

व्याख्यास्यते इति सूत्रशेषः। शास्त्रावतारसंबन्धप्रयोजनाभिधानं दर्शपूर्णमासादौ कृतम्, इदानीं पदार्थमात्रव्याख्यानं क्रियते। तत्रायमथशब्दः पूर्ववृत्तवेदाध्ययनानन्तर्यप्रज्ञप्त्यर्थः। पूर्वप्रवृत्ते हि वेदाध्ययने उत्तरो विचार उपपद्यते। वेदवाक्यार्थनिरूपणं ह्यत्र भवति। अतःशब्दस्तदेव वेदाध्ययनं हेतुत्वेन प्रकरोति। यस्मादधीतो वेदः तत उत्तरं विचारस्यावसर इति। अधिकारशब्देन च कर्मविषयः कर्तृव्यापारोऽभिधीयते। प्रतिज्ञासूत्रमेतत्। प्रतिज्ञातमिदमधिकारो व्याख्यास्यते इति। प्रतिज्ञाकरणं शिष्यबुद्धिसमाधानाय। अपरे व्याचक्षते— नित्यनैमित्तिककाम्यकर्मोपनिबन्धनोत्तरकालमाचार्येण परिभाषोपनिबद्धा। तत्रायमथशब्दः कर्मानन्तर्यप्रज्ञप्तये। हेत्वर्थश्चातःशब्दः। यस्मादभिहितानि कर्माणि अतस्तेष्वधिकारोऽभिधीयते, क एतैरग्निहोत्रादिभिरधिक्रियते इति।

कर्क.

कर्मणां फलजनकत्वम्

फलयुक्तानि कर्माणि ॥

एवं प्रतिज्ञाते सति इदानीमिदं विचार्यते— किं फलवन्ति कर्माणि, उताफलवन्ति कर्माणि? किं तावत्प्राप्तम्? अफलवन्तीति ब्रूमः। न हि तत्समनन्तरं फलमुपलभ्यते। आगमोऽपि नैवंविधोऽस्ति येन अग्निहोत्रादिभिः प्राप्यं फलमुच्यते इति। ननु च 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इति, 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्येवमादिना फलवत्ता गम्यते। नैतदेवम्। अत्र हि यागहोमयोः श्रुत्या विधानम्। यजेतेति यागस्य कर्तव्यतोच्यते, जुहुयादिति होमस्य। न चान्यत्पदान्तरमस्ति यतः फलमवगम्यते। दर्शपूर्णमासशब्दः कर्मणि वर्तते, अग्निहोत्रशब्दश्च। स्वर्गकामशब्देन च पुरुषो विशेष्यते। यजेतेत्यनेन च यागस्य कर्तव्यता उच्यते श्रुत्या। एवं जुहुयादिति च होमस्य। तेन याऽत्र फलबुद्धिः सा मृषेति। एवं प्राप्ते इदमुच्यते— फलयुक्तानीति। फलस्य साधकानीत्यर्थः। कुत एतत्? वाक्यात्। 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' 'अग्निहोत्रं जुहुयात्स्वर्गकामः' इति च। ननूक्तम्— योऽत्र कर्तव्यतावाचकः स यागस्य कर्तव्यतामाह होमस्य च। नैतदेवम्। यागमात्रकर्तव्यतायां विधीयमानायां वाक्यमेवेदमनर्थकं स्यात्। न हि यागेना(? गस्या)फलस्य कर्तव्यता। तेन यागोऽप्यनर्थको वाक्यं च। अथ तु यागः साधनत्वेन विधीयते स्वर्गं प्रति तदा धात्वर्थविधानेन श्रुतिरप्यत्रानुगृह्यते वाक्यमप्यर्थवद्भवति। न च वेदे मात्रामात्रस्याप्यानर्थक्यमिष्यते। अतः स्वर्गः साध्यो यागश्च साधनम्। तत्कथमिति चेत्। इह स्वर्गकामो यजेतेति पदद्वयं न विधायकम्, न चानुवादकम्। न हि द्वयोर्विधीयमानयोः परस्परं संबन्धो भवति, न चानूद्यमानयोः। तस्मात्तत्रैकमुद्देशकं पदमन्यत् प्रतिनिर्देशकमिति। तत्र यदि यागोद्देशेन स्वर्गकामो विधीयते, स्वर्गं कामयमानेन यागः कर्तव्य इति। तदा वाक्यस्याऽऽनर्थक्यं भवति। अदृष्टपरिकल्पना यागस्य स्वर्गकामनायाश्च। अथ तु स्वर्गकामोद्देशेन यागो विधीयते तदा स तस्योपकारको भवति। पुरुषप्रयत्नरूपो ह्यसौ। स्वर्गकामस्य चानेक उपकारः पुत्रपश्वादिलाभरूपः। तत्र चैकवाक्योपात्तं स्वर्गमेव साधयतीति नातीवादृष्टपरिकल्पना। तस्मात् स्वर्गः साध्यो यागश्च साधनम्। अपि च यागस्य कर्तव्यतायामसामञ्जस्यं स्यात्, स्वर्गं कामयते यागं च करोतीति। तस्मात् स्वर्गकामोद्देशेन यागविधानम्, अतश्च फलवन्ति कर्माणीत्युक्तम्। आह च— 'स्वर्गकामो यजेतेति द्वे पदे चेद्विधायके। परस्परेण संबन्धो नानुवादेऽपि युज्यते ॥ अतोऽनूद्य पदेनैकेनापरेण विधीयते। यदि तत्रैव संबन्धस्ततो युज्येत नान्यथा ॥ अनूद्य यदि यागं तु स्वर्गकामो विधीयते। कामनायास्तथा यागादद्दृष्टं परिकल्प्यते ॥ स्वर्गकाममनूद्याथ यदि यागो विधीयते। तस्योपकारकत्वेन ततः स्वर्गस्य

(१) काश्रौ. १।१–८, १८–२५, ३१, ३२, ३९–५७, ६९, ७०, ७३–७७, ७९–८१.

साध्यता ॥ प्रयत्नरूपो यागोऽयं निष्फलः स च नेष्यते । विधेयोऽपि हि साध्यस्य साधनत्वेन जायते ॥ स्वर्गश्च साध्यो नान्यत्तु साध्यं किंचिदपीष्यते । प्रयत्नरूपो यागोऽपि तेन स्यात्तस्य साधनम् ॥ उद्दिश्य स्वर्गकामं तु स्फुटे यागविधौ सति । एकवाक्यगतः स्वर्गो यागेनेह प्रसाध्यते ॥ साध्यं नान्यद्धि यागस्य न चान्यत् स्वर्गसाधनम् । साध्यसाधनसंबन्धस्तेनेष्टः स्वर्गयागयोः ॥ ' । कर्क.

मनुष्याणामेव समर्थानां शूद्रभिन्नानामधिकारः कर्मसु

**सर्वेषामविशेषात् ॥**

अधिकारः सर्वेषां भवति । देवमनुष्यरक्षःपिशाचतिर्यगादीनाम् । सर्वे ह्येते फलार्थिन इति । दृष्टश्चायमर्थो यथा सर्वेषामधिकार इति– ' देवाः सत्रमित्युपासत ' ' गावो वा एतत्सत्रमासत ' इति । कर्क.

**मनुष्याणां वाऽऽरम्भसामर्थ्यात् ॥**

अतः फलार्थित्वाविशेषात् सर्वेषामधिकार इत्येवं प्राप्ते आह– मनुष्याणामिति । वाशब्दः पक्षव्यावृत्तौ । न सर्वेषामधिकारः, मनुष्या एव कर्मस्वधिक्रियन्ते । त एव हि यथाश्रुतं कर्माऽऽरब्धुं समर्था न देवादयः । देवास्तावदवाप्तकामाः । न तेषामवाप्तव्यमस्ति यद्यागादिभिरवाप्यते । न च देवानामन्ये देवाः सन्ति यान् यजेरन् । ऋषीणामार्षेयाभावादनधिकारः । रक्षःपिशाचानामशुचित्वात् । गवादीनामसन्नचेतव्यत्वात्, अवैद्यत्वाच्च । यच्च दर्शनमुक्तम्– ' गावो वा एतत्सत्रमासत ' ( तैसं. ७।५।१।१ ) इति, स सत्रप्रशंसार्थोऽर्थवादः । तस्मान्मनुष्याणामेवाधिकारः । कर्क.

**अङ्गहीनाश्रोत्रियषण्ढशूद्रवर्जम् ॥**

एवं सर्वमनुष्याधिकारप्राप्ताविदमाह– अङ्गहीनेति । मनुष्याणामङ्गहीनादिवर्जितानामधिकारः । कुत एतत् ? आरम्भसामर्थ्यादेव । न ह्यङ्गहीनादयो यथाश्रुतं कर्माऽऽरब्धुं समर्थाः । अतो नाधिकारः । अङ्गेन हीनः अङ्गहीनः । यथा विष्णुक्रमणे पङ्गुरसमर्थः, अन्ध आज्यावेक्षणे, मूको मन्त्रोच्चारणे, बधिरश्च संबोधने । विष्णुक्रमणादिभिश्च विना विगुणं कर्म भवति । अत एव नाधिकारः । अश्रोत्रियस्य सर्वयाजमानिकेष्वनधिकारः । अनधिकृतो ह्यसौ अश्रोत्रियत्वादेव । षण्ढश्चाशुचित्वादद्रव्यत्वाच्च । अशुचित्वं हि तस्य स्मर्यते अद्रव्यत्वं च । तस्मादेषामनधिकारः । ननु चाऽऽरम्भसामर्थ्यादित्ययं हेतुर्यथा गवादिव्युदासे वर्तते एवमङ्गहीनादिव्युदासेऽपि इति नाऽऽरब्धव्यमेतत्सूत्रम् । सत्यमेतत् । अद्रव्यव्युदासार्थमङ्गहीनादीनामुपादानम् । आरम्भसामर्थ्यात्तस्याप्यधिकारो मा भूदिति । शूद्रः कस्मान्नाधिक्रियते द्रव्यवाननङ्गहीनश्च । सन्ति चान्यार्थानि दर्शनानि यैः शूद्रस्याप्यधिकारो गम्यते । हविष्कृदाह्वानविशेषं प्रकृत्योच्यते– ' आधावेति शूद्रस्य ' । तथा व्रतविशेषे– ' मस्तु शूद्रस्य ' । तथा पितृमेधे– ' अष्ठीवद्घ्नं शूद्रस्य ' इति । एवं प्राप्ते इदमाह– शूद्रवर्जम् । कर्क.

**ब्राह्मणराजन्यवैश्यानां श्रुतेः ॥**

कुत एतत्– ब्राह्मणेति । ब्राह्मणादीनामेवाऽऽधानं श्रूयते– ' वसन्ते ब्राह्मणोऽग्नीनादधीत । ग्रीष्मे राजन्यः । वर्षासु वैश्यः ' इति । तेन आधानाभावादनग्निः शूद्रः । सोऽग्निसाध्ये कर्मणि कथं प्रवर्तिष्यते । आत्मार्थं चाऽऽधीयन्तेऽग्नयो न परार्थे । आत्मनेपदं ह्यत्र भवति आदधीतेति । तेन ब्राह्मणादय एवाऽऽधानेनाग्निमुत्पादयितुं समर्थाः । न शूद्रः, आधानाभावात् । अतः शूद्रस्यानधिकारः । यानि पुनर्दर्शनान्युक्तानि तानि रथकारविषयाणि । रथकारस्य हि शूद्रासंबन्धात् शूद्रत्वमुच्यते । करण्यां स हि जातः । करणी च शूद्रादुढेतेति । अथवा ब्राह्मणराजन्यवैश्यानामेवाध्ययनं श्रूयते– ' वसन्ते ब्राह्मणमुपनयीत । ग्रीष्मे राजन्यम् । वर्षासु वैश्यम् ' इति । उपनयनं चाध्ययनार्थम् । अतस्तदभावादवैद्यत्वादनधिकारः शूद्रस्य । अपि च, शूद्रस्य प्रतिषेधो भवत्यध्ययनं प्रति– ' श्रवणे त्रपुजतुभ्यां श्रोत्रप्रतिपूरणम् । उच्चारणे जिह्वाच्छेदः, धारणे शरीरभेदः ' इति । तस्मादवैद्यत्वाच्छूद्रो नाधिक्रियते इति । कर्क.

स्त्रीणामप्यधिकारः कर्मसु

**स्त्री चाविशेषात् ॥**

' ब्राह्मणोऽग्नीनादधीत ' ' स्वर्गकामो यजेत ' इति च विशिष्टलिङ्गश्रवणात् स्त्रिया अनधिकारे प्राप्ते

इदमाह– स्त्रीति । स्त्री चाधिक्रियते । कुत एतत् ? अविशेषात् । यस्मात् श्रूयमाणमप्येतल्लिङ्गं न विशेषकं भवति, अतो न पुंसामेवाधिकार इति । उद्दिश्यमानविशेषणं ह्येतत्– 'स्वर्गकामो यजेत' इति । विधिसंस्पर्शाभावादविवक्षितं लिङ्गं संख्या च । यत्र पुनर्विधिसंस्पर्शोऽस्ति तत्र लिङ्गं संख्या च विवक्ष्यते । यथा 'पशुमालभेत' इत्यत्र तद्विषयं पुंस्त्वमेकत्वं च विधीयते । विशिष्टपश्वालम्भोऽन्यथा न भवति । तस्मात् स्त्रिया अप्यधिकारः । कर्क.

**दर्शनाच्च ॥**

दृश्यते चायमर्थो यथा स्त्रिया अप्यधिकार इति । 'मेखलया यजमानं दीक्षयति योक्त्रेण पत्नीम्' (तैसं. ६।१।३।५) इति योक्त्रविधिपरे वाक्ये पत्न्या अधिकारं दर्शयति । सा च पुंसा सहाधिक्रियते न पृथक् । येनैकस्मिन्कर्मणि पत्नीसाध्याः पदार्था दृश्यन्ते यजमानसाध्याश्च । 'पत्न्याज्यमवेक्षते' 'यजमानो वेदं बध्नाति' इति । अपि च, तयोः समध्यकं द्रव्यं स्मर्यते, धर्मार्थकामेषु चानभिचारः । तस्मात् सहाधिक्रियते । तुल्यफलत्वाच्च । कुत एतत् । सूत्रकारप्रस्थानात् । पत्नीः प्रकृत्याऽऽह– 'अनुचरीर्वा फलाधिकारादितरासाम्' इति । क्रियाफलं च सकलमेकैकस्य भवति, न विभागेन । 'स्वर्गकामो यजेत' इत्यनेन यथा यजमानोऽभिधीयते, एवं पत्न्यपीति । यथा यागेन यजमानः फलं साधयति तथा पत्न्यपीति । वाक्यान्तरेण सहक्रिया तयोः । तथा च स्मरणम्– 'नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणम् । शुश्रूषयति भर्तारं तेन स्वर्गे महीयते ॥' । कर्क.

औपासनाग्निसाध्यत्वं स्मार्तानां कर्मणाम्

**वैतानिकेषु सर्वं सर्वार्थत्वात् ॥**

कर्त्रधिकारो निरूपितः, इदानीमग्न्यधिकारनिरूपणायाऽऽह- वैतानिकेष्विति । वैतानिकाः वितानार्हाः आधानसंस्कृता अग्नय उच्यन्ते । तेषु सर्वं श्रौतं स्मार्तं च कर्म कर्तव्यम् । कुत एतत् ? सर्वार्थत्वात् । सर्वार्था ह्येते अग्नयः । कथं ज्ञायते । यन्नाम द्रव्यमुत्पद्यमानमेव विशिष्टार्थसंयोगेनोत्पद्यते तस्य तादर्थ्यमेवावसीयते । न चैते विशिष्टार्थसंयोगिनस्तस्मात् सर्वार्था इति । कर्क.

**दर्शनाच्च ॥**

दृश्यते चायमर्थो यथा स्मार्तमप्यत्र क्रियते । दक्षिणाग्निं प्रकृत्य श्रूयते– 'मांसं तु तत्र न पचेयुः' इति । प्राप्तिपूर्वकश्च प्रतिषेधो भवति । न च श्रौतो मांसपाको दक्षिणाग्नावस्ति यस्यैष प्रतिषेधः स्यात् । शामित्रे ह्यसौ विहित इति । अस्ति त्वविहिताप्रतिषिद्धः स्मार्तो मांसपाकस्तस्यैष प्रतिषेधो युज्यते । तस्मात्स्मार्तमप्यत्र क्रियते इति । कर्क.

**नौपासनश्रुतेः ॥**

एवं प्राप्ते ब्रूमः– नेति । नैतदेवम्, स्मार्तमपि वैतानिकेषु कर्तव्यमित्येवं नास्ति । येन वैतानिकस्यापि स्मार्तकर्मसाधनभूत औपासनो दृश्यते पितृमेधे 'अद्वारेणौपासनं निरस्यति' इति । यदि हि स्मार्तमपि वैतानिकेषु क्रियेत, औपासनदर्शनं न स्यात् । दृश्यते च । तस्मात्स्मार्तान्यौपासने क्रियन्ते इति । पूर्वमौपासनः । स्मरन्ति ह्येवम्– 'संस्कारैः संस्कृतः पूर्वैरुत्तरैरनुसंस्कृतः ।' इति । पूर्वे च स्मार्ताः श्रौताश्चोत्तरे । न च वैतानिकोत्पत्त्युत्तरकालमौपासनस्य युक्तस्त्यागः, अग्न्युत्सादित्वप्रसङ्गात् । कर्क.

**अधिश्रयणीये मांसप्रतिषेधः ॥**

यश्च दक्षिणाग्नौ मांसपाकप्रतिषेधः, सोऽधिश्रयणीयाहर्विषयः । दक्षिणाग्निं प्रकृत्य श्रूयते– 'न वावसिते वैनमाहरेयुस्तस्मिन्पचेयुः' इति । पाकद्रव्यं चाविशेषान्मांसमपि भवति । तस्यैष प्रतिषेध इति । कर्क.

यज्ञलक्षणम्

**यज्ञं व्याख्यास्यामः ॥**

**द्रव्यं देवता त्यागः ॥**

व्रीहियवपश्वादि द्रव्यम् । देवताशब्दस्तु चोदनालक्षणः । या यत्र चोद्यते सा तत्र देवता । न हि जात्या काचिद्देवताऽस्ति वैदिके व्यवहारे । तद्धितेन द्रव्यं प्रति

देवतात्वं गम्यते, चतुर्थ्यन्तेन वा । तस्य द्रव्यस्य देवतां प्रति या उत्सर्गक्रिया स यागः । यज्ञो याग इति चानर्थान्तरम् । अस्मिन्नेवार्थे लोके यज्ञशब्दः प्रसिद्धः । प्रसिद्धोऽपि सन्नुच्यते अङ्गप्रधानविवेकनिरूपणाय । कर्क.

अङ्गनिरूपणम्

**तदङ्गमितरत् समभिव्याहारप्रकरणाभ्याम् ॥**

निरूपितं प्रधानं फलसंयुक्तम्, इदानीमङ्गनिरूपणायाऽऽह— तदङ्गमिति । यदन्यफलासंयुक्तं यागहोमरूपं तत्तस्यैव फलवतो यागस्याङ्गम् । धर्मः शेषोऽङ्गमिति चानर्थान्तरम् । कुत एतत् ? समभिव्याहारप्रकरणाभ्याम् । समभिव्याहारशब्देन वाक्यमभिधीयते । यथा— 'पौर्णमासेनेष्ट्वेन्द्राय विमृधेऽनुनिर्वपति' इति । प्रकरणाम्नानसामर्थ्याद्दर्शपूर्णमासाङ्गत्वे प्राप्ते वाक्यात्पौर्णमासाङ्गतोच्यते । उभयाकाङ्क्षालक्षणं प्रकरणमुच्यते । तद्यथा— 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति यागस्य फले विधानं साधनत्वेन । साधनस्य चेतिकर्तव्यतापेक्षा । इतिकर्तव्यता च साध्यसव्यपेक्षा । तयोराकाङ्क्षावतोः संबन्धः प्रकरणम् । उभयोराकाङ्क्षावत्त्वे सति तत्संबन्धप्रतिपादकवाक्यपरिकल्पना । वाक्यादभिधानसामर्थ्यम् । अभिधानसामर्थ्याद्विनियोक्त्री श्रुतिरिति । एवं वाक्यप्रकरणाभ्यां शेषविनियोग इति । ननु च तन्त्रे श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानानि शेषविनियोगप्रमाणानि । सूत्रकारेण तु प्रमाणद्वयमुपन्यस्तम् । शेषाणामनुपन्यास इति । नैष दोषः । कर्मविरचनाकाले एव तानि ह्यभिहितानि । तत्र तत्रोच्यते । 'काष्ठं हिरण्यं वाऽभिजुहुयाच्छ्रुतेः' इति काष्ठहिरण्ययोः श्रुतेर्विनियोजकत्वमुक्तम् । लिङ्गस्य च 'तेषामारम्भेऽर्थतो व्यवस्था तद्वचनत्वात्' इति । क्रमस्तु द्विप्रकारः— संनिधानलक्षणो यथासंख्यलक्षणश्च । तत्र यः संनिधानलक्षणः स विकृतिविषयः । अन्यतराकाङ्क्षोऽपि हि तत्र संबन्धो भवति । विकृतिसंनिधौ यदपूर्वमङ्गमाम्नायते तत्साध्याभावात्साध्याकाङ्क्षम्, तस्याऽऽनर्थक्यं मा भूदिति वैकृतस्य प्रधानस्य तत्प्रत्यपेक्षा कल्प्यते । सोऽयमन्यतराकाङ्क्षालक्षणः क्रमः । तेनापि विनियोगो ज्ञापित एवाऽऽचार्येण । यथाऽधिदेवनादीनामभिषेचनीये । यथासंख्यलक्षणेनापि विनियोग उक्त एव । यथा— 'कांस्यवानस्पत्यमार्तिकैरभिचारब्रह्मवर्चसप्रतिष्ठाकामा यथासंख्यम्' इति । समाख्ययाऽपि च विनियोगो ज्ञापित एव 'शेषमितरे यथाख्यम्' इति । अतो विनियोगप्रमाणद्वयमेवात्राभिहितम् । यच्च पितृभूत्याचार्येण यथासंख्यलक्षणक्रमं प्रकृत्योपांशुयाजे 'दब्धिर्नामास्यदब्धोऽहं भ्रातृव्यं दभेयम्' इत्यस्य विनियोग उक्तः, तन्नातीव शोभते । प्रकरणेन हि तस्य संबन्धः उभयाकाङ्क्षालक्षणः । तेनानुमन्त्रणेन प्रकरणिनोऽपेक्ष्यन्ते, प्रकरणिभिरथाऽऽग्नेयोपांशुयाजाग्नीषोमीयैस्तदपेक्ष्यते । तेन प्रकरणेनानुमन्त्रणसंबन्धः । तद्यदि विशेषे व्यवस्थाप्यते, क्रमेण प्रकरणं बाधितं स्यात् । यथासंख्यलक्षणेन विनियोगः प्रदर्शित एव । कवचिनिषङ्गिकलापिदण्डिनो यथासंख्यमित्येवमादि । कर्क.

**यजतयश्चाफलयुक्तास्तदङ्गम् ॥**

अयागहोमरूपस्याङ्गभाव उक्तः । इदानीं यागहोमरूपयोरङ्गत्वप्रतिपादनायाऽऽह—यजतय इति । चशब्दाज्जुहोतयश्च । ननु 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यनेन यागस्य फलसंबन्ध उक्तः । कुतोऽफलयुक्ता यजतय इति । अत्रोच्यते । नात्र सर्वस्य यागस्य फलवत्ता । किं तर्हि ? य एव दर्शपूर्णमासशब्दवाच्यः स फलवान् । कश्चासौ ? यो दर्शपूर्णमाससंयोगेनोत्पन्नः, यथा— 'आग्नेयोऽष्टाकपालः पौर्णमास्याममावास्यायां वाऽच्युतो भवति' इति आग्नेयस्य दर्शपौर्णमाससंयोगः । दर्शशब्देन च चन्द्रमसो द( ? सोऽद )र्शनाद्वैपरीत्यलक्षणयाऽमावास्योक्ता । तथा— 'तावब्रूतामग्नीषोमावाज्यस्य ना उपांशु पौर्णमास्यां यजन्' इति उपांशुयाजस्य पौर्णमासीसंयोगः । 'ताभ्यामेतमग्नीषोमीयमेकादशकपालं पौर्णमास्यां प्रायच्छत्' इत्यस्य च । तथा च 'ऐन्द्रं दध्यमावास्यायामैन्द्रं पयोऽमावास्यायाम्' इत्यमावास्यासंयोगः । एवमेते यागा लक्षणया दर्शपूर्णमासशब्देनाभिधीयन्ते । तेषामेव फलविधानम् । इतरे प्रयाजादयो निष्फलाः । तेषामपि फलवदुपकारः परिकल्प्यते । तेन

तादर्थ्यात्तदङ्गता । तस्मात्साधूक्तम्— 'यजतयश्चाफलयुक्तास्तदङ्गम्' इति । अङ्गाधिकारे पुनस्तदङ्गग्रहणमपूर्वसंसूचनार्थम् । कर्क.

काम्यानां यथाकाममनुष्ठानम्, नित्यादीनां तु नियोगतः

**फलयुक्तानामारम्भे याथाकामी फलार्थित्वात् ॥**

इदानीमिदं विचार्यते । कर्मणामारम्भे किं याथाकाम्यं कर्तुरुत नियोगतोऽनुष्ठेयानीति । किं तावत्प्राप्तम् ? सूत्रेणैव पक्षः— फलयुक्तानामिति । फलार्थिनो हि कर्म चोद्यते । तस्माद्याथाकाम्यं प्राप्तम् । कर्क.

**न नियमनिमित्ताग्निहोत्रदर्शपूर्णमासदाक्षायणाग्रयणपशुषु प्रवृत्तेः ॥**

नियमेषु न याथाकाम्यम् । यस्मान्नियोगतस्तत्र शास्त्रं प्रवर्तयति— 'सत्यवादी स्यादधःशायी स्यात्' इति च । पक्षे नैतन्नियमशास्त्रं प्रवृत्तम् । प्रागेव यस्माद्याथाकाम्यं प्राप्तम् । यदि तु नियोगतो नानुष्ठेयम्, सत्यवदनशासनमनर्थकमेव स्यात् । तस्मात्सत्यवदनादि नियोगतोऽनुष्ठेयम्, सत्यवदनशासनानर्थक्यं मा भूत् । तस्मान्नियमेषु न याथाकाम्यम् । निमित्तेऽपि यद्विधीयते तत्राऽपि न याथाकाम्यम्, निमित्तोद्देशेन विधानात् । गेहदाहे 'अग्नये क्षामवते' इति । यदि गेहदाहे क्षामवत्यादिषु याथाकाम्यं स्यात्, गेहदाहग्रहणमनर्थकमेव स्यात् । प्रागपि गेहदाहग्रहणाद्याथाकाम्यं सिद्धमेव । तस्मान्नैमित्तिकेषु न याथाकाम्यम् । अग्निहोत्रेऽपि न याथाकाम्यम् 'यावज्जीवमग्निहोत्रं जुहुयात्' इति श्रूयते । ननु च 'अग्निहोत्रं जुहुयात्स्वर्गकामः' इति च । तत्र प्रकरणात् काम्यस्यैवैष कर्मणो धर्मस्ततश्च याथाकाम्यमित्येवं प्राप्ते उच्यते । प्रकरणादेष कर्मधर्मः स्यात् यावज्जीविकता । तत्रापि लक्षणया कर्माभ्यास उपदिश्यते । विहिता हि तस्य सायंप्रातः परिसमाप्तिः । तेन 'यावज्जीवं जुहुयात्' इत्यनेनाभ्यासो लक्ष्यते । कर्तृधर्मे पुनर्जुहुयादिति स्वार्थ एव वर्तते । नाभ्यासं लक्षयति । जीवने च निमित्ते ज्ञातो होमो विधीयते । तस्मात्कर्तृधर्मो यावज्जीविकता । ततश्च न याथाकाम्यम् । यत्पुनरुक्तम्— 'अग्निहोत्रं जुहुयात्स्वर्गकामः' इति, स पृथक्काम्यः प्रयोगः । अयमपरो जीवननिमित्त इति । तत्रैतद्भवति— काम्येऽपि प्रयोगे क्रियमाणे नैयमिकः कृत एव भवति । सोऽप्यग्निहोत्रप्रयोग एवेति । दर्शपूर्णमासादिष्वप्येवमेव द्रष्टव्यम् । तत्रापि हि काम्यचोदना यावज्जीवचोदना च । 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत', 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इति च । दाक्षायणग्रहणं काम्यसंबन्धाशङ्कया । आग्रयणेष्ट्यामपि शाखान्तरादयाथाकाम्यम् । स्वशाखायामपि च नवं प्रकृत्याऽऽमनन्ति— 'अनयोर्वा अयं द्यावापृथिव्यो रसोऽस्य रसस्य हुत्वा देवेभ्योऽथेममश्नाम' ( शब्रा. २।४।३।१ ) इति । अशनस्य च नित्यकर्तव्यता । न च देवताभ्यो हुत्वाऽसौ नित्यकर्तव्यता क्रियते । अतो नित्यता गम्यते । अपि च प्रायश्चित्तविधानमत्र भवति— 'अनिष्ट्वाऽऽग्रयणं न नवस्याश्नीयात्' इति । तस्मादाग्रयणेऽपि न याथाकाम्यम् । पशावप्येवम् । निरूढं प्रकृत्याऽऽमनन्ति— 'तं वै संवत्सरो नानीजानमतीयात्' इति । कर्क.

वैगुण्येऽपि नित्यकर्मणां फलवत्ता

**विगुणे फलनिर्वृत्तिरङ्गप्रधानभेदात् ॥**

द्विप्रकारं कर्म नित्यं काम्यं च । तत्र नित्यं प्रकृत्य चिन्त्यते । किं सगुणमेव कर्तव्यमुत निर्गुणमपीति । गुणाम्नानात् सगुणमेवेत्येवं प्राप्ते आह— विगुण इति । विगुणेऽपि नित्ये कर्मणि फलाभिनिर्वृत्तिर्भवति । कुत एतत् ? यतः अङ्गानि प्रधानानि च भिन्नानि । इह 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इति दर्शपूर्णमासयोरेव कर्तव्यतोच्यते, नाङ्गानाम् । अतश्च प्रधाने कृते यत्फलं तत्सिद्धं भवत्येव । अतश्च धात्वर्थमात्रमेव कर्तव्यम् । न तेनान्यस्य कर्तव्यता । यत्र च साधनत्वेन यागस्य श्रवणं तत्र साध्यापेक्षा भवतीतिकर्तव्यतापेक्षा च । न चात्र साधनत्वम् । तस्माद्विगुणादपि फलं भवति । अङ्गाम्नानं तर्हि किमर्थम् ? काम्यप्रयोगविषयमित्यदोषः । कर्क.

**प्रायश्चित्तविधानाच्च ॥**

विगुणेऽपि नित्ये प्रायश्चित्तं विधीयते— 'भिन्ने जुहोति' 'स्कन्ने जुहोति' इत्येवमादि । यदि हि विगुणं फलं न

साधयेत्, प्रायश्चित्तविधानवैयर्थ्यप्रसङ्गः स्यात् । कर्क.

**तथा च दृष्टम् ॥**

विगुणमपि नित्यं कर्म यथाकथंचित्परिसमाप्यमानम् । 'यत्पयो न स्यात् केन जुहुया इति । व्रीहियवाभ्यामिति । यद् व्रीहियवौ न स्यातां केन जुहुया इति । या अन्या ओषधयः ' इत्येवमाद्यभिधाय पुनरुपसंहरति ' न वा इह तर्हि किं चनाऽऽसीदथैतदहूयतैव सत्यं श्रद्धायाम् ' ( शब्रा. ११।३।१।३–४ ) इति यथाकथंचित्परिसमाप्तिं दर्शयति । न चैते विधयः, विधिविभक्तेरभावात् । तस्माद्विगुणमपि नित्यं फलं साधयत्येव । अपरेऽन्यथा व्याचक्षते— गुणाम्नानसामर्थ्यान्नित्यं सगुणमेव कर्तव्यम् । सूत्रव्याख्या च— विगुणेऽपि नित्ये फलाभिनिर्वृत्तिर्भवत्येव । यदि नाम दैवान्मानुषाद्वा प्रतिबलात्सर्वाङ्गोपसंहारो न शक्यते कर्तुम्, कतिपयाङ्गोपसंहारेणापि कर्तव्यमेव । यथा शक्नुयादिप्युपपदार्थोऽत्र परिकल्प्यते । सर्वदा कर्तव्यं सगुणं चेत्यशक्यमेव । अवश्यंभावि हि दैवान्मानुषाद्वा प्रतिबलाद्वैगुण्यमिति । एवं च कृत्वा विकृतौ नित्ये कर्मणि प्राकृताङ्गानुवृत्तिर्दृश्यते । यथा वरुणप्रघासेषु — ' अथाध्वर्युरेवाहाग्निमग्नीत्संमृड्ढीत्यसंमृष्टमेव भवति संप्रेषितम् । अथ प्रतिप्रस्थाता प्रतिपरैति, स पत्नीमुदानेष्यन् ' ( शब्रा. २।५।२।१९–२० ) इति पत्न्यानयनविधिपरे वाक्ये अग्निसंमार्गप्रैषं दर्शयति । तथा महापितृयज्ञे ' स यज्ञोपवीती भूत्वाऽऽज्यानि गृह्णाति ' इत्येवं विधिपरे वाक्ये लेखाकरणहरणोत्तरपरिग्रहादीन् पदार्थाननुवदति । यदि हि नित्यस्याङ्गसंबन्धो न स्यात् लेखाकरणाद्यनुवादो न स्यात्, भवति च, तस्मान्नित्यानामप्यङ्गसंबन्धः । पशौ च दर्शयति । 'स उत्तरमाघारमाघार्यासंस्पर्शयन् स्रुचौ पर्येत्य जुह्वा पशुं समनक्ति ' इति पशुसमञ्जनविधिपरे वाक्ये उत्तराघारं दर्शयति । यच्चोच्यते, न यागेनान्यत् साध्यते इति । आम्नानसामर्थ्यादुपात्तदुरितक्षयो वा उत्पित्सुदुरितप्रतिबन्धो वा भवत्येव । तस्मान्नित्येऽप्यङ्गसंबन्धः । कर्क.

काम्यस्य सगुणस्यैव फलवत्त्वम्

**न श्रुतिलक्षणत्वात् ॥**

अथ काम्ये कर्मणि कथम् ? काम्ये विगुणेऽपि फलाभिनिर्वृत्तिर्भवत्येव । तत्रापि चाङ्गानि प्रधानानि भिन्नानि । प्रायश्चित्तविधानं भवति, अश्वमेधे अश्वं प्रकृत्य ' अथ यदि स्रामो विन्देत् ' ' अथ यद्यक्ष्यामयो विन्देत् ' ( शब्रा. १३।३।८।२,४ ) इत्येवमादि । यदि विगुणं काम्यं फलं न साधयेत्प्रायश्चित्तविधानमनर्थकं स्यात् । तथा च दृष्टम् । दृश्यते च विगुणेऽपि काम्ये फलम् । वृष्टिकामेष्टिः कारीरी द्व्यहकालतया समाम्नाता शाखान्तरे । तां प्रकृत्य श्रूयते— ' यदि वर्षेत्तावत्येव जुहुयात् ' इति । यद्यपरिसमाप्तायामेवेष्ट्यां वृष्टिर्भवति तस्मिन्नेव काले परिसमापयेत्, न द्व्यहकालतामाद्रियेत । यदि हि विगुणमपि काम्यं फलं न साधयेत् कथं वृष्टिर्दृश्यते । तस्माद्विगुणेऽपि काम्येऽस्ति फलमित्येवं प्राप्ते आह—नेति । नैतदेवं विगुणेऽपि काम्ये फलमिति । सगुणे हि श्रुत्या लक्षितम् । ' सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः ' इति ब्रह्मवर्चसं साध्यं यागश्च साधनम् । सेतिकर्तव्यताकं च साधनं साध्ये व्याप्रियते । तेनेतिकर्तव्यतासंबन्धः । तस्मात्सगुणमेव काम्यं फलं साधयतीति । नित्ये पुनः सर्वदा कर्तव्यत्वादवश्यंभाविनि वैगुण्ये उपपदार्थः परिकल्प्यते यथा शक्नुयादिति । काम्येषु पुनरवश्यंकर्तव्यत्वात्( ? त्वाभावात् ) नैतत्परिकल्प्यते । कर्क.

**प्रायश्चित्तं तत्कालम् ॥**

प्रायश्चित्तविधानं तर्हि किमर्थम्—प्रायश्चित्तमिति । काम्यमपि कर्म प्रक्रान्तं परिसमापनीयमेव । फलाभावेऽपि प्रायश्चित्तानुष्ठानमर्थवत् । तत्रापि अन्यत्फलं दोषपरिहारः । तेनार्थवत्प्रायश्चित्तम् । कर्क.

**दृष्टे तत्परिमाणम् ॥**

अथ यद्वृष्टिदर्शनमुक्तं न तदिष्टिफलम् । ऋतुस्वभावजनिताया वृष्टेस्तद्दर्शनम् । तत्र तावत्प्रमाणता कर्मण उच्यते । कर्क.

मन्त्रप्रकाराः

**ऋचो यजूंषि सामानि निगदा मन्त्राः ॥**

वाक्यप्रकरणाभ्यां शेषविनियोग उक्तः, इदानीं मन्त्राणां लिङ्गेन विनियोग उच्यते । ते चाध्येतृप्रसिद्धा एव मन्त्राः ।ताननुवदति— ऋच इति । नियताक्षरपादावसाना ऋगित्युच्यते । अनियताक्षरपादावसानं यजुः । प्रगीतं मन्त्रवाक्यं सामेत्युच्यते । तत्र विशेषणं गीतिः विशेष्याण्यक्षराणि । न चागृहीतविशेषणा विशेषे( ? ष्ये ) बुद्धिरुत्पद्यते । अतः पूर्वप्रतीतत्वाद्गीतिरेव सामशब्देनाभिलक्ष्यते । ननु चैवं रथन्तरादयः शब्दा गीतौ वर्तन्ते । तत्र 'रथन्तरेण स्तुवीत' 'बृहता स्तुवीत' इति च गुणगुण्यभिधानं स्तुतिः । सा साम्नो( ? म्ना ) नोपपद्यते । तत्रोच्यते । स्वयमेव गीतेः स्तुत्यनभिधायकत्वात् ऋगक्षराभिव्यक्तिद्वारेण स्तुत्यभिनिर्वृत्त्यर्थतेति । एवं च कृत्वा 'ऋच्यध्यूढं साम गीयते' 'प्रजापतिहृदयमनृचं गीयते' इत्येवमादीन्युपपन्नार्थानि भवन्ति । एवं च ऋचो मन्त्रत्वे उक्ते साम्नो वक्तव्यम् । निगदाः प्रैषा इत्यनर्थान्तरम् । एतच्चतुष्टयं मन्त्रशब्देनाभिधीयते । कर्क.

यजुर्वाक्यलक्षणम्

**तेषां वाक्यं निराकाङ्क्षम् ॥**

तेषामिति सर्वनामशब्देन यजुषां परामर्शः । ऋचः सामानि च वाक्यव्यवस्थारूपाण्येव प्रायशः पठ्यन्ते । तेन यजुःषु कियन्मात्रं वाक्यमित्यपरिज्ञाते आह— तेषां वाक्यं निराकाङ्क्षम् । यावति पदसमूहे उच्चरिते पदान्तराकाङ्क्षा न भवति तावदेकं वाक्यम्, नैरुत्सुक्यात् । यथा 'देवस्य त्वा' इत्येवमादि 'अग्नये जुष्टं गृह्णामि' इत्येवमन्तम् । कर्क.

अध्याहारेणानुषङ्गेण वाऽऽकाङ्क्षापूरणम्

**मिथः संबद्धम् ॥**

यत्र पुनः श्रूयमाणैः पदैरनैरुत्सुक्यम् । यथा 'कर्मणे वाम्' 'वेषाय वाम्' इति । तत्राध्याहृत्यापि क्रियापदं नैरुत्सुक्यं कर्तव्यमित्यत आह— मिथ इति । यत्तैः पदैः सह संबध्यते तदध्याहर्तव्यम् । न हि क्रियापदशून्यं पदजातमर्थाभिधायकं भवति । अथवा अनुषङ्गार्थमिदमुच्यते । यथा दर्शपौर्णमासयोः 'अस्मादन्नात्' 'अस्यै प्रतिष्ठायै' इति अधस्तनमन्त्रवाक्यात् 'ततो निर्भक्तः' इत्यत्रानुषज्यते । कर्क.

अविनियुक्तमन्त्राणां लिङ्गप्रमाणाद्विनियोगः

**तेषामारम्भेऽर्थतो व्यवस्था तद्वचनत्वात् ॥**

तेषां मन्त्राणां प्रकरणसमधीतानामारम्भे अर्थतो व्यवस्था भवति । यो यत्पदार्थाभिधानसमर्थो मन्त्रः स तत्र विनियुज्यते । कुत एतत् । तद्वचनत्वात् । तमेवार्थं वक्तुं शक्नोति नार्थान्तरम् । यथा 'उरु प्रथा उरु प्रथस्व' इति प्रथनम् । ननु च प्रतिपदार्थं मन्त्रविनियोग उक्तः । सत्यमेतत् । अनुक्तसंग्रहार्थत्वाददोषः । यथा 'प्रवत्स्यन् सर्वान् नयेति प्रतिमन्त्रम्' । कर्क.

मन्त्रान्तेन कर्मादेः संयोगः

**मन्त्रान्तैः कर्मादिः सांनिपात्योऽभिधानात् ॥**

कर्मणि प्रयुज्यमानानां मन्त्राणां मन्त्रान्तस्य कर्मादेश्च संनिपातः संलग्नता कर्तव्या । कुत एतत् ? अभिधानात् । अभिहितो मन्त्रः कर्माभिधातुं शक्नोति । ततश्च तदनुष्ठीयते । कर्क.

**अनियमं वात्स्यः ॥**

वात्स्य आचार्योऽनियमं मेने । आदौ वा मन्त्रमुक्त्वा कर्मानुष्ठानं क्रियते । कृते वा कर्मणि मन्त्रवचनमिति । एवमपि हि कर्माभिधायकत्वं मन्त्रस्य भवति । कर्क.

**आदिं त्वाचार्याः ॥**

तुशब्दः पक्षव्यावृत्तौ । नानियमः । मन्त्रान्ते एव कर्मादिमाचार्या इच्छन्ति । यत्कारणं मन्त्रेण स्मृतं कर्म कर्तव्यम् । मन्त्राम्नानसामर्थ्यादेवावगम्यते । एवं दृष्टार्थता भवति । इतरथा अदृष्टं परिकल्प्यते । तच्च नेष्यते दृष्टे सति । कर्क.

मन्त्रादिग्रहणं समस्तमन्त्रग्राहकम्

**त आद्युक्ताः ॥**

त एते मन्त्रा आदिमात्रे उक्ते सति समस्ताः प्रयोक्तव्याः । कर्क.

परमन्त्रादिना पूर्वमन्त्रावसानबोधः

**परादिना पूर्वान्तः ॥**

परस्य मन्त्रस्याऽऽदिना पूर्वस्यान्तः प्रतिपत्तव्यः । ननु च वाक्यलक्षणेनैव तत्सिद्धं किमर्थं पुनरुच्यते ? वाक्यसमुच्चयविधानार्थतयेत्यदोषः । यथा 'विश्वेषां देवानां भागधेयीः स्थ' इत्यत्र 'अमूर्या उप सूर्ये' (शुसं. ६।२४) इत्येवमादि प्रयुज्यते । कर्क.

यजुषामुपांशुत्वम्

**उपांशु प्रयोगः श्रुतेः ॥**

शाखान्तरे 'उच्चैर्ऋचा क्रियत उच्चैः साम्नोपांशु यजुषा' इति यजुषामेवोपांशुत्वम् । वेदोपक्रमाणि चैतानि वचनानि वेदोपसंहाराणि च । तेन ऋगादीनां वेदोपलक्षणार्थता । ऋग्वेदविहितं सामवेदविहितं वोच्चैर्वक्तव्यम्, उपांशु याजुर्वैदिकमिति । कर्क.

संप्रैषाणां नोपांशुत्वम्

**न संप्रैषाः ॥**

याजुर्वैदिकत्वेऽपि सति संप्रैषा नोपांशु भवन्ति, संबोधनार्थत्वात्तेषाम् । कर्क.

बर्हिःशब्दो जातिनिमित्तकः

**कौशं बर्हिः ॥**

इदं विचार्यते । बर्हिःशब्दः किं संस्कारनिमित्त उत जातिनिमित्त इति । संस्कारनिमित्त इति ब्रूमः । संस्कृतेषु तृणेषु प्रयोक्तारो बर्हिःशब्दं प्रयुञ्जते । नन्वसंस्कृतेष्वपि प्रयोगो दृश्यते । 'बर्हिरादाय गावो गताः' इति प्रदेशान्तरे वक्तारो वदन्ति । तत्सादृश्यात्संप्रयोगः । इत्येवं प्राप्ते आह- कौशमिति । कुशा एव बर्हिःशब्देनोच्यन्ते । न संस्कारात् । कुत एतत् ? असंस्कृतेष्वपि प्रयोगदर्शनात्- 'उपक्षीणानि तृणानि, बर्हिर्गावश्चरन्ति' । सादृश्यात्प्रयोग इति चेत्, न, इतरेतराश्रयदोषप्रसङ्गात् । बर्हिःशब्देनोद्दिश्य संस्कारविधानम्, संस्कारनिमित्तश्च बर्हिःशब्द इति । यदि संस्कारनिमित्तो बर्हिःशब्दस्तदा सादृश्याज्जातौ प्रयोगः । यदि जातिनिमित्तस्तदा बर्हिःशब्देनोद्दिश्य संस्कारविधानम् । जातिनिमित्तत्वे पुनरेष दोषो न भवति । तस्माज्जातिनिमित्तो बर्हिःशब्द इति । चिन्तायाः प्रयोजनम्- 'बर्हिषा यूपावटमवस्तृणाति' इत्यत्र संस्कारा न कर्तव्याः । कर्क.

सामर्थ्यात्परिमाणनिर्णयः

**अर्थात्परिमाणम् ॥**

यत्र परिमाणविशेषो न श्रूयते तत्र सामर्थ्यात्परिमाणं भवति । यथा वसोर्धारायामर्थात्परिमाणबाधः, अर्थबाधो मा भूदिति । न ह्यङ्गुष्ठपर्ववृत्तपुष्करस्रुवेण वसोर्धाराहोमः संभवति । कर्क.

आङा अन्तशब्देन च संबद्धस्य शब्दस्य कर्मवाचकत्वम्

**आऽमुष्मादिति कर्मसु तच्च ॥**

यत्राऽऽङ्प्रयोगः कर्मविषयः । यथा 'आ प्रयाजेभ्यः' 'आ इडायाः' इति च, तत्र तच्च कर्म प्रतिपत्तव्यं यदाङाऽभिसंबध्यते । अभिविधौ कर्मविषय आङः प्रयोग इत्यर्थः । कर्क.

**अन्तवचने च ॥**

तच्च कर्म प्रतिपत्तव्यम् । यथा 'शंय्वन्तं भवति' इति । कर्क.

अनारभ्याधीतस्य प्रकृतौ निवेशः

**अप्रकरणोत्पत्तिरनारभ्यवाद आश्रयित्वात्सर्वगुणः ॥**

यो न कस्यचित्प्रकरणे उत्पन्नः, न चाऽऽरभ्य किंचिच्छ्रूयते । वाक्यप्रकरणाभ्यामङ्गभावं नोपयातीत्यर्थः । स सर्वगुणो भवति । प्रकृत्यर्थो विकृत्यर्थश्च । यथा 'यस्य खादिरः स्रुवो भवति' इति अनारभ्यविहिता स्रुवे खादिरता प्रकृत्यर्था विकृत्यर्था च । कुत एतत् ? आश्रयित्वात् । स्रुवाश्रया हि खादिरता । स्रुवश्च प्रकृतौ विकृतौ च विद्यते । कर्क.

**प्रकरणे चाविशेषात् ॥**

तस्मादुभयार्थतेत्येवं प्राप्ते आह— प्रकरण इति। चशब्दो वाशब्दार्थे। वाशब्दश्चावधारणे। प्रकरणे एव निवेशः। प्रकरणशब्देन प्रक्रियन्ते यस्मिन् धर्मा इति प्रकृतिरुच्यते। तत्रानारभ्यविधेर्निवेशः, न विकृताविति। कुत एतत्? अविशेषात्। अविशेषेण हि प्रकृतितो विकृतौ चोदको धर्मान्प्रापयति। तत्रानारभ्यविधेरपि प्रापितत्वात्। यद्यनारभ्यविधिः पुनः प्रापयेत्, द्विरुक्ततादोषः स्यात्। न हि प्राप्तस्य सतः प्राप्तिसंभवः। स्यादेतदेवम्। अनारभ्यविधिनैव पूर्वं प्रापिते खादिरत्वे पश्चाच्चोदकस्तद्वर्जमङ्गानि प्रापयिष्यति, एवं द्विरुक्तता दोषो न भवतीति। नैतदेवम्। वैकृतं हि प्रधानं चोदनासारूप्यात्प्रकृतिमपेक्षते, नानारभ्यविधिम्, चोदनासारूप्याभावात्। कर्क.

**दर्शनाच्च ॥**

एवं च कृत्वा विकृतौ प्रयाजादीनां दर्शनमुपपद्यते। 'तस्यै प्रयाजेषु तायमानेषु ब्राह्मणो वीणागाथी दक्षिणत उत्तरमन्द्रामुदाघ्नंस्तिस्रः स्वयंभृता गाथा गायति' इति गाथागानविधिपरे वाक्ये प्रयाजान्दर्शयति। ते च प्रकृतिसव्यपेक्षत्वे भवन्ति विकृतौ, नानारभ्यविधिसव्यपेक्षायाम् (? क्षतायाम्)। तस्मादनारभ्यवादस्य प्रकृतिगामित्वम्। रूपोदाहरणं खादिरत्वम्। अन्येऽप्येवमादयः। कार्यं तु विचारस्य— ताण्डके काम्याः प्रतिपत्कल्पा अनारभ्याधीताः ते यदि प्रकृतिविकृत्यर्थास्ततो विकृतावपि प्रयोगः, अनारभ्यवादानां तु प्रकृत्यर्थत्वे विकृतावप्रयोगः। न हि विकृतिरनारभ्यवादमपेक्षते, प्रकृतिसव्यपेक्षत्वात्। कर्क.

पात्रप्रकृतिदारूणि

**वैकङ्कतानि पात्राणि ॥**

भवन्तीति सूत्रशेषः। कर्क.

**खादिरः स्रुवः ॥**

स्यात्। कर्क.

**पालाशी जुहूर्भवति ॥**

† **आश्वत्थ्युपभृत् ॥**

भवत्येव। कर्क.

**वारणान्यहोमसंयुक्तानि ॥**

यानि अहोमसंयुक्तानि तानि वारणानि भवन्ति। वैकङ्कतानि पारिशेष्याद्धोमसंयुक्तानि। कर्क.

पात्रप्रमाणानि

**बाहुमात्र्यः स्रुचः पाणिमात्रपुष्करास्त्वग्बिला हंसमुखप्रसेका मूलदण्डा भवन्ति ॥**

बाहुप्रमाणाः स्रुचः कर्तव्याः। प्रसृताङ्गुलिः पाणिरा मणिबन्धनाद्धस्त उच्यते। तन्मात्रं पुष्करं भवति। कर्क.

[१] **अरत्निमात्रः स्रुवोऽङ्गुष्ठपर्ववृत्तपुष्करः ॥**

अङ्गुष्ठपर्वणो यावद्वृत्तं तावत्प्रमाणं पुष्करं भवति। कर्क.

अनारब्धकाम्येषु न प्रतिनिधिः, नित्येषु आरब्धकाम्येषु च प्रतिनिधिग्रहणम्

[२] **चोदिताभावेऽनारम्भस्तत्सिद्धित्वात्तस्य ॥**

इदानीमिदं विचार्यते। श्रुतद्रव्याभावे किं द्रव्यान्तरेण कर्तव्यम्, उत नेति? किं तावत्प्राप्तम्। सूत्रेणैव पक्षः— चोदिताभाव इति। चोदितस्य द्रव्यस्याभावे नाऽऽरब्धव्यं तत्कर्म। कुत एतत्। तदेव हि साधनं तस्य कर्मणः श्रुतम्। अतो द्रव्यान्यत्वे कर्मणोऽन्यत्वं भवति। द्रव्यदेवतं हि कर्मणो रूपमिति। कर्क.

**नियते सामान्यतः प्रतिनिधिः स्यात् ॥**

सत्यमेतदेवं काम्ये। अथ नित्ये कथमिति। नित्येऽपि श्रुतद्रव्याभावे कर्मान्तरबुद्ध्या अनारम्भे प्राप्ते आह—

† आदर्शपुस्तके इदं सूत्रं प्रमादात् 'पालाशी जुहूर्भवति' इत्यस्य व्याख्यानत्वेन मुद्रितम्। अतस्तस्य पृथक् सूत्राङ्को नास्ति।

(१) काश्रौ. १।८२ ; संदी. ३१.

(२) काश्रौ. १।८६–९२, ९४, ९६, ९९–१८८, १२०–१३१, १४९–१५३.

नियत इति । नित्ये कर्मणि श्रुतद्रव्याभावे प्रतिनिधिना आरब्धव्यं तत्कर्म श्रुतद्रव्यसदृशेन । कुत एतत् ? उच्यते । 'व्रीहिभिर्यजेत' इत्यत्र नियममात्रं व्रीहिश्रुतिः । न च नियमानुरोधेन यावज्जीवश्रुत्युपरोधः शक्यः कर्तुम् । अवश्यकर्तव्ये कर्मणि नियममात्रस्यैवानुपादानं युक्तरूपम् । तस्मात्प्रतिनिधिना तत्कर्म परिसमापनीयम् । यद्येवं कुतः श्रुतद्रव्यसामान्यत इत्युच्यते । 'व्रीहिभिर्यजेत' इत्यनेन व्रीहिजात्युपलक्षितानां व्यक्तिविशेषाणामङ्गभावो विहितो भवति । न हि व्रीहिजात्या अमूर्तत्वादष्टाकपालाभिनिर्वृत्तिः शक्यते कर्तुम् । न च व्यक्तिविशेषाणां जातिशब्दादृतेऽन्यद्वाचकमस्ति । तस्माद्व्यक्तिविशेषा एवात्राङ्गभूताः । तेन सदृशेषूपादीयमानेषु कियतामपि व्यक्तिविशेषाणामुपादानं कृतं भवति । तस्मात्साधूक्तं नियते सामान्यतः प्रतिनिधिः स्यादिति । कर्क.

**आरम्भान्नियमः ॥**

नित्ये प्रतिनिधिर्भवति । काम्येऽपि प्रक्रान्ते प्रतिनिधिर्भवत्येव । तदर्थमाह— आरम्भादिति । आरब्धं हि तत्कर्म । आरम्भश्च समाप्तेर्निमित्तम् । न च प्रतिनिधिद्रव्यमन्तरेण समाप्तिस्तस्य भवति । तस्मात्तत्रापि प्रतिनिधिर्भवत्येव । कर्क.

**दोषश्चासमाप्तौ स्यात्सामान्यात् ॥**

अपि च, प्रक्रान्तस्य काम्यस्यासमाप्तौ दोषो भवति । तदपि हि नित्यैः समानं भवति । यथैव नित्यस्याकरणे शिष्टविगर्हणम् । एवं काम्यस्यापि प्रक्रान्तस्य असमाप्तौ शिष्टविगर्हणम् । ननु च शिष्टविगर्हणं नाम को दोषोऽस्ति । अस्ति दोषो येन शिष्टा विगर्हन्ते । अथापि नाम नास्ति दोषः । शिष्टविगर्हणमेव दुष्टमिति । कर्क.

**दर्शनाच्च ॥**

दर्शयति च द्रव्यान्तरेण समाप्तिं 'यदि सोमं न विन्देत्पूतीकानभिषुणुयात्' इति । अभिषवेण च समाप्त्यभिधानम् । कर्क.

**अन्यार्थं दर्शनं न पुनर्ग्रहणात् ॥**

एवं दर्शने कृते तदाक्षिपति— अन्यार्थमिति । तत् दर्शनमन्यार्थं भवति यदन्यविधिपरे वाक्येऽन्यमर्थं ज्ञापयति । यथा कृष्णलहोमविधिपरे वाक्ये प्रयाजान्दर्शयति । न चेदमन्यार्थम् । कुत एतत् ? पुनर्ग्रहणात् । सोमाभावे सति पुनर्द्रव्यान्तरमन्यदत्र विधीयते । कर्क.

**अन्यार्थं पुनर्ग्रहणम् ॥**

एवं स्थिते सत्युच्यते— अन्यार्थमिति । पुनर्ग्रहणमेवेदमन्यार्थम् । कोऽन्योऽर्थ इति चेत्, सोमाभावे यागस्यावश्यकर्तव्यत्वात्सुसदृशद्रव्यप्राप्तौ विसदृशेषु अपि पूतीकेषु व्यापारो वाक्यस्य । द्रव्यमात्रं तु प्राप्तमेव येन विशेषो नियम्यते । तस्मात्समाप्तिदर्शनमेवेदमिति । कर्क.

प्रतिनिहितस्य श्रुतशब्देनाभिधानम्

**शब्देऽविप्रतिपत्तिः ॥**

इदानीमिदं विचार्यते । श्रुतद्रव्याभावे प्रतिनिहिते द्रव्यान्तरे छागाभावे मेषे किं श्रुतद्रव्यशब्देनोपलक्षणम्, उत प्रतिनिहितद्रव्यशब्देन ? इति । किं तावत्प्राप्तम् ? प्रतिनिहितशब्देनेति । शब्देन हि द्रव्यमभिधेयम् । न चाविपरिणतरूपः शक्नोति तदभिधातुम् । तस्माद्विपरिणाम इत्येवं प्राप्ते उच्यते— शब्द इति । प्रतिनिहिते द्रव्ये श्रुतद्रव्याभिधायिनि शब्दे अविप्रतिपत्तिः अविपरिणामः । अनूह इत्यर्थः । कुत एतत् ? प्रतिनिध्युपादानं हि श्रुतद्रव्यबुद्ध्या क्रियते, न तु द्रव्यान्तरबुद्ध्या । यत्र वचनेन द्रव्यान्तरं विधीयते । यथा 'नैवारं चरुं निर्वपेत्' इति, तत्र द्रव्यान्तरबुद्धिर्भवति । न चेह वचनमस्ति । तस्माद्भूयोऽवयवसामान्येन श्रुतद्रव्यमेवेदमिति कृत्वा प्रतिनिध्युपादानम् । अतः श्रुतद्रव्यशब्देनैवाभिधानम् । कर्क.

पृषदाज्यस्याऽऽज्यशब्देनाभिधानम्

**आज्ये चादर्शनात् ॥**

पृषदाज्ये तर्हि वाचनिकत्वाद्विपरिणामोऽस्त्वित्येवं प्राप्ते आह— आज्य इति । आज्ये चाविपरिणामः । कुत एतत् । अदर्शनाद्द्रव्यान्तरस्य । न ह्यत्र द्रव्या-

न्तरबुद्धया दध्युपादीयते । किं तर्हि आज्यसंस्काराय । तस्मिन्सति पृषद्गुणकमाज्यं भवति । यदप्युच्यते— 'द्वयं वा इदं सर्पिश्चैव दधि च' इति, तद्गुणभूतस्यैव दध्नः प्रशंसार्थम् । कर्क.

वैकल्पिकद्रव्यनाशे तत्सदृशस्यैव प्रतिनिधानम्, न वैकल्पिकद्रव्यान्तरग्रहणम्

**विकल्पे प्रवृत्तं कर्मान्तरत्वात् ॥**

अथ यत्र वैकल्पिकं द्रव्यमुपात्तं नष्टम् । यथा व्रीहिषु नष्टेषु किं व्रीहिसामान्येन प्रतिनिध्युपादानम्, उत श्रुतद्रव्यं यवा उपादेयाः ? श्रुतद्रव्याभावे सति प्रतिनिधिरिष्यते, न श्रुतद्रव्ये सतीति यवा उपादेया इति प्राप्ते आह— विकल्प इति । यस्मिन्विकल्पे यत्प्रवृत्तं द्रव्यं तत्सामान्येन प्रतिनिध्युपादानं कर्तव्यम् । न श्रुतद्रव्यमपि यवा उपादेयाः । किं कारणम् ? सर्वेषु वैकल्पिकेषु द्रव्येषु यजमानः स्वयमेवैकं साधनत्वेनाङ्गीकरोति । तत्र तदेव साधनं नान्यत् । अश्रुतसममेव हि तदिति । यदि तदप्युपादीयते, कर्मान्तरबुद्धिः स्यात् । न च सेष्यते । तस्मात्प्रक्रान्तद्रव्यसादृश्येन प्रतिनिध्युपादानमिति । कर्क.

प्रतिनिधिनाशे श्रुतस्यैवोपादानम्

**प्रतिनिधौ तत्कालात् ॥**

उक्तेन न्यायेन प्रतिनिहितद्रव्यनाशे तत्सामान्येन प्रतिनिध्युपादाने प्राप्ते आह— प्रतिनिधाविति । प्रतिनिधिद्रव्ये नष्टे न प्रतिनिधिसामान्येन प्रतिनिधिरुपादेयः । किं तर्हि ? श्रुतमेव द्रव्यम् । न तदभावे तत्सामान्येन प्रतिनिधिरुपादेयः । कुत एतत् ? तत्कालात् । स एव हि कालः प्रतिनिधेः यः श्रुतद्रव्याभावे इति । अतस्तस्मिन्नष्टे न तत्सामान्येन प्रतिनिधिरुपादातव्यः, श्रुतद्रव्यमेवोपादेयमिति । कर्क.

असमर्थश्रुतसद्भावेऽपि समर्थप्रतिनिधेरेव ग्रहणम्

**अर्थद्रव्यविरोधेऽर्थसामान्यं तत्परत्वात् ॥**

अथ यत्र श्रुतं द्रव्यमर्थाभिनिर्वृत्त्यसमर्थं विद्यते खदिरादि, अर्थाभिनिर्वृत्तिसमर्थं च प्रतिनिधिद्रव्यम् । श्रुतद्रव्ये अर्थाभावः, प्रतिनिधिद्रव्ये चार्थाभिनिर्वृत्तिसमर्थे श्रुतद्रव्याभावः । तत्र किं श्रुतद्रव्याभाव उतार्थाभावः ? तत्रैतदुच्यते— अर्थद्रव्येति । तस्मिन्नर्थद्रव्यविरोधे यदर्थाभिनिर्वृत्तिसमर्थं तदश्रुतमपि प्रतिनिधिद्रव्यमुपादेयम् । कुत एतत् ? अर्थाभिनिर्वृत्त्यर्थत्वाद्द्रव्यस्य । येनार्थो न निर्वर्त्यते तत् श्रुतमपि सदश्रुतसममेव । कर्क.

गुणद्रव्ययोर्विरोधे द्रव्यं बलीयः

**गुणद्रव्ययोर्द्रव्यं प्रधानयोगात् ॥**

अथ यत्र गुणद्रव्यविरोधस्तत्र कथम् । यथा 'कृष्णानां व्रीहीणां दर्विहोमः' इति । अकृष्णा व्रीहयः सन्ति कृष्णाश्च नीवाराः । तत्रैतदुच्यते— गुणेति । गुणद्रव्यविरोधे द्रव्यमुपादेयम्, न गुणः । तद्धि प्रधानेन युज्यते । कथम् ? येन युज्यमानं यागमभिनिर्वर्तयति । अतः संनिकृष्टं यागस्य द्रव्यम्, विप्रकृष्टो गुणः । अतः संनिकृष्टविप्रकृष्टयोश्च संनिकृष्टे संप्रत्ययः । कर्क.

**न समत्वात् ॥**

इत्येवं प्राप्ते आह— नेति । नैतदेवम्— द्रव्यमेव प्रधानेन युज्यते न गुण इति । सममेतदुभयम् । द्रव्यमपि प्रधानयोगि, आम्नानसामर्थ्याद्गुणोऽपि । कर्क.

**गुणानुग्रहात् ॥**

इत्येवं प्राप्त उच्यते— गुणेति । गुणेनानुगृहीतं द्रव्यमेव प्रधानयोगि । गुणस्तु विशेषणम्, विशेष्यं द्रव्यम् । विशेषणविशेष्ययोश्च विशेष्ये संप्रत्यय इति न सममेतत् । कर्क.

अङ्गक्रमः सप्रमाणः

**कर्मणामानुपूर्व्यं न युगपद्भावात् ॥**

अधुनेदं विचार्यते । यान्येकप्रधानसंबन्धीन्यङ्गकर्माणि, किं तेषां क्रमविशेषेणानुष्ठानम्, उतानियमः क्रमं प्रतीति ? किं तावत्प्राप्तम् ? सूत्रेणैवोपक्रमः— कर्मणामिति । अग्न्यन्वाधानादीनां कर्मणामानुपूर्व्यं नास्ति । यौगपद्येन हि तानि प्रधानापेक्षायां गृह्यन्ते । न चैषां

क्रमनियामकं किंचित्कारणमस्ति, येन क्रमोऽवसीयते। तेनैकत्वात्कर्तुरवश्यंभाविनि क्रमे यः कश्चित् क्रम आस्थेयः। कर्क.

**अर्थनिर्वृत्तेश्च ॥**

अपि चैवं सति सुखेनैवार्थाभिनिर्वृत्तिर्भवति। इतरथा क्रमविशेषे आश्रीयमाणे विस्तरेण स्यात्, तत्र प्रधानकालातिक्रमः स्यादिति। कर्क.

**स्याद्वाऽऽनुपूर्व्यनियमः श्रुत्यर्थक्रमेभ्यः ॥**

भवेद्वा क्रमनियमः, नानियमः। श्रुतिरेव क्वचित् क्रमस्य नियामिका भवति। यथा द्वादशाहे– 'तेषां गृहपतिः प्रथमो दीक्षते, अथ ब्रह्माणं दीक्षयत्यथोद्गातारम्' इत्येवमादि। ब्रह्मादीनां यजमानत्वात् प्राप्तासु दीक्षासु क्रमपरेयं श्रुतिः। तथा च– 'आश्विनो दशमो गृह्यते, तं तृतीयं जुहोति' इति। अर्थाच्च क्रमनियमो गम्यते। यथाऽवघातपेषणयोः। अन्यथा पुरोडाश एव न सिध्यति। पाठक्रमादपि च क्रमोऽवसातुं शक्यते द्विप्रकारात्, श्रुतिपाठात् मन्त्रपाठाच्च। विशिष्टेन क्रमेण पदार्थानां विधिपाठः। मन्त्राणामपि च तदभिधानक्रमो विशिष्ट एव। तत्रैतच्छक्यते वक्तुं येन क्रमेण पदार्थानामवगमस्तेनैवानुष्ठानमिति। इतरथा प्रतीतक्रमहानिरप्रतीतोपादानं चायुक्तमापद्यते। तस्मात्पाठक्रमादपि क्रमोऽवगम्यते। कर्क.

**प्राकृतं च विकृतौ ॥**

इतश्च पाठक्रमादपि क्रमोऽवसीयते, येन प्राकृतं पदार्थजातं विकृतौ चोदकप्राप्तमन्यपरे वाक्ये तेनैव क्रमेणानुवदति। पितृयज्ञे 'उत्तरेण परिग्रहेण परिगृह्य परिमृज्याऽऽह प्रोक्षणीरासादयेत्यासादयन्ति प्रोक्षणीरिध्मं बर्हिरुपसादयन्ति' एवमादि 'स यज्ञोपवीती भूत्वाऽऽज्यानि गृह्णाति' (शब्रा. २।६।१।१२) इति यज्ञोपवीतित्वविधिपरे प्राकृतं क्रमं दर्शयति। अपरेऽन्यथैतत्सूत्रं वर्णयन्ति। प्राकृतं च वैकृतं च यत्र कर्मणि ल्यबादेशसंयुक्तं भवति तत्र पूर्वं प्राकृतं कर्तव्यं पश्चाद्वैकृतम्। न्यायेन ह्यचरितार्थत्वात्पूर्वं वैकृतमेव भवति। सूत्रप्रस्थानात्पूर्वं प्राकृतमिति। सूत्रस्य च वेदवाक्यमूलताऽनुमीयते। एवं च कृत्वा पशौ 'उत्तराघारमाघार्य पशुं पूर्वं समनक्ति' (काश्रौ. ६।८५) इति। प्राकृतं च ल्यबादेशसंयुक्तं ध्रुवासमञ्जनम्। पशुसमञ्जनं तु वैकृतम्। तदचरितार्थत्वात्पूर्वमेव प्राप्नोति। तेन पूर्वग्रहणं कुर्वन्नाचार्योऽमुमर्थं ज्ञापयति– ध्रुवासमञ्जनमेवात्र पूर्वं मा भूदिति। तथा ज्योतिष्टोमे 'आसाद्य हवींषि संमृश्याप उपस्पृश्य राजानमादाय प्रपद्यते' इति श्रुतिः। तत्र सूत्रकारेणोक्तम्– 'आसाद्याऽऽज्यानि दक्षिणेन कृष्णाजिनमास्तीर्य तस्मिन्सोमं निदधाति' (काश्रौ. ८।१९५) इति। हविःसंमर्शनात्मालम्भनोदकोपस्पर्शनानि 'प्राकृतं च विकृतौ' इत्यनेनैव सिद्धानि।

कर्क.

पाठक्रमादर्थक्रमो बलीयान्

**विरोधेऽर्थस्तत्परत्वात् ॥**

अथ यत्र विरोधः पाठक्रमार्थक्रमयोस्तत्र कथमिति? यथा 'स वै पर्णशाखया वत्सानपाकरोति तामाच्छिनत्तीषे त्वेति' इति पाठः। अर्थस्तु नैवं निर्वर्त्यते। वत्सापाकरणायैव हि शाखाच्छेदनम्। तेन पाठक्रमार्थक्रमयोरर्थक्रमो बलीयान्। तेनोक्तमाचार्येण– 'विरोधेऽर्थस्तत्परत्वात्' इति। अर्थार्थो हि पाठः। कर्क.

पाठक्रमाच्छ्रौतक्रमो बलीयान्

**श्रुतिः क्रमादानुमानिकत्वात् ॥**

अथ यत्र श्रुतिपाठक्रमयोर्विरोधस्तत्र कथम्? यथा संस्थिते यज्ञे ब्राह्मणतर्पणं श्रुत्याऽभिहितम्। पाठात्तु प्राक् स्विष्टकृत्समनन्तरं प्राप्नोति। तत्रैतदाह–पाठक्रमाद् बलीयसी श्रुतिः, प्रत्यक्षत्वात् 'संस्थिते यज्ञे' इति। पाठक्रमे त्वनुमानम्– नूनमेतेनैव क्रमेणानुष्ठानं येनैवं पाठ इति।

कर्क.

चोदनापाठान्मन्त्रपाठो बलीयान्

**मन्त्रचोदनयोर्मन्त्रबलं प्रयोगित्वात् ॥**

अथ यत्र चोदनापाठस्य मन्त्रपाठस्य च विरोधस्तत्र कथम्? यथाऽऽज्याधिश्रयणे 'सोऽसावाज्यमधिश्रयतीषे

त्वेति' (इति) पठित्वा 'तत्पुनरुद्वासयत्यूर्जे त्वेति' (इति) चोदनापाठः । मन्त्रपाठे तु आज्याधिश्रयणमन्त्रप्रभृति 'घर्मोऽसि विश्वायुः' इत्येवमादीन् बहून् पदार्थानुपक्रम्योद्वासनमन्त्रः 'ऊर्जे त्वा' इति पठ्यते । यदि चोदनापाठो बलवान् अधिश्रयणसमनन्तरमुद्वासनम् । अथ मन्त्रपाठस्तत उपरिष्टादिति । किमत्र युक्तम् ? – मन्त्रेति । मन्त्रपाठचोदनापाठयोर्मन्त्रपाठो बलवान् । कर्मणि क्रियमाणे प्रयुज्यते ह्यसौ मन्त्रः । अतश्च संनिकृष्टो मन्त्रः, विप्रकृष्टश्चोदनापाठः । ततश्च संनिकृष्टविप्रकृष्टयोः संनिकृष्टे संप्रत्यय इति । कर्क.

**न समत्वात् ॥**

एवं प्राप्त आह– नेति । नैतदेवं मन्त्रपाठो बलवानिति । सममेतदुभयम् । कर्मणि प्रयुज्यते मन्त्रः । चोदना तु कर्मणः प्रवर्तिकैव । अपि च पूर्वं प्रवृत्ता चोदना, विहिते हि पदार्थे पश्चान्मन्त्रः प्रयुज्यते । कर्क.

**गुणानां तु भूयस्त्वात् ॥**

तुशब्दः पक्षव्यावृत्तौ । नैतत्समम् । मन्त्रपाठो बलवान् । स हि प्रयुज्यमान उत्तरं पदार्थं बुद्धौ संनिधापयति । नैवं चोदनापाठः । पदार्थस्मारको हि मन्त्रः । तस्मान्मन्त्रपाठो बलीयान् । कर्क.

पदार्थानुसमयकाण्डानुसमययोर्व्यवस्था

**तुल्यसमवाये सामान्यपूर्वमानुपूर्व्ययोगात् ॥**

क्रमनियमे कारणान्युक्तानि, तेषां च बलाबलम् । इदानीं विचार्यते– यत्र बहूनां प्रधानानां सह क्रिया तत्र किमेकैकस्य प्रधानस्य सकलं गुणकाण्डमावर्तयितव्यम्, उत प्रत्येकपदार्थेनानुसमयः ? इति । सकलं गुणकाण्डमेकैकस्य कर्तव्यमिति ब्रूमः । न पदार्थानुसमयः । पदार्थानुसमये हि प्रथमस्य पदार्थे कृते द्वितीयस्य तस्मिन्नेव क्रियमाणे पूर्वस्य व्यवधानं स्यात् । इत्येवं प्राप्त आह– तुल्येति । तुल्यानां प्रधानानां सह प्रयोगे सति सामान्यं पूर्वं कर्तव्यम् । समानः पदार्थः सर्वेषां पूर्वः पूर्वः कर्तव्यः । एवं क्रियमाणे आनुपूर्व्येण पदार्था युज्यन्ते तत्तन्मन्त्राश्च । इतरथोत्तरपदार्थाभिनिर्वृत्त्युत्तरकालं पूर्वेषु क्रियमाणेषु आनुपूर्व्ययोगो न स्यात् । तस्मात्पदार्थानुसमयः । अथवा आनुपूर्व्ययोगादिति सकले गुणकाण्डेऽपवृज्यमाने आनुपूर्व्या क्रमेण अयुक्तानि प्रधानानि भवन्ति । तत्र सहत्वप्रापकः प्रयोगवचनो बाध्यते । यत्पुनरुच्यते– पूर्वस्य पदार्थे कृते तस्मिन्नेव द्वितीयस्य क्रियमाणे व्यवधानमिति, तत्सहत्वविधानेन परिह्रियते । आह च– 'सकलं गुणकाण्डं चेदेकैकस्यापवृज्यते । सहत्वप्रापको नैव प्रयोगवचनो भवेत् ॥' । यतः पदार्थानुसमये क्रियमाणे क्रमश्चानुगृहीतो भवति सहत्वं चेति । एवं च सति सप्तदशसु प्राजापत्येषु षोडशभिः पदार्थैः समानजातीयैर्व्यवधानमिष्यते । अनेनैव मुख्यक्रमप्रावृत्तिकावुक्तावेव भवतः । कथम् ? प्रथमस्य नियोगं कृत्वा द्वितीयादीनां नियोगे कृते यदि प्रोक्षणं द्वितीयतृतीयप्रभृति क्रियते, सप्तदशभिरष्टादशभिर्वा पदार्थैः प्रथमस्य प्रोक्षणस्य व्यवधानं स्यात् । मुख्यक्रमेऽप्येवम् । काण्डक्रमं तु वक्ष्यत्युपरिष्टात् । कर्क.

**नैककर्मणि संबन्धात् ॥**

उक्तेन न्यायेन 'चतुरो मुष्टीन्निर्वपति' इत्यत्र मुष्टिनाऽनुसमये प्राप्ते, 'अष्टौ कपालान्युपदधाति' इत्यत्र च कपालानुसमये प्राप्त आह– नेति । निर्वापकर्मणि न मुष्टिनाऽनुसमयः कार्यः । चतुर्मुष्टिको निर्वाप एकः पदार्थः । पदार्थावयवो मुष्टिः । न चावयवेनानुसमयः कर्तव्यः । पदार्थेन ह्यनुसमयो भवति । पदार्थश्च कर्तव्यः । अवयवस्तु तादर्थ्येनैव क्रियते संख्या मुष्टयश्च । मुष्टीनां निर्वापसंबन्धः संख्यायाश्च, संख्यामुष्टिसंबन्धे वैरूप्यलक्षणवाक्यभेदप्रसङ्गात् । तस्मादुभयोर्निर्वापसंबन्धः । व्यवच्छेद्यव्यवच्छेदकभावस्त्वार्थः, न तु वाक्यावगतः । तेन वाक्यभेदो न भवति । कर्क.

**ग्रहणसादनावदानप्रदानेषु तु वचनात् ॥**

एवं सर्वत्र पदार्थानुसमये प्राप्त आह– ग्रहणेति । ग्रहणं सादनान्तम्, अवदानं प्रदानान्तं कर्तव्यम्, शाखान्तरात् । कर्क.

**न द्रव्यभेदे गुणयोगादिति वात्स्यः ॥**

एवं सर्वत्रावदाने प्रदानान्ते प्राप्त आह— नेति । द्रव्येषु भिन्नेषु देवतायामभिन्नायां नावदानं प्रदानान्तं कर्तव्यम् । यथा सप्तदशसु प्राजापत्येषु, स्विष्टकृद्यागे चानेकहविष्के । कुत एतत् ? सर्वाङ्गानां प्रधानं प्रति गुणत्वेन योगात् । तद्यदि अवदानं प्रदानान्तं क्रियते, गुणानुरोधेन प्रधानावृत्तिः कृता स्यात् । न चासाविष्यते । कर्क.

प्राप्तकालस्य नित्यस्य कर्मान्तरमध्येऽपि कर्तव्यता

**प्रवृत्ते नियतं दोषविशेषात् ॥**

इदमन्यद्विचार्यते— कस्मिंश्चित्कर्मणि प्रक्रान्ते अपरिसमाप्ते एव नित्यस्य काल आयाते किं नित्यं कर्तव्यम्, उत न कर्तव्यम् ? इति । व्यवधानान्न कर्तव्यमित्येवं प्राप्त आह— प्रवृत्त इति । प्रवृत्ते कर्मणि नियतस्य काल आयाते नियतमेव कर्तव्यम् । अकरणे हि दोषः स्यात् । ननु पूर्वस्यापि व्यवधाने दोष एव । सत्यमेवम् । अत्र तु विशिष्टतरो दोषः प्रधानस्यैवाक्रियेति । तत्र गुणभूतानां पदार्थानां व्यवधानमात्रम् । अपि च, असंबन्धेन व्यवधानेऽप्यदोषः । तस्मान्नियतमेव तावत्कर्तव्यम् । कर्क.

प्रधानकर्मणामनियतक्रमत्वम्

**अनियमः फलसंयुक्तेषु ॥**

अग्निहोत्रादीन्युदाहृत्य चिन्त्यते— किं पाठक्रमेणैषामनुष्ठानम्, उतानियमः क्रमं प्रति ? इति । पाठक्रमेणानुष्ठानमिति ब्रूमः । पाठो हि नियामकः क्रमस्येत्युक्तम् । एवं प्राप्त आह— अनियम इति । प्रधानकर्मसु क्रमं प्रत्यनियमः । कानिचिन्नियतकालान्येव पठ्यन्ते । कानिचित्कामनया क्रियन्ते । न चैषां परस्परतः संबन्धोऽस्ति । यथाऽङ्गकर्मणामेकप्रधानसंबन्धः । यस्यैव निमित्तमायातं तदेव कर्तव्यम् । कर्क.

**क्रमो विध्यर्थः कर्मण्यसंभवात् ॥**

पाठक्रमस्तर्हि किमर्थः ? — क्रमो विध्यर्थ इति । विधानार्थः क्रमो नानुष्ठानार्थः, सर्वस्मात्परे कर्मण्यसंभवात् । मरणकामस्यासौ विहितः, ततोऽनुष्ठानक्रमस्यासंभव इति । कर्क.

अवत्तनाशे हविरन्तरस्योत्पादनम्

**अवत्तनाशेऽन्यद्गुणानुग्रहात् ॥**

अवत्तस्यावदानस्य नाशे किं हविरन्तरमुत्पाद्यते, उतान्यत्तत एवावदीयते ? किं तावत्प्राप्तम् ? सूत्रेणैव पक्षः— अवत्तनाशे इति । अवत्तनाशे अन्यद्धविरुत्पादयितव्यम् । कुत एतत् ? गुणानुग्रहात् । एवं गुणानुग्रहः कृतो भवति । इतरथा गुणहीनेन यागः कृतः स्यात् । ये पूर्वस्मिन् हविषि गुणाः कृतास्ते ह्यवदाननिष्ठास्तद्विनाशाच्च विनाशमुपगताः, तस्मात् गुणहीनं तत् । न च गुणहीनेन याग इष्यते । कर्क.

**न पूर्वशेषात् ॥**

एवं प्राप्ते आह— नेति । नैतदेवं हविरन्तरमुत्पादयितव्यम् । यतः पूर्वस्यैव हविषः संस्कृतस्य शेषो विद्यते । ननु ह्यवदानविनाशेन गुणविनाशात् संस्कारहीनं तदिति । नेत्युच्यते । उपभोगेन हि संस्काराणामपवर्गो भवति । न चोपभुक्तास्ते, प्रक्षेपाभावात् । तस्मात्तत एवावदेयम् । कर्क.

**अचोदितत्वाच्च ॥**

न चैवंविधा चोदनाऽस्ति— अवदाननाशे हविरन्तरोत्पत्तिः कार्येति । अतस्तत एवावदेयम् । कर्क.

**स्विष्टकृद्वदानुपूर्व्ययोगात् ॥**

अपि च, तत एवावदीयमाने स्विष्टकृद्वदेतद्धविर्भवति । स स्विष्टकृद्वद्वतीत्यर्थः । प्रधानावदानसमनन्तरं हि स्विष्टकृदित्यर्थवदवदानं भवति । यदि तदेव न गृह्यते स्विष्टकृदर्थमपि ततो न गृह्यते । ततो हविष उत्पत्तिरनर्थिकैव स्यात् । न च सेष्यते । कर्क.

**गुणहानौ तु शेषभावात् ॥**

इत्येवं प्राप्ते आह— गुणहानाविति । तुशब्दः पक्षव्यावृत्तौ । न तत एव पुनरवदेयम् । गुणहीनं हि तदित्युक्तम् । एवं ये तत्र संस्कारास्ते ह्यवदाननिष्ठास्तद्विनाशाच्च विनाशमुपगताः । तस्मात्संस्कारहीनत्वान्

ततोऽवदेयम् । अपि च 'मध्यात् पूर्वार्धाच्चावद्यति' इति श्रुतिः । तदभावाच्च गुणहीनमेव तदिति । तस्माद्धविरन्तरोत्पत्तिः कार्येति । आह च– 'संस्काराणां पुरोडाशे ह्यवदानं प्रयोजकम् । तद्विनाशाच्च नष्टास्ते नावदेयमतस्ततः ॥' । अपि च 'गृहीतौ मध्यपूर्वार्धौ तौ च नष्टावुभावपि । अतः शेषस्य शेषत्वात्प्रधानत्वं न युज्यते ॥' । कर्क.

देवतादीनामप्रतिनिधेयत्वम्

**न देवताग्निशब्दक्रियाः परार्थत्वात् ॥**

नियते सामान्यतः प्रतिनिधिः स्यादित्युक्तमधस्तात् । तेन देवतादीनामपि प्रतिनिधाने प्राप्ते आह–नेति । न प्रतिनिधेयान्येतानि । न ह्येतानि प्रतिनिधीयमानानि यदर्थं प्रतिनिधीयन्ते तत्कार्यं कुर्वन्ति । देवतायास्तावत्– ऐन्द्रयागे तदस्मरणे यद्यग्निः प्रतिनिधीयते, न तत्कार्यं करोति । ऐन्द्रयागनिबन्धनं यदपूर्वं न तदाग्नेयेन साध्यते । अग्नेरप्याहवनीयादेरभावे यद्यग्न्यन्तरं प्रतिनिधीयते, नाऽऽहवनीयकार्यं करोति । अन्यद्धि अदृष्टमाहवनीयस्याधिकरणत्वे अन्यदग्न्यन्तराधिकरणत्वे इति । शब्दो मन्त्रः । सोऽपि मन्त्रान्तरस्य कार्ये न वर्तते । न हि पेषणमन्त्रः प्रथनं प्रकाशयति । क्रिया द्विप्रकारा– अदृष्टार्था दृष्टार्था च । सा च प्रतिनिधीयमाना क्रियान्तरकार्यं न करोति । न हि पेषणमवघातकार्ये वर्तते । अदृष्टार्थायामपि क्रियायामभिधीयते– न हि प्रयाजा अनुयाजकार्ये वर्तन्ते, न चानुयाजाः प्रयाजानाम् । प्रतिनियतानि ह्यदृष्टानीति । कर्क.

**कामं देवताम् ॥**

योऽग्निशब्दक्रियाः प्रतिनिधत्ते स कामं देवतामपि प्रतिनिदध्यात् । अग्निशब्दादीनामप्रतिनिधेयत्वार्थमिदमुक्तम् । येन देवता प्रतिनिधातुं नैव शक्यते । न ह्याग्नेये इन्द्रस्य देवतात्वम् । चोदनालक्षणं हि तत् । तेनान्यत्रान्या देवतैव न भवति, अचोदितत्वात् ।

कर्क.

**प्रतिषिद्धं प्रत्यवायात् ॥**

निवर्तते । यत्प्रतिषिद्धं न तत्प्रतिनिधेयम् । यथा– श्यामाकचरौ कोद्रववरटाः, मौद्गे चरौ माषा इति । प्रतिनिधित्वेन हि निषेधो भवति– 'अयज्ञिया वै कोद्रववरटाः, अयज्ञिया माषाः' इति । प्रतिनिधित्वेनायं प्रतिषेधः । प्रतिषेधविध्यतिक्रमे च प्रत्यवायः । कर्क.

स्वामिनः प्रतिनिधेयत्वाप्रतिनिधेयत्वयोर्व्यवस्था

**स्वामी फलयोगात् ॥**

स्वामी यजमानः । यः स्वद्रव्यपरित्यागेन फलं साधयति तस्य यद्यन्यः प्रतिनिधीयते स एव तत्कर्मफलेन युज्यते न पूर्वः । अतो न तस्यार्थे वर्तते । तस्मात्स्वामीनोऽप्यप्रतिनिधानम् । कर्क.

**गुणेषु प्रतिनिधिः परार्थत्वात् ॥**

एवं सर्वत्राप्यप्रतिनिधाने प्राप्ते आह–गुणेष्विति । पात्रासादनाद्याज्यावेक्षणादिषु गुणपदार्थेषु स्वाम्यपि प्रतिनिधीयते । कुत एतत् । परार्थो ह्यसौ । न तत्र प्रधानवत्स्वार्थं साधयति । तस्मात्क्रत्वर्थाभिनिर्वृत्तये स्वाम्यपि प्रतिनिधीयते । कर्क.

एककालावच्छिन्नानेककर्मणां तन्त्रप्रयोगः

**कर्मणां युगपद्भावे तन्त्रम् ॥**

अत्रेदं विचार्यते– प्रधामकर्मणां यौगपद्ये सहप्रयोगे सति किमङ्गकर्मणां तन्त्रम्, उत प्रतिप्रधानमावृत्तिः ? इति । प्रतिप्रधानमावृत्तिरिति ब्रूमः । प्रधानानि बहूनि । प्रत्येकं चाङ्गवत्ता संपादनीया । न चानावृत्तैरङ्गैरसौ संपद्यते । तस्मात्प्रतिप्रधानमावृत्तिरित्येवं प्राप्ते उच्यते– प्रधानानां सहप्रयोगे सति अङ्गानां तन्त्रं सकृत्क्रिया ।

कर्क.

**शक्यपुरुषार्थकृतत्वैकार्थसमवायश्रुतिभ्यः ॥**

कुत एतत् ? – शक्येति । युक्तं यत्प्रधानकर्मणां सहप्रयोगे सत्यङ्गानां सकृत् क्रियेति । कुत एतत् ? शक्यत्वात् । शक्यते ह्यदृष्टोपकारिणाऽङ्गेनानेकेषामुपकर्तुम्, अगृह्यमाणविशेषत्वात् प्रदीपवत् । पुरुषार्थकृतत्वाच्च । प्रधानान्यङ्गवन्ति कर्तव्यानि इति पुरुषार्थः ।

सकृत्कृतैरेवासौ कृत एव भवति । एकार्थसमवायश्रुतेश्च । एकस्मिन्नर्थे फले बहुभिः प्रधानैः साध्ये अङ्गानां समवायश्रुतिर्भवति । 'ता एकविंशतिराहुतयो द्वावाघारौ पञ्च प्रयाजा द्वावाज्यभागावाग्नेयः पुरोडाशस्तद्दशाग्नीषोमीय उपांशुयाजोऽग्नीषोमीयः पुरोडाशोऽग्निः स्विष्टकृदिडा त्रयोऽनुयाजाः सूक्तवाकश्च शंयोर्वाकश्चाथ यद्देवादः पत्नीसंयाजेषु संप्रगृह्णाति समिष्टयजुश्च' इत्याहुतीनामेकविंशतिसंख्या दृश्यते । सा च तन्त्रपक्षे भवति । इतरथा आहुतिशब्दो लक्षणया तद्विधिपर एव स्यात् । अपरेऽन्यथा वर्णयन्त्येतत्सूत्रम्— शक्यपुरुषार्थत्वात् । शक्यते हि सकृत्कृतेनाप्यनेन बहूनामुपकर्तुम् । पुरुषार्थवत् । यथा पुरुषार्थेन प्रदीपेनेति । अपि च, कृतमप्यङ्गं यदि पुनः क्रियते, तत्कृतत्वादेकार्थवत्कृतं भवति । यथा प्रदीप एव कृतः पुनः क्रियते । समवायस्तूक्त एव । अतः सहप्रयोगे प्रधानानामङ्गानां सकृत् क्रियेति ।

कर्क.

**फलकर्मदेशकालद्रव्यदेवतागुणसामान्ये ॥**

सहप्रयोग एव प्रधानानां कुतः ? — फलेति । यत्रैकेन प्रयोगवचनेन बहूनि प्रधानानि उपादाय फले विधीयन्ते, तत्र सहप्रयोगः । इतरेतरसव्यपेक्षाणि हि तानि विहितानि । यथा 'वैश्वदेवेन प्रजाकामं याजयेत्' इति । तत्र वैश्वदेवशब्देन समुदायवचनेनाष्टानां हविषां सहत्वम् । यदि च तेषां कर्मापि समानं भवति, पञ्चप्रयाजता त्र्यनुयाजतेत्येवमादि । भिन्नाङ्गकर्मणां सहप्रयोगे सतीतरेतरवैगुण्यं स्यात् । देशसामान्ये च सहप्रयोगः न भिन्नदेशानाम्, अशक्यत्वात् । कालसामान्येऽप्येवम् । परिक्रयद्रव्यसामान्ये च सहप्रयोगो युक्तः । यथा त्रिसंयुक्तेषु । त्रयाणां वामनः त्रयाणां श्यामः त्रयाणां बभ्रुः इति । देवतासामान्ये पुनः समानमुच्चारणम् । यथा सप्तदशसु प्राजापत्येष्वनुवाचने प्रैषे च । यदि च तासां देवतानां गुणोऽपि समानो भवति । यथा तत्रैवोपांशुत्वम् । गुणभेदे पुनरशक्यं सहोच्चारणम् । यथोपांशुयाजदेवताग्नीषोमयोः पुरोडाशाग्नीषोमयोश्च ।

कर्क.

तन्त्रप्रयोगबाधकारणानि

**तद्भेदे भेदः ॥**

तेषामेव सहत्वकारणानां यत्र भेदस्तत्र सहत्वं न भवति । यथा मित्रविन्दाप्रतिकामाग्नेययोः प्रयोगवचनभेदात् कर्मभेदो भवति । यथा कस्यचित्पञ्चप्रयाजता कस्यचिन्नवप्रयाजता । तत्र सहत्वे इतरेतरवैगुण्यमापद्यते । देशभेदेऽपि भेदो भवति । यथा वरुणप्रघासेषु मारुत्याः । कालभेदेऽपि दर्शस्य पौर्णमासस्य च सहत्वं भिद्यते । द्रव्यभेदेऽपि त्रयाणां त्रिसंयुक्तानां भेदः ।

कर्क.

**देशकालौ विरोधे न कृत्स्नोपदेशात् ॥**

सहत्वे प्रधानानामङ्गानां तन्त्रमुक्तम् । क्वचित्तयोः संगतिरेव नास्ति । यथा वैश्वदेवे देशो विरुध्यते । प्रधानानां प्राचीनप्रवणो देशः— 'प्राचीनप्रवणे वैश्वदेवेन यजेत' इति । तदङ्गानां समो देशश्चोदकप्राप्त्या— 'समे दर्शपूर्णमासाभ्यां यजेत' इति । तेनाङ्गप्रधानानामसंगतिरत्र । कालोऽपि चात्र विरुध्यते— प्रधानानां पक्षान्तस्तदङ्गानां पक्षादिरिति । एतदालोच्य सूत्रितम्— देशकालाविति । कृत्स्नं ह्येतत्कर्म साङ्गं देशे काले च विधीयते इति । न ह्यङ्गरहितस्य प्रधानस्य पृथग्वचनम् । 'देशकालौ विरोधे' इत्येतत्सूत्रमपरेऽन्यथा वर्णयन्ति— किं प्रयोगवचनैकत्वे सति कर्मादीनि सर्वाणि सहत्वविरोधकानि, उत देशकालावेव ? इति । 'तद्भेदे भेदः' इत्युक्तत्वात्सर्वाणीत्येवं प्राप्ते आह— देशकालावेव विरोधकौ, न कर्मादीनि । शाब्दो हि सहप्रयोगः । कर्मादीनामशब्दता । तेन वैश्वदेवे कर्मभेदेऽपि सति अष्टानां हविषां सहत्वम् । कथं कर्मभेद इति चेत् । पयस्यायाः सांनाय्यपयोविध्यन्तेन वृधन्वन्तता प्राप्नोति । इतरेषां पौर्णमासविध्यन्तेन वार्त्रघ्नता । शब्दबलीयस्त्वात्सहप्रयोगः । द्रव्यभेदेऽपि शुनासीरीये परिक्रयभेदेऽपि प्रयोगवचनैकत्वात्सहप्रयोगः । तस्माद्देशकालावेव सहप्रयोगस्य विरोधकौ प्रयोगवचनैकत्वे सति, न कर्मादीनि । एतस्यां व्याख्यायां 'न कृत्स्नोपदेशात्' इति सूत्रं पूर्वपक्षमुत्थाप्य पूर्ववद्व्याख्येयम् ।

कर्क.

कर्मावृत्तावपि सकृन्मन्त्रवचनं तदपवादश्च

[1]**एकद्रव्ये कर्मावृत्तौ सकृन्मन्त्रवचनं कृतत्वात् ॥**

यत्रैकद्रव्यविषयः कर्मणोऽभ्यासस्तत्र किं प्रतिक्रियं मन्त्राभ्यावृत्तिः, उत सकृन्मन्त्रवचनम् ? इति । क्रियाभ्यावृत्तौ तच्छेषस्य मन्त्रस्याऽऽवृत्तिप्राप्तौ सकृदुच्यते । एकद्रव्यविषये कर्मणोऽभ्यासे सकृन्मन्त्रो वक्तव्यः । कुत एतत् ? कृतत्वादभिधानसंस्कारस्य । अपि च, साभ्यासा एकैवेयं क्रियेति । क्रियादौ च मन्त्रवचनमुक्तम् ।

कर्क.

[2]**न ग्रहणलवनस्तरणाज्यग्रहणेषु तु ॥**

उक्तेन न्यायेन हविषो ग्रहणे बर्हिषो लवने तस्यैव स्तरणे आज्यग्रहणे च सकृन्मन्त्रवचने प्राप्ते आह— नेति । तुशब्दोऽवधारणे । ग्रहणादिषु नैव सकृन्मन्त्रवचनम् । न ह्यत्राभिधानसंस्कारस्य कृतत्वमस्ति । ग्रहणे तावद्यावदेव मुष्टिना गृहीतं तावदेव मन्त्राभिधानेन संस्कृतम्, अन्यद्गृह्यमाणमभिधानसंस्कारसव्यपेक्षमेवेति । लवनस्तरणयोरप्येवम् । आज्यग्रहणे च । कर्क.

**वचनादाज्ये ॥**

आज्ये वाचनिकी मन्त्रनिवृत्तिरुक्ता उत्तरेषु ग्रहणेषु— 'त्रिस्त्रिरेव यजुषा गृह्णीयात्, त्रिवृद्धि यज्ञः' इति । तदनु सकृत्सकृदेवेति । कर्क.

**मुष्टौ चोत्तमे ॥**

'तूष्णीं चतुर्थम्' इति । कर्क.

**स्वप्ननदीतरणावबर्षणामेध्यदर्शनप्रयाणेषु तु सकृत्कालद्रव्यैकार्थत्वात् ॥**

दीक्षितस्य अमनोज्ञस्वप्नदर्शने मन्त्रवचनमाम्नातम् । तथा नदीतरणे अववर्षणे अमेध्यदर्शने प्रयाणे च । तत्रैतत्संदिह्यते— किं युगपदनेकामनोज्ञस्वप्नदर्शने सकृन्मन्त्रवचनम्, उत भेदेन ? इति । तथा नदीतरणेऽपि च स्रोतसां भेदे किं भेदेन मन्त्रवचनम्, उत सकृत् ? इति । अववर्षणे युगपदनेकधारासंनिपाते किं प्रत्यववर्षणं मन्त्रवचनम्, उत सकृत् ? इति । एवं युगपदनेकामेध्यदर्शने । वनीवाहनप्रयाणेऽपि च किं प्रतिप्रयाणं मन्त्रवचनम्, उत प्रथमे प्रयाणे ? इति । तत्र प्रत्येकं मन्त्रवचने प्राप्ते आह—स्वप्ननदीतरणेति । यथासंभवं हेतुविभागः । अनेकस्वप्नदर्शने कालैकत्वात्सकृन्मन्त्रवचनम् । नदीतरणे द्रव्यैकत्वात् । स्रोतसां भेदेऽप्येकमेव नदीद्रव्यमिति सकृन्मन्त्रः । अववर्षणेऽपि कालैकत्वात् । तथाऽमेध्यदर्शने । प्रयाणेषु तु एकार्थत्वात् । एक एवायमर्थो गमनं नाम । तस्याऽऽदावेव मन्त्रवचनम्, न प्रतिप्रयाणमिति । कर्क.

**न निमित्तभेदात् ॥**

अथ यत्र कालभेदेन पुनस्तदेव निमित्तमापतति, तत्रापि किं सकृद्वचनम्, उत भेदेन ? इति । अभिहितमेव तदिति कृत्वा सकृन्मन्त्रवचने प्राप्ते आह— नेति । नात्र सकृन्मन्त्रवचनम् । भिद्यते ह्यत्र निमित्तमिति कृत्वाऽभ्यावृत्तिः । कर्क.

अप्रधानकालीनाङ्गस्यानेकप्रधानोपकारकत्वम्

**अप्रधानकालं सकृदसंनिपातात् ॥**

अप्रधानकालीनं यदङ्गम्, यथा आधानम्, तस्य प्रतिकर्म प्राप्तौ सत्यामुच्यते— सकृत् कर्तव्यम् । न हि तत् क्वचित् कर्मविशेषे संनिपतितम्, यस्यापवर्गेऽपवृज्येत । अतः स्वकालत्वात् सकृदेव कर्तव्यम् । कर्क.

ऋत्विजामपि कर्मण्यधिकारः, त्यागवचनादौ तु स्वामिन एव

**कर्मणि पुरुषाणाम् ॥**

दर्शपूर्णमासादिषु चिन्त्यते— किं सर्वं स्वयमेव कर्तव्यम्, उत किंचित्परकर्तृकमपि ? इति । फलार्थिनः कर्म चोदितम्, अतस्तेनैव कर्तव्यमित्येवं प्राप्ते आह— कर्मणीति । अधिकारः । कुत एतत् ? परिक्रयाम्नानात् । दृश्यते हि तत्र परिक्रयः — 'गौर्दक्षिणा' 'हिरण्यं दक्षिणा' इत्येवमादि । कर्क.

---

(१) काश्रौ. १।१५६; संत. ९३४ (=) सकृन्म (सकृदेव म).

(२) काश्रौ. १।१५७–१६२, १६६–१८२, १८६–१९०, २१२, २१३, २२०, २२३, २४८, २५३–२५५.

**प्रधानं स्वामी फलयोगात् ॥**

एवं सर्वत्र प्राप्ताविदमुच्यते— प्रधानमिति । यत्प्रधानं स्वद्रव्यपरित्यागपरसत्तापादनं तत्स्वामी करोति । फलयुक्तं हि तदिति । तच्च कुर्वन् फलेन युज्यते इति । एकं सूत्रमेवेदमपरे वर्णयन्ति । परिक्रियाम्नानात् सर्वत्र पुरुषाणां कर्तृत्वे सति प्रधानं स्वामी करोति । फलयोगादित्युक्तमेव । कर्क.

**पुरुषयोगिमन्त्रसंस्कारयोस्त्यागे सामर्थ्यात् ॥**

किमेतदेव स्वामी करोति ? नेत्याह— पुरुषयोगीति । पुरुषयोगी यो मन्त्रः 'तनूपा अग्नेऽसि तन्वं मे पाहि' इत्येवमादिः प्रत्यगाशीर्युक्तः, यश्चाऽऽत्मसंस्कारः पावनमुण्डनादिः, तौ द्वावपि त्यागे प्रतिपत्तव्यौ । त्यागशब्देन त्यागाधिकृतो लक्षणया यजमानोऽभिधीयते । यजमानयोगिनौ भवत इत्यर्थः । यजमान एव हि समर्थ आशीःप्रार्थनं कर्तुम् । संस्कारोऽपि च फलप्रतिग्रहयोग्यतापत्त्या यजमानयोग्य एव । कर्क.

**वचनादन्यत् ॥**

अन्यद्वचनाद्यजमानस्य भवति । यथा 'शुक्रं यजमानोऽन्वारभते' इति । ऋत्विजामपि वचनेन संस्कारो भवति । यथा 'हिरण्यमालिनो वाजपेयेन चरन्ति' इति । कर्क.

**शेषमितरे यथाख्यम् ॥**

इतरे स्वामिव्यतिरिक्ताः शेषं यथाख्यं कुर्वन्ति, या यस्याऽऽख्येति । कर्क.

उपवीतमधिकारिविशेषणम्

**उपवीतिनः ॥**

कुर्वन्ति, स्मृतेः । कर्क.

कर्मणां प्राक्संस्थता उदक्संस्थता च

**प्राञ्च्युदग्वा ॥**

'प्राञ्च्युदञ्चि च कर्माणि संतिष्ठेरन्' इति श्रुतिः । कर्क.

कर्मणां प्रदक्षिणक्रियत्वम्

**आवृत्तिसामन्तेषु प्रदक्षिणम् ॥**

आवृत्तौ सामन्ते च प्रदक्षिणम् , स्मृतेः । कर्क.

पित्र्येष्वप्रदक्षिणत्वं सकृत्त्वं दक्षिणाभिमुखत्वं च

**विपर्यस्य पित्र्येषु तु सकृद्दक्षिणा च ॥**

पित्र्येषु कर्मसु विपर्यासेन अप्रदक्षिणं कार्यम् । सकृच्च । यदभ्यस्तरूपं दैवे स्मर्यते तत्पित्र्ये सकृत्कर्तव्यम् । यथा परिसमुह्योपलिप्योल्लेखनम् । दक्षिणा च दिक् । न प्राच्युदीची वा । कर्क.

प्रधानसाधननाशे साङ्गप्रधानावृत्तिः

**प्रधानद्रव्यव्यापत्तौ साङ्गावृत्तिस्तदादेशात् ॥**

प्रधानस्य च यत्साधनद्रव्यं तस्य व्यापत्तौ विनाशे साङ्गावृत्तिर्भवति । तेन ह्यादिष्टान्यङ्गानि तद्विनाशाच्च विनाशमुपगतानि । अपरेऽन्यथा वर्णयन्ति— द्रव्यमेव संस्पर्शिभिरङ्गैः सहाऽऽवर्तते, नाऽऽरादुपकारकैरपि । तेन तान्यादिष्टानीत्युक्तार्थम् । कर्क.

एकदृष्टप्रयोजनकानामनेकेषां विकल्पः, अदृष्टप्रयोजनकानां तु समुच्चयः

**गुणानामेकार्थानां सर्वारम्भश्चोदितत्वात् ॥**

इदं श्रूयते— 'व्रीहिभिर्यजेत, यवैर्वा यजेत' इति । तत्रैतत्संदिह्यते— किमुभावपि व्रीहियवौ यागं प्रत्यङ्गभावमुपनेयौ, उत विकल्पेन ? इति । किं तावत् प्राप्तम् ? सूत्रेणैव पक्षः— गुणानामिति । ये गुणा एकप्रयोजनाः, यथा व्रीहियवादयः, तैः सर्वैस्तत्कर्म आरब्धव्यम् । कुत एतत् ? चोदितत्वात् । चोदिता हि ते यागाभिनिर्वृत्ताविति य एव गुणोऽङ्गभावं नोपनीयते तस्यैव श्रुतिरनर्थिका स्यादिति । कर्क.

**न कृतत्वात् ॥**

एवं प्राप्ते आह— नेति । नैतदेवं सर्वैस्तत्कर्माऽऽरब्धव्यमिति । किं कारणम् ? कृतत्वात् । एकेनैव यदा तत्कर्माष्टाकपालाभिनिर्वृत्तिरूपं निर्वर्तितं भवति, तदा द्वितीयोपादानमनर्थकं स्यात् । सर्वे हि ते इतरेतरनिरपेक्षा एव विधीयन्ते । कर्क.

**अनारभ्यत्वात् ॥**

अथ यद्येकेनैव निर्वर्तिते यागे द्वितीयश्रुत्यनुग्रहाय यागाभ्यावृत्तिः क्रियते, तत्रैतदुत्तरसूत्रम्— अनारभ्यत्वा-

दिति । अनारभ्योऽयमर्थः यदुत गुणानुरोधेन प्रधानाभ्यावृत्तिः । तस्माद्विकल्पः । कर्क.

**दर्शनाच्च ॥**

दृश्यते चायमर्थो यथा व्रीहियवयोर्विकल्प इति । हविरुद्वपनं प्रकृत्य श्रूयते— 'वर्षवृद्धा उ ह्येवैते यदि व्रीहयो यदि यवाः' इति । अपि च समुच्चये सति न व्रीहिभिः कृतो भवति न यवैरिति । संकीर्णमन्यदेव द्रव्यान्तरं भवति । कर्क.

**श्रुत्यानर्थक्यमिति चेत् ॥**

इति चेत् पश्यसि— व्रीहियवयोरेवान्यतरस्य विकल्पेनान्यतरस्य श्रुतिरनर्थिका स्यात् । कर्क.

**कालान्तरेऽर्थवत्त्वं स्यात् ॥**

कालान्तरे द्वितीयश्रुतिः सार्थिका भविष्यति । न ह्येकस्मिन् कर्मणि समुच्चयः संभवतीत्येतदुक्तम् । कर्क.

**धर्ममात्रेषु समुच्चयोऽविरोधे ॥**

आघारं प्रकृत्य गुणाः समाम्नाताः— 'ऋजुमाघारयति संततमाघारयति दीर्घमाघारयति प्राञ्चमाघारयति'। तेषामेककार्यत्वादुक्तेन न्यायेन विकल्पे प्राप्ते आह— धर्ममात्रेष्विति । ये गुणा धर्ममात्राः तेषां समुच्चयः । कुत एतत् ? अविरोधे हि ते वर्तन्ते । कथम् ? ऋजु संततं न विरुणद्धि, न च संततं दीर्घम्, न च दीर्घं प्राञ्चम् । प्रतिनियतानि ह्यदृष्टानि । तस्मादृज्वादीनां समुच्चयः । ननु उक्तमेककार्यत्वादिति । सत्यम् । परमेकं कार्यम् । अवान्तरकार्याणि तु भिन्नानि । यदृजुना क्रियते न तत्संततेन, यत्संततेन न तद्दीर्घेण, यद्दीर्घेण न तत्प्राञ्चेति । कर्क.

प्रायश्चित्तानामदृष्टार्थत्वात्समुच्चयः

**प्रायश्चित्तेषु दोषनाशात् ॥**

एकस्मिन् कर्मणि प्रायश्चित्तबहुत्वे आम्नाते किं समुच्चयः, उत विकल्पः ? इति । विकल्प इति ब्रूमः । कुतः ? दोषनिर्घातार्थं हि प्रायश्चित्तं भवति । दोषदर्शने हि सति तदाम्नायते । ततस्तन्निर्हृतिरेव प्रयोजनम् । तेन विकल्प्यते । एकेन च निर्हृते दोषे द्वितीयमनर्थकमिति । कर्क.

**नाश्रुतेः ॥**

एवं प्राप्ते आह— नेति । प्रायश्चित्ते कृते दोषः प्रयातीति नैवं श्रुतिरस्ति । कर्क.

**प्रत्यक्षाच्च ॥**

प्रत्यक्षेणापि दोषनिर्घातो न दृश्यते । 'भिन्ने जुहोति' 'स्कन्ने जुहोति' इति कृतेऽपि होमे न भिन्नमभिन्नं भवति, न च स्कन्नमस्कन्नम् । अतो धर्ममात्रम् । तस्मात्समुच्चयः । कर्क.

**स्याद्वा दर्शनात् ॥**

भवेद्वा केषुचित्प्रायश्चित्तेषु दोषनिर्घातार्थता । यथा महाव्याहृतिहोमेषु । दोषनिर्घातो ह्यत्र दृश्यते । स यथा— 'पर्वणा पर्व संदध्यादेवं हैव च संदधाति य एताभिर्भिषज्यति' इति संधानभैषज्ये दर्शयति । कर्क.

**नान्यार्थत्वात् ॥**

एवं प्राप्ते आह— नेति । नैतदेवं संधानभैषज्ये दृष्टत्वा विकल्प इति । किं कारणम् ? अन्यार्थे ह्येते । किमर्थे ? इति चेत्, महाव्याहृतिस्तुत्यर्थे । इत्थं नाम प्रशस्तो महाव्याहृतिहोमो येन संधानभैषज्ये क्रियेते । तस्माददृष्टार्थत्वम् । कर्क.

आज्यशब्दोऽसंस्कृतघृतवाचकः

**घृतमाज्ये लिङ्गात् ॥**

'आज्येन यूपं समनक्ति' इति श्रूयते । तत्रैतत् चिन्त्यते— किमाज्यशब्दः संस्कारनिमित्तः, उत जातिनिमित्तः ? इति । किं तावत्प्राप्तम् । प्रयोगप्राचुर्यात्संस्कारनिमित्त इत्येवं प्राप्ते इदमाह— घृतमिति । आज्ये चोदिते घृतं प्रतीयात् । जातिनिमित्त आज्यशब्दो न संस्कारनिमित्त इति । असंस्कृतेऽपि हि प्रयोगो दृश्यते— क्रैयमाज्यं क्षीणमाज्यं तैलमुपसेचनं वर्तते । ननु अयमेकदेशे प्रयोगः । सत्यमेवम् । एकदेशप्रयोगोऽपि वाचकशक्तिमन्तरेण न भवति । लिङ्गाच्च । लिङ्गं चाश्वमेधे ब्रह्मौदनं

प्रकृत्य भवति— 'यदाज्यमुच्छिष्यते तेन रशनामभ्यज्याऽऽदत्ते' इति। असंस्कृतेऽप्याज्यशब्दप्रयोगो भवति। अपरे लिङ्गादिति वर्णयन्ति— लिङ्गाद्द्रव्यमेव भवति। आज्यनिर्वापं प्रकृत्याऽऽमनन्ति— 'महीनां पयोऽसीति मह्य इति ह वा एतासामेकं नाम यद्गवाम्' (शब्रा. १।२।१।२२) इति। कर्क.

अनादिष्टद्रव्यके होमे आज्यं द्रव्यम्

**तस्य होमोऽनादेशे ॥**

तस्येत्यवयवलक्षणा षष्ठी। द्रव्यान्तरस्याविधाने तेन होमः कर्तव्यः। कर्क.

साधनानुक्तौ जुहूर्होमसाधनम्

**जुह्वाऽवचने ॥**

अवचनेऽन्यस्य होमार्थस्य द्रव्यस्य जुह्वा होमः कर्तव्यः। कुत एतत्? समाख्यानात्। हूयतेऽनयेति जुहूः। एतच्च दर्शपूर्णमासप्रकरण एव तद्विध्यन्तग्राहकेषु च। तत्रैव जुहूर्दृष्टेति। कर्क.

हविःशब्देन विधाने व्रीहियवयोर्बोधः

**व्रीहीन्यवान्वा हविषि ॥**

हविषि चोदिते व्रीहीन्यवान्वा प्रतीयात्। कर्क.

हविषां पाठगतोत्तरत्वस्याऽऽसादनादिषु देशतः कालतश्चान्वयः

**अवरोक्तमुत्तरं हविषि ॥**

हविषां यत्पश्चादभिहितं तदासादनादिषु उत्तरं देशतः कालतश्च प्रतिपत्तव्यम्। कर्क.

फलाश्रुतौ स्वर्गः फलम्

**वाच्यफलेषु स्वर्गः सामर्थ्यात् ॥**

इदमामनन्ति— 'अभिजिता यजेत' 'विश्वजिता यजेत' इति। अफलसंयुक्ताश्चोदनाः। तत्र चिन्त्यते— किमेषु फलमस्ति, उत नास्ति? इति। यदा चास्ति तदा यत्किंचित्, उत स्वर्गः? इति। किं तावत्प्राप्तम्? फलाश्रवणान्नास्ति फलमिति। एवं प्राप्ते उच्यते— वाच्यफलेष्विति। सामर्थ्याद्भवितव्यमत्र फलेन। एवमेताश्चोदनाः समर्था अर्थवत्यो भवन्ति। इतरथा सापेक्षाः सत्योऽनर्थिकाः स्युः। न च वेदे मात्रामात्रस्याप्यानर्थक्यमिष्यते। यच्च साकाङ्क्षं वाक्यं तदध्याहारेण वाऽनुषङ्गेण वा निराकाङ्क्षीकर्तव्यम्। एवं चार्थवद्भवति। तेनेह स्वर्गकामपदानुषङ्गः कार्यः— 'विश्वजिता यजेत स्वर्गकामः' इति, नैरुत्सुक्यात्। ननु च पशुकामादिपदानुषङ्गः कस्मान्न क्रियते? अत्रोच्यते— स्वर्ग एव सामर्थ्यात्। यदेव पुरुषैरभिवाञ्छ्यते तदेव सामर्थ्यादनुषज्यते। नान्यानि फलवाक्यानि। कर्क.

गुणाधिक्ये फलाधिक्यम्

**एककर्मणि गुणविशेषे फलविशेषः ॥**

एकस्मिन् कर्मणि गुणविशेषे फलविशेषेण भवितव्यम्, आम्नानसामर्थ्यात्। कर्क.

अनिर्दिष्टकर्तृकेषु दानादिषु परिगणितेषु यजमानस्य कर्तृत्वम्

**दानवाचनान्वारम्भणवरवरणव्रतप्रमाणेषु यजमानं प्रतीयात् ॥**

दानादीनि निगदव्याख्यातानि। तेषां कर्तारं यजमानं प्रतीयात्। कर्क.

रौद्रादिकं मन्त्रमुक्त्वा कर्म वा कृत्वाऽऽपस्पर्शनम्

**[1]रौद्रं राक्षसमासुरमाभिचरणिकं मन्त्रमुक्त्वा पित्र्यमात्मानं चाऽऽलभ्योपस्पृशेदपः ॥**

रौद्रादिकं मन्त्रमुक्त्वा, चशब्दात् कर्म च कृत्वा उपस्पृशेदप इति। दर्शयति चैवम्— 'रुद्रियेणेव वा एतदचारिषुः शान्तिरापस्तदद्भिः शान्त्या शमये' इति। कर्क.

## लाटचायनश्रौतसूत्रम्

अनारभ्याधीतो विधिः सर्वकर्मसाधारणः

**[2]अथ विध्यव्यपदेशे सर्वक्रत्वधिकारः ॥**

---

(१) काश्रौ. १।२५७; पप्र. ९१ चरणिकं (चारिकं) भ्योपस्पृशेदपः (भ्य अप उपस्पृशेत्); संग. २७४ चरणिकं (चारणिकं) पित्र्य (पित्रिय) चाऽऽलभ्य (वाऽऽलभ्य); संदी. २०.

(२) लाश्रौ. १।१।१-३, ५-६.

विध्यव्यपदेशे सर्वक्रत्वधिकारः । विधेः अव्यपदेश इति षष्ठीसमासः क्रियते । विधीयते विधानं वेति विधिः । 'महन्मे वोच इति करिष्यन् प्रतिमन्त्रयेत' इत्येतदादिविधिर्वक्ष्यते । तदाद्यस्य विधेरधिकारो द्रष्टव्यः । अव्यपदेशे, न व्यपदेशः अव्यपदेशः । अनधिकृत्य कंचित्क्रतुमुपदिश्यमानो विधिः सर्वत्र भवति । व्यपदेशः '.अग्निष्टुत्स्वाग्नेयो निगदः' इत्येतदादिविधिः व्यपेदश-विषय एव भवति । सर्वक्रतुषु, सर्वशब्दो निरवशेषवाची । क्रमेण सर्वक्रतूनामधिकारः । अधिकारः व्यापारः प्रसङ्गः इत्येकोऽर्थः । एष पदार्थः । अथ समुदायार्थः । एत-दुक्तं भवति– अनधिकृत्य कंचित्क्रतुं विधिरुपदिश्यमानः सर्वत्र भवतीति । अग्निभा.

आदिग्रहणेन कृत्स्नमन्त्रग्रहणम्

**मन्त्रविधिश्चाऽऽदिग्रहणेन ॥**

एवं सिद्धे सर्वाधिकारे वक्ष्यत्याचार्यः– 'महन्मे वोच इति करिष्यन् प्रतिमन्त्रयेत' इति । तत्रायं संशयः– किमियतैव प्रतिमन्त्रणं क्रियताम्, अथ कृत्स्नेन मन्त्रेण ? इति । एतस्मिन् संशये सत्याह आचार्यः– मन्त्रविधि-रिति । तत्र मन्त्रशब्दः प्रतीतशब्दार्थः कर्तृपदार्थको महन्मेवोचादिषु यजुःषु वर्तते । विधीयते विधानं वेति विधिः । आदिग्रहणेन, आदीयतेऽर्थोऽनेनेति आदिः । अयं सूत्रार्थः– आदिगृहीतो मन्त्रः कृत्स्नः प्रयोक्तव्यः इति । अग्निभा.

यजुःषु उत्तरमन्त्रादिना पूर्वमन्त्रावसानस्य बोधनम्, एतदभावे लिङ्गान्मन्त्रेयत्तावोधः

**उत्तरादिः पूर्वान्तलक्षणम् ॥**

एवं मन्त्रविधिश्चाऽऽदिग्रहणेनेति सिद्धे कृत्स्नमन्त्र-प्रयोगे अथ मन्त्रान्तः कथं विज्ञातव्य इत्यत्रोच्यते– उत्तरादिरिति । उत्तरस्य मन्त्रस्याऽऽदिना पूर्वस्य मन्त्र-स्यान्तो लक्ष्यते । तल्लक्षणं( ? णे) 'उत्तरादिः पूर्वान्तः' इति सिद्धे लक्षणग्रहणं किमर्थमिति चेत्, अत्रोच्यते– यदि ह्ययं लक्षणग्रहणं न कुर्यादुत्तरस्य मन्त्रस्याऽऽदिः पूर्वस्य मन्त्रस्यान्तः स्यात्, एवं पूर्वस्य मन्त्रस्यान्तस्य उत्तरस्य मन्त्रस्य चाऽऽदेः संसर्गः क्रियेत, एवं मा भूदित्यत आह लक्षणमिति । अग्निभा.

**यावद्यजुरनादिष्टान्तान् मन्त्रान् ॥**

उक्तमुत्तरादिः पूर्वान्तलक्षणमिति । एतल्लक्षणं महदा-दीनां यजुषाम् 'उत्क्रान्तिरसि' इतिपर्यन्तानाम् । येषु पुनरिदं लक्षणं न संभवति, 'तामुच्छ्रयति' इत्येवमा-दिवत्, तेषां कः प्रयोग इत्यत्राऽऽह– यावदिति । येषां मन्त्राणामन्तो नाऽऽदिश्यते तानेव यजुः प्रतीयात् । तेषु यावदेव यजतिसमर्थं तावदेव प्रयोक्तव्यमिति । येऽर्थवादा मध्ये पठितास्तेषामुद्धार इति । अग्निभा.

आदिग्रहणेन कृत्स्नयोर्ऋक्सामयोर्ग्रहणम्

**ऋचश्चाऽऽदिग्रहणेन ॥**

उक्तं मन्त्रविधिश्चाऽऽदिग्रहणेनेति, तत्रोक्तं महदादिषु यजुःषु मन्त्रशब्दोऽस्य( ? ऽयं ) वर्तत इति । अथ ऋक्साम्नां को विधिरित्यत्राऽऽह– ऋच इति । समाम्नाये या ऋक् तस्या ऋचः आदिग्रहणेन विधिर्भवति । "अवधूय पवित्रमुदग्दशमवाङ्नाभि वितनुयुः 'पवित्रं ते' इति" ( लाश्रौ. १।१०।२० ) । साम्नश्चेति चशब्दः । साम्नश्चाऽऽदिग्रहणेन विधिर्भवति, 'अध्वर्यु-प्रेषितस्त्वग्नायिरिति गायेत्' (लाश्रौ. १।६।१) इत्यादि-वत् । आदिनेति सिद्धे ग्रहणं किमर्थमिति चेत्, उच्यते– आदिना च ग्रहणेन च इत्येवमर्थं ग्रहणम् 'अग्निष्टपतीत्यवभृथसाम' इतिवत् । अग्निभा.

यज्ञोपवीताचमने अधिकारिविशेषणे

**[1]सर्वेषां यज्ञोपवीतोदकाचमने नित्ये कर्मो-पयताम् ॥**

अथ सर्वेषां साधारणमुच्यते । सर्वेषामुद्गातॄणां यज्ञोप-वीतं च उदकाचमनं च एते च नित्ये कर्म कुर्वतामेवं यज्ञोपवीती भवत्येवमाचान्तोदको भवतीति । यज्ञोपवीतं च उदकपूर्णं च कमण्डलुम् । आच( ? चा )मन्ति तस्मादित्याचमनम् । यज्ञोपवीतनित्यत्वे ब्रह्मचर्यं ज्ञाप-यति । अथ सर्वग्रहणं किमर्थम् ? उच्यते । सुब्रह्मण्यचतु-र्थानां ब्रह्मपञ्चमानां यजमानषष्ठानां संबन्धः, तदर्थं ग्रहणम् । अग्निभा.

( १ ) लाश्रौ. १।२।१४,१६.

प्राङ्मुखत्वमनादेशे

**प्राङ्मुखकरणं चानादेशे ॥**

प्राङ्मुखकरणमादेशादन्यत्र स्यात् । आदेशः 'प्रत्यङ्मुखस्तिष्ठञ्छिरसि गायत्रं गायेत्' इति । चशब्दः समुच्चयार्थः, अव्यवायोऽव्यावृत्तिश्च यज्ञाङ्गैरनादेशे इति । अग्निभा.

## बौधायनगृह्यसूत्रम्

काम्या दर्व्यः

**[1]खादिरी दर्वी तेजस्कामस्यौदुम्बर्यन्नाद्यकामस्य पालाशी ब्रह्मवर्चसकामस्येति ॥**

स्रुवस्य होमसाधनतानियमः, स्रुवप्रकृतिद्रव्याणि मतभेदेन

**[2]अथ हैकेषां विज्ञायते– 'निर्ऋतिगृहीता वै दर्वी । यद्दर्व्या जुहुयान्निर्ऋत्याऽस्य यज्ञं ग्राहयेत् । तस्मात्स्रुवेणैव होतव्यम्' इति ॥**

**[3]पालाशेन स्रुवेणेत्यात्रेयः ॥**

**खादिरेणेत्याङ्गिरसः ॥**

**ताम्रायसेनेत्याथर्वणः ॥**

**कार्ष्णायसेनाभिचरन्निति सार्वत्रिकम् ॥**

## *बौधायनगृह्यपरिभाषासूत्रम्

अग्नेः पाश्चात्यः कर्मदेशः, प्रदक्षिणमुपचारो यज्ञोपवीतं च दैवे कर्मणि, अप्रदक्षिणमुपचारः प्राचीनावीतं च पित्र्ये कर्मणि

**[4]यत्कर्म करोत्यपरेणाग्निम् । प्रदक्षिणमुपचारः, यज्ञोपवीती दैवानि कर्माणि । क्रियते विपरीतं पित्र्येषु ॥**

कर्मणः प्रागात्मालंकरणं ब्राह्मणानुज्ञापनं च

**[1]सर्वत्रालंकृत्य ये तत्र ब्राह्मणाः सन्तिताननुज्ञाप्य कुर्वीत यत्कारी स्यात्समृद्धमेवास्य तत् ॥**

हुतप्रहुताहुताः पाकयज्ञाः पक्वद्रव्यकाः

**[2]विष्णव आहुतीषु नामकरणोपनिष्क्रामणान्नप्राशनोपाकर्मव्रतेषु च पक्वहोमः स्यात् । नापक्वाः पाकयज्ञाः । सर्वत्र पक्वहोमं कुर्यादिति ॥**

**एतेन होमदानप्राशनानि व्याख्यातानि भवन्ति– पक्वाज्जुहोति पक्वाद्ददाति पक्वात्प्राश्नातीति पाकयज्ञाः । तस्माद्धुतप्रहुताहुतेषु पक्वः कार्य इति ॥**

इध्मसमित्संख्या दर्वीप्रमाणं च

**एकविंशतिदारुमिध्मं करोति यज्ञस्य सरूपत्वाय ॥**

**अरत्निमात्रीं दर्वीम् । बाहुमात्रीमित्यपरम् ॥**

होमे स्त्र्यनुपनीतकर्तृत्वस्य क्षारादिसंसृष्टद्रव्यस्य च निषेधः

**[3]स्त्रियाऽनुपेतेन क्षारलवणावरान्नसंसृष्टस्य तु होमं परिचक्षते ॥**

काम्यानां यथोपदेशकर्तव्यता

**यथोपदेशं काम्यानि बलयश्च ॥**

**अथापि काम्यानि भवन्ति– अथ वै भवति– 'प्रजापतिः प्रजा असृजत ताः सृष्ट्वा इन्द्राग्नी अपागूहताम्' इत्येतस्माद्ब्राह्मणात् ॥**

श्रौतपुरोडाशादिस्थानेषु स्मार्तेषु चर्वादयः

**येऽमुत्र पुरोडाशास्त इह चरवः । यथादेवतं याज्यापुरोनुवाक्याः । योऽमुत्र वषट्कारः स इह स्वाहाकार इति ॥**

---

* हिरण्यकेशिगृह्यशेषसूत्रस्य यत्र बौधायनगृह्यपरिभाषासूत्रेण तुल्यता तत्र पृथक् संग्रहो न कृतः, बौधायनगृह्यपरिभाषासूत्रे एव तस्य स्थलादिनिर्देशः कृतः ।

(१) बौगृ. १।३।१३ ; संर. १९.

(२) बौगृ. १।३।१४.

(३) बौगृ. १।३।१५–१८ ; संर. २०.

(४) बौगृप. १।४।१९ ; हिगृशे. ४।११ क्रियते (क्रियन्ते).

(१) बौगृप. १।५।१० ; हिगृशे. ४।१२ कुर्वीत (कुर्विति).

(२) बौगृप. १।६।५–७, ९ ; हिगृशे. ४।१३ विष्णव आहुतीषु... कुर्यादिति (संस्कारेषु पाकयज्ञेषु नित्येषु काम्येषु च पक्वहोमं कुर्यादित्येके शाखिनः समामनन्ति).

(३) बौगृप. २।१।३४–३७.

निवीतप्राचीनावीतोपवीतानि क्रमेण मनुष्यपितृदेवकर्मसु

[1]अथ वै भवति– 'निवीतं मनुष्याणां प्राचीनावीतं पितृणामुपवीतं देवानाम्' इति ॥

निवीतादिलक्षणानि

कथमु खल्वेतानि विजानीयादिति ॥

उपरिष्टादंसाभ्यां ग्रीवां हृदयं च संपरिगृह्य हृदयस्याधस्तादूर्ध्वं नाभेरङ्गुष्ठाभ्यां परिगृह्णाति तन्निवीतं मनुष्याणामिति । ऋषीणामित्येवेदमुक्तं भवति ॥

एतेन कृष्णद्वैपायनादयो व्याख्याताः ॥

तेषां सप्त ऋषयो राजानो भवन्ति । येह संततिस्ते मनुष्या इति ॥

अथ निवीतकार्याणि– ऋषीणां तर्पणं व्यवायः प्रजासंस्कारोऽन्यत्र होमान्मूत्रपुरीषोत्सर्गः प्रेतोद्वहनं यानि चान्यानि मनुष्यकार्याणि । कण्ठेऽवसक्तं निवीतमिति ॥

दक्षिणस्यांसस्योपरिष्टाद्ग्रीवां हृदयं पृष्ठं च परिगृह्य सव्यस्य हस्तस्याधस्तात् प्राचीनावीतं पितृणामिति । मृतानामित्येवेदमुक्तं भवति ॥

एतेन वैशम्पायनादयो व्याख्याताः ॥

तेषां सोमः पितृमान् यमोऽङ्गिरस्वानग्नि-(? :)कव्यवाहन इति राजानो भवन्ति । या प्रेत्य संततिस्ते पितर इति ॥

सव्यस्यांसस्योपरिष्टाद्ग्रीवां हृदयं पृष्ठं च संपरिगृह्य दक्षिणस्य हस्तस्याधस्तादुपवीतं देवानामिति । अमृतानामेवेदमुक्तं भवति ॥

एतेन ब्रह्मादयो व्याख्याताः ॥

तेषामिन्द्रः सोमो यमो वरुणः कुबेर इति राजानो भवन्ति । याऽमुत्र संततिस्ते देवा इति ॥

यज्ञोपवीतशब्दव्युत्पत्तिः

कथमु खलु यज्ञोपवीतमिति विजानीयात् ॥

तदेतद्दक्षिणस्य हस्तस्याधस्ताद्भवति । योऽयं दक्षिणो हस्तः स यज्ञ इति । यज इत्ययं शब्दो देवपूजासंगतिकरणदानेषु । यस्मादेतानि कुर्वते तस्माद्यज्ञः ॥

वाग्यज्ञः । तस्याग्निरधिदैवतम् । स चात्र यतस्तस्माद्यज्ञोपवीतम् ॥

यश्चायमङ्गुष्ठः स विष्णुः । स यज्ञस्याधिदैवतम् । तस्माच्च भवतीति, तीर्थत्वाच्च ॥

वागेव यज्ञः । यद्वाचा वदति तदनेन निर्वर्तयतीति ॥

यज्ञोपवीतं व्याख्यातम् ॥

यज्ञोपवीतमाचमनं च

[1]अथ वै भवति– 'ब्राह्मण एकहोता । स यज्ञः' इति । स एष कुसिन्धोऽधिकृतः । तस्य दशहोता निदानम् । तस्य यश्च कश्चन भवति सोऽन्तरात्मा । कुसिन्ध आत्मा । यज्ञः परमात्मा । स पुरुषः । पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यं यद्भविष्यदिति । तदग्निहोत्रम् । तदेव तत्कुसिन्धोऽधिकृतः । तदस्य दशहोता निदानम् । स यज्ञः । स आत्मनि वर्तते । तस्योपवीतं यज्ञोपवीतमिति ॥

अथ वै भवति– 'यज्ञवित्सर्वविद्भवति । यज्ञः सर्वम्' इति श्रुतिः 'तस्माद्याज्ञीषु चिन्तासु रमन्ते तत्त्वदर्शिनः' इति । अग्निहोत्रं कुसिन्धमेकहोतृत्वं स्थूरिः केवलमित्येकार्थवाचकाः शब्दाः श्रद्धालक्षणा भवन्ति । 'अप्सु प्रतिष्ठिताः श्रद्धा वा आपः' इति विज्ञायते । ताश्च यज्ञ आप्यमग्निहोत्रमाप्यं कुसिन्धमेकहोतृत्वं स्थौर्यं कैवल्यं तद्ब्रह्मैकाक्षरं परं ब्रह्मेत्योमिति ब्रह्मेति ॥

अथ वै भवति– 'अक्ति ब्रह्म प्रणक्त्यापः पापं नुदति कर्मणा । नोदनाच्चैव सङ्गानां ब्राह्मणस्तुतिरुच्यते ॥' इति ब्राह्मणत्वमेकहोतृत्वं च ॥

(१) बौगृप. २।२।१–१८.

(१) बौगृप. २।३।१–४.

जिह्वाया आप्यत्वादध्यात्मभावेन रसवाचकस्थानत्वादधिभूतभावेन बुद्धिकर्मणोरेकत्वादधिदैवतभावेनाग्नीषोमयोरेकत्वादधिदैवतभावेन 'एष सोमो वै चन्द्रमाः' इति मानसत्वाद्यज्ञत्वात् 'प्राजापत्यो यज्ञो यज्ञो मनः' इति यज्ञोपवीत्यप आचामेदिति नित्यमित्याचार्याः संप्रतिपन्नाः कथमेतदुच्यत इति ॥

[1]अजिनं वासः सूत्रं वा द्वितीयम्। 'यस्य यद्भवति तेन स उपव्ययते देवलक्ष्ममेव तत् कुरुते' इति ब्राह्मणम् ॥

अथाप आचम्येति तदपि द्वितीयम्। अब्लिङ्गाभिस्त्रिः पिबेत्। व्याहृतिभिस्त्रिः परिमृजेत्। अपि वा व्याहृतिभिस्त्रिः पिबेदब्लिङ्गाभिस्त्रिः परिमृजेत्। यज्ञस्य देवा देवानां यज्ञ इति यज्ञस्य देवानां च संयोगं करोति ॥

पाकयज्ञसंस्थालक्षणम्

[2]यथो एतद्यत्किंचिदन्यत्र विहाराद्धूयते सर्वास्ताः पाकयज्ञसंस्था इति ॥

या एवैता अभिचाराय पावनाय शान्तये समृद्धये स्वस्तये वा हूयन्ते ता एवैता उक्ता भवन्ति ॥

क्षत्रियवैश्याभ्यां ब्राह्मणस्य पुरोधानम्

ताश्चेद्राजन्यो वैश्यश्च ब्राह्मणं पुरोदधीत ॥

दैवकर्मधर्माः पित्र्यकर्मधर्माश्च

[3]सर्वत्र दैवेषु पुरस्तादुदग्वोपक्रमोऽपवर्गः प्रदक्षिणमुपचारो यज्ञोपवीतं प्रागग्रैर्दर्भैरग्नीनां परिस्तरणं प्रागुदगग्रैर्वा पवित्राभ्यामुत्पवनम् ॥

एवमेव विपरीतोपक्रमोऽपवर्गः पित्र्येषु दक्षिणाग्रैर्दर्भैरग्नीनां संपरिस्तरणं दक्षिणाप्रतीच्यग्रैर्वा पवित्रेणोत्पवनम् ॥

(१) बौगृप. २।४।१-२.
(२) बौगृप. २।६।१-३.
(३) बौगृप. २।६।७-१३.

तेषामियमेव प्रतिपत्तिर्व्याहृतिपर्यन्तो होमः ॥

अतोऽन्ये कर्मव्यञ्जका उपहोमाः पृथग्विनिविष्टा अन्योन्यमुपजीवन्तः ॥

तदानींतनेष्वाचार्या ऊहसंनमनैश्च मन्त्रैर्यज्ञं प्रतिसंदधुरविच्छेदाय ॥

य एवं विद्वान् यज्ञं यजेत यश्चैवं विद्वान् यज्ञेन यजते सर्वेण वै यज्ञेन यजते सर्वं चैव यज्ञं यजति ॥

तदेषाऽभिवदति— 'आ देवानामपि पन्थामगन्म यच्छक्नवाम तदनु प्रवोढुम्। अग्निर्विद्वान् स यजात्सेदु होता सो अध्वरान्त्स ऋतून्कल्पयाति ॥' इति ॥

## *बौधायनगृह्यशेषसूत्रम्

परिधिलक्षणम्

[1]अरत्निमात्राः परिधय आर्द्रा वा सत्वक्काः ॥

इध्मलक्षणम्

'प्रादेशमात्राण्येकविंशतिरिध्मदारूणि भवन्ति' इति ब्राह्मणेन व्याख्यातम् ॥

शम्यानां प्रकृतिराकृतिर्मानं च

अथ यदि शम्याः परिदधाति शमीमय्यः शम्याकृतयो वाऽरत्निमात्राः ॥

मन्त्रानादेशे व्याहृतिभिर्होमः

व्याहृतिभिरनाम्नातेषु ॥

* हिरण्यकेशिगृह्यशेषसूत्रस्य यत्र बौधायनगृह्यशेषसूत्रेण तुल्यता तत्र पृथक् संग्रहो न कृतः, बौधायनसूत्रे एव स्थलादिनिर्देशः कृतः।

(१) बौगृशे. १।१।४-६, १४; हिगृशे. ४।१ ब्राह्मणेन व्याख्यातम् (ब्राह्मणम्); संर. ६५ (अरत्निमात्राः परिधयः शुष्का आर्द्रा वा सत्वक्काः। प्रादेशमात्राण्येकविंशतिमिध्मदारूणि भवन्तीति ब्राह्मणेन व्याख्यातम्) एतावदेव.

असंस्कृतोपकरणकस्य होमस्य निषेधः

[1]अथाप्युदाहरन्ति— 'असंस्कृताभिरद्भिः प्रोक्षणीभिरप्रोक्षितपात्रैर्होमश्चासंमार्जनैः स्रुक्स्रुवैर्नाधिश्रितपक्वैराज्येन न प्रचरितव्यम् । यदि प्रचरेद्यातुधाना असुरा रक्षांसि पिशाचा यज्ञं ग्राहयेयुः' इति ॥

कर्मसमाप्तावग्नेर्लौकिकत्वसंपत्तिः

[2]अपवृत्ते कर्मणि लौकिकः संपद्यते ॥

परिधीध्मपवित्रयज्ञपात्राणां मानानि

[3]अरत्निमात्रं षडङ्गुलं तिस्रः शम्याः परिधीन् कृत्वा मध्यमाङ्गुलिरनामिका कनिष्ठिकेति स्थविष्ठो मध्यमोऽणीयान् द्राघीयान् दक्षिणतोऽणिष्ठो ह्रसिष्ठ उत्तरतोऽङ्गुष्ठपर्वमात्रमष्टादश याज्ञिकाः काष्ठाः प्रादेशमात्रं पवित्रं दर्भतरुणकाभ्यामङ्गुष्ठपर्वमात्रं प्रोक्षणीमाज्यस्थालीं प्रस्थचतुर्भागं पूर्णप्रस्थद्विभागं प्रणीताप्रणयनं चरुस्थालीं प्रस्थमाहुतिप्रमाणं चतुरङ्गुलमवदानप्रमाणमङ्गुष्ठपर्वमात्रं दर्वीप्रमाणमेकविंशत्यङ्गुष्ठं तस्या द्व्यङ्गुष्ठमुन्नतं पञ्चाङ्गुष्ठं बिलमेवमेव स्रुक्प्रादेशमात्रमुच्छ्रितं चतुरङ्गुलं वा किंचिद्दक्षिणत उन्नतो भवति मेक्षणमिति होमदर्वीप्रमाणमिति ह स्माऽऽह बोधायनः ॥

कर्मवैकल्यफलानि

[4]अग्निहीनमनावृष्टिर्मन्त्रहीनं तु ऋत्विजः ।
आज्यहीनं कुलं हन्ति स्वरहीनं तु पत्नयः ॥
यजमानं दक्षिणाहीनमन्त्रहीनं तु राष्ट्रकम् ।
सर्वहीनं सदस्यानि नास्ति यज्ञसमो रिपुः ॥
तस्मात्सर्वप्रयत्नेन किंचिद्द्रव्यः समाचरेत् ।
श्रियः कामश्चरेत्सर्वं समृद्धं सहदक्षिणम् ॥
एवमृषिविधानोक्तं मुनीनां तत्त्ववेदिनाम् ।
सर्ववेदाह्निकं होमं सर्वलोकेषु पूजितम् ॥
इत्याह भगवान् बोधायनः ॥

## आश्वलायनगृह्यसूत्रम्

अनादिष्टमन्त्रके होमे देवतानाममंन्त्रः

[1]अमुष्मै स्वाहेति जुहुयात् ॥

(१) क ? पाकयज्ञेष्विति, अधिकारात् । अमुष्मै इति सर्वनामनिर्देशो देवतार्थः । चतुर्थ्या देवतामादिश्य स्वाहाकारान्तैर्जुहुयात् । किं पुनरत्र विधीयते ? स्वाहाकारान्तता । एवं तर्हि न विधेया सा । कस्मात् ? 'स्वाहाकारान्तैः' इति सिद्धत्वात् । एवं चतुर्थ्युपदेशार्थम् । तथाऽपि न कर्तव्यम् । लक्षणान्तरप्रसिद्धे स्वाहाकारसंयोगे चतुर्थीविभक्तिः आम्नाता 'नमःस्वस्तिस्वाहा' इत्येवमादिषु । एवं तर्हि ऋङ्निवृत्त्यर्थम् । क ? 'अथ (काम्यानां स्थाने) काम्याः' (आगृ. ३।६।१) इत्यत्र । देवानामृच उपदिष्टाः । तत्र संदिह्यते— किं ताभिः ऋग्भिः होम उक्तः, उत देवतादेशेन ? इति । तथा 'प्राजापत्यस्य स्थालीपाकस्य' (आगृ. १।१३।७) इति । अत्र कुतः पुनः संशयः ? उभयथा दृष्टत्वात् । तद्देवत्यैश्च मन्त्रैर्होमो दृष्टः । 'अग्ने नय सुपथा राये अस्मान्' (आगृ. २।१।४) इत्यत्र ऋग्भिः होमो दृष्टः । तथा देवतापदैः 'सावित्र्यै ब्रह्मणे' (आगृ. ३।५।४) इत्येवमाद्यैः । तेन यत्र (न) दृश्यन्ते ऋचो देवतादेशो वा, तत्र विकल्पः प्राप्नोति । किमुदाहरणम् ? 'अथ काम्यानां स्थाने (काम्याः) चरवः' इति । तन्निवृत्त्यर्थम् 'अमुष्मै स्वाहेति जुहुयात्' इत्यारभ्यते । देभा.

(२) क्वचिन्नामधेयेन होम उक्तः 'सावित्र्यै ब्रह्मणे' इत्यादि । क्वचिन्मन्त्रेण होम उक्तः 'अग्ने नय सुपथा

---

(१) बौगृशे. १।२।१४ ; हिगृशे. ४।२ ग्राहयेयुः + (इति विज्ञायते).

(२) बौगृशे. १।३।१२ ; हिगृशे. ४।३.

(३) बौगृशे. १।७।२ ; हिगृशे. ४।६ अरत्निमात्रं षडङ्गुलं (बाहुमात्राः) स्रुक्प्रादेशमात्र (स्रुक्प्रादेश) ह स्माऽऽह बोधायनः (विज्ञायते).

(४) बौगृशे. १।८।४–८ ; हिगृशे. ४।७ द्रव्यः (द्रव्यं) (इत्याह भगवान् बोधायनः०).

(१) आगृ. १।३।७ ; प्रपा. ५४.

राये अस्मान् इति चतसृभिः ' इति । यत्र तु नोभयथा तत्र तु नामधेयेन कथं होमः स्यात् ? इत्येतत्सूत्रम्, 'प्राजापत्यस्य स्थालीपाकस्य हुत्वा' 'काम्याश्चरवः' इत्यादौ । गानावृ.

(३) इह तद्देवत्यैर्मन्त्रैश्च होमो दृष्टः 'अग्ने नय सुपथा राये अस्मानिति द्वे ' इत्यादौ । देवतापदैश्च 'सावित्र्यै ब्रह्मणे' इत्यादौ । 'अथ काम्यानां स्थाने' इत्यादौ च देवता उपदिष्टाः, न मन्त्राः । तत्र किं तद्देवत्यैर्मन्त्रैर्होमः, उत देवतापदैः ? इति संशये देवतापदैरित्यनेन विधीयते । अमुष्मै इति देवतापदस्य चतुर्थ्यन्तस्योपलक्षणम् । स्वाहेति परिभाषासिद्धस्यानुवादः 'स्वाहाकारान्तैर्मन्त्रैः' इति । अना.

[1]अग्निरिन्द्रः प्रजापतिर्विश्वेदेवा ब्रह्मेत्यनादेशे ॥

(१) अग्निरित्येवमाद्या देवताः पाकयज्ञेषु भवन्ति । कुतः ? पाकयज्ञाधिकारात् । सर्वेषु नेत्युच्यते । न आदेशः अनादेशः, तस्मिन् अनादेशे । कर्मणि चोद्यमाने देवता यत्र नाऽऽदिश्यन्ते तत्रैता देवता भवन्तीत्युच्यते । किमुदाहरणम् ? जातकर्मान्नप्राशनेत्येवंप्रकाराणि । एवं चेदतिप्रसङ्गः । रथारोहणब्रह्मयज्ञेत्येवंप्रकारेष्वतिप्रसङ्गः । न चेष्यते । तस्मान्नायमर्थः । एवं तर्ह्यनादेश इति मन्त्राणामनादेशमपेक्षते । यत्र होमा आदिष्टाः, मन्त्रा न विहिताः, तत्रैते मन्त्रा भवन्तीति सिद्धम् । नेत्यपरे । कस्मात् ? अर्थविरोधात् । आसां देवतानामनिर्दिष्टद्रव्यत्वादाज्यमिष्यते । इह च चैत्ययज्ञे चरुः पशुर्वा भवति । तस्य च होमः । तत एव च बलिहरणम् । तस्मात् सैव चैत्यदेवता भवतीत्युभयत्र । एवं च सिद्धे मन्त्रे इदमाद्युदाहरणं चौलादिषु । ननु तत्रापि मन्त्राणामुपदिष्टत्वात् न प्राप्नुवन्तीति । 'नैके कांचन' (आगृ. १।४।६) इत्येवं प्रतिषिद्धेषु पूर्वोक्तेषु मन्त्रेषु तत्रैते यथा स्युरिति कल्पयन्ति । अस्ति प्रयोजनम् । ननु नित्यपक्षेणैवम् । अपरे त्वन्यथा कल्पयन्ति अनादेशवचनम् । न आदेशः अनादेशः । क्व पुनरयमनादेशः ? शास्त्रे यत्र होमोऽनादिष्टः तत्रैते मन्त्रा भवन्ति । शास्त्रे अनोदितानां कथं प्रवृत्तिरिति ? अनादेशशब्दस्य सापेक्षत्वात् । किमपेक्षते ? अन्यत्राऽऽदेशमपेक्षते । अत एव शास्त्रे अनादिष्टानां लोके आदिष्टानां कथमेते मन्त्राः स्युः इति वचनम् । कथं पुनरेतत् ज्ञायते अयमर्थ इति ? लोकप्रवृत्तिदर्शनात् । तद्यथा लोके विवाहे चतुर्थ्यां प्राच्यप्रतीच्योदीच्यदाक्षिणात्यैः सर्वैरविसंवादेन एतत्कर्म परिगृहीतम् । न चान्य-(? न्यत्)शास्त्रे अन्या च प्रवृत्तिरस्ति । तस्मात् गृह्यतामेतत् यथा शास्त्रे अनादिष्टानामेते मन्त्रा भवन्तीति । एतदेवोदाहरणम् । अन्यदप्यस्ति । लोके संज्ञापरिग्रहात् । जातकर्मणि येषां चोदितपाठः । तथा विवाहे प्रस्थानकर्मणि । बलदेवयागे च । एवंप्रकाराणि लोके लौकिकान्यपि द्रष्टव्यानि । एवमनादेशशब्दस्यानवस्थितत्वादेवमपरे कल्पयन्ति । देभा.

(२) यत्र होमस्यानादेशः कर्मणश्चाऽऽदेशस्तत्रैता देवता होतव्याः । कुत्र ? जातकर्मादौ । तर्हि रथारोहणेऽपि स्यात् । एवं तर्हि अन्यथा व्याख्यास्यामः । यत्र होमश्चोद्यते, न मन्त्राः, चौलकर्मादौ 'नैके कांचन'पक्षे, तत्रैताभ्यो देवताभ्यो जुहोति । मन्त्रानादेश इतीयमेव व्याख्या साध्वी, मन्त्रप्रकरणत्वात् । तेन जातकर्मादौ न होमोऽस्ति । अन्ये तु पूर्वोक्तदोषपरिहारेण वर्णयन्ति । यत्र परशास्त्रे होमश्चोद्यते स्वशास्त्रे तु कर्ममात्रम्, तत्रैता देवता भवन्तीति । क्व ? जातकर्मादौ । गानावृ.

(३) यत्र होमश्चोद्यते न मन्त्रः तत्रैताभ्यो देवताभ्यो होमः कर्तव्यः । चौलकर्मोपनयनगोदानविवाहा उदाहरणम् । तत्र हि 'नैके कांचन' इति पक्षे मन्त्राः प्रतिषिद्धाः । होमश्चोदितः 'तेषां पुरस्ताच्चतस्र आज्याहुतीर्जुहुयात्' इति । तत्रैताभ्यो देवताभ्यो होमः कर्तव्य इति । अना.

समानकालानां पाकयज्ञानां समानतन्त्रता

[1]एकबर्हिरिध्माज्यस्विष्टकृतः स्युस्तुल्यकालाः ॥

(१) बर्हिश्च इध्मश्च आज्यं स्विष्टकृच्च बर्हिरिध्माज्यस्विष्टकृतः । बर्हिरिध्माज्यस्विष्टकृत् एकं येषां ते

(१) आगृ. १।३।८; प्रपा. ५४, १३२; संप्र. २७९.

(१) आगृ. १।३।९; प्रपा. ५४.

एते एकबर्हिरिध्माज्यस्विष्टकृतः । के? पाकयज्ञाः । स्युः भवेयुः । कतमे? तुल्यकालोपदेशात् समानकालोपदेशात् । समानकाला इत्यर्थः । एषां पाकयज्ञानां समानकालाः । किमुदाहरणम् । आश्वयुज्यामाश्वयुजीकर्म । तत्राऽऽग्रयणमपि प्राप्नोति । पार्वणः काम्यश्च । काम्यसंयोगादेतेषां कालान्तरप्रयोगोपपत्तेः । इदमन्यदुदाहरणम् । सर्व एवाभिषिक्तस्य प्रत्युद्धारः पुत्रजन्मना व्याख्यात इत्येवं प्रत्युदाहरणानि । अथवा पूर्वोक्तमप्युदाहरणं भवति । आग्रयणं ब्राह्मणस्य कर्तुरिच्छातः शरदि प्रवृत्तिः । आश्वयुज्यापि शरदि भवति । तस्मादेवाभ्युपपन्नमुदाहरणम् । अथ बर्हिरादीनामनुक्रमणं परिसंख्यानार्थमाहोस्वित् निदर्शनार्थम् । किं पुनश्चिन्तायाः प्रयोजनम् । परिसमूहनपर्युक्षणाज्यभागपूर्णपात्राणां तदनेकक्रियायाः प्राप्नोति यदि परिसंख्यानम् । अथ चेन्निदर्शनार्थम् एतेषामपि सकृत् क्रिया प्राप्नोति । निदर्शनार्थमिति वर्णयन्ति । तस्मादेतेषां सकृत् क्रियेति सिद्धं भवति । देभा.

(२) एकबर्हिरादिर्येषां † (? एकं बर्हिरादि येषां) पाकयज्ञानां ते तथोक्ताः । तुल्यकालाः एककालाः । एकस्मिन् काले यद्यनेके पाकयज्ञाः कार्यत्वेन प्राप्ताः तदा ते समानतन्त्राः कार्या इत्यर्थः । किमुदाहरणम्? यदा पर्वणि रात्रौ काम उत्पद्यते तदा काम्यपार्वणयोरेककालत्वम् । यदा वाऽऽग्रयणाश्वयुजीकर्मणी आश्वयुज्यां क्रियेते तदा तयोरेककालत्वम् । गानावृ.

(३) पाकयज्ञाः शास्त्रतोऽर्थतो वा आश्वयुजीकर्माऽऽग्रयणादयः । तेषु बर्हिरादयस्तन्त्रभूता इत्यर्थः । बर्हिरादिग्रहणमुपलक्षणम् । तेन परिस्तरणादीनामपि सकृदेव क्रिया भवति । देशकालकर्त्रैक्यादेव तन्त्रत्वे सिद्धे समानदेवत्येषु तुल्यकालेषु प्रधानाहुतीनां तन्त्रता मा भूदित्येवमर्थमिदमारभ्यते । अना.

[1]**तदेषाऽभि यज्ञगाथा गीयते—**

**पाकयज्ञान् समासाद्य एकाज्यानेकबर्हिषः ।**
**एकस्विष्टकृतः कुर्यान्नानाऽपि सति दैवते ॥**
**इति ॥**

(१) तुल्यकालानां पाकयज्ञानामेकत्वविधानं प्रति यज्ञगाथा उदाह्रियते— पाकयज्ञान् समासाद्य इति । निगदव्याख्याता । किमर्थं पुनरुक्तार्था गाथा उदाह्रियते? संशयनिवृत्त्यर्थं यज्ञगाथोदाहरणम् । योऽसौ उक्तः संशयः 'परिसंख्यानार्थं निदर्शनार्थं वा' इति, तस्य निवृत्तिः क्रियते । एतेषां निदर्शनार्थता साध्यते । कथम्? यज्ञगाथेयं पूर्वोक्तानामर्थात् (? पूर्वोक्तानामर्थानां न) सर्वेषामनुद्रवणं करोति । परिसंख्यानत्वे सत्यपि (? सत्यमीषां) सर्वेषामनुद्रवणं प्राप्नोति । तस्मान्निदर्शनार्थतेति सिद्धम् । किंचान्यद्यज्ञगाथोदाहरणेन सिध्यति— नानाऽपि सति दैवते इति । नानादेवत्येष्वपि । अपिशब्दः संभावनायाम् । किं पुनः संभावयति समानदेवतानां तेन? समानदेवतेषु बर्हिरादीनामेव सकृत् क्रिया, नान्यस्याः । प्रधानाहुतेः सकृत् क्रिया मा भूदिति प्रयोजनम् । देभा.

(२) बर्हिरादिग्रहणस्य तन्त्रोपलक्षणार्थतां स्पष्टयितुं यज्ञगाथामुदाहरति— तदेषेति । तस्मिन्नर्थे एषा यज्ञगाथाऽभिगीयते पठ्यते । बहून् पाकयज्ञानेकस्मिन् काले समासाद्य प्राप्य एकाज्यान् एकबर्हिषः एकस्विष्टकृतः कुर्यान्नानाऽपि सति दैवते । न प्रतिदैवतं तन्त्रमावर्तयितव्यमित्यर्थः । गानावृ.

(३) तद्यज्ञगाथोदाहरणेन स्पष्टयति— तदिति । नानाऽपि सति दैवते । अपिशब्दादेकस्मिन्नपि दैवते आज्यादीनामेव तन्त्रत्वं न प्रधानाहुतीनामिति नानार्थः । अना.

---

† अयं पाठः सर्वेषु पुस्तकेषु मुद्रितोऽस्ति । तस्य प्रामादिकत्वं मन्दविचाराणामपि सुस्पष्टम् । तथापि तत्रत्यं वृत्तिकारप्रयुक्तमादिपदं सौत्रं मत्वा तमेव पाठं साधुमभिमत्य तदनुरोधेन कैश्चित् 'एकबर्हिराद्याज्यस्विष्टकृतः' इति, 'एकबर्हिरादयः' इति च वृत्त्यभिमतं सूत्रपाठं परिकल्पितमुपलभ्य स्मयामहे ।

(१) आगृ. १।३।१० ; प्रपा. ५४ एकाज्या (त्वेकाज्या).

## आश्वलायनगृह्यपरिशिष्टम्

स्नानं धौतानार्द्रवासःपरिधानं यज्ञोपवीतमाचमनं प्राङ्मुखत्वमासीनत्वं दक्षिणाङ्गकारित्वं समाधानं चेलधिकारिधर्माः, मन्त्रान्ते कर्मकरणम्, प्रत्यृचोक्तौ प्रतिऋगन्तं कर्मकरणम्, द्रव्यानादेशे आज्यं द्रव्यम्, अवदानरहितहोमेषु स्रुवः अवदानवत्सु च दर्वी करणम्, कठिनद्रव्यकेषु होमेषु पाणिः करणम्, कर्मावृत्तौ मन्त्रावृत्तिः, कर्मान्ते आचमनम्

[1]कर्ता स्नातो धौतानार्द्रवासा यज्ञोपवीत्याचान्तः प्राङ्मुख आसीनो दक्षिणाङ्गकारी समाहितो मन्त्रान्ते कर्म कुर्वीत। प्रत्यृचोक्तिष्वृगन्तेषु। अनादेश आज्यं द्रव्यम्। स्रुवः करणम्। अवदानवत्सु दर्वी। पाणिः कठिनेषु। कर्मावृत्तौ मन्त्रोऽप्यावर्तते। कर्मणोऽन्त आचमनं च। इति सामान्यम्॥

मन्त्रेषु ऋष्यादिस्मरणं केवलदैवतस्मरणं वा कर्माङ्गम्

[2]दैवतस्मरणमेव वा कुर्यात्। एवमन्यत्र व्याख्यातम्॥

ऋष्यादिज्ञानाशक्तौ केवलदेवतास्मरणमेव कार्यम्, 'देवतास्मरणमेव वा कुर्यात्' इति परिशिष्टोक्तेः।

इन्दु. ११

## कौषीतकिगृह्यसूत्रम्

कर्मान्ते ब्राह्मणभोजनं ब्राह्मणगुणाश्च

[3]कर्मापवर्गे ब्राह्मणभोजनम्॥

वाग्रूपवयःश्रुतशीलवृत्तानि गुणाः॥

श्रुतं तु सर्वानत्येति॥

न श्रुतमतीयात्॥

अधिदैवमथाध्यात्ममधियज्ञमिति त्रयम्।
मन्त्रेषु ब्राह्मणे चैव श्रुतमित्यभिधीयते॥

क्रियावन्तमधीयानं श्रुतवृद्धं तपस्विनम्॥
भोजयेत्तं सकृद्यस्तु न तं भूयः क्षुदश्नुते॥

यां तितर्पयिषेत्कांचिद्देवतां सर्वकर्मसु।
तस्या उद्दिश्य मनसा दद्यादेवंविधाय वै॥
नैवंविधे हविर्न्यस्तं न गच्छेद्देवतां क्वचित्।
निधिरेष मनुष्याणां देवानां पात्रमुच्यते॥

अनादिष्टमन्त्रादिष्टदेवताककर्मसु स्वाहाकारान्तस्य चतुर्थ्यन्तनाम्नो मन्त्रत्वम्

[1]अनाम्नातमन्त्रास्वादिष्टदेवतासु 'अमुष्यै स्वाहाऽमुष्यै स्वाहा' इति जुहुयात् स्वाहाकारेण शुद्धेन॥

प्रतिश्रुतप्रकरणोक्तहोमकल्पस्य सर्वहोमप्रकृतित्वम्

व्याख्यातः प्रतिश्रुते होमकल्पः॥

[2]प्रकृतिर्भूतिकर्मणाम्॥

सर्वासां चाऽऽज्याहुतीनाम्॥

शाखापशूनाम्॥

चरुपाकयज्ञानां च॥

हुताहुतप्रहुतप्राशितानां लक्षणानि

तदपि श्लोकाः—

हुतोऽग्निहोत्रहोमेनाहुतो बलिकर्मणा।
प्रहुतः पितृकर्मणा प्राशितो ब्राह्मणे हुतः॥

रौद्रादिमन्त्रोच्चारणे अपुपस्पर्शः

रौद्रं तु राक्षसं पित्र्यमासुरं चाऽऽभिचारिकम्।
उक्त्वा मन्त्रं स्पृशेदप आलभ्याऽऽत्मानमेव च॥

---

(१) आगृप. १।१; प्रपा. ५५; इन्दु. ८ कर्मणोऽन्त (कर्मान्त).

(२) आगृप. १।८; इन्दु. ११ दैवत (देवता) (एवमन्यत्र व्याख्यातम्०).

(३) कौगृ. १।२।१–८.

(१) कौगृ. १।९।१८,१९.

(२) कौगृ. १।१०।१–४,६,७,९.

व्याहृतिग्रहणे व्यस्तसमस्तग्रहणम्, अनादेशे व्याहृत्याहुतयः

§ [१]**प्रतीयेतैतस्यां चोदनायामेवम् ॥**

**अनादेशे सर्वेषु भूतिकर्मसु पुरस्ताच्चोपरिष्टाच्चैताभिरेव जुहुयात् ॥**

## आपस्तम्बगृह्यसूत्रम्

स्मार्तकर्मव्याख्यानप्रतिज्ञा

[१]**अथ कर्माण्याचाराद्यानि गृह्यन्ते ॥**

(१) द्विप्रकाराणि कर्माणि— श्रुतिलक्षणानि आचारलक्षणानि च । तत्र श्रुतिलक्षणानि व्याख्यातानि । अथ इदानीं यानि कर्माणि विवाहप्रभृतीनि आचारात् प्रयोगात् गृह्यन्ते ज्ञायन्ते, न प्रत्यक्षश्रुतेः, तानि व्याख्यास्यामः । किं प्रयोजनं सूत्रस्य ? स्मार्तानां कर्मणामधिकारः । तेन उदगयनादिनियमः, 'सर्वत्र स्वयं प्रज्वलितेऽग्नौ' (आपगृ. ८।५) इत्येवमादीनि च गार्ह्येष्वेव कर्मसु भवन्ति, न श्रौतेषु । अत्र अथशब्देन श्रौतोपदेशानन्तरं स्मार्तोपदेशं करिष्यामीति वदन् तदपेक्षामस्य दर्शयति । तत्र याः परिभाषाः 'स त्रयाणां वर्णानाम्' (आपप. १।२) 'मन्त्रान्तैः कर्मादीन् संनिपातयेत्' (आपप. २।१) 'रौद्रराक्षस' (आपप. २।९) 'तदिदं सर्वप्रायश्चित्तम्' इत्येवमाद्यास्ता इहापि भवन्ति । अनाकुला.

(२) अथ अनन्तरम् । आचारात्— आङ् इत्युपसर्गस्य अविच्छेदो व्याप्तिरभिप्रेतोऽर्थः । चारः चरणं कर्मसु प्रवर्तनम्, 'पिण्डपितृयज्ञेन चरन्ति' (आश्रौ. १।७।२) इत्यादौ दर्शनात् । तेन यत्सर्वेषु देशेषु सर्वेषु कालेषु च सर्वैस्त्रैविद्यवृद्धैः शिष्टैर्लौकिकप्रयोजनाभावेऽप्यविच्छिन्नमविगानेनाऽऽद्रियमाणम्, अत एव मूलान्तरासंभवात्स्वमूलभूतवेदानुमाने लिङ्गभूतं कर्मसु प्रवर्तनं स आचारः । तस्मादाचारादनुमितैर्वेदैः यानि औपासनहोमादीनि पाकयज्ञशब्दवाच्यानि पाणिग्रहणादीनि च यज्ञेष्वधिकरिष्यमाणदेहसंस्कारार्थानि कर्माणि गृह्यन्ते ज्ञायन्ते कर्तव्यत्वेन तानि व्याख्यास्याम इति शेषः । यत एव आचारानुमेयवेदावगम्यानि गार्ह्याणि कर्माणि, अत एव तेभ्यः प्रथममनुष्ठेयेभ्योऽपि पूर्वं श्रौतानां व्याख्यानं कृतम्, प्रत्यक्षश्रुतिविहितेषु जिज्ञासायाः प्रथमभावित्वात्, अनुमितवेदार्थजिज्ञासायाश्चरमभावित्वात्, जिज्ञासाशान्त्यर्थत्वाच्च व्याख्यानस्येति । अत्र च आचारादित्याचारेणोपलक्ष्य गार्ह्याणि कर्माणि वदन्नेवं ज्ञापयति— इह साक्षादनिबद्धानामपि येषां 'जमदग्नीनां तु पञ्चावत्तम्' (आपश्रौ. २।१८।२) इत्यादीनां पदार्थानामाचारः कृत्स्नदेशादिव्याप्तः स्यात् तेऽपि वेदमूला एवेति । कृत्स्नदेशादिव्याप्तिश्चाधिकपौनरुक्त्यादिभिः श्रौते दर्शनेन गृह्यान्तरैर्धर्मशास्त्रैः न्यायबलेन संप्रदायविद्व्याख्यातृवचनैर्वा निश्चेतव्या । इदं चाधिकारसूत्रं यान्यङ्गान्युत्तरत्र 'पुरस्तादुदग्वोपक्रमः' (आपगृ. १।५) इत्यादीनि वक्ष्यन्ते तेषां गार्ह्यकर्मार्थताम्, श्रौतानां सार्वत्रिकाणामपि स्वतोऽनिदमर्थतां च ज्ञापयितुम् । एतच्च समानोपदेशातिदेशयोरभावात् । केचित्— कर्माणीत्येतद्गृह्ये वक्ष्यमाणान्यस्मच्चरणार्थान्येव, न तु धर्मशब्दाधिकृतधर्मशास्त्रोक्तवत्सर्वार्थानि । तथा श्रौतानन्तरं गार्ह्याधिकारः श्रौतोक्तसार्वत्रिकधर्माणामिह प्राप्त्यर्थ इति । ताद.

उदगयनादिः कर्मसामान्यकालः

[१]**उदगयनपूर्वपक्षाहःपुण्याहेषु कार्याणि ॥**

(१) उदगयनादिविधानं दक्षिणायनादिप्रतिषेधार्थम् । समुच्चयश्चोदगयनादीनाम्, न विकल्पः । पुण्याहाः देवनक्षत्राणि ज्योतिःशास्त्रे प्रसिद्धानि, यमनक्षत्राणि च तद्विहितानि । अनाकुला.

(२) उदगयनादयः प्रसिद्धाः । पुण्याहास्त्वह्नो नवधा विभक्तस्यायुजो भागाः प्रातःसङ्गवमध्याह्नापराह्णसायंशब्दवाच्याः पुण्यनक्षत्रापरपर्यायाः पञ्च, 'समानस्याह्नः पञ्च पुण्यानि नक्षत्राणि' (तैब्रा. १।५।३) 'मित्रस्य सङ्गवः । तत्पुण्यं तेजस्व्यहः'

---

§ पाणिग्रहणप्रकरणे 'पश्चादग्नेः०' इतिसूत्रगता सूत्रविभागगोचरा टिप्पणी अत्रानुसंधेया ।

(१) कौगृ. १।१२।१२,१३.

(२) आपगृ. १।१; प्रका ३; बाल. १।२९ पृ. १५५.

(१) आपगृ. १।२ ; प्रका. ३.

(तैब्रा. १।५।३) इत्यादिश्रुतेः। युग्मास्त्वश्लीलाः, 'चत्वार्यश्लीलानि' (तैब्रा. १।५।३) इति श्रुतेः।

केचित्— कृत्तिकादिविशाखान्तानि देवनक्षत्राणि पुण्याहाः, 'यान्येव देवनक्षत्राणि। तेषु कुर्वीत यत्कारी स्यात्। पुण्याह एव कुरुते'। (तैब्रा. १।५।२) इति श्रुतेः। उदगयनेत्यादिरयं समासो द्वन्द्वः। तेषु कार्याणि। गार्ह्याणीति शेषः। एषां समुच्चयः, न विकल्पः। एतच्च सामान्यविधानं तत्र तत्र विशेषविधानेनापोद्यते नियम्यते च। एवमुदगयनादीनां विधाने सत्यपि क्वचिदनियमः प्रतिभासते। 'सर्वे ऋतवो विवाहस्य' (आपगृ. २।१२) इति वचनात् यदा दक्षिणायनेऽपि विवाहः स्यात्तदा समावर्तनं तत्कालसमीपकाल एव, इतरथा उदगयनसमावृत्तस्य शरदि विवाहे सति बहुकालव्यवधाने 'अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः।' इति निषेधातिक्रमप्रसङ्गात्। किंच आश्वलायनगृह्ये 'उदगयन आपूर्यमाणपक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनगोदानविवाहाः' (आगृ. १।४।१) इत्यत्र चौलविकारत्वादेव गोदानस्य उदगयनप्राप्तौ पुनस्तत्र तद्विधिः तद्विकारान्तरे समावर्तने उदगयननियमनिवृत्त्यर्थं इति गम्यते। तथा बौधायनीये समावर्तनस्य चौलविकारत्वादेव आपूर्यमाणपक्षप्राप्तौ पुनस्तत्र तद्विधिरुदगयनानियमार्थं इति गम्यते। तथा गृहनिर्माणप्रवेशयोः ज्योतिःशास्त्रे दक्षिणायनस्यापि विधानात् अविगीतशिष्टाचाराच्च उदगयनानियमः। तथा अपरपक्षेऽपि आ पञ्चम्याः ज्योतिःशास्त्रादेव शिष्टाः कर्माणि आचरन्ति। तथैव ज्योतिःशास्त्रादन्नप्राशनगृहनिर्माणप्रवेशान् रात्रावप्याचरन्ति। तथैव यदा पुण्याहाः ज्यौतिषोक्तदोषोपहतास्तदा अश्लीलेष्वपि तदुक्तगुणयुक्तेषु अविगानेन कर्माण्याचरन्ति। ज्योतिःशास्त्रमपि वेदाङ्गत्वादगृह्यमाणकारणत्वात् शिष्टपरिगृहीतत्वाच्च कल्पसूत्रादिवदादरणीयमेव। निर्णये तु शिष्टाः प्रमाणं सर्वत्र। ताद.

यज्ञोपवीतमधिकारिविशेषणम्

[१]**यज्ञोपवीतिना॥**

(१) कार्याणि इत्यनुवर्तते। अनाकुला.

(२) कार्याणीति संबन्धः। ननु यज्ञोपवीतं पाकयज्ञेषु 'प्रागपवर्गाणि' (आपप. २।१५) इत्यादिना सिद्धम्। विवाहादिहोमेषु जपादिषु च 'होमे जप्यकर्मणि' (आध. १।१।१५) इत्यादिना। अतोऽत्रैतद्विधिर्व्यर्थः। सत्यम्, यत्राप्राप्तिर्हेमन्तप्रत्यवरोहणादिषु तत्रायं विधिः सार्थ एव। ताद.

प्रदक्षिणक्रियत्वम्

[१]**प्रदक्षिणम्॥**

प्रदक्षिणं च तानि कर्तव्यानि। दक्षिणं पाणिं प्रतिगतं प्रदक्षिणम्। उदाहरणं परिस्तरणादि। ननु— तदिदमुभयमविधेयम्, पूर्वमेव श्रौतेषु विहितत्वात् 'दैवानि' (आपप. २।१५) इति। तत्रोच्यते— इह मानुषेषु जातकर्मादिष्वप्येतयोः प्रवृत्तिरिष्यते, तदर्थमयमारम्भः। अनाकुला.

(२) कार्याणीत्येव संबन्धः। इदं तु प्रादक्षिण्यं पाकयज्ञेषु तत्कोटिषु च विवाहादिषु परिभाषासिद्धमपि तद्व्यतिरिक्तगार्ह्यार्थं विधीयते। 'तथाऽपवर्गः' (आपगृ. १।६) इति चेत्थमेव। ताद.

प्रागुपक्रमतोदगुपक्रमता च वैकल्पिकी

**पुरस्तादुदग्वोपक्रमः॥**

(१) अनियमे नियमार्थमिदं वचनम्। दक्षिणतः पश्चाद्वोपक्रमो मा भूदिति। परिस्तरणाद्येवोदाहरणम्। अनाकुला.

(२) कार्यं इति शेषः। अयं तु सर्वेष्वपि यज्ञायज्ञरूपगार्ह्येष्वप्राप्तत्वाद्विधीयते। ताद.

प्रागपवर्गतोदगपवर्गता च वैकल्पिकी

**तथाऽपवर्गः॥**

(१) तेषामपवर्गोऽपि तथा प्रत्येतव्यः। पुरस्तादुदग्वेत्यर्थः। अपवर्गः परिसमाप्तिः। न चात्र उपक्रमापवर्गयोः समानदिङ्नियमः क्रियते— पुरस्तादुपक्रान्ते तत्रैव समाप्यमुदगारभ्यं च तत्रैवेति। किं तर्हि? यथा-

(१) आपगृ. १।३; प्रका. ३; बाल. १।२९ पृ. १५५.

(१) आपगृ. १।४–११; प्रका. ३.

संभवं प्रवृत्तिः, तद्यथा परिस्तरणस्य पुरस्तादुपक्रान्तस्य तत्रैवापवर्गासंभवादुदगपवर्गः । नन्वत्र अपवर्गविधेरानर्थक्यम्, श्रौतेष्वेव परिभाषितत्वात् 'प्रागपवर्गाण्युदगपवर्गाणि वा' (आपप. २।१५) इति । उच्यते । यद्यपवर्गविधिः पुनरिह नाऽऽरभ्यते, 'अपरेणाग्निं द्वे कुटी कृत्वा' (आपगृ. १९।१४) इत्यत्र दक्षिणापवर्गता प्राप्नोति, अत्रोपक्रमस्योदग्गतत्वनियमात् । अतो विप्रतिषेधे अपवर्गबलीयस्त्वं स्यादित्ययमारम्भः । अन्यथा प्रदक्षिणपरिभाषया सामान्यपरिभाषा बाध्यते । किंच 'दैवानि कर्माणि' इति तत्र विशेषितम् । अत्र मानुषेषु कर्मादिष्वपि प्राप्त्यर्थोऽपवर्गनियमः । अनाकुला.

(२) पुरस्तादुदग्वा क्रियापरिसमाप्तिः कार्येत्यर्थः । ननु— 'पुरस्तादुदग्वोपक्रमः' इति विधेरेव समन्तपरिषेकादावर्थसिद्धत्वान्नाऽऽरब्धव्यं 'तथाऽपवर्गः' इति । न, अनारभ्यमाणेऽस्मिन् सूत्रे प्राचीलेखोत्पवनादेरुदीचीलेखाकुटीकरणादेश्चापवर्गः प्रत्यक् दक्षिणा च स्यात् । अतस्तद्बाधनायेदमारब्धव्यमेव । केचित्— प्राचीनां लेखानामुदगुपक्रमः, उदीचीनां च प्रागपवर्गः, अग्निपरिस्तरणवदुभयविध्यसंभवादिति । ताद.

पित्र्यकर्मकालः

**अपरपक्षे पित्र्याणि ॥**

(१) पितृदैवत्यकर्माण्यपरपक्षे कार्याणि । 'मासिश्राद्धस्यापरपक्षे' (आपगृ. २१।१) 'या माघ्याः पौर्णमास्या उपरिष्टाद्व्यष्टका' (आपगृ. २१।१०) इति, तत्रापरपक्ष उपदिष्टः । इदं तु नियमनं यानि गयाश्राद्धादीनि देशविशेषेण पात्रविशेषेण काम्यान्युपदिष्टानि अस्माभिश्च परिगृहीतानि 'पार्वणेनातोऽन्यानि' (आपगृ.७।२३) इत्यत्र, तेष्वपरपक्षप्राप्त्यर्थं च । तेन पूर्वपक्षे मृतस्यापरपक्षे एकोद्दिष्टं कर्तव्यम्, न त्वेकादशेऽहनि । अनुष्ठानं चै(त्वे)कादशेऽहनि । मासिश्राद्धस्यापरपक्षविधेः प्रयोजनं तत्रैव वक्ष्यामः । अयं चापरपक्षविधिः कृत्स्नस्योदगयनादेरपवादः, न पूर्वपक्षमात्रस्य । तदा 'न च नक्तं श्राद्धं कुर्वीत' इति रात्रिप्रतिषेधोऽर्थवान् । तेन सर्वोऽपरपक्षः श्राद्धकालः । पुण्याहनियमश्च तत्रानादरणीयः । प्रसव्यं च पित्र्याणि कर्माणि कर्तव्यानि । उदाहरणं परिस्तरणादि । उपक्रमस्तु पुरस्तादुदग्वा यथायोगम् । उदाहरणं परिस्तरणादि । अनाकुला.

(२) कार्याणीत्येव । अयं च विधिः स्वतन्त्रपित्र्योद्देशेन, अङ्गानां तु सह प्रयोज्यानां मुख्यकालत्वेन कालविध्यपेक्षाभावात् । एष च न पूर्वपक्षमात्रापवादः । किं तर्हि ? सर्वापवादार्थं विध्यन्तरम् । आः ! कुत एतत् ज्ञायते ? 'न च नक्तं श्राद्धं कुर्वीत' (आध. २।१७। २३) इति ज्ञापनात् । यदि ह्ययं पूर्वपक्षमात्रापवादः स्यात्, तत उदगयनादीनां त्रयाणामपवादाभावाद्रात्रावप्रसक्तेः प्रतिषेधो न स्यात् । अस्ति च प्रतिषेधः, इत्यतो ज्ञायते विध्यन्तरमेवेति । प्रयोजनं त्वविशेषेण दक्षिणायनेऽप्यपरपक्षेऽह्नि काम्यश्राद्धानि कर्तव्यानीति । मासिश्राद्धं तु 'मासिमासि कार्यम्' (आध. २।१६।३) इति वीप्सया दक्षिणायनेऽपि सिद्धमेव । नन्वस्मिन् सति 'मासिश्राद्धस्यापरपक्षे' (आपगृ. २१।१) इति विधिः किमर्थः ? नियमार्थः । तथा हि— अपरपक्ष एव मासिश्राद्धम्, न पुनर्दैवान्मानुषाद्वा विघातादपरपक्षेऽतिक्रान्ते 'सर्वोऽपरपक्षः पूर्णमासस्य' इत्यादिवत् पूर्वपक्षेऽपि कर्तव्यम् । किंतु प्रारब्धस्मार्तनित्यकर्मव्यापत्तौ प्रायश्चित्तमेव । तच्च 'भूर्भुवः सुवः स्वाहा' इत्येको होमः सर्वप्रायश्चित्ताख्यः । 'यद्यविज्ञाता सर्वव्यापद्वा भूर्भुवः स्वरिति सर्वा अनुद्रुत्याऽऽहवनीय एव जुहुयात्' (ऐब्रा. २५।३४) इति बह्वृचश्रुतेः । अयं चात्रौपासने, नैमित्तिकैकविधिपरश्रुतिस्थाहवनीयशब्दस्य न्यायतो निमित्तवत्कर्मार्थाग्निमात्रप्रदर्शनार्थत्वात् । उपवासश्च कार्यः, 'वेदोदितानां नित्यानां कर्मणां समतिक्रमे । स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम् ॥' (मस्मृ. ११।२०३) इति मनुवचनात् । आतमितोः प्राणायामश्च, 'नियमातिक्रमे वाऽन्यस्मिन्' (आध. २।१२।१८) इति वचनात् । एतेषां समुच्चय एव, न विकल्पः, 'एकस्मिन् दोषे श्रूयमाणानि प्रायश्चित्तानि समभ्युच्चीयेरन्' (आपश्रौ. ९।१।२) इति दर्शितत्वात् ।

प्रसङ्गादन्येषां लोपेऽपि प्रायश्चित्तमुच्यते । एवमन्येषामपि प्रारब्धानां प्रायश्चित्तं पाकयज्ञानां व्यापत्तौ, गौणकालेऽप्यतिक्रान्ते । गौणकाले तु सर्वप्रायश्चित्तपूर्वकं तेऽनुष्ठेयाः । औपासनहोमस्य तु बहुकालातिक्रमे अष्टम्यो होमकालेभ्यः पूर्वं प्रत्येकं सर्वप्रायश्चित्तपूर्वकं अतीता होमाः कर्तव्याः । अत्रोपवासप्राणायामयोराचारो न दृश्यते । ऊर्ध्वं तु धार्यमाणेऽप्यग्नौ 'अनुगतो मन्थ्यः' (आपगृ. ५।१७) इत्याद्यग्न्युत्पत्तिप्रायश्चित्ते भवतः, 'चतूरात्रमहूयमानोऽग्निर्लौकिकः संपद्यते' इति वचनात् । यदि पुनरालस्यादिनोत्सन्नाग्निरेव चिरकालं वर्तेत तदा स्मृत्यन्तरतस्तत्कालानुरूपं कृच्छ्रादिकं होमद्रव्यदानं च वेदितव्यम् । स्वकाले अनारब्धानां तु पाकयज्ञानां सर्वप्रायश्चित्तं हुत्वाऽऽरम्भः कर्तव्यः ।

केचित्— पाकयज्ञानां स्वकालेष्वनारम्भे आरब्धानां चाकरणे गौणकालातिक्रमे च चतुर्गृहीतेनाऽऽज्येन सग्रहेण सप्तहोत्रा जुहुति । यद्यपि 'सप्तहोत्रा यज्ञविभ्रष्टं याजयेच्चतुर्गृहीतेनाऽऽज्येन' (आपश्रौ. १४।१४।११) इति श्रौतो दर्वीहोमः यज्ञविभ्रेषे युक्तः, तथापि 'एषा वा अनाहिताग्नेरिष्टिर्यच्चतुर्होतारः' (आपश्रौ. १४।१३।२) इत्युपक्रम्य 'आहिताग्नेस्तान् प्रतीयादुभयोरितरान्' (आपश्रौ. १४।१५।५) इत्युपसंहारात् गार्ह्ये विभ्रेषे आहत्य प्रायश्चित्तविधानेनापेक्षितत्वाच्च तद्विभ्रेषेऽपि युक्त एवेति । तत्तु कपर्दिस्वामिनोक्तम् ।

जातकर्मादीनां तु स्वकालातिक्रमे सर्वप्रायश्चित्तपूर्वकं तदनुष्ठानम् । कर्माङ्गानां तु लोपे सर्वप्रायश्चित्तं प्राणायामश्च । अनुष्ठानं चाऽऽरादुपकारकाणामा कर्मसमाप्तेः । द्रव्यसंस्काराणां तु द्रव्योपयोगात् पूर्वमेव संभवताम् । पाकयज्ञेष्वाग्निहोत्रिकविधौ चोपनयने चाङ्गव्यापत्तौ 'भुवः स्वाहा' इति तत्तत्कर्माङ्गाग्नौ होमः । 'अनाज्ञातम्' इति तिसृभिश्च होमो जपो वा । भुवरनाज्ञातविध्यर्थयोर्विकल्पो वा, 'ब्राह्मणावेक्षो विधिः' (आपगृ. २।११) इति 'श्रुतितः संस्कारः' (आध. १।१।९) इति श्रौतप्रायश्चित्तप्राप्त्यर्थत्वात् । ननु 'भुवः' इति दक्षिणाग्नौ, 'अनाज्ञातम्' इति चाऽऽहवनीये । सत्यम्, इह तयोरग्न्योरभावात् नैमित्तिकानामप्यङ्गत्वेनेतराङ्गवत् प्रधानाग्नौ होमस्य युक्तत्वाच्च । केचित् सर्वेषु गार्ह्यकर्मसु तदङ्गेषु च भ्रेषे 'अनुक्तमन्यतो ग्राह्यम्' इति न्यायेन गृह्यान्तरोक्तानि प्रायश्चित्तान्याहुः, तच्चिन्त्यम् ।

अलं प्रासङ्गिकेन । प्रकृतमुच्यते । यत्तु 'अपरपक्षस्यापराह्णः श्रेयान्' (आध. २।१६।४) इति, तदपराह्णविधानार्थमनुवादः । यथा पात्नीवते 'सर्वत्रानुवषट्कारो द्विदेवत्यर्तुग्रहादित्यसावित्रपात्नीवतवर्जम्' (आपश्रौ. १२।२४।२) इत्यनुवषट्काराभावे प्राप्तेऽपि 'अपि वोपांश्वनुवषट्कुर्यात्' इत्युपांश्वनुवषट्कारविधानार्थं 'नानुवषट्करोति । अपि वोपांश्वनुवषट्कुर्यात्' (आपश्रौ. १३।१४।९,१०) इति । 'सर्वेष्वेवापरपक्षस्याहःसु' (आध. २।१६।६) इति त्वहर्विशेषणार्थम् । अपरपक्षस्याहःस्वेव मासिश्राद्धम्, न पूर्वपक्षस्याहःसु विकल्पेनाप्यभिमतमिति । इतरथा आशौचादतिक्रान्तेऽपरपक्षे, 'दैवात्पितॄणां श्राद्धे तु आशौचं जायते यदि । आशौचेऽथ व्यतीते वै तेभ्यः श्राद्धं प्रदीयते ॥' इति स्मृत्यन्तरात्कदाचित् पूर्वपक्षस्याहःस्वपि विकल्पेनेदं स्यात् । नित्यश्राद्धं तु 'एवं संवत्सरम्' (आध. २।१८।१३) इत्यत्यन्तसंयोगे द्वितीयाबलात् पूर्वपक्षेऽपि । तादः

पित्र्यकर्मसु प्राचीनावीतमप्रदक्षिणक्रियत्वं दक्षिणतोपवर्गता च

**प्राचीनावीतिना ॥**

**प्रसव्यम् ॥**

**दक्षिणतोऽपवर्गः ॥**

(१) तदिदं प्राचीनावीत्यादित्रयमविधेयम्, श्रौतेष्वेव परिभाषितत्वात् । उच्यते— 'यज्ञोपवीतिना' 'प्रदक्षिणम्' 'तथाऽपवर्गः' इत्येताः परिभाषा अविशेषेणात्र प्रकरणे पठिताः सामान्यपरिभाषाया बाधितत्वात् पित्र्येष्वपि प्राप्नुवन्ति, तद्बाधार्थमिदम् । अत्र च येषां पित्र्याणां स्वातन्त्र्येण स्वकाले प्रवृत्तिः तेषामेवायं प्राचीनावीतविधिः, न त्वन्यत्राङ्गत्वेन प्रयुज्यमानानाम् । तेन दैवेषु मानुषेषु

च कर्मसु ‘ पितरः पितामहाः ’ इत्यत्र यज्ञोपवीतमेव भवति ।

अपर आह— ‘ तस्मादभ्याताना वैश्वदेवाः ’ ( तैसं. ३।४।५ ) इति दर्शनात् ‘ पितरः पितामहाः ’ इत्यस्यापि पित्र्य( ? स्यापित्र्य )त्वादेव प्राचीनावीतस्याप्रसङ्गः इति । तथा ‘ अपरपक्षे पित्र्याणि ’ इत्यस्मिन्नधिकारे अभिहितं प्राचीनावीतमविशेषेण पित्र्ये कर्मणि साङ्गे प्रवर्तते । तेन पित्र्ये आज्यभागान्ते कर्मणि जयादौ च प्राचीनावीतमेव भवति । ‘ प्राचीनावीतिना ’ ‘ प्रसव्यम् ’ ‘ दक्षिणतोऽपवर्गः ’ इति पूर्वसूत्रेण संबन्धः ।

अनाकुला.

(२) पित्र्याणि कार्याणीति शेषः । इदं तु वासोत्रिन्यासभेदविधानं स्वतन्त्रास्वतन्त्रसर्वपित्र्यार्थम्, ‘ प्राचीनावीतिना पित्र्याणि ’ इत्यनेन वाक्येन अविशेषावगमात्, उद्देश्ये पित्र्यमात्रे लब्धे अधिकाप्रकृतस्वातन्त्र्यविवक्षायां वाक्यभेदापत्तेः, अङ्गेष्वपि प्राचीनावीते विधेये ‘ अपरपक्षे पित्र्याणि ’ इतिवदनपेक्षितत्वाभावाच्च । तेन यानि स्वतन्त्राणि, यथा प्रधानाहुतयः, यानि चास्वतन्त्राणि, यथा द्वितीयनिमार्जनादीनि, तानि सर्वाण्येव प्राचीनावीतिना कार्याणि । इत्थमेव ‘ यज्ञोपवीतिना ’ इत्यपि । तेन पित्र्याङ्गान्यपि दैवान्याघारादीनि यज्ञोपवीतिनैव । इतराङ्गानां तु पात्रप्रयोगादीनां तत्तत्प्रधानवदेव ।

केचित्— अङ्गानां प्रधानधर्मता न्याय्येति पित्र्याङ्गानि दैवान्यपि प्राचीनावीतिना, दैवाङ्गानि पित्र्याण्यपि यज्ञोपवीतिनेति, तच्चिन्त्यम् । प्रसव्यमिति । तथैव शेषः । दक्षिणतोऽपवर्ग इति । पित्र्येषु कार्य इति शेषः । अत्र ‘ प्राचीनावीती ’ ( आपप. २।१६ ) इत्यादिपरिभाषया एषां त्रयाणामपि सिद्धत्वात् अपाकयज्ञनित्यषोडशश्राद्धाद्यर्थो विधिः ।

ताद.

निमित्तसमनन्तरं नैमित्तिककर्तव्यता

**निमित्तावेक्षाणि नैमित्तिकानि ॥**

(१) निमित्तावेक्षाणि यानि नैमित्तिकानि कर्माणि तानि निमित्तमवेक्ष्य तदनन्तरमेव कर्तव्यानि, न तत्र उदगयनाद्यपेक्षा । ‘ अगारस्थूणाविरोहणे ’ ( आपगृ. २३।९ ) इत्युदाहरणानि । तत्र ‘ अमावास्यायां निशायाम् ’ इति वचनात् तावानुत्कर्षः । गृहप्रवेशनं नैमित्तिकमिति केचित् । नेत्यन्ये ।

अनाकुला.

(२) नैमित्तिकान्याग्रयणातिथ्यसीमन्तादीनि । निमित्तावेक्षाणि । निमित्तानि व्रीहिपाकादीन्येवानुष्ठानेऽवेक्षन्ते, नोदगयनादीनीत्यर्थः । अत्रापि संभवतः पूर्वपक्षादेर्नापवादः ।

ताद.

शम्याः परिधयः

**[1]शम्याः परिध्यर्थे विवाहोपनयनसमावर्तनसीमन्तचौलगोदानप्रायश्चित्तेषु ॥**

( १ ) अथ परिधीन् परिदधाति । दर्शपूर्णमासवत्सर्वे तूष्णीम्, तत आघारसमिधौ । कुत एतत् ? प्रसिद्धवदभ्यनुज्ञानात् ‘ शम्याः परिध्यर्थे ’ इति । परिध्यर्थे परिधिकार्य इत्यर्थः । शम्याः लोकप्रसिद्धाः युगप्रान्तयोः छिद्रेषु कीलरूपाः काष्ठविशेषाः । तासां सहेध्मेन संनहनम् । प्रायश्चित्तं अद्भुतोत्पातप्रायश्चित्तम् । विवाहे च हृदयसंसर्गार्थे सर्वत्र शम्याः । विवाहादिभ्योऽन्यत्र सर्वत्र पार्वणादिषु परिधय एव । चौलग्रहणमनर्थकं सीमन्तातिदेशात् सिद्धम् । ज्ञापकार्थं तु एतज्ज्ञापयति— विवाहादिष्विह संकीर्तितेष्वेव शम्याः, न तैरतिदिष्टेषु इति । तेन सीमन्तादतिदिष्टे पुंसवने परिधय एव । पार्वणादिषु च पक्वहोमेषु तथा । ‘ एवमत ऊर्ध्वम् ’ इति वैवाहिकेन स्थालीपाकादिति( ? वैवाहिकाग्नेयस्थालीपाकातिदेश )-दर्शनात्प्रसङ्गः ।

अनाकुला.

( २ ) विवाहादिषु कर्मसु परिध्यर्थे परिधीनां कार्ये, परिधीनां स्थाने इति यावत्, शम्याः युगकीलका भवन्ति । ताश्च पलाशादीनामन्यतमेन क्लृप्ताः परिधिस्थौल्यायामाः, तत्स्थानापन्नत्वात् । युक्तं चैतत्, यस्मादेवंविधविषये वार्तिककारपादैरुक्तम्— ‘ संभवन्ती खलेवाली खादिरी किं नु बाध्यते । ’ इति । अत्र विवाहशब्देन

( १ ) आपगृ. २।२ ; प्रका. १५.

स्थालीपाकवर्जितः साङ्गो विवाहो गृह्यते । तद्वर्जनकारणं 'पार्वणेन' इत्यत्र वक्ष्यामः । सीमन्ते शम्याविधानादेव तद्विकारे चौले चौलविकारे च गोदाने शम्याप्राप्तावपि तयोर्ग्रहणं सीमन्तविकारेऽपि पुंसवने तासां निवृत्त्यर्थम् । प्रायश्चित्तं च 'अगारस्थूणाविरोहणे' (आपगृ. २३।९) इत्यादिना विहितम् । अत्र च 'पलाशकार्ष्मर्य' (आश्रौ. १।५।८) इत्यादिसूत्रोक्तगुणयुक्तांस्त्रीन् परिधीन् संस्पृष्टान् 'परिधीन् परि दधाति' (तैब्रा. ३।३।७) इत्यादिविधानात् तूर्ष्णीं परिदध्यादिति सूत्रकारस्याभिप्रायः, 'शम्याः परिध्यर्थे' इति सिद्धवत्परिधीनङ्गीकृत्य तत्स्थाने शम्याविधानात् आचाराच्च । तात्.

पाकयज्ञलक्षणम्

¶ [1]**लौकिकानां पाकयज्ञशब्दः ॥**

स्त्र्यनुपनीतकर्तृकस्य क्षारादिद्रव्यकस्य च होमस्य निषेधः

[2]**स्त्रियाऽनुपेतेन क्षारलवणावरान्नसंसृष्टस्य च होमं परिचक्षते ॥**

(१) पाकयज्ञाधिकारे सर्वत्रायं प्रतिषेधः श्राद्धादिष्वपि । अवरान्नानि कोशीधान्यानि माषादीनि कृष्णधान्यानि चणककोद्रवादीनि । परिचक्षते वर्जयन्ति शिष्टाः । 'न स्त्री जुहुयात् । नानुपेतः । न क्षारलवणहोमो विद्यते ।' (आध. २।१५।१७, १८, १४) इति प्रतिषेधेनैव सिद्धे उत्तरार्थोऽयं प्रतिषेधः । किंच 'पाणिग्रहणादि गृह्यं परिचरेत् स्वयं पत्न्यपि वा पुत्रः कुमार्यन्तेवासी वा' (आगृ. १।९।१) इति आश्वलायनवचनेन पत्न्यादीनामौपासनहोमप्राप्त्याशङ्कायां प्रतिषेधः । अनाकुला.

(२) स्त्रिया अनुपेतेन अनुपनीतेन च होमं होममात्रं श्रौतं स्मार्तं च शिष्टाः परिचक्षते वर्जयन्ति यस्मात् तस्मादेव ताभ्यां न होतव्यमिति वाक्यशेषः । होममिति च सामान्याभिधानेन श्रौतहोमेऽपि स्त्र्यनुपनीतौ शिष्टा वर्जयन्तीति ज्ञापनात् गार्ह्याधिकारापवादः । क्षारेत्यादि व्याख्यातप्रायमेव । यत्तु धर्मशास्त्रे— 'न क्षारलवणहोमो विद्यते । तथाऽवरान्नसंसृष्टस्य च' (आध. २।१५।१४,१५) इति, तत् 'उदीचीनमुष्णं भस्मापोह्य तस्मिन् जुहुयात्' (आध. २।१५।१६) इति विधानार्थोऽनुवादः । यदपि तत्रैव 'न स्त्री जुहुयान्नानुपेतः' (२।१५।१७,१८) इति, तत् क्षारादि यथोष्णभस्मनि हूयते, तथा तस्मिन्नपि स्त्र्यनुपनीताभ्यां न होतव्यमिति निषेद्धुम् । तात्.

काम्यानां बलीनां च यथोपदेशकर्तव्यता

**यथोपदेशं काम्यानि बलयश्च ॥**

(१) अस्य प्रतिषेधस्य प्रतिप्रसवमाह— यथोपदेशमिति । योऽयं स्त्र्यादीनां प्रतिषेधः स काम्येषु कर्मसु नाऽऽदरणीयः, यथोपदेशमेव तानि कर्तव्यानि । तथा बलयश्च यथोपदेशमेव कर्तव्याः । 'सिद्ध्यर्थे यदस्य गृहे पण्यं स्यात्' (आपगृ. २३।५) इति काम्योदाहरणम् । 'एवमत ऊर्ध्वं यदशनीयस्य' (आपगृ. २१।२) इत्यादि बलीनाम् । होमे चोदितस्य स्त्र्यादिप्रतिषेधस्य बलिषु प्रसङ्गाभावात् ज्ञापकमिदम्— होमधर्मो बलिषु प्रवर्तते इति । तेन 'अपरेणाग्निं दक्षिणं जान्वाच्य' इत्येवमादिबलिष्वपि भवति । 'न काम्येषु बलिषु च' इत्येव सिद्धे 'यथोपदेशम्' इति वचनमुपदेशादेवैषां प्रवृत्तिः स्वशास्त्रेण शास्त्रान्तरेण वा, न प्रतिनिधित्वेन । अनाकुला.

(२) यानि काम्यानि येन प्रकारेणोपदिष्टानि तानि तथैव भवन्ति, नैव तत्र क्षारादिवर्जनम्, 'यदस्य गृहे पण्यं स्यात्' (आपगृ. २३।५) इत्युपदेशस्य गृहशब्देन विशेषितत्वात् । यदि तत्र क्षारादिवर्जनमिष्टं स्यात्,

---

¶ अस्य सूत्रस्य व्याख्यानं संस्कारोपोद्धातप्रकरणे (सं. का. पृ. २१) द्रष्टव्यम् ।

(१) आपगृ. २।९; गौमि. ८।१९, १०।६७; चम. ११८; मुक्ता. ६८.

(२) आपगृ. ८।३–४.

तदा 'यदस्य पण्यं स्यात्' इत्येतावदेव ब्रूयात्। तथा बलयश्च यथोपदेशमेव, न तु क्षारादिनिषेधः, 'सति सूपसंसृष्टेन कार्याः' (आध. २।३।१९) इत्यारम्भसामर्थ्यात्। अन्यथा 'गृहमेधिनो यदशनीयस्य होमा बलयश्च' (आध. २।३।१२) इति वचनादेव क्षारादिव्यतिरिक्तशाकमांसादिसूपसंसृष्टेनान्नेन कार्याः स्युः। अत्र च 'यदशनीयस्य होमा बलयश्च' इति होमसाहचर्यात् बलिष्वपि या क्षारादिनिषेधशङ्का सा वार्यते। केचित्— 'यथोपदेशं काम्यानि बलयश्च' इत्यस्मादेव ज्ञापनाद्धोमधर्माणां बलिष्वपि प्रसक्तिरिति। तेषां सर्पबलौ सक्तुनिर्वापे स्वाहाकारो दुर्वारः। ताद.

## हिरण्यकेशिगृह्यसूत्रम्

अनादिष्टमन्त्रेषु देवतानाम्नां मन्त्रता

**[1]अमन्त्रास्वमुष्मै स्वाहेति यथादेवतम्॥**

यास्वाहुतिषु मन्त्रा न विधीयन्ते देवताश्चोपदिश्यन्ते तास्वमुष्मै स्वाहेति यथादेवतं जुहुयात्। 'अग्नये हुत्वाऽग्नये स्विष्टकृते जुहोति' (हिगृ. १९।७।१६) 'काण्डर्षिभ्यो(? काण्डर्षीन्) जुहोति...काण्डनामानि वा' (हिगृ. २०।८।३) इति।

मातृद.

व्याहृतिशब्दार्थः व्यस्तसमस्तहोमश्च

**भूर्भुवः सुवरिति व्याहृतिभिर्जुहोत्येकैकशः समस्ताभिश्च॥**

भूर्भुवः सुवरिति व्याहृतिभिर्जुहोति। एकैकशः एकैकया। भूः स्वाहा, भुवः स्वाहा, सुवः स्वाहेति। समस्ताभिश्च। भूर्भुवः सुवरिति वचनं व्याहृतिबहुत्वादिष्टपरिग्रहार्थम्। भूर्भुवः सुवरित्येव सिद्धे व्याहृतिभिरिति वचनमेतासामेवान्यत्र व्याहृतिग्रहणे संप्रत्ययार्थम्। तेन 'व्याहृतिभिरन्वादधाति', 'व्याहृतिभी राकामहम्' इत्येवमादिषु श्रौतेषु स्मार्तेषु चैतासामेव संप्रत्ययः सिद्धो भवति। ननु 'भूर्भुवः सुवरिति व्याहृतयः' (सश्रौ. ३।४।४) इत्येतेनैव सिद्धम्। न सिध्यति। तेनाऽऽधाने एवेष्टपरिग्रहः कृतः स्यादिति। मातृद.

(१) हिगृ. १९।१।४५-४६.

अनादिष्टदेवतेऽन्नहोमे नाममन्त्रविशिष्टदेवताविशेषविधिः

**†[1]सर्वत्रैवमनादिष्टदै(? दे)वते॥**

न आदिष्टा अनादिष्टा देवता यस्मिन्नन्नहोमे सोऽनादिष्टदै(? दे)वतः, तस्मिन्सर्वस्मिन्नेता आहुतीर्जुहुयात्। कः पुनः सः? यत्र 'ब्राह्मणानन्नेन' इति चोद्यते। तत्रानेनातिदेशात्। इहापि ब्राह्मणभोजनस्य भावः। यद्येवं 'युग्मान्ब्राह्मणान्' इत्यत्रापि प्राप्नोति। नैष दोषः। यद्येवमिष्टं स्यात्तत्रैव वेदे विधायातिदिशेत्। तस्मात्तत्र नैवम्। सर्वग्रहणं किमर्थम्? यत्रान्तरेण वचनमाचाराचु ब्राह्मणभोजनं होमश्च तत्राप्येवमेवमित्येतदर्थम्। यथा कूपारामतडागेषु। यद्येवं कर्णवेधनोपनिष्क्रमणादिष्वपि प्रसङ्गः स्यात्। यद्येवमिष्टमन्येषामन्यत्र होमस्य दर्शनात्। अथैतन्न मृष्यते यत्राऽऽचारोऽस्यस्ति तत्रायं विधिः स्यादित्येतदर्थं सर्वग्रहणमित्युक्तम्। आचाराभावादभावः स्यात्। मातृद.

अनादिष्टमन्त्रेऽन्नहोमे देवतानाम्नां मन्त्रता

**अमुष्मै स्वाहेति यथादेवतमादिष्टदेवते॥**

यत्रान्नहोमे आदिष्टा देवतास्तत्रामुष्मै स्वाहेति यथादेवतमेव जुहुयात्। यथा 'अग्नये स्विष्टकृते जुहोति महाराजमिष्ट्वा ब्राह्मणं भोजयित्वा पुष्टिकामः सिद्धिं वाचयेत्'। 'गवां मार्गेऽनग्नौ क्षेत्रस्य पतिं जुहोति'। सर्वत्रेति चानुवर्तते। तेनाऽऽचाराद्गृह्यमाणेषु विष्णुरुद्रस्कन्ददिवाकरादियज्ञेष्वप्येवं स्यात्। किमर्थमिदं सूत्रम्? ननु पुरस्तादेवमुक्तम्— 'अमन्त्रास्वमुष्मै स्वाहेति यथादेवतम्' इति। बाढमुक्तम्। अमन्त्रासु निर्दिष्टदेवतासु तन्मन्त्रोपदेशार्थम्, इदमन्नद्रव्यकेषु पुनर्निर्दिष्टदेवतेषु एतद्धर्मप्राप्त्यर्थम्। तेनात्र सौविष्टकृती द्वितीयाहुतिः स्याद्देवतानामेव देवता निवर्तिकेति। यावदुक्तं च क्रिया स्यादापूर्विकत्वात्। एवमपि 'यथादेवत-

† 'अग्नये स्वाहा, सोमाय स्वाहा, अग्नयेऽन्नादाय स्वाहा, अग्नयेऽन्नपतये स्वाहा, प्रजापतये स्वाहा, विश्वेभ्यो देवेभ्यः स्वाहा, सर्वाभ्यो देवताभ्यः स्वाहा, अग्नये स्विष्टकृते स्वाहा' इत्येतासामाहुतीनामतिदेशोऽयम्।

(१) हिगृ. १९।२।४१-४२.

मादिष्टदेवतम् ( ? ते ) ' इत्येवं( ? व ) सिध्यति । नार्थः ' अमुष्मै स्वाहा ' इति । अनेनैवान्यप्रयोजनं याज्यानुवाक्याभ्यां केचिद्धोमं विदधिरे, तन्मा भूदिति । अथवा पूर्वमाधारवत्सूत्र( ?त्सु मन्त्र )विधानम्, आपूर्विकेष्विदम्, तेनोभयं पार्वणादिषु भवति । यद्येवं पार्वणसौविष्टकृत्यां विधानमनर्थकम्, तस्य प्रयोजनं तत्रैव वक्ष्यामः ।

मातृद्.

## हिरण्यकेशिगृह्यशेषसूत्रम्

प्राजापत्यादितीर्थानि

[1]कनिष्ठाप्रदेशिन्यङ्गुष्ठमूलानि करस्याग्रं च क्रमात् प्रजापतिपितृब्रह्मदेवतीर्थानि ॥

कटिसूत्राराहित्यमधिकारिविशेषणम्

कटिदोरान्वितो यः श्रौतस्मार्तानुष्ठानं करोति तत्सर्वं निष्फलं भवति । नरकं चैव गच्छति ॥

सदशत्वादिधर्मकवस्त्रधारणं मौनं शिखा उपवीतमूर्ध्वपुण्ड्रधारणं भस्मत्रिपुण्ड्रधारणं पवित्रपाणित्वं चेत्यधिकारिधर्माः, उपवीतसंख्या, पवित्रलक्षणं च

[2]सदशमखण्डं श्वेतं धौतवस्त्रद्वयं स्नाने दाने जपे होमे देवपूजने भोजने धार्यम् । रक्तं नीलं मलिनं दशाहीनं च वर्जयेत् ॥

मौनाभावे स्नानं हरति तेजः । जुह्वतोऽऽग्निः श्रियं हरति । भुञ्जानो मृत्युमाप्नोति । तस्मान्मौनं चरेत् त्रिषु ॥

विशिखोऽनुपवीती यच्च करोति तन्निरर्थकम् । स्नानदानादिकं कर्माऽऽसुरं भवति ॥

वटोरेकमुपवीतम् । गृहस्थारण्यवासिनोर्द्वे । वस्त्राभावे तृतीयमुत्तरीयार्थं धार्यम् । एकमेव यतीनां स्यादित्येके ॥

[3]एकवासाः कर्माणि न कुर्यात् ॥

जपो होमो दानं यागः स्वाध्यायः पितृकर्म चोर्ध्वपुण्ड्रं विना तत्सर्वं भस्मीभवति ॥

[1]जपहोमदानवैश्वदेवशिवार्चनश्राद्धेषु तिर्यग्भस्मना त्रिपुण्ड्रधारणात् सर्वमक्षयं भवति ॥

स्नानदानजपहोमसंध्यातर्पणपूजनेषु पवित्रपाणिः स्यात् । अन्यथा चाऽऽसुरं भवेत् । अग्रं चतुरङ्गुलं ग्रन्थिरेकाङ्गुलो वलयं द्व्यङ्गुलमिति पवित्रस्य लक्षणम् । अग्रं ब्रह्मदेवत्यं ग्रन्थिर्विष्णुदेवत्यो वलयं चैश्वरं पवित्रस्याधिदेवताः । पथिजातचितिजातकुशान् श्मशानपितृतर्पणास्तरणासनपिण्डसंबन्धिनः कुशान् वर्जयेत् । कुशमूलकुशमध्यकुशाग्रेषु क्रमेण ब्रह्मविष्णुमहेश्वरास्तिष्ठन्ति । तस्मान्नित्यं धारयेत् । कुशपाणिः सदा तिष्ठेद् दम्भवर्जितः । नित्यं हन्ति पापान्यनलस्तूलराशिमिव । कुशपूतं तोयं पिबेत्कुशपूतमुपस्पृशेत् कुशाग्रमिश्रितं सोमपानसमम् ॥

प्राणायामलक्षणम्

[2]सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
त्रिर्जपेदायतप्राणः प्राणायामः स उच्यते ॥
इति ॥

संध्यावन्दनमधिकारिविशेषणम्

संध्याहीनो नित्यमशुचिः स्यात् । सर्वकर्मस्वनर्हः ॥

कर्मभेदेन विभक्तिव्यवस्था

[3]आवाहने स्नाने तर्पण उद्वासने द्वितीया कार्या । नमस्कारेऽन्नदाने चतुर्थी कार्या । आसने षष्ठी । संबुद्धिः शेषे ॥

हस्तस्थिततीर्थानि

[4]ब्राह्मणस्य दक्षिणे हस्ते पञ्च तीर्थानि भवन्ति । अङ्गुलिमूले देवतीर्थमङ्गुल्यग्र आर्षं तीर्थं

(१) हिगृशे. १।३.
(२) हिगृशे. १।७.
(३) हिगृशे. १।८.

(१) हिगृशे. १।९.
(२) हिगृशे. १।१०.
(३) हिगृशे. १।१२.
(४) हिगृशे. २।२.

मध्येऽग्नितीर्थमङ्गुष्ठतर्जन्योर्मध्ये पैतृकतीर्थमङ्गुष्ठतलेऽतिह्रत्य पश्चाल्लेखं तद्ब्रह्मतीर्थम् ॥

पञ्चगव्यविधिः

[1]गायत्र्याऽऽगृह्य गोमूत्रं गन्धद्वारेति गोमयम्।
आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि।
शुक्रमसि ज्योतिरसीत्याज्यं देवस्य त्वा कुशोदकम् ॥

इत्येतत्पञ्चगव्यं नाम। अत्राऽऽह –
कपिलाया वरं क्षीरं श्वेतायाश्च वरं दधि।
रक्तायास्तु घृतं श्रेष्ठं शेषौ शबलकृष्णयोः ॥ इति ॥

[2]अतः परं प्रवक्ष्यामि पञ्चगव्यविधिं क्रमात्।
उत्तमं द्रोणमेकं तु मध्यमं तु तदर्धकम् ॥
तदर्धमधमं ज्ञेयं त्रिविधं परिकीर्तितम्।
प्रस्थपादं घृतं प्रोक्तं गोमूत्रं द्विगुणं भवेत् ॥
गोमयं कुडपं प्रोक्तं दधि प्रस्थसमन्वितम्।
क्षीरं प्रस्थद्वयं प्रोक्तं तदर्धमुदकं भवेत् ॥

## मैत्रायणीयगृह्यपरिशिष्टम्

दक्षिणाप्रतिनिधिः, दक्षिणाया अवश्यंभावः

[3]दक्षिणालाभे मूलानां सर्वेषां फलानां भक्ष्याणां वा दक्षिणां दद्यात्। न त्वेवं यजेत ॥

अदक्षिणं न यजेत इत्यर्थः। एतच्च ब्राह्मणेऽप्युक्तम्। तथा च ब्राह्मणम्– 'श्लेष्म वा एतद्यज्ञस्य यद्दक्षिणा। न वाऽ( ? वा अ )श्लेष्मा रथो वहति। अथ श्लेष्मवता यं कामं कामयते तमभ्यश्नुते। एवमेतेन दक्षिणावता यं कामं कामयते तमभ्यश्नुते। शुभो वा ( एता ? ) यज्ञस्य दक्षिणा। दक्षिणावता यजते शुभमेवास्मिन् दधाति'। अस्यार्थः– श्लेष्म रथकीलः, श्लेष्म रथ वै ( ? ) रथस्येव कीलकमेतद्यज्ञस्य दक्षिणा। न वेति( ? वा इति )। न वै अश्लेष्मा कीलकशून्यो रथो वहति गच्छति। यथा श्लेष्मवता रथेन रथी यं कामं कामयते तमभ्यश्नुते प्राप्नोति तत् साध्यमेव, तेन( ? ध्यम्, एवमेतेन ) दक्षिणावता यज्ञेन याज्ञिको यं कामं कामयते तमभ्यश्नुते। ( शुभो वा ? ) शुभो वै यज्ञस्य दक्षिणा। शुभः शुभहेतुः। यद्दक्षिणावता यज्ञेन यजेत शुभमेवास्मिन् दधाति। अस्मिन् दक्षिणावति यज्ञे। शुभभाजनं भवति। तदयं तात्पर्यार्थः– यथा कीलकप्रतिहतो रथो नोद्देश्यं प्राप्नोति, एवमिष्टसिद्धिरनिष्टनिवृत्तिर्वा न दक्षिणाशून्याद्यज्ञाद्भवतीति। कुर. ७५–७६

दर्भप्रतिनिधिः

[1]दर्भास्तरणाभावे काशः प्रतिनिधिः। तदलाभे पर्ववतीभिः काण्डवतीभिरोषधीभिः स्तरणार्थान् कुर्वन्तीति। कटोशीरशुण्ठनलबल्वजपलालोलपवर्जम् ॥

पर्ववतीभिः ग्रन्थिमतीभिः। कटादयः तृणविशेषाः। ‡ ब्रक. ६९

---

(१) हिगृशे. ७।११ : ७।१२ श्वेतायाश्च (श्वेतायास्तु) रक्तायास्तु घृतं श्रेष्ठं (रक्ताया वरमाज्यं च): ७।१४ श्वेतायाश्च ( श्वेतायास्तु ) रक्तायास्तु घृतं श्रेष्ठं ( रक्ताया वरमाज्यं वै ) 'कपिलायाः' इत्येक एव श्लोकः.

(२) हिगृशे. ७।१४.

(३) ब्रक. ६९ ; चब्र. ४२ ( दक्षिणालाभमूलानां लक्षणं दक्षिणां ददाति। न चात्र यजेत।); कुर. ७५ ( दक्षिणालाभे मूलानां भक्षणं ददाति न त्वेवं यजेत) ; निप्र. १९७ (दक्षिणालाभे फलानां मूलानां दक्षिणां ददाति न त्वेवं यजेत): २०५ (दक्षिणाभावे फलानां मूलानां भक्ष्याणां वा दद्यान्न त्वेवं यजेत) ; पप्र. १०९.

‡ पप्र. ब्रकवत्।

(१) ब्रक. ६९ ; चब्र. ४२ ( दर्भाभावे काशः प्रतिनिधिः ) एतावदेव ; चद्. १४० चब्रवत् ; कुर. ७४ स्तरणाभावे ( स्तरणे ) तदलाभे ( तदभावे ) कुर्वन्तीति ( कुर्वन्ति ) शुण्ठ ( चूष ) पलालोलप ( नीपधव ) ; निप्र. १९७ स्तरणाभावे ( स्तरणार्थे ) तदलाभे पर्व ( तदभावे यव ) कुर्वन्तीति ( कुर्वन्ति ) शुण्ठनलबल्वजपलालोलपवर्जम् ( श्वन्दनीपनलबल्वजावोलपवर्जम् ) ; पप्र. ९९ तदलाभे (तदभावे) शुण्ठ (तुष) : १०९ कुर्वन्तीति ( कुर्वन्ति ).

इध्मसमिधः तत्प्रतिनिधिश्च

**[1]अथेध्मार्थे पलाशाश्वत्थखदिररोहितकोदुम्बराणाम्, तदलाभे सर्ववनस्पतीनां तिल्वकधवनीपनिम्बराजवृक्षशाल्मलकपित्थकोविदारविभीतकश्लेष्मातकसर्वकण्टकिवर्जम् ॥**

(१) तिल्वकः चिल्लक इति प्रसिद्धः । नीपः कदम्बः । राजवृक्षः किरवाल इति प्रसिद्धः । श्लेष्मातकः बहुवारकः । ब्रक. ७०

(२) तिल्वकं चिन्दुक इति प्रसिद्धः । नीपः कदम्बः । राजवृक्षः आरग्वध इति प्रसिद्धः । अयमेव कान्यकुब्जे किरिबालक इति ख्यातः । अबन्धः सञोन इति प्रसिद्धः । श्लेष्मातकः बहुमारः । कुर. ७४

(३) तिल्वकः लोध्रः । राजवृक्षः आरग्वधः, मध्यदेशे धनबहेरा इति प्रसिद्धः । पप्र. ११०

व्रीहियवप्रतिनिधिः

**[2]व्रीहियवौ पुरोडाशार्थे । तदलाभे तुषवतीभिस्तण्डुलवतीभिरोषधीभिः पुरोडाशान् कुर्वन्ति, अणुचीनकल्माषमसूरवरककोद्रवकोरदूषकवर्जम् ॥**

(१) पुरोडाशान् पुरोडाशार्थान् । अणवः मर्कटकाः । कुरवकः पीतकुलत्थकः । कोरदूषकः वनकोद्रवः । ब्रक. ७०

(२) पुरोडाश्यान् पुरोडाशान् । अनवः मलका इति प्रसिद्धाः । कुरकः पीतकुलत्थः । कोरदूषकः वनकोद्रवः । माषशब्दोऽत्र कृष्णेतरमाषपरः । कुर. ७४–७५

(३) वरकः पीतकुलत्थः । कोद्रवः ग्रामकोद्रवः । कोरदूषकः वनकोद्रवः । तेन न पौनरुक्त्यम् । † पप्र. ११०

आज्यप्रतिनिधयः

**[1]घृतमाज्यार्थे प्रतिनिधिः । तदलाभे दधि पयो वा तण्डुलपिष्टानि यवपिष्टानि वाऽद्भिः संसृष्टान्याज्यार्थान् कुर्वन्ति ॥**

(१) अत्र गव्यमाज्यं प्रथमम्, तदभावे माहिषम्, तदभावे आविकम्, तदभावे तैलम् । तैलेऽपि प्रथमं तिलजम्, तदभावे कौसुम्भम्, तदभावे सार्षपम् । तदभावे दधि पयो वा, तदभावे तण्डुलपिष्टानि यवपिष्टानि वा । अयं च गव्यादीनामन्वयः 'आज्यहोमेषु सर्वत्र गव्यमेव भवेद्घृतम् । तदभावे महिष्यास्तु

---

(१) ब्रक. ७० कोदुम्व (कौदुम्व) शाल्मल (शाल्मल्यवन्ध); चव. ४२ अथेध्मार्थे... दुम्वराणां (अथेध्मपालाशाश्वत्थखदिरलोहितहरितोदुम्वराणां) तिल्वकधव (विल्व) शाल्मल (शाल्मलुक); चदा. १४० अथेध्मार्थे (अथेध्माः) तिल्वकधव (तिलक) शाल्मल (शाम्मन्यलुक); कुर. ७४ अथेध्मार्थे (इध्मार्थे) खदिर (खादिर) तदलाभे (तदभावे) तिल्वक (चिल्वक) शाल्मल (शाल्मल्यवन्ध); निप्र. १९७ अथेध्मार्थे (इध्मार्थे) तदलाभे (तदभावे) तिल्वक . . . वर्जम् (तिन्दुकनीपविल्वराजवृक्षशाल्मलीरजतककपित्थकोविदारहरीतकश्लेष्मातकसर्वकण्टकिवर्जम्); पप्र. १०९–११० कपित्थ (कपिच्छ).

(२) ब्रक. ७० कल्माषमसूरवरक (कल्मापककुरवकमापमसूर); कुर. ७४ पुरोडाशार्थे । तदलाभे (पुरोडाशस्तदभावे) पुरोडाशान् (पुरोडाश्यान्) अणुचीन ... कोद्रव (अनुचानककुरकमाषमसूरकोद्रव); निप्र. १९७ तदलाभे (तदभावे) पुरोडाशान् (पुरोडाशार्थान्) अणुचीन ... वरक (कुशूलशाकमासमसूरकुरवक); पप्र. ११० डाशार्थे (डाशस्यार्थे).

† शेषं ब्रकवत् ।

(१) ब्रक. ७० संसृष्टानि (संस्पृष्टानि); चव. ४२ (घृतमन्यार्थे प्रतिनिधिस्तदलाभे दधि पयो वा) एतावदेव; चदा. १४० (घृतमन्यार्थे प्रतिनिधिस्तदलाभे दधि पयो वा) एतावदेव; कुर. ७३ (आज्याभावे तैलं प्रतिनिधिरलाभे दधिपयसी तदलाभे तण्डुलपिष्टानि वा अद्भिः संमृज्याऽऽज्यार्थे कुर्वन्ति); निप्र. १९६–१९७ तदलाभे (तदभावे) तण्डुल ... कुर्वन्ति (तण्डुलपिष्टयवपिष्टनाभिः सममाज्यार्थान् कुर्वन्ति); पप्र. ११० (यवपिष्टानि०).

आजमाविकमेव वा ॥ तदभावे तु तैलं स्यात्तदभावे तु जार्तिलम् । तदभावे च कौसुम्भं तदभावे तु सार्षपम् ॥' इति बौधायनवाक्याद्बोद्धव्यः । बौधायनोपरोधात्तु कल्पतरुपारिजातावप्येवं नेतव्यौ । अन्ये तु– वाक्यमिदं लक्ष्मीधरादिभिरनङ्गीकारान्मन्दं मन्यमाना यथाश्रुताभ्यामेव कल्पतरुपारिजाताभ्यां व्यवस्थामाहुः ।

कृ. ७३–७४

(२) आज्यार्थे इति । 'घृतं वा यदि वा तैलं पयो दधि च यावकम् । संस्कारयोगादेतेषु आज्यशब्दो विधीयते ॥' इति परिशिष्टधृतवचनोक्तानाम् 'आज्यं संस्कुरुते सर्पिस्तैलं दधि पयो यवागूं वा' (गोगृ. १।७।१९–२०) इति गोभिलसूत्रोक्तानां च चतुर्णामाज्यानामर्थे घृतं मुख्यम् । तत्रापि गव्यं मुख्यम् । तदभावे माहिषादि । तथा च बौधायनः– 'घृतमाज्यार्थे गव्यमिति प्रत्ययः । तस्यालाभे माहिषमाजं वा आज्यार्थे प्रयुञ्जीत । तथा तयोरभावे तैलं प्रतिनिधिः । तस्याभावे जार्तिलमतसीकुसुम्भसर्षपवार्क्षीयाः स्नेहा इति शिष्टप्रामाण्यात् । अत ऊर्ध्वमलाभे यवपिष्टानि व्रीहिपिष्टानि श्यामाकपिष्टानि वाऽद्भिः संसृज्याऽऽज्यार्थे प्रयुञ्जीत' । तयोः माहिषाजघृतयोरलाभे तैलं तिलप्रभवः स्नेहः । जार्तिलम्, जर्तिला अरण्यतिलाः, तत्प्रभवं तैलम् । रत्नाकरधृतबौधायनस्मृतिश्च– 'आज्यहोमेषु सर्वेषु गव्यमेव भवेद् घृतम् । तदभावे महिष्यास्तदाजमाविकमेव च ॥ तदभावे तु तैलं स्यात्तदभावे तु जार्तिलम् । तदभावे तु कौसुम्भं तदभावे तु सार्षपम् ॥'। अत्र आविकदुग्धस्याभोज्यत्वेन 'क्षीराणि यान्यभोज्यानि तद्विकाराशने बुधः । सप्तरात्रं व्रतं कुर्यात्' इति प्रायश्चित्तविधानात् तद्विकारस्याऽऽविकघृतस्याप्यभक्ष्यत्वेन 'यदार्याणामभोजनीयं स्यान्न तेन यजेत' इत्यापस्तम्बवचनेन यागे निषिद्धत्वेऽपि वचनबलात्प्रतिनिधित्वेनोपादानम् । केचित्तु निषिद्धक्षीरस्य साक्षाद्विकाराशने एव प्रायश्चित्तमिति वदन्तः परम्पराविकारस्याऽऽविकघृतस्य नाभक्ष्यत्वमिति वदन्ति । दधि पयो वेति । अनयोरपि गौणमुख्यभावो बोध्यः । अत्र दधनि द्रव्यनाशापरया अधिश्रयणरूपसंस्कारबाधः । अथवा, यथा दधिनाशो न भवति तथा संस्कारार्थमधिश्रयणं कर्तव्यम् । यथाऽऽह आश्वलायनः– 'न दध्यधिश्रयेदधिश्रयेदित्येके' । दधि पयो वेत्यनन्तरं 'तदभावे' इति पारिजातरत्नाकरादौ पाठः ।

पप्र. ११०–१११

## भारद्वाजगृह्यसूत्रम्

इध्मसमिधः, दर्वीप्रकृतिकाष्ठं दर्वीप्रमाणं च

**[1]पालाशमिध्मं खादिरमौदुम्बरं वैकङ्कतं वा । एतद्वृक्षीयामेव दर्वीं करोति त्वग्बिलां मूलदण्डारत्नीम् । चतुरङ्गुलं बिलं करोति ॥**

अनादिष्टमन्त्रके देवतानाम्नः मन्त्रत्वम्, अनादिष्टदेवताके अग्न्यादयो देवता मन्त्राश्च

**[2]अमन्त्रास्वमुष्मै स्वाहेति यथादेवतमादिष्टदेवते । अथानादिष्टदेवतेऽग्नये स्वाहा सोमाय स्वाहा प्रजापतये स्वाहा विश्वेभ्यो देवेभ्यः स्वाहाऽग्नये स्विष्टकृते स्वाहेति ॥**

**व्याहृतीभिर्जुहोत्येकैकशः समस्ताभिश्च ॥**

स्त्र्यनुपेतयोरधिकारचिन्ता

**[3]सर्वेषु पाकयज्ञेषु स्त्रियाश्चानुपेतस्य बलिमन्त्रौ न विद्यते ॥**

**अपि वा स्त्री जुहुयान्मन्त्रवर्जं ना चानुपेतः ॥**

रौद्रादिकर्मोत्तरमपुस्पर्शनम्

**[4]रौद्रराक्षसनैर्ऋतपैतृकच्छेदनभेदनखननिरसनावघ्राणात्माभिमर्शनानि च कृत्वाऽप उपस्पृशेत् ॥**

परिधिपरिमाणम्

**[5]शम्यामात्रा बाहुमात्रा वा परिधयः ॥**

शम्या षट्त्रिंशदङ्गुला । द्विचत्वारिंशदङ्गुलो बाहुः ।

संर. ६५

(१) भागृ. १।१.

(२) भागृ. १।४.

(३) भागृ. ३।१२.

(४) भागृ. ३।१८. (५) संर. ६५.

## काठकगृह्यसूत्रम्

अनादिष्टमन्त्रदेवताकेषु मन्त्रदेवतयोर्विधानम्

**$ [1]नामधेयेन देवतां यजेत तद्देवतया वर्चा। आग्नेयीं वोहेदग्नीषोमीयामैन्द्राग्नीं वा द्विदेवतेषु, वैश्वदेवीं बहुदेवतेषु ॥**

**[2]देवता अप्रज्ञायमाना आग्नेय्या यजेद्वैश्वदेव्या वा ॥**

इदानीं शास्त्रान्ते प्रकीर्णं यदवशिष्टं तदाह— देवतेति । यत्र कर्मणि देवताविशेषो न प्रज्ञायते मन्त्रब्राह्मणवाक्यशेषेभ्यो बहुदेवतानामश्रुतिसंमोहितत्वेन, तत्र आग्नेय्या अग्निदेवताकया क्वचित् वैश्वदेव्या वा यजेत व्यवस्थितविकल्पेन । यथोपनयनचूडाकरणप्रभृतिषु । आज्यभागान्ते प्रधानस्थानेऽयमुपदेशः । देव.

**स्वस्तिपुण्येष्वनादेशे त्रिकाः ॥**

स्वस्ति अविनाशः, तदर्थानि स्वस्त्ययनानि स्वस्तिशब्देनोच्यन्ते । पुण्यानि पावनानि संस्कारकर्माणि गर्भाधानान्नप्राशनप्रभृतीनि । तेषु देवताविशेषस्य यत्रानादेशः अनुद्देशः, तत्र त्रिकाः प्रधानस्थाने कर्तव्याः । तद्द्योत्याश्च प्रधानदेवताः । त्रिकाः पुनश्चत्वारोऽनुवाकस्था बार्हस्पत्ययाम्यरौद्रवारुणाः 'तव श्रिये' इत्यनुवाके पठिताः । देव.

**महाव्याहृतयोऽष्टर्चं चात्र कल्पयति । अग्निर्मूर्धेति चतस्र उपप्रयन्तो अध्वरमिति द्वे कदाचन स्तरीरसीति द्वे धुरश्चोपधुरश्च धुरश्चोपधुरश्च ॥**

तत्र महाव्याहृतयः प्रसिद्धाः । अष्टर्चं तु विभज्य दर्शयति— अग्निरिति । स्पष्टोऽष्टानां विभागः । धुरश्चोपधुरश्च प्रधानस्थाने यष्टव्याः । शास्त्रान्ते मङ्गलार्थं धुरामुपधुरामभ्यासः । शास्त्रतदर्थप्रतिज्ञानार्थानुष्ठानावृत्तिर्हि परमं मङ्गलं तदावृत्त्या द्योत्यते । शास्त्रान्तेऽपि मङ्गलोपसंहार इष्यते । यथोक्तम्— मङ्गलादीनि मङ्गलमध्यानि मङ्गलावसानानि च शास्त्राणि प्रथन्ते वीरपुरुषाण्यायुष्मत्पुरुषाणि च भवन्ति । देव.

$ अस्य सूत्रस्य व्याख्यानं संस्कारोपोद्घातप्रकरणे ( सं. का. पृ. २५ ) द्रष्टव्यम् ।

( १ ) काग्गृ. ४७।११.

( २ ) काग्गृ. ७३।३–५.

शिखाभावे कौशी शिखा

**[1]अथ चेत् प्रमादान्निःशिखं वपनं स्यात् तदा कौशीं शिखां ब्रह्मग्रन्थिसमन्वितां दक्षिणकर्णोपर्या शिखाबन्धाद्धत् तिष्ठेत् ॥**

( १ ) शिखानाशे तत्प्रतिनिधिरुक्तः काठकगृह्ये— अथ चेदिति । $ संप्र. ३१६–३१७

( २ ) सशिखवपनेन खल्वाटत्वादिना वा सर्वथा केशाभावे कौशी शिखा ब्रह्मग्रन्थियुता दक्षिणकर्णे स्थाप्येति दिवोदासः । तथा च आचारचन्द्रोदये काठकगृह्ये— अथ चेदिति । ¶ आर. ३

## वाराहगृह्यसूत्रम्

पाकयज्ञानामग्निविधानम्, पाकयज्ञपदार्थः, दर्शपूर्णमासप्रकृतिकत्वम्, विकारविशेषश्च

**[2]गृह्याग्नौ पाकयज्ञान् विहरेत् । ह्रस्वत्वात्पाकयज्ञः । ह्रस्वं हि पाक इत्याचक्षते । दर्शपूर्णमासप्रकृतिः पाकयज्ञविधिरप्रयाजानुयाजोऽसामिधेनि(? नी)कः । स्वाहाकारान्ते निगद्य होमाः । परतन्त्रोत्पत्तिर्दक्षिणाग्नौ ॥**

## आग्निवेश्यगृह्यसूत्रम्

मन्त्रान्ते स्वाहाकारः, अनादिष्टमन्त्रेषु देवतानाममन्त्रः, व्याहृतिसंज्ञा व्यस्तसमस्तहोमश्च

**[3]मन्त्रान्ते नित्यः स्वाहाकारः । अमन्त्रास्वमुष्मै स्वाहेति यथादैवतम् । भूर्भुवः स्वरिति व्याहृतिभिर्जुहोत्येकैकशः समस्ताभिश्च ॥**

$ संग. संप्रवत् ।

¶ संदी. आरगतम् ।

( १ ) संप्र. ३१७ ; आर. ३ (अथ चेत् प्रमादान्न शिखा स्यात्तदा कौशीं शिखां ब्रह्मग्रन्थियुतां दक्षिणकर्णे निदध्यात् ।) ; संग. ६१९ ; संदी. १७ आरवत्.

( २ ) वागृ. २१. ( ३ ) आग्निगृ. १।१।२.

अनादिष्टदेवतेऽन्नहोमे नाममन्त्रविशिष्टदेवताविशेषविधिः

¶[1]सर्वत्रैवमनादिष्टदैवतम्(? ते)॥

अनादिष्टमन्त्रेऽन्नहोमे देवतानाम्नां मन्त्रता

अमुष्मै स्वाहाऽमुष्मै स्वाहेति यथादैवतमादिष्टदैवतम्(? ते)॥

बर्हिरादीनामवदानादीनां च मानानि

[2]बर्हिररत्निमात्रं षट्त्रिंशदङ्गुलम्। तिस्रः शम्याः परिधयो मध्यमाङ्गुल्याऽनामिकया कनिष्ठिकयेति। स्थविष्ठो मध्यमोऽणीयान् दक्षिणतोऽणिष्ठो ह्रसिष्ठ उत्तरतः। समिद्द्वादशाङ्गुष्ठमष्टादश याज्ञिकं काष्ठम्। प्रोक्षणीमाज्यस्थालीं प्राजापत्यभाजनं प्रस्थचतुर्भागम्। पूर्णप्रस्थद्विभागं प्रणीताप्रणयनम्। प्रस्थचरुस्थालीम्। वदानप्रमाणमङ्गुष्ठपर्वोक्तम्। आहुतिप्रमाणं चतुरङ्गुलम्। दर्वीप्रमाणमेकविंशतिमङ्गुष्ठम्। तस्याश्चतुर्दशाङ्गुष्ठं पूर्वभागम्। तस्य द्व्यङ्गुष्ठमुन्नतम्। पञ्चाङ्गुष्ठं बिलम्। एवं स्रुक्। प्रादेशमात्रं पवित्रम्। एवमुपवेषणम्। इति होमप्रमाणनिर्देशो व्याख्यातः॥

हस्तस्थितानि तीर्थानि दैवतानि च

[3]ब्राह्मणस्य दक्षिणे हस्ते पञ्च तीर्थानि पञ्च दैवतानि भवन्ति। अङ्गुलीमध्ये दैवं तीर्थम्, अङ्गुल्यग्रे आर्षं तीर्थम्, अङ्गुष्ठतर्जन्योर्मध्ये पैतृकं तीर्थम्, अङ्गुष्ठमूलस्योत्तरतो रेखासु ब्राह्मं तीर्थम्, मध्ये अग्नितीर्थम्। अङ्गुष्ठे अग्निः, प्रदेशिनी(? न्यां) वायुः, मध्ये(? ध्यमायां) प्रजापतिः, अनामिके(? मिकायां) ब्रह्मा, कनिष्ठिकायामिन्द्रः॥

¶ एवंरूपहिरण्यकेशिगृह्यसूत्रयोर्व्याख्यानं तत्रत्या टिप्पणी चात्रानुसंधेया।

(१) आग्निगृ. १।१।४.

(२) आग्निगृ. २।३।१.

(३) आग्निगृ. २।६।१.



आर्द्रवस्त्रत्वमेकवस्त्रत्वं च कर्माधिकारविरोधि

[1]नाऽऽर्द्रवासा नैकवस्त्रो दैवतानि कर्माण्यनुसंचरेत्। पितृसंयुक्तानि चेत्येकेषाम्॥

पञ्चगव्यविधिः

[2]नीलवर्णायास्तु गोमूत्रं कृष्णागोमयमुद्धरेत्।
ताम्रवर्णापयश्चैव श्वेताया दधिरे(? धि ए)व च।
कपिलाया घृतं ग्राह्यं महापातकनाशनम्॥
अलाभे सर्ववर्णानां कपिलादेकात्तु ग्राह्यकम्।
गोमूत्रैकपलं दद्यादङ्गुष्ठार्धं तु गोमयम्॥
क्षीरं सप्तपलं दद्याद्दधि त्रिपलमेव च।
घृतमेकपलं दद्यात्तथैव च कुशोदकम्॥

नैमित्तिकप्रायश्चित्तानि

अथातो नैमित्तिकानि प्रायश्चित्तानि व्याख्यास्यामः। सर्वत्र वैष्णवर्चं जपेत् 'विष्णोर्नु कं वीर्याणि प्रवोचम्' इति। अथ कर्मान्तरे यदि क्षुधेद्वा निष्ठीवेद्वा 'सहस्रशीर्षा पुरुषः' इति जपति। अप उपस्पृश्याङ्गुष्ठानामिकाभ्यां दक्षिणकर्णमुपस्पृशेत्। यदि मूत्रं कुर्यात् पादौ प्रक्षाल्याऽऽचम्य ओंकारं मनसा ध्यात्वा शुचिर्भूत्वा 'पुरुष एवेदं सर्वम्' इति द्वे ऋचौ जपेत्। यदि मेहेत् पूर्ववच्छौचं कृत्वा 'त्रिपादूर्ध्व उदैत्पुरुषः' इति तिस्र ऋचो जपेत्। यद्यशुचिस्पर्शे शुद्धजलाशये स्नात्वाऽप आचम्य 'तस्माद्यज्ञात्सर्वहुतः' इति चतस्र ऋचो जपेत्। यदि चण्डालपतितादिदर्शे अप आचम्य आदित्यमभिवीक्ष्य 'ब्राह्मणोऽस्य मुखमासीत्। (बाहू राजन्यः कृतः। ऊरू तदस्य यद्वैश्यः। पद्भ्यां शूद्रो अजायत। चन्द्रमा मनसो जातः। चक्षोः सूर्यो अजायत।?) इति तिस्र ऋचो जपेत्॥

रौद्रराक्षसपैतृकनैर्ऋतच्छेदनभेदननिरसनात्माभिमर्शनानि च कृत्वा अप उपस्पृशेत्॥

(१) आग्निगृ. २।६।३.

(२) आग्निगृ. २।७।७,८.

## गोभिलगृह्यसूत्रम्

यज्ञोपवीतमाचमनं चाधिकारिविशेषणम्

[1]**यज्ञोपवीतिनाऽऽचान्तोदकेन च कृत्यम् ॥**

तत्र तावत्साधारणकर्माङ्गभूताः केचन धर्माः परिभाष्यन्ते— यज्ञोपवीतिनेति । यज्ञार्थमुपवीतं ब्रह्मसूत्रं यथावद्विहितं यस्यास्ति स यज्ञोपवीती । मत्वर्थे इनिः प्रत्ययः । तेन यज्ञोपवीतिना । आचान्तम् आचमनविधिनेषद्भक्षितं पीतमुदकं येनासौ आचान्तोदकः, तेन । चकाराद्बद्धशिखेन । कृत्यं कर्म, कर्तव्यमिति सूत्रशेषः । तथा च छन्दोगपरिशिष्टम्— 'सदोपवीतिना भाव्यं सदा बद्धशिखेन च । विशिखो व्युपवीतश्च यत्करोति न तत् कृतम् ॥' इति । मृदुला.

कर्मकालः

[2]**उदगयने पूर्वपक्षे पुण्येऽहनि प्रागावर्तनादह्नः कालं विद्यात् ॥**

इदानीं कर्माङ्गेषु वक्तव्येषु कालमेव तावत्परिभाषते— उदगयन इति । उदगयनं मकरादिषण्मासं यावत्सूर्यस्योदग्गमनात्प्रसिद्धं ज्यौतिषे । तत्र पूर्वपक्षे 'पक्षौ पूर्वापरौ शुक्लकृष्णौ मासस्तु तावुभौ ।' इत्यमराच्छुक्लपक्षे । पुण्ये पुनीते शोभने विष्ट्यादिदोषरहिते यथोक्ते अहनि दिवसे । तत्रापि अह्नो वासरस्याऽऽवर्तनाच्छायायाः परिवर्तनात् प्राक् पूर्वं पूर्वाह्णे । इत्येतं कालं विद्यात् जानीयात् । प्रकृतस्य कृत्यस्य इत्यर्थः । स्मरन्ति च— 'आवर्तनं तु पूर्वाह्णो ह्यपराह्णस्ततः परम् ।' इति । अत्र पूर्वाह्ण इत्येव वक्तव्ये प्रागित्याद्यभिधानं 'पूर्वाह्णो वै देवानां मध्यंदिनं मनुष्याणामपराह्णः पितॄणाम्' इति श्रुत्युक्तदिनप्रथमतृतीयभागात्मकपूर्वाह्णव्यवच्छेदायेति बोध्यम् । मृदुला.

[3]**यथादेशं च ॥**

एवं तर्ह्युदगयनाद्यभावे शास्त्रबलादप्यनुष्ठीयमानस्य पिण्डपितृयज्ञादेः समयवैगुण्यं स्यादत आह— यथादेशमिति । कालं विद्यादित्यनुवर्तते । आदेशः आज्ञा शास्त्रस्य । तमनतिक्रम्येत्यर्थः । आदिशति च शास्त्रं किंचित्कर्मोदगयनाद्यभावेऽपीति तत्रानङ्गतैवामीषामङ्गता च यथोक्तानाम् । मृदुला.

गृह्यकर्मणां नान्दीश्राद्धपूर्वकत्वं दक्षिणान्तत्वं च

[1]**सर्वाण्येवान्वाहार्यवन्ति ॥**

(१) सर्वाणि प्रकृतानि गृह्योक्तकर्माणीत्यर्थः ।
श्राकौ. ४८३

(२) अनु पश्चादाह्रियते प्रकृतं कर्म यस्मादिति, अनु पश्चादाह्रियते यत् प्रस्तुतात्कर्मणः इति चान्वाहार्यं नान्दीमुखश्राद्धं दक्षिणा चोच्यते । अत एव गृह्यान्तरम्— 'यच्छ्राद्धं कर्मणामादौ या चान्ते दक्षिणा भवेत् । अमावास्यां द्वितीयं यदन्वाहार्यं तदुच्यते ॥' इति । तद्विद्यते येषां तानि । तदयमर्थः— सर्वाण्येव प्रकृतत्वात् गृह्यकर्माणि अन्वाहार्यवन्ति तत्पूर्वकाणि §। एवकारोऽयोगव्यवच्छेदार्थः । अतो गृह्यानुक्तेष्वपि अन्नप्राशनादिषु शास्त्रान्तराच्छ्राद्धं नान्दीमुखं दक्षिणा च न विरुध्यते । क्वचित्तु निषिध्यतेऽपि । यथोक्तं कर्मप्रदीपे— 'नाष्टकासु भवेच्छ्राद्धं न श्राद्धे श्राद्धमिष्यते । न सोष्यन्तीजातकर्मप्रोषितागतकर्मसु ॥' इत्यादि । अमावास्यामिति । अमावास्यां प्रकृत्य प्रतिपदि मासिकं श्राद्धं साग्नीनामन्वाहार्यम् । यथाऽऽह मनुः— 'पिण्डान्वाहार्यकं श्राद्धं कुर्यान्मासानुमासिकम् ।' इति । गोभिलोऽपि अमावास्यायां पिण्डपितृयज्ञमभिधाय 'इतरदन्वाहार्यं मासीनम्' इत्याह । तदेतत्साग्निना प्रतिपदि आह्रियते । मृदुला.

कर्मान्ते ब्राह्मणभोजनम्

[2]**अपवर्गेऽभिरूपभोजनं यथाशक्ति ॥**

---

(१) गोगृ. १।१।२ ; संत. ९३५ (च०) ; मच. २।६३ (च०).

(२) गोगृ. १।१।३ ; संत. ८८९ पूर्वपक्षे (आपूर्यमाणे पक्षे).

(३) गोगृ. १।१।४.

§ 'तदन्तानि च' इत्यपि व्याख्यातुमुचितम् ।

(१) गोगृ. १।१।५ ; श्राकौ. ४८३, ४८८, ४९६ ; उत. १३२ ; श्रात. ३२० ; संत. ९२०.

(२) गोगृ. १।१।६.

क्रियापरिसमाप्तिः अपवर्गः, तस्मिन् । अभिरूपः विद्वान् कृतबुद्धिरनुष्ठाता चेत्याहुः । तादृशस्याभिरूपस्याभिरूपयोरभिरूपाणां वा भोजनम् । यथाशक्ति शक्तिमनतिक्रम्य वित्तशाठ्यमन्तरा । 'गृह्याकर्मसु विद्यात्' इति वाक्यशेषः । तथा च शक्तिसत्त्वेऽन्यथाकरणं निषेधति मनुः— 'प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते । न सांपराथिकं तस्य दुर्मतेर्विद्यते फलम् ॥' (मस्मृ. ११।३०) इति । सांपरायिकं पारलौकिकम् ।

मृदुला.

मुख्यमुपवीतमनुकल्पसहितम्

**[1]यज्ञोपवीतं कुरुते सूत्रं वस्त्रं वाऽपि वा कुशरज्जुमेव ॥**

(१) अत्र सूत्रमिति मुख्यः पक्षः । अरण्यादौ तदलाभे वस्त्रं चौराद्युपहतौ तस्याप्यभावे कुशरज्जुमिति उत्तरोत्तरमभावविधिरिति निबन्धारः । निगमपरिशिष्टम्— 'वाससा यज्ञोपवीतानि कुर्यात्तदभावे त्रिवृता सूत्रेण कुशमुञ्जवालप्रतिसररज्जुभिर्वा' । वालोऽत्र गोबालः, 'कार्पासक्षौमगोबालशरवस्त्रतृणोद्भवम् । सदा संभवतो धार्यमुपवीतं द्विजातिभिः ॥' इति देवलसंवादात् । शरगोबालादिषु नवगुणत्रिसरत्वादिनियमो नास्ति, सूत्र एव तदुपदेशात् । अवघातादयस्तु व्रीहिधर्मत्वात्तत्कार्यकारिष्वपि क्रियन्ते । गुणादयस्तु यज्ञोपवीतान्तर्गता एव, न तु धर्माः, इति टीकाकारः । 'तदभावे त्रिवृता सूत्रेण' इति एकस्याभिधानमिति न गोभिलादिविरोध इति बहवः । कल्पतरुकृतस्तु— 'यज्ञोपवीतपदमुत्तरीये गौणं तद्धर्मविन्यासविशेषप्राप्त्यर्थम्' इत्याहुः । इति व्याख्याने त्रिवृत्सूत्रादयोऽप्युत्तरीयप्रतिनिधय एव । तथा च कात्यायनः— 'तृतीयमुपवीतं वा योगपट्टं वा कुशरज्जुं वा सूत्रं वा परिधानस्योत्तरार्धं चोत्तरीयं कुर्यात्' इति ।

वीमि. १।२९ पृ. ८९

(२) सूत्रमपि वस्त्राभावे वेदितव्यम्, 'वाससा यज्ञोपवीतार्थान्कुर्यात्तदभावे त्रिवृता सूत्रेण' इति ऋष्यशृङ्गस्मरणात्, 'नित्यमुत्तरं वासः कार्यमपि वा सूत्रमेवोपवीतार्थे' (आध. २।४।२२-२३) इत्यापस्तम्बेन वाससोऽसंभवे अनुकल्पत्वेन सूत्रस्याभिधानाच्च ।

मुक्ता. ९१-९२

(३) पूर्वं 'यज्ञोपवीतिनाऽऽचान्तोदकेन च कृत्यम्' (गोगृ. १।१।२) इत्यनेन यज्ञोपवीताचमनयोः कर्माङ्गतोक्ता । अथेदानीं तदुभयमपि क्रमेण व्याचिख्यासुः शिष्यानुजिघृक्षया यज्ञोपवीतं तावदाह— यज्ञोपवीतमिति । कुरुते इति विधौ लेट् । कुर्वीत धारयेदित्यर्थः । कीदृशं तदित्याह— सूत्रं सूत्रनिर्मितम् । तच्च नवभिस्तन्तुभिस्त्रिवृद्भवति । तथा च— 'त्रिवृदूर्ध्ववृतं कार्यं तन्तुत्रयमधोवृतम् । त्रिवृतं चोपवीतं स्यात् तस्यैको ग्रन्थिरिष्यते ॥' (कास्मृ. १।२) इति कर्मप्रदीपोक्तलक्षणमित्यर्थः । अत्र मनुः— 'कार्पासमुपवीतं स्याद्विप्रस्योर्ध्ववृतं त्रिवृत् । शणसूत्रमयं राज्ञो वैश्यस्याऽऽविकसौत्रिकम् ॥' (मस्मृ. २।४४) । इति चैवमादि स्मृत्यन्तरेभ्योऽवगन्तव्यम् । त्रिवृदिति नवगुणं सूत्रनवकमित्यर्थः, 'नवैव त्रिवृत्' इति श्रुतेः । तथा च देवलः— 'यज्ञोपवीतं कुर्वन्ति सूत्रेण नवतन्तुकम् ।' इति । मुख्यश्चायं पक्षः, इह वाशब्दाभावात्, उत्तरत्र वाशब्दाम्नानात् । वस्त्रं वा । वाशब्दोऽभावविकल्पार्थः, अरण्यादावुपवीतनाशे सूत्रलाभासंभवात् तद्यज्ञोपवीतं कुरुते । अन्यथा व्युपवीतस्य मेहनादावनर्थः स्यात्, उद्भूतमूत्रपुरीषक्षुत्पिपासादिवेगस्य क्षणमपि स्थातुमशक्यत्वात्, 'पिबतो मेहतश्चापि भुञ्जतोऽनुपवीतिनः । प्राणायामत्रिकं षट्कं नवकं च क्रमान्मतम् ॥' इति स्मरणात् । अपि वा अथवा चौरादिभिररण्यादौ वस्त्रस्याप्यपहारे कुशरज्जुमेव यज्ञोपवीतं कुरुते । एवकारोऽत्र सदोपवीतित्वनियमार्थः, अन्यथा कर्माधिकारे एवाऽऽम्नानात्कर्माङ्गमेव यज्ञोपवीतमिति

(१) गोगृ. १।२।१; स्मृच. ३२ वाऽपि वा कुशरज्जुमेव (कुशरज्जुं वा); वीमि. १।२९ पृ. ८८; संप्र. ४१५ स्मृचवत्; आर. २ वाऽपि वा कुशरज्जुमेव (वा कुशरज्जुम्); मुक्ता. ९१ वाऽपि वा कुशरज्जुमेव (कुशरज्जुं च); संग. ६६५ वाऽपि वा कुशरज्जुमेव (कुशं रज्जुं वा); संर. १८७.

मन्यमानः कर्मण्येवोपवीती स्यान्न सदैवेति वदेत् । तच्च नो युज्यते । तथा चोक्तं मनुकात्यायनाभ्याम्— ' सदोपवीतिना भाव्यं सदा बद्धशिखेन च । विशिखो व्युपवीतश्च यत्करोति न तत्कृतम् ॥ ' इति । अस्य लम्बत्वप्रमाणमाह मनुः (?)— ' पृष्ठवंशे च नाभ्यां च धृतं यद्विन्दते कटिम् । तद्धार्यमुपवीतं स्यान्नातो लम्बं न चोच्छ्रितम् ॥ ' इति । इदं च वामस्कन्धे धृत्वा परिमेयम् । अत्र स्मृत्यर्थसारे— ' विच्छिन्नं वाऽप्यधो यातं भुक्त्वा निर्मितमुत्सृजेत् । ' । मनुः— ' मेखलामजिनं दण्डमुपवीतं कमण्डलुम् । अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि मन्त्रवत् ॥ ' ( मस्मृ. २।६४ ) इति । मन्त्रवत् समन्त्रकम् । मन्त्रश्चाग्रे उपनयनप्रकरणे प्रदर्शयिष्यते ।

मृदुला.

यज्ञोपवीतस्वरूपम्

**[1]दक्षिणं बाहुमुद्धृत्य शिरोऽवधाय सव्येंऽशे प्रतिष्ठापयति दक्षिणं कक्षमन्ववलम्बं भवत्येवं यज्ञोपवीती भवति ॥**

तस्यैव खल्विदानीं यज्ञोपवीतस्य विन्यासविशेषः परिभाष्यते विनियोगविशेषविवक्षया द्वाभ्याम्— दक्षिणमिति । दक्षिणं बाहुम् उद्धृत्य उत्क्षिप्य शिरः मूर्धानम् अवधाय वेष्टयित्वा सव्ये दक्षिणेतरे वामे अंशे, स्कन्धे इत्यर्थः । प्रति विशिष्टेन प्रकारेण स्थापयति । यज्ञोपवीतं तथा सति दक्षिणं कक्षं बाहुमूलकोटरप्रदेशं अनु अधः अवलम्बं लम्बमानं भवति । यज्ञोपवीतमर्थात् । पुरुषस्तु एवम् अनेन प्रकारेण यज्ञोपवीती भवति । सेयं परिभाषा कर्मार्था, ' उपवीतं देवानामुपव्ययते ' इत्येवमादिशास्त्रशेषभूता च । विध्येकवाक्यतया खल्वर्थवादानां प्रामाण्यमनुमन्यन्ते तान्त्रिकाः ' विधिना चैकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः ' ( जैसू. १।२।७ ) इति । मृदुला.

प्राचीनावीतस्य स्वरूपं पितृकर्माङ्गता च

**[1]सव्यं बाहुमुद्धृत्य शिरोऽवधाय दक्षिणेंऽशे प्रतिष्ठापयति सव्यं कक्षमन्ववलम्बं भवत्येवं प्राचीनावीती भवति ॥**

सव्यं वामम् । ' वामं शरीरं सव्यं स्यादपसव्यं तु दक्षिणम् । ' इत्यमरः । व्याख्यातमन्यत् । 'यज्ञोपवीतिना कृत्यम् ' ( गोगृ. १।१।२ ) इत्येतद्व्याचिख्यासुराचार्यः प्राचीनावीतित्वमप्यभिदधानो यज्ञोपवीतमस्यास्तीत्यमुमेवार्थं तत्रावगमयति । भाष्यकल्पा खल्वेषा कण्डिका ' यज्ञोपवीतिना ' इति सूत्रस्य । मृदुला.

**[2]पितृयज्ञे त्वेव प्राचीनावीती भवति ॥**

यदर्थं विन्यासविशेषः परिभाषितः स विनियोगविशेष इदानीमभिधीयते— पितृयज्ञ इति । पितृभ्यः पितॄणां वा यज्ञः ' यजतिचोदना द्रव्यदेवताक्रियं समुदाये कृतार्थत्वात् ' (जैसू. ४।२।२७) इत्युक्तलक्षणः, तस्मिन् पितृयज्ञे पितृकर्मणि । तुशब्दश्चशब्दार्थोऽन्यदपि सव्यजान्वञ्चनादि समुच्चिनोति । तदाह कात्यायनः— ' दक्षिणं पातयेज्जानु देवान्परिचरन् सदा । पातयेदितरज्जानु पितॄन्परिचरन्नपि ॥ ' इति । एवशब्दश्चान्यदैवतकर्ममध्यपातिन्यपि पित्र्ये कर्मणि प्राचीनावीतित्वं नियमयति । स्मरति च भगवान् मनुः— ' प्राचीनावीतिना सम्यगपसव्यमतन्द्रिणा । पित्र्यमा निधनात्कार्यं विधिवद्दर्भपाणिना ॥ ' ( मस्मृ. ३।२७९ ) इति । ऋज्वर्थमन्यत् ।

मृदुला.

---

(१) गोगृ. १।२।२ ; मस्मृ. २।६३ सव्येंऽशे ( सव्येंऽसे ) दक्षिणं कक्षमन्ववलम्बं (दक्षिणस्कन्धमवलम्बनं) ; गप. ८८ ( शिरोऽवधाय० ) मन्वव ( मव ) ; निप्र. ३२ गपवत् ; मच. २।६३ सव्येंऽशे ( सव्येंऽसे ) शेषं गपवत्, स्मृतेः इत्युक्तम् ; वीमि. १।२९ पृ. ८६ सव्येंऽशे ( सव्येंऽसे ) दक्षिणं कक्ष ( सदक्षिणं कक्ष ) ; पप्र. ९० सव्येंऽशे ( सव्येंऽसे ) ; संप्र. ४२३ कक्ष ( स्कन्ध ) शेषं पपवत् .

(१) गोगृ. १।२।३ ; मस्मृ. २।६३ दक्षिणेंऽशे ( दक्षिणेंऽसे ) मन्ववलम्बं ( मवलम्बनं ) ; गप. ८८ मन्ववलम्बं ( मवलम्बं ) ; निप्र. ३२ गपवत् ; वीमि. १।२९ पृ. ८७ दक्षिणेंऽशे ( दक्षिणेंऽसे ) ; पप्र. ९० वीमिवत् .

(२) गोगृ. १।२।४, २८, ३१, ३२.

कर्मान्ते आचमनम्

**अन्ततः प्रत्युपस्पृश्य शुचिर्भवति ॥**

अन्ततः अन्ते। सार्वविभक्तिकस्तसिः। आरब्धवैध-कर्मणामनुपदवक्ष्यमाणशयनादीनां चान्ते अवसाने प्रत्युप-स्पृश्य पुनराचम्य शुचिः शुद्धो भवति। अत्र 'साव-धारणं सर्वं वाक्यम्, अब्भक्षो वायुभक्षः' इतिवदुपस्पृश्यैव शुचिर्भवति, नान्यथेत्यर्थः। अत्र प्रत्युपस्पृश्य इत्यस्य 'स्पृष्ट्वोदकं पाणिना' इति भट्टभाष्यसंमतोऽर्थः। स चायं जलस्पर्शः पूर्वसूत्रव्याख्याने स्पष्टमभिहितः। अन्ये त्वाहुः— अन्ततो मध्यत इन्द्रियायतनानि उपस्पृश्य शुचि-र्भवति, न पार्श्वत इति। मृदुला.

कर्मकालबहिर्भूतानि द्विराचमननिमित्तानि

**अथ प्रत्युपस्पर्शनानि ॥**

अथ उपस्पर्शनकथनानन्तरं प्रति पुनः उपस्पृश्यन्ते येषु निमित्तेषु तानि प्रत्युपस्पर्शनानि। द्विराचमननिमि-त्तानि वक्ष्यन्ते इति शेषः। मृदुला.

**सुप्त्वा भुक्त्वा क्षुत्वा स्नात्वा पीत्वा विपरि-धाय च रथ्यामाक्रम्य श्मशानं चाऽऽचान्तः पुनराचामेत् ॥**

सुप्त्वा निद्रामासेव्य। भुक्त्वा अन्नादि भक्षयित्वा। क्षुत्वा क्षुतं कृत्वा। स्नात्वा आप्लुत्य। पीत्वा पेयमुद-कादि। विपरिधाय वासः। चः समुच्चये 'होमे भोजन-काले च संध्ययोरुभयोरपि। आचान्तः पुनराचामे-द्वासो विपरिधाय च ॥' इत्येवमादिस्मृत्यन्तरोक्त-निमित्तान्तरं समुच्चिनोति। 'रथ्या प्रतोली विशिखा' इति समानाभिधानम्। तामाक्रम्य। श्मशानम्, चकारादाक्र-म्येत्यनुषज्यते। आचान्तः कृताचमनोऽपि पुनराचामेत्। तथा च द्विराचमनमेषु निमित्तेषु कर्तव्यमन्यत्र कर्म-कालात्। तथा च पराशरः— 'क्षुते निष्ठीविते सुप्ते परि-धानेऽश्रुपातने। कर्मस्थ एषु नाऽऽचामेद्दक्षिणं श्रवणं स्पृशेत् ॥' इति। निष्ठीविते मुखेन कठिनश्लेष्मत्यागे, नासानिःसृते कठिनश्लेष्मणि च। पतितानां च संभाषेऽ-धोवायुसमुत्सर्गेऽनृतभाषणे। एवमन्येष्वपि निमित्तेषु सत्सु कर्मस्थोऽसमर्थः समर्थोऽपि नाऽऽचामेत्, किंतु दक्षिणं कर्णमेव स्पृशेत् इति स्मृतिदीपिकायां महामहोपाध्याय-वामदेवोपाध्यायाः। तथा च वृद्धशातातपः— 'वात-कर्मणि निष्ठीव्य दन्तश्लिष्टे तथाऽनृते। क्षुते पतितसंभाषे दक्षिणं श्रवणं स्पृशेत् ॥' इति। मृदुला.

इध्मसमिधः तदनुकल्पश्च

[1]**अथेध्मानुपकल्पयते खादिरान्वा पालाशान्वा ॥**

अथ अनन्तरं श्वोयागार्थम् इध्मान् समिधः 'प्रादेश-द्वयमिध्मस्य प्रमाणं परिकीर्तितम्। एवंविधाः स्युरेवेह समिधः सर्वकर्मसु ॥ समिधोऽष्टादशेध्मस्य प्रवदन्ति मनीषिणः। दर्शे च पौर्णमासे च क्रियास्वन्यासु विंश-तिम् ॥' (कास्मृ. १।११६–११७) इति कर्मप्रदी-पोक्तलक्षणसंख्याकाः उपकल्पयते उप समीपे अर्थादग्नेः कल्पयते आसादयेदित्यर्थः। इध्मान् विशिनष्टि— खादिरान् खादिरमयान्। पालाशान्। खदिरपलाशौ प्रसिद्धौ। वाशब्दद्वयं तुल्यवद्विकल्पार्थम्। मृदुला.

[2]**खादिरपालाशालाभे विभीतकतिल्वकबाधक-नीपनिम्बराजवृक्षशाल्मल्यरलुदधित्थकोविदार-श्लेष्मातकवर्जं सर्ववनस्पतीनामिध्मो यथार्थं स्यात् ॥**

खादिरपालाशयोरलाभे असंभवे विभीतकादिवर्ज-मन्येषां वनस्पतीनाम् अश्वत्थप्रभृतीनाम् इध्मो यथार्थं यथाप्रयोजनं ग्रहणीयः स्यात् आसादनीयो भवति। तदलाभे इत्यनभिधाय खादिरपालाशालाभे इति जात्या द्रव्यमुपलक्षयन्नाचार्यः तयोरलाभे एव सर्ववनस्पतीना-मुपादानम्, न तु तत्प्रतिनिधेरप्यलाभ इति दर्शयति। विभीतकादयः वृक्षजातिविशेषाः। मृदुला.

दैवपित्र्यबर्हिःस्वरूपं बर्हिरनुकल्पश्च

[3]**विशाखानि प्रति लूनाः कुशा बर्हिः ॥**

(१) गोगृ. १।५।१४; संत. ८६८ (अथेध्मान् कल्पयेत् खादिरान् पालाशान् वा); संप्र. ९३६ खादि॰ रान् वा (खादिरान्).

(२) गोगृ. १।५।१५; संप्र. ९३६ यथार्थं (यथार्थः).

(३) गोगृ. १।५।१६.

विशाखानि विकृष्टाः पृथग्भूताः शाखाः पत्राणि येभ्यः स्थानेभ्यस्तानि विशाखानि कुशस्कन्धप्रदेशाः। तानि प्रति लक्षीकृत्य लूनाः छिन्नाः समूलाः (?अमूलाः) कुशा बर्हिः । बर्हिस्तरणार्थमासादयितव्या इत्यर्थः । बर्हिःसंज्ञका इति वा व्याख्येयम्। तदत्र विधेयप्राधान्यविवक्षया एकवचनं द्रष्टव्यम्। बर्हिष इति बहुवचनमेव शूलपाण्युपाध्यायाः पठन्ति । तदा व्यक्त एवार्थः । मृदुला.

[1]**उपमूललूनाः पितृभ्यः ॥**

(१) मूलसमीपे लूनाः कुशाः बर्हिःसंज्ञाः। ते च पितृभ्यः पितृकार्यार्हाः । छेदश्च मूलस्य नोर्ध्वदेशे किंत्वधोभागे, 'यत्समूलं तत्पितॄणाम्' इति श्रुतेः, 'समूलस्तु भवेद्दर्भः पितॄणां श्राद्धकर्मणि।' इत्यादिस्मृतेश्च । पप्र. १००

(२) उपमूले मूलसमीपदेशे लूनाः छिन्नाः कुशाः पितृभ्यः पितृकर्मार्थम्। आसादयितव्या इति प्रसङ्गादिहोच्यते। ते खल्विमे मूलसमीपेऽप्यधोभागे एव लवितव्याः, नोर्ध्वभागे, 'हरिता यज्ञिया दर्भाः पीतकाः पाकयज्ञियाः । समूलाः पितृदेवत्याः कल्माषा वैश्वदेविकाः ॥' इति कर्मप्रदीपे समूलत्वोपदेशात्। कल्माषाः चित्राः। 'चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे।' इत्यमरः । मृदुला.

[2]**तेषामलाभे शूकतृणशरशीर्यबल्वजमुतवनलशुण्ठवर्जं सर्वतृणानि ॥**

(१) शूकतृणं शूकयुक्तं तृणं धान्यादि। शरोऽत्र शाद्वलो विवक्षितः, शाद्वलस्य मौञ्जस्य विधानात्। बल्वजश्च तीक्ष्णरोमशोऽत्र विवक्षितः, तीक्ष्णरोमशस्य बल्वजस्य विधानात्। शीर्यमुतवनलशुण्ठाः तृणजातिविशेषाः तत्तद्देशप्रसिद्धाः। पप्र. १००

(२) तेषां यथोद्दिष्टानां कुशानामलाभे शूकतृणादिवर्जं सर्वतृणानि बर्हिषः स्तरणार्थमासादयितव्यानि बर्हिःसंज्ञकानि वा भवन्ति। तैः कुशार्थः कर्तव्य इत्यर्थः। शूकतृणं शूकमुक्तं तृणम्। शूकानि फलपुष्पमञ्जर्यः। यद्वा, शूकतृणं यवगोधूमादिः। शरादयः तृणजातिविशेषाः। मृदुला.

परिधयः

[1]**परिधीनप्येके कुर्वन्ति शामीलान्पार्णान्वा ॥**

कुशानां परिधीनां(?शराणां) च खल्वभावे परिधीन् 'बाहुमात्राः परिधय ऋजवः सत्वचोऽव्रणाः। त्रयो भवन्त्यशीर्णाग्रा एकेषां तु चतुर्दिशम्॥' इति कर्मप्रदीपोक्तलक्षणसंख्याकानपि एके आचार्याः कुर्वन्ति परिस्तरणार्थम् । तानेव विशिनष्टि– शामीलान् शमीमयान्। तदलाभे पार्णान् पलाशमयान् वा । 'पलाशे किंशुकः पर्णो वातपोथः' इत्यमरः । मृदुला.

मुख्यमाज्यं तदनुकल्पाश्च

[2]**सर्पिस्तैलं दधि पयो यवागू वा ॥**

किं तदाज्यं तदाह– सर्पिरिति । सर्पिः घृतम्। 'घृतमाज्यं हविः सर्पिः' इत्यमरः। तैलं तिलस्नेहम्। यवागूः भृष्टयवचूर्णं षड्गुणजले दुग्धे वा सिद्धं द्रवद्रव्यम्। 'यवागूः षड्गुणजले सिद्धा स्यात् कृशरा घना।' इति शार्ङ्गधरीये। अत्र पूर्वपूर्वासंभवे उत्तरोत्तरोपादानमिति द्रष्टव्यम् । सर्वमेतदाज्यमुच्यते, तदाह गृह्यासंग्रहे कात्यायनः– 'अग्निना चैव मन्त्रेण पवित्रेण च चक्षुषा। चतुर्भिरेव यत् पूतं तदाज्यमितरद् घृतम्॥ घृतं वा यदि वा तैलं पयो वा दधि यावकम्। आज्यस्थाने नियुक्तानामाज्यशब्दो विधीयते॥' इति। यावकं यवागूः। मृदुला.

---

(१) गोगृ. १।५।१७; अप. १।२२५ पृ ४५८ (बर्हिरुपमूललूनं पितृभ्यः); स्मृच. १०९ (उपमूललूनान् पितृकार्येषु) : ४३२ (श्रा.) अपवत्; पप्र. १०० उप (बर्हिरुप); मुक्ता. २३१ (उपमूलं लूनाः पितृकार्येषु).

(२) गोगृ. १।५।१८; अप. १।२२५ पृ. ४५८ शीर्यबल्वजमुतवनलशुण्ठवर्जं (सूर्यसुतनलषण्ढवर्जं); स्मृच. ४३२ (श्रा.) (तदभावे शूकतृणशरबल्वजवर्जं सर्वतृणानि); पप्र. १०० तेषामलाभे (तदभावे) मुतव (सुतव).

(१) गोगृ. १।७।१६.

(२) गोगृ. १।७।२०; पप्र. ११०.

कर्मगणेषु परिसमूहनादेस्तन्त्रप्रयोगः

[1]**गणेष्वेकं परिसमूहनमिध्मो बर्हिः पर्युक्षण-माज्यमाज्यभागौ च ॥**

(१) गणेषु एकदाऽनेकयागेषु एकमेव, न प्रत्येकं परिसमूहनादि । उपलक्षणत्वादुलूखलमुशलाद्यपि ।

संत. ८७८

(२) प्रत्येकं तत्र विधाने प्राप्ते यानि तन्त्रेण कर्तुं शक्यन्ते तेषां तन्त्रभाव इहोपदिश्यते । गणेष्विति सामान्यतोऽभिधानात् विभिन्नदेवताकेष्वपि होमेषु एकदा क्रियमाणेषु एकमेव परिसमूहनादिकमित्यवगम्यते । तथा च गृह्यान्तरम्— 'पाकयज्ञान् समासाद्य एकाज्यानेक-बर्हिषः । एकस्विष्टकृतः कुर्यान्नानाऽपि सति दैवते ॥' इति । $ मृदुला.

[2]**सर्वेभ्यः समवदाय सकृदेव सौविष्टकृतं जुहोति ॥**

एवं स्विष्टकृद्धोमोऽपि सकृत् । उपलक्षणमेतन्महा-व्याहृत्या अपीति सरला । ‡ संत. ८७८

पूर्णपात्रपदार्थः

[3]**कंसं चमसं वाऽन्नस्य पूरयित्वा कृतस्य वाऽकृतस्य वाऽपि वा फलानामेवैतं पूर्णपात्र-मित्याचक्षते ॥**

(१) कृतमवहतम् । अकृतमनवहतम् । संर. ७९

(२) कंसं कांस्यभाजनं वर्तुलाकृति । चमसं वान-स्पत्यं पात्रं वा । अन्नस्येति तृतीयार्थे षष्ठी 'फलानां सुहितः' इतिवत् । पूरयित्वा । कृतस्येति सक्त्वादेः । अकृतस्य यवव्रीह्यादेर्वा । कृताकृतस्य तण्डुलादेरपीति वाशब्दोऽवगमयति स्वरसतः । अपि वा अथवा अन्ना-संभवे फलानां भोज्यानामेव । एतं पूर्णपात्रमिति पुंस्त्वेन निर्देशात् । अन्नप्रमाणमाह गृह्यासंग्रहः— 'अष्टमुष्टिर्भवेत् कुञ्चिः कुञ्चयोऽष्टौ च पुष्कलम् । पुष्क-लानि च चत्वारि पूर्णपात्रं विधीयते ॥' इति । असंभवे पुनरेतस्याऽऽह कर्मप्रदीपः— 'यावता बहुभोक्तुश्च तृप्तिः पूर्णेन जायते । नावरार्धं ततः कुर्यात्पूर्णपात्रमिति स्थितिः ॥' इति । मृदुला.

पाकयज्ञेषु ब्रह्मैवैक ऋत्विक्

[1]**ब्रह्मैवैक ऋत्विक् ॥**

दर्शपौर्णमासप्रस्तावादेवमुच्यते । तेन सायंप्रातर्होम-वैश्वदेवादीनामब्रह्मत्वेऽपि न क्षतिः । अयमर्थः— सर्व-कर्मस्वेक एव ब्रह्मा ऋत्विक् कर्तव्यः, न पुनः कर्मभेदे नाना । तदनेन ऋत्विगत्याज्यो भवतीत्यु-पदिशति । तथा च स्मरणम्— 'ऋत्विग्याज्यमदुष्टं यस्त्यजेदनपकारिणम् । अदुष्टमृत्विजं याज्यो विनेयौ तावुभावपि ॥ क्रमागतेष्वेष धर्मो वृतेष्वृत्विक्षु च स्वयम् । यादृच्छिके तु संयोज्ये तत्यागे नास्ति किल्मि-षम् ॥' इति । मृदुला.

पाकयज्ञेषु स्वयं होमः

[2]**पाकयज्ञेषु स्वयं होता भवति ॥**

एकाग्नौ ये यज्ञास्ते पाकयज्ञा उच्यन्ते । तथा च लाट्यायनः— 'पाकयज्ञा इत्याचक्षते एकाग्नौ यज्ञान्' इति । तेषु स्वयंहोमे फलातिशयः स्मर्यते— 'स्वयंहोमे फलं यत्तु तदन्येन न जायते ।' इति । अन्यो होता तु नानेन व्यवच्छिद्यते । तथा च कर्मप्रदीपः— 'निःक्षिप्याग्निं स्वदारेषु परिकल्प्यर्त्विजं तथा । प्रवसेत्कार्यवा-न्विप्रो वृथैव न चिरं क्वचित् ॥' इति । 'जुहुयाद्वा हावयेद्वा' इति सामान्यतः सूत्रणाच्च । मृदुला.

पाकयज्ञदक्षिणा

[3]**पूर्णपात्रोऽवमः पाकयज्ञानां दक्षिणा ॥**

---

$ शेषं संतवत् ।

‡ मृदुला. संतवत् ।

(१) गोगृ. १।८।१७ ; संत. ८७७ (आज्यम्० ) (च० ) ; संप्र. ९०१ (आज्यम्० ).

(२) गोगृ. १।८।१८ ; संत. ८७७ ; संप्र. ९०१.

(३) गोगृ. १।९।७ ; संग. ४४ कंसं + (वा) (अकृतस्य वा० ) वैतं (वैतत्) ; संर. ७८ वैतं (वैतत्).

(१) गोगृ. १।९।८ ; संग. ४०.

(२) गोगृ. १।९।९ ; संग. ४० ; संदी. ३९.

(३) गोगृ. १।९।१०–१२, २४.

पुंस्त्वमत्र पूर्ववत् । अवमः अधमः । 'रेफयाप्याव-माधमाः' इत्यमरः । सर्वतोऽल्पः । मृदुला.

**अपरिमितं परार्ध्यम् ॥**

अपरिमितं बहु । परार्ध्यं प्रशस्तम्, 'परार्ध्याग्र्य-प्राग्रहरप्राग्र्याग्रीयमग्रिमम् ।' इति कोशेऽभिधानात् । 'परावराधमोत्तमपूर्वाच्च' (पा. ४।३।५) इति यत्प्रत्ययः शैषिकः । परार्धमन्तिमा संख्या, तत्र भवम् । मृदुला.

**अपि ह सुदाः पैजवन ऐन्द्राग्नेन स्थालीपाकेनेष्ट्वा शतं सहस्राणि ददौ ॥**

अस्मिन्नर्थे श्रुतिर्दृष्टान्तयति— अपि हेति । अपिरन्यानपि समुच्चिनोति । सुदाः शोभनदाता । कर्तर्यसुन् । पैजवनः पिजवनपुत्रोऽपि । शतमित्यादिसंख्यामात्राभिधाने गा एव । तथा च द्राह्यायणसूत्रम्— 'संख्यामात्रे च दक्षिणा गावः' इति । मृदुला.

आहुतिधर्मातिदेशः

**एषोऽत ऊर्ध्वं हविराहुतिषु न्यायः ॥**

एषः अनन्तरोक्तः न्यायः प्रकारः अत ऊर्ध्वं वक्ष्यमाणासु हविराहुतिषु द्रष्टव्यः । इत्युक्तप्रकारः सर्वत्रातिदिश्यते । न्यायग्रहणेन चैतदुक्तं भवति— अत ऊर्ध्वं ये क्षिप्रहोमा ब्रह्मचारिसमिदादयो वक्ष्यन्ते तेषु क्षिप्रहोमोक्त एव प्रकारो भवति । ये पुनस्तन्त्रहोमा वैवाहिकहोमादयस्तेषु ब्रह्मोपवेशनादितन्त्रं द्रष्टव्यम् । तथा क्वचित् प्राप्तोऽप्यर्थो निवर्तते । यथा आज्यतन्त्रेषु मुसलोलूखलादयो निवर्तन्ते, पाण्याहुतिषु मेक्षणस्रुगादय इति । अन्ये तु व्याचक्षते—अत ऊर्ध्वम् अस्मात्परतो वक्ष्यमाण एष न्यायो हविराहुतिषु । हूयते इति हविः । अविशेषात् समिदाज्यपश्वपूपशाकादिकं सर्वमुच्यते । तस्याऽऽहुतिषु बोद्धव्यम्— (? व्यः) इति शेषः । पराचीनस्यापि बुद्ध्या समाकृष्टस्यैतदा परामर्शः । न्यायग्रहणं क्वचिदाम्नातस्यापि प्रतिषेधार्थम् । यथा— समाम्नातोऽपि मन्त्रान्ते स्वाहाकारः स्वाहान्तमन्त्रे नाऽऽद्रियते, अन्यायत्वात् । तच्चोत्तरत्र वक्ष्यामः । एवमन्यदप्यूह्यमिति । मृदुला.

आज्यहोमेष्वाज्यभागयोः स्विष्टकृतश्च निषेधः

**[1]आज्याहुतिष्वाज्यमेव संस्कृत्योपघातं जुहुयान्नाऽऽज्यभागौ न स्विष्टकृत् ॥**

आज्यस्य यथोक्तस्य आहुतिषु । यत्राऽऽज्यमेव तत्र, आज्यं संस्कृत्यैव उपघातं यथा भवति तथा जुहुयात्, द्रवद्रव्यकत्वात् स्रुवेणेत्यर्थः । एवकारेण यत् व्यवच्छिद्यते तदप्युच्यते सुखावबोधार्थम्— नाऽऽज्यभागावित्यादि । तदेते अतिदेशागता इह प्रतिषिध्यन्ते । मृदुला.

आज्यहोमेषु अनादिष्टहोमेषु च महाव्याहृतिहोमः

**[2]आज्याहुतिष्वनादेशे पुरस्ताच्चोपरिष्टाच्च महाव्याहृतिहोमः ॥**

आज्याहुतिषु यत्र आज्यमेव हूयते, नान्यत् चर्वादि हविरन्तरमस्ति, तेषु नामकरणादिकर्मसु, एवम् अनादेशे यत्र होम एव नाऽऽदिश्यते पुंसवनादिषु, तत्र च पुरस्ताच्चोपरिष्टाच्च पूर्वं पश्चाच्च व्याहृतिभिर्होमः कार्य इत्यर्थः । ताश्चोक्ताः कात्यायनेन— 'भूराद्यास्तिस्र एवैता महाव्याहृतयोऽव्ययाः ।' इति । गृह्यासंग्रहे— 'यत्र व्याहृतिभिर्होमः प्रायश्चित्तार्थको भवेत् । चतस्रस्तत्र विज्ञेयाः स्त्रीपरिग्रहणे यथा ॥' इति । एवं च यत्र विशेषोपदेशातिदेशाभ्यां प्रायश्चित्ततया वा व्याहृतिहोमलाभस्तत्र व्याहृतिभिस्तिसृः समस्ताभिरेकेत्याहुतिचतुष्टयम्, अन्यत्र व्याहृतित्रयमिति न वचनयोर्विरोधः । मृदुला.

महाव्याहृत्याहुतीनां त्रित्वचतुष्ट्वव्यवस्था

**[3]यथा पाणिग्रहणे तथा चूडाकर्मण्युपनयने गोदाने च ॥**

यथा पाणिग्रहणे महाव्याहृतिभिर्व्यस्तसमस्ताभिश्चतस्र आहुतयो हूयन्ते तथा चूडाकर्मादावपि । सोऽयमनागतातिदेशः चूडाकर्मादिव्यतिरिक्तेषु तु तिस्र एवाऽऽहुतयो भवन्तीत्यवगमयति । मृदुला.

---

(१) गोगृ. १।९।२६ ; संत. ८७६.

(२) गोगृ. १।९।२७ ; संत. ८७६, ८७८–८७९.

(३) गोगृ. १।९।२८ ; संत. ८७६ (च०).

कर्मान्ते वामदेव्यगानम्

[1]**अपवृत्ते कर्मणि वामदेव्यगानं शान्त्यर्थम् ॥**

अपवृत्ते समाप्ते कर्मणि, वामदेव्यस्य 'कया नः' इत्यादिकस्य गानं कर्तव्यमिति परिभाष्यते । तस्मात्सर्वेषामपि कर्मणामपवर्गे वामदेव्यं साम गातव्यम्, कर्मणीति सामान्यतयोपदेशात् । बहूनां कर्मणां चैकदा करणेऽन्ते सकृदेव तद्गानमित्याह कर्मप्रदीपः— 'अहोमकेष्वपि भवेद्यथोक्तं चन्द्रदर्शने । वामदेव्यं गणस्यान्ते बल्यन्ते वैश्वदेविके ॥' इति । गानस्याशक्तावपि ऋचो वारत्रयं पठनीया इत्याह स एव— 'अन्ते च वामदेव्यस्य गानं कुर्यादृचस्त्रिधा ।' इति । शान्त्यर्थमित्यर्थवादः । स्तूयते ह्यनेन गानम् । मृदुला.

## खादिरगृह्यसूत्रम्

औत्सर्गिकः कर्मकालः

[2]**उदगयनपूर्वपक्षपुण्याहेषु प्रागावर्तनादह्नः कालोऽनादेशे ॥**

यस्मिन् क्षणे मकरं गच्छति सूर्यः ततः प्रभृति षण्मासा उदगयनम् । यस्मिन् क्षणे सूर्याचन्द्रमसौ सह वसतः, तत ऊर्ध्वं यस्मिन् क्षणे तयोरेव परमो विप्रकर्षः ततः प्राक्पूर्वपक्षः । ज्योतिःशास्त्रे कर्मयोग्यं यदहरुक्तं तत्पुण्यमहः । तेषां द्वन्द्वसमासः अन्वये तेषामितरेतरयोगमाह, विभक्तिः (अङ्गत्वमाह) । अतो येषु कर्मसु समुचितानामन्वयः संभवति तेषु समुचितानामेवाङ्गत्वम्, येष्वसंभवस्तेषु यथासंभवं द्वयोरेकस्य वाऽन्वयः । ननु सकृदुच्चरितस्य कथमनेकधाऽन्वयः ? सर्वकर्मणामधिकृतत्वादर्थादावर्तते पदम्, इतरेतरयोगविवक्षया च । समुच्चयसंभवेऽपि यत् ज्योतिःशास्त्रे निषिद्धमहस्तद्वर्जनीयमुदगयनपूर्वपक्षावनादृत्यापि, दोषहेतुत्वात् । मध्यंदिनादूर्ध्वमहरावर्तनमित्याहुः । ततः प्राग्ग्रहणं वक्राभावेऽप्यावृत्तिरस्ति अह्न इति विशिनष्टि (? ततः प्राक् । ग्रहाणां वक्रभावेऽप्यावृत्तिरस्ति, अतः 'अह्नः' इति विशिनष्टि) । ननु 'प्रातराहुतिं हुत्वा हविर्निर्वपेत्' इत्यनेनैव सिद्धम् । न सिध्यति, पूर्वकालनिषेधपरत्वादस्य । अपि च 'सर्वमहः प्रातराहुतेः स्थानम्' इति वचनात् अपराह्णेऽपि स्यात् । काल इति यथाऽन्ये दर्शादयः काला अधिकारहेतवः तथाऽयमप्युक्तः कालोऽधिकारहेतुर्नाङ्गमात्रमिति गमयितुम् । अतोऽन्यकाले कृतमकृतमेव, न विगुणमात्रम् । विशेषादेशस्य बलीयस्त्वे सिद्धे अनादेशे इति शास्त्रान्तरादेशस्य संग्रहणार्थम् । तत्र विरुद्धानां विकल्पः, यथा विवाहे सर्वकालत्वम्, उपनयने च पञ्चमवर्षादि । अविरुद्धानां समुच्चयः, यथा उपनयने वसन्तादि, सर्वेषु च मुहूर्तादि । एवं सर्वत्र । रुद्रभा.

कर्मान्ते ब्राह्मणभोजनम्

**अपवर्गे यथोत्साहं ब्राह्मणानाशयेत् ॥**

अधिकारप्रयोगे समाप्ते यथाश्रद्धं त्र्यवरान् ब्राह्मणान् भोजयेत् । रुद्रभा.

यज्ञोपवीतम्

**यज्ञोपवीतम् ॥**

कर्माङ्गं स्यादिति शेषः । नित्ये विद्यमाने न यज्ञोपवीतान्तरम्, प्रसङ्गात्सिद्धेः । रुद्रभा.

**सौत्रम् ॥**

तद्यज्ञोपवीतं कार्पाससूत्रकृतं रज्जुः वासो वा । स्मृत्यन्तराच्छेषावगतिः । रुद्रभा.

**कौशं वा ॥**

कुशविकारः कौशम् । रुद्रभा.

**ग्रीवायां प्रतिमुच्य दक्षिणं बाहुमुद्धृत्य यज्ञोपवीती भवति ॥**

तत्सौत्रं कौशं वा पाशाकृतिं कृत्वा ग्रीवायामासज्य दक्षिणं बाहुमुद्धृत्य तस्याधस्तादवलम्बमानं कृत्वा यज्ञोपवीती भवति । विन्यासविशेषयुक्ते अस्मिन् द्रव्ये यज्ञोपवीतशब्दो वर्तते, तदर्थे द्रव्ये उपचारात् । रुद्रभा.

प्राचीनावीतम्

**सव्यं प्राचीनावीती ॥**

ग्रीवायां प्रतिमुच्य सव्यं बाहुमुद्धृत्य प्राचीनावीती भवति । एतत् पित्र्ये । स्मृत्यन्तरात् उपासने गुरूणां

(१) गोगृ. १।९।२९ ; सं.ल. ८८०.

(२) खागृ. १।१।२–८.

वृद्धानामतिथीनां च होमे जप्यकर्मणि भोजने आचमने स्वाध्याये च यज्ञोपवीती स्यात् अन्येष्वप्येवंप्रकारेषु। 'भवति' इति व्याप्त्यर्थम्, गृह्यशास्त्रे विहितादन्यत्राप्येतद् द्वयमङ्गमिति। निवीतिता नोक्ता, अस्मिन् शास्त्रे निवीतिना कृत्यं नास्तीति। केचित्तु 'आयसान् वधकामः' (खाग्र. ४।३।१) इत्यत्र निवीतित्वमिच्छन्ति, वधकामे श्येनयागे दर्शनात्। तदर्थं च 'ग्रीवायां प्रतिमुच्य' इति सूत्रं विच्छिद्य 'निवीती भवति' इत्यध्याहरन्ति। रुद्रभा.

कर्मान्ते आचमनम्

**[1]अन्ततः प्रत्युपस्पृश्य शुचिर्भवति ॥**

प्रत्युपस्पृश्येत्युक्ते पूर्वोक्तानां प्रत्येकं स्यात् अतोऽन्तत इत्युक्तम्। उपस्पृश्येति सिद्धे प्रति इति पूर्वमप्युपस्पर्शनमस्तीति सूचयितुम्। पूर्वमुपस्पर्शनमपेक्ष्य प्रत्युपस्पर्शनं भवति। तच्च स्मृत्यन्तराद्गम्यते – 'आ मणिबन्धात्पाणी प्रक्षाल्य' इति। तत्परामर्शे च तत्सहचरितानां 'प्राङ्मुख उदङ्मुखो वा शौचमारभेत, शुचौ देशे आसीनो दक्षिणं बाहुं जान्वन्तरा कृत्वा यज्ञोपवीती वाग्यतः, हृदयस्पृशः, अनुष्णाभिरफेनाभिरद्भिः, तीर्थेन पादौ प्रक्षाल्य' इत्येवमादीनामपि परामर्शः सिद्धो भवतीति तैः समुच्चयः। पादप्रभृतिक्रियाविशेषाणां निरपेक्षश्रवणान्मुखमार्जनादीनां निवृत्तिः। शुचिरिति। न केवलं कर्माङ्गभाव एवाऽऽचमनम्, अप्रायत्ये सति शुद्ध्यर्थमपि भवतीति वेदितव्यम्। भवतीति 'यज्ञोपवीती भवति' इतिवत्। रुद्रभा.

आसनादिदर्भाणामुदगग्रता

**आसनस्थानसंवेशनान्युदगग्रेषु दर्भेषु ॥**

कुर्यादिति शेषः। विध्युपदिष्टानि नार्थप्राप्तानि आसनादीनि, वचनस्यान्यथा वैयर्थ्यात्। रुद्रभा.

कर्त्रादेः प्राङ्मुखत्वम्

**प्राङ्मुखस्य प्रतीयात् ॥**

प्राङ्मुख इत्युक्ते कुर्यादित्यध्याहारे कर्तुरेव प्राङ्मुखत्वं स्यादिति सर्वस्यैव कर्मसंबन्धिनः प्राङ्मुखत्वं विधातुं संबन्धमात्रवाचिनीं षष्ठीमाह। यथा चौले मातुः। वाक्यशेषात्सिद्धे प्रतीयादिति मधुपर्के दातुश्चौले नापितस्य प्रत्यङ्मुखत्वनियमार्थम्। प्राङ्मुखस्य प्रति अभिमुखमियात् गच्छेदित्यर्थः। रुद्रभा.

स्नानं सशिरस्कस्य

**सहशिरस्कं स्नानशब्दे ॥**

प्रतीयादिति शेषः। 'स्नातामहतेन' 'स्नाप्य कुमारम्' इत्यादौ। स्नान इत्येव सिद्धे शब्द इति 'गृह्याऽऽत्मानमभिषिञ्चेत्' (खाग्र. ३।१।१४) इत्यत्र शिरस्यभिषेकार्थम्। इतरथा सेकमात्रमिदं न स्नानमिति न शिरसि स्यात्। स्नाने स्नानतुल्यवाचिनि च शब्दे इति सूत्रार्थः। रुद्रभा.

अनादिष्टकरणके दक्षिणपाणेः करणत्वम्

**दक्षिणेन पाणिना कृत्यमनादेशे ॥**

कुर्यादित्यध्याहारात्सिद्धे कृत्यमिति गृह्योक्तादन्यदपि यत्कृत्यं तदपि दक्षिणेनैव हस्तेन कुर्यादित्येवमर्थम्। आदेशबलीयस्त्वात्सिद्धे अनादेश इति पदार्थस्वभावादेशेऽपि निवृत्त्यर्थम्, यथा 'परिदध्या(? द्या)त्' इत्यादौ द्वयोः पाण्योः। रुद्रभा.

परमन्त्रादिना पूर्वमन्त्रान्तबोधः

**मन्त्रान्तमव्यक्तं परस्याऽऽदिग्रहणेन विद्यात् ॥**

मन्त्रान्तम्, अव्यक्तं च त्रिनियोगतः परिमाणतश्च। परस्येत्यस्याऽऽकाङ्क्षावशात् द्वावर्थौ, उत्तरस्य मन्त्रस्येत्येकः, प्रधानस्य मन्त्रबोध्यस्यार्थस्येति द्वितीयः। आदिश्च ग्रहणं च आदिग्रहणम्। यथासंख्येनान्वयः। एष सूत्रार्थः– मन्त्रान्तमुत्तरस्याऽऽदिना विद्यात्, अव्यक्तं विनियोगतः परिमाणतश्च अर्थवशेन विनियुक्तं परिमाणयुक्तं च विद्यादिति। अविनियुक्तो हि मन्त्रः अध्ययनसंस्कृतः कार्यविशेषसंबन्धाकाङ्क्षः कर्मविशेषार्थानां मन्त्राणां संनिधावाम्नायमानस्तत्कर्मशेषभावं प्रतिपद्यते, संनिधिविशेषादपर्यवसानाच्च। तस्मिन्नपि कर्मणि यत्पदार्थप्रकाशनसमर्थो यः स तस्यैव शेषः, सामर्थ्यविशेषात्। यस्त्वतत्प्रकाशकः स तत्प्रकाशक एव जपतया आशी-

(१) खाग्र. १।१।१२–१४,१६–१८, २०–२२.

र्वादतया वोपयुज्यते । आकाङ्क्षादिवशाच्चेयत्तापरिच्छेदो मन्त्रस्य ।

ननु परस्य ग्रहणेनेत्यनेनैव परिमाणस्याप्युक्तत्वात् अन्तमादिनेत्यनेन किम् ? उच्यते । द्वयोर्मन्त्रयोर्मध्यगतस्य यस्य पदस्याऽऽभिधानिकोऽन्वयो न केनचिदवगम्यते तस्यावश्यमेकेनान्वयः कल्प्यः, अन्यथा तस्याऽऽनर्थक्यं स्यात् । यस्य वा द्वाभ्यामपि केनापि प्रकारेणान्वयो दृश्यते तस्याप्येकेनैवान्वयः आकाङ्क्षापूर्तेरेकत्वाच्चाव-गम्यते । एतदुक्तं भवति– उत्तरमन्त्रादेः प्राक् पूर्व एव मन्त्रोऽनन्वयि यत्किंचित्पदमित्येकोऽर्थः । उत्तरमन्त्रादेः प्रागेव पूर्वमन्त्रो नोत्तरादिसहित इति द्वितीयः । मध्यमं पदं किं पूर्वेण संबध्यते उतोत्तरेणेति संदेहे कल्पना-लाघवाद्विशेषाध्यवसायः । अस्यार्थस्य न्यायसिद्धेर्न दोषः, नैयायिकत्वात् सूत्रस्य । वाक्यशेषात्सिद्धे विद्यादिति न स्वरुच्या कल्पयेत्, न्यायसिद्धमेव जानीयादित्येवमर्थम् । रुद्रभा.

पाकयज्ञसंज्ञा

**पाकयज्ञ इत्याख्या यः कश्चैकाग्नौ ॥**

संज्ञा व्यवहारार्था । एकाग्निः गृह्याग्निः । एकाग्निग्रहणं अन्याग्निसाध्यानां संज्ञानिवृत्त्यर्थम् । यः कश्चेति 'सप्त पाकयज्ञसंस्थाः' इति दर्शनात् तद्व्यतिरेकार्थं शास्त्रान्तरोक्त-संग्रहार्थं च । रुद्रभा.

पाकयज्ञेषु ब्रह्मैव ऋत्विक्

**तत्रर्त्विग् ब्रह्मा सायंप्रातर्होमवर्जम् ॥**

तत्र तस्मिन्नेव पाकयज्ञे, नान्यत्र । अतो मथिते लौकिके वा न ब्रह्मा । ऋत्विगिति 'आर्षेयोऽनूचानः' इत्याद्यृत्विग्गुणनियमार्थम् । रुद्रभा.

हौत्रस्य यजमानकर्तृकता

**स्वयं हौत्रम् ॥**

सायंप्रातर्होमवर्जमित्यनुवर्तते, इतरथा सूत्रानर्थक्यं स्यात् । तथा हि– सर्वहोमेषु स्वामिनो होमकर्तृत्वं न विधेयम्, नित्यप्राप्तत्वात् । सायंप्रातर्होमे स्वामिनोऽन्यस्यापि कर्तृत्वाभ्यनुज्ञानार्थं सूत्रम्, तदधिकारार्थमेव हि ब्रह्मा-सनमनुक्त्वैतदुक्तम् । रुद्रभा.

आज्यहोमेष्वाज्यभागस्विष्टकृतामभावोऽनादेशे

**[1]नाऽऽज्यभागौ न स्विष्टकृदाज्याहुतिष्वनादेशे ॥**

उपघातादिशब्दसूचितास्वाज्याहुतिषु सतीष्वाज्यभागौ स्विष्टकृच्च न स्युः । नाऽऽज्यभागस्विष्टकृत इति वक्तव्ये पृथग्ग्रहणं यत्र न स्विष्टकृत् तत्राऽऽज्यभागौ न स्तः इत्येवमर्थम्, यथा वास्तुहोमे । 'सौविष्टकृतीमष्टम्या' (खागृ. ३।४।२५) इति पशावादेशात्तत्र प्रतिषेधा-भावार्थमनादेशे इत्युक्तम् । रुद्रभा.

गृह्याग्निलक्षणम्

**[2]यस्मिन्नग्नौ पाणिं गृह्णीयात् स गृह्यः ॥**

पाणिं गृह्णीयादिति विवाहकरणं लक्ष्यते । व्यवहारार्था हि संज्ञा । एवं चेद्विवाहादनु निष्पादितत्वात् गृह्यत्वस्य विवाहावस्थायां गृह्यत्वाभावात् ब्रह्मा न स्यात् । न, 'गौर्दक्षिणा' इति लिङ्गात् । रुद्रभा.

**यस्मिन्वाऽन्त्यां समिधमादध्यात् ॥**

यस्मिन्नग्नौ ब्रह्मचारी अन्त्यां समिधमादध्यात् स वा गृह्यः । अस्मिन् पक्षे तु तत्प्रभृति सायंप्रातर्होमादीनि स्युः, गृह्य एव च विवाहः । रुद्रभा.

द्रव्यानुक्तावाज्यं द्रव्यम्

**[3]आज्यं जुहुयाद्धविषोऽनादेशे ॥**

आज्यं जुहुयादनादेशे इति सिद्धे हविष इति हविषः संस्कार§मपि 'शृतमभिघार्य' इत्यादिष्वाज्यमेव स्या-दित्येवमर्थम् । रुद्रभा.

मन्त्रानादेशे देवतानाम्नो मन्त्रत्वम्

**देवता मन्त्रानादेशे ॥**

यद्देवत्यं हविरुक्तं तद्देवता होममन्त्रः स्यात्, 'अग्नये स्वाहा' इतिवत् । रुद्रभा.

---

§ करणघञा व्युत्पन्नमाज्यविशेषणम् ।

(१) खागृ. १।३।१२.

(२) खागृ. १।५।१–२.

(३) खागृ. २।२।१५–१६.

## जैमिनिगृह्यसूत्रम्

पाकयज्ञानां गृह्याग्निसाध्यत्वम्

[१]तेषामेकाग्नौ होमः ॥

तेषां पाकयज्ञानां होम एकाग्नौ कर्तव्यः, न तु कर्मणि कर्मणि पृथगग्निरुपादेयः। सर्वकर्मार्थमेकोऽग्निर्धार्यः। स चार्थादौपासनाग्निरिति प्रसिद्धम्। ब्रह्मचर्यार्थसमिदाधानादिस्तु( ? दि तु ) तेषामौपासनाग्न्यसंभवाल्लौकिके इति सिद्धम्। श्रीव्या.

यज्ञोपवीताचमनयोः कर्माङ्गता

नित्ये यज्ञोपवीतोदकाचमने ॥

एते कर्मादौ स्तः। विकल्पानुक्तेरेव नित्यत्वे सिद्धे नित्यशब्दग्रहणं स्त्रिया अपि यज्ञोपवीताकारेण उत्तरीयं कर्माङ्गं भवति। श्रोत्रस्पर्शाद्यनुकल्पव्यावृत्त्यर्थमुदकग्रहणम्। श्रीव्या.

दर्शपूर्णमासतन्त्रातिदेशः पाकयज्ञेषु

दर्शपूर्णमासतन्त्राः स्वतन्त्रा वा ॥

एते पाकयज्ञा दर्शपूर्णमासतन्त्रसदृशतन्त्रा भवन्ति। एतेन यदेतेष्वनुक्तमाकाङ्क्षितं तद्दर्शपूर्णमासाभ्यामानेतव्यम्। यथा— 'खादिरः पालाशो वेध्मः' इत्युक्ते 'एकविंशतिरिध्मदारूणि' इति। वाशब्दश्चार्थः। एते स्वतन्त्राश्च भवन्ति। न सर्वत्रैषां दर्शपूर्णमासतन्त्रमानेतव्यमित्यर्थः। तेनात्र न ऋत्विग्वरणादि। तथा च सूत्रद्वयार्थः आचाराद्यवस्थापनीयः। श्रीव्या.

इध्मबर्हिःपुष्पाज्यानां मुख्यकल्पा अनुकल्पाश्च

खादिरः पालाशो वेध्मः। तदलाभे विभीतकतिल्वकबाधकनिम्बराजवृक्षशल्मल्यरलुदधित्थकोविदारश्लेष्मातकवर्जं सर्ववनस्पतीनामिध्मः। कुशालाभे शूकतृणशरशीर्यबल्वजमुतवनलशुण्ठवर्जं सर्वतृणानि। शुक्लाः सुमनसः। तासामलाभे जपारूपकाकुत्थाभण्डीकुरण्डकवर्जम्। गन्धवत्यो वा सर्ववर्णाः। चतस्र आज्यप्रकृतयो भवन्त्यूधन्यं वा वाह्यं वा दधि वा पयो वा ॥

शुक्लानां सुमनसामलाभे जपापुष्पादीनि पञ्च वर्जयित्वा। गन्धवत्यश्चेत् सर्ववर्णाः कृष्णरक्तादिवर्णाः सुमनसो ग्राह्याः। वाशब्दश्चार्थः। ऊधन्यं नवनीतं वा। वाह्यं वा घनीभूतम्। दधि वा पयो वा। एताश्चतस्र आज्यप्रकृतय आज्यहेतव आज्यकार्ये भवन्ति यद्याज्यं न लभ्यते। श्रीव्या.

(१) जैगृ. १।१.

## कौशिकगृह्यसूत्रम्

दैवकर्मसु कर्तुः प्राङ्मुखत्वम्, मन्त्राणामुपांशुत्वम्, यज्ञोपवीतम्, प्राक्क्रियत्वमुदक्क्रियत्वं वा, प्रागुदगपवर्गत्वम्, त्र्यवरार्धत्वम्, प्रदक्षिणक्रियत्वम्, स्वाहाकारवषट्कारवत्त्वम्, बर्हिषः पर्वलूनत्वं च।
पित्र्यकर्मसु प्राचीनावीतम्, दक्षिणदिक्क्रियत्वम्, दक्षिणप्रत्यगपवर्गत्वम्, सकृत्त्वम्, प्रसव्यक्रियत्वम्, स्वधाकारनमस्कारवत्त्वम्, बर्हिष उपमूललूनत्वं च

[१]यज्ञं व्याख्यास्यामो देवानां पितॄणां च ॥
प्राङ्मुख उपांशु करोति ॥
यज्ञोपवीती देवानाम् ॥
प्राचीनावीती पितॄणाम् ॥
प्रागुदग्वा देवानाम् ॥
दक्षिणा पितॄणाम् ॥
प्रागुदगपवर्गं देवानाम् ॥
दक्षिणप्रत्यगपवर्गं पितॄणाम् ॥
सकृत्कर्म पितॄणां त्र्यवरार्धं देवानाम् ॥
यथादिष्टं वा ॥
अभिदक्षिणमाचारो देवानां प्रसव्यं पितॄणाम् ॥
स्वाहाकारवषट्कारप्रदाना देवाः ॥
स्वधाकारनमस्कारप्रदानाः पितरः ॥
उपमूललूनं बर्हिः पितॄणाम् ॥
पर्वसु देवानाम् ॥

(१) कौसू. १।९–२५.

बर्हिर्लवनप्रकारः

'प्रयच्छ पर्शुम्' इति दर्भाहाराय दात्रं प्रयच्छति ॥

'ओषधीर्दान्तु पर्वन्' इत्युपरि पर्वणां लूत्वा तूष्णीमाहृत्योत्तरतोऽग्नेरुपसादयति ॥

समानकालहोमानां तन्त्रप्रयोगः

[१]अथापि श्लोकौ भवतः–

आज्यभागान्तं प्राक्तन्त्रमूर्ध्वं स्विष्टकृता सह ।
हवींषि यज्ञ आवापो यथा तन्त्रस्य तन्तवः ॥
पाकयज्ञान्समासाद्यैकाज्यानेकबर्हिषः ।
एकस्विष्टकृतः कुर्यान्नानाऽपि सति दैवते ॥
इति ॥

अत्रापि गोपथब्राह्मणपठितौ श्लोकौ भवतः । दाकेटी.

अश्नातिविधौ स्थालीपाकस्य, जुहोतिविधौ आज्यस्य, आदधातिविधौ समिधः, आवपतिविधौ व्रीहियवतिलानाम्, भक्षयतिविधौ क्षीरौदनपुरोडाशरसानाम्, प्रयच्छतिविधौ मन्थौदनयोः कर्मता

[२]अश्नात्यनादेशे स्थालीपाकः ॥
पुष्टिकर्मसु सारूपवत्से ॥
आज्यं जुहोति ॥
समिधमादधाति ॥
आवपति व्रीहियवतिलान् ॥
भक्षयति क्षीरौदनपुरोडाशरसान् ॥
मन्थौदनौ प्रयच्छति ॥

पूर्वशब्दः त्रिषप्तीयसूक्तस्य, उदकशब्दः उदपात्रस्य च बोधकः

पूर्वं त्रिषप्तीयम् ॥
उदकचोदनायामुदपात्रं प्रतीयात् ॥

यथा पिञ्जूलीभिराप्लावयति घटं वा कांस्यपात्रं वा । दाकेटी.

(१) कौसू. ६।३४.
(२) कौसू. ७।१-२९.

वानस्पत्यसंभाराहरणम्

पुरस्तादुत्तरतः संभारमाहरति ॥
गोरनभिप्रापाद्वनस्पतीनाम् ॥

दूरादेशात् वृक्षसंभारा आहर्तव्याः । दाकेटी.

सूर्योदयतः ॥

कर्मणामौत्सर्गिको देशः, ततो ग्रामोपावर्तनविधिश्च

पुरस्तादुत्तरतोऽरण्ये कर्मणां प्रयोगः ॥

नित्यनैमित्तिककाम्यानां कर्मणां प्रयोगः । अरण्यं शान्तिकल्पे उक्तम्– यत्र ग्रामशब्दो न श्रूयते तत्रारण्यम् । दाकेटी.

उत्तरत उदकान्ते प्रयुज्य कर्माण्यपां सूक्तैराप्लुत्य प्रदक्षिणमावृत्याप उपस्पृश्यानवेक्षमाणा ग्राममुदाव्रजन्ति ॥

सर्वहोमकर्म समाप्यते ततोऽवभृथं कुर्यात् । सर्वत्र पुंसवनादिषु संस्कारेषु गृहे प्रयोगः, नावभृथ इति रुद्रभाष्यमतम् । दाकेटी.

संपातवतां परिगणनम्

आश्यबन्ध्याप्लवनयानभक्ष्याणि संपातवन्ति ॥

आश्यादिषु सर्वत्र संपाताभिमन्त्रणं भवति । दाकेटी.

अभिमन्त्रणम्

सर्वाण्यभिमन्त्र्याणि ॥

सर्वे पदार्था अभिमन्त्र्य कर्तव्याः । दाकेटी.

स्त्रीव्याधितयोः स्नानकल्पः

स्त्री व्याधितो वा प्लुतावसि(?श)क्तौ शिरस्तः प्रक्रम्या प्रपदात्प्रमार्ष्टि ॥

मन्थौदनदानस्य प्रपादनपूर्वकत्वम्

पूर्वं प्रपाद्य प्रयच्छति ॥

तं पुरुषमग्रे कृत्वा गृहे प्रवेश्य ततः 'मन्थौदनौ प्रयच्छति' (कौसू. ७।७) । यथा 'उतामृतासुः शिवास्त इत्यभ्याख्याताय प्रयच्छति' (कौसू. ४६।१) मन्त्रेण । दाकेटी.

वासितबन्धनविधिः

**त्रयोदश्यादयस्तिस्रो दधिमधूनि वासयित्वा बध्नाति ॥**

यत्र वासितं बध्नाति तत्र सर्वत्र त्रयोदश्यादि भवति। यथा 'युग्मकृष्णलं वासितं बध्नाति' (कौसू. ११।१९, ५२।२०)। दाकेटी.

**आशयति ॥**

मणिं बद्ध्वा तद्दधिमधु आशयति। दाकेटी.

अभिमन्त्रणहोमयोरन्वारम्भः

**अन्वारब्धायामभिमन्त्रणहोमाः ॥**

अन्वारब्धे यजमाने च कर्तव्याः। अभिमन्त्रणं यजमान उत्तरतो भूत्वा दर्भैरन्वारभते। दाकेटी.

अग्नेः पश्चात् चर्मणि हविःसंस्कारः

**पश्चादग्नेश्चर्मणि हविषां संस्कारः ॥**

आनडुहशकृत्पिण्डस्य जीवघात्यचर्मणः अकर्णाश्मनश्च कर्माङ्गता

**आनडुहः शकृत्पिण्डः ॥**

**जीवघात्यं चर्म ॥**

समर्थवृषभचर्म। दाकेटी.

**अकर्णोऽश्मा ॥**

आप्लवनावसेचनयोराचमननियमः

**आप्लवनावसेचनानामाचामयति च ॥**

यत्र आप्लवनमवसेचनं च तत्र आचमनं च भवति। दाकेटी.

संपातस्य अशनमञ्जनं वा

**संपातवतामश्नाति न्यङ्क्ते वा ॥**

धूमनियमनम्

**अभ्याधेयानां धूमं नियच्छति ॥**

समित्पुरोडाशचरुव्रीहियवतिलादीनि अभ्याधेयानि। यजमानं धूमं भक्षयति। दाकेटी.

कर्तृशौचस्य कर्माङ्गता

**शुचिना कर्मप्रयोगः ॥**

कर्मसमाप्तौ शुचिना कर्मप्रयोगः। नित्यनैमित्तिककाम्यानि कर्माणि स्नानं कृत्वा प्रयुञ्जीत। दाकेटी.

निशाकर्मसु साधारणविधिः

**[1]पुरस्ताद्धोमवत्सु निशाकर्मसु पूर्वाह्णे यज्ञोपवीती शालानिवेशनं समूहयत्युपवत्स्यद्भक्तमशित्वा स्नातोऽहतवसनः प्रयुङ्क्ते ॥**

सर्वकर्मार्थी परिभाषा। अथ निशाकर्मपरिभाषा उच्यन्ते। येषु निशाकर्मसु तन्त्रं तेषु अयं धर्मः। केचित् स्नातोऽहतवसनः प्रयुङ्क्ते इति सर्वार्थी परिभाषां मन्यन्ते। दाकेटी.

स्वस्त्ययनेषु साधारणविधिः

**स्वस्त्ययनेषु च ॥**

**इज्यानां दिश्यान् बलीन् हरति ॥**

**प्रतिदिशमुपतिष्ठते ॥**

अथ स्वस्त्ययनपरिभाषा उच्यन्ते। स्वस्त्ययनेषु चेज्यानो(? नां) दिश्यान् बलीन् हरति, प्रतिदिशमुपतिष्ठते। 'येऽस्यां स्थ' इति सूक्तेन प्रतिदिशं प्रत्यृचं बलिहरणं करोति। प्राची दिगिति प्रतिदिशमुपतिष्ठते। यथा 'उत्तमेन सारूपवत्सस्य रुद्राय त्रिर्जुहोति' (कौसू. ५०।१४)। तत्र हविरुच्छिष्टेन बलिहरणं कुर्यात्। समाप्ता स्वस्त्ययनपरिभाषा। दाकेटी.

अधिकरणं कर्तुर्दक्षिणा

**सर्वत्राधिकरणं कर्तुर्दक्षिणा ॥**

पुनः सर्वार्थीः परिभाषा उच्यन्ते। सर्वत्राधिकरणं कर्तुर्दक्षिणा। हविरुच्छिष्टमाज्यधानी उदपात्रं चर्मण्डपदर्भसमिधः शान्त्युदकभाजनं स्रुक्स्रुवादीनि देयानि। नित्येषु नाधिकरणमस्ति, परद्रव्येषु नाधिकरणमस्ति, यथा 'नापितस्य क्षुरम्'। दाकेटी.

उदकक्रियायाः त्रिरावृत्तिः

**त्रिरुदकक्रिया ॥**

प्रोक्षणाचमनपर्युक्षणादि त्रिः कर्तव्यम्। दाकेटी.

अनन्तरपठितसूक्तानां संहत्य प्रयोगः

**अनन्तराणि समानानि युक्तानि ॥**

---

(१) कौसू. ८।१-२५.

शान्तसंभारस्यौत्सर्गिकत्वम्

**शान्तं संभारम् ॥**

सर्वत्र शान्तिकेषु शान्तं संभारं दर्भसमिधादि । अभिचारे रौद्रमाङ्गिरसं संभारम् । दाकेटी.

अधिकृतस्य उत्तरत्र संबन्धः

**अधिकृतस्य सर्वम् ॥**

स्रुक्स्रुवसमिधः काष्ठादि मणिद्रव्यकाष्ठाः कर्तव्यानि । प्रतीकं च द्रव्यं च । यथा 'कथं मह इति मादानकशृतं क्षीरौदनमश्नाति, चमसे सरूपवत्साया दुग्धे' (कौसू. १२।१,२) चमसोऽपि मादानक एव । 'कथं महे' इति उत्तरमपि अनेन सूक्तेन कर्म कुर्यात् । दाकेटी.

संनिकृष्टासंनिकृष्टयोः संनिकृष्टे कार्यसंप्रत्ययः

**विषये( ? विशये ) यथान्तरम् ॥**

विषये( ? विशये ) यथान्तरं मन्त्रद्रव्यसंशये संनिधानं ग्रहीतव्यम्, यथा लोमानि हस्तिरोमाणि । यथा 'विद्मा शरस्येति प्रमेहणं बध्नाति' (कौसू. २५।१०)। दाकेटी.

दर्भलवित्रदानमन्त्रः

**'प्रयच्छ पर्शुम्' इति दर्भलवनं प्रयच्छति ॥**

सामान्यस्तक्षणमन्त्रः

**'अरातीयोः' इति तक्षति ॥**

उलूखलमुसलकाष्ठम्, अन्यार्थम् इन्धनार्थं काष्ठतक्षणं करोति । दाकेटी.

सामान्यः प्रक्षालनमन्त्रः

**'यत्त्वा शिक्वः' इति प्रक्षालयति ॥**

उलूखलमुसलप्रक्षालनमन्त्रः

**'यद्यत्कृष्णः' इति मन्त्रोक्तम् ॥**

शान्तवृक्षौषधिपरिगणनम्

**पलाशोदुम्बरजम्बुकाम्पीलस्रग्वङ्घशिरीषस्रक्त्यवरणबिल्वजङ्गिडकुटकगर्ह्यगलावलवेतसशिम्बलसिपुनस्यन्दनारणिकाश्मयोक्ततुन्युपूतदारवः शान्ताः ॥**

अथ शान्तवृक्षा उच्यन्ते— स्रक् मालवके प्रसिद्धः । बन्धः कान्यकुब्जे प्रसिद्धः । शिरीषः भोजपुरे वाटिकायां प्रसिद्धः । स्रक्त्यस्तिलकः प्रसिद्धः । वरणः वरुणकः इति आनन्दपुरे प्रसिद्धः । जङ्गिडः वारणस्यां प्रसिद्धः । कुडकः मालवके । गर्ह्यः हिमवति । गलावलः तत्रैव प्रसिद्धः । स्यन्दनः हिमवति नर्मदायां प्रसिद्धः । अरणिका नर्मदातटे प्रसिद्धः । अश्मयोक्तः अश्मन्तकः भृगुकच्छे प्रसिद्धः । तुन्युः तैन्दुका । पूतदारुः देवदारुः वैद्यके प्रसिद्धः । समाप्ताः शान्तवृक्षाः । दाकेटी.

**चितिप्रायश्चित्तिशमीशमकासवंशाशाम्यवाकातलाशापलाशवाशाशिंशपाशिम्बलसिपुनदर्भापामार्गाकृतिलोष्टवल्मीकवपादूर्वाप्रान्तव्रीहियवाः शान्ताः ॥**

अथ शान्त्यौषधय उच्यन्ते— चितिः प्रसिद्धा । प्रायश्चित्तिः पर्वणि पर्वणि तस्याः त्रीणि त्रीणि पात्राणि भवन्ति । शमका आनन्दपुरे विश्वामित्रीवाप्याः समीपे अस्ति । सवंशा घर्मोलिका । शाम्यवाका काकजङ्घासदृशा । तलाशा वेतसी । वात्सकः आटरूषकः । सीसपात्रं प्रसिद्धम् । शाल्मलीः प्रसिद्धः । सिपुना अङ्करी । आकृतिलोष्टः क्षेत्रमृत्तिका वल्मीकमृत्तिका । एताः सर्वाः शान्ता ओषधयः शान्त्युदकादौ प्रयोक्तव्याः, एतासां समुच्चयः । एतासामलाभे यवप्रतिनिधिः कार्यः इति पैठीनसिः । शान्त्यौषधिकल्पः समाप्तः । दाकेटी.

परिगणितौषधीनां जीर्णत्वं कर्माङ्गम्

**प्रमन्दोशीरशल्ल्युपधानशकधूमा जरन्तः ॥**

उपधानं विद्यागन्धुकम् । शकधूमः ब्राह्मणः । एताः जरन्तः जीर्णा ग्राह्याः । दाकेटी.

चतुर्विधसीसानि

**सीसनदीसीसे अयोरजांसि कृकलासशिरः सीसानि ॥**

यत्र सीसानि तत्र एतानि सर्वाणि प्रत्येतव्यानि । नदीसीसं नदीफेनम् । दाकेटी.

चतुर्विधरसाः

**दधि घृतं मधूदकमिति रसाः ॥**

रसकर्मणि एते रसाः प्रत्येतव्याः समुच्चयेन ।

दाकेटी.

मिश्रधान्यानि

**व्रीहियवगोधूमोपवाकतिलप्रियङ्गुश्यामाका इति मिश्रधान्यानि ॥**

उपवाकः इन्द्रयवः । प्रियङ्गुः कङ्गुणिका ।

दाकेटी.

प्रतीकात् प्रतीकं यावदेकमन्त्रता

**ग्रहणमा ग्रहणात् ॥**

ग्रहणं प्रतीकग्रहणं ग्रहणमनुग्रहणं तावदनुवर्तते यावत् प्रतीकग्रहणं द्वितीयम् । दाकेटी.

अनुषङ्गस्य यथार्थत्वम्

**यथार्थमुदर्कान् योजयेत् ॥**

अनुषङ्गः यथार्थं सर्वत्र कर्तव्यः । यथा 'विद्मा शरस्य पितरं पर्जन्यं शतवृष्ण्यम्' इति वैदिकं लौकिकमिति भवति 'कृतयामं कङ्कतमवसृजामि' इति अनुषङ्गः पुनरुक्तमित्यर्थः । दाकेटी.

वास्तोष्पतीयसंज्ञकमन्त्राः

**'इहैव ध्रुवाम्' 'एह यातु' 'यमो मृत्युः' 'सत्यं बृहत्' इत्यनुवाको वास्तोष्पतीयानि ॥**

मातृनामसंज्ञकमन्त्राः

**'दिव्यो गन्धर्वः' 'इमं मे अग्ने' यौ ते माता' इति मातृनामानि ॥**

चातनसंज्ञकमन्त्राः

**'स्तुवानम्' 'इदं हविः' निःसालाम्' 'अरायक्षयणम्' 'शं नो देवी' 'पृश्निपर्णी' 'आ पश्यति' 'तान् सत्यौजाः' 'त्वया पूर्वम्' 'पुरस्ताद्युक्तः' 'रक्षोहणम्' इत्यनुवाकश्चातनानि ॥**

शान्त्युदकसूक्तानि शान्त्युदकविधिश्च

**[१] 'अम्बयो यन्ति' 'शंभुमयो भू' 'हिरण्यवर्णाः' 'निःसालाम्' 'ये अग्नयः' 'ब्रह्म जज्ञानम्' इत्येका तदेव मृगारसूक्तानि ॥**

'ये अग्नयः' इति सप्त 'ब्रह्म जज्ञानम्' इत्येका । 'अग्नेर्मन्वे' इति सप्त मृगारसूक्तानि ग्रहीतव्यानि ।

दाकेटी.

**उत्तमं वर्जयित्वा 'अप नः शोशुचदघम्' 'पुनन्तु मा' 'सस्रुषीः' 'हिमवतः प्रस्रवन्ति' 'वायोः पूतः पवित्रेण' 'शं च नो मयश्च नः' 'अनडुद्भ्यस्त्वं प्रथमम्' 'मह्यमापः' 'वैश्वानरो रश्मिभिः' 'यमो मृत्युः' 'विश्वजित्' 'संज्ञानं नः' 'यद्यन्तरिक्षे' 'पुनर्मैत्विन्द्रियम्' 'शिवा नः' 'शं नो वातो वातु' 'अग्निं ब्रूमो वनस्पतीन्' इति ॥**

प्रथमे द्वे उत्तमं वर्जयित्वा 'शं च नो मयश्च नः' इत्येका, 'पुनर्मैत्विन्द्रियम्' इत्येका, 'शिवा नः' इत्येका, 'शं नो वातो वातु' इत्येका, शेषाणि सूक्तानि । अनेन शान्तिगणेन शान्त्युदकं कुर्यात् । दाकेटी.

**'पृथिव्यै श्रोत्राय' इति त्रिः प्रत्यासिञ्चति ॥**

यत्र शान्त्युदकं क्रियते तत्र 'पृथिव्यै श्रोत्राय' इति त्रिभिर्ऋग्भिः शान्त्युदकं शान्त्युदकमध्ये प्रक्षिपेत् । अनेनैव कारयिता प्रोक्षणाचमनादीनि प्रत्यृचं करोति ।

दाकेटी.

**'अम्बयो यन्ति' 'शंभुमयो भू' 'हिरण्यवर्णाः' 'शंतातीयम्' 'शिवा नः' 'शं नो वातो वातु' 'अग्निं ब्रूमो वनस्पतीन्' इति ॥**

एष शान्तातीयो गणः । यत्र शान्तातीयेन प्रयोजनं तत्रायं सर्वत्र प्रयोक्तव्य इति । यथा 'शान्तातीयेन तिलान् जुहोति' । दाकेटी.

---

(१) कौसू. ९।१-११.

'पृथिव्यै श्रोत्राय' इति त्रिः प्रत्यासिञ्चति ॥
इति शान्तियु( ? सू )क्तानि ॥

शान्तिसूक्तानि । इह शान्त्युदके सर्वेषां सूक्तानां समुच्चयः । अन्यत्र सर्वत्र यथोक्तेन न्यायेन विकल्पः न सूक्तविकल्पः । दाकेटी.

उभयतः सावित्र्युभयतः शं नो देवी ॥

उभयतः शान्तिगणस्य प्रारम्भे समाप्तौ च । दाकेटी.

अहतवासाः कंसे शान्त्युदकं करोति ॥

अथ शान्त्युदकविधानमुच्यते— अहतवासा इति । दाकेटी.

'अतिसृष्टो अपां वृषभः' इत्यपोऽतिसृज्य 'सर्वा इमा आप ओषधयः' इति पृष्ट्वा सर्वा इत्याख्यातः 'ओं बृहस्पतिप्रसूतः करवाणि' इत्यनुज्ञाप्य 'ओं सवितृप्रसूतः भवान्' इत्यनुज्ञातः कुर्वीत ॥

अवकरं विसर्जयति । अनुज्ञातः शान्त्युदकं करोति 'शं नो देवी' इत्यृचा सावित्री च 'अम्बयो यन्ति' गणेन च शान्त्युदकं करोति लघुगणेन बृहद्गणेन वा चतुर्गणैर्वा । सावित्री शं नो देवी । ततः 'पृथिव्यै श्रोत्राय' इति त्रिः प्रत्यासिञ्चति शान्त्युदके शान्त्युदकं प्रक्षिपति । दाकेटी.

पूर्वया कुर्वीतेति गार्ग्यपार्थश्रवसभागलिकाङ्कायनोपरिबभ्रवकौशिकजाटिकायनकौरुपथयः ॥

एते चतुर्गणेन बृहद्गणेनैकेन वा शान्त्युदकं कुर्वन्ति। दाकेटी.

अन्यतरया कुर्वीतेति युवा कौशिको युवा कौशिकः ॥

## वैखानसगृह्यसूत्रम्

हस्तस्थिततीर्थानि तत्साध्यकर्माणि च, यज्ञोपवीत्यादिलक्षणानि

[1]दक्षिणपाणेर्मध्यतलमाग्नेयं तीर्थम्, कनिष्ठाङ्गुलिमूलं दैवम्, सर्वाङ्गुलिमूलाग्रमार्षम्, प्रदेशिन्यङ्गुष्ठयोर्मध्यं पैतृकम्, अङ्गुष्ठस्य मूलं ब्राह्मम् । दैवेन तीर्थेनोपवीती दैविकं कार्यमार्षेणार्षं पैतृकेण पित्र्यम् । सर्वं ब्राह्मेण ब्रह्मतर्पणमाचमनमाग्नेयेन तीर्थेनाभ्युक्षणं करोति । दक्षिणहस्तमुद्धृत्योपवीतं धारयेदुपवीती, वाममुद्धृत्य प्राचीनावीती, कण्ठसक्ते निवीती भवति ॥

स्थण्डिल—परिस्तरण—परिधि—प्रोक्षणकूर्च—पवित्र—समिधां मानानि

अथाग्न्यायतनम् । प्राक्प्रवणे वोत्तरप्रवणे वा शुद्धे देशे गोमयेनोपलिप्ते शुद्धाभिः सिकताभिः प्राक्पश्चिमं दक्षिणोत्तरं च द्वात्रिंशदङ्गुल्यायतं द्व्यङ्गुलोन्नतं यथालाभोन्नतं वा स्थण्डिलमग्न्यायतनं भवति । परिस्तरणबर्हिषः प्रतिदिक् पञ्चदश स्थण्डिलप्रमाणाः । कुण्डे षट्त्रिंशदङ्गुलास्तथैकाङ्गुलिपरिणाहा व्रणवक्रहीनाः परिधयः । पञ्चदशदर्भैर्ग्रथितं चतुरङ्गुलाग्रं द्व्यङ्गुलग्रन्थि हस्तमात्रं प्रोक्षणकूर्चम् । तथैव द्वादशाङ्गुलमात्रं पवित्रम् । तत्प्रमाणा याज्ञिकाः समिधः । पात्रस्रुवादयो यज्ञे प्रोक्ताः ॥

दैव—पित्र्यकर्मसु संभारस्थानभेदः

दर्भेषु द्वन्द्वं पात्रादिसंभारानुत्तरे दैविके प्रत्येकं दक्षिणतः पैतृके संभरति ॥

(१) वैगृ. १।५, ८.

दैविक-पैतृककर्मधर्माः

[1]सर्वं युग्मं प्राच्यामुदीच्यां वाऽग्रमन्तं च दैविके करोति। सर्वमयुग्मं दक्षिणस्यां पश्चिमस्यां वाऽग्रमन्तं च पैतृके करोति ॥

विशेषानुक्तौ होमसाधनहविर्मन्त्रप्रायश्चित्तविधयः

विशेषेऽनुक्ते स्रुवेण होतव्यम्, आज्यं हविः, व्याहृतिर्मन्त्रम्(? न्त्रः)। प्रायश्चित्तेऽनुक्ते वैष्णवं प्रायश्चित्तम् ॥

## परिशिष्टम्

दर्भादेरयातयामता पुनरुपयोगश्च

[2]दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणा हविरग्नयः।
अयातयामान्येतानि नियोज्यानि पुनः पुनः ॥

(१) अयातयामं नवम्। एतेन कर्मार्हता लक्ष्यते। ब्रक. ६६

(२) हविः ओदनादिव्यतिरिक्तमाचारात्। अयातयामानि अपरिभुक्तानि। कृतकर्माण्यपि कर्मान्तरार्हाणीति तात्पर्यम्। कुर. ६६

दर्भाणां पुनरुपयोगापवादः

[3]ये च पिण्डास्तृता दर्भा यैः कृतं पितृतर्पणम्।
अमेध्याशुचिलिप्ता ये तेषां त्यागो विधीयते ॥

(१) वैगृ. ६।१.

(२) ब्रक. ६६ गृह्यपरिशिष्टे कात्यायनः; चदा. १०६; कुर. ६६; निप्र. ३४. चदादिषु सर्वेषु गृह्यपरिशिष्टे.

(३) ब्रक. ६६ लिप्ता (निष्ठा) क्रमेण गृह्यपरिशिष्टे कात्यायनः; कुर. ६७ पिण्डास्तृता (पिण्डे स्तृता) उत्तरार्धे (अमेध्यलिप्ता ये तेषां परित्यागो विधीयते॥) मरीचिः; निप्र. ३४ ये च (ये तु); पप्र. १०२ पिण्डास्तृता (पिण्डाश्रिता). कुरादिषु सर्वेषु गृह्यपरिशिष्टे.

पृषदाज्यसंज्ञा आमिक्षासंज्ञा च

[1]पृषदाज्यमिति प्रोक्तं दधि सर्पिरिति द्वयम्।
क्षीरे शृतोष्णे दधियुज्यामिक्षेति द्विसंभवात् ॥

अत्र पय एव प्रधानं दधि तु संस्कारकमित्याहुः। पप्र. ११३

यज्ञोपवीतादिलक्षणानि तेषां कर्मभेदेन विनियोगश्च

[2]वामस्कन्धे यज्ञोपवीतं दैवे, प्राचीनावीतमितरथा पितृयज्ञे, नाभ्यां द्विकण्ठावसक्तमभिचारे, निवीतमापृष्ठदेशावलम्बि ग्राम्यधर्मेषु ॥

(१) इतरथा वामेतरस्कन्धे। द्विकण्ठावसक्तं कण्ठपार्श्वद्वयावलम्बितम्। ब्रक. ६१

(२) ग्राम्यधर्मः स्त्रीसंभोगः। चव्र. ३९

(३) कण्ठपदं लक्षणया स्कन्धपरम्, द्विस्कन्धावसक्तमित्यर्थः। ग्राम्यधर्मः मैथुनम्। † गप. ८८

(४) दैवे पितृमनुष्याद्यतिरिक्ते कर्मणि। ¶ पप्र. ९०

(५) ग्राम्यधर्मः मैथुनम्। बहुवचनान्मूत्रपुरीषादेर्ग्रहणम्। ¶ संप्र. ४२३

† निप्र. गपवत्।

¶ शेषं ब्रकवत्।

(१) चव्र. ४३ उत्तरार्धे (क्षीरे शृतोष्णे दधिषु चाऽऽमिक्षेति द्विसंभवा॥); पप्र. ११३. उभयोरपि गृह्यपरिशिष्टे.

(२) ब्रक. ६१ यज्ञोपवीतं (यज्ञोपवीती) कण्ठावसक्त (कण्ठासक्त); चव्र. ३९ कण्ठावसक्तमभिचारे (कण्ठासक्तमुत्सर्गे) आपृष्ठदेशावलम्बि (पृष्ठदेशावलम्बितम्); चदा. १०८ कण्ठावसक्तमभिचारे (कण्ठासक्तमुत्सर्गे). आपृष्ठ (पृष्ठ); गप. ८८ नावीतम् (नावीतीति) वलम्बि (वलम्बं); निप्र. ३२ पितृयज्ञे (पितृपक्षे) वलम्बि (वलम्बं); वीमि. १।२९ पृ. ८६ (द्विकण्ठावसक्त... धर्मेषु०): पृ. ८७ (द्विकण्ठावसक्तं) एतावदेव; पप्र. ९०; संप्र. ४२३; संग. ६६९ (नाभ्यां..., धर्मेषु०). संप्रवर्जं सर्वेषु निगमपरिशिष्टे.

प्रोक्षणादौ हस्तमुद्राभेदः मुद्राहीनप्रोक्षणे दोषश्च

[1]उत्तानेन तु हस्तेन प्रोक्षणं समुदाहृतम् ।
तिरश्चावोक्षणं प्रोक्तं नीचेनाभ्युक्षणं स्मृतम् ॥
[2]प्रोक्ष्य( ? प्रोक्ष )मुद्राविहीनस्तु प्रोक्षणं कुरुते यदि ।
तत्तोयं रुधिरं ज्ञेयं तत्पात्रमशुचि भवेत् ॥

परसूत्रपरिग्रहनिषेधः

[3]स्वसूत्रं यः परित्यज्य परसूत्रेण वर्तते ।
अप्रमाणमृषिं कृत्वा सोऽप्यधर्मेण युज्यते ॥

## ऋग्वेदसर्वानुक्रमणी

ऋष्यादिज्ञानस्य कर्माङ्गत्वम्

[4]अथ ऋग्वेदाम्नाये शाकलके सूक्तप्रतीकऋक्संख्यऋषिदैवतच्छन्दांस्यनुक्रमिष्यामो यथोपदेशम् । न ह्येतज्ज्ञानमृते श्रौतस्मार्तकर्मप्रसिद्धिः । मन्त्राणां ब्राह्मणार्षेयच्छन्दोदैवतविद् याजनाध्यापनाभ्यां श्रेयोऽधिगच्छतीति । एताभ्यामेवानेवंविदो यातयामानि च्छदांसि भवन्ति । स्थाणुं वर्च्छति, गर्तं वा पात्यते, प्रमीयते वा, पापीयान्भवतीति विज्ञायते ॥

( १ ) अयमेव‡ ऋष्यादिस्मरणक्रमः । यत्तु सर्वानुक्रमे 'ऋषिदैवतच्छन्दांस्यनुक्रमिष्यामः ...' इति, तदृग्वेदिपरम्, 'अथ ऋग्वेदाम्नाये शाकलके' इत्युपक्रमात् ।

आर. ४

‡ ब्राह्मणम्, विनियोगः, छन्दः, आर्षम्, दैवतमित्येवंरूपः ।

( १ ) संग. २८ ; संदी. २६.

( २ ) संग. २८.

( ३ ) गोरा. २।१६५.

( ४ ) सर्वानुक्रमणी. परिभाषा १ ; पप्र. ८८ शाकलके ( शाकले ) गच्छतीति । एताभ्यामेवा ( गच्छत्य ) प्रमीयते वा ( प्रमीयते ); आर. ४ ( अथ ऋग्वेदाम्नाये शाकलके ऋषिदैवतच्छन्दांस्यनुक्रमिष्यामः । न ह्येतज्ज्ञानमृते श्रौतस्मार्तकर्मप्रसिद्धिः ) एतावदेव ; इन्दु. ११ ( अथ ऋग्वेदा ... प्रसिद्धि : ) एतावदेव.

( २ ) सर्वं कर्म ऋष्यादि ज्ञात्वैव कार्यम् । तदुक्तं सर्वानुक्रमणिकायाम्— 'अथ ऋग्वेदाम्नाये...' इति । ऋष्यादिज्ञानाशक्तौ केवलदेवतास्मरणमेव कार्यम्, 'देवतास्मरणमेव वा कुर्यात्' इति परिशिष्टोक्तेः ।

इन्दु. ११

## यजुर्वेदसर्वानुक्रमणी

ऋष्यादिज्ञानस्य कर्माङ्गत्वम्

ऋषिदैवतच्छन्दांस्यनुक्रमिष्यामः ॥

[1]एतान्यविदित्वा योऽधीतेऽनुब्रूते जपति जुहोति यजते याजयति वा तस्य ब्रह्म निर्वीर्यं यातयामं भवति । तथाऽन्तरा श्वगर्तं वा पद्यते, स्थाणुं वर्च्छति, प्रमीयते, पापीयान् भवति । अथ विज्ञायैतानि योऽधीते तस्य वीर्यवत् । अथ योऽर्थवित्तस्य वीर्यवत्तरं भवति । जपित्वा हुत्वेष्ट्वा तत्फलेन युज्यते ॥

( १ ) ऋष्यादिस्मरणमत्रेति रेणुकगङ्गाधरहरिहराः । तद्विचारणीयम्— कर्मकाले प्रतिमन्त्रं स्मरणम्, उत पूर्वमेव स्मरणं कृत्वा कर्मारम्भः । 'एतान्यविदित्वा ...' इति सर्वानुक्रमण्यामुक्तत्वात्तत्तत्पदार्थज्ञानमात्रमपेक्षितम्, न तु कर्मकालोच्चारणम्, यथा अर्थज्ञानम् ।

† गभा. ३५

( २ ) शिष्यमनु लक्ष्यीकृत्य ब्रूते अध्यापयतीत्यर्थः । ब्रह्म वेदः । निर्वीर्यं स्वकार्यसाधने शक्तिरहितम् । यातयामं जीर्णम् । सत्येतेषां ज्ञाने अध्ययने फलमप्याह— अथेत्यादिना । अधीते इत्यध्ययनं पाठमात्रम्, न त्वर्थज्ञानमपि, अर्थज्ञाने वीर्यवत्तरत्वस्यानुपदं वक्ष्यमाणत्वात् । सत्येवमध्ययने जपादिषु संपूर्णफलावाप्तिर्भवतीत्याह— जपित्वेत्यादिना । अत्र अविदित्वेति स्वरसादेतेषां तत्तत्प्रयोगात्पूर्वं ज्ञानमात्रं शास्त्रार्थः, न तु

† संग. गभावत् ।

( १ ) गभा. ३५ ( एतान्यविदित्वा योऽधीतेऽनुब्रूते यजते याजयते तस्य ब्रह्म निर्वीर्यं यातयामं भवति ) एतावदेव ; पप्र. ८८, ८९ ; संग. ७२ ( एतान्यविदित्वा ... यातयामं भवति ) एतावदेव, याजयति वा (याजयते).

तत्प्रतिपादकशब्दोच्चारणम्, मानाभावात्। प्रत्युत तत्पाठे न्यायप्राप्तानन्तर्यबाधात्कर्मवैगुण्यम्। अत्र सामब्राह्मणे योगियाज्ञवल्क्यवाक्ये च दैवतमन्ते उक्तम्। ऋग्वेदानुक्रमणीये तु 'ऋषिदैवतच्छन्दांस्यनुक्रमिष्यामः' इत्यत्र दैवतं मध्ये उक्त्वा तदनु च 'मन्त्राणां ब्राह्मणार्षेयच्छन्दोदैवतवित्' इत्यत्र दैवतमन्ते उक्तम्। एवं यजुर्वेदानुक्रमणिकायां छन्दः अन्ते उक्तम्। तस्मादत्र क्रमो न विवक्षितः, न वा समूहालम्बनेऽपि ज्ञाने संभवति क्रमोऽपेक्षितः। यत्र हि क्रमोऽपेक्षितस्तत्रैव पाठादिक्रमस्तन्नियामक इति। ऋषिदैवतच्छन्दसां त्रयाणां ज्ञानं श्रौतस्मार्तकर्ममात्राङ्गम्, न ह्येतज्ज्ञानमृते श्रौतस्मार्तकर्मप्रसिद्धिरिति, ऋग्वेदानुक्रमणीयवाक्यात्।

पप्र. ८८–८९

## गौतमः

धर्मे अस्वातन्त्र्यं स्त्रियाः

[1]**अस्वतन्त्रा धर्मे स्त्री ॥**

(१) अस्वतन्त्रा पराधीना, धर्मे पारलौकिके। भर्त्रा सहास्या धर्माधिकारः, न तु पुरुषवत् स्वातन्त्र्येण। तथाऽऽह मनुः– 'नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषितम्। पतिं शुश्रूषते येन तेन स्वर्गे महीयते ॥' (मस्मृ. ९।१८) इति। शङ्खेनाप्युक्तम्– 'न च व्रतोपवासनियमेज्यादानधर्मो वाऽनुग्रहकरः स्त्रीणामन्यत्र पतिशुश्रूषायाः। कामं तु भर्तुरनुज्ञया व्रतोपवासनियमादीनामभ्यासः स्त्रीधर्मः' इति। ननु च श्रौतस्मार्तानां पुरुषोद्देशेन विहितत्वात् स्वातन्त्र्येण स्त्रियाः प्राप्त्यभावात् प्रतिषेधानुपपत्तिः। अथोच्येत– अस्वातन्त्र्यवचनं सहधर्मक्रियायां स्त्रिया अपि फलमस्तीत्येवमर्थमिति, तदयुक्तम्, सहधर्मचारिणीत्वादेवास्यार्थस्य लब्धत्वात्। तथा अस्वतन्त्रेति न ज्ञायते किंतन्त्रयाऽनया भवितव्यमिति। भर्त्रधीनयेति चेन्न, उपरिष्टात् 'नातिचरेद्भर्तारम्' इत्यनेन भर्तृपरतन्त्रत्वस्य वक्ष्यमाणत्वात्। तेनाव्यभिचारो वक्ष्यते इति चेत्, न, (च ?) अतिचारस्य धर्मार्थकामविषयस्य प्रतिषिद्धत्वादिति। तत्रोच्यते– उपवासदानादेर्धर्मसाधनस्य भर्तुरनुज्ञायां सत्यां स्त्रियाः प्रापणार्थोऽयमारम्भः, आश्रमधर्मस्य भर्तृद्वारेण प्राप्तत्वात्। तथा च शङ्खवचनं यद्दर्शितम् 'कामं तु भर्तुरनुज्ञया' इत्यादि।

यत्तूक्तं किंतन्त्रया भवितव्यमिति, तत्रापि भर्तृपुत्रपित्रधीनया यथाकालम्। तथाऽऽह मनुः– 'बाल्ये पितुर्वशे तिष्ठेत्पाणिग्राहस्य यौवने। पुत्रस्य स्थविरीभावे न स्त्री स्वातन्त्र्यमर्हति ॥' (मस्मृ. ५।१४८) इति। तथा च तत्रैवापरमपि– 'बालया वा युवत्या वा स्थविर्या वाऽपि योषिता। न स्वातन्त्र्येण कर्तव्यं कार्यं किंचिद्गृहेष्वपि ॥' (मस्मृ. ५।१४७) इति।

मभा.

(२) श्रौते गार्ह्ये च धर्मे स्त्री भर्तुरेवानुष्ठानमनुप्रविशति। व्रतोपवासादिभिरपि स्मार्तैः पौराणैश्च धर्मैर्नान्तरेण भर्तुरनुज्ञां स्वातन्त्र्येणाधिक्रियते। आह शङ्खः– 'न च व्रतोपवासैर्नियमेज्यादानधर्मो वाऽनुग्रहकरणं स्त्रीणामन्यत्र पतिशुश्रूषायाः। कर्म( ? कामं ) तु भर्तुरनुज्ञया व्रतोपवासनियमादीनामभ्यासः स्त्रीधर्मः' इति। नारदोऽप्याह– 'स्त्रीकृतान्यप्रमाणानि कार्याण्याहुरनापदि। विशेषतो गृहक्षेत्रदानाध्ययन( ? नाधिमन )विक्रयात्( ? यान् ) ॥ एतान्येव प्रमाणानि भर्ता यद्यनुमन्यते ॥' इति। मनुस्तु– 'बाल्ये पितुर्वशे तिष्ठेत्पाणिग्राहस्य यौवने। पुत्रस्य स्थविरीभावे न स्त्री स्वातन्त्र्यमर्हति ॥ बालया वा युवत्या वा वृद्धया वाऽपि योषिता। न स्वातन्त्र्येण कर्तव्यं कार्यं किंचिद्गृहेष्वपि ॥' इति।

गौमि.

दानस्योदकपूर्वकता

[1]**ददातिषु चैवं धर्म्येषु ॥**

(१) ददातिशब्देन हिरण्यादिदानमुच्यते। धर्म्यग्रहणान्न दृष्टार्थं मित्रादिभ्यो दानम्। एवमेव उदकपूर्वं दद्यात्।

मभा.

---

(१) गौध. १८।१.

(२) गौध. ५।२० ; गौमि. ५।१७.

(२) ददातयः दानानि । यानि दानानि धर्म्याणि, न भयादिनिमित्तानि, तेषु चैवमप्पूर्वदानमिति ।
गौमि.

उदङ्मुखताव्यवस्था

[1]रात्रावुदङ्मुखः कुर्याद्दैवं कार्यं सदैव हि ।
शिवार्चनं सदाऽप्येवं शुचिः कुर्यादुदङ्मुखः ॥
सदा दिवा रात्रौ च । ¶ आम. २

एकवस्त्रतानिषेधः

[2]एकवस्त्रो न भुञ्जीत न कुर्याद्देवतार्चनम् ।
न कुर्यात्पितृकार्याणि दानहोमजपांस्तथा ॥

आसुरीकक्षाबन्धननिषेधः

[3]स्नाने दाने जपे होमे दैवे पित्र्ये च कर्मणि ।
बध्नीयान्नाऽऽसुरीं कक्षां शेषकाले यथारुचि ॥

## हारीतः

हस्तस्थिततीर्थानि तत्साध्यकर्माणि च

[4]अङ्गुष्ठस्योत्तरा रेखा ब्राह्मं तीर्थं कनिष्ठिकायाः पश्चात्प्राजापत्यमग्रेऽङ्गुलीनां दैवमङ्गुष्ठप्रदेशिन्योरन्तरा पित्र्यं मध्य आग्नेयम् ॥

¶ संर. आमवत् ।

(१) आम. २ ; संर. ७१५ दैवं कार्यं (देवकार्यं).

(२) स्मु. ९ ; संग. ६३ (एकवस्त्रो न भुञ्जीत श्रौते स्मार्ते च कर्मणि । न कुर्याद्देवकार्याणि दानं होमं जपं तथा ॥) ; संदी. ५२ (एकवस्त्रो न भुञ्जीत श्रौते(? त)-स्मार्ते च कर्मणी । न कुर्याद्देवकार्याणि दानं होमं जपं तथा ॥).

(३) चदा. ९१ यथारुचि (यथा रुचिः) ; पप्र. ८३; संदी. ७.

(४) ब्रक. ५३ ; चब्र. ३३ स्योत्तरा रेखा ब्राह्मं तीर्थं (स्योत्तरतो रेखा ब्रह्मतीर्थं) अग्रेऽङ्गु (अग्रमङ्गु) ; दीक. १।१९ (अङ्गुष्ठदेशिनोरन्तरा पित्र्यम् । मध्यमाग्नेयम्) एतावदेव ; निप्र. ६४ स्योत्तरा (स्योत्तरे) ; पप्र. ७५ स्योत्तरा (स्योत्तरतो) ; संदी. ४७ (मध्ये आग्नेयम्) एतावदेव.

मध्ये करमध्ये । पप्र. ७५

[1]उपस्पर्शनं ब्राह्मेण, आवपनहोमतर्पणानि प्राजापत्येन कुर्यात् । मार्जनार्चनबलिकर्मभोजनानि दैवेन । पित्रर्थान् पित्र्येण । प्रतिग्रहमाग्नेयेन प्रतिगृह्णीयात् ॥

पवित्रधारणम्

[2]सव्यापसव्यौ कुर्वीत सपवित्र(? त्रौ)करौ बुधः ॥

स्वयमाहृतसमिदादीनां कर्माङ्गता, अन्यथा दोषः

[3]समित्पुष्पकुशादीनि श्रोत्रियः स्वयमाहरेत् ।
शूद्रानीतैः क्रयक्रीतैः कर्म कुर्वन् व्रजत्यधः ॥

अत्र शूद्रानीतैः क्रयक्रीतैरिति सामानाधिकरण्येन संबन्धः । अन्यथा वेतनदानेन क्रयत्वाविशेषादारामादेः स्वयमपि पुष्पाद्याहरणे दोषापत्तेः । कुशेष्वप्येवम् । अतो द्विजेभ्यः कुशक्रये न दोषः । स्वयमिति शक्तपरम् । तेनैव नियमसिद्धौ शूद्राहृतनिषेधानुपपत्तेः । तेन स्वाशक्तौ शिष्यपुत्राद्याहरणेऽप्यदोषः । आर. ५

कर्माङ्गदर्भगुणाः

[4]अच्छिन्नाग्रान्सपत्रांश्च समूलान् कोमलाञ् शुभान् ।
पितृदेवजपार्थं च समादद्यात् कुशान् द्विजः ॥

(१) ब्रक. ५४ आवपन (आचमन) पित्रर्थान् (पित्र्यर्थान्) ; चब्र. ३३-३४ आवपन (आचमन) दैवेन + (कुर्यात्) ; दीक. १।१९ (प्रतिग्रहमाग्नेयेन) एतावदेव ; निप्र. ६३ (उपस्पर्शनं ब्राह्मेण०) आवपन (आचमन) पित्रर्थान् (पित्र्यं च) ; पप्र. ७७ पित्रर्थान् (पित्र्यर्थान्) ; संदी. ४७ (प्रतिग्रहमाग्नेयेन गृह्णीयात्) एतावदेव.

(२) मर. ३४.

(३) प्रपा. ३४ (=) व्रजत्यधः (पतत्यधः) ; मर. ३५ ; आर. ५ ; आन. ६८ नीतैः (हृतैः) स्मृतिरत्ने.

(४) स्मृच. १०८ दद्यात् (दध्यात्) ; पमा. २३५ देवजपार्थं च (देवार्चपूजार्थं) शेषं स्मृचवत् ; प्रपा. ३४

एतत् प्रस्तरादिव्यतिरिक्तविषयम् । स्मृच. १०८

[१]सप्तपर्णाः शुभा दर्भास्तिलक्षेत्रसमुद्भवाः ।
ते प्रशस्ता नियोक्तव्या दैवे पित्र्ये च कर्मणि ॥

दर्भादिसंज्ञाः

जातिमात्रो भवेद्दर्भः साग्रमूलः कुशः स्मृतः ।
सप्तपत्रस्तु कुतपश्छिन्नाग्रस्तृणमुच्यते ॥

त्याज्यदर्भाः

[२]चितौ दर्भाः पथि दर्भा ये दर्भा यज्ञभूमिषु ।
स्तरणासनपिण्डेषु षट् कुशान् परिवर्जयेत् ॥
[३]ब्रह्मयज्ञे च ये दर्भा ये दर्भाः पितृतर्पणे ।
हता मूत्रपुरीषाभ्यां तेषां त्यागो विधीयते ॥

सपत्रांश्च ( पवित्रांश्च ) र्थे च ( र्थे तु ) द्विजः ( बुधः ); मर. ३४ र्थे च ( र्थे तु ); प्रर. ५० सपत्रांश्च ( पवित्रांश्च ) जपार्थे च ( द्विजार्थे हि ); पप्र. ९८ र्थे च (र्थे च); मुक्ता. २३१ ( = ) पूर्वार्धे ( छिन्नाग्रानपि वै दर्भानमूलान् कोमलाञ् शुभान् । ) र्थे च ( र्थे तु ); प्रका. ३५ प्ररवत्; संर. १६ सपत्रांश्च समूलान् ( पवित्रांश्च अच्छिद्रान् ) जपार्थे ( क्रियार्थे ) अङ्गिराः.

(१) मर. ३४.

(२) स्मृच. १०९; पमा. २३७; मर. ३४; प्रर. ५०; मुक्ता. २३४ चितौ दर्भाः पथि ( पथि दर्भाश्चितौ ); विपा. १६५ ( भागः २ ) मुक्तावत्; आन. २० ( = ) मुक्तावत्; प्रका. ३५; संर. १६ षट् कुशान् परिवर्जयेत् ( तेषां त्यागो विधीयते ) शेषं मुक्तावत्; इन्दु. ३७ स्तरणासन ( प्रस्तरासन ).

(३) स्मृच. १०९; पमा. २३७ यज्ञे च ( यज्ञेषु ); मर. ३४ यज्ञे च ( यज्ञेषु ) हता मूत्रपुरीषाभ्यां ( धृता मूत्रपुरीषे तु ) आपस्तम्बः; निप्र. ३५ ( = ) तर्पणे ( कर्मणि ) हता मूत्रपुरीषाभ्यां ( मूत्रेच्छिष्टौ वृता ये च ); प्रर. ५० पमावत्; पप्र. १०२ हता मूत्रपुरीषाभ्यां ( धृता मूत्रपुरीषे तु ) आपस्तम्बः; मुक्ता. २३४; विपा. १६५ ( भागः २ ); आन २० ( = ); प्रका. ३५ पमावत्; संर. १६ दर्भाः पितृ ( चैव पितृ ) आपस्तम्बः; इन्दु. ३७.

[१]अपूता गर्भिता दर्भा ये वा छिन्ना नखैस्तथा ।
क्वथितानग्निदग्धांश्च कुशान्यत्नेन वर्जयेत् ॥

(१) क्वथिताः हिंसिताः । स्मृच. १०९

(२) गर्भिताः गर्भदलसंयुताः । वस्तुतस्तु सूत्रकृता यत्रानन्तर्गर्भत्वमुक्तं तत्रैव नियतम्, अन्यत्रानियतमिति द्रष्टव्यम् । संर. १७

पुनरुपयोज्या दर्भाः

[२]नीवीमध्ये तु ये दर्भा ब्रह्मसूत्रे च ये कृताः ।
पवित्रांस्तान् विजानीयाद्यथा कायस्तथा कुशाः ॥

[३]मासे नभस्यमावास्या तस्यां दर्भोच्चयो मतः ।
अयातयामास्ते दर्भा नियोज्याः स्युः पुनः पुनः ॥

(१) नभाः श्रावणः । अत एव यातयामाः कालान्तरे लूना इत्यर्थः । स्मृच. १०७

(१) स्मृच. १०९; पमा. २३७ गर्भिता ( गर्हिता ) वा छिन्ना ( संछिन्ना ); मर. ३५ वा छिन्ना नखैस्तथा ( चाग्रे छेदिता नखैः ) आपस्तम्बः; पप्र. १०२ वा छिन्ना नखैस्तथा ( चाग्रे छिन्दिता नखैः ) क्वथितानग्नि ( क्वथितांश्चाग्नि ) क्रमेण आपस्तम्बः; मुक्ता. २३४ गर्भिता ( गर्हिता ) ये वा ( ये च ); विपा. १६५ ( भागः २ ) वा छिन्ना नखैस्तथा ( चाग्रच्छेदिता नखैः ) उत्तरार्धे (क्वाथिता अग्निदग्धाश्च कुशा वर्ज्याः प्रयत्नतः ।। ) देवलः; संर. १६ विपावत्, देवलः; इन्दु. ३७ वा छिन्ना नखैस्तथा ( च दर्भा नखैः क्षताः ) उत्तरार्धे ( क्वथिता अग्निदग्धाश्च कुशान् यत्नेन वर्जयेत् ।। ).

(२) स्मृच. १०९ काय ( काश ); मर. ३५ मध्ये तु ये ( मध्यस्थिता ) कृताः ( धृताः ) कुशाः ( कुशः ) आपस्तम्बः; मुक्ता. २३४ काय ( काशा ); संर. १७ मध्ये तु ये ( मध्यस्थिता ) कृताः ( धृताः ) जाबालिः.

(३) स्मृच. १०७; पमा. २३७ दर्भोच्चयो ( दर्भचयो ); मर. ३४; प्रर. ५०; मुक्ता. २३३ मासे नभस्यमावास्या ( माघे नभस्यमा या स्यात् ) प्रका. ३५.

(२) नभाः श्रावणमासः। कालान्तरोत्पाटितास्तु नायातयामाः। अतः पुनःपुनर्विनियोगयोग्या न भवन्तीत्यर्थः। मुक्ता. २३३

पवित्रधारणम्

[1]जपहोमहरा ह्येते असुरा दिव्यरूपिणः।
पवित्रकृतहस्तस्य विद्रवन्ति दिशो दश ॥

ग्रन्थियुक्तपवित्रवत आचमननिषेधः

[2]ग्रन्थिर्यस्य पवित्रस्य न तेनाऽऽचमनं चरेत् ॥

इति निषेधो ब्रह्मग्रन्थिविषयः। 'न भुञ्जीयान्न चाऽऽचामेद् ब्रह्मग्रन्थौ करे स्थिते।' इति वचनात्, ब्रह्मयज्ञजपाङ्गाचमने ब्रह्मग्रन्थेः प्रधानानुज्ञानादनुज्ञा। निप्र. ३८

कुशप्रतिनिधयः

[3]कुशाभावे तथा काशा दूर्वा व्रीहियवा अपि।
गोधूमाश्चैव नीवाराः श्यामाकोशीरवल्वजाः।
मुञ्जा वाऽथ परिग्राह्याः सर्वकर्मसु निश्चितम् ॥

अत्र व्रीहियवगोधूमनीवारश्यामाकशब्दास्तत्तत्तृणपराः। संर. १९

शौचस्य कर्माङ्गता

[4]ज्ञानं दानं तपस्त्यागो मन्त्रकर्मविधिक्रियाः।
मङ्गलाचारनियमाः शौचभ्रष्टस्य निष्फलाः ॥

संकल्पे कालनिर्देशः

[5]स्मरेत् सर्वत्र कर्मादौ चान्द्रं संवत्सरं सदा ॥

(१) स्मृच. १०७ दिव्य (व्यक्त); प्रपा. ३४; प्रर. ४९; मुक्ता. २२९ ह्येते (एते) दिव्य (व्यक्त); प्रका. ३४.

(२) स्मृच. १०८; निप्र. ३८ (=); पप्र. १०३; मुक्ता. २३१.

(३) संर. १९.

(४) अप. १।१५४ पृ. २२६; चदा. ९० ज्ञानं दानं (दानं ज्ञानं).

(५) आर. ४.

उपवीतविशेषः

[1]मुक्तामयोपवीतं च चामीकरमथापि वा।
धार्यं तत् सर्ववर्णानां महादानादिकर्मसु ॥

अनुष्ठानस्य संकल्पाभिलापपूर्वकत्वम्

[2]मनसा संकल्पयति वाचाऽभिलपति कर्मणा प्रतिपादयति ॥

न वाऽभिलापोऽधिकारसंपादकः, नित्यकर्मणि तदभावेऽप्यधिकारात्। किंतु 'मनसा संकल्पयति वाचाऽभिलपति कर्मणा प्रतिपादयति' इति हारीतवचनम्, 'मनसा निश्चयं कृत्वा ततो वाचाऽभिधीयते। क्रियते कर्मणा पश्चात्प्रमाणं मे मनस्ततः ॥' इति वनपर्ववचनं च निमित्तनिश्चयादिकरणकेनामुककामनया मयेदं कर्तव्यमिति निश्चयरूपेण मनःसंकल्पेनैव संपादितस्याधिकारस्यानन्तरं काम्यप्रधानाभिलापस्याङ्गविशेषरूपतया कर्तव्यत्वनियमं बोधयति। श्राकौ ५२८

विध्यतिक्रमे कर्मफलाभावः

[3]यः कश्चित्कुरुते धर्मं विधिं हित्वा दुरात्मवान्।
न तत्फलमवाप्नोति कुर्वाणोऽपि विधिच्युतः ॥

## लघुहारीतः

पुनरुपयोगानर्हा दर्भाः

[4]चितौ दर्भाः पथि दर्भा ये दर्भा यज्ञभूमिषु।
स्तरणासनपिण्डेषु षट् कुशान् परिवर्जयेत् ॥

[5]पिण्डार्थं ये स्तृता दर्भा यैः कृतं पितृतर्पणम्।
मूत्रोच्छिष्टैर्धृता ये च तेषां त्यागो विधीयते ॥

(१) मुक्ता. ९२.

(२) श्राकौ. ५२८.

(३) हास्मृ. ३।४; मुक्ता. ११५.

(४) ब्रक. ६७ चितौ (चिति); चव्र. ४०; चदा. १०६; कुर. ६७ चितौ दर्भाः पथि दर्भा (पथि दर्भाश्चितौ दर्भा); निप्र. ३५; पप्र. १०१-१०२.

(५) ब्रक. ६७ ष्टैर्धृता ये च (ष्टैः कृता ये तु); चव्र. ४० स्तृता (कृता) ष्टैर्धृता (ष्टधृता); चदा. १०६

पुनरुपयोगार्हा दर्भाः

[1]नीवीमध्ये तु ये दर्भा ब्रह्मसूत्रे च ये कृताः ।
पवित्रांस्तान्विजानीयाद्यथा कायस्तथा कुशाः ॥

( १ ) नीवी परिधानवस्त्रग्रन्थिः । ब्रक. ६७

( २ ) केचित्तु उच्छिष्टीकृतमात्र एव निषेधमाहुः । कृर. ६७

( ३ ) चितौ श्मशाने । पिण्डार्थस्तरणकुशानामग्रिमश्लोके निषेध्यत्वादत्र स्तरणपदं तदतिरिक्तस्तरणपरम् । आसनं यत्रोपविश्यते । पिण्डेष्वित्यनेन पिण्डोपर्यास्तृतानां पिण्डोत्सर्गादिषु विनियुक्तानां च त्यागः । यैः कृतमिति । अत्र पितृपदं प्रमीतपरम्, यैः कुशैः प्रमीततर्पणं कृतं तेषां तत्तर्पणप्रयोगातिरिक्ते कर्मणि त्यागः । प्रयोगश्च यावत्तर्पणीयतर्पणमेकः । तृतीयार्थश्च करणत्वम् । तच्चासाधारणकारणत्वम् । तेन हस्तादिधृतकुशानां न त्यागः । 'मूत्रोच्छिष्टैर्धृता ये च' इत्यस्यापवादमाह— नीवीमध्ये चेति । पप्र. १०२

करे सुवर्ण–रजत–कुशधारणम्

[2]जपे होमे तथा दाने स्वाध्याये पितृतर्पणे ।
अशून्यं तु करं कुर्यात्सुवर्णरजतैः कुशैः ॥

(१) 'जपे होमे' इत्यादौ पूर्वलिखितलघुहारीतवाक्ये 'अशून्यम्' इत्यादिना सुवर्णादीनां विशिष्टधारणविधानादर्थात् सुवर्णादिसमुच्चयः । तत्र च दक्षिणकरानामिकायां सुवर्णधारणस्य 'अनामिकाङ्गुलिकायां धारयेद्दक्षिणे करे ।' इति हेमप्रकरणस्थदेवीपुराणसिद्धत्वात् तत्समभिव्याहारात् रजतादिधारणमपि तत्रैव । 'तर्जन्यां रजतं धार्यम्' इति वाक्यमनादेयम्, अनाकरत्वात् । कृर. ६८

( २ ) स्वर्णरौप्यबहुत्वमवयवापेक्षम् । कुशे स्वतो बहुत्वम्, वाक्यान्तरात् हस्तद्वयगतत्वाच्च । अत्र 'न स्वर्णमनग्र्यं धारयेत्' इति पर्युदासादग्र्यं शुद्धमेव स्वर्णं कर्माङ्गम् । अनग्र्यधारणे त्वङ्गवैगुण्यम्, नाधर्मः । कालिकापुराणे— 'कायस्थेन तु हेम्ना च कर्म यत्कुरुते (? यत्कुत्सितं) नरः । आचरेत्तस्य तत्पापं वज्रलेपं भविष्यति । अनामिकायां तद्धार्यं दक्षिणस्य करस्य च ॥' । तेन अनामिकाव्यतिरिक्त(स्थाने)स्वर्णधारणे दैवात् पापकरणे तस्य गौरवं बहुप्रायश्चित्तापनोद्यं भवति । 'शुभे रौक्मे च कुण्डले' ( मस्मृ. ४।३६ ) इति मनूक्तकुण्डलद्वयधारणम्, 'न बहिर्माल्यं धारयेदन्यत्र रुक्ममय्याः' ( वस्मृ. १२।३५ ) इति वसिष्ठोक्तस्नातकधर्मरुक्ममालाधारणम्, 'गुरुणाऽनुज्ञातोऽलंकारादीन् गृह्णीयात् । यथार्थं चैतानि बिभृयात्' इति हारीतोक्तिः पापाचरणकाले परिहार्यम् । 'अनामिकायाः प्रथमं पर्व स्वर्णेन पूरयेत्' इति वाक्यदर्शनात् प्रथमपर्वस्थाने स्वर्णं धार्यम् । तथा, 'तर्जनी रूप्यसंयुक्ता हेमयुक्ता त्वनामिका ।' इति वाक्यात्समाचाराच्च तर्जन्यां रजतधारणम् । सर्वालंकारधारणे मन्त्रः, यथा— 'अलंकरणमसि भूयोऽलंकरणं मे भूयात्' इति । नवरत्नयुक्तमुद्रिकाधारणं काम्यमेव । *गप. १०६

दर्भाणामुदकस्य संख्यानस्य च क्रमेण संध्यादानजपाङ्गत्वम्

[1]दर्भहीना तु या संध्या यच्च दानं विनोदकम् ।
असंख्यातं तु यज्जप्तं तत्सर्वं निष्प्रयोजनम् ॥

---

चव्रवत्; कृर. ६७ ष्टैर्धृता ( ष्टैः कृता ); निप्र. ३५ ष्टैर्धृता ( ष्टौ वृता ) उत्त. ; पप्र. १०२.

( १ ) ब्रक. ६७ सूत्रे च ( सूत्रे तु ) कायः ( कायाः ); चव्र. ४० तु ये ( च ये ); चदा. १०६ मध्ये तु ( मध्येषु ); कृर. ६७ कायः ( कायाः ); निप्र. ३५ तु ये ( च ये ) कृताः ( स्थिताः ); पप्र. १०२ तु ये ( च ये ) च ये कृताः ( तु ये धृताः ).

( २ ) अप. १।२२ मार्कण्डेयः ; ब्रक. ६७ ; चव्र. ३९ ; चदा. ९१ ; कृर. ४७ ; गप. १०६ ; निप्र. ३२ : ३९ ( = ) उत्त. ; पप्र. १०३ ; विपा. १६३ ( भागः २ ) जपे होमे तथा दाने ( स्नाने दाने जपे होमे ) हारीतः .

* निप्र. गपगतम् ।

( १ ) ब्रक. ६७ ; चव्र. ४० ख्यातं तु ( ख्यातं च ); चदा. ९१ जनम् ( जकम् ) शेषं चव्रवत् ; पप्र. १०३.

सपवित्राचमने नोच्छिष्टत्वम् , भुक्तशेषकुशत्यागः

[1]आचम्य प्रयतो नित्यं पवित्रेण द्विजोत्तमः ।
नोच्छिष्टस्तु भवेत्तत्र भुक्तशेषं तु वर्जयेत् ॥

(१) भुक्तशेषं यस्मिन् कुशे परिधृते भुक्तं तदित्यर्थः । कुर. ६८

(२) यत्पवित्रं धृत्वा आचमनं कृतं तत्रोच्छिष्टाचमनोदकसंबन्धेऽपि तत्पवित्रमुच्छिष्टं न भवतीत्यर्थः । भुक्तशेषं यत्पवित्रं धृत्वा भोजनं कृतम्, तत् त्याज्यमित्यर्थः । पप्र. १०३

चातुर्मास्ये बर्हिरिध्मच्छेदननिषेधः, स च पुरुषार्थ इति टीकाकृन्मतम्

[2]अनन्तशयनादूर्ध्वं न पठेत् सप्तमं क्रतुम् ।
छेदनं बर्हिरिध्मानां नाऽऽरोहेच्चर्मपादुके ॥

नकारः काकाक्षिन्यायेन उभयत्रान्वेति । अयं च निषेधः कर्मसंबन्धप्रमाणाभावात् पुरुषार्थः । तेन पुरुषदोषमतिलङ्घ्य छेदने कर्मविनियोगे न वैगुण्यम् । निप्र. ३५

## वृद्धहारीतः

पवित्रकदर्भगुणाः

[3]प्रादेशमात्रौ कौशेयौ साग्रौ मूलयुतौ तथा ।
सान्तर्गर्भौ सुविमलौ पवित्रं कारयेद् द्विजः ॥

ब्रह्मग्रन्थिवर्तुलग्रन्थियुतपवित्रयोः कर्मभेदेन व्यवस्था

देवार्चने जपे होमे कुर्याद्ब्राह्म्यं पवित्रकम् ।
इतरे वर्तुलग्रन्थि एवं धर्मो विधीयते ॥

पुनरुपयोगानर्हा दर्भाः

पथि दर्भाश्चितौ दर्भा ये दर्भा यज्ञभूमिषु ।
स्तरणासनपिण्डेषु ब्रह्मयज्ञे च तर्पणे ॥
पाने भोजनकाले च धृतान्दर्भान् विसर्जयेत् ॥

(१) ब्रक. ६७ ; कुर. ६७ ; पप्र. १०३ व्याख्यानात् 'नोच्छिष्टं तु' इति पाठः पप्रसंमतो भाति.

(२) निप्र. ३५.

(३) वृहास्मृ. ७।३९-४२, ४४,४६. सं. का. १४५

आचमने सपवित्रकरत्वम्

सपवित्रकरेणैव आचामेत्प्रयतो द्विजः ॥

दर्भ-कुश-तृणलक्षणानि

अप्रसूताः स्मृता दर्भाः प्रसूतास्तु कुशाः स्मृताः ।
समूलास्तु कुशा ज्ञेयाश्छिन्नाग्रास्तृणसंज्ञिताः ॥

कुशासनप्रशंसा

कुशासनं सदा पूतं जपहोमार्चनादिषु ।
कुशेनैव कृतं कर्म सर्वमानन्त्यमश्नुते ॥

धार्मिकस्य कर्माधिकारः

[1]श्रुतिस्मृत्युदितं धर्ममकृत्वा यश्चरेन्नरः ।
विकर्मस्थः स विज्ञेयः सर्वकर्मसु गर्हितः ॥

आश्रमभेदेनोपवीतसंख्यानियमः

[2]एकैकमुपवीतं तु यतीनां ब्रह्मचारिणाम् ।
गृहिणां च वनस्थानामुपवीतद्वयं स्मृतम् ।
सोत्तरीयं त्रयं वाऽपि बिभृयाच्छुभ्रतन्तु वा ॥

अहतवस्त्रलक्षणम्

[3]ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम् ।
अहतं तद्विजानीयाद्दैवे पित्र्ये च कर्मणि ॥

देवतीर्थविनियोगः

[4]देवानां तर्पणं होमं बलिकर्म च भोजनम् ।
अर्चनं मार्जनं कुर्याद्देवतीर्थेन सर्वदा ॥

## बौधायनः

यज्ञोपवीतम्

[5]कौशं सौत्रं वा त्रिस्त्रिवृद्यज्ञोपवीतमा नाभेर्दक्षिणं बाहुमुद्धृत्य सव्यमवधाय शिरोऽवदध्यात् ॥

(१) वृहास्मृ. ८।२०.

(२) वृहास्मृ. ८।४४-४५.

(३) वृहास्मृ. ९।१०६.

(४) मुक्ता. ३६२ ; आन. ६९.

(५) बौध. १।८।५ ; विश्व. १।२९ [बाहुमुद्धृत्य सव्यमवधाय (बाहुमवधाय) ; अप. १।२९ (आ नाभे-

(१) कौशं कृमिकोशोद्भवं पट्टसूत्रमयमिति यावत्। तथा च आदित्यपुराणे—'क्षौमजं वाऽथ कार्पासं पट्टसूत्रमथापि वा। दध्याद्यज्ञोपवीतं यो न तं हिंसन्ति वायसाः॥' इति। सौत्रं कार्पासम्। त्रिः त्रिवृत् नवगुणम्, 'नव वै त्रिवृत्' इति श्रुतेः।

ब्रक. १०७

(२) कौशं पट्टं त्रसरादिनिर्मितम्। आ नाभेः नाभिप्राप्तम्। वीमि. १।२९ पृ. ८६

(३) 'कौशं कृमिकोशोद्भवं पट्टसूत्रमयमिति यावत्' इति कल्पतरुः। वस्तुतस्तु कौशं कुशपत्रनिर्मितम्। तथा च गोभिलः— 'यज्ञोपवीतं कुरुते सूत्रं वस्त्रं कुशरज्जुं वा' इति। सौत्रं कार्पासम्। देवलः— 'कार्पासक्षौमगोवालशणवल्कतृणोद्भवम्। सदा संभवतो धार्यमुपवीतं द्विजातिभिः॥' इति। संप्र. ४१५

(४) त्रिवृत् नवगुणम्, 'नव वै त्रिवृत्' इति श्रुतेः। * संग. ६६५

(५) कुशविकारः कौशम्। सूत्रस्य विकारः सौत्रम्। तच्च सूत्रं कार्पासमयम्। त्रिरिति क्रियाभ्यावृत्तिगणने सुच् भवतीति। त्रिवृदिति च त्रिगुणं भवति। एतदुक्तं भवति— नवकृत्वः संपादयेदिति। यज्ञार्थमुपवीतम् उपव्यानं विन्यासविशेषः। यज्ञग्रहणं गुरूपासनादेरपि प्रदर्शनार्थम्। तथा चाऽऽपस्तम्बः— 'उपासने गुरूणां वृद्धानामतिथीनां होमे जप्यकर्मणि भोजन आचमने स्वाध्याये च यज्ञोपवीती स्यात्' (आध. १।१५।१) इति। आ नाभेः, आङ् मर्यादायाम्, ऊर्ध्वं नाभेरित्यर्थः। दक्षिणं बाहुमवधाय बाहोरधस्तात्कृत्वा शिरोऽवदध्यात्, दक्षिणं बाहुं शिरश्चोपरि गृह्णीयादित्यर्थः। तथा च श्रुतिः— 'दक्षिणं बाहुमुद्धरतेऽवधत्ते सव्यमिति यज्ञोपवीतम्।' (तैआ. २।१।१) इति (च ?)।

बौवि.

प्राचीनावीतम्

**[१]विपरीतं पितृभ्यः॥**

दक्षिणबाहुमधस्तात्कृत्वा सव्यं बाहुमुत्थाय (? त्थाप्य) शिरोऽवदध्यात्। श्रुतिरपि— 'एतदेव विपरीतं प्राचीनावीतम्' इति। पितॄनुद्दिश्य यत् क्रियते तत्रैतद्भवति।

बौवि.

निवीतम्

**[२]कण्ठेऽवसक्तं निवीतम्॥**

मनुष्याणां भवति। ऋषीणामित्येवेदमुक्तं भवति।

बौवि.

अधोवीतम्

**[३]अधोऽवसक्तमधोवीतम्॥**

नाभेरधोऽवसक्तं अधःक्षिप्तमधोवीतं भवति। एतदेव संवीतं मानुषमिति चोच्यते। मनुष्यकार्येषु कर्तव्यम्। तानि चाञ्जनाभ्यञ्जनोद्वर्तनादीनि। बौवि.

हस्तस्थिततीर्थानि

**[४]अङ्गुष्ठमूलं ब्राह्मं तीर्थम्॥**

किं तद् ब्राह्मं तीर्थम्— अङ्गुष्ठेति। तस्याङ्गुष्ठमूलस्योत्तरतो मेखला। बौवि.

---

* शेषं संप्रवत्।

दक्षिणं ...... दध्यात्०) ; ब्रक. ६२ (यज्ञोपवीतमा नाभेर्दक्षिणं बाहुमवधाय शिरोऽवदध्यात्) एतावदेव : १०७ ; स्मृच. ३२ (कौशं वा त्रिवृद्यज्ञोपवीतम्) एतावदेव ; वीमि. १।२९ पृ. ८६ ; पप्र. ९० (यज्ञोपवीतमा नाभेर्दक्षिणं बाहुमवधाय शिरोऽवदध्यात्) एतावदेव ; संप्र. ४१५ (कौशं सौत्रं त्रिस्त्रिवृद्यज्ञोपवीतमा नाभेः) एतावदेव ; संग. ६६५ संप्रवत् ; बौवि. व्याख्यानात् विश्ववत् पाठो भासते.

(१) बौध. १।८।६ ; ब्रक. ६२ ; वीमि. १।२९ पृ ८६ ; पप्र. ९०.

(२) बौध. १।८।७ ; ब्रक. ६२ कण्ठेऽव (कण्ठाव) ; वीमि. १।२९ पृ. ८६ ; पप्र. ९० ब्रकवत्.

(३) बौध. १।८।८ ; ब्रक. ६२ ; वीमि. १।२९ पृ. ८६ ; पप्र. ९०.

(४) बौध. १।८।१२ ; ब्रक. ५३ अङ्गुष्ठमूलं (अङ्गुलिमूले) ; मुक्ता. २२५.

**[१]अङ्गुष्ठाग्रं पित्र्यमङ्गुल्यग्रं दैवमङ्गुलिमूलमार्षम् ॥**

एतत्प्रसङ्गात् पितृतर्पणाद्यर्थमन्यान्यपि तीर्थान्याह– अङ्गुष्ठाग्रमिति । अङ्गुल्यङ्गुष्ठयोर्मध्यं पित्र्यम् । तथा च वसिष्ठः– 'प्रदेशिन्यङ्गुष्ठयोरन्तरे पित्र्यम्' इति । ऋज्वन्यत् । बौवि.

अबुपस्पर्शननिमित्तम् अबुपस्पर्शनानुकल्पश्च

**[२]नीवीं विस्रस्य परिधायाऽप उपस्पृशेत् । आर्द्रं तृणं गोमयं भूमिं वा समुपस्पृशेत् ॥**

परिहितस्य वाससो बन्धो नीवी । अपामुपस्पर्शनं प्रक्षालनम् । वा, संभवापेक्षो विकल्पः । बौवि.

कर्मकाले नामेरधः स्पर्शननिषेधः

**[३]नामेरधः स्पर्शनं कर्मयुक्तो वर्जयेत् ॥**

देवपितृसंयुक्तं कर्म कुर्वाण इत्यर्थः । बौवि.

**[४]'ऊर्ध्वं वै पुरुषस्य नाभ्यै मेध्यमवाचीनममेध्यम्' इति श्रुतिः ॥**

तत्र कारणमाह– ऊर्ध्वमिति । पुरुषस्य नाभ्या ऊर्ध्वं मेध्यम् , अवाचीनम् अधस्तात् अमेध्यम् अयज्ञार्हमित्यर्थः । बौवि.

पादस्पृष्टस्य प्रक्षालनम्

**[१]पादोपहतं प्रक्षालयेत् ॥**

पात्रादि । बौवि.

अबुपस्पर्शननिमित्तानि

**अङ्गमुपस्पृश्य सिचं वाऽप उपस्पृशेत् ॥**

अङ्गं शरीरम्, सिक् परिहितं वासः । अत्रोपस्पर्शः स्पर्शमात्रमेव, नाऽऽचमनादि । बौवि.

**एवं छेदनभेदनखननिरसनपित्र्यराक्षसनैर्ऋतरौद्राभिचरणीयेषु ॥**

एतेष्वपि कृतेषु अपामुपस्पर्शनमिति । छेदनम् 'आच्छिनत्याच्छेत्ता ते मा रिषमिति' इत्यादि । भेदनं 'तस्मिन् स्फ्येन प्रहरति' इत्यादिष्वदृष्टसंस्कारेषु । खननं 'तं स खनति वा खानयति वा' इत्यादि । निरसनं 'तृणं वा किंशारु वा निरस्यति' इत्यादि । तत्र पुनर्वचनमनिरूपितदशहोत्रा(?)यौगपद्यनिवृत्त्यर्थम् । पित्र्यं 'स्वधा पितृभ्य ऊर्ग्भव' इत्यादि । राक्षसं 'रक्षसां भागोऽसि' इत्यादि । नैर्ऋतं 'नैर्ऋतेन पूर्वेण प्रचरति' इत्यादि । रौद्रं मन्थिसंस्रावहोमादि । अभिचरणीयानि 'यं यजमानो द्वेष्टि' इत्येवं चोदितानि । बौवि.

निमित्तविशेषे दक्षिणबाहूद्धरणम्

**[२]अग्न्यगारे गवां गोष्ठे ब्राह्मणानां च संनिधौ । स्वाध्याये भोजने चैव दक्षिणं बाहुमुद्धरेत् ॥**

(१) गवां गोष्ठे गोविशिष्टे गोष्ठे । दक्षिणमिति । सव्येंऽसे वस्त्रं निधाय दक्षिणमुत्तरीयाद्बहिः कुर्यादित्यर्थः । पप्र. ९०

---

(१) बौध. १।८।१३ ; ब्रक. ५३ अङ्गुलिमूल (अङ्गुल्यग्र).

(२) बौध. १।१०।१७ ; अप. १।१९६ समुपस्पृशेत् (स्पृशेत्) ; ब्रक. १३८ विस्रस्य (विस्रंस्य) ; स्मृच. ९९ परि (परी) गोमयं भूमिं (भूमिं गोमयं) ; पमा. २२५ (नीवीं विसृज्य परिधायोपस्पृशेदार्द्रंतृणं भूमिं गोमयं वा संस्पृशेत्) ; मुक्ता. २३६ (नीवीं विसृज्य परिधायोपस्पृशेदार्द्रं तृणं भूमिं गोमयं वा सकृदुपस्पृशेत्).

(३) बौध. १।१०।१८ अप. १।२२५ पृ. ४६२ (नामेरधः करस्पर्शं कर्मयुक्तो विवर्जयेत्) ; ब्रक. ६२ (कर्मयुक्तो नामेरधः स्पर्शं वर्जयेत्) ; स्मृच. १५० युक्तो (संयुक्तो) ; चव्र. ३९ ब्रकवत् ; चदा. १०८ ब्रकवत् ; कुर. ४८ (कर्मयुक्तो नरो नामेरधः स्पर्शं विवर्जयेत्) ; आर. ७ (नामेरधश्च संस्पर्शं कर्मयुक्तो विवर्जयेत्) ; पप्र. ९१ ब्रकवत् ; मुक्ता. ३४१ स्पर्शनं (संस्पर्शं) ; संदी. २२ कुरवत्.

(४) बौध. १।१०।१९.

(१) बौध. १।१५।४–६.

(२) बौध. २।६।३८ गोष्ठे (मध्ये) ; ब्रक. ६२ अग्न्य (अग्न्या) बाहु (पाणि) मनुबौधायनपैठीनसयः ; निप्र. २९ ब्रकवत्, मनुबौधायनपैठीनसयः ; पप्र. ९० बाहु (पाणि) मनुबौधायनपैठीनसयः .

(२) स्वाध्याये वर्तमाने भोजनेऽपि बाहोरुद्धरणं नमस्काररूपेण। चशब्दः प्रशस्तमङ्गल्यदेवायतनप्रज्ञात-वनस्पत्यादिप्रदर्शनार्थः। बौवि.

सोत्तरीयत्वमधिकारिविशेषणम्

[1]उत्तरं वासः कर्तव्यं पञ्चस्वेतेषु कर्मसु।
स्वाध्यायोत्सर्गदानेषु भोजनाचमनयोस्तथा॥

(१) उत्सर्गो मूत्रादेः। भुक्तं भोजनम्। एतद्विहित-सर्वकर्मोपलक्षणार्थम्। स्मृच. ११३

(२) एतत् सर्वकर्मोपलक्षणार्थम्, अनुत्तरीयस्य कर्ममात्रनिषेधात्। ¶पमा. २४५

(३) उत्तरीयमप्यधिकारिविशेषणम्, 'सोत्तरीय-स्ततः कुर्यात्सर्वकर्माणि भावितः।' इति ब्रह्माण्डात्। यत्तु 'कर्तव्यमुत्तरं वासः' इति बौधायनोक्तौ पञ्चग्रहणानर्थक्य-प्रसङ्गान्न सर्वत्र वस्त्रद्वयनियम इति। तन्न, सर्वत्वस्यानु-पसंहार्यत्वात्। अतः सर्वत्र वस्त्रद्वयनियम इति माधवः। आर. ३

(४) स्वाध्यायः उपाकर्म ब्रह्मयज्ञश्च। आन. ३२

(५) तृतीयं वस्त्रमुपवीतवत् व्यतिषज्यते तदुत्तरी-यम्। तत् स्नातकस्य प्राप्तमन्येषु कर्मस्ववश्यं कर्तव्य-मित्युच्यते। उत्सर्गः मूत्रपुरीषकरणम्। बौवि.

बहिर्जानुतानिषेधः

[2]हवनं भोजनं दानमुपहारः प्रतिग्रहः।
बहिर्जानु न कार्याणि तद्वदाचमनं स्मृतम्॥

(१) उपहारः देवताद्यर्थमन्नाद्युपढौकनम्। §ब्रक. ६४

(२) जान्वोर्द्वयोरन्तरा दक्षिणं बाहुं निधायैतानि कार्याणीत्यर्थः। उपहारो बलिहरणम्। यद्वा, प्रसिद्ध एवोपहारो देवगुरुविषयः। बौवि.

(३) अत्र केषांचिदुपादानमन्येषामुपलक्षणार्थम्। इन्दु. १२

कर्तुरेकवस्त्रत्वादेर्निषेधः

[1]नैकवस्त्रो नाऽऽर्द्रवासा दैवानि कर्माण्यनु-संचरेत्। पितृसंयुक्तानि चेत्येकेषाम्॥

नाऽऽर्द्रवासा इति साक्षादार्द्रवासोनिषेधार्थः। अनु-संचरेत् अनुतिष्ठेत्। पितृसंयुक्तानि, अत्र अपिशब्दोऽ-ध्याहर्तव्यः। बौवि.

[2]काषायवासा यान् कुरुते जपहोमप्रतिग्रहान्।
न तद्देवगमं भवति हव्यकव्येषु यद्धविः॥

(१) काषायरक्तप्रतिषेधमाह बौधायनः— काषाय-वासा इति। अप. १।२२५ पृ. ४६१

(२) काषायवासाः वृक्षक्वाथादिना रक्तवासाः। §ब्रक. ५६

---

¶ मुक्ता. स्मृचवत् पमावच्च।

(१) बौध. २।६।३९; स्मृच. ११३ भोजनाच (भुक्ताच); पमा. २४५ उत्तरं वासः कर्तव्यं (कर्तव्यमुत्तरं वासः) ध्यायोत्सर्ग (ध्यायहोम) भोजनाच (भक्ताच); आर. ३ उत्तरं वासः कर्तव्यं (कर्तव्यमुत्तरं वासः) चम-नयोस्तथा (चमने तथा); मुक्ता. १६ उत्तरं वासः कर्तव्यं (कर्तव्यमुत्तरं वासः) चमनयो (चमयो): २५३ स्मृचवत्; आन. ३२ भोजनाच (भुक्त्वाऽऽच).

(२) बौध. २।६।४०; ब्रक. ६४ हवनं भोजनं (भोजनं हवनं) प्रतिग्रहः (परिग्रहः); स्मृच. २२७

§ पप्र. ब्रकवत्।

हवनं भोजनं (भोजनं च जपं) बहिर्जानु न (न बहि-र्जानु); चदा. १०० हवनं भोजनं (भोजनं हवनं); निप्र. ५८ चदावत्; आर. ५ चदावत्; पप्र. ९३ चदा-वत्; मुक्ता. १६; इन्दु. १२ चदावत्.

(१) बौध. २।१०।४.

(२) बौध. २।१५।५; अप. १।२२५ पृ. ४६१ (यान्०) व्येषु यद्धविः (व्येष्वथो हविः); ब्रक. ५६ प्रतिग्रहान् (परिग्रहान्) शेषं अपवत्; चव्र. ३५ (यान्०) हव्यकव्येषु यद्धविः (हव्यं कव्यं स्वधा हविः); चदा. ९४ चव्रवत्; कुर. ४८ गमं (गम्यं) शेषं अपवत्; निप्र. २८ अपवत्; पप्र. ८२ अपवत्; संदी. ६ भवति (कर्म) शेषं अपवत्.

(३) एतच्च काषायवाससा आर्द्रवाससा ¶ जपादि-प्रतिषेधनमश्रुतविषये, यत्र तु कर्मविशेषे काषायवाससै-वाऽऽर्द्रवाससैवानुष्ठानं श्रूयते तत्र तथैवानुष्ठानं कर्त-व्यम् । कुर. ४९

(४) जपादिपदं वैदिककर्ममात्रोपलक्षणम् । काषाय-वस्त्र( ? वासः )पदं कौपीनाद्युपलक्षणम् । तथा च स्मृत्यन्तरे— 'नग्नः काषायवासाः स्यान्नग्नः कौपीनवा-नपि । नग्नो मलिनवासाः स्यान्नग्नश्चार्धपटस्तथा ॥ नग्नो द्विगुणवासाः स्यान्नग्नः स्यूतपटस्तथा । अकक्षोऽनुत्तरीयश्च नग्नो वर्ज्यो विवस्त्रवत् ॥' । वर्ज्यः कर्माधिकारे । निप्र. २९

(५) दैवे कर्मणि पित्र्ये च काषायवासोनिषेधः श्वेतवाससा भवितव्यमिति विधानार्थम् । किंच, काषाय-वाससो यतीश्वराः । तेऽपि पित्र्ये दैवे कर्मणि च जपहोमप्रतिग्रहान् कुर्वते । तद्देवगमं पितृगमं च न भवतीति शेषः । हव्यं देवदैवत्यं कव्यं पितृदैवत्यम् । बौवि.

दानप्रतिग्रहयोरङ्गुष्ठबहिर्भावस्य आचमने तिष्ठत्त्वस्य च निषेधः

[१]**यच्च दत्तमनङ्गुष्ठं यच्चैव प्रतिगृह्यते ।**
**आचामति च यस्तिष्ठन्न स तेन समृध्यते ॥ इति ॥**

प्रदानप्रतिग्रहयोरङ्गुष्ठस्याऽबहिर्भावार्थस्तिष्ठत आच-मननिषेधार्थश्चायं श्लोकः । बौवि.

दाने आद्यन्तयोर्जलदानम्

**आद्यन्तयोरपां प्रदानं सर्वत्र ॥**

सर्वत्र दाने श्रद्दधानेनाऽऽदौ अन्ते च जलदानं कर्त-व्यम् । तथा च गौतमः— 'भिक्षादानमप्पूर्वम् । ददा-तिषु चैवं धर्म्येषु' इति । बौवि.

द्विराचमननिमित्तानि

[१]**भोजने हवने दाने उपहारे प्रतिग्रहे ।**
**हविर्भक्षणकाले च द्विराचमनमिष्यते ॥**

कर्तुर्यथान्यायं स्थानासनाद्यनुमतिः

[२]**तिष्ठन्नासीनः प्रह्वो वा यथान्यायम् ॥**

न्यायः सामर्थ्यम् । यत्कर्म ऊर्ध्वत्वादिव्यतिरेकेण कर्तुं न शक्यते तत्रानुक्तमपि ऊर्ध्वत्वादिकं ग्राह्यमित्यर्थः । पप्र. ८५

मुख्याज्यं तत्प्रतिनिधयश्च

[३]**आज्यहोमेषु सर्वत्र गव्यमेव भवेद् घृतम् ।**
**तदभावे महिष्यास्तु आजमाविकमेव वा ॥**

[४]**तदभावे तु तैलं स्यात्तदभावे तु जार्तिलम् ।**
**तदभावे तु कौसुम्भं तदभावे तु सार्षपम् ॥** $

[५]**घृतमाज्यार्थे गव्यमिति प्रत्ययः । तस्यालाभे माहिषमाजं वा आज्यार्थे प्रयुञ्जीत । तथा तयो-रभावे तैलं प्रतिनिधिः । तस्याभावे जार्तिलमतसी-कुसुम्भसर्षपवार्क्षीयाः स्नेहा इति शिष्टप्रामा-ण्यात् । अत ऊर्ध्वमलाभे यवपिष्टानि व्रीहि-पिष्टानि श्यामाकपिष्टानि वाऽद्भिः संसृज्या-ऽऽज्यार्थे प्रयुञ्जीत ॥**

---

¶ इदम् 'आर्द्रवासास्तु यः कुर्यात्' इति पूर्वधृतन्यास-वचनाभिप्रायेण ।

(१) बौध. २।१५।६, ७.

$ पप्रव्याख्यानं 'घृतमाज्यार्थे प्रतिनिधिः' इत्यादि मैत्रायणीयगृह्यपरिशिष्टवचने (संका. पृ. ११२७) द्रष्टव्यम् ।

(१) स्मृच. १०० मिष्यते (संस्मृतम्) म्हैसूर-मुद्रितस्मृतिचन्द्रिकायां तु आदर्शवत्पाठः ; पमा. २२५ द्विराचमनमिष्यते (तद्द्विराचमनं स्मृतम्) ; मुक्ता. २३७.

(२) पप्र. ८५.

(३) कुर. ७३ घृतम् (हुतम्) ; निप्र. १९७ भवेद् घृतम् (घृतं स्मृतम्) महिष्यास्तु (माहिष्यं तु), पप्र. १११ स्तु आज (स्तदाज) मेव वा (मेव च).

(४) कुर. ७४ तु कौ (च कौ) ; निप्र. १९७ तदभावे तु (तदभावेऽपि) सर्वत्र ; पप्र. १११.

(५) पप्र. ११०.

तयोः माहिषाजघृतयोरलाभे तैलं तिलप्रभवः स्नेहः। जार्तिलम्, जर्तिला अरण्यतिलाः, तत्प्रभवं तैलम्।

पप्र. ११०

आग्नेयादितीर्थानि तेषां विनियोगश्च

[१]**अङ्गुलिमूले सौम्यं करमध्य आग्नेयम्॥**

[२]**निर्वपणसंस्रवणलाजहोमनित्यहोमान् कायतीर्थेन कुर्यात्। दैवेन दैविकम्, पित्र्येण पैतृकम्। कमण्डलुस्पर्शनं नवान्नप्राशनं स्रुवग्रहणं दैविकं सौम्येन। आग्नेयेन प्रतिग्रहं कुर्यात्॥**

स्रुवग्रहणं स्रुगुपलक्षणम्। अत्र दैविकमिति विशेषणात् पित्र्यं स्रुवधारणं पितृतीर्थेनैव। पृ. ७३

नित्यहोमः औपासनादिः। संर. ६११

मौनं कर्तृधर्मः यावदर्थसंभाषणानुमतिश्च

[३]**तत्र मौने युक्तस्त्रैविद्यवृद्धैराचार्यैर्मुनिभिरन्यैर्वाऽऽश्रमिभिर्बहुश्रुतैर्दन्तैर्दन्तान् संधायान्तर्मुख एव यावदर्थं संभाषीत, न यन्त्रलोपो भवतीति विज्ञायते॥**

(१) यन्त्रो नियमः। कुर. ४९

(२) त्रयी ग्रन्थतोऽर्थतश्च यैः समधिगता ते त्रैविद्यवृद्धाः। अत्रैविद्यवृद्धा अप्याचार्याः। मुनयः परिव्राजकाः। अन्याश्रमग्रहणान्नैष्ठिकतापसयोर्ग्रहणम्। दन्तैर्दन्तानिति संभाष्यादन्यो यथा न शृणुयादित्यर्थः। बौवि.

प्राणायामस्वरूपम्

[४]**सव्याहृतिकां सप्रणवां गायत्रीं शिरसा सह। त्रिः पठेदायतप्राणः प्राणायामः स उच्यते॥**

हस्तमानस्वरूपम्

[१]**मध्याङ्गुलीकूर्परयोर्मध्ये प्रामाणिकः करः॥**

स्वशाखासूत्रपरिग्रहनियमः

[२]**यः स्वशास्त्रं परित्यज्य परशास्त्रेण वर्तते। भ्रूणहत्याकृतो दोषस्तस्य स्यान्नात्र संशयः॥**

## आपस्तम्बः

अग्निकार्योपयुक्तशेषेणोदकेन लौकिककर्मकरणनिषेधः

[३]**नाग्न्युदकशेषेण वृथाकर्माणि कुर्वीताऽऽचामेद्वा॥**

(१) अग्न्युदकशेषेण अग्निपर्युक्षणाद्यर्थोपात्तोदकशेषेण वृथा यतः अतः कर्माणि न कुर्वीतेत्यर्थः।

पृ. १३४

वृथाकर्माणि केवलदृष्टप्रयोजनानि। ब्रक. १८४

(२) अग्निपरिचर्यायां परिसमूहने परिषेचने च यदुपयुक्तमुदकं तच्छेषेण वृथाकर्माणि अदृष्टप्रयोजनरहितानि पादप्रक्षालनादीनि न कुर्वीत। नाप्याचामेत्। अवृथाकर्मत्वादस्य पुनः प्रतिषेधः। उ.

ओंकारपूर्वकत्वमनुज्ञादिवाक्यानाम्

[४]**यज्ञेषु चैतदादयः प्रसवाः॥**

(१) 'प्रणय' इत्यादयः प्रसवाः अनुज्ञानवाक्यानि।

§ ब्रक. ५५

(२) पुनरप्योंकारमेव स्तौति– यज्ञेष्विति। यज्ञेषु दर्शपूर्णमासादिषु एतदादयः ओंकारादयः प्रसवा अनुज्ञावाक्यानि भवन्ति ब्रह्मादीनाम्– 'ॐ प्रणय, ॐ निर्वप, ॐ स्तुध्वम्' इति। उ.

---

(१) संर. ७३.

(२) संर. ७३ : ६११ (निर्वपणसंस्रवणलाजहोमनित्यहोमान् कायतीर्थेन कुर्यात्) एतावदेव.

(३) बौध. २।१८।१९ यन्त्र (यत्र); कुर. ४९ तत्र मौने युक्तः (अत्र मौनमुक्तं) आश्रमिभिः (सुमतिभिः) संभाषीत (संभाषेत).

(४) बौध. ४।१।२८; ब्रक. १८१ हृतिकां (हृतिं) शङ्खवसिष्ठाङ्गिरोबृहस्पतिपैठीनसिबौधायनाः.

§ निप्र. पप्र. ब्रकवत्।

(१) चद्रा. १२२.

(२) कुभ. ११७१. 'बौधायनेन तृतीयप्रश्ने भ्रूणहत्याप्रायश्चित्तोक्तेश्च' इत्युक्तम्, परंतु बौधायने नोपलभ्यते।

(३) आध. १।४।२०; हिध. २६।१।१३९; अप. १।२१; ब्रक. १३३, १८४; स्मृच. १०२ (वा०); वीमि. १।२१; मुक्ता. २२४.

(४) आध. १।१३।८; हिध. २६।४।२२; ब्रक. ५५, २४६; निप्र. २६; पप्र. ७८.

**[1]लोके च भूतिकर्मस्वेतदादीन्येव वाक्यानि स्युर्यथा पुण्याहं स्वस्त्यृद्धिमिति ॥**

यथा यज्ञेषु ओंकारादयः प्रसवाः, लोके च भूतिकर्मसु पाणिग्रहणादिषु एतदादीन्येव वाक्यानि स्युः । तान्युदाहरति– यथेति । पुण्याहवाचने– 'ॐ कर्मणः पुण्याहं भवन्तो ब्रुवन्तु' इति वाचयिता वदति, 'ॐ पुण्याहं कर्मणोऽस्तु' इति प्रतिवक्तारः । 'ॐ कर्मणे स्वस्ति भवन्तो ब्रुवन्तु' इति वाचयिता, 'ॐ कर्मणे स्वस्ति' इतीतरे । 'ॐ कर्मण ऋद्धिं भवन्तो ब्रुवन्तु' इति वाचयिता, 'ॐ कर्मर्ध्यताम्' इतीतरे । तस्मादेवं प्रशस्त ॐ कार इति । ‡ उ.

**[2]तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।**
**प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥**

ओंकारप्रयोगे मात्रानियमः

**[3]त्रिमात्रस्तु प्रयोक्तव्यः कर्मारम्भेषु सर्वशः ।**
**तिस्रः सार्धास्तु कर्तव्या मात्रास्तत्त्वार्थचिन्तकैः ॥**

**[4]देवताध्यानकाले तु प्लुतं कुर्यान्न संशयः ॥**

‡ पप्र. उगतम् ।

(१) आध. १।१३।९ ; हिध. २६।४।२३ स्वस्त्यृद्धि (स्वस्त्ययनमृद्धि) ; मेधा. २।८३ (तदादीनि वाक्यानि स्युः) एतावदेव ; ब्रक. ५५ ; निप्र. २७ लोके च भूतिकर्मसु (लोके भूतिकर्मसु च) ; पप्र. ७८ (लोकेषु भूतिकर्मसु चैतदादीन्येव वाक्यानि स्युर्यथा पुण्याहं स्वस्तिमृद्धिमिति).

(२) चव्र. ३६ ; निप्र. २६ ; आम. ३.

(३) चव्र. ३७ ; निप्र. २६ ; आम. ३ सार्धास्तु (सार्धाश्च).

(४) चव्र. ३७ प्लुतं (प्लुतः) ; निप्र. २६ ध्यान (ज्ञान).

यज्ञोपवीतिकर्तृकाणि कर्माणि

**[1]उपासने गुरूणां वृद्धानामतिथीनां होमे जप्यकर्मणि भोजन आचमने स्वाध्याये च यज्ञोपवीती स्यात् ॥**

(१) सर्वेषामेव कर्मणां शेषभूतमाचमनं विधास्यंस्तदुपयोगिनो विधीनाह– उपासने इति । गुरूणाम् आचार्यादीनामन्येषां च वृद्धानां पूज्यानामतिथीनां च उपासने यदा तानुपास्ते तदा, होमे साङ्गे पित्र्यादन्यत्र, जप्यकर्मणि जपक्रियायाम्, भोजनाचमनयोश्च, स्वाध्यायाध्ययने च यज्ञोपवीती स्यात् यज्ञोपवीती भवेत् । वासोविन्यासविशेषो यज्ञोपवीतम् । 'दक्षिणं बाहुमुद्धरतेऽवधत्ते सव्यमिति यज्ञोपवीतम्' (तैआ. २।१।१) इति ब्राह्मणम् । वाससोऽसंभवेऽनुकल्पं वक्ष्यति– 'अपि वा सूत्रमेवोपवीतार्थे' (आध. २।४।२३) इति । मनुरप्याह– 'कार्पासमुपवीतं स्याद्विप्रस्योर्ध्ववृतं त्रिवृत् ।' (मस्मृ. २।४४) इति, 'उद्धृते दक्षिणे पाणावुपवीत्युच्यते बुधैः ।' (मस्मृ. २।६३) इति च । एषु कर्मसु यज्ञोपवीतविधानात्कालान्तरे नावश्यंभावः । उ.

(२) एतेषु कर्मसु यज्ञोपवीतविधानात् कालान्तरे नावश्यंभाव इति केचिद्व्याचक्षते । 'कायस्थमेव तत्कार्यमुत्थाप्यं न कदाचन ।', 'सदोपवीतिना भाव्यं सदा बद्धशिखेन च ।' इत्यादिबहुस्मृतिविरोधाच्छिष्टाचारविरोधाच्च तदनादरणीयमित्यन्ये । मुक्ता. ९२

(३) अधुना ऋषिकर्मणि भूतयज्ञे ब्रह्मयज्ञादौ किं भवतीति विचार्यते । तत्र धर्मप्रश्ने पञ्चमे पटले आदिसूत्रे

(१) आध. १।१५।१ ; हिध. २६।४।६० जप्यकर्मणि भोजन आचमने स्वाध्याये (जपकर्मणि स्वाध्याये भोजन आचमने) ; ब्रक. ६१ होमे जप्य (होमेज्य) ; मभा. १।३८ ; गौमि. १।३५ ; गप. ८८ जप्य (जप्ये) (स्वाध्याये०) ; निप्र. ३२ जप्य (जप) भोजन आचमने (भोजने च आचमने च) ; पप्र. ८९ ; मुक्ता. ९२ ; प्रका. ३०१ (भोजन आचमने स्वाध्याये च यज्ञोपवीती स्यात्) एतावदेव ; बाल. १।२९ पृ. १५४, १५५ ; बौवि. १।८।५.

'उपासने गुरूणां वृद्धानामतिथीनां होमे जप्यकर्मणि' इत्यादिना यज्ञोपवीतमुक्तम् । तत्स्पष्टमुज्ज्वलाकारेण व्याख्यातम्— पितृकर्मणोऽन्यत्र होमे यज्ञोपवीतमिति । तेन भूतयज्ञब्रह्मयज्ञमनुष्ययज्ञादौ यज्ञोपवीतं भवति, होमत्वात्, ब्रह्मयज्ञे च पितृसूक्तादौ जपत्वात् । श्रौते 'सप्तर्षिभ्यस्त्वा सप्तर्षीन् जिन्व' इत्यादौ यज्ञोपवीतेनैव कुर्वन्तीति दिक् । बाल. १।२९ पृ. १५४

अप्सु आचमननिषेधः

[१]**नाप्सु सतः प्रयमणं विद्यते ॥**

येन प्रयतो भवति तत् प्रयमणम् आचमनम् । करणे ल्युट् । तदप्सु सतो वर्तमानस्य न भवति । जलमध्ये आसीनोऽपि नाऽऽचामेत् । उ.

किंचिदप्रायत्यनिमित्तापवादः

**मूढस्वस्तरे चासंस्पृशन्नन्यानप्रयतान् प्रयतो मन्येत ॥**

'पतितचण्डालसूतिकोदक्याशवस्पृष्टितत्स्पृष्ट्युपस्पर्शने सचेलम्' (गौध. १४।२९) इति गौतमः । तस्मिन्विषये इदमुच्यते । आसनतया शयनतया वा सुष्ठ्वास्तीर्णः पलालादिसंघातः स्वस्तरः । पृषोदरादिषु दर्शनाद्रूपसिद्धिः । यत्रातिश्लक्ष्णतया पलालादेर्मूलाग्रविभागो न ज्ञायते स मूढः । मूढश्चासौ स्वस्तरश्च मूढस्वस्तरः तस्मिन् पतितादिष्वप्रयतेष्वासीनेषु यः कश्चित्प्रयत उपविशेत् न च तान् संस्पृशेत् । तदा स प्रयतो मन्येत । यथा प्रयतमात्मानं मन्यते प्रयतोऽस्मीति तथैव मन्येत । नैवंविधे विषये तत्स्पृष्टिन्यायः प्रवर्तते इति । उ.

अवुपस्पर्शननिमित्तानि

[२]**स्वप्ने क्षवथौ शिङ्घाणिकाश्र्वालम्भे लोहितस्य केशानामग्नेर्गवां ब्राह्मणस्य स्त्रियाश्चाऽऽलम्भे महापथं च गत्वाऽमेध्यं चोपस्पृश्याप्रयतं च मनुष्यं नीवीं च परिधायाप उपस्पृशेत् ॥**

(१) शिङ्घाणिकाश्रु नासिकानिर्गतः श्लेष्मा नेत्रजलं च, तयोः आलम्भे स्पर्शे । अत्राग्निगोब्राह्मणानां स्पर्शे यदाचमनं तद्विहितस्पर्शेतरस्पर्शमात्रनिमित्तकम्, न तु तत्स्पर्शजन्याप्रायत्यनिमित्तकम् । महापथः राजमार्गः । नीवीं परिधाय ग्रन्थिं कृत्वेत्यर्थः । ब्रक. १३७–१३८

(२) स्वप्नः स्वापः, क्षवथुः क्षुतम्, तयोः कृतयोः । शिङ्घाणिका नासिकामलम्, अश्रु नेत्रजलम्, तयोरालम्भे स्पर्शे । लोहितस्य रुधिरस्य, केशानां शिरोगतानां भूमिगतानां च, अग्न्यादीनां चतुर्णामालम्भे । महापथं च गत्वा । अमेध्यं च गोव्यतिरिक्तानां मूत्रपुरीषादि ताम्बूलनिषेकादि चोपस्पृश्य । अप्रयतं च मनुष्यमुपस्पृश्य । नीवी प्रसिद्धा, तद्योगादधोवासो लक्ष्यते । तच्च परिधाय । अप उपस्पृशेत्, केषुचित्स्नानं केषुचिदाचमनं केषुचित् स्पर्शनमात्रम्, यावता प्रयतो मन्यते । ¶ उ.

[१]**आर्द्रं वा शकृदोषधीर्भूमिं वा ॥**

(१) शकृत् गोशकृत् । अप. १।१९६

(२) उपस्पृशेदित्येव । त्रिषु आर्द्रशब्दः संबध्यते लिङ्गवचनादिविपरिणामेन । आर्द्रं वा शकृदुपस्पृशेत्, ओषधीर्वा आर्द्राः, भूमिं वा आर्द्राम् । पूर्वोक्तेष्वेव कल्पेषु वैकल्पिकमिदम् । उ.

लौकिकफलोद्देशेन धर्माचरणनिषेधः

[२]**नेमं लौकिकमर्थं पुरस्कृत्य धर्मांश्चरेत् ॥**

(१) इमं धनकीर्त्यादिकम्, पुरस्कृत्य उद्दिश्य । ब्रक. १८

---

(१) आध. १।१५।१०, १३; हिध. २६।४।६९,७२.

(२) आध. १।१६।१४ ; हिध. २६।५।१३ क्षवथौ (क्षवथौ) ; अप. १।१९६ क्षवथौ (क्षवथौ) प्रयतं च (प्रयतं) याप उप (योप) ; ब्रक. १३७ हिधवत् ; स्मृच. ९८ हिधवत् : १०० (नीवीं च परिधायाप उपस्पृशेत्)

¶ स्मृच. मुक्ता. उगतम् ।

एतावदेव ; मुक्ता. २३५ हिधवत् ; संदी. २१ पथं च (पथं) शेषं हिधवत्.

(१) आध. १।१६।१५ ; हिध. २६।५।१४ भूमिं वा (भूमिं वनस्पतिं चाऽऽचामेद्वा) ; अप. १।१९६ ; ब्रक. १३७ ; स्मृच. १००.

(२) आध. १।२०।१ ; हिध. २६।६।१५ ; ब्रक. १८ ; क्रुर. २४ नेमं (नेदं).

(२) इमं लौकिकं लोके विदितं ख्यातिलाभपूजात्मकम् अर्थं प्रयोजनं पुरस्कृत्य अभिसंधाय धर्मान् न चरेत्। उ.

[1]**निष्फला ह्यभ्युदये भवन्ति ॥**

(१) अभ्युदये शास्त्रीयफलविषये। ब्रक. १८

(२) किं कारणम्?– निष्फला इति। हि यस्मात् एवं क्रियमाणा धर्मा अभ्युदये फलकाले निष्फला भवन्ति। लोकार्थं ह्यसौ धर्मं चरति, न कर्तव्यमिति श्रद्धया। न च श्रद्धया विना धर्मः फलं साधयति, 'यो वै श्रद्धामनारभ्य' (तैसं. १।६।८।१) इति श्रुतेः। उ.

[2]**तद्यथाऽऽम्रे फलार्थे निर्मिते छाया गन्ध इत्यनूत्पद्येते एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्ते ॥**

किमत्रेदानीं दृष्टं फलं त्याज्यमेव? नेत्याह– तद्यथेति। तदिति वाक्योपन्यासे। फलार्थं ह्याम्रवृक्षो निर्मीयते आरोप्यते। तस्मिन् फलार्थे निर्मिते छाया गन्धश्चानूत्पद्येते। एवं धर्मं चर्यमाणमर्थाः ख्यात्यादयोऽनूत्पद्यन्ते अनुनिष्पद्यन्ते। तथैव स्वीकार्याः, न चोद्देश्यतया। तथा चाऽऽह– 'यथेक्षुहेतोः सलिलं प्रसेचयंस्तृणानि वल्लीरपि च प्रसिञ्चति। तथा नरो धर्मपथेन वर्तयन् यशश्च कामांश्च वसूनि चाश्नुते ॥' इति। उ.

[3]**नो चेदनूत्पद्यन्ते न धर्महानिर्भवति ॥**

यद्यपि दैवादर्था नानूत्पद्यन्ते तथाऽपि धर्मस्तावद्भवति। स च स्वतन्त्रः पुरुषार्थः। किमन्यैरर्थैरिति। उ.

---

(१) आध. १।२०।२; हिध. २६।६।१६; ब्रक. १८; कुर. २४.

(२) आध. १।२०।३; हिध. २६।६।१७; पमा. ५१ इत्यनूत्पद्येते (इत्यनूद्यते) अनूत्पद्यन्ते (अनूद्यन्ते) स्मृतिः; पप्र. ६७ छाया गन्ध इति (छायागन्धौ); आन. २ (धर्मं चर्यमाणमर्था अनूत्पद्यन्ते) एतावदेव.

(३) आध. १।२०।४; हिध. २६।६।१८ नो (न).



दानानामुदकपूर्वकता तदपवादश्च

[1]**सर्वाण्युदकपूर्वाणि दानानि ॥**

सर्वाणीति वचनात् भिक्षाऽप्युदकपूर्वमेव देया। उ.

[2]**यथाश्रुति विहारे ॥**

विहारे यज्ञकर्मणि यानि दानानि दक्षिणादीनि, तानि यथाश्रुत्येव, नोदकपूर्वाणि। उ.

क्षारादिसंसृष्टस्य होमनिषेधः

[3]**न क्षारलवणहोमो विद्यते ॥**

यद्वक्ष्यमाणं पश्यतो लालोत्पद्यते तत् क्षारं गुडमरीचिलिकुचादि। क्षारलवणसंसृष्टं न होतव्यम्। उ.

अभोजनीयद्रव्येण यागनिषेधः

[4]**यदार्याणामभोजनीयं स्यान्न तेन यजेत ॥**

स्त्र्यनुपेतयोर्होमानधिकारः

[5]**न स्त्री जुहुयात् ॥**

**नानुपेतः ॥**

प्रयोजयिताऽनुमन्ता कर्ता च कर्मफलभागिनः

[6]**प्रयोजयिता मन्ता कर्तेति स्वर्गनरकफलेषु कर्मसु भागिनः ॥**

---

(१) आध. २।९।८; हिध. २७।१।१२३; संत. ८९४; मुक्ता. ४३; आन. १७८.

(२) आध. २।९।९; हिध. २७।१।१२४; मुक्ता. ४३.

(३) आध. २।१५।१४; हिध. २७।३।४८; अप. १।१०३; स्मृच. २१२ : ४५५ (श्रा.); संर. १९५.

(४) स्मृच. २३१; पप्र. १११.

(५) आध. २।१५।१७–१८; हिध. २७।३।५१–५२; संर. ६१२.

(६) आध. २।२९।१; हिध. २७।६।१४ मन्ता (अनुमन्ता); ब्रक. ५० (कर्मसु०) शेषं हिधवत्; चव्र. ३२ (प्रयोजयिताऽनुमन्ता कर्ता चेति स्वर्गनरकफलेषु भागिनः); पप्र. ७१ ब्रकवत्.

ननु शास्त्रफलं प्रयोक्तरि, तत्कथमन्यकृतमेनोऽन्यं स्पृशतीति? बहुविधत्वात् कर्तृभेदस्येत्याह– प्रयोजयितेति। धर्ममधर्मं वा प्रकुर्वाणं यः प्रयुङ्क्ते 'इदमित्थं कुरु' इति, स प्रयोजयिता। स चानेकप्रकारः– आज्ञापकोऽभ्यर्थयिता अनुग्राहक इति। भृत्यादेर्निकृष्टस्य प्रवर्तना आज्ञा। गुर्वादेराराध्यस्य प्रवर्तना अभ्यर्थना। अनुग्रहो द्विविधः– उपदेशस्तत्सधर्माचरणं चेति। तत्र य इत्थमर्थमुपदिशति– 'त्वं शत्रुमित्थं व्यापादय, धर्मार्जनेऽयं तेऽभ्युपायः' इति, स उपदेष्टा। यः पुनः केनचिज्जिघांसितं पलायमानं वा निरुणद्धि, निरुद्धश्च हन्यते, स निरोद्धा अनुग्राहकः। मन्ता अनुमन्ता। यस्यानुमतिमन्तरेणार्थो न निर्वर्तते स राजादिको धर्माधर्मयोरनुमन्ता। कर्ता साक्षात् क्रियाया निर्वर्तकः। एते त्रयोऽपि स्वर्गफलेषु नरकफलेषु च कर्मसु धर्मेष्वधर्मेषु च भागिनः फलस्यांशभागिनः अंशभाजः। सर्वेषां च यथाकथंचित् कर्तृत्वम्। उ.

यत्नाधिक्ये फलाधिक्यम्

**[1]यो भूय आरभते तस्मिन् फलविशेषः ॥**

तेषु प्रयोजकादिषु यो भूय आरभते तस्य व्यापारोऽर्थनिर्वृत्तावधिकमुपयुज्यते तस्मिन् फलविशेषो भवति। उ.

दक्षिणबाहूद्धरणनिमित्तानि

**[2]देवागारे तथा श्राद्धे गवां गोष्ठे तथाऽध्वरे।**
**दाने ह्याचमने चैव संध्ययोः साधुसंगमे ॥**

**[1]अग्न्यागारे विवाहे च स्वाध्याये भोजने तथा।**
**उद्धरेद्दक्षिणं पाणिं ब्राह्मणानां क्रियापथे ॥**

(१) उद्धरेद्दक्षिणं पाणिमिति। सव्येंऽसे वस्त्रं निधाय दक्षिणं बाहुमुत्तरीयाद्बहिः कुर्यादित्यर्थः। ¶ ब्रक. ६२

(२) सव्येंऽशे वस्त्रं निधाय दक्षिणं बाहुमुत्तरीयाद् बहिः कुर्यादित्यर्थः। एवं च द्वितीयाश्रुत्या वस्त्राद्बहिःकरणं दक्षिणपाणिसंस्कारः। स कर्मसौकर्यार्थः। न च निष्फलः स संस्कारविधिः। अर्थात् कर्माङ्गदक्षिणपाणिसंस्कार इति कल्पनादशायां देवागारादिपदोपस्थाप्यदेवार्चनादिकर्मसंबन्धित्वलाभात् एतद्वाक्योपात्तव्यतिरिक्तकर्मसु नायं नियमः। तथा शीतत्राणार्थवस्त्रान्तरादप्युद्धरणमविशेषात्। न ह्येतद्वस्त्रसंस्कारः, वस्त्रस्याश्रुतत्वात्, येन फललाभाय कर्माङ्गमुत्तरीयमेव गच्छेत्। वस्त्रसंस्कारस्तु लौकिकेनाप्यविशेषात्। अत एवाऽऽचमने कण्ठप्रावरणनिषेधात्तद्धारणार्थं शीत(त्राणार्थ)वस्त्रस्यापि दक्षिणांशात् बहिःकरणम्। भोजनेऽपि प्राणाहुत्यङ्गमेव संस्कारः। निप्र. २९–३०

पादुकावर्जननिमित्तानि

**[2]अग्न्यगारे गवां गोष्ठे देवब्राह्मणसंनिधौ।**
**आहारे जपकाले च पादुके परिवर्जयेत् ॥**

आर्द्रवस्त्रतावहिर्जानुतयोर्निषेधः

**[3]आर्द्रवासास्तु यः कुर्याज्जपहोमप्रतिग्रहान्।**
**सर्वं तद्राक्षसं विद्याद्बहिर्जानु च यत्कृतम् ॥**

---

(१) आध. २।२९।२; हिध. २७।६।१५; ब्रक. ५०; चव्र. २२; पप्र. ७१.

(२) ब्रक. ६२; चव्र. ४१ उत्तरार्धे (संध्ययोश्च द्वयोः साधुसंगमे गुरुसंनिधौ ॥); चदा. १०७ चव्रवत्; निप्र. २९ उत्तरार्धे (संध्ययोरुभयोः साधुसंगमे गुरुसंनिधौ ॥); आर. ७ चव्रवत्; पप्र. ९० दाने ह्याचमने चैव (संनिधौ ब्राह्मणानां च).

¶ चदा. चव्र. आर. ब्रकवत्।

(१) ब्रक. ६२ क्रियापथे (कृपापथे); चव्र. ४१ च (तु); चदा. १०७ विवाहे च (विवाहेषु); निप्र. २९ क्रियापथे (च संनिधौ) शेषं चदावत्; आर. ७ अग्न्यागारे विवाहे च (अग्न्यगारविवाहेषु) पाणिं (बाहुं); पप्र. ९० अग्न्या (अग्न्य) क्रियापथे (यथायथम्).

(२) स्मृच. २२७ आहारे जप (जप्ये भोजन); आर. ७ देवब्राह्मण (ब्राह्मणानां च); इन्दु. १२.

(३) इन्दु. १३; संदी. ५.

शुष्कवस्त्रतार्द्रवस्त्रतयोर्व्यवस्था

[1]यज्जले शुष्कवस्त्रेण स्थले चैवाऽऽर्द्रवाससा।
जपो होमस्तथा दानं तत्सर्वं निष्फलं भवेत्॥

सप्तवाताहतमपि शुष्कम्। संदी. ५

नीलवस्त्रधारणनिषेधः

[2]नीलीरक्तं यदा वस्त्रं ब्राह्मणोऽङ्गेषु धारयेत्।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति॥

नीलं तु सर्वथा निषिद्धमेव, 'नीलीरक्तं यदा वस्त्रम्' इत्यापस्तम्बवचनात्। नीलीरक्तमपि पट्टादिवस्त्रं न निषिद्धम्, 'कम्बले पट्टवस्त्रे च नीलीरागो न दुष्यति। स्त्रीणां क्रीडार्थसंभोगे शयनीये न दुष्यति॥' इति आचारचिन्तामणावुक्तेः। संदी. ६

समिदिध्मपरिधिमानानि

[3]समिदेकप्रादेशा द्विप्रादेश इध्मः त्रिप्रादेशः परिधिः॥

## वसिष्ठः

शाखाव्यवस्थाप्रयुक्ता कर्माधिकारव्यवस्था तदपवादश्च, शाखारण्डसंज्ञा

[4]पारम्पर्यागतो येषां वेदः सपरिबृंहणः।
तच्छाखं कर्म कुर्वीत तच्छाखाध्ययनं तथा॥

(१) संदी. ५.
(२) संदी. ६.
(३) पप्र. १०५.
(४) स्मृच. ४९; पमा. १४२; मपा. ९८ ध्ययनं (ध्ययने); प्रपा. २५७; मर. १० बृंहणः (बृंहितः) खं (ख्यं); गभा. २३८; संप्र. ५०५; चस. ३०; मुक्ता. २९ खं कर्म (खाकर्म), याज्ञवल्क्यः; आर. ६; विपा. ५१९; बाल. ११२६ पृ. १४९ : ११८९ पृ. २५३ ध्ययनं तथा (ध्ययने कृते) इत्यपि पाठः; संर. ३०४ उत्तरार्धे (प्रथमं तमधीयीत तच्छाखं कर्म चाऽऽचरेत्॥); संदी. ३०७.

(१) परिबृंहणानि अङ्गानि। अत्र येषां यो वेदः पारम्पर्यागत इति यच्छब्दाध्याहारेण व्याख्येयम्, अन्यथा तच्छब्दानुपपत्तेः। वेदोऽत्र एका शाखा, न शाखासमूहः। ¶ संप्र. ५०५

(२) सपरिबृंहणः साङ्गोपाङ्गः। चम. ३०

(३) 'अध्ययनं तथा' इति क्वचित्पाठः। † बाल. ११८९ पृ. २५३

[1]न जातु परशाखोक्तं बुधः कर्म समाचरेत्।
आचरन्परशाखोक्तं शाखारण्डः प्रकीर्तितः॥

जातु कदाचिदपीत्यर्थः। संर. ३०५

[2]स्वशाखाविधिमुत्सृज्य त्वन्यस्य विधिमाचरेत्॥
अप्रमाणमृषिं कृत्वा त्वन्धे तमसि मज्जति॥
[3]स्वकं कर्म परित्यज्य यदन्यत्कुरुते नरः।
अज्ञानादथवा लोभात्स तेन पतितो भवेत्॥‡
[4]ऋक्शाखी नैव कुर्वीत स्वकीयं परशाखया।
प्रमादाद्यदि कुर्वीत पुनः संस्कारमर्हति॥

¶ संदी. संप्रवत्। संर. संप्रगतम्।
† शेषं चमवत्।
‡ कुभव्याख्यानं 'बह्वल्पं वा स्वगृह्योक्तम्' इति कात्यायनवचने द्रष्टव्यम्।

(१) स्मृच. ५० : २१५ समाचरेत् (समारभेत्) पू.; प्रपा. २५७; संप्र. ५०६; विपा. ५१९ प्रकीर्तितः (स उच्यते); संग. १० विपावत्; संर. ३०५ विपावत्.
(२) धप्र. ४१; संप्र. ५०६ पूर्वार्धे (यः स्वशाखोक्तमुत्सृज्य परशाखोक्तमाचरेत्।) त्वन्धे (सोऽन्धे); बाल. ११८९ पृ. २५३ संप्रवत्, स्मृत्यन्तरम्; संग. १० संप्रवत्; कुभ. १७३५ (=).
(३) धप्र. ४१; बाल. ११८९ पृ. २५३ गृह्यपरिशिष्टे; कुभ. १७३४, १७३५ (=).
(४) धप्र. ४१ ऋक्शाखी नैव (स्वशाखेनैव); कुभ. ४४३, १७३५ (=).

[1]यत्र नास्ति स्वशाखोक्तमृक्शाखोक्तं समाचरेत् ।
पुनर्नार्हति संस्कारमन्यथाऽर्हति चेत्पुनः ॥

[2]यजुःशाखाविधानेन यदि बह्वृचकर्म च ।
कृतं चापि हि तत्कर्म पुनः कुर्याद्यथाविधि ॥

[3]ऋक्शाखाविधिना कर्म यदि स्यादन्यशाखिनाम् ।
न तत्कर्म पुनः कुर्यादिति यज्ञविदां मतम् ॥

हस्तस्थिततीर्थानि

[4]अङ्गुष्ठमूलस्योत्तरतो रेखा ब्राह्मं तीर्थम् ॥

[5]अङ्गुलिकनिष्ठिकामूले दैवं तीर्थम् ॥

[6]अङ्गुल्यमृषीणाम् ॥

[7]अङ्गुल्यग्रेषु मानुषम् ॥

[8]पाणिमध्य आग्नेयम् ॥

[9]प्रदेशिन्यङ्गुष्ठयोरन्तरा पित्र्यम् ॥

(१) धप्र. ४१ स्वशाखोक्तम् (स्वशाखीये); कृभ. ४४३ (=) मन्यथा (मन्यदा): १७३५ (=) स्वशाखोक्तम् (स्वशाखा चेत्).

(२) धप्र. ४१; कृभ. ४४३ (=) यदि बह्वृचकर्म च (बह्वृचैर्यदि कर्म तत्) कृतं चापि हि (कृतं चेत्तर्हि): १७३५ (=).

(३) धप्र. ४१; कृभ. ४४४, १७३५ (=).

(४) वस्मृ. ३।२९.

(५) वस्मृ. ३।५८; पप्र. ७६.

(६) वसिष्ठस्मृतेः पुस्तकान्तरे इदं सूत्रमधिकम्; पप्र. ७६. (अङ्गुल्यग्रे ऋषीणाम्).

(७) वस्मृ. ३।५९ ग्रेषु मा (ग्रे मा); ब्रक. ५३; वीमि. १।१९ (अङ्गुष्ठस्याग्रे मानुषम्); पप्र. ७६.

(८) वस्मृ. ३।६०; वीमि. १।१९ (पाणि०); पप्र. ७६.

(९) वस्मृ. ३।६१; बौधि. १।८।१३ रन्तरे (रन्तरा).

पुनराचमननिमित्तानि

[1]सुप्त्वा भुक्त्वा पीत्वा क्षुत्वा रुदित्वा स्नात्वा चाऽऽचान्तः पुनराचामेत् ॥

[2]वासश्च परिधाय ॥

प्राणायामस्वरूपम्

[3]सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥

धौतवस्त्रधारणम् अलंकारः शौचं मौनं जितेन्द्रियत्वं च कर्तृधर्माः

[4]जपहोमोपवासेषु धौतवस्त्रधरो भवेत् ।
अलंकृतः शुचिर्मौनी श्राद्धादौ विजितेन्द्रियः ॥

श्राद्धादावित्यादिशब्देन दानव्रतादिग्रहणम् ।

कृर. ४९

कर्तुः शुष्कवस्त्रतार्द्रवस्त्रतयोर्व्यवस्था

[5]यज्जले शुष्कवस्त्रेण स्थले चैवाऽऽर्द्रवाससा ।
जपो होमस्तथा दानं तत्सर्वं निष्फलं भवेत् ॥

(१) वस्मृ. ३।३८; मिता. १।१९६ पीत्वा क्षुत्वा रुदित्वा स्नात्वा (क्षुत्वा स्नात्वा पीत्वा रुदित्वा); मभा. १।४३ आचामेत् + (द्विः) शेषं मितावत्; वीमि. १।२० पृ. ४४ (आचान्तः पुनराचामेत्) एतावदेव; मुक्ता. २३६ पीत्वा क्षुत्वा रुदित्वा स्नात्वा (क्षुतं कृत्वा स्नात्वा पीत्वा रुदित्वा).

(२) वस्मृ. ३।३९; मिता. १।१९६; मभा. १।४३; वीमि. १।२० पृ. ४४ (वासो विपरिधाय च); मुक्ता. २३६.

(३) वस्मृ. २५।१३; ब्रक. १८१ शङ्खवसिष्ठाङ्गिरोबृहस्पतिपैठीनसिबौधायनाः.

(४) अप. १।२२५ पृ ४६१ वस्त्रधरो (वस्त्रः सदा) वृद्धवसिष्ठः, चव्र. ३५ श्राद्धादौ (श्रद्धावान्); चदा. १०८ चव्रवत्; कृर. ४९; निप्र. २८, पप्र. ८२ वासेषु (वारेषु).

(५) चदा. ९०; निप्र. २८ यज्जले (जले च); पप्र. ८२.

जपादिपदं वैदिककर्ममात्रोपलक्षणम् । निप्र. २९

मौनं कर्तृधर्मः तदपवादश्च

[1]जपकाले न भाषेत व्रतहोमादिकेषु च ।
एतेष्वेवावसक्तं तु यद्यागच्छेद्‌द्विजोत्तमः ।
अभिवाद्य तथा विप्रं योगक्षेमं तु कीर्तयेत् ॥

बर्हिरर्थकुशकाशादिदेवताः

[2]कुशस्तु रौद्रो विज्ञेयः काशं ब्राह्मं तथा स्मृतम् ।
आर्षं दौर्वं समाख्यातं विश्वामित्रं च वैष्णवम् ॥

सर्वौषधिगणः

[3]वालुकाशङ्खपुष्पी च कुष्ठं चैव वचा तथा ।
नागकेसरचूर्णं च सर्वौषधिगणो भृगो ॥

स्रुक्स्रुवप्रतिनिधी

[4]पलाशपत्रे निश्छिद्रे रुचिरे स्रुक्स्रुवौ मतौ ।
निदध्याद्वाऽश्वत्थपत्रे संक्षिप्ते होमकर्मणि ॥

## वृद्धवसिष्ठः

पवित्रादेः रौद्रत्वादिचातुर्विध्यम्

[5]कुशं तु रौद्रं विज्ञेयं कौशं ब्राह्मं तथा स्मृतम् ।
आर्षं तु दौर्वमाख्यातं वैश्वामित्रं तु वैष्णवम् ॥

दर्भाणां सप्तविधत्वम्, लवने कालादिनियमश्च

[6]विश्वामित्राः कुशाः काशा दूर्वा व्रीहय एव च ।
बल्वजाश्च यवाश्चैव सप्त दर्भाः प्रकीर्तिताः ॥
[7]नाऽऽर्द्रं लुनीयाद्रात्रौ तु लुनीयान्नापि संध्ययोः ॥

(१) कुर. ४९.
(२) प्रपा. ३४.
(३) अप. १।२७७.
(४) संदी. ३२ पुरश्चर्यार्णवे वसिष्ठसंहितायाम्.
(५) मुक्ता. २३४.
(६) मुक्ता. २३४ ; आन. २० (=).
(७) मुक्ता. २३४.

कुशप्रतिनिधयः विश्वामित्रशब्दनिर्वचनं च

कुशाभावेऽश्ववालो वा विश्वामित्रोऽथ वा यवाः ।
दूर्वाश्चैतेषु ये लब्धास्तेन कर्माणि कारयेत् ॥
श्रुतिस्मृतिषु भिन्नत्वाद्विप्राणां विश्वकर्मणाम् ।
विश्वासाच्चैव मित्रत्वाद्विश्वामित्र उदाहृतः ॥

कुशकाशाद्यभावे तु अन्ये दर्भा यथोचितम् ॥

बद्धशिखत्वस्य कर्माङ्गता

[1]मुक्तकेशैर्न कर्तव्यं प्रेतस्नानं विना क्वचित् ।
स्नानं दानं जपं होमं मुक्तकेशो न कारयेत् ॥

शिखाभिन्नकेशानामपि कर्मकाले बन्धः, 'मुक्तकेशै-...कारयेत् ॥' इति वृद्धवसिष्ठोक्तेः । न च पूर्वार्धे प्रेतस्नानान्यस्नाने एव मुक्तकेशनिषेधः, उत्तरार्धे स्नानपदवैयर्थ्यापत्तेः, स्नाने तदनुवादे दानादौ तद्विधौ वैरूप्यापत्तेः, उत्तरार्धे एव सर्वत्र तन्निषेधे वाक्यभेदापत्तेः, पूर्वार्धवैयर्थ्यापत्तेश्च । न च प्रेतस्नानपर्युदासार्थं पूर्वार्धम्, आद्यपादवैयर्थ्यापत्तेः । तेनोत्तरार्धैकवाक्यतया प्रेतस्नानान्यकर्ममात्रे मुक्तकेशनिषेधः । न चोत्तरार्धवैयर्थ्यम्, सर्वकर्मप्राप्त्यर्थत्वात् । न च केशपदं शिखापरम्, लक्षणायां मानाभावात् । मुक्तकेश इत्यत्रापि तथापत्तेश्च ।
¶ आर. ३.

## विष्णुः

आचमननिमित्तानि

[2]क्षुत्वा सुप्त्वा भुक्त्वा भोजनाध्ययनेप्सुः पीत्वा स्नात्वा निष्ठीव्य वासः परिधाय रथ्यामाक्रम्य मूत्रपुरीषे कृत्वा पञ्चनखास्थ्यस्नेहं स्पृष्ट्वा चाऽऽचामेत् ॥

¶ संदी. आरगतम् ।
(१) आर. ३ ; संदी. १०.
(२) विस्मृ. २२।७५ ; अप. १।१९६ सुप्त्वा भुक्त्वा (भुक्त्वा सुप्त्वा) (स्नात्वा०) परिधाय (विपरिधाय) मूत्रपुरीषे कृत्वा (कृतमूत्रपुरीषः) चाऽऽचामेत् (चाऽऽचामेत्) ; ब्रक. १३५ चाऽऽचामेत् (आचामेत्).

[1]चाण्डालम्लेच्छसंभाषणे च ॥

गवां मङ्गल्यषडङ्गम्

[2]गोमूत्रं गोमयं सर्पिः क्षीरं दधि च रोचना ।
षडङ्गमेतत्परमं मङ्गल्यं सर्वदा गवाम् ।

प्राणायामलक्षणम्

[3]सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥

वैवाहिकाग्नौ पाकयज्ञाः

[4]गृहाश्रमी वैवाहिकाग्नौ पाकयज्ञान्कुर्यात् ॥

श्रौतस्मार्तलौकिकाग्नीनां कर्मभेदेन व्यवस्था

[5]स्मार्तमौपासने कुर्याच्छ्रौतं वैतानिके गृही ।
लौकिके विधुराणां तु विधिरेष पुरातनः ॥
[6]बहवो यत्र होतारः शान्तिके पौष्टिके तथा ।
लौकिकेऽग्नौ तदा कुर्याद्गृह्याग्नौ न कदाचन ॥
चौलजातकगोदानस्नानोपनयनादिषु ।
लाजहोमे समित्कार्ये लौकिकोऽग्निर्विधीयते ॥

विवाहे लौकिकाग्निविधानं प्रथमविवाहे, द्वितीयादौ विभक्ताग्नौ विवाहविधानात्, औपासनार्थे होमविधानाच्च । आन. ६२

हस्तस्थिततीर्थानि

[7]अथ द्विजातीनां कनीनिकामूले प्राजापत्यं नाम तीर्थम् । अङ्गुष्ठमूले ब्राह्मम् । अङ्गुल्यग्रे दैवम् । तर्जनीमूले पित्र्यम् ॥

(१) विस्मृ. २२।७६; अप. १।१९६; ब्रक. १३५.

(२) विस्मृ. २३।५८–५९.

(३) विस्मृ. ५५।९.

(४) विस्मृ. ५९।१.

(५) प्रपा. ३१ विधुराणां तु (ऽपीतरेषां तु) पुरातनः (सनातनः); मुक्ता. ३५४.

(६) मुक्ता. ३३५; आन. ६२ तदा (तथा).

(७) विस्मृ. ६२।१–४.

स्नानमधिकारिविशेषणम्

[1]स्नातोऽधिकारी भवति दैवे पित्र्ये च कर्मणि ।
पवित्राणां तथा जप्ये दाने च विधिचोदिते ॥

(१) स्नानं प्रातःस्नानम्, तदभावे स्नानान्तरम् । निप्र. २७

(२) पवित्राणां मन्त्राणाम्, 'पावमान्यादीनां मन्त्रः पवित्रमित्युच्यते' इति निरुक्तकारवचनात् । तत्र 'शिरःस्नातस्तु कुर्वीत दैवं पित्र्यमथापि वा ।' इति मार्कण्डेयपुराणवचनात् शिरःस्नानमेव मुख्यः कल्पः । तदसामर्थ्ये तु 'अशिरस्कं भवेत्स्नानं स्नानाशक्तौ तु कर्मिणाम् ।' इति जाबालवचनात्, 'असामर्थ्याच्छरीरस्य कालशक्तिव्यपेक्षया । मन्त्रस्नानादयः सप्त एक इच्छन्ति सूरयः ॥' इति याज्ञवल्क्यवचनाच्च अशिरस्कस्नानादयोऽनुकल्पाः । प्रातःस्नानेनापि च सर्वकर्माधिकारः— 'सर्वमर्हति पूतात्मा प्रातःस्नायी जपादिकम् ।' इति दक्षवचनात् । आदिपदेन सर्ववैदिककर्मणामसंकोचेन ग्रहणम् ।

अथ तदहःकृत्येषु तदहःकृतस्नानस्यैवाधिकारसंपादकत्वम् । अहस्त्वं च 'उदयादोदयं भानोर्भौमसावनवासराः ।' इति सूर्यसिद्धान्तवाक्यात् सूर्योदयानन्तरकालस्यैवेति कथं सूर्योदयात्पूर्वं क्रियमाणस्य प्रातःस्नानस्य तदहःक्रियमाणक्रियाङ्गत्वमिति चेत्, न, 'दिवसस्याऽऽद्यभागे तु कृत्यं तस्योपदिश्यते ।' इत्युपक्रम्य 'उषःकाले तु संप्राप्ते शौचं कृत्वा यथार्थवत् । ततः स्नानं प्रकुर्वीत दन्तधावनपूर्वकम् ॥' इत्यादिना दक्षवचनेन उषःकालमारभ्यैव तदहःकृत्याभिधानेन उषःकालस्यापि तदहरन्तःपातित्वात् । स्पष्टं चेदं कालमाधवीयधृतब्रह्म-

(१) विस्मृ. ६४।४० चोदिते (बोधिते); अप. १।२२५ पृ. ४६१; ब्रक. ५६ चोदिते (नोदिते); स्मृच. १११; चव्र. ३४ जप्ये (जाप्ये) शेषं ब्रकवत्; चदा. ९० जप्ये (जाप्ये) प्रचेताः; कृर. ४५ पित्र्ये (पैत्रे) चोदिते (देशिते); निप्र. २७ जप्ये (जाप्ये); श्राकौ. ४८४ प्रथमपादः; पप्र. ८०; मुक्ता. २४७; आर. २ चोदिते (दर्शिते); संदी. २.

वैवर्तवाक्ये । यथा— ' त्रियामां रजनीं प्राहुस्त्यक्त्वाऽऽद्यन्तचतुष्टयम् । नाडीनां तदुभे संध्ये दिवसाद्यन्तसंज्ञिते ॥ ' । नाडीनामाद्यन्तचतुष्टयं त्यक्त्वेत्यन्वयः । मध्याह्नस्नानस्यापि च तदुत्तरकृत्येऽधिकारसंपादकत्वमाह्निकप्रकाशे वक्ष्यते । पप्र. ८०–८१

रात्रिगृहीतस्योदकस्य कर्मानर्हता

[1]न नक्तं गृहीतेनोदकेन देवपितृकर्म कुर्यात् ॥

दक्षिणबाहूद्धरणनिमित्तानि

[2]अग्निदेवब्राह्मणसंनिधौ दक्षिणं पाणिमुद्धरेत् ॥

प्रायत्यार्थमाचमनम्

[3]आचान्तः कर्मशुद्धः स्यात्ताम्बूलौषधजग्धिकृत् ॥

कर्मादौ संकल्पस्य कर्तव्यता

[4]संकल्प्य च यथा कुर्यात्स्नानदानव्रतादिकम् ।
अन्यथा पुण्यकर्माणि निष्फलानि भवन्ति वै ॥

यथा यथावदित्यर्थः । पुण्येत्युक्तेः शौचभोजनादौ दृष्टार्थे न संकल्पः । आर. ४

दक्षिणाभिमुखत्वस्य पित्र्यकर्माङ्गता उत्तराभिमुखत्वस्य च दैवकर्माङ्गता

[5]दक्षिणाभिमुखः कर्म चरेत् पित्र्यं यथाविधि ।
उत्तराभिमुखो दैवमिति दिङ्नियमः स्मृतः ॥

पित्र्ये दक्षिणाभिमुखत्वं बह्वृचेतरपरम्, तेषां पिण्डपितृयज्ञप्रकरणे ' सर्वकर्माणि तां दिशम् ' इति सूत्रे पित्र्ये आग्नेयीमुखत्वोक्तेः । आर. ६

काशदूर्वाणां कुशप्रतिनिधित्वम्

[6]कुशाभावे कुशस्थाने काशान्दूर्वां वा दद्यात् ॥

(१) विस्मृ. ६६।१. (२) विस्मृ. ७१।६०.

(३) आर. १.

(४) आर. ४.

(५) आर. ६.

(६) विस्मृ. ७९।२ ; अप. १।२२५ पृ. ४५८ काशान्दूर्वा वा ( काशदूर्वाश्च ) ; स्मृच. १०९ कुशाभावे ( कुशालाभे ) काशान् ( काशं ) ; स्मृसा. १०० काशान् ( काशं ) ; पप्र. ९९ स्मृसावत् ; मुक्ता. २३४.

दर्भाणामयातयामता

[1]दर्शे श्रावणमासस्य समन्त्रोत्पाटिताः कुशाः ।
अयातयामास्ते ज्ञेया नियोज्याः सर्वकर्मसु ॥

( १ ) वर्षमिति शेषः । प्रर. ५०

( २ ) अहन्यहनि दर्भच्छेदनासंभवे कालान्तरमुक्तं स्मृत्यन्तरे— ' मासि मास्याहृता दर्भास्तत्तन्मास्येव चोदिताः । ' इति । अस्याप्यसंभवे विष्णुः— दर्शे श्रावणमासस्येति । अयातयामाः अपर्युषिताः । नियोज्याः उपयुक्ता अप्यनिषेधेऽन्यत्र प्रयोज्या इत्यर्थः । यत्तु— ' अमायां नैव हिंस्यात्तु कुशांश्च समिधस्तथा । सर्वत्रावस्थिते सोमे हिंसायां ब्रह्महा भवेत् ॥ वनस्पतिगते सोमे यस्तु हिंस्याद्वनस्पतिम् । घोरायां ब्रह्महत्यायां युज्यते नात्र संशयः ॥ ' इति निषेधः, स यस्मिन्मुहूर्तत्रये वनस्पतिषु सोमो वसति तत्परः, न तु कृत्स्नामापर इति । योऽयं वनस्पतिगतसोमविशिष्टे काले छेदननिषेधः स लौकिकच्छेदनपरः, न तु इध्मादिच्छेदनपरः, तस्य विहितत्वादिति द्रष्टव्यम् । सोमवासकालस्तु गरुडपुराणेऽभिहितः— ' त्रिमुहूर्तं वसत्यर्के त्रिमुहूर्तं जले तथा । त्रिमुहूर्तं तथा गोषु त्रिमुहूर्तं वनस्पतौ ॥ ' इति । एतच्च अमामारभ्य ज्ञेयम् । संर. १५–१६

## शङ्खः लिखितः शङ्खलिखितौ च

स्नानमधिकारिविशेषणम्

[2]अस्नातस्तु पुमान्नार्हो जप्याग्निहवनादिषु ।
प्रातःस्नानं तदर्थं च नित्यस्नानं प्रकीर्तितम् ॥
[3]जप्तुकामः पवित्राणि अर्चिष्यन्देवताः पितॄन् ।
स्नानं समाचरेद्यत्तु क्रियाङ्गं तत्प्रकीर्तितम् ॥

( १ ) प्रपा. ३४ (=) ज्ञेया ( दर्भा ) सर्वकर्मसु ( स्युः पुनः पुनः ) ; प्रर. ५० ; प्रका. ३५ ; संर. १५ प्रपावत्.

( २ ) शंस्मृ. ८।२ अस्नातस्तु पुमान्नार्हो ( अस्नातः पुनरानर्हो ) ; अप. १।१०० च ( तु ) ; स्मृच. ११० च ( तु ) प्रकीर्तितम् ( प्रकीर्त्यते ) ; मुक्ता. २५४ च ( तु. )

( ३ ) शंस्मृ. ८।५ ; अप. १।१०० ; स्मृच. ११० ; मुक्ता. २५४ अर्चि ( ह्यर्चि ).

प्राणायामस्वरूपम्

[1]सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥

हस्तस्थिततीर्थानि

[2]कायं कनिष्ठिकामूले तीर्थमुक्तं मनीषिभिः ।
अङ्गुष्ठमूले च तथा प्राजापत्यं विचक्षणैः ।
अङ्गुल्यग्रे स्मृतं दैवं पित्र्यं तर्जनिमूलके ॥

कायम्, को ब्रह्मा, साऽस्य देवतेत्यर्थे 'कस्येत्' इत्यण् इत्वं च । ततश्च वृद्धिरायादेशश्च । पप्र.७६

[3]अङ्गुष्ठमूलस्योत्तरतः प्रागग्रायां रेखायां ब्राह्मं तीर्थम्, प्रदेशिन्यङ्गुष्ठयोरन्तरा पित्र्यम्, कनिष्ठिकातलयोरन्तरा प्राजापत्यम्, पूर्वेणाङ्गुलिपर्वाणि दैवम् ॥

$ एवं च कनीनिकामूलस्य तीर्थस्य प्राजापत्यकायदैवसंज्ञाः, आग्नेयसौम्यब्राह्मतीर्थसंज्ञा हस्तमध्यस्य, अङ्गुल्यग्रस्य दैवमानुषार्षतीर्थसंज्ञाः, अङ्गुष्ठमूलस्य प्राजापत्यब्राह्मतीर्थसंज्ञे, तदुत्तररेखाया ब्रह्मतीर्थसंज्ञा, तर्जन्यङ्गुष्ठमध्यस्य पितृतीर्थसंज्ञेत्युक्तं भवति ।

¶ पप्र. ७६–७७

आचमनविधिः

[1]विना यज्ञोपवीतेन तथा मुक्तशिखोऽपि वा ।
अप्रक्षालितपादस्तु आचान्तोऽप्यशुचिर्भवेत् ॥
बहिर्जानुरुपस्पृश्य एकहस्तार्पितैर्जलैः ।
समलाभिस्तथाऽद्भिश्च नैव शुद्धिमवाप्नुयात् ॥

पुनराचमननिमित्तानि

[2]स्नानभोजनकालेष्वाचान्तः पुनराचामेत् ॥
[3]स्नाने भोजनकाले च संध्ययोरुभयोरपि ।
आचान्तः पुनराचामेज्जपदानार्चनेषु च ॥

ब्राह्मणपरीक्षा

[4]ब्राह्मणान्न परीक्षेत दैवे कर्मणि धर्मवित् ।
पित्र्ये कर्मणि संप्राप्ते युक्तमाहुः परीक्षणम् ॥

यज्ञपात्रशुद्धिः

[5]मार्जनाद्यज्ञपात्राणां पाणिना यज्ञकर्मणि ।
उष्णाम्भसा तथा शुद्धिं सस्नेहानां विनिर्दिशेत् ॥

रजस्वलाशुद्धिः कर्मापेक्षा

शुद्धा भर्तुश्चतुर्थेऽहि स्नानेन स्त्री रजस्वला ।
दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुध्यति ॥

आचमननिमित्तानि

[6]कृत्वा मूत्रं पुरीषं वा स्नात्वा भोक्तुमनास्तथा ।
भुक्त्वा क्षुत्वा तथा सुप्त्वा पीत्वा चाम्भोऽवगाह्य च ॥

---

$ सर्वतीर्थवचनानां सारांशोऽयम् ।

(१) शंस्मृ. ७।१४ ; ब्रक. १८१ शङ्खवसिष्ठाङ्गिरोबृहस्पतिपैठीनसिबौधायनाः .

(२) शंस्मृ. १०।१–२ ; ब्रक. ५३ मनीषिभिः (द्विजस्य तु) विचक्षणैः (प्रकीर्तितम्) तृतीयार्धं नास्ति ; पप्र. ७६ कनिष्ठिका (कनीनिका) शेषं ब्रकवत्, तृतीयार्धं नास्ति.

(३) मेधा. २।५९ (अङ्गुष्ठस्याधरतः प्रागग्रायाश्च रेखाया ब्राह्मं तीर्थम्, प्रदेशिन्यङ्गुष्ठयोरन्तरा पित्र्यम्, कनिष्ठातलयोः कायम्, पूर्वेणाग्रमङ्गुलीनां दैविकम्) शङ्खः ; ब्रक. ५३–५४ रन्तरा (रन्तरं) ; स्मृच. ९६ ब्राह्मं (ब्राह्म) प्रदे (प्रादे) (पूर्वेणाङ्गुलिपर्वाणि दैवम् ०) शङ्खः ; पप्र. ७६ रन्तरा (रन्तरं); मुक्ता. २२५ (अङ्गुष्ठमूलस्यानन्तरतः प्रागग्रायां रेखायां ब्रह्मतीर्थम्, प्रदेशिन्यङ्गुष्ठयोरन्तरा पित्र्यम्, कनिष्ठातलयोरन्तरा प्राजापत्यम्, कराग्रे दैवतम्) शङ्खः .

¶ ब्रकव्याख्यानं त्रुटितत्वात् नोद्धृतम् ।

(१) शंस्मृ. १०।१४–१५.

(२) स्मृच. १००. शङ्खः .

(३) मुक्ता. २३७ शङ्खः .

(४) शंस्मृ. १४।१.

(५) शंस्मृ. १६।६,१७.

(६) शंस्मृ. १६।१९ ; ब्रक. १३६ पुरीषं वा (पुरीषं च).

[1]रथ्यामाक्रम्य वाऽऽचामेद्वासो विपरिधाय च ॥

दर्भाणामयातयामता पुनरुपयोगश्च

[2]दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणाश्च विशेषतः ।
नैते निर्माल्यतां यान्ति नियोक्तव्याः पुनः पुनः ॥

पुनः पुनर्विनियोगयोग्या इत्यर्थः । स्मृच. १०७

[3]नीवीमध्येषु ये दर्भा ब्रह्मसूत्रेषु ये कृताः ।
पवित्रांस्तान् विजानीयाद्यथा कायस्तथा कुशाः ॥

दर्भाणां पुनरुपयोगानर्हता

पिण्डे कृतास्तु ये दर्भा यैः कृतं पितृतर्पणम् ।
मूत्रोच्छिष्टपुरीषे च तेषां त्यागो विधीयते ॥

काशस्य कुशप्रतिनिधित्वम्

[4]कुशालाभे द्विजश्रेष्ठः काशैः कुर्वीत यत्नतः ।
तर्पणादीनि कर्माणि काशाः कुशसमाः स्मृताः ॥

कर्तुरार्द्रवस्त्रत्वं बहिर्जानुहस्तत्वं च कर्मनिष्फलताप्रयोजकम्

[5]आर्द्रवासास्तु यत्कुर्याद्बहिर्जानु च यत्कृतम् ।
तत्सर्वं निष्फलं कुर्याज्जपहोमप्रतिग्रहम् ॥

(१) शंस्मृ. १६।२०.

(२) लिस्मृ. ४१ ; स्मृच. १०७ उत्तरार्धे (अयातयामान्येतानि नियोज्यानि पुनः पुनः ॥); पमा. २३७-२३८ स्मृचवत्; मर. ३४ स्मृचवत्; मुक्ता. २३३ (दर्भाः कृष्णाजिना मन्त्रा ब्राह्मणा हविरग्नयः । अयातयामान्येतानि संयोज्यानि पुनः पुनः ॥); विपा. १६४ (भागः २) ब्राह्मणाश्च विशेषतः (ब्राह्मणो गौर्हुताशनः) शेषं स्मृचवत्. सर्वग्रन्थेषु शङ्खः.

(३) लिस्मृ. ४५-४६.

(४) स्मृच. १०९ ; पमा. २३६ कुशालाभे (कुशाभावे); मर. ३५ पमावत्; मुक्ता. २३४ द्विजश्रेष्ठः (द्विजः श्रेष्ठः) सर्वग्रन्थेषु शङ्खः.

(५) लिस्मृ. ६३.

पवित्रे वर्णभेदेन दर्भसंख्याभेदः

[1]चतुर्भिर्दर्भपिञ्जूलैर्ब्राह्मणस्य पवित्रकम् ।
एकैकन्यूनमुद्दिष्टं वर्णे वर्णे यथाक्रमम् ॥

ग्रासाहुतिमृत्तिकानां परिमाणम्

[2]आर्द्रामलकमात्रा वै ग्राह्या(? ग्रासा) इन्दुव्रते स्मृताः ।
तथैवाऽऽहुतयोऽग्नौ च शौचार्थे या च मृत्तिका ॥

## महाभारतम्

दक्षिणबाहूद्धरणनिमित्तानि

[3]देवागारे गवां मध्ये ब्राह्मणानां क्रियापथे ।
स्वाध्याये भोजने चैव दक्षिणं पाणिमुद्धरेत् ॥

कर्मार्थं वस्त्रपरिवर्तः

[4]अन्यदेव भवेद्वासः शयनीये नरोत्तम ।
अन्यद्रथ्यासु देवानामर्चायामन्यदेव हि ॥

अत्र शयनकालीनरथ्यापदोक्तयथेष्टलौकिकाचारकालीनवस्त्रयोरन्यत्वविधौ फलकल्पनाप्रसङ्गात् तदनुवादार्थं देवार्चनोपलक्षितवैदिककर्मकाले ताभ्यामन्यद्वस्त्रं विधीयते । तेन शयनकालीनवस्त्रं यथेष्टाचारकालीनवस्त्रं कर्मकाले त्यक्त्वा वस्त्रान्तरं धार्यम् । निप्र. ३०

कर्मार्हवस्त्रम्

[5]न स्यूतेन न दग्धेन पारक्येण विशेषतः ।
मूषिकोत्कीर्णजीर्णेन कर्म कुर्याद्विचक्षणः ॥

अग्निदग्धे सच्छिद्रे स्यूते च वाससी न परिधेये, 'न स्यूतेन....' इति महाभारतात् । संदी. ५

(१) शूक. ६३ शङ्खः.

(२) संर ६११ शङ्खः.

(३) भा. १२।१९३।२०.

(४) भा. १३।१०४।८६-८७ ; अप. १।१३१ नरोत्तम (ऽन्यदेव तु); निप्र. ३० वासः (वस्त्रं) नरोत्तम (सदैव हि).

(५) संदी. ५.

कर्मणि ओंकारप्रयोगः

[1]ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।
तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।
प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥

कर्मभेदेनोकारमात्राभेदः

[2]त्रिमात्रस्तु प्रयोक्तव्यः कर्मारम्भेषु सर्वशः ।
तिस्रः सार्धास्तु कर्तव्या मात्रास्तत्त्वार्थ-
चिन्तकैः ॥
[3]दैवताध्यानकाले तु प्लुतं कुर्यान्न संशयः ।
तैलधारावदच्छिन्नं दीर्घघण्टानिनादवत् ॥

कर्मसाधनगङ्गोदकस्तुतिः

[4]सर्वाणि येषां गाङ्गेयैस्तोयैः कार्याणि देहिनाम् ।
गां त्यक्त्वा मानवा विप्र दिवि तिष्ठन्ति
ते जनाः ॥

ताम्रपात्रस्य बल्यादिदानसाधनताविधानम्

बलिर्भिक्षा तथाऽर्घं च पितॄणां च
तिलोदकम् ।
ताम्रपात्रेण दातव्यमन्यथाऽल्पफलं भवेत् ॥

सामान्यदक्षिणाः

[5]वेदोपनिषदे चैव सर्वकर्मसु दक्षिणा ।
सर्वक्रतुषु चोद्दिष्टा भूमिर्गावोऽथ काञ्चनम् ॥

कर्मविशेषे कालनियमः

[6]प्रसाधनं च केशानां दन्तधावनमञ्जनम् ।
पूर्वाह्ण एव कर्तव्यं देवतानां च पूजनम् ॥

(१) ब्रक. ५६ प्रथमार्धं नास्ति ; निप्र. ३६२ गीतायाम् ; पप्र. ७८ प्रथमार्धं नास्ति.

(२) ब्रक. ५६ तत्त्वार्थ (सर्वार्थ) ; पप्र. ७८ ; संदी. १३ पू., व्यासः.

(३) ब्रक. ५६ काले तु (कालेषु) पू. ; पप्र. ७८.

(४) आर. ५.

(५) प्रपा. ५३ ; प्रर. ५० सर्वक्रतुषु चोद्दिष्टा (सर्वत्र तु समुद्दिष्टा) ; प्रका. ३५ सर्वक्रतुषु (सर्वत्रैव तु).

(६) आर. ७

नक्तं न कुर्यात्पित्र्याणि भुक्त्वा चैव
प्रसाधनम् ॥

पित्र्यं तर्पणश्राद्धादि । आर. ७

माल्यधारणविधिः

[1]रक्तं माल्यं न धार्यं स्याच्छुक्लं धार्यं तु
पण्डितैः ।
वर्जयित्वा तु कमलं तथा कुवलयं प्रभो ॥
रक्तं शिरसि धार्यं तु तथा वानेयमित्यपि ।
काञ्चनीयाऽपि या माला न सा दुष्यति
कर्हिचित् ॥

मुख्यदीपः तदनुकल्पश्च

[2]हविषा प्रथमः कल्पो द्वितीयश्चौषधिरसैः ।
वसामेदोस्थिनिर्यासैर्न कार्यं पुष्टिमिच्छता ॥

अथ दीपपरिभाषा— महाभारते— 'हविषा प्रथमः कल्पः...' । कृर. ७९

## मनुः

सकामतानिष्कामतयोः कर्मभेदेन व्यवस्था निष्काम-कर्मयोगो वा मतभेदेन

[3]कामात्मता न प्रशस्ता न चैवेहास्त्यकामता ।
काम्यो हि वेदाधिगमः कर्मयोगश्च वैदिकः ॥

(१) फलाभिलाषः कर्मप्रवृत्तेर्हेतुः यस्य स कामात्मा, तद्भावः कामात्मता । तत्प्रधानता आत्मशब्देन प्रतिपाद्यते । सा न प्रशस्ता निन्दिता । अतश्च निन्दया प्रतिषेधानुमाने न कर्तव्येति प्रतीयते । अर्थात्सौर्यादीनां सर्वेषां काम्यानां निषेधोऽयम् । अथवा किं विशेषेण ब्रूमः सौर्यादीनामिति, सर्वमेव क्रियानुष्ठानं फलसिद्ध्यर्थम्, न स्वरूपनिष्पत्तये । न च काचन निष्फला क्रिया । यदपि 'न कुर्वीत वृथा चेष्टाम्' इति,

(१) आर. ५

(२) कृर. ७९.

(३) मस्मृ. २।२ ; आन. २.

भस्मनि हुतम्, विषयान्तरे देशराजवार्तान्वेषणम्, तत्रापि क्रियाफलं विद्यते। किंतु प्रधानफलं स्वर्गग्रामादि पुरुषस्य यत् दृष्टादृष्टयोरुपयुज्यते तदभावाद् वृथाचेष्टेत्युच्यते।

अथोच्यते— भवतु क्रिया फलवती, तद्विषयेऽभिलाषो न कर्तव्यः, वस्तुस्वाभाव्यात्फलं भविष्यति। अत्रापि सौर्यादीनामफलत्वम्, काम्यमानं फलं ज्ञातम्, नानिच्छोस्तद्भविष्यतीति। न च लौकिकी प्रवृत्तिर्दृश्यते फलाभिसंधिनिरपेक्षा। न चात्र विशेषः श्रुतो वैदिकेषु कर्मसु फलं नाभिसंधेयमिति। तत्र फलवत्सु श्रुतेषु कामनानिषेधादप्रवृत्तौ श्रुतिविरोधः। नित्येषु तु प्राप्तिरेव नास्ति। विशेषानुपादानाच्च लौकिकव्यापारनिवृत्तौ दृष्टविरोधः। तदिदमापतितम्— न किंचित्केनचित्कर्तव्यम्, सर्वैस्तूष्णींभूतैः स्थातव्यम्। उच्यते— यत्तावदुक्तं काम्येषु सौर्यादिषु निषेधप्रसङ्ग इति, तत्र वक्ष्यति— 'यथासंकल्पितांश्चेह सर्वान् कामान् समश्नुते।' इति। निषेधे हि कुतः संकल्पः कुतश्च कामावाप्तिः। यदपि विशेषानुपादानाल्लौकिकेऽपि प्रसक्त इति, तत्रोपात्त एव विशेषः, 'यो धर्मस्तं निबोधत' इति धर्मस्य प्रकृतत्वात्। यदप्युक्तं नित्येषु फलाश्रवणात्फलाभिसंधेः प्राप्तिरेव नास्ति, किं निषेधेनेति, तत्राप्युच्यते— फलाभावात्कश्चित्सम्यक्शास्त्रार्थमजानानो न प्रवर्तेत। सौर्यादिषु च श्रुतफलेषु फलाभिसंधिपूर्विकां प्रवृत्तिं दृष्ट्वा सामान्यतोदृष्टेन यत्कर्तव्यं तत्फलहेतोः क्रियत इत्यश्रुतमपि फलमभिसंदधीत, तन्निवृत्त्यर्थमिदमारभ्यते। यद्यप्ययं न्यायो यत्फलवच्छ्रुतं तत्तथैव कर्तव्यम्। यदाऽपि निष्फलमेव कर्तव्यतया शास्त्रेण यावज्जीवादिपदैर्विनैव विश्वजिन्न्यायेन फलकल्पनयाऽवगमितं तस्यान्यथाऽनुष्ठाने प्रसङ्ग एव नास्ति, तथाऽपि य एतं न्यायं प्रतिपत्तुमसमर्थः स वचनेन प्रतिपाद्यते। न्यायतः प्रतिपत्तौ हि गौरवम्, वचनात्तु लघीयसी सुखप्रतिपत्तिरिति सुहृद्भूत्वा प्रमाणसिद्धमर्थमुपदिशति स्म। कामशब्दोऽयं यद्यपि हृच्छयवचनो दृष्टस्तथाऽपि तस्येहासंभवात्काम इच्छाऽभिलाष इत्यनर्थान्तरम्। तत्र वक्ष्यमाणपर्यालोचनया फलाभिलाषेण न सर्वत्र प्रवर्तितव्यमित्ययमर्थः स्थास्यति।

परस्तु कामात्मतामिच्छामात्रसंबन्धमात्रं पदार्थं मन्वानश्चोदयति— न चैवेहास्त्यकामतेति। न च इह लोके काचिदकामिनः प्रवृत्तिरस्तीत्यर्थः। आस्तां तावत्कृषिवाणिज्यादि व्युत्पन्नबुद्धिना क्रियमाणम्, यः स्वयं वेदाधिगमो वेदाध्ययनं बालः कार्यते पित्रादिना ताड्यमानः सोऽपि न काममन्तरेणोपपद्यते। अध्ययनं हि शब्दोच्चारणरूपम्। न चोच्चारणमिच्छया विना निर्घातध्वनिवदुत्तिष्ठति। इच्छति चेत्किमिति ताड्यते इति। सैव तथेच्छोपजन्यते। अभिमते तु विषये स्वयमुपजायते इत्येतावान् विशेषः। यश्चायं वैदिको वेदविहितः कर्मयोगो दर्शपूर्णमासादिकर्मानुष्ठाने नित्यत्वेनावगतः सोऽपि न प्राप्नोति। न ह्यनिच्छतो देवतोद्देशेन स्वद्रव्यत्यागोपपत्तिः। तस्मात् कामात्मतानिषेधे सर्वश्रौतस्मार्तकर्मनिषेधः प्रसक्त इति। मेधा.

(२) परिभाषान्तरमाह— कामात्मतेति। कामात्मता न प्रशस्ता फलाभिलाषशीलत्वमयुक्तम्। यतः शास्त्रचोदितकर्माणि फलाभिलाषत्यागेनाऽऽचर्यमाणानि आत्मज्ञानसाचिव्येन मोक्षाय कल्पन्ते, फलेच्छया त्वनुष्ठाने तेषां संसारहेतुत्वात्। अस्तु, कामात्मता न प्रशस्तेत्यनेन इच्छा निषिद्धा, एतन्मत्वा आह— न चैवेति। इच्छामन्तरेण नेह शास्त्रे प्रवृत्तिरस्ति। यस्माद्वेदस्वीकरणं वैदिककर्मसंबन्धश्चाभिलषणीय एव।

§ गोरा.

(३) धर्ममात्रमभिधेयतया प्रतिज्ञातमत्रावमृशति। कामात्मता रागपरता न प्रशस्ता आयत्यां नाभ्युदयहेतुः, कामतः कर्मणि प्रवृत्तौ पुनः पुनर्वासनानुच्छेदे संसारानुच्छेदात्। न चाकामता इह लोकेऽस्ति। संभवत्वादुपपादयति— काम्यो हीति। वेदानामधिगमः अध्ययनं काम्यः कामविषयः, कामनोपनिबद्धयजनयाजनादितात्पर्येण तत्र प्रवृत्तेः। अध्ययनानन्तरं कर्तव्योऽपि वैदिकः

§ मनु. गोरावत्।

वेदप्रतिपादितः कर्मयोगः कर्मप्रयोगः काम्यः कामनाविषयः । तद्द्वाराऽध्ययनमपि तथेत्यर्थः । मवि.

(४) सर्वेषां कर्तव्यस्य तु काममूलता प्रत्यक्षसिद्धा, अतस्तत्र व्यवस्थामाह— कामात्मतेति चतुर्भिः । इहेति प्राणिभूमौ अतीव फलाभिलाषिता कामात्मता, तदभावस्त्वकामता । तथा च किं कार्यमित्यपेक्षायामाह— वेदाधिगम इति । वेदाधिगमः वेदतदर्थज्ञानम्, वैदिकः वेदप्रमाणकोऽग्निहोत्रादिः, चकारात् स्मार्तोऽपि धर्मपत्नीसंयोगादिः काम्यः । एतेनैव पुमर्थसिद्धेः न सर्वत्र काममूलप्रवृत्तिरिति भावः । मच.

(५) अस्मिन् शास्त्रेऽनुशिष्यमाणस्य धर्मस्य प्रवृत्तिफलस्यापि निवृत्तिफलत्वं क्रियाविशेषसाध्यमिति चतुर्भिः श्लोकैराह— कामात्मतेति । चोदितेषु कर्मसु फलाभिसंधिः कामात्मता, सा न प्रशस्ता निन्दिता प्रतिषिद्धेति यावत् । न च कर्मणः स्वरूपप्रवृत्तिः । निष्कामता प्रशस्ता इत्युक्तम्, न चैवेहास्त्यकामतेति । ईहा प्रवृत्तिः । अत्र हेतुरुक्तः— काम्यो हीति । वेदाध्ययनं वेदार्थज्ञानं च वेदाधिगमः, कर्मयोगः पञ्चमहायज्ञादिकः काम्यः कामसाध्यः, तौ काममन्तरेण दुष्करावित्यभिप्रायः । नन्द.

(६) कामे आत्मा यस्य सः, कामात्मनो भावः कामात्मता प्रशस्ता न सकामता ईहाः चेष्टाः प्रशस्ता न (?) । वेदाधिगमः काम्यः वेदानामधिगमः अध्ययनं काम्यः कामार्हश्च पुनः कर्मयोगः कर्ममार्गः वैदिकः वेदेश्चोक्तः काम्यः कार्यः । भाच.

**[1]संकल्पमूलः कामो वै यज्ञाः संकल्पसंभवाः ।**
**व्रतानि यमधर्माश्च सर्वे संकल्पजाः स्मृताः ॥**

(१) ततश्च यदुक्तं यागस्य कामेन विना न स्वरूपनिष्पत्तिरिति, तदनेन विस्पष्टं कृत्वा कथयति । संकल्पः यागादीनां मूलं कामस्य च । यागादींश्चिकीर्षन्नवश्यं संकल्पं करोति । संकल्पे च क्रियमाणे तत्कारणेन कामेन संनिधातव्यमनिष्टेनापि । यथा पाकार्थिनो ज्वलनं कुर्वतस्तत्समानकारणो धूमोऽप्यनिष्टो जायते । तत्र न शक्यं यज्ञादयः करिष्यन्ते कामश्च न भविष्यतीति ।

अथ कोऽयं संकल्पो नाम यः सर्वक्रियामूलम् ? उच्यते— यच्चेतःसंदर्शनं नाम यदनन्तरं प्रार्थनाध्यवसायौ क्रमेण भवतः । एते हि मानसा व्यापाराः सर्वक्रियाप्रवृत्तिषु मूलतां प्रतिपद्यन्ते । न हि भौतिका व्यापारास्तमन्तरेण संभवन्ति । तथा हि— प्रथमं पदार्थस्वरूपनिरूपणम् 'अयं पदार्थः इमामर्थक्रियां साधयति' इति यज्ज्ञानं स इह संकल्पोऽभिप्रेतः । अनन्तरं प्रार्थना भवति इच्छा । सैव कामः । कथम् ? 'अहमिदमनेन साधयामि' इति । इच्छायां सत्याम् अध्यवस्यति करोमीति निश्चिनोति सोऽध्यवसायः । ततः साधनोपादाने बाह्यव्यापारविषये प्रवर्तते । तथा हि— बुभुक्षितः आदौ भुजिक्रियां पश्यति, तत इच्छति 'भुञ्जीय' इति, ततोऽध्यवस्यति 'व्यापारान्तरेभ्यो विनिवृत्य भोजनं करोमि' इति, ततः कर्मकारणस्थानाधिकारिण आह— 'सज्जीकुरुत, रसवतीं संचारयत' इति ।

नन्वेवं सति न यज्ञादयः संकल्पमात्राद्भवन्ति, अपि तु संकल्पप्रार्थनाध्यवसायेभ्यः । तत्र किमुच्यते 'यज्ञाः संकल्पसंभवाः' इति ? संकल्पस्य आद्यकारणात्वाददोषः । अत एवोत्तरत्र 'नाकामस्य क्रिया काचित् दृश्यते' इति वक्ष्यति । व्रतानि, मानसोऽध्यवसायो व्रतम्, 'इदं मया यावज्जीवं कर्तव्यम्' इति यद्विहितम् । यथा स्नातकव्रतानि । यमधर्माः प्रतिषेधरूपाः अहिंसादयः । कर्तव्येषु प्रवृत्तिः निषिद्धेभ्यो निवृत्तिः नान्तरेण संकल्पमस्ति । मेधा.

(२) अत्रैवोपपत्तिमाह— संकल्पमूल इति । अनेन वस्तुना इयमर्थक्रिया साध्यते इत्येवंविधो मनोव्यापारः संकल्पः । स च मूलं कामस्य । तदनन्तरं हि तद्वस्तुसंपादनेच्छोपजायते । तदनु चाध्यवसायो भौतिकव्यापारेण करणोद्योगो भवति । एवं च यज्ञादयः संकल्पप्रभवाः ।

---

(१) मस्मृ. २।३ नन्द. मूलः (मूलं).

तेषां च संकल्पोद्भवत्वे सति अवश्यमन्तरिच्छया भवितव्यम् । संकल्पाभिमानव्यवसायेभ्यः क्रियाप्रवृत्तिः । अतः स्वेच्छानिषेधात्तान्यपि न घटते( ? न्ते ) इत्यभिप्रायः । व्रतानि अनुष्ठेयरूपाणि, यमधर्माः प्रतिषेधात्मकाः ।

‡ गोरा.

( ३ ) तथाऽपरमप्याह— संकल्पेति । संकल्पः एतत्फलं मम संपद्यतामिति फलाभिलाषः । तन्मूलः कामः साक्षात्प्रयत्नहेतुः तत्साधनविषयेच्छा । न चैतावता वैदिककर्मणां कामहेतुकता सिध्यतीत्यत उक्तम्— यज्ञा इति । यज्ञाः पाकयज्ञहविर्यज्ञसोमयज्ञजपयज्ञरूपाः । व्रतानि स्नातकव्रतादीनि । यमाः निषिद्धाननुष्ठाननियमाः । सर्वे संकल्पजाः, संकल्पाच्च काम इति सर्वाणि रागजानि । रागश्च तद्विरुद्धविषयद्वेषानुबन्धः । ततः कथं धर्मद्वेषिणां विदुषां रागद्वेषराहित्यं संभवतीत्याक्षेपतात्पर्यम् ।

मवि.

( ४ ) व्रतानि, यमरूपाश्च धर्माश्चतुर्थाध्याये वक्ष्यमाणाः । सर्वे इत्यनेन पदेन अन्येऽपि शास्त्रार्थाः संकल्पादेव जायन्ते । इच्छामन्तरेण तान्यपि न संभवन्तीत्यर्थः ।

† ममु.

( ५ ) संकल्पः कर्मानुष्ठानाध्यवसायः । तस्य मूलं कारणं कामः । यज्ञा इति गृहस्थधर्मो लक्ष्यते । व्रतानीति ब्रह्मचारिधर्मः । यमधर्मा इति वानप्रस्थसंन्यासिधर्माः ।

नन्द.

**[१]अकामस्य क्रिया काचिद्दृश्यते नेह कर्हिचित् ।**
**यद्यद्धि कुरुते किंचित्तत्तत्कामस्य चेष्टितम् ॥**

( १ ) पूर्वेण शास्त्रीये प्रवृत्तिनिवृत्ती संकल्पाधीने व्याख्याते । अनेन लौकिकेषु कर्मसु तदधीनतोच्यते इति विशेषः । नेह लोके कर्हिंचित्कदाचिदपि जाग्रदवस्थायां क्रिया काचित् अनुष्ठेयत्वेनानिच्छतः संभवति । यत्किंचिल्लौकिकं वैदिकं वा कुरुते कर्म विहितं प्रतिषिद्धं च तत्सर्वं कामस्य चेष्टितम् । हेतुत्वाच्चेष्टितं कामस्यैवेत्युक्तम् । तदिदमतिसंकटम्— कामात्मता न प्रशस्ता, न चानया विना किंचिदनुष्ठानमस्ति ।

मेधा.

( २ ) अत्रैव लौकिकं दृष्टान्तमाह—अकामस्येति । बुद्धिपूर्वकारिभाव्या वा( ? या ) काचित् क्रिया दृष्टार्था साऽनिच्छातो न कदाचित् दृश्यते । तस्माद्यत्किंचित् कुरुते कर्म तत्सर्वं कामस्य चेष्टितम् इच्छाकार्यम् ।

$ गोरा.

( ३ ) कर्हिचित् कदाचित् अकामस्य निष्कामस्य क्रिया न दृश्यते ।

भाच.

**[१]तेषु सम्यग्वर्तमानो गच्छत्यमरलोकताम् ।**
**यथासंकल्पितांश्चेह सर्वान्कामान् समश्नुते ॥**

(१) अत्र प्रतिविधत्ते— तेष्विति । तेषु कामेषु सम्यग्वर्तितव्यम् । का पुनः सम्यग्वृत्तिः ? यत् यथा श्रुतं तत्तथैवानुष्ठेयम् । नित्येषु फलं नाभिसंधेयम्, अश्रुतत्वात् । काम्येषु त्वनिषेधः, तेषां तथा श्रुतत्वात् । फलसाधनतयैव तानि विधितोऽवगम्यन्ते । फलानिच्छोस्तदनुष्ठानमश्रुतकरणं स्यात् । नित्येषु फलाभिसंधिर्व्यामोह एव । न ह्यभिसंधिमात्रात् प्रमाणतोऽनवगते फलसाधनत्वे फलमुत्पद्यते । एवं कुर्वन् गच्छति प्राप्नोति अमरलोकताम् । अमराः देवाः, तेषां लोकः स्वर्गः, तन्निवासात् अमरेषु लोकशब्दः स्थानस्थानिनोरभेदात् ' मञ्चाः क्रोशन्ति ' इतिवत् । तेनायं समासः— अमराश्च ते लोकाश्च अमरलोकाः, तद्भावः अमरलोकता । देवजनत्वं प्राप्नोति, देवत्वं प्राप्नोतीत्यर्थः । वृत्तानुरोधादेवमुक्तम् । अथवा अमरान् लोकयति पश्यति अमरलोकः । ' कर्मण्यण् ' ( पासू. ३।२।१ ) । तदन्ताद्भावप्रत्ययः । देवदर्शी संपद्यते । अनेनापि प्रकारेण स्वर्गप्राप्तिरेवोक्ता भवति । अथवा अमर इव लोक्यते लोके ।

अर्थवादश्चायम् । नात्र स्वर्गः फलत्वेन विधीयते, नित्यानां फलाभावात्, काम्यानां च नानाफलश्रवणात् ।

---

‡ मच. गोरागतम् ।

† शेषं गोरावत् ।

( १ ) मस्मृ. २।४ ; पप्र. ७० उत्त.

$ ममु. गोरावत् ।

( १ ) मस्मृ. २।५ ; आन. २.

तेन स्वर्गप्राप्त्या शास्त्रानुष्ठानसंपत्तिरेवोच्यते । लक्षणया यदर्थं कर्मणामनुष्ठानं तत्संपद्यते इत्यर्थः । तत्र नित्यानां प्रत्यवायानुत्पत्तिर्विध्यर्थसंपत्तिर्वा प्रयोजनम् । काम्येषु तु यथासंकल्पितान् यथाश्रुतं संकल्पितान् प्रयोगकाले यस्य कर्मणो यत्फलं श्रुतं तत्संकल्प्य अभिसंधाय मनसा कामयित्वा 'इदमहमतः फलं प्राप्नुयाम्' इति । ततः सर्वान् कामान् काम्यानर्थान् समश्नुते प्राप्नोति । अतः परिहृता संकटापत्तिः, यतो न सर्वविषयः कामो निषिध्यते । किं तर्हि ? नित्येषु फलाभिलाषलक्षणः । साधनसंपत्तिस्तु काम्यैव ।

ब्रह्मवादिनस्तु सौर्यादीनां निषेधार्थं 'कामात्मता' इति मन्यन्ते । फलार्थितया क्रियमाणा बन्धात्मका भवन्ति । निष्कामस्तु ब्रह्मार्पणन्यायेन कुर्वन् मुच्यते । तदुक्तं भगवता कृष्णद्वैपायनेन— 'मा कर्मफलहेतुर्भूः' (भगी. २।४७) । तथा 'साधनानामकृत्स्नत्वान्मौर्ख्यात्कर्मकृतस्तथा । फलस्य चाभिसंधानादपवित्रो विधिः स्मृतः ॥' इति । बहवश्चात्र व्याख्याविकल्पा असारत्वात्तु न प्रदर्शिताः । मेधा.

(२) अत्र परिहारमाह— तेष्विति । नात्रेच्छा निषिध्यते, अपि तु यथा श्रुतं तत्तथैवानुष्ठेयमितीयं सम्यग्वृत्तिः । तत्र तेषु कर्मसु फलाभिलाषत्यागेन प्रवर्तमानो बन्धात्मकत्वाभावात् अमरलोकताम् अमरधर्मित्वं मोक्षं प्राप्नोति । इह संसारे आत्मज्ञानाभ्यासेनाष्टगुणैश्वर्ययोगात् यथाभिलषितान् सर्वानर्थान् समश्नुते । ¶ गोरा.

(३) तत्र समाधिः— तेष्विति । तेषु यज्ञादिषु सम्यक् कामपरतां विहाय केषुचिदीश्वरार्पणबुद्ध्या केषुचित्तत्कालोपनिपतितावश्यसंपाद्यफलार्थतया वर्तमानोऽमरलोकताम्, न म्रियते यत्र सः अमरः, तादृशो लोको यत्र तद्भावं मोक्षं गच्छति भगवत्यर्पितैः । फलार्थं तु कृतैर्यथासंकल्पितान् कामान् काम्यानि फलानि अश्नुते । मन्वि.

¶ मनु. गोरागतम् ।

(४) ततः किमित्याह— तेष्विति । तेषु कर्मसु सम्यगिति अर्थकामाद्युपाधिं विना प्रवर्तते योऽनुष्ठाता सः अमरलोकतां स्वर्गं साक्षात्, मुक्तिं वा सत्त्वशुद्धिद्वारेति भावः, इह च मर्त्यलोके कामान् पशुपुत्रादीन् अश्नुते प्राप्नोति । इह संकल्पितान् वा परलोके प्राप्नोति, 'यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति' इति श्रुतेः । क्रतुरत्र संकल्पः । मच.

(५) फलनैरपेक्ष्येण कर्मानुष्ठायिनः फलातिशयमाह— तेष्विति । तेषु वेदाधिगमादिषु सम्यग्वर्तमानः समीचीनं वर्तमानः । समीचीनवृत्तित्वं च कर्मफलत्यागेन चोदितकर्मानुष्ठानम् । अमरलोकतां शाश्वतलोकान् मुक्तिमित्यर्थः । इह अस्मिन् लोके यथासंकल्पितान् स्वसंकल्पानुरूपान् कामान् भोगान् । केचित्तु वक्ष्यमाणयोर्धर्मप्रवृत्तिनिवृत्त्योः प्रतिपक्षनिराकरणपरत्वेन श्लोकचतुष्टयमिदानीं (? मिदमित्थं) व्याचक्षते— कामात्मतेति । कामात्मता निषिद्धेष्वपि प्रवर्तकः कामप्रकर्षः । न चैवेहास्त्यकामतेति कामस्यात्यन्तोच्छेदः प्रतिषिध्यते । कार्यवशेन कामस्यावर्जनीयत्वात् अविहितत्वेन सर्वत्र कामो दुस्त्यज इत्यर्थः । काम्यो हीत्यर्धेन कारणतोऽपि कामस्यावर्जनीयत्वं प्रतिपाद्यते । संकल्पमूलमिति । सम्यगधिगतं ज्ञानं संकल्पः तत्संभवो यज्ञाद्यनुष्ठानलक्षणः कामोऽपि संकल्पमूलत्वेनावर्जनीयः सिद्ध इत्यर्थः । अकामस्येत्यत्र नास्ति व्याख्याविकल्पः । तेष्विति । सम्यग्वर्तमानः समीचीनकामः समीचीनसंकल्पश्च । अमरलोकतां देवत्वमिति । नन्द.

काम्यकर्मणां यथाविध्यनुष्ठाननियमः

**[1]असद्वृत्तस्तु कामेषु कामोपहतचेतनः ।**
**नरकं समवाप्नोति तत्फलं न समश्नुते ॥**

**तस्माच्छ्रुतिस्मृतिप्रोक्तं यथाविध्युपपादितम् ।**
**काम्यं कर्मेह भवति श्रेयसे न विपर्ययः ॥**

(१) मस्मृ. २।५ इत्यस्योपरिष्टात् मण्डलिकमुद्रितमनुस्मृतिपुस्तके एतौ श्लोकौ समुद्धृतौ.

आचमने तीर्थनियमः

**[1]ब्राह्मेण विप्रस्तीर्थेन नित्यकालमुपस्पृशेत् ।
कायत्रैदशिकाभ्यां वा न पित्र्येण कदाचन ॥**

(१) तीर्थशब्देन पवित्रमुदकाधिकरणमुच्यते । तारणाय पापप्रमोचनाय च तिष्ठतीति तीर्थम् । क्वचित्तु तरन्त्यनेनेति तीर्थम् उदकावतरणमार्गः । इह तु उदकाधारकरतलैकदेश उच्यते । स्तुत्या च तीर्थशब्दप्रयोगः । न हि तत्र नित्यस्था आपः । तेन उपस्पृशेत् आचामेत् । ब्राह्मेणेत्येतदपि स्तुत्यर्थमेव ब्रह्मा देवताऽस्येति । न हि तीर्थस्य देवता भवति, अयागरूपत्वादमन्त्रत्वाच्च । यागरूपतां च केनचिद्धर्मेण शुद्धिहेतुत्वादिनाऽध्यारोप्य देवतातद्धितः । नित्यकालं शौचार्थे कर्माङ्गे च । कः प्रजापतिः, सः देवताऽस्येति कायम् । एवं त्रिदशा देवता अस्येति त्रैदशकम् । त्रिदशशब्दाद्देवताऽणि कृते स्वार्थे कः । देवतात्वं च पूर्ववत् । एभिस्तीर्थैरुपस्पृशेत् । विप्रग्रहणमविवक्षितम् । यतः क्षत्रियादीनां विशेषं वक्ष्यति । न च असत्यां सामान्यतः प्राप्तौ विशेषविधानमुपपद्यते 'कण्ठगाभिस्तु भूमिपः' इत्यादि । न पित्र्येण पितृदैवत्येन कदाचिदपि स्फोटपिटकादिना ब्राह्मादितीर्थेष्वयोग्यतामायातेष्वपि ।

ननु च अविधानादेव पित्र्यस्याप्राप्तिः । अस्त्यत्राऽऽशङ्का । पितृतीर्थज्ञापनार्थं तावत् 'पित्र्यं तयोरधः' इत्यवश्यं वक्तव्यम् । न च तस्येह कार्यं निर्दिश्यते । कार्याकाङ्क्षायां प्रकृतत्वात्तेन कार्येण संबन्ध आशङ्क्येत । अद्य पुनः प्रतिषेधे सति पित्र्यमिति समाख्ययैव कार्यावगतिः, उदकतर्पणादि पितृकर्म एतेन तीर्थेन कर्तव्यम् । एवं स्तुतिरन्वयिनी भवति । श्रुतिनोदितत्वाच्च ब्राह्मादीनां तदभावे प्राप्ताशङ्कानिवृत्त्यर्थं युक्तमस्याभिधानम् । ‡ मेधा.

(२) ब्राह्मेण तीर्थेन प्राजापत्यदैवाभ्यां वा विप्रो यावज्जीवमुपस्पृशेत् । पित्र्येण पुनः (न) कदाचिदिति नित्यानुवादः इतरस्तुत्यर्थः, अविधानादेव पित्र्यस्याप्राप्तेः । विप्रग्रहणं क्षत्रियादिप्रदर्शनार्थम्, 'उपस्पृश्य द्विजो नित्यम्' इति एतयोरपि प्रकृतत्वात् । गोरा.

(३) पूर्वं विहितस्याऽऽचमनस्य प्रकारमाह—ब्राह्मेणेति । नित्यकालं गार्हस्थ्यादिकालेऽपि । कथंचित्तत्र व्रणादिनाऽऽचमनासंभवे कायत्रैदशिकाभ्याम्, तयोरन्यतरेणेत्यर्थः । कायं प्राजापत्यम् । तयोरपि व्रणादिदूषितत्वेऽतीर्थेनैव आचामेत्, न तु तीर्थसाम्यात् पित्र्येण, तदर्थं न पित्र्येणेत्युक्तम् । विप्र इति प्राधान्यादुक्तम्, शूद्र( ? क्षत्रिय )वैश्ययोरप्याचमनविधिः( ? धेः ), तस्य चेतिकर्तव्यतापेक्षत्वात् । मवि.

(४) विप्रग्रहणमितरयोरपि प्रदर्शनार्थम्, 'द्विजो नित्यमुपस्पृशेत्' इति स्मरणात् । कायं प्राजापत्यम् । त्रैदशिकं दैवम् । अत्र §तीर्थस्वीकरणमाचमनस्याऽऽद्यप्रयोगे वेदितव्यम्, न प्रतिप्रयोगम्, तथात्वे नित्यकालमित्यघटनात् । स्मृच. ९५

(५) ब्राह्मं हिरण्यगर्भदैवत्यम् । कायं प्राजापत्यम् । त्रैदशिकं दैवम् । अत्र देवतातारतम्यवत् तीर्थतारतम्यं द्रष्टव्यम् । † मुक्ता. २२५

(६) ब्राह्मं सर्वसाधारणम् । कायदैवे तु ब्राह्मणं प्रत्येव । तथा च मनुः— ब्राह्मेणेति । त्रैदशिकं दैवम् । अत्र नित्यपदात्सर्वदा ब्राह्मेणैव, तस्य व्रणाद्युपघाते तूत्तराभ्यामिति व्यवस्थितो विकल्पः । उत्तरयोस्त्वैच्छिकः । आम. १५

(७) भोजनस्याऽऽद्यन्तयोरुपस्पर्शनं विहितम्, तत्प्रकारो नोक्तः । तमिदानीमाह—ब्राह्मेणेति । ब्राह्मेण हिरण्यगर्भदैवत्येन । तदभावे कायेन, कः प्रजापतिः दक्षः, तद्दैवत्यं कायम् । तदभावे त्रैदशिकेन त्रिदशदैवत्येन । कुतोऽयं विकल्पना( ? व्यवस्थितविकल्पना )भ्युपगमः ?

---

‡ ममु. मच. भाच. मेधागतम् ।

(१) मस्मृ. २।५८ ; मेधा. दशिका ( दशका ) ; ब्रक. ५४ ; स्मृच. ९५ ; वीमि. १।१८ ; पप्र. ७७ मेधावत् ; मुक्ता. २२५ ; आम. १५ नित्य (सर्व) ; आन. १७.

§ विकल्पेन तीर्थस्वीकरणम्, तीर्थविकल्पनमित्यर्थः ।

† आन. मुक्तावत् ।

देवतातारतम्यवत्तीर्थतारतम्यस्यापि प्रतीयमानत्वेन तुल्यविकल्पत्व( ? त्वा )संभवात् । अत्र देवतासंबन्धेन तीर्थवचनं प्ररोचनार्थम् । नन्द.

हस्तस्थिततीर्थानि

**[1]अङ्गुष्ठमूलस्य तले ब्राह्मं तीर्थं प्रचक्षते ।**
**कायमङ्गुलिमूलेऽग्रे दैवं पित्र्यं तयोरधः ॥**

(१) अङ्गुष्ठस्य मूलम् अधोभागः । तस्य तलप्रदेशो ब्राह्मं तीर्थम् । हस्ताभ्यन्तरं तलमाह । महारेखान्तमभिमुखमात्मनो ब्राह्मं हस्तमध्ये । अङ्गुलीनां मूले दण्डरेखाया ऊर्ध्वं कायम् । अग्रे अङ्गुलीनां दैवम् । एवमुपसर्जनीभूतोऽपि मूले अङ्गुलिशब्दः सापेक्षत्वादग्रशब्देन संबध्यते । पित्र्यं तयोरधः । अत्रापि गुणीभूतस्याङ्गुलीशब्दस्याङ्गुष्ठस्य च संबन्धः । प्रदेशिनी चात्राङ्गुलिर्विवक्षिता । तयोरधः अन्तरं पित्र्यम् । स्मृत्यन्तरशिष्टप्रसिद्धिसामर्थ्यादेवं व्याख्यायते, यथाश्रुतान्वयासंभवात् । तथा च शङ्खः— 'अङ्गुष्ठस्याधरतः प्रागग्रायाश्च रेखाया ब्राह्मं तीर्थम्, प्रदेशिन्यङ्गुष्ठयोरन्तरा पित्र्यम्, कनिष्ठातलयोः पूर्वेण कायम्, अग्रमङ्गुलीनां दैविकम्' इति । § मेधा.

(२) अर्थसिद्धत्वाल्लक्षणमाह— अङ्गुष्ठमूलस्येति । 'ब्राह्मणस्य दक्षिणहस्ते पञ्च तीर्थानि भवन्ति' इति प्रचेतसः स्मरणात् दक्षिणहस्ताङ्गुष्ठमूलस्याधोभागे ब्राह्मं तीर्थं प्रचक्षते । कायमङ्गुलीनां मूले । अग्रे दैवम् अङ्गुलीनामेव, अग्रशब्दस्य साकाङ्क्षत्वात् । पित्र्यं तयोरधः । तयोरित्यस्यापि साकाङ्क्षत्वात् प्रकृतेनाङ्गुष्ठाङ्गुलिना संबन्धः । गोरा.

(३) एतच्च 'ब्राह्मणस्य दक्षिणहस्ते पञ्च तीर्थानि' इति प्रचेतसस्स्मृतेर्दक्षिण एव । अङ्गुष्ठमूलस्य( ? त )ल इति करस्याधोभागमध्यमभिप्रैति । ब्राह्मं ब्रह्मदैवतम् । एवं कायादौ । काये अङ्गुलिपदं कनिष्ठापरम्, 'कनिष्ठादेशिनी' इति याज्ञवल्क्यवचनात् । अग्र इति अङ्गुलीपदमन्वीयते । तच्च सर्वाङ्गुलिपरम्, 'अग्रं करस्य वा' इति वचनात् । तयोरित्यत्राङ्गुष्ठाङ्गुल्यौ प्रकृते । तत्र चाङ्गुली तर्जनी, 'देशिनी' ( इति ) याज्ञवल्क्यवचनात् । तथा च तयोरेवेति द्वयोरधोमूलं द्वयोर्मध्यभागे ग्राह्यम् । मवि.

(४) अङ्गुलिमूले कनिष्ठिकाङ्गुलिमूले । अग्रे साङ्गुष्ठानामङ्गुलीनाम् । तयोः अङ्गुष्ठदेशिन्योः । मच.

§ ममु. मुक्ता. भाच. मेधागतं मविगतं च । नन्द. मेधागतम् ।

(१) मस्मृ. २।५९ ; मुक्ता. २२५ ; आन. १७ प्रचक्षते ( उदाहृतम् ).

उपवीति–प्राचीनावीति–निवीतिलक्षणानि

**[1]उद्धृते दक्षिणे पाणावुपवीत्युच्यते द्विजः ।**
**सव्ये प्राचीन आवीती निवीती कण्ठसज्जने ॥**

(१) ननु च लोकतः सिद्धाः पदार्था धर्मशास्त्रेऽप्याश्रीयन्ते । न पदार्थसंविज्ञानार्थानि मन्वादिवाक्यानि, व्याकरणाभिधानकाण्डस्मृतिवत् । उक्तमस्माभिर्यो नातिप्रसिद्धोऽर्थस्तं चेल्लक्षयन्ति किमुपालम्भमर्हन्ति ? अस्ति चात्र किंचित्प्रयोजनमन्यदपि । आचमनक्रममु( ? क्रम उ )च्यमानमुपसंव्यानादिकमाचमनाङ्गं यथा विज्ञायेत । यद्यप्युपवीतधारणं व्रतार्थतया पुरुषार्थतया वा सर्वदा प्राप्तम्, तथाऽपि तेन विनाऽऽचमनं परिपूर्णमेव स्यात् असत्यस्मिन्वचने, व्रते वैगुण्यं पुरुषदोषश्च स्यात् । अथ पुनरन्तरेणोपवीतमाचमनं कृतमप्यकृतसमम्, दोषश्च स्यादप्यशुचिना कृतमपां भक्षणमिति । कथं पुनः केवलस्योपवीतस्यैवाऽऽचमनाङ्गता ? यावताऽ-

(१) मस्मृ. २।६३ ; विश्व. १।२९ निर्देशमात्रम् ; मेधा. २।४४ निर्देशमात्रम् ; मभा. ३।११ (=) द्विजः ( बुधैः ) पू. ; उ. १।१५।१ मभावत्, पू. ; गप. ८९ चतुर्थपादमात्रम् ; निप्र. ३२ सज्जने (मज्जने) चतुर्थपादमात्रम् ; मुक्ता. ९२ प्राचीन आवीती ( तु प्राचीनावीती ) ; संम. २७ सज्जने (सर्जने) ; आन. १५६ मुक्तावत् ; बाल. १। २९ पृ. १५५ मभावत्, पू ; कृभ. ९५७ पाणावुप ( हस्ते उप ) प्राचीन आवीती ( च प्राचीन आवीती ) ; संर. १८८ उत्तरार्धे ( सव्ये प्राचीनावीती स्यान्निवीती कण्ठसज्जनम् ॥ ).

न्यदप्यत्र निर्दिष्टं प्राचीनावीति( ? प्राचीनावीतं निवीतं) च । उच्यते । प्राचीनावीतं स्वशब्देनैव पित्र्ये कर्मणि विहितम्, तत्रार्थवत्तायामुपयातायां नाकृतार्थेनोपवीतेन विकल्पितुमर्हति । निवीतमप्यभिचारेऽर्थवत् । यद्यप्यत्र निवीतस्य विनियोगो नास्ति, तथाऽपि स्मृतीनां चैकार्थ्या-दन्यत्र यो विनियोगस्तेनेहाप्यर्थवत्ता भवत्येव । पाणि-ग्रहणं बाहूपलक्षणार्थम् । उद्धृतबाहुर्यतो लोक उपवीती-त्युच्यते । सार्वकालिकं चोपवीतं वक्ष्यामः । न च केवलपाणावुद्धृते उपवीती । सव्ये उद्धृते प्राचीनावीती । समासपदान्नामधेयम् । असमासस्तु वृत्तानुरोधितया । कण्ठसज्जने । कण्ठे सज्जनं सङ्गः स्थापनम् । यदा वस्त्रस्य सूत्रस्य नान्यतरोऽपि( ? स्थापनं वस्त्रस्य सूत्रस्य वा । यदा नान्यतरोऽपि ) बाहुरुद्ध्रियते तदा निवीती भवति । मेधा.

( २ ) 'कार्पासमुपवीतं स्यात्' इत्युक्तलक्षणे उप-वीते कण्ठसज्जने कण्ठप्रक्षिप्ते सति निवीती भवति । एवं स्थिते सति उद्धृते दक्षिणे बाहौ उपवीती भवति । वामे उद्धृते प्राचीनावीती । एवं लक्षणद्वयप्रसिद्ध्यर्थ-मिहैतन्निवीतलक्षणं मनुष्यकार्यार्थं च, 'निवीतं मनुष्या-णाम्' इति श्रुतेः । प्राचीनावीतीति संज्ञा, वृत्तानु-रोधात्तु प्राचीन आवीती इत्युक्तम् । एतच्च पित्र्ये कर्मणि । गोरा.

( ३ ) आचमनाङ्गतामुपवीतस्य दर्शयितुमुपवीतलक्ष-णम्, ततः प्रसङ्गेन प्राचीनावीतीत्यादिलक्षणमाह- उद्धृत इति । दक्षिणे पाणावुद्धृते वामस्कन्धस्थिते दक्षिणस्कन्धा-वलम्बे यज्ञसूत्रे वस्त्रे वोपवीती द्विजः कथ्यते । वाम-पाणावुद्धृते दक्षिणस्कन्धस्थिते वामस्कन्धावलम्बे प्राचीना-वीती भण्यते । सव्ये प्राचीन आवीतीति छन्दोनुरोधा-दुक्तम् । तथा च गोभिलः-' दक्षिणं बाहुमुद्धृत्य ...' इति । ममु.

( ४ ) सूत्रस्य कण्ठसज्जने निवीतमिति संज्ञा, तदस्या-स्तीति निवीती । निवीतस्य मध्ये दक्षिणे पाणावुद्धृते यः संनिवेशविशेषः तदुपवीतम्, तदस्यास्तीत्युपवीती । सव्ये पाणावुद्धृते यः संनिवेशविशेषस्तत्प्राचीनावीतं नाम, तदस्यास्तीति प्राचीनावीतीत्यर्थः । तथा च श्रुतिः- 'दक्षिणत उपवीय दक्षिणं बाहुमुद्धरतेऽवधत्ते सव्यमिति, यज्ञोपवीतमेतदेव विपरीतं प्राचीनावीतम्' ( तैआ. २।१।१ ) इति । विषयविशेषमुपवीतादिना( ? दीनां ) दर्शयति श्रुतिरेव- 'निवीतं मनुष्याणां प्राचीनावीतं पितृणामुपवीतं देवानाम्' ( तैसं. २।५।११।१ ) इति । निवीतं मनुष्याणां स्वं मनुष्यकार्येषु ऋषितर्पणादिषु प्रशस्तम् । प्राचीनावीतं पितॄणां कर्मणि पितृयज्ञादौ प्रशस्तम् । यज्ञोपवीतं देवानामिति कर्मणि अग्निहोत्रादौ प्रशस्तमित्यर्थः । ¶ मुक्ता. ९२

औपासनाग्निसाध्यानि कर्माणि

**[१]वैवाहिकेऽग्नौ कुर्वीत गृह्यं कर्म यथाविधि ।**
**पञ्चयज्ञविधानं च पक्तिं चाऽऽन्वाहिकीं गृही ॥**

(१) अतिक्रान्तं विवाहप्रकरणम् । कृतो विवाहो यस्मि-न्नग्नौ तत्र कुर्वीत गृह्यं कर्म अग्निसाध्यमष्टकापार्वणश्राद्ध-होमादि गृह्यस्मृतिकारैरुक्तम् । पञ्चयज्ञा वक्ष्यमाणाः, तेषां विधानमनुष्ठानं तस्मिन्नेवाग्नौ । यद्यप्यविशेषेण पञ्चयज्ञ-विधानमित्युक्तं तथाऽपि वैश्वदेवहोमः अग्निसाध्यः, उदकतर्पणादौ तु न किंचिदग्निना कार्यम् । कथं तर्हि निर्देशोऽग्नौ पञ्चयज्ञविधानं कार्यमिति । केचिदाहुः- एकाऽपि सप्तमी विषयभेदाद्भिद्यते§ । तस्मात्पञ्चयज्ञैकदेशे पञ्चयज्ञशब्दः प्रयुक्तः । अथवा पञ्चयज्ञविधानमित्यत्रा-ग्नाविति न संबध्यते । वैश्वदेवहोमस्य पूर्वेणैवाग्न्यधि-करणस्य सिद्धत्वात् । एवं संबन्धः क्रियते- गृही तु

¶ नन्द. मुक्तागतम् ।

§ अतः परं कश्चिद्ग्रन्थस्त्रुटित इति भाति ।

(१) मस्मृ. ३।६७ ; कभा. १४ (=) गृह्यं (गार्ह्यं) ; गृक. ११५-११६ गृह्यं कर्म (गृह्यकर्म) पक्तिं चाऽऽन्वा (पक्तिरन्वा) मनुविश्वामित्रौ ; मवि. गृह्यं (गार्ह्यं) ; स्मृच. २११ गृह्यं कर्म (गृह्यकर्म) ; जभा. १५ (=) मविवत् ; हभा. ६३ मविवत् : ११२ गृह्यं (स्मार्तं) गृही (द्विजः) ; दीक. १।९७ पू. ; शाम. ४ मविवत् ; संग. १६६ मविवत् ; नन्द. मविवत् ; भाच. मविवत्.

पञ्चयज्ञविधानं कुर्यात् । अग्नौ तु वैवाहिके गृह्यकर्म । पक्तिं चाऽऽन्वाहिकीम्, अग्नावित्यपेक्ष्यते । गृहशब्दो दारवचनः । गृही तु स कृतदारपरिग्रहो भार्याद्वितीय इदमिदं कुर्यादिति । विवाहे चाग्निः कैश्चिद्गृह्यकारैररणिनिर्मन्थनादाधातव्य इत्युक्तम् । अपरैर्यतः कुतश्चिद्दीप्यमानमानीय होतव्यमिति ।

अनेन तस्मिन् गृह्यमिति वचनेन धारणमग्नेरर्थादुक्तं भवति । अत्र केचिदाहुः— शूद्रस्यापि वैवाहिकाग्निधारणमस्ति, तस्यापि पाकयज्ञाधिकारात् । न चात्र जातिविशेष उपात्तः, केवलं गृहीति श्रुतम् । शूद्रोऽपि गृही, तस्यापि दारपरिग्रहस्योक्तत्वात् । एतदेवान्यत्र पठितम्—' कर्म स्मार्तं विवाहाग्नौ कुर्वीत प्रत्यहं गृही । ' ( यास्मृ. १।९७ ) इति । अत्रोच्यते— गृह्यं कर्म वैवाहिकेऽग्नौ इति श्रुतम् । न च गृह्यं नाम किंचित्कर्मास्ति । तत्र गृह्यस्मृतिकारोक्तं गृह्यम् इति लक्षणया मन्तव्यम् । गृह्यकारैश्च त्रैवर्णिकानामेव कर्माऽऽम्नातम्, न शूद्रस्य, ' उक्तानि वैतानिकानि गृह्याणि वक्ष्यामः ' इति । उक्तानुकीर्तनस्य एतदेव प्रयोजनं ' येषामेव वैतानिकेष्वधिकारस्तेषामेव गृह्येषु ' इति, न पुनर्यथाऽन्यैर्व्याख्यातं तद्धर्मप्राप्त्यर्थम् । तादर्थ्ये हि विवक्षिते ' तस्याग्निहोत्रेण प्रादुष्करणहोमकालौ व्याख्यातौ ' इति नावक्ष्यत् । न च गृहे भवं गृह्यमिति युक्तम् । शालावचनो गृहशब्दो दारवचनो वा ? न तावत्कस्यचित्कर्मणः शालाऽधिकरणत्वेन विशेषतः समाम्नाता, यत् गृह्यमित्यनूद्य गृहिणो विधीयेत । यदपि गृहसंस्कारकं वास्तुपरीक्षादि, तदपि त्रैवर्णिकानामेव, न शूद्रस्य । अथ दारवचनस्तत्रापि गृहीत्यनेनैव गतत्वान्न किंचित् । यदपि स्मृत्यन्तरम् ' कर्म स्मार्तं विवाहाग्नौ कुर्वीत प्रत्यहं गृही । दायकालाहृते वाऽपि श्रौतं वैतानिकाग्निषु ॥ ' ( यास्मृ. १।९७ ) इति, अत्रापि किंचित्स्मार्तमिति विशेषानुपादानादन्यसापेक्षतैव । न हि सर्वमग्नौ स्मार्तं कर्म संभवति । न च होमविषयत्वे प्रमाणमस्ति । न ह्यवश्यमग्न्यधिकरण एव होमः । तस्मात् गृह्यकारोक्तं गृह्यमिति वक्तव्यम् । एते हि स्मृती गृह्यकारविहितं कर्मानुवदतः । तथा च कुतः शूद्रस्याग्निपरिग्रहः । किंच ' श्रौतं वैतानिकाग्निषु ' इत्यपरं तत्राऽऽम्नायते, तत्र अवश्यमयं त्रैवर्णिकविषय एषितव्यः । स एव पूर्वत्र चातुर्वर्ण्यपरः उत्तरत्र त्रैवर्णिकपरः इत्येकस्य शब्दस्य तात्पर्यभेदोऽभ्युपगतः स्यात् । न चाभेदे संभवति भेदो न्याय्यः । अन्वहं भवा आन्वाहिकी । प्रतिदिवसं यः पाको भुक्त्यर्थः स तस्मिन्नेवाग्नौ कर्तव्यः ।

मेधा.

( २ ) अष्टकादि गृह्योक्तं कर्म यथाशास्त्रं वक्ष्यमाणपञ्चयज्ञानुष्ठानं चाग्निसंपाद्यं प्रात्यहिकं पाकं विवाहभवेऽग्नौ गृहस्थः कुर्वीत । § गोरा.

( ३ ) वैवाहिके यत्राग्नौ लाजहोमः कृतस्तस्मिन् । गार्ह्यं गृह्योक्तं विवाहोत्तरकालीनं स्वकीयं कर्म नित्यनैमित्तिकशान्तिकपौष्टिकरूपम् । पञ्चयज्ञविधानं गार्ह्यत्वेऽपि पृथगुक्तं प्रवसता ऋत्विगादिभिर्गृह्याग्नावेव तत्कर्तव्यमित्येतदर्थम् । पञ्चयज्ञपदं वैश्वदेवमात्रपरम् । पक्तिं स्वान्नपाकम् । गृही गृहे निवसन् । मवि.

( ४ ) विवाहस्य प्रासङ्गिकमुक्त्वा यदुद्दिश्य कृतं तदाह— वैवाहिक इति । विवाहकाले भवो वैवाहिकः आवसथ्याख्यः, तस्मिन् । गृह्यं सायंप्रातर्होमाष्टकापार्वणश्राद्धादिहोमं च । विवाहोत्तरकालीनो भिन्नः श्रौतः, ' जातपुत्रः कृष्णकेशोऽग्नीनादधीत ' इति श्रुतेः । पञ्चयज्ञानां तर्पणादीनां यदेकदेशो वैश्वदेवाख्यः तस्यैव विधानम् अनुष्ठानाख्यं तदग्नौ कुर्वीत । पक्तिं पाकम् । आन्वाहिकीं प्रतिदिननिष्पाद्याम् । मच.

( ५ ) अथ गृहस्थधर्मः प्रस्तूयते— वैवाहिक इति । विवाहो यस्मिन् कृतः स वैवाहिकोऽग्निः औपासनाग्निः । गार्ह्यं कर्म अक्षतहोमपाकयज्ञादिकम् । भूतमनुष्यब्रह्मयज्ञानामग्नौ करणम् अग्निसमीपे करणम् । नन्द.

( ६ ) अथ वैश्वदेवविधिः । वैवाहिकेऽग्नौ गार्ह्यं गार्ह्यसंज्ञं कर्म यथाविधि कुर्वीत कुर्यात् । पञ्चयज्ञविधानं

§ ममु. गोरावत् ।

वैश्वदेवसंज्ञं कुर्यात् च । पक्तिं स्वान्नपाकं गृहधर्मपक्तिम् आन्वाहिकीं प्रतिदिवसं गृही कुर्यात् । भाच.

चाण्डालाद्यभिवीक्षितस्य कर्मणस्तदङ्गस्य वा निष्फलत्वम्

**[1]होमे प्रदाने भोज्ये च यदेभि*रभिवीक्ष्यते ।**
**दैवे हविषि पित्र्ये वा तद्गच्छत्ययथातथम् ॥**

(१) होमे अग्निहोत्रादौ शान्त्यादिहोमे वा । प्रदाने गोहिरण्यादिद्रव्यविषये अभ्युदयार्थे । भोज्ये ब्राह्मणा यत्र धर्माय भोज्यन्ते । दैवे हविषि दर्शपौर्णमासादौ । पित्र्ये श्राद्धे । यदभिवीक्ष्यते क्रियमाणं कर्म तद्गच्छत्ययथातथम् । यदर्थं क्रियते तद्विपरीतं भावयति । यद्यपि श्राद्धप्रकरणं तथाऽपि वाक्यादन्यत्रापि होमादावयं प्रतिषेधः । § मेधा.

(२) यस्मात्– होम इति । अग्निहोत्रादिहोमे, दाने, धर्मार्थब्राह्मणभोजने, हव्यकव्ययोश्च यत्कर्म चण्डालादिभिरवेक्ष्यते यत्( ? तत् ) यदर्थं क्रियते तन्न साधयति । गोरा.

(३) अयथातथं येभ्यो दत्तं तेभ्योऽन्यत्र गच्छति । $ मवि.

(४) होमे अग्नौकरणदेशे । प्रदाने अन्नत्यागदेशे । भोज्ये भोज्योपकल्पनदेशे महानसादौ । चशब्दादन्यस्मिन्नपि स्थाने यदन्नादिकं चण्डालादिभिरभिवीक्षितं तद्यथातथं गच्छति असम्यग्भवतीत्यर्थः । तस्मात् श्राद्धदेशादतिदूरतोऽपनेतव्या इत्यभिप्रायः । $ स्मृच. ४११ (श्रा.)

(५) तत्रैव प्रासङ्गिकं क्षिपन्नर्थवादमाह– होम इति । प्रदाने ब्राह्मणोद्देश्यकान्नदाने । भोज्ये स्वयंकृते । एभिः चण्डालादिषड्भिः । हविषि दैवे, पित्र्ये श्राद्धादौ । यथा दत्तं तदनुरूपं फलतीति यथातथम्, तद्भिन्नम् अयथातथं विफलम् । मच.

(६) दैवे वैश्वदेवे हविषि दर्शपूर्णमासादौ पित्र्ये कर्मणि वा अयथातथा गच्छति वृथा गच्छतीत्यर्थः । ¶ भाच.

सामान्यदैवकर्माङ्गाणि

**[1]दर्भाः पवित्रं पूर्वाह्णो हविष्याणि च सर्वशः ।**
**पवित्रं यच्च पूर्वोक्तं विज्ञेया हव्यसंपदः ॥**

(१) दर्भाः प्रसिद्धाः । पवित्रं मन्त्राः । हविषे हितानि योग्यानि हविष्याणि । उत्तरश्लोके तानि वक्ष्यन्ते । पवित्रं पावनं शुच्याचारता । यच्च पूर्वोक्तं वास्तुसंपादनं सृष्टिर्मृष्टिर्ब्राह्मणाश्च श्रेष्ठाः श्रुतशीलसंपन्नाः । हव्यसंपदः । हव्यं देवतोद्देशेन यागादि ब्राह्मणभोजनं च । हव्यशब्दः कर्म दैविकमुपलक्षयति । † मेधा.

(२) विष्टराद्यर्थं दर्भाः । पवित्रं दार्भम्, प्राधान्यात् पृथगुपदिष्टम् । पूर्वाह्णकालः । हविष्याणि मुन्यन्नादीनि सर्वाणि । यच्च वास्तुसंपादनादि पावनं पूर्वमुक्तम्, एता देवार्थकर्मणः सिद्धयः । गोरा.

(३) पवित्रं पावनान्तरं यवजलादि । पूर्वाह्णः अह्नो द्विभागस्य प्रथमभागः । हविष्याणि मुन्यन्नादीनि । यच्च पूर्वोक्तं पित्र्यकर्मण्युक्तं पवित्रं पावनं मृष्टि-

---

* चाण्डाल – वराह – कुक्कुट – श्व – रजस्वला – षण्ढैः पूर्वश्लोकोक्तैः ।

§ ममु., नन्द. मेधागतम् ।

$ शेषं मेधागतम् ।

(१) मस्मृ. ३।२४० ; अप. १।२२८ पृ. ४७२ वीक्ष्यते (वीक्षितम्) हविषि ( कर्मणि ); स्मृच. ४११ (श्रा.) वीक्ष्यते ( वीक्षितम् ) हविषि ( कर्मणि ) तद्गच्छत्ययथा ( तद्गच्छति यथा ) म्हैसूरमुद्रितपुस्तकपाठाः। धारपुरेमुद्रितपुस्तके उत्तरार्धं त्रुटितम्। व्याख्याने तु 'अयथातथम्' इत्येव पाठः ; चदा. १०८.

$ श्रीधारपुरेमुद्रितस्मृतिचन्द्रिकास्थो ग्रन्थस्त्रुटितः, अतः म्हैसूरमुद्रितस्मृतिचन्द्रिकातः (पृ. २०६–२०७) इदं व्याख्यानं संगृहीतम् ।

¶ शेषं मेधागतम् ।

† ममु. मेधागतं गोरागतं च । नन्द., भाच. मेधागतम् ।

(१) मस्मृ. ३।२५६.

द्विजाग्र्याश्च । हव्यं वैश्वदेविकं कर्म लक्षणया । एवं च श्राद्धे दैवकर्मणोऽनुरोधार्थं कुतपे प्रारम्भः । पित्र्यस्य च प्रधानत्वादपराह्णेऽनुष्ठानसमाप्तिरिति गम्यते । तदादायैव च श्राद्धे कुतपप्रशंसा । तत्रापि 'पितृयज्ञं तु निर्वर्त्य' इत्यभिधानादपराह्णप्राप्तौ श्राद्धप्रयोगमध्ये एव प्रधानकर्मणः प्राक् पिण्डपितृयज्ञानुष्ठानम् ।

मवि.

(४) †तत्प्रतियोगितया दैवं कालं विदधदपूर्वधर्मान् विधत्ते— दर्भा इति । 'उदगयने पूर्वपक्षे प्रागावर्तनादह्नः कालं विद्यात्' इति गोभिलसूत्रात् । पवित्रं मन्त्रम् । पुनः पवित्रपदमविगीतब्राह्मणविषयम् ।

मच.

हविष्यद्रव्याणि

**[१]मुन्यन्नानि पयः सोमो मांसं यच्चानुपस्कृतम् ।**
**अक्षारलवणं चैव प्रकृत्या हविरुच्यते ॥**

(१) मुनिर्वानप्रस्थः, तस्य अन्नानि आरण्यानि नीवारादीनि । एतच्च प्रदर्शनं ग्राम्याणामपि व्रीह्यादीनाम् । तथा अर्वाचीने श्लोके सर्वग्रहणम्, उत्तरत्र च 'हविर्यच्चिररात्राय' (३।२६६) इति प्रक्रम्य 'तिलैर्व्रीहियवैर्माषैः' इति ग्राम्याणामप्यनुक्रमणम् । पयः क्षीरम् । तद्विकारा अपि दध्यादयो गृह्यन्ते स्मृतिसमाचाराभ्याम् । सोमः ओषधिविशेषः । अनुपस्कृतम् अधिकृतमप्रतिषिद्धम् । सूनामांसाद्यनुपस्कृतम् । अक्षारलवणम् । अत्र संदिह्यते— किं द्वन्द्वगर्भो नञ्समासः, उत नञ्समास एव । (अक्षारलवणम् ?) लवणविशेषः क्षारलवणम्, ततोऽन्यदभ्यनुज्ञायते लवणम् । एवं भवितुमर्हम् । द्वन्द्वगर्भे हि वृत्तिद्वयमाश्रयणीयम्, प्रतिपदं च नञः संबन्धभेदः । तद्गुरु भवति । प्रकृत्या हविः अनाश्रिते विशेषे एतद्धविर्ज्ञेयम् । 'हविष्येण वर्तते', 'हविष्यात् प्रातराशाद् भुङ्क्ते' इत्यादिसामान्यचोदनासु तद्धविष्यं ज्ञेयम् । ‡ मेधा.

(२) आरण्यान्नं क्षीरं सोमो मांसं चानतितीक्ष्णं बिडलवणादिवर्जितं लवणं सैन्धवं स्वभावत एवैतद्धविरिति मन्वादिभिरुच्यते । गोरा.

(३) अनुपस्कृतं कार्यान्तरार्थत्वेनापक्वम् ।

अप. १।२३९

(४) मुन्यन्नानि अकृष्टपच्यानि श्यामाकनीवारादीनि । पय इति सविकारग्रहणात् दुग्धदधिघृतानां ग्रहणम् । सोमः सोमलता । अनुपस्कृतं मरीचादिना स्वादान्तरमप्रापितम् । अक्षारलवणं बिडादेः क्षारादन्यल्लवणं सामुद्रं सैन्धवं वा । प्रकृत्या स्वभावेन स्थितम्, वस्त्वन्तरामिश्रितम् । सर्वमेतद्धविः हव्यम् । मवि.

(५) अनुपस्कृतम् अविकृतं पूतिगन्धादिरहितं मांसम् । ¶ ममु.

प्राचीनावीतमप्रदक्षिणत्वं दर्भपाणित्वं च पित्र्यकर्माङ्गाणि

**[१]प्राचीनावीतिना सम्यगपसव्यमतन्द्रिणा ।**
**पित्र्यमा निधनात्कार्यं विधिवद्दर्भपाणिना ॥**

(१) यत्किंचित्पित्र्यं तत्र कर्मण्ययं विधिः । पदार्थाः प्राग्व्याख्याताः । अतन्द्रिणा अनलसेन श्रद्दधानेनेति यावत् । आ निधनात् आ मरणात्, यावज्जीविकोऽयं विधिरित्यर्थः । दर्भपाणिना । तदुक्तम्— 'दर्भाः पवित्रम्' (३।२५६) इति । तद्ग्रथितशीर्षकं दर्भमयं पवित्रमुच्यते । † मेधा.

(२) 'सव्यं प्राचीन आवीती' इत्युक्तप्राचीनावीतयुक्तेन, अनलसेन, दर्भपवित्रहस्तेन, अपसव्यं पितृतीर्थेन, यथाशास्त्रं सम्यक् पित्र्यं कर्म यावज्जीवं कार्यम् ।

गोरा.

---

† तच्छब्देन पूर्वोक्तः श्राद्धकालः परामृश्यते ।

(१) मस्मृ. ३।२५७ ; अप. १।२३९ सोमो (सोमं) : १।२५८ पयः सोमो (पयःसोमौ) ; संप्र. ८८५ ; श्राप्र. ५०.

‡ मच., नन्द., भाच. मेधादिव्याख्यानेषु गतार्थाः ।

¶ शेषं गोरागतम् ।

† ममु., मच., नन्द. मेधादिव्याख्यानेषु गतार्थाः ।

(१) मस्मृ. ३।२७९ ; स्मृच. ४३६ (श्रा.) ; स्मृसा १०२ ; पमा. ७२५ तन्द्रिणा (तन्त्रिणा) ; चम. १४६ पमावत्.

( ३ ) अपसव्यम् अप्रादक्षिण्येन, तेन पित्रादिविप्राणां प्रागपवर्गोपवेशनम् अप्रदक्षिणकर्मकरणार्थमित्यादि लभ्यते। आ निधनात् आ समाप्तेः पित्र्यं प्राचीनावीत्यादिना कार्यम्, न तु तन्मध्यपतितं दैवमपि। विधिवत् अन्यूनानधिकाङ्गम्। मवि.

( ४ ) अपसव्यम् अप्रदक्षिणम्। आ निधनात् आ श्राद्धसमाप्तेः। पित्र्यग्रहणादपित्र्ये वैश्वदेविके कर्मणि यज्ञोपवीतिना प्रदक्षिणं च सर्वं कार्यमिति द्योतितम्। स्वागतप्रत्युत्थानादौ तु यज्ञोपवीतिना कर्तव्यमित्यादि सामान्यधर्म एव, तेषां श्रेष्ठोपचारत्वेन श्राद्धाङ्गत्वाभावात्। स्मृच. ४३६ (श्रा.)

दक्षिणबाहूद्धरणनिमित्तानि

[1]**अग्न्यगारे गवां गोष्ठे ब्राह्मणानां च संनिधौ।**
**स्वाध्याये भोजने चैव दक्षिणं पाणिमुद्धरेत्॥**

( १ ) गोष्ठशब्दोऽयं निवासवचनः समासप्रतिरूपकः शब्दान्तरम्। ब्राह्मणानामिति बहुवचनं विवक्षितम्। पाणिग्रहणं बाहूपलक्षणार्थम्। भोजने आत्मकर्तृके। मेधा.

( २ ) अग्निशालायाम्, गवां गोष्ठे निवासे, ब्राह्मणसमीपे, स्वाध्यायभोजनकालयोर्दक्षिणं पाणिमा बाहोर्वाससः उद्धरेत्। $ गोरा.

( ३ ) गवां गोष्ठे गोविशिष्टे गोष्ठे। पप्र. ९०

( ४ ) दक्षिणं बाहुमुद्धरेत् यज्ञोपवीती स्यादित्यर्थः। 'दक्षिणं बाहुमुद्धरतेऽवधत्ते सव्यमिति यज्ञोपवीतम्' (तैआ. २।१।१) इति हि श्रूयते। नन्द.

$ मवि., ममु., मच., भाच., गोरागतम्।

(१) मस्मृ. ४।५८ ; ब्रक. ६२ अग्न्य (अग्न्या) मनुबौधायनपैठीनसयः ; निप्र. २९ सर्वं ब्रकवत् ; पप्र. ९० मनुबौधायनपैठीनसयः ; चम. ७५ ; संम. ४७ उत्त.

आचमननिमित्तानि

[1]**सुप्त्वा क्षुत्वा च भुक्त्वा च निष्ठीव्योक्त्वाऽनृतानि च।**
**पीत्वाऽपोऽध्येष्यमाणश्च आचामेत्प्रयतोऽपि सन्॥**

(१) क्षुत्वा अनिच्छतो वायुप्रेर्यमाणस्य यो नासिकाच्छिद्रादुपजायते शब्दः स क्षवथुः, तं कृत्वा। प्रयतोऽपि सन्। एतदध्येष्यमाणपदेनैव संबध्यते। प्रयतोऽप्यध्येष्यमाण आचम्याधीयीत, अध्ययनविध्यङ्गतयाऽऽचमनं कुर्यादित्यर्थः। स्नाना( ? स्वापा )दिभ्यस्त्वनन्तरं सकृदेव। यत्पुनरुक्तम्— 'सुप्त्वा क्षुत्वा च भुक्त्वा च पीत्वाऽपो वै मुनिस्तथा। आचान्तः पुनराचामेन्निष्ठीव्योक्त्वाऽनृतं वचः॥' इति, एवमभिसंबन्धोऽत्र कर्तव्यः— 'आचान्तो भुक्त्वा पुनराचामेत्'। यत्र पुनः 'द्विराचामेत्' इति पठ्यते, तत्राऽऽनन्तर्येणैकक्रियावृत्तिः। मेधा.

( २ ) स्वप्नक्षुतभोजनश्लेष्मनिरसनासत्याभिधानोदकपानानि कृत्वा अध्ययनं च प्रारिप्सन् शुचिरपि सन्नाचामेत्। तत्र 'भुक्त्वा चोपस्पृशेत्सम्यक्' इति द्वितीयाध्याये (२।५३) भुक्त्वा आचमनमुक्तं तत् व्रताङ्गत्वार्थम्, इह तु शौचार्थमुच्यते। तथा वेदाध्ययनकालेऽपि 'अध्येष्यमाणस्त्वाचान्तः' (२।७०) 'वेदमध्येष्यमाणश्च' (५।१३८) इति द्विभक्तमपि इहेतरविधिवत् सार्थं निरूप्यते( ? )। गोरा.

( ३ ) क्षुत्वा क्षुतं कृत्वा, निष्ठीव्य सश्लेष्मवक्त्ररसं निरस्य, प्रयतोऽपि सन् एकेनाऽऽचमनेनापरमप्याचामे-

(१) मस्मृ. ५।१४५ ; मिता. १।१९६ निष्ठीव्योक्त्वाऽनृतानि च ( ष्ठीवित्वोक्त्वाऽनृतं वचः ) ; ब्रक. १३५ मन्वङ्गिरोबृहस्पतयः : १४३ तृतीयपादमात्रम् ; स्मृच. ९९ पीत्वाऽपोऽध्येष्यमाणश्च ( रथ्यां श्मशानं चाऽऽक्रम्य ) ; पमा. २२४ नृतानि च ( नृतं वचः ) शेषं स्मृचवत् ; संप्र. ५२३ मितावत् ; मुक्ता. २३६ पूर्वार्धे (सुप्त्वा क्षुत्वा तथा भुक्त्वा ष्ठीवित्वोक्त्वाऽनृतं वचः।).

दिति द्विराचमनमुक्तम् । 'अध्येष्यमाणः' इत्यध्ययनार्थप्रायत्यहेतुतया द्विराचमनं विहितम् । मवि.

(४) यत्तु 'भुक्त्वा चोपस्पृशेत्सम्यक्' इति, तथा 'अध्येष्यमाणस्त्वाचान्तः' इति द्वितीयाध्यायोक्तम्, तत् व्रताङ्गत्वेन । इह तु भुक्त्वा आचमनविधानं पुरुषार्थम्, अध्ययनाङ्गतयाऽऽचमनविधानं गृहस्थादीनामपीति ।

‡ ममु.

(५) किंच, एतेषु षट्सु पुनराचामेदित्याह— सुप्त्वेति । आचमनं द्विविधं प्रायश्चित्तार्थं कर्माङ्गं च, 'आचान्तेन कर्तव्यम्' इति गोभिलस्मरणात् । प्रयतोऽपीत्यनेन कर्माद्यर्थमाचान्तः एतेषु जातेष्वाचामेदित्यर्थः । चत्रयमनुक्तरथ्योपसर्पणाद्यर्थम् । प्रयतोऽप्यध्येष्यमाण आचम्याधीयीत इति मेधातिथिः । तत्रापि 'अध्येष्यमाणश्चाऽऽचामेत्' इत्यनेन प्रत्याचमनस्य पूर्वाङ्गत्वप्राप्तेरेतेनाऽऽचान्तः पुनराचामेदित्यपि व्याख्या ।

मच.

(६) प्रयतः आचान्तः । संप्र. ५२३

(७) पुनरध्येष्यमाणग्रहणमादरातिशयार्थम् ।

नन्द.

अनापदि आपत्कल्पस्य निष्फलत्वम्

[१]**आपत्कल्पेन यो धर्मं कुरुतेऽनापदि द्विजः ।**
**स नाऽऽप्नोति फलं तस्य परत्रेति विचारितम् ॥**

(१) आपत्कल्पप्रतिनिधिं वैश्वानरीं वा विद्यमानधनो यो गौणपक्षमाश्रयति तस्य न सोऽर्थः सिध्यति ।

मेधा.

(२) आपच्चोदितेन विधिना वैश्वानर्यादिना अनापदि योऽनुष्ठानं द्विजः कुरुते तस्य परलोके तन्निष्फलं भवति इति मन्वादिभिर्विचारितम् । § गोरा.

‡ शेषं गोरावत् ।

§ सर्वेषां व्याख्यानां गोरावत्तात्पर्यम् ।

(१) मस्मृ. ११।२८ ; अप. १।१२६ ; स्मृच. १५८.

[१]**विश्वैश्च देवैः साध्यैश्च ब्राह्मणैश्च महर्षिभिः ।**
**आपत्सु मरणाद्भीतैर्विधेः प्रतिनिधिः कृतः ॥**

(१) एष एवार्थः— आपदि प्रतिनिधिराश्रयितव्यो न संपदि । मेधा.

(२) विश्वेदेवाख्यैर्देवैः साध्यैश्च तथा महर्षिभिः ब्राह्मणैः मरणाद्भीतैः आपत्सु मुख्यविधेः सोमादेर्वैश्वानर्यादिः प्रतिनिधिरनुष्ठितः । अतोऽसौ मुख्यासंभवे कार्यः, न तु तत्संभवे । ¶ गोरा.

(३) आपदि तत्करणादापत्कल्प एव श्रेयानिति परकृतिरूपेणार्थवादेनाऽऽह— विश्वैश्च देवैरिति । नन्द.

[२]**प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते ।**
**न सांपरायिकं तस्य दुर्मतेर्विद्यते फलम् ॥**

(१) अयमपि पूर्वशेषोऽर्थवादः । सांपरायिकं पारलौकिकम् । मेधा.

(२) यो मुख्यानुष्ठानसमर्थः सन्नापच्चोदितेन (? चोदितस्य) प्रतिनिधेरनुष्ठानं करोति, तस्य दुर्बुद्धेः पारलौकिकमभ्युदयप्रत्यवायाभावाख्यं (फलं) न भवति । 'आपत्कल्पेन यो धर्मम्' इत्यनेनोक्तमप्येतदुपसंहारार्थं पुनरुच्यते । गोरा.

¶ नन्दभिन्नव्याख्यानां गोरावत्तात्पर्यम् ।

(१) मस्मृ. ११।२९ ; अप. १।१२६ ; स्मृच. १५८.

(२) मस्मृ. ११।३० ; विश्व. १।३८ पू. ; अप. १।१२६ कल्पेन वर्तते (कल्पे तु वर्तते) ; ब्रक. ५१ ; स्मृच. ३९२ (श्रा.) ; चव्र. ३२ ; स्मृसा. ८९ (=) वर्तते (वर्तयेत्) ; पमा. ६८४ ; गप. २० अपवत् ; निप्र. ९, १९६ (=) ; पप्र. २९, ७१ ; मुक्ता. १५ : २९२ पूर्वार्धे (प्रभुः प्रथमकल्पेऽपि योऽनुकल्पे प्रवर्तते ।) विद्यते (वर्तते) ; सादी. २७ (=) उत्तरार्धे (स नाऽऽप्नोति फलं चेह न परत्रेति च श्रुतिः ॥) ; बाल. १।५४ (=) उत्तरार्धे (स नाऽऽप्नोति फलं तस्य परत्रेति श्रुतिः स्मृतिः ॥) ; प्रका. ३६ ; संर. १४ बालवत्.

(३) प्रभुः शक्तः । प्रथमकल्पस्य मुख्यस्य । अनुकल्पेन प्रतिनिध्यादिना । सांपरायिकं पारलौकिकम् । ऐहिककीर्त्यादिस्तु लाभो भवत्येव । ‡ मवि.

(४) प्रथमकल्पलाभेऽनुकल्पानुष्ठाने तु दोषमाह स एव– प्रभुरिति । प्रभुः संपादने समर्थः । सांपरायः उत्तरकालः, 'युद्धायत्योः सांपरायः' इत्यमरसिंहाभिधानात् । एवं चायमर्थः– सांपराये भविष्यत्काले स्वर्गादिकं फलं न विद्यते न सिध्यति ।

¶ स्मृच. ३९२ (श्रा.)

(५) यो मुख्यानुष्ठानसंपन्नः सन्नापद्विहितेन प्रतिनिधिनाऽनुष्ठानं करोति तस्य दुर्बुद्धेः पारलौकिकमभ्युदयरूपं प्रत्यवायपरिहारार्थं फलं च( ? परिहाराख्यं च फलं ) न भवति । 'आपत्कल्पेन यो धर्मम्' इत्यनेनोक्तमप्येतच्छास्त्रादरार्थं पुनरुच्यते । ममु.

(६) सामर्थ्ये तु– 'प्रभुः प्रथमकल्पस्य .... फलम् ॥' इति न्यायात् न फलं न वा प्रत्यवायपरिहार इति मण्डनाचार्याः । गप. २०

(७) अनुकल्पो नाम यत्र साधनमविशेषेण विधीयते, तदसंभवे साधनान्तरं विधीयते । यथा 'खादिरो यूपो भवति' इति विधाय 'खादिराभावे पालाशः' इति सोमे । यत्र 'व्रीहिभिर्यजेत' इति व्रीह्यादिसाधनविधौ तदसंभवे कर्मलोपप्रसङ्गे तत्सदृशं द्रव्यान्तरं साधनमुपादीयते स्वोत्प्रेक्षया तत्र प्रतिनिधिः । यथा नित्यकर्मणि व्रीह्यपचारे नीवारादिः । तत्र प्रतिनिधौ विधिव्यापारो नास्ति, अनुकल्पे त्वस्ति । यत्र तु 'सोमाभावे पूतिकानभिषुणुयात्' इति श्रूयते, तत्र सोमाभावे सादृश्येन पूतिकाः प्राप्ता एव, किंतु पूतिकावदन्येऽपि सोमसदृशाः, तत्र पूतिका नियम्यन्ते । एवं काम्येषु यद्यपि सर्वाङ्गसंपत्तावधिकार इति न प्रतिनिधिसंभवस्तत्रापि आरम्भानन्तरमवश्यसमापनीयत्वात् प्रतिनिधिप्रवेशः । अनुकल्पस्य तु शास्त्रीयसाधनत्वादनुकल्पमादायाप्यारम्भः । केवलं– 'प्रभुः प्रथमकल्पस्य . . . फलम् ॥' इति मुख्यकल्पसंभवे नानुकल्पाधिकारः ।

निप्र. १९५–१९६

‡ ब्रक., पप्र. मविगतम् ।

¶ पमा. स्मृचगतम् ।

आर्त्विज्यानर्हता आर्त्विज्यार्हता च

**[1]न वै कन्या न युवतिर्नाल्पविद्यो न बालिशः ।**
**होता स्यादग्निहोत्रस्य नाऽऽर्तो नासंस्कृतस्तथा ॥**

(१) अग्निहोत्रे ऋत्विग्वरणस्य समाम्नानात् 'जुहुयात् हावयेद्वा' इति स्त्रीपुंसयोरविशेषेण क्षीरहोतृताप्राप्तौ कन्यायुवत्योः प्रतिषेधः । एवमाहुतिद्वयमात्रविधिज्ञस्याल्पविद्यस्य बालिशस्य वा प्राप्तिः प्रतिषिध्यते । आर्तः व्याधिना । असंस्कृतः अनुपनीतः । 'एतच्चायुक्तम् । श्रौते ह्यग्निहोत्रे स्वयं पर्वणि जुहुयात् ऋत्विजामेक इतरेषां कालम् ( ? )इति समाचरन्ति । न च स्त्रीणामार्त्विज्यसंभवः, अतो गृह्याग्निविषये कन्यायुवत्योः प्रतिषेधो जातपुत्रायाः प्राप्त्यर्थः' इति वर्णयन्ति । तथा चान्येऽपि सूत्रकाराः– 'कामं गृह्येऽग्नौ पत्नी जुहुयात् सायंप्रातर्होमौ' इति । अन्ये तु 'वैतानकुशलः' इति वचनात् त्रेताग्निविषयमेवेदं मन्यन्ते । वितानः विहारः । स च श्रौतेष्वग्निषु संभवति । न च तत्र स्त्र्यादीनां प्राप्तिः, न त्वविदुषाम्, त्रिशिष्टानामेव पुंसामार्त्विज्यविधानात् । अतः अग्निहोत्रग्रहणं सर्वकर्मणां होतृग्रहणं च सर्वर्त्विजां प्रदर्शनार्थम् । अतः श्रुत्यर्थानुवादमात्रमेषा स्मृतिः । मेधा.

(२) कन्या तरुणी अल्पाध्ययनमूर्खव्याध्यादिपीडितानुपनीताः श्रौतं सायंप्रातर्होमं न कुर्युर्नापि कारयितव्याः । इति शास्त्रपरिज्ञानाप्रतिनिधिरूपेणैषां होमं कारयेत्( ? ) । ततोऽयं प्रतिषेधः कन्यादीनां च । गोरा.

(३) अल्पविद्यः प्रतिनिधिप्रायश्चित्ताद्यनभिज्ञः । बालिशः षोडशवर्षादर्वाचीनः । आर्तः रोगादिपीडितः । असंस्कृतः गर्भाधानादिसंस्काररहितः । † गृक. १२६

† गृर. गृकवत् ।

(१) मस्मृ. ११।३६ ; ब्रक. ९८ (=) पू. ; गृक. १२६ न वै (न च) ; स्मृच. २५ : १६१ न वै (नैव) ; गृर. १०१ ; मुक्ता. ३५५.

(४) यथा कन्यादयो (न) होतारस्तथा अविद्यः अतिबालः दुःखाद्यार्तश्च न होता स्यादिति त्रितयदृष्टान्ततया त्रयाणां कन्यायुवत्यसंस्कृतानामभिधानम् । अत एवाग्रे तथैवोपसंहारः । मवि.

(५) यत् पुनर्मनुनोक्तम्— 'नैव कन्या न युवतिः . . .' इति, तच्छ्रौताग्निविषयम्, अग्निहोत्रग्रहणात् । एतेन न शौनकोक्त*विरोधः । कन्याग्रहणं पत्न्या अपि प्रदर्शनार्थम् । अत एव गोभिलः— 'कामं गृह्याग्नौ पत्नी जुहुयात् सायंप्रातर्होमौ' इति । स्मृच. १६१

(६) कन्या अनूढा, ऊढाऽपि तरुणी, तथा अल्पाध्यायिमूर्खव्याध्यादिपीडितानुपनीताः श्रौतान् सायंप्रातर्होमान् न कुर्युः । 'हावयेत्' इति प्रसक्तावयं कन्यादीनां प्रतिषेधः । ममु.

(७) 'विधेः प्रतिनिधिः' इत्युक्तेनासमर्थस्य नित्ये प्रारब्धे वा (काम्ये) कर्मणि प्रतिनिधिः प्राप्तः, तं विशिनष्टि— नेति । कन्या युवतिश्च ऊढानूढे, 'असामर्थ्ये शरीरस्य व्रते च समुपस्थिते । कारयेद्धर्मपत्नीं वा पुत्रं वा विनयान्वितम् ॥' इति स्वपत्न्याः प्रतिनिधित्वेन प्रापितत्वात् । बालिशः देहमात्राहंबुद्धिः, अधीतवेदवेदाङ्गोऽपि नास्तिकः, अल्पविद्यनिरासेन मूर्खस्य निरस्तत्वात् । आर्तः रोगी । असंस्कृतः अनुपनीत इति प्राप्तपुत्रनिषेधार्थः । मच.

**[1]नरके हि पतन्त्येते जुह्वतः स च यस्य तत् ।**
**तस्माद्वैतानकुशलो होता स्याद्वेदपारगः ॥**

(१) एते कन्यादयः जुह्वतो नरकं गच्छन्ति । स च यजमानो हावयिता । मेधा.

(२) एते कन्यादयः होमं कुर्वाणा नरकं गच्छन्ति । यस्य च अग्निहोत्रं प्रतिनिधिरूपेण कुर्वन्ति सोऽपि नरकं व्रजति । तस्माच्छ्रौतकर्मप्रवीणः समस्तवेदाध्यायी होता कार्यः । ‡ गोरा.

(३) यस्य अग्निहोत्रिणः, तत् अग्निहोत्रमिति शेषः । वैतानकुशलः अग्नित्रयसाध्यकर्मकरणकुशलः । कन्यादीनां चात्र अग्निहोत्रे ऋत्विक्प्रतिनिधित्वेन प्राप्तानां प्रतिषेधः । § गृक. १२६

(४) एते अल्पविद्यादयः । जुह्वतः होमं कुर्वाणाः । यस्य तदग्निहोत्रम् । वैतानम् अग्निहोत्रकर्म, तत्र कुशलः शक्तः अबालत्वानार्तत्वाभ्याम् । वेदपारगः अतिविद्यः । मवि.

(५) वैतान इत्युपलक्षणं स्मार्तकर्मणः । संर. ६१२

दक्षिणहस्तः, यज्ञोपवीतम्, प्रादक्षिण्यम्, अखण्डवस्त्रत्वम्, अलम्बितवस्त्राधत्वम्, उत्तरीयवत्त्वं च कर्माङ्गानि

**[1]कुत्सिते वामहस्तः स्याद्दक्षिणः स्यादकुत्सिते ।**
**यज्ञोपवीतिना कार्यं सर्वं कर्म प्रदक्षिणम् ॥**
**[2]खण्डवस्त्रावृतश्चैव वस्त्रार्धलम्बितस्तथा ।**
**उत्तरीयव्यपेतश्च तत्कृतं निष्फलं भवेत् ॥**

## वृद्धमनुः

रजकधौतोपभुक्तवस्त्रयोः कर्मानर्हता

**[3]स्वयंधौतेन कर्तव्या क्रिया धर्म्या विपश्चिता ।**
**न तु नेजकधौतेन नोपभुक्तेन वा क्वचित् ॥**

नेजकः रजकः । स्वयंग्रहणादेव नेजकनिवृत्तौ सिद्धायामपि पुनर्नेजकप्रतिषेधोऽन्येनापि ब्राह्मणादिना धौतेन क्रिया कार्येति ज्ञापनार्थः । स्मृच. ४३५ (श्रा.)

---

* 'पाणिग्रहणादि गृह्यं परिचरेत्स्वयं पत्न्यपि वा पुत्रः कुमार्यन्तेवासी वा' इति वचनेन ।

(१) मस्मृ. ११।३७ ; गृक. १२६ नरके (नरकं) ; स्मृच. १६१ गृकवत् ; गृर. १०१ ; मुक्ता. ३५५ ; संर. ६१२ गृकवत्, कात्यायनः.

‡ ममु., मच., नन्द., भाच. गोरागतम् ।

§ गृर. गृकगतम् ।

(१) आर. ६ पू. ; मुक्ता. १४.

(२) संग. ६३ व्यपेतश्च (व्यतीतस्य) ; संदी. ५२.

(३) स्मृच. ४३५ (श्रा.) चतुर्थपादं विना ; संदी. ५.

प्राणायामस्य कर्माङ्गता

[1]**प्राणानायम्य कुर्वीत सर्वकर्माणि संयतः ॥**

कृतप्राणायामत्वमपि अधिकारितावच्छेदकम्, 'प्राणानायम्य कुर्वीत' इति वृद्धमनूक्तेः। संदी. १२

स्वसूत्राभावे परसूत्रीयकर्मानुज्ञा

[2]**स्वसूत्रेऽविद्यमाने तु परसूत्रेण वर्तते।**
**बोधायनमतं कृत्वा स्वसूत्रफलभाग्भवेत् ॥**

देशान्तरलक्षणम्

[3]**महानद्यन्तरं यत्र गिरिर्वा व्यवधायकः।**
**वाचो यत्र विभिद्यन्ते तद्देशान्तरमुच्यते ॥**

[4]**देशनामनदीभेदान्निकटोऽपि भवेद्यदि।**
**तत्तु देशान्तरं प्रोक्तं स्वयमेव स्वयंभुवा।**
**दशरात्रेण या वार्ता यत्र न श्रूयतेऽथवा ॥**

(१) देशान्तरपरिभाषायां बृहन्मनुः— 'वाचो यत्र विभिद्यन्ते....'। बृहस्पतिः—'देशान्तरं वदन्त्येके षष्टियोजनमायतम्। चत्वारिंशद्वदन्त्येके त्रिंशदेके तथैव च॥'। मुनिद्वयवचनोक्तवागादियोजनादिभेदानां सामञ्जस्यार्थमेवं व्याख्यायते— त्रितयवैशिष्ट्ये त्रिंशद्योजनाभ्यन्तरे, द्वितयवैशिष्ट्ये तदुपरि चत्वारिंशद्योजनाभ्यन्तरे, एकवैशिष्ट्ये चत्वारिंशद्योजनोपरि षष्टियोजनाभ्यन्तरे वाणीगिरिमहानद्यन्तरितत्वभेदाभावेऽपि वैदेश्यमिति शुद्धिचिन्तामणिः। उत. १२०

(२) देशनामानि अङ्गवङ्गकलिङ्गादीनि। नदीविशेषः महानदीति यावत्। मुक्ता. ५२३

(१) आर. ३; शाम. २; इन्दु. १४; संदी. १२.

(२) मुक्ता. १५.

(३) मिता. ३।२१ बृहस्पतिः; अप. ३।२२; पमा. ५९५; उत. १२० (वाचो यत्र विभिद्यन्ते गिरिर्वा व्यवधायकः। महानद्यन्तरं यत्र तद्देशान्तरमुच्यते ॥); निसा. ४४२; मुक्ता. ५२३ बृहस्पतिः.

(४) उत. १२०; मुक्ता. ५२३ पूर्वार्धे (देशनामनदीभेदो निकटे यत्र वै भवेत्।) तत्तु (तेन) तृतीयार्धं नास्ति.

## याज्ञवल्क्यः

आचमनकल्पः

[1]**अन्तर्जानु शुचौ देश उपविष्ट उदङ्मुखः।**
**प्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत् ॥**

(१) प्राग्वा प्राङ्मुखो वेत्यर्थः। स्मृत्यन्तराच्च बद्धशिखो बद्धकक्ष आ मणिबन्धनात् पाणी प्रक्षाल्य ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत्। द्विजग्रहणं स्त्र्यादिव्यावृत्त्यर्थम्। नित्यशब्दात् सर्वाश्रमेष्वयमेवाऽऽचमनकल्पः। सूतकादावप्यनिवृत्तिरित्यन्ये। ‡ विश्व.

(२) शुचौ अशुचिद्रव्यासंस्पृष्टे देशे इत्युपादानादुपानच्छयनासनादिनिषेधः। उपविष्टः न स्थितः शयानः प्रह्वो गच्छन् वा। उदङ्मुखः प्राङ्मुखो वेति दिगन्तरनिवृत्तिः। शुचौ देशे इत्येतस्मात्पादप्रक्षालनप्राप्तिः। ब्राह्मेण तीर्थेन वक्ष्यमाणलक्षणेन। द्विजः, न शूद्रादिः। नित्यं सर्वकालम् आश्रमान्तरगतोऽपि। उपस्पृशेत् आचामेत्। कथम्? अन्तर्जानु जानुनोर्मध्ये हस्तौ कृत्वा दक्षिणेन हस्तेनेति। मिता.

(३) ब्राह्मग्रहणं कायदैवयोरपि प्रदर्शनार्थम्। अत एव मनुः— ब्राह्मेणेत्यादि। स्मृच. ९५

(४) शुचौ अशौचापादकनिमित्तरहिते। देशे भूमौ। अन्तर्जानु जानुद्वयमध्यस्थितबाहुद्वयं तादृग्दक्षिणबाहुः वा यथा स्यात् तथोपविष्टः। उदङ्मुखः उत्तराभिमुखः। (प्राक्) प्राङ्मुखः। वेत्यनुक्तस्यापि विकल्पार्थः, 'ईशानाभिमुखो भूत्वा' इति मरीचिवचनात्। ब्राह्मेण तीर्थेन वक्ष्यमाणेन। द्विज इत्याचमनकर्तृमात्रोपलक्षणम्, आकाङ्क्षातौल्यात्। नित्यं सति संभवे तीर्थान्तरसौष्ठवेऽपि, 'ब्राह्मेण विप्रस्तीर्थेन

‡ अप. विश्वगतम्।

(१) यास्मृ. १।१८; विश्व.; मिता.; अप.; स्मृच. ९५; वीमि.; मुक्ता. २२१; संदी. ५२. यद्यपि बहुषु पुस्तकेषु 'अन्तर्जानुः' इति सविसर्गः पाठो मुद्रितस्तथाऽपि अशुद्धत्वात् व्याख्यानविरुद्धत्वाच्चास्माभिः स न स्वीकृतः।

नित्यकालमुपस्पृशेत् । कायत्रैदशिकाभ्यां वा न पित्र्येण कदाचन ॥' (मस्मृ. २।५८) इति मनुना असंभवे तीर्थन्तरस्यापि विधानात् । † वीमि.

### हस्तस्थिततीर्थानि

[1]कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च।
प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् ॥

(१) ब्राह्मेण तीर्थेनेत्युक्तम् । तस्य चालौकिकत्वाल्लक्षणमाह— कनिष्ठेति । ब्राह्मप्रसङ्गादन्यान्यपि तीर्थानि कार्यौपयिकत्वादुच्यन्ते । तीर्थमिति च दक्षिणहस्तेऽवतारप्रदेशनामधेयम् । लोकेऽप्युदकाद्यवतारे तीर्थशब्दः प्रसिद्धः । तानि च विशेषकार्यौपयिकत्वात् स्तुत्यर्थं देवताभिराख्यायन्ते । अर्थतश्चतुर्णामवगतानां व्यवहारार्थं विशेषसंज्ञाः कथ्यन्ते । कनिष्ठिकामूले प्राजापत्यम् । देशिनीमूले पित्र्यम् । देशिनी अङ्गुष्ठानन्तराङ्गुलिः । तस्या-(? स्या अ)ङ्गुष्ठस्य चान्तराल इत्यर्थः । ब्राह्मं त्वङ्गुष्ठमूले । कराग्रे दैवम् । तत्र ब्राह्मेणोपस्पृशेदिति प्रकृतसंबन्धः । तथा च शाट्यायनकः कल्पः— 'दक्षिणे ब्राह्मणहस्ते पञ्च तीर्थानि भवन्ति । प्राङ्मुखश्चेत् पुरस्तात् दैवम्, दक्षिणतः पित्र्यम्, पश्चात् ब्राह्मम्, उत्तरतः प्राजापत्यम्, मध्ये पारमेष्ठ्यम्' इत्यादि । वृद्धवासिष्ठेऽप्येवमेव । मध्ये सौम्यमिति तु विशेषः । आचार्यस्य पञ्च( म )तीर्थानभिधानं तस्य कमण्डलूपस्पर्शनादिविनियोगेनाल्पप्रयोजनत्वात् । ब्राह्मणग्रहणं चोदाहरणोपलक्षणार्थम्, अन्यपरत्वात् । सव्ये पाणौ विरोधात् तीर्थाभाव एव । अतश्च ब्राह्मोपदेशादेव दक्षिणेनाऽऽचमनमिति ज्ञायते । तथा चोक्तम्— 'दक्षिणेनाऽऽचमनम्' इति । * विश्व.

(२) ब्राह्मेण इत्युक्तम्, तत् किं ब्राह्मम् ? किं च तस्य विशिष्य विधिना व्यवच्छेद्यं तीर्थान्तरम् ? इत्यपेक्षायां तीर्थान्याह— कनिष्ठेति । देशिनी तर्जनी । कनिष्ठादीनां मूलानि करस्याग्रम् अनुक्रमात् यथासंख्यं प्रजापतितीर्थादीनि स्युः । तुशब्देन अङ्गुष्ठतर्जनीमूलयोर्व्यवच्छेदः । यदि तु चेति पाठः, तदा कनीनीमूलस्य समुच्चयः । तथा च बौधायनः— 'कनीनीमूलं दैवमङ्गुल्यग्रमार्षम्' । वसिष्ठः— 'त्र्यङ्गुष्ठस्याग्रे( ? अङ्गुल्यग्रेषु) मानुषं मध्य आग्नेयम्' । योगी— 'मध्ये सौम्यं प्रतिष्ठितम्' । ब्राह्मे— 'हस्तमध्ये ब्राह्मम्' । शङ्खः— 'कायं कनीनिकामूलम्' । एवं च कनिष्ठामूलस्य कायं प्राजापत्यं दैवमिति, तर्जन्यङ्गुष्ठमध्यस्य पित्र्यमिति, अङ्गुष्ठमूलस्य ब्राह्ममिति, अङ्गुल्यग्रस्य दैवम् आर्षमिति, हस्तमध्यस्य आग्नेयं सौम्यं ब्राह्ममिति संज्ञा पर्यवस्यतीति । वीमि.

### प्राणायामकल्पः

[1]गायत्रीं शिरसा सार्धं जपेद्व्याहृतिपूर्विकाम् ।
प्रतिप्रणवसंयुक्तां त्रिरयं प्राणसंयमः ॥

(१) प्राणायामः कर्तव्य इत्युक्तम् । तत्स्वरूपमाह— गायत्रीमिति । ¶ 'महर्जनस्तपः सत्यं भूर्भुवः सुवस्तत्सवितुर्वरेण्यमित्यृचम्' । 'सावित्र्याश्च शिरः पुण्यमापो ज्योती रसोऽमृतम्' इति । अयं च प्राणसंयमस्त्रिः कार्य इति योजनीयम् । अन्ये तु— 'एवंरूपां सावित्रीं त्रिर्जपेत्, अयं च प्राणसंयमः' इति वर्णयन्ति । संयतोच्छ्वासेन चायं जपः कार्यः, समाख्यानात् । तथा च मनुः— 'त्रिर्जपेदायतप्राणः प्राणायामः स उच्यते ।' इति । विश्व.

(२) गायत्रीं पूर्वोक्ताम् 'आपो ज्योतिः' इत्यादिना शिरसा संयुक्ताम् उक्तव्याहृतिपूर्विकां प्रतिव्याहृति प्रणवेन

---

† शेषं मितागतम् ।

(१) यास्मृ. १।१९ ; विश्व. देव (दैव) ; मिता. ; अप. ; मवि. २।५९ निर्देशमात्रम् ; स्मृच. ९६ च (तु) देव (दैव) ; ममु. २।५९ ; मच. २।५९ च (तु) ; वीमि. च (तु) इत्यपि पाठः ; पमा. ७६ ; मुक्ता. २२५ ; आन. १७ ; संदी. ४७ च (तु).

* मिता., अप., मुक्ता., आन. विश्वगतम् ।

¶ इह कियांश्चित् व्याख्यानांशो गलित इव भाति ।

(१) यास्मृ. १।२३ ; विश्व. ; मिता. ; अप. ; मच. २।७७ ; वीमि. ; मुक्ता. २२३.

संयुक्ताम् ‘ओं भूः ओं भुवः ओं स्वः’ इति, त्रीन् वारान् मुखनासिकासंचारिवायुं निरुन्धन् मनसा जपेदित्ययं सर्वत्र प्राणायामः। मिता.

(३) प्राणायामस्वरूपमाह— गायत्रीमिति। ‘तत्सवितुः’ इति गायत्री, अस्या एव तैत्तिरीयकारण्यके प्राणायाममन्त्रत्वेनाऽऽम्नानात्। ‘ओमापो ज्योतिः’ इत्यादिकेन शिरसा सार्धं व्याहृतिपूर्विकां प्रतिप्रणवसंयुक्तां त्रिर्जपेत्। एष प्राणसंयमः प्राणायाम इत्यर्थः। भूराद्या व्याहृतयः सप्त सत्यान्ताः पूर्वा यस्याः सा तत्पूर्विका। प्रतिमन्त्रं प्रणवः प्रतिप्रणवः। मन्त्राश्च व्याहृतयः सावित्री शिरश्च। शिरसोऽन्ते यः प्रणवः स शिरोन्तर्मन्त्रान्तर्गत (? शिरोमन्त्रान्तर्गत) एव। अप.

(४) प्रकृते प्राणायामः कीदृगित्याकाङ्क्षां पूरयन्नेव संध्यान्तर्गते प्राणायामे जपविशेषरूपमङ्गं विधत्ते— गायत्रीमिति। अत्र अयंशब्दः स इति समानार्थः ‘पवनाग्निसमागमो ह्ययं सहितं ब्रह्म यदस्त्रतेजसा।’ (रघु. ८।४) इत्यादाविव। तस्य च यत्पदसापेक्षत्वात्सप्तम्यन्तं तदिहाध्याह्रियते। तेन शिरसेत्यादिविशेषणविशिष्टां गायत्रीं यत्र जपेत्स प्राणसंयमः क्रियेतेत्यर्थः, क्रियेरन्नित्यध्याहृतस्य विभक्तिविपरिणामेनानुवृत्तेः। बहवस्तु, प्राणसंयमस्वरूपमाह— गायत्रीमित्य(? मितील)वतारयन्ति। तच्चिन्त्यम्, प्राणसंयमशब्दार्थस्यानभिधानात्। § वीमि.

श्रौतस्मार्तकर्मणां क्रमेण श्रौतस्मार्ताग्निसाध्यत्वम्

**[१]कर्म स्मार्तं विवाहाग्नौ कुर्वीत प्रत्यहं गृही।**
**दायकालाहृते वाऽपि श्रौतं वैतानिकाग्निषु॥**

---

§ अस्मिन् श्लोके वीमिव्याख्यानमतीव विस्तृतं वर्तते। अत्र तु यावदुपयुक्तं तावदेव संगृहीतम्। सविस्तरं व्याख्यानं तु अग्रिमकाण्डे संग्रहीष्यते।

(१) यास्मृ. १।९७; विश्व. १।९६; मेधा. ३।६७; मिता.; अप.; गृक. ११६ वाऽपि श्रौतं (चापि स्मार्तं); स्मृच. १५६ निकाग्निषु (निकादिषु): ४५९ (श्रा.); गृर. ९५ लाहृते (लाहिते); हभा. ११२ लाहृते (लादृते); पमा. २९१–२९२; स्मृकौ. २९ (=);

(१) एवं तावद्गृहस्थधर्ममुक्त्वा, इदानीं गृहस्थस्याऽऽह्निकं विवक्षुस्तन्मूलभूताग्निनियमायाऽऽह — कर्मेति। दृष्टान्तार्थं श्रौतवचनम्। यथैव श्रौतम् अग्न्यन्तरे क्रियमाणम् अकर्मैव स्यात्, एवं स्मार्तमक्षतहोमान्नपाकादि। वैवाहिकश्चाग्निः चतुर्थ्युत्तरकालम्, तेनैव पत्न्यर्थावाप्तेः, पत्नीव्रतश्चाधिकारात्। दायविभागकालाहृते वा। अपिशब्दात् कालान्तराहृतेऽपि। यथा विद्यमानपत्नीकस्य पत्न्यन्तरमरणे। पत्न्यन्तरोत्पादे तु वैवाहिकवचनादेव सिद्धिः। तथा च गौतमः— ‘भार्यादिरग्निर्दायादिर्वा’ (गौध. ५।७) इति। ननु आधानाधिकृतस्यायं कालविधिः, न विद्यमानाग्नेः पत्न्यन्तरोत्पादमात्रेणाधिकारः। तस्या एवाधिकार इति चेत्, न, सहत्वासंभवात्। तदनुरोधात् सहत्वापत्तिरिति चेत्, न, अग्निमत्त्वात्, तत्त्यागासंभवाच्च। ननु इदमपि मध्यकं द्रव्यं कथमिवैकस्त्यक्तुं क्षमः स्यात्? मैवम्। यथैव रजस्वलायां पत्न्यामेकाक्येव यजमानस्त्यजेत् वचनात् तदनुज्ञामात्रेण, एवमत्रापीत्यदोषः। तथैव चासौ कारयितव्या, यथा आत्मीयसंबन्धं न विरोधाय कुर्यात्। यद्वा द्रव्याभाव एवास्याः, कुतः? अस्मादेवानधिकारात्। मैवम्। न हि क्रत्वर्थं द्रव्यार्जनम्, पुरुषार्थमेव। तच्चानधिकारेऽप्यव्याहतमेव, ‘भसदा ह वा एताः परगृहाणामैश्वर्यमवरुन्धते’ इति श्रुतेः। अधिकारानपेक्षो हि द्रव्यसंबन्धः। सत्यम्। स तु पूर्वतरज्येष्ठाया एव। तदतिक्रमाच्च परिणीताऽप्यस्वामिन्येव वेश्यावत्। नन्वधिवेदननिमित्ते सत्यूढा कथमिवास्वामिनी स्यात्? उच्यते। द्विविधं ह्यधिवेदनम्, धर्मप्रजापायरूपत्वात्। तत्र धर्मापाये परैव स्यात्, न पूर्वा। प्रजापाये तु कुतो धर्माधिकारः? अत्रोच्यते— अहो सूक्ष्मदर्शित्व-

---

मर. ४८; गभा. ७ स्मृतिः; शूशि. ३६ कर्म स्मार्तं (स्मार्तं कर्म) उत्तरार्धे (दायकालाहृते चापि तदभावे द्विजोऽप्सु च॥) योगी; वीमि.; मुक्ता. ३५४; शाम. ४ कर्म स्मार्तं (स्मार्तं कर्म); प्रका. १२ पू.; आन. ६२; कुभ. ११६०.

माचार्यवतः। धर्मप्रजापायावधिवेदनं प्रयुञ्जाते, न त्वधिविन्नायास्तादर्थ्यमापादयतः, प्रमाणाभावात्। अन्यद्धि तादर्थ्यमन्या च प्रयुक्तिर्यतः। तत्र 'अन्यतरापाये दारान् कुर्वीत' इति स्मृतेरर्थः। दारत्वाच्च तदुद्देशविहितं द्रव्यादि कथमिव न स्यात्? अतो नास्वामित्वम्। यत्तूक्तं तदनुज्ञयैव करणमिति। तदप्यसत्, पूर्वाग्निविनाशात्। कुतो विनाश इति चेत्, कारकत्वापायात्। पत्नीयजमानयोर्हि कारकैक्यं वा स्यात् भेदो वा? द्विधाऽपि च द्रव्यान्तरोपादानाद्विनाशः, अग्नीषोमवत्। नन्वयं दोषः कारकानुप्रवेशे सति स्यात्। वयं त्वनुप्रवेशमेव वारयामः। अपायस्तु सिद्धे कारकत्व इति वैषम्यम्। मैवम्। न शक्यः स्वेच्छामात्रेणानुप्रवेशः फलोत्साहाविशेषात् प्रसज्यमानो वारयितुम्। यदि हि कर्तृत्वपूर्वोऽधिकारः स्यात्, ततस्तदनुपपत्त्या वार्येतापि। अधिकारपूर्वके तु कर्तृत्वे दुर्निवारोऽनुप्रवेशः। ततश्च पूर्वकारकविनाशात् तदाहिताग्निविनाशः। ततश्च सिद्धो निमित्तान्तराभावाद्विवाह एव पुनरग्न्युत्पादः। तथा च न्यायमूलैव स्मृतिः— 'आहृतोढायां पुनरादधीत' इत्यलमत्यभिधानेन। अतश्चापिशब्दः कालान्तरार्थः यथोक्तमस्माभिः। विश्व.

(२) श्रौतस्मार्तानि कर्माणि अग्निसाध्यानि दर्शयिष्यन् कस्मिन्नग्नौ किं कर्तव्यमित्याह— कर्मेति। स्मृत्युक्तं वैश्वदेवादिकं कर्म लौकिकं च यत्प्रतिदिनं पाकलक्षणं तदपि गृहस्थो विवाहाग्नौ विवाहसंस्कृते कुर्वीत। दायकाले विभागकाले आहृते वा 'वैश्यकुलादग्निमानीय' इत्यादिनोक्तसंस्कारसंस्कृते। अपिशब्दात् प्रेते वा गृहपतावाहृते संस्कृत एव। ततश्च कालत्रयातिक्रमे प्रायश्चित्तीयते। श्रुत्युक्तमग्निहोत्रादिकं कर्म वैतानिकाग्निषु आहवनीयादिषु कुर्वीत। ¶ मिता.

(३) स्मार्तं गृह्योक्तं कर्म वैवाहिके विवाहसंस्कृतेऽग्नौ कुर्वीत प्रत्यहं नित्यं गृही गृहवान्। गृहशब्दोऽयं भार्यामाचष्टे, न शालाम्। विवाहाग्नौ इति वदन् विवाहकर्मणाऽग्नौ कोऽप्यतिशयो गृह्यकर्मानुकूलो जायते इति दर्शयति। न ह्यन्यथा विवाहाग्नौ कर्मसंपत्तिर्भवति, अग्नेः प्रतिक्षणं प्रध्वंसित्वात्। विवाहसंस्कारस्य स्थायितया तद्विशिष्टो विवाहाग्निर्भवति स्थायी। ततश्च नष्टोऽसौ वैवाहिककर्मणोत्पाद्यः इति सूचितं भवति। दायः पितृधनम्। आहृतः आहितः। श्रौतम् अग्निहोत्रादिकर्म वैतानिकेषु गार्हपत्यादिष्वग्निषु कुर्वीत। एतच्च कल्पसूत्रगृह्यशास्त्रेभ्यः प्राप्तमेवानूद्यते धर्मशास्त्रपुराणविहितानां ग्रहयज्ञादिकर्मणां वैवाहिकश्रौताग्निसंबन्धनिवृत्त्यर्थम्। अप.

(४) वैतानिकः, वितानो यज्ञः, तत्प्रयोजनः। गृक. ११६

(५) ननु पाकयज्ञादीनामग्निसाध्यत्वात् अनग्नेः शूद्रस्य कथं तत्राधिकारः? 'स्मार्तकर्म विवाहाग्नौ कुर्वीत प्रत्यहं गृही। दायकालाहृते चापि तदभावे द्विजोऽप्सु च॥' इति योगिवचनात्। न चास्य विवाहाग्निरस्ति, 'मन्त्रेण तु होमः' इति गोभिलेन विवाहहोमस्य मन्त्रसाध्यत्वाभिधानात्, शूद्रस्य मन्त्ररहितत्वेन होमस्यापि निवृत्तेः। नमस्कारमन्त्रस्तु शृङ्गग्राहिकया पञ्चयज्ञादिविशेष एवोपदिष्ट इति न तेन वैवाहिकहोमसिद्धिः। अत्राऽऽहुः— 'स्मार्तकर्म' इत्यादिवचनानां त्रैवर्णिकोपक्रमेण पाठान्तरत्वात्(? पठितत्वात्) शूद्रस्य पाकयज्ञानां साक्षाच्छ्रुतत्वाल्लौकिकाग्नावेव ते भविष्यन्तीति। अन्ततस्त्रैवर्णिकानामपि विवाहाग्निर्न नियतः, किं पुनः शूद्रस्येति। एवमेवापरार्कमेधातिथिप्रभृतयः प्रतिपन्ना इति। अन्ये तु त्रैवर्णिकानां स्मार्ताग्न्यभावे जलादेरुपदिष्टत्वात्तद्वदेव शूद्रस्यापि जले एव वैश्वदेवादि भविष्यतीत्याहुः। शूशि. ३६–३७

(६) गृहस्थस्य धर्मेषु प्रदर्शनीयेषु बहुतमधर्मोपयोगित्वेन प्रथमतः सप्रपञ्चो विवाहो दर्शितः। इदानीं धर्मान्तराण्यनुक्रमिष्यन्नग्निसाध्ये कर्मणि व्यवस्थामाह —कर्मेति। स्मार्तम् अप्रचुरश्रुतिमूलकस्मृतिबोधितं कर्म गृह्योक्तपाकयज्ञसायंप्रातर्होमाष्टकादि, लौकिकं च यत् प्रत्यहं कर्म पाकलक्षणं तदपि। गृही गृहस्थाश्रमी। 'द्विजः' इत्यग्रे वाच्यमिहाप्यन्वेति। वैवाहिके विवाहसमयगृहीते विवाहसंस्कृते वा तदसंभवे दायविभागकालगृहीते वाऽग्नौ

¶ मुक्ता. मितागतम्।

आवसथ्याख्ये कुर्यादित्यर्थः । तथा च पारस्करः— 'आवसथ्याधानं दारकाले, दायाद्यकाल एकेषाम्' इति । दारकाले पाणिग्रहणोत्तरकाले, (दायाद्यकाले) दायविभागोत्तरकाले । अपिशब्दात् प्रेते वाऽऽहृते । एतेनाग्न्याधाने त्रयः काला दर्शिताः, तदतिक्रमे प्रायश्चित्तमिति मन्तव्यम् । अत्र मनुः— 'वैवाहिकेऽग्नौ कुर्वीत गृह्यं कर्म यथाविधि । पञ्चयज्ञविधानं च पक्तिं चाऽऽन्वाहिकीं गृहे ॥' । श्रौतमिति प्रचुरश्रुतिप्रतिपादितमग्निहोत्रदर्शपूर्णमासादि कर्म वैतानिकाग्निषु, वितानं यज्ञविस्तरः, तत्प्रयोजकेषु गार्हपत्याहवनीयदक्षिणाग्निषु कुर्वीतेत्यर्थः । एतच्च श्रौतकर्मणां गृह्यकर्मणां च विधायकेभ्यः कल्पसूत्रेभ्यो गृह्यसूत्रेभ्यः प्राप्तमेव धर्मशास्त्रपुराणादिविहितानां ग्रहयज्ञादिकर्मणां वैवाहिकश्रौताग्निसंबन्धनिवृत्त्यर्थमनूद्यते इति केचिदाहुः । वीमि.

काम्यकर्मणो हीनकल्पत्वं निष्फलम्

**[1]हीनकल्पं न कुर्वीत सति द्रव्ये फलप्रदम् ॥**

( १ ) काम्यं कर्म हीनोपकरणं न कुर्यात्, यस्मात् सत्येव द्रव्ये तत् फलप्रदम्, सर्वाङ्गोपसंहारनियमात् । विश्व.

( २ ) किंच, योऽयं हीनकल्प उक्तः सति द्रव्येऽसौ न कर्तव्यः । यच्च फलप्रदं काम्यं तद्धीनकल्पं न कुर्वीत न कर्तव्यमेव । मिता.

( ३ ) अधिकारिणं प्रति सर्वाङ्गोपसंहारी प्रयोगविधिः शक्याङ्गोपसंहारी च । तत्र शक्याङ्गोपसंहारिणः प्रयोगविधेर्यद्विषयीभूतं कर्म तद्धीनकल्पम् । यत्र तत्( ? तत्र यत् ) फलप्रदं काम्यं कर्म तद्धीनकल्पं न कार्यम् । अत्र हेतुः— सति द्रव्ये फलप्रदमिति । द्रव्ये सति फलप्रदं यस्माद्भवति । द्रव्यशब्दः सर्वाङ्गोपलक्षणार्थः । सति द्रव्ये सति सर्वाङ्गानुष्ठाने कर्म फलप्रदं भवति यस्मात् । अत्र च फलप्रदशब्दः सकृदुच्चारितः काकाक्षिन्यायेन हेतुहेतुमद्भ्यां सह संबध्यते । फलप्रदं कर्म हीनकल्पं न कार्यम् । सति द्रव्ये तत् फलप्रदं भवति । ¶ अप.

( ४ ) सति द्रव्य इति । विद्यमाने प्रथमकल्पसंपादके धने । हीनकल्पं न कुर्वीत इत्यत्र हेतुः— अफलप्रदमिति । यत इति शेषः । गृक. १२२

द्विराचमननिमित्तानि

**[1]स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्योपसर्पणे ।**
**आचान्तः पुनराचामेद्वासो विपरिधाय च ॥**

( १ ) पूर्व( म )स्मादेवाऽऽचमनाच्छुद्धिरुक्ता, न च तदन्यत्रा( ? तत्रा)ऽऽचमन( निमित्त )मुपदिष्टमित्यधुनैवोपदेष्टुमाह— स्नात्वेति । आचान्त इत्युपदेशात् स्नानादिनिमित्तेष्वन्येषु चोच्छिष्टस्पर्शनादिषु स्मृत्यन्तरानुसारादन्यदाचमनविधायकं कल्पनीयम् । तद्वशाच्च आचान्तः स्नानादिषु पुनराचामेदित्येष श्लोकविषयः । अतश्चान्यत्र सकृदाचमनमेव । रथ्याप्रसर्पणे इति प्रशब्दादनुपानत्कस्यैवाऽऽचमनम्, न सर्वत्र । वाससश्च विपरिवर्ते एवाऽऽचमनम्, न श्लथितसमाधाने । केचित् त्वाद्यन्तयोराचमनमिच्छन्ति, तत् पुनर्विचार्यम् । स्पष्टमन्यत् । विश्व.

( २ ) स्नानपानक्षुतस्वप्नभोजनरथ्योपसर्पणवासोविपरिधानेषु कृतेष्वाचान्तः पुनराचामेत् । द्विराचामेदित्यर्थः । चकारात् रोदनाध्ययनारम्भचापल्यानृतोक्त्यादिषु । तथा च वसिष्ठः— 'सुप्त्वा भुक्त्वा क्षुत्वा स्नात्वा पीत्वा रुदित्वा चाऽऽचान्तः पुनराचामेत्' इति । मनुरपि— 'सुप्त्वा क्षुत्वा च भुक्त्वा च ष्ठीवित्वोक्त्वाऽनृतं वचः । पीत्वाऽपोऽध्येष्यमाणश्च आचामेत्प्रयतोऽपि सन् ॥' इति । भोजने त्वादावपि द्विराचमनम्, 'भोक्ष्यमाणस्तु

---

(१) यास्मृ. १।१२६ ; विश्व. १।१२५ ; मिता. ; अप. ; गृक. १२२ द्रव्ये फल ( द्रव्येऽफल ) ; गृर. ९९ गृकवत् ; वीमि.

¶ वीमि. अपगतं गृकगतं च ।

(१) यास्मृ. १।१९६ ; विश्व. १।१९५ रथ्योप ( रथ्याप्र ) ; मिता. ; अप. भुक्त्वा रथ्योप ( भुक्ते रथ्याप्र ) ; ब्रक. १४०–१४१ ; स्मृच. १०० ; पमा. २२५ ; वीमि. ; मुक्ता. २२६ ; विपा. १६१ ( भागः २ ).

प्रयतोऽपि द्विराचामेत्'. इत्यापस्तम्बस्मरणात् । स्नान-पानयोरादौ सकृत् । अध्ययने त्वारम्भे द्विः, शेषेष्वन्ते एव यथोक्तं द्विराचमनम् । मिता.

(३) स्नानादिषु कृतेषु द्विराचामेत् । 'पन्थानश्च विशुध्यन्ति' (यास्मृ. १।१९४) इति यदुक्तं तच्चण्डालादिस्पृष्टानां तेषां स्प्रष्टुः स्नानादिनिवृत्त्यर्थम्, अत्र तु रथ्याप्रसर्पणमात्रे द्विराचमनं विधीयते इत्यविरोधः । वासोविपरिधानं पुनरधोवस्त्रनिबन्धनम् । अप.

(४) स्नानादौ कृते सति आचान्तः आचामेत्, द्विराचामेदित्यर्थः । पुनःशब्दस्त्वर्थः । तेन श्मश्रुगते दन्तसक्ते च पूर्वोक्त आचमनव्यवच्छेदः । पीत्वेत्यपोशानातिरिक्तपरम्, 'मधुपर्के च सोमे च अप्प्राणाहुतीषु च । नोच्छिष्टस्तु भवेद्विप्रो यथाऽत्रेर्वचनं तथा ॥' इत्यङ्गिरोवचनात् । रथ्योपसर्पणे राजमार्गगमने । विपरिधानं विशेषेण परिधानम् । तेनाधरीयवस्त्रपरीधान एवाऽऽचमनम्, न तूत्तरीयपरीधाने । आचारोऽप्येवम् । चकारेण 'भोक्ष्यमाणस्तु प्रयतोऽपि द्विराचामेत्' इत्यापस्तम्बवचनादिसिद्धानां च सकृदाचमनानां शुद्ध्यर्थं कर्माङ्गनैमित्तिकभेदेन विविधानां च संग्रहः । विशिष्य च तेषामनभिधानमतिप्रसिद्धत्वात् । वीमि.

वर्जनीयानि वस्त्राणि

[1]दग्धं जीर्णं च मलिनं मूषकोपहतं तथा ।
खादितं गोमहिष्याद्यैस्तत्त्याज्यं सर्वथा बुधैः ॥

[2]नीलीरक्तं तु यद्वस्त्रं दूरतः परिवर्जयेत् ।
द्रव्यान्तरयुता नीली न दुष्यति कदाचन ॥

[3]केवलं पट्टसूत्रे च नीलीदोषो न विद्यते ।
स्त्रिया वस्त्रं सदा त्याज्यमन्यवस्त्रं विवर्जयेत् ॥

[4]अधौतं क्षारधौतं च पूर्वेद्युर्धृतमेव च ।
त्रयमेतदसंबद्धं सर्वकर्मसु वर्जयेत् ॥

(१) संग ६२.
(२) संग. ६२ ; संदी. ५२ रक्तं तु (रक्तं च).
(३) संदी. ५२.
(४) संग. ६२ ; संदी. ५२.

## योगियाज्ञवल्क्यः

आसुरकक्ष्याबन्धनिषेधः आसुरकक्ष्यास्वरूपं च

[1]जपे होमे तथा दाने दैवे पित्र्ये च कर्मणि ।
बध्नीयान्नाऽऽसुरीं कक्ष्यां शेषे काले यथेच्छया ॥

[2]परिधानाद्बहिः कक्षा निबद्धा ह्यासुरी भवेत् ।
धर्म्ये कर्मणि विद्वद्भिर्वर्जनीया प्रयत्नतः ॥

(१) बहिःकक्षा बहिर्निर्गता (कक्षा) इत्यर्थः ।
¶ ब्रक. ५७

(२) बहिःकक्षा असंवृतपरिधानवस्त्रान्तः ।
कुर. ४८

(३) बहिः बहिर्निर्गता । कक्षा पश्चादञ्चलम् । कक्षा परिधानग्रन्थिः, सा च परिधानवस्त्रादुपरिवेष्टनादिना बहिः न कार्येति केचित् । कक्षा वस्त्रोभयप्रान्त इत्यन्ये । 'वामे पृष्ठे तथा नाभौ कक्षात्रयमुदाहृतम् । एभिः कच्छैः परीधत्ते यो विप्रः स शुचिः स्मृतः ॥' इति शिष्टपरिगृहीतवाक्यात्तु त्रितयमपि कक्षापदवाच्यमिति प्रतीयते । अत्र धर्म्ये कर्मणीत्युपादानादन्यत्र यथारुचीत्यवगम्यते । तथा च श्लोकगौतमः— 'स्नाने दाने जपे होमे दैवे पित्र्ये च कर्मणि । बध्नीयान्नाऽऽसुरीं कक्षां शेषकाले यथारुचि ॥' । पप्र. ८२–८३

¶ चत्र., चदा. ब्रकवत् ।

(१) अप. १।२२५ पृ. ४६१ ; मुक्ता. २५२ जपे (जप्ये) दाने (स्नाने) शेषे काले (शेषकालं) स्मृतिरत्नावल्याम् ; आन. ३१ शेषे काले (शेषकाले) शेषं मुक्तावत्, रत्नावल्याम्.

(२) अप. १।२२५ पृ. ४६१ कक्षा (कक्ष्या) पू. ; ब्रक. ५७ धर्म्ये (धर्मे) ; चत्र. ३६ ब्रकवत्, याज्ञवल्क्यः ; चदा. ९१ सर्वं चत्रवत् ; कुर. ४७ भवेत् (मता) धर्म्ये (धर्मे) ; निप्र. २८ ; पप्र. ८२ ; मुक्ता. २५२ अपवत्, स्मृतिरत्नावल्याम् ; आन. ३१ कक्षा (कक्ष्या) पू., रत्नावल्याम् ; संदी. ७ ह्यासुरी भवेत् (चाऽऽसुरी मता) धर्म्ये (धर्मे) याज्ञवल्क्यः.

(४) परितो धीयते इति परिधानम्। अन्तर्वासस उपरि नाभेरधः यद्वेष्ट्यते तत् परिधानमित्यर्थः। तथा उत्तरत्र 'परिधानबद्धकच्छः'(?) इति परिधाने कच्छाबन्धो निषिध्यते। अतः अन्तर्वासोऽन्यदेव। तदेव कौपीनमित्युच्यते, 'अकार्यगुह्ये कौपीनम्' इति कोशकारवचनात्। तस्यैव गुह्याच्छादकत्वात् बहिर्वासः परिधानशब्दार्थः। आन. २९

वस्त्रानुकल्पः

[१]अभावे धौतवस्त्रस्य शाणक्षौमाविकानि च।
कुतपं योगपट्टं वा द्विवासा येन वै भवेत्॥

(१) कुतपः कम्बलः। उत्तरीयविषयमेतत्। अप. १।१०० पृ. १३४

(२) अत्र (वासोविषये) अनुकल्पमाह योगियाज्ञवल्क्यः— अलाभे इति। कुतुपं योगपट्टं च धारयेदिति शेषः। पमा. २४६

हस्तस्थिततीर्थानि

[२]अङ्गुष्ठमूले ब्राह्मं स्याद्दैवं त्वङ्गुलिमूर्धनि।
प्राजापत्यं तु मूले स्यान्मध्ये सौम्यं प्रतिष्ठितम्॥
[३]अङ्गुष्ठस्य प्रदेशिन्या मध्ये पित्र्यं प्रकीर्तितम्॥

(१) मध्ये तलमध्ये इत्यर्थः। अप. १।१९

(२) मूले कनिष्ठिकामूले। मध्ये पाणिमध्ये। पप्र. ७६

---

(१) अप. १।१०० पृ. १३४ वै (तत्); पमा. २४६ अभावे (अलाभे) उत्तरार्धे (कुतुपं योगपट्टं च विवासास्तु न वै भवेत्॥); मुक्ता. २५ अभावे (अलाभे) वा द्विवासा येन (च विवासास्तु न); संदी ५.

(२) अप. १।१९; ब्रक. ५३ चतुर्थपादमात्रम्; पप्र. ७६; वीमि. १।१९ चतुर्थपादमात्रम्.

(३) पप्र. ७६.

विध्यतिक्रमस्य फलप्रतिबन्धकत्वम्

[१]विधिदृष्टं तु यत्कर्म करोत्यविधिना तु यः।
फलं न किंचिदाप्नोति क्लेशमात्रं हि तस्य तत्॥

(१) विधिदृष्टं यथाविहितम्। ब्रक. ५१

(२) तस्मात् प्रयत्नतो ज्ञानमासाद्यैवानुष्ठेयम्। प्रपा. ५८

(३) अविधिना विध्यतिक्रमेण। ¶ पप्र. ७२

विष्णुस्मरणस्य कर्मविकलतासमाधायकत्वम्

[२]अज्ञानाद्यदि वा मोहात् प्रच्यवेताध्वरेषु यत्।
स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः॥

(१) मोहात् विपर्ययज्ञानात्। ब्रक. ६४

(२) तथा शतपथश्रुतिः— 'अथ यद्वाचंयमो व्याहरति तस्मादु हैष विसृष्टो यज्ञः पराङावर्तते तत्रो वैष्णवीमृचं वा यजुर्वा जपेत्' (शब्रा. ३।२।१।३८) इत्यादिः। चव्र. ३८

(३) तत्र स्मरणं मन्त्रेण कर्तव्यम्। तथाऽऽह याज्ञवल्क्यः— 'तद्विष्णोरिति मन्त्रेण स्मर्तव्यः सर्वकर्मसु। गायत्री वैष्णवी ह्येषा विष्णुसंस्मरणाय वै॥' इति। प्रपा. ५८

(४) अत्र अध्वरपदं श्रौतस्मार्तकर्मपरम्। पृ. ७४

अध्वरेष्विति विहितकर्ममात्रोपलक्षणम्। पप्र. ९२

---

शेषं ब्रकवत्।

(१) ब्रक. ५०-५१ दृष्टं तु (दृष्टं च) हि (तु); चव्र. ३२ याज्ञवल्क्यः; कुर. ५०; प्रपा. ५८ तस्य तत् (तस्य तु) मनुः; पप्र. ७२; मुक्ता. १५ हि (तु) वृद्धमनुः: २५४ कौशिकः.

(२) ब्रक. ६३-६४ यदि वा (दथवा); चव्र. ३८ याज्ञवल्क्यः; चदा. १०७ याज्ञवल्क्यः; कुर. ५१ ब्रकवत्; प्राप. ५८ पूर्वार्धे (प्रमादात्कुर्वतां कर्म प्रच्यवत्यध्वरेषु यत्।) स्मृतिरत्नावल्याम्; निप्र. ११; संत. ८८१ प्रपावत्, याज्ञवल्क्यः; पप्र. ७४, ९२; संदी. २४ याज्ञवल्क्यः.

मन्त्रादौ ओंकारप्रयोगावश्यकता

[1]सर्वमन्त्रप्रयोगेषु ओमित्यादौ प्रयुज्यते ।
तेन संपरिपूर्णानि यथोक्तानि भवन्ति हि ॥
सर्वमन्त्राधियज्ञेन ओंकारेण न संशयः ।
यन्न्यूनमतिरिक्तं च यच्छिद्रं यच्च यज्ञियम् ॥
यदि मेध्यमशुद्धं च यातयामं च यद्भवेत् ।
तत्तदोंकारयुक्तेन मन्त्रेणाविकलं भवेत् ॥

कर्तुरेकवस्त्रत्वनिषेधः

[2]स्नानं दानं जपं होमं स्वाध्यायं पितृतर्पणम् ।
नैकवस्त्रो द्विजः कुर्याच्छ्राद्धभोजनसत्क्रियाः ॥

स्नानस्य सप्तविधानुकल्पाः

[3]असामर्थ्याच्छरीरस्य कालशक्त्याद्यपेक्षया ।
मन्त्रस्नानादितः सप्त केचिदिच्छन्ति सूरयः ॥
[4]मान्त्रं भौमं तथाऽऽग्नेयं वायव्यं दिव्यमेव च ।
वारुणं मानसं चैव सप्त स्नानान्यनुक्रमात् ॥

मन्त्रादौ ओंकारप्रयोगस्य ऋष्यादिज्ञानस्य चाऽऽवश्यकता ऋष्यादिस्वरूपं च

[5]अनोंकृत्य कृतं सर्वं न भवेत्सिद्धिकारकम् ॥
[6]आर्षं छन्दश्च दैवत्यं विनियोगस्तथैव च ।
वेदितव्यं प्रयत्नेन ब्राह्मणेन विशेषतः ॥

(१) पप्र. ७९.

(२) स्मृच. ११४ ; मुक्ता. २५३ ; आन. ३२ वस्त्रो (वासा).

(३) अप. १।१०० पृ. १३४ ; ब्रक. १६८ ; कुर. ४५ शक्त्याद्य (शक्तित्व्य) दितः (दिकाः) आग्नेयपुराणे ; पप्र. ८१ शक्त्याद्य (शक्तित्व्य) दितः सप्त केचित् (दयः सप्त एक) याज्ञवल्क्यः ; मुक्ता. २८९ दितः (दिकान्).

(४) अप. १।१०० पृ. १३४ ; स्मृच. १३३ ग्नेयं (ग्नेय्यं) ; मुक्ता. २८९ चैव (चेति).

(५) आर. ४. शान्तिहेमाद्रौ योगियाज्ञवल्क्योक्तिः.

(६) ब्रक. ५९ ; चदा. १०४ याज्ञवल्क्यः ; आर. ४ छन्दश्च दैवत्यं (छन्दो दैवतं च) उत्तरार्धे (ब्राह्मणेन प्रयत्नेन वेदितव्यं विपश्चिता ॥) ; पप्र. ८५ ; आम. ३ ; संदी. १३ याज्ञवल्क्यः १४ : १५ पू.

[1]अविदित्वा तु यः कुर्याद्याजनाध्यापनं जपम् ।
होममन्तर्जलादीनि तस्य चाल्पफलं भवेत् ॥

अन्तर्जलादीनि जलमध्ये क्रियमाणान्यघमर्षणादीनि । ¶ ब्रक. ५९

[2]यश्च जानाति तत्त्वेन आर्षं छन्दश्च दैवतम् ।
विनियोगं ब्राह्मणं च मन्त्रार्थं ज्ञानकर्म च ॥
[3]एकैकस्य ऋषेः सोऽपि वन्द्यो
ह्यतिथिवद्भवेत् ।
देवतायाश्च सायुज्यं गच्छत्यत्र न संशयः ॥

(१) ज्ञानरूपा क्रिया ज्ञानकर्म । अनुष्ठेयार्थस्मरणं प्रयोजनमिति यावत् । सायुज्यं सहयोगित्वम् । ब्रक. ५९

(२) तत्र तावदर्थज्ञानस्य फलमाह याज्ञवल्क्यः– यश्च जानातीति । प्रपा. ५८

(३) 'एकैकस्य ऋषेः एकैकस्य मन्त्रस्य आर्षादिकं यस्तत्त्वेन जानातीति पूर्वेणान्वयः' इति मदनरत्नप्रदीपव्याख्या । अत्र सामब्राह्मणमृषिदैवतच्छन्दोब्राह्मणान्युपक्रम्य– 'अथ यो मन्त्रे मन्त्रे वेद सर्वमायुरेति श्रेयान् भवति । अयातयामान्यस्य छन्दांसि भवन्ति । तस्मादेतानि मन्त्रे मन्त्रे विद्यादृषीणां सस्थानो भवति ब्रह्मणः

¶ पप्र. ब्रकवत् ।

(१) ब्रक. ५९ जपम् (तथा) ; चदा. १०४ ध्यापनं (ध्ययनं) याज्ञवल्क्यः ; आर. ४ ; पप्र. ८५ पनं जपम् (पनादिकम्) ; आम. ३ ; संदी. १३ याजनाध्यापनं (यजनाध्ययनं) याज्ञवल्क्यः.

(२) ब्रक. ५९ ; चदा. १०४ याज्ञवल्क्यः ; प्रपा. ५८ मन्त्रार्थं ज्ञानकर्म च (मन्त्रस्यार्थं तथैव च) याज्ञवल्क्यः ; पप्र. ८६ ; संदी. १३ मन्त्रार्थं ज्ञानकर्म च (मन्त्रार्थज्ञानमेव च) याज्ञवल्क्यः.

(३) ब्रक. ५९ ; चदा. १०४ याज्ञवल्क्यः ; प्रपा. ५८ तायाश्च (तानां च) त्यत्र (त्येव) याज्ञवल्क्यः ; पप्र. ८६ ; संदी. १३–१४ याज्ञवल्क्यः.

स्वर्गे लोके महीयते ' । सस्थानः समानस्थानः ।

§ पप्र. ८६

[1]पूर्वोक्तेन प्रकारेण ऋष्यादीन् वेत्ति यो द्विजः ।
अधिकारो भवेत्तस्य रहस्यादिषु कर्मसु ॥

रहस्यादिषु रहस्यजपादिषु ।

ब्रक. ६०

[2]ब्राह्मणं विनियोगं च छन्द आर्षं च दैवतम् ।
अज्ञाता पञ्च यो मन्त्रे न स तत्फलमश्नुते ॥
[3]येन यदृषिणा दृष्टं सिद्धिः प्राप्ता च येन वै ।
मन्त्रेण तस्य तत्प्रोक्तमृषेर्भावस्तदार्षकम् ॥

यत् मन्त्रस्वरूपम् । तस्य ऋषेः । तत् मन्त्रस्वरूपम् । स मन्त्रस्तस्य ऋषेर्भवतीत्यर्थः । भावः संबन्धः । तदार्षकम्, तस्मिन्मन्त्रे तस्य ऋषेः पूर्वोक्तः संबन्धः एवाऽऽर्षमित्यर्थः । पप्र. ८६

[4]छादनाच्छन्द उद्दिष्टं वाससी इव चाऽऽकृतेः ।
आत्मा संछादितो देवैर्मृत्योर्भीतैस्तु वै पुरा ।
आदित्यैर्वसुभी रुद्रैस्तेन च्छन्दांसि तानि वै ॥

आकृतेः शरीरसंस्थानस्य । ब्रक. ६०.

[5]यस्य यस्य तु मन्त्रस्य उद्दिष्टा देवता तु या ।
तदाकारं भवेत्तस्य देवत्वं देवतोच्यते ॥

यस्य यस्य तु मन्त्रस्य या या देवता येन येन इन्द्रादिरूपेणोद्दिष्टा प्राधान्येन प्रतिपादिता तदाकारमेव (तस्य मन्त्रस्य) देवत्वम् । तस्येति व्यवहितेन मन्त्रस्येत्यनेन योज्यम् । तेनैतदुक्तं भवति— तस्य तस्य मन्त्रस्य सा वै देवता । ¶ ब्रक. ६०

[1]पुराकल्पे समुत्पन्ना मन्त्राः कर्मार्थमेव च ।
अनेनेदं तु कर्तव्यं विनियोगः स उच्यते ॥

कर्मान्तरविनियोगस्मरणविधायकाभावे प्रकृतकर्मविनियोग एव स्मर्तव्यः । पप्र. ८७

[2]निरुक्तं यत्र मन्त्रस्य विनियोगः प्रयोजनम् ।
प्रतिष्ठानं स्तुतिश्चैव ब्राह्मणं तदिहोच्यते ॥

(१) प्रतिष्ठानं विनियोगः । अन्ये तु प्रतिष्ठानम् आश्रय इति वदन्ति । अग्नीषोमप्रणयिनीनामृचाम् 'असावादित्य एकविंश उत्तमा प्रतिष्ठा' (ऐब्रा. १।५।४) इति तैत्तिरीय (? ऐतरेय) ब्राह्मणे । ब्रक. ६१

(२) निरुक्तं निर्वचनम् । यत्र वेदभागे । विनियोगः विनियोगविधिः । प्रयोजनम् अधिकारविधिः । प्रतिष्ठानम् आश्रयः, यथा तैत्तिरीय (? ऐतरेय) ब्राह्मणे श्रूयते अग्नीषोमप्रणयिनीनामृचाम् 'असावादित्य एकविंश उत्तमा प्रतिष्ठा' इति केचित् । प्रतिष्ठानं विनियोग इति कल्पतरुः । तन्मते विनियोग इत्यत्र समुत्पत्तिरिति पाठः । समुत्पत्तिः उत्पत्तिविधिः । स्तुतिः अर्थवादः । पप्र. ८७

---

§ शेषं ब्रकवत् ।

(१) ब्रक. ६० ; चदा. १०४ अधिकारो (अधिकारी) याज्ञवल्क्यः ; पप्र. ८६ ; संदी. १४ याज्ञवल्क्यः.

(२) स्मृच. १३६ अज्ञाता (अज्ञात्वा) मन्त्रे (मन्त्रान्) ; स्मृच. (मैसूर) ३५८ ; मुक्ता. ३१६ अज्ञाता (अज्ञात्वा) यो मन्त्रे न (यः कुर्यान्न) याज्ञवल्क्यः ; आर. ४ अज्ञाता (अज्ञात्वा), चन्द्रिकायां व्यासः .

(३) ब्रक. ६० ; चदा. १०४ याज्ञवल्क्यः ; पप्र. ८६ ; संदी. १४ याज्ञवल्क्यः .

(४) ब्रक. ६० ; चदा. १०४ छादनात् (छन्दसा) याज्ञवल्क्यः ; पप्र. ८७ ; संदी. १४ याज्ञवल्क्यः .

(५) ब्रक. ६० ; चदा. १०४ याज्ञवल्क्यः ; पप्र. ८७ ; संदी. १४ याज्ञवल्क्यः .

¶ पप्र. ब्रकवत् ।

(१) ब्रक. ६० ; चदा. १०४ र्थमेव (र्थं एव) अनेनेदं तु (अनेन चेदं) याज्ञवल्क्यः ; पप्र. ८७ ; संदी. १४ अनेनेदं तु (अनेन चेदं) याज्ञवल्क्यः.

(२) ब्रक. ६० 'प्रतिष्ठानं विनियोगः' इति व्याख्यानात् परिभाषाप्रकाशोक्तेश्च 'विनियोगः' इत्यत्र 'समुत्पत्तिः' इति पाठो ब्रकसंमत इति प्रतीयते ; चदा. १०४ पूर्वार्धे (नैरुक्तं यच्च मन्त्रस्य विनियोगप्रयोजनम् ।) याज्ञवल्क्यः ; पप्र. ८७ ; संदी. १४ निरुक्तं यत्र (नैरुक्तं यच्च) याज्ञवल्क्यः .

[1]एव पञ्चविधं योगं जपकाले ह्यनुस्मरेत् ।
होमे चान्तर्जले योगे स्वाध्याये याजने तथा ॥

(१) योगम् ऋष्यादिसंबन्धम् । अन्तर्जले अन्तर्जलकार्ये स्नानादौ । योगे योगाङ्गप्रणवजपादौ ।

ब्रक. ६१

(२) योगम् ऋष्यादिसंबन्धम् । अन्तर्जले अन्तर्जलकार्ये स्नानादौ । योगे योगाङ्गप्रणवजपादौ । सामब्राह्मणं च— 'यो ह वा अविदितार्षेच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाऽध्यापयति वा स्थाणुं वर्च्छति गर्तं वा पद्यति प्र वा मीयते पापीयान् भवति यातयामान्यस्य छन्दांसि भवन्ति'। स्थाणुं स्थाणुत्वम्। ऋच्छति प्राप्नोति ।

ऋग्वेदानुक्रमणीये— 'अथ ऋग्वेदाम्नाये शाकले सूक्तप्रतीकऋक्संख्यऋषिदैवतच्छन्दांस्यनुक्रमिष्यामो यथोपदेशम्, न ह्येतज्ज्ञानमृते श्रौतस्मार्तकर्मप्रसिद्धिर्मन्त्राणां ब्राह्मणार्षेयच्छन्दोदैवतविद्याजनाध्यापनाभ्यां श्रेयोऽधिगच्छत्यनेवंविदो यातयामानि च्छन्दांसि भवन्ति स्थाणुं वर्च्छति गर्तं वा पात्यते प्रमीयते पापीयान्भवतीति विज्ञायते'।

यजुर्वेदानुक्रमणीयेऽपि 'ऋषिदैवतच्छन्दांस्यनुक्रमिष्यामः' इति प्रतिज्ञाय तानि लक्षयित्वोक्तम्— 'एतान्यविदित्वा योऽधीतेऽनुब्रूते जपति जुहोति यजते याजयति वा तस्य ब्रह्म निर्वीर्यं यातयामं भवति । तथाऽन्तरा श्वगर्तं वा पद्यते स्थाणुं वर्च्छति प्रमीयते पापीयान् भवति। अथ विज्ञायैतानि योऽधीते तस्य वीर्यवत्, अथ योऽर्थवित्तस्य वीर्यवत्तरं भवति, जपित्वा हुत्वेष्ट्वा तत्फलेन युज्यते'।

शिष्यमनु लक्षीकृत्य ब्रूते अध्यापयतीत्यर्थः । ब्रह्म वेदः । निर्वीर्यं स्वकार्यसाधने शक्तिरहितम् । यातयामं जीर्णम् । सत्येतेषां ज्ञानेऽध्ययने फलमप्याह— अथेत्यादिना । अधीते इति अध्ययनं पाठमात्रम्, न त्वर्थज्ञानमपि, अर्थज्ञाने वीर्यवत्तरत्वस्यानुपदं वक्ष्यमाणत्वात् । सत्येवमध्ययने जपादिषु संपूर्णफलावाप्तिर्भवतीत्याह— जपित्वेत्यादिना ।

अत्र अविदित्वेति स्वरसादेतेषां तत्तत्प्रयोगात्पूर्वं ज्ञानमात्रं शास्त्रार्थः, न तु तत्प्रतिपादकशब्दोच्चारणम्, मानाभावात् । प्रत्युत तत्पाठे न्यायप्राप्तानन्तर्यबाधात्कर्मवैगुण्यम् ।

अत्र सामब्राह्मणे योगियाज्ञवल्क्यवाक्ये च दैवतमन्ते उक्तम् । ऋग्वेदानुक्रमणीये तु 'ऋषिदैवतच्छन्दांस्यनुक्रमिष्यामः' इत्यत्र दैवतं मध्ये उक्त्वा तदनु च 'मन्त्राणां ब्राह्मणार्षेयच्छन्दोदैवतवित्' इत्यत्र दैवतमन्ते उक्तम् । एवं यजुर्वेदानुक्रमणिकायां छन्दः अन्ते उक्तम् । तस्मादत्र क्रमो न विवक्षितः, न वा समूहालम्बनेऽपि ज्ञाने संभवति क्रमोऽपेक्षितः । यत्र हि क्रमोऽपेक्षितस्तत्रैव पाठादिक्रमस्तन्नियामक इति । ऋषिदैवतच्छन्दसां त्रयाणां ज्ञानं श्रौतस्मार्तकर्ममात्राङ्गम्, 'न ह्येतज्ज्ञानमृते श्रौतस्मार्तकर्मप्रसिद्धिः' इति ऋग्वेदानुक्रमणीयवाक्यात् ।

पप्र. ८८–८९

(३) सर्वानुक्रमसूत्रे कात्यायनोऽपि 'ऋषिदैवतच्छन्दांस्यनुक्रमिष्यामः' इति प्रकृत्याऽऽह— 'एतान्यविदित्वा योऽधीतेऽनुब्रूते जपति जुहोति यजते याजयते तस्य ब्रह्म निर्वीर्यं यातयामं भवति । अथान्तरा श्वगर्तं वाऽऽपद्यते स्थाणुं वर्च्छति प्रमीयते वा पापीयान् भवति। अथ विज्ञायैतानि योऽधीते तस्य वीर्यवत्, अथ योऽर्थवित् तस्य वीर्यवत्तरं भवति, जपित्वा हुत्वेष्ट्वा तत्फलेन युज्यते' इति । अत्र ऋषिश्छन्दो देवता इत्येवं क्रमः स्वीकार्यः, 'आर्षं छन्दश्च दैवत्यं विनियोगस्तथैव च । वेदितव्यं प्रयत्नेन ब्राह्मणेन विशेषतः ॥' इति वाक्ये वेदितव्यमिति विधिस्थानीयतव्यप्रत्ययश्रवणात् । अत्र हि ऋष्यादिज्ञानार्थः कर्तव्यतया विधीयते । तस्मिंश्च विधीयमाने पाठानुपूर्व्या अवगम्यमानः क्रमोऽपि तदाश्रितो विधीयते, क्रमान्तरपरिग्रहे विनिगमनाविरहात् । यत्तु कात्यायनेन 'ऋषिदैवतच्छन्दांसि' इति सर्वानुक्रमसूत्रे क्रम उक्तः, न ज्ञानार्थत्वेन, किंतु 'अनुक्रमिष्यामः'

---

(१) ब्रक. ६१ जपकाले ( जप्यकाले ); चदा. १०५ जपकाले ह्यनुस्मरेत् ( जयार्थं गृह्यनुस्मरेत् ) याज्ञवल्क्यः; पप्र. ८८ ब्रकवत्; संदी. १४ याज्ञवल्क्यः .

इत्युक्तेरनुक्रमार्थत्वेन, वेदितव्यमितिवत् अत्र ऋष्यादिज्ञानकर्तव्यताबोधकसाक्षाद्विध्यश्रवणात्, क्लृप्तकल्प्ययोर्मध्ये क्लृप्तविधेर्बलीयस्त्वाच्च । अत एव योगियाज्ञवल्क्येनापि 'प्रजापतेर्मुखोत्पन्नाः' इत्यादिना प्रणवव्याहृत्यादिमन्त्राणां ऋषिच्छन्दोदेवता इति क्रमेणैव आर्षादिकमभिहितम् । गृह्यगङ्गाधरपद्धतौ अपीत्थमेवोक्तम् ।

आचारादर्शे योगियाज्ञवल्क्यः संध्यामधिकृत्य अघमर्षणसूक्तस्य 'आपो हि ष्ठा' इति सूक्तस्य द्रुपदायाश्च ऋष्यादिकमभिधायाऽऽह— 'एवं ज्ञात्वा तु मन्त्राणां प्रयोगं वै द्विजोत्तमः । संध्यामुपासयेद्यद्वद्यथावत्तन्निबोधत ॥' इति । अत्र च संध्याग्रहणं विहितऋष्यादिज्ञानककर्ममात्रोपलक्षणम्, पूर्वोक्तकात्यायनयोगियाज्ञवल्क्यादिवचनैकवाक्यतया तथैवावगमात् ।

अत्र केचिदाहुः— सर्वेषामेव मन्त्राणामादौ ऋष्यादीनि स्मृत्वा ततः संध्याप्रयोग इति । तन्नातीव युक्तम् । एवं हि अङ्गभूतेन ऋष्यादिस्मरणेन सह सर्वेषां मन्त्राणामानन्तर्यं न्यायागतं बाध्येत । ओंकारस्य सप्तव्याहृतीनां गायत्र्याः शिरसश्च ऋष्यादीनि स्थलान्तरे योगियाज्ञवल्क्येनाभिहितानीति कथं न तत्पूर्वभावः ? किंच अघमर्षणसूक्तस्य ऋष्यादेः प्रथममभिधानात् तदेव प्रथमं स्यात् । तस्मात् ज्ञात्वेति प्रयोगात् बहिर्ज्ञानं प्रयोगकालसौकर्यार्थम् । अथवा ज्ञात्वोपासयेदिति प्रत्येकमभिसंबध्यते । तेन तत्तन्मन्त्रस्य ऋष्यादिकं तत्तन्मन्त्रस्य प्रयोगात् प्राक् ज्ञातव्यमित्यर्थः सिध्यति । अयमेव पक्षो बहुसंमतः । प्रणवव्याहृतिगायत्रीशिरसां च मिलितानामेव प्राणायामे विनियोगात् तेषां च मिलितानामेव ऋष्यादिकं स्मृत्वा प्राणायामः कार्यः । अन्यत्रापि यत्रैकस्यां क्रियायामनेकमन्त्राणां विनियोगः, तत्राप्येवमेव । यथा रुद्रजपरुद्राभिषेकादौ । 'एवं पञ्चविधं योगम्' इति ब्राह्मणान्तर्भावेन पञ्चविधत्वं प्रकारान्तरमधिकफलार्थं वा, 'आर्षं छन्दश्च दैवत्यं विनियोगस्तथैव च ।' इत्यादिनानास्थानेषु चतुर्णामेवाभिधानात् ।

"एवं ज्ञात्वा तु मन्त्राणाम्' इति योगियाज्ञवल्क्येन 'अथ विज्ञायैतानि योऽधीते' इत्यादिना कात्यायनेन च ऋष्यादिज्ञानस्यैव अङ्गत्वाभिधानात् अर्थज्ञानवत् तज्ज्ञानमेवाङ्गं न तु ऋष्याद्युच्चारणम्, मानाभावात् असंबद्धव्यवायापत्तेश्च" इत्युक्तमाचारादर्शे आचारचिन्तामणौ च ।

'प्रयोगकालिकार्थस्मरणस्य अध्ययनजन्यबोधाहितसंस्काराधीनत्वात् प्रयोगकाले मन्त्रोच्चारणे कारणविशेषमनपेक्ष्यैव मन्त्रार्थस्मरणसंभवाद्युक्ता तत्रान्यानपेक्षता । ऋष्यादिस्मरणस्य तु मन्त्रोच्चारणमात्रेण प्रयोगकालेऽसंभवात् ऋष्यादिबोधकं वाक्यमेव तत्स्मारकत्वेनाऽऽश्रयणीयम् । एवं च तदभिव्यक्त्यर्थमुच्चारणमावश्यकमेव । बहूनां संप्रदायोऽप्येवमेव' इति परे ।

इदं च ऋष्यादिज्ञानं यत्र मन्त्रे प्रामाणिकं ततः प्राक् प्रयोगे एव कर्तव्यम् । एतच्च ऋष्यादिज्ञानं वैकल्पिकम्, 'एतान्यविदित्वा' इत्युपक्रम्य 'तस्य ब्रह्म निर्वीर्यं यातयामं भवति' इत्युक्तत्वात्, 'अथ विज्ञायैतानि योऽधीते तस्य वीर्यवत्' इत्युक्तेश्च, 'सर्वमेतच्छन्दो दैवतमार्षं च विज्ञाय यत्किंचित् जपहोमादि करोति तस्य फलमश्नुते' इत्युक्तेश्चेति दर्शपूर्णमासपद्धतौ तट्टीकायां च वैद्यनाथमिश्राः । प्राच्यग्रन्थे तु— अध्ययनाध्यापनान्तर्जलजपेषु नियमः अन्यत्र पुरुषार्थता, न कर्मवैगुण्यमिति । क्वचिदस्यापवादः कृष्णभट्टीये— 'न च स्मरेदृषिं छन्दः श्राद्धे वैतानिके मखे ।' इति ।

संदी. १४–१७

मौनलोपे प्रायश्चित्तम्

**[1]यदि वाग्यमलोपः स्याज्जपादिषु कथंचन ।**
**व्याहरेद्वैष्णवं मन्त्रं स्मरेद्वा विष्णुमव्ययम् ॥**

---

(१) अप. १।२२५ पृ. ४६३ जपादिषु (जप्यादिषु); ब्रक. ६३; स्मृच. १५०; चव्र. ३७–३८ याज्ञवल्क्यः; चदा. १०७ याज्ञवल्क्यः; कृर. ५१; आर. ५–६ चन्द्रोदये योगीश्वरः; पप्र. ९२ स्मरेद्वा (जपेद्वा); मुक्ता. ३४१ कथंचन (कदाचन); संग. ११०; इन्दु. १२ योगीश्वरः.

(१) प्रमादकृते तु वाग्यमलोपे योगयाज्ञवल्क्योक्तं द्रष्टव्यम्— यदि वाग्यमलोपः स्यादिति। स्मृच. १५०

(२) कर्मणि वाग्यमलोपे योगीश्वरः— यदीति। वैष्णवं मन्त्रम् 'अतो देवाः' 'इदं विष्णुः' इति वा, 'अतो देवा अवन्तु न इति जपेदपि वाऽन्यां वैष्णवीम्' इत्याश्वलायनोक्तेः। इन्दु. १२

जपादिकाले स्त्रीशूद्रादिभिः सह संभाषणनिषेधः, चाण्डालादीनां दर्शनादिनिषेधः, दर्शनादौ शुद्धिहेतुः, मौनापवादश्च

[1]स्त्रीशूद्रपतितांश्चैव रासभं च रजस्वलाम्।
जपकाले न भाषेत व्रतहोमादिकेषु च॥
[2]तूष्णीमासीत तु जपञ् चाण्डालपतितादिकान्।
दृष्ट्वा तान्वार्युपस्पृश्याऽऽभाष्य स्नात्वा पुनर्जपेत्॥
[3]एतेष्वेवावसक्तं तु यद्यागच्छेद्द्विजोत्तमः।
अभिवाद्य ततो विप्रं योगक्षेमं च कीर्तयेत्॥

श्रद्धा— विधि— भावानां कर्मफलहेतुत्वम्

[4]श्रद्धाविधिसमायुक्तं कर्म यत्क्रियते नृभिः।
सुविशुद्धेन भावेन तदानन्त्याय कल्पते॥
विधिहीनं भावदुष्टं हतमश्रद्धया तु यत्।
तद्धरन्त्यसुरास्तस्य मूढस्य दुष्कृतात्मनः॥
[5]न कुर्यात्कस्यचित्पीडां कर्मणा मनसा गिरा।
आचरन्नभिषेकं तु कर्माण्यन्यानि चाऽऽचरन्॥

(१) क्रर. ४९; आर. ७. (२) क्रर. ४९.

(३) क्रर. ४९ ततो (तथा) क्षेमं च (क्षेमं तु) क्रमेण वसिष्ठः; आर. ७ सक्तं तु (सक्ते तु). व्यासेऽपि एतादृशं वचनं द्रष्टव्यम्।

(४) क्रर. ५०.

(५) व्रक. ६४; चदा. ९१ कर्माण्यन्यानि चाऽऽचरन् (कर्माण्यप्यन्यथा चरन्) मनुः; चश्रा. ८६४ उत्तरार्धे (आचरेन्नाभिषेकं तु कर्माण्यन्यानि वाऽऽचरेत्॥); क्रर. ४६ याज्ञवल्क्यः; पप्र. ९२.

अबुपस्पर्शननिमित्तानि

[1]रौद्रपित्र्यासुरान्मन्त्रांस्तथा चैवाऽऽभिचारिकान्।
व्याहृत्याऽऽलभ्य चाऽऽत्मानमपः स्पृष्ट्वाऽन्यदाचरेत्॥

रौद्रपित्र्यासुरान् रुद्रपित्रसुरदेवताकान्। आभिचारिकान् अभिचारसंबन्धिनः। आलभ्य स्पृष्ट्वा। आत्मानं आत्माधिष्ठानं हृदयम्। अन्यत् जलस्पर्शनिमित्तजातीयादन्यत्। पप्र. ९१

## नारदः

दैवमानुषपित्र्यकर्मणां कालाः

[2]त्रिधा विभज्य दिवसं तत्राऽऽदौ कर्म दैविकम्।
द्वितीये मानुषं कार्यं तृतीयेंऽशे तु पैतृकम्॥

आसनादौ पलाशाश्वत्थयोर्वर्जनम्

[3]आसने शयने दाने पादुकादन्तधावने।
पलाशाश्वत्थकौ वर्ज्यौ सर्वकुत्सितकर्मसु॥

सौभाग्याष्टकम्

[4]हरिद्रामधुपुष्पाणि गुडजीरकतण्डुलाः।
धान्याकं मुद्रिकावल्ली सौभाग्याष्टकमुच्यते॥

दक्षिणादानम्

[5]वृथा विप्रवचो यस्तु गृह्णाति मनुजः शुभे।
अदत्त्वा दक्षिणां वाऽपि स याति नरकं ध्रुवम्॥

(१) व्रक. ६२—६३ चारिकान् (चारकान्); चव्र. ३९ पित्र्या (पित्रा) चैवा (दैवा) स्पृष्ट्वाऽन्य (स्पृश्यान्य) याज्ञवल्क्यः; चदा. १०७ पित्र्या (पित्रा) चैवा (दैवा) याज्ञवल्क्यः; पप्र. ९१.

(२) नासं. २४।१४ येंऽशे तु (यांशे च); संप्र. ३७१; ज्योनि. १२३ तु (च); संग. ६५४ दैविकम् (वैदिकम्); संव. ९६.

(३) आर. ४.

(४) ज्योनि. १४९. (५) संत. ८८०.

कार्षापणमानं तस्य देशभेदेन व्यवस्था च

[1]कार्षापणो दक्षिणस्यां दिशि रौप्यः प्रवर्तते ।
पणैर्निबद्धः पूर्वस्यां षोडशैव पणाः स तु ॥

## बृहस्पतिः

अबुपस्पर्शननिमित्तानि

[2]पितृमन्त्रोच्चरे रौद्रे आत्मालम्भेऽघमर्षणे ॥
[3]अधोवायुसमुत्सर्गे आक्रन्दे क्रोधसंभवे ।
मार्जारमूषिकास्पर्शे प्रहासेऽनृतभाषणे ।
निमित्तेष्वेषु सर्वेषु कर्म कुर्वन्नुपस्पृशेत् ॥

उपस्पर्शनम् आचमनम् । चश्रा. ९५९

दक्षिणश्रवणस्पर्शनम्

[4]निमित्तेष्वेषु सर्वेषु दक्षिणं श्रवणं स्पृशेत् ।
आदित्या वसवो रुद्रा वायुरग्निश्च धर्मराट् ।
विप्रस्य दक्षिणे कर्णे नित्यं तिष्ठन्ति वै यतः ॥

उदकाभावे असामर्थ्ये च दक्षिणं कर्णं स्पृशेत् । तदाह बृहस्पतिः– 'निमित्तेष्वेषु......' ।

विपा. १६२ (भागः २)

असंस्कृतमन्त्रस्य आचार्यत्वेऽनधिकारः

[1]आथर्वणं प्रतिष्ठां च ग्रहयज्ञं क्रतुं व्रतम् ।
असंस्कृतमनुः कुर्वन् शीघ्रमेति विपर्ययम् ॥

देशान्तरलक्षणम्

$ [2]देशान्तरं वदन्त्येके षष्टियोजनमायतम् ।
चत्वारिंशद्वदन्त्यन्ये त्रिंशदन्ये तथैव च ॥

## भृगुः

कर्तुरेकवस्त्रत्वाशुचित्वयोर्निषेधः, द्वीपानावृतदेशयोः कर्मानर्हता

[3]नैकवासा न च द्वीपे नान्तराले कदाचन ।
श्रुतिस्मृत्युदितं कर्म न कुर्यादशुचिः क्वचित् ॥

(१) द्वीपे विशेषस्तेनैवोक्तः– 'वृषभैकशतं यत्र गवां तिष्ठत्यसंयतम् । न तद्धर्महतं द्वीपमिति ब्रह्मविदो विदुः ॥' । आर. ७

(२) अन्तरालद्वीपयोर्लक्षणं संग्रहे– 'परितो वेष्टितो देशोऽद्भिर्यः स द्वीप उच्यते । अनावृतस्तु यो देशः सोऽन्तरालं प्रकीर्तितम् ॥' इति । अस्यापवाद आचारचन्द्रोदये– 'वृषभैकशतं यत्र गवां तिष्ठत्यसंवृतम् । न तद्धर्महतं द्वीपमेवं वेदविदो विदुः ॥' । इन्दु. ७

---

(१) संकौ. ५; संग. ५३ रौप्यः (रौप्ये) पू.; संव. ११ (=).

(२) मपा. ५८ ऽघमर्षणे (ऽधमेक्षणे); संग. २७५ च्चरे (च्चार).

(३) समु. ९ समुत्सर्गे (समुत्पन्ने) द्वितीयार्धे (मार्जारमूषिकस्पर्शे त्वाचान्तस्तु शुचिर्भवेत् ।) तृतीयार्धं नास्ति, मनुः; स्मृच. ९९; चश्रा. ९५९ मूषिका (मूषक) सर्वेषु (धर्मार्थे); पमा. २२४; मपा. ५८ मूषिका (मूषिक) तृतीयार्धे (निमित्तेष्वेषु सर्वेषु दक्षिणं श्रवणं स्पृशेत् ॥); गभा. २३१ (अधोवायुसमुत्सर्गे प्रहासेऽनृतभाषणे । मार्जारमूषकस्पर्शे आक्रुष्टे क्रोधसंभवे । निमित्तेष्वेषु सर्वेषु कर्म कुर्वन्नपः स्पृशेत् ॥), रामवाजपेयिन इत्युक्तम्; शूशि. ९४ कर्म कुर्वन्नुप (दक्षिणश्रवणं); मुक्ता. २३६ मूषिका (मूषिक); आम. १२ चश्रावत्; विपा. १६१ (भागः २) मूषिका (मूषक); बाल. १।१९६ चश्रावत्; संग. २७४ (अधोवायुसमुत्सर्गे प्रवासेऽनृतभाषणे । मार्जारमूषकस्पर्शे आक्रुष्टे क्रोधसंभवे । तेषु तेषु निमित्तेषु कर्म कुर्वन्नपः स्पृशेत् ॥), विधानपारिजाते इत्युक्तम्: २७५ प्रहासे (प्रवासे) कर्म कुर्वन्नुप (दक्षिणं श्रवणं).

(४) विपा. १६२ (भागः २).

---

$ व्याख्यानं 'महानद्यन्तरं यत्र' इति वृद्धमनुवचने (संका. पृ. ११८५) द्रष्टव्यम् ।

(१) प्रपा. ७२.

(२) मिता. ३।२१; अप. ३।२२; पमा. ५९५ उत्तरार्धे (चत्वारिंशद्वदन्त्येके अन्ये त्रिंशत्तथैव च ॥); उत. १२० वदन्त्यन्ये त्रिंशदन्ये (वदन्त्येके त्रिंशदेके); निसा. ४४२; मुक्ता. ५२३ वदन्त्येके (वदन्त्यन्ये).

(३) आर. १ उत्त.: ७; मुक्ता. २६४; इन्दु. ६; संदी. १ उत्त.

द्वीपविशेषस्य कर्मार्हता

[१]वृषभैकशतं यत्र गवां तिष्ठत्यसंयतम् ।
न तद्धर्महतं द्वीपमिति ब्रह्मविदो विदुः ॥

कर्मानर्हं वस्त्रम्

[२]न रक्तमुल्बणं वासो न नीलं च प्रशस्यते ।
दशाहीनं मलाक्तं च वर्जयेदम्बरं बुधः ॥

पञ्चविधो नग्नः

[३]अकच्छः पुच्छकच्छश्च तिर्यक्कच्छोर्ध्व-
कच्छकौ ।
कटिसूत्रे बद्धकच्छो नग्नः पञ्चविधः स्मृतः ॥

कटिसूत्रहीनस्य नग्नता कर्मानर्हता च

[४]कटिसूत्रं विना श्रौतं स्मार्तं कर्म करोति यः ।
सर्वं तन्निष्फलं विद्यात्सोऽपि नग्न इति स्मृतः ॥

कटिसूत्रमिति । अनेन ब्राह्मणकर्मकर्तुः कटिसूत्रमवश्यं धार्यम्, 'श्रौतं स्मार्तं कर्म करोति यः' इति लिङ्गात् । लोके तावत् जन्मतो द्वादशदिने कटिसूत्रं बध्नन्ति । तस्य समावर्तनकाले त्यागो न विधीयते, उपनयनधृतानां दण्डादीनामेव समावर्तने त्यागविधानात् । आजन्मसिद्धं सिद्धमेव कटिसूत्रम्, 'आचारश्चैव साधूनाम्' इत्यविगीतशिष्टाचारस्य प्रामाण्यात् ।

आन. ३१

नग्नविधाः नग्नस्य कर्मानर्हता च

[५]नग्नो मलिनवस्त्रः स्यान्नग्नश्चाऽऽर्द्रपटः स्मृतः ।
नग्नस्तु दग्धवस्त्रः स्यान्नग्नः स्यूतपटस्तथा ।
विकच्छोऽनुत्तरीयश्च नग्नश्चावस्त्र एव च ॥

[१]श्रौतं स्मार्तं तथा कर्म न नग्नश्चिन्तयेदपि ।
मोहात्कुर्वन्नधो गच्छेत्तद्धवेदासुरं कृतम् ॥

अयं च मलिनादिवासोनिषेधः सति सामर्थ्ये वेदितव्यः । यदाह गौतमः— 'सति विभवे न जीर्णमलवद्वासाः स्यात्' ।

स्मृच. ११४

[२]नग्नः स्यान्मलवद्वासा नग्नः कौपीनकेवलः ।
द्विकक्ष्योऽनुत्तरीयश्च अकक्षोऽवस्त्र एव च ।
नग्नः काषायवासाः स्यान्नग्नश्चार्धपटः स्मृतः ॥

उपवीतं बद्धशिखत्वं च कर्तृधर्मौ

¶[३]सदोपवीतिना भाव्यं सदा बद्धशिखेन च ।
विशिखो व्युपवीतश्च यत्करोति न
तत्कृतम् ॥

## कात्यायनः

उपवीतं बद्धशिखत्वं च कर्तृधर्मौ

[४]सदोपवीतिना भाव्यं सदा बद्धशिखेन च ।
विशिखो व्युपवीतश्च यत्करोति न तत्कृतम् ॥

---

(१) मुक्ता. २६४ त्यसंयतम् (त्यसंशयम्) हतं द्वी (हतद्वी); आर. ७.

(२) स्मृच. ११४; मुक्ता. २५२ मलाक्तं (जलार्द्रं)

(३) मुक्ता. २५२ बद्धकच्छो (च कच्छश्च); आन. ३१.

(४) मुक्ता. २५२; आन. ३१.

(५) स्मृच. ११४ (नग्नो मलिनवस्त्रः स्यान्नग्नश्चार्धपटः स्मृतः । नग्नो द्विगुणवस्त्रः स्यान्नग्नो रक्तपटः स्मृतः । नग्नस्तु दग्धवस्त्रः स्यान्नग्नः स्यूतपटस्तथा ॥), म्हैसूरमुद्रितस्मृतिचन्द्रिकापुस्तके तु असदधृत एव पाठो लभ्यते; पमा. २४५–२४६ क्रमस्तु विपरीतः; मुक्ता. २५२ : २५३ (विकच्छोऽनुत्तरीयः) एतावदेव.

¶ व्याख्यानानि कात्यायने द्रष्टव्यानि ।

(१) स्मृच. ११४; पमा. २४५ पू.; मुक्ता. २५२.

(२) अप. १।२२५ पृ. ४६१.

(३) अप. १।२९; स्मृच. ३२; पमा. ४५०; प्रर. ५० (=); चम. २३ कात्यायनः भृगुश्च; मुक्ता. ९१; संम. २७; संकौ. १६०; आन. १५५; बाल. १।२९ पृ. १५३, १५४ भृगुकात्यायनौ; कृभ. ९५७.

(४) कास्मृ. १।४; ब्रक. ६१ खेन च (खेन तु); चव्र. ३८ खो व्युप (खोऽनुप) शेषं ब्रकवत्; चदा. १०८ चव्रवत्; कृर. ४६ ब्रकवत्, दक्षः; हभा. २००; गभा. २०३ ब्रकवत्; गप. ८७, १०४ ब्रकवत्; निप्र. ३१ ब्रकवत्: ५४ उत्त.; आत. ४६४ (=); प्रर. ५०

(१) न चानेन सदोपवीतित्वं कर्मकाले एवेति शङ्कनीयम्। यतः स एवाऽऽह– 'मन्त्रपूतं स्थितं काये यस्य यज्ञोपवीतकम्। नोत्तारयेत्ततः प्राज्ञो यदीच्छेच्छ्रेय आत्मनः ॥ कायस्थमेव तत्कार्यमुत्थाप्यं( ? मुत्तार्यं ) न कदाचन। सकृदुत्तारणात्तस्य प्रायश्चित्ती भवेद्द्विजः ॥' इति। ‡स्मृच. ३२

(२) 'विशखो व्युपवीतश्च यत्करोति न तत्कृतम्॥' इति कात्यायनवचनात् शिखाबन्धनं कर्माङ्गम्। अत एव कात्यायनः( ? यनस्मृतौ ) स्नाने 'बद्धशिखी' इत्यनुवादः। एवं च सति 'गङ्गायां भास्करक्षेत्रे मातापित्रोर्मृतेऽहनि। मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः॥' इति यन्मुण्डनविधानं तत्रापि शिखावर्ज(न ? )मेव मुण्डनम्। अत एव कात्यायनः– 'केशश्मश्रू वपते वाऽशिखम्' इति शिखां वर्जयित्वा केशश्मश्रुवपनस्य दर्शाङ्गत्वमाह। सर्वदेशेष्वित्थमेव समाचारः। यत्र तु यतेर्ब्रह्मचारिणः 'मुण्डनं शिखा वा' इति विकल्पश्रवणम्, तत्र पक्षे तदभावात् कर्मसु तदीयेषु बद्धशिखत्वं पक्षे नाङ्गम्। एवं 'नीचकेशनखश्मश्रुः' तथा 'क्लृप्तकेशनखश्मश्रुः' इति मनुयाज्ञवल्क्योक्तेः, 'अनूढश्मश्रुर्नीकस्मात्' इति च स्मृतेः स्नातकधर्मत्वेन केशनीचत्वार्थं वपने कर्तव्ये शिखावर्जितमेव कर्तव्यम्।

निप्र. ५४–५५

(३)¶ अत्र पूर्वार्धेनापि नित्यता उत्तरार्धेनापि कर्माङ्गता बोधिता। अन्यथा उपवीताभावदशायां कृतं साङ्गमेव न स्यात्, पुरुषश्च प्रत्यवायी भवेत्। अत्र वदन्ति– करोति कृतवान् कृतमित्यकृतत्वातिदेशः। पितृकृत्यादौ उपवीतित्वाभावात् कथं न प्रत्यवायः ? न च बाधकाभावे सतीति पूरणीयम्, सदापदसंकोचापत्तेः। न च पदाहवनीय इति वाच्यम्, सत्युपवीते यज्ञसूत्रान्तरमादाय प्राचीनावीतित्वोपपत्तेः। अत एव व्युपवीत इत्यनेन पितृकृत्यादावप्युपवीतोपयोग उक्तः। तथा चात्र समुच्चय एवेति। उच्यते– 'यज्ञोपवीती निर्वर्त्य ततः पर्युक्षणादिकम्।' इत्यत्र ततो यज्ञोपवीती व्याख्यानात् तथा 'अग्नौकरणहोमोऽपसव्येन वा कार्यः' इत्यत्र वाकारेण समुच्चयानुपपत्तेः। ततश्च व्युपवीतपदं यज्ञसूत्रमात्रपरम्। 'सदोपवीतिना' इत्यत्रापि यज्ञसूत्रधारणवतेत्यर्थः। न च मुष्ट्या धारणेऽपि तत्स्यात्, धारणे विहिते इति विशेषणात्। न च मुष्ट्यादिधारणं कुत्रापि कर्मणि विहितम्। न चैवं कर्माङ्गत्वेन सूत्रार्थत्वेन कर्माचरणकाले प्राचीनावीतित्वेनापि स्थित्यापत्तिः। उपनयनकाले यज्ञसूत्रविन्यासस्य प्राथमिकत्वात् औत्सर्गिकत्वेन बाधकं विना तदत्यागात्।

आत. ४६४–४६५

(४) अत्र पूर्वार्धेन सदाशब्दवशात् पुरुषार्थता। उत्तरार्धेन विपर्ययनिन्दाद्वारेण सशिखसोपवीताभ्यां कर्तव्यं कर्मेति कीर्तनात् कर्मार्थता। एवं च कर्मकाले शिखाबन्धोपवीताभावे कर्माङ्गलोपनिमित्तं पुरुषार्थलोपनिमित्तं चेति प्रायश्चित्तद्वयं भवति, दर्शपूर्णमासयोरिवानृतवदने। कर्मणो बहिस्तु पुरुषार्थलोपनिमित्तमेकमेवेति त्रिवेकः।

† प्र. ५०

---

‡ मुक्ता. स्मृचवत्।

(=); आर. २; मच. २।६३ उत्त.; वीमि. १।२९ पृ. ८७; पप्र. ८९; संप्र. ३१६ देवलः : ४२२; चम. २३ कात्यायनः भृगुश्च; आम. ३; सिन्धु. ९२२ (=) उत्त; विपा. १७० (भागः २) मनुः; प्रका. ३४ (=): ३३७ उत्त; बाल. १।१२ पृ. ३३ उत्त.: १।२९ पृ. १५३ भृगुकात्यायनौ; संग. ६१९ देवलः: ६६४; इन्दु. ८; संदी. ७; २९० (भागः २) (=) पू.

¶ अयं ग्रन्थः आत. ४६४–४६५ इत्यत्र दारोपगमनविधिप्रकरणे 'एवं गच्छन् स्त्रियं क्षामाम्' इति याज्ञवल्क्यवचनस्य पूर्वोत्तरार्धयोर्मध्ये अन्यत्रत्यः पूर्वापरसंबन्धविहीनः प्रमादेन मुद्रितोऽस्ति। किंचात्र काश्चिदशुद्धयो निर्णयाभावाद्यथास्थिता एव रक्षिताः।

† चम., संस., बाल., इन्दु., संदी. प्ररगतम्।

(५) कर्माङ्गत्वं यज्ञोपवीतस्य, 'यज्ञोपवीतिना आचान्तोदकेन कृत्यम्' इति सूत्रात्। तथा च कर्मकालमात्रे धारणम्, नान्यदेति प्रसक्तावाह— सदोपवीतिनेति। सदोपवीतयुक्तेन बद्धचूडेन च भवितव्यम्। एतेन शिखाबन्धोपवीतधारणयोः पुरुषार्थतोक्ता। ततश्चाधारणे प्रत्यवायः। पुरुषार्थतया सदा धारणात् कर्मकालेऽपि धारणोपपत्तेः किं कर्माङ्गता नास्त्येवेत्यत्राऽऽह— विशिख इत्यादि। शिखोपवीतरहितेन यत्कर्म कृतं न तत् कृतम्, विगुणत्वेन फलासाधकत्वादित्यभिप्रायः। केवलपुरुषार्थत्वे हि दैवात्कर्मकालेऽधारणेऽपि कर्म अविगुणमेव, पुरुषस्तु प्रत्यवायी स्यात्। कर्माङ्गत्वे तु नैवम्। तदा च विगुणक्रतुसमाधाने यत्प्रायश्चित्तं तत्कर्तव्यमिति कर्माङ्गत्वोपदेशप्रयोजनम्। एतेन दधिखादिरादिवत् क्रतुपुरुषार्थतयोभयार्थतया द्व्यात्मकता उपवीतस्येत्युक्तम्। अत एव 'पिबतो मेहतश्चापि भुञ्जतोऽनुपवीतिनः। प्राणायामं त्रिधा बद्धं नवकं त्रियुतं क्रमात्॥' इत्यन्यत्रापि व्यक्तमुक्तं धारणम्। अत एव धनार्जननियमस्य पुरुषार्थत्वे तदतिक्रमेण कृष्याद्यर्जितधनेन क्रतुनिष्पत्तिरविगुणैव, पुरुषस्तु नियमातिक्रमात् प्रायश्चित्तीयते। विशिख इत्यनेन च असत्यामपि शिखायां शिखाबन्धाभावे कर्मवैगुण्यम्, न तु सत्यामेवेत्युक्तम्।

प्रकाश.

(६) अत्र पूर्वार्धेनोपवीतित्वादेः पुरुषार्थत्वम् उत्तरार्धेन क्रत्वर्थत्वमभिप्रेतम्, अतो नान्यतरवैयर्थ्यम्। यद्वैदिकं कर्म। न कृतं न फलसाधकम्, वैगुण्यादित्यर्थः। उपवीतिनेति सामान्यशब्देन प्राचीनावीतनिवीतयोरपि परिग्रहः, तेन श्राद्धकाले प्राचीनावीतित्वा( दाव ? )वस्थायामपि न पुरुषार्थोपवीतित्वबाधः। न च 'उपवीतं यज्ञसूत्रं प्रोद्धृते दक्षिणे करे। प्राचीनावीतमन्यस्मिन्निवीतं कण्ठलम्बितम्॥' इत्यनुशासनादुपवीतपदस्य स्कन्धविन्यासविशेषविशिष्टसूत्रसमुदायविशेषवाचकत्वात् कथमेवमिति वाच्यम्, भूयःप्रयोगबलेन स्कन्धे विन्यासशून्येऽपि सूत्रसमुदायविशेषे सामान्यत एवोपवीतपदस्य शक्तिस्थैर्यात्। अत एवोपवीतदानविधयोऽपि निष्प्रत्यूहाः। अन्यथा स्कन्धविन्यासविशिष्टस्यादानात्तदनुपपत्तेः। अत एव च— 'मेखलामजिनं दण्डमुपवीतं कमण्डलुम्। अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि मन्त्रतः॥' (मस्मृ. २।६४) इति मनुना( ? मनोः ) परिहितेऽपि सूत्रसमुदाये एवोपवीतपदप्रयोगः संगच्छते। संगच्छते च 'यज्ञोपवीतं परमं पवित्रम्' इत्यादिमन्त्रेऽपि तादृशयज्ञोपवीतपदप्रयोगः। किंच— 'ऊर्ध्वं तु त्रिवृतं कार्यं तन्तुत्रयमधोवृतम्। त्रिवृतं चोपवीतं स्यात्तस्यैको ग्रन्थिरिष्यते॥' इत्युपवीतपदार्थव्युत्पादकछन्दोगपरिशिष्टवचनात् सामान्यशक्तिरप्रत्यूहेति। न चोपवीतपदस्य सूत्रसमुदायविशेषसामान्यवचनत्वे उपवीताधिकरणविरोधः, तत्र 'निवीतं मनुष्याणां प्राचीनावीतं पितृणामुपवीतं देवानाम्' इति श्रुतिमधिकृत्य 'उपवीतं लिङ्गदर्शनात्सर्वधर्मः स्यात्' (जैसू. ३।४।२।१०) इति मीमांसायामुपवीतत्वादीनां परस्परभेदस्यातिस्फुटत्वादिति वाच्यम्, शक्तिभेदेनोभयोपपत्तेः। न च 'अन्यायश्चानेकार्थत्वम्' इति जैमिनीयन्यायविरोधः, विनिगमकसत्त्वे तन्न्यायावकाशात्, प्रकृते च तदभावात्। प्रत्युत लाघवे सामान्यशक्तिरेवोचिता। तुष्यतु वा विशेषशक्तिमात्राङ्गीकारेण सुजनः। तथाऽपि सामान्यपुरस्कारेण छन्दोगपरिशिष्टीयपरिभाषाबलादसति बाधके सामान्यपरतैवोपवीतपदस्य स्मार्ते कर्मणि प्रयुज्यते। एवं च श्राद्धादिकाले वामस्कन्धे द्वयोर्दक्षिणस्कन्धे च द्वयोः सूत्रसमुदायविशेषयोर्धारणस्वीकरणं मूर्खाणां न श्रद्धेयम्, सर्वदेशीयशिष्टाचारविरोधाच्चेति।

कण्टकोद्धारकृतस्तु सदेति प्रक्रम्यमाणकर्मकालपरमेव। अत एव पूर्वोत्तरार्धयोर्हेतुसद्भावेना( ? हेतुहेतुमद्भावेना)न्वयान्न वाक्यभेदः। 'यज्ञोपवीते द्वे धार्ये श्रौते स्मार्ते च कर्मणि।' इत्यादिना 'गायत्र्या च शिखां बद्ध्वा नैर्ऋत्यां ब्रह्मरन्ध्रतः। जुटिकां च ततो बद्ध्वा ततः कर्म समाचरेत्॥' इति ब्रह्मपुराणवचनेन चाङ्गत्वस्थैर्यात्। एतेन 'सदेत्यादिविधिरिति मूर्खतैव, विशिख इत्यादिनिन्दार्थवादस्यपुरुषार्थविधिशक्तिमेवान्तर्भाति( ? )' इति परास्तम्। अत एव कर्मान्यकाले न धारणावश्यकता। परंतूपवीतधारणं 'सकृदुत्तारणात्तस्य प्रायश्चित्तीयते

हि सः । ' इति वाक्यान्तरबलात् पुरुषार्थमपीति प्राहुः । अन्ये तु उक्तवचनमालोचयन्तः 'यज्ञोपवीतधारणस्यापि न पुरुषार्थता(म् ?), तथा सत्यभ्यङ्गादिकाले यज्ञोपवीतत्यागस्य शिखामोचनस्य च प्रामाणिकैः करणाचारविरोधात् ' इति वदन्तीत्यास्तामत्यावेशः ।

वीमि. १।२९ पृ. ८७–८८

(७) यज्ञोपवीतधारणं च क्रत्वर्थं पुरुषार्थं च । तदाह कात्यायनः– सदोपवीतिनेति । अत्र बद्धशिखत्वं ब्रह्मचारिणः शिखाजटत्वपक्षे । मुण्डत्वपक्षे तु न तन्नित्यम् । न च यज्ञोपवीतनाशे प्रायश्चित्तश्रवणात् केवलपुरुषार्थत्वं शङ्कनीयम्, 'विशिखो व्युपवीतश्च ' इत्यनेन कर्मवैगुण्यप्रतिपादनात् कर्माङ्गत्वसिद्धेः । सदाशब्दश्रवणाच्चोपवीतस्य कण्ठादनुत्तारणं गम्यते । तथा च भृगुः– ' मन्त्रपूतं स्थितं काये यस्य यज्ञोपवीतकम् । नोद्धरेच्च ततः प्राज्ञो य इच्छेच्छ्रेय आत्मनः ॥ सकृच्चाधारणा( ? सकृदुद्धारणा)त्तस्य प्रायश्चित्ती भवेद्द्विजः ॥ ' इति । संप्र. ४२२

कर्मणां दक्षिणहस्तसाध्यत्वमुत्सर्गः

†[1]यत्रोपदिश्यते कर्म कर्तुरङ्गं न तूच्यते ।
दक्षिणस्तत्र विज्ञेयः कर्मणां पारगः करः ॥

(१) आचमनादिकर्माङ्गप्रसङ्गादन्यदपि साधारणमङ्गमाह– यत्रेति । यत्र स्मृत्यादौ कर्म कर्तव्यत्वेनोच्यते, कर्तुः पुनः सव्यं दक्षिणं वाऽङ्गं नोच्यते, तत्र दक्षिणपाणिः कर्माङ्गतया ज्ञातव्यः । यस्मादसौ साङ्गकर्मनिष्पादकतया पारगः, सव्येन तु विगुणं कर्मेति । एतेन गोभिलोक्तकर्मसु बलिदानहोमादिषु अन्योक्तेषु च अनुपदिष्टकर्त्रङ्गविशेषेषु अङ्गविशेषनियमेनानुष्ठानं स्फुटीकृतम् ।

प्रकाश.

(२) यत्र स्मृत्यादौ हस्तसाध्यं कर्मोपदिश्यते, कर्तुरङ्गं च विशिष्य नोच्यते, तत्रेत्यर्थः । कर्मणां पारग इति स्तुतिमात्रम् । यत्र चाऽऽक्रमणादौ पादादिकं विशिष्य नोच्यते, तत्रापि दक्षिणमेव पादादिकं ग्राह्यम् । यथाऽऽह आश्वलायनः– ' एकाङ्गवचने दक्षिणं प्रतीयादनादेशे ' (आश्रौ. १।१।१)। पप्र. ८४

दिङ्नियमः

[1]यत्र दिङ्नियमो नास्ति जपहोमादिकर्मसु ।
तिस्रस्तत्र दिशः प्रोक्ता ऐन्द्रीसौम्यापराजिताः ॥

(१) सौम्या उत्तरा । अपराजिता ऐशानी ।

¶ ब्रक. ५९

(२) ऐन्द्री प्राची । $ चव्र. ३६

(३) अपरमपि साधारणमङ्गमाह–यत्रेति । यत्र जपादिकर्मोक्तम्, तेषु कर्मसु दिग्विशेषमुखतानियमो नोक्तः, तत्र पूर्वा उत्तरा ऐशानीति तिस्रो दिशो मुनिभिरुक्ताः ।

प्रकाश.

---

† इदमादिश्लोकत्रयस्य स्थलादि शौनककारिकास्वपि द्रष्टव्यम् ।

(१) कास्मृ. १।८ ; अप. १।२५ तूच्यते (चोच्यते); ब्रक. ५८ ; स्मृच. ५ ; चव्र. ३६ तूच्यते (सूच्यते) ; चदा. १०८ चव्रवत् ; कुर. ४७ ; निप्र. २५ अपवत् ; संत. ८८७ अपवत् ; पप्र. ८४ ; मुक्ता. १४ ; आर. ६ तूच्यते (कथ्यते) ; आम. २ ; सस्मृ. २६ ; संर. ११६५ ; संदी. २०.

सं. का. १५१

¶ कुर., निप्र. ब्रकवत् ।

$ शेषं ब्रकवत् । आम., संदी. चव्रवत् ।

(१) कास्मृ. १।९ नास्ति (न स्यात्) ; अप. १।२५ ऐन्द्रीसौम्यापराजिताः (ऐन्द्री सौम्याऽपराजिता) ; ब्रक. ५९ दिशः प्रोक्ता (तु विज्ञेया) ; स्मृच. ५ नास्ति (न स्यात्) तत्र (तस्य) ; चव्र. ३६ ; चदा. १०८ अपवत् ; कुर. ४६ अपवत् ; निप्र. २५ ; पप्र. ८५ होमादि (यज्ञादि) शेषं अपवत् ; मुक्ता. १५ नास्ति (न स्यात्) ऐन्द्रीसौम्यापराजिताः (ऐन्द्री सौमी तदन्तरा) ; आर. ६ नास्ति (न स्यात्) ऐन्द्रीसौम्यापराजिताः (ऐन्द्री सौम्यपराजिता) ; आम. २ नास्ति (न स्यात्) शेषं अपवत् ; सस्मृ. २६ यत्र दिङ्नियमो नास्ति (यदि वा नियमो न स्यात्) तत्र (तस्य) सौम्या (सौम्य) ; संदी. २० नास्ति (न स्यात्) शेषं अपवत्.

(४) नास्ति नोक्तः। ऐन्द्री पूर्वा। सौम्या उत्तरा। देवानामपराजयहेतुत्वादपराजिता ऐशानी। तथा च श्रुतिः– 'त उदीच्यां प्राच्यां दिश्ययतन्त। ते ततो न पराजयन्त। सैषा दिगपराजिता' इति। ते देवाः। उदीच्यां प्राच्यां तदुभयसंबन्धिन्यामीशान्यामित्यर्थः। पप्र. ८५

कर्तुरासीनत्वमुत्सर्गः

[1]**आसीन ऊर्ध्वः प्रह्वो वा नियमो यत्र नेदृशः।**
**तदासीनेन कर्तव्यं न प्रह्वेण न तिष्ठता॥**

(१) प्रह्वः प्रणतजानुकः। प्रह्वेण नम्रेण, तिष्ठता ऊर्ध्वेण। चप्र. ३६

(२) न प्रह्वेण नावनतेन, न तिष्ठता नोर्ध्वजानुना। कृर. ४७

(३) यत्र उपविष्ट उत्थितोऽवनतपूर्वकायः कुर्यादित्येतादृशो नियमो नास्ति तत्कर्म उपविष्टेन कर्तव्यम्, नाऽऽपद्यपि प्रह्वेण उत्थितेन कर्तव्यमित्यर्थः।

§ प्रकाश.

कर्मभेदेन दर्भगुणभेदविधानम्

[1]**हरिता यज्ञिया दर्भाः पीतकाः पाकयज्ञियाः।**
**समूलाः पितृदैवत्याः कल्माषा वैश्वदेविकाः॥**

(१) पितृदैवत्याः पित्रर्थाः। स्मृच. १०९

(२) पञ्चयज्ञियाः पञ्चयज्ञार्हाः। चदा. १०६

(३) कल्माषाः कर्बुराः। कृर. ६५

(४) वर्णभेदेन विनियोगभेदमाह कात्यायनः– हरिता इति। पमा. २३६

(५) 'कुशान् दद्यात्' इत्युक्तेर्यादृशाः कुशाः कर्माङ्गभूतास्तानाह– हरिता इति। दर्शादियज्ञार्थाः हरिताः, पञ्चयज्ञार्थाः पीतवर्णाः, पितृदैवतकर्मार्थाः समूलाः, विश्वदेवश्राद्धार्थास्तिलकोपेताः। कुशा उत्पाट्या इति शेषः। 'कल्माषाश्चैव दैविकाः' इति कल्पतरुपाठः। तदा च व्यक्त एवार्थः। अत्र च प्रसङ्गाद्यज्ञार्था अप्युक्ताः। प्रकाश.

(६) यज्ञियाः दर्शादियज्ञार्थाः हरिताः। पीतकाः पीतवर्णाः पञ्चयज्ञियाः पञ्चयज्ञार्थाः। पञ्चयज्ञिया इत्यत्र पाकयज्ञिया इति क्वचित्पाठः। तत्र पाकयज्ञा हुतादयो वक्ष्यमाणाः। कल्माषाः चित्राः, 'चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे।' इति कोषात्। पप्र. ९४

[1]**हरिता वै सपिञ्जूलाः शुष्काः स्निग्धाः समाहिताः।**
**रत्निमात्राः प्रमाणेन पितृतीर्थेन संस्कृताः॥**

पित्रर्थानां वर्णपरिमाणादीन्याह– हरिता इति। सपिञ्जूलाः प्रादेशमात्रार्द्रशुष्कान्यतरशीर्णपुष्पमञ्जरीसहिताः, $ स्थूलपत्राः, कोमलाः, समाहिताः नेतस्ततो विक्षिप्तपर्णाः, कृतमुष्टिहस्तप्रमाणाः, पितृतीर्थसंयोगसंस्कृताः, पितृकर्मण्युपादेया इति शेषः। रत्निप्रमाणता च पिण्डास्तरणार्थानामेव। आसनार्घ्योत्सर्गार्थानां तु गोकर्णप्रमाणता। तथा च वायुपुराणम्–

---

§ पप्र. प्रकाशगतम्।

(१) कास्मृ. १।१० आसीन ऊर्ध्वः (तिष्ठन्नासीनः); अप. १।२५; ब्रक. ५९; स्मृच. ५; चप्र. ३६; चदा. १०८; कृर. ४७; निप्र. २५; श्राकौ. ५०५ परिशिष्टवचनम्; पप्र. ८५; मुक्ता. १४ मनुः; आर. ६; आम. ३; सस्मृ. २६; संदी. २० कास्मृवत्.

(२) कास्मृ. १।२० यज्ञियाः (यज्ञिकाः); अप. १।२२५ पृ. ४५८ पाक (पञ्च); ब्रक. ६५ अपवत्; स्मृच. १०९ कास्मृवत्; चप्र. ४० अपवत्; चदा. १०६ अपवत्; कृर. ६५ कल्माषा वैश्वदेविकाः (कल्माषाश्चैव दैविकाः) शेषं अपवत्; पमा. २३६; मर. ३४ दैवत्याः (देवत्याः); निप्र. ३३; पप्र. ९३ अपवत्; मुक्ता २३१ पीतकाः पाकयज्ञियाः (पीताः पावकसंज्ञकाः).

$ स्थूलपत्रा इति व्याख्यानात् 'पुष्टाः' इति पाठः प्रतिभाति।

(१) कास्मृ. १।२१ शुष्काः (शुद्धाः); अप. १।२२५ शुष्काः स्निग्धाः समाहिताः (स्निग्धाः पुष्टाः समन्ततः) ब्रह्मपुराणम्; पप्र. ९८ शुष्काः (पुष्टाः).

'रत्निप्रमाणाः शस्ता वै पितृतीर्थेन संस्कृताः । उपमूले तथा लूनाः प्रस्तरार्थे कुशा मताः ॥ '। ब्रह्मपुराणे– 'हरिताश्च सपिञ्जूलाः स्निग्धाः पुष्टाः समाहिताः । गोकर्णदीर्घास्तु कुशाः सकृच्छिन्नाः समूलकाः ॥ पितृतीर्थेन देयाश्च दूर्वा श्यामाकमेव च । काशाः कुशा वल्वजाश्च तथाऽन्ये तीक्ष्णरोमशाः ॥ मौञ्जाश्च शाद्वलाश्चैव षड्दर्भाः परिकीर्तिताः ॥ ' । तीक्ष्णरोमशा इति वल्वजानां विशेषणम् । तेन ' तेषामलाभे शूकतृणशरशीर्यवल्वजमुतवनलशुण्ठवर्जं सर्वतृणानि ' इति गोभिलोक्तेन तद्व्यतिरिक्तवल्वजानां निषेधो बोद्धव्यः । गोकर्णपरिमाणं च 'प्रादेशतालगोकर्णाः ' इत्यभिधानकोषे प्रतिपादितम् । मुख्यकुशाभावे दूर्वादीनां ग्रहणम्, तदभावे सर्वतृणानीति गोभिलेनोक्तत्वात् । अत एव ' कुशाभावे कुशस्थाने काशं दूर्वां वा दद्यात् ' इति विष्णुः । ‡ प्रकाश.

### त्याज्यदर्भाः

[१]**पिण्डार्थे ये स्तृता दर्भास्तर्पणार्थे तथैव च ।**
**धृतैः कृते च विण्मूत्रे त्यागस्तेषां विधीयते ॥**

त्याज्यान् कुशानाह– पिण्डार्थमिति । पिण्डास्तरणे ये कुशाः, ये च तर्पणार्थम्, यैश्च धृतैर्विण्मूत्रे कृते, तेषां त्यागः कर्तव्यः । ते कर्मसु न योज्या इत्यर्थः । अन्येऽपि ये त्याज्यास्तानाह लघुहारीतः– ' चितौ पथि च ये दर्भा ये दर्भा यज्ञभूमिषु । स्तरणासनपिण्डेषु षट्कुशान् परिवर्जयेत् ॥ ' । ' नीवीमध्ये तु ये दर्भा यज्ञसूत्रे च ये कृताः । पवित्रांस्तान्विजानीयाद्यथा कायस्तथा कुशाः ॥ ' । एतच्च धृतैः कृते चेत्यस्यापवादकम्, ' पिण्डार्थे ये स्तृता दर्भा यैः कृतं पितृतर्पणम् । मूत्रोच्छिष्टे धृता ये च तेषां त्यागो विधीयते ॥ ' इत्येतदनन्तरं लघुहारीतेन ' नीवीमध्ये ' इत्युक्तत्वात् । त्याज्यव्यतिरिक्तास्तु विनियुक्ता अपि विनियोज्याः । तथा च गृह्यपरिशिष्टम्– ' दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणा हविरग्नयः । अयातयामान्येतानि नियोज्यानि पुनः पुनः ॥ ' इति । यातयामं जीर्णम्, तत् यन्न भवति तदयातयामं सवीर्यम्, कार्यक्षममिति यावत् । अत्र मरीच्युक्तो विशेषः– ' मासे नभस्यमावस्या तस्यां दर्भोच्चयो मतः । अयातयामास्ते दर्भा विनियोज्याः पुनः पुनः ॥ ' इति । * प्रकाश.

### दर्भाणामयातयामता पुनःपुनर्योज्यता च

[१]**मासेन स्यादमावास्यां दर्भो ग्राह्यो नवः स्मृतः ।**
**अयातयामस्तेनासौ नियोज्यश्च पुन पुनः ॥**

अमावास्यायां गृहीतो दर्भो मासपर्यन्तं ग्राह्य इत्यर्थः । पप्र. १०१

### पवित्रस्य दर्भपिञ्जूल्याश्च लक्षणम्

[२]**अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च ।**
**प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् ॥**

( १ ) स्थालीपाकादौ तु कात्यायनोक्तं द्रष्टव्यम्– अनन्तर्गर्भिणमिति । स्मृच. १०८

( २ ) यत्तु– ' चतुर्भिर्दर्भपिञ्जूलैर्ब्राह्मणस्य पवित्रकम् । ' इति, तच्छन्दोगपरिशिष्टविरोधात् प्रामाण्यसंदेहाच्च नाऽऽदेयम् । एवम्– ' पत्रत्रयेण वा कार्यमेकपत्रेण कर्हिचित् । ' इति क्वचिल्लिखितमनादेयम् । निप्र. ३७

‡ पप्र. प्रकाशवत् ।

(१) कास्मृ. १।२२ तर्पणार्थे ( स्तरणार्थे ); अप. १।२२५ पृ. ४५८ ( पिण्डार्थे संभृताः स्युर्ये तर्पणार्थे तथैव च । धृतैकतस्तु विण्मूत्रे तेषां त्यागो विधीयते ॥ ); मर. ३४ णार्थे ( णार्थं ) कृते च ( कृतेषु ); पप्र. १०१ स्तृता ( स्थिता ) णार्थे ( णार्थं ).

* पप्र. प्रकाशगतम् ।

( १ ) पप्र. १०१ मदनरत्नप्रदीपे षट्त्रिंशन्मतकात्यायनस्मृत्योः इत्युक्तम् .

( २ ) कास्मृ. १।२८ ; अप. १।२२, २३१ ; ब्रक. ६५ अनन्तर्गर्भिणं ( अनन्तगर्भिणं ) ; स्मृच. १०८ ; चव्र. ४१ र्गर्भिणं (र्गर्भकं) ; चदा. १०६ ब्रकवत्, लघुहारीतः ; कुर. ६६ ; पमा. २३८ कौशं ( कुशं ) ; मर. ३४ ; निप्र. ३७ ; संत. ८६९, ९१४ ; पप्र. ९५ ; मुक्ता. २३३ र्गर्भिणं ( र्गर्भितं ) ; विपा. १६३ ( भागः २ ) ; संग. ३२ ; संर. १८ मुक्तावत् ; संदी. ११, ३३.

(३) अनन्तर्गर्भिणम् । अन्तर्गर्भस्याभावोऽनन्तर्गर्भम्, तद्युक्तम्, अन्तर्गर्भशून्यमित्यर्थः, 'अनन्तस्तरुणौ यौ तु कुशौ प्रादेशसंमितौ । अनखच्छेदिनौ साग्रौ तौ पवित्राभिधायकौ ॥' इति शौनकवचनैकवाक्यत्वात् । संत. ८७०

(४) पवित्रं व्याकरोति— अनन्तर्गर्भिणमिति । कुशस्य पत्रद्वयमन्तर्गर्भशून्यं साग्रं प्रादेशप्रमाणं सर्वत्र पवित्रं ज्ञेयम्, न तु प्रकृते अर्घ्यपात्रमात्रे । प्रकाश.

(५) पवित्रमाह स एव— अनन्तर्गर्भिणमिति । अत्रान्तःशब्दगर्भशब्दयोः कर्मधारये तदुत्तरं मत्वर्थीयेन्प्रत्यये च सति निष्पन्नस्यान्तर्गर्भिन्शब्दस्य नञ्समासे सति सर्वान्तर्वर्तिगर्भवद्भिन्नमित्यर्थः पर्यवस्यति । विद्यमानत्वाद्यधिकार्थविवक्षायाम् 'ऋक्षे पिण्डप्रदानं तु ज्येष्ठपुत्री विवर्जयेत् ।' इतिवत् कर्मधारयादपि मत्वर्थीयप्रत्ययो नानुपपन्नः । तेन गर्भिणोऽपि गर्भत्यागे ग्रहणं सिध्यति । अत्र गर्भवर्जनं कैमुतिकन्यायेन । यद्वा गर्भवाच्यन्तःपदगर्भिपदयोर्द्वन्द्वसमासे सति नञ्समासः । तथा च गर्भवर्जनं शब्दत एव । मैथिलास्तु— अन्तर्गर्भो यस्य तत् अन्तर्गर्भं द्वितीयं दलम्, तद्विद्यते यस्य तदन्तर्गर्भिणं तृतीयम्, तद्भिन्नं चतुर्थादि इत्यर्थ इत्याहुः । कुशपत्रद्वयमन्तर्गर्भशून्यं साग्रं प्रादेशप्रमाणं सर्वत्र पवित्रं विज्ञेयमिति परिशिष्टप्रकाशः । द्विदलमिति दलग्रहणाद्यावत्पर्यन्तदलव्यवहारस्तावदेव ग्राह्यम् । प्रादेशमात्रमिति । प्रादेशादिलक्षणमाह कोषः— 'प्रादेशतालगोकर्णास्तर्जन्यादियुते तते । अङ्गुष्ठे सकनिष्ठे स्याद्वितस्तिर्द्वादशाङ्गुला ॥' । पप्र. ९५

[१]एतदेव हि पिञ्जूल्या लक्षणं समुदाहृतम् ।
आज्यस्योत्पवनार्थं यत्तदप्येतावदेव तु ॥

(४) कास्मृ. १।२९; अप. १।२२ हि पिञ्जूल्या (कपिञ्जल्या) नार्थं (नार्थे); ब्रक. ६५ नार्थं (नार्थे); चव्र. ४१ एतदेव हि पिञ्जूल्या (तदेव दर्भपिञ्जल्या); चदा. १०७ चव्रवत्, लघुहारीतः; कृर. ६६ पिञ्जूल्या

'अथ सीमन्तमूर्ध्वमुन्नयति भूरिति दर्भपिञ्जूलीभिरेव प्रथमम्' (गोगृ. २।७।५) इत्यत्र, अन्यत्र च चूडाकरणे 'एकविंशतिर्दर्भपिञ्जूल्यः' (गोगृ. २।९।४) इति सूत्रोक्तदर्भपिञ्जूल्या अपि एतदेव लक्षणमाचार्येणोक्तम् । 'तत एव बर्हिषः प्रादेशमात्रे पवित्रे कुरुते' (गोगृ. १।७।२१) इति सूत्रोक्तमाज्योत्पवनार्थं यत्पवित्रं तदप्येतावत्संख्यमेव, न तु द्विवचननिर्देशात् द्विदलद्वयरूपम् । द्विवचनं तु कुशजातिवचनस्य पवित्रशब्दस्य दलद्वये प्रयोगात् । $प्रकाश.

पिञ्जूल्या लक्षणान्तरम्

[१]एतत्प्रमाणामेवैके कौशीमेवाऽऽर्द्रमञ्जरीम् ।
शुष्कां वा शीर्णकुसुमां पिञ्जूलीं परिचक्षते ॥

एके पूज्याः प्रादेशप्रमाणामेव कुशमयीम् आर्द्रमञ्जरीं शुष्कां वा भ्रष्टपुष्पां पिञ्जूलीमाहुः । इयं च 'हरिता वै सपिञ्जूला' इत्यत्र ग्राह्या, अन्यत्र तु पवित्ररूपैवेति । ¶ प्रकाश.

अवुपस्पर्शननिमित्तानि

[२]पित्र्यमन्त्रानुद्रवणे आत्मालम्भे अवेक्षणे ।
अधोवायुसमुत्सर्गे प्रहासेऽनृतभाषणे ॥

$ पप्र. प्रकाशवत् ।

¶ पप्र. पिञ्जूलीव्यवस्थावर्जं प्रकाशवत् ।

(पिञ्जल्या); निप्र. ३७ हि पिञ्जूल्या (च पिञ्जल्या) पू; संत. ९१४ कृरवत्, पू.; पप्र. ९५ देव हि (देव तु); संदी. ३३ उत्त.

(१) कास्मृ. १।३० प्रमाणा (प्रमाण); अप. १।२२ पिञ्जूलीं (पिञ्जलीं); ब्रक. ६६ कास्मृवत्; कृर. ६६ मेवाऽऽर्द्रं (मेवाभ्र) शेषं अपवत्; पप्र. ९५ शुष्कां वा (शुष्कां च); संग. ४२२ (एतत्प्रमाणके वैके कौशिमेवाऽऽर्द्रमञ्जरी । शुष्का वा शीर्णकुसुमा पिञ्जुली परिचक्षते ॥).

(२) कास्मृ. १।३१ अवेक्षणे (ऽधमेक्षणे); ब्रक. ६३; चव्र. ३९ पित्र्यमन्त्रानुद्रवणे (पित्रमन्त्रप्रवरणे) प्रहासे (प्रह्रासे); चदा. १०७ पित्र्यमन्त्रानुद्रवणे (पित्र-

**[1]मार्जारमूषिकस्पर्शे आक्रुष्टे क्रोधसंभवे ।**
**निमित्तेष्वेषु सर्वेषु कर्म कुर्वन्नपः स्पृशेत् ॥**

(१) पित्र्यमन्त्रानुद्रवणे पित्र्यमन्त्रोच्चारणे । आत्मालम्भे आत्माधिष्ठानहृदयस्पर्शे यज्ञादौ विहिते । अवेक्षणे तस्यैव । एतदुभयं यज्ञादौ विहितम् । आक्रुष्टे परुषभाषणे । § ब्रक. ६३

(२) अनुहरणे पाठे 'आत्मालम्भे आत्महनने आत्मप्रशंसायां च' इति सागरः । 'आत्माधिष्ठानभू-(त)हृदयस्पर्शे, अवेक्षणे तस्यैव । एते च स्पर्शावेक्षणे यज्ञादौ विहिते' इति कल्पतरुः । आक्रुष्टे परुषभाषणम् । अप आचामेत् । स्पर्शमात्रमेवेत्येके । कृर. ५०

(३) पित्र्यमन्त्रोच्चारणे, यज्ञादौ विहिते हृदयस्पर्शे, अवेक्षणे तस्यैव यज्ञादौ विहिते, अधोवायुसमुत्सर्गे, नोर्ध्वमुद्वारे, महति हासे, न तु स्मिते, आक्रुष्टे परुषभाषणे, क्रोधोत्पत्तौ भाषणं विनाऽपि मनसा, एतेषु निमित्तेषु सर्वत्र कर्मकरणकाले जलं स्पृशेत्, न त्वाचामेत् । अन्यन्निगदव्याख्यातम् । पित्र्यमन्त्रानुद्रवणे इत्युपलक्षणम् । अत एव योगियाज्ञवल्क्यः— 'रौद्रपित्र्यासुरान्मन्त्रांस्तथा चैवाऽऽभिचारिकान् । व्याहृत्याऽऽलभ्य चाऽऽत्मानमपः स्पृष्ट्वाऽन्यदाचरेत् ॥' ।

प्रकाश.

(४) अनुद्रवणम् उच्चारणम् । आत्मालम्भः हृदयस्पर्शः । अवेक्षणमपि तस्यैव । अत्र मन्त्रोच्चारणात्मालम्भावेक्षणानि यज्ञादौ विहितान्येव ग्राह्याणि, न लौकिकानि, अन्तरङ्गत्वेन तन्निषेधस्यैवोचितत्वात् । प्रहासे महति हासे, न स्मितमात्रे । मार्जारस्पर्शः मार्जारकृत एव, स्वयंकृते तु स्नानस्योक्तत्वात् इत्युक्तमाचारादर्शे । आक्रुष्टे परुषभाषणे । क्रोधसंभवे मानसिककोपे । अपः स्पृशेदित्यनेन अपां स्पर्शनमेव विवक्षितम्, न त्वाचमनमिति भर्तृयज्ञपितृभूतिकर्कोपाध्यायवासुदेवगर्गश्रीअनन्तदेवयाज्ञिकादयः सर्वे कल्पसूत्रभाष्यकारा व्याख्यातवन्तः संप्रदायादयः पद्धतिकाराश्च । अपां स्पर्शनम् आचमनमिति हेमाद्रिणा व्याख्यातम् । अत्र सर्वेषु वाक्येषु 'अपः स्पृशेत्' इति पाठात् अपः (१ पां) स्पर्शः जलस्पर्श एव याज्ञिकसंप्रदायाविरुद्धः । येषु तु उपस्पृशेदिति पाठः, तत्र तूपस्पर्शनमाचमनमित्युक्तमाचारादर्शे ।

संदी. २०–२१

**[1]रौद्रं तु राक्षसं पित्र्यमासुरं चाऽऽभिचारिकम् ।**
**उक्त्वा मन्त्रं स्पृशेच्चाप आलभ्याऽऽत्मानमेव च ॥**

पित्र्यमित्यस्यापि उक्त्वेत्यनेनान्वयः । चकारात् रौद्रादिकर्म कृत्वाऽपि । पप्र. ९१

त्रिविधा अक्रिया, परशाखीयकर्मानुष्ठाननिषेधः, अविरोधिपरशाखीयानुष्ठानानुज्ञा

**[2]अक्रिया त्रिविधा प्रोक्ता विद्वद्भिः कर्मकारिणाम् ।**
**अक्रिया च परोक्ता च तृतीया चायथाक्रिया ॥**

---

§ चदा., चव्र. ब्रकवत् । पप्र. ब्रकगतं प्रकाशगतं च । मन्त्रप्रवरणे); कृर. ५० पूर्वार्धे (पित्र्ये मन्त्रार्थहरणे आत्मालम्भे त्ववेक्षणे ।) अयं मुद्रितमूलवचनपाठः । 'अनुहरणे पाठे' इति व्याख्यानात्तु 'मन्त्रानुहरणे' इत्येव पाठ इति निर्णीयते; पप्र. ९१; आम. ३; संदी. २०.

(१) कास्मृ. १।३२ मूषिक (मूषक) सर्वेषु (सर्वत्र); ब्रक. ६३ मूषिक (मूषिका) निमित्तेष्वेषु सर्वेषु (निमित्तेषु च सर्वत्र); चव्र. ३९ सर्वेषु (सर्वत्र); चदा. १०७ चव्रवत्; कृर. ५०; पप्र. ९१ मूषिक (मूषिका); आम. ३ मूषिक (मूषक) ष्वेषु सर्वेषु (ष्वत्र सर्वत्र); संदी. २० कास्मृवत्.

(१) कास्मृ. ३।११५.

(२) कास्मृ. १।३३; ब्रक. ५१ चायथा (वाऽयथा); चव्र. ३२ कर्मकारि (कामचारि) क्ता च (क्ता या); चदा. १०५ कर्म (काम) शेषं ब्रकवत्; निप्र. ६५ चायथा (चान्यथा); पप्र. ७१; आर. ६ आशार्के इत्युक्तम्; बाल. १।८९ पृ. २५३; संदी. २२.

[1]स्वशाखाश्रयमुत्सृज्य परशाखाश्रयं तु यः।
कर्तुमिच्छति दुर्मेधा मोघं तत्तस्य चेष्टितम् ॥

[2]यन्नाऽऽम्नातं स्वशाखायां परोक्तमविरोधि यत्।
विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत् ॥

(१) कास्मृ. १।३४ तु यः (च यः); व्रक. ५१ तु यः (च यः) चेष्टितम् (यत्कृतम्); स्मृच. ५० पूर्वार्धे (स्वशाखां यः समुत्सृज्य परशाखान्तरं तु यः।); चव्र. ३२ खाश्रय (खाशेष) तु यः (च यः) तत्तस्य चेष्टितम् (तस्य तु यत्फलम्); चदा. १०५ पूर्वार्धे चव्रवत्; चेष्टितम् (यत्फलम्); निप्र. ६५ तत्तस्य (तस्य तु); पप्र. ७१ चेष्टितम् (यत्कृतम्); संप्र. ५०६–५०७; आर. ६ स्वशाखाश्रयमुत्सृज्य (स्वशाखां यः समुत्सृज्य) तु यः (द्विजः) चेष्टितम् (यत्कृतम्) वर्धमानपरिभाषायाम्; संम. ३३ तत्तस्य चे (तस्य विचे); बाल. १।८९ पृ. २४६, २५३; संग. १० तत्तस्य चेष्टितम् (तस्य च यत्कृतम्); संदी. २२.

(२) कास्मृ. १।३५ धि यत् (धि च); अप. १।६ परोक्त (पारक्य); व्रक. ५१; स्मृच. ५ परोक्तमविरोधि यत् (पारक्यमविरोधि च): ५० कास्मृवत्; चव्र. ३२ अपवत्; चदा. १०५ अपवत्; चका. ४०३ अपवत्; निप्र. ६५ कर्मवत् (कर्मसु) शेषं अपवत्; संत. ९२१ कास्मृवत्; पप्र. ७१ अपवत्; संप्र. ५०७ कास्मृवत् : ८८७ अपवत्; मुक्ता. १५ परोक्तमविरोधि यत् (पारक्यं न विरोधि च); आर. ६ परोक्तमविरोधि यत् (पारक्यमविरोधि च) कर्मप्रदीपे; संम. ३३ दिकर्मवत् (दिकं यथा) शेषं अपवत्; सिन्धु. १७३५ (=) निर्देशमात्रम्; विपा. १७ अपवत्, संग्रहवचनादित्युक्तम्; बाल. १।१४ पृ. ५० (=), १।८९ पृ. २४६, पृ. २५३ अपवत्; संग. १० कास्मृवत् : ६८ अपवत् पू.; कुभ. ११६८ आरवत् : ११७२ (यान्नाऽऽम्नातं स्वशाखायाम्) एतावदेव; संदी. २२.

(१) परोक्ता परशाखोक्ता। अयथाक्रिया विहितेतरप्रकारेणानुष्ठानम्। यथा अग्निहोत्रं यजुर्वेदशाखासु विहितं छन्दोगादिभिरनुष्ठीयते। § व्रक. ५१–५२

(२) ननु किमत्र सकलस्मार्ताङ्गोपसंहारेणानुष्ठानम्, उत न? यदि नोपसंहारः, तदा 'सर्वशाखोपसंहारादुक्तः श्रौतो यथा विधिः। सर्वस्मृत्युपसंहारात्स्मार्तोऽप्युक्तस्तथा विधिः॥' इत्यादिविरोधः स्यात्। अथोपसंहारः, तदा नानुष्ठातुं शक्यम्, विरुद्धोपसंहारसंभवात्। उच्यते– सत्यम्, यदि सर्वोपसंहारः स्यात्। किंतु यन्नाऽऽम्नातं स्वतन्त्रेण तावन्मात्रपरिपूरणमेवान्यतः क्रियते इत्यविरोधः। अत एव कात्यायनः– 'यन्नाऽऽम्नातं स्वशाखायां पारक्यमविरोधि च। विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत्॥' इति। अनेनैवाभिप्रायेणोक्तं 'सर्वस्मृत्युपसंहारात्' इति। स्मृच. ५

(३) परोक्ता परशाखोक्ता। अन्यथाक्रिया विहितेतरप्रकारेणानुष्ठानम्। परशाखोक्ताकरणे शाखान्तराधिकरणविरोधमाशङ्क्योक्तम्– स्वशाखाश्रयमुत्सृज्येति। तेन स्वशाखोक्तसंभवे तद्विरोधि परशाखोक्तं न ग्राह्यम्। तस्यैव व्याख्या– यन्नाऽऽम्नातमित्यादिना। यद्यपि शाखान्तराधिकरणे स्वशाखाविहितमङ्गं परशाखाविहितं च तुल्यबलमेवोक्तम्। तथा च उदितहोमे प्रायश्चित्तविधाने विरोधमाशङ्क्य 'प्रायश्चित्तं विधानेन (? (वा) निमित्तेन)' 'प्रक्रमाङ्गात् विनियोगेन' (जैसू. २।४। २१–२२) इति सूत्राभ्यां येनानुदिते होष्यामीति प्रक्रान्तं तेनोदये सति प्रायश्चित्तं कर्तव्यम्। न त्वनुदितहोमिनामुदयकालो नाङ्गमित्युक्तम्। तथा 'न चैकं प्रति शिष्यते' (जैसू. २।४।१९) इत्यत्र न च यत् काठके अग्निहोत्राङ्गं तत् काठकीयमग्निहोत्रे प्रतिशिष्यते किंतु तैत्तिरीयस्यापीत्युक्तम्। तथाऽपि न्यायतस्तावदेवमेव। केवलं परशाखागतकर्मनिषेधवचनस्य निरवकाशत्वात् स्वशाखानुष्ठानसंभवे परशाखाश्रितं नानुष्ठेयम्। अनुदितहोमानुष्ठानसंभवे उदितहोमो नानुष्ठेयः। तदसंभवमालोच्यो-

§ चव्र., चदा. व्रकगतम्।

दिते होष्यामीति प्रक्रम्योदितहोमेऽपि वाजसनेयिनां न च कर्मवैगुण्यम् । अत एव बलाबलाधिकरणे स्वशाखाश्रयेण परशाखाश्रयं बाध्यते इति यदुक्तम्, तदपि मुख्यानुकल्पपरमेव । स्वशाखाश्रयसंभवे परशाखाश्रयं न कर्तव्यमित्यर्थः । यथा अग्नीषोमीयस्य पशोरतिदेशेनान्वाहार्यदक्षिणा यद्यप्यङ्गं तथाऽपि सोमदक्षिणया प्रसङ्गसिद्धेरननुष्ठानम्, एवं परशाखाश्रितस्याङ्गत्वेऽपि स्वशाखाश्रितसंभवे नानुष्ठानम् । यद्यपि 'एकशतमध्वर्युशाखानाम्, सहस्रं सामशाखानाम्' इति तावतां ज्ञानाभावे कथं कर्मानुष्ठानमिति भाति, तथाऽपि कल्पाध्ययनस्यापि विहितत्वात् तस्य दृष्टद्वारकल्पने परशाखागताङ्गोपसंहारस्वशाखागतसंदेहनिवृत्तिपरत्वात् कल्पसूत्रेषु यावदङ्गमुपनिबद्धं तावताऽपि कर्मसाद्गुण्यम् । तथा( ? यथा ) वाजसनेयिपञ्चदशशाखोपसंहारेण कात्यायनसूत्रम्, तदुक्ताङ्गानुष्ठानेन काण्वमाध्यंदिनादिवाजसनेयिनां कर्मसाद्गुण्यम् । यजुःशाखान्तरे तैत्तिरीयादौ श्रुतमप्यङ्गं त्याज्यम् । शाखान्तरन्यायः पञ्चदशशाखाविषयः । यद्वा तैत्तिरीया( दि )गतमप्यङ्गं सति संभवे क्रियमाणं फलातिशयार्थं शाखान्तरन्यायप्रयोजनम् । अत एव कात्यायनेन 'भक्षेहि मेति वा यथालिङ्गम्' ( काश्रौ. ९।२४४ ) इति तैत्तिरीयभक्षमन्त्रो वैकल्पिकत्वेन सोमभक्षणे दर्शितः । यत्तु काण्वश्रुतौ वैकङ्कतीस्रुवाः कथिताः, कात्यायनेन शाखान्तरानुसारात् 'वारु( ? र )णान्यहोमसंयुक्तानि' ( काश्रौ. १।८० ) इति वारु( ? र )णी कथिता । तथा दीक्षायाम् 'अदीक्षिष्टायं ब्राह्मणः' इति काण्वश्रुतौ, कात्यायनेन 'दीक्षितोऽयं ब्राह्मण इत्युच्चैस्त्रिर्जपेत्' ( काश्रौ. ७।१०४ ) इति मन्त्रान्तरमुक्तम्, तथाविधेषु मुख्यत्वात् स्वशाखाश्रयं कर्तुमुचितम्, कल्पसूत्रस्य वाजसनेयिशाखान्तरे सावकाशत्वादिति प्रतिभाति । तदुत्सृज्य सूत्रोक्तकरणे च शाखान्तरीयस्यानुकल्परूपत्वान्मुख्यासंभवे चानुकल्पस्यापि कार्यत्वात्स्यादेव फलम् । कथं मुख्यासंभवः ? इति चेत्, इत्थम् — किं स्वशाखागतत्वात् कल्पोक्तत्यागेन श्रुत्युक्तं कार्यम् ? किंवा 'वेदार्थो यः स्वयं ज्ञातस्तत्राज्ञानं भवेदपि । ऋषिभिर्निश्चिते तत्र का शङ्का स्यान्मनीषिणाम् ॥' इत्यादिव्यासवचनरीत्या स्वशाखागतस्य कल्पानुपसंहृतत्वेन निर्विचिकित्स्यम( ? निर्विचिकित्सकर्तव्यताऽ)ज्ञानान्न कार्यं वा ? इति संदेहेन स्वशाखोक्ते मुख्ये करणासामर्थ्यमस्त्येवेति स्यादेव फलम् । यस्य तु निर्विचिकित्स्यः ( ? त्सः ) श्रुत्युक्ते कर्तव्यतानिश्चयः, व्यासवचनस्य स्मृतिप्रशंसार्थवचनत्वात्, न च परंपरानुष्ठानाभिज्ञयाज्ञिकनिवारणप्रतिबन्धोऽस्ति, स कुर्यादेव वैकङ्कतीं स्रुवाम्, दीक्षायां च 'अदीक्षिष्टायं ब्राह्मणः' इति मन्त्रजपम् । मुख्यानुष्ठानाच्च प्राप्नुयादेव फलम् । यत्तु 'येनास्य पितरो याता येन याताः पितामहाः । तेन गच्छेत् सतां मार्गं तेन गच्छन् न रिष्यति ॥' इति ( मस्मृ. ४।१७८ ) मनुवचनम्, तद्वैकल्पिकेषु समेषु पूर्वपरिगृहीतग्रहणविषयम्, न तु मुख्यानुकल्पविषयम्, श्रुत्यर्थव्याख्यासंदेहेऽन्यतरपक्षपरिग्रहविषयं चेति मेधातिथिना व्याख्यातम् । एवं च सति 'बहुवेदगतन्यायविवेकज्ञो यदब्रवीत् । कात्यायनो न तद्वाच्यमन्याय्यमिति मादृशैः । वेदादृतेऽपि कुर्वन्ति कल्पैः कर्माणि याज्ञिकाः ॥' इत्यादिवार्तिकमप्यनुकल्पाभिप्रायं व्याख्येयम् । स्मृतीनां तु सर्वासां सर्वं प्रति प्रामाण्यं होलाकाधिकरणे प्रतिपादितम् । तत्र सर्वशाखास्वेकाग्निहोत्रवत् किं सर्वस्मृतिष्वेकमेव संध्याकर्म ? किंवा भिन्नम् ? इति संदेहे सर्वस्मृतीनां तुल्याध्येतृकत्वेन क्वचित् संध्याकर्मोत्पत्तिविधौ स्मृत्यन्तरे तद्विधिवैयर्थ्यात् 'न च शाखान्तरन्यायस्तुल्याध्येतृकतावशात् । सर्वशाखाविधित्वं हि स्थितमध्येतृभेदतः ॥' इत्युक्तदिशा प्रतिस्मृति भिन्नमेव कर्मेति प्राप्ते अभेदहेतोः प्रत्यभिज्ञानस्य सत्त्वेन क्वचित् कर्मानुवादेन गुणविधिरिति । यथा त्रिष्वपि वेदेषु तुल्याध्येतृकेष्वेकमेव ज्योतिष्टोमकर्म, 'भूयस्त्वेनोभयश्रुति' ( जैसू. ३।३।१० ) इति न्यायात्, तथा सर्वस्मृतिष्वेकमेव संध्याकर्म । तदङ्गानि सर्वेभ्यो ज्ञात्वा कार्याणि । न चैवं सति सर्वस्मृत्यनुसरणं विना संध्याकर्माद्यकरणप्रसङ्गः, श्रुत्यर्थोपसंहारे कल्पसूत्रवत् स्मृत्यर्थस्याप्यनुष्ठानाय पूर्वपूर्वशिष्टनिबन्धानामेवोपसंहारफलानामादरणीयत्वात् । तथा च मनुः— 'दशावरा वा परिषद्यं धर्मं परिकल्पयेत् ।

श्चवरा वाऽपि वृत्तस्था तं धर्मं न विचालयेत् ॥' (मस्मृ. १२।११०)। परिकल्पयेदिति। अनुष्ठानक्षमनिर्णयविषयं कुर्यात्। पर्षल्लक्षणं तत्रैव— 'त्रैविद्यो हैतुकस्तर्की नैरुक्तो धर्मपाठकः। त्रयश्चाऽऽश्रमिणः पूर्वे पर्षदेषा दशावरा ॥' (मस्मृ. १२।१११)। त्रयश्चाऽऽश्रमिणः पूर्वे वृद्धा ब्रह्मचारिणं विना, 'ब्रह्मचर्याश्रमादूर्ध्वम्' इत्यङ्गिरोवचनात्। धर्मपाठकः, 'अनेन धर्मशास्त्रज्ञः प्रोच्यते धर्मपाठकः।' इत्यङ्गिराः। एवं सति पूर्वपूर्वधर्मशास्त्रनिपुणमहानुभावपर्षद्भिर्यावदङ्गोपेतं नानास्मृतिपर्यालोचनया निर्णीतम्, तदधिकमङ्गं चेत् प्रामाणिके स्मृत्यन्तरे संप्रति दृश्यते, तदकरणेऽपि न वैगुण्यम्। शाखान्तरन्यायाङ्गत्वादङ्गाधिक्यात्करणे फलातिशयः। एतदेवाभिप्रेत्य भविष्यपुराणे स्मर्यते— 'अदृष्टार्थविकल्पस्तु व्यवस्थासंभवेऽसति। स्मृतिशास्त्रविकल्पः स्यादाकाङ्क्षापूरणे सति ॥'। व्यवस्थायाः संभवः संभावना तस्यामसत्यामदृष्टार्थस्य स्मृत्यर्थस्य विकल्पः। तद्यथा— 'कुर्यात् कृताञ्जलिर्वाऽपि ऊर्ध्वबाहुरथापि वा।' इति सूर्योपस्थाने विकल्पश्रुतावपि 'सायंप्रातः प्राञ्जलिर्मध्याह्ने ऊर्ध्वबाहुः' इति वाक्यान्तरात् व्यवस्था। यत्र तु न व्यवस्थासंभवः 'अघमर्षणसूक्तं त्रिः सकृद्वा जपेत्' इत्यादौ, तत्र यथेच्छविकल्पः। तथा स्मृतिशास्त्रस्याधिकबोधकस्य विकल्पः स्यात् पूर्वस्मृत्या क्रियमाणस्य कर्मण आकाङ्क्षापूरणे सति। यथा योगियाज्ञवल्क्यस्यानुसारेण संध्याकर्मणि क्रियमाणे शङ्खस्मृतेर्मार्जनानन्तरं 'व्याहृतीः कीर्तयेदेवं तथैवाक्षरमव्ययम्।' इति व्याहृतित्रयप्रणवजपविधानम्। न हि प्रणवव्याहृतिजपं प्रत्याकाङ्क्षाऽस्ति, मानाभावात्। आकाङ्क्षायां त्वपूर्णायां स्मृत्यन्तरोक्तं नित्यवदनुष्ठेयम्। तद्यथा योगियाज्ञवल्क्यीये— 'प्राणस्याऽऽयमनं कृत्वा आचामेत् प्रयतोऽपि सन्।' इति याज्ञवल्क्येन संध्याप्राणायामानन्तरमाचमनमात्रमुक्तम्, न तत्र मन्त्रः। अस्ति चाऽऽचमनस्य जलसाध्यस्य स्मारकमन्त्राकाङ्क्षा, तेन शङ्खस्मृतौ— 'उपस्पृशेत्ततः पश्चान्मन्त्रेणानेन मन्त्रवित्।' इति 'अन्तश्चरसि' इत्यादिमन्त्रविधानं साकाङ्क्षत्वान्नित्यवदेव ग्राह्यम्। एवमन्यत्र कल्पनीयम्। उपनयनादिगृह्योक्तकर्मविषये तु गृह्यपरिशिष्टम्— 'बह्वल्पं वा स्वगृह्योक्तं यस्य यावत् प्रकीर्तितम्। तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत् ॥'। गृह्योक्तानामपि स्थालीपाकादीनां शाखान्तरन्यायेन सर्वोपसंहारः। 'कपालं भगालमिति ब्रूयात्' इत्यादिस्नातकव्रतानां होलाकाधिकरणन्यायेन सर्वसाधारणत्वान्नैतद्वाक्यविषयत्वम्, परिशेषात्। 'यच्छाखीयैस्तु संस्कारैः संस्कृतो ब्राह्मणो भवेत्। तच्छाखाध्ययनं कुर्यात्' इति स्मृतेः संस्काराणां स्वशाखाध्ययनाङ्गत्वादितरशाखासंस्कारं प्रति गृह्यान्तरगताङ्गस्यानङ्गत्वादेव नापेक्षा। तेन न्यायमूलमेवेदं वचनम्। निप्र. ६५—७१

(३) अक्रियेति। अकरणम्, परशाखोक्तकरणम् विहितेतरप्रकारेण क्रमान्तरादिना करणम्, त्रिविधैव कर्मणामक्रिया, निष्फलत्वात्। परोक्तेत्यत्रविशेषमाह— स्वशाखेति। स्वशाखोक्तश्राद्धादिकमुत्सृज्य पारशाखिकं स्वशाखोक्तविपरीतं यः कर्तुमिच्छति शास्त्रीयज्ञानविपरीतज्ञानवान्, तस्य यत्कृतं तन्निष्फलम्। स्वशाखायां यत् नोक्तं परशाखोक्तम्, यथा—छन्दोगानां याजुर्वेदिकमग्निहोत्रम्, यद्वा स्वशाखोक्तस्याऽऽकाङ्क्षापूरकत्वेन स्वरूपतो वा अविरोधि, यथा मनुनोक्तस्य 'मेखलामजिनं दण्डमुपवीतं कमण्डलुम्। अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि मन्त्रवत् ॥' (मस्मृ. २।६४) इत्यस्य मन्त्राकाङ्क्षापूरकं गृह्यान्तरे मन्त्राभिधानम्, तद्धर्मैः कर्तव्यमेव। पौराणिकादि तु साधारणत्वान्न पारक्यमिति तदपि स्वशाखोक्तादधिकमनुष्ठेयमेव। यथा 'देवताभ्यः' इति मन्त्रजपादि। यत्तु गृह्यपरिशिष्टोक्तम्— 'बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म प्रकीर्तितम्। तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत् ॥', तत् साधारणानां परोक्तानां च नावश्यमनुष्ठानमित्येवंपरम्, न तु स्वगृह्योक्तमात्रमेवानुष्ठेयमिति तस्यार्थः, गृह्यानुक्तानां साधारणानामुपदेशानर्थक्यापत्तेः, शाखान्तराधिकरणविरोधाच्च। ¶ प्रकाश.

¶ संदी. प्रकाशगतम्।

(४) शूलपाणिना तु श्राद्धविवेके 'अविरोधि च' इति पठित्वा चकारादाकाङ्क्षितमिति व्याख्यातम् । एवं च स्वशाखायामनुक्तं परशाखोक्तं प्रधानं न ग्राह्यम् । अङ्गं तु स्वशाखायामनुक्तं परशाखायामुक्तमविरोधि आकाङ्क्षितं च ग्राह्यमिति पर्यवसितोऽर्थः । शाखान्तराधिकरणन्यायेन प्रसक्तं सर्वोपसंहारमपवदति गृह्यपरिशिष्टकारः— 'बह्वल्पं वा स्वगृह्योक्तं यस्य यावत्प्रकीर्तितम् । तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत् ॥' । यज्ञपार्श्वपरिशिष्टे कात्यायनः— 'ऊनो वाऽप्यतिरिक्तो वा यः स्वशाखास्थितो विधिः । तेन संतनुयाद्यज्ञं न कुर्यात्पारशाखिकम् ॥ परशाखोऽपि कर्तव्यः स्वशाखायां न नोदितः । सर्वशाखासु यत्कर्म एकं प्रत्यवशिष्यते ॥' । यत् यतः प्रत्यवशिष्यते प्रतीयते । $ पप्र. ७२

(५) परोक्ता परशाखोक्ता, तत् स्वगृह्यविरुद्धपरशाखोक्तनिषेधकम् । शक्तस्य सर्वस्मृत्युपसंहारः, अशक्तस्य स्वगृह्योक्तमिति निष्कर्षः । आपस्तम्बादीनां स्वसूत्रेऽनुक्तौ विशेषो यज्ञकाण्डे— 'आपस्तम्बादिभिरपि स्वसूत्राभावतस्तथा । बौधायनोक्तं कर्तव्यमन्यथा पतितो भवेत् ॥' । अग्निहोत्रादिकं च यच्छाखोक्तमाध्वर्यवं तदीयमेवाङ्गीकार्यम्, 'आधानं येन सूत्रेण तेनैवेज्यादिकाः क्रियाः ।' इति यज्ञपार्श्वोक्तेः । आर. ६

स्वशाखीयमात्रानुष्ठानस्य सफलत्वम्

**[1]बह्वल्पं वा स्वगृह्योक्तं यस्य यावत्प्रकीर्तितम् ।**
**तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत् ॥**

$ शेषं प्रकाशवत् ।

(१) अप. १।६ यावत् (कर्म); ब्रक. ५२ गृह्यपरिशिष्टकारः; स्मृच. ५ अपवत्; चव्र. ३३ अपवत्, गृह्यपरिशिष्टे; चदा. १०५ अपवत्, गृह्यपरिशिष्टकारः; प्रपा. १६ (=) यावत्प्रकीर्तितम् (कर्म प्रचोदितम्); निप. २७४ (=); निप्र. ७१ गृह्यपरिशिष्टम्; श्रात. ३१३ अपवत्; प्रर. ५१ प्रपावत्, संग्रहे; पप्र. ७२ गृह्यपरिशिष्टकारः; संप्र. ८८६; श्राप्र. १४ बह्वल्पं (बाहुल्यं) कीर्तितम् (चोदितम्); चम. ७ (=) प्रपावत्; आर. ६

(१) यत्तु कात्यायनवाक्यम् 'बह्वल्पं वा... कृतो भवेत् ॥' इति, तत् निरपेक्षार्थाभिधायकस्वशास्त्रविषयम् । सापेक्षे तु स्वशास्त्रे शास्त्रान्तरोक्तं ग्राह्यमिति स एवाऽऽह— 'यन्नाऽऽम्नातं स्वशाखायां पारक्यमविरोधि यत् । विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत् ॥' इति । § अप. १।६

(२) शाखान्तराधिकरणन्यायेन सर्वस्मृतिषु यथाप्रत्ययत्वे गृह्येष्वपि प्रसक्तेऽपवादमाह गृह्यपरिशिष्टकारः— 'बह्वल्पं वा स्वगृह्योक्तं यस्य यावत् प्रकीर्तितम् । तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत् ॥' । ब्रक. ५२

(३) पारस्करसूत्रानुसारिणां स्थालीपाकात्पूर्वदिने उक्तोपवासादिकं न भवति, पारस्करसूत्रेऽनुक्तत्वात् । न च पारस्करसूत्राविरोधेन आश्वलायनादिगृह्योक्तत्वात्तद्भवतीति वाच्यम्, तथा सति इध्माबर्हिषोः संनहनादिकरणस्याप्यापत्तेः । न चेष्टापत्तिः, अनेकगृह्योक्ततत्तदविरुद्धयावत्पदार्थस्य करणेऽसामर्थ्यात् । न च यथासामर्थ्यमेव उपसंहर्तव्यम्, 'बह्वल्पं वा स्वगृह्योक्तं ... कृतो भवेत् ॥' इति कात्यायनेन स्वगृह्योक्तमात्रकरणेऽपि साङ्गोपाङ्गकर्मसिद्धेः प्रदर्शितत्वात् । को हि मन्दमतिः (अपि) स्वल्पायाससाध्यादपि तावत्फलसिद्धौ बह्वायाससाध्ये प्रवर्तते इति । न च 'यन्नाऽऽम्नातं स्वशाखायां पारक्यमविरोधि यत् । विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत् ॥' इति कात्यायने-

§ स्मृच. अपवत् ।

प्रपावत्; सिन्धु. १७३४ (=) (बह्वल्पं वा स्वगृह्योक्तम्) एतावदेव; विपा. १७ स्वगृह्योक्तं (स्वशाखोक्तं) कीर्तितम् (चोदितम्) तस्य (तेन); संकौ. २३ यावत्प्रकीर्तितम् (यत्कर्म नोदितम्) सर्वः कृतो (सर्वं कृतं) परिशिष्टम् : २९ प्रथमपादमात्रम्, स्मृतिः : १७०, २२० प्रथमपादमात्रम्; प्रका. ३६ (=) प्रपावत्; बाल. १।१२ निर्देशमात्रम् : १।८९ पृ. २४६ अपवत् : १।८९ पृ. २५३ प्रपावत्, गृह्यपरिशिष्टे; संग. १०; कुभ. १७३४ प्रपावत्; संदी. २२ अपवत्, गृह्यपरिशिष्टे.

नैवाविरोधिपरकीयस्यापि अनुष्ठेयत्वोक्तेः 'बह्वल्पं वा स्वगृह्योक्तम्' इति वाक्यस्य गृह्यान्तराद्युक्तोपसंहारासमर्थपरत्वमिति वाच्यम्, उक्तातिप्रसङ्गापत्तिबलेन यन्नाऽऽम्नातमिति वाक्यस्य परकीयाकाङ्क्षितमात्रग्रहणपरत्वात्। भवति हि परोक्तमप्याकाङ्क्षितम्, गृह्यते च। यथा—'मेखलामजिनं दण्डमुपवीतं कमण्डलुम्। अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि मन्त्रवत्॥' इति मेखलादिग्रहणे मनुना सामान्यतो मन्त्रवत्त्वोक्तौ मन्त्रविशेषानुक्तौ च विशेषतो मन्त्राकाङ्क्षायां गृह्यविशेषपरिपठिता मन्त्रविशेषा गृह्यन्ते। न चेह स्थालीपाकपूर्वदिनकर्तव्योपवासादेः कथंचिदाकाङ्क्षा समस्ति, सामान्यशब्देनार्थतो वा स्वसूत्राद्यसूत्रितत्वादिति। न चैवं शाखान्तराधिकरणविरोधः, 'बह्वल्पं वा स्वगृह्योक्तम्' इति वाक्येन गृह्यान्तरोक्ताङ्गस्य व्यवस्थितविकल्पस्वीकारादिति बहवः।

संप्र. ८८६–८८७

(४) येषां शाखायां कल्पसूत्रादौ विस्तृतं संक्षिप्तं वाऽभिहितमस्ति तैस्तदेव अनुष्ठातव्यम्, 'बह्वल्पं वा स्वशाखोक्तं यस्य यावत्प्रचोदितम्। तेन तावति शास्त्रार्थे कृते सर्वः कृतो भवेत्॥' इति छन्दोगपरिशिष्टे कात्यायनस्मरणात्। येषां वाजसनेयिप्रभृतिशाखिनां गृह्यादौ नोक्तं तैस्तु बह्वृचपरिशिष्टोक्तं शौनकाद्युक्तं वा ग्राह्यम्, 'सर्वशाखाप्रत्ययमेकं कर्म' इति जैमिनिस्मरणात्, 'यन्नाऽऽम्नातं स्वशाखायां पारक्यमविरोधि यत्। विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत्॥' इति संग्रहवचनाच्च, स्मृतिप्रणेतॄणां मन्वादीनां सर्वसाधारण्येन प्रवृत्तेश्च।

विपा. १७

(५) येषां कल्पसूत्रे यावदितिकर्तव्यताकं कर्मोक्तं तेषां तावदेव। प्रधानस्य स्वसूत्राङ्गकलापेनैवाऽऽकाङ्क्षाशान्तेरितरस्मृत्याद्युक्ततदन्वयो नेत्यर्थः। 'स्वकं कर्म परित्यज्य यदन्यत्कुरुते नरः। अज्ञानादथवा लोभात्स तेन पतितो भवेत्॥' इति वचनात्स्वगृह्योक्तं बह्वल्पं वा यादृशं तत् तादृशमेवानुष्ठेयम्, न तु शास्त्रान्तरमपेक्ष्यान्यथाऽपि कर्तव्यम्। येषां तु गृह्ये स्मृत्यन्तरोक्तस्य कस्यचिदङ्गस्य निषेधः, तत्र तन्निषेधद्वारा तत्स्मृत्युक्तान्याङ्गस्याभिमतत्वबोधनात्तदनुष्ठेयम्, 'आत्मतन्त्रेषु यन्नोक्तं तद्ग्राह्यं पारतन्त्रिकम्। विशेषाः खलु सामान्या वेदोक्ता वेदवादिभिः॥' इति वचनात्। यस्य शास्त्रेऽनुक्ता विशेषास्ते खलु निश्चितं सामान्याः साधारणा इत्यर्थः। अत एव लौगाक्षिः—'ऊनो वाऽप्यतिरिक्तो वा यः स्वशाखोदितो विधिः। तेन संतनुयाद्यज्ञं न कुर्यात्पारतन्त्रकम्॥'। यज्ञपदमुपलक्षणम्। अत एवोक्तम्—'स्वशाखाविधिमुत्सृज्य त्वन्यस्य विधिमाचरेत्। अप्रमाणमृषिं कृत्वा त्वन्धे तमसि मज्जति॥ स्वकं कर्म परित्यज्य यदन्यत्कुरुते नरः। अज्ञानादथवा लोभात्स तेन पतितो भवेत्॥' इति। 'ऋक्शाखी नैव कुर्वीत स्वकीयं परशाखया। प्रमादाद्यदि कुर्वीत पुनः संस्कारमर्हति॥ यत्र नास्ति स्वशाखा चेदृक्शाखोक्तं समाचरेत्। पुनर्नार्हति संस्कारमन्यथाऽर्हति चेत्पुनः॥ यजुःशाखाविधानेन यदि बह्वृचकर्म च। कृतं चापि हि तत्कर्म पुनः कुर्याद्यथाविधि॥ ऋक्शाखाविधिना कर्म यदि स्यादन्यशाखिनाम्। न तत्कर्म पुनः कुर्यादिति यज्ञविदां मतम्॥' इति।

कृभ. १७३४–१७३५

परशाखीयानुष्ठानानुज्ञा

**[1]परशाखोऽपि कर्तव्यः स्वशाखायां न नोदितः।**
**सर्वशाखासु यत्कर्म एकं प्रत्यवशिष्यते॥**

यत् यतः प्रत्यवशिष्यते। पप्र. ७२

कर्मांशस्यान्यथानुष्ठानेऽननुष्ठाने च समाधानप्रकारः

**[2]प्रवृत्तमन्यथा कुर्याद्यदि मोहात्कथंचन।**
**यतस्तदन्यथाभूतं तत एव समापयेत्॥**

(१) पप्र. ७२ यज्ञपार्श्वपरिशिष्टे कात्यायनः.

(२) कास्मृ. १।२६; ब्रक. ५२ (=); स्मृच. ५; चव्र. ३२; चदा. १०५ गृह्यपरिशिष्टकारः; कृर. ५०; निप्र. ७१ उत्तरार्धे (यत्रैतदन्यथा जातं तदारभ्य समापयेत्॥); पप्र. ७३; मुक्ता. १५ आश्वलायनः; आर. ६; सस्मृ. २६; संदी. २३ गृह्यपरिशिष्टे.

[1]समाप्ते यदि जानीयान्मयैतदन्यथाकृतम् ।
तावदेव पुनः कुर्यान्नाऽऽवृत्तिः सर्वकर्मणः ॥
[2]प्रधानस्याक्रिया यत्र साङ्गं तत्क्रियते पुनः ।
तदङ्गस्याक्रियायां तु नाऽऽवृत्तिर्न च तत्क्रिया ॥

(१) प्रवृत्तं प्रारब्धम् । अन्यथा विपरीतम् । तत्कर्मकरणे सत्येव क्रमाद्यन्यत्वेन यतः यस्मात्पदार्थादारभ्य तत्कर्मान्यथा जातं तत एवाऽऽरभ्य पुनर्यथोक्तप्रकारेण कुर्यादित्यर्थः । समाप्ते इति । समाप्ते तु कर्मणि अन्यथाकरणज्ञाने सति यत्पदार्थान्यथाकरणं ज्ञातं तमेव पदार्थं पुनः कुर्यात्, न पुनस्तदुत्तरानपि पदार्थान् । एतदन्यथाकरणविषयम् । प्रधानस्येत्यादि त्वकरणविषयम् । प्रधानस्य कर्मणः यत्राकरणं भवति तत्साङ्गमेव पुनः कर्तव्यम् । तदङ्गस्य वाऽकरणे न साङ्गप्रधानावृत्तिर्नापि तावन्मात्रस्याङ्गस्य करणम्, किंतु प्रायश्चित्तमेव कार्यम् ।

¶ ब्रक. ५२

(२) प्रवृत्तम् अनुष्ठीयमानं प्रधानाङ्गभूतं कर्म । अत्र–तदङ्गस्य अङ्गाङ्गस्योपवीतित्वादेः, तत्र प्रायश्चित्तविशेषाश्रुतेर्विष्णुस्मरणमेव कार्यम् । एवं तु कर्तृधर्मादिषु (अ)ज्ञानमोहाभ्यामङ्गाङ्गाननुष्ठाने (च) अनुक्तप्रायश्चित्तं विष्णुस्मरणमेव कार्यम् । तथा च योगियाज्ञवल्क्यः– 'यदि वाग्यमलोपः स्याज्जपादिषु कथंचन । व्याहरेद्वैष्णवं मन्त्रं स्मरेद्वा विष्णुमव्ययम् ॥ अज्ञानादथवा मोहात् प्रच्यवेताध्वरेषु यत् । स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः ॥' – इति सागरः । लक्ष्मीधरस्तु– तदङ्गस्याकरणे न साङ्गप्रधानावृत्तिर्नापि तावन्मात्रस्याङ्गस्य करणम्, किंतु प्रायश्चित्तमेव कार्यमित्याह ।

कृर. ५०–५१

(३) अन्यथा मन्त्रक्रमाद्यन्यत्वम् । क्रियायाः करणे सत्येव । प्रधानस्याक्रिया अकरणम् । अत्रापि समाप्ते इति संबन्धः । कर्ममध्ये प्रधानाकरणे तावन्मात्रं कृत्वा तदुदीच्याङ्गप्रभृतिकरणम्, न पूर्वाङ्गावृत्तिः । तदपि क्रमान्यत्वादन्यथाकरणरूपमेव । समाप्तौ तु प्रधानाकरणज्ञाने साङ्गप्रधानस्य पुनः करणमित्यर्थः । अङ्गाकरणं समाप्तौ ज्ञातं चेन्नाऽऽवृत्तिर्न च तत्क्रिया, किंतु प्रायश्चित्तमित्यर्थः । मध्ये त्वङ्गाकरणज्ञानमन्यथाकरणमेव । यत्तु शतपथश्रुतौ– 'स यदि मन्येत न्यूनं मे यज्ञेऽभूदिति प्रजननं म एतत्प्रजनिष्य इत्येव तदुपासीत । अथ यदि मन्येतातिरिक्तं मे यज्ञेऽभूदिति पशव्यं म एतत्पशुमान् भविष्यामीत्येव तदुपासीत । अथ यदि मन्येत संकसुकं मे यज्ञेऽभूदिति श्रियै म एतदा मा श्रीस्तेजसा यशसा ब्रह्मवर्चसेन परिवृता गमिष्यतीत्येव तदुपासीत' इति चोक्त्वाऽन्ते 'स यो हैवमेतां यज्ञस्य समृद्धिं वेद सर्वसमृद्धेन हैवास्य यज्ञेनेष्टं भवति' (शब्रा. ११।४।४ ९–१२) । तेन एतादृशोपासनाविशेषादेव न्यूनादिसमाधानम् । उपासना अङ्गाश्रयणात् 'तदुक्तम्' इति न्यायात् यावज्जीवम् । भास्कराचार्यमतेन संवत्सरं वा ।

निप्र. ७२

(४) दैवादयथाक्रियायां यत्कर्तव्यं तदाह– प्रवृत्तमन्यथेति । प्रवृत्तं प्रारब्धं यत्कर्म, करणे सत्येवान्यथा

---

¶ चदा., चत्र. ब्रकगतम् ।

(१) कास्मृ. १।३७ समाप्ते (समाप्तं) दन्यथा (दयथा); ब्रक. ५२ (=); स्मृच. ५ कास्मृवत्; चत्र. ३३ गृह्यपरिशिष्टे; चदा. १०५ यदि जा (यद्विजा) दन्यथा (दयथा) गृह्यपरिशिष्टकारः; कृर. ५०; निप्र. ७१; पप्र. ७३ दन्यथा (दयथा); मुक्ता. १५ पुनः (पृथक्) नाऽऽवृत्तिः सर्वकर्मणः (निवृत्तिं सर्वकर्मणाम्) शेषं कास्मृवत्, आश्वलायनः; आर. ६; स्मृ. २६ नाऽऽवृत्तिः सर्वकर्मणः (नाऽऽवृत्तिं सर्वकर्मणाम्) शेषं कास्मृवत्; संदी. २३ पप्रवत्, गृह्यपरिशिष्टे.

(२) कास्मृ. १।३८ तु (च) न च (नैव); ब्रक. ५२ (=); स्मृच. ५ क्रिया यत्र (क्रियायां तु) न च (नैव); चत्र. ३३ गृह्यपरिशिष्टे; चदा. १०५–१०६ गृह्यपरिशिष्टकारः; कृर. ५१ क्रिया यत्र (क्रियायां तु); निप्र. ७१; पप्र. ७३ कृरवत्; मुक्ता. १५ (प्रधानस्य क्रियायां तु साङ्गं तत्क्रियते पुनः । तदङ्गाकरणे कुर्यात् प्रायश्चित्तं न कर्म तत् ॥) आश्वलायनः; आर. ६ कृरवत्; स्मृ. २६ स्मृचवत्, चन्द्रिकायाम्, मुक्तावदपि पाठो लभ्यते; संदी. २३ गृह्यपरिशिष्टे.

क्रमान्यत्वेन कुर्यात् । तत्र यस्मात्पदार्थादारभ्य यत्कर्मान्यथाजातं तत एवाऽऽरभ्य पुनर्यथोक्तप्रकारेण कुर्यात् । यथा गन्धोत्सर्गगन्धदानयोः क्रमान्यत्वेनानुष्ठानेऽन्यथाकरणकाले ज्ञातयोस्तत आरभ्य पुनरनुष्ठानम् ।

अन्यथाकृतयोस्तु प्रयोगमध्येऽज्ञाने यत्कर्तव्यं तदाह– समाप्ते अन्यथा कृतेऽन्यथाकरणज्ञाने सति यत्पदार्थान्यथाकरणं जातं तमेव यथोक्तक्रमेण पुनः कुर्यात्, न तत आरभ्य सर्वं कर्मकाण्डम् । एतच्च पुनरनुष्ठानमविलम्बे सुकरत्वे च कर्तव्यम् । यत्र तु विलम्बो दुष्करत्वं च तत्र विष्णुस्मरणमेव, न त्वावृत्तिः । यथाऽकृतोत्सर्गस्यान्नस्य ब्राह्मणैर्भोजने पुनरन्नान्तरोत्पादनोत्सर्गे, अन्यथा ब्राह्मणोपरोधसहत्वबाधापत्तेरिति ।

इदानीं दैवादक्रियायां यत्कर्तव्यं तदाह– प्रधानस्येति । प्रधानस्य कर्मणो गन्धादिदानादेर्यत्राकरणम् उत्सर्गश्च तदङ्गभूतः कृतस्तत्र पुनरङ्गानुष्ठानसहितं तत्कर्म कर्तव्यम् । अङ्गमात्रस्य तूत्सर्गस्याकरणे प्रधानस्य कृतस्य नाऽऽवृत्तिर्नाप्यङ्गानुष्ठानम्, किंतु तत्समाधानार्थम् ' अज्ञानाद्यदि वा मोहात् प्रच्यवेताध्वरेषु यत् । स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः ॥ ' इति योगियाज्ञवल्क्योक्तमनुष्ठेयम् । एवं समाप्ते प्रयोगे अन्यथाकरणज्ञानेऽप्येतदेव समाधानमिति । अन्ये तु– तदङ्गस्य साङ्गप्रधानप्रयोगाङ्गस्य उपवीतित्वादेरकरणे न साङ्गप्रधानस्य कृतस्याऽऽवृत्तिः, नाप्युपवीतित्वादेः करणम्, किंतु विष्णुस्मरणमेव प्रायश्चित्तमित्याहुः ।

¶ प्रकाश.

( ५ ) अयं त्वत्र विशेषः– पूर्ववचनद्वयं विशेषानुपादानादङ्गप्रधानोभयविषयकम् । तत्र प्रयोगमध्येऽन्यथाकरणज्ञाने सत्याद्यवचनात् व्यवस्था । समाप्ते सत्यन्यथाकरणज्ञाने द्वितीयवचनाद्व्यवस्था । विशेषानुपादानात् प्रयोगमध्ये समाप्तौ च अङ्गप्रधानयोरकरणज्ञाने तृतीयवचनाद्व्यवस्था । एवं चान्यथाकृतानामङ्गानां पुनरनुष्ठानमकृतानां तु तेषां नानुष्ठानमिति वचनात्सिद्धम् ।

¶ संदी. प्रकाशानुवादः ।

अन्ये तु वैषम्यमेतदाकलय्य तृतीयश्लोके तदङ्गस्य तत्समवायिनोऽङ्गस्य प्रधानावृत्तिं विना अनुपयोगिनोऽङ्गस्येत्यर्थः । यथा प्राङ्मुखत्वबद्धशिखत्वादेः, तथा तिष्ठद्धोमसूर्योपस्थानादौ ऊर्ध्वस्थितत्वादेः, तथा होमाचमनादौ वीक्षितत्वादेः, होमादौ स्रुवादिसंस्कारादेः, आचमने ब्राह्मतीर्थत्वादेरित्याहुः ।

समाप्ते इत्यादिश्लोकव्यवस्था तु कर्मणः सुकरत्वे अविलम्बे च बोध्या । असुकरत्वे विलम्बे च प्रायश्चित्तमेव कार्यम् । प्रायश्चित्तं तु अनुपदेशे विष्णुस्मरणमेव । यथाऽऽह योगियाज्ञवल्क्यः– ' अज्ञानाद्यदि वा मोहात्प्रच्यवेताध्वरेषु यत् । स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः ॥ ' । अत्राध्वरपदं श्रौतस्मार्तकर्मपरम् । अस्मिन् श्लोके पितामहस्मृतौ ' प्रमादात् कुर्वतां कर्म ' इति प्रथमचरणपाठः । प्रधानस्याकरणे पुनस्तत्करणासामर्थ्ये तु तदनुकल्पादिकं विहितकर्माकरणनिमित्तकं वा प्रायश्चित्तं कार्यमिति । ¶ पप्र. ७३–७४

( ६ ) अन्यथा वैपरीत्येनेत्यर्थ इति हेमाद्रिः । तन्न, तदङ्गस्येत्यग्रिमग्रन्थविरोधात्, गुणक्रमानुरोधेन प्रधानावृत्तेरन्याय्यत्वाच्च । अतस्त्यागस्तदर्थः । यत इति । प्रयोगमध्येऽङ्गत्यागे प्रधानत्यागे वा ज्ञाते तदारभ्याङ्गावृत्तिः प्रधानादि च कार्यमित्यर्थः । तावदेवेत्यङ्गपरम् । पुनस्त्वर्थे । तदङ्गस्येत्यङ्गाङ्गपरम् । आवृत्तिः साङ्गप्रधानस्य तत्क्रियाङ्गाङ्गानुष्ठानम् । तेन साङ्गप्रधानाङ्गस्याङ्गाङ्गस्य चोपवीतित्वादेरकरणे न साङ्गप्रधानप्रवृत्तिर्नापि तन्मात्रकरणम्, किंतु विष्णुस्मरणादिकं प्रायश्चित्तमिति वर्धमानः । कल्पतरुरपि प्रधानाङ्गस्यैवाकरणे प्रायश्चित्तम्, न त्वङ्गाङ्गाकरण इत्याह । आर. ६–७

यजमानस्य मानकर्तृत्वमुत्सर्गः

[१]**मानक्रियायामुक्तायामनुक्ते मानकर्तरि ।**
**मानकृद्यजमानः स्याद्विदुषामेष निश्चयः ॥**

¶ शेषं प्रकवत् ।

( १ ) कास्मृ. १।७९ यामुक्ता ( यां युक्ता ) ; कर. ७६ ; निप्र. २६ ( = ) स्याद्विदुषामेष निश्चयः ( स्यादिति शास्त्रविनिश्चयः ) ; संत. ८५९.

मानपरिभाषामाह— मानक्रियायामिति । निगदव्याख्यातम् । ततश्चाङ्गुलादिमानं यजमानाङ्गुलेनेति सिद्धम् । प्रकाश.

अङ्गुष्ठाङ्गुलिमानस्य बृहत्पर्वभिः कर्तव्यता

[1]**अङ्गुष्ठाङ्गुलिमानं तु यत्र यत्रोपदिश्यते ।**
**तत्र तत्र बृहत्पर्वग्रन्थिभिर्मिनुयात्सदा ॥**

यत्र यत्र अङ्गुष्ठमानमेतावदङ्गुलिमानमेतत्कर्तव्यमुच्यते, तत्र सर्वत्राङ्गुष्ठस्य ( अङ्गुलीनां च ) यद्ग्रन्थिस्थानं मध्यस्थितं तेन मानं सर्वदा कुर्यात् । § प्रकाश.

अनादेशे द्रवद्रव्ये स्रुवस्य कठिनद्रव्ये पाणेश्च होमसाधनता

[2]**होमपात्रमनादेशे द्रवद्रव्ये स्रुवः स्मृतः ।**
**पाणिरेवेतरस्मिंस्तु स्रुचा चात्र न हूयते ॥**

कृताधानस्य नानाविधहोमप्रसक्तौ प्रथमं तत्परिभाषामाह— होमपात्रमिति । द्रवद्रव्याहुतौ आहुत्याधारपात्रानुपदेशे मुनिभिः स्रुवः स्मृतः । द्रवेतराहुतौ पात्रान्तरानुपदेशे पाणिनैव होतव्यम् । उभयत्रैवानुपदेशे जुह्वा होमो न कार्य इति । जुहूरिति समाख्याबलात् जुह्वा अपि वैकल्पिकहोमसाधनत्वशङ्कानिरासार्थं ' स्रुचा चात्र न हूयते ' इत्युक्तम् । ¶ प्रकाश.

स्रुक्स्रुवयोः प्रकृतिकाष्ठं मानं च

[3]**खादिरो वाऽथ पार्णो वा द्विवितस्तिः स्रुवः स्मृतः ।**
**स्रुग्बाहुमात्रा विज्ञेया वृत्तस्तु प्रग्रहस्तयोः ॥**

गोभिलोक्तं स्रुवं स्रुचं च स्पष्टीकरोति— खादिरो वेति । खदिरमयः पलाशमयो वा वितस्तिद्वयमानः स्रुवः स्मृतः । जुहूर्बाहुप्रमाणा बोद्धव्या । प्रगृह्यतेऽस्मिन्निति व्युत्पत्त्या प्रग्रहो दण्डः । स स्रुवस्रुचोर्वर्तुलो बोद्धव्यः । $ प्रकाश.

[1]**स्रुवाग्रे घ्राणवत्खातं द्व्यङ्गुष्ठं परिमण्डलम् ।**
**जुह्वाः शरावत्खातं सनिर्वाहं षडङ्गुलम् ॥**

स्रुवाग्रे नासारन्ध्रवन्मध्यस्थितमर्यादं अङ्गुष्ठद्वयमितं वर्तुलं बिलं ज्ञेयम् । जुह्वास्तु खातं शरावाकृति निःशेषहवनसाधनतया निर्वाहपदवाच्यप्रणालीसहितं षडङ्गुलं जानीयात् । $ प्रकाश.

अनादेशे आज्यं द्रव्यम् , व्याहृतयो मन्त्रः , प्रजापतिर्देवता च

[2]**आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते ।**
**मन्त्रस्य देवतायाश्च प्रजापतिरिति स्थितिः ॥**

( १ ) अनादेशे अनभिधाने । मन्त्रस्य देवतायाश्च अनादेश इत्यनुषङ्गः । प्रजापतिर्देवता यतः ( ? मन्त्रः ) समस्ता व्याहृतयश्च प्राजापत्याः । ब्रक. ६९

---

§ संर. प्रकाशगतम् ।

¶ पप्र. प्रकाशवत् ।

( १ ) कास्मृ. १।८९ मिनु ( मनु ) ; चदा. १२२ ष्ठाङ्गुलि ( ष्ठाङ्गुल ) सदा ( बुधः ) ; कृर. ७६ मिनुयात् ( मीयते ) ; गभा. २७ ष्ठाङ्गुलि ( ष्ठाङ्गुल ) ; संत. ८५९ ; संर. ७१५.

( २ ) कास्मृ. १।१०८ चात्र न ( वाऽत्र तु ) ; संत. ८७१ द्रवद्रव्ये ( होमद्रव्यः ) पू. ; पप्र. १०६ पाणिरेवेतरस्मिंस्तु ( पाणिनैवेतरस्मिंश्च ) ; संदी. ४६ पाणिरेवे (पाणिनैवे).

( ३ ) कास्मृ. १।१०९ ; संत. ८७१ पार्णो वा ( पालाशो ) ; पप्र. १०६ मात्रा ( मात्री ).

$ संत. , पप्र. प्रकाशगतम् ।

( १ ) कास्मृ. १।११० उत्तरार्धे ( सर्वखातं सनिर्वाहं स्रुचश्चार्धषडङ्गुलम् ॥ ) ; संत. ८७१ द्व्यङ्गुष्ठं ( द्व्यङ्गुष्ठ ) जुह्वाः ( जुह्वास्थानं ) ; पप्र. १०६ द्व्यङ्गुष्ठं (द्व्यङ्गुष्ठ) जुह्वाः ( स्थानं ).

( २ ) कास्मृ. १।११३ द्रव्य ( हव्य ) मन्त्रस्य (तन्त्रश्च); ब्रक. ६८–६९ ; स्मृच. १६३ याश्च ( यास्तु ) ; चव्र. ४१ ( = ) ; चदा. १३९ ; कृर. ५९ ; गृर. १३१ ; गभा. २८ ; निप्र. १९० ; संत. ८७८ पू. : ९१० ; पप्र. १०५ ; संप्र. ९५१, ९७९ ; आन. ६८ ( = ) द्रव्य ( हव्य ) मन्त्रस्य ( मन्त्रश्च ) ; संग. ६० ; संदी. ४५.

(२) अनादेशे अविधाने । मन्त्रस्य देवतायाश्च अनादेशे प्रजापतिः देवता, प्राजापत्यो मन्त्रः समस्ता व्याहृतयश्च । यत्र तु देवतोक्ता मन्त्रश्च नास्ति तत्र मूलमन्त्रो वेदितव्यः । स चोक्तो गरुडपुराणे— 'प्रणवादिनमोन्तं च चतुर्थ्यन्तं च सत्तम । देवतायाः स्वकं नाम मूलमन्त्रः प्रकीर्तितः ॥'। चदा. १३९–१४०

(३) होमेषु होतव्यानुपदेशे आज्यं द्रव्यं होतव्यं विधीयते । 'आज्यं गव्यम्' इति पाठान्तरम् । मन्त्रदेवतयोश्चानुपदेशे प्रजापतिर्देवता, मन्त्रोऽपि प्रजापतिः, प्रजापतये स्वाहेत्यर्थः । अन्ये तु समस्तां व्याहृतिं प्राजापत्यं मन्त्रमाहुः । तत्र च मन्त्रे प्रजापतिशब्दप्रयोगात् मन्त्रमयी देवतेति व्यक्तम् । तथा योगियाज्ञवल्क्यः —'यस्य यस्य तु मन्त्रस्य उद्दिष्टा या तु देवता । तदाकारं भवेत्तस्य देवत्वं देवतोच्यते ॥'। प्रकाश.

(४) अनादेशे अविधाने, होमद्रव्यस्येति शेषः । मन्त्रस्य देवतायाश्च, अनादेशे इत्यनुषङ्गः । मन्त्रस्यानादेशे प्रजापतिदेवताको मन्त्रो ग्राह्यः । स च समस्ता व्याहृतयः । देवतायाश्च अविधाने प्रजापतिर्देवतेत्यर्थः । इति पारिजातप्रभृतयः । अत्र देवतान्तरादेशे मन्त्रानादेशे च प्राजापत्यमन्त्रविधाने मन्त्रवर्णविरोधः । अन्यदैवत्यमन्त्रादेशे देवतायाश्चानादेशे प्रजापतिदेवताविधानेऽपि मन्त्रवर्णविरोधः । न च 'ऐन्द्या गार्हपत्यमुपतिष्ठते' इतिविनियुक्त' कदाचनस्तरीरसि 'इत्येतन्मन्त्रगतेन्द्रपदस्य गार्हपत्ये इव लक्षणया मन्त्रवर्णानामविरोध इति वाच्यम्, तत्रान्यथानुपपद्यमानश्रुत्यनुरोधेन लक्षणाङ्गीकारेऽपि प्रकृतवाक्यस्य वक्ष्यमाणरीत्याऽन्यथोपपद्यमानार्थकत्वेन तदनुरोधेन मन्त्रे लक्षणानौचित्यात् । एकैकानादेशे दोषस्योक्तत्वान्मन्त्रस्य देवतायाश्चेत्यस्य मन्त्रदेवतयोरुभयोरनादेशे इत्येवार्थः । परिशिष्टप्रकाशेऽप्येवम् । तत्रायं विशेषः— प्रजापतिर्देवता, मन्त्रोऽपि प्रजापतिः प्रजापतये स्वाहेति । भट्टभाष्येऽप्येवमेव । समस्ता व्याहृतयः प्राजापत्यो मन्त्र इति तु कल्पतरुः । पप्र. १०५–१०६

समिद्गुणाः

[1]नाङ्गुष्ठादधिका ग्राह्या समित्स्थूलतया क्वचित् ।
न वियुक्ता त्वचा चैव न सकीटा न पाटिता ॥

'समिधमाधायानुपर्युक्षेत्' इतिसूत्रोक्तां समिधं परिमाणादिनियमेन व्यक्तीकरोति— नाङ्गुष्ठादिति । अङ्गुष्ठाधिकस्थूला क्वचिदपि कर्मणि समिन्न ग्रहीतव्या । तदूना तु स्थौल्येन ग्राह्यैव । शेषं सुगमम् । प्रकाश.

[2]प्रादेशान्नाधिका नोना न तथा स्याद्विशाखिका ।
न सपर्णा न निर्वीर्या होमेषु च विजानता ॥

---

(१) कास्मृ. १।११४ ; अप. १।२५ ग्राह्या (कार्या) ; ब्रक. ६७ अपवत् ; स्मृच. ३३ अपवत् ; चव्र. ७६ वियुक्ता त्वचा (विमुक्तत्वचा) शेषं अपवत् ; चदा. १३९ वियुक्ता त्वचा (वियुक्तार्जवा) शेषं अपवत् ; कृर. ६० स्थूलतया (स्थूलतमा) वियुक्ता त्वचा (विमुक्तत्वचा) ; गृर. १३२ स्थूलतया (स्थूलतरा) वियुक्ता (विमुक्ता) ; हभा. २१५ अपवत् ; पमा. ४५२ अपवत् ; मपा. २४ अपवत् ; प्रपा. २४२ अपवत् ; मर. ७ अपवत् ; निप्र. १९४ नाङ्गुष्ठा (अङ्गुष्ठा) वियुक्ता (विशीर्णा) ; संत. ८६० ग्राह्या (न्यूना) वियुक्ता त्वचा (निर्मुक्तत्वचा) सकीटा (सकीटी) ; पप्र. १०३ अपवत् ; संप्र. ४४९ स्थूलतया (स्थूलतरा) वियुक्ता त्वचा चैव (विमुक्ता त्वचश्चैव) ; चम. २५ अपवत् ; मुक्ता. ९८ अपवत् ; संम. ३० वियुक्ता (विहीना) शेषं अपवत् ; विपा. ४९९ अपवत् ; संग. ६८० ग्राह्या (कार्या) स्थूलतया (स्थूलतरा) वियुक्ता त्वचा (विमुक्तत्वचा) पाटिता (फाटिता) ; कृभ. ९५९ संमवत् ; संर. २६० अपवत्.

(२) कास्मृ. १।११५ नोना (न्यूना) तथा स्यात् (सशाखा) ; अप. १।२५ न तथा स्याद्वि (तथा न स्याद्द्वि) ; ब्रक. ६८ ; स्मृच. ३३ न तथा (तथा न) ; चव्र. ७६ नोना (न्यूना) विशाखिका (द्विशाखिका) उत्तरार्धे (न सपर्णा समित् कार्या होमकर्मसु जानता ॥) ; चदा. १३९ नोना (न्यूना) उत्तरार्धं चव्रवत् ; कृर. ६१ नोना

( १ ) विशाखिका विविधशाखायुक्ता ।

¶ ब्रक. ६८

( २ ) दैर्घ्येण समित् प्रादेशादधिका न्यूना वा, तथा विविधशाखायुक्ता, सपत्रा, घुणादिक्षुण्णतयाऽतिजीर्णा, होमविषये विजानता न ग्राह्या । अन्ये तु विशाखा विनिर्गतशाखा, तत्प्रभवा विशाखिकेत्याहुः । प्रकाश.

( ३ ) 'प्रादेशान्नाधिका नोना ' इति सूत्रोक्तसमित्कार्यविषये न प्रवर्तते, तत्र तत्र सूत्रोक्तस्य समिद्विषये प्रादेशमात्रत्वस्य वैयर्थ्यापत्तेः । शास्त्रान्तरोक्तसमिद्विषये तु विकल्पो वेति द्रष्टव्यम् । संर. २६०–२६१

समिद्दोषाः

**[1]विशीर्णा विदला ह्रस्वा वक्राः ससुषिराः कृशाः ।**
**दीर्घाः स्थूला घुणैर्जुष्टाः कर्मसिद्धिविनाशिकाः ॥**

---

¶ कृर., संत. ब्रकवत् ।

( न्यूना ) ; गृर. १३२ निर्वीर्या ( निर्बीजा ) ; हभा. २१५ नोना ( न्यूना ) विशा ( द्विशा ) ; पमा. ४५२ नोना न तथा ( न्यूना तथा न ) उत्तरार्धे ( नासपर्वा नातियामा होमेषु तु विजानता ॥ ) ; मपा. २४ न तथा स्याद्विशा ( तथा नैव द्विशा ) पू. ; प्रपा. ३८ ( न सपर्णा समित्कार्या होमकर्मणि जानता ॥ ) उत्त. : २४२ (प्रादेशान्नाधिकन्यूना तथा न स्याद्विशाखिका । नातिपर्वा नातियमा होमेषु तु विजानता ॥ ) ; मर. ७ मपावत्, पू. ; निप्र. १९४ विशाखिका ( द्विशाखिका ) च विजा ( तद्विजा ) ; संत. ८६१ सपर्णा ( सपत्रा ) ; पप्र. १०३ नोना ( ऽनूना ) ; संप्र. ४४९ नोना न तथा ( न्यूना तथा न ) ; चम. २५ स्मृचवत्, पू. ; मुक्ता. ९८ न सपर्णा ( नासपर्णा ) च विजा ( तु विजा ) शेषं संप्रवत् ; संम. ३० अपवत्, पू. ; विपा. ४९९ ( प्रादेशान्नाधिका न्यूना तथा न स्याद्द्विशाखिता । नातिपर्वा नातिपामा होमेषु तु विजानता ॥ ) ; संग. ६८० नोना ( न्यूना ) न सपर्णा न निर्वीर्या ( न पर्णा न विशीर्णाग्रा ) ; कृभ. ९५९ अपवत्, पू. ; संर. २६० न तथा स्याद्विशा ( तथा नैव द्विशा ).

( १ ) अप. १।२५ कृशाः ( तथा ) दीर्घाः स्थूला घुणैः ( न ग्राह्याश्च गुणैः ) ; स्मृच. ३३ ( विशीर्णा विदला ह्रस्वा वक्रा ससुषिरा कृशा । दीर्घा स्थूला घुणैर्जुष्टा कर्मसिद्धिविनाशिका ॥ ) ; पमा. ४५२ ( विशीर्णा विदला ह्रस्वा वक्रा ससुषिरा कृशा । दीर्घा स्थूला गुणैर्दुष्टा कर्मसिद्धिविनाशिका ॥ ) ; प्रपा. २४२ जुष्टा ( दुष्टा ) शेषं स्मृचवत् ; संप्र. ४४९ ; मुक्ता. ९८ जुष्टाः ( दुष्टाः ) ; संम. ३० उत्तरार्धे ( दीर्घा स्थूलाश्च समिधो वर्जनीयाः प्रयत्नतः ॥ ) ; विपा. ४९९ जुष्टाः ( दष्टाः ) ; कृभ. ९५९ वक्राः ससुषिराः कृशाः (वक्रा ससुषिरा कृशा ) उत्तरार्धे ( दीर्घा स्थूला च समिधो वर्जनीयाः प्रयत्नतः ॥ ).

इध्मस्य मानम्

**[1]प्रादेशद्वयमिध्मस्य प्रमाणं परिकीर्तितम् ।**
**एवंविधाः स्युरेवेह समिधः सर्वकर्मसु ॥**

' अथेध्मानुपकल्पयते खादिरान् पालाशान् वा ' इति सूत्रोक्तानिध्मान् स्पष्टीकरोति– प्रादेशद्वयमिति । पूर्वार्धं निगदव्याख्यातम् । यद्यपि सूत्रे ' अथेध्मान् ' इति दर्शपूर्णमासौ प्रकृत्योक्तम्, तथाऽपीह गृह्योक्तेषु सर्वकर्मसु प्रादेशद्वयमानाः इध्माख्याः समिधो भवेयुः । समिध इति संज्ञालिङ्गादेव इध्मानामपि अग्निसमिन्धनार्थत्वमित्युक्तं भवति । प्रकाश.

वामदेव्यगानस्य कर्मविशेषे स्थानम्

**[2]अहोमकेष्वपि भवेद्यथोक्तं चन्द्रदर्शने ।**
**वामदेव्यं गणेष्वन्ते बल्यन्ते वैश्वदेविके ॥**

होमरहितेष्वपि कर्मसु वामदेव्यं भवेत् । यथा चन्द्रदर्शने निष्क्रमणे उक्तम् । तथा समुदायेन क्रियमाणेषु कर्मसु गणान्ते वामदेव्यम्, न त्वेकैककर्मान्ते । पञ्चयज्ञान्तर्गतवैश्वदेविकहोमे च यद्वामदेव्यं तत् बल्यन्ते, न तु होमानन्तरमेव भवेदिति । प्रकाश.

---

( १ ) कास्मृ. १।११६ विधाः स्युः ( विधाभिः) समिधः ( समिद्भिः ) ; संत. ८६८ स्युरेवेह ( स्युरेवेध्म ) ; पप्र. १०५ पू. ; संप्र. ९३६ पू.

( २ ) कास्मृ. १।१२८.

हविष्येषु मुख्यकल्पानुकल्पाः माषादिनिषेधश्च

[1]हविष्येषु यवा मुख्यास्तदनु व्रीहयः स्मृताः।
माषकोद्रवगौरादीन् सर्वालाभेऽपि वर्जयेत् ॥

'अथ हविष्यस्यान्नस्याग्नौ जुहुयात्' इति सूत्रोक्तं हविष्यं स्पष्टयति— हविष्येष्विति । हविष्यमध्ये यवाः श्रेष्ठाः प्राथमिककल्पा इत्यर्थः । तदनन्तरं षष्टिकाख्याः स्मृताः, आनुकल्पिका इति यावत् । माषकोद्रवगौरसर्षपादीन् मुद्गकलायगोधूमाद्यभावेऽपि वर्जयेत् । एतेन मुद्गादयः आपत्कल्पिका इत्युक्तं भवति । आदिपदेन राजमाषादीनां ग्रहणम् । गोभिलभाष्यकृता 'कोरादीन्' इति पठितम्, व्याख्यातं च कोरो वर्वट इति । प्रकाश.

[2]अभावे व्रीहियवयोर्दध्ना वा पयसाऽपि वा।
तदभावे यवाग्वा वा जुहुयादुदकेन वा ॥

[3]व्रीहयः शालयो मुद्गा गोधूमाः सर्षपास्तिलाः।
यवाश्चौषधयः सप्त विपदं घ्नन्ति धारिताः ॥

संध्यावन्दनमधिकारिविशेषणम्

[4]अनर्हः कर्मणां विप्रः संध्याहीनो यतः स्मृतः ॥

संध्याहीनो ब्राह्मणः कर्मणां नित्यनैमित्तिकादीनामनधिकारीति मुनिभिः स्मृतः । प्रकाश.

(१) कास्मृ. १।१३१ गौरादीन् (गौरादि) लाभेऽपि (लामे वि); अप. १।१०२; स्मृच. १६३ पू.; मुक्ता. ३६१ पू.

(२) कास्मृ. ३।११४; स्मृच. १६३ दध्ना वा (दध्नाऽपि); मुक्ता. ३६१ दध्ना वा (दध्ना च).

(३) कास्मृ. ३।१०७; कुर. ७० विपदं (विपदो); संत. ९३८ कुरवत्.

(४) कास्मृ. २।१; व्रक. १७७; संदी. २ (संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ॥).

आचमनविधिः, दर्भपरिमाणम्, पवित्रविशेषः, वामहस्तस्य सोपग्रहत्वम्, दक्षिणहस्तस्य सपवित्रकत्वं च

[1]सव्ये पाणौ कुशान् कृत्वा कुर्यादाचमनक्रियाम्।
ह्रस्वाः प्रचरणीयाः स्युः कुशा दीर्घाश्च बर्हिषः॥

[2]दर्भाः पवित्रमित्युक्तमतः संध्यादिकर्मणि ।
सव्यः सोपग्रहः कार्यो दक्षिणः सपवित्रकः ॥

(१) प्रचरणीयाः, प्रचरणम् अनुष्ठानम्, तत्साधनीभूताः । तत्तदवस्थापन्नाश्चैतत्कार्य(? तत्तत्कार्य)-विशेषविनियुक्ताः । अतः संध्यादिकर्मसु दर्भमात्रं पवित्रम् । पृ. ६५

उपग्रहाः बहवः कुशाः । व्रक. १७७

(२) प्रवरणम् अनुष्ठानम्, तदर्हाः प्रवरणीयाः । चव्र. ४१

(३) ह्रस्वाः प्रकरणोक्तारत्निप्रमाणन्यूनपरिमाणा गोकर्णप्रमाणाः, वाक्यान्तरस्वरसात् । प्रचरणम् अनुष्ठानम्, तत्साधनीभूताः प्रचरणीयाः । दीर्घाः अरत्न्यधिकप्रमाणाः । 'दर्भाः पवित्रम्' इत्यादिवाक्यमनूद्य पारिजाते कल्पतरोरनुसारात् लिखितम्— यतो यज्ञादौ हरितादिविशेषविधिरतः संध्यादिकर्मस्वनुष्ठानमात्रविहितह्रस्वदर्भमात्रं शुचि । न तु पवित्रलक्षणमेतत्, अत इत्यनन्वयाद्वक्ष्यमाणलक्षणविरोधाच्च । तथाहि— 'अनन्त-

(१) कास्मृ. २।२ प्रचरणीयाः (प्रचरणाय) दीर्घाश्च (दीर्घास्तु); व्रक. ६५ दीर्घाश्च (दीर्घास्तु): १७७ पू.; चव्र. ४० प्रचरणीयाः (प्रवरणीयाः) उत्त.; चदा. १०६ चव्रवत्; कुर. ६५ उत्त.; मर. ३४ व्रकवत्; निप्र. ३३ उत्त.: ३८ पू.; वीमि. १।१८ पू.; पप्र. ९३–९४; विपा १६२ (भागः २) कुर्यादाचमनक्रियाम् (दक्षिणे सपवित्रकः) पू.

(२) कास्मृ. २।३; व्रक. ६५ कर्मणि (कर्मसु): १७७ उत्त.; कुर. ६५ पू.; मर. ३४; निप्र. ३३ व्रकवत्, पू.: ३४ उत्त.: ३८ उत्त.: ३९ पू.; पप्र. ९४ व्रकवत्.

गर्भिणं साग्रं कौशं द्विदलमेव च। प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् ॥ एतदेव हि पिञ्जल्या लक्षणं समुदाहृतम्। आज्यस्योत्पवनार्थं यत्तदप्येतावदेव तु ॥ एतत्प्रमाणमेवैके कौशीमेवाभ्रमञ्जरीम्। शुष्कां वा शीर्णकुसुमां पिञ्जलीं परिचक्षते ॥' इति। तदियं कल्पतरुपारिजातयोर्व्यवस्था। श्रीदत्तोपाध्यायैस्तु– संध्यादिकर्मणि 'कुशाः पवित्रम्' इत्यनेन कुशत्रयस्यापि पवित्रत्वेन प्रतिपादनात् 'अनन्तर्गर्भिणम्' इत्यादिना सर्वकर्मणि कौशद्विदलस्याप्युपात्तत्वात् संध्यादिकर्मणि कुशत्रयं कौशं द्विदलं पवित्रं च व्यवस्थापितं लिखितं च संध्याप्रयोगे। एतच्च कल्पतरुपारिजातविरोधात् 'अतः' इत्यसंगतेश्च नाऽऽदेयम्। न चात्रापि इतिपदानुपपत्तिः, 'इत्यतः' इत्यन्वयस्य विवक्षितत्वात्।

कृर. ६५–६६

(४) बर्हिषि वेद्यास्तरणादिकुशे दीर्घत्वविधिः, तदन्यत्र प्रचरणेऽनुष्ठाने ह्रस्वाः। यतः कर्मविशेषे दर्भविशेषा हरितादयो विहिताः, अतः संध्यादिकर्मसु दर्भमात्रं पवित्रं च यथोक्तलक्षणं संध्याप्रकरणे उक्तम्। तत्र 'सव्यः सोपग्रहः कार्यो दक्षिणः सपवित्रकः।' इत्यभिधानात् तथाविधकुशमात्रं ग्राह्यमित्यर्थः। आदिपदेन यज्ञपाकयज्ञपित्र्यव्यतिरिक्तानि कर्माणि। ह्रस्वत्वं तु संध्यादावपि, बर्हिःकार्यव्यतिरिक्तानुष्ठानरूपत्वात्। ह्रस्वत्वमरत्निन्यूनत्वम्। दीर्घत्वं तदधिकत्वम्। 'गोकर्णदीर्घहरिताः श्राद्धे साग्राः समूलकाः।' इति वायुपुराणात् श्राद्धे गोकर्णमात्रत्वं ह्रस्वत्वम्।

पृ. ३३–३४

'सव्ये पाणौ...' इदं च संध्योपक्रमेऽभिधानात् संध्याङ्गमेव। तत्रायमर्थः– अन्यत्र सव्यपाणावपि पवित्रकम्, इह तु संध्याकर्मणि सव्यपाणौ बहवः कुशाः करणीयाः। आचमनक्रियामिति। संध्योपक्रमाचमनानुवादादाचमनादिकां संध्याक्रियामित्यर्थः। तेन दक्षिणकरे कुशनिवृत्तिः। तस्यैव विवरणम्– 'सव्यः सोपग्रहः' इति। उप समीपे गृह्यन्ते मार्जनाद्युपयोगिनः कुशा इत्युपग्रहः। तेन बहुकुशधारणं दृष्टार्थमित्युक्तम्। 'दक्षिणः सपवित्रकः' इति तु ग्रन्थियुक्तपवित्रनिवृत्त्यर्थं पुनर्वचनम्। अत्र यद्यपि ब्रह्मयज्ञजपहोमेषु ब्रह्मग्रन्थियुक्तपवित्रस्य विशेषविधिस्तथाऽपि 'दर्भाः पवित्रमित्युक्तमतः संध्यादिकर्मणि।' इत्यत्र आदिशब्दोपादानादादिशब्दस्य च प्रकारान्तरेण बुद्धिस्थवाचकत्वात् बुद्धिस्थस्य च सर्वनामवद्विशेषात्मनोपस्थितेः वामहस्तवद्दर्भाः दक्षिणहस्तपवित्रं चाऽऽदिशब्दोक्तेषु जपहोमस्वाध्यायादिषु विहितमिति ब्रह्मग्रन्थियुक्तपवित्रद्वयं पवित्रोपग्रहरूपं च तुल्यबलत्वात् वैकल्पिकमेव। तेन ब्रह्मग्रन्थिं विनाऽपि पवित्रोपग्रहाभ्यां ब्रह्मयज्ञाद्यवैगुण्यम्। केवलं ब्रह्मयज्ञजपहोमव्यतिरिक्ते न ब्रह्मग्रन्थिप्रसङ्गः। 'अशून्यं तु करं कुर्यात् सुवर्णरजतैः कुशैः।' इति वचनात् करद्वयकुशधारणस्य कर्माङ्गत्वम्। आचमनेऽपि 'वामहस्तस्थिते दर्भे दक्षिणेनोदकं पिबेत्। रक्तपानसमं ज्ञेयं प्रायश्चित्तीयते द्विजः ॥' इति व्यासवाक्यं केवलवामहस्तगतकुशनिषेधकम्, 'उभयत्र स्थिते दर्भे समाचामति यो द्विजः। सोमपानसमं ज्ञेयं भुङ्क्ते यज्ञफलं तथा ॥' इति तस्यैव वचनात्। समाचाराच्च ग्रन्थिरहितकुशधारणं मध्यमानामिकयोः। यत्तु कात्यायनः (काश्रौ. १।२४९–२५१)– साज्ये आज्यैकसाध्ये कर्मणि वेदोपग्रहः, अन्यत्र स्फ्योपग्रहः, कुशैरसत्सु इति। असत्सु वेदस्फ्येषु कुशोपग्रहविधिः, स श्रौताग्निहोत्रादिस्मार्तस्थालीपाकादिविषयः। इदं पुरुषार्थमपि कुशधारणम्, 'कुशहस्तः सदा तिष्ठेद् ब्राह्मणो दम्भवर्जितः।' इति वचनात्। तथा मनुः धारयेदित्यनुवृत्तौ– 'यज्ञोपवीतं वेदं च शुभे रौक्मे च कुण्डले।'। अत्र वेदः कुशमुष्टिः। अत्र ब्रह्मयज्ञादाविन्द्रियोपस्पर्शने दर्भैरित्याद्युपयोगार्थम्। तेन वामहस्ते कुशमुष्टिः पुरुषार्थधारणे।

निप्र. ३८–४०

(५) संध्याप्रवृत्तः प्रथमं वामहस्ते कुशान् कृत्वा आचमनानुष्ठानं कुर्यात्। यतो ह्रस्वाः कुशाः पार्वणपञ्चयज्ञादिकर्मानुष्ठानार्हाः, दीर्घाश्च स्तरणार्थं बर्हिषो भवन्ति, दर्भा एव 'अनन्तर्गर्भिणम्' इत्यादिलक्षणं पवित्रमित्युक्तम्, अतस्तदवस्थापन्नानां सर्वकर्मसूपयोगात् संध्यादिकर्मस्वपि वामः करो बहुतरकुशसहितः, दक्षिणश्च पाणिः पवित्रकुशसहितः कार्य इति। अन्ये तु–

यतः कुशविशेषाणां तत्तत्कर्मसु विनियोगः, न संध्यादिकर्मसु, अतः संध्यादिकर्मस्ववस्थाविशेषशून्याः कुशाः पवित्रमित्युक्तमिति व्याचक्षते । प्रकाश.

(६) ह्रस्वाः पिण्डस्तरणार्थोक्तरत्निप्रमाणन्यूनाः गोकर्णादिप्रमाणाः । प्रचरणीयाः, प्रचरणमनुष्ठानम्, तदर्हाः । दीर्घाः रत्नितो दीर्घाः । यज्ञादौ स्तरणाद्यर्था बर्हिषः । दर्भाः पवित्रमित्यादि । यतो यज्ञादावेव हरितादिवर्णविशेषविधिरतो यज्ञाद्यतिरिक्ते वर्णविशेषविध्यभावादनुष्ठानमात्रविहितं ह्रस्वदर्भमात्रं पवित्रं शुचीत्युक्तं मुनिभिरित्यर्थः । न तु पवित्रलक्षणमेतत्, वक्ष्यमाणपवित्रलक्षणविरोधात्, अत इत्यनन्वयाच्चेति कल्पतरुपारिजाताद्यनुसारिणी व्याख्या ।

छन्दोगपरिशिष्टटीकायां तु यतो ह्रस्वाः कुशाः पार्वणपञ्चमहायज्ञादिकर्मानुष्ठानार्हाः, दीर्घाः स्तरणार्थे बर्हिषो भवन्ति, दर्भा एव 'अनन्तर्गर्भिणम्' इत्यादिलक्षणं पवित्रमित्युक्तम्, अतस्तत्तदवस्थापन्नानां तत्तत्कर्मसूपयोगेन सर्वकर्मसूपयोगात् संध्यादिकर्मसु वामः करो बहुतरकुशसहितः, दक्षिणश्च कुशपत्रद्वयात्मकपवित्रसहितः कार्य इति व्याख्यातम् ।

आचारादर्शे तु यतः प्रचरणादौ ह्रस्वादिविशेषविधिः अतः संध्यादौ तादृशविशेषाभावाद्दर्भमात्रमेवाङ्गमिति व्याख्यातम् । अत्र ह्रस्वाः प्रचरणीया इत्यस्य 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' इत्यादिप्रचरतिनोदनानोदितकर्मविशेषार्हा इत्यर्थोऽभिप्रेतः । 'सव्यः सोपग्रहः' इति । उपग्रहो बहवः कुशा इति कल्पतरुः । ते च 'सव्ये पाणौ कुशान् कृत्वा' इतिपूर्ववचनविहितकुशसमीपे धार्याः, उप समीपे गृह्यते इति योगार्थबोधात् । पप्र. ९४–९५

प्राणायामकल्पः

[1]**भूराद्यास्तिस्र एवैता महाव्याहृतयोऽव्ययाः ।**
**महर्जनस्तपः सत्यं गायत्री च शिरस्तथा ॥**

[1]**आपो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः स्वरिति शिरः । प्रतिप्रतीकं प्रणवमुच्चारयेदन्ते च शिरसः ॥**

[2]**एता एतां सहानेन तथैभिर्दशभिः सह ।**
**त्रिर्जपेदायतप्राणः प्राणायामः स उच्यते ॥**

(१) एता व्याहृतीः । एतां गायत्रीम् । एतेन शिरसा । एभिः प्रणवैः दशभिः सह इत्यर्थः । ब्रक. १७७

(२) अनन्तरं प्राणायाममाह— भूराद्यास्तिस्र इति । भूर्भुवः स्वरित्येता एव मार्जनोक्ताः अव्ययमुक्तिफलत्वादव्ययाः महाव्याहृतयस्तिस्रः, महरादिचतुष्टयं च, तत्सवितुरिति गायत्री च, तथा आपो ज्योतिरित्यादि शिरः । एतस्मिन् समुदाये प्रत्यवयवमादौ ओंकारमुच्चारयेत् । ततो भूरादिव्याहृतिसप्तकादौ सप्त प्रणवाः, गायत्र्यादौ चैकं( १ कः ), शिरसश्चाऽऽदावन्ते च द्वयमित्येवं दश प्रणवाः । एताः सप्त व्याहृतीः एतां गायत्रीम् अनेन शिरसा सह तथैभिर्दशभिः प्रणवैः सह निरुद्धप्राणस्त्रिर्जपेत् । स प्राणायाम उच्यते । ‡ प्रकाश.

नमोन्तेन नाममन्त्रेण देवेभ्यः स्वधाकारान्तेन पितृभ्यो हन्तकारान्तेन मनुष्येभ्यो बलिदानं तत्र मतभेदश्च

[3]**अमुष्मै नम इत्येवं बलिदानं विधीयते ।**
**बलिदानप्रदानार्थं नमस्कारः कृतो यतः ॥**
[4]**स्वाहाकारवषट्कारनमस्कारा दिवौकसाम् ।**
**स्वधाकारः पितॄणां तु हन्तकारो नृणां मतः ॥**

---

(१) कास्मृ. २१६ ; ब्रक. १७७ ; दीक. १।२३ ; संदी. १२.

‡ संदी. प्रकाशगतम् ।

(१) कास्मृ. २१७ (च० ) ; ब्रक. १७७ ; दीक. १।२३ (अन्ते च शिरसः ० ) ; संदी. १२.

(२) कास्मृ. २१८–९ एतां (एनां) ; ब्रक. १७७ सहानेन (सहैतेन) ; दीक. १।२३ ; संदी. १२.

(३) कास्मृ. २१३५ अमुष्मै (अमुष्यै) प्रदानार्थं (प्रमाणार्थं) ; संप्र. ८९६.

(४) कास्मृ. २१३६ मतः (कृतः) ; स्मृच. २१० नृणां मतः (तथा नृणाम्) ; संप्र. ८९६ पू. ; बाल.

स्वाहाकारादयस्त्रयो देवकर्मार्थतया देवसंबन्धिनः। अतोऽपि नमस्कारेण देवबलिदानं युक्तम्। स्वधाकार-हन्तकारौ तु यस्मात् पितृमनुष्यार्थौ। प्रकाश.

**[1]स्वधाकारेण निर्वपेत्पित्र्यं बलिमतः सदा।**
**तमप्येके नमस्कारैः कुर्वते नेति गौतमः॥**

निर्वपेत् दद्यात्। शेषं निगदव्याख्यातम्। आद्यन्तयोः स्वधाभ्यनुज्ञानात् तमप्येके नमस्कारैरिति पूर्वपक्षः, न तु विकल्पार्थं इति। प्रकाश.

काम्यसामान्यहोमबलिभ्यां पूर्वं नित्य-विशेषहोमबल्योः कर्तव्यता

**[2]न स्यातां काम्यसामान्ये जुहोतिबलिकर्मणी।**
**पूर्वं नित्यविशेषोक्तजुहोतिबलिकर्मणोः॥**

द्विविधं बलिकर्म, काम्यम् आशास्यादि, नित्यं च पार्थिवादिचतुर्दशकम्। तथा होमोऽपि नित्यः प्राजापत्यः स्विष्टकृदादिरूपः, काम्यः काम्याधिकारे श्रुतावुक्तः— "सदा भोजनस्योपनीतस्याग्रमग्नौ जुहुयात् 'अग्ने विवस्वदुषसः' इति पूर्वेण, बलिं चोत्तरेण कुर्यात्, बहुपशुधनधान्यो भवति" इति। तथा विशेषोपदिष्टे गृह्योक्ते शाखिविशेषनियते होमबलिकर्मणी, संहितापुराणोक्ते च सामान्यधर्मरूपे। तथा च— 'अग्नेः सोमस्य चैवाऽऽदौ तयोश्चैव समस्तयोः।' इत्यादि। विष्णुपुराणं च— 'देवा मनुष्याः पशवो वयांसि' इत्यादि। तत्र काम्यसामान्ये विहिते होमबलिकर्मणी न नित्यविशेषविहितयोर्होमबलिकर्मणोः पूर्वं कर्तव्ये। प्रकाश.

नित्यविशेषोत्तरं काम्यसामान्ययोर्यथेच्छमनुष्ठानम्, कर्ममध्ये कर्मान्तरस्याननुष्ठानम्

**[3]काममन्ते भावयेत न तु मध्ये कदाचन।**
**नैकस्मिन् कर्मणि तते कर्मान्यत्तायते यतः॥**

(१) नित्यविशेषविहितयोरन्ते सामान्यकाम्ये कर्तव्ये, मध्ये तु न कदाचन कर्तव्ये। अत्र हेतुमाह— नैकस्मिन् कर्मणीति। निगदव्याख्यातम्। अत एव 'सदा भोजनस्योपनीतस्य' इति श्रुत्युक्तकाम्यहोमे 'बलिं चोत्तरेण' इत्यन्त एवोक्तम्। काम्य( ? म )मित्यनेन सामान्यकाम्ययोर्नाऽऽवश्यकता (काम्यस्य), किंतु करणेऽभ्युदयोऽकरणे प्रत्यवायाभाव इति गम्यते। अत एव गृह्यान्तरम्— 'स्वयमेव हरेत्काम्यान् बलीन् यावद्गृहे वसेत्। आतुरत्वे प्रवासे च न तद्गृहबलिर्भवेत्॥' इति। प्रकाश.

[ यद्यपि मातृकायां सामान्यकाम्ययोर्नाऽऽवश्यकतेत्येव पाठो दृश्यते, तथाऽपि —अत एव गृह्यान्तरम् 'स्वयमेव हरेत् काम्यान् बलीन् यावद्गृहे वसेत्।' इति स्वोक्तार्थोपष्टम्भार्थं काम्यमात्रविषयवचनोपन्यासात् काम्यपदेन¶ काम्यस्येव सामान्यस्यानावश्यकतागमकताभावाच्च काम्यस्येति पाठ एवात्र समुचितः प्रतिभाति।

प्रभा. (अनन्तकृष्णशास्त्रिकृता) ]

(२) एवमेकस्मिन्कर्मणि प्रवृत्ते कर्मान्तरं न प्रवर्तयेत्, 'नैकस्मिन् कर्मणि तते कर्मान्यत्तायते यतः।' इति छन्दोगपरिशिष्टवचनात्। अत्र वचने नैरन्तर्यप्राशुभाव-

---

१।२५० पृ. ५६८ वषट्कारनमस्कारा (नमस्कारवषट्कारा) मतः (तथा).

(१) कास्मृ. २।३७.

(२) कास्मृ. २।४५.

(३) कास्मृ. २।४६; पप्र. ७४ उत्त.

¶ 'काममन्ते' इत्यत्र 'काम्यमन्ते' इति प्रभाभिप्रेतः पाठश्चिन्त्यः, काम्यस्येव सामान्यस्याप्यन्ते भावनीयत्वस्यात्र प्रतिपिपादयिषितत्वात्, काम्यपदपाठे तदसिद्धेः, प्रभाकृताऽपि पूर्वं तर्कालङ्कारमतखण्डनव्याजेनास्यार्थस्य बहु पराक्रम्य साधितत्वाच्च। प्रकाशे 'काम्यमित्यनेन' इति मुद्रणात्, प्रभायां 'काम्यमित्यनेनेति' इति प्रतीकग्रहणात्, 'काम्यपदेन' इति प्रयोगाच्च मूले काम्यपदपाठः प्रभाकृताऽभिप्रेयते इत्यवगम्यते। कामपदपाठे सामान्यस्यापि प्रसक्तमैच्छिकत्वं नित्यरूपसामान्ये तदसंभवात् काम्यमात्रे पर्यवस्यति। अत एव प्रकाशे 'सामान्यकाम्ययोर्नाऽऽवश्यकता' इत्यत्र 'काम्यस्य नाऽऽवश्यकता' इति प्रभासंभावितः पाठो युक्त एव। किंच, 'काम्यपदेन' इति तृतीयान्वयश्चिन्त्यः। 'काम्यपदस्य' इत्येवं षष्ठ्या भाव्यम्।

योर्विधितात्पर्यविषययोरपचारात्पूर्वकर्मणो वैगुण्यप्रसङ्गो मूलम्। नैरन्तर्यं च यथाविहितं पौर्वापर्यम्। प्राशुभावः नाम अविलम्बः। अत्र पूर्वस्यैव कर्मणो वैगुण्यम्, न तूत्तरस्य, तस्य नैरन्तर्याद्यलोपात्। अन्यथा एतद्वचनस्यादृष्टार्थतापत्तेः।

अत एव प्रारब्धदर्शपूर्णमासादेः पक्षादिसमाप्यत्वेऽपि अन्तरा क्रियमाणं नित्यं काम्यं वा न दोषमावहति। एवं प्रारब्धलक्षादिजपहोमादौ जपहोमादिनिवृत्तिकाले कर्मान्तरमविरुद्धम्। तथा प्रतायमानेऽप्युपवासे चरुपाकादौ वा जपादिकमदुष्टम्। एवं हविराद्यपचारे हविरन्तराद्युपादानं यावत्क्रियते तावत्कालसमाप्यं कर्मान्तरमविरुद्धमित्यादि। तेषु नैरन्तर्याद्यनपायात्। यत्र तु प्रतायमाने कर्मणि नित्यं नैमित्तिकं वा कर्मान्तरमेतत्कर्मसमाप्त्युत्तरानवस्थायि मुख्यकालकमापतति तत्र नैरन्तर्यादिकं बाधित्वाऽपि मध्ये तत्कर्म कर्तव्यमेव, नैरन्तर्यादेः कर्मधर्मत्वेन तदपेक्षया कर्मलोपानौचित्यात्। यथा सांतपनीयेष्टेर्दैवात्सायंकालव्यापित्वे मध्ये सायंहोमः क्रियत एवेति पञ्चमे स्थितम्। प्रारब्धश्रौतकर्मक्रमापेक्षया स्मार्तस्यापि कर्मणो बलवत्त्वम्। श्रुतिस्मृतिरूपप्रमाणद्वयविचारे स्मृतेर्दुर्बलत्वेऽपि कर्मधर्मापेक्षया कर्मणो बलवत्त्वेन स्मृतिप्रमेयस्यापि कर्मणो बलवत्त्वादिति स्थितं शिष्टाकोपे।

एवं यथाविधि साङ्गप्रधानं कार्यम्, न न्यूनं नाधिकमिति शास्त्रव्यवस्थितिः। यतो न्यूनत्वे कर्महानिः, आधिक्ये कर्मधर्माणां प्राशुभावनैरन्तर्यसंख्यापरिमाणादीनां हानिः। एवं च यद्यपि तेषु कर्तव्येषु कुत्रचित्कृताकृतत्वसंदेहे सति करणे आधिक्यसंदेहः अकरणे च न्यूनत्वसंदेहः तथाऽपि न्यूनत्वे कर्महानिः आधिक्ये कर्मधर्महानिरिति कर्मधर्महानिं सोढ्वा कुर्वन्त्येव शिष्टा इति।

पप्र, ७४–७५

पूर्णपात्रशब्दार्थः

[१]यावता बहुभोक्तुश्च तृप्तिः पूर्णेन जायते।
नावराध्यं ततः कुर्यात्पूर्णपात्रमिति स्थितिः॥

यावता अन्नादिना पूर्णेन पात्रेण कंसादिना बहुभोक्तुस्तृप्तिर्भवेत्, न ततो हीनं पूर्णपात्रं कुर्यात् इति शास्त्रस्य स्थितिः, ततोऽधिकं तु न प्रतिषिध्यते।

¶ प्रकाश.

चरुपरिमाणम्, कुञ्चिपुष्कलपूर्णपात्रमानानि

[२]चतुर्मुष्टिश्चरुः कार्यश्चतुराधिक एव वा।
मुष्टयोऽष्टौ भवेत्कुञ्चिः कुञ्चयोऽष्टौ तु पुष्कलम्।
पुष्कलानि च चत्वारि पूर्णपात्रं विधीयते॥

दक्षिणादानस्य प्रथमं संप्रदानम्

[३]कुलर्त्विजमधीयानं संनिकृष्टं तथा गुरुम्।
नातिक्रामेत्सदा दित्सन् य इच्छेदात्मनो हितम्॥

तमाह– कुलद्विजमिति। संनिकृष्टमधीयानमिति द्वयं प्रत्येकं द्वाभ्यां संबध्यते। सदेति। कर्माङ्गदक्षिणां विनाऽन्यस्मिन्नपि दाने दातुमिच्छन्नन् तौ लङ्घयेदिति।

प्रकाश.

संप्रदानान्तराय दक्षिणादानस्य मुख्यसंप्रदानानुज्ञापूर्वकत्वम्

[४]अहमस्मै ददानीति एवमाभाष्य दीयते।
नैतावपृष्ट्वा ददतः पात्रेऽपि फलमस्ति हि॥

---

¶ संत. प्रकाशगतम्।

(१) कास्मृ. २।६१–६२ भोक्तुश्च (भोक्तुस्तु) जायते (विद्यते) ध्यं ततः (ध्यंमतः); निप्र. २०६ यावता बहु (यावत्तावत्तु) पूर्णेन (अन्नेन) नावराध्यं ततः (नापराधंमतः); संत. ८८१; संग. ४४ कास्मृवत्.

(२) आनन्दाश्रममुद्रितस्मृतिपुस्तके नायं सार्धश्लोकः समुपलभ्यते, किंतु कलकत्तामुद्रितसटीककर्मप्रदीपुस्तके संगृहीतत्वादत्र स्वीकृतः।

(३) कास्मृ. २।६३–६४; संदी. ४५ तथा गुरुम् (गुरुं तथा). कलकत्तामुद्रितकर्मप्रदीपपुस्तके 'कुलर्त्विजं' इत्यत्र 'कुलद्विजं', 'य इच्छेत्' इत्यत्र 'यदीच्छेत्' इति पाठः।

(४) कास्मृ. २।६४–६५ ददानीति (ददामीति); उत. १४४ पू.; संत. ८९०; संदी. ४६.

यदा तु गुरुकुलाद्द्विजः (? गुरुः कुलद्विजो वा) संनिकृष्टोऽप्यमुष्मै प्रतिग्रहवैमुख्यादिना न दीयते तदा अहमस्मै ददानीति ततोऽप्यनुज्ञां गृहीत्वाऽन्यस्मै दद्यात्, नान्यथा । शिष्टं सुगमम् । प्रकाश.

संप्रदानान्तराय दानस्य दूरस्थमुख्यसंप्रदानमानसदान-पूर्वकत्वम्

[1]**दूरस्थाभ्यामपि द्वाभ्यां प्रदाय मनसा धनम् ।**
**इतरेभ्यस्ततो दद्यादेष दानविधिः स्मृतः ॥**

यदाऽपि तौ दूरस्थौ तदाऽपि तौ मनसोद्दिश्य सामान्यनामगोत्राभ्यां ताभ्यां धनमुत्सृज्यान्येभ्यो दद्यात् । एष दानविधिः स्मृतः । 'दानविधिः परः' इति पाठे परः श्रेष्ठ इत्यर्थः । 'कालविधिः परः' इति पाठे काले अयनादौ यो दानविधिः सोऽप्येवंविधः श्रेष्ठ इत्यर्थः । प्रकाश.

मुख्यसंप्रदानातिक्रमे दोषः

[2]**संनिकृष्टमधीयानं ब्राह्मणं यो व्यतिक्रमेत् ।**
**यद्ददाति तमुल्लङ्घ्य तस्य स्तेयेन लिप्यते ॥**

अन्येभ्योऽपि दाने संनिहितमधीयानं यो लङ्घयेत् यत् द्रव्यं तमुल्लङ्घ्य ददाति तस्य स्तेयेन लिप्यते । तद्द्रव्य-स्तेयपापं प्राप्नोति इत्यर्थः । प्रकाश.

मुख्यसंप्रदानत्वघटकसंनिकृष्टत्वापवादः

[3]**यस्य त्वेकगृहे मूर्खो दूरे चाऽऽर्यगुणान्वितः ।**
**गुणान्विताय दातव्यं नास्ति मूर्खे व्यतिक्रमः ॥**

यस्य पुनः संनिधौ मूर्खोऽस्ति, पूज्यगुणैरध्ययनव्रता-दिभिर्वाऽन्वितो दूरस्थः, तस्मै गुणान्विताय दूरस्थाय दातव्यम्, न तु व्यतिक्रमदोषभयात् संनिकृष्टाय मूर्खाय, यस्मान्मूर्खे व्यतिक्रमदोषो नास्ति इति । प्रकाश.

[1]**ब्राह्मणातिक्रमो नास्ति विप्रे वेदविवर्जिते ।**
**ज्वलन्तमग्निमुत्सृज्य न हि भस्मनि हूयते ॥**

अतो वेदविवर्जितब्राह्मणे व्यतिक्रमदोषो नास्ति, भस्मसदृशत्वात् तस्य, अर्हस्य ज्वलदग्निसदृशत्वात् । प्रकाश.

आज्यस्थाल्याः प्रकृतिद्रव्यं मानं गुणाश्च

[2]**आज्यस्थाली च कर्तव्या तैजसद्रव्यसंभवा ।**
**माहेयी वाऽपि कर्तव्या नित्यं सर्वाग्निकर्मसु ॥**
[3]**आज्यस्थाल्याः प्रमाणं तु यथाकामं तु कारयेत् ।**
**सुदृढामव्रणां भद्रां स्थालीमादाय मङ्गलाम् ॥**

(१) सर्वेषु अग्न्याधानादिकर्मरूपेषु होतव्याज्य-स्थापनार्थं (यः पिचरः ?) आज्यस्थाली (घृतावचरः ?) सुवर्णादिमयी कर्तव्या मृन्मयी वा । नित्यं सर्वदा, न त्वसंभवे शरावादिः । चरुहोमादिष्वपि व्याहृतिहोमोपस्तर-णाभिघारणाद्यर्थमाज्योपयोगात् सर्वाग्निकर्मस्वित्युक्तम् । सुदृढां पाकक्षमाम्, भद्रां सौम्यदर्शनाम्, मङ्गलां हस्तघटिताम्, कुलालचक्रनिष्पन्नाया आसुरत्वेनामङ्गल-त्वात् । तथा च वक्ष्यति— 'कुलालचक्रनिष्पन्नमासुरं मृन्मयं भवेत् ।' इति । एवंभूतां स्थालीमुपादाय तस्या आज्य-स्थाल्या यथेष्टं परिमाणं कुर्यादिति । प्रकाश.

(२) तैजसं ताम्रादि । अव्रणाम् अक्षताम् । मङ्गलां कालिमादिरहिताम् । एतादृशीं स्थालीमादाय, कर्म कुर्यादिति शेषः । † पम्र. १०८

(१) कास्मृ. २।६५–६६ ; संदी. ४६.

(२) कास्मृ. २।६६–६७ ; संदी. ४६ तस्य स्तेयेन लिप्यते (ततः स्तेयेन युज्यते). 'तस्य स्तेयेन लिप्यते' इत्यत्र 'तत्स्तेयेन स युज्यते' इति पाठः आनन्दाश्रममुद्रित-स्मृतौ समुपलभ्यते ।

(३) कास्मृ. २।६७–६८ ; संदी. ४६ दूरे चाऽऽर्य (दूरस्थश्च). आनन्दाश्रमस्मृतिपुस्तके 'यस्य चास्ति गृहे मूर्खो दूरस्थश्च गुणान्वितः ।' इति पूर्वार्धपाठः ।

† शेषं प्रकाशगतम् ।

(१) कास्मृ. २।६८–६९ ; संदी. ४६.

(२) कास्मृ. २।६९–७० उत्तरार्धे (महीमयी वा कर्तव्या सर्वास्वाज्याहुतीषु च ॥) ; संत. ८६४ ; पम्र. १०८ ; संग. ३३ च कर्तव्या (प्रकर्तव्या) शेषं कास्मृवत् ; संर. २० संगवत् ; संदी. ३१ संगवत्.

(३) कास्मृ. २।७०–७१ स्थालीमादाय मङ्गलाम् (आज्यस्थालीं प्रचक्षते) ; पम्र. १०८ ; संग. ३३ कास्मृ-वत् ; संर. २० कास्मृवत्.

( ३ ) आज्यस्थालीलक्षणं छन्दोगपरिशिष्टे— आज्यस्थालीति । ‘ आज्यस्थाली मृन्मयी ’ इति मातृदत्तवैजयन्तीकारौ । कांस्यमयीति केचित् । सा चार्थसिद्धपरिमाणा, विशेषानुक्तेः, ‘ यथाकामं तु कारयेत् ’ इत्यनन्तरोदाहृतछन्दोगपरिशिष्टवचनाच्च । मृन्मयीतिपक्षे हस्तघटितैव, न कुलालचक्रनिर्मिता, ‘ अचक्रावर्ताम् ’ इत्यग्निहोत्रहोमप्रकरणे सूत्रकारेणोक्तत्वात्, ‘ कुलालचक्रनिष्पन्नमासुरं मृन्मयं स्मृतम् । तदेव हस्तघटितं स्थाल्यादि दैविकं भवेत् ॥ ’ इति कर्मप्रदीपवचनाच्च । चक्रेणाऽऽवर्तो भ्रमो यस्याः सा चक्रावर्ता, न चक्रावर्ता अचक्रावर्ता, ताम् । इदमग्निहोत्रस्थालीविशेषणम् । आज्याहुतीनामतिबाहुल्येनैकाज्यस्थाल्यसंभवेऽनेका महत्य आज्यस्थाल्य उपयोक्तव्याः । प्रदर्शितं चास्याचार्येण— ‘ असंभवाद्वा यथाऽश्वमेधे पशुकर्मसु ’ इत्यनेन सूत्रेण । अन्यो निर्वापो वा कार्यः । आज्यस्थालीगताज्यस्कन्दनेऽप्येषः । प्रायौगिकास्तु संस्कृते स्थालीगत आज्य एव लौकिकमाज्यमानीय तेन कर्म कुर्वन्ति । संर. २०–२१

चरुस्थाल्या मानगुणप्रकृतिद्रव्याणि

**[१]तिर्यगूर्ध्वं समिन्मात्रा दृढा नातिबृहन्मुखी ।**
**मृन्मय्यौदुम्बरी वाऽपि चरुस्थाली प्रशस्यते ॥**

( १ ) गर्भप्रस्तरदैर्घ्याभ्यां प्रादेशप्रमाणा चरुस्थाली प्रशस्ता भवति । औदुम्बरी ताम्रमयी । शेषं सुव्यक्तमिति । $ प्रकाश.

( २ ) एषा पायसचरावपि न निषिद्धा, ‘ पयोऽनुद्धृतसारं च ताम्रपात्रे न दुष्यति । ’ इति स्मृतिसागरधृतवचनात् ( ? च ) । अत एव शारदातिलके— ‘ततश्च संस्कृते वह्नौ गोक्षीरेण चरुं पचेत् । मन्त्रेण क्षालिते पात्रे नवे ताम्रमयादिके ॥ ’ । † संत. ८६६

( ३ ) कात्यायनेन चरुस्थालीलक्षणमन्यथोक्तम्— दृढा प्रादेशमात्र्यूर्ध्वमिति । एतच्च प्रादेशमात्रत्वमाश्वलायनस्मृत्युक्तेन ( ‘ अष्टाङ्गुलमिता स्थाली प्रोक्षणी च षडङ्गुला । ’ ) अष्टाङ्गुलप्रमाणेन विकल्पते । औदुम्बरी ताम्रमयी । संर. २३

मेक्षणस्वरूपं दर्वीस्वरूपं च

**[१]इध्मजातीयमिध्मार्धप्रमाणं मेक्षणं भवेत् ।**
**¶वृत्तं वार्क्षं च पृथ्वग्रमवदानक्रियाक्षमम् ॥**

( १ ) इध्मजातीयं खादिरं पालाशं वा, अभावे सूत्रोक्तविभीतकादिवर्जसर्ववनस्पतिमयम्, स्वप्रादेशप्रमाणम्, वर्तुलदण्डम्, वृक्षकाण्डनिर्मितम्, न तु शाखाभवम्, स्थूलाग्रम् अवदानयोग्यं मेक्षणं भवेत् । ‡ प्रकाश.

( २ ) इध्मजातीयमित्यनेनैव वृक्षलाभे वार्क्षमिति वचनमिध्मवृक्षातिरिक्तवृक्षस्यापि पक्षे संग्रहार्थम् । संर. २३

**[२]एषैव दर्वी यस्तत्र विशेषस्तमहं ब्रुवे ।**
**दर्वी द्व्यङ्गुष्ठपृथ्वग्रा तुरीयोनं तु मेक्षणम् ॥**

---

$ पप्र. प्रकाशवत् ।

( १ ) कास्मृ. २।७१–७२ ; संत. ८६६ गूर्ध्वं ( गूर्ध्वे ); पप्र. १०८ ; संग. ३३ मात्रा ( मात्री ) नाति ( ऽनति ) प्रशस्यते ( प्रचक्ष्यते ); संर. २३ पूर्वार्धे ( दृढा प्रादेशमात्र्यूर्ध्वं तिर्यङ् नातिबृहन्मुखी । ); संदी. ३१ पूर्वार्धं संगवत्.

† शेषं प्रकाशवत् ।

¶ स्मृतिपुस्तकयोः कर्मप्रदीपे संस्कारप्रकाशे च ‘ वृत्तं चाङ्गुष्ठपृथ्वग्रम् ’ इति पाठस्य मुद्रणमनवधानमूलम्, परिशिष्टप्रकाश— संस्कारप्रकाशव्याख्यानविरोधात् अग्रिमश्लोकोक्तपरिमाणविरोधाच्च ।

‡ संप्र. प्रकाशवत् ।

( १ ) कास्मृ. २।७३–७४ वार्क्षं च ( चाङ्गुष्ठ ); संत. ८६७; पप्र. १०७ ; संप्र. ९३५ कास्मृवत् मुद्रितः पाठः, व्याख्यानात्तु आदर्शाभिन्नः ; संर. २३.

( २ ) कास्मृ. २।७४–७५ ; संत. ८६७ द्व्यङ्गुष्ठ ( द्व्यङ्गुल ); तुरीयोनं ( तुरीयेण ); पप्र. १०७ द्व्यङ्गुष्ठ ( द्व्यङ्गुल ) ; संप्र. ९३६.

(१) यादृशं मेक्षणं तादृश्येव दर्वी। किंतु दर्व्या यो विशेषस्तमहं वदामि। दर्वी मण्डलेन अङ्गुष्ठद्वय-पृथ्वग्रा। मेक्षणं चतुर्थभागोनस्थूलाग्रमित्यर्थः।

प्रकाश.

(२) एषैव दर्वी यादृशं मेक्षणमुक्तं तादृश्येव दर्वी। यस्तत्र विशेषः यः दर्वीगतो विशेषस्तमहं ब्रुवे तमहं वदामि। दर्वी द्व्यङ्गुष्ठपृथ्वग्रा, अङ्गुष्ठद्वयपरिमितं पृथु विस्तीर्णमग्रं यस्याः सा द्व्यङ्गुष्ठपृथ्वग्रा दर्वी भवति। तुरीयोनं च मेक्षणम्, द्व्यङ्गुष्ठचतुर्थांशन्यूनपरिमाणपृथ्वग्रं मेक्षणं भवति। एवं च प्रादेशपरिमाणा द्व्यङ्गुष्ठपरिमित-पृथ्वग्रा खादिरपालाशादिमूलदण्डोद्भवा दर्वी भवति।

संप्र. ९३६

मुसलोलूखलशूर्पस्वरूपाणि

[1]**मुसलोलूखले वार्क्षे स्वायते सुदृढे तथा।**
**इच्छाप्रमाणे भवतः शूर्पं वैणवमेव च॥**

(१) वार्क्षे यज्ञियवारणवैकङ्कतवृक्षमये, 'वारणो वैकङ्कतो वा यज्ञावचरः' इति वचनात्, 'न त्वेतेन जुहुयात्' इति श्रुतिबलात् होमकरणध्रुवोपभृज्जुहू-स्रुवाणाम् 'पर्णमयी जुहूः' इत्यादिबोधितवृक्षविशेषावरुद्ध-त्वात् तदितरोलूखलादिष्वेव सामान्यविधिरूपवारणवाक्य-पर्यवसानात्। ऐषिकः काशमयः। 'शूर्पं वैणवमेव च' इति भट्टभाष्यलिखितम्। शेषं सुगमम्। एतैश्चाऽऽज्य-स्थाल्यादिलक्षणैः 'आज्यं चरुस्थालीं मेक्षणम्, अथोलू-खलमुसले प्रक्षाल्य शूर्पं च कंसं दर्वीमुदकम्' इत्यादि-सूत्रोक्तानामाज्यस्थाल्यादीनां स्पष्टीकरणं कृतमिति।

प्रकाश.

(२) वार्क्षे वरणवृक्षमये, 'वारणान्यहोमसंयुक्तानि' इति कात्यायनवचनात्। अहोमसंयुक्तानि होमासाध-नानि। तदभावे खदिरविकङ्कतादियज्ञियवृक्षमये— इति भट्टभाष्यसंमतोऽर्थः। स्मृत्यर्थसारे तु 'खादिरो मुसलः कार्यः पालाशं स्यादुलूखलम्। यद्वोभौ वारणौ कार्यौ तदलाभेऽन्यवृक्षजौ॥'। स्वायते सुदीर्घे। वैणवं वंश-भवम्। अयं च भट्टभाष्यसंमतः पाठः। परिशिष्टप्रकाशे तु वैणवमित्यत्र ऐषीकमिति पठित्वा ऐषीकं काशमयमिति व्याख्यातम्।

पप्र. १०७–१०८

परिधीनां स्वरूपं संख्या विन्यासप्रकारश्च

[1]**बाहुमात्राः परिधय ऋजवः सत्वचोऽव्रणाः।**
**त्रयो भवन्त्यशीर्णाग्रा एकेषां तु चतुर्दिशम्॥**

'परिधीनप्येके कुर्वन्ति शामीलान् पार्णान् वा' (गोगृ. १।७।१६) इति सूत्रेण कुशतत्प्रतिनिधेरभावे परिधयः स्तरणार्थे विहिताः। शामीलान् शमीमयान्। 'बाहुमात्राः परिधयः' इत्यनेन तेषां स्पष्टीकरणं कृतम्। ते च त्रयो भवन्ति। एकेषां तु मते चतुर्दिशं चत्वारो भवन्तीति। शेषं सुगमम्।

प्रकाश.

प्रतिनिधेर्मुख्यसदृशत्वम्

[2]**यथोक्तवस्त्वसंपत्तौ ग्राह्यं तदनुकारि यत्।**
**यवानामिव गोधूमा व्रीहीणामिव शालयः॥**

(१) व्रीहीणां षष्टिकानाम्। ब्रक. ६८

(२) व्रीहिद्रव्यालाभे यत्तत्सदृशं तदुपादेयम्। निदर्शनमाह— यवानां विहितानामलाभे गोधूमास्तत्स-दृशा उपादीयन्ते। शरत्पक्वषष्टिकादीनामलाभे हैमन्तिकाः शालय उपादीयन्ते। एतच्च वचनं प्रतिनिध्यधिकरण-न्यायमूलम्, अवयवपर्यन्तत्वात् शास्त्रार्थस्य, यवावयवानां गोधूमेऽपि प्रत्यभिज्ञानादिति। यत्तु पैठीनसिवचनम्— 'काण्डमूलपुष्पप्ररोहसुगन्धादीनां सादृश्यात् प्रतिनिधिं कुर्यात्, सर्वालाभेऽवयवः प्रतिनिधिर्भवति' इति, तत्र

---

(१) कास्मृ. २१७५–७६; संत. ८६७ लूखले (दूखले); पप्र. १०७ 'शूर्पं वैणवमेव च' इत्यत्र 'शूर्प-मैषीकमेव च' इत्यपि पाठः।

(१) कास्मृ. २१७८–७९ तु (च); पप्र. १०५.

(२) कास्मृ. २१८०–८१; ब्रक. ६८ यत् (च); स्मृच. १६३ तदनुकारि यत् (तदनुसारि च) शालयः (तण्डुलाः); चव्र. ४१ (=); चदा. १३९ संपत्तौ (संपन्ने); कृर. ७३ ब्रकवत्; गृर. १३१; निप्र. १९६ ग्राह्यं (कार्यं); संत. ९१६ णामिव (णामपि): ९४७ यवानामिव (यवा मुद्गाश्च); पप्र. १०९.

गन्धादिसादृश्येन प्रतिनिधिप्रतिपादनं न न्यायमूलं किंतु वेदमूलमेव । यत्र विहितद्रव्यावयवोपयोगः तत्र हि प्रतिनिधिन्यायः । न काण्डं मूलं प्ररोहोऽङ्कुरश्चोपयुज्यते ।

ततश्चायं शास्त्रार्थः– विहितद्रव्यालाभे प्रतिनिधिन्यायलभ्यस्य भूयोऽवयवसाम्येन तत्सदृशद्रव्यस्योपादानम्, तदलाभे काण्डादिना तत्सदृशस्य, तस्याप्यलाभेऽवयवस्येति । यत्तु मैत्रायणीपरिशिष्टम्– 'दक्षिणालाभे मूलानां फलानां दक्षिणां ददाति, न त्वेवं यजेत' इति, न तत्र प्रतिनिधिन्यायः प्रवर्तते । यत्र हि अवघातादिविनष्टानां व्रीह्यादीनामवयवद्वारा साधनत्वं तत्रैवावयवसादृश्यादरः, दक्षिणायां तु न तथेति वाचनिकानामेव मूलानां भक्ष्याणां चोपादानम् । ततश्चैतदपि वचनं वेदमूलमेवेति । 'न त्वेवं यजेत' इत्यस्य एवं दक्षिणां विना न यजेतेत्यर्थः । यथा दर्भास्तरणे काशः प्रतिनिधिः, तदभावे पर्वत्रतीभिरोषधीभिः शूकतृणशरलुण्ठनलबल्बजपलालोशीरपर्ववर्जम् । अथेध्मार्थे पलाशाश्वत्थखादिररौहितकौदुम्बराणाम्, तदलाभे सर्ववनस्पतीनां तिल्वकधव-नीप-निम्ब-कपित्थ-कोविदार-विभीतक-श्लेष्मातक-राजवृक्ष-रक्तकण्टकिवर्जम् । तिल्वकः श्वेतलोध्रः, राजवृक्षः प्रियालुः, कोविदारः काञ्चनः अबुविचन्वा इति प्रसिद्धः, रक्तः शोणः । तथा व्रीहयः पुरोडाशस्यार्थे, तदलाभे तु यववतीभिः तण्डुलवतीभिः पुरोडाश्यान् कुर्वन्ति अन्नचीनमाष-मसूर-कोरक-कोद्रव-कोरदूषवर्जम् । पुरोडाश्यान् पुरोडाशार्थान्, वरकश्चीनः, कोरकः पीतकुलुत्थः, कोरदूषः वनकोद्रवः । घृतमाज्यार्थे प्रतिनिधिः, तदलाभे दधि पयो वा तण्डुलपिष्टानि वा संमृज्याऽऽज्यार्थान् कुर्वन्ति । यत्र घृतव्यतिरिक्तमाज्यं विहितं तत्र तदलाभे घृतमुपादेयम् । तथा च सूत्रम्– 'आज्यं संस्कुरुते सर्पिस्तैलं दधि यवागूश्च' इति । तथा गोभिलीयं च 'घृतं वा यदि वा तैलं पयो वा दधि यावकम् । संस्कारयेद्यत्र चैव आज्यशब्दोऽभिधीयते ॥' । अत्र च यत्र न्यायतः प्रतिनिधिलाभः, तत्र न्यायमूलतैव । मैत्रायणीयवचनस्य त्वतुल्याय(?) वेदमूलतैवेति मन्तव्यम् । न्यायेनापि सदृशमात्रे प्राप्ते यत्र सदृशविधिस्तत्र नियमार्थो विधिः, 'यदि सोमं न विन्देत पूतीकानभिषुणुयात्' इतिवत् । तदास्ताम्, अलमतिविस्तरेण । प्रतिनिधितदपवादौ प्रतिनिधिकोट्यां द्रष्टव्यौ ।

प्रकाश.

मृत्पात्रस्याऽऽसुरत्वं दैविकत्वं च

**[1]कुलालचक्रनिष्पन्नमासुरं मृन्मयं स्मृतम् ।**
**तदेव हस्तघटितं स्थाल्यादि दैविकं भवेत् ॥**

मन्त्राणामोंकारपूर्वकत्वं तदपवादश्च

**[2]यदोंकारमकृत्वा किंचिदारभ्यते तद्वज्रीभवति । तद्वज्रभयाद्भीत ओंकारं पूर्वमारभेत् ॥**
**[3]नोंकुर्याद्धोममन्त्राणां पृथगादिषु कुत्रचित् ।**
**अन्येषां विप्रकृष्टानां कालेनाऽऽचमनादिना ॥**

(१) यत्रानेकमन्त्रसाध्यका होमादिव्यक्तिस्तत्र द्वितीयादिमन्त्रादिषु प्रणवो नास्ति । यत्र तु मध्ये आचमनादिना व्यवधानं तत्र द्वितीयादिव्यक्तिषु प्रणवमुच्चारयेत् । तथा च छन्दोगपरिशिष्टे– नोंकुर्यादिति । विप्रकृष्टानामिति पञ्चम्यर्थे षष्ठी । आचमनादिकालेन विप्रकृष्टेभ्यो मन्त्रेभ्योऽन्येषां मन्त्राणामादिषु पृथक् प्रणवोच्चारणं न कार्यम् । अनेकमन्त्रसाध्यो होमश्चात्र सूक्तादिसाध्य एक एव बोध्यः । एवं च अनेकमन्त्रके एकमन्त्रके वा अनेकहोमे प्रतिहोमं प्रणवः कार्यो व्यक्तिभेदात् । अत्र होमपदं क्रियामात्रोपलक्षणम्, तेन पुरुषसूक्तादिनाऽभिषेकादिषु आदावेव प्रणवः कार्यः । यत्र च

(१) कास्मृ. २।११५ स्थाल्यादि दैविकं (स्थालादि दैवकं); पप्र. १०८ स्मृतम् (भवेत्); संर. २० कर्मप्रदीपवचनमित्युक्तम्; संदी. ३१ आसुरं मृन्मयं स्मृतम् (मृन्मयं ह्यासुरं भवेत्) दैविकं भवेत् (खलु दैविकम्).

(२) पप्र. ७९.

(३) कास्मृ. २।१२१ नोंकु (नो कु) पृथगादिषु (प्रथमादिषु) विप्रकृ (चाविकृ); हभा. ११२(=) विप्रकृ (चाविकृ); गभा. ११४ (=) हभावत्; पप्र. ७९; संग. ३१० (=) हभावत्; संदी. १२ हभावत्.

एकस्यैव मन्त्रस्य पादादिभेदेन क्रियाभेदस्तत्र प्रणवभेदः। पप्र. ७९–८०

(२) अस्यार्थः– गोभिलगृह्यप्रसिद्धषडाहुतिविंशत्याहुतिमन्त्रेषु प्रतिमन्त्रमादौ न ओंकारप्रयोगं क्वचिदपि कुर्यात्, किंतु प्रथममेव। अन्येषां जपाद्यर्थानां रुद्राध्यायादीनां मध्ये अप्रायत्ये सति आचमनादिना कालेन ओंकारेण सह व्यवधाने जाते न आचमनानन्तरं पठ्यमानस्य मन्त्रस्याऽऽदौ ओंकारप्रयोगः कर्तव्यः। होममन्त्रेष्वेवं व्यवधाने ओंकारः कर्तव्य एव इति नारायणवृत्तिकृता प्रतिपादितः। अत एव शाखान्तरीया न कुर्वन्तीत्याहुः। पारस्करगृह्यभाष्ये हरिहरस्तु– 'अन्येषां चाविकृष्टानाम्' इति पाठं धृत्वा अविकृष्टानाम् अनन्तरितानां कालेनाऽऽचमनादिना चेति व्याख्यातवान्। संदी. १२–१३

परिगणितदर्भमयार्थेषु दर्भाणामनियतसंख्यत्वम्

[१]यज्ञवास्तुनि मुष्ट्यां च स्तम्बे दर्भबटौ तथा।
दर्भसंख्या न विहिता विष्टरास्तरणेषु च॥

दर्भबटुः कुशमयब्राह्मणः। स च 'अपरिमितकुशदलैर्भवति' इति भट्टभाष्यात्, 'एकपत्रीकृतान् कुशान्' इत्यपि भवदेवभट्टलिखनाच्च दलैर्व्यवह्रियते। तत्रापरिमितसंख्यत्वमाह छन्दोगपरिशिष्टम्– यज्ञवास्तुनीति। एतच्छन्दोगपरम्। अन्येषां शान्तिदीपिकायाम्– 'सप्तभिर्नवभिर्वाऽपि सार्धद्वितयवेष्टितम्। ओंकारेणैव मन्त्रेण द्विजः कुर्यात् कुशद्विजम्॥'। कर्मोपदेशिन्यां तु नवभिरित्यत्र पञ्चभिरिति पाठः। एतदेकवाक्यतया 'द्विरावृत्त्याऽथ मध्ये वै अर्धवृत्त्याऽन्तदेशतः। ग्रन्थिः प्रदक्षिणावर्तः स ब्रह्मग्रन्थिसंज्ञकम्॥' इति कालिकापुराणोक्तं व्याख्येयम्। रत्नाकरे गृह्यासंग्रहपरिशिष्टम्– 'ऊर्ध्वकेशो भवेद्ब्रह्मा लम्बकेशस्तु विष्टरः। दक्षिणावर्तको ब्रह्म वामावर्तस्तु विष्टरः॥'। संत. ८६३

हविषस्त्रैविध्यम्

[१]हविस्तु त्रिविधं ज्ञेयं कृतं चैव कृताकृतम्।
अकृतं च क्रमादेषां लक्षणं सम्यगुच्यते॥

[२]कृतमोदनसक्त्वादि तण्डुलादि कृताकृतम्।
व्रीह्यादि चाकृतं प्रोक्तमिति हव्यं त्रिधा बुधैः॥

एण–माणव–रुरु–तम्बलपदार्थाः

[३]अनृचो माणवो ज्ञेय एणः कृष्णमृगः स्मृतः।
रुरुर्गौरमृगः प्रोक्तस्तम्बलं शण उच्यते॥

अक्षत–धाना–लाज–खाण्डिकपदार्थाः

[४]अक्षतास्तु यवाः प्रोक्ता भृष्टा धाना भवन्ति ते।
भृष्टास्तु व्रीहयो लाजा घटः खाण्डिक उच्यते (?)॥

भूयोभिरल्पानां बाधः

[५]अल्पानां यो विघातः स्यात्स बाधो बहुभिः स्मृतः।
प्राणसंमित इत्यादि वासिष्ठं बाधितं यथा॥

(१) कास्मृ. २।१५५; संत. ८६३ णेषु च (णेष्वपि); संर. १९४ (=) वास्तु (वस्तु) चतुर्थचरणे (कूर्चे संस्तरणेऽपि च); संदी. २९ मुष्ट्यां (मुष्टौ) स्मृत्यन्तरम्.

(१) मुक्ता. ३६०; संर. ६०७ ज्ञेयं (प्रोक्तं) चन्द्रिकायां स्मृत्यन्तरे.

(२) कास्मृ. ३।६२; स्मृच. १६२; पमा. २९० शौनकः; मुक्ता. ३६०; संर. ६०७ चन्द्रिकायां स्मृत्यन्तरे.

(३) कास्मृ. ३।१२२; वीमि. १।२९ पृ. ८४ द्वितीयचरणमात्रम्.

(४) कास्मृ. ३।१३३; संत. ८९५ भृष्टा धाना (धाना भृष्टा) घटः खाण्डिक (घटीखण्डिक); श्रात. ३०८ अक्षतास्तु (अक्षताश्च) पू.; श्राप्र. ३०९ (=) पू.; संप्र. ९३२ पू.

(५) कास्मृ. ३।१४८–१४९.

विरोधो यत्र वाक्यानां प्रामाण्यं तत्र भूयसाम् ।
तुल्यप्रमाणकत्वे तु न्याय एवं प्रकीर्तितः ॥

कालातीतानुष्ठानपूर्वकमुत्तरकर्मानुष्ठानम्

[१]कालातीतेषु कार्येषु प्राप्तवत्स्वपरेषु च ।
कालातीतानि कृत्वा तु विदध्यादुत्तराणि च ॥

प्रायश्चित्तानुष्ठानपूर्वकं लुप्तकर्मानुष्ठानम्

[२]लुप्ते कर्मणि सर्वत्र प्रायश्चित्तं विधीयते ।
प्रायश्चित्ते कृते पश्चाल्लुप्तं कर्म समाचरेत् ॥

माङ्गल्यस्नानम्

[३]माङ्गल्यं विद्यते स्नानं वृद्धिपूर्वोत्सवेषु च ।
स्नेहमात्रसमायुक्तं मध्याह्नात् प्राक्तदिष्यते ॥

तैलयन्त्रादिशब्दश्रवणकाले कर्माचरणनिषेधः

[४]तथा च तैलयन्त्रेषु शब्दो यावत्प्रवर्तते ।
तावत्कर्म न कर्तव्यं शूद्रान्त्यपतितस्य च ॥

सर्वौषधिगणः

[५]कुष्टं मांसी हरिद्रे द्वे मुरा शैलेयचन्दने ।
वचा चम्पकमुस्ते च सर्वौषध्यो दश स्मृताः ॥

कुष्टं कोष्ठमिति भाषया प्रसिद्धम् । मांसी जटामांसी । एका हरिद्रा प्रसिद्धा । द्वितीया दारुहळद इति भाषया प्रसिद्धा । मुरा मोरवेल इति परशुरामक्षेत्रे प्रसिद्धा । शैलेयं शिलारसः । चन्दनं श्वेतचन्दनम् । सटी कचोरः । चम्पकः प्रसिद्धः, तस्य त्वक् । मुस्ता भद्रमोथा ।

संर. ३१

## व्यासः

चातुर्वर्ण्यस्य धर्माधिकारः

[१]ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः ।
श्रुतिस्मृतिपुराणोक्तधर्मयोग्यास्तु ते नराः ॥
शूद्रो वर्णश्चतुर्थोऽपि वर्णत्वाद्धर्ममर्हति ।
वेदमन्त्रस्वधास्वाहावषट्कारादिभिर्विना ॥

विष्णुस्मरणं शुचित्वसंपादकम्

[२]अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ।
यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥

यत्तु व्यासः– 'अपवित्रः पवित्रो वा ...' इति, तत् यथोक्तशौचे कृतेऽप्यात्मसंतोषाभावे द्रष्टव्यम् ।

आम. ११

शिखा, यज्ञोपवीतम्, अनार्द्रवासस्त्वम्, अबहिर्जानुता, साङ्गुष्ठत्वं च कर्माङ्गाणि

[३]विना यच्छिखया कर्म विना यज्ञोपवीतकम् ।
राक्षसं तद्धि विज्ञेयं समस्ता निष्फलाः क्रियाः ॥
[४]आर्द्रवासास्तु यः कुर्याज्जपं होमं प्रतिग्रहम् ।
सर्वं तद्राक्षसं विद्याद्बहिर्जानु च यत्कृतम् ॥

---

(१) मुक्ता. ९९.

(२) प्रपा. २२०; गभा. २३३; संप्र. ३३२; मुक्ता. ९९; सिन्धु. ९४८; विपा. ४८४ शौनकः; संग. ६३२ पश्चाल्लु (तस्माल्लु).

(३) संदी. ३–४.

(४) आम. ३ कर्मप्रदीपे.

(५) चव्र. ४९ कुष्टं (कुष्ठं) चन्दने (चन्दनम्); चदा. ११०–१११ मुस्ते (मुस्तं) शेषं चव्रवत्; पप्र. ११५ मुस्ते (मुस्ता) शेषं चव्रवत्; शाम. ६ चन्दने (चन्दनम्) चम्पक (कर्चूर) दश स्मृताः (प्रकीर्तिताः); संकौ. १२९ कुष्टं (कुष्ठं); प्रका. २१५ उत्तरार्धे (सटीचम्पकमुस्ताश्च सर्वौषधिगणः स्मृतः ॥); बाल. १।२९४ पृ. ६०५; संव. १०९; कृभ. ९१६ वचा चम्पकमुस्ते च (वचाचम्पकमुस्ताश्च); संर. ३१ चन्दने (चन्दनम्) शेषं प्रकावत्.

(१) व्यासस्मृ. १।५–६.

(२) निप्र. २५ भ्यन्तरः (भ्यन्तरे) स्मृतिः : ३२४ उत्त., स्मृत्यन्तरम्; मुक्ता. २२०; आम. ११; संदी. ११८ (=).

(३) मुक्ता. ९१; आन. १५५ भृगुः.

(४) ब्रक. ५७ जपं होमं प्रतिग्रहम् (जपहोमपरिग्रहम्); चव्र. ३५ जपं होमं प्रतिग्रहम् (जपहोमप्रति-

(१) एतच्च आर्द्रवाससा जपादिप्रतिषेधनमश्रुतविषये, यत्र तु कर्मविशेषे आर्द्रवाससैवानुष्ठानं श्रूयते तत्र तथैवानुष्ठानं कर्तव्यम् । कृर. ४९

(२) अत्र आर्द्रवस्त्रनिषेधः स्थलकर्ममात्रविषयः । तथा वसिष्ठः– 'जले च शुष्कवस्त्रेण स्थले चैवाऽऽर्द्रवाससा । जपो होमस्तथा दानं तत्सर्वं निष्फलं भवेत् ॥' । जपादिपदं वैदिककर्ममात्रोपलक्षणम् ।

निप्र. २८

(३) बहिर्जानु जानुभ्यां बहिः करौ कृत्वेत्यर्थः ।

§ पप्र. ८२

[१]**होमः प्रतिग्रहो दानं भोजनाचमने जपः ।**
**न बहिर्जानु कार्याणि साङ्गुष्ठानि सदाऽऽचरेत् ॥**

द्विराचमननिमित्तानि

[२]**होमे भोजनकाले च संध्ययोरुभयोरपि ।**
**आचान्तः पुनराचामेज्जपदानार्चनेषु च ॥**

होमे दाने इत्यर्थः । स्मृच. १००

बलिहरणे होमे च हस्तमुद्रा आहुतिपरिमाणं च

[३]**उत्तानकरपञ्चाङ्गुल्यग्रैर्बलिं हरेत् । वृषवक्त्राकारेणोत्तानेनाङ्गुष्ठाङ्गुलिद्वयाग्रपर्वमात्रं प्रपूर्य जुहुयात् ॥**

अङ्गुलीनां द्वादश पर्वाणि यया पूर्यन्ते तावत्परिमाणा पाण्याहुतिः कार्या । यच्च गद्यव्यासवचनम् 'उत्तानकर.......जुहुयात्' इति, यदपि च छन्दोगपरिशिष्टटीकाधृतम्– 'आर्द्रामलकमानेन कुर्याद्धोमहविर्बलीन् । प्राणाहुतिबलिं चैव मृदं गात्रविशोधनीम् ॥' इति वचनम्, तदसमर्थविषयम् । पप्र. ११२–११३

आचमने वामदक्षिणहस्तयोर्दर्भधारणम्

‡[१]**वामहस्तस्थिते दर्भे दक्षिणेनोदकं पिबेत् ।**
**रक्तपानसमं ज्ञेयं प्रायश्चित्तीयते द्विजः ॥**

‡**उभयत्र स्थिते दर्भे समाचामति यो द्विजः ।**
**सोमपानसमं ज्ञेयं भुङ्क्ते यज्ञफलं तथा ॥**

ऋष्यादिज्ञानस्य कर्माङ्गता

[२]**अविदित्वा मुनिं छन्दो दैवतं योगमेव च ।**
**योऽध्यापयेज्जपेद्वाऽपि पापीयान् जायते तु सः ॥**

कर्मादौ ओंकारप्रयोगः

[३]**ओंकारः स्वर्गद्वारम् । तस्मात्सर्वेष्वेव कर्मस्वादौ प्रयुञ्जीत ॥**

मौनस्य कर्माङ्गता

[४]**जपकाले न भाषेत व्रतहोमादिकेषु च ।**
**एतेष्वेवावसक्तस्तु यद्यागच्छेद्द्विजोत्तमः ।**
**अभिवाद्य ततो विप्रं योगक्षेमं च कीर्तयेत् ॥**

---

§ शेषं निप्रगतम् ।

ग्रहान्) तद्राक्षसं विद्यात् (तदासुरं ज्ञेयं); कृर. ४८; निप्र. २८ जपं होमं (जपहोम); पप्र. ८२ (=); मुक्ता. ३४१ शाण्डिल्यः.

(१) स्मृच. १५०; मुक्ता. ३४१ सदाऽऽचरेत् (समाचरेत्).

(२) स्मृच. १०० दाना (हेमा); मुक्ता. २३७.

(३) प्रकाश. १३७. वृषवक्त्राकारेणोत्तानेना (वृषचक्राधारेणोत्ताना); पप्र. ११२ नाङ्गुष्ठाङ्गुलिद्वयाग्रपर्व (नाङ्गुलिद्वयपर्व).

‡ निप्रव्याख्यानं 'सव्ये पाणौ कुशान् कृत्वा' इति कात्यायनवचने (संका. पृ. १२१७) द्रष्टव्यम् ।

(१) निप्र. ३९–४०.

(२) स्मृच. १३६ मुनिं छन्दो दैवतं (ऋषिच्छन्दोदैवतं); मुक्ता. ३१६ योऽध्या (नाध्या) शेषं स्मृचवत्; आर. ४ ज्जपे (द्यजे) तु (हि).

(३) पप्र. ७९.

(४) स्मृच. १५० सक्तस्तु (सक्तं तु); मुक्ता. ३४०.

अवसक्तः अवहितः । प्रमादकृते तु वाग्यमलोपे योगयाज्ञवल्क्योक्तं द्रष्टव्यम्– 'यदि वाग्यमलोपः स्याज्जपादिषु कथंचन । व्याहरेद्वैष्णवं मन्त्रं स्मरेद्वा विष्णुमव्ययम् ॥' इति । स्मृच. १५०

[1]**स्नास्यतो वरुणः कान्तिं जुह्वतोऽग्निः श्रियं हरेत् ।**
**भुञ्जतो मृत्युरायुष्यं तस्मान्मौनं त्रिषु स्मृतम् ॥**

( १ ) मौनं लौकिकवार्तावर्जनम् । भोजने तु प्राणाहुतिमात्रे मौनम्, अन्यदा मौने अभ्युदयः ।
आन. ७१

( २ ) अग्निस्थापनं वाग्यतेन कर्तव्यम्, 'अग्निसंस्थापनं कुर्याद्वाग्यतः संयतेन्द्रियः ।' इति प्रयोगदर्पणे संग्रहोक्तेः । एवं होमकालेऽपि वाग्यमः, 'स्नास्यतो वरुणः ...... स्मृतम् ॥' इति प्रयोगपारिजाते स्मृत्यन्तरोक्तेः । संर. ५८

हस्ते कुशकाञ्चनधारणम्

[2]**अङ्गुष्ठानामिकाभ्यां तु छिन्नं पैतामहं शिरः ।**
**रुद्रेण तु ततः कालात्समारभ्य करोऽशुचिः ।**
**पावनार्थं ततो हस्ते कुशकाञ्चनधारणम् ॥**

कर्मकाले परमेश्वरानुसंधानम्

[3]**वासुदेवे मनो यस्य जपहोमार्चनादिषु ।**
**तस्यान्तरायो मैत्रेय देवेन्द्रत्वादिकं फलम् ॥**

ब्रह्मार्पणबुद्ध्या कर्मकरणे फलबाहुल्यमपि भवति । तदुक्तं व्यासेन–वासुदेवे मनो यस्येति । तस्माच्चतुर्विधपुरुषार्थसार्थोऽपि परमेश्वरप्रीत्यैव भवति । ततश्च परमेश्वरप्रीत्यर्थं प्रातःसंध्यामुपासिष्ये, ज्योतिष्टोमेन यक्ष्ये इति स्वाभीष्टदेवताप्रीत्युद्देशेन संकल्पः कार्य इत्यलमतिविस्तरेण । प्रकृतेऽप्येवमात्माधिकारसदृशं कर्मादौ संकल्पं कुर्यात् । प्रपा. २९

उपवीतादिलक्षणानि, उपवीतस्य कर्माङ्गत्वम्

[1]**उद्धृत्य दक्षिणं बाहुं सव्यांसे तु समर्पितम् ।**
**उपवीतं भवेन्नित्यं निवीतं कण्ठसज्जितम् ॥**

**सव्यं बाहुं समुद्धृत्य दक्षिणे तूद्धृतं द्विजैः ।**
**प्राचीनावीतमित्याहुः पितृकर्मणि योजयेत् ॥**

[2]**देवागारे गवां गोष्ठे होमे जप्ये तथैव च ।**
**स्वाध्याये भोजने नित्यं ब्राह्मणानां च संनिधौ ॥**

**उपासने गुरूणां च संध्ययोः साधुसंगमे ।**
**उपवीती भवेन्नित्यं विधिरेष सनातनः ॥**

समिधां मुख्यकल्पानुकल्पाः

[3]**पालाश्यः समिधः कार्याः खादिर्यस्तदलाभतः ।**
**शमीरोहीतकाश्वत्थास्तदभावेऽर्कवेतसौ ॥**

समिद्दोषास्तत्फलानि च

[4]**विशीर्णाऽऽयुःक्षयं कुर्याद्द्विदला व्याधिसंभवम् ।**
**ह्रस्वया मृत्युमाप्नोति वक्रा विघ्नकरी तथा ॥**

**पाटिता हरते लक्ष्मीं कृशा बान्धवहानिदा ।**
**द्विशाखा मैत्र्यहानिश्च कीटदुष्टाऽर्थनाशिनी ।**
**द्वेषं प्रकुरुते दीर्घा प्राणघ्न्यो वित्वचः स्मृताः ॥**

---

( १ ) स्मृच. २२२ कान्तिं (शक्तिं) पुराणेऽपि इत्युक्तम्; प्रपा. ३० भुञ्जतो (अश्नतो) स्मृत्यन्तरम्; आन. ७१ कान्तिं (शोभां) भुञ्जतो मृत्युरायुष्यं (भुञ्जानो मृत्युमाप्नोति); संर. ५८ प्रयोगपारिजाते स्मृत्यन्तरम्; संदी. ४७ (स्नातश्च वरुणस्तेजो जुह्वतोऽग्निः श्रियं हरेत् । भुञ्जानस्य यमस्त्वायुस्तस्मान्न व्याहरेत् त्रिषु ॥ ) मनुः .

( २ ) मुक्ता. २३०.

( ३ ) प्रपा. २९.

( १ ) मुक्ता. ९२.

( २ ) मुक्ता. ९२; आन. १५६ (भागः २).

( ३ ) मुक्ता. ९८.

( ४ ) प्रपा. ३८; मुक्ता. ३६० द्विदला (विदला) संभवम् (संभवा) पाटिता (स्थूला च) बान्धवहानिदा (वै बान्धवक्षयम्) मैत्र्यहानिश्च (नेत्ररोगं च) दुष्टाऽर्थनाशिनी (जुष्टाऽर्थनाशनम्) द्वेषं (द्वेष्यं) प्राणघ्न्यो (प्राणघ्ना).

## लघुव्यासः

स्नानं संध्यावन्दनं चाधिकारिविशेषणम्

[1]न हि स्नानं विना पुंसां प्राशस्त्यं कर्मसु स्मृतम् ।
होमे जप्ये विशेषेण तस्मात्स्नानं समाचरेत् ॥
[2]संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ।
यदन्यत्कुरुते कर्म न तस्य फलमाप्नुयात् ॥
[3]योऽन्यतः कुरुते यत्नं धर्मकार्ये द्विजोत्तमाः ।
विहाय संध्याप्रणतिं स याति नरकायुतम् ॥

दर्भधारणं यज्ञोपवीतधारणं च कर्माङ्गम्

[4]विना दर्भेण यत्कर्म विना सूत्रेण वा पुनः ।
नाक्षयं तद्भवेत्सर्वं नेहामुत्र फलप्रदम् ॥

## देवलः

उदयव्यापिन्या अस्तव्यापिन्याश्च तिथेः सकलत्वम्

[5]यां तिथिं समनुप्राप्य उदयं याति भास्करः ।
सा तिथिः सकला ज्ञेया स्नानदानजपादिषु ॥
[6]यां तिथिं समनुप्राप्य अस्तं याति दिवाकरः ।
सा तिथिः सकला ज्ञेया स्नानदानजपादिषु ॥

संकल्पे कालनिमित्तोल्लेखस्याऽऽवश्यकता

[7]मासपक्षतिथीनां च निमित्तानां च सर्वशः ।
उल्लेखनमकुर्वाणो न तस्य फलभाग्भवेत् ॥

(१) लव्यास्मृ. १।७-८ ; मुक्ता. २४५ प्राशस्त्यं (प्रायत्यं) तस्मात् (ततः) व्यासः.

(२) लव्यास्मृ. १।२७ ; मुक्ता. ३११ फलमाप्नुयात् (फलभाग्भवेत्) व्यासः.

(३) लव्यास्मृ. १।२९ ; मुक्ता. ३११ योऽन्यतः (योऽन्यत्र) द्विजोत्तमाः (ऽपि वै द्विजः) व्यासः.

(४) लव्यास्मृ. २।४.

(५) अप. १।१५४ पृ. २१४ स्नानदानजपादिषु (दानाध्ययनकर्मसु) ; आर. ४ (=) अपवत् ; सम. ४.

(६) अप. १।१५४ पृ. २१४ : पृ. २१५ पू.

(७) आर. ४ फलभाग्भवेत् (फलमाप्नुयात्) प्रयोगदीपिकायाम् ; शाम. २ ; संग. ६४ निमित्तानां (निमित्तस्य) तस्य फलभाग्भवेत् (तत्फलमवाप्नुयात्) विधानपारिजातके ; इन्दु. ९ संग्रहे ; संदी. १७ : ५३ संगवत्, विधानपारिजाते.

(१) निमित्तपदं मासादिपदविशेषणमिति मैथिलाः। तन्न, संक्रमादिनिमित्तानुल्लेखनापत्तेः । गोपालसिद्धान्तास्तु— 'निमित्तपदं मासादिविशेषणमनिमित्तमासाद्यनुल्लेखनार्थम् । चकारात् ग्रहणादिग्रहः । यद्वा चः उक्तसमुच्चये । निमित्तपदेन निमित्तत्वावच्छिन्नग्रहः ' इत्याहुः । तदपि न, चद्वयेन विशेषणत्वाप्रतीतेः, सर्वशः इत्यनेनैव निमित्तत्वावच्छिन्नग्रहाच्च । एवं च पृथक् मासादिग्रहोऽनिमित्ताद्यर्थो वा मासादिशब्दोल्लेखपरो वा । व्यतीपाताद्यनेकनिमित्तपाते कस्यचिदनुल्लेखे तन्निमित्तं स्नानादि पुनः कार्यमिति हेमाद्रिः । उक्तं च— ' उद्देशेन हि तादर्थ्यं विविच्य ' इति । तिथेरौदयिक्या उल्लेखः, ' यां तिथिं समनुप्राप्य उदयं याति भास्करः । सा तिथिः सकला ज्ञेया दानाध्ययनकर्मसु ॥ ' इति वचनात्, ' व्रतोपवासस्नानादौ घटिकैकाऽपि या भवेत् । उदये सा तिथिर्ग्राह्या विपरीता तु पैतृके ॥ ' इत्यपरार्के भविष्याच्चेति केचित् । अन्ये तु— ' कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः । तया कर्माणि कुर्वीत ह्रासवृद्धी न कारणम् ॥ ' इति वाक्यात् नित्यस्नानकाले वर्तमानतिथेरुल्लेखः । पूर्ववाक्यं तु द्वितीयादियुक्तप्रतिपद्व्रतादौ द्वितीयादावपि प्रतिपदाद्युल्लेखपरं वा, दिनद्वये कर्मकालव्याप्त्यभावे उदयस्थतिथेः संपूर्णतापरं वा— इत्याहुः । आर. ४

(२) मासपक्षतिथयः प्रयोगाधिकरणभूताः सर्वेऽपि । यत्तु अनेकदिनसाध्ये कर्मणि आद्यदिने संकल्पकालीनां तिथिमधिकरणत्वेनोल्लिख्य ' ज्योतिष्टोमेनाहं यक्ष्ये ' इत्यादिसंकल्पवाक्यं प्रयुञ्जते यायजूकाः, तत्तु पदानामन्वयायोगादनादर्तव्यम् । यदपि केचित्— तेन तेन रूपेण प्रयोगाङ्गतया विहितानामेव मासादीनामुल्लेख इति । तदपि न, मानाभावात्, अविहितमासादिके आधानादौ

मासपक्षतिथीनां ज्योतिष्टोमे एकादशीव्रतादौ च मासपक्षयोरुल्लेखाभावप्रसङ्गाच्च । अतो ज्योतिष्टोमादावेकादश्यादिपूर्णिमान्तानामुल्लेखः । एवमन्यत्रापीति दिक् ।

शाम. २–३

(३) तत्र देशकालाद्युल्लेखः कार्यः । तदुक्तं संग्रहे– मासपक्षेति । अत्र केचित्– ग्रहणादिनिमित्तस्य मासपक्षतिथीनां प्रयागादेश्च देशविशेषमात्रस्योल्लेखः कार्यः, न तु व्यापकानामयनमध्यदेशादीनामित्याहुः । अन्ये तु व्याप्यानां व्यापकानां च सर्वेषामुल्लेखः कार्य इत्याहुः । तत्र संकल्पे चान्द्रसंवत्सरस्यैवोल्लेखः, 'स्मरेत्सर्वत्र कर्मादौ चान्द्रं संवत्सरं सदा ।' इति वचनात् । ऋतुरपि चान्द्र एवेति धर्माब्धिसारे । तिथिस्त्वौदयिकी, 'यां तिथिं समनुप्राप्य' इत्यादिवचनादिति केचित् । 'कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः । तया कर्माणि कुर्वीत' इति वचनात् वर्तमानतिथेरुल्लेख इत्यन्ये । इदमेव युक्तम्, शिष्टसमाचारात् । एवमेव नक्षत्रयोगादेरपि निर्णयस्तुल्यन्यायात् ।

इन्दु. ९

(४) तत्र विशेषमाह देवलः– मासपक्षतिथीनामिति । असौ च संकल्पः केवलमदृष्टार्थ एव, नानुसंधानरूपदृष्टफलार्थः, अनुसंधानोत्तरमेव तस्य कर्तव्यत्वेन तस्य तत्फलत्वानुपपत्तेः ।

अत्र केचिदाहुः– ग्रहणादिरूपनिमित्तस्य मासपक्षतिथीनां प्रयागादेश्च देशविशेषमात्रस्योल्लेखः कार्यः, न तु व्यापकानामुत्तरायणमध्यदेशादीनामिति ।

अपरे त्वाहुः– 'प्रयागादिषु तीर्थेषु पुण्येष्वायतनेषु च ।' इति मात्स्यवाक्यात् यथा प्रयागादितीर्थविशेषस्याङ्गत्वम्, एवम् 'आर्यावर्तः पुण्यभूमिर्मध्यं विन्ध्यहिमालयोः (१ मध्येविन्ध्यहिमालयम्) ।' इत्यादिवाक्येन आर्यावर्तादिसामान्यस्याप्यङ्गत्वावगमात्, 'निमित्तानां च सर्वशः' इति सर्वपदस्वारस्याच्च सर्वनिमित्तानामुल्लेखः कार्यः । न चानेनैव सिद्धे मासपक्षतिथीनामित्यनर्थकमिति वाच्यम्, विधिस्पृष्टानां कार्तिकमाघादीनामुल्लेखसिद्धावपि तदस्पृष्टसाधारणमासाद्युल्लेखप्राप्त्यर्थत्वात् । तेन व्यापकानां व्याप्यानां च सर्वेषामुल्लेखः कार्य इति । संकल्पे च मुख्यचान्द्रमासातिरिक्तगौणमासप्रयुक्तकर्मस्वपि विन्ध्यदक्षिणे शुक्लादेः तदुत्तरे कृष्णादेश्चान्द्रमासस्यैवोल्लेखः, न तु गौणानामित्युक्तं कालतत्वविवेचने । कर्माङ्गतिथ्यन्यतिथेः संकल्पकालसत्त्वे तु संकल्पकालवर्तमानतिथिमेव कर्मतिथियुक्तत्वेन रूपेणाधिकरणतयोल्लिख्य संकल्पः कार्यः ।

§ संदी. १७–१९

### आचमने दर्भधारणम्

[1]**उभयत्र स्थितैर्दर्भैः समाचामति यो द्विजः ।**
**सोमपानफलं सोऽपि भुक्त्वा यज्ञफलं लभेत् ॥**

### देवपित्र्यकर्मणामौत्सर्गिकः कालः

**$पूर्वाह्णे दैविकं कर्म अपराह्णे तु पैतृकम् ।**
**एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम् ॥**

### रजकधौतस्य अहतस्य च वस्त्रस्य कर्मानर्हत्वम्

[2]**स्वयंधौतेन कर्तव्या क्रिया धर्म्या विपश्चिता ।**
**न तु नेजकधौतेन नाहतेन च कर्हिचित् ॥**

(१) अहतेन अधौतेन, तत्राप्यहतशब्दप्रयोगात् । यथोक्तं सत्यतपसा– 'अहतं यन्त्रनिर्मुक्तमुक्तं वासः स्वयंभुवा । शस्तं तन्माङ्गलिक्येषु तावत्कालं न सर्वदा ॥' इति ।

पृ. ११३

---

§ शेषं शान्तिमयूखानुवादः ।

$ व्याख्यासंग्रहः स्थलादिनिर्देशश्च अग्रे नान्दीश्राद्धप्रकरणे संग्रहीष्यते ।

(१) संर. १७. एतत्सदृशः श्लोकः पाठभेदेन व्यासेऽपि वर्तते ।

(२) स्मृच. ११३ तु नेजक (निर्णेजक) : ४३५ (श्रा.) तु नेजक (निर्णेजक) चतुर्थपादं विना, वृद्धमनुः ; पमा. २४५ नेजक (सेवक) च कर्हिचित् (न कुत्रचित्) ; निप्र. ३० (=) (स्वयंधौतेन कर्तव्याः क्रियाः सर्वा विपश्चिता । न निर्णेजकधौतेन नाहतेन कदाचन ॥) ; मुक्ता. २५२ च कर्हिचित् (न कुत्रचित्) ; आन. ३१ कर्तव्या (कर्तव्याः) पू.

निर्णेजको रजकः। स्वयंग्रहणादेव निर्णेजकनिवृत्तौ सिद्धायामपि पुनर्निर्णेजकप्रतिषेधोऽन्येनापि ब्राह्मणादिना धौतेन क्रिया कर्तव्येति ज्ञापनार्थः।

स्मृच. ४३५-४३६ (श्रा.)

(२) नाहतेनेति समस्तं पदम्। आहतलक्षणमाह पुलस्त्यः— 'ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम्। आहतं तद्विजानीयात्सर्वकर्मसु पावनम्॥' इति।

पमा. २४५

(३) अत्र स्वयंधौतस्य कर्माङ्गत्वेन विधौ निर्णेजकधौतस्य प्रसङ्गाभावात् तन्निषेधो नित्यानुवादः स्तुत्यर्थः, न च प्रतिनिधित्वेन प्राप्तस्य निषेधार्थः, वाक्यभेदापत्तेः। नापि पुरुषार्थवस्त्रधारणे निषेधः, वाक्यभेदादेव, 'कारुहस्तः सदा शुचिः' इति दोषाभावाच्च। केवलं रजकधौतपरिधाने कर्मवैगुण्यम्, पुत्रादिधौत इव स्वयंधौतत्वाभावात्, नाधर्मः। यत्तु भट्टाचार्यैः रजकधौतगर्दभारूढवस्त्रपरिधानं दुराचारमध्ये गणितं तत् गर्दभस्पर्शदोषमभिप्रेत्य, गर्दभस्यास्पृश्यत्वात्। न चास्पृश्यस्पर्शने पुरुषस्यैव दोषो न वस्त्रस्येति वाच्यम्, चण्डालादिस्पृष्टवस्त्रस्य पुरुषवदेव दुष्टत्वोक्तेः। तदुक्तं भट्टैः— 'पुरुषस्य सचेलस्य स्नानं यस्माद्विधीयते। तस्मात्पुरुषवद्वस्त्रं न गवाश्वादिवन्मतम्॥'। केवलम् 'मूत्रपुरीषलेपानन्नलेपानुच्छिष्टलेपान् रेतसो लेपान् प्रक्षाल्याऽऽचम्य प्रयतो भवति' (आध. १।१५।२३) इत्यापस्तम्बवचनादन्नपदस्य मूत्रपुरीषादिसाहचर्येणाभोज्यान्नपरत्वात् रजकान्नलिप्तं चाधौतं न ग्राह्यम्। निप्र. ३०-३१

(४) अ(?ना)हतेनेति समस्तपदम्। अहतस्य लक्षणमाह पुलस्त्यः— 'ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम्। अहतं तद्विजानीयात्सर्वकर्मसु पावनम्॥' इति।

मुक्ता. २५२

यज्ञोपवीतादिलक्षणानि

[1]ब्रह्मसूत्रेऽपसव्येंऽसे स्थिते यज्ञोपवीतिता।
प्राचीनावीतिता सव्ये कण्ठस्थे च निवीतिता॥

(१) प्रपा. २२३ (=); संप्र. ४२४; संग. ६६९.

यज्ञोपवीतसंख्या

[1]यज्ञोपवीते द्वे धार्ये श्रौते स्मार्ते च कर्मणि।
तृतीयमुत्तरीयार्थे वस्त्रालाभे तदिष्यते॥

## उशना

कर्तुर्वेष्टितशिरस्त्वस्य कृष्णकाषायवस्त्रत्वस्य च निषेधः

[2]न वेष्टितशिराः कृष्णकाषायवासा वा देवपितृकार्याणि कुर्यात्॥

उपवीतित्वं बद्धशिखत्वं च कर्तृधर्मौ

[3]सदोपवीती चैव स्यात्सदा बद्धशिखो द्विजः।
अन्यथा यत्कृतं कर्म तद्भवत्ययथाक्रमम्॥

परिधानीयगुणाः, उत्तरीयत्वेनाजिनविधिः

वसेदविकृतं वासः कार्पासं वा कषायकम्।
तदेव परिधानीयं शुक्लमच्छिद्रमुत्तमम्॥

उत्तरीयं समाख्यातं वासः कृष्णाजिनं शुभम्।
अभावे भव्यमजिनं रौरवं वा विधीयते॥

उपवीतं तत्साध्यकर्माणि च, निवीतम्,
पित्र्यकर्मसाधनं प्राचीनावीतं च

उपवीतं वामबाहुसव्यबाहुसमन्वितम् (?)।
उपवीतं भवेन्नित्यं निवीतं कण्ठलम्बनम्॥

सव्यबाहुं समुद्धृत्य दक्षिणेन धृतं द्विजाः।
प्राचीनावीतमित्युक्तं पित्र्ये कर्मणि धारयेत्॥

अग्न्यगारे गवां गोष्ठे होमे जप्ये तथैव च।
स्वाध्याये भोजने नित्यं ब्राह्मणानां च संनिधौ॥

उपासने गुरूणां च संध्ययोरुभयोरपि।
उपवीती भवेन्नित्यं विधिरेष सनातनः॥

(१) संप्र. ४२१; संग. ६६७ यार्थे (यार्थं) वस्त्रालाभे तदिष्यते (वस्त्राभावे चतुर्थकम्). भरद्वाजेऽपि इदं वचनं द्रष्टव्यम्।

(२) स्मृच. ११३ वासा वा (वाससा); मुक्ता. २५२.

(३) औस्मृ. १।७-१२.

द्विराचमननिमित्तानि, अबुपस्पर्श–तृणोपस्पर्श–भूम्यपस्पर्शानां विकल्पः, तन्निमित्तानि च

[१]भुक्त्वा पीत्वा च स्नात्वा च तथा रथ्योपसर्पणे।
ओष्ठावलोमकौ स्पृष्ट्वा वासो विपरिधाय च॥
रेतोमूत्रपुरीषाणामुत्सर्गे चान्त्यभाषणे।
तथा चाध्ययनारम्भे कासश्वासागमे तथा॥
चत्वरं वा श्मशानं वा समागम्य द्विजोत्तमः।
संध्ययोरुभयोस्तद्वदाचान्ते चाऽऽचमेत्पुनः॥
चण्डालम्लेच्छसंभाषे स्त्रीशूद्रोच्छिष्टभाषणे।
उच्छिष्टं पुरुषं स्पृष्ट्वा भोज्यं वाऽपि तथाविधम्॥
अश्रुपाते तथाऽऽचामे अनृतस्य तथैव च।
भोजनान्ते संध्ययोः स्नात्वा पीत्वा मूत्रपुरीषयोः॥
आचान्तोऽप्याचमेत्स्पृष्ट्वा सकृत्सकृदथान्यतः।
अग्नेर्गवामथाऽऽलम्भे स्पृष्ट्वा प्रयत एव वा॥
नृणामथात्मनः स्पर्शे नीवीं विपरिधाय च।
उपस्पृशेज्जलं शुद्धं तृणं वा भूमिमेव वा।
केशानां चाऽऽत्मनः स्पर्शे वाससां क्षालितस्य च (?)॥

हस्तस्थिततीर्थानि, तत्र कतिपयानामाचमने विनियोगः

[२]अङ्गुष्ठमूलान्तरतो रेखायां ब्रह्म उच्यते।
अन्तराङ्गुष्ठदेशिन्योः पितॄणां तीर्थमुत्तमम्॥
कनिष्ठामूलतः पश्चात्प्राजापत्यं प्रचक्षते।
अङ्गुल्यग्रे स्मृतं दैवं तथैवाऽऽर्षं प्रकीर्तितम्॥
मूले स्याद्दैवमार्षं स्यादाग्नेयं मध्यतः स्मृतम्।
तदेव सौमिकं तीर्थमेतज्ज्ञात्वा न मुह्यति॥
ब्राह्मेणैव तु तीर्थेन द्विजो नित्यमुपस्पृशेत्।
कायेन वा दैवतेन न तु पित्र्येण वा द्विजः॥

(१) औस्मृ. २।१-७. (२) औस्मृ. २।१६-१९.

## प्रजापतिः

पवित्रलक्षणम्

[१]अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च।
प्रादेशमात्रं सर्वत्र पवित्रं सर्वकर्मसु॥

परिधानीयोत्तरीययोश्चातुर्विध्यं श्रैष्ठ्यतारतम्यं दैर्घ्यपरिमाणं गुणाश्च

वासश्चतुर्विधं प्रोक्तं त्वक्सूत्रकृमिरोमजम्।
उत्तरोत्तरतः श्रेष्ठं प्रक्षाल्यं श्राद्धकर्मणि॥
धौतं सप्ताष्टहस्तैः स्यादुत्तरीयं तदर्धकम्।
वाससी सर्वदा धार्ये दग्धरूक्षार्द्रवर्जिते॥

त्याज्यात्याज्यपर्युषितपदार्थाः

त्यजेत्पर्युषितं पुष्पं त्यजेत्पर्युषितं जलम्।
न त्यजेज्जाह्नवीतोयं तुलसीदलपङ्कजम्॥

भूमिपावित्र्यनिमित्तानि

गोमयेनोपलिप्ता भूः पवित्रा सर्वकर्मसु।
गोमूत्रेणोक्षिता तीर्थे विष्णुपादाम्बुसेविता॥

तर्पणे वस्त्रप्राशस्त्यम्

[२]क्षौमं वासः प्रशंसन्ति तर्पणे सदशं तथा।
काषायं धातुरक्तं वा नोल्बणं तत्र कर्हिचित्॥

कर्मादौ पित्र्यकर्मोत्तरं च सकृदाचमनाच्छुद्धिः

[३]उपक्रमे विशिष्टस्य कर्मणः प्रयतोऽपि सन्।
कृत्वा च पितृकर्माणि सकृदाचम्य शुध्यति॥

विष्णुस्मरणात्कर्मणः संपूर्णता

[४]प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत्।
स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः॥

(१) प्रस्मृ. १०५-१०९.

(२) पमा. २४५ नोल्बणं (सोल्बणं); आन. ३१ (=); मुक्ता. २५२ वा (च).

(३) अप. १।१९६; मुक्ता. २३५ क्रमे विशिष्टस्य (क्रम्यावशिष्टस्य) कर्माणि (कार्याणि).

(४) स्मृच. १६३; प्रपा. ५१ वेताध्व (वताध्व): ५८ पाठः पूर्ववत्, स्मृतिरत्नावल्याम्; संत. ८८१ याज्ञवल्क्यः; प्रर. ४८; पक्र. ७४ पितामहः; मुक्ता. ३४१ प्रपावत्; इन्दु. १६.

(१) कर्मसमाप्तिसमयेऽङ्गलोपे ज्ञातेऽज्ञाते वा प्रजापतिः प्रायश्चित्तमाह– प्रमादादिति। प्र. ४८

(२) अध्वरेषु जपादियज्ञेषु। मुक्ता. ३४१

(३) यदा तु प्रमादात्कर्मप्रच्युतिस्तदा प्रजापतिराह–प्रमादादिति। इन्दु. १६

## यमः

श्राद्धे दर्भाणां समूलत्वं बहिर्लूनत्वं सकृल्लूनत्वं च

**[1]समूलस्तु भवेद्दर्भः पितॄणां श्राद्धकर्मणि।**
**मूलेन लोकाञ्जयति शक्रस्य सुमहात्मनः॥**

एतदेकोद्दिष्टश्राद्धविषयम्। यतः स एवाह– 'एकोद्दिष्टे कुशाः ... सर्वत्र पितृकर्मसु॥' इति।

¶ स्मृच. १०९

**[2]एकोद्दिष्टे कुशाः कार्याः समूलाः श्राद्धकर्मणि।**
**बहिर्लूनाः सकृल्लूनाः सर्वत्र पितृकर्मसु॥**

बहिर्लूनाः उपमूललूनाः। एवं च यदुक्तं ब्रह्माण्डपुराणे– 'उपमूले तथा लूनाः श्राद्धार्थे तु कुशाः स्मृताः। तथा श्यामाकनीवारौ दूर्वा च समुदाहृता॥' इति, यदपि गोभिलेन– 'उपमूले लूनाः पितृकार्येषु' इति, तदेकोद्दिष्टश्राद्धेतरविषयमित्यवगन्तव्यम्।

¶ स्मृच. १०९

बर्हिषः सप्तविधत्वम्

**[3]कुशाः काशास्तथा दूर्वा यवा व्रीहय एव च।**
**बल्वजाः पुण्डरीकाणि सप्तधा बर्हिरुच्यते॥**

¶ मुक्ता. स्मृचवत्।

(१) अप. १।२२५ पृ. ४५८ सुम (तु म); स्मृच. १०९ : ४३२ (श्रा.) पू.; पप्र. १०० पू. स्मृतिः; मुक्ता. २३१.

(२) स्मृच. १०९ बहिर्लूनाः (बहिर्मूलाः), 'बहिर्लूनाः' इति म्हैसूरमुद्रितपुस्तकस्थः पाठः; मुक्ता. २३१ श्राद्ध (यज्ञ).

(३) स्मृच. १०९; पमा. २३७ तथा दूर्वा यवा (यवा दूर्वास्तथा) रीकाणि (रीकाश्च); मर. ३५ शङ्खः; मुक्ता. २३४; आन. २० स्मरणम्.

सं. का. १५५

विष्णुस्मरणस्य मानसनियमलोपसमाधायकत्वम्

**[1]मानसे नियमे लुप्ते स्मरेद्विष्णुमनामयम्॥**

कौपीनकटिसूत्रधारणव्यवस्था

**[2]कौपीनं कटिसूत्रं च ब्रह्मचारी तु धारयेत्॥**

कटिसूत्रं गृहस्थेन धार्यम्, 'कौपीनं कटिसूत्रं च ब्रह्मचारी तु धारयेत्।' इति यमोक्तस्य तस्य 'सर्वेषां चैतदविरोधि' (गौध. ३।१०) इति गौतमीये गृहस्थादौ अतिदेशात्, गृहस्थस्य कौपीननिषेधानुपपत्तेश्च इति केचित्। तन्न, 'यत्किंचित्कुरुते धर्म्यं वैदिकं वाऽथ तान्त्रिकम्। कटिबन्धेन संयुक्तं सर्वं तन्निष्फलं भवेत्॥ रौप्यं कार्पासकं हैमं पट्टसूत्रकृतं तथा। वर्जयेत्कर्मकालेषु काञ्चीं विप्रो विशेषतः॥' इति संस्कारप्रयोगपारिजाते गृहस्थधर्मेष्वाश्वलायनोक्तेः। कटिबन्धः कटिसूत्रबन्धः। प्रकरणात् गृहस्थस्यैवायं निषेधः। कर्मकालग्रहादकर्मकाले न निषेधः। रौप्यादेरेव निषेधेऽत्यन्तादृष्टार्थत्वापत्तेः और्णादेरपि निषेधः। आर. ४

निमित्तविशेषे यज्ञोपवीतस्य देहाद्बहिःकरणम्

**[3]श्राद्धे धावनकाले च तैलाभ्यङ्गादिकर्मणि।**
**अत्र कायाद्बहिः कुर्यान्नान्यत्रेत्यब्रवीन्मनुः॥**

## मरीचिः

दर्भाणामयातयामत्वं पुनर्विनियोगश्च

**[4]मासे नभस्यमावास्या तस्यां दर्भोच्चयो मतः।**
**अयातयामास्ते दर्भा विनियोज्याः पुनः पुनः॥**

(१) नभस्यामावास्या कृष्णादिमासाभिप्रायेणैव, तस्यैव मुख्यत्वात्। तेनानन्तशयनमध्ये तस्याममावास्यायां छेदने न पुरुषदोषः। अत्र छेदिता दर्भा अयातयामाः इत्युक्ते

(१) पप्र. ९२. (२) आर. ४.

(३) आर. ३.

(४) व्रक. ६६; चव्र. ४० दर्भोच्चयो (दर्भंचयो); चदा. १०६ चव्रवत्; कृर. ६७ वास्या (वस्या); निप्र. ३५; स्मा (सेऽमा) पप्र. १००; विपा. १६४ (भागः २) स्मा (सेऽमा) विनियोज्याः (नियोज्याः स्युः) कात्यायनः.

अनन्तशयनमध्ये अन्यतिथौ छेदिता यातयामा इत्युक्तं भवति। अन्यथा दर्भमात्रस्यायातयामत्वान्नभस्यामावास्याच्छिन्नेषु अयातयामत्वोक्तिर्व्यर्था स्यात्। न च सामान्यस्य विशेषेणोपसंहारः, लक्षणादोषस्यागतौ स्वीकारात्। तद्यथा— 'दीक्षितः क्रीतराजको भोज्यान्नः' इत्युक्तम्। पुनश्च 'अग्नीषोमीये संस्थिते यजमानस्य गृहे भोक्तव्यम्' इत्युक्तम्। नानयोरुपसंहारः। किंतु मध्ये निषेधान्तरकल्पनया व्यवस्था आपद्विषयत्वेन। तदुक्तं भट्टैः— 'द्वितीयान्नाशनानुज्ञादर्शनादनुमीयते। भोजनस्य विधिमूल( ? अभोजनविधिर्नून)मस्त्वन्योऽप्यान्तरालिकः॥'। अथवाऽनन्तशयनमध्ये छेदननिषेधस्यातिक्रमेऽनिष्टफलकल्पनादशायां तत्र छेदितानां यातयामत्वं दोषः कल्प्यते, नभस्यामावास्याच्छिन्नानामयातयामत्वविधानसामर्थ्यात्। अत एवास्मद्देशे चातुर्मास्यच्छिन्नकुशैः सद्य एव कर्म कुर्वन्ति, न दिनान्तरे। तेन संध्यादिधृतस्य पवित्रोपग्रहादेर्होमादौ विनियोगेन निरिष्टिकविनियोग इति सिद्धम्। शिष्टाः— 'संग्रहाद्वत्सरं यावच्छुद्धिः स्यादिध्मबर्हिषाम्। अतः परं न गृह्णीयाद्यज्ञादौ जपकर्मणि॥'।

निप्र. ३६

(२) दर्भे विशेषमाह मरीचिः— मासे नभसीति। नभसि श्रावणे। श्रावणश्चात्र मुख्यश्चान्द्रः, तथैव सर्वदेशे शिष्टाचारात्। एते संवत्सरपर्यन्तमयातयामा इति वदन्ति। पठन्ति च— 'संग्रहाद्वत्सरं यावच्छुद्धिः स्यादिध्मबर्हिषाम्। ततः परं न गृह्णीयाज्जपादौ यज्ञकर्मणि॥' इति। अन्ये तु— 'चतुरो वार्षिकान्मासान्नाऽऽहरेत्कुशमृत्तिकाः। असंभवे त्वाददीत सद्यो यस्योपयोजनम्॥' इति हलायुधधृतवाक्यात् श्रावणादिवर्षाकालसंबन्धिमासचतुष्टयातिरिक्तकाले कुशाहरणं प्रतीयते। तेन वार्षिकमासचतुष्टयमध्ये मरीचिवचनाच्छ्रावणामावास्योत्पाटितकुशानां वर्षाकालातिरिक्तकालोत्पाटितकुशानां चायातयामत्वम्। तादृशकुशाभावे तद्दिवसोत्पाटितकुशानां तद्दिवसीयकर्ममात्रार्हतेति वदन्ति। मदनरत्नप्रदीपे षट्त्रिंशन्मतकात्यायनस्मृत्योः— 'मासेन स्यादमावास्यां दर्भो ग्राह्यो नवः स्मृतः। अयातयामस्तेनासौ नियोज्यश्च पुनः पुनः॥'। अमावास्यायां गृहीतो दर्भो मासपर्यन्तं ग्राह्य इत्यर्थः।

पप्र. १०१

इध्मसमिधां जातयः मानं संख्या गुणाश्च

**[1]पलाशः खदिरोऽश्वत्थः शमी वट उदुम्बरः।**
**अपामार्गार्कदूर्वाश्च कुशाश्चेत्यपरे विदुः॥**

**[2]दश द्वादश वाऽङ्गुल्यः समाः पञ्चदश स्मृताः।**
**नात्यङ्गुष्ठाः सत्वचश्च सार्द्रा इध्म इहोत्तमाः॥**

अथ इध्मयोग्यवृक्षानाह मरीचिः— पलाशः खदिर इति।

प्रपा. ३७

कर्मभेदेन समिद्गुणव्यवस्था

**[3]प्रागग्राः समिधो देयास्ताश्च काम्येष्वपाटिताः।**
**शान्त्यर्थे तु सशल्कार्द्रा विपरीता जिघांसतः॥**

(१) सशल्काः सत्वचः। कुर. ६१

(२) ससल्काः सत्वचः। जिघांसतः अभिचारयतः।

पप्र. १०४

---

(१) प्रपा. ३७; प्र. ५०; प्रका. ३५ पलाशः (पालाशः).

(२) प्रपा. ३७ वाऽङ्गुल्यः (काङ्गुल्यः); प्र. ५०; प्रका. ३५ वाऽङ्गुल्यः (चाङ्गुल्यः).

(३) ब्रक. ६८ शान्त्यर्थे तु सशल्कार्द्रा (काम्येषु च सशाकार्द्रा); चव्र. ७५ पूर्वार्धे (प्रागग्राः समिधो ग्राह्या अखर्वाणो ह्यपाटिताः।) शान्त्यर्थे तु सशल्कार्द्रा (काम्येषु वशकर्मादौ); चदा. १३९ (प्रागग्राः समिधो ग्राह्या अखर्वानौष्ठपाटिताः। काम्येषु वशकर्मादौ विपरीता जिघांसति॥); कुर. ६१ ष्वपाटिताः (षु पाटिताः) शान्त्यर्थे तु (शान्त्यर्थेषु); हभा. २१५ शान्त्यर्थे तु सशल्कार्द्रा (काम्येषु च सवल्कार्द्रा); निप्र. १९४ देया (ज्ञेया) काम्येष्वपा (कामेषु पा) शान्त्यर्थे तु (शान्त्यर्थेषु); पप्र. १०४ शल्का (सल्का); संप्र. ४४९ ष्वपा (षु पा) शान्त्यर्थे तु (काम्येषु च); संग. ६८० ष्वपाटिताः (षु फाटिताः) उत्तरार्धे (काम्येषु च सवल्कार्द्रा विपरीता जिघांसता॥).

समिद्दोषाः

[1]विशीर्णा विदला ह्रस्वा वक्राः ससुषिराः कृशाः ।
दीर्घाः स्थूला घुणैर्जुष्टाः कर्मसिद्धिविनाशिकाः ॥

## दक्षः

स्वसूत्रीयं परित्यज्य परसूत्रीयकर्माचरणे दोषः

[2]स्वकं कर्म परित्यज्य यदन्यत्कुरुते द्विजः ।
अज्ञानादथवा लोभात् स तेन पतितो भवेत् ॥

(१) स्वसूत्रोक्तं कर्म परित्यज्य पारक्यं कर्म कुर्वतो दोषमाह दक्षः— स्वकं कर्मेति । स्वसूत्रालाभे वृद्धमनुः— 'स्वसूत्रेऽविद्यमाने तु परसूत्रेण वर्तते । बोधायनमतं कृत्वा स्वसूत्रफलभाग्भवेत् ॥' । मुक्ता. १५

(२) 'स्वकं कर्म ...' इति वचनात्स्वगृह्योक्तं बह्वल्पं वा यादृशं तत्तादृशमेवानुष्ठेयम्, न तु शास्त्रान्तरमपेक्ष्यान्यथाऽपि कर्तव्यम् । येषां तु गृह्ये स्मृत्यन्तरोक्तस्य कस्यचिदङ्गस्य निषेधः, तत्र तन्निषेधद्वारा तत्स्मृत्युक्तान्याङ्गस्याभिमतत्वबोधनात्तदनुष्ठेयम्, 'आत्मतन्त्रेषु यन्नोक्तं तद्ग्राह्यं पारतन्त्रिकम् । विशेषाः खलु सामान्या वेदोक्ता वेदवादिभिः ॥' इति वचनात् । यस्य शास्त्रेऽनुक्ता विशेषास्ते खलु निश्चितं सामान्याः साधारणा इत्यर्थः । कृभ. १७३४—१७३५

(१) ब्रक. ६८ नाशिकाः (नाशकाः); चत्र. ७५ ससुषिराः (बहुशिराः) नाशिकाः (नाशकाः); चदा. १३९ चत्रवत्; कृर. ६१; हभा. २१५; निप्र. १९४ घुणै (युगै) कर्म (सर्वे) नाशिकाः (नाशकाः); पप्र. १०४; संग. ३३, ६८० ब्रकवत्; संदी. ३१.

(२) दस्मृ. २।३; निप्र. २२९ अथवा (यदि वा); मुक्ता. १५ लोभात् स तेन (ज्ञानात्यक्तेन); बाल. १।८९ पृ. २५३ द्विजः (नरः) गृह्यपरिशिष्टे; संग. १० स्वकं कर्म परित्यज्य (स्वकर्मपारमुत्सृज्य) द्विजः (नरः) तेन (हतः) स्मृत्यन्तरम्; कृभ. १७३४, १७३५ (=) द्विजः (नरः).

स्नानस्य कर्माङ्गता

[1]सर्वमर्हति शुद्धात्मा प्रातःस्नायी जपादिकम् ॥

प्रातःस्नानेनापि च सर्वकर्माधिकारः, 'सर्वमर्हति पूतात्मा ...' इति दक्षवचनात् । आदिपदेन सर्ववैदिककर्मणामसंकोचेन ग्रहणम् । अथ—तदहःकृत्येषु तदहःकृतस्नानस्यैवाधिकारसंपादकत्वम् । अहस्त्वं च 'उदयादोदयं भानोर्भौमसावनवासराः ।' इति सूर्यसिद्धान्तवाक्यात्सूर्योदयानन्तरकालस्यैवेति कथं सूर्योदयात्पूर्वंक्रियमाणस्य प्रातःस्नानस्य तदहःक्रियमाणक्रियाङ्गत्वम् ? इति चेत्, न, 'दिवसस्याऽऽद्यभागे तु कृत्यं तस्योपदिश्यते ।' इत्युपक्रम्य 'उषःकाले तु संप्राप्ते शौचं कृत्वा यथार्थवत् । ततः स्नानं प्रकुर्वीत दन्तधावनपूर्वकम् ॥' इत्यादिना दक्षवचनेन उषःकालमारभ्यैव तदहःकृत्याभिधानेन उषःकालस्यापि तदहरन्तःपातित्वात् । स्पष्टं चेदं कालमाधवीयधृतब्रह्मवैवर्तवाक्ये, यथा— 'त्रियामां रजनीं प्राहुस्त्यक्त्वाऽऽद्यन्तचतुष्टयम् । नाडीनां तदुभे संध्ये दिवसाद्यन्तसंज्ञिते ॥' । नाडीनामाद्यन्तचतुष्टयं त्यक्त्वेत्यन्वयः । मध्याह्नस्नानस्यापि च तदुत्तरकृत्येऽधिकारसंपादकत्वमाह्निकप्रकाशे वक्ष्यते । पप्र. ८१

[2]लालास्वेदसमाकीर्णः शयनादुत्थितो द्विजः ।
अस्नात्वा नाऽऽचरेत्कर्म जपहोमादि किंचन ॥

[3]स्नानमूलाः क्रियाः सर्वाः संध्योपासनमेव च ।
तस्मात्सर्वप्रयत्नेन स्नानं कुर्यात्समाहितः ॥

हस्तस्थिततीर्थानि

[4]कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च ।
प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् ॥

(१) दस्मृ. २।९; स्मृच. १११; पमा. २३९; पप्र. ८१ शुद्धात्मा (पूतात्मा); मुक्ता. २४५.

(२) दस्मृ. २।११.

(३) स्मृच. १११; मुक्ता. २४७.

(४) दस्मृ. २।१८—१९.

साङ्गुष्ठकरणीयकर्मगणना

दानं प्रतिग्रहो होमो भोजनं बलिकं तथा ।
साङ्गुष्ठं तु सदा कार्यमापतेत्तदधोऽन्यथा ॥

संध्यावन्दनस्य कर्माङ्गता

[1]संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ।
यदन्यत्कुरुते कर्म न तस्य फलभाग्भवेत् ॥

अत्र संध्यापदं सर्वसंध्यापरम्, अविशेषादिति विज्ञानेश्वरः । आर. १

देवपितृमनुष्यकर्मणामौत्सर्गिकः कालः

[2]देवकार्यस्य सर्वस्य पूर्वाह्णो हि विधीयते ॥

[3]देवकार्याणि पूर्वाह्णे मनुष्याणां च मध्यमे ।
पितॄणामपराह्णे च कार्याणीति विनिश्चयः ॥

कालातिक्रमे दोषः

[4]पौर्वाह्णिकं तु यत्कर्म यदि तत्सायमाचरेत् ।
न तस्य फलमाप्नोति वन्ध्यास्त्रीमैथुनं यथा ॥

## भरद्वाजः

यज्ञोपवीतनिवीतप्राचीनावीतानां विन्यासविशेषाः विनियोगश्च

[5]दक्षिणं बाहुमुद्धृत्य वामस्कन्धे निवेशितम् ।
यज्ञोपवीतमित्युक्तं दैवकार्येषु शस्यते ॥

(१) दस्मृ. २।२७ ; अप. १।२५ ; ब्रक. १८० ; उ. १।१।१ (=) पू. ; स्मृच. १३९ ; निप्र. ४५८ तस्य फलभाग्भवेत् (तस्याऽऽप्नोति तत्फलम्) ; आर. १ पू., स्मृतिः ; संर. ११५० (=) पू. ; इन्दु. १३ ; संदी. १७ फलभाग्भवेत् (फलमश्नुते).

(२) दस्मृ. २।३० ; अप. १।९९ हि (तु).

(३) दस्मृ. २।३१ च कार्याणीति विनिश्चयः (तु कुर्यादेतानि यत्नतः) ; ब्रक. ५८ णां च (णां तु) ; चव्र. ३७ ब्रकवत् ; क्षर. ४६ देवकार्याणि (देवकर्माणि) च का (तु का) ; पप्र. ८४ ब्रकवत्.

(४) दस्मृ. २।३२.

(५) आर. ३.

कण्ठावलम्बितं चैव ब्रह्मसूत्रं यदा भवेत् ।
तन्निवीतमिति ख्यातं शस्तं कर्मणि मानुषे ॥
उत्क्षिप्ते वामबाहौ तु दक्षिणस्कन्धमाश्रितम् ।
प्राचीनावीतमित्युक्तं तत् पित्र्येष्वेव कर्मसु ॥

यज्ञोपवीतसंख्या

[1]यज्ञोपवीते द्वे धार्ये श्रौते स्मार्ते च कर्मणि ।
तृतीयमुत्तरीयार्थं वस्त्राभावे तदिष्यते ॥

(१) तृतीयमुत्तरीयार्थमित्येतावतैवानुकल्पत्वे सिद्धे वस्त्राभावे इत्युक्तिरुत्तरीयाभाव एवानुकल्पत्वार्था । तेन तृतीये धृते उत्तरीयलाभे तदपि धार्यमिति केचित् । तन्न, एकस्यैव कदाचिदनुकल्पत्वे प्राधान्ये च विरोधात् । वयं तूत्तरीयस्य सर्वकर्मार्थत्वात्प्रतिकर्म धारणानुपपत्तेश्च तदुपवीतवत्सर्वार्थे सकृदेव धार्यम् । एवं तृतीयोपवीतमपि । तदङ्गीकारेण कर्मविशेषारम्भोत्तरं मुख्योत्तरीयलाभेऽपि न तद्ग्रहः, षाष्ठन्यायात् (जैसू. ६।३।१७) । [¶ कर्मानारम्भे तु तृतीयसत्त्वेऽपि मुख्यग्रहणम्, षाष्ठन्यायात् (जैसू. ६।३।१६)।] न च तृतीयत्यागापत्तिः, सर्वार्थत्वेन धृतत्वादुत्तरीयस्य च सर्वदा सत्त्वासंभवादिति युक्तमुत्पश्यामः । शिष्टाचारोऽप्येवम् । आर. २

¶ कंसान्तर्गतो ग्रन्थ आदर्शपुस्तके विच्छिन्नः, संस्कारदीपककृतानुवादानुसारेणात्र गृहीतः ।

(१) समु. ९ (=) यार्थं (यं तु) ; स्मृच. ११४ यार्थं (यं च) स्मृत्यन्तरम् ; दीक. १।१३३ प्रथमपादमात्रम्, बौधायनः ; गप. ८० (=) (यज्ञोपवीते द्वे धार्ये श्रौतस्मार्तेषु कर्मसु । तृतीयं चोत्तरीयार्थे वस्त्रालाभे तदिष्यते ॥) ; निप्र. ३२ (=) यार्थं (यार्थे) ; प्रर. ५० (=) ; वीमि. १।२९ पृ. ८८ (=) पू. ; चम. २२ श्रौते स्मार्ते च (दैवपित्रोश्च) वस्त्राभावे तदिष्यते (आयुष्कामो बहून्यपि) स्मृत्यन्तरम् ; मुक्ता. ९१ समुवत् : २५३ चन्द्रिकायामित्युक्तम् ; आर. २ विश्वामित्रः ; सिन्धु. ९५७ निप्रवत्, हेमाद्रौ इत्युक्तम् ; आन. ३२ स्मृचवत्, चन्द्रिकायाम् : १५५ पू. ; बाल. १।२९ पृ. १५४ (=) निप्रवत् ; संदी. ८ निप्रवत्, विश्वामित्रः .

(२) उत्तरीयार्थे इति । उत्तरीयं च जातूकर्ण्येनोक्तम्– 'सग्रन्थिपरिमण्डलमुत्तरीयं कुर्यात्, वस्त्रोत्तरीयाभावे त्वेकाङ्गुलं द्व्यङ्गुलं वा सूत्रैरेव कृतं परिमण्डलमुत्तरीयं कुर्यात्' इति । जीवत्पितृकस्य तु उत्तरीयं निषिद्धम्, 'पादुके चोत्तरीयं च तर्जन्यां रौप्यधारणम् । न जीवत्पितृकः कुर्याज्ज्येष्ठे भ्रातरि जीवति ॥' इति स्मृतेः । तस्य इदमपि निषिद्धम्, तत्स्थानापन्नत्वात् । उपरिवस्त्रमात्रं तु भवत्येवेत्यन्यत्र विस्तरः ।

कृभ. ९५७

(३) यद्यपि तृतीयोपवीतधारणमुत्तरीयकार्ये विधानात् उत्तरीयमन्त्रेण प्रतिभाति, तथाऽपि 'मन्त्रेणैव स्मृतं कर्म कर्तव्यम्' इत्यभिधानात् प्रकृते च मन्त्रेणोपवीतधारणस्यैव स्मरणीयत्वात् उपवीतमन्त्रेणैव युक्तम् ।

उत्तरीयवस्त्राभावे तु पारस्करगृह्ये–'एकं चेत्पूर्वस्योत्तरवर्गेण प्रच्छादयीत' (पागृ. २।६।२२) इति । एकवस्त्रत्वेन उत्तरार्धस्योत्तरीयत्वेनोपादाने तु 'यशसा मा' इत्युत्तरीयमन्त्रः प्रवर्तते एव, क्रियान्तरत्वात् ।

¶ संदी. ८–९

### यज्ञोपवीतस्य नित्यधार्यता

[1]**विना यज्ञोपवीतेन दिनमेकमपि द्विजः ।**
**स्थितः शूद्रत्वमायाति पुनः श्वानो भविष्यति ॥**

### स्वस्तिक–पद्म–वीरासनानां कर्माङ्गत्वं लक्षणानि च

[2]**आसनं स्वस्तिकं प्रोक्तं जपादीनि प्रकुर्वतः ।**
**कुशेशयासनं वाऽपि वीरासनमथापि वा ॥**

[3]**जानूर्वोरन्तरे सम्यक् कृत्वा पादतले उभे ।**
**ऋजुकायः समासीनः स्वस्तिकं तत्प्रचक्षते ॥**

[1]**एकं पादमथैकस्मिन् विन्यस्योरौ तु संस्थितः ।**
**इतरस्मिंस्तथा चोरौ वीरासनमुदीरितम् ॥**

[2]**ऊर्वोरुपरि विप्रेन्द्र कृत्वा पादतले उभे ।**
**अङ्गुष्ठौ चानुबध्नीयाद्धस्ताभ्यां व्युत्क्रमेण तु ।**
**पद्मासनं वदेदेतत्सर्वेषामपि पूजितम् ॥**

### उपवीतादीनां मुख्यमन्त्राज्ञाने तत्स्थाने प्रणव–व्याहृतित्रितययोर्विकल्पेन प्रतिनिधानम्

[3]**अज्ञाता यदि वा मन्त्राः स्वस्वगृह्येषु चोदिताः ।**
**उपवीतप्रमुख्यानां तेषां वै धारणे द्विजाः ॥**

**केवलं प्रणवो वाऽपि व्याहृतित्रितयं तु वा ।**
**स्यातां विप्रादिवर्णेषु द्वावेतौ सर्वशाखिनाम् ॥**

### दर्भाणां जातयः, प्राशस्त्यम्, स्वरूपदोषाः, स्पृष्टिदोषाः, दर्भग्रहणकल्पः, चौर्यसंपादितानां कर्मानर्हत्वम्

[4]**नदीतीरेऽब्धितीरेऽद्रौ तीर्थे क्षेत्रे च कानने ।**
**जातः कुशः समस्तासु क्रियासु श्रेष्ठ उच्यते ॥**

दर्भान् विशेषतो ग्राह्याग्राह्यानाह भरद्वाजः (तु ?) – नदीतीरे इत्यादिभिः ।

प्रपा. ३५

---

¶ शेषं आचाररत्नानुवादः ।

(१) मुक्ता. ९१ ; आन. १५५.

(२) मुक्ता. १५.

(३) मुक्ता. १५ : ३२१ शौनकः .

(१) मुक्ता. १५ : ३२१ विन्यस्योरौ तु (विन्यस्योरुणि) इतरस्मिंस्तथा चोरौ (पादेऽन्यस्मिंस्तथा चोरुं) शौनकः .

(२) मुक्ता. १५ : ३२१ द्वितीयार्धं नास्ति, शौनकः .

(३) मुक्ता. १६.

(४) प्रपा. ३५–३७ ; संर. १६ (प्रेतक्रियार्थं पित्र्यधर्ममिचारार्थमेव च । दक्षिणाभिमुखश्छिन्द्यात्प्राचीनावीतिको द्विजः ॥) एतावदेव : १९४ (नवभिः सप्तभिर्दर्भैः पञ्चभिः क्रमशः कृतः । कूर्चः श्रेष्ठो मध्यमश्च कानीयांश्च समीरितः ॥ तद्ग्रन्थिर्द्व्यङ्गुला ज्ञेया तदूर्ध्वं चतुरङ्गुलम् ।) एतावदेव, प्रयोगपारिजाते. संदी. ११ (मन्त्रेण धारयेद्विप्रः पवित्रं सर्वकर्मसु । मन्त्रं विना धृतं यत्तु पवित्रमफलं भवेत् । पवित्रवन्त इत्यादि मन्त्रद्वितयमस्य तु ॥) एतावदेव, 'प्रयोगपारिजातोक्तेः' इत्युक्तम् .

पाण्डुरारुणपीताः स्युर्विप्रराड्वैश्यभूमयः ।
कृष्णा वृषलभूरन्था भूमयः संकराः स्मृताः ॥
द्विजो वैश्यो नृपः शूद्र इत्ययं स्याच्चतुर्विधः ।
गौरपीतारुणश्यामसुमनोभिर्यथाक्रमम् ॥
पुमान् स्त्री क्लीब इत्येवं तत्रापि त्रिविधः स्मृतः।
तस्माज्जातिक्रियास्वेव प्रयोक्तव्याः फलार्थिभिः॥
क्लीबो न हि प्रयोक्तव्यः स्त्रीपुंकर्मणि जातुचित् ।
स्त्रीपुंसावेव सर्वत्र प्रयोक्तव्यौ च लाभतः ॥
समन्ताद्धूसरो गाढः पुरुषश्चन्दनः कुशः ।
समस्तकर्मसु श्रेष्ठः सुमान्योऽसौ फलप्रदः ॥
समन्ततो हरिस्निग्धः कुशः कोमलपत्रकः ।
कुशः स योषिदित्युक्तस्तत्कर्मसु शुभप्रदः ॥
ह्रस्वोऽसौम्यस्तु मलिनः कुशो यः स्तवकाकृतिः ।
स नपुंसक इत्युक्तः सर्वकर्मसु निन्दितः ॥
वल्मीकस्थः श्मशानस्थ ऊषरस्थस्तरूद्भवः ।
अन्त्यजात्यालयान्तस्थः कुशः कर्मस्वशोभनः ॥
सदा घनरसान्तस्थः सदा छायाप्रवर्धितः ।
आनीय धाम्नि चोप्तश्च कुशः कर्मस्वशोभनः ॥
हीनाग्रकः स्वयं शुष्कः शुष्काग्रः कृमिदुष्टकः ।
भिन्नाग्रकः सकुसुमः कुशः कर्मस्वशोभनः ॥
पलाशाश्वत्थखदिरवटवृक्षसमीपगः ।
बिल्ववैङ्कतान्तस्थः प्रशस्तः स कुशः स्मृतः ॥
अनोकहानामन्येषां समयाभूसमुद्भवः ।
छायास्थितोऽपि हि कुशो मध्यमः सर्वकर्मसु ॥
स्नात्वा संध्योपासनादि नित्यकर्म समाप्य च ।
नित्यहोमं ततः कृत्वा तस्मिन्सतार्चिषि द्विजः ॥
दात्रं प्रणवसंयुक्तं व्याहृत्या च समस्तया ।
निष्पत्य भवनात् प्राचीमुदीचीमपि वा दिशम्॥
निष्कामेदुक्तदेशेषु यत्रास्ति कुशसंचयः ।
तत्र गत्वा सचरणौ हस्तौ प्रक्षाल्य वाग्यतः ॥
आचम्य सुमनाः सम्यक्प्राणायामं समाचरेत् ।
ततोऽनलमिनं वायुं यमं वरुणमश्विनौ ॥

ओषधीशं शचीनाथं विश्वान् देवान् सरस्वतीम् ।
देवानृषीन् पितॄन् स्कन्दं गुरुं गणपतिं ततः ॥
वसून् रुद्रांस्तथाऽऽदित्यान् ब्रह्माणं विष्णुमीश्वरम् ।
वेदांश्च हृदये ध्यायन्नेतान्देवान् पृथक् पृथक् ॥
ततो दात्रेण पूर्वास्य उदगास्योऽथवा कुशान् ।
मुष्टिमात्रोपरिष्टात्तु छिन्द्यात्प्रणवमुच्चरन् ॥
प्रेतक्रियार्थं पित्रर्थमभिचारार्थकं तथा ।
दक्षिणाभिमुखश्छिन्द्यात् प्राचीनावीतको द्विजः ॥
हीनाग्रपूर्वकांस्त्यक्त्वा कुशान् प्राग्द्विजसत्तमः।
अन्यान्सलक्षणकुशान्संगृह्णीयात्प्रयत्नतः ॥
त्रिवृच्छुल्बं कुशैः कृत्वा प्रागग्रं वोदगग्रकम् ।
वितत्य च कुशानेतान् क्षिपेत्तस्मिन् यथा पुरा ॥
पश्चाच्छुल्बेन तेनैव कुशान् बद्ध्वा दृढं यथा ।
प्रागग्रमुदगग्रं वा शुचौ देशे क्षिपेद्गृहे ॥
पित्रर्थमेकवच्छुल्बं विपरीतं वितत्य च ।
क्षिप्त्वा कुशांस्तथा बद्ध्वा स्थापयेत्तान् पृथग्बुधः ॥
ततोऽनुपहतैरेतैः कुशैः कर्माणि बुद्धिमान् ।
श्रौतस्मार्तानि सर्वाणि कुर्वीत फलभाग्भवेत् ॥
शुनाऽशुद्धवराहेण मार्जारेणैकचक्षुषा ।
खरेण कुक्कुटेनैव स्पृष्टः कर्मरिपुः कुशः ॥
कपिना कृकलासेन पतितेनान्त्यजन्मना ।
भिषजा रोगिणा स्पृष्टः कुशः कर्मस्वशोभनः ॥
देवलेन च षण्ढेन व्रात्येनाज्ञातजन्मना ।
वर्ज्यः सूतकिना स्पृष्टः कुशोऽनुष्ठेयकर्मसु ॥
रक्तश्लेष्मादिभिः स्पृष्टः क्रियायुक्तः पुरा धृतः।
उच्छिष्टजनसंस्पृष्टः कुशः कर्मविनाशकः ॥
सूतिकाऽऽत्रेयिका वेश्या ज्ञातपूर्वाभिसारिका ।
अन्याः सदोषा यास्ताभिः शः स्पृष्टः क्रियारिपुः ॥

आत्रेयिका गर्भिणी । प्रपा. ३६

दोषैरेवंविधैरन्यैरपि स्पृष्टः प्रमादतः ।
कुशः कर्मस्वयोग्यः स्यादाघ्रातः पशुभिस्तथा ॥
पिण्डकर्मणि ये युक्ताः कुशाश्च पितृतर्पणे ।
उच्छिष्टेऽपि च ये युक्तास्ते योग्या न हि कर्मसु ॥

दोषदुष्टान् कुशांस्त्यक्त्वा गुणयुक्तैः कुशैर्बुधः ।
श्रुतिस्मृत्युक्तकर्माणि कारयेत्कर्मसिद्धये ॥
आर्द्रः श्रेष्ठतमः कर्मस्वन्यः श्रेष्ठोऽपि चाकुशः ।
विश्वामित्राश्वबालौ द्वौ तथाऽर्घावितरौ स्मृतौ ॥
विधिना स्वीकृतान् दर्भान् द्विजन्माऽन्य-द्विजन्मना ।
अनुष्ठानाय चौर्येण नाऽऽहरेज्जातुचिद् बुधः ॥
तदनुज्ञां विना विप्रः कुशानाहृत्य तैर्यदि ।
कुर्यात्स्वकर्मानुष्ठानं तत्सर्वमफलं भवेत् ॥

पवित्रे कर्मभेदेन कुशसंख्याभेदः

कुर्यात्कुशैस्त्रिभिः सद्भिः पवित्रं वाऽथ पञ्चभिः ।
द्वाभ्यां वा शान्तिकाम्येषु सर्वकर्मसु शस्यते ॥
कुशैश्चतुर्भिरङ्गुल्या पवित्रे धारयेदुभे ।
भुक्तिकर्मणि नान्येषु द्विजन्माऽखिलकर्मसु ॥
चतुर्भिरभिचारेषु पितृकर्मणि चैकतः ।
तत्तत्कर्मानुरूपेण कृत्वा धृत्वा क्रियाश्चरेत् ॥

ब्रह्मपवित्रकरणकल्पः

अत्रोक्तसंख्यापिञ्जूलान्येकीकृत्य समं यथा ।
मूलानि दक्षिणे हस्ते धृत्वाऽग्राण्यन्यपाणिना ॥
दक्षहस्तेन तद्वाममनुवर्त्य यथा दृढम् ।
एकीकृत्वाऽथ मूलाग्राण्यनुवर्त्य प्रदक्षिणम् ॥
तथैवाग्रेण चाऽऽवेष्ट्य कुर्याद्ग्रन्थिं यथा दृढम् ।
पवित्रकरणं त्वेवमुदितं सर्ववेदिनाम् ॥

पवित्रस्य मानं स्थानम् अधिदेवताश्च

वलयं स्वाङ्गुलीमानं ग्रन्थिरेकाङ्गुलिप्रमः ।
चतुरङ्गुलमग्रं स्यादस्य स्थानमनामिका ॥
वलयग्रन्थिकाग्राणां ब्रह्मविष्णुमहेश्वराः ।
पवित्रस्य भवन्त्येते क्रमेणैवाधिदेवताः ॥

पित्र्यपवित्रकरणकल्पः

पूर्वोक्तप्रकारेण कुर्यादेकेन बर्हिषा ।
पवित्रं पितृकार्येषु तत्समस्तेषु भाषितम् ॥

अन्यद् ब्राह्मं यथापूर्वमनुवर्त्यैकबर्हिषा ।
कुर्यात्पवित्रं पित्र्ये स्याद्ग्रन्थिर्ब्रह्मपवित्रवत् ॥

पवित्रकस्यामन्त्रधृतस्य निष्फलत्वम् , धारणमन्त्रः , तस्य ऋषिदैवतच्छन्दांसि, शूद्रस्य धारणमन्त्रः

मन्त्रेण धारयेद्विप्रः पवित्रं सर्वकर्मसु ।
मन्त्रं विना धृतं यत्तत्पवित्रमफलं भवेत् ॥
तस्मात् पवित्रे मन्त्राभ्यां धारयेदभिमन्त्र्य च ।
पवित्रवन्त इत्यादिमन्त्रद्वितयमस्य तु ॥

मन्त्रेण पवित्रधारणं चाधिकारितावच्छेदकम्, 'मन्त्रेण धारयेत् ...... द्वितयमस्य तु ॥' इति प्रयोगपारिजातोक्तेः । संदी. ११

ऋषिर्ब्रह्मा तयोश्छन्दो जगती च बृहस्पतिः ।
देवता ब्रह्मविष्णवीशा अधिदेवा इति स्मृताः ॥
प्रणवस्तस्य मन्त्रः स्यात्समस्ता व्याहृतीस्तु वा ।
दध्यात्पवित्रमनयोरेकेन श्रुतिवर्जितः ॥

श्रुतिवर्जितः शूद्रः । प्रपा. ३६

हेमपवित्रकम्

पवित्रोक्तप्रकारेण हेम्ना कुर्यात् पवित्रकम् ।
तद्धार्यममरैर्भूपैः शुचये मङ्गलाय च ॥

अमरैः भूसुरैः । प्रपा. ३६

पवित्रस्य कर्माङ्गता

श्रौतस्मार्तानि कर्माणि यावन्तीहोदितानि वै ।
तानि सर्वाणि कुर्वीत सपवित्रकरो द्विजः ॥

पवित्रत्यागविधिः

नित्ये नैमित्तिके वाऽपि कर्मोपग्रहणे द्विजः ।
धृतं पवित्रं कर्मान्ते ग्रन्थिं मुक्त्वाऽथ तत् त्यजेत् ॥

कुशहस्तः पिबेत्तोयं कुशहस्तः समाचरेत् ।
सग्रन्थिकुशहस्तेन न कदाचिदुपस्पृशेत् ॥
भुक्त्वा ग्रन्थिं विमुच्याथ तेन पीत्वा जलं सह ।
पवित्रं तु त्यजेद्भूमौ तत्रामत्रे न जातुचित् ॥

पवित्रस्य पात्रत्यागे प्रायश्चित्तम्

विस्मृत्य यदि पात्रे तु पवित्रं विसृजेदधीः ।
प्राजापत्यं चरेत्कृच्छ्रं तत्किल्बिषविशुद्धये ॥

पवित्रस्य पुरीषोत्सर्गादौ दक्षिणश्रवणन्यासः

शमलप्रस्रवोत्सृष्टौ चण्डालान्त्यजभाषणे ।
पवित्रं करशाखास्थं दक्षिणश्रवणे न्यसेत् ॥

गोपुच्छरोमपवित्रकम्, तस्य पुनःपुनर्धार्यता त्यागनिमित्तं च

गोपुच्छरोमभिः कृत्वा पूर्वाभिहितलक्षणम् ।
पवित्रं धारयेद्विप्रः कर्मोपक्रमणे सदा ॥
रोम्णां पवित्रकरणे नियमो न कुशेष्विव ।
कुशरज्जोर्यथा स्थूलं प्रमाणं कारयेत्तथा ॥
कर्मान्ते पुनरादाय पवित्रद्वितयं द्विजः ।
शुचौ देशे विनिक्षिप्य दध्यादेतत् पुनः पुनः ॥
यद्युच्छिष्टाद्युपहतं पवित्रं चेदिदं यथा ।
तथैव ग्रन्थिमुत्सृज्य त्यजेदितरथा नहि ॥

रोम–कुश–हेमपवित्राणां मार्जने प्राशस्त्यम्

रोमाणि मध्यमे बद्ध्वा सुदृढं च कुशैः सह ।
हेमाङ्गुलीयकेनापि मार्जनं सर्वपापहम् ॥

रोमसंग्रहणे प्रशस्ता अप्रशस्ताश्च गावः

रोमसंग्रहणे विप्रप्रमुखानां द्विजन्मनाम् ।
धवलारुणपीताः स्युर्गावस्तत्र यथाक्रमम् ॥
एतासामपि सर्वासां प्रशस्ता कपिला गवाम् ।
सर्वेषां विप्रमुख्यानां रोमसंग्रहणे भृशम् ॥
अञ्जनाभा विजीर्णा गौर्वन्ध्यजातिरकर्णका ।
नवप्रसूता सरुजा चित्रा कृष्णा न शोभना ॥
स्वस्वोक्तवर्णा युवतिः सवत्सा शान्तविग्रहा ।
संपूर्णावयवा या गौः सोत्तमा रोमसंग्रहे ॥

गोरोमसंग्रहणकल्पः

स्नात्वा सम्यग्द्विजो दात्रं स्वाग्नौ निक्षिप्य पूर्ववत् ।
गां तु प्रदक्षिणीकृत्य मन्त्रेण प्रणमेदथ ॥

रुद्रमातर्वसुसुते आदित्यानां स्वसस्तथा ।
सर्वदेवात्मके गौस्त्वां नौम्यहं त्वं प्रसीद मे ॥

मन्त्रेणानेन नत्वा गां पुच्छरोमाणि दात्रतः ।
भव्यानि च्छेदयेद्विप्रः पवित्रार्थं शुभानि च ॥

कूर्चस्य दर्भसंख्या मानं निर्माणं च

गोपुच्छरोमकैर्दर्भैः पवित्रकरणक्रमः ।
आख्यातोऽनन्तरं वच्मि कूर्चस्य करणक्रमम् ॥

नवभिः सप्तभिर्दर्भैः पञ्चभिः क्रमशः कृतः ।
कूर्चः श्रेष्ठो मध्यमश्च कनीयान्स इतीरितः ॥

तद्ग्रन्थिर्द्व्यङ्गुला ज्ञेया तदूर्ध्वं चतुरङ्गुलम् ।
षोडशाङ्गुलमायाममधस्ताच्च नियोजयेत् ॥

कूर्चस्त्वसंख्यदर्भात्मकः, 'यज्ञवस्तुनि मुष्टौ च...' (कास्मृ. २।१५५) इति वचनात् । यत्तु प्रयोगपारिजाते 'नवभिः सप्तभिर्दर्भैः...... चतुरङ्गुलम् ॥' इति कूर्चलक्षणम्, तत् उपवेशनार्थकूर्चव्यतिरिक्तविषयमिति द्रष्टव्यम् । संर. १९४

पवित्रे प्राग्यथा प्रोक्ता ग्रन्थिस्तेन क्रमेण तु ।
ग्रन्थिं दद्याद्द्विजः कूर्चे तद्विधा स्यात् पवित्रवत् ॥

कूर्चविनियोगः

आसने देवतादीनामपि च स्नानवारिणि ।
पञ्चगव्यप्रयोगे च द्विजः कूर्चं प्रयोजयेत् ॥

अमृतेषु च गव्येषु पञ्चसु स्नानकर्मणि ।
पुण्याहकुम्भतोयेषु द्विजः कूर्चं प्रयोजयेत् ॥

प्रागग्रमुदगग्रं वा स्थापयेत् कूर्चमासने ।
ऋष्यर्थं देवतार्थं च पित्रर्थं दक्षिणाग्रकम् ॥

कर्मादौ संकल्पस्याऽऽवश्यकता संकल्पस्वरूपं च

[1]संकल्परहितं कर्म यच्छ्रुतिस्मृतिचोदितम् ।
यत्तो यद्यत्फलं(? यतो न सफलं ) तत्स्या-
त्संकल्प्यातः समाचरेत् ॥
पादौ करौ च प्रक्षाल्य समुपस्पृश्य वाग्यतः ।
प्राङ्मुखोदङ्मुखो वाऽपि स्थित्वा
दर्भासने शुचिः ॥
सदर्भहस्तौ जानूर्ध्वौ दक्षिणे दक्षिणोत्तरैः(?) ।
कृत्वा वारादि संस्मृत्य एतत्कर्म करोमि यत् ।
स्वमानसे संस्मरणं तत्संकल्प इतीरितः ॥

सिद्धस्योपादाने केवलमन्त्रप्रयोगः

[2]छिन्ने लूने तथा पिष्टे सांनाय्ये मार्तिके तथा ।
पश्चान्मन्त्राः प्रयोक्तव्या मन्त्रा यज्ञार्थसाधकाः ॥

## संवर्तः

आचमने कर्तृधर्माः तीर्थं निमित्तानि च

[3]अकृत्वा पादशौचं तु तिष्ठन्मुक्तशिखोऽपि वा ।
विना यज्ञोपवीतेन त्वाचान्तोऽप्यशुचिर्भवेत् ॥
आचामेद्ब्राह्मतीर्थेन सोपवीती ह्युदङ्मुखः ।
उपवीती द्विजो नित्यं प्राङ्मुखो वाग्यतः
शुचिः ॥
स्नात्वा पीत्वा तथा क्षुत्वा भुक्त्वा स्पृष्ट्वा
द्विजोत्तमः ।
अनेन विधिना सम्यगाचान्तः शुचितामियात् ॥

अशुद्ध्यापादका अवयवविन्यासाः

आसनारूढपादश्च कृतावसक्थिकस्तथा ।
आरूढपादुको वाऽपि न शुध्यति कदाचन ॥

होमादिषु पात्रतोययोर्वामहस्तस्पर्शानुमतिः

[4]होमे पर्युक्षणे श्राद्धे संध्याकर्मसु मार्जने ।
आचामे भोजने पात्रं तोयं वामेन संस्पृशेत् ॥

होमादिषु पात्रं संध्यामार्जने तोयं वामहस्तेन स्पृशे-
दित्यर्थः । मुक्ता. ३६४

कटिसूत्रस्य कर्माङ्गता

[1]कटिसूत्रं विना कर्म श्रौतस्मार्तं करोति यः ।
सर्वं तन्निष्फलं विद्यात्सोऽपि नग्न इति श्रुतिः ॥

इदं च ब्रह्मचारिगृहस्थसाधारणम् , कटिसूत्रधारणा-
भावे कर्ममात्रस्य निष्फलत्वाभिधानात् धृतवस्त्रेऽपि
नग्नत्वागमाच्च । मुक्ता. ९५

## गोभिलः

आर्द्रवासस्त्वबहिर्जानुत्वयोर्निषेधः

[2]नाऽऽर्द्रवासा जपं कुर्याद्धोमं दानं प्रतिग्रहम् ।
सर्वं तद्राक्षसं विद्याद्बहिर्जानु च यत्कृतम् ॥

कर्तुरेकवस्त्रत्ववामबाहुपरिभ्रष्टवस्त्रत्वयोर्निषेधः

[3]एकवस्त्रो न भुञ्जीत न कुर्याद्देवतार्चनम् ।
न चार्चयेद्द्विजान्नाग्नौ कुर्यादेवंविधो नरः ॥

[4]सव्यादीषत्परिभ्रष्टकटिदेशधृताम्बरः ।
एकवस्त्रं तु तं विद्याद्दैवे पित्र्ये च वर्जयेत् ॥

एकवस्त्रस्य लक्षणमाह स एव – सव्यादीषदिति ।
सव्याद्बाहुमूलात्परिभ्रष्टं कटिदेशधृतमम्बरं यस्य स
तथोक्तः । एवं द्वितीयवासोविहीनस्यापि वेदितव्यम्,
'विकच्छोऽनुत्तरीयश्च' इति तस्यापि निषेधस्मरणात् ।
स्मृच. ११४

(१) मुक्ता. २६४.

(२) बाल. १।११,१२ पृ. ३७.

(३) संस्मृ. १५, १६, १९, २१.

(४) मुक्ता. ३६४ ; आन. ७१.

(१) मुक्ता. ९५.

(२) संग. ११०. व्यासेऽप्येतत्सदृशः श्लोकः .

(३) अप. १।२२५ पृ. ४६१ न्नाग्नौ (न्नग्नः) शाता-
तपः ; स्मृच. ११४ ; पमा. २४६ पू. ; मुक्ता. २५३
न्नाग्नौ (नग्नौ) ; आन. ३२ न्नाग्नौ (नग्नीन्).

(४) स्मृच. ११४. लघुशातातपेऽप्येतत्सदृशं वचनं
वर्तते ।

कर्तुः ऋष्यादिज्ञानमात्रस्य कर्माङ्गता,
न तु ऋष्याद्युच्चारणस्य

[1]भार्गवेण तथैवोक्तं जपकालेऽस्य चिन्तनम् ।
न होमादौ कर्मकाले न चापि श्रौतकर्मणि ।
तस्मादेषां परिज्ञानमात्रं कर्तुरपेक्षितम् ॥

रेणुहरिहरगङ्गाधराद्याः प्रयोगमध्ये प्रतिमन्त्रमृष्यादिकमनुसरन्ति । तन्न कर्कादिसंमतम् । तथाहि– 'प्रयोगमध्य ऋष्यादि प्रतिमन्त्रं च न स्मरेत् । मानाभावात्प्रयोगस्य प्राशुभावस्य हानितः ॥ ' । ' एतान्यविदित्वा योऽधीतेऽनुब्रूते जपति जुहोति यजते याजयते तस्य ब्रह्म निर्वीर्यं यातयामं भवति ' इति सर्वानुक्रमण्यामुक्तत्वात् प्रतिमन्त्रमृष्यादिचिन्तनमिति चेत्, न । किंतु तत्र परिज्ञानमात्रं प्रकीर्तितम्, न तु कर्मकालोच्चारणम् (यथार्थज्ञानम् ?) । तथा चोक्तं गोभिलेन– ' भार्गवेण तथैवोक्त... ' इति । संग. ७२

## शातातपः

ब्राह्मणानामनुज्ञा– कर्मसंपत्तिवचनयोः कर्माङ्गता

[2]जपच्छिद्रं तपश्छिद्रं यच्छिद्रं यज्ञकर्मणि ।
सर्वं भवति निश्छिद्रं यस्य चेच्छन्ति ब्राह्मणाः॥
ब्राह्मणा यानि भाषन्ते मन्यन्ते तानि देवताः ।
सर्वदेवमया विप्रा न तद्वचनमन्यथा ॥
उपवासो व्रतं चैव स्नानं तीर्थफलं तपः ।
विप्रैः संपादितं यस्य संपन्नं तस्य तत्फलम् ॥
संपन्नमिति तद्वाक्यं वदन्ति ऋषिदेवताः ।
प्रणम्य शिरसा सार्धमग्निष्टोमफलं लभेत् ॥
ब्राह्मणा जङ्गमं तीर्थं निर्मलं सार्वकामिकम् ।
तेषां वाक्योदकेनैव शुध्यन्ति मलिनो जनाः ॥

स्वगृह्योक्तमात्राचरणेन कृतार्थता

[3]बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म प्रचोदितम् ।
तस्य तावति शास्त्रार्थे कृते सर्वं कृतं भवेत् ॥

(१) संग. ७२.

(२) शास्मृ. १।३०–३४.

(३) मुक्ता. १५ ; सस्मृ. २६ तावति (तावत्तु).

श्रौतस्मार्तेषु सर्वशाखोपसंहारः

[1]श्रौतेषु सर्वशाखोक्तं सर्वस्यैव यथोचितम् ।
स्मार्तं साधारणं तेषु गार्ह्येष्वपि च कर्मसु ॥
[2]सर्वशाखोपसंहारादुक्तः श्रौतो यथा विधिः ।
सर्वस्मृत्युपसंहारात्स्मार्तोऽप्युक्तस्तथा विधिः ॥

मुख्यकर्मकर्तुः प्रतिनिधिः

[3]श्रौतं कर्म स्वयं कुर्यादन्योऽपि स्मार्तमाचरेत् ।
अशक्तौ श्रौतमप्यन्यः कुर्यादाचारमन्ततः ॥

(१) अन्ततः उपक्रमात्परतः । संत. ९४३
(२) अन्यः ऋत्विजोऽप्यन्यः, नित्यादन्य इत्यर्थः । आन. ६३

शूद्रानीत–क्रयक्रीतसमिदादीनां कर्मानर्हता

[4]समित्पुष्पकुशादीनि ब्राह्मणः स्वयमाहरेत् ।
शूद्रानीतैः क्रयक्रीतैः कर्म कुर्वन्पतत्यधः ॥

आदिशब्देन दूर्वादि । उत्तरार्धादिदमपि ज्ञायते– स्वस्याऽऽहरणाशक्तौ ब्राह्मणक्षत्रियवैश्याहृतैः कर्मकरणे दोषो नास्तीति । लक्षपुष्पार्चनादौ तु क्रयक्रीतनिषेधो न, ' लक्षपुष्पार्चनादौ तु क्रयक्रीतमपीष्यते । ' इति मन्त्रकोशकारोक्तेः । आदिशब्देन दूर्वादिलक्षपूजनं गृह्यते । संर. १५

सपवित्रकरस्यैव सव्यापसव्ययोः कर्माङ्गता

[5]सव्यापसव्ये कुर्वीत सपवित्रकरो बुधः ॥

(१) मुक्ता. १५.

(२) मुक्ता. १५ ; आर. ६ शाखोप (श्रुत्युप) ; सस्मृ. २६.

(३) स्मृच. १६३ कर्म (यत्नात्) ; पमा. २९२ कर्म (यत्तत्) ; संत. ९४३ ; मुक्ता. ३५५ दाचारमन्ततः (दाचमनं ततः) शेषं पमावत् ; आन. ६३ मुक्तावत् ; ७२ पमावत्, पू.

(४) प्रर. ५० कुशा (फला) पतत्यधः (व्रजत्यधः) ; विपा. १६४ (भागः २) नीतैः (हृतैः) पतत्यधः (व्रजत्यधः) संग्रहे ; प्रका. ३४ पुष्पकुशादीनि (कुशफलादीनि) पतत्यधः (व्रजत्यधः) ; संर. १५.

(५) प्रपा. ३५.

सुवर्णरजतकुशकरत्वं कर्तुर्धर्मः

[१]जपे होमे तथा दाने स्वाध्याये पितृतर्पणे ।
अशून्यं तु करं कुर्यात्सुवर्णरजतैः कुशैः ॥

## लघुशातातपः

कर्तुरंसपरिभ्रष्टोत्तरीयत्वस्य निषेधः

[२]सव्यादंसात्परिभ्रष्टं कटिदेशे धृताम्बरम् ।
एकवस्त्रं तु तद्विद्याद्दैवे पित्र्ये च वर्जयेत् ॥

(१) द्विवस्त्रस्याप्येकवस्त्रत्वे शातातपः— सव्यादंशादिति । क्रुर. ४८

(२) अत्र अम्बरपदमुत्तरीयपरम् । तथा च सव्यादंसात्परिभ्रष्टं कटिदेशधृतं चाम्बरं यस्येत्यर्थः । पप्र. ८३

(३) एकवस्त्रस्य लक्षणमाह स एव— सव्यादंसादिति । सव्येंऽसे पटहीनम्, कटिदेश एव भृतमम्बरं येन सः तथोक्तः । मुक्ता. २५३

(४) अत्र एकवस्त्रः तृतीयवासोहीन इत्यर्थः । आन. ३२

(५) सव्यांसे उत्तरीयाधारणे कट्यादौ तद्धारणेऽपि एकवस्त्रत्वमेवेति भावः । संदी. ७

पादुकावर्जननिमित्तानि

[३]अग्न्यगारे गवां गोष्ठे देवतानां च संनिधौ ।
आहारे जपकाले च पादुकां च विवर्जयेत् ॥

आचमनकर्तुर्धर्माः

शिरः प्रावृत्य कण्ठं वा अप्सु मुक्तशिखोऽपि वा ।
अकृत्वा पादशौचं तु आचान्तोऽप्यशुचिर्भवेत् ॥

ब्राह्मणानामच्छिद्रवचनस्य कर्माङ्गता

[२]अच्छिद्रमिति यद्वाक्यं वदन्ति क्षितिदेवताः ।
प्रणम्य शिरसा ग्राह्यमग्निष्टोमफलैः सह ॥

## वृद्धशातातपः

दक्षिणश्रवणस्पर्शनिमित्तानि

[३]वातकर्मणि निष्ठीव्य दन्तोत्सर्गे तथा क्षुते ।
पतितस्य च संलापे दक्षिणं श्रवणं स्पृशेत् ॥

## पराशरः

ब्राह्मणानामच्छिद्रवचनस्य कर्मसंपत्तिहेतुत्वम्

[४]अच्छिद्रमिति यद्वाक्यं वदन्ति क्षितिदेवताः ।
प्रणम्य शिरसा ग्राह्यमग्निष्टोमफलं हि तत् ॥

न्यूनातिरेकदोषोपशान्तिः विप्रवाक्याद्भवतीत्याह— अच्छिद्रमिति । विप्रवाक्यस्य छिद्रपरिपूरकत्वं संभावयितुमग्निष्टोमसाम्येन तद्वाक्यं प्रशस्यते । अन्वयव्यतिरेकाभ्यां विप्रवाक्यस्य प्रयोजकत्वमाहाऽऽपस्तम्बः— 'पूर्णेऽपि

---

(१) स्मृच. १०८ ; पमा. २३८ तथा दाने ( च दाने च ) ; मर. ३५ पमावत् ; मुक्ता. २३०. लघुहारीतेऽपि एतत्सदृशः श्लोको द्रष्टव्यः ।

(२) लशास्मृ. १११ कटि ( नाभि ) ; अप. १।२२५ पृ. ४६१ कटिदेशे धृताम्बरम् ( कथंचिद्विवृताम्बरम् ) तु तत् ( तु तं ) शातातपः ; ब्रक. ५७ भ्रष्टं ( भ्रष्टः ) धृताम्बरम् ( धृताम्बरः ) तु तत् ( तु तं ) शातातपः ; चव्र. ३५–३६ दंसा ( दंशा ) देशे धृता ( देशस्थिता ) शातातपः ; चदा. ९१ भ्रष्टं ( भ्रष्ट ) देशे धृताम्बरम् ( देशभृताम्बरः ) तु तत् ( तु तं ) शातातपः ; क्रुर. ४८ दंसा ( दंशा ) तु तत् ( तु तं ) शातातपः ; निप्र. २८ सर्वं क्रुरवत् ; पप्र. ८३ भ्रष्टं ( भ्रष्ट ) देशे धृताम्बरम् ( देशधृताम्बरः ) तु तत् ( तु तं ) क्रमेण विष्णुपुराणम् ; मुक्ता. २५२ पूर्वार्धे (सव्यादंसाद्भ्रष्टपटं कटिदेशभृताम्बरम् । ) तु तत् ( तु तं ) पराशरः ; आन. ३२ पप्रवत्, पराशरः ; इन्दु. १३ पप्रवत्, शातातपः ; संदी. ६ पप्रवत्, शातापतः .

(१) लशास्मृ. १२६–१२७.

(२) लशास्मृ. १७२ ; संत. ८८० सह (समम्) शातातपपराशरौ.

(३) अप. १।१९६.

(४) पस्मृ. ६।५१–५२ ; संत. ८८० फलं हि तत् ( फलैः समम् ) शातातपपराशरौ.

कालनियमे न शुद्धिर्ब्राह्मणैर्विना । अपूर्णेष्वपि कालेषु शोधयन्ति द्विजोत्तमाः ॥ ' । पमा.

**[1]जपच्छिद्रं तपश्छिद्रं यच्छिद्रं यज्ञकर्मणि ।**
**सर्वं भवति निश्छिद्रं ब्राह्मणैरुपपादितम् ॥**

महाफलसाधनेषु यज्ञादिष्वपि छिद्रपूर्तिर्विप्रवाक्यसाध्या, किमुतास्मिन्प्रायश्चित्तव्रते इत्यभिप्रेत्याह– जपच्छिद्रमिति । पमा.

आपत्काले ब्राह्मणस्य प्रतिनिधानम्

**[2]व्याधिव्यसनिनि श्रान्ते दुर्भिक्षे डामरे तथा ।**
**उपवासो व्रतं होमो द्विजसंपादितानि वै ॥**

आपत्काले स्वयं व्रतं कर्तुमशक्तश्चेत् तदा ब्राह्मणैः कारयेदित्याह– व्याधिव्यसनिनीति । व्याधिना व्यसनी राजयक्ष्मादिप्रबलरोगग्रस्तः । श्रान्तः आहवाध्वगमनादिना । तयोरुभयोः व्रतं पित्रादिरनुतिष्ठेत् । तदाह आपस्तम्बः– ' अशक्तस्यापि बालस्य पिता वा यदि वा गुरुः । तद्व्रतं तस्य गृह्णीयात्ततो मुच्येत किल्बिषात् ॥ ' इति । दुर्भिक्षं दैविको दोषः । डामरं परराजाद्युपप्लवः । तत्रोभयत्राऽऽवश्यकबहुकुटुम्बभरणाद्यवरुद्धः तदनवरुद्धेन सख्यादिना व्रतं कारयेत् । पमा.

अत्यन्तापदि ब्राह्मणाशीर्वचनस्य कर्मफलसंपादकत्वम्

**अथवा ब्राह्मणास्तुष्टाः सर्वं कुर्वन्त्यनुग्रहम् ।**
**सर्वान्कामानवाप्नोति द्विजसंपादितैरिह ॥**

अत्यन्तापदमभिप्रेत्य पक्षान्तरमाह– अथवेति । ब्राह्मणा वेदपारगा महान्तः पूर्वकृतोपकारादिना तुष्टाः सन्तः ' अस्यामापदि निर्दोषस्त्वम् ' इत्यनुगृह्णन्ति, तदा तावतैवास्य विशुद्धिः । अनुष्ठानमन्तरेणापि महापुरुषवचनमात्रसंपादितैराशीर्विशेषैरशेषकामप्राप्तिर्भवति, तत्र पापक्षयो भवतीति को विस्मयः ? महापुरुषस्य गुरुपित्रादेः संकल्पमात्रादेव कामप्राप्तिराथर्वणे श्रूयते– ' यं यं लोकं मनसा संविभाति विशुद्धसत्त्वः कामयते यांश्च कामान् । तं तं लोकं जयते तांश्च कामान्तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः ॥ ' इति । पमा.

(१) पस्मृ. ६।५२–५३.
(२) पस्मृ. ६।५३–५५.

व्रते ब्राह्मणानुज्ञाया आवश्यकता

**[1]स्वयमेव व्रतं कृत्वा ब्राह्मणं योऽवमन्यते ।**
**वृथा तस्योपवासः स्यान्न स पुण्येन युज्यते ॥**

इदानीं पण्डितंमन्यतया विप्रवाक्यमवज्ञाय स्वेच्छयैव किंचिद्व्रतं शास्त्रीयत्वेन परिकल्प्यानुतिष्ठतो न पापनिवृत्तिरित्याह– स्वयमेवेति । स्वकपोलकल्पितव्रतस्य पापनिवर्तकत्वाभावः शातातपेन स्पष्टीकृतः– 'यद्विना धर्मशास्त्रेण प्रायश्चित्तं विधीयते । न तेन शुद्धिमाप्नोति प्रायश्चित्ते कृतेऽपि सः ॥ ' इति । पमा.

ब्राह्मणवचनस्य प्रशंसा

**[2]ब्राह्मणा यानि भाषन्ते मन्यन्ते तानि देवताः ।**
**सर्वदेवमयो विप्रो न तद्वचनमन्यथा ॥**

विशिष्टमातापितृजन्यत्वं ब्राह्मणत्वम् । न केवलं तावतैव ब्राह्मणवाक्यस्य प्रशस्तत्वम्, किं त्वनेकदेवताप्रतिपादकानां वैदिकमन्त्राणां धारणया सर्वदेवतात्मकत्वेनापि तद्वाक्यं प्रशस्तमित्याह– ब्राह्मणा इति । ब्रह्म वेदः । निरन्तरं तन्निष्ठाः सन्तस्तदर्थं यथावद्ब्रुवाणा ब्राह्मणाः । अतो वेदविद्वचनं देवता अनुमन्यन्ते । तस्य च सर्वदेवमयत्वं श्रूयते– ' यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ति ' (तैआ. २।१५।१) इति । अङ्गिरा अपि– ' ब्राह्मणो देवताः सर्वाः स च सर्वस्य दैवतम् । ' इति । पमा.

**§[3]उपवासो व्रतं चैव स्नानं तीर्थं जपस्तपः ।**
**विप्रसंपादितं यस्य संपूर्णं तस्य तत्फलम् ॥**

§ अत्र विद्वन्मनोहरा व्याख्या– ननु प्रतिनिधिनाऽनुष्ठापयितुर्न्यूनफलतायां तद्विधानमनादरणीयं स्यादित्यत आह– उपवास इति । द्रव्यदानादिना संतोषितैर्विप्रैर्यस्यासमर्थस्य यजमानस्य कर्तव्यमुपवासादिकं संपाद्यते तस्य तेषामुपवासादीनां फलं संपूर्णमेव भवति, नान्यनिष्पादितत्वेन न्यूनमिति । अत एवाऽऽह जैमिनिः– ' तस्मिंश्च फलदर्शनात् ' इत्यनेन प्रतिनिधातुरेव फलम्, न प्रतिनिधेरिति ।

(१) पस्मृ. ६।५९–६०. (२) पस्मृ. ६।६२–६३.
(३) पस्मृ. ६।६३–६४ ; कृभ. ८७८ (उपवासो व्रतं होमस्तीर्थस्नानजपादिकम् । विधेः संपादितं यस्य संपन्नं तस्य तत्फलम् ॥ ).

'यदेव विद्यया करोति.... तदेव वीर्यवत्तरं भवति' (छाउ. १।१।१०) इति श्रुतौ विद्यासंयुक्तं कर्म केवलात् कर्मणः प्रशस्तमिति श्रुतम्। तेनैव न्यायेन विद्यासंयुक्तं (? विप्रसंपादितं) व्रतं केवलाद्व्रतात्प्रशस्तमित्याह– उपवास इति। विप्रसंपादितं विप्रैरनुज्ञातम् उपवासादिकम्। फलसंपूर्तिः निःशेषेणाशुद्धिनिवृत्तिः। पमा.

द्विराचमननिमित्तानि

[1]**स्नात्वा पीत्वा क्षुते सुते भुक्त्वा रथ्योपसर्पणे।**
**आचान्तः पुनराचामेद्वासो विपरिधाय च॥**

द्विराचमननिमित्तान्याह– स्नात्वेति। पमा.

दक्षिणश्रवणस्पर्शनिमित्तानि दक्षिणश्रवणप्रशंसा च

[2]**क्षुते निष्ठीवने चैव दन्तोच्छिष्टे तथाऽनृते।**
**पतितानां च संभाषे दक्षिणं श्रवणं स्पृशेत्॥**

(१) अयं च मुख्याचमनासंभवेऽनुकल्पः। ब्रक. १३९

(२) आचमनप्रतिनिधित्वेन श्रोत्रस्पर्शो निमित्तान्याह– क्षुत इति। पमा.

[3]**प्रभासादीनि तीर्थानि गङ्गाद्याः सरितस्तथा।**
**विप्रस्य दक्षिणे कर्णे सन्तीति मनुरब्रवीत्॥**

[4]**अग्निरापश्च वेदाश्च सोमसूर्यानिलास्तथा।**
**सर्वे एव तु विप्रस्य श्रोत्रे तिष्ठन्ति दक्षिणे॥**

(१) श्रोत्रस्पर्शस्य शुद्धिहेतुत्वमर्थवादपुरःसरमुपपादयति– प्रभासादीनीति। पमा.

(२) विप्रोक्तेः क्षत्रियादीनां दक्षिणकर्णस्पर्शो न। विप्रपदमाचमनकर्तृमात्रोपलक्षणमित्याचारचन्द्रोदयः। तन्न, उपलक्षणत्वे मानाभावात्। इदं चाऽऽचमनासंभवे। तथा च हरनाथीये मार्कण्डेये– 'कुर्यादाचमनं स्पर्शं गोपृष्ठस्यार्कदर्शनम्। कुर्वीताऽऽलम्भनं वाऽपि दक्षिणश्रवणस्य च॥ यथाविभवतो ह्येतत्पूर्वाभावे परं परम्॥'। विज्ञानेश्वरादावप्येवम्। टोडरानन्दे पराशरः– 'गङ्गा च दक्षिणे श्रोत्रेऽनामिकायां हुताशनः। उभयोः स्पर्शने चैव तत्क्षणादेव शुध्यति॥' इति। आर. १९

रात्रौ स्नानादिनिषेधः

[1]**स्नानं दानं जपो होमः कर्तव्यो राहुदर्शने।**
**अन्यदा त्वशुची रात्रिस्तस्मात्तां परिवर्जयेत्॥**

स्नानदृष्टान्तेन दानादीनामपि प्रतिप्रसवमाह– स्नानमिति। यद्यपि रात्रौ दानादिप्रतिषेधो न मूलवचने प्रस्तुतः, तथाऽपि शास्त्रान्तरसिद्धं प्रतिषेधं हृदि निधायायं प्रतिप्रसव इति द्रष्टव्यम्। अन्यदा राहुदर्शनरहिते काले रात्रिः स्नानादिष्वशुचिः, तस्मात्स्नानादिकं चिकीर्षुस्तां रात्रिं परिवर्जयेत्। पमा.

उभयोर्हस्तयोः पवित्रधारणम्

[2]**स्नाने दाने जपे होमे दैवे पित्र्ये च कर्मणि।**
**सव्यापसव्यौ कर्तव्यौ सपवित्रौ करौ द्विजैः॥**

होमकाले स्वाध्याये दानकाले चान्तरागमने प्रायश्चित्तम्

[3]**द्वौ विप्रौ ब्राह्मणाग्नी च दम्पती गोद्विजोत्तमौ।**
**अन्तरेण यदा गच्छेत्कृच्छ्रं सान्तपनं चरेत्॥**

---

(१) पस्मृ. १२।१८.

(२) पस्मृ. १२।१९; अप. १।१९६ पृ. २८०; ब्रक. १३९; आर. १९ निष्ठीवने (निष्ठीविते) शाङ्खायनः; संग. १११ दन्तोच्छिष्टे (उच्छिष्टे च) शाकटायनः: २७५ सांख्यायनः; संदी. २१ निष्ठीवने चैव दन्तोच्छिष्टे (निष्ठीविते चैव दन्तश्लिष्टे).

(३) पस्मृ. १२।२०; ब्रक. १३९; स्मृच. ९९ सन्तीति (वसन्ति); मुक्ता. २३६; संदी. २१–२२.

(४) पस्मृ. १२।२१; ब्रक. १३९ (आदित्यो वरुणः सोमो अग्निर्वायुस्तथैव च। विप्रस्य दक्षिणे कर्णे नित्यं तिष्ठन्ति देवताः॥); स्मृच. ९९ (आदित्यो वरुणः सोमो वह्निर्वायुस्तथैव च। विप्रस्य दक्षिणे कर्णे नित्यं तिष्ठन्ति देवताः॥); मुक्ता. २३६ स्मृचवत्; आर. १९ (आदित्या वसवो रुद्रा वायुरग्निश्च धर्मराट्। विप्रस्य दक्षिणे कर्णे सर्वे तिष्ठन्ति सर्वदा॥) शाङ्खायनः; संग. १११ तु (हि) श्रोत्रे (कर्णे) शाकटायनः; संदी. २२ स्मृचवत्.

(१) पस्मृ. १२।२३.

(२) चदा. ९१; निप्र. ३७ त्रौ करौ (त्रकरौ).

(३) प्रपा. ३२; संर. ७९ ग्नी च (ग्नी वा).

[१]होमकाले तथा दोहे स्वाध्याये दानसंग्रहे ।
अन्तरेण यदा गच्छेद्द्विजश्चान्द्रायणं चरेत् ॥

अत्र अग्नियजमानयोर्मध्ये केनाप्यन्तरागमने कृते तस्य प्रायश्चित्तमुच्यते पराशरप्रायश्चित्तकाण्डे— द्वौ इति । एतदकर्मकालविषयं ज्ञेयम् । कर्मकालविषये तु विशेष उच्यते तत्रैव— होमकाल इति ।

$प्रपा. ३२

परशाखीयकर्मानुष्ठाननिषेधः

[२]यः स्वशाखां परित्यज्य परशाखां समाश्रयेत् ।
अप्रमाणमृषिं कृत्वा सोऽन्धे तमसि मज्जति ॥

'ऊनो वाऽप्यतिरिक्तो वा' इति वचनम् 'यः स्वशाखां परित्यज्य ..' इति वचनं च विरुद्धानुष्ठाननिषेधार्थम् । अथवाऽयं भावः— कस्यांचिच्छाखायां बहुवित्तव्ययायाससाध्यत्वेन निर्णीतं यत्कर्म तदेव चेदन्यस्यां शाखायामल्पवित्तव्ययायाससाध्यत्वेन प्रसिद्धम्, तत्र महाकर्मणः फलाधिक्यं मत्वा शाखान्तरदृष्टे तत्कर्मणि कश्चित्प्रवर्तेत, अलसस्तु पुनरल्पकर्मणि, तयोश्च स्वशाखोक्तकर्मपरित्यागः परोक्ताविहितकर्मनिष्पत्तिश्च स्यात्, तद्वारणाय 'ऊनो वा' इति, 'यः स्वशाखाम्' इति च ।

कृभ. ११७२

## बृहत्पराशरः

मन्त्रस्य ऋषिदैवतच्छन्दोविनियोगब्राह्मणज्ञानस्य कर्माङ्गत्वम्, ऋष्यादिस्वरूपं च

[३]छन्दोभिर्विनियोगैश्च मन्त्रब्राह्मणसंयुतम् ।
एतद्धीनं न कुर्वीत कुर्याच्चेत्स्यात्तदासुरम् ॥
मृत्युभीतैः पुरा देवैरात्मनश्छादनाय च ।
छन्दांसि संस्मृतानीह छादितास्तैस्ततोऽमराः ॥
छादनाच्छन्द उद्दिष्टं वाससीवाथवाऽऽकृतेः ।
छन्दोभिरावृतं सर्वं विद्यात्सर्वत्र नान्यथा ॥
यस्मिन्मन्त्रे तु यो देवस्तेन देवेन चिह्नितम् ।
मन्त्रं तद्दैवतं विद्यात्सैव तस्य तु देवता ॥
येन यदृषिणा दृष्टं सिद्धिः प्राप्ता तु येन वै ।
मन्त्रेण तस्य स प्रोक्तो मुनेर्भावस्तदात्मकः ॥
यत्र कर्मणि चाऽऽरब्धे जपहोमार्चनादिके ।
क्रियते येन मन्त्रेण विनियोगस्तु स स्मृतः ॥
अस्य मन्त्रस्य चार्थोऽयमयं मन्त्रोऽत्र वर्तते ।
तत्तस्य ब्राह्मणं ज्ञेयं मन्त्रस्येति श्रुतिक्रमः ॥
एतद्धि पञ्चकं ज्ञात्वा क्रियते कर्म यद्द्विजैः ।
तदनन्तफलं तेषां भवेद्वेदनिदर्शनात् ॥

अविकलस्यैव कर्मणः सफलत्वम्

एकांशेनापि यन्न्यूनं कुर्यात्कर्म द्विजोत्तमाः ।
तेनासौ हन्यते कर्ताऽमृतो गर्ह्यत्वमृच्छति ॥
कुर्वन्नज्ञो द्विजः कर्म जपहोमादि किंचन ।
नासौ तस्य फलं विन्देत्क्लेशमात्रं हि तस्य तत् ॥

स्नानमधिकारिविशेषणम्

[१]अस्नातो नाऽऽचरेत्कर्म जपहोमादि किंचन ॥
प्रातःस्नायी हि यो विप्रः सोऽर्हः स्यात्सर्वकर्मसु ।
तत्कृतं कर्म यत्किंचित्तत्सर्वं स्याद्यथार्थवत् ॥

श्रद्धा–विध्यनतिक्रम–शौच–मनःसमाधानानि कर्तृधर्माः

विधिदृष्टं तु यत्कर्म करोत्यविधिना तु यः ।
न किंचित्फलमाप्नोति क्लेशमात्रं हि तस्य तत् ॥
उत्पद्यन्ते जले मत्स्या विपद्यन्ते तु तत्र च ।
तिष्ठन्तोऽपि च ते स्नानफलं नैवाऽऽप्नुयुर्यतः ॥
विधिहीनं भावदुष्टं कृतमश्रद्धयाऽपि च ।
तद्धरन्त्यसुरास्तस्य मूढत्वादकृतात्मनः ॥

---

$ संर. प्रपावत् ।

(१) प्रपा. ३२ ; संर. ७९ दान (दार).

(२) शाम. ३ ; कृभ. ९८५, ११७२ (=).

(३) बृपसं. २।३९–४९ आदर्शे '४८' इत्यङ्कस्थाने '४९' इत्यङ्कः प्रमादेन मुद्रितः.

(१) बृपसं. २।९४, ९७–९८, १४७–१५०, १५४, १६४–१६५, १८५, २०१, २२०–२२२.

श्रद्धाविधिसमायुक्तं यत्कर्म क्रियते नृभिः ।
शुचिभिरेकचित्तैश्च तदानन्त्याय कल्पते ॥

स्वरवर्णसंपन्नानामेव मन्त्राणां सफलत्वम्

स्वरतो वर्णतः सम्यक् संध्याध्यानजपादिषु ।
सर्वे मन्त्राः प्रयोक्तव्या हीनाः स्युरफला नृणाम् ॥

प्राणायामकल्पः

प्रत्योङ्कारसमायुक्ताः प्रणवाद्यन्तकास्तथा ।
महाव्याहृतयः सप्त दैवतार्षादिसंयुताः ॥
प्रणवान्ता च गायत्री शिरस्तस्यास्तथैव च ।
त्रिरावर्तनमेतस्याः प्राणायामो विधीयते ॥

दर्भप्रतिनिधयः

दर्भैर्लोहितदर्भैश्च काशवीरणबल्वजैः ।
शूकधान्यतृणैर्वाऽपि दर्भकार्यं श्रयेद्द्विजः ॥

कर्तुः शुष्कवस्त्रतार्द्रवस्त्रतयोर्व्यवस्था

यज्जले शुष्कवस्त्रेण स्थले चैवाऽऽर्द्रवाससा ।
कुर्याद्धोमं जपं दानं तत्सर्वं निष्फलं भवेत् ॥

हस्तस्थिततीर्थानि

पञ्च तीर्थानि विप्रस्य करे तिष्ठन्ति दक्षिणे ।
ब्राह्मं दैवं तथा पित्र्यं प्राजापत्यं तु सौमिकम् ॥
ब्राह्मं पश्चिमलेखायां दैवं ह्यङ्गुलिमूर्धनि ।
प्राजापत्यं कनिष्ठादौ मध्ये सौम्यं विजानतः ॥
अङ्गुष्ठस्य प्रदेशिन्या मध्ये पित्र्यं प्रतिष्ठितम् ॥

मन्त्रसंबन्धिच्छन्दऋष्यादिपञ्चाङ्गज्ञानस्य कर्माङ्गत्वम् ,
स्वरवर्णसंपन्नस्यैव मन्त्रस्य विनियोगः

[१]छन्दो दैवतमार्षं च विनियोगं च ब्राह्मणम् ।
मन्त्रं पञ्चविधं ज्ञात्वा द्विजः कर्म समाचरेत् ॥
स्वरतो वर्णतश्चैव परिपूर्णं भवेद्यथा ।
हीनं न विनियुञ्जीत मन्त्रं तु मात्रयाऽपि च ॥

दानादीनां फलसमृद्धिकरा गुणाः

[२]प्रच्छन्नानि च दानानि ज्ञानं च निरहंकृतम् ।
जप्यानि च सुगुप्तानि तेषां फलमनन्तकम् ॥

(१) बृपसं. ४।४०–४२.
(२) बृपसं. ४।७१ ; आर. ७ वृद्धपराशरः.

देवादीनां दानार्थकनिपातनियमः

[१]स्वाहाकारो वषट्कारो हन्तकारस्तथा स्वधा ।
देवानां भागधेयौ द्वावन्यश्च मनुजन्मनाम् ।
पितॄणां च चतुर्थस्तु इति वेदनिदर्शनम् ॥

असमर्थस्यैव दक्षिणानुकल्पः

सत्यामर्थस्य संपत्तौ न कुर्याद्धीनदक्षिणम् ।
तत्कृतं च भवेद्व्यर्थं प्राप्नुयात्पशुयोनिताम् ॥

आचमननिमित्तानि

स्नात्वा पीत्वा च भुक्त्वा च सुप्त्वा तप्त्वा तथैव च ।
गत्वा रथ्यादिके चैव शुद्धिराचमनेन तु ॥

दैवपित्र्यकर्मणोस्तिथिव्याप्तिनियमः

[२]दैवे कर्मणि संप्राप्ते तिथिर्यत्रोदितो रविः ।
सा तिथिः सकला ज्ञेया विपरीता तु पैतृके ॥

कर्मभेदेन दर्भगुणभेदः दर्भस्तुतिश्च

हरिता यज्ञिया दर्भाः पीतकाः पाकयाज्ञिकाः ।
सकुशाः पितृदैवत्याश्छिन्ना वै वैश्वदैविकाः ॥
दर्भमूले स्थितो ब्रह्मा दर्भमध्ये जनार्दनः ।
दर्भाग्रे शङ्करस्तस्मौ दर्भा देवत्रयान्विताः ॥

वैकल्पिकपदार्थेषु प्रथमपरिगृहीतस्यैव सर्वदापरिग्रहनियमः

[३]विकल्पेषु च सर्वेषु स्वयमेवैकमादितः ।
अङ्गीकरोति यं कर्ता स विधिस्तस्य नेतरः ॥

दक्षिणश्रवणस्पर्शनिमित्तानि श्रवणस्पर्शहेतुश्च

[४]विप्रः क्षुत्कृत्य निष्ठीव्य कृत्वा चानृतभाषणम् ।
वचनं पतितैः कृत्वा दक्षिणं श्रवणं स्पृशेत् ॥
विप्रस्य दक्षिणे कर्णे नित्यं वसति पावकः ।
अङ्गुष्ठे दक्षिणे पाणौ तस्मात्तेन च स स्पृशेत् ॥

(१) बृपसं. ६।८३–८४, ३०४, ३४४.
(२) बृपसं. ७।१०८, ३३०–३३१.
(३) बृपसं. ७।३५३ ; स्मृचं. ८८३ (=).
(४) बृपसं. ८।२९६–२९७.

## अत्रिः

पत्न्या दक्षिणतोऽवस्थानम्

[1]**श्राद्धे यज्ञे विवाहे च पत्नी दक्षिणतः सदा ॥**

प्राणायामस्वरूपम्

[2]**सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।**
**त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥**

पञ्चगव्ये शकृदादिपरिमाणम्

[3]**शकृद्द्विगुणगोमूत्रं सर्पिर्दद्याच्चतुर्गुणम् ।**
**क्षीरमष्टगुणं देयं पञ्चगव्ये तथा दधि ॥**

मौननिमित्तानि

**पुरीषे मैथुने होमे प्रस्रावे दन्तधावने ।**
**स्नानभोजनजप्येषु सदा मौनं समाचरेत् ॥**

कर्तुः प्रौढपादत्वनिषेधः

**स्नानं दानं जपं होमं भोजनं देवतार्चनम् ।**
**प्रौढपादो न कुर्वीत स्वाध्यायं पितृतर्पणम् ॥**

उच्छिष्टतादोषापवादः

[4]**मधुपर्के च सोमे च अप्सु प्राणाहुतीषु च ।**
**नोच्छिष्टस्तु भवेद्विप्र आत्रेयवचनं यथा ॥**

ब्रह्मग्रन्थिमत्पवित्रकस्योभयहस्तधारणम्,
तस्य दर्भवटोश्च विषयभेदः

[5]**उभाभ्यामपि पाणिभ्यां विप्रैर्दर्भपवित्रके ।**
**धारणीये प्रयत्नेन ब्रह्मग्रन्थिसमन्विते ॥**

[1]**ब्रह्मयज्ञे जपे चैव ब्रह्मग्रन्थिर्विधीयते ।**
**भोजने वर्तुलः प्रोक्त एवं धर्मो न हीयते ॥**

(१) अत्राङ्गुलिनियमो मत्स्यपुराणे दर्शितः— ‘धार्योऽनामिकया दर्भो ज्येष्ठानामिकयाऽपि वा । उभयानामिकाभ्यां तु धार्ये दर्भपवित्रके ॥’ । अनामिका उपकनिष्ठिका । स्मृच. १०८

(२) यत्तु— ‘उभाभ्यामेव पाणिभ्यां विप्रैर्दर्भपवित्रकौ । धारणीयौ प्रयत्नेन ब्रह्मग्रन्थिसमन्वितौ ॥’ इति, तत् ‘ब्रह्मयज्ञे जपे होमे ब्रह्मग्रन्थिर्विधीयते ।’ इति विधौ कुत्र ब्रह्मग्रन्थिरित्यपेक्षायां हस्तद्वयपवित्रयोर्ब्रह्मग्रन्थिविधिपरम्, इति न कुशबटुरूपे सर्वकर्माङ्गपवित्रे ब्रह्मग्रन्थिप्रसङ्गः । एवम् ‘भोजने वर्तुलं प्रोक्तमेवमाचमने स्मृतम् ।’ इति बटुपरमेव । ‘ग्रन्थिर्यस्य पवित्रस्य न तेनाऽऽचमनं चरेत् ।’ इति निषेधो ब्रह्मग्रन्थिविषयः, ‘न भुञ्जीयान्न चाऽऽचामेद्ब्रह्मग्रन्थौ करे स्थिते ।’ इति वचनात् । ब्रह्मयज्ञजपाङ्गाचमने ब्रह्मग्रन्थेः प्रधानानुज्ञानादनुज्ञा । निप्र. ३७-३८

(३) ब्रह्मग्रन्थिलक्षणं गरुडपुराणे— ‘अस्त्यन्यो वैष्णवो मार्गो ब्रह्मग्रन्थिविनिर्मितौ । सकृत्प्रदक्षिणीकृत्य पवित्रमभिधीयते । तद्ब्रह्मग्रन्थिमत्प्रोक्तं पवित्रं वेदवेदिभिः ॥’ । पवित्रकर्तुरभिमुखप्रदेशो ब्रह्ममार्गः$ । प्रर. ४९

(४) प्रयत्नेन ब्रह्मग्रन्थिसमन्विते धारणीये इति योजना । संर. १७

---

(१) अत्रिसं. १४०.
(२) अत्रिसं. २९८ ; अत्रिस्मृ. १।१२ शिरसा सह (च शिरस्तथा).
(३) अत्रिसं. २९९, ३२३, ३२५.
(४) अत्रिस्मृ. ३।७.
(५) स्मृच. १०८ ; प्रपा. ३५ मपि (मेव) ; निप्र. ३७ (=) पवित्रके (पवित्रकौ) धारणीये (धारणीयौ) समन्विते (समन्वितौ) ; प्रर. ४९ ; मुक्ता. २३० प्रपावत् ; संर. १७ पाणिभ्यां विप्रैः (हस्ताभ्यां द्विजैः) ; संदी. ११ प्रपावत्.

$ अस्माद्व्याख्यानात् ‘अस्त्यन्यो वैष्णवो ...’ इत्यत्र निबन्धान्तरधृतः ‘संत्यज्य वैष्णवं मार्गं ब्रह्ममार्गविनिःसृतम् ।’ इति पाठ एव ग्रन्थकर्तुरभिप्रेत इति प्रतिभाति ।

(१) स्मृच. १०८ विधीयते (विवर्जिते) : २२६ न हीयते (महीयते) ; पमा. २३९ वर्तुलः प्रोक्तः (वर्तुलं प्रोक्तं) ; निप्र. ३८ चैव (होमे) उत्तरार्धे (भोजने वर्तुलं प्रोक्तमेवमाचमने स्मृतम् ॥) ; मुक्ता. २३० ; संर. १७ ; संदी. ११.

(५) वृत्तग्रन्थिमत्पवित्रलक्षणमुक्तं हेमाद्रौ गारुडे– 'अर्धं प्रदक्षिणीकृत्य शिखायां संप्रवेशयेत्। वैष्णवेनैव मार्गेण वृत्तग्रन्थौ पवित्रके ॥'। वैष्णवो मार्गः पश्चाद्भागः। ब्रह्मग्रन्थिमत्पवित्रलक्षणमपि तत्रैवोक्तम्– 'संत्यज्य वैष्णवं मार्गं ब्रह्ममार्गविनिःसृतम्। सकृत्प्रदक्षिणीकृत्य पवित्रमभिधीयते। तद्ब्रह्मग्रन्थिमत्प्रोक्तं पवित्रं वेदवादिभिः ॥' इति। सर्वसाधारणपवित्रलक्षणं तु– 'अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च। प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् ॥' इति छन्दोगपरिशिष्टोक्तं ज्ञेयम्। संदी. ११

ब्रह्मग्रन्थिमतां गणना

[१]यज्ञोपवीते मौञ्ज्यां च तथा कुशपवित्रके।
ब्रह्मग्रन्थिं विजानीयादन्यत्र तु यथारुचि ॥

ब्रह्मग्रन्थिमत्पवित्रस्योभयहस्तधारणम्, पवित्रधारणे अङ्गुल्यादिनियमः

[२]उभाभ्यामेव हस्ताभ्यां विप्रो दर्भपवित्रके (?) ॥
ब्रह्मग्रन्थिसमायुक्ते पवित्रे मध्यपर्वणि।
पाणिभ्यां सर्वथा धार्ये कर्मकाले विशेषतः ॥

प्रथमं लङ्घयेत्पर्व द्वितीयं तु न लङ्घयेत्।
द्वयोस्तु पर्वणोर्मध्ये पवित्रं धारयेद्बुधः ॥

अग्रपर्वस्थितो दर्भस्तपोवृद्धिकरो हि सः।
मध्ये चैव प्रजाकामो मूले सर्वार्थसाधकः ॥

एतत्काम्यविषयम्। मुक्ता. २३०

अङ्गुलीमूलदेशे तु पवित्रं धारयेद्द्विजः।
राज्ञां द्विपर्वके चैव विशामग्रे करस्य च ॥

वर्णभेदेन पवित्रनियममाह स एव– अङ्गुलीमूलेति। मुक्ता. २३०

(१) मुक्ता. २३०; आर. २ रत्नावल्याम्.

(२) मुक्ता. २३०; संर. १८ (द्वयोस्तु पर्वणोर्मध्ये पवित्रं धारयेद्बुधः।) एतावदेव, रत्नावल्याम्.

निवीतनिमित्तानि

[१]ऋषितर्पणचण्डालभाषणे शववाहने।
विण्मूत्रोत्सर्जने स्त्रीणां रतिसङ्गे निवीतयः ॥

स्रुक्स्रुवयोः स्वरूपं परिमाणं च

[२]अङ्गुष्ठपरिणाहाढ्यं दण्डं कुम्भकभूषितम्।
पुष्करं पुष्कराग्रे तु मध्यरेखोच्छ्रिताङ्कितम् ॥
स्रुक्स्रुवोऽर्धकरौ कार्यौ दण्डं वृत्तं सुशोभनम्।
अङ्गुष्ठपरिणाहाढ्यं स्रुतियन्त्रविनिर्मितम् ॥
द्व्यङ्गुलं मूलदेशे तु कुम्भपुष्करमूलकम्।
गण्डिकां तद्विजानीयात्त्रिभागेन तु पुष्करम् ॥
वेदिः सप्ताङ्गुला कार्या पञ्चवृत्तं प्रकल्पयेत्।
प्रणिखातं समं कार्यमग्रं कुर्यात्षडङ्गुलम् ॥
गोकर्णाकृति शोभाढ्यं कनिष्ठाङ्गुलपञ्चकम्।
घृतनिष्कप्रमा कार्यं यवत्रयसुरेखितम् ॥
एवं स्रुचं स्रुवं कृत्वा ताभ्यां होमाः सुखावहाः ॥

## सुमन्तुः

कुशप्रतिनिधयः

[३]कुशाः काशा उशीराश्च यवा दूर्वाश्च बल्वजाः।
गोवालमुञ्जौ कुन्दाश्च पूर्वाभावे परः परः ॥

## जाबालिः

अमावास्यायां कुशादिग्रहणम्

[४]कुशान्काशांश्च पुष्पाणि गवार्थं च तृणादिकम्।
निषेधे चापि गृह्णीयादमावास्याहनि द्विजः ॥

यदुक्तं जाबालिना– 'कुशान् काशांश्च...' इति, तच्छास्त्रीयकुशादिग्रहणविषयमित्यनुसंधेयम्। स्मृच. १२७

(१) आर. ३.

(२) प्रपा. ४०.

(३) विपा. १६५ (भागः २).

(४) स्मृच. १२७; मुक्ता. २३४ निषेधे (निषिद्धे) अमावास्याहनि (अमायामहनि); संर. १५ निषेधे (निषिद्धे).

## पैठीनसिः

दक्षिणबाहूद्धरणनिमित्तानि

[1]अग्न्यगारे गवां गोष्ठे ब्राह्मणानां च संनिधौ ।
स्वाध्याये भोजने चैव दक्षिणं पाणिमुद्धरेत् $ ॥

प्राजापत्यतीर्थसाध्यकर्माणि

[2]आचमनहोमतर्पणानि प्राजापत्येन कुर्यात् ॥

समित्प्रतिनिधित्वप्रयोजकसादृश्यपरिगणनम्,
सदृशाभावे यवः प्रतिनिधिः

[3]काण्डमूलपर्णपुष्पफलप्ररोहरसगन्धादीनां सादृश्येन प्रतिनिधिं कुर्यात् । सर्वालाभे यवः प्रतिनिधिर्भवति ॥

(१) काण्डं नालम् । प्ररोहः अङ्कुरः ।

‡ ब्रक. ६९

(२) तत्तत्समिदलाभे पैठीनसिः— काण्डवल्कलेति ।

¶ संत. ९४७

(३) सर्वालाभे पूर्वोक्तानां सर्वेषां काण्डादिसदृशानामलाभे ।

¶ पप्र. १०९

$ व्याख्यानं बौधायने मनौ च (संका. पृ. ११५५–११५६, ११८१) द्रष्टव्यम् ।

‡ कुर., निप्र. ब्रकवत् ।

¶ शेषं ब्रकवत् ।

(१) ब्रक. ६२ मनुबौधायनपैठीनसयः; निप्र. २९ मनुबौधायनपैठीनसयः; पप्र. ९० मनुबौधायनपैठीनसयः .

(२) आर. ७ अपरार्के पैठीनसिः .

(३) ब्रक. ६९; चव्र. ४२ प्ररोहरसगन्धादीनां (प्ररोहेषु गन्धादीनां); चदा. १४०; गृर. १३१ काण्डमूलपर्णपुष्प (पर्णमूलकन्दपुष्प) सर्वालाभे (सर्वाभावे); कुर. ७३; निप्र. १९६ गन्धादीनां (गन्धानां); संत. ९४७ मूलपर्ण (वल्कल) (फल०) यव इति कल्पतरुपाठः अवयव इति नारायणोपाध्यायाः; पप्र. १०९ (पर्ण०).

यज्ञियायज्ञियधातुपात्राणि

[1]सीसकायसपात्राणि रीतिशेषाणि पात्राणि चेत्ययज्ञियानि ॥

## अङ्गिराः

नीलीरक्तवस्त्रनिषेधः

[2]संध्या स्नानं जपो होमः स्वाध्यायः पितृतर्पणम् ।
वृथा तस्य महायज्ञा नीलीरक्तस्य धारणात् ॥

स्नानदानजपेषु क्रमेण दर्भोदकसंख्यानानामावश्यकता

[3]विना दर्भेण यत्स्नानं यच्च दानं विनोदकम् ।
असंख्यातं तु यज्जप्तं तत्सर्वं निष्फलं भवेत् ॥

असंख्यातम् अज्ञातसंख्यम् । तथा च यज्जप्यं तन्निर्णीतसंख्यं कर्तव्यम् । § तेन अनत्युच्छ्रितानतिनीचप्रागग्रकुशास्तीर्णशोभनासनोपविष्टेन दर्भपाणिना शोभनचित्तेन उत्तरोत्तरात्यन्तप्रशस्तस्फटिकेन्द्राक्षरुद्राक्षपुत्रंजीवाक्षमालावता किमप्यनवलोकयता शिरोग्रीवमकम्पयता संवृतदर्शनेन विविक्तशुभे देशे जपः संख्याज्ञानपूर्वक एव कर्तव्य इत्युक्तम् । कुर. ६४

जल–स्थलगतयोः शौचनियमः

[4]उदक एवोदकस्थश्च स्थले स्थलगतः शुचिः ।
पादौ स्थाप्योभयत्रैव आचान्तोभयतः शुचिः ॥

पादुकाविसर्जननिमित्तानि

अग्न्यगारे गवां गोष्ठे देवब्राह्मणसंनिधौ ।
भोजने जपकाले च पादुकानां विसर्जनम् ॥

§ अयं सकलजपपरिभाषाप्रकरणार्थसंग्रहः ।

(१) चश्रा. ६७४; आर. ५ (लौहानां सीसकायसरीतिशेषाणि पात्राणि चेत्ययज्ञियानि).

(२) अङ्गिस्मृ. ३३.

(३) अङ्गिस्मृ. ६२; कुर. ६४ दर्भेण (दर्भैस्तु) तत्सर्वं (सर्वं तत्); मर. ३५ उत्तरार्धे (असंख्यानं च यज्जप्तं तत्सर्वं निष्प्रयोजनम् ॥).

(४) अङ्गिस्मृ. १०३, १०५, १४३.

देशकालादिज्ञानस्याऽऽवश्यकता

**देशं कालं तथाऽऽत्मानं द्रव्यं द्रव्यप्रयोजनम् ।**
**उपपत्तिमवस्थां च ज्ञात्वा कर्म समाचरेत् ॥**
**[1]स्वाभिप्रायकृतं कर्म यत्किंचिज्ज्ञानवर्जितम् ।**
**क्रीडाकर्मैव बालानां तत्सर्वं निष्प्रयोजनम् ॥**

ज्ञानवर्जितं शास्त्रीयज्ञानवर्जितम् । ¶ ब्रक. १८

नित्यपवित्रपदार्थाः

**[2]गोदुग्धं गोमयं क्षीरं दधि तक्रं तथा घृतम् ।**
**गोपुच्छं पश्चिमे भागे एते सर्वे पवित्रकाः ॥**

मौनस्य कर्माङ्गता

**[3]संध्ययोरुभयोर्जप्ये भोजने दन्तधावने ।**
**पितृकार्ये च दैवे च तथा मूत्रपुरीषयोः ॥**
**[4]गुरूणां संनिधौ दाने योगे चैव विशेषतः ।**
**एषु मौनं समातिष्ठन् स्वर्गं प्राप्नोति मानवः ॥**

संध्ययोरुभयोरिति संध्याकाले निमित्ते मौनं विधीयते । मूत्रपुरीषयोरित्यत्र साहित्यमविवक्षितम्, उद्देश्यगतत्वात् । पप्र. ९३

प्रत्यहकुशच्छेदप्रशंसा उपयुक्तकुशत्यागश्च

**[5]अहन्यहनि कर्मार्थं कुशच्छेदः प्रशस्यते ।**
**कुशा धृता ये पूर्वत्र योग्याः स्युर्नोत्तरत्र ते ॥**

---

¶ कृर., पप्र. ब्रकवत् ।

(१) विश्व. १।५० यत्किंचिज्ज्ञानवर्जितम् (यत्तु धर्मविवर्जितम्); ब्रक. १८; स्मृच. १६३; कृर. २४; पमा. २९१; प्रपा. ३९३–३९४ कर्मैव (कर्म च) संग्रहे; पप्र. ११; आन. ७१.

(२) अङ्गिस्मृ. १५६.

(३) ब्रक. ६४; चव्र. ३७; चदा. ९१ मनुः; पप्र. ९३; आर. ५ तथा (स्नाने); संग. ११० जप्ये (जाप्ये).

(४) ब्रक. ६४; चव्र. ३७ योगे (यागे); चदा. चव्रवत्, मनुः; पप्र. ९३ प्राप्नोति (आप्नोति); आर. ५ योगे (यागे) शेषं पप्रवत्; संग. ११०.

(५) प्रपा. ३४ कुशच्छेदः (कुशोत्पाटः) उत्तरार्धे (न पूर्वेषु धृताः कुशा योग्याश्चैवोत्तरेषु च ॥); संर. १५.

(१) कुशोत्पाटनकालमाह अङ्गिराः– अहन्यहनीति । प्रपा. ३४

(२) कुशग्रहणकालमाह अङ्गिराः– अहन्यहनीति । पूर्वकर्मणि धृता ये कुशास्ते नोत्तरत्र अनन्तरं क्रियमाणेषु कर्मसु योग्या इत्यर्थः । संर. १५

कर्मकाले चाण्डालदर्शनादिजन्याशुचित्वशोधनम्

**[1]चाण्डालादीन् जपे होमे दृष्ट्वाऽऽचम्य विशुध्यति ।**
**श्वादीन् स्पृष्ट्वाऽपि वाऽऽचामेत् कर्णं वा दक्षिणं स्पृशेत् ॥**

## कार्ष्णाजिनिः

स्वसूत्राद्यभावे परसूत्रीयाद्यनुज्ञा

**[2]आत्मतन्त्रे तु यन्नोक्तं तत्कुर्यात्पारतन्त्रिकम् ।**
**विशेषाः खलु सामान्या वेदोक्ता वेदवादिभिः ॥**

(१) ननु बह्वृचादीनां याजुषमाधानमेव न स्यात्, 'ऊनो वाऽप्यतिरिक्तो वा यः स्वशाखोदितो विधिः । तेन संतनुयाद्यज्ञं न कुर्यात्पारतान्त्रिकम् ॥' इति पारतान्त्रिकनिषेधादिति चेत्, मैवम्, 'अनुक्तमन्यतो ग्राह्यम्' इति वचनात्, 'आत्मतन्त्रेषु यन्नोक्तं तत्कुर्यात्पारतान्त्रिकम् । विशेषाः खलु सामान्या वेदोक्ता वेदवादिभिः ॥' इति कार्ष्णाजिनिना, यतो वेदोक्ता विशेषाः सामान्याः सर्वानुष्ठातृपुरुषसाधारणा इत्यभिधानेन बह्वृचादीनां याजुषाधानादेः छान्दोगौद्गात्रादेराथर्वणशान्त्यादेश्चाधिकारबोधनाच्च, 'यन्नाऽऽम्नातं स्वशाखायां पारक्यमविरोधि च । विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत् ॥' इति हेमाद्रौ छन्दोगपरिशिष्टे दृष्टान्तप्रदर्शनाच्च । तत्रापि बौधायनमापस्तम्बं वा ग्राह्यम् । पू. ११६८

---

(१) संग. २७४.

(२) स्मृच. ५ पू., कात्यायनः; मुक्ता. १५ पू., कात्यायनः; बाल. १।८९ पृ. २५३ तन्त्रे तु (तन्त्रेषु) तत्कुर्यात् (तद्ग्राह्यं); कुभ. ११६८ तन्त्रे तु (तन्त्रेषु) तन्त्रिकम् (तान्त्रिकम्) : १७३५ (=) बालवत्; इन्दु. ४.

यस्य शास्त्रेऽनुक्ता विशेषास्ते खलु निश्चितं सामान्याः साधारणा इत्यर्थः । कृभ. १७३५

( २ ) 'सर्वशाखाप्रत्ययमेकं कर्म' इति न्यायेन सर्वशाखागृह्यसूत्रपरिशिष्टस्मृतिपुराणेतिहासाचारावगतसकलपदार्थोपसंहारेणैव स्नानसंध्यादिधर्मानुष्ठानं सर्वसंमतम् । तत्र– 'यः स्वसूत्रमतिक्रम्य परसूत्रेण वर्तते । अप्रमाणमृषिं कृत्वा सोऽप्यधर्मेण युज्यते ॥ तस्मात्सर्वप्रयत्नेन स्वसूत्रं न च लङ्घयेत् ॥' इति विष्णुधर्मोत्तरादिवचनैः स्वसूत्राविरोधिशास्त्रान्तरपरिग्रहः कर्तव्यः । अत एव भविष्यत्पुराणे उक्तम्– 'यन्नाऽऽम्नातं स्वशाखायां पारक्यमविरोधि यत् । विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकं यथा ॥' इति । कार्ष्णाजिनिरप्याह– 'आत्मतन्त्रे तु ....... वेदवादिभिः ॥' । इन्दु. ४

## प्रचेताः

### अहतवस्त्रलक्षणम्

**[1]ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम् ।**
**अहतं तद्विजानीयात्सर्वकर्मसु पावनम् ॥**

(१) अहतस्य लक्षणमाह पुलस्त्यः– ईषद्धौतमिति । धौतं प्रक्षालितम् । अत्र विशेषमाह देवलः– 'स्वयंधौतेन कर्तव्या क्रिया धर्म्या विपश्चिता । न निर्णेजकधौतेन नाहतेन च कर्हिचित् ॥' इति । अहतेन अधौतेन, तत्राप्यहतशब्दप्रयोगात् । स्मृच. ११३

( २ ) ईषत् सूक्ष्मम् । न धारितं न परिहितम् । संत. ८९६

( ३ ) अहतलक्षणमुक्तं स्मृतिरत्नावल्याम्–ईषद्धौतमिति । ईषद्धौतम् अरजकादिना सकृद्धौतमिति नागदेवाह्निके व्याख्यातम् । कश्यपेन तु अन्यथोक्तम्– 'अहतं यन्त्रनिर्मुक्तं वासः प्रोक्तं स्वयंभुवा । शस्तं तन्माङ्गलिक्येषु तावत्कालं न सर्वदा ॥' । अत्रैवं व्यवस्था– विवाहादिमङ्गलकर्मसु यन्त्रनिर्मुक्तमेवाहतम्, 'शस्तं तन्माङ्गलिक्येषु तावत्कालम्' इति वदता तत्रैव तावत्कालं तस्य शस्तत्वाभिधानात् । अन्यत्र यज्ञादौ तु ईषद्धौतमिति । न च यज्ञादिकमपि माङ्गलिक्यमेवेत्याशङ्कनीयम्, विवाहोत्सवादेरैहिकसुखदस्याभ्युदयदस्य च माङ्गलिकत्वात् । यज्ञादेस्तु धर्मरूपादृष्टफलदत्वेन माङ्गलिकत्वाभावात् । अनन्तयाज्ञिकैरप्येवमेव व्याख्यातम् 'क्षौमम्' इत्यादिसूत्रे । संदी. ४

### पवित्रलक्षणम्

**[1]द्विमूलमेकतः कुर्याद् द्वयोरग्रं तथैकतः ।**
**वलयं द्व्यङ्गुलं प्रोक्तं ग्रन्थिरेकाङ्गुलो भवेत् ।**
**चतुरङ्गुलमग्रं स्यात्पवित्रस्येति लक्षणम् ॥**

सग्रन्थिपवित्रलक्षणमाह प्रचेताः– द्विमूलमेकत इति । विपा. १६५ ( भागः २ )

### करे कुशधारणम्

**[2]चक्रायुधं यथा विष्णोर्हरस्यापि त्रिशूलकम् ।**
**वज्रायुधं यथेन्द्रस्य एवं विप्रकरे कुशः ॥**

## व्याघ्रपादः

### एकवस्त्रतानिषेधः वस्त्रदोषाश्च

**[1]नैकवस्त्रो द्विजः कुर्याद्भोजनं च सुरार्चनम् ।**
**तत्सर्वमसुरेन्द्राणां ब्रह्मा भागमकल्पयत् ॥**

---

(१) स्मृच. २९:११३ पुलस्त्यः : ४३५ (श्रा.); जभा. १९८ (=); पमा. २४५ सदशं ( सदृशं ) अहतं ( आहतं ) पुलस्त्यः : ७२४ ( = ); प्रपा. २२१; संत. ८९६ ( = ) श्वेतं ( शुभ्रं ) अहतं ( आहतं ) : ९३९ श्वेतं ( शुभ्रं ) अहतं ( आहतं ) वसिष्ठः; संप्र. ४११ नवं श्वेतं ( नवश्वेतं ); चम. २४; मुक्ता. ९४ श्वेतं ( वस्त्रं ) : २५२ पुलस्त्यः; संम. २५; संकौ. १२३ यन्न धा ( यन्नधा ); आन. ३१ पुलस्त्यः : १५६ श्वेतं (वस्त्रं); बाल. १।२९ पृ. १५२; संग. ६२ ईषद्धौतं ( अहतं च ) उत्तरार्धे ( पवित्रं तद्विजानीयाद्वस्त्रं सकलकर्मसु ॥ ) धर्मप्रवृत्तिवचनमित्युक्तम् : ६६१; कृभ. ९५४ ( = ); संर. १९१ : ३२० ( = ) पू.; इन्दु. १२ कात्यायनः; संदी. ४ स्मृतिरत्नावल्याम्.

(१) विपा. १६५ ( भागः २ ).

(२) संदी. ६.

काषायं कृष्णवस्त्रं वा मलिनं केशदूषितम् ।
जीर्णं नीलं संधितं च पारक्यं मैथुने धृतम् ।
छिन्नाग्रमपवस्त्रं च कुत्सितं धर्मतो विदुः ॥

काषायमिति । अयं च निषेधः सति संभवे बोध्यः । अत एवाऽऽह गौतमः— 'सति विभवे न जीर्णमलवद्वासाः स्यात्, न रक्तमुल्बणमन्यधृतं वा वासो बिभृयात्' (गौध. ९।३।४) इति । नीलं तु सर्वथा निषिद्धमेव, 'नीलीरक्तं यदा वस्त्रं ब्राह्मणोऽङ्गेषु धारयेत् । अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥' इत्यापस्तम्बवचनात् । नीलीरक्तमपि पट्टादिवस्त्रं न निषिद्धम्, 'कम्बले पट्टवस्त्रे च नीलीरागो न दुष्यति । स्त्रीणां क्रीडार्थसंभोगे शयनीये न दुष्यति ॥' इति आचारचिन्तामणावुक्तेः ।

संदी. ६

## गर्गः

कर्मादौ कालोद्देशः

[१]तिथिनक्षत्रवारादि साधनं पुण्यपापयोः ॥

कर्मकालव्यापितिथेः कर्माङ्गत्वम्

[२]कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः ।
तया कर्माणि कुर्वीत ह्रासवृद्धी न कारणम् ॥

## वृद्धगर्गः

सर्वगन्धः त्रिसुगन्धं च

[३]कुङ्कुमं चन्दनोशीरं मुस्ता लामज्जकेसरम् ।
कर्पूरं त्रिसुगन्धं च सर्वगन्धः प्रकीर्तितः ॥
[४]त्वगेलापत्रकैस्तुल्यैस्त्रिसुगन्धं प्रकीर्तितम् ॥

(१) आर. ४.

(२) आर. ४ (=); सम. ३ कर्मणो यस्य यः (यो यस्य विहितः) : ६४ : ७३ पू. स्मृतिः ; इन्दु. ९ (=) चतुर्थपादं विना.

(३) चन्न. ४४; पम्र. ११४ गन्धः प्रकीर्तितः (गन्धाः प्रकीर्तिताः).

(४) चन्न. ४४ गन्धं प्रकीर्तितम् (गन्धः प्रकीर्तितः); पम्र. ११४.

## आश्वलायनः

स्वशास्त्रीयपरशास्त्रीयकर्मानुष्ठानव्यवस्था

[१]तस्माद्धर्मो यथाशक्त्या यत्नात्सेव्यो नृभिर्बुधैः ।
स्वं स्वं शास्त्रं समालम्ब्य भक्त्या नित्यमतन्द्रितैः ॥

स्वशास्त्रेषु विकल्पानामन्यशास्त्रबलादपि ।
मुख्यः कार्यः प्रयत्नेन चाविरुद्धश्च यो द्विजैः ॥
यो विरोधः स्वशास्त्रेषु तन्न कार्यं (? स न कार्यः) कथंचन ।
अनुरूपाणि कार्याणि चानुक्तान्यपि सत्तमैः ॥

हस्तस्थिततीर्थानि

[२]विप्रस्य दक्षिणे पाणौ मूलेऽङ्गुष्ठस्य नित्यदा ।
स्याद्ब्रह्मतीर्थं मध्ये च वह्नेयमघनाशनम् ॥
मध्ये चाङ्गुष्ठतर्जन्योः पैत्र्यं तीर्थं द्विजस्य तु ।
आर्षं कनिष्ठिकामूले कायमग्राङ्गुलीषु वै ।
तीर्थान् विदित्वा पञ्चैतान् ततः कर्माऽऽचरेद्द्विजः ॥

स्नानस्य कर्माङ्गता स्नानानुकल्पश्च

स्नानमूलाः क्रियाः सर्वाः प्रवर्तन्ते विधानतः ।
अशुचिर्मानवोऽस्नातश्चानर्हः सर्वकर्मसु ॥
प्रातः स्नातुमशक्तस्य रोगाद्यैर्वा भयाच्च वा ।
पूर्ववस्त्रपरित्यागाच्छुद्धिस्तस्य भवेत्तदा ॥
सर्वकर्मस्वनर्हस्य हुतकृत्यार्चनादिषु ॥

प्राणायामलक्षणम्

सव्याहृतिं सप्रणवां सावित्रीं शिरसा सह ।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥

मौनस्य कर्माङ्गता

[३]स्नाने दाने जपे होमे व्यवाये भोजने बुधः ।
विण्मूत्रोत्सर्जनेऽर्चायां मौनी स्याद्दन्तधावने ॥

(१) आश्वस्मृ. २।१६–१९.

(२) आश्वस्मृ. ४।५५–५७, ५९–६१, ९१.

(३) आश्वस्मृ. ५।४९–५०.

विध्यनुमानयोर्बलाबलम्

[1]यत्र यद्यद्यथा प्रोक्तं तत्तत्कुर्याद्यथोदितम् ।
नान्यथा स्वानुमानेन कुर्यात्प्राज्ञोऽपि मानवः ॥
यत्रानुक्तं तु तत्रैव कुर्याद्वा स्वानुमानतः ।
विमृश्य न्यायमालोच्य दृष्ट्वाऽन्यत्र बलाबलम् ॥
[2]श्रौतं वा यत्र पौराणं स्मार्तं वाऽस्ति विनिर्णये ।
गीर्दृढा तत्र न चलेन्न्यायाद्वा स्वानुमानतः ॥
[3]यत्र गीर्दृढा तत्र कुर्यान्न्यायानुमानतः ।
न च यत्र च तत्रैव सा गीरिति मतिर्मम ॥

तिर्यङ्मानम्

[4]युगं भवेच्चतुर्हस्तं हस्तो द्वात्रिंशदङ्गुलम् ।
अङ्गुलं द्विचतुष्कैस्तु यवैस्तिर्यक् स्थितिर्भवेत् ॥
युगद्वयं भवेद्दण्डं भूमेर्मानार्थमिष्यते ।
क्रोशस्तु त्रिंशता दण्डैश्चतुष्क्रोशैस्तु गोरुतम् ॥
षड्गोरुतैर्भवेन्मानं योजनाख्यं तु भारते ।
अष्टभिः केचिदिच्छन्ति मानज्ञा योजनाविधिः- (? वधिः) ॥

आचमनानुकल्पः

यत्राऽऽचमनमुद्दिष्टं तत्राऽऽपस्तु समाहितः ।
प्राणसंयमनं कुर्याद्दक्षिणं वा स्पृशेच्छ्रुतिम् ॥
विप्रस्य दक्षिणे श्रोत्रे गङ्गाद्याः सरितोऽखिलाः ।
वसन्ति सततं पुण्यास्तस्मात्तं स्पृशेच्छुचे ॥

कटिबन्ध-कक्ष्याराहित्य-कौपीनानां कर्मकाले निषेधः

[1]यत्किंचित्कुरुते कर्म वैदिकं वाऽथ तान्त्रिकम् ।
कटिबन्धेन संयुक्तं तत्सर्वं निष्फलं भवेत् ॥
[2]रौप्यां कार्पासिकां हैमीं पट्टसूत्रकृतां च वा ।
वर्जयेत् कर्मकालेषु काञ्चीं विप्रो विशेषतः ॥
[3]यः कुर्यान्मुक्तकक्ष्यश्च कौपीनाच्छादितश्च यः ।
विप्रो बद्धकटिश्चापि द्विविधं कर्म वीलपन्(?) ॥

स्नानाचमनोपवीतवस्त्रद्वयकौपीनराहित्यानां कर्माङ्गत्वम्

अस्नातश्चाप्यनाचान्तस्तस्य तन्निष्फलं भवेत् ।
तस्माद्गृहीपवीती(?) स्याद्बिभृयाच्च स्ववासती ॥
अनासन्नोतकौपीनो(?) भवेत्कर्मसु यत्नतः ॥

पवित्रस्य तिलकस्य च कर्मफलवृद्धिहेतुत्वम्

अपवित्रेण यज्जप्तं न (? यत्) स्नातं न (? यत्) कृतं हुतम् ।
यच्च शून्यललाटेन तदत्यल्पफलं भवेत् ॥

---

(१) आश्वस्मृ. ८।१९८-१९९ दितम् (चितम्); प्रपा. ६९ विमृश्य (विविच्य); मुक्ता. १५ तत्तत्कुर्याद्यथोदितम् (तत्र कुर्याद्यथा च तत्) द्वितीयश्लोको नास्ति.

(२) आश्वस्मृ. ८।२०० चलेन्न्यायाद्वा (चलेत्तद्यथा); प्रपा. ६९ वा यत्र (वाऽप्यथ); मुक्ता. १५ वाऽस्ति (वाऽपि).

(३) आश्वस्मृ. ८।२०१; प्रपा. ६९ गीरदृढा (गीर्न दृढा); मुक्ता. १५ कुर्यान्न्यायानु (कुर्याच्चैवानु) पू.

(४) आश्वस्मृ. १०।८५-८७, १०१-१०२.

(१) आश्वस्मृ. १०।११६ संयुक्तं (संयुक्तः); प्रपा. १९१; आर. ४ कर्म (धर्मं) तत्सर्वं (सर्वं तत्); विपा. ४५४ वाऽथ (चाथ); संकौ. ११२ बन्धेन (बन्धन); प्रका. १९९ संकौवत्.

(२) आश्वस्मृ. १०।११७; प्रपा. १९१ पूर्वार्धे (रौप्यकार्पासिकक्षौमपट्टसूत्रकृतां च वा।); आर. ४ पूर्वार्धे (रौप्यं कार्पासकं हैमं पट्टसूत्रकृतं तथा।); विपा. ४५४ पूर्वार्धे (रौप्यं कार्पासकं हैमं पट्टसूत्रकृतं तु वा।); संकौ. ११२ आरवत्; प्रका. १९९ आरवत्; संर. ८९७ (रौप्यं कार्पासजं हैमीं पट्टसूत्रकृतां तु वा। वर्जयेत्कर्मकाले तु काञ्चीं विप्रः प्रयत्नतः ॥).

(३) आश्वस्मृ. १०।११८-१२०, १२४-१२५.

पवित्रकरणम्

[१]साग्राभ्यां मृदुदर्भाभ्यां प्रादक्षिण्येन मध्यतः।
मूलाग्रावुद्गतौ कृत्वा कुर्याद्ग्रन्थिं च मन्त्रवत्॥
तारेण कुर्यात्तद्ग्रन्थिं पवित्रस्य द्विजोत्तमः।
ग्रन्थिरेकाङ्गुला तस्य तदूर्ध्वं चतुरङ्गुलम्॥

सग्रन्थिपवित्रवता करेण कर्तव्याकर्तव्यकर्माणि, हैमस्य सर्वकर्माङ्गता

[२]सपवित्रेण हस्तेन भुञ्जीयादाचमेत्पिबेत्।
जपेदर्चेद्धुनेद्ध्यायेद्ब्राह्मणस्य(? स्तु) विशेषतः॥
ग्रन्थीकृतपवित्रेण न भुञ्जीयान्न चाऽऽचमेत्।
न पिबेद्यदि कृत्यैतां तथा(? कुर्वीत तदा) तच्छोणितं भवेत्॥
तस्मादग्रन्थिकेनाम्बु पिबेद्भुञ्जेत्तथाऽऽचमेत्।
हैमेन सर्वदा सर्वान्(? सर्वं) कुर्यादेवाविचारयन्॥

पवित्रधारणेऽङ्गुलिनियमः

रौप्यं दक्षप्रदेशिन्यां बिभृयाद्दीक्षितो द्विजः।
पित्रोः प्राग्वत्सरात्तृप्त्यै तद्व्रतं चाक्षयं भवेत्॥
दक्षानामिकया विप्रो बिभृयाद्ग्रन्थिसंयुतम्।
अग्रन्थिकं च हैमं च तथा लोहत्रयोद्भवम्॥

पवित्रे धातुपरिमाणं धातुपवित्रफलं च

गायत्र्याक्षरसंख्येन(?) गृह्णीयात्ताम्रमुत्तमम्।
अनुष्टुभस्तथा रूप्यं त्रिष्टुभः कनकोत्तमम्॥
एवं लोहत्रयेणैव कृतं रक्षोघ्नमुत्तमम्।
अघघ्नं च पवित्रं स्याद्रक्षाकरमनुत्तमम्॥
आयुष्करमनाधृष्यं सुतदं रोगनाशनम्।
शुद्धे(? शुद्ध्यै) धार्यं त्रिलोहोत्थं त्रयं सममथापि वा॥

कर्मभेदेन पवित्रधारणाङ्गुलिभेदः

जपेद्वामप्रदेशिन्या धृत्वाऽऽयसपवित्रकम्।
उच्चाटनादिसंसिद्ध्यै महीपत्सु(? स्तु) द्विजोत्तमः॥
जपन्वामानामिकया ग्रन्थिहानं(? हीनं) कुजा(? शा)दिकम्।
होमा(? हेमा)दींश्चापि बिभृयात्सर्वकर्मस्वपि द्विजः॥

पवित्रकरणम्

कृत्वा तु त्रिवृतं रज्जुं तेन कुर्यात्कुशैर्बुधः।
मूलमग्रं भवेद्यद्वत्तद्वन्मुख्यपवित्रकम्॥
तद्ग्रन्थिं पूर्ववत्कृत्वा तदूर्ध्वं च त्रिरावृताः।
ग्रन्थयोऽष्टौ यथान्यायं कुर्याद्द्वादश वा द्विजैः॥

जीर्णपवित्रप्रतिपत्तिः

तस्मिञ्जीर्णे क्षिपेत्तोये वह्नौ वा यज्ञसूत्रवत्।
भूमिं खात्वाऽथवा शुद्धां मृद्भिस्तारेण गूहयेत्॥

अन्यधृतपवित्रधारणाधारणयोर्व्यवस्था

अन्यैर्धृतं न गृह्णीयात्पवित्रं तृणसंभवम्।
हेमादयस्तु संग्राह्याः सम्यङ्निष्टप्य वह्निना॥

पवित्र-जपमणिपाते प्रायश्चित्तम्, पवित्रदोषे कर्तव्यविधिश्च

[१]पवित्रे पतिते ज्ञाते तथा जपमणावपि।
प्राणायामत्रयं कुर्यात्स्नात्वा विप्रोऽघमर्षणम्॥
[२]गव्ये निक्षिप्य तु मणीन् गृह्णीयाज्जपसिद्धये॥

---

(१) आश्वस्मृ. १०।१२५-१२७ चतुरङ्गुलम् (द्व्यङ्गुलो ततः); मुक्ता. २३३ भ्यां मृदु (भ्यामृजु) वुद्गतौ (वुद्धृतौ) तद्ग्रन्थिं (त्तां ग्रन्थिं); संर. १८ (तारेण कुर्याद्ग्रन्थिं तु पवित्रस्य विचक्षणः।) एतावदेव, स्मृत्यन्तरम्.

(२) आश्वस्मृ. १०।१२७-१४१.

(१) आश्वस्मृ. १०।१४१-१४२; संर. १८ स्मृत्यन्तरे.

(२) आश्वस्मृ. १०।१४२-१४९.

पवित्रपातप्रायश्चित्तमुक्तं स्मृत्यन्तरे– पवित्रे पतित इति । जपेदिति शेषः । संर. १८

दृष्टे स्पृष्टांश्च पतितानशुचौ भुवि मन्त्रितान् ।
तथैवान्यधृतांश्चापि गुरुजतान्सुकेवलान् ॥
पदा स्पृष्टपवित्रं च वर्जयेत्तृणसंभवम् ।
बहुग्रन्थिसमायुक्तं प्रमादात्कुशसंभवम् ।
पुनः संप्रोक्षितं वाऽद्भिः पदा स्पृष्टं न दुष्यति ॥
विप्राणां चरणस्पृष्टं पादप्रक्षालने तु यत् ।
तत्पवित्रं तृणमयमपि शस्तं न दुष्यति ॥

एकवस्त्रत्वस्य फलापकर्षकत्वम्

*नैकवासा द्विजः किंचित्कर्म कुर्याच्च वैदिकम् ।
तान्त्रिकं च विमिश्रं च कृत्वाऽल्पफलमश्नुते ॥

पवित्रत्यागः

त्यजेत्प्रारब्धकर्मान्ते विप्रस्याप्यथवाऽनले ।
एकग्रन्थियुतं तार्णं जपे त्रिदिनमर्हति ॥
जपे च शस्यते त्यागो जपस्यान्ते पुनः पुनः ।
सदा तृणपवित्रस्य दर्भाभावे त्र्यहेण वा ॥

## लघ्वाश्वलायनः

कर्तुः कर्मार्हता

[1]स विप्रः स शुचिः स्नातो ह्यस्पर्शस्पर्शनं विना ।
कालत्रयेऽपि कर्मार्हः स्वाध्यायनिरतोऽपि च ॥

परिधानीयोत्तरीययोर्गुणदोषाः

परिधाने सितं शस्तं वासः प्रावरणे तथा ।
पट्टकूलं तथा लाभे ब्राह्मणस्य विधीयते ॥
आविकं त्रसरं चैव परिधाने परित्यजेत् ।
शस्तं प्रावरणे प्रोक्तं स्पर्शदोषो न हि द्वयोः ॥
भोजनं च मलोत्सर्गं कुर्वे(? रु)ते त्रसरावृतः ।
प्रक्षाल्य त्रसरं शुद्धं दुकूलं च सदा शुचि ॥

* अयं श्लोकः पवित्रप्रकरणे प्रमादपतित इति प्रतिभाति ।

(१) लघ्वाश्वस्मृ. १।२२, २८–३०, ६०, ८८, ९०–९१, १३३.

विष्णुस्मरणस्य कर्मसाद्गुण्यहेतुत्वम्

कर्मकाले तु सर्वत्र स्मरेद्विष्णुं हविर्भुजम् ।
तेन स्यात्कर्म संपूर्णं तस्मै सर्वं निवेदयेत् ॥

ऋष्यादेः प्रणवस्य च कचिदनुच्चारणम्

ऋषिदैवतच्छन्दांसि प्रणवं ब्रह्मयज्ञके ।
मन्त्रादौ नोच्चरेच्छ्राद्धे यागकालेऽपि चैव हि ॥

वस्त्रस्य कर्माङ्गत्वम्

उपवीतं यथा यस्मिन्धत्ते कर्मणि वैदिके ।
ब्रह्मचारी गृहस्थश्च तद्वद्वासोऽपि धारयेत् ॥

सव्यापसव्यनिवीतलक्षणानि

सव्यांसे च स्थिते सूत्रे तत्सव्यं चाथ दक्षिणे ।
अपसव्यं भवेत्कण्ठे लम्बे सूत्रे निवीतकम् ॥

कर्मभेदेन दानार्थकनिपातभेदः

स्वाहा स्याद्भूतयज्ञेऽपि पितृयज्ञे स्वधा स्मृता ।
यज्ञे मानुषके चैव हन्तकारो विधीयते ॥

मुख्याभावे गौणकालः

[1]उक्तं कर्म यथाकाले यदि कर्तुं न शक्यते ।
अकाले वाऽपि तत्कुर्यादुल्लङ्घ्य वाऽपकृष्य च ॥
वैश्वदेवे तथा ब्रह्मयज्ञे चैवं विधिः स्मृतः ।
संध्ययोरुभयोश्चैव नापकर्षणमिष्यते ॥

कर्मणो दक्षिणहस्तसाध्यता औत्सर्गिकी

[2]अनादेशे तु सर्वत्र दक्षिणः पाणिरुच्यते ॥

पात्रबर्हिरिध्मानां मानानि

[3]अष्टाङ्गुलमिता स्थाली प्रोक्षणी च षडङ्गुला ।
चमसश्चाऽऽज्यपात्रं च षडङ्गुलमिति स्मृतम् ॥

(१) लघ्वाश्वस्मृ. १।१३८–१३९ ; इन्दु. १० दुल्लङ्घ्य वाऽपकृष्य च (दुल्लङ्घ्याप्यपकृष्य वा) आश्वलायनः.

(२) लघ्वाश्वस्मृ. २।११.

(३) लघ्वाश्वस्मृ. २।२० पूर्वार्धे ,(अष्टाङ्गुलमितस्थालीं प्रोक्षणीं च षडङ्गुलाम् ।) सश्चाऽऽज्य (सं चाऽऽज्य) ; संर. २३ आश्वलायनः .

उच्चताऽर्थसिद्धा । स्थाली चरुस्थाली । आज्यपात्रम् आज्यस्थाली । 'वितस्तिर्गृह्यकर्मणि' इतिवचनसिद्धेन वितस्त्यात्मकेन प्रोक्षणीप्रमाणेन षडङ्गुलप्रमाणं विकल्पते इति केचित् । कात्यायनेन चरुस्थालीलक्षणमन्यथोक्तम्— 'दृढा प्रादेशमात्र्यूर्ध्वं तिर्यङ्नातिबृहन्मुखी । मृन्मय्यौदुम्बरी वाऽपि चरुस्थाली प्रशस्यते ॥' इति । एतच्च प्रादेशमात्रत्वमाश्वलायनस्मृत्युक्तेनाष्टाङ्गुलप्रमाणेन विकल्पते । औदुम्बरी ताम्रमयी । संर. २३

[1]स्रुक्स्रुवौ हस्तमात्रौ तु स्यातां तौ यज्ञकर्मणि ।
द्विप्रादेशो भवेदिध्मो बर्हिः प्रादेशसंमितः ॥

पात्रप्रकृतिद्रव्याणि

स्याच्चेत् ताम्रमयी स्थाली होमे कांस्यमयीपि‡ वा ।
तथा स्युः प्रोक्षणादीनि यथालाभानि वाऽपि वा ॥

[2]दण्डमात्रयुतौ शस्तौ स्रुक्स्रुवौ यागदारुजौ ।
तदभावेऽथ वाऽश्वत्थपर्णकौ वाऽप्युदुम्बरौ ॥

समित्काष्ठानि

पालाशखादिराश्वत्थशम्युदुम्बरजास्तथा ।
समिधः खादिराः शस्ता होमकर्मसु चैव हि ॥

दक्षिणायाः कर्माङ्गता अनुकल्पश्च

[2]दद्याद्विभवसारेण कर्माङ्गत्वेन दक्षिणाम् ।
सुवर्णाम्बरधान्यानि सद्योऽनन्तफलं लभेत् ॥

न ददाति द्विजो होत्रे लोभाद्यज्ञाङ्गदक्षिणाम् ।
वित्ते सति कृतं कर्म निष्फलं स्याद्धनक्षयः ॥

धनिनोऽयं निषेधः स्याद्व्रतहीनस्य चैव हि ।
असमर्थो नमेत्सद्यो दत्त्वाऽक्षतफलादिकम् ॥

‡ आर्षः संधिः अनुपसर्गत्वेऽप्यपेरकारलोपो वा ।

(१) लघ्वाश्वस्मृ. २।२१, २५–२६, ८०.

(२) लघ्वाश्वस्मृ. १०।४२–४५.

यजमान–पत्नी–संस्कार्याणां स्थाननियमः

[1]संस्कार्यः पुरुषो वाऽपि स्त्री वा दक्षिणतो भवेत् ।
संस्कारकस्तु सर्वत्र तिष्ठेदुत्तरतः सदा ॥

धर्मकार्येषु सर्वेषु व्रतोद्यापनशान्तिषु ।
वामे स्त्री दक्षिणे कर्ता स्थालीपाके तथैव च ॥

मार्जने चाभिषेके च कन्यापुत्रविवाहके ।
आशीर्वचनकाले च पत्नी स्यादुत्तरे सदा ॥

विच्छिन्नवह्निसंधाने कन्यादाने वरार्चने ।
नवोढाप्रवेशे पत्नी दक्षिणे स्वयमुत्तरे ॥

आरभ्याऽऽधानकं कर्म यावन्मौञ्जीनिबन्धनम् ।
कर्ता स्यादुत्तरे तावत्पत्नी पुत्रस्य दक्षिणे ॥

सत्यां पत्न्यां संस्कारे तदावश्यकता

पत्नीं विना न तत्कुर्यात्संस्कारं कर्म यच्छिशोः ।
पत्न्यां चैव तु जीवन्त्यां विधिरेष उदाहृतः ॥

अशुचिस्पर्शे जृम्भादिविकारे च दोषशोधनम्

[2]अशुचिं वै स्पृशेत्स्नातः कर्मकाले क्वचिद् द्विजः ।
प्रक्षालिताङ्घ्रिराचम्य कर्म कर्तुमथार्हति ॥

जृम्भकारविकारः स्यात्क्षुत्वाऽधोवातनिर्मितः ।
श्लेष्मोत्सारो भवेत्कर्मकाले चाभ्यज्य शुध्यति ॥

न च तस्या(?स्मा)दधोवायुः कर्मकाले द्विजस्य यत् ।
कृत्वा शौचं द्विराचम्य शिष्टं कर्म समापयेत् ॥

(१) लघ्वाश्वस्मृ. १६।१–६ ; संग. ६३–६४ दक्षिणतो भवेत् (दक्षिणतः सदा) संस्कारकस्तु (संस्कारकर्ता) प्रथमश्लोकमात्रम्, प्रयोगपारिजाते.

(२) लघ्वाश्वस्मृ. २०।१०–१२.

ऋक्शाखिनां स्वशाखोक्तकर्मनियमः, अन्येषां स्वीयाभावे ऋक्शाखीयविधिः

[१]मन्त्रैश्चैव स्वशाखोक्तैः कर्म कुर्याद्यथाविधि।
अन्यथा कर्महानिः स्याद्बह्वृचानामयं विधिः॥
कर्मणां याजुषादीनां स्वस्वशाखा न विद्यते।
ऋक्शाखाविहितं कर्म समानं सर्वशाखिनाम्॥
बह्वृचानां तु यत्कर्म यदि स्यादन्यशाखया।
पुनश्चैवापि तत्कर्म कुर्याद्बह्वृचशाखया॥

## जातूकर्ण्यः

वस्त्रदोषाः

[२]काषायं कृष्णवस्त्रं वा मलिनं केशदूषितम्।
छिन्नाग्रं चोपवस्त्रं च कुत्सितं धर्मतो विदुः॥

उत्तरीयानुकल्पः

[३]वस्त्रोत्तरीयाभावे द्व्यङ्गुलं त्र्यङ्गुलं चतुरङ्गुलं वा सूत्रैर्वस्त्राकृति परिमण्डलं तदुत्तरीयं कुर्यात्॥

## सांख्यायनः

दक्षिणश्रवणस्पर्शे हेतुः

[४]आदित्या वसवो रुद्रा वायुरग्निश्च धर्मराट्।
विप्रस्य दक्षिणे कर्णे नित्यं तिष्ठन्ति सर्वदा॥

## कश्यपः

अहतलक्षणम्

*[५]अहतं यन्त्रनिर्मुक्तं वासः प्रोक्तं स्वयंभुवा।
शस्तं तन्माङ्गलिक्येषु तावत्कालं न सर्वदा॥

---

* संदीव्याख्यानम् 'ईषद्धौतं नवं श्वेतं' इति प्रचेतसो वचने (सं. का. पृ. १२५२) द्रष्टव्यम्।

(१) लघ्वाश्वस्मृ. २४।१६–१८.

(२) स्मृच. ११४; मुक्ता. २५२ चोपवस्त्रं (चापवित्रं) जातूकर्णिः.

(३) स्मृच. ११४; मुक्ता. २५३ जातूकर्णिः.

(४) संग. २७५.

(५) अप. १।२२५ पृ. ४६२ वासः प्रोक्तं (उक्तं वासः); स्मृच. ४३५ (श्रा.) अपवत्; गभा. ६९

(१) माङ्गलिक्यं विवाहादि। ततोऽन्यत्र सकृत्प्रक्षालितमहतमित्याह प्रचेताः– 'ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम्। अहतं तद्विजानीयात्सर्वकर्मसु पावनम्॥'। अप. १।२२५ पृ. ४६२

(२) यन्त्रनिर्मुक्तं नूतनम्। सिन्धु. ११२५

(३) नववस्त्रविषये तत्रैव कश्यपः– अहतमिति। यन्त्रनिर्मुक्तं विवाहकाले एव, न तदूर्ध्वम्। पुम. ४५३

## शाट्यायनः

प्रौढपादताया निषेधः प्रौढपादलक्षणं च

[१]दानमाचमनं होमं भोजनं देवतार्चनम्।
प्रौढपादो न कुर्वीत स्वाध्यायं पितृतर्पणम्॥
[२]आसनारूढपादस्तु जानुनोर्वाऽथ जङ्घयोः।
कृतावसक्थिको यस्तु प्रौढपादः स उच्यते॥

---

तन्माङ्गलिक्येषु (तन्मङ्गले नूनं); सिन्धु. ११२५; संग. २५८ गभावत्; पुम. ४५३; संर. ५३५; संदी. ४. सत्यतपसोऽप्येतद्वचनम्, तत्रापि केचित्स्थलनिर्देशाः पाठभेदाश्च द्रष्टव्याः.

(१) ब्रक. ५७–५८; चव्र. ३५ कात्यायनः; चदा. ९०; कृर. ४८; वीमि. १।२० पृ. ४२ शाङ्खायनः; पप्र. ८३ माचमनं (मध्ययनं); मुक्ता. १६ (=) दान (स्नान); आर. ५ शाट्यायनिः; आम. ३ शाट्यायनिः; इन्दु. १३ दान (पाद्य) सांख्यायनः.

(२) ब्रक. ५८ र्वाऽथ जङ्घयोः (र्जङ्घयोस्तथा); चव्र. ३५ जानुनोर्वाऽथ जङ्घयोः (जान्वोर्वाऽञ्जलयोस्तथा) यस्तु (यः स्यात्) कात्यायनः; चदा. ९० जानुनोर्वाऽथ जङ्घयोः (जान्वोर्वा जङ्घयोस्तथा) यस्तु (यश्च); कृर. ४८ चदावत्; वीमि. १।२० पृ. ४२ जानुनोर्वाऽथ जङ्घयोः (जानूर्वोर्जङ्घयोस्तथा) शाङ्खायनः; पप्र. ८३; मुक्ता. १६ जानुनोर्वाऽथ जङ्घयोः (जान्वोर्वा जङ्घयोस्तथा): २२३ पूर्वार्धे (आसनारूढपादो वा जान्वोर्वा जङ्घयोस्तथा।) यस्तु (यश्च) भृगुः; आर. ५ मुक्ता. २२३ वत्, शाट्यायनिः; आम. ३ पूर्वार्धे (आसनारूढपादो

(१) कृतावसक्थिको बद्धपर्यङ्कः । कूर. ४८

(२) कृतावसक्थिकः कृतापाश्रयः, बद्धपर्वाङ्गः इत्येके। जलस्थं स्थलस्थं वाऽनेकोद्वाह्यं प्रक्षालितमेकोद्वाह्यमपि दारु नाऽऽसनमपि तु वेदीस्थानीयम्, अतस्तत्र पादारोहणं न दोष इत्यभिनववर्धमानोपाध्यायः।
वीमि. १।२० पृ. ४२

(३) आसनं पीठादि। अत्र आरूढपदस्वरसादाचाराच्च संपूर्णपादतलभागस्यैवाऽऽसनसंबन्धो निषिद्धः, न तु पादपार्श्वादिभागस्येति वदन्ति। यत्र संध्योपासनादौ आसनोपवेशनं विहितं तत्राऽऽसनमङ्गम्, आचमनादौ च निषिद्धम्, इतरकर्मस्वविरुद्धम्। आचारादार्द्रासनादौ न निविशन्ति। असंभवे तत्र श्रीकारं लिखित्वोपविशन्ति केचित्। जानुनोर्जङ्घयोर्वा, आरूढपाद इत्यनुषज्यते। कृतावसक्थिकः वस्त्रादिना कृतपृष्ठजानुजङ्घाबन्धः। अत्र तुशब्दद्वयवाशब्दाथशब्दैर्भेदः प्रतीयते। अत्र चानेकोद्वाह्ये दारुशिले भूमिसमे इष्टकाश्च संकीर्णीभूता इति बौधायनस्वरसात्तथाविधे आरूढपादोऽपि कुर्यादिति वदन्ति।
पप्र. ८३–८४

(४) इदं सर्वकर्मोपलक्षणम्। प्रौढपादलक्षणं तेनैवोक्तम्– 'आसनारूढपादो वा... ॥'। पादोपरिपाददाता प्रौढपाद इति हरदत्तः। तन्न, 'नाऽऽक्रम्य पादं पादेन न च व्यवहितौ करौ। जपेन्न प्रौढपादस्तु न प्रकाशकरः सदा ॥' इति स्मृतिरत्नावल्यां पुनः प्रौढपादोक्तेः।
आर. ५

कर्मादौ प्रणवोच्चारणम्

[१]**दानयज्ञतपःस्वाध्यायजपध्यानसंध्योपासनप्राणायामहोमदैवपित्र्यमन्त्रोच्चारणब्रह्मारम्भादीनि प्रणवमुच्चार्य प्रवर्तयेत् ॥**

अतश्च मन्त्रमात्रोच्चारणे आदावोंकारः कार्य इति सर्वानुक्रमसूत्रभाष्ये। केचित्तु प्रवर्तयेदिति वचनात् प्रारम्भे एव युक्तः। तथा च छन्दोगपरिशिष्टे कात्यायनः– 'नोंकुर्याद्धोममन्त्राणां पृथगादिषु कुत्रचित्। अन्येषां च विकृष्टानां कालेनाऽऽचमनादिना ॥' इति।
संदी. १२

## शाण्डिल्यः

कर्तुरावृतकण्ठत्वार्द्रवस्त्रत्वयोर्निषेधः

[१]**प्रदक्षिणे प्रणामे च पूजायां हवने जपे। न कण्ठावृतवस्त्रः स्याद् दर्शने गुरुदेवयोः ॥**

[२]**आर्द्रवासा न कुर्वीत कर्म किंचित्कथंचन। राक्षसं तद्धि विज्ञेयं तस्माद्यत्नेन वर्जयेत् ॥**

## कौशिकः

प्रशस्ता दर्भाः, दर्भ–कुश–कुतप–तृणलक्षणानि, कुतपोपयोगश्च

[३]**सप्तपत्राः शुभा दर्भास्तीरक्षेत्रसमुद्भवाः। ते प्रशस्ता द्विजातीनां दैवे पित्र्ये च कर्मणि ॥**

[४]**अप्रसूताः स्मृता दर्भाः प्रसूतास्तु कुशाः स्मृताः। समूलाः कुतपाः प्रोक्ताश्छिन्नाग्रास्तृणसंज्ञिताः ॥**

(१) दर्भादिलक्षणमाह कौशिकः– सप्तपत्रा इति। अप्रसूताः असंजातप्रसवाः अपुष्पिता इति यावत्।
पप्र. ९७–९८

(२) प्रसूनं पुष्पम्। संर. १७

---

वा जान्वोर्वा जङ्घयोस्तथा।) शाट्यायनिः; इन्दु. १३ सांख्यायनः.

(१) संदी. १२.

(१) मुक्ता. १६, ३४१.

(२) मुक्ता. ३५; आन. १९५.

(३) स्मृच. १०८; पप्र. ९७ स्तीरक्षेत्र (स्तिलक्षेत्र); मुक्ता. २३१ पूर्वार्धे (सप्त दर्भाः शुभाः कार्यास्तिलक्षेत्रसमुद्भवाः।) कात्यायनः.

(४) स्मृच. १०८; पप्र. ९७ प्रसूतास्तु (पुष्पितास्तु); मुक्ता. २३१ प्रोक्ता (ज्ञेया) कात्यायनः; संर. १७ अप्रसूताः (सप्रसूनाः) प्रसूतास्तु (अप्रसूनाः).

कुशच्छेदनविधिः

[1]शुचौ देशे शुचिर्भूत्वा स्थित्वा पूर्वोत्तरामुखः ।
ओंकारेणैव मन्त्रेण कुशान्स्पृष्ट्वा द्विजोत्तमः ॥
[2]विरिञ्चिना सहोत्पन्न परमेष्ठिनिसर्गज ।
नुद पापानि सर्वाणि कुश स्वस्तिकरो भव ॥
[3]इमं मन्त्रं समुच्चार्य ततः पूर्वोत्तरामुखः ।
हुंफट्कारेण दर्भांस्तु सकृच्छित्त्वा समुद्धरेत् ॥

कुशच्छेदनविधिमाह कौशिकः— शुचाविति । क्त्वाप्रत्ययादेव छेदनेऽपि पूर्वोत्तरामुखत्वे सिद्धे पुनर्वचनं विशेषविधिप्रतिपादितधर्मान्तरपरिसंख्यार्थम् । तेन स्थित्वेत्यस्यैव विशेषविधिप्रतिपादितत्वात् छेदने निवृत्तिः । शुचौ देशे शुचिर्भूत्वेत्यस्य तु न निवृत्तिः , विशेषविधिप्रतिपादितत्वाभावादिति द्रष्टव्यम् । क्वचिच्छेदने विशेष उक्तो भरद्वाजेन— 'प्रेतक्रियार्थं पित्रर्थमभिचारार्थमेव च । दक्षिणाभिमुखश्छिन्द्यात्प्राचीनावीतिको द्विजः ॥' इति ।　　　संर. १६

कुशासनप्रशंसा

[4]कुशासनं सदा पूतं यतीनां तु विशेषतः ।
कुशानोपविष्टस्य सिध्यते योग उत्तमः ॥

पवित्रप्रशंसा आचमने सपवित्रकरत्वं च

[1]यथा पुष्करपर्णेषु अपां लेपो न विद्यते ।
एवं पवित्रहस्तस्य पापलेपो न विद्यते ॥
[2]अपवित्रकरः कश्चिद्ब्राह्मणो य उपस्पृशेत् ।
[3]अपूतं तस्य तत्सर्वं भवत्याचमनं तथा ॥

## सत्यतपाः

अहतस्य लक्षणं विनियोगश्च

†अहतं यन्त्रनिर्मुक्तमुक्तं वासः स्वयंभुवा ।
शस्तं तन्माङ्गलिक्येषु तावत्कालं न सर्वदा ॥
माङ्गलिक्यं विवाहादि ।　　　§ स्मृच. ११३

## पुलस्त्यः

पूर्वकालकृतस्य मुख्यकाले पुनःकरणम् , कालातीतस्य व्यर्थत्वं च

[4]अकाले चेत्कृतं कर्म कालं प्राप्य पुनः क्रिया ।
कालातीतं तु यत्कुर्यादकृतं तद्विनिर्दिशेत् ॥

अकाले अनागते काले कृतं पुनः काले कर्तव्यम् । अतीते तु काले कृते तस्यानुपादेयत्वात् कृतमप्यकृतमेवेत्यर्थः ।　　　स्मृच. १६२

## बैजवापः

दैवे रजतस्य दक्षिणात्वनिषेधः

[5]शिवनेत्रोद्भवं यस्मात्तस्मात्तत्पितृवल्लभम् ।
अमङ्गलं तद्यत्नेन देवकार्येषु वर्जितम् ॥

---

(१) स्मृच. १०७ कुशान् स्पृष्ट्वा द्विजोत्तमः ( कुशाः स्पृश्या द्विजोत्तमैः ); पमा. २३६ स्मृचवत् ; प्रपा. ३४ ; मर. ३४ स्मृचवत् ; प्रर. ५० कश्यपः ; पप्र. १०२ स्मृचवत् ; प्रका. ३५ कश्यपः ; संर. १६ ओंकारेणैव ( ओंकारेण तु ).

(२) स्मृच. १०७ कुश स्वस्तिकरो भव ( भव स्वस्तिकरो मम ); पमा. २३६ कुश स्वस्तिकरो भव ( दर्भ स्वस्तिकरो मम ); प्रपा. ३४ पमावत् ; मर. ३४ कुश ( दर्भ ); प्रर. ५० उत्तरार्धे ( नुद सर्वाणि पापानि दर्भ स्वस्तिकरो मम ॥ ) कश्यपः ; पप्र. १०३ ; प्रका. ३५ प्ररवत् , कश्यपः ; संर. १६ पापानि सर्वाणि ( सर्वाणि पापानि ) .

(३) प्रपा. ३४ ; प्रर. ५० कश्यपः ; पप्र. १०३ इमं ( एतं ) दर्भांस्तु ( मन्त्रेण ); प्रका. ३५ कश्यपः ; संर. १६.

(४) स्मृच. १०७ ; मुक्ता. २३० सदा ( परं ) .

† कश्यपस्याप्येतद्वचनम् । तत्रापि व्याख्यानानि द्रष्टव्यानि ।

§ मुक्ता., आन. स्मृचवत् ।

(१) मुक्ता. २३०.

(२) स्मृच. १०२ णो य ( णोऽपि ); मुक्ता. २३०.

(३) स्मृच. ११३ ; जभा. १९८ (=) शस्तं तन्माङ्गलिक्येषु ( स्वच्छं तन्माङ्गलीकेषु ); मुक्ता. २५२ ; आन. ३१( = ); इन्दु. २३(=) उक्तं वासः ( वासः प्रोक्तं ).

(४) स्मृच. १६२ ; प्रपा. ३९१ चेत्कृतं ( यत्कृतं ); मुक्ता. १५ प्रपावत् , स्मृत्यन्तरम् : ३११ तु यत् ( तु यः ) क्रमेण व्यासः .　　　(५) प्रपा. ५३.

रजतस्य दक्षिणात्वेन निषेध उच्यते वैजवापेन—शिवेति। प्रपा. ५३

स्वगृह्योक्तमात्रकरणेन कृतकृत्यता

**[1]बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म प्रचोदितम्।**
**तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत्॥**

## छागलेयः

ब्रह्मतीर्थं तद्विनियोगश्च

**[2]हस्तमध्ये ब्रह्मतीर्थं दक्षिणाग्रहणे च तत्॥**

## सप्तर्षिस्मृतिः

शुचित्वमधिकारिविशेषणम्

**[3]सदा कुर्याद्धर्मकार्यमापद्यपि शुचिर्नरः॥**

तत्र विधिरूप आचारे शुचित्वमधिकारितावच्छेदकम्, 'सदा कुर्याद्धर्मकार्यमापद्यपि शुचिर्नरः।' इति टोडरानन्दे सप्तर्षिस्मृतेः, 'श्रुतिस्मृत्युदितं कर्म न कुर्यादशुचिः क्वचित्।' इति प्रयोगपारिजाते भृगूक्तेश्च। ¶ आर. १

## स्मृत्यन्तरम्

शुचित्वमधिकारिविशेषणम्

**[4]शुचिः कर्माणि कुर्वीत॥**

विहितकर्मानुष्ठाने शुचित्वमपेक्षितम्, 'शुचिः कर्माणि कुर्वीत' इति स्मृतेः। शुचित्वं च देहस्यैव, न तु जीवस्य, तस्य नित्यशुचित्वात्। तस्य भोगायतने नवद्वारे शरीरे शुद्धे स्वतःसिद्धं शुचित्वं जागर्ति, अन्यथा अधिष्ठानदोषेण जीवस्याशुचित्वमौपाधिकं भवति। अतस्तन्निवृत्त्यर्थमवश्यं संपादनीयं शुचित्वम्। तच्च आचारेणैव भवति, 'आचारप्रभवो धर्मः' इति स्मृतेः। आन. ३

रजस्वलापतेः गर्भिणीपतेश्चाऽऽर्त्विज्यानर्हता

**[1]रजस्वलाऽङ्गना यस्य गर्भिणी वा यदा भवेत्।**
**न यज्ञे वरणे योग्यो गालवो मुनिरब्रवीत्॥**

सर्वकर्मादौ नारायणनमस्कारः

**[2]सर्वमङ्गलमङ्गल्यं वरेण्यं वरदं शुभम्।**
**नारायणं नमस्कृत्य सर्वकर्माणि कारयेत्॥**

यजमान–पत्नी–पुत्राणां स्थाननियमः

**[3]जातके नामके चैव ह्यन्नप्राशनकर्मणि।**
**निष्क्रमणे च चौले च पत्नी पुत्रस्तु दक्षिणे॥**
**[4]गर्भाधाने पुंसवने सीमन्तोन्नयने तथा।**
**वधूप्रवेशने चैव पुनःसंधान एव च॥**
**[5]पूजने मधुपर्कस्य कन्यादाने तथैव च।**
**कर्मस्वेतेषु वै भार्या दक्षिणे तूपवेशयेत्॥**
**[6]कन्यापुत्रविवाहे च गोदाने व्रतबन्धने।**
**आशीर्वादेऽभिषेके च पादप्रक्षालने तथा।**
**शयने भोजने चैव पत्नी तूत्तरतो भवेत्॥**

---

¶ संदी. आरवत्।

(१) कृभ. ११७२; इन्दु. ५ सर्वः कृतो (सर्वं कृतं) वैजवापायनः.

(२) ब्रक. ५५ तत् (यत्); चव्र. ३४ च (तु); चदा. ९४ च तत् (न तु); पप्र. ७८.

(३) आर. १; संदी. १.

(४) आन. ३.

(१) संर. ६१६.

(२) निप्र. २५.

(३) धप्र. ३८; संग. ६४ उत्तरार्धे (तथा निष्क्रमणे चैव पत्नी पुत्रस्य दक्षिणे॥) धर्मप्रवृत्तौ; संदी. ५३ उत्तरार्धे (तथा निष्क्रमणे चैव पत्नीपुत्रं च दक्षिणे॥) धर्मप्रवृत्तौ.

(४) धप्र. ३८; संग. ६४ धर्मप्रवृत्तौ; संदी. ५३ धर्मप्रवृत्तौ.

(५) धप्र. ३८; संग. ६४ धर्मप्रवृत्तौ; संदी. ५३ पूजने (प्रदाने) धर्मप्रवृत्तौ.

(६) धप्र. ३८ द्वितीयार्धे (आशीर्वादेऽभिषेके च पत्नी तूत्तरतो भवेत्।) उत्तरग्रन्थावलोकनेन 'पादप्रक्षालने तथा। शयने भोजने चैव' अयमंशो गलितः स्यादिति भाति; संग. ६४ (आशीर्वादेऽभिषेके च पत्नी तूत्तरतो भवेत्।) एतावदेव, धर्मप्रवृत्तौ; संदी. ५३ प्रथमार्धं नास्ति, धर्मप्रवृत्तौ.

[1]वापीकूपतडागानां प्रतिष्ठायां महोत्सवे ।
व्रतादौ शान्तिके चैव पत्नी स्यादुत्तरे सदा ॥

शान्तिकेषु च सर्वेषु प्रतिष्ठोद्यापनादिषु ।
वामे तूपविशेत्पत्नी व्याघ्रस्य वचनं यथा ॥

प्रशस्तान्यासनदारूणि

[2]शमीकाश्मर्यशल्लाश्च कदम्बो वरणस्तथा ।
पञ्चाऽऽसनानि शस्तानि श्राद्धे देवार्चने तथा ॥

आसनान्याह श्राद्धकाशिकायाम्— शमीकाश्मर्येति । श्राद्धे देवार्चने इति दैवपित्र्यकर्ममात्रोपलक्षणम् ।

संदी. १०

समिद्गुणाः

[3]प्रादेशमात्रा अशिखा अशुष्काश्च पलाशिनीः ।
समिधः कल्पयेत्प्राज्ञः सर्वकर्मसु सर्वदा ॥

देवानामपि सर्वेषां पालाशीं परमार्थवित् ॥

दर्भाणां मासमयातयामता

[4]मासि मास्याहृता दर्भास्तत्तन्मास्येव चोदिताः ॥

अहन्यहनि दर्भच्छेदनासंभवे कालान्तरमुक्तं स्मृत्यन्तरे— मासि मासीति । अस्याप्यसंभवे विष्णुः— ' दर्शे श्रावणमासस्य समन्त्रोत्पाटिताः कुशाः । अयातयामास्ते दर्भा नियोज्याः स्युः पुनः पुनः ॥ ' इति ।

संर. १५

हस्तादिधार्यदर्भसंख्या

[5]द्वौ दर्भौ दक्षिणे हस्ते सव्ये पाण्यासने सकृत् (?)।
उपवीते शिखायां तु पादमूले सकृत्सकृत् ॥

(१) धप्र. ३८.

(२) श्राका. ४५० ; संदी. १० वरण (वारण) श्राद्धकाशिकायाम्.

(३) वीमि. १।३०२.

(४) संर. १५.

(५) मर. ३४.

पवित्रे दर्भसंख्या

[1]चतुर्भिर्दर्भपिञ्जूलैर्द्वाभ्यां वाऽथ पवित्रकम् ।
दैवे कर्मणि कर्तव्यं पित्र्ये तत्त्रिभिरीरितम् ॥

समूलामूलदर्भव्यवस्था

[2]अमूला देवकार्येषु पितृकार्ये समूलकाः ॥

अङ्गुलिगतं पवित्रधारणस्थानम्

[3]सव्यापसव्यवलितं ब्रह्मग्रन्थिसमन्वितम् ।
लङ्घयेत्पर्व चैकं तु द्विपर्वौ नैव लङ्घयेत् ॥

धारणपवित्रे विशेषमाह स्मृतिः— सव्यापसव्यवलितमिति ।

पप्र. ९६

पवित्रलक्षणम्

[4]द्व्यङ्गुलं मूलतः कुर्याद्ग्रन्थिरेकाङ्गुलस्तथा ।
चतुरङ्गुलमग्रं स्यात्पवित्रस्य च लक्षणम् ॥

विशेषतः पवित्रलक्षणमुक्तं स्मृत्यन्तरे— द्व्यङ्गुलमिति ।

संर. १८

पवित्रत्यागप्रकारः

[5]नित्ये नैमित्तिके वाऽपि कर्मोपकरणे द्विजः ।
धृतं पवित्रं कर्मान्ते ग्रन्थिं मुक्त्वैव तत्त्यजेत् ॥

पवित्रत्यागे विशेष उक्तः स्मृत्यन्तरे— नित्ये इति ।

संर. १९

बर्हिर्मानम्

[6]यज्ञियानां तृणानां तु अग्रे प्रादेशमात्रतः ।
प्रच्छिद्य प्रतिगृह्णीयान्मुष्टिमात्रं तु बर्हिषि ॥

नग्नताप्रकाराः , नग्नस्य कर्मानधिकारश्च

[7]नग्नः काषायवासाः स्यान्नग्नः कौपीनवानपि ।
नग्नो मलिनवासाः स्यान्नग्नश्चार्धपटस्तथा ॥

(१) संर. १८.

(२) संर. १७.

(३) पप्र. ९६.

(४) संर. १८.

(५) संर. १९.  (६) संर. ६२.

(७) निप्र. २९. भृगावपि एतत्सदृशौ श्लोकौ स्तः । कदाचित्तयोरेवायं पाठभेदः स्यात् ।

नग्नो द्विगुणवासाः स्यान्नग्नः स्यूतपटस्तथा ।
अकक्षोऽनुत्तरीयश्च नग्नो वर्ज्यो विवस्त्रवत् ॥

वर्ज्यः कर्माधिकारे । निप्र. २९

अहतस्य धातुरक्तस्य च वस्त्रस्य कर्मार्हत्वम्

[१]अहतं धातुरक्तं च तत्पवित्रमिति स्मृतम् ॥

यत्तु 'अहतं धातुरक्तं च तत्पवित्रमिति स्मृतम् ।' इति स्मर्यते, तत् अनुल्बणरक्ताभिप्रायम् ।

मुक्ता. २५२

कर्मकाले कटिबन्धननिषेधः

[२]गृहस्थः कुरुते कर्म वैदिकं वाऽथ तान्त्रिकम् ।
कटिबन्धनसंयुक्तं तत्सर्वं निष्फलं भवेत् ॥

अस्मादेव वचनादुपनयनात्प्राग्वैदिकतान्त्रिककर्मण्यनधिकारः, तावत्पर्यन्तं कटिबन्धने न दोष इति गम्यते । तच्चाऽऽश्वलायनेनोक्तम्— 'रौप्यं कार्पासजं हैमीं पट्टसूत्रकृतां तु वा । वर्जयेत्कर्मकाले तु काञ्चीं विप्रः प्रयत्नतः ॥' इति । संर. ८९७

दक्षिणश्रवणस्पर्शनिमित्तानि

[३]क्षुते निष्ठीविते वान्ते परिधानेऽश्रुमोचने ।
कर्मस्थ एषु नाऽऽचामेद्दक्षिणं श्रवणं स्पृशेत् ॥

अरत्निमानम्

[४]कूर्परमारभ्य कनिष्ठिकापर्यन्त आयामोऽरत्निः ॥

आचमनानिमित्तभक्षणानि

[५]द्राक्षादीनि फलानीक्षून्पयो मूलं घृतं दधि ।
ताम्बूलमौषधं पत्रं हविर्भुक्त्वाऽपि
नाऽऽचमेत् ॥

(१) स्मृच. ११३ (=) स्मृतम् (स्थितिः); मुक्ता. २५२.
(२) संर. १८६, ८९७.
(३) संत. ८९६.
(४) संर. ५१.
(५) अप. १।१९६.

मन्त्रे अदःपदस्थाने एव नामोच्चारणम्

[§]अदःपदं हि यद्रूपं यत्र मन्त्रे हि दृश्यते ।
साध्याभिधानं तद्रूपं तत्र स्थाने नियोजयेत् ।

अतोऽदःपद एव नामोहः, न तु विरूपाक्षजपादौ 'इदम्' इत्यादौ । संत. ८६५

एककर्तृकानेककर्मसु अष्टवर्गस्यैकत्वं संकल्पस्य पृथक्त्वं च

[१]एक एव तु कर्ता स्यादनेकेष्वपि कर्मसु ।
अष्टवर्गो भवेदेकः संकल्पस्तु पृथक्पृथक् ॥

## वायुपुराणम्

आचमनस्य साङ्गुष्ठहस्तस्य च कर्माङ्गत्वम्

[३]क्रियां यः कुरुते मोहादनाचम्यैव नास्तिकः ।
भवन्ति हि वृथा तस्य क्रियाः सर्वा न
संशयः ॥

[४]दानं प्रतिग्रहो होमो भोजनं बलिरेव च ।
साङ्गुष्ठेन सदा कार्यमसुरेभ्योऽन्यथा भवेत् ॥

§ यद्यपि संस्कारतत्त्वे 'नारायणीये' इति परिशिष्टप्रकाशो निरदिश्यत तथाऽपि अस्मत्प्रकाशपुस्तकस्य विकलत्वात् परिशिष्टटीकान्तरे स्मृतित्वेनोल्लेखाच्च वचनमिदमत्र संगृहीतम् ।

(१) संत. ८६५ नारायणीये.
(२) धप्र. ५३.
(३) वायु. ७९।४६-४७ हि (च) सर्वा (ह्येता); अप. १।१५४ पृ. २२९ चम्यैव (चम्येह) पुराणम्; स्मृच. ९८ क्रियां यः (यः क्रियाः) पुराणम्; चव्र. ३४–३५ हि (तु) शेषं अपवत्; चदा. ९० हि वृथा (न तथा) शेषं अपवत्; कृर. ४६ मोहात् (लोभात्) साम्बपुराणम्; निप्र. २७; वीमि. १।१८ चम्यैव नास्तिकः (चम्येह मानवः) हि वृथा तस्य (निष्फलास्तस्य); आर. ३ क्रियां यः (यः क्रियां) शेषं अपवत्.
(४) वायु. ७९।८८ उत्तरार्धे (साङ्गुष्ठेन तथा कार्यं नासुरेभ्यो यथा भवेत् ॥); ब्रक. ६४; चव्र. ३८; चदा. १००; कृर. ४५; पप्र. ९३; आर. ५.

साङ्गुष्ठेन अङ्गुलीसहिताङ्गुष्ठेन । ¶ ब्रक. ६४

अन्तर्जानुतायाः कर्माङ्गत्वम्

[1]एतान्येव च कर्माणि दानादीनि विशेषतः ।
अन्तर्जानु विधेयानि तद्वदाचमनं नृप ॥

अन्तर्जानु जानुनोर्मध्ये यथा बाहू भवतः तथा कर्तव्यमित्यर्थः । $ ब्रक. ६५

अयातयामषट्कम्

[2]दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणा हविरग्नयः ।
अयातयामान्येतानि नियोज्यानि पुनः पुनः ॥

यातयामं जीर्णं तद्भिन्नं नवम्, तेन कर्मार्हता लक्ष्यते । पप्र. १००

श्राद्धे प्रस्तरार्हा वर्ज्या ग्राह्याश्च दर्भाः

[3]रत्निप्रमाणाः शस्ता वै पितृतीर्थेन संस्कृताः ।
उपमूले तथा लूनाः प्रस्तरार्थे कुशोत्तराः ॥

[4]गुन्द्राः श्राद्धे क्षीरकुशा बल्वजा गन्धकी तथा ।
वीरणाश्चोपलाश्चैव लम्बा वर्ज्याश्च नित्यशः ॥

संस्कृता इति । पितृतीर्थसंयोग एवात्र संस्कारः । प्रस्तरोऽत्र पिण्डप्रस्तरः । गुन्द्राः मुस्तकाः । क्षीरकुशाः प्रत्यग्रजाताः कुशाः क्षीरस्राविकुशविशेषा वा । गन्धकी गन्धतृणम् । लम्बाः विहितप्रमाणाधिकप्रमाणाः ।

पप्र. १००

[5]गोकर्णदीर्घहरिताः श्राद्धे साग्राः समूलकाः ॥

मुख्यसमिधस्तदनुकल्पाश्च

[1]पालाश्यः समिधः कार्याः खादिर्यस्तदलाभतः ।
शमीरोहितकाश्वत्थास्तदलाभेऽर्कवेतसौ ॥

समिन्नियमो वायवीये– पालाश्य इति । रोहितकः वटावान्तरजातिः । रोहितः वर्णः अस्यास्तीति मत्वर्थीयोऽच् । स्वार्थे कन् । रोहीतक इति दीर्घेकारवानप्येतदर्थक एव । संर. २६०

ग्राम्यौषधयः

[2]व्रीहयश्च यवाश्चैव गोधूमा अणवस्तिलाः ।
प्रियङ्गवो ह्युदाराश्च कारूषाश्च सतीनकाः ॥

[3]माषा मुद्गा मसूराश्च निष्पावाः सकुलत्थकाः ।
आढकयश्चणकाश्चैव साणाः सप्तदश स्मृताः ।
इत्येता ओषधीनां तु ग्राम्याणां जातयः स्मृताः ॥

व्रीहिः षष्टिका, प्रियङ्गुः कामली कङ्गलीति प्रसिद्धा, उदारो देवधान्यम्, कोरदूषः कोद्रवः, सतीनकः कलायः, निष्पावः श्वेतसित्यः, आढकी तुवरी राहनित्विति प्रसिद्धा, एवं मुख्यधान्येन सममष्टादश धान्यानि भवन्ति । कृर. ६९

---

¶ चव्र., चदा., कृर., पप्र., आर. ब्रकवत् ।

$ पप्र. ब्रकवत् ।

(१) वायु. ७९।८९ कर्माणि (सर्वाणि) उत्तरार्धे (अन्तर्जान्वविशेषेण तद्वदाचमनं भवेत् ॥); ब्रक. ६४ च (तु) विधेयानि (विशेषेण); चव्र. ३८ च कर्माणि (तु कार्याणि) चदा. १०० कर्माणि (कार्याणि); कृर. ४७ विधेयानि (विशेषेण); पप्र. ९३ ब्रकवत्.

(२) पप्र. १०० क्रमेण वायुपुराणम्. ब्रक., चदा. इत्यादिग्रन्थेषु 'गृह्यपरिशिष्टम्' इत्युल्लिख्य श्लोकोऽयं संगृहीतः ।

(३) पप्र. ९८. (४) पप्र. १००. (५) निप्र. ३४,

(१) अप. १।२५ वेतसौ (वेतसाः); स्मृच. ३३ लाभेऽर्के (भावेऽर्के); पमा. ४५२ स्मृचवत्; मपा. २४ स्मृचवत्; प्रपा. २४२; मर. ७ स्मृचवत्; पप्र. १०४ स्मृचवत्; संप्र.४४८; चम. २५ वेतसौ (वैतसौ) शेषं स्मृचवत्; विपा. ४९९ पालाश्यः (पलाश) तदलाभे (तदभावे); संकौ. १५९ स्मृचवत्; संग. ६७९ लाभतः (भावतः) लाभेऽर्कवेतसौ (भावेऽर्कवेतसम्); संर. २६० स्मृचवत्.

(२) वायु. ८।१५०–१५१; कृर. ६९ कारूषाश्च सतीनकाः (कोरदूषाः सचीनकाः) व्याख्याने टिप्पण्यां च सतीनका इति पाठः.

(३) वायु. ८।१५१–१५२; कृर. ६९ द्वितीयार्धे (आढक्यश्चैव चणका रङ्काः सप्तदश स्मृताः ।) तृतीयार्धं नास्ति.

यज्ञार्हग्राम्यारण्यौषधयः

[1]ओषध्यो यज्ञियाश्चैव ग्राम्यारण्याश्चतुर्दश ।
व्रीहयः सयवा माषा गोधूमा अणवस्तिलाः ॥
प्रियङ्गुसप्तमा ह्येते अष्टमी तु कुलत्थिका ।
श्यामाकास्त्वथ नीवारा जर्तिलाः सगवेधुकाः ॥
कुरुविन्दा वेणुयवास्तथा मर्कटकाश्च ये ।
ग्राम्यारण्याः स्मृता ह्येता ओषध्यस्तु चतुर्दश ‡ ॥

स्रुक्स्रुवप्रकृतिद्रव्याणि

[2]स्रुक्स्रुवौ तैजसौ ग्राह्यौ न कांस्यायससैसकौ ।
यज्ञदारुमयौ वाऽपि तान्त्रिकौ शिल्पिसंमतौ ॥

दैवपित्र्यभेदेन त्रिः सकृच्चानुष्ठेयानि कर्माणि

[3]कण्डनं पेषणं चैव तथैवोल्लेखनं सदा ।
सकृदेव पितॄणां स्याद्देवानां तु त्रिरुच्यते ॥

(१) उल्लेखनं ह्यपराङ्मुखत्वेन( ? ह्यात्मपराङ्मुखत्वेन ) रेखाकरणम् । व्रक. ७१

(२) खण्डनं बर्हिरादेश्छेदनम् । पेषणं भूमिघर्षणादिकम् । उल्लेखनक्रिया पिण्डनिर्वापणस्थाने लेखाकरणम् । स्मृच. ४७२

(३) उल्लेखनं स्वात्मपराङ्मुखत्वेन रेखाकरणमिति कल्पतरुः । पप्र. १११

‡ अत्र उपक्रमोपसंहारयोश्चतुर्दशत्वमुक्तम् । संख्याने तु पञ्चदश भवन्ति । विष्णुपुराणेऽप्येते श्लोकाः सन्ति । तत्र कुरुविन्दा न पठिताः । 'तथा वेणुयवाः प्रोक्ताः' इति तत्पाठः । मार्कण्डेये तु कुरुविन्दाः पठिताः, माषास्तु न पठिताः । भविष्यपुराणे अणुतिलकुरुविन्दमर्कटकस्थानेषु सर्षपमुद्गकोविदारा उक्ताः ।

(१) वायु. ८।१५३–१५५.

(२) संदी. ३२ वायवीयसंहितायाम्.

(३) व्रक. ७० तु (च); स्मृच. ४७२ (श्रा.) कण्डनं (खण्डनं) नं सदा (नक्रिया) ब्रह्माण्डपुराणे; चदा. १३८ तु (तत्); पप्र. १११; संग. २७ नं सदा (नक्रिया) देवानां तु (देवतानां); संदी. २६ संगवत्.

सं. का. १५९

## ब्रह्माण्डपुराणम्

प्रस्तरार्थं छिन्नमूलदर्भाणां ग्रहणम्

[1]छिन्नमूला ग्रहीतव्याः प्रस्तरार्थं द्विजोत्तमैः ।
अग्निकार्ये च यागे च समूलान् परिवर्जयेत् ॥

पञ्च पल्लवाः पञ्च त्वचश्च

[2]अश्वत्थोदुम्बरप्लक्षचूतन्यग्रोधपल्लवाः ।
पञ्चभङ्गा इति प्रोक्ताः सर्वकर्मसु शोभनाः ॥
[3]न्यग्रोधपिप्पलप्लक्षजम्बूचूततरूद्भवाः ।
पल्लवाः पञ्च विज्ञेयास्त्वक्चैतेषामपीष्यते ॥

पञ्च पल्लवास्त्वचश्च ब्रह्माण्डपुराणे– न्यग्रोधेति । न्यग्रोधः वटः । पिप्पलः अश्वत्थः । प्लक्षः पायरीति भाषया प्रसिद्धः । जम्बूः प्रसिद्धा । चूतः आम्रवृक्षः । एतेषां तरूणाम् । भविष्यपुराणे तु जम्बूस्थाने उदुम्बर उक्तः । संर. ३१

समिद्वृक्षाः

[4]पलाशफल्गुन्यग्रोधप्लक्षाश्वत्थविकङ्कताः ।
उदुम्बरस्तथा बिल्वश्चन्दनं यज्ञियाश्च ये ॥
[5]सरलो देवदारुश्च शालश्च खदिरस्तथा ।
समिदर्थे प्रशस्ताः स्युरेते वृक्षा विशेषतः ॥

मुक्तकच्छमुक्तशिखयोः कर्मानधिकारः

[6]नाधिकारी मुक्तकच्छो मुक्तचूडस्तथैव च ।
दाने प्रतिग्रहे यज्ञे ब्रह्मयज्ञादिकर्मसु ॥

(१) स्मृच. १०९; मुक्ता. २३१ (=) द्विजोत्तमैः (कुशोत्तमाः).

(२) चव्र. ४७ ब्रह्मपुराणे; चदा. १०९; पप्र. ११५.

(३) संव. ३२ पू. (=); संर. ३१.

(४) अप. १।२३६; स्मृच. ४५६ (श्रा.) तथा (शमी) पुराणम्.

(५) अप. १।२३६; स्मृच. ४५६ (श्रा.) सरलो (पनसो) पुराणम्.

(६) चदा. १००; आर. ३ (सोत्तरीयस्ततः कुर्यात्सर्वकर्माणि भावितः ।) एतावदेव.

अहतवस्त्रस्य कर्माङ्गत्वम् , अधौतकारुधौतयोर्निषेधश्च

देवाः समेत्य वस्त्रं हि तच्च पुंसामकल्पयन् ।
ततश्च वाससा हीनमसंपूर्णं प्रचक्षते ॥
सोत्तरीयस्ततः कुर्यात्सर्वकर्माणि भावितः ।
अधौतं कारुधौतं च परिदध्यान्न वाससी ॥
ददानः प्रतिगृह्णंश्च दध्यादहतमेव च ॥

यज्ञोपवीतद्वयस्य कर्माङ्गत्वम् ,
उत्तरीयानुकल्पस्तृतीयमुपवीतम्

[१]यज्ञोपवीते द्वे धार्ये श्रौते स्मार्ते च कर्मणि ।
तृतीयमुत्तरीयार्थे वस्त्राभावे तदिष्यते ॥

## $ मार्कण्डेयपुराणम्

हस्तस्थिततीर्थानि तेषां विनियोगश्च

[२]कुर्यात्कर्माणि तीर्थेन स्वेन स्वेन यथाविधि ।
देवादीनां तथा कुर्याद् ब्राह्मेणाऽऽचमन-
क्रियाम् ॥
अङ्गुष्ठोत्तरतो रेखा पाणेर्या दक्षिणस्य तु ।
एतद्ब्राह्ममिति ख्यातं तीर्थमाचमनाय वै ॥
तर्जन्यङ्गुष्ठयोरन्तः पैत्रं तीर्थमुदाहृतम् ।
पितॄणां तेन तोयादि दद्यान्नान्दीमुखादृते ॥
अङ्गुल्यग्रे तथा दैवं तेन दिव्यक्रियाविधिः ।
तीर्थं कनिष्ठिकामूले कायं तेन प्रजापतेः ॥
एवमेभिः सदा तीर्थैर्देवानां पितृभिः सह ।
सदा कार्याणि कुर्वीत नान्यतीर्थेन कर्हिचित् ॥
ब्राह्मेणाऽऽचमनं शस्तं पित्र्यं पैत्रेण सर्वदा ।
देवतीर्थेन देवानां प्राजापत्यं निजेन च ॥

$ निबन्धग्रन्थेषु ' मार्कण्डेयः ' इत्यनेन मार्कण्डेयस्मृतिः पुराणं वाऽभिप्रेयते इति न निर्णयो भवति । परंतु ' मार्कण्डेयः ' इत्युल्लिख्य समुद्धृतानि कानिचित् वचनानि मार्कण्डेयपुराणे समुपलभ्यन्ते, अतः सर्वाणि वचनानि मार्कण्डेयपुराणे संगृहीतानि ।

( १ ) गप. ८९ आदर्शपुस्तके ' व्यभावे परिकल्पयेत् ' इति पाठः , ' वस्त्राभावे तदिष्यते ' इति टिप्पण्यां पाठः ।

( २ ) मार्क. ३१।१०६-१११.

उभयोर्हस्तयोः पवित्रधारणम्

[१]जपे होमे तथा दाने स्वाध्याये पितृकर्मणि ।
सव्यापसव्यौ कुर्वीत सपवित्रौ करौ बुधः ॥

वर्णभेदेन कर्मभेदेन च पवित्रदर्भसंख्याभेदः ,
द्विदर्भपवित्रस्य सर्ववर्णसाधारणत्वं च

[२]चतुर्भिर्दर्भपिञ्जूलैर्ब्राह्मणस्य पवित्रकम् ।
एकैकन्यूनमुद्दिष्टं वर्णे वर्णे यथाक्रमम् ॥
[३]सर्वेषां वा भवेद्द्वाभ्यां पवित्रं ग्रन्थितं न वा ।
त्रिभिस्तु शान्तिके कार्यं पौष्टिके पञ्चभिस्तथा ।
चतुर्भिरभिचाराख्ये विप्रः कुर्यात्पवित्रकम् ॥

ग्रन्थितं ग्रन्थियुक्तम् । न वा तद्रहितं वा ।

पप्र. ९७

सप्तदर्भपवित्रस्य दैवपित्र्यसाधारणत्वम्

[४]पिञ्जूलैः सप्तभिः सर्वं दैवं पित्र्यं विधीयते ॥

( १ ) अप. १।२२.

( २ ) अप. १।२२ ; स्मृच. १०८ पिञ्जूलैः (पुञ्जीलैः) ; पमा. २३८ स्मृचवत् ; प्रपा. ३५ ; निप्र. ३७ (=) पिञ्जूलै ( पिञ्जलै ) पू. ; प्रर. ४९ ; पप्र. ९७ ; मुक्ता. २३० वर्णे वर्णे ( वर्णतस्तु ) शेषं स्मृचवत् ; प्रका. ३४ ; संर. १८.

( ३ ) अप. १।२२ (त्रिभिर्दर्भैः शान्तिकर्म पञ्चभिः पौष्टिकं तथा ।) द्वितीयार्धमात्रम् ; स्मृच. १०८ (त्रिभिर्दर्भैः शान्तिकर्म पञ्चभिः पौष्टिकं तथा । चतुर्भिराभिचाराख्यं कुर्वन् कुर्यात्पवित्रकम् ।) प्रथमार्धं नास्ति; पमा. २३८ (त्रिभिर्दर्भैः शान्तिकर्म पञ्चभिः पौष्टिकं तथा । चतुर्भिश्चाभिचारांश्च कुर्वन् कुर्यात्पवित्रकम् ।) प्रथमार्धं नास्ति ; प्रपा. ३५ शान्तिके ( शान्तिकं ) पौष्टिके ( पौष्टिकं ) ख्ये विप्रः ( ख्यं कुर्वन् ) ; प्रर. ४९ ; पप्र. ९७ रभिचाराख्ये विप्रः ( श्चाभिचाराख्यं कुर्वन् ) ; मुक्ता. २३० ( त्रिभिर्दर्भैः शान्तिकर्म पञ्चभिः पौष्टिकं तथा । चतुर्भिश्चाभिचाराख्यं कुर्यात्तत्र पवित्रकम् । ) प्रथमार्धं नास्ति, स्मृत्यर्थसारे ; प्रका. ३४.

( ४ ) अप. १।२२.

संकल्पस्य कर्माङ्गत्वम्

**[1]संकल्प्यैव यथा कुर्यात्स्नानदानव्रतादिकम् ।**
**अन्यथा पुण्यकर्माणि निष्फलानि भवन्ति हि ॥**

(१) अखिलकर्मसु संकल्प आवश्यक इत्याह मार्कण्डेयः— संकल्प्येति । यथा यथावदित्यर्थः । स च संकल्पविशेषः सर्वेषामनुष्ठातॄणामनुष्ठानसौकर्याय संक्षिप्य निरूप्यते । संकल्पभेदो हि कर्मभेदनिबन्धनः । कर्म तावन्नैमित्तिककाम्यभेदेन द्विविधम् । तत्र नैमित्तिकमपि नियतनिमित्तमनियतनिमित्तं चेति द्विविधम् । तत्र नियतनिमित्तमेव नित्यमित्युच्यते । तथा च नित्यनैमित्तिककाम्यभेदेन संकल्पस्त्रेधा भिद्यते ।

तत्र नित्ये तावत् 'अहरहः संध्यामुपासीत' 'वसन्ते वसन्ते ज्योतिषा यजेत' इत्यादौ वीप्सयाऽहरादीनां निमित्तत्वप्रतीतेः, 'यावज्जीवमग्निहोत्रं जुहोति' इत्यादौ यावच्छब्दोपनिबद्धं हि जीवनम्, 'धातुसंबन्धे प्रत्ययाः' इति धातुसंबन्धे विहितेन 'यावति विन्दजीवोः' (पा. ३।४।३०) इति णमुल्प्रत्ययेन संबन्धान्तरासंभवात् निमित्तनैमित्तिकभावसंबन्धस्याप्रतीतेः( ? संबन्धस्य प्रतीतेः), निमित्तस्य च स्वस्मिन्सत्यवश्यं कर्तव्यमित्येवंरूपत्वाच्च किंचिदङ्गलोपेऽपि यावच्छक्त्योपसंहृताङ्गयुक्तप्रधानानुष्ठानेनैवापूर्वसिद्धिः । अत एवाऽऽवश्यकत्वान्मुख्याङ्गासंभवेऽपि प्रतिनिधायानुष्ठानेऽपि नापूर्वसिद्धिवैगुण्यम् । काम्ये तु कामनाया निमित्तत्वाभावादावश्यकत्वस्यासिद्धत्वादङ्गबाधो न युक्त इति सर्वाङ्गोपसंहारसमर्थस्यैवाधिकार इति सर्वाङ्गयुक्तप्रधानानुष्ठानेनैवापूर्वसिद्धिः । अत एव श्रुताङ्गत्यागासंभवान्न काम्ये प्रतिनिधिः । गुरुमते तु काम्याभिसंहिते फले करणत्वस्यैव विषयत्वात्सेतिकर्तव्यताकस्यैव करणत्वात्किंचिदङ्गत्यागे करणत्वाभावाद्विषयविलयान्नापूर्वकार्यसिद्धिः, नित्ये तु केवलस्यैव विषयत्वाद्यावच्छक्त्योपसंहृताङ्गयुक्तप्रधानानुष्ठानेनैवापूर्वकार्यसिद्धिरिति ।

तत्रायं संकल्पप्रकारः— नित्ये कौमारिलमते तावदधिकारवाक्ये चोदितफलाभावेऽपि मन्त्रलिङ्गार्थवादादिबहुवाक्यपर्यालोचनया उपात्तदुरितक्षय एव फलत्वेन परिकल्पित इति तदनुरोधात् 'उपात्तदुरितक्षयार्थं प्रातःसंध्यामुपासिष्ये, ज्योतिष्टोमेन यक्ष्ये' इति सर्वत्र नित्यमात्रे संकल्पः । गुरुमते तु विधिसिद्धिरेव विधेः फलमिति चोदितफलाभावेऽपि 'विधिसिद्ध्यर्थं प्रातःसंध्यामुपासिष्ये, ज्योतिष्टोमेन यक्ष्ये' इति संकल्पः । नैमित्तिकेऽपि यत्र जातेष्ट्यादौ फलश्रवणं भवति तत्र निमित्तफलसंवलिताधिकारात् 'पुत्रजन्मनिमित्तं पुत्रगतपूतत्वादिकामो जातेष्ट्या यक्ष्ये' इत्यादिः संकल्पः । यत्र तु 'उपरागे स्नायात्' इत्यादौ निमित्तमात्रश्रवणम्, तत्र 'उपरागनिमित्तं स्नानं करिष्ये' इति संकल्पः । काम्ये त्वधिकारवाक्यप्रतिपादितफलोद्देशेन 'वृष्टिकामः कारीर्या यक्ष्ये' इत्यादिः संकल्प इति संक्षेपः । विस्तरस्तु मतद्वये सर्वशक्त्यधिकरणे (जैसू. ६।३।२) तिर्यगधिकरणे (जैसू. ६।१।२) च द्रष्टव्यः । प्रपा. २८–२९

(२) सर्वं कर्म संकल्प्य कार्यम् । तदुक्तं मार्कंडेयपुराणे— संकल्प्येति । पुण्येत्युक्तेः शौचभोजनादौ दृष्टार्थे न संकल्पः । संकल्पलक्षणं संध्यारत्ने— 'संकल्पो वै मनसि मननं प्रोक्तरीत्याऽथ वाचा व्याहर्तव्यं तदनु च करेणाम्बुसेकस्त्रिधेति । वाङ्मात्रेण त्वरितकरणे केचिदिच्छन्ति चाम्बुक्षेपस्थानेऽञ्जलिकृतिमुशन्त्यन्य एष्विष्ट आद्यः ॥' । तत्र देशकालाद्युल्लेखः कार्यः । तदुक्तं संग्रहे— 'मासपक्षतिथीनां च निमित्तानां च सर्वशः । उल्लेखनमकुर्वाणो न तस्य फलभाग्भवेत् ॥' इति । इन्दु. ९

(३) कृतसंकल्पत्वमपि अधिकारितावच्छेदकम्, 'संकल्प्य विधिवत्कुर्यात् स्नानदानव्रतादिकम् ।' इति मार्कण्डेयपुराणात्, 'प्रातःसंध्यां ततः कृत्वा संकल्पं

(१) प्रपा. २८; मुक्ता. २६४ यथा (तथा) हि (वै) रत्नावल्याम्; आर. ४ संकल्प्यैव (संकल्प्य च) हि (वै) विष्णुः; आम. ३ संकल्प्यैव (संकल्पं च) दिकम् (दिके) हि (च); शाम. २ संकल्प्यैव यथा (संकल्प्य विधिवत्) पू.; इन्दु. ९ संकल्प्यैव यथा (संकल्प्य च तथा) हि (च); संदी. १७ शामवत्, पू.

बुध आचरेत् । संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु । यदन्यत्कुरुते कर्म न तस्य फलमश्नुते ॥' इति दक्षोक्तेः, 'संकल्पेन विना विप्र यत्किंचित्कुरुते नरः । फलं चास्याल्पकं तस्य धर्मस्यार्धक्षयो भवेत् ॥' इति भविष्योक्तेश्च । संकल्पशब्देन 'अमुकफलार्थमिदं कर्म करिष्ये' इत्याकारकं मानसं कर्मोच्यते । तदुक्तं भट्टाचार्यैः— 'संकल्पः कर्म मानसम्' इति । तत्र विशेषमाह देवलः— 'मासपक्षतिथीनां च निमित्तानां च सर्वशः । उल्लेखनमकुर्वाणो न तस्य फलभाग्भवेत् ॥' इति । असौ च संकल्पः केवलमदृष्टार्थ एव, नानुसंधानरूपदृष्टफलार्थः, अनुसंधानोत्तरमेव तस्य कर्तव्यत्वेन तस्य तत्फलत्वानुपपत्तेः । मासपक्षतिथ्यादयः प्रयोगाधिकरणभूताः सर्वेऽपि ।

यत्तु अनेकदिनसाध्ये कर्मणि आद्यदिने संकल्पकालिकीं तिथिमधिकरणत्वेनोल्लिख्य 'ज्योतिष्टोमेनाहं यक्ष्ये' इत्यादिवाक्यं प्रयुञ्जते यायजूकाः, तत्तु पदानामन्वयायोगात् नाऽऽदर्तव्यमिति शान्तिमयूखे नीलकण्ठभट्टाः ।

यदपि केचित्— तेन रूपेण प्रयोगाङ्गतया विहितानामेव मासादीनामुल्लेख इति, तदपि न, अविहितमासादिके आधानादौ मासपक्षतिथीनां ज्योतिष्टोमे एकादशीव्रतादौ च मासपक्षयोरुल्लेखाभावप्रसङ्गात् । अतो ज्योतिष्टोमादौ एकादश्यादिपूर्णिमान्तानामुल्लेखः । एवमन्यत्रापीति दिक् ।

अत्र केचिदाहुः— ग्रहणादिरूपनिमित्तस्य मासपक्षतिथीनां प्रयागादेश्च देशविशेषमात्रस्योल्लेखः कार्यः, न तु व्यापकानामुत्तरायणमध्यदेशादीनामिति ।

अपरे त्वाहुः— 'प्रयागादिषु तीर्थेषु पुण्येष्वायतनेषु च ।' इति मात्स्यवाक्यात् यथा प्रयागादितीर्थविशेषस्याङ्गत्वम्, एवम् 'आर्यावर्तः पुण्यभूमिर्मध्यं विन्ध्यहिमालयोः ।' इत्यादिवाक्येन आर्यावर्तादिसामान्यस्याप्यङ्गत्वावगमात्, 'निमित्तानां च सर्वशः' इति सर्वपदस्वारस्याच्च सर्वनिमित्तानामुल्लेखः कार्यः । न चानेनैव सिद्धे मासपक्षतिथीनामित्यनर्थकमिति वाच्यम्, विधिस्पृष्टानां कार्तिकमाघादीनामुल्लेखसिद्धावपि तदस्पृष्टसाधारणमासाद्युल्लेखप्राप्त्यर्थत्वात् । तेन व्यापकानां व्याप्यानां च सर्वेषामुल्लेखः कार्य इति । संकल्पे च मुख्यचान्द्रमासातिरिक्तगौणमासप्रयुक्तकर्मस्वपि विन्ध्यदक्षिणे शुक्लादेः तदुत्तरे कृष्णादेश्चान्द्रमासस्यैवोल्लेखः, न तु गौणानामित्युक्तं कालतत्त्वविवेचने । कर्माङ्गतिथ्यन्यतिथेः संकल्पकालसत्त्वे तु संकल्पकालवर्तमानतिथिमेव कर्मतिथियुक्तत्वेन रूपेणाधिकरणतयोल्लिख्य संकल्पः कार्यः ।

संकल्पवाक्यं तु हेमाद्रौ श्राद्धखण्डे प्रदर्शितम्— ॐ इह पृथिव्यां जम्बूद्वीपे भारतवर्षे कुमारिकाखण्डे प्रजापतिक्षेत्रे विशेषक्षेत्रे चेत् अमुकक्षेत्रे अमुकस्मिन् प्रदेशे इत्यादिदेशं समनुकीर्त्य ब्रह्मणो द्वितीयपरार्धे श्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमस्य कलियुगस्य प्रथमचरणे इत्यभिधाय वर्तमानसंवत्सरायनर्तुमासपक्षतिथिवारनक्षत्रयोगकरणरौद्रादिकालनामानि सप्तम्यन्तानि कीर्तयेत् । स्मार्तानि रौद्रादिकालनामानि तु कालमाधवे पुराणे दर्शितानि तत एव ज्ञेयानि ।

कुमारिकाखण्डस्यैव वर्णधर्मव्यवस्थाधिकरणत्वं सिद्धान्तशिरोमणौ— 'ऐन्द्रं कशेरुशकलं किल ताम्रपर्णमन्यद्गभस्तिमदतश्च कुमारिकाख्यम् । नागं च सौम्यमिह वारुणमन्त्यखण्डं गान्धर्वसंज्ञमिति भारतवर्षमध्ये ॥ वर्णव्यवस्थितिरिहैव कुमारिकाख्ये शेषेषु चान्त्यजजना निवसन्ति सर्वे ॥' इति ।

एवं देशकालावधिकरणतया समनुकीर्त्य अमुकफलार्थममुककर्म करिष्ये इति संकल्पयेत् । संदी. १७–१९

क्षौरपूर्वकशिरःस्नानस्य कर्माङ्गत्वम्

**[1]शिरःस्नातस्तु कुर्वीत दैवं पित्र्यमथापि वा ।**
**प्राङ्मुखोदङ्मुखो वाऽपि श्मश्रुकर्म च कारयेत् ॥**

कर्माङ्गस्नाने विशेषो मार्कण्डेयपुराणे— शिरःस्नातस्त्विति । तत्राऽऽदौ श्मश्रुकर्म, ततः शिरःस्नानम्,

(१) मार्क. ३१।७६ स्नातस्तु (स्नातश्च); गुर. ५०१ उत्त.; पद्म. ८० पू.; आर. २ पू.; आम. ३ मार्कवत्, पू.; शाम. २ मार्कवत्; इन्दु. १३; संदी. ३.

अन्यथा अशुचित्वापत्त्या पुनः स्नानापत्तेः। तच्च स्नानं मङ्गलकृत्यादौ तिलामलकादिना उद्वर्त्य अभ्यङ्गपूर्वकं वा कार्यम्। संदी. ३

आचमनस्य कर्माङ्गत्वम्

[१]देवार्चनादिकार्याणि तथा गुर्वभिवादनम्।
कुर्वीत सम्यगाचम्य प्रयतोऽपि सदा द्विजः॥

आचमनं चाधिकारितावच्छेदकम्। तदुक्तं मार्कण्डेयेन— देवार्चनादीति। आचान्तस्य प्रयतस्यापि कर्मारम्भप्रयुक्तमाचमनमनेनोक्तं भवति। संदी. ११–१२

[२]सम्यगाचम्य तोयेन क्रियां कुर्वीत वै शुचिः।
देवतानामृषीणां च पितॄणां चैव यत्नतः॥

आचमननिमित्तानि आचमनानुकल्पाश्च

[३]क्षुत्वा निष्ठीव्य वासश्च परिधायाऽऽचमेद् बुधः॥

[४]क्षुतादौ सम्यगाचामेत्स्पृशेद्वाऽऽर्द्रतृणादिकम्॥

[५]क्षुतेऽवलीढे वान्ते च तथा निष्ठीवनादिषु।
कुर्यादाचमनं स्पर्शं गोपृष्ठस्यार्कदर्शनम्॥

[६]कुर्वीताऽऽलम्बनं चापि दक्षिणश्रवणस्य वै।
यथाविभवतो ह्येतत्पूर्वाभावे ततः परम्।
अविद्यमाने पूर्वोक्ते उत्तरप्राप्तिरिष्यते॥

(१) मार्क. ३१।६४–६५ नादिका (नासिका) प्रयतोऽपि सदा द्विजः (तद्वदन्नभुजिक्रियाम्); अप. १।१९६ प्रयतोऽपि सदा द्विजः (तद्वदन्नभुजिक्रियाम्); स्मृच. ९९ प्रयतोऽपि सदा द्विजः (तद्वदेव भुजिक्रियाम्); मुक्ता. २३५ स्मृचवत्; आर. ३; शाम. २ कार्याणि (कर्माणि); इन्दु. १३; संदी. ११.

(२) मार्क. ३१।६९; स्मृच. ९९ क्रियां (क्रियाः); पमा. २२४.

(३) मार्क. ३१।७०; ब्रक. १४०.

(४) संदी. २१. (५) मार्क. ३१।७१; ब्रक. १४०.

(६) मार्क. ३१।७२–७३; ब्रक. १४० अविद्यमाने (न विद्यमाने); संदी. २१ लम्बनं चापि (लम्भनं वाऽपि) पूर्वाभावे (पूर्वालाभे) अविद्यमाने पूर्वोक्ते (न विद्यमाने पूर्वस्मिन्).

सपवित्रकरेणाऽऽचमनम्, भुक्तोच्छिष्टपवित्रत्यागः

[१]सपवित्रेण हस्तेन कुर्यादाचमनक्रियाम्।
नोच्छिष्टं तत्पवित्रं तु भुक्तोच्छिष्टं तु वर्जयेत्॥

(१) एतत् दक्षिणहस्ताभिप्रायम्, वामे निषेधश्रवणात्। तदाह हारीतः— 'वामहस्ते कुशान् कृत्वा समाचामति यो द्विजः। उपस्पृष्टं भवेत्तेन रुधिरेण मलेन च॥' इति। एतदपि केवलवामहस्तविषयम्, उभयोः फलविशेषश्रवणात्। तथा च गोभिलः— 'उभयत्र स्थितैर्दर्भैः समाचामति यो द्विजः। सोमपानफलं तस्य भुक्त्वा यज्ञफलं लभेत्॥' इति। स्मृच. ९५

(२) एतत् ग्रन्थिविहीनदर्भाभिप्रायम्। तथा च हारीतः— 'ग्रन्थिर्यस्य पवित्रस्य न तेनाऽऽचमनं चरेत्।'। मुक्ता. २३१

आचमने पवित्रविशेषनिषेधः

[२]न ब्रह्मग्रन्थिनाऽऽचामेन्न दूर्वाभिः कदाचन।
काशहस्तस्तु नाऽऽचामेत्कदाचिद्विधिशङ्कया॥

उषःकालात्प्राक्कर्मानुष्ठाननिषेधः

[३]सूर्योदयं विना नैव स्नानदानादिकाः क्रियाः।
अग्नेर्विहरणं चैव क्रत्वभावश्च लक्ष्यते॥

(१) सूर्योदयं विना इति सूर्योदयशब्देन उषःकालो लक्ष्यते। तं विना रात्रौ न कार्यं स्नानदानादीति तात्पर्यार्थः। ब्रक. ५८

(२) सूर्योदयं विनेति सूर्योदयशब्देनात्र उषःकालो लक्ष्यते, अग्निविहरणादेः सूर्योदयात्प्रागेव विधानात्। तं विना रात्रौ न कार्यं स्नानादीति तात्पर्यार्थः। पप्र. ८४

(१) स्मृच. ९५; मुक्ता. २३१.

(२) मुक्ता. २३१ पू. कौशिकः; संर. १८.

(३) ब्रक. ५८ क्रत्वभावश्च (क्रतुस्तावन्न); चव्र. ३७; कुर. ४६ उत्तरार्धे (अग्नेर्विरहितश्चैव क्रतुस्तावन्न लक्ष्यते॥); पप्र. ८४ दिकाः क्रियाः (दिकक्रमः).

पवित्रधारणफलम्

[1]कुशपाणिः सदा तिष्ठेद्ब्राह्मणो दम्भवर्जितः ।
स नित्यं हन्ति पापानि तूलराशिमिवानलः ॥

पवित्रधारणे फलमाह मार्कण्डेयः– कुशपाणिरिति ।

पमा. २३८

ग्राम्यौषधिगणः

[2]ओषध्यः फलपाकान्ताः शणसप्तदशाः स्मृताः ।
व्रीहयश्च यवाश्चैव गोधूमा अणवस्तिलाः ॥
[3]प्रियङ्गवः कोविदाराः कोरदूषाः सतीनकाः ।
माषा मुद्गा मसूराश्च निष्पावाः सकुलत्थकाः ॥
[4]आढक्यश्चणकाश्चैव शणाः सप्तदश स्मृताः ।
इत्येता ओषधीनां तु ग्राम्याणां जातयः पुरा ॥

यज्ञार्हग्राम्यारण्यौषधिगणः

[5]ओषध्यो यज्ञियाश्चैव ग्राम्यारण्याश्चतुर्दश ।
व्रीहयश्च यवाश्चैव गोधूमा अणवस्तिलाः ॥
[1]प्रियङ्गुषष्ठा वै ह्येते सप्तमास्तु कुलत्थकाः ।
श्यामाकास्त्वथ नीवारा जर्तिलाः सगवेधुकाः ॥
[2]कुरुविन्दा मर्कटकास्तथा वेणुयवाश्च ये ।
ग्राम्यारण्याः स्मृता ह्येता ओषध्यश्च चतुर्दश ॥

## मत्स्यपुराणम्

पवित्रधारणम्

[3]धार्योऽनामिकया दर्भो ज्येष्ठानामिकयाऽपि वा ।
उभयानामिकाभ्यां तु धार्ये दर्भपवित्रके ॥

अनामिका उपकनिष्ठिका । स्मृच. १०८

तालकादिधातुगणः

[4]तालकं च शिला वज्रमञ्जनं श्याममेव च ।
काक्षी कासीसं माक्षिकं गैरिकं चाऽऽदितः क्रमात् ॥

अथ सर्वधातुगणः । मत्स्यपुराणे– तालकं चेति । तालकं हरितालम्, शिला मनःशिला, वज्रं वज्राभ्रकम्,

(१) स्मृच. १०८ ; पमा. २३८ ; प्रर. ५० ; मुक्ता. २२९ ; प्रका. ३५.

(२) मार्क. ४६।६७ शणसप्तदशाः (गणाः सप्तदश) ; चव्र. ४९ अणवस्तिलाः (कङ्गुसर्षपाः) शेषं मार्कवत् ; चदा. ११८ अणवस्तिलाः (कङ्गुकास्तिलाः) शेषं मार्कवत् ; पम्र. ११६ अणवस्तिलाः (कङ्गुसर्षपाः) ; श्राप्र. ३५ अणवः (चाणवः) उत्त.

(३) मार्क. ४६।६८ ; चव्र. ४९ सतीनकाः (सचीनकाः) ; चदा. ११८–११९ कुलत्थकाः (कुलोत्थकाः) शेषं चव्रवत् ; पम्र. ११६ चव्रवत् ; श्राप्र. ३५ कोविदाराः (ह्युदाराश्च) शेषं चव्रवत्.

(४) मार्क. ४६।६९ ; चव्र. ४९–५० पूर्वार्धे (आढक्यश्चणकाश्चैव ग्राम्यारण्याश्च षोडशम् ।) पुरा (स्मृताः) ; चदा. ११९ शणाः (शणः) पुरा (स्मृताः) ; पम्र. ११६ (आढक्यश्चणकाश्चैव ग्राम्यारण्याश्च षोडश ।) एतावदेव ; श्राप्र. ३५ शणाः (शणा) स्मृताः (स्मृतः) उत्तरार्धे (इत्येता अभवन् ग्राम्यास्तथाऽऽरण्याश्च जज्ञिरे ॥).

(५) मार्क. ४६।७० ; चव्र. ५० चैव (ज्ञेया) अणवस्तिलाः (कङ्गुसर्षपाः) ; चदा. ११९ चव्रवत् ; पम्र. ११६ चव्रवत्, उत्त. ; श्राप्र. ३५ श्चैव (स्तासां) अणवः (चाणवः).

(१) मार्क. ४६।७१ ; चव्र. ५० पूर्वार्धे (माषा मुद्गाः सप्तमाश्च अष्टमाश्च कुलत्थकाः ।) कास्त्वथ (काश्चैव) ; चदा. ११९ पूर्वार्धे (माषा मुद्गाः सप्तमाश्च अष्टमाश्च कुलोत्थकाः ।) कास्त्वथ (काश्चैव) ; पम्र. ११६ चव्रवत् ; श्राप्र. ३५ प्रियङ्गुषष्ठा वै ह्येते (प्रियङ्गुसहिता ह्येताः).

(२) मार्क. ४६।७२ ; चव्र. ५० कुरुविन्दा मर्कटकाः (कोविदारसमायुक्ताः) स्मृता (च ता) ; चदा. ११९ पूर्वार्धे चव्रवत् ; पम्र. ११६ चदावत् ; श्राप्र. ३५ ह्येता (ह्येते).

(३) स्मृच. १०८ म्हैसूरपुस्तकपाठः आदर्शत्वेन स्वीकृतः । 'अनामिकाधृतो दर्भो ज्येष्ठानामिकयाऽपि वा । उभाभ्यामनामिकाभ्यां धार्ये दर्भपवित्रके ॥' इति घारपुरे-मुद्रितस्मृतिचन्द्रिकापाठः ।

(४) कुर. ७२.

तच्चाऽऽयुर्वेदप्रसिद्धम् । तथा चाऽऽयुर्वेदे– 'वज्रं भेकवपुः कृष्णमभ्रकं त्रिविधं स्मृतम् । ' । तत्र वज्राभ्रकस्य लक्षणम्– 'अप्रस्तरं कठोराङ्गं तरुकज्जलसंनिभम् । यन्न शब्दायते वह्नौ नैवोच्छूनं भवेदपि । सदाकरसमुद्भूतं वज्रेति प्रथितं घनम् ॥ ' । श्याममञ्जनं कृष्णरसाञ्जनम् , काक्षी सौराष्ट्रमृत्तिका, कासीसं स्वनामप्रसिद्धम् । कृर. ७२

यजमानस्य यागमण्डपप्रवेशे द्वारनियमः

[१]**यजमानः सपत्नीकः पुत्रपौत्रसमन्वितः ।**
**पश्चिमद्वारमाश्रित्य प्रविशेद्यागमण्डपम् ॥**

स्नानाङ्गमहौषध्यष्टकम्

[२]**सहदेवी वचा व्याघ्री बला चातिबला तथा ।**
**शङ्खपुष्पी तथा सिंही अष्टमी तु सुवर्चला ।**
**महौषध्यष्टकं ह्येतन्महास्नानेषु योजयेत् ॥**

समिल्लक्षणम्

[३]**प्रादेशमात्राः सशिखाः सवल्काः सपलाशिनीः ।**
**समिधः कल्पयेत्प्राज्ञः सर्वकर्मसु सर्वदा ॥**

## विष्णुपुराणम्

ग्राम्यौषधिगणः यज्ञार्हग्राम्यारण्यौषधिगणश्च

[४]**व्रीहयश्च यवाश्चैव गोधूमा अणवस्तिलाः ।**
**प्रियङ्गवो ह्युदाराश्च कोरदूषाः सचीनकाः ॥**
**माषा मुद्गा मसूराश्च निष्पावाः सकुलत्थकाः ।**
**आढक्यश्चणकाश्चैव शणसप्तदशाः स्मृताः ॥**
**इत्येता ओषधीनां तु ग्राम्याणां जातयो मुने ।**
**ओषध्यो यज्ञियाश्चैव ग्राम्यारण्याश्चतुर्दश ॥**

[१]**व्रीहयः सयवा माषा गोधूमा अणवस्तिलाः ।**
**प्रियङ्गुसप्तमा ह्येता अष्टमास्तु कुलत्थकाः ॥**
[२]**श्यामाकास्त्वथ नीवारा जर्तिलाः सगवेधुकाः ।**
**तथा वेणुयवाः प्रोक्तास्तद्वन्मर्कटका मुने ॥**
[३]**ग्राम्यारण्याः स्मृता ह्येता ओषध्यश्च**
**चतुर्दश ॥**

जर्तिलाः स्वयंजातास्तिलाः । वेणुयवाः वंशबीजानि । कृर. ६९

कुशासनस्य यज्ञोपवीतस्य च कर्माङ्गत्वम्

[४]**कुशोपरि निविष्टेन तथा यज्ञोपवीतिना ।**
**सर्वं कर्म प्रकर्तव्यमन्यथा विफलं भवेत् ॥**

कुशोपरि निविष्टेनेति कुशासनोपादानं कर्मार्हासनोपलक्षणम् । संदी. १०

कर्तुरेकवस्त्रत्वनिषेधः

[५]**होमदेवार्चनाद्यासु क्रियास्वाचमने तथा ।**
**नैकवस्त्रः प्रवर्तेत द्विजवाचनके जपे ॥**

(१) द्विजवाचनके द्विजस्वस्तिवाचनादौ । ¶ व्रक. ५७

(२) वाचनके अभिवादनके । कृर. ४८

---

(१) शाम. ४.

(२) अप. १।२७७.

(३) अप. १।३०२ सवल्काः सपलाशिनीः ( शाखापर्णविपाटिताः ) ; संत. ९४७.

(४) विष्णु. १।६।२१–२३.

¶ चव्र. , चदा, पप्र. व्रकवत् ।

(१) विष्णु. १।६।२४ ; कृर. ६९ ह्येता ( ह्येते ) .

(२) विष्णु. १।६।२५ ; कृर. ६९ तद्वत् ( तथा ) .

(३) विष्णु. १।६।२६ ; कृर. ६९ ओषध्यश्च ( ओषध्यस्तु ) .

(४) संदी. १०.

(५) विष्णु. ३।१२।२० ; व्रक. ५७ द्यासु (द्यास्तु) ; स्मृच. ११४ क्रियास्वाचमने ( क्रियासु पठने ) द्विजवाचनके (द्विजो नाऽऽचमने) ; चव्र. ३५ व्रकवत् ; चदा. ९० ; कृर. ४८ बौधायनः ; पमा. २४६ स्मृचवत् ; निप्र. २८ द्विजवाचनके ( द्विजो वाचनिके ) ; पप्र. ८३ होमदेवा ( होमे चैवा ) ; मुक्ता. २५३ क्रियास्वाचमने ( क्रियासु पठने ) द्विजवाचनके ( द्विज आचमने ) पराशरः ; इन्दु. १३ होम ( होमे ) वाचनके ( वाचनिके ) .

## लिङ्गपुराणम्

कर्मारम्भे पुरोहितादिभ्यो वस्त्रालङ्कारदानम्

[1]वस्त्रयुग्मं तथाऽप्पूरं केयूरं कर्णभूषणम् ।
अङ्गुलीभूषणं चैव मणिबन्धस्य भूषणम् ॥
कण्ठाभरणयुक्तानि प्रारम्भे धर्मकर्मणः ।
पुरोहिताय दत्त्वाऽथ ऋत्विग्भ्यश्चापि दापयेत् ॥

आपः पूर्यन्तेऽस्मिन्निति अप्पूरं जलपात्रम् । शाम. ४

मधुरत्रयम्

[2]आज्यं क्षीरं मधु तथा मधुरत्रयमुच्यते ॥

## स्कन्दपुराणम्

कर्तुः प्रतिनिधयः

[3]आत्मा पुत्रः पुरोधाश्च भ्राता पत्नी पिता सखा ।
इज्यायां धर्मकार्ये च जायन्ते प्रतिरूपकाः ।
एभिः कृतं महादेवि स्वयमेव कृतं भवेत् ॥

माषपलमानम्

[4]पञ्चकृष्णलको माषस्तैश्चतुःषष्टिभिः पलम् ॥

कृष्णलो गुञ्जा । तैः माषैः । संर. ३०

पतितादीनां कर्मसंनिधिनिषेधः

[5]पाखण्डिनश्च पतिता ये च वै नास्तिका जनाः ।
पुण्यकर्मणि तेषां तु संनिधिर्नेष्यते क्वचित् ॥

त्रिसम– चतुःसमपदार्थः

[6]त्वक्केसरलवङ्गैस्तु त्रिसमं मुनिभिः स्मृतम् ।
त्वक्पत्रकलवङ्गानि केसरं च चतुःसमम् ॥

(१) शाम. ४. (२) चव. ४३ ; पप्र. ११४.
(३) मुक्ता. १४. (४) संर. ३०.
(५) चदा. १०९ तु (वै) ; पप्र. ९२ ; संदी. २२ जनाः (द्विजाः) तु (वै).
(६) चव. ४३ त्वक्केसर (त्वक्पत्रकेशर), उत्तरार्धस्तु 'लिङ्गपुराणे' इति निर्दिश्य समुद्धृतः ; पप्र. ११४.

पञ्चगव्यपदार्थः

[1]गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
पञ्चगव्यमिति प्रोक्तं सर्वपातकनाशनम् ॥

पञ्चगव्ये गोनियमः

[2]ताम्रारुणाश्वेतकृष्णानीलानामाहरेद्गवाम् ।
गोमूत्रगोमयक्षीरदधिसर्पींषि च क्रमात् ॥

पञ्चगव्यम्( १ गव्यार्थम् ) इति शेषः । पप्र. ११४

पञ्चगव्यदेवताः

[3]विष्णुवह्नीन्द्रवाय्वर्कदैवत्यानि यथाक्रमम् ।
विद्ध्येतानि कुशोदं च पितृराजाधिदैवतम् ॥

गोनियमानुकल्पः, गव्यमानानि, गव्यमन्त्राः, ब्रह्मकूर्चमिति संज्ञान्तरम्

प्रोक्ताभावे त्वथैतानि कपिलायाः प्रकल्पयेत् ।
गोमूत्रभागस्तस्यार्धं शकृत् क्षीरस्य च त्रयम् ॥
[4]द्वयं दध्नो घृतस्यैकमेकश्च कुशवारिणः ।
गायत्र्या चैव गोमूत्रं गन्धद्वारेति गोमयम् ॥
[5]आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि ।
तेजोऽसि शुक्रमित्याज्यं देवस्य त्वा कुशोदकम् ॥
[6]एभिस्तु पञ्चभिर्युक्तं पञ्चगव्यं प्रचक्षते ।
एतदेव महापुण्यं ब्रह्मकूर्चमिति स्मृतम् ॥

रसगणना

[7]दधि क्षीरमथाऽऽज्यं च माक्षिकं लवणं गुडः ।
तथैवेक्षुरसश्चेति रसाः प्रोक्ता मनीषिभिः ॥

(१) चदा. १०९.
(२) चव. ४४ उत्तरार्धे (गोमूत्रं गोमयं क्षीरं दधिसर्पींषि च क्रमात् ।) ; पप्र. ११४ ताम्रारुणाश्वेतकृष्णा (ताम्रारुणश्वेतकृष्ण).
(३) चव. ४५ ; पप्र. ११४–११५.
(४) चव. ४५ वारिणः (वारिजः) ; पप्र. ११५ पू.
(५) चव. ४५.
(६) चव. ४५ ; पप्र. ११५ युक्तं (युक्तैः) पू.
(७) चदा. ११०.

कर्मसाद्गुण्यसंपादकविष्णुस्मरणमन्त्रः

[1]यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ।
न्यूनं संपूर्णतां याति सद्यो वन्दे तमच्युतम् ॥

अधौतवस्त्रस्य कर्माङ्गत्वनिषेधः

[2]अधौतेन तु वस्त्रेण नित्यां नैमित्तिकीं क्रियाम् ।
कुर्वन् फलं न चाऽऽप्नोति दत्तं भवति निष्फलम् ॥

## शिवपुराणम्

उपवासस्य कर्माङ्गत्वम्

[3]उपवासयुतः कर्म शिवपूजादिकं चरेत् ॥

## शिवधर्मपुराणम्

पञ्चामृतम्

[4]पञ्चामृतं दधि क्षीरं सिता मधु घृतं नृप ॥

सिता शर्करा । पप्र. ११४

## विष्णुधर्मोत्तरपुराणम्

कर्ममध्ये क्षुतादौ प्रायश्चित्तम्

[5]उपविष्टो जपन् स्नातः क्षुतप्रस्खलितादिषु ।
पूजायां नाम कृष्णस्य सप्तवारान् प्रकीर्तयेत् ॥

आदिशब्देन काशजृम्भादिग्रहणम् । कृर. ५२

अनादिष्टहविष्के दूर्वादिहविःफलतारतम्यम्

[6]दूर्वाहोमः परः प्रोक्तस्तेन स्वर्गे महीयते ।
तस्माद्दशगुणं पुण्यमिध्मभिः प्राप्नुयात्कृते ॥
तस्माद्दशगुणं सस्यैर्व्रीहिभिर्द्विगुणं तथा ।
तावदेव तथा पुण्यं होमे सिद्धार्थकैः स्मृतम् ॥
यवैश्चतुर्गुणं तस्मात् तिलैर्दशगुणं स्मृतम् ।
तावदेव फलैर्ज्ञेयं बिल्वैर्दशगुणं ततः ॥
पद्मैश्च तावदेवोक्तं दध्ना क्षीरेण च द्विजाः ।
परमान्नेन धर्मज्ञा घृतेनाष्टगुणं ततः ॥

एवं छन्दोगपरिशिष्टकृता अत्यन्तप्रचुरफलत्वादनादिष्टहविर्विशेषे होमे हव्यशब्द( ? आज्य )मुपन्यस्तम् । तस्मादनादिष्टद्रव्यविशेषेषु दूर्वादीनामन्यतमस्य हविष्ट्वं बोद्धव्यम् । कृर. ६२

सति स्वसूत्रीये परसूत्रीयानुष्ठाननिषेधः

[1]यः स्वसूत्रमतिक्रम्य परसूत्रेण वर्तते ।
अप्रमाणमृषिं कृत्वा सोऽप्यधर्मेण युज्यते ।
तस्मात्सर्वप्रयत्नेन स्वसूत्रं न च लङ्घयेत् ॥

नव रत्नानि

[2]मुक्ताफलं हिरण्यं च वैडूर्यं पद्मरागकम् ।
पुष्परागं च गोमेदं नीलं गारुत्मतं तथा ।
प्रवालयुक्तान्युक्तानि महारत्नानि वै नव ॥

पञ्चरत्नम्

[3]सुवर्णं रजतं मुक्ता माणिक्यं च प्रवालकम् ।
पञ्चरत्नमिति ख्यातं समस्तसुरवल्लभम् ॥

सप्तधान्यम्

[4]यवगोधूमधान्यानि तिलाः कङ्गुस्तथैव च ।
श्यामाकं चीनकं चैव सप्तधान्यमुदाहृतम् ॥

दधिमधुघृतानां प्रतिनिधयः

[5]दध्यलाभे पयः कार्यं मध्वलाभे तथा गुडः ।
घृतप्रतिनिधिं कुर्यात् पयो वा दधि वा नृप ॥

पञ्चगव्ये गव्यग्रहणे गोनियमः

[6]पयः काञ्चनवर्णाया नीलायाश्च तथा घृतम् ।
दधि वै कृष्णवर्णायाः श्वेतायाश्चैव गोमयम् ।
गोमूत्रं ताम्रवर्णायाः पञ्चगव्ये प्रयोजयेत् ॥

---

(१) निप्र. ११ ; इन्दु. ३६९ सर्यते इत्युक्तम्.
(२) आर. ५.
(३) आर. २.
(४) चव्र. ४४ ; चदा. १०९ ; पप्र. ११४.
(५) कृर. ५२.
(६) कृर. ६२.

(१) इन्दु. ४. (२) पप्र. ११५.
(३) संकौ. १९ रजतं (राजतं) माणिक्यं च (राजावर्तः) चतुर्थः पादो नास्ति ; संर. ३१.
(४) कृर. ७० (=) चीनकं चैव (देवधान्यं च); पप्र. ११५.
(५) चदा. १४०. (६) चव्र. ४४.

अभिषेके कुम्भजातयः कुम्भमानं च

[1]हैमराजतताम्रा वा मृन्मया लक्षणान्विताः ।
यात्रोद्वाहप्रतिष्ठादौ कुम्भाः स्युरभिषेचने ॥
[2]पञ्चाशाङ्गुलवैपुल्या उत्सेधे षोडशाङ्गुलाः ।
द्वादशाङ्गुलकं मूलं मुखमष्टाङ्गुलं भवेत् ॥

पञ्चाशाङ्गुलेति । आशा दिशः, ताश्च दशसंख्यावाचकत्वेन ज्योतिःशास्त्रादौ प्रसिद्धाः । पञ्च च आशाश्च पञ्चाशाः । तावन्ति अङ्गुलानि वैपुल्यं येषां ते तथाभूताः । मध्यप्रदेशे तिर्यङ्मानेन पञ्चदशाङ्गुला इत्यर्थः । अथवा बाह्यप्रदेशे वलयाकृतिना सूत्रेण मीयमाना मध्यस्थाने पञ्चाशदङ्गुला इत्यर्थः । अस्मिन् पक्षे पञ्चाशाङ्गुलेति छान्दसः प्रयोगः । चदा. १११

पञ्चत्वचः, तद्घटप्रक्षेपमन्त्रः, पञ्च पल्लवाश्च

[3]न्यग्रोधपिप्पलप्लक्षजम्बूचूततरूद्भवाः ।
रुवतिभीम इत्यृचा घटे पञ्च त्वचः क्षिपेत् ॥
अश्वत्थोदुम्बरः प्लक्षो न्यग्रोधश्चूत एव च ।
पञ्चपल्लवमाख्यातं सर्वकर्मसु शोभनम् ॥

माल्यानुलेपनाग्रदाननिषेधः ब्राह्मणादावपवादश्च

[4]माल्यानुलेपनादग्रं न प्रदद्यात्तु कस्यचित् ।
अन्यत्र देवताविप्रगुरूणां भृगुनन्दन ॥

गन्धादौ तु विशेषमाह विष्णुधर्मोत्तरे– माल्यानुलेपनादिति । उत. १४२

## गरुडपुराणम्

स्नानमधिकारिविशेषणम्

[5]दैवं वा कर्म पित्र्यं वा नाशुचिः कर्तुमर्हसि ।
स्नानमेव द्विजातीनां परं शुद्धिकरं स्मृतम् ॥
अतः स्नातोऽर्हतामेति दाने चैव प्रतिग्रहे ।
कृतमस्नायिना कर्म राक्षसत्वाय कल्पते ॥

मूलमन्त्रः

[1]प्रणवादि नमोन्तं च चतुर्थ्यन्तं च सत्तम ।
देवतायाः स्वकं नाम मूलमन्त्रः प्रकीर्तितः ॥

(१) यत्र तु देवतोक्ता, मन्त्रश्च नास्ति, तत्र मूलमन्त्रो वेदितव्यः । स चोक्तो गरुडपुराणे–प्रणवादीति । चदा. १३९

(२) तथा च यत्र मूलमन्त्रेण जुहुयादिति वचनम्, विशेषविहितमन्त्राभावश्च, तत्रायं मूलमन्त्रः । तेन कर्तव्ये होमे नमःशब्दोत्तरं स्वाहाकारो भवति । संर. १२८

पवित्रधारणस्य कर्माङ्गत्वम्, वर्णभेदेन पवित्रे दर्भसंख्याभेदः, द्विदर्भपवित्रस्य सर्ववर्णसाधारणत्वम्

[2]प्रजापतिः कर्मगुप्तेः पवित्रमसृजत्पुरा ।
रक्षोघ्नमेतत्परमं मुनिभिः कल्पितं सदा ॥
तस्मात्तत्करयोर्धार्यं ददता प्रतिगृह्णता ।
स्नानहोमजपादीनि कुर्वता च विशेषतः ॥
[3]सप्तभिर्दर्भपिञ्जूलैः कुर्याद्ब्राह्मं पवित्रकम् ।
पञ्चभिः क्षत्रियस्यैव चतुर्भिस्तु तथा विशः ॥
[4]द्वाभ्यां शूद्रस्य विहितमान्तराणां तथैव च ।
सर्वेषां वा भवेद्द्वाभ्यां पवित्रं ग्रन्थितं न वा ॥

---

(१) चदा. १११; प्रपा. ८; संकौ. १९ पू.; संर. ३१ पू.

(२) चदा. १११; प्रपा. ८ (पञ्चषाङ्गुलिवैपुल्यमुत्सेधात्षोडशाङ्गुलः । द्वादशाङ्गुलिकं मूलं मुखमष्टाङ्गुलं तथा ॥).

(३) संकौ. १९. (४) उत. १४२. (५) चदा. ९९.

(१) चदा. १४०; निप्र. १९०; संर. १२८ पूर्वार्धे (प्रणवादिचतुर्थ्यन्तं नमोन्तं चैव सत्तम ।).

(२) चदा. १००.

(३) प्रपा. ३५ दर्भ (कुश) ब्राह्मं प (ब्रह्मप) पञ्चभिः (चतुर्भिः) चतुर्भिस्तु (त्रिभिः कार्यं); प्रर. ४९ दर्भ (कुश) ब्राह्मं प (ब्रह्मप); पप्र. ९६–९७; मुक्ता. २३० पूर्वार्धे (सप्तभिर्दर्भपुञ्जीलैर्ब्राह्मणस्य पवित्रकम् ।) तु (च) स्मृतिभास्करे; संर. १८ कुर्याद्ब्राह्मं (ब्राह्मणस्य).

(४) प्रपा. ३५ पू.; प्रर. ४९ मान्तराणां (मितराणां) पू.; पप्र. ९७ पू.; मुक्ता. २३० (उभाभ्यामेव शूद्रस्य ह्यान्तराणां तथैव च ।) पू.; संर. १८ मान्तराणां (मातुराणां).

(१) पिञ्जूलमुक्तरूपदर्भदलम् । आन्तराणां संकरजातानाम् । संप्र. ९७

(२) आन्तराणाम् अनुलोमानाम् । मुक्ता. २३०

वृत्तग्रन्थिमत्पवित्रलक्षणम्

[१]**अर्धं प्रदक्षिणीकृत्य शिखापाशं प्रवेशयेत् ।**
**वैष्णवेनैव मार्गेण वृत्तग्रन्थौ पवित्रके ॥**

ग्रन्थिप्रकारो गरुडपुराणे— अर्धमिति । वैष्णवो मार्गः पश्चाद्भागः । ¶ पप्र. ९७

ब्रह्मग्रन्थिमत्पवित्रलक्षणम्

[२]**संत्यज्य वैष्णवं मार्गं ब्रह्ममार्गविनिःसृतम् ।**
**सकृत्प्रदक्षिणीकृत्य पवित्रमभिधीयते ।**
**तद्ब्रह्मग्रन्थिमत्प्रोक्तं पवित्रं वेदवादिभिः ॥**

(१) पवित्रकर्तुरभिमुखप्रदेशो ब्रह्ममार्गः । $ प्रपा. ३५

(२) 'दक्षावर्तो भवेद्ब्रह्मा वामावर्तस्तु विष्टरः ।' इति ग्रन्थिमार्गद्वयम् । तत्र 'सकृत्' इति वचनात् ब्रह्मग्रन्थिरूपता नास्ति । द्विवेष्टने हि ब्रह्मग्रन्थिप्रसिद्धिः । तेन ब्रह्मग्रन्थिव्यतिरिक्तग्रन्थियुक्तपवित्रद्वयं सर्वकर्माङ्गं कुशबटुरूपम् । यत्तु 'उभाभ्यामेव पाणिभ्यां विप्रैर्दर्भपवित्रकौ । धारणीयौ प्रयत्नेन ब्रह्मग्रन्थिसमन्वितौ ॥' इति, तत् 'ब्रह्मयज्ञे जपे होमे ब्रह्मग्रन्थिर्विधीयते ।' इति विधौ कुत्र ब्रह्मग्रन्थिरित्यपेक्षायां हस्तद्वयपवित्रयोर्ब्रह्मग्रन्थिविधिपरमिति न कुशबटुरूपे सर्वकर्माङ्गपवित्रे ब्रह्मग्रन्थिप्रसङ्गः । निप्र. ३७–३८

---

¶ संदी. पप्रवत् ।

$ प्रर. , पप्र. प्रपावत् ।

(१) पप्र. ९७ ; संदी. ११ पाशं प्र ( यां संप्र ).

(२) चदा. १०० विनिःसृतम् ( विनिर्गतम् ) तृतीयार्धं नास्ति ; प्रपा. ३५ प्रथमार्धे ( अस्त्यन्यो वैष्णवो मार्गो ब्रह्ममार्गविनिर्मितः । ) ; निप्र. ३७ वैष्णवं ( वेष्टरं ) विनिःसृतम् ( विनिर्गतम् ) तृतीयार्धं नास्ति , शिष्टाः इत्युक्तम् ; प्रर. ४९ मार्गविनिःसृतम् (ग्रन्थिविनिर्मितौ) शेषं प्रपावत् ; पप्र. ९७ ; संदी. ११.

चतुःसमसंज्ञकगन्धविशेषः

[१]**कस्तूरिकाया द्वौ भागौ चत्वारश्चन्दनस्य च ।**
**कुङ्कुमस्य त्रयश्चैकः शशिनः स्याच्चतुःसमम् ॥**

सर्वगन्धम्

[२]**कर्पूरं चन्दनं दर्पः कुङ्कुमं च समांशकम् ।**
**सर्वगन्धमिति प्रोक्तं समस्तसुरवल्लभम् ॥**

यक्षकर्दमः

[३]**कर्पूरमगरुश्चैव कस्तूरी चन्दनं तथा ।**
**कङ्कोलं च भवेदेभिः पञ्चभिर्यक्षकर्दमः ॥**

## ब्रह्मपुराणम्

हस्तस्थितप्राजापत्य–सोमतीर्थे तदुपयोगश्च

[४]**मूलरेखामुखाङ्गुष्ठमणिबन्धेषु मध्यगम् ।**
**प्राजापत्यं महातीर्थं विप्रस्तेनाऽऽचमेत्सदा ॥**

[५]**धनायुर्दाररेखासु सोमतीर्थं तु मध्यगम् ।**
**लाजादिहवनं तेन कर्तव्यं वपनं तथा ॥**

वपनं व्रीह्यादिनिर्वापः । * ब्रक. ५५

---

* चव्र. , चदा. , पप्र. ब्रकवत् ।

(१) चव्र. ४४ ; चदा. १०९ ; पप्र. ११४.

(२) चव्र. ४४ समांशकम् ( चतुःसमम् ) ; चदा. १०९ कर्पूरं ( कर्पूरः ) ; पप्र. ११४ चव्रवत् ; संकौ. १२९ ; प्रका. २१५ ; बाल. १।२९४ पृ. ६०५ ; संव. १०९.

(३) चव्र. ४४ मगरु ( मगुरु ) कङ्कोलं ( कक्कोलं ) ; चदा. १०९ चव्रवत् ; पप्र. ११४ वृद्धगर्गः .

(४) ब्रक. ५५ ; चव्र. ३४ पूर्वार्धे ( मूलरेखासु स्वाङ्गुष्ठमणिबन्धेषु मध्यमम् । ) ; पप्र. ७७.

(५) ब्रक. ५५ मध्यगम् ( मध्यमम् ) तेन ( तत्र ) ; चव्र. ३४ तीर्थं ( तीर्थे ) मध्यगम् ( मध्यमम् ) ; चदा. १३८ मध्यगम् ( मध्यमम् ) भविष्यत्पुराणम् ; पप्र. ७७.

यज्ञियवृक्षाः

[1]शमीपलाशन्यग्रोधप्लक्षवैकङ्कतोद्भवाः ।
अश्वत्थोदुम्बरौ बिल्वश्चन्दनः सरलस्तथा ।
शालश्च देवदारुश्च खदिरश्चेति यज्ञियाः ॥

(१) वैकङ्कतः श्रुवावृक्षः । ब्रक. ६८

(२) समिध इत्यनुवृत्तौ ब्रह्मपुराणे– पलाशेति । अश्वत्थन्यग्रोधः अश्वत्थे संपृक्तो वटः, अश्वत्थस्य पुनरुपादानादिति सागरः । पारिजाते तु पुनरश्वत्थोपादानं यज्ञोपयुक्तेध्मादावपि संबन्धार्थमित्युक्तम् । विकङ्कतः रुषकटायीति प्रसिद्धा । कृर. ६१

(३) पलाशेत्याद्यर्धश्लोकेन समिध उक्ताः । अश्वत्थेत्यादिश्लोकेन यज्ञियवृक्षा उक्ताः । पप्र. १०४

शौचं श्रद्धा चाधिकारिविशेषणे, साधनशुद्धेः कर्माङ्गत्वम्

[2]श्रौतं स्मार्तं तथा कर्म कर्तव्यमधिकारिणा ।
शुचिना साधनैः शुद्धैः सम्यक् श्रद्धान्वितेन च ॥

अधिकारिणः शुद्धिसाधनान्याह बृहस्पतिः– 'गात्रं मृदम्भसा शुध्येद्वित्तं भूतविशासनात् । विद्यया तपसा देहो मतिर्ज्ञानेन शुध्यति ॥ स्वाध्यायेनानुतापेन होमेन तपसैव च । ध्यानेन क्षेत्रवासेन दानेनाघपरिक्षयः ॥' । तथा– 'परापवादाश्रवणं परस्त्रीणामदर्शनम् । एतच्छौचं श्रोत्रदृशोर्जिह्वाशुद्धिरपैशुनम् ॥ अप्राणिवधमस्तेयं शुचित्वं पादहस्तयोः । असंश्लेषः परस्त्रीणां शारीरं शौचमिष्यते ॥' । याज्ञवल्क्यः– 'कालोऽग्निः कर्म मृद्वायुर्मनो ज्ञानं तपो जलम् । पश्चात्तापो निराहारः सर्वेऽमी शुद्धिहेतवः ॥' । शुद्धिर्नाम अनर्हतापादकदोषनिवर्तकः संस्कारविशेषः । इन्दु. १२

पित्र्यचरुस्थालीमानम्

[1]नेमिस्तस्याऽऽयता कार्या चतुरङ्गुलमुच्छ्रिता ॥

पित्र्यचरुस्थाल्यधिकारे ब्रह्मपुराणम्– नेमिरिति । नेमिः कण्ठदेशः । पप्र. १०८

पादप्रक्षालननिमित्तानि

[2]कृत्वा मूत्रपुरीषे च रथ्यामाक्रम्य वा पुनः ।
पादप्रक्षालनं कुर्यात्स्वाध्याये भोजने तथा ॥

श्राद्धार्हा दर्भाः, षड्विधदर्भाः, श्राद्धे वर्जनीया दर्भाश्च

[3]हरिताश्च सपिञ्जूलाः स्निग्धाः पुष्टाः समाहिताः ।
गोकर्णदीर्घास्तु कुशाः सकृच्छिन्नाः समूलकाः ॥

[4]पितृतीर्थेन देयाः स्युर्दूर्वा श्यामाक एव च ।
काशाः कुशा बल्वजाश्च तथाऽन्ये तीक्ष्णरोमशाः ॥
मौञ्जं च शाद्वलं चैव षड् दर्भाः परिकीर्तिताः ।
श्राद्धे वर्ज्याः प्रयत्नेन ह्युलपाश्च गवेधुकाः ॥

---

(१) ब्रक. ६८ शमीपलाश (पालाशाश्वत्थ) दुम्बरौ (दुम्बरो); चव्र. ७६ यज्ञियाः (याज्ञिकाः); चदा. १३९ चव्रवत्; कृर. ६१ शमीपलाश (पलाशाश्वत्थ) अश्वत्थोदुम्बरौ (अश्वत्थोडुम्बरो); हभा. २१५ शमीपलाश (पलाशाश्वत्थ) दुम्बरौ (दुम्बरो) खदिरश्चेति यज्ञियाः (खादिरश्चेति याज्ञिकाः); प्रपा. ३७ शाल (साल) चेति (चैव); निप्र. १९४ शमीपलाश (पलाशाश्वत्थ) अश्वत्थोदु (काश्मर्योदु) शाल (साल) यज्ञियाः (याज्ञिकाः); प्रर. ५० चेति (चैव); पप्र. १०४ शमीपलाश (पलाशाश्वत्थ) दुम्बरौ (दुम्बरो); संप्र. ४३५ शाल (सालं): ४४९; संग. ३३ शमीपलाश (पालाशाश्वत्थ) अश्वत्थोदु (वेतसौदु) खदिरश्चेति यज्ञियाः (खादिरश्चेति याज्ञिकाः): ६७१ शमीपलाश (पालाशश्वाथ) दुम्बरौ (दुम्वरो) खदिर खादिर (खादिर): ६८० दुम्बरौ (दुम्बरो) खदिर (खादिर); संदी. ३१ शमीपलाश (पलाशाश्वत्थ) अश्वत्थो (वेतसौ) न्दनः (न्दनं) यज्ञियाः (याज्ञिकाः).

(२) इन्दु. १२.

(१) पप्र. १०८.

(२) आर. ५.

(३) पप्र. ९८.

(४) स्मृसा. १०० स्युः (च) चतुर्थार्धं नास्ति; पप्र. ९८–९९.

बल्वजाः तृणविशेषाः मध्यदेशे बगई इति प्रसिद्धाः। तीक्ष्णरोमशा इति बल्वजविशेषणम्। तदन्यबल्वजानां विशेषो वक्ष्यते। मौञ्जं शरपत्रम्। शाद्वलं हरितम्। इदं तु दूर्वादीनां सर्वेषां विशेषणम्। 'नपुंसकमनपुंसकेनैकवच्चान्यतरस्याम्' इत्यनेनैकशेषो नपुंसकैकवचनत्वं च। अत्र दूर्वादिषु दर्भशब्दो गौणः तत्कार्यकारित्वज्ञापनार्थः। दर्भकार्यकारित्वादेव तद्धर्मप्राप्तौ शाद्वलग्रहणं तत्समूलत्वादिधर्मानियमार्थमिति शूलपाणिः। उलपः तृणविशेषः। प्रतिनिधिन्यायप्राप्तस्य निषेधोऽयम्।

पप्र. ९९

## ब्रह्मवैवर्तपुराणम्

अरुणोदय-रजनी-संध्यापदार्थाः

**†[१]चतस्रो घटिकाः प्रातररुणोदय उच्यते ॥**
**[२]त्रियामां रजनीं प्राहुस्त्यक्त्वाऽऽद्यन्तचतुष्टयम्।**
**नाडीनां तदुभे संध्ये दिवसाद्यन्तसंज्ञिते ॥**

## वराहपुराणम्

स्नानाचमनादीन्यधिकारिविशेषणानि

**[३]सुस्नातः सम्यगाचान्तः कृतसंध्यादिकक्रियः।**
**कामक्रोधविहीनश्च पाखण्डस्पर्शवर्जितः ॥**
**जितेन्द्रियः सत्यवादी सर्वकर्मसु शस्यते ॥**

कृतप्रातःसंध्योपासनत्वमपि अधिकारितावच्छेदकम्, 'संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु।' इति छन्दोगपरिशिष्टे कात्यायनोक्तेः, 'सुस्नातः सम्यगाचान्तः ... शस्यते ॥' इति दानहेमाद्रौ वराहोक्तेश्च।

संदी. २-३

† व्याख्यानं 'सर्वमर्हति' इति दक्षवचने (सं. का. पृ. १२३५) द्रष्टव्यम्।

(१) संत. ९२९.

(२) संत. ९२९-९३०; पप्र. ८१.

(३) चदा. १०० पाखण्ड (पाषण्ड) सर्वकर्मसु (पात्रं दाता च); इन्दु. १३ द्वितीयार्धं नास्ति; संदी. ३.

उपवासस्य अधिकारिविशेषणत्वम्

**[१]स्नानं संध्या तर्पणादि जपहोमामरार्चनम्।**
**उपवासवता कार्यं सायंसंध्याहुतीर्विना ॥**

उपवासोऽप्यधिकारिविशेषणम्, 'स्नानं संध्या ... विना ॥' इति वाराहात्। उपवासवता अनश्नतेत्यर्थः। उपवासोऽनशनम्। अनुवादोऽयम्, *'सायंप्रातर्द्विजातीनाम्', 'उपास्य पश्चिमां संध्याम्' इत्यादिनैव सिद्धेरिति केचित्। तन्न, इह वचनाभावे कर्मवैगुण्यानापत्तेः, सायंसंध्याहुत्योः पौर्वाह्णिकस्य च भोजनोत्तरपूर्वकालत्वसिद्धावपि माध्याह्निकादेरनश्नदधिकारित्वासिद्धेश्च, 'इक्षुरापः फलं मूलं ताम्बूलं पय औषधम्। भक्षयित्वाऽपि कर्तव्याः स्नानदानादिकाः क्रियाः ॥' इति चतुर्विंशतिमते स्मृत्यर्थसारे चेक्ष्वादिपरिगणनानुपपत्तेश्च। न चायमपूर्वविधिः, रागतः प्राप्तेः। नापि भक्षयित्वैवेति नियमः, अपिशब्दवैयर्थ्यापत्तेः। इक्ष्वादिभक्षणोत्तरमनाचम्यापि क्रियाः कार्या इति स्मृतिरत्नावली। तन्न, 'आचान्तः कर्मशुद्धः स्यात्ताम्बूलौषधजग्धिकृत्।' इति विष्णूक्तिविरोधात्, अनाचम्येत्यध्याहारप्रसङ्गाच्च। तस्मादशक्तं

* 'सायं प्रातर्द्विजातीनामशनं श्रुतिचोदितम्। नान्तरा भोजनं कुर्यादग्निहोत्रसमो विधिः ॥' इति संवर्तहारीतयोर्वचनम्। 'उपास्य पश्चिमां संध्यां हुत्वाऽग्नींस्तानुपास्य च। भृत्यैः परिवृतो भुक्त्वा नातितृप्याथ संविशेत् ॥' इति याज्ञवल्क्यवचनम्। अत्राऽऽदिपदेन प्रातःस्नानसंध्यादीनां प्रातर्भोजनस्य च कालविधायकानां वचनानां ग्रहणम्। तथा सत्येव प्रातःस्नानसंध्यादीनां श्रुतार्थापत्त्योपवासपूर्वकत्वसिद्धिर्वाराहवचनस्यानुवादत्वोपपत्तिश्च। उक्तवचनद्वयतदर्थकवचनान्तरेभ्यः सायंसंध्याहुत्योरुपवासपूर्वकत्वाभावमात्रं सिध्येत्। किंच, स्मृत्यन्तरोक्तविधिप्रयुक्तं स्मृत्यन्तरवचनस्यानुवादत्वमपि चिन्त्यम्। अस्मिन्विषये 'गर्भिणीपतिधर्माः' इति प्रकरणे आश्वलायनवचनीयसंस्काररत्नमालाव्याख्याने टिप्पणी द्रष्टव्या।

(१) आर. १; आम. ४; इन्दु. ८ स्नानं संध्या (स्नानपूजा) होमामरा (होमसुरा); संदी. २.

प्रत्येतदपिशब्दादिति युक्तम् । 'अस्नाताशी मलं भुङ्क्ते अजपी पूयशोणितम् । अहुताशी कृमीन् भुङ्क्ते अदत्त्वा विड्विभोजनः ॥' । अजपी अदत्त्वा इत्यत्र आशीत्यनुषज्यते । कालिकापुराणे— 'जलस्यापि नरश्रेष्ठ प्राशनाद्वेषजादृते । नित्यक्रिया निवर्तेत काम्यनैमित्तिकैः सह ॥' । शिवपुराणे— 'उपवासयुतः कर्म शिवपूजादिकं चरेत्' ।

आर. १–२

अधौत–कारुधौतयोर्वस्त्रयोर्निषेधः, अहतस्य कर्माङ्गत्वम्

[१]**अधौते कारुधौते च परिदध्यान्न वाससी ।**
**अहते तु परीदध्यात्सर्वकर्मणि संयतः ॥**

अहतयोरधरीयोत्तरीययोः परिधानमपि अधिकारितावच्छेदकम्, 'अधौते ... संयतः ॥' इति हेमाद्रौ वाराहोक्तेः, 'अहतं वासो धौतं वाऽमौत्रेणाऽऽच्छादयीत' (पागृ. २।६।२०) इति पारस्करगृह्योक्तेश्च ।

संदी. ४

धनिक– मध्यम– महाधन– दरिद्र– महादरिद्र–
धन्य–धन्यतर– धन्यतम– धीर– धीर-
तर– धीरतमलक्षणानि

[२]**वर्धयित्वा धनं यस्तु तस्माद्ग्रासमपीह यः ।**
**न खादेत्संग्रहपरो धनिकः स उदाहृतः ॥**

**पोषणीयकुटुम्बस्य निर्वाहो यावता भवेत् ।**
**तावदेव सुखं येन लभते प्रतिवार्षिकम् ।**
**ऋणं यस्य तु नास्त्येव स मध्यम उदाहृतः ॥**

**धनं पूर्वापरं यस्य वर्तते बहुसंख्यया ।**
**अधिकस्यार्जको यः स्यात्स महाधन उच्यते ॥**
**सदाचाररतो विप्रो धनार्जनपराङ्मुखः ।**
**कुटुम्बयत्नमतिकः( ? भृतिकः ) स दरिद्र इति स्मृतः ॥**
**यस्य स्यादशनाभावः सदाचाररतस्य हि ।**
**महादरिद्रः स भवेद्दासोधान्यविवर्जितः ॥**

(१) संदी. ४.
(२) संर. १३–१४.

**वर्धयित्वा धनं यस्तु ग्रासं वार्षिकमर्जयेत् ।**
**स वै धन्य इति प्रोक्तश्चैकवर्षेण यः पुमान् ॥**

**वर्षद्वयमितं ग्रासं स हि धन्यतरः स्मृतः ।**
**अधिकस्यार्जको यः स्यात्स धन्यतम ईरितः ॥**

**धनेनैव विना यस्तु ग्रासं वार्षिकमर्जयेत् ।**
**स वै धीर इति प्रोक्तस्तारतम्यं च पूर्ववत् ॥**

धनिकादिदेयदक्षिणामानतारतम्यम्

**धनिको द्विगुणं दद्यात्त्रिगुणं तु महाधनः ।**
**यवार्धं तु दरिद्रेण दातव्यं पुण्यलब्धये ।**
**दद्यान्महादरिद्रस्तु तदर्धं शुल्कमेव च ॥**

अथ धनिकादिप्रदेयदक्षिणार्थद्रव्येयत्ताव्यवस्था । तत्राऽऽदौ धनिकादिलक्षणं वाराहे— वर्धयित्वा धनमित्यादि । अथैतेषु मध्ये केन कियद्देयमित्याकाङ्क्षायां वाराहे लक्षनमस्कारहोमं( ? ) प्रकृत्य 'व्याहृतीनां सहस्रस्य होमे शुल्कं द्विजेऽर्पयेत् । माषमात्रं सुवर्णं तु लक्षहोमे शतं यवाः ॥' इत्युक्तम् । 'धनिको द्विगुणं .... शुल्कमेव च ॥' इति । मध्यमादिभिस्तु धनिकाद्यपेक्षया किंचिन्न्यूनं दरिद्राद्यपेक्षया किंचिदधिकं देयमित्यर्थात्तारतम्येन कल्पनीयम् । धीरेण तु दरिद्रतोऽपि न्यूनं समं वा लाभानुसारेण कल्पनीयम् । एतच्च सुवर्णादिद्रव्यविषयमेव, न तु गवादिविषयम्, सुवर्णं प्रकृत्यैव द्वैगुण्यादेरुक्तत्वात् । एतत्सर्वं नित्यकर्मविषयमनुक्तपरिमाणविषयकं च ज्ञेयम् । काम्ये उक्तपरिमाणे च कर्मणि तु यथावदेव देयम् । धनिकादिस्तु दरिद्र्यहमिति प्रख्यापयन् यथावन्न ददाति स कर्मफलं नैवाऽऽप्नोति । तथा च मनुः— 'प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते । स नाऽऽप्नोति फलं तस्य परत्रेति श्रुतिः स्मृतिः ॥' इति । पुराणान्तरेऽपि— 'वित्तशाठ्यं नरो यस्तु धने सति करोति हि । स नाऽऽप्नोति फलं तत्र चोर एव प्रकीर्तितः ॥' इति । एवं स्वल्पकालसाध्यबहुकालसाध्यकर्मसु श्रमाद्यनुरोधेन द्रव्येयत्ता कल्पनीया ।

संर. १३–१४

## वामनपुराणम्

सर्वकर्मणां नारायणनमस्कारपूर्वकत्वम्

**[1]सर्वमङ्गलमाङ्गल्यं वरेण्यं वरदं विभुम् ।
नारायणं नमस्कृत्य सर्वकर्माणि कारयेत् ॥**

नारायणनतिश्चाधिकारिविशेषणम् , 'सर्वमङ्गलमाङ्गल्यं ... कारयेत् ॥' इति वामनपुराणोक्तेः । नारायणग्रहणं गणेशोमामहेश्वराद्युपलक्षणम् । कारयेदिति स्वार्थे णिच् । संदी. १७

## कूर्मपुराणम्

पवित्रकयज्ञोपवीतयोः कर्माङ्गत्वम्

**[2]विना दर्भेण यत्कर्म विना सूत्रेण वा पुनः ।
अग्राह्यं तद्भवेत्सर्वं नामुत्रेह फलप्रदम् ॥**

सूत्रेण यज्ञोपवीतेन, एतच्च त्रैवर्णिकानाम् ।
कूर. ४७

तिलपात्रस्य श्रेष्ठत्वतारतम्यम्

**[3]तिलपात्रं त्रिधा प्रोक्तं कनिष्ठोत्तममध्यमम् ।
ताम्रपात्रं दशपलं जघन्यं परिकीर्तितम् ।
द्विगुणं मध्यमं प्रोक्तं त्रिगुणं चोत्तमं स्मृतम् ॥**

## भविष्यपुराणम्

नित्ये कामस्याधिकारिविशेषणत्वाभावः, काम्ये कामस्याधिकारिविशेषणत्वम्, सदाचार-श्रद्धा-ऽध्यात्मज्ञान-न्यायार्जित-धनत्वानि साधारणान्यधिकारि-विशेषणानि

**[4]सम्यक् संसाधनं कर्म कर्तव्यमधिकारिणा ।
निष्कामेन सदा वीर काम्यं कामान्वितेन तु ॥**

(१) इन्दु. १४ ; संदी. १७.
(२) कूर. ४७.
(३) संकौ. ४०.
(४) ब्रक. ५० ; चव्र. ३१ सदा वीर (महावीर) ; प्रप्र. ७० संसाधनं (ससाधनं).

**[1]आचारयुक्तः श्रद्धावान्वेदज्ञोऽध्यात्मवित्तमः ।
कर्मणां फलमाप्नोति न्यायार्जितधनश्च यः ॥**

(१) अयमर्थः— संसाधनं यथाविहितसाधनम् । अधिकारिणा अर्थिना विदुषा समर्थेन । सम्यक् यथासामर्थ्यं प्रथमकल्पादिना कर्म कर्तव्यम् । काम्ये कामान्वितत्वं विशेष इति । आचारः मन्वादिभिरुक्तोऽतिथिपूजादि । अध्यात्मवित्तमः परलोकभागिन्यात्मनि दृढप्रत्ययवान् । न्यायार्जितधनः स्ववृत्त्याऽर्जितकर्माङ्गधनः । फलं संपूर्णमिति शेषः । * ब्रक. ५०

(२) ससाधनं यथाविहितेतिकर्तव्यताकम् । अधिकारिणेति । यद्धर्मविशिष्टं प्रति यत्कर्म विधीयते तद्धर्मवान् तत्राधिकारी । ते च धर्मा अननुगतास्तत्तच्छास्त्रेभ्योऽवगन्तव्याः । सम्यक् यथासामर्थ्यं प्रथमकल्पादिना कर्म कर्तव्यमित्यर्थः । नित्यं कर्माभिप्रेत्याऽऽह— निष्कामेनेति । यद्यपि कामनां विना कर्मानुष्ठानमेव न संभवति, प्रवृत्तिमात्रस्य कामनाधीनत्वात् । नित्येऽपि अनिष्टसाधननिरोधिनि अहिकण्टकनाशादाविव कामना संभवत्येव । अत एव मनुनाऽपि कर्ममात्रस्य कामनामूलकत्वमुक्तम् । यथा— 'यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितम् ।' इति । तथाऽपि नित्ये फलकामनाया अधिकारनियामकत्वाभावप्रतिपादनार्थमिदम् । एवं च फलकामनां विनाऽपि अनुष्ठितान्नित्यकर्मणः फलसिद्धिः । काम्ये तु शास्त्रोक्तफलकामना फलनियामिकेति तत्कामनावतैव तत्कर्तव्यमित्याह— काम्यमित्यादिना । आचारः शौचस्नानाचमनादिः । आचारः मन्वाद्युक्तातिथिपूजादिरिति कल्पतरुः । श्रद्धा फलावश्यंभावनिश्चयः । यथाऽऽह देवलः— 'प्रत्ययो धर्मकार्येषु तथा श्रद्धेत्युदाहृता । नास्ति ह्यश्रद्दधानस्य कर्मकृत्यप्रयोजनम् ॥' इति । वेदज्ञः वेदजन्यानुष्ठेयार्थज्ञानवान् । इदं च उत्तमधर्माभिप्रायकम् । तदुक्तं व्यासेन— 'अतः स परमो धर्मो यो

* चव्र. ब्रकगतम् ।
(१) ब्रक. ५० ; चव्र. ३२ ; प्रप्र. ७०.

वेदादवगम्यते । ' इति । अत एवात्र ' फलं संपूर्णमिति शेषः ' इति कल्पतरौ व्याख्यातम् । अध्यात्मवित्तमः परलोकफलभागिन्यात्मनि दृढप्रत्ययवान् । न्यायार्जितधनः स्ववृत्त्याऽर्जितकर्मोपयुक्तधनः । इदं च फलोत्कर्षार्थम्, अन्यवृत्त्यर्जितधनेनापि फलश्रवणात् । व्यापारोत्कर्षेणापि फलोत्कर्षमाह आपस्तम्बः– ' प्रयोजयिताऽनुमन्ता कर्तेति स्वर्गनरकफलेषु भागिनः । यो भूय आरभते तस्मिन् फलविशेषः । ' । पप्र. ७०–७१

संकल्पस्य कर्मफलसमृद्धिहेतुत्वम्

[१]संकल्पेन विना विप्र यत्किंचित्कुरुते नरः ।
फलं चास्याल्पकं तस्य धर्मस्यार्धक्षयो भवेत् ॥

स्वशाखीयपरशाखीयानुष्ठानव्यवस्था

[२]यन्नाऽऽम्नातं स्वशाखायां पारक्यमविरोधि यत् ।
विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकं यथा ॥

हस्तस्थिततीर्थोपयोगः

[३]कमण्डलूपस्पर्शनं दधिप्राशनमेव च ।
सोमतीर्थेन राजेन्द्र सदा कुर्याद्विचक्षणः ॥
[४]लाजहोमं तथा दोहं प्राजापत्येन कारयेत् ॥

दैवपित्र्यकर्मणोस्तिथिव्याप्तिनियमः

[५]व्रतोपवासस्नानादौ घटिकैकाऽपि या भवेत् ।
उदये सा तिथिर्ग्राह्या विपरीता तु पैतृके ॥

देवताप्रतिमानां प्रकृतिद्रव्यं मानं च

[६]अनुक्तद्रव्यसंख्याना देवताप्रतिमा नृप ।
सौवर्णी राजती ताम्री वृक्षजा मार्तिकी तथा ॥

[१]चित्रजा पिष्टलेपोत्था निजवित्तानुरूपतः ।
आ माषात्पलपर्यन्तं कर्तव्या शाठ्यवर्जितैः ॥
चित्रोत्था चित्रलिखिता । पप्र. ११३

धातुसप्तकम्

[२]सुवर्णं रजतं ताम्रमारकूटं तथैव च ।
लोहं त्रपु तथा सीसं धातवः सप्त कीर्तिताः ॥

अष्टाङ्गोऽर्घः

[३]आपः क्षीरं कुशाग्राणि दध्यक्षततिलास्तथा ।
यवाः सिद्धार्थकाश्चैवमर्घोऽष्टाङ्गः प्रकीर्तितः ॥

कौतुकाख्याः कङ्कणौषधयः

[४]दूर्वा यवाङ्कुराश्चैव वालकं चूतपल्लवाः ।
हरिद्राद्वयसिद्धार्थशिखिपत्रोरगत्वचः ।
कङ्कणौषधयश्चैताः कौतुकाख्या नव स्मृताः ॥

कृष्णलादि रूप्यमानम्

[५]द्वे कृष्णले रूप्यमाषो धारणं षोडशैव ते ।
शतमानं तु दशभिर्धारणैः पलमेव वा ॥
निष्कं सुवर्णाश्चत्वारः कार्षिकस्ताम्रिकः पणः ।
इति योगीश्वरेणोक्तं कृष्णलः पञ्च गुञ्जकाः ॥
रूप्यमाने नियोक्तव्यः धान्यमानमथोच्यते ॥

ग्राम्यारण्यौषधयः

व्रीहयश्च यवाश्चैव गोधूमाः कङ्गुसर्षपाः ।
माषा मुद्गाः सप्तमाश्च अष्टमाश्च कुलत्थकाः ।
श्यामाकाश्चैव नीवारा जर्तिलाः सगवेधुकाः ॥

---

(१) संदी. १७. (२) इन्दु. ४.

(३) अप. १।१९ ; ब्रक. ५४ ; चव्र. ३४ कमण्डलूपस्पर्शनं (कमण्डलुस्पर्शनं यत्) ; पप्र. ७७ प्राशन (स्पर्शन).

(४) अप. १।१९. (५) आर. ४.

(६) चव्र. ४२ पूर्वार्धे (अनुक्तद्रव्यसंख्याश्च प्रतिमा- देवता नृप ।) ; चदा. ११० पूर्वार्धे (अनुक्तद्रव्यतत्संख्या- देवताप्रतिमा नृप ।) ; पप्र. ११३ मार्तिकी (मार्तिका).

(१) चव्र. ४२ पिष्टलेपोत्था (पिष्टजा ज्ञेया) कर्तव्या (कर्तव्याः) ; चदा. ११० ; पप्र. ११३ पूर्वार्धे (पिष्टजा लेपचित्रोत्था कार्या वित्तानुरूपतः ।) पर्यन्तं (पर्यन्ता).

(२) चव्र. ४८ ; चदा. ११० सप्त की (परिकी) ; पप्र. ११५.

(३) चव्र. ४८ ; चदा. ११० ; पप्र. ११५.

(४) चव्र. ४९ सिद्धार्थ (सिद्धार्थ) क्रमेण आदित्यपुराणम् ; चदा. ११० क्रमेण भविष्यपुराणम्.

(५) विपा. ८ ; संर. ३० (पलद्वयं तु प्रसृतं मुष्टिरेकं पलं स्मृतम् ।) एतावदेव.

कोविदारसमायुक्तास्तथा वेणुयवाश्च ये ।
ग्राम्यारण्याः स्मृता ह्येते औषधाश्च चतुर्दश ॥

धान्यमानम्

पलद्वयं तु प्रसृतं मुष्टिरेका पलं स्मृतम् ।
अष्टमुष्टि भवेत्किंचित्किंचिदष्टौ तु पुष्कलम् ॥
पुष्कलानि च चत्वारि आढकः परिकीर्तितः ।
चतुराढको भवेद्द्रोणः कुम्भो द्रोणद्वयं स्मृतः ॥

सर्वौषधानि

[1]ब्राह्मी सुवर्चला मुस्ता विष्णुक्रान्ता शतावरी ।
दुर्लभा शङ्खपुष्पी च प्रियङ्गुरजनी वचा ॥

सर्वौषधानि सहदेव्यादीनि । तथा च मत्स्यपुराणम्– 'सहदेवी वचा ... स्नानेषु योजयेत् ॥' । ब्राह्मी-सुवर्चलादीनि वा । तथा च भविष्यत्पुराणम्– 'ब्राह्मी सुवर्चला ... रजनी वचा ॥' । सुरादीनि वा । तथा च स्मृतिः– 'सुरा मांसी ... गणः स्मृतः ॥' । वालुकादीनि वा । तथा च वसिष्ठः– 'वालुका शङ्ख-पुष्पी ... गणो भृगो ॥' । अप. १।२७७

रसषट्कम्

[2]मधुरोऽम्लश्च लवणं कषायस्तिक्त एव च ।
कटुकश्चेति राजेन्द्र रसषट्कमुदाहृतम् ॥

विजयसंज्ञको धूपः

[3]वृषणं सिह्लकं विप्र श्रीखण्डमगुरुं तथा ।
कर्पूरं च तथा मुस्तां शर्करां सत्वचं द्विज ।
इत्येष विजयो धूपः स्वयं देवेन निर्मितः ॥

वृषणं कस्तूरी । त्वक् अगुरुत्वचा । कृर. ७८

अमृतनामा पञ्चरसनामा वा धूपः

[4]अगुरुं चन्दनं मुस्ता सिह्लकं वृषणं तथा ।
समभागं तु कर्तव्यं धूपोऽयममृताह्वयः ॥

अयमेव धूपः पञ्चरसनामकः । कृर. ७८

अनन्ताख्यो धूपः

[1]श्रीखण्डं ग्रन्थिसंयुक्तमगुरुं सिह्लकं तथा ।
मुस्तां तथेन्दुभूतेशं शर्करां च दहेत्त्वहम् ।
इत्येषोऽनन्तधूपश्च कथितो देवसत्तम ॥

ग्रन्थिः ग्रन्थिपर्णम् । कृर. ७८

प्रबोधाख्यो धूपः

[2]कृष्णागुरुं सिह्लकं च वालकं वृषणं तथा ।
चन्दनं तगरं मुस्ता प्रबोधः शर्करान्वितः ॥

महाङ्गसंज्ञको धूपः

[3]कर्पूरं चन्दनं पुष्पमगुरुं तगरं तथा ।
गृञ्जनं शर्करा कुष्ठं महाङ्गं सिह्लकं तथा ।
महाङ्गोऽयं स्मृतो धूपः प्रियो देवस्य सर्वदा ॥

महाङ्गं मांसी । कृर. ७८

महाधूपः

श्रीखण्डं वृषणं मुस्तामगुरुं सिह्लकं शशी ॥
शर्करा च तथा विप्र महाधूप इति स्मृतः ॥

प्राजापत्यो धूपः

[4]कर्पूरं चन्दनं मांसी त्वक्पत्रैलालवङ्गकम् ।
अगुरुं सिह्लकं धूपं प्राजापत्यं प्रचक्षते ॥

यक्षाङ्गो धूपः

[5]पलाशपुष्पाणि धवो यक्षचन्दनमेव च ।
कर्पूरं चन्दनं कुष्ठमुशीरं सिह्लकं तथा ॥

---

(१) अप. १।२७७.

(२) चव्र. ४७ ; चदा. ११०.

(३) चव्र. ५१ ; कृर. ७७.

(४) चव्र. ५० ; कृर. ७८ मुस्ता (मुस्तं) धूपोऽय-ममृताह्वयः (धूपं चामृतसंभवम्).

(१) चव्र. ५० संयुक्त (सहित) मुस्तां (मुस्ता) भूतेशं (भूतेश) ; कृर. ७८.

(२) चव्र. ५० ; कृर. ७८ उत्तरार्धे (चन्दनं तगरं मुस्तां प्रबोधं शर्करान्वितम् ॥).

(३) कृर. ७८.

(४) चव्र ५१ ; कृर. ७८ प्राजापत्यं प्रचक्षते (प्राजापत्यमिदं स्मृतम्) उत्त.

(५) चव्र. ५० उत्त. ; कृर. ७८.

[1]सग्रन्थिवृषणं भीसं कुङ्कुमं गृञ्जनं तथा ।
हरीतकी तथा भौम एष यक्षाङ्ग उच्यते ॥

यक्षचन्दनमुच्यते इत्यर्थः । कृर. ७९

दशाङ्गो धूपः

[2]षड्भागकुष्ठं द्विगुणो गुडस्य
लाक्षात्रयं पञ्च नखस्य भागाः ।
हरीतकी सर्जरसः समांसी
भागैकमेकं त्रिलवं शिलाजम् ॥
घनस्य चत्वारि पुरस्य चैको
धूपो दशाङ्गः कथितो मुनीन्द्रैः ॥

उपवासशब्दनिर्वचनं व्रतग्रहणकल्पश्च

[3]उपावृत्तस्य दोषेभ्यो यस्तु वासो गुणैः सह ।
उपवासः स विज्ञेयः सर्वभोगविवर्जितः ॥
यां तिथिं नियमं कर्तुं भक्त्या समनुगच्छति ।
तस्यां तिथौ विधानं यत्तन्निबोध जनाधिप ॥
यदा तु प्रतिपद्यां च गृह्णीयान्नियमं नृप ।
चतुर्दश्यां कृताहारः संकल्पं परिकल्पयेत् ॥
अमावास्यां न भुञ्जीत त्रिकालं स्नानमाचरेत् ।
पवित्राणि जपेन्नित्यं सावित्रीं शिरसा सह ॥

अथ उपवासादिग्रहणपरिभाषा । तत्र भविष्यपुराणे— ‘ उपावृत्तस्य ... वर्जितः ॥ ’ । वासो गुणैः सहेति क्षमादिभिः सह वासो नियमेनावस्थानम् । तथा— ‘ यां तिथिं ... शिरसा सह ॥ ’ । सावित्रीजपश्च त्रैवर्णिकानाम् । स्त्रीशूद्रयोः पौराणिकस्तुतिपाठः, तदशक्तौ नारायणस्मरणमिति दानसागरः । कृर. ५३—५४

## नारदीयपुराणम्

परमेश्वरार्पणस्य कर्मफलहेतुत्वम्

[1]विष्णवर्पितानि कर्माणि सफलानि भवन्ति हि ।
अनर्पितानि कर्माणि भस्मनि न्यस्तहव्यवत् ॥
[2]नित्यं नैमित्तिकं काम्यं यच्चान्यन्मोक्षसाधनम् ।
विष्णोः समर्पितं सर्वं सात्त्विकं सफलं भवेत् ॥

## अग्निपुराणम्

स्नानमधिकारिविशेषणम्, स्नानानुकल्पाः

[3]स्नानानामथ सर्वेषां वारुणेन च मानवः ।
कर्तुमर्हति कर्माणि विधिवत्सर्वदा द्विजः ॥
[4]असामर्थ्याच्छरीरस्य कालशक्त्याद्यपेक्षया ।
मन्त्रस्नानादयः सप्त केचिदिच्छन्ति सूरयः ॥
[5]अशक्तौ हि भवेत् स्नानमशिरस्कं हि कर्मिणाम् ।
आर्द्रेण वाससा वाऽपि मार्जनं दैहिकं विदुः ॥

अशिरस्कं शिरोमार्जनरहितम् । कर्मिणां कर्म चिकीर्षूणाम् । शक्ताशक्तस्त्रीपुंससाधारणं च गोशृङ्गप्रक्षालनजलस्नानम्, हरिवंशे तथैवोक्तेरिति सागरः ।

कृर. ४५—४६

## देवीपुराणम्

व्रतविशेषस्य कृष्णपक्षादावारम्भः

[6]आश्विने वाऽथ माघे वा चैत्रे वा श्रावणेऽपि वा ।
कृष्णादारभ्य कर्तव्यं व्रतं शुक्लविधिं(?) हरेत् ॥

---

(१) चव्र. ५० सग्रन्थिवृषणं भीसं (ग्रन्थिकं वृषणं भीम) उत्तरार्धे (हरीतकी तथोशीरं यक्षधूप उदाहृतः ॥); कृर. ७९.

(२) चव्र. ५०—५१.

(३) कृर. ५३—५४.

(१) प्रपा. ५८ बृहन्नारदीये ; प्रर. ५१ बृहन्नारदीये ; प्रका. ३६ भस्मनि न्यस्तहव्यवत् (भस्मनीव हुतं हविः); कृभ. ८३० सफलानि (सकलानि).

(२) प्रपा. ५८ बृहन्नारदीये ; प्रर. ५१ बृहन्नारदीये ; कृभ. ८३० ; इन्दु. ८८ बृहन्नारदीये.

(३) कृर. ४५ ; आर. २ मथ (मपि).

(४) कृर. ४५ शक्त्याद्य (शक्तिव्य) नादयः (नादिकाः); आर. २ सप्त केचिदि (पञ्च एक इ).

(५) कृर. ४५ दैहिकं विदुः (सर्वकर्मसु) ; आर. २ पूर्वार्धे (अशिरस्कं भवेत्स्नानं स्नानाशक्तौ तु कर्मिणाम् ।).

(६) कृर. ८२.

क्वचिच्छुक्लादिचान्द्रमासबाधो विशेषबलादेव । तद्यथा देवीपुराणे– 'आश्विने ... हरेत् ॥' इत्यादौ ।
कृर. ८२

अनामिकायां सुवर्णादिधारणम्

[१]अनामिकाङ्गुलिकायां धारयेद्दक्षिणे करे ॥

दक्षिणकरानामिकायां सुवर्णधारणस्य 'अनामिका... करे ॥' इति हेमप्रकरणस्थदेवीपुराणसिद्धत्वात् तत्सम-भिव्याहारात् रजतादिधारणमपि तत्रैव । 'तर्जन्यां रजतं धार्यम्' इति वाक्यमनादेयम् , अनाकरत्वात् ।
कृर. ६८

## कालिकापुराणम्

ब्रह्मग्रन्थिलक्षणम्

[२]द्विरावृत्त्याऽथ मध्ये वै अर्ध( ? र्धा )वृत्त्याऽन्त-देशतः ।
ग्रन्थिः प्रदक्षिणावर्तः स ब्रह्मग्रन्थिसंज्ञकम्-( ? कः ) ॥

देवार्पितगन्धपुष्पाद्युत्सर्गविधिः

[३]यद्दीयते च देवेभ्यो गन्धपुष्पादिकं नरैः ।
अर्घपात्रस्थितैस्तोयैरभिषिच्य तदुत्सृजेत् ॥

रत्नपञ्चकम्

[४]कनकं कुलिशं नीलं पद्मरागं च मौक्तिकम् ॥

कनक–रजत–मुक्ता–राजपट्ट-प्रवालरूपाणि पञ्चरत्नानीति गौडाः । कुलिशं हीरकम् ।
कृर. ७१

उपवासस्य अधिकारिविशेषणत्वम्

[५]जलस्यापि नरश्रेष्ठ प्राशनाद्वेषजाद्दते ।
नित्यक्रिया निवर्तेत काम्यनैमित्तिकैः सह ॥

(१) कृर. ६८.
(२) संत. ८६३.
(३) संदी. ५५.
(४) कृर. ७१.
(५) आर. २ ; बाल. ११५६ पृ. ४१६ ; लिङ्गपुराणम् ; संदी. २.

## आदित्यपुराणम्

रत्नपञ्चकं तत्प्रतिनिधिश्च

[१]सुवर्णं रजतं मुक्ता राजावर्तं प्रवालकम् ।
रत्नपञ्चकमाख्यातं शेषं वस्तु ब्रवीम्यहम् ॥
[२]अभावे सर्वरत्नानां हेम सर्वत्र योजयेत् ।
रुद्रबीजं परं पूतं यतस्तस्यैव सर्वदा ॥

पर्युषितस्यापि शूद्रस्पृष्टस्यापि च जाह्नवीतोयस्य कर्मार्हत्वम्

[३]चिरपर्युषितं वाऽपि शूद्रस्पृष्टमथापि वा ।
जाह्नव्याः स्नानदानादौ पुनात्येव सदा पयः ॥

## नृसिंहपुराणम्

कर्मानर्हं वस्त्रम्

[४]न रक्तमुल्बणं वासो न नीलं च प्रशस्यते ।
मलाक्तं च सदा हीनं वर्जयेदम्बरं बुधः ॥

उल्बणं व्यक्तम् । एतच्च रक्तविशेषणम् , तेनात्यन्त-रक्तमित्यर्थः । उल्बणम् अञ्चलमिति केचित् । संदी. ६

## पुराणम्

कुशमूलमध्याग्रैः साध्यानि कर्माणि

[५]पित्र्यं मूलेन मध्येन स्नानं दानं प्रयत्नतः ।
दैवं कर्म कुशाग्रेण कर्तव्यं भूतिमिच्छता ॥

वित्तशाठ्यस्य कर्मफलाभावहेतुत्वम्

[६]वित्तशाठ्यं नरो यस्तु धने सति करोति हि ।
स नाऽऽप्नोति फलं तत्र चोर एव प्रकीर्तितः ॥

## अनिर्दिष्टकर्तृकवचनानि

ऋग्वेदिसामवेदिनोराध्वर्यवादौ याजुषशाखापरिग्रहे नियमः

[७]यजुषां बहुशाखात्वात्संदेहे समुपस्थिते ।
कां शाखामवलम्बेरन् तादृशीं बह्वृचादयः ॥
आध्वर्यवं याजमानं ग्राह्यं बौधायनीयकम् ।
अन्यथा पतितो ज्ञेय इति बौधायनोऽब्रवीत् ॥

(१) पम्र. ११५ ; संव. ३२ वर्तं ( वर्तः ).
(२) चदा. ११० ; संर. ३१ पू. (३) इन्दु. ११.
(४) संदी. ६. (५) स्मृच. १०९. (६) संर. १४.
(७) कृभ. ११६९ यज्ञकाण्डे.

आध्वर्यवं याजमानमाग्नीध्रं यच्च नोदितम् ।
तत्र बौधायनं ग्राह्यं बह्वृचादिभिरादरात् ॥

आग्नीध्रस्य ऋग्वेदमिश्रत्वात्तत्र याजुषभागत्यागशङ्कावारणाय तदुपादानम् । कृभ. ११६९

[1]बह्वृचः सामगश्चापि स्वसूत्राभावतस्तथा ।
आपस्तम्बेन वा प्रोक्तमिति शातातपोऽब्रवीत् ॥

शाखिनामपि सर्वेषामभावे स्वप्रयोगिणाम् ।
आपस्तम्बोक्तमार्गेण कर्तव्यं पुनरब्रवीत् ॥

यद्यापस्तम्बशाखीयो भवेन्मातामहस्तदा ।
तत्र बौधायनाभावे तत्सूत्राधानमिष्यते ॥

तत्र 'शाखिनामपि ... ब्रवीत् ॥' इति वचनाद्बौधायनाभावे आपस्तम्बं ग्राह्यम्, अभावे सांनिध्याभावे इत्यर्थात् । अनिच्छायामित्यर्थाद्वा समविकल्पः । एतच्चोच्छिन्नपरम्परिकस्य नूतनपरिग्रहे एव । 'यद्यापस्तम्बशाखीयो ... मिष्यते ॥' इति च तादृशपरिग्रहे एव । कृभ. ११६९

[2]आपस्तम्बस्य चाभावे बौधायनमथापि वा ॥

परशाखपरिग्रहे विधिनिषेधाः प्रायश्चित्तं च

[3]आपस्तम्बादिभिरपि स्वसूत्राभावतस्तथा ।
बौधायनेन कर्तव्यमन्यथा पतितो भवेत् ॥

[4]पितृशाखां परित्यज्य पारक्यामधिगच्छति ।
स शूद्रवद्बहिष्कार्यः सर्वकर्मसु साधुभिः ॥

पारंपर्यागतो येषां वेदः सपरिबृंहणः ।
तच्छाखाकर्म कुर्वीरन् तच्छाखाध्ययनं तथा ।
न जातु परशाखोक्तं शाखारण्डादिकारणम् ॥
येषां केषां च मर्त्यानां नान्यदध्वर्युरादिशेत् ।
तेषां पुत्राश्च नप्तारः पतिताः स्युर्न संशयः ॥

यस्य आपस्तम्बीयपरंपराऽस्ति, परंतु यदि तत्प्रयोक्ता न विद्यते, तदोक्तम्– आपस्तम्बस्य चेति । अन्यत्रापि– 'आपस्तम्बादिभिरपि ... पतितो भवेत् ॥' इति । एतेन 'पितृशाखां परित्यज्य ... स्युर्न संशयः ॥' इति व्याख्यातम्, एतस्य उक्तविषयत्वादनुक्तस्यान्यतो ग्रहे बाधकाभावात् । कृभ. ११६९–११७०

[1]इष्टापूर्तादिकं कर्म स्वशाखोक्तं न विद्यते ।
तत्र बौधायनं ग्राह्यं बह्वृचादिभिरादरात् ॥

[2]सर्वेषामपि पक्षाणां स्वगृह्योक्तं विधीयते ।
स्वगृह्योक्तस्य चाभावे ग्रहणं स्वेच्छया भवेत् ॥

[3]स्वशाखीयो विशेषो हि यत्र नैवोपलभ्यते ।
तत्र बौधायनं ग्राह्यं बह्वृचादिभिरादरात् ॥

[4]स्वशास्त्रे विद्यमाने यः परशास्त्रेण वर्तते ।
भ्रूणहत्यासमं तस्य स्वशास्त्रमवमन्यतः ॥

[5]बौधायनेन मुनिना प्रायश्चित्ततृतीयके ।
स्वशास्त्रविधिमुत्सृज्य परशास्त्रप्रवर्तिनः ॥
भ्रूणहत्याकृतो दोष इत्यादि स्पष्टमीरितम् ।
स्वशास्त्रविध्यलाभश्चेच्छतशोऽन्विष्यतः क्वचित् ॥

अत्यन्तापदि पारक्यं कर्मलोपान्न दोषकृत् ।
भिन्नशाखोपनीत्याद्यं जाबालादिनिदर्शनात् ॥

[6]मुख्यो विधिः स्वशास्त्रोक्त इतरः स्यात्तु संकटे ॥

स्वशाखालक्षणं तदीयकर्मणः कर्तव्यता च

[7]पित्रादयस्त्रयः पूर्वं संस्कृताः शाखया यया ।
सा स्वशाखेति विज्ञेया तया कर्माणि कारयेत् ॥

(१) कृभ. ११६९ प्रथमश्लोकः यज्ञकाण्डे.
(२) कृभ. ११७०.
(३) आर. ६ वौधायनेन (बौधायनोक्तं) यज्ञकाण्डे; कृभ. ११७०.
(४) कृभ. ११७०.

(१) कृभ. ११७२. (२) संदी. ५६.
(३) बाल. १।८९ पृ. २५५.
(४) बाल. १।८९ पृ. २६६.
(५) बाल. १।८९ पृ. २५४–२५५.
(६) संर. १७९. (७) स्मृच. ४९.

उपांशुत्वलक्षणम्

[1]करणवदशब्दममनःप्रयोग उपांशु ॥

प्राच्या दिशो द्विविधत्वम्

[2]यत्रैव भानुस्तु वियत्युदेति
प्राचीं तु तां वेदविदो वदन्ति ।
ततोऽपरां पूजकपूज्ययोश्च
सदाऽऽगमज्ञाः प्रवदन्ति तां तु ॥

अत्र पूज्यपूजकान्तः प्राची आगमोक्तपूजायामेव, तत्परिभाषायामुक्तत्वात् । अन्यत्र तु सूर्योदयोपलक्षितैव ।

आम. २

पत्नीप्रतिनिधिः

[3]अपत्नीकैस्तु धर्मार्थं कौशी हैमी च राजती ।
ताम्री विप्रादिभिर्भार्या धार्या हैम्यथवाऽखिलैः ॥

देवकर्माङ्गाचमने दिङ्नियमः

[4]देवकर्माङ्गाचमने प्राङ्मुखस्योपवेशनम् ।
उदङ्मुखेन वा कुर्यादीशानाभिमुखेन वा ॥

कर्मार्हानर्हवस्त्रविवेकः

[5]अधौते कारुधौते च परिदध्यान्न वाससी ।
अहतं तु परीदध्यात्सर्वकर्मणि संयतः ॥

[6]अधौतं कारुधौतं च कर्मकाले विवर्जयेत् ।
चण्डालनिर्मितं वस्त्रं सर्वदा परिवर्जयेत् ॥

[7]अधौतं कारुधौतं च पूर्वेद्युर्धौत( ? धृत )-
मेव च ।
अप्सु यत्पीडितं वस्त्रं तत्त्याज्यं सर्वथा द्विजैः ॥

[8]आजानुमूलं वस्त्रं स्यात्पञ्चकच्छं तु धारयेत् ।
तन्न्यूनमधिकं चैव सर्वकर्मसु गर्हितम् ॥

कच्छपञ्चकम्

कुक्षिद्वये तथा पृष्ठे नाभौ द्वौ परिकीर्तितौ ।
वस्त्रस्य धारणं यच्च पञ्चकच्छं तु तद्विदुः ॥

कच्छत्रयम्

कट्यां नाभौ तथा पृष्ठे कच्छत्रयमुदाहृतम् ।
कच्छत्रयसमायुक्तो यो विप्रः स शुचिः स्मृतः ॥

पञ्चविधा नग्नता

एककच्छो द्विकच्छस्तु मुक्तकच्छस्तथैव च ।
एकवासा अवासाश्च नग्नः पञ्चविधः स्मृतः ॥

वस्त्रप्रसारणे दशानां दिङ्नियमः, अन्यथा पुनः-

प्रक्षालनं च

[1]प्रागग्रमुदगग्रं वा धौतं वासः प्रसारयेत् ।
पश्चिमाग्रं दक्षिणाग्रं पुनः प्रक्षालनाच्छुचि ॥

पश्चिमदक्षिणाग्रप्रसारणे पुनः प्रक्षालनविधानात्तथा न कार्यमिति भावः । अत्र अग्रं दशा वृक्षवत् ।

विपा. १९६ ( भागः २ )

एकयज्ञोपवीतेन कर्मकरणनिषेधः

[2]एकयज्ञोपवीतेन जपहोमादि यत्कृतम् ।
तत्सर्वं विलयं याति न पितॄंश्चोपतिष्ठति ॥

यस्तु 'एकयज्ञोपवीतेन ... तिष्ठति ॥' इति निन्दार्थवादः, सोऽपि गृह्यादिविषय एव, न ब्रह्मचारि-विषयः । * संप्र. ४२२

कुशासनस्य यज्ञोपवीतस्य च कर्माङ्गत्वम्

[3]कुशोपरि निविष्टेन तथा यज्ञोपवीतिना ।
सर्वं कर्म प्रकर्तव्यमन्यथा विफलं भवेत् ॥

आसनस्वरूपम् आसनमानं च

[4]स्नात्वा चैव शुचौ देशे पीठे यज्ञियदारुजे ।
वस्त्राच्छन्ने उपासीत अभावे कुशविस्तृते ॥

---

(१) प्रपा. ५५. (२) आम. २. (३) ज्योनि. १५९.
( ४ ) संग. ६३. ( ५ ) इन्दु. १३.
( ६ ) मुक्ता. २५२ ; आन. ३१ काले विव ( कालेषु व ) सर्वदा ( सर्वथा ).
( ७ ) विपा. १९५ ( भागः २ ).
( ८ ) विपा. १९५-१९६ ( भागः २ ).

* संग. संप्रवत् ।
( १ ) विपा. १९६ (भागः २) ; संदी. ५ व्रतहेमाद्रौ.
( २ ) संप्र. ४२२ ; संग. ६६८ तिष्ठति ( तिष्ठते ).
( ३ ) इन्दु. १३.
( ४ ) संग. ६३ उत्तरार्धे ( अभावे कुशविस्तृते तूपविश्य सुखासने ॥ ) पूर्वोपक्रान्तसाधारणेतिकर्तव्यतैकदेशं ' वस्त्राच्छा-

[1]पीठद्वयेऽम्बराच्छन्न उपविश्येन्द्रदिङ्मुखः ॥
[2]अष्टविंशाङ्गुलं पीठमुन्नतं स्यात्षडङ्गुलम् ।
अष्टाङ्गुलं तु विस्तारं कुर्यादौदुम्बरादिना ॥

प्रोक्षणावोक्षणाभ्युक्षणपरिभाषा

[3]उत्तानेन तु हस्तेन कर्तव्यं प्रोक्षणं भवेत् ।
अवाचीनेन हस्तेन कर्तव्यं स्यादवोक्षणम् ।
मुष्टीकरोति यत्तोयमभ्युक्षणमिति स्मृतम् ॥

अनुद्धृतसारस्य पयसस्ताम्रपात्रे दोषाभावः

[4]पयोऽनुद्धृतसारं च ताम्रपात्रे न दुष्यति ॥

अनुक्तसंख्ये जपादौ संख्यामानम्

[5]अनिर्दिष्टे शतं प्रोक्तं सहस्रमपि वा पुनः ॥

यजुर्विधाने– 'अनादेशे तु संख्याया अयुतं परिकीर्तितम् ।' । शिष्टाः पठन्ति– 'अनिर्दिष्टे...पुनः ।' । एषां शक्त्यपेक्षयाऽनुष्ठानम् । निप्र. २६

संख्यानुक्तौ शतं साष्टं सहस्रं वा जपादिषु ।
नारायण्यामिदं प्रोक्तं मानं पुरस्क्रियां विना ॥

अमायां कुशसमिच्छेदननिषेधः

[6]अमायां नैव हिंस्यात्तु कुशांश्च समिधस्तथा ।
सर्वत्रावस्थिते सोमे हिंसायां ब्रह्महा भवेत् ॥
वनस्पतिगते सोमे यस्तु हिंस्याद्वनस्पतिम् ।
घोरायां ब्रह्महत्यायां युज्यते नात्र संशयः ॥

यस्तु 'अमायां नैव हिंस्यात्तु ...' इति निषेधः, स यस्मिन्मुहूर्तत्रये वनस्पतिषु सोमो वसति तत्परः, न तु कृत्स्नामापर इति । योऽयं वनस्पतिगतसोमविशिष्टे काले छेदननिषेधः स लौकिकच्छेदनपरः, न त्विध्मादिच्छेदनपरः, विहितत्वादिति द्रष्टव्यम् । सोमवासकालस्तु गरुडपुराणेऽभिहितः– 'त्रिमुहूर्तं वसत्यर्के त्रिमुहूर्तं जले तथा । त्रिमुहूर्तं तथा गोषु त्रिमुहूर्तं वनस्पतौ ॥' इति । एतच्चामामारभ्य ज्ञेयम् । संर. १५–१६

कर्माङ्गं काम्यं च पवित्रधारणम्, पर्वभेदेन फलभेदः

[1]अनामिकायाः प्रथमं पर्व स्वर्णेन पूरयेत् ।
द्वितीयं दर्भसंयुक्तं कार्यं विप्रेण नित्यशः ॥
[2]अग्रपर्वस्थिते दर्भे तपःसिद्धिः सदैव हि ।
मध्ये चैव प्रजाकामो मूले सर्वार्थसाधनम् ॥

'अनामिकायाः ... नित्यशः ॥' इति मध्यपर्वणि कुशधारणं पुरुषार्थं कर्माङ्गं चाविशेषात् । कामनाभेदे तु– 'अग्रपर्वस्थिते .... सर्वार्थसाधनम् ॥' । निप्र. ३८

[3]तर्जनी रूप्यसंयुक्ता हेमयुक्ता त्वनामिका ॥

इति वाक्यात् समाचाराच्च तर्जन्यां रजतधारणम् । निप्र. ३३

ब्रह्मविष्टरयोर्निर्माणप्रकारः

[4]दक्षावर्तो भवेद्ब्रह्मा वामावर्तस्तु विष्टरः ॥

मुख्यकालादुत्तरकालस्यैव गौणत्वम्

[5]स्वकालादुत्तरो गौणः कालः सर्वस्य कर्मणः ॥

कुश–पात्र–मन्त्र–ब्राह्मणानामयातयामता पुनर्विनियोगश्च

कुशदर्व्यादयो मन्त्रा ब्राह्मणाश्च बहुश्रुताः ।
न ते निर्माल्यतां यान्ति विनियोज्याः पुनः पुनः ॥

कुशादीनां यातयामतानिमित्तानि

कुशाः षट्सु तु निर्माल्या दर्व्याद्या आभिचारिके ।
मन्त्रास्तत्र च शूद्रार्थे ब्राह्मणाः प्रेतभोजिनः ॥

षट्सु तर्पणश्राद्धासनभोजनमूत्रपुरीषकालधारणेषु । तत्र आभिचारिके । प्रर. ५१

---

दिते पीठे उपविश्य' इत्येतमनूद्य वचनस्यास्य संग्रहात् संदीपाठ एव गणपतेरप्यभिप्रेत इति भाति ; संदी. ५२.

(१) संग. ६३.

(२) धप्र. ४६ ; संग. ६३ विंशाङ्गु (त्रिंशाङ्गु) ; दिना (दिकम्) धर्मप्रवृत्तौ.

(३) प्रर. ४०. (४) संत. ८६६.

(५) निप्र. २६. (६) संर. १५.

(१) निप्र. ३३ पू. : ३८.

(२) निप्र. ३८. (३) निप्र. ३३.

(४) निप्र. ३७. (५) प्रर. ५१.

इध्मबर्हिषामयातयामतावधिः

[१] संग्रहाद्वत्सरं यावच्छुद्धिः स्यादिध्मबर्हिषाम् ।
ततः परं न गृह्णीयाज्जपादौ यज्ञकर्मणि ॥

त्याज्यदर्भाः

[२] वल्मीकोदकच्छायासु भूमिदग्धाश्च ये कुशाः ।
शूद्रोत्पाटितगोक्षुण्णा आप्लुताश्छेदिता नखैः ॥

ते त्याज्या इत्यर्थः । दर्भमात्रस्य अयातयामत्वोक्तौ तत्रायमपवादः । निप्र. ३५

पवित्रदर्भसंख्या

[३] पत्रत्रयेण वा कार्यमेकपत्रेण कर्हिचित् ॥

यत्तु 'चतुर्भिर्दर्भपिञ्जूलैर्ब्राह्मणस्य पवित्रकम् ।' इति, तच्छन्दोगपरिशिष्ट('द्विदलमेव च')विरोधात् प्रामाण्यसंदेहाच्च नाऽऽदेयम् । एवं 'पत्रत्रयेण वा ... कर्हिचित् ।' इति क्वचिल्लिखितमनादेयम् । निप्र. ३७

उत्सवकर्मादौ मङ्गलस्नाननूतनवस्त्रपरिधानालङ्करणानां कर्तव्यता

¶ [४] कर्मादौ मन्त्रसंयुक्तं मङ्गलस्नानमाचरेत् ।
दिव्याभरणवासोभिरलङ्कृत्य ततः शुचिः ॥

[५] तैलाभ्यङ्गं बुधैः प्रोक्तं मङ्गलस्नानमुच्यते ।
उत्सवादौ प्रकर्तव्यं सर्वदा शुभकाङ्क्षिभिः ॥

आचमनस्य कर्माङ्गत्वम्

[६] क्रियां यः कुरुते मोहादनाचम्यैव नास्तिकः ।
भवन्ति हि वृथा तस्य क्रियाः सर्वा न संशयः ॥

द्विराचमननिमित्तानि

[१] *सुप्त्वा क्षुत्वा च भुक्त्वा च पीत्वाऽपो वै मुनिस्तथा ।
आचान्तः पुनराचामेन्निष्ठीव्योक्त्वाऽनृतं वचः ॥

अयज्ञियानि धान्यानि

[२] अयज्ञिया वै माषा वरटाश्चणकाः कोद्रवाः ॥

आहुति- बलि- शोधनमृदां मानम्

[३] आर्द्रामलकमानेन कुर्याद्धोमहविर्बलीन् ।
प्राणाहुतिबलिं चैव मृदं गात्रविशोधनीम् ॥

कर्ममध्ये कर्मान्तरकरणनिषेधः

[४] न कर्मणि कर्मारम्भः ॥

पत्न्युपवेशननियमः

[५] सर्वेषु धर्मकार्येषु पत्नी दक्षिणतः स्थिता ।
विप्रपादक्षालने च अभिषेके च वामतः ॥

प्रयोगमध्ये ऋष्यादिस्मरणनिषेधः

[६] प्रयोगमध्य ऋष्यादि प्रतिमन्त्रं च न स्मरेत् ।
मानाभावात्प्रयोगस्य प्रांशु(? प्राशु)भावस्य हानितः ॥

स्रुक्स्रुवयोराकृतिर्मानं च

[७] आयामं पञ्चधा कृत्वा चतुर्धा वाऽग्रतो द्वयोः ।
उपान्त्यः पात्रमित्युक्तो हविराश्रयभावतः ॥
उपान्त्यभागे विस्तारः स्वदैर्घ्येण समो भवेत् ।
सोऽञ्जल्याकृतिरुद्दिष्टो बिलमत्र च वर्तुलम् ॥
षडङ्गुलं बाहुमात्र्यां तदर्धेन च निम्नता ।
अरत्निमात्रे हस्तस्य तलमानं बिलं स्मृतम् ॥

---

¶ अत्र कर्मशब्देन विवाहाद्युत्सवात्मकं कर्माभिप्रेयते इति संदर्भतोऽवगम्यते ।

(१) निप्र. ३६ ततः परं (अतः परं) जपादौ यज्ञ (यज्ञादौ जप); पप्र. १०१.

(२) निप्र. ३५. (३) निप्र. ३७.

(४) संग. ६१-६२ ; संदी. ५१.

(५) संग. ६२.

(६) पंप्र. ८२.

* 'सुप्त्वा क्षुत्वा च' इतिमनुवचनव्याख्यानानि (सं. का. पृ. ११८१-११८२) अत्रानुसंधेयानि ।

(१) मेधा. ५।१४४ पृ. ४५२.

(२) सम. ७१.

(३) पप्र. ११३ छन्दोगपरिशिष्टीकाधृतमित्युक्तम्.

(४) सम. ७४.

(५) प्रका. ४४ ; कुभ. ११३५

(६) संग. ७२.

(७) संकु. २१-२२ याज्ञिका उपदिशन्ति इत्युक्तम्.

विस्तारार्धेन निम्नं स्यादन्त्यभागेऽथ निर्णयः ।
भागेऽन्तिमे भवेद्ग्रीवा दैर्घ्यार्धेन च विस्तृता ॥

तस्या मुखं हंसमुखं हस्त्योष्ठमुखमेव वा ॥

बिलात्प्रणालिका तावत्पर्यन्ताऽर्थानुरूपतः ॥

कर्णौ ससुषिरौ ग्रीवापार्श्वयोश्चोदितौ तथा ।
बिलस्य बुध्ने पद्मं स्यादथ दण्डस्य लक्षणम् ॥

अवशिष्टास्त्रयो द्वौ वा भागौ दण्ड इतीर्यते ।
तस्य मूले भवेत्स्थूलः परिणाहो नवाङ्गुलः ॥

अन्ते पञ्चाङ्गुलः श्लक्ष्णो यन्त्रतो वर्तुलो भवेत् ।
दण्ड एवं स्रुचां काकपुच्छत्वं समुदीरितम् ॥

यथाशोभं स्रुचः कार्या इति बौधायनोऽब्रवीत् ।
शास्त्रान्तरात्तु विज्ञेयं विशेषान्तरमत्र यत् ॥
प्रादेशमात्रताऽपि स्याद्बौधायनमतादितः ।
दण्डो भागद्वयेन स्यात्पात्रं भागद्वयेन च ॥

ऊर्ध्वमेकेन भागेन ग्रीवा चेति यथार्थतः ।
स्रुचः सह स्रुवेण स्युरुक्तवृक्षा अथापि वा ॥

पवित्राः क्षाराः

[1]सैन्धवं लवणं यच्च यच्च मानससंभवम् ।
पवित्रे परमे ह्येते प्रत्यक्षे अपि सर्वशः ॥

सर्वगन्धलक्षणम्

[2]कस्तूरिकाया द्वौ भागौ चत्वारः कुङ्कुमस्य च ।
षोडशश्चन्दनस्यैकः कर्पूरस्य चतुष्टयम् ।
सर्वगन्ध इति प्रोक्तः समस्तसुरवल्लभः ॥

(१) कल्पतरुलिखितसर्वगन्धस्तु— कुङ्कुमागुरु-कर्पूरकस्तुरीजातीफलानि । कृर. ७१

(२) कुङ्कुमागुरुकर्पूरजातिफलरूपः सर्वगन्धः इति कल्पतरुः । वीमि. १।२७८

(१) पप्र. ८८५.

(२) कृर. ७१ प्रोक्तः (प्रोक्तं) वल्लभः (दुर्लभम्); वीमि. १।२७८.

परितोमानम्

[1]माषकाणि चतुःषष्टिः पलमेकं विधीयते ।
द्वात्रिंशत्पलिकं प्रस्थमुक्तं स्वयमथर्वणा ॥
आढकस्तु चतुःप्रस्थैश्चतुर्भिर्द्रोणमाढकैः ।
द्रोणप्रमाणं विज्ञेयं ब्रह्मणा निर्मितं पुरा ।
द्वादशाभ्यधिकैर्नित्यं यवानां पञ्चभिः शतैः ॥

एण–माणव–रुरु–सृमरपदार्थाः

[2]अनृचो माणवको(?वो) ज्ञेय एणः कृष्णमृगः स्मृतः ।
रुरुर्गौरमृगः प्रोक्तः सृमरः शल उच्यते ॥

## षट्त्रिंशन्मतम्

दर्भाणां ग्रहणकालः अयातयामता पुनर्विनियोगश्च

[3]मासेन स्यादमावास्यां दर्भो ग्राह्यो नवः स्मृतः ।
अयातयामस्तेनासौ नियोज्यश्च पुनः पुनः ॥

अमावास्यायां गृहीतो दर्भो मासपर्यन्तं ग्राह्य इत्यर्थः । पप्र. १०१

कर्मविशेषे ताम्रपात्रे गव्यदोषाभावः

[4]स्नानतर्पणदानेषु ताम्रे गव्यं न दुष्यति ।
होमे कार्ये तथा दोहे पाके च परिवेषणे ॥

## चतुर्विंशतिमतम्

फलमूलादिभक्षणेऽपि कर्मार्हत्वम्

[5]इक्षूनपः फलं मूलं ताम्बूलं पय औषधम् ।
भक्षयित्वाऽपि कर्तव्याः स्नानदानादिकाः क्रियाः ॥

(१) कृर. ७७. (२) संत. ९२९.

(३) पप्र. १०१ मदनरत्नप्रदीपे षट्त्रिंशन्मतकात्यायनस्मृत्योः इत्युक्तम्.

(४) आर. ५.

(५) अप. १।१९६ इक्षूनपः (इक्षूण्यम्बु) दानादिकाः क्रियाः (दानोदकक्रियाः); आर. १ इक्षूनपः (इक्षुरापः); आम. ४; इन्दु. ८; संदी. २ पूर्वार्धे (इक्षुरापः पयो मूलं फलं ताम्बूलमौषधम्।) कर्तव्याः (कुर्वीत) स्मृत्यर्थसारादिषु इत्युक्तम्.

वेदभेदेन शिखाबन्धदेशव्यवस्था

[1]'मध्ये तु बह्वृचाश्चैव निबध्नीयुः शिखां ततः।
माध्यंदिनाश्च ये विप्राः पार्श्वे दक्षिणतः
क्रमात्।
वामपार्श्वे निबध्नीयुर्ये विप्राः सामगायिनः॥

शिखाबन्धस्तु दक्षिणपार्श्वादौ माध्यंदिनादिभिः कार्यः, 'मध्ये तु बह्वृचाः ... सामगायिनः॥' इति चतुर्विंशतिमतवचनात्। शूद्रस्य तु 'अनियताः केशवेशाः' इति वसिष्ठोक्तेः शिखाविकल्पः। स च सदसच्छूद्रविषयत्वेन व्यवस्थित इति। सर्वेषां शिरसि यत्रकुत्रचित्केशसत्त्वे तत्रैव शिखाबन्धः। खल्वाटत्वेन सर्वथा केशाभावे विशेष उक्तः काठकगृह्ये– 'अथ चेत्प्रमादान्न शिखा स्यात्तदा कौशीं शिखां ब्रह्मग्रन्थियुतां दक्षिणकर्णे निदध्यात्' इति। संदी. ९–१०

ज्ञानस्य कर्मसंपादकत्वम्

[2]हतं ज्ञानं क्रियाहीनं हतास्त्वज्ञानिनः क्रियाः।
अपश्यन्नन्धको दग्धः पश्यन्नपि च पङ्गुकः॥

## संग्रहकारः (स्मृतिसंग्रहः)

रात्रौ प्रहरपर्यन्तं दिवाकृत्यानुष्ठानानुमतिः

[3]रात्रौ प्रहरपर्यन्तं दिवाकृत्यानि कारयेत्।
ब्रह्मयज्ञं च सौरं च वर्जयित्वा विशेषतः॥

(१) संदी. ९–१०.

(२) स्मृच. १६३; पमा. २९१ ज्ञानिनः (ज्ञानतः); प्रपा. ५८ हतास्त्वज्ञानिनः क्रियाः (हता चाज्ञानिनां क्रिया): ३९३; आन. ७१ अङ्गिराः; बाल. १।२६ पृ. १४९ पमावत्.

(३) मुक्ता. १४; आर. ६ कृत्यानि (कर्माणि); सस्मृ. २७.

सं. का. १६२

रात्रौ ब्रह्मयज्ञनिषेधस्तैत्तिरीयेतरपरः‡, 'तस्य द्वावनध्यायौ यदात्माऽशुचिर्यद्देशः' इति तत्सूत्रात्, तैत्तिरीयश्रुतौ रात्रावपि ब्रह्मयज्ञोक्तेश्च। नित्यश्राद्धमपि रात्रौ नेति वक्ष्यते। आर. ६

प्राणायामत्रयस्य कर्माङ्गत्वम्

[1]देवार्चने जपे होमे संध्ययोः श्राद्धकर्मणि।
यागे दाने व्रते स्नाने प्राणायामास्त्रयस्त्रयः॥

कर्मविशेषेषु ओंकारस्यर्षिदैवतच्छन्दःस्मरणस्य च वर्जनम्

[2]न च स्मरेदृषिं छन्दः श्राद्धे वैतानिके मखे।
ब्रह्मयज्ञे च वै तद्वत्तथोंकारं विवर्जयेत्॥

सर्वत्र मन्त्रादौ प्रणव उच्चार्यः, 'मन्त्रादौ प्रणवं कुर्यात्' इति वचनात्। अत्रापवादः संग्रहे– न च स्मरेदिति। इन्दु. १२

कच्छत्रयम्, तस्य कर्माङ्गत्वम्, वर्जनीयं वस्त्रं च

[3]वामे पृष्ठे तथा नाभौ कक्षात्रयमुदाहृतम्।
एभिः कच्छैः परीधत्ते यो विप्रः स शुचिः
स्मृतः॥

‡ अत्र 'तैत्तिरीयेतरपरः' इति पाठे 'इति तत्सूत्रात्' इत्यग्रिमहेतुघटकतच्छब्देन तैत्तिरीयेतरपरामर्शे हेतोर्विरुद्धत्वम्, तैत्तिरीयपरामर्शे तु स्वरूपासिद्धिः, 'तस्य द्वावनध्यायौ' इत्यादिवाक्यस्याऽऽश्वलायनसूत्रीयत्वात्। तस्यपदोत्तरम् 'वा एतस्य यज्ञस्य' इत्यधिकांशसहितं तैत्तिरीयारण्यकवाक्यमस्ति, बौधायनापस्तम्बसत्याषाढसूत्रेषु तु नोपलभ्यते। तस्मात् 'आश्वलायनतैत्तिरीयेतरपरः' इति मूलपाठः, तत्र चाग्रिमहेत्वोर्यथासंख्यमन्वय इति कल्प्यते।

(१) आर. ३.

(२) आर. ४ ऋषिं छन्दः (ऋषिच्छन्दः) उत्तरार्धे (ब्रह्मयज्ञे च वै तर्हि यज्ञतर्पणकर्मणि॥); इन्दु. १२; संदी. १७ कृष्णभट्टीये.

(३) दप्र. ८२ (=); संदी. ७ कक्षा (कच्छ) उत्तरार्धे (त्रिभिः कच्छैः परिज्ञेयो विप्रो यः स शुचिर्भवेत्॥).

'वामे ...' इति शिष्टपरिगृहीतवाक्यात्तु त्रितयमपि कक्षापदवाच्यमिति प्रतीयते । पप्र. ८२–८३

[1]आदौ कच्छस्तथा नीवी नाभिमध्ये च वाससी ।
नीवी दक्षिणतः स्थाप्या एतत्त्रिकच्छलक्षणम् ॥

कटिवेष्टयं तु यद्वस्त्रं पुरीषं येन वा कृतम् ।
मूत्रमैथुनकृद्वस्त्रं धर्मकार्ये विवर्जयेत् ॥

पत्न्युपवेशनदेशः

[2]व्रतबन्धे विवाहे च चतुर्थ्यां सहभोजने ।
व्रते दाने मखे श्राद्धे पत्नी तिष्ठति दक्षिणे ॥

परशाखीयानुष्ठानानुमतिः

[3]यन्नाऽऽम्नातं स्वशाखायां गृह्ये वा गृह्यशेषतः ।
तद्ग्राह्यं मनवः प्राहुः पारक्यमविरोधि यत् ॥
[4]यान्यत्र कालभेदेन कर्माणि मुनयो जगुः ।
स्वगृह्याद्यनुसारेण विकल्पस्तेषु युज्यते ॥
[5]न गृह्यादिस्मृतिर्येषां श्राद्धादावुपलभ्यते ।
कर्तुमर्हन्ति ते कृत्स्नं यस्य कस्य मुनेरिति ॥
[6]सर्वेषामपि पक्षाणां स्वगृह्योक्तं विधीयते ।
स्वगृह्योक्तस्य चाभावे ग्रहणं स्वेच्छया भवेत् ॥

(१) वैकल्पिकेषु स्वगृह्याद्युक्तपक्षाभावे यस्य कस्यचिदेकस्य मुनेः पक्षं स्वेच्छानुगुणं कुर्यादित्यर्थः ।

स्मृच. ४८४

(२) [illegible] कार्यम्, उतान्यस्मृत्युक्तम्? इति संदेहः ॥ तत्रैक आहुः– परोक्तबाधातिकिञ्चिदिच्छयेति । तथा च

(१) संदी. ७.

(२) संग. ६४ चतुर्थ्यां सह ( चतुर्थी सह ) व्रते दाने ( व्रतदाने ); संदी. ५३.

(३) बाल. १।८९ पृ. २५३.

(४) स्मृच. ४८४.

(५) स्मृच. ४८४; श्राका. ५१२ कृत्स्नं यस्य कस्य मुनेरिति ( सर्वे पारस्करमुनीरितम् ); संग. ७४ श्राकावत्.

(६) श्राका. ५१२ ; संग. ७४.

संग्रहकारः– 'सर्वेषामपि ... स्वेच्छया भवेत् ॥' इति । तदयुक्तम्, सूत्रपरिशिष्टयोरेककर्तृकत्वात्, तस्यान्यशाखिविषयत्वात्, पारस्करमतस्याऽऽश्रयणीयत्वाच्च । तथा च स्मृतिसंग्रहः– 'न गृह्यादि ... मुनीरितम् ॥' इति । परेषां करोतीति हि व्युत्पत्तेः । श्राका. ५१२–५१३

परशाखीयानुष्ठाननिषेधः

[1]यः स्वशाखोक्तमुत्सृज्य परशाखोक्तमाचरेत् ।
अप्रमाणमृषिं कृत्वा सोऽन्धे तमसि मज्जति ॥

स्रुक्स्रुवयोराकृतिर्मानं च

[2]आयामं पञ्चधा कृत्वा द्विभागं पात्रमुच्यते ।
त्रिभागं दण्डमित्याहुरेतदायामलक्षणम् ॥
पात्रायामार्धतः पात्रविस्तारश्च तदर्धतः ।
ग्रीवाविस्तारस्तस्यार्धाद्बिलस्योच्छ्राय इष्यते ।
विस्ताराद्द्विगुणं पात्रं ग्रीवाविस्तारमर्धतः ॥
[3]स्रुवस्रुचोः प्रमाणं च लक्षणं सम्यगुच्यते ।
अरत्निमात्रमायामस्तयोर्मध्ये स्रुवस्य तु ॥
बिलमङ्गुलमानेन अन्तर्द्व्यङ्गुलमानतः ।
मूले द्व्यङ्गुलिमात्रे तु द्वे लेखे विलिखेत्ततः ॥
दर्व्या विशेषतश्चैव दण्डस्त्वष्टाङ्गुलो भवेत् ।
चतुरङ्गुलमानेन ग्रीवां कुर्यात्ततः परम् ॥
पञ्चाङ्गुलप्रमाणेन बिलं कुर्यात्तु सर्वतः ।
बिलाच्च पूर्वभागे तु पुष्करं [illegible]ङ्गुलं भवेत् ॥
सर्वतो बिलमास्थाय कुर्यात्त्र्यङ्गुलमानतः ।
खातिरन्त्रं पुच्छभागे कारयेद्यवमानतः ॥
काकपक्षाकृतिं चाग्रं कुर्याद्धंसमुखाकृतिम् ।
ग्रीवाविस्तारकं कुर्यात्सार्धद्व्यङ्गुलमानतः ॥
ग्रीवोपरि समन्ताच्च दृढरेखास्तु कारयेत् ।
दण्डस्थौल्यं कुम्भयोश्च कुर्यादङ्गुष्ठमानतः ॥
[4]आयामं पञ्चधा कृत्वा त्रिभागं दण्डमेव च ।
द्विभागं पुष्करं प्रोक्तं दर्व्या लक्षणमुत्तमम् ॥

(१) स्मृच. ५०.

(२) प्रपा. ४० ; प्रर. ५१ यामार्धतः ( यामोऽर्धतः ).

(३) प्रपा. ४०. (४) संर. २३.

इयं च दर्वी पूर्णाहुत्यादिहोमे होमानुसारेण कल्पनीया। यत्र द्विस्त्रिर्गृहीताज्यहोमः प्रायश्चित्तादौ तत्राप्येवम्। यत्रैवमाज्यहोमो नास्ति तत्र कर्षप्रमाणमाज्यं यावति बिले संमाति तावत्प्रमाणबिला दर्वी ग्राह्या।

संर. २३

समित्पवित्रवेदेध्मपरिधीनां मानानि

[1]समित्पवित्रं वेदश्च त्रयः प्रादेशसंमिताः।
इध्मस्तु द्विगुणः कार्यस्त्रिगुणः परिधिः स्मृतः।
स्मार्ते प्रादेश इध्मो वा द्विगुणः परिधिः स्मृतः॥

प्रादेशः प्रादेशप्रमाणः। द्विगुणो द्विप्रादेशः परिधिरित्यर्थः। परिधिरिति जातावेकवचनम्। एतस्माद्वचनाद् गृह्य इध्मस्य पाक्षिकं प्रादेशत्वम्, परिधीनां पाक्षिकं द्विप्रादेशत्वं च ज्ञेयम्। अयं पक्षोऽसंभवे ज्ञेयः।

संर. ६५

पवित्रासनादिषु दर्भसंख्यानियमः

[2]दर्भाणां व्ययमाचष्टे देवकर्मणि सर्वदा।
हस्तयोरुभयोर्द्वौ द्वावासने च तथैव च॥

अग्नेश्चतसृभिर्दिक्षु स्तरणे षोडश स्मृताः।
द्वौ चाष्टौ च तथा बर्हिःप्रस्तरार्थे तथैव च॥

इध्मसंनहने कुर्याच्चतुर्दर्भैः क्रमात्ततः।
समे द्वे स्थौल्यदैर्घ्याभ्यां पवित्रे च तथा भवेत्॥

प्रणीतासन आच्छादे त्रयस्त्रय उदीरिताः।
अष्टाविंशतिदर्भैस्तु ब्रह्मार्थब्राह्मणाय च॥

पर्यग्निकरणे चैव कुर्यात्पञ्च शलाकिकाः।
चतुर्भिश्च चतुर्भिश्च स्रुक्स्रुवौ प्रतितापयेत्॥

अत्र बर्हिर्दर्भसंख्या इध्मसंनहनदर्भसंख्या च आश्वलायनग्रन्थविरोधित्वाच्छाखान्तरविषया। आश्वलायनकारिकाकारेण तु बर्हिरर्थे मुष्टिप्रमाणा दर्भा उक्ताः। इध्मसंनहनरज्जुकरणे त्वाश्वलायनाचार्येण 'रज्जुर्द्वादशभिर्दर्भैः' इत्यादिना षट्त्रिंशद्दर्भा उक्ताः। तस्मात्तथैव कर्तव्येति।

प्रपा. ३७

(१) संर. ६५. (२) प्रपा. ३७.

प्रोक्षणावोक्षणाभ्युक्षणपरिभाषाः

[1]उत्तानेन तु हस्तेन कर्तव्यं प्रोक्षणं भवेत्।
अवाचीनेन हस्तेन कर्तव्यं स्यादवोक्षणम्।
मुष्टीकरोति यत्तोयमभ्युक्षणमिति त्रिधा॥

## हलायुधः

कुशमृत्तिकाहरणकालः

[2]चतुरो वार्षिकान्मासान्नाऽऽहरेत्कुशमृत्तिकाः।
असंभवे त्वाददीत सद्यो यस्योपयोजनम्॥

## वराहः

मङ्गलाष्टकद्वयम्

[3]पूर्णकुम्भं ध्वजं छत्रं शङ्खं दीपं च चामरम्।
अङ्कुशं शक्तिरित्येवमष्टमङ्गलमीरितम्॥

हरिद्रा लवणं चैव मरीचं च गुडं तथा।
जीरकं फलपुष्पं च मङ्गलाष्टकमुच्यते॥

## स्मृत्यर्थसारः

प्राची उदीची ईशानी च दिक्, आसीनत्वम्, दक्षिणाङ्गम्, यज्ञोपवीतम्, प्रदक्षिणत्वम्, आत्मशुद्धिश्चेत्येतेषां कर्माङ्गत्वम्, कर्मापचारे समाधानप्रकारः

[4]प्राची दिशामनुक्तौ स्यादुदीचीशानदिक् तथा।
तिष्ठत्त्वप्रह्वतानुक्तावासीनत्वं च कर्मसु॥

[5]कर्त्रङ्गाणामनुक्तौ तु दक्षिणाङ्गं भवेत्तदा।
कुत्सिते वामहस्तः स्याद्दक्षिणः स्यादकुत्सिते॥

(१) प्रपा. ४२; संर. ५६ द्वितीयार्धमात्रम्: ६८ प्रथमार्धमात्रम्: ६९ करोति यत्तोय (कृत्वा तु तत्तोय) त्रिधा (स्मृतम्) तृतीयार्धमात्रम्.

(२) पप्र. १७१.

(३) विसौ. ५९.

(४) स्मृसार. १; मपा. १५; मुक्ता. १५.

(५) स्मृसार. १; मपा. १५ तदा (तथा); मुक्ता. १४ उत्त., मनुः; आर. ६ उत्त., मनुः.

[1]यज्ञोपवीतिना कार्यं सर्वं कर्म प्रदक्षिणम् ।
मनःप्रसादात्सत्योक्त्या तपसा ज्ञानकर्मणा ॥

[2]आचान्त्या चाऽऽत्मनः शुद्धिं कृत्वा कर्म समाचरेत् ।
कर्मायथाकृतं ज्ञात्वा तावदेव पुनश्चरेत् ॥

[3]प्रधानस्याक्रियायां तु साङ्गं तत्क्रियते पुनः ।
तदङ्गाकरणे कुर्यात्प्रायश्चित्तं न कर्म तत् ॥

सति सामर्थ्येऽनुकल्पकृतस्य निष्फलत्वम्

[4]प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते ।
स नाऽऽप्नोति फलं तस्य परत्रेति श्रुतिः स्मृतिः ॥

स्वशास्त्रीयमात्रानुष्ठानेऽपि कृतार्थता

[5]बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म प्रचोदितम् ।
तस्य तावति शास्त्रार्थे कृते सर्वं कृतं भवेत् ॥

श्रौतेषु परशास्त्रीयानुष्ठानानुमतिः

[6]श्रौतेषु सर्वशाखोक्तं सर्वस्यैव यथोचितम् ।
स्मार्तं साधारणं तेषु ग्राह्यं श्रौतेषु कर्मसु ॥

(१) स्मृसार. १ ज्ञान (स्नान) ; मपा. १४ प्रसादात् (प्रमोदात्) ; मुक्ता. १४ पू., मनुः : १५ ज्ञान (स्नान) उत्त-, स्मृतिचन्द्रिकायाम्.

(२) स्मृसार. १ ; मपा. १५-१६ आचान्त्या चाऽऽत्मनः शुद्धिं (आचान्तोऽप्याचमेच्छुद्धिं) ; मुक्ता. १५ आचान्त्या (आचम्य) पू., स्मृतिचन्द्रिकायाम्.

(३) स्मृसार. १ ; मपा. १५ ; मुक्ता. १५ आश्वलायनः ; सस्मृ. २६ चन्द्रिकायाम्.

(४) स्मृसार. १ कल्पस्य (कल्पे तु) ; मपा. १५ ; मुक्ता. १५ श्रुतिः स्मृतिः (श्रुतिस्मृती) : ३६२.

(५) स्मृसार. २ ; मपा. १५ कर्म प्रचो (यत्कर्म चो).

(६) स्मृसार. २ ; मपा. १५ पूर्वार्धे (श्रौतेषु सर्वशास्त्रोक्तं सर्वस्यैव यथोदितम् ।).

अहतवस्त्रं मुख्यमुत्तरीयम्, तदभावे तृतीयं यज्ञोपवीतम्

[1]अहतं यन्त्रनिर्मुक्तमुक्तं वासः स्वयंभुवा ।
तृतीयमुत्तरीयं वा वस्त्राभावे तदिष्यते ॥

यज्ञोपवीत-प्राचीनावीत-निवीतलक्षणानि

ब्रह्मसूत्रेऽपसव्येऽसे स्थिते यज्ञोपवीतिता ।
प्राचीनावीतिता सव्ये कण्ठस्थे तु निवीतिता ॥

वस्त्रयज्ञोपवीतयोः कर्माङ्गत्वम्, यज्ञोपवीतप्रकृतिद्रव्याणि च

[2]वस्त्रं यज्ञोपवीतार्थे त्रिवृत्सूत्रं च कर्मसु ।
कुशमुञ्जवालतन्तुरज्जुर्वा सर्वजातिषु ॥

कर्मभेदेनाग्निभेदः

[3]गार्ह्यमौपासने कुर्यात्सर्वाधानी तु लौकिके ।
स्मार्तं च लौकिके कार्यं श्रौतं वैतानिकाग्निषु ॥

हस्तस्थिततीर्थानि तद्विनियोगश्च

[4]कनिष्ठादेशिन्यङ्गुष्ठमूलेषु कायपित्र्यब्राह्मतीर्थानि । कराग्रे दैवं तीर्थं करमध्ये सौम्यं तीर्थमग्नितीर्थं च । निर्वपणसंस्रवणलाजहोमान् कायेन तीर्थेन कुर्यात् । अर्चनबलिप्रक्षेपपर्युक्षणमार्जनभोजननित्यहोमान्दैवेन । पैतृकं पित्र्येण । कमण्डलुस्पर्शनं दधिप्राशनं नवान्नप्राशनं सुराग्रहणं च सौम्येन कुर्यात् । आग्नेयेन प्रतिग्रहं कुर्यात् ॥

(१) स्मृसार. ५.

(२) स्मृसार. ५ ; मुक्ता. ९२ पू. ; आन. १५६ पू.

(३) स्मृसार. १४ ; शाम. ४ कार्यं (कुर्यात्).

(४) स्मृसार. २० लाजहोमान् (लाजहोमादिनित्यहोमान्) तीर्थेन कुर्यात् + (दैविकं च) दैवेन + (दैविकं च) सुराग्रहणं + (दैविकं) ; मुक्ता. २२५ मूलेषु (मूलतलेषु) संस्रवण (संश्रपण) (तीर्थेन ०) कमण्डलुस्पर्शनं (कमण्डलुना पानं) सुराग्रहणं (सग्रहणं) सौम्येन कुर्यात् (सौम्येन) प्रतिग्रहं (प्रतिग्रहणं).

आचमनस्य द्विराचमनस्य च निमित्तानि

[1]उच्छिष्टस्पर्शने पादावसेचने शिखामोक्षे यज्ञोपवीतापगमे चोदकमुत्तीर्यावतीर्य च संदेहेषु च सर्वेष्वाचामेत् । आस्यगतश्मश्रुस्पर्शने च लोमकोष्ठस्पर्शने च दन्तसक्तस्य जिह्वया स्पर्शने च रथ्याप्रसर्पणे च स्नेहपश्चनखस्पर्शने च रोदने च विण्मूत्ररेतःशौचान्ते च स्नात्वा पीत्वा च लीढे च निष्ठीव्य सुप्त्वाऽधोवायौ वासो विपरिधाय चाभ्यङ्गे कृते च हविर्भक्षणे च कृते द्विराचामेत् ॥

आद्यन्तयोर्द्विराचमननिमित्तानि

भोजने हवने दान उपहारे प्रतिग्रहे ।
संध्यात्रयाम्बुपानेषु पूर्वं पश्चाद्द्विराचमेत् ॥

आचमननिमित्तानि

पित्र्यमन्त्रानुद्रवणे चाऽऽत्मालम्भे च प्रोक्षणे ।
अधोवायुसमुत्सर्गे आक्रन्दे क्रोधने क्षुते ॥
मार्जारमूषिकास्पर्शे प्रहासे ष्ठीवनेऽनृते ॥
अन्त्यसंभाषणे दर्शने च कर्म कुर्वन्नाचामेत् ।
श्वकाकादिदर्शने चैवम् ॥

श्रवणस्पर्शनादिनिमित्तानि

अकर्म कुर्वन् पूर्वेषु दक्षिणं श्रवणं स्पृशेत् ॥

अनुष्ठानेऽग्निगोविप्रस्त्रीप्रच्युतकेशनखस्पर्शने नीवीस्रंसने चापः स्पृशेत् । आर्द्रतृणं गोमयं भूमिं वौषधीर्वा स्पृशेत् । कर्णं वा स्पृशेत् । शिङ्घाणिकारक्तपूयस्वेदस्पर्शने तु प्रक्षाल्याबादि स्पृशेत् । आपत्सु नैमित्तिककर्माङ्गाचमनस्थाने श्रवणस्पर्शनं स्यान्मनःशुद्ध्यर्थम् ॥

श्रवणस्पर्शस्य शुद्धिनिमित्तत्वे कारणम्

[2]अग्निस्तीर्थानि वेदाश्च वरुणार्केन्दुवायवः ।
विप्रस्य दक्षिणे कर्णे नित्यं तिष्ठन्ति देवताः ॥

(१) स्मृसार. २०-२१.

(२) स्मृसार. २१ ; मुक्ता. २३६ देवताः (पूजिताः).

अन्ते आचमननिमित्तानि

[1]जपहोमप्रदानेषु पितृपिण्डोदकाग्निषु ।
कृतेष्वाचमनं कार्यं पितृकार्येषु सर्वथा ॥

पादशौचादीन्याचमनाङ्गानि

[2]पादशौचं शिखाकच्छबन्धं धौतोपवीतकम् ।
विनाऽऽचान्तोऽशुचिर्नित्यं बद्धः कण्ठे शिरस्यपि ॥

[3]पवित्रकर आचामेच्छुचिः कर्मार्थमादरात् ।
कुशमात्रकरो वाऽपि दर्भमात्रकरोऽथ वा ॥

आचमनमन्त्राः, अमन्त्रकमाचमनम्

[4]तदोङ्कारेणाऽऽचमनं यद्वा व्याहृतिभिर्भवेत् ।
सावित्र्या वाऽपि कर्तव्यं यद्वा कार्यममन्त्रकम् ॥

आचमनोत्तरं पवित्रत्यागात्यागौ

[5]तं कुशं विधिवल्लूनं न त्यजेदन्यथा त्यजेत् ।
अन्ये दर्भास्तु संत्याज्यास्त्यजेद्दूर्वाङ्कुरौ न तु ॥

आचमनादिशेषोदकेन कर्मकरणनिषेधः आपत्कल्पश्च

[6]न चाऽऽचमनशेषेण नाग्न्युदकशेषेण कर्माणि कुर्यात् । यदि कुर्याद्भूमौ जलं स्रावयित्वा तत्रैवाम्बुपात्रं स्थापयित्वोद्धृत्य कर्माणि कुर्यात् ॥

(१) स्मृसार. २१.

(२) स्मृसार. २२.

(३) स्मृसार. २२ ; मुक्ता. २३१ कर्मार्थमादरात् (कर्मादराद्द्विजः) ऽथ वा (ऽपि वा).

(४) स्मृसार. २२ ; मुक्ता. २२७.

(५) स्मृसार. २२ तं (तत्) ; मुक्ता. २३१ दूर्वाङ्कुरौ न तु (दूर्वां पुरैव तत्).

(६) स्मृसार. २२-२३ न चा (नात्रा) ; इन्दु. ११ न चाऽऽचमन (न पादप्रक्षालनशेषेण न चाऽऽचमन) तत्रैवाम्बु (तत्राम्बु) त्वोद्धृत्य कर्माणि (त्वोद्धृत्य).

उच्छिष्टतादोषापवादः

[1]मधुपर्के च सोमेषु प्राणाहुतिषु चाप्सु च ।
आस्यहोमेषु सर्वेषु नोच्छिष्टो भवति द्विजः ॥

जल– स्थल– तदुभयाचमनैः शुद्धिव्यवस्था

[2]जलाचान्तो जले शुद्धो बहिराचमनो बहिः ।
बहिरम्भःस्थ आचान्तः सर्वत्र शुचिरेव तु ॥

[3]जलस्थो जलकार्येषु स्थलस्थः स्थलकर्मसु ।
उभयोरुभयस्थस्तु स्वाचान्तः शुद्धिमाप्नुयात् ॥

शुष्कार्द्रवस्त्रव्यवस्था, अन्तर्जानुता च

[4]न जले शुष्कवस्त्रेण न स्थले चाऽऽर्द्रवाससा ।
आचामादिक्रियां कुर्याद्बहिर्जानु न कुत्रचित् ॥

स्नानस्य अधिकारिविशेषणत्वम्

[5]स्नानमूलाः क्रियाः सर्वाः श्रुतिस्मृत्युदिता नृणाम् ।
अस्नातस्तु पुमान्नार्हो जपहोमादिकर्मसु ॥

शूद्राणां नमस्कारमन्त्रः

[6]नमस्कारेण मन्त्रेण शूद्राणां तु क्रिया स्मृता ॥

वस्त्रविचारः

न जले शुष्कवस्त्रेण स्थले चैवाऽऽर्द्रवाससा ।
तर्पणाचमनं जाप्यं मार्जनादिकमाचरेत् ॥

[7]नोत्तरीयमधः कुर्यान्नोपर्यधःस्थमम्बरम् ।
न सर्वकृष्णं रक्तं वा परिदध्यात्कदाचन ॥

कुतुपं शाणमजिनं योगपट्टोत्तरीयके ।
यज्ञोपवीतमन्यद्वा द्वितीयं तु भवेदिह ॥

संध्यावन्दनमधिकारिविशेषणम्

[1]संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ।
यत्किंचित् कुरुते कर्म न तस्य फलमश्नुते ॥

तण्डुलरूपेण स्वरूपेण उभयरूपेण च होतव्यानि द्रव्याणि

[2]शालिश्यामाकनीवारा व्रीहिगोधूमयावकाः ।
एतेषां तण्डुला होम्या यावनालप्रियङ्गवः ॥

[3]प्रियङ्गवश्च गोधूमाः श्यामाका व्रीहयो यवाः ।
स्वरूपेणापि होम्याः स्युः स्वरूपेणैव वै तिलाः ॥

भिक्षादिरूपं धान्यमानम्

[4]ग्रासमात्रा भवेद्भिक्षा अग्रं ग्रासचतुष्टयम् ।
अग्रं चतुर्गुणीकृत्य हन्तकारः स उच्यते ॥
भिक्षा पुष्कलमग्रं वा पूर्वं पूर्वं चतुर्गुणम् ।
नृभोजनं तद्द्विगुणं शरावः पात्रमेव च ॥

समिधां वृक्षाः गुणाः दोषाश्च

[5]पलाशखदिराश्वत्थशम्युदुम्बरजा समित् ।
अपामार्गार्कदूर्वाश्च कुशाश्चेत्यपरे विदुः ॥

---

(१) स्मृसार. २३ ; मुक्ता. २३९ सोमेषु (सोमे च).

(२) स्मृसार. २४ ; मुक्ता. २२८ शुद्धो (शुध्येद्) रम्भःस्थ आचान्तः (रन्तश्च आचामेत्) तु (सः).

(३) स्मृसार. २४ ; मुक्ता. २२८ उत्तरार्धे (उभयेषू-भयस्थस्त्वाचान्तः शुचितामियात् ॥).

(४) स्मृसार. २४ स्थले (शुष्के) आचामा (आचमा) ; मुक्ता. २२९ द्बहिर्जानु (दधोजानु).

(५) स्मृसार. २५ ; मुक्ता. २४५–२४६.

(६) स्मृसार. २६.

(७) स्मृसार. ३०.

(१) स्मृसार. ३३.

(२) स्मृसार. ३५ ; प्रपा. ३९२ नीवारा व्रीहि (नीवारव्रीहि) होम्या (हौम्या) नालप्रि (नालाः प्रि) चन्द्रिकायाम् ; मुक्ता. ३६१ शालिश्या (शालिः श्या) नालप्रियङ्गवः (नालाः प्रियङ्गवाः).

(३) स्मृसार. ३५ ; प्रपा. ३९२ (=) (नीवाराः शालयश्चापि गोधूमा व्रीहयो यवाः । स्वरूपैणैव होम्याः स्युः स्वरूपेण च वै तिलाः ॥) ; मुक्ता. ३६१ पूर्वार्धे (नीवाराः शालयश्चैव गोधूमा व्रीहयो यवाः ।) रूपेणापि (रूपेणैव).

(४) स्मृसार. ३५.

(५) स्मृसार. ३६ ; प्रपा. ३९२ ; प्रर. १२२ पलाश (पालाश) ; गभा. ८ ; पप्र. १०४ ; मुक्ता. ३५९ प्ररवत् ; आन. ६८ खदिरा (खादिरा).

[1]सत्वचः समिधः कार्या ऋज्व्यः श्लक्ष्णाः समास्तथा ।
शस्ता दशाङ्गुलास्तास्तु द्वादशाङ्गुलिकास्तथा ॥

[2]आर्द्रपक्वाः समच्छेदास्तर्जन्यङ्गुलिवर्तुलाः ।
अपाटिता अद्विशाखाः कृमिदोषविवर्जिताः ॥

[3]दग्धाः कृशास्तथा स्थूला ह्रस्वा दीर्घास्तु वर्जयेत् ॥

[4]ईदृशीर्होमयेत्प्राज्ञः प्राप्नोति विपुलां श्रियम् ॥

समित्पवित्रवेदेध्मपरिधीनां मानानि

[5]समित्पवित्रं वेदश्च त्रयः प्रादेशसंमिताः ।
इध्मस्तु द्विगुणः कार्यस्त्रिगुणः परिधिः स्मृतः ।
स्मार्ते प्रादेश इध्मो वा द्विगुणः परिधिः स्मृतः ॥

दशविधा दर्भाः, तदाहरणकालः, अयातयामता, पुनःपुनर्विनियोगश्च

[1]कुशाः काशा यवा दूर्वा उशीराश्चैव कन्दुराः ।
गोधूमा व्रीहयो मुञ्जा दश दर्भाः सबल्वजाः ॥

[2]नभोमासस्य दर्शे तु शुचिर्दर्भान् समाहरेत् ।
अयातयामास्ते दर्भा नियोज्याः स्युः पुनः पुनः ॥

दर्भग्रहणविधिः

कुशदर्भोत्पाटने मन्त्रः—
विरिञ्चिना सहोत्पन्न परमेष्ठिनिसर्गज ।
नुद पापानि सर्वाणि दर्भ स्वस्तिकरो मम ॥
एवं मन्त्रं समुच्चार्य ततः पूर्वोत्तरामुखः ।
हुंफट्कारेण मन्त्रेण सकृच्छित्त्वा समुद्धरेत् ॥

पित्र्यदैवकर्मसु दर्भगुणभेदः, पवित्रदर्भगुणाः

अच्छिन्नाग्रा अशुष्काग्राः पित्र्ये तु हरिताः शुभाः ।
अमूला देवकार्येषु प्रयोज्याश्च जपादिषु ॥

[3]समपत्राः कुशाः शस्ता दैवे पित्र्ये च कर्मणि ।
अनन्तौ तरुणौ साग्रौ प्रादेशौ तु पवित्रके ॥

वर्णभेदेन कर्मभेदेन च पवित्रदर्भसंख्याभेदः, सर्ववर्णसाधारणपवित्रं च

[4]चतुर्भिर्दर्भपिञ्जूलैर्ब्राह्मणस्य पवित्रकम् ।
एकैकं न्यूनमुद्दिष्टं वर्णे वर्णे यथाक्रमम् ॥

---

(१) स्मृसार. ३६ ; प्रपा. ३७ : ३९२ ज्व्यः श्ल (जुश्ल) ङ्गुलि (ङ्गुल) ; प्रर. १२२ ज्व्यः श्ल (जुश्ल) ; गभा. ८ ज्व्यः श्ल (जुश्ल) कास्तथा (कास्तु वा) ; पप्र. १०४ समा (स्मृता) ङ्गुलि (ङ्गुल) ; मुक्ता. ३५९ ; आन. ६८ क्ष्णाः समास्तथा (क्ष्णास्तथैव च) ङ्गुलि (ङ्गुल).

(२) स्मृसार. ३६ ; प्रपा. ३७ आर्द्रपक्वाः समच्छेदास्त (आर्द्राः पक्वाः समाश्चैव त) : ३९२ आर्द्रपक्वाः समच्छेदास्त (आर्द्राः पक्वाः समाश्छेदास्त) टिता अ (टिताश्चा) ; प्रर. १२२ आर्द्रपक्वाः (आर्द्राः पक्वाः) टिता अ (टिताश्चा) ; गभा. ८ प्ररवत् ; पप्र. १०४ आर्द्र (अर्क) ; मुक्ता. ३५९ आर्द्रपक्वाः (आर्द्राः शुष्काः) ङ्गुलि (ङ्गुल) टिता अ (टिताश्चा) कृमि (क्रिमि) ; आन. ६८ पक्वाः (शुष्काः) शेषं मुक्तावत्.

(३) स्मृसार. ३६ ; पप्र. १०४.

(४) प्रपा. ३७ : ३९२ ईदृशीर्हो (ईदृग्भिर्हो) ; प्रर. १२२ ईदृशीर्हो (ईदृशा हो) ; गभा. ८ प्ररवत्.

(५) स्मृसार. ३६ ; प्रपा. ३८ वा द्विगुणः (वा त्रिगुणः) ; गभा. ८ तृतीयार्धं नास्ति ; पप्र. १०४–१०५ स्तु द्वि (स्तद्वि) ; मुक्ता. ३६० त्रयः (त्रयं) मिताः (मितम्) ; आन. ६८ वेदश्च त्रयः (वेदाश्च त्रिधा) मिताः (मितम्) ; संग. ३३ मुक्तावत्, तृतीयार्धं नास्ति, परिशिष्टान्तरे ; संदी. ३१ इध्मस्तु (इध्मश्च) शेषं सर्वं संगवत्.

(१) स्मृसार. ३६ ; मुक्ता. २३४ उशीराश्चैव कन्दुराः (गोधूमाश्चाथ कुन्दराः) गोधूमा (उशीरा) मुञ्जा (मौञ्जा) दर्भाः स (दर्भाश्च), स्मृतिसारे.

(२) स्मृसार. ३६.

(३) स्मृसार. ३६; मुक्ता. २३० अनन्तौ त (अन्ततस्त) प्रादेशौ (प्रादेशे). (४) स्मृसार. ३६.

[1]सर्वेषां वा भवेद्द्वाभ्यां पवित्रं ग्रन्थितं न वा ॥
[2]त्रिभिस्तु शान्तिके कार्यं पौष्टिके पञ्चभिस्तथा ।
चतुर्भिश्चाभिचारे स्यान्निष्कामैरिति केचन ॥

पवित्रस्याऽऽचमनाङ्गत्वम् उच्छिष्टतानुच्छिष्टते च

[3]सपवित्रः सदर्भो वा कर्माङ्गाचमनं चरेत् ।
नोच्छिष्टं तद्भवेत्तस्य भुक्तोच्छिष्टं तु वर्जयेत् ॥

त्याज्या दर्भाः

[4]यैः कृतः पिण्डनिर्वापः श्राद्धं वा पितृतर्पणम् ।
विण्मूत्रादिषु ये दर्भास्तेषां त्यागो विधीयते ।
नीवीमध्ये स्थितास्त्याज्या यज्ञभूमौ स्थिताः सदा ॥

आचमने वामहस्ते दर्भधारणनिषेधः तदपवादश्च, ब्रह्मग्रन्थिदूर्वाधारणनिषेधः

[5]वामहस्ते स्थिते दर्भे न पिबेद्दक्षिणेन तु ।
चषकादिनोपग्रहणे न दोषः पिबतो भवेत् ।
न ब्रह्मग्रन्थिनाऽऽचामेन्न दूर्वाभिः कदाचन ॥

सपवित्र–सदर्भकरसाध्यकर्माणि

[6]स्नाने दाने जपे होमे स्वाध्याये पितृतर्पणे ।
सपवित्रौ सदर्भौ वा करौ कुर्वीत नान्यथा ॥

कुशानां मुख्यत्वं कुशप्रतिनिधयश्च, छेदने विधिनिषेधौ

कुशाभावे तु काशाः स्युः काशाः कुशसमाः स्मृताः ।
काशाभावे ग्रहीतव्या अन्यदर्भा यथोचितम् ॥

नाऽऽदर्द्राल्लुनीयाद्रात्रौ तु लुनीयाद्वाऽपि संध्ययोः ।
दर्भाभावे स्वर्णरूप्यताम्रै रत्नैः क्रियाश्चरेत् ॥

देवादिभेदेन दानार्थकनिपातभेदः

[1]स्वाहाकारवषट्कारनमस्कारा दिवौकसाम् ।
स्वधाकारः पितॄणां तु हन्तकारो नृणां स्मृतः ॥

नीलीदोषापवादः

[2]कम्बले पट्टसूत्रे च नीलीदोषो न विद्यते ॥

परितोमानम्

[3]शाणं पाणितलं मानं कुडवं प्रस्थमाढकम् ।
द्रोणं च खारिका चेति पूर्ववच्च चतुर्गुणम् ॥

तिर्यङ्मानम्

[4]तिर्यग्यवोदराण्यष्टावूर्ध्वा वा व्रीहयस्त्रयः ।
प्रमाणमङ्गुलस्योक्तं वितस्तिर्द्वादशाङ्गुला ॥
वितस्तिर्द्विगुणाऽरत्निस्ततः किष्कुस्ततो धनुः ।
धनुःसहस्रे द्वे क्रोशश्चतुष्क्रोशं तु योजनम् ॥
[5]सार्धगव्यूतिदेशं च योजनं परिचक्षते ।
गव्यूतिं पञ्चसाहस्रधनुर्भिः प्रमिते विदुः ॥

## स्मृतिचन्द्रिकायाम्

संकल्पस्य कर्तव्यता

[6]संकल्पः कर्मणामादौ वैदिकानां विधीयते ।
इदं कर्म करिष्यामीत्युच्चार्य त्वाचरेत्ततः ॥

अनुपयोगकाले पवित्रविन्यासनियमः

[7]पवित्रं करशाखास्थं दक्षिणश्रवणे न्यसेत् ।
नान्यत्र निक्षिपेद्देहे निक्षिप्तं यदि तत्त्यजेत् ॥

## हेमाद्रौ

ऊर्ध्वपुण्ड्रस्य कर्माङ्गत्वम्

[8]जपे होमे तथा दाने स्वाध्याये पितृकर्मणि ।
तत्सर्वं नश्यति क्षिप्रमूर्ध्वपुण्ड्रं विना कृतम् ॥

---

(१) स्मृसार. ३७; मुक्ता. २३० ग्रन्थितं न वा (ग्रथितं तथा).

(२) स्मृसार. ३७; मुक्ता. २३० (त्रिभिर्दर्भैः शान्तिकर्म पञ्चभिः पौष्टिकं तथा । चतुर्भिश्चाभिचाराख्यं कुर्यात्तत्र पवित्रकम् ॥).

(३) स्मृसार. ३७; मुक्ता. २३२ सपवित्रः सदर्भो (सदर्भः सपवित्रो) तद्भवेत्तस्य (तत्सदर्भं च), स्मरणम्.

(४) स्मृसार. ३७.

(५) स्मृसार. ३७; मुक्ता. २३२ चषका (वस्त्रा) तृतीयार्धं नास्ति, स्मृतिरत्ने. (६) स्मृसार. ३७.

(१) स्मृसार. ४७. (२) स्मृसार. ७२.
(३) स्मृसार. ७४. (४) स्मृसार. ९१, १५४.
(५) स्मृसार. १५४. (६) मुक्ता. १५.
(७) मुक्ता. २३४ चन्द्रिकायाम्; आन. २० (=).
(८) मुक्ता. ३०८; आर. ५ श्राद्धहेमाद्रौ.

सुवर्णपवित्रप्रशंसा

[१]अन्यानि च पवित्राणि कुशदूर्वात्मकानि च ।
हेमात्मकपवित्रस्य ह्येकां नार्हन्ति वै कलाम् ॥

स्वसूत्रोल्लङ्घननिषेधः

[२]तस्मात्सर्वप्रयत्नेन स्वसूत्रं न विलङ्घयेत् ॥

## स्मृतिसारे

सग्रन्थिपवित्रेण कर्मविशेषकरणस्य निषेधः

[३]ग्रन्थीकृतपवित्रेण न भुञ्जीयान्न चाऽऽचमेत् ।
न पिबेद्यदि कुर्वीत तदा तच्छोणितं भवेत् ॥

## पारिजाते

पवित्रग्रन्थिबन्धने ज्ञानमुद्रा

[४]तर्जन्यङ्गुष्ठयोरग्रं योजितं तु यदा भवेत् ।
ज्ञानमुद्रा तया कुर्यात्कूर्चवद्ग्रन्थिबन्धनम् ॥

## महार्णवे

सर्वौषधिगणः

[५]मुरा मांसी वचा कुष्ठं शैलेयं रजनीद्वयम् ।
सटीचम्पकमुस्ताश्च सर्वौषधिगणः स्मृतः ॥

---

(१) प्रपा. ३५ स्व ह्ये (स्व ए); प्रर. ४९ ; प्रका. ३४ चतुर्थपादे (कलां नार्हन्ति षोडशीम्).

(२) आर. ६ शान्तिहेमाद्रौ.

(३) मुक्ता. २३१.

(४) मुक्ता. २३३ ; आन. २०.

(५) अप. १।२७७ मुरा (सुरा) तृतीयपादे (सती चण्यकमुस्तं च), स्मृतिः ; कुर. ७० (=) सटी (शठी) मुस्ताश्च (मुस्तं च) ; प्रपा. १९८ सटी (शता) शुद्धदीपिकायाम् ; दीक. १।२७८ (=) सटी (शुण्ठी) मुस्ताश्च (मुस्तं च) ; वीमि. १।२७८ (=) मुरा (सुरा) सटी (शाटी) मुस्ताश्च (मुस्तं च) ; संकौ. १२९ मुस्ताश्च (मुस्ता च) : १३१ सटी (सटा) मुस्ताश्च (मुस्ते च) ; प्रका. २१५ ; बाल. १।२९४ पृ. ६०५ मुस्ताश्च (मुस्ता च) : पृ. ६०७ निर्देशमात्रम् ; संव. १११ निर्देशमात्रम् ; कुभ. ९१६ मुस्ताश्च (मुस्ता च) गणः स्मृतः (गणो मतः).



(१) मुरा ताभोरा इति प्रसिद्धा । रजनीद्वयं हरिद्रादारुहरिद्रे । सटी कर्पूरविशेषः ।
अप. १।२७७

(२) मुरा भोटण्ठव इति प्रसिद्धा । मांसी जटामांसी । शैलेयं सन इति प्रसिद्धम् । रजनीद्वयं हरिद्रा दारुहरिद्रा । कुर. ७०

(३) सटी कचोरा इति । संकौ. १२९

(४) 'दैत्या गन्धकुटी मुरा' इत्यमरः । मुरा महाराष्ट्रभाषया 'मोहरी सटी' इति प्रसिद्धा । शैलेयं शिलागतम् । बाल. १।२९४ पृ. ६०५

## चिन्तामणौ

समिद्दोषाः, तेषां फलानि च

[१]समिधां लक्षणं वक्ष्ये संख्यां तासां तथैव च ।
विशीर्णा विदला ह्रस्वा वक्राः ससुषिरा कृशाः ॥
अतिस्थूलाश्चातिदीर्घाः समिधः कार्यनाशनाः ।
विशीर्णाऽऽयुःक्षयं कुर्याद्विदला पुत्रनाशनी ॥
सुषिरा व्याधिजननी कृशा च रिपुवर्धनी ।
दीर्घा विदेशगमनी स्थूला ह्यात्मविनाशनी ॥

समिद्गुणाः

अकृशा सुसमाऽस्थूला सार्द्रा च सुपलाशिनी ।
प्रादेशान्नाधिका न्यूनाः समिधः सर्वकर्मणि ॥

वृक्षभेदेन समित्फलानि

अर्को नाशयति व्याधिं पलाशः सर्वकामदः ।
खादिरश्चार्थलाभाय अपामार्गः सुदर्शनः ॥
अश्वत्थः सर्वकामाय सौभाग्याय ह्युदुम्बरः ।
शमी शमयते पापं दूर्वाऽऽयुष्यविवर्धनी ।
कुशान् धर्मार्थकामानां रक्षणं रक्षसां विदुः ॥

---

(१) विपा. ५५१ ; संग. १२५-१२६ श्चातिदीर्घाः (तिदीर्घाश्च) नाशनी (नाशिनी) रिपुवर्धनी (रिपुवर्धिनी) नाशयति (नाशयते) लाभाय (लाभश्च) कामाय (कर्मार्थः) ग्याय ह्युदुम्बरः (ग्येदुम्बरस्तथा) युष्य (युःसु) कुशान् (कुशा).

नीलीरागदोषापवादः

[1]कम्बले पट्टवस्त्रे च नीलीरागो न दुष्यति ।
स्त्रीणां क्रीडार्थसंभोगे शयनीये न दुष्यति ॥

नीलीरक्तमपि पट्टादिवस्त्रं न निषिद्धम्, 'कम्बले...' इति आचारचिन्तामणावुक्तेः । संदी. ६

## स्मृतिरत्नावल्याम्

सप्तवाताहतवस्त्रस्य शुष्कतुल्यत्वम्

[2]सप्तवाताहतं वस्त्रं शुष्कवत्प्रतिपादितम् ।
आर्द्रं वाऽपि द्विजातीनामाहतं गौतमादिभिः ॥

आर्द्रवस्त्रधारणे नग्नत्वविधानात् तत्परिहारो रत्नावल्यामुक्तः— सप्तवातेति । आन. ३१

दिवाकृत्यानां रात्रौ प्रहरपर्यन्तं गौणकालः

[3]दिवोदितानि कर्माणि प्रमादादकृतानि वै ।
यामिन्याः प्रहरं यावत्तावत्सर्वाणि कारयेत् ॥

## स्मृतिरत्ने

ज्ञानमुद्रालक्षणं पवित्रग्रन्थिकरणं च

[4]अङ्गुष्ठं घर्षयेदूर्ध्वं तर्जन्यां तु पुनः पुनः ।
ज्ञानमुद्रामधः कृत्वा कूर्चवद्ग्रन्थिरिष्यते ॥

## कपिलपञ्चरात्रे

ज्येष्ठ–मध्यम–कनिष्ठान्यङ्गुलिमानानि

[5]अष्टभिस्तैर्भवेज्ज्येष्ठं मध्यमं सप्तभिर्यवैः ।
कन्यसं षड्भिरुद्दिष्टमङ्गुलं मुनिसत्तमैः ॥

यजमानासंनिधौ होमे तु साधारणाङ्गुलिमानम्, यथा कपिलपञ्चरात्रम्— अष्टभिरिति । तैः प्रक्रम्यमानयवैः । कन्यसं कनिष्ठम् । मानं तु पार्श्वेन, 'षड्यवाः पार्श्वसंमिताः' इति कात्यायनवचनात् । संत. ८५९

(१) संदी. ६ आचारचिन्तामणौ.

(२) मुक्ता. २५२ ; आन. ३१ रत्नावल्याम्.

(३) चका. ९२२ (=) ; मपा. १८४ (=) ; मुक्ता. १४ प्रहरं (प्रहरो) सर्वाणि (कर्माणि) ; सस्मृ. २७ रत्नावल्याम्.

(४) प्रपा. ३५ (=) ; मुक्ता. २३३ जंन्यां (जंन्या) रिष्यते (बन्धनम्) .

(५) संत. ८५९ कपिलपञ्चरात्रम्.

## मेरुतन्त्रे

पूर्णपात्रलक्षणम्

[1]द्वात्रिंशत्पलमानेन निर्मितं ताम्रपात्रकम् ।
तण्डुलैस्तत्समापूर्य सहिरण्यं सदक्षिणम् ।
दद्याद्विप्राय तत्तुष्ट्यै पूर्णपात्रमितीरितम् ॥

## मन्त्रतन्त्रप्रकाशे

नमः—स्वाहान्तपठितमन्त्रेषु द्वितीयनमस्कारस्वाहाकार-संयोजननिषेधः

[2]नमोन्ते न नमो दद्याद्द्विठान्ते द्विठमेव च ।
पूजायामाहुतौ चैव सर्वत्रायं विधिः शिवे ॥

संहितायां स्वाहान्तत्वेन पठिते मन्त्रे तु द्वितीयं स्वाहाकारं न कुर्यात्, 'नमोन्ते ...' इति पुरश्चर्यार्णवे मन्त्रप्रकाशवचनात् । शिव इति संबोधनम् । द्विठः स्वाहाकार इति सांप्रदायिका इत्यपि तत्रोक्तम् । संदी. ४०

## स्मृतिभास्करे

पवित्रलक्षणम्

[3]चतुरङ्गुलमग्रं च ग्रन्थिरेकाङ्गुला तथा ।
वलयं द्व्यङ्गुलं चैव पवित्रस्य तु लक्षणम् ॥

## स्मृतिदर्पणे

देवताष्टवर्गाः

[4]मण्डपो मातृका देवास्त्रयः पितृगणास्तथा ।
गणेशदुर्गाक्षेत्रेशाः कुलदेव्यष्टवर्गकाः ॥

(१) संदी. ४६.

(२) संत. ८७६ द्विठान्ते (स्वाहान्ते) चैव (चापि) शिवे (स्मृतः) भट्टभाष्ये मन्त्रतन्त्रप्रकाशे च ; संदी. ४० पुरश्चर्यार्णवे मन्त्रप्रकाशवचनम्.

(३) मुक्ता. २३३ ; आन. २०.

(४) संर. ५९४.

## विधानपारिजाते

एकवस्त्रत्वं कच्छहीनत्वं च स्त्रियाः कर्माधिकारप्रतिबन्धकम्

[1]एकवस्त्रा तु या नारी कच्छहीना व्यवस्थिता ।
न साऽधिकारिणी ज्ञेया श्रौते स्मार्ते च कर्मणि ॥

तेजनी गौः

[2]मधुपर्के तु यां गां तु नोत्सृजन्ति मनीषिणः ।
तस्याश्च रुधिरं( ? सरुधिरं ) चर्म तेजनीं तां विनिर्दिशेत् ॥

## मन्त्रमुक्तावल्याम्

वर्ज्यं ग्राह्यं चाऽऽसनम्

[3]वंशचर्मधरादारुतृणपल्लवनिर्मितम् ।
वर्जयेदासनं धीमान् दारिद्र्यव्याधिदुःखदम् ॥
तूलकम्बलवस्त्राणि पट्टव्याघ्रमृगाजिनम् ।
कल्पयेदासनं धीमान् सौभाग्यज्ञानसिद्धिदम् ॥

## मन्त्रकोशकारः

पुष्पादीनां क्रयक्रयणप्रतिप्रसवः

[4]लक्षपुष्पार्चनादौ तु क्रयक्रीतमपीष्यते ॥

आदिशब्देन दूर्वादिलक्षपूजनं गृह्यते । संर. १५

## संध्यारत्ने

संकल्पप्रकाराः

[5]संकल्पो वै मनसि मननं प्रोक्तरीत्याऽथ वाचा
व्याहर्तव्यं तदनु च करेणाम्बुसेकस्त्रिधेति ।
वाङ्मात्रेण त्वरितकरणे केचिदिच्छन्ति चाम्बु-
क्षेपस्थानेऽञ्जलिकृतिमुशन्त्यन्य एष्विष्ट आद्यः ॥

## मुद्रालक्षणग्रन्थे

मृगमुद्रालक्षणम्

[6]मीलितानामिकाङ्गुष्ठमध्यमं पाणि योजयेत् ।
शेषाङ्गुलिमुच्छ्रिताग्रे मृगमुद्रेयमीरिता (?) ॥

(१) संग. ६३ ; संदी. ५२ कच्छहीना ( मुक्तकेशा ).
(२) संग. २६८. (३) संग. १०९.
(४) संर. १५. (५) इन्दु. ९.
(६) प्रका. २६.

## कुथुमिः

शिखाबन्धप्रकारः

[1]शिखिवच्छिखया भाव्यं वामावर्तनिबद्धया ।
प्रदक्षिणं द्विरावर्त्य पाशान्तःसंप्रवेशनात् ॥
प्रथमं द्विगुणीकृत्य ब्रह्मावर्तमितीरितम् ।
गायत्रीं प्रजपन्कुर्याच्छिखायाश्च निबन्धनम् ॥

## दामोदरः

चित्रौदनलक्षणम्

[2]तिलतण्डुलमिश्रं स्यादजाक्षीरं च शोणितम् ।
कर्णनासागृहीतं स्यादेतच्चित्रौदनं स्मृतम् ॥

## शाकलकारिकाः

अग्निविषये निरूढानिरूढपदार्थौ

[3]निरूढः स्याद्विभक्तोऽग्निर्यः परिस्तरणाद्बहिः ।
अनिरूढः स वै वह्निर्यः परिस्तृतिमध्यगः ॥

एतच्च यत्राग्नेः प्रत्यूहविधानमस्ति तत्परम् । यत्र तु प्रत्यूहविधानं नास्ति तत्राऽऽयतनमध्य एव पृथक्करणं निरूढशब्दार्थः, विद्यारण्यश्रीपादोक्तेः । संर. ७०

विष्णुस्मरणस्य कर्मसंपूर्णताहेतुत्वम्

[4]प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरे यदि ।
स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः ॥

पत्नीपुत्रयोरुपवेशनदेशः

कन्यापुत्रविवाहे च व्रतोद्यापनशान्तिके ।
कर्तुर्वामे तु पत्नी स्यादाशीर्वादे च मार्जने ॥
जातादौ व्रतबन्धान्ते सर्वगर्भक्रियासु च ।
गृहवेशे पुनःसंधे पत्नी पुत्रश्च दक्षिणे ॥

(१) इन्दु. ८.
(२) वीमि. १।२०४ (=) मिश्रं स्याद (मुद्गं च अ) देतच्चित्रौदनं स्मृतम् (च्चित्रौदनमुदाहृतम्); शाम. १७.
(३) शाका. १९५ ; प्रपा. ४४ स्मृतिदीपिका ; संर. ७० प्रपावत्.
(४) शाका. २१७, २५७–२६०, २८९, ५५५.

मौञ्जीबन्धनपर्यन्तमारभ्याऽऽधानकर्म च ।
कर्तोदग् दक्षिणे पत्नी पुत्रश्चेत्याह गोभिलः ॥
प्रदाने चैव कन्याया मधुपर्कस्य पूजने ।
पत्नी स्याद्दक्षिणे भागे कर्तुरेवेति शाकलः ॥

प्राणायामलक्षणम्

दशप्रणवसंयुक्तां गायत्रीं शिरसा सह ।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥

दशौषधयः

कुष्ठं मांसी हरिद्रे द्वे मुरा शैलेयचन्दनम् ।
वचा कचारं मुस्ता च स्मृताश्चौषधयो दश ॥

## शौनककारिकाः

द्विजातीनां कर्माधिकारः, ब्राह्मणस्य याजकत्वम्

[1]द्विजातयोऽग्निमन्तो ये त एतेष्वधिकारिणः ।
एतेषां ब्राह्मणो होता वेदवेदाङ्गपारगः ॥

अग्निप्रकाराः तत्साध्यकर्माणि च

श्रौतः स्मार्त इति ज्ञेयो द्विविधोऽग्निर्द्विजन्मनाम् ।
गार्हपत्याहवनीयौ दक्षिणाग्निरिति त्रयः ॥
[2]इष्टिभिस्तिसृभिः सिद्धाः श्रौता एते त्रयो मताः ।
स्मार्तोऽग्निर्द्विविधो ज्ञेयो गृह्यः पौरुष इत्यपि ॥
[3]यस्मिन्विवाहं कुरुते सोऽग्निर्गृह्य इति स्मृतः ।
जातकर्मादिसिद्ध्यर्थं यो व्याहृतिभिराहितः ॥

(१) शौका. ११–१२ पृ. २.

(२) शौका. १३ ; पृ. २ ; प्रपा. ३१ उत्त. ; मुक्ता. ३५४ द्विविधो (विविधो).

(३) शौका. १४ पृ. २ ; प्रपा. ३१ राहितः (राहृतः) ; मुक्ता. ३५४ पूर्वार्धे (यस्मिन् विवाहः क्रियते सोऽपि गृह्यो हुताशनः ।) यो व्याहृतिभिराहितः (यश्चाऽऽहुतिभिराहुतः).

[1]सोऽग्निः पौरुष इत्युक्तः शालाग्निर्लौकिकः स्मृतः ।
केचिद्वैश्यस्य भवनादाहृतो जातकः स्मृतः ।
कुर्याच्छ्रौतानि कर्माणि श्रौतेष्वेवाग्निषु त्रिषु ॥
[2]गृह्ये गार्ह्याणि कर्माणि त्वितराणि तु पौरुषे ॥

गृहशब्दोऽत्र गृहिणीवचनः, तन्निमित्तोऽग्निर्गृह्यः, तस्मिन्गृह्याग्नौ तन्निमित्तानि कर्माणि कुर्यादित्यर्थः ।

प्रपा. ३१

कर्मणां दक्षिणकरसाध्यत्वम्

*[3]यत्रोपदिश्यते कर्म कर्तुरङ्गं तु नोच्यते ।
दक्षिणस्तत्र विज्ञेयः कर्मणां पारगः करः ॥

कर्मसु दिङ्नियमः

यत्र दिङ्नियमो नोक्तो जपहोमादिकर्मसु ।
तिस्रस्तत्र दिशः शस्ता ऐन्द्री सौम्याऽपराजिता ॥

अपराजिता ऐशानी । प्रर. ४९

अबुपस्पर्शननिमित्तानि

[4]रौद्रमन्त्रजपे चैव ह्यासुरेष्वाभिचारिके ।
राक्षसादिजपे चैव कर्म कुर्वन्नपः स्पृशेत् ॥

* इतः परं प्रथमद्वितीयौ चतुर्थश्चेति श्लोकत्रयं प्रायो यथाश्रुतं कात्यायनस्मृतावुपलभ्यते, तृतीयस्तु अर्थतः । तृतीयोऽपि संदंशपतितत्वात्कात्यायनीयस्यैव पाठभेद इति संभवति । श्लोका एते पारिजातादौ भगवन्नाम्ना धृतत्वादत्र संगृहीताः । वस्तुतस्तु शौनककारिकास्वनुपलम्भात् 'कर्तुः प्राङ्मुखता' इत्याद्युत्तरग्रन्थस्य पौनरुक्त्यापाताच्च भगवन्नामसंबन्ध एषां प्रामादिक एवेति भाति ।

(१) शौका. १५ पृ. २ द्वितीयार्धं नास्ति ; प्रपा. ३१ स्मृतः (तथा) प्रथमार्धमात्रम् ; मुक्ता. ३५४ तृतीयार्धं नास्ति.

(२) शौका. १६. पृ. २ ; प्रपा. ३१ गार्ह्याणि (गृह्याग्नि) त्वितराणि तु (चेतराण्येव).

(३) प्रपा. ५५ ; प्रर. ४९. (४) प्रपा. ५५.

कर्मणामुपविश्यकर्तव्यता

[1]आसीन ऊर्ध्वः प्रह्वो वा नियमो यत्र नोच्यते ।
तदासीनेन कर्तव्यं न प्रह्वेण न तिष्ठता ॥

कर्मप्रकाराः

[2]नित्यं नैमित्तिकं काम्यं कर्माऽऽहुस्त्रिविधं बुधाः ॥

पूर्वेदिने नान्दीश्राद्ध- सकृद्भोजन- ब्रह्मचर्या- लङ्करण- प्रतिसरबन्ध- पुण्याहवाचनानां मनः-प्रसाद- सत्योक्ति- तपः- स्नाना-ऽऽचमनैरात्मशुद्धेश्च पूर्वाङ्गत्वम्, कर्तुः प्रतिनिधयश्च

[3]एतेषां कर्मणां होता तन्त्रं कल्पश्च वक्ष्यते ।
पितृभ्योऽभ्युदयश्राद्धं कृत्वा पूर्वेदिने द्विजः ॥
[4]हविष्यान्नं सकृद्भुक्त्वा ब्रह्मचारी स्वलङ्कृतः ।
प्रकोष्ठं तन्तुभिर्मन्त्रैः संनह्येद्गुप्तये द्विजः ॥
[5]पुण्याहं वाचयेद्विप्रैरर्चितैर्वेदपारगैः ।
मनःप्रसादात्सत्योक्त्या तपसा स्नानकर्मणा ॥
[6]आचम्य चाऽऽत्मनः शुद्धिं कृत्वा कर्म समाचरेत् ।
अनादेशे स्वयं कर्ता ऋत्विक्सभ्यपुरोहिताः ॥

---

(१) प्रपा. ५५ ; प्रर. ४९.

(२) शौका. १६ पृ. २ ; प्रपा. ५५.

(३) शौका. १७ पृ. २ पूर्वार्धे (एतेषां कर्मणो होमतन्त्रकल्पं च वक्ष्यति ।) ; प्रपा. ५६ उत्तरार्धे (अथो पितृभ्योऽभ्युदयश्राद्धं चैव परेऽहनि ॥).

(४) शौका. १८ पृ. २ ; प्रपा. ५६.

(५) शौका. १९ पृ. २ ; प्रपा. ५६ र्चितै (रितै).

(६) शौक. २० पृ. २ ; प्रपा. ५६ समाचरेत् (समारभेत्) ऋत्विक्सभ्यपुरोहिताः (सभ्य ऋत्विक् पुरोहितः) ; प्रर. ४९ ऋत्विक्सभ्यपुरोहिताः (सर्वे ऋत्विक् पुरोहिताः) उत्त.

प्राक्कूलता, प्राक्संस्थत्वम्, प्राङ्मुखता, परिसमूहनम्, दक्षिणाङ्गकर्तव्यता, आसीनकर्तव्यता, हविरनादेशे आज्यं हविः, उपवीतम्, निवीतम्, होममन्त्रेषु एकश्रुतिविधानं स्वाहाकारविधानं च

[1]प्राक्कूलता साधनानां प्राक्संस्थत्वं च कर्मणाम् ।
कर्तुः प्राङ्मुखताऽनुक्ते क्रियायां प्राक्समूहनम् ॥
[2]अङ्गद्वये सत्येकेन चाङ्गेन वचनोदिते ।
दक्षिणेनैव कर्तव्यं तथाऽनुक्ताङ्गकर्मणि ॥
[3]आसीनेनैव कर्तव्यं यत्र स्थानमचोदितम् ।
हविष्यचोदिते तद्वदाज्यं तत्र हविर्भवेत् ॥
[4]कर्मोपवीतिना कार्यं निवीतेनापि चोदिते ।
अविज्ञातस्वरा मन्त्राः प्रयोक्तव्याः प्रयोक्तृभिः ॥
[5]एकश्रुत्यैव होमेषु विज्ञाताश्च विकल्पतः ।
यस्मिन्मन्त्रे न पठितः स्वाहाकारो भवेद्यदि ॥
[6]स्वाहान्तस्तु प्रयोक्तव्यो होमेषु प्रणवादिकः ॥

---

(१) शौका. २१ पृ. २ कर्मणाम् (कर्मणि) उत्तरार्धे (कर्तुः प्राङ्मुखता कार्या क्रियायाः प्राक्समीहितम् ॥) ; प्रपा. ५६ ; प्रर. ४९ पू.

(२) शौका. २१ श्लोकोत्तरं निरङ्कः श्लोकः पृ. २ दिते (दितम्) ; प्रपा. ५६.

(३) शौका. २२ पृ. २ ; प्रपा. ५६ हविष्यचोदिते (हविष्यं चोदितं).

(४) शौका. २३ पृ. २ निवीतेनापि (निवीतिनाऽपि); प्रपा. ५६ ; प्रर. ४९ उत्त.

(५) शौका. २४ पृ. ३ विज्ञाताश्च विकल्पतः (विज्ञातश्च विकल्पितः) ; प्रपा. ५६ ; प्रर. ४९.

(६) शौका. २५ पृ. ३ वादिकः (वादिना) ; प्रपा. ५६ स्वाहान्तस्तु (स्वाहान्तेन) ; प्रर. ४९ प्रणवात्.

प्रत्यृचशब्देन होमविधाने विशेषनियमः

[1]यत्र स्यात्प्रत्यृचंशब्दस्तत्रैवं होम इष्यते ।
ऋगन्ते तत्र होतव्यं स्वाहाकारं पठेत्ततः ॥
[2]जानीयात्प्रत्यृचं मन्त्रं तदन्यानुपदेशतः ॥

एतद्गृह्येऽपि ज्ञापितम् । तथा हि– 'आ नः प्रजां जनयतु प्रजापतिरिति चतसृभिः प्रत्यृचं हुत्वा' इति । अस्यार्थमाह नारायणः– प्रत्यृचग्रहणं कथम् ? ऋगन्तेन होमः स्यात् न स्वाहाकारान्तेनेत्येवमर्थम् । स्वाहाकारं पठन् जुहुयादित्यर्थः । तेन यत्र प्रत्यृचग्रहणं नास्ति तत्र स्वाहाकारमुक्त्वा पश्चाद्धोमः कार्य इति । हरदत्तस्त्वाह– "आ नः प्रजामिति चतसृभिः प्रत्यृचं जुहोति । यत्र प्रत्यृचग्रहणं नास्ति तत्रापि प्रत्यृचंहोमो भवति 'धाता ददातु दाशुषे' इत्यादौ, एकस्य कर्मणो बहुमन्त्रत्वमन्याय्यमिति कृत्वा । यथाऽऽहाऽऽपस्तम्बः– 'वचनादेककर्म बहुमन्त्रम्' इति । इह प्रत्यृचग्रहणमृगन्ते होमो यथा स्यात्, स्वाहाकारो मा भूदिति । केचिदृगन्ते हुत्वा पश्चात्स्वाहाकारं कुर्यादिति वदन्ति" इति । प्रपा. ५६

जपे होमे च महाव्याहृतिनिर्णयः

[3]भूर्भुवः स्वश्चेति तिस्रो महाव्याहृतयो जपेत् (? जपे) ।
आभिश्च होमे तिसृभिश्चतुर्थी स्यात्समासतः॥

षड्विधा मन्त्राः, तेषामुपांशुप्रयोगः, तेषां लक्षणानि, मन्त्रसंज्ञा, सावित्रप्राजापत्ययोरुपांशुत्वम्

[4]अथ प्रयोगमन्त्राणां लक्षणं षड्विधं स्मृतम् ।
जपानुमन्त्रणाप्यायनाभिमन्त्रास्तथैव च ॥

(१) प्रपा. ५६ ; प्रर. ४९ त्रैवं (त्रैव).

(२) शौका. २५ पृ. ३ ; प्रपा. ५६ ; प्रर. ४९.

(३) शौका. २६ पृ. ३ जपेत् (यजेत्) समासतः (समाहिता) ; प्रपा. ५६ पूर्वार्धे (ॐभूर्भुवः स्वश्चेति तिस्रो व्याहृतयो जपेत् । ) ; प्रर. ४९ प्रपावत् ; शाम. २२ पूर्वार्धे (ॐभूर्भुवः सुवश्चेति तिस्रो व्याहृतयो जपेत् । ) पारिजाते.

(४) शौका. २७ पृ. ३ ; प्रर. ४९ लक्षणं षड्विधं (षड्विधं लक्षणं) मन्त्रास्त (मन्त्रस्त).

[1]उपस्था कर्मकरणं षडुपांशु प्रयोगतः ।
जपमुच्चारणं विद्यात्क्रत्वर्थमपि तद्भवेत् ॥
[2]अर्थतः कार्यलाभश्चेदर्थ एव क्रतौ भवेत् ।
मन्त्रमुच्चारयन्नेव मन्त्रार्थत्वेन संस्मरेत् ॥
[3]शेषिणं तन्मना भूत्वा स्यादेतदनुमन्त्रणम् ।
एतदेवाभिमन्त्रस्य लक्षणं चेक्षणादि(? धि)कम् ॥
[4]अद्भिः संस्पर्शनाधिक्यात्तदेवाऽऽप्यायनं स्मृतम् ।
उपस्थानं तदेव स्यात्प्रणतिस्थानसंयुतम् ॥
[5]बाह्यं कर्म यदेतेषु मन्त्रकाले क्रियेत तत् ।
कर्मणां करणास्ते स्युर्विहितार्थप्रकाशनम् ॥
[6]मन्त्रेण कृत्वा मन्त्रान्ते क्रियते कर्म येषु तु ।
इदं कार्यमनेनेति न क्वचिद्दृश्यते विधिः ॥
[7]लिङ्गादेवेदमर्थत्वं येषां ते मन्त्रसंज्ञकाः ।
प्राजापत्य उपांशु स्यान्मन्त्रः सावित्र एव च ॥

(१) शौका. २८ पृ. ३ ; प्रपा. ५५ उत्त. ; प्रर. ४९.

(२) शौका. २९ पृ. ३ अर्थतः (अर्थेन) संस्मरेत् (संस्मरन्) ; प्रपा. ५५ ; प्रर. ४९.

(३) शौका. ३० पृ. ३ शेषिणं (शेषितं) ; प्रपा. ५५ चेक्ष (चोक्ष) ; प्रर. ४९.

(४) शौका. ३१ पृ. ३ ; प्रपा. ५५ संस्पर्श (संमर्श) ; प्रर. ४९.

(५) शौका. ३२ पृ. ३ ; प्रपा. ५५ कर्मकाले (मन्त्रकाले) कर्मणां करणास्ते स्युः (कर्मणः करणं तस्य) ; प्रर. ४९ तत् (यत्) उत्तरार्धं प्रपावत्.

(६) शौका. ३३ पृ. ३ ; प्रपा. ५५ ; प्रर. ४९ पू.

(७) शौका. ३४ पृ. ३ ; प्रपा. ५५ संज्ञकाः (संज्ञितः) पू. ; प्रर. ४९ (प्राजापत्यमुपांशु स्यान्मध्यं सावित्रमेव च ॥ ) उत्त.

परिध्यादीनिध्मेऽन्तर्भाव्य इध्मसमिधां संख्या मानं च, परिधित्रयलक्षणानि, यज्ञिया वृक्षाः

[1]आयामेनेध्मसमिधां प्रादेशद्वयमुच्यते ।
वितस्तिमात्रमथ वा संख्यया चैकविंशतिः ॥
[2]त्रयः परिधयोऽत्र द्वे आघारसमिधावपि ।
अनूयाजसमिच्चैका आधाने दश पञ्च च ॥
[3]एकविंशतिसंख्यैवमिध्मस्य परिगण्यते ।
तस्मिन्प्रमाणद्विगुणा ग्राह्याः परिधयस्त्रयः ॥
[4]ज्येष्ठमध्यकनिष्ठास्ते हीना अङ्गुलिमानतः ।
ह्रसिष्ठो त्रिष्ठकानिष्ठः स्थविष्ठो मध्यमस्त्रिषु ॥
द्राघीयानैतपरिधयः कनिष्ठो ज्येष्ठ उच्यते ।
द्रव्येण यज्ञिया वृक्षाः साधयेत्सर्वकर्मसु (?)॥
पलाशखदिराश्वत्थवैकङ्कतशमीवटाः ।
वेणूदुम्बरबिल्वाद्या यज्ञियास्तरवः स्मृताः ॥

समिल्लक्षणम्

यज्ञियद्रुमशाखाश्च स्कन्धपर्णादिवर्जिताः ।
आर्द्राः शुष्काः समाः सत्वगृजवो दोषवर्जिताः ॥

समिद्दोषाः

भग्नप्रच्छिन्नभिन्नाश्च वक्रा व्यापति(?त्ति)-
निस्त्वचः ।
स्वयंशुष्का हस्तकृताः पशुजन्त्वविशेषिताः ॥
विद्युद्दावाग्निना दग्धा विक्रीताः पतितादिभिः ।
प्राण्याद्यध्युषिताः कीटलीढप्रायास्तथैकतः ।
मलाद्यमेध्यलिताश्च समिद्दोषा उदाहृताः ॥

यज्ञियानि तृणानि तृणदोषाश्च

[5]कुशाः काशाश्च वालादिमौञ्जीप्रभृतिरेव च ।
गोधूमयवदूर्वाश्च विश्वामित्राश्च बल्वजाः ॥
शकुन्तिका व्रीहयश्च भद्रमुस्तातृणान्यपि ।
उशीरश्चेति जानीयाद्यज्ञियानि तृणान्यपि ।
यथोदितः समिद्दोषः कुशादीनां तथा भवेत् ॥

पात्राणां प्रकृतयः मुख्यकल्पानुकल्पाश्च

[1]पात्राणि सादनाय स्युः सौवर्णानि महीपते ।
दैवे कर्मणि सर्वत्र रौप्याणि पितृकर्मणि ॥
[2]मृन्मयानि च पात्राणि तैजसाश्ममयानि च ।
सर्वेषामेव पात्राणां शङ्खः शुक्तिश्च शस्यते ॥
तयोश्च शङ्ख उत्कृष्टो गृह्णीयाद्यज्ञकर्मणि ।
दारवाणि च कार्याणि यथाशक्त्यनुरूपतः ॥
[3]पूर्णपात्रादयो ग्राह्याः शस्ता यज्ञद्रुमोद्भवाः ।
प्रशस्ते पूर्णपात्रार्थे दारुकांस्यमये मखे ॥

पात्रे इति शेषः । संर. १९

[4]खादिरेण स्रुवः कार्यः पालाशेन जुहूर्भवेत् ।
त्वक्प्रदेशे बिले स्यातामन्यैर्वा यज्ञियैर्द्रुमैः ॥
[5]तदभावे पलाशस्य पर्णाभ्यां हूयते हविः ।
पलाशपर्णाभावे तु पर्णैर्वा पिप्पलोद्भवैः ॥

---

(१) शौका. १६ पृ. ४ ; प्रपा. ३४ समिधां (समिधः).

(२) शौका. १७ पृ. ४ अनू (अनु) आधाने (न्वाधाने) ; प्रपा. ३४ आघार (चाऽऽघार).

(३) शौका. १८ पृ. ४ ; प्रपा. ३४ पू.

(४) शौका. १९-२५ पृ. ४-५.

(५) शौका. २७-२९ पृ. ५.

(१) शौका. ३०-३१ पृ. ५.

(२) शौका. ४८-४९ शङ्खः शुक्तिश्च शस्यते (शुक्तिशङ्खौ प्रशस्यते) ; प्रपा. ३९ संग्रहे ; संर. १९ (पात्राणि दारवाणि स्युर्यथाशक्त्यनुरूपतः ।) एतावदेव, संग्रहे.

(३) शौका. ४९ पृ. ६ अशुद्धिबहुलः पाठः ; प्रपा. ३९-४० उत्तरार्धे (प्रशस्ताः पूर्णपात्रार्थे दारुकांस्यमयौ मखे ।।) संग्रहे ; प्रर. ५१ प्रशस्ते (प्रशस्तौ) मये (मयौ) उत्त., संग्रहे ; संर. १९ संग्रहे.

(४) शौका. ५१ पृ. ६ बिले (बिलौ) ; प्रपा. ४० शौकावत्, संग्रहे ; प्रर. ५१ शौकावत्, संग्रहे ; संर. १९ पालाशेन (पालाशी तु) संग्रहे.

(५) शौका. ५२ पृ. ६ पर्णैर्वा पिप्पलोद्भवैः (पर्णाभ्यां पिप्पलस्य वै) ; प्रपा. ४० संग्रहे ; प्रर. ५१ संग्रहे ; संर. १९ संग्रहे.

(१) 'पलाशस्य पर्णाभ्याम्' इत्यत्र मध्यमपर्णेनेति वेदितव्यम्, 'मध्यमेन पर्णेन जुहोति' इति श्रुतेः। ‡ प्रपा. ४०

(२) गृह्यकर्मणि सर्वत्राऽऽज्यहोमे दर्व्यैव, आचार्योक्तेः। शास्त्रान्तरे दृष्टत्वात्खादिर्यपि दर्वी ग्राह्येति मातृदत्तः। अपिशब्दात्पालाशी। संर. १९

**'चमसं वा प्रणीतायाः कांस्यपात्रमथापि वा ॥**

पवित्रलक्षणम्

**'तृणं यदप्रच्छिन्नाग्रमन्तर्गर्भविवर्जितम् ।**
**प्रादेशमात्रं यज्ञीयं पवित्रमिति संज्ञितम् ॥**

मन्त्रोपदेशाभावे अनादेशाहुतयः

**'होमोपदेशो यत्रास्ति न तु मन्त्रोपदेशनम् ।**
**तत्रानादेशहोमाः स्युरिति सूत्रकृतो मतम् ॥**

अनादेशहोमाः अनादिष्टदेवताका होमाः। ताश्चाऽऽह आश्वलायनः— 'अग्निरिन्द्रः प्रजापतिर्विश्वेदेवा ब्रह्मेत्यनादेशे' (आगृ. १।३।८) इति। संप्र. २७९

ऋग्वेदादीनां याजुषशाखापरिग्रहनियमः

**'यजुषो बहुशाखत्वात्संदेहे समुपस्थिते ।**
**कां शाखामवलम्बेरंस्तादृशीं बह्वृचादयः ॥**
**आध्वर्यवं याजमानं ग्राह्यं बौधायनीयकम् ।**
**अन्यथा पतितो ज्ञेय इति बौधायनाशयः ॥**

‡ प्रर. प्रपावत्।

(१) शौका. ५३ पृ. ६; प्रपा. ४० संग्रहे; प्रर. ५१ संग्रहे.

(२) शौका. ५६ पृ. ५७.

(३) शौका. ७ पृ. ३९; प्रपा. १८८; संप्र. २७८.

(४) बाल. १।८२ पृ. २५४. अनिर्दिष्टकर्तृकेऽपि इदं वचनद्वयं द्रष्टव्यम्।

## कुमारिलकारिकाः

अग्न्यादयः सामान्या देवताः

**१'नैके कांचन' पक्षोऽयं चौलादावाश्रितो यदा ।**
**तदाऽग्निरिन्द्र इत्याद्या होतव्या इति वृत्तिकृत् ॥**

समानकालिकानां समानतन्त्रता, तत्र ऐच्छिक-नित्याङ्गानि, द्रव्यानादेशे आज्यं द्रव्यम्, साधनानुक्तौ स्रुवस्य साधनता

**अनेके पाकयज्ञाः स्युरेकस्मिन्काल एव चेत् ।**
**समानतन्त्रकाः कार्या न तन्त्रावृत्तिरिष्यते ॥**
**पात्रासादनमिच्छात आज्याधिश्रयणादि च ।**
**स्रुवादिमार्जनं चेध्मरज्जुप्रहरणं तथा ॥**
**पूर्णपात्रं भवेन्नित्यमाज्यस्योत्पवनं तथा ।**
**द्रव्यानादेश आज्यं स्यादनुक्ते साधने स्रुवः ॥**

षड्विधमन्त्राणामुपांशुत्वम्, तत्र मन्त्रविशेषलक्षणम्

**जपानुमन्त्रणे मन्त्र* उपस्थानाभिमन्त्रणे ।**
**मन्त्रो यः कर्मकरणे गृह्यकर्मण्युपांशु षट् ॥**
**इदं कार्यमनेनेति न क्वचिद्दृश्यते विधिः ।**
**लिङ्गादेवेदमर्थत्वं येषां ते मन्त्रसंज्ञकाः ॥**

* "इदं मन्त्रपदं न मन्त्रसामान्यपरम्, अपि तु मन्त्रविशेषपरम्। अयमेव मन्त्रविशेषः 'इदं कार्यमनेन' इत्यग्रिमश्लोकेन लक्षितः। अन्यथा षट्त्वसंख्या व्याहता स्यात्, अग्रिममन्त्रलक्षणं च श्रुतिवाक्यादिप्रमाणविनियुक्तेषु बहुषु मन्त्रेष्वव्याप्तं स्यात्। तथा च 'लिङ्गमात्रविनियुक्तो मन्त्र उपांशु प्रयोक्तव्यः' इति निष्कर्षः।" इत्येवं विचारोऽत्र समुत्तिष्ठते। एवं तु सति उक्तमन्त्रविशेषस्यापि करणरूपत्वात् 'मन्त्रो यः कर्मकरणे' इत्यस्यांशस्य लिङ्गेतरप्रमाणकविनियोगकमन्त्रपरत्वमिति मन्तव्यम्। शौनककारिकासु तु आप्यायनमधिकं पठितम्। तेन तत्र षट्त्वसंख्या समन्विता, तत्रोक्तमिदमेव मन्त्रलक्षणं तु चिन्तनीयम्।

(१) कुका. १।१।१३-१९; प्रपा. ५४ समानतन्त्रकाः (समानतन्त्रता) मन्त्रस्य करण (सर्वत्र करण); प्रर. ४८ चेत् (तु) न तन्त्रा (न तत्रा) संज्ञकाः (संज्ञिताः).

मन्त्रान्ते कर्मणः कर्तव्यता, कर्मावृत्तौ मन्त्रावृत्तिः

**मन्त्रान्ते कर्म कर्तव्यं मन्त्रस्य करणत्वतः ।**
**कर्मावृत्तौ तु मन्त्रस्याप्यावृत्तिर्गृह्यकर्मणि ॥**

कर्मण उपविश्यकर्तव्यता, प्रायश्चित्तोत्तरमतीतस्यानुष्ठानमनुष्ठानं च मतभेदेन

**[१]आसीन ऊर्ध्वः प्रह्वो वा नियमो यत्र नेदृशः ।**
**तदासीनेन कर्तव्यं न प्रह्वेण न तिष्ठता ॥**
**[२]प्रायश्चित्ते कृते पश्चादतीतमपि कर्म वै ।**
**कार्यमित्येक आचार्या नेत्यन्ये तु विपश्चितः ॥**

## कपर्दिकारिकाः

प्राणायामलक्षणम्

**[३]सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।**
**त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥**

अनादेशे दर्व्या होमसाधनत्वम्

**[४]दर्वी हुतौ तु सर्वत्र नास्ति चेदन्यचोदना ।**
**चोदिते तु तदेव स्याद्यथोद्दिष्टं यथोदितम् ॥**

अन्वारम्भनियमः

**[५]अन्वारम्भः प्रधानेषु होमेष्वन्यत्र नेष्यते ।**
**यत्रास्ति चोदना तत्र सान्वारम्भस्तु होमकृत् ॥**

यज्ञोपवीतस्य कर्माङ्गत्वं संख्या च

**[६]यज्ञोपवीते द्वे धार्ये श्रौते स्मार्ते च कर्मणि ।**
**तृतीयमुत्तरीयं च वस्त्राभावे तदिष्यते ॥**

## *त्रिकाण्डमण्डनः

कालशौचादिमज्जीवनस्य अधिकारिविशेषणत्वम्

**[७]होमादौ कालशौचादिमन्निमित्तं तु जीवनम् ।**
**अग्निहोत्रादिकं तस्मात्काले शौचे विधीयते ॥**

¶ यद्यपि त्रिकाण्डमण्डनाख्यमिदं श्रौतं प्रकरणम्, तथाऽपि श्रौतोक्तसामान्यपरिभाषाणां स्मार्तेष्वप्यतिदेशस्याऽऽश्वलायनादिसूत्रेषु सिद्धत्वादत्रत्या अपि सामान्यपरिभाषा अत्र संगृहीताः ।

(१) कुका. १।१।२०.

(२) कुका. ३।१२।६–७ ; प्रपा. ५१ ; प्रर. ४८,७९ ; चम. ११ ; संम. १९ ; सिन्धु. ९४८ ; प्रका. ३०६.

(३) कका. (क) १।२. (४) कका. १।७.

(५) कका. २।११. (६) कका. ६।१.

(७) त्रिम. १।२२–२४.

‘ यावज्जीवमग्निहोत्रं जुहोति ’ ‘ शुचिना कर्म कर्तव्यम् ’ ‘ उपवासवता बद्धकच्छेन कर्तव्यम् ’ इत्यादिवाक्यैः कालशौचादिमज्जीवनं निमित्तमधिकारकमित्याह– होमादाविति । आदिपदात् दर्शपूर्णमासादि । द्वितीयादिपदादभुक्तत्वादि । उपसंहरति– अग्निहोत्रादिकमिति । पदप्र.

अशुचिकृतस्य नाऽऽवृत्तिः , प्रायश्चित्तं शोधनहेतुः

**अज्ञानादशुचिः कर्म कृत्वाऽशुचिधनेन वा ।**
**नाऽऽवर्तयेत्पुनः कर्म प्रायश्चित्तेन शुध्यति ॥**

‘ अकाले कृतमकृतम् ’ इति न्यायेन सिद्धमकाले कृतस्य पुनः करणम् । अशुचित्वादिकृते संदेहः । तदर्थं मतान्तराभिप्रायेण पक्षद्वयमुपन्यस्यति– अज्ञानादिति । अशुचिधनेन, ‘ ऋत्विगात्मा धनं जाया शुद्धं यस्य चतुष्टयम् ।’ इति स्मरणात् । चोरितद्रव्यस्यैवाशुचित्वमिति वक्ष्यति । नाऽऽवर्तयेदिति । कृतस्य पुनः करणं नास्तीति, वचनात् । तथा च निदानसूत्रम्– ‘ अङ्गमपरिसमाप्ते प्रधाने क्रियते परिसमाप्ते तु न कर्तव्यम् ’ इत्यादि । पदप्र.

अशुचिकृतस्याऽऽवृत्तिरिति मतान्तरम्

**अपरे त्वशुचिद्रव्यकर्त्रादिकृतकर्मणः ।**
**आवृत्तिः सर्वथा कार्येत्येवमाहुर्विपश्चितः ॥**

पक्षान्तरमाह– अपरे त्विति । स्पष्टम् । अत्राऽऽहुः– परस्यां व्याख्यायां ज्ञानाज्ञानव्यवस्थाभेदेन विकल्पमाहुः । तथा चाज्ञानादशुचिना कर्मणि (कृते) ज्ञानोत्तरं प्रायश्चित्तमात्रम्, नाऽऽवृत्तिः । ज्ञानात्करणे तु पुनरावृत्तिरिति । पदप्र.

अल्पतन्त्रान्तःप्रसक्तस्य महातन्त्रस्याल्पतन्त्रसमाप्त्युत्तरं कर्तव्यता

**[१]अल्पतन्त्रे महातन्त्रं यदि संनिपतेत्क्वचित् ।**
**तन्मध्ये तन्न कर्तव्यं तत्समाप्य तदाचरेत् ॥**

(१) त्रिम. १।२६–२७.

विशेषमाह— अल्पतन्त्र इति । यथा होमे क्रियमाणे रासभान्तरागमने समाप्यैवेष्टिः । श्वेडकवराहादीनां चान्तरागमनेऽल्पतन्त्रं प्रायश्चित्तमुदकधारारूपं कृत्वैवाग्रे कर्मण्यधिकार इति भावः । एतदुक्तं भवति— प्रवृत्ते कर्मणि नित्यं नैमित्तिकं वा कर्मान्तरमल्पतन्त्रं समानतन्त्रं वाऽऽपतति, तदोत्तरकर्माधिकारार्थे बादरायणिन्यायं बाधित्वाऽऽगन्तुकं कृत्वैव शेषस्य करणम्, महातन्त्रपाते तु 'अङ्गाङ्गं प्रधानाङ्गेन' इति न्यायेन प्रवृत्तं समाप्य तत्कार्यमिति । पदप्र.

अधिकारिपुरुषविशेषणानि

**[1]अधिकारदशाप्राप्तपुरुषान्तरवर्जितः ।**
**कर्त्रवस्थागतैरन्यैर्वक्ष्यमाणैस्त्रिभिर्युतः ॥**

परिवेत्त्रादिदोषनिवृत्त्यर्थमधिकारिविशेषणान्तरं सर्वसाधारणमाह— अधिकारेति । अधिकारदशायां प्राप्तं पुरुषान्तरम्, तेन वर्जितो हीनः । सत्यधिकारे पितरि ज्येष्ठे सोदरे चानीजाने सति अधिकारो नास्तीति तदभाववत्त्वमधिकारितावच्छेदकमिति भावः । षाष्ठं विद्वत्त्वमप्यधिकारितावच्छेदकमित्यत्र पक्षत्रयमाह— कर्त्रेति । वक्ष्यमाणैरनुपदम्, अन्यैः कर्तुरवस्थायां दशायां गतैर्विद्यमानैस्त्रिभिर्विशेषणैर्युक्तोऽधिकारी । पदप्र.

**[2]स्वाध्यायविधिसंसिद्धकृत्स्नवेदार्थवेदनः ।**
**यद्वाऽध्ययनसंसिद्धानुष्ठेयमखमात्रवित् ॥**

तान्येवाह— स्वाध्यायेत्यादिना । 'स्वाध्यायोऽध्येतव्यः' इतिविधिचोदितषडङ्गसकलस्वशाखापरपर्यायवेदाध्ययनसंसिद्धार्थज्ञानवत्त्वमधिकारितावच्छेदकमिति भावः । तत्र विधिवाक्यानां विधायकत्वेन, अर्थवादानां स्तावकत्वेन, मन्त्राणां स्मारकत्वेन, नामधेयानां परिच्छेदकत्वेन धर्मे प्रामाण्यमिति सकलोऽपि वेदो धर्मे प्रमाणमित्यन्यत्र विस्तरः । तच्चार्थप्रत्यायनद्वारा, न तूच्चारणमात्रेण प्रमाणम् । एवं चाध्ययनं दृष्टार्थम् ।

(१) त्रिम. १।३९.

(२) त्रिम. १।४०; बाल. १।८९ पृ. २५२.

द्वितीयं पक्षमाह— यद्वेति । स्वाध्यायविध्युत्थापितानुष्ठेयमात्रोपयोगिस्वाध्यायार्थज्ञानवत्त्वमधिकारित्वमिति भावः । तेनाध्ययनदृष्टार्थत्वं युक्ततरं भवतीत्यभिप्रायः । पदप्र.

**[1]यद्वाऽध्ययनसंसिद्धविज्ञानरहितोऽपि सन् ।**
**नातीवाधिक्रियाशून्यो भर्तृयज्ञादिदर्शनात् ॥**

तृतीयं पक्षमाह— यद्वेति । तादृशवेदाध्ययनवत्त्वमेवाधिकारिविशेषणम्, नार्थज्ञानवत्त्वमेव । तेनार्थज्ञानाभावे कर्मण्यधिकारो नास्तीति वक्तुं न युक्तमिति भावः । तदर्थे संमतिमपि दर्शयति— भर्तृयज्ञादीनां दर्शनात् । तत्कृतनिबन्धेषु भाष्यरूपेषु दृष्टत्वादित्यर्थः । सत्यर्थज्ञाने भूयसी फलसिद्धिः । पदप्र.

**[2]शिखावानुपवीती च स्नाताचान्तोऽस्पृशन् परम् ।**
**आत्मानं चाशुचिद्रव्यं शूद्रादीनविलोकयन् ॥**

अन्यान्यप्यधिकारितावच्छेकान्याह— शिखावानिति । शिखित्वं बद्धशिखत्वस्याप्युपलक्षणम् । उपवीतित्वं च सव्यांसोपरिधृतयज्ञोपवीतित्वम् । 'विशिखी व्युपवीती च यत्करोति न तत्कृतम् ।' इति स्मरणात् । स्नातत्वं च बहिःसर्वशरीरजलसंयोगित्वम् । यद्यपि सप्तविधं स्नानं स्मर्यते, तथाऽपि वारुणमेव सर्वकर्माङ्गम्, 'स्नानानामपि सर्वेषां वारुणेन च मानवः । कर्तुमर्हति कर्माणि विधिवत्सर्वदा द्विज ॥' इति आग्नेयात् । इदं च कृतसंध्यादित्वस्याप्युपलक्षणम्, 'सुस्नातः सम्यगाचान्तः कृतसंध्यादिकक्रियः । कामक्रोधविहीनश्च पाखण्डस्पर्शवर्जितः । जितेन्द्रियः सत्यवादी सर्वकर्मसु शस्यते ॥' इति हेमाद्रौ वाराहात् । कृतसंध्यत्वं चानुदितहोमिभिन्नानामेव विशेषणम्, अनुदितहोमिनां तु उदयात्प्रागेवोद्धरणे कृत्वा होमोत्तरं संध्यावन्दनमिति धर्मसूत्रात् । दशमे श्रीधरोऽप्येवमाह । 'उद्धृत्य संध्यावन्दनं ततो होमः'

(१) त्रिम. १।४१; बाल. १।८९ पृ. २५३ नातीवा (ज्ञानी वा) चतुर्थचरणो नास्ति.

(२) त्रिम. १।४२.

इति देवजानीय( ? याज्ञिक )पद्धतौ । युक्तं तु ' संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु । ' इति दक्षवचनेन शुचित्वसंपादनद्वारा सर्वकर्माङ्गत्वात् प्रातःसंध्योत्तरं समुद्धरणं होमश्च । आचान्तशब्देन कृतद्विराचमनत्वमुच्यते, ' कर्मारम्भे द्विराचामेत् ' इति स्मृतेः । परम् आत्मानमशुचिद्रव्यं संमार्जन्युपानहादीन् अस्पृशन् अधिकारी भवति । शूद्रादीन् , आदिना म्लेच्छादीनपि अविलोकयन्नधिकारी । एतच्च दिङ्मात्रं प्रदर्शितम् । तेन कृताहतवासःपरिधानप्राणायामसपत्नीकत्वादीन्युक्तानि भवन्ति । पदप्र.

[1]**स्वाध्यायमात्रं त्यक्त्वाऽन्ययजमानोक्तलक्षणाः । भार्याः सन्तीह यावत्यस्ताभिः सर्वाभिरन्वितः ॥**

तत्र सपत्नीकत्वमधिकारप्रयोजकमित्युक्तम् । तदर्थं पत्नीविशेषणान्याह— स्वाध्यायेति । स्वाध्यायव्यतिरिक्तयावद्विशेषणविशेषितो यजमानस्तथैव लक्षणोपेता यावत्यः पत्न्यः ताभिः सर्वाभिः सहितोऽधिकारी । पदप्र.

[2]**यद्वा सवर्णया ज्येष्ठभार्ययैव समन्वितः । यद्वाऽऽधानादुपर्यूढकामपत्नीविवर्जितः ॥**

पक्षान्तरमाह— यद्वेति । सवर्णज्येष्ठभार्यया सहितो वाऽधिकारी, न तु सर्वाभिः । सवर्णानामप्यनेकत्वे ज्येष्ठाया एव साहित्यं द्योतयितुं ज्येष्ठाग्रहणम् ।

तृतीयं पक्षमाह— यद्वेति । आधानानन्तरम् ऊढा विवाहिता कामार्थं या पत्नी, तया रहितोऽपि अधिकारीत्यर्थः । पदप्र.

पत्न्याः पतितुल्योऽधिकारः कर्मणि

[3]**एवं सिद्धेऽधिकारित्वे पत्न्याः किंचिन्निरूप्यते । तुल्य एवाधिकारः स्याद्दम्पत्योरुभयोर्मिथः ॥**

अधिकारिनिरूपणसंगत्या पत्न्यधिकारे वैषम्यं वक्तुमुपक्रमते— एवमिति । अधिकारित्वे अधिकारिस्वरूपे । न तु जातिः* । ' स्वर्गकामो यजेत ' इत्यादिना कामनायां स्त्रीपुंसोरविशेषादुभयोरपि यागेष्वधिकाराद् दग्धाश्वरथन्यायेनान्योन्याकाङ्क्षयैव यागनिर्वृत्तेः प्रथमं तुल्याधिकारपक्षमाह— तुल्येति । फलिसंस्कारभूतकर्मसु पत्न्या अपि कर्तृत्वेन तुल्याधिकार इत्यर्थः । तत्र वपने श्मश्रुणोऽपि साहित्यदर्शनाद्वपने नास्तीति । पदप्र.

त्यागोच्चारणे पतिपत्न्योस्तुल्यत्ववैषम्यपक्षौ

[1]**कर्तृत्वं तु तयोस्तुल्यं द्रव्यत्यागे प्रचक्षते । यद्वा त्यागं पतिः कुर्यात् पत्नी तमनुमन्यते ॥ $अधिकारेऽपि वैषम्यं प्रोक्तं शब्दानुसारिणा ॥**

न च ' त्रय एवाधनाः स्मृताः ' इति अस्या निर्धनत्वेन त्यागे नाधिकार इति । ' स्त्रीधनानि षट् ' इत्यादिस्मृत्योपेतद्रव्यात्वात्त्यागेऽपि तुल्याधिकारमाह— कर्तृत्वमिति । तुल्याधिकारपक्षेऽपि मतान्तरेण द्रव्यत्यागे वैलक्षण्यमाह— यद्वेति । त्यागं स्वस्वत्वपरिहारपूर्वकं परस्वत्वोत्पादनरूपम् ' इन्द्रायेदं न मम ' इति, ' इन्द्रायेदं त्यजामि ' इतिरूपं वा स्वामी कुर्यात् । पत्नी तमनुजानाति । सत्यपि सधनत्वे स्वतन्त्रत्वाभावात्

---

(१) त्रिम. १।४३ ; बाल. १।८९ पृ. २६७ उत्त.
(२) त्रिम. १।४४ ; बाल. १।८९ पृ. २६७ पू.
(३) त्रिम. १।४५ ; संग. ४२ मिथः (रपि) उत्त.

* ' जातौ ' इति युक्तम् । प्रथमान्तं तु अध्याहारेण क्लिष्टान्वयम् ।

$ इदमर्धमादर्शपुस्तकानुसारेण पूर्वश्लोकाव्यवहितोत्तरमस्माभिर्मुद्रितम् । टीकाऽपि आदर्शपुस्तकानुसारेण यथास्थितैव मुद्रिता । तेनैतदर्धं पूर्वश्लोकशेष इति प्रतीतिर्भवति । वस्तुतस्तु पूर्वं कर्मविषयकतुल्याधिकारपक्षं मुख्यं तदवान्तरौ च कर्माङ्गत्यागविषयकौ तुल्याधिकार-विषमाधिकारपक्षौ उक्त्वा इदानीमनेनार्धेन कर्मविषयकविषमाधिकारपक्षं प्रस्तौति, अपिशब्दस्वारस्यात् उत्तरत्र कर्मविषयकविषमाधिकारपक्षस्य प्रतिपादनेऽपि तस्य निर्देशाभावाच्चेति ग्रन्थसंगतिं युक्तामुत्पश्यामः । अस्यार्धस्य टीकायाश्च मुद्रणमादर्शपुस्तकेऽव्यवस्थितमिति प्रतिभाति ।

(१) त्रिम. १।४६–४७ ; संग. ४२ तु ( च ) तमनु ( तदनु ) ऽपि ( च ) ; संदी. ४१ ऽपि ( च ) प्रथमार्धं नास्ति.

निर्धनत्वेन शब्दोच्चारणं यजमानस्यैवेति भावः । इति शब्दानुसारिरुद्रदत्तमतम् । पदप्र.

पत्न्या विषमाधिकारः कर्मणीति पक्षः

[1]प्राधान्येन स्वनिष्ठः सन् यजमानोऽधिकारवान् ॥

**पत्नी तत्परतन्त्रा सत्यङ्गभूताऽधिकारिणी ।**
**तस्माद्विरुद्धधर्मत्वे पतिधर्मा बलाधिकाः ॥**

तुल्याधिकारमुक्त्वा सहाधिकारपक्षमाह— प्राधान्येनेति । स्वनिष्ठः स्वतन्त्रः । स च प्राधान्यत्वे( ? न्ये) हेतुः । परतन्त्रत्वं च गुणभूतत्वे । विचारप्रयोजनम्— फलिसंस्कारा ये वाचनिका उभयोराम्नातास्त एव स्युः, नेतरे । उक्तश्चायमर्थः 'अपराह्णे व्रतोपायनीयमश्नीत' इत्यस्मिन्( ? इत्येतत् )सूत्रव्याख्यावसरे कर्कोपाध्यायैः । तस्मादिति । सहाधिकारादेव हेतोर्यत्रान्योन्यधर्मविरोधस्तत्र यजमानधर्मा एव भवेयुः, प्राधान्यात् । पदप्र.

प्रारब्धकाम्यस्यान्तराऽधिकारहानावपि समापनीयत्वम्

[2]**काम्यं कर्म प्रवृत्तः सन् वीतरागस्ततो यदि ।**
**कामाधिकारशून्योऽपि तदवश्यं समापयेत् ॥**

काम्यमपि प्रारब्धं सदन्तरा वृष्ट्यादिरूपकामनायां सिद्धायां तदुत्तरं कामनाविरहेणाधिकारशून्येनापि समापनीयमेव, न त्वन्तरा त्यागः, शिष्टविगर्हणात् दोषश्रवणाच्च । पदप्र.

काम्याधिकारहेतुः कामना दम्पत्योः पत्युरेव वेति मतद्वयम्

**काम्यत्वे दंपती कामं कामयेते पृथक् पृथक् ।**
**यद्वा कामयते स्वामी नावश्यं कामना स्त्रियाः ॥**

तुल्याधिकारसहाधिकारपक्षोपष्टम्भं पक्षद्वयमाह— काम्यत्व इति । कर्मण इति शेषः । कामनाविषयत्वे सति । उभयोरपि युगपदायुष्यादिकामनायामेक एव काम्येष्ट्यादिप्रयोगः, कालभेदे तु पृथगिति । अन्यतराधिकारे तु उभयोरप्यधिकारोऽनुपदं वक्ष्यते । द्वितीयं पक्षमाह— ( यद्वेति । ) सहाधिकारपक्षे यष्टुरेव काम्याधिकारः । कामनाः स्त्रिया अवश्यं निश्चयेन न सन्तीति शेषः । तस्याः पारतन्त्र्यादिति भावः । पदप्र.

नित्येषु तिरोहितशक्तेरप्यधिकारः, नष्टशक्तेर्नाधिकारः

**यस्तिरोहितशक्तिस्तस्याधिकारो न नश्यति ।**
**कर्मस्ववश्यकार्येषु नष्टशक्तेस्तु नश्यति ॥**

नित्यकर्मण्याहिताग्नेर्यथाधिकारं विनियोग इति षाष्ठसिद्धान्तेनाऽऽह— य इति । अवश्यकार्येषु नित्यनैमित्तिकेष्विति यावत्, कर्मसु । आधानानन्तरं चक्षुर्नाशादिना तिरोहिता अन्तरिता शक्तिः सामर्थ्यमाज्यावलोकनादिरूपं यस्य तादृशस्य पुरुषस्याधिकारो न नश्यति, नित्येषु यावच्छक्यन्यायात् । यदा तु नित्येष्वपि आरम्भसामर्थ्यं नास्ति, तदानीमधिकारलोप इत्याह— नष्टशक्तेरिति । पदप्र.

यावज्जीवकरणसंकल्पेऽपि यावच्छक्तिलोपमधिकार इति मतम्

**यावज्जीवादिसंकल्पकारिणः शक्तिलोपने ।**
**अधिकारस्तदन्तः स्यादिति शालीकिनाथधीः ॥**

( ननु ? ) नित्येषु केषुचित् यावज्जीवानुष्ठेयत्वेनोपदेशेऽपि जीर्णस्य कर्मण्यनधिकार इत्येकदेशिमतं दर्शयितुं संमतिं दर्शयति— यावदिति । तदन्तः सामर्थ्यपर्यन्तः, 'मनुष्याणामेवाधिकार आरम्भसामर्थ्यात्*' इति प्राक्प्रयुक्तहेतोरविशिष्टत्वात् । शालीकिनाथो ऋषिः । पदप्र.

यावज्जीवकरणसंकल्पे शक्तिलोपेऽप्यधिकार इति मतान्तरम्

**यावज्जीवादिसंकल्पादूर्ध्वं चेच्छक्तिलोपनम् ।**
**तथाऽपि नाधिकारस्य हानिर्वार्तिकदर्शनात् ॥**

पूर्वोक्तमेकदेशिमतं दूषयितुमाह— यावदिति । असामर्थ्येऽपि यथाकथंचित् नित्यं कर्तव्यमेवेति भावः । पदप्र.

---

(१) त्रिम. १।४७–४८ ; बाल. १।८९ पृ. २६६ तृतीयार्धमात्रम् ; संग. ४२ तृतीयार्धं नास्ति.

(२) त्रिम. १।५२–५९.

* इदं मण्डने पूर्वोक्तं नोपलभ्यते । 'मनुष्याणां वाऽरम्भसामर्थ्यात्' (काश्रौ. १।४) इति तु कात्यायनीयं सूत्रं विद्यते ।

**प्रायेण याज्ञिकाचारोऽप्येवमेवोपलभ्यते ।**
**न हि संकल्पितं कालमसंपूर्य त्यजन्ति ते ॥**

एतदर्थे याज्ञिकसंमतिं दर्शयति— प्रायेणेति । आचारस्यापि धर्मे व्यन्तरितप्रामाण्यत्वेन निश्चयादाचार-ग्रहणम् । आचारमेव विशदयति— न हीति । यावज्जीवादिरूपं कालम् असंपूर्य संपूर्णमकृत्वा न त्यजन्ति । पदप्र.

यावज्जीवकरणसंकल्पाभावेऽपि शक्तिलोपेऽप्यधिकारानुवृत्तिः

**यावज्जीवादिसंकल्पो न्यायप्राप्तो न यद्यपि ।**
**तथाऽपि वचनात्प्राप्तस्तस्मात् कर्तुं स युज्यते ॥**

ननु यावज्जीवादिसंकल्पे मानाभावात्प्रत्यहं यथाकालं नित्यानां प्रयोगसंकल्पाश्रयणेनैव निर्वाहाय(? हात्) यावच्छक्ति नित्यानां करणमिति पूर्वपक्षमाशङ्कय निराकरोति— यावदिति । पदप्र.

**एवं कृते तु संकल्पे ततः शक्तिविलोपने ।**
**युक्ता दर्शनभेदेनात्राधिकारास्तिनास्तिता ॥**

पक्षद्वयमप्युपसंहरति— एवमिति । एवं यावज्जीवादिरूपे । दर्शनभेदेन शालीकिवार्तिकशास्त्रभेदेन अधिकारस्य अतिस्ता नास्तिता च ज्ञेया । द्वन्द्वान्ते श्रूयमाणस्य तल्प्रत्ययस्य प्रत्येकमभिसंबन्धः । पदप्र.

कर्माशक्तावपि त्यागस्य कर्तव्यता, तत्राप्यशक्तौ प्रतिनिधानम्

[1]**त्यागं तु सर्वथा कुर्यात्तत्राप्यन्यतरस्तयोः ।**
**उभावप्यसमर्थौ चेन्नियुक्तः कश्चन त्यजेत् ॥**

ननु त्यागस्य याजमानत्वेन तदशक्त्या पूर्वन्यायेन त्यागलोप इति पूर्वपक्षं दूषयितुमाह— त्यागमिति। त्यागं सर्वथा स्वयमेव, पत्न्यपि पूर्वोक्तपक्षाश्रयणेन कुर्यात् । सर्वथाशब्दस्तु 'अशक्तावुपासीतोपसर्पणाशक्तावासनमधः' इति कात्यायनोक्तप्रकारार्थः । अत्यन्ताशक्तौ त्वाह— तत्रेति । यजमानस्य तत्रापि त्यागेऽप्यशक्तौ स्वामित्वाविशेषेण तयोर्दम्पत्योरन्यतरः एकः पत्नी यद्वा वा । उभयोरसामर्थ्ये तु आध्वर्यवे नियुक्तः कश्चन अस्वाम्यपि अध्वर्युः त्यागे अधिकरोति । पदप्र.

नित्यनैमित्तिकयोः सूतकादौ कर्तव्यता, काम्यस्याकर्तव्यता च

[1]**रजोदोषे समुत्पन्ने सूतके मृतकेऽपि वा ॥**
**नित्यं नैमित्तिकं कुर्यात्काम्यं कर्म न किंचन ॥**

अधुनाऽशौचादिदोषरहित एव सोमेज्याधिकारी भवतीति ज्ञापनायोपक्रामति— रजोदोष इति । रजोरूपो दोषः । दम्पत्योस्तुल्याधिकारस्य पूर्वं सिद्धान्तितत्वात्तस्या रजः— संगमे सति किमपि कर्म न स्यात्तथाऽशौचेऽपीत्येकदेशिमतं दूषयति— नित्यमिति । यदकरणे प्रत्यवायस्तन्नित्यम् अग्निहोत्रहोमादि । भवति चास्य नियतनैमित्तिकत्वान्नित्यत्वव्यवहारः । निमित्ताज्जायते यत् तन्नैमित्तिकं क्षामवत्यादि । नन्विदमपि नित्यलक्षणाक्रान्तत्वान्नित्यमिति चेत्, न । नहि क्षामवत्यादिनिमित्ताभावेऽकरणेन प्रत्यवायं जनयति । निमित्तानन्तरं प्राप्तौ नैमित्तिकपदावरुद्धत्वान्न नित्यत्वम् । तथा चानयोर्यावच्छक्त्यन्यायोपष्टम्भकत्वेन कर्तव्यतासिद्धौ काम्ये तु सगुणस्यैव फलसमर्पकत्वात्पत्न्यादिकर्तृकधर्मलोपेन फल्गुत्वान्न प्रवृत्तिरिष्टेति भावः । पदप्र.

पातित्यरहितत्वमधिकारनियामकम्

[2]**पतितो नैव कुर्वीत शास्त्रीयं कर्म किंचन ।**
**प्रारब्धमपि संजह्यादन्तरा पतितो भवेत् ॥**

अधुना पातित्यादिदोषरहितत्वमप्यधिकारितावच्छेदकमित्याह— पतित इति । स च प्रायश्चित्तानर्हः प्रायश्चित्तानिच्छुश्चेति द्विविधः । अन्यः प्रायश्चित्ती । लौकिककर्मव्युदासार्थं शास्त्रीयमिति । ननु 'आरम्भान्नियमः(?)' इत्यादिना तस्यापि प्रक्रान्ताधिकारः प्रसक्त इति पूर्वपक्षं निराकरोति— प्रारब्धमिति । प्रकृतिस्थेन आरम्भे कृते

(१) त्रिम. १।६१ ; गभा. ११३ ; संग. ४२ उत्त., १०९ ; संदी. ४१ उत्त.

(१) त्रिम. १।१४०–१४१ ; गभा. ३६:४० नित्यं नैमित्तिकं (नित्यनैमित्तिके) बह्वृचकारिकायाम् ; संप्र. १०५२ काम्यं कर्म (काम्यकर्म) बह्वृचकारिकायाम् ; संर. ७७६ केऽपि वा (के तथा) पू. : ८८४ उत्त.

(२) त्रिम. १।१४४ ; आर. १ पू.

मध्ये पातित्यनिमित्ते तत्रैव कर्मसमाप्तिः, न तु तदुत्तरं करणमिति भावः। पदप्र.

अद्विजधर्मे सामान्यधर्मे च पतितस्याप्यधिकारः

**[1]अद्विजेष्वेव यो धर्मो धर्मः साधारणोऽपि वा।**
**सत्यं वक्तव्यमित्यादिः पतितोऽपि समाचरेत्॥**

न चैतत्, सत्यभाषणस्यापि शास्त्रीयत्वेन निषेधः स्यादित्याशङ्क्य निराकरोति— अद्विजेष्विति। त्रैवर्णिकव्यतिरेकेण यो धर्मः, असाधारण उक्तो मन्वादिभिरिति शेषः, प्रदक्षिणादिरूपः। अपि वा द्विजाद्विजसाधारण्येन यो धर्मः सत्यवदनस्नानाचमनरूपः। तं कुर्यादेवेत्यर्थः। पदप्र.

पातित्यप्रायश्चित्ते पतितस्याधिकारः सुतराम्

**[2]अश्वमेधादिके यज्ञे महापातकनाशने।**
**पतितस्याधिकारोऽस्मिन् प्रत्युतानुगुणो भवेत्॥**

ननु पतितस्य शास्त्रीयकर्मनिषेधात् कथम् 'अश्वमेधावभृथस्नातः शुध्येत्' इत्यश्वमेधेऽधिकार इत्याशङ्क्याऽऽह— अश्वमेधेति। आदिपदात् व्रात्यस्तोमादिः। हेतुगर्भं विशेषणमाह— महापातकेति। अधिकारोऽस्तीति किं वक्तव्यम्। प्रत्युत ब्रह्महत्यादिपापक्षयकामनाया अनुगुणः प्रायश्चित्तानुकल्प एव भवेत्, उपदेशात्। पदप्र.

सदृशस्य प्रतिनिधेयता

**[3]शिष्टस्याभावतस्तुल्यं द्रव्यं प्रतिनिधीयते।**
**यावद्यावत्सुसदृशं तत्तदेव हि गृह्यते॥**

कालदोषादिवद् द्रव्याभावोऽप्यधिकारविघातको न वेति संदेहापनयाय प्रतिनिधिप्रकरणमारभते— शिष्टस्येति। शिष्टस्य शास्त्रविहितस्य द्रव्यस्य अभावतः अभावे। शिष्टाभावस्य प्रतिनिध्युपादानहेतुत्वाद्वा पञ्चम्यास्तसिल्। न खलु शिष्टस्य भावे प्रतिनिधिरुपादीयते। तुल्यमित्यत्रापि शिष्टस्येत्यनुषञ्जनीयम्। तथा च श्रुतद्रव्यापचारे तत्तुल्यं द्रव्यान्तरं प्रतिनिधातव्यमित्यर्थः सिध्यति। तुल्यत्वस्य येन केनापि धर्मेण संभवाद्विशिनष्टि— यावदित्युत्तरार्धेन। सौसादृश्यस्य पुनरसंभवे येन केनचित् सादृश्येनापि प्रतिनिधिग्रहणं वक्ष्यते।

*चन्द्रकान्ततर्कालंकारव्याख्या

काम्ये प्रतिनिध्यभावः तदपवादश्च

**§[1]काम्ये प्रतिनिधिर्नास्ति नित्ये नैमित्तिके हि सः।**
**काम्येऽप्युपक्रमादूर्ध्वमन्ये प्रतिनिधिं विदुः॥**

सर्वत्राविशेषेण प्रतिनिधिग्रहणे प्राप्ते विशेषमाह— काम्ये इति। हि यस्मात् नित्ये नैमित्तिके च सः प्रतिनिधिः, तस्मात् काम्ये प्रतिनिधिर्नास्ति। नित्यनैमित्तिकयोरकरणे प्रत्यवायोपदेशात् प्रतिनिधिनाऽपि तयोः करणम्, काम्यस्य त्वकरणे प्रत्यवायाभावात् श्रुतद्रव्येणैव तदनुष्ठानमिति भावः। मतान्तरमाह— काम्येऽपीति। उपक्रमात् आरम्भात्। ऊर्ध्वं परतः। प्रारब्धकाम्यकर्मणोऽपि समापनस्याऽऽवश्यकत्वादारम्भात् परतः श्रुतद्रव्यापचारे तत्रापि प्रतिनिधिरुपादेयः। नित्यनैमित्तिकसमानन्यायत्वादित्याशयः। तदिदं वाक्यं द्रव्यप्रतिनिधिपरमित्यनुसंधेयम्। चन्द्रकान्ततर्कालंकारव्याख्या

(१) त्रिम. १।१४५; आर. १.

(२) त्रिम. १।१४६.

(३) त्रिम. २।१; प्रपा. ४५ (कन्दैः पुष्पैः फलैः क्षीरै रूपैः सदृशमिष्यते।) पू.; संप्र. ४३३; मुक्ता. ३६१ उत्तरार्धे (कन्दैः पुष्पैः फलैर्मूलै रूपैः सादृश्यमिष्यते॥) स्मृतिभास्करे: ३६२ पूर्वार्धे (मुख्यालाभे तु सदृशद्रव्यलाभो विधीयते।) स्मृत्यर्थसारे; आन. ६९ (=) पू.

* 'शिष्टस्याभावतस्तुल्यम्' इत्यादिकेषु केषुचित् श्लोकेषु 'पदप्रकाशिका' व्याख्यानं नोपलब्धम्, अतस्तेषु श्लोकेषु संपादकेन स्वयमेव व्याख्यानं विरच्य टिप्पण्यां मुद्रितम्। 'पदप्रकाशिका' व्याख्यानाभावात् तदेवात्र स्वीकृतमस्माभिः।

§ एतदादयो बहवः कारिकाः स्मृत्यर्थसारेऽपि सन्ति। तासां स्मृत्यर्थसारीयस्थलनिर्देशादि अत्रैव कृतं ग्रन्थलाघवाय।

(१) त्रिम. २।२; स्मृसार. ३८; प्रपा. ४५; मुक्ता. ३६१ ऽप्युपक्र (तूपक्र) स्मृतिरत्ने; आन. ६९ (=) पू.

प्रतिनिधिनिषेधः

[1]न स्यात्प्रतिनिधिर्मन्त्रे देवेऽग्नौ कर्मणीश्वरे ।
न च प्रतिनिधिर्देशकालयोरित्यथापरे ॥

सर्वत्राविशेषेण प्रतिनिधिप्राप्तौ विशेषमाह— न स्यादिति । मन्त्रः 'इषे त्वा' इत्यादिः । देवः इन्द्रादिः । अग्निः आहवनीयादिः । कर्म प्रयाजादि । ईश्वरः स्वामी । एषु प्रतिनिधिर्नेत्यर्थः । युक्तयस्त्वत्र मीमांसाषष्ठाध्यायादवगन्तव्याः । विस्तरभयान्न प्रस्तूयन्ते । एवमन्यत्रापि । देशः प्राचीनप्रवणत्वादिः । कालः सायमादिः । अपरे इति कुर्वन् मतान्तरे तयोः प्रतिनिध्यभ्यनुज्ञानं सूचयति, सायमादिकालातिपातेऽपि गौणकाले सायंहोमादेः करणस्य तत्रतत्रोपदिष्टत्वादिति भावः ।

चन्द्रकान्ततर्कालंकारव्याख्या

[2]नाभावस्य प्रतिनिधिरभावान्तरमिष्यते ।
नापि प्रतिनिधातव्यं निषिद्धं वस्तु कुत्रचित् ॥

सौसादृश्ये सत्यपि अभावान्तरमभावान्तरस्य न प्रतिनिधिः । स्पष्टमन्यत् । चन्द्रकान्ततर्कालंकारव्याख्या

[3]श्रोत्रियाणामभोज्यं यद्द्रव्यं हि तदशेषतः ।
ग्राह्यं प्रतिनिधित्वेन होमकार्येषु न कचित् ॥

उदाहरणार्थमाह— श्रोत्रियाणामिति । स्पष्टम् ।

चन्द्रकान्ततर्कालंकारव्याख्या

गुणकर्मणि स्वामिनोऽपि प्रतिनिधिः

[1]यदैकयजमानेऽपि पत्युः कर्मण्यशक्तता ।
ग्राह्योऽन्यो गुणकर्मार्थे नरः कात्यायनाशयात् ॥

एको यजमानो यस्मिन् तथाविधेऽपि यागे पत्युः स्वामिनः, यजमानस्येत्येतत् । कर्मणि सपरिकरेऽशक्तता तदनुष्ठानासामर्थ्यं यदा भवति, तदा गुणकर्मार्थम् अङ्गकर्मानुष्ठानार्थम् अन्यो नरः प्रतिनिधेयः । प्रधानं तु त्यागमात्रं यजमान एव कुर्यादिति भावः ।

चन्द्रकान्ततर्कालंकारव्याख्या

पत्न्याः प्रतिनिधिः , पत्युः प्रतिनिध्यभावः

सौवर्णी कुशपत्नी वा पत्न्यभावेऽग्निहोत्रिणः ।
पत्युः प्रतिनिधिं कृत्वा पत्नी नैवं समाचरेत् ॥

अग्निहोत्रिणः पत्न्यपचारे पत्नीप्रतिनिधितया सौवर्णी कुशमयीं वा पत्नीमुपादायाग्निहोत्रं कर्तव्यम् । पत्न्या तु पत्युः प्रतिनिधिमादाय न होतव्यम्, पत्युः प्राधान्यात् प्रमाणाभावाच्च । पत्न्याः प्रतिनिधिश्च छन्दोगपरिशिष्टे कात्यायनेनोपदिष्टः । यथा— 'मृतायामपि भार्यायां वैदिकाग्निं न हि त्यजेत् । उपाधिनाऽपि तत् कर्म यावज्जीवं समाचरेत् ॥ रामोऽपि कृत्वा सौवर्णीं सीतां पत्नीं यशस्विनीम् । ईजे यज्ञैर्बहुविधैः सह भ्रातृभिरच्युतः ॥' इति ।

चन्द्रकान्ततर्कालंकारव्याख्या

संकल्पितद्रव्याभावे सदृशस्य प्रतिनिधानम्, न तु वैकल्पिकस्य

[2]द्रव्यं वैकल्पिकं किंचिद्यत्र संकल्पितं भवेत् ।
तदभावे सदृग्ग्राह्यं न तु वैकल्पिकान्तरम् ॥

---

(१) त्रिम. २१३ ; स्मृसार. ३८ (न स्यात्प्रतिनिधिर्मन्त्रस्वामिदेवाग्निकर्मसु । स देशकालयोर्नास्ति अरण्योरग्निरेव सा । समारूढां च समिधमरणिं ब्रुवते बुधाः ॥) ; प्रपा. ४५ रित्यथापरे (रस्त्वथापरः) उत्त. ; मुक्ता. ३६१ (न च प्रतिनिधिर्मन्त्रस्वामिदेवाग्निकर्मसु । स देशकालयोर्नास्ति ह्यरण्यामग्निरेव सा ॥ समारूढां च समिधमरणिं ब्रुवते बुधाः ॥) स्मृतिरत्ने ; आन. ६९ (=) (न च प्रतिनिधिर्मन्त्रस्वामिदेवाग्निकर्मसु । समारूढां च समिधमरणिं ब्रुवते बुधाः ॥).

(२) त्रिम. २१४ ; स्मृसार. ३८ ; प्रपा. ४५ नापि प्रतिनिधा (नात्रापि प्रतिधा) उत्त. ; मुक्ता. ३६१ स्मृतिरत्ने.

(३) त्रिम. २१५ ; स्मृसार. ३८–३९ तदशेषतः (तद्दोषतः) कार्येषु न कचित् (कार्ये न कुत्रचित्) ; प्रपा. ४५ ; मुक्ता. ३६१.

---

(१) त्रिम. २१७–८.

(२) त्रिम. २११६ ; स्मृसार. ३९ किंचित् (केचित्) ; प्रपा. ४५ वैकल्पिकं (वैकल्पितं) सदृक् (सति) ; मुक्ता. ३६१ वैकल्पिकं (वैकल्पितं) सदृक् (सति) स्मृतिरत्ने.

अथेदं विचार्यते– 'व्रीहिभिर्यजेत' 'यवैर्यजेत' इति विकल्पेन विहितेषूभयेषु मध्ये एकेन व्रीहिद्रव्येण प्रारब्धे कर्मणि तस्य नाशदोषापहारादिके जाते पश्चाद्यदि व्रीहयो न प्राप्यन्ते, तदा किं वैकल्पिकं द्रव्यान्तरं यवरूपमुपादेयमुत व्रीहिसदृशमिति। तत्र मुख्यद्रव्ये सति प्रतिनिध्युपादानस्यायुक्तत्वाद्यवानामुपादाने प्राप्ते सिद्धान्तमाह– द्रव्यमिति । सदृगिति । व्रीहिसदृशं नीवारादि; न तु यवाः । तेन प्रारब्धप्रयोगस्य द्रव्यस्याभावे तत्सदृशमुपादेयम्, न तु वैकल्पिकमिति, यथारम्भसमापनस्योचितत्वात् । द्रव्यान्तरे चोपचिते तथा न स्यादिति ।

पदप्र.

प्रतिनिधिसंकल्पेऽपि मुख्यलाभे मुख्यस्यैव ग्राह्यता

**[१]मुख्यद्रव्यापचारे तत्प्रतिनिध्यभिसंधिना ।**
**प्रयुञ्जानस्य मुख्यार्थलाभे ग्राह्यः स एव हि ॥**

यदा पुनर्मुख्यमलभ्यं मत्वा प्रतिनिधिमुपादातुं प्रस्थितेनानन्तरा मुख्यं लब्धम्, तदा प्रतिनिधेः संकल्पितत्वात् मिथ्यासंकल्पदोषपरिहाराय मुख्यमनादृत्य प्रतिनिधिरेवोपादेय इति प्राप्ते सिद्धान्तयति– मुख्येति । अपचारः अलाभः । अभिसंधिः संकल्पः । सः मुख्यार्थः । तदुक्तं जैमिनिना– 'मुख्याधिगमे मुख्यमागमो हि तदभावात्' (जैसू. ६।३।३५) इति। यथाशक्ति शास्त्रार्थं संपादयामीत्येवं शास्त्रार्थविषय एव संकल्पः कर्तव्यः, न तु प्रतिनिधिस्वरूपं आश्रितव्यम्। तस्मात् मुख्यप्राप्तौ मुख्यमेवोपादेयम् ।

पदप्र.

प्रतिनिधिना प्रयोजननिर्वृत्तौ मुख्यलाभेऽपि प्रतिनिधिनैव समापनम्

**[२]उपात्ते यस्मिन् कस्मिन्वा मुख्येऽपचरिते सति।**
**अन्यद्द्रव्यं सजातीयं विजातीयमथापि वा ॥**

(१) त्रिम. २।१७; स्मृसार. ३९ चारे तत् ( चारे तु ).

(२) त्रिम. २।१८–१९; स्मृसार. ३९; मुक्ता. १६ (यस्मिन्कस्मिन्नुपात्ते तु मुख्ये प्रचरिते सति । अन्यद्द्रव्यं विजातीयं सजातीयमथापि वा। उपादाय प्रयुञ्जानो द्रव्यं कृत्स्नमवाप्नुयात्।।) एतावदेव, स्मृत्यर्थसारे : ३६२ शेषेऽपि ( शेषेण ) हित्वा ( त्यक्त्वा ) स्मृत्यर्थसारे.

**उपादाय प्रयुञ्जानो यदि पूर्वमवाप्नुयात् ।**
**उपात्तत्वाविशेषेऽपि पूर्वं हित्वा परं श्रयेत् ॥**

* अथ यदाकदाचित्प्रतिनिधिना नियोजने कृते पश्चान्मुख्यमुपलब्धम्, तदा कृतमपि नियोजनं साद्गुण्याय पुनः

* अष्टादशैकोनविंशविंशश्लोकानां व्याख्यानं चिन्त्यम्, मूले पौनरुक्त्य-न्यूनत्व-बाधितत्वेतिदोषत्रयापातात्। तथाहि– प्रतिनिधिविचारे मुख्यद्रव्यस्य प्रतिनिधेश्चोपादानमुपकल्पनान्तम्, मुख्यप्रयोजनपूर्वभाविसंस्कारान्तम्, मुख्यप्रयोजननिर्वृत्त्यन्तं चेति त्र्यवस्थमभिप्रेयते इति प्रथमतोऽवधेयम्। टीकाकृता प्रथमश्लोके 'उपात्ते' 'यस्मिन् कस्मिन्' इति विशेषणद्वयस्य प्रतिनिधिपरत्वमुक्तम्। 'सजातीयं विजातीयम्' इति पदद्वयस्य प्रतिनिधिपरत्वं निर्विवादमेव । नात्र पूर्वार्धे उत्तरार्धे च प्रतिनिधिभेदो विवक्षितः, उत्तरत्र पूर्वपरशब्दाभ्यां मुख्यप्रतिनिध्योर्ग्रहणात् । एवं च 'यस्मिन् कस्मिन् वा प्रतिनिधौ उपात्ते सति सजातीयं विजातीयं वा प्रतिनिधिमुपादाय' इति वाक्यव्यक्तिः संपन्ना। तथा च पौनरुक्त्यम् । प्रथमश्लोकद्वये टीकानुसारेण मुख्यस्योपादानस्यानुक्तावपि 'उपात्तत्वाविशेषेऽपि' इत्यत्र उभयोपादानस्य सिद्धत्वेनाभिधानात् न्यूनत्वं च । विंशे श्लोके टीकाकारेण प्रतिनिध्युपादानस्य संस्कारान्तत्वाभिधानात् 'प्रतिनिधिनैव समापनम्' इति निर्णयस्य मीमांसान्यायबाधितत्वं च। तथाहि– "प्रवृत्तेऽपीति चेत्" (जैसू. ६।३।१७।२६), 'नानर्थकत्वात्' (जैसू. ६।३।१७ (१८)। ३७) इत्यधिकरणद्वयपक्षे प्रथमाधिकरणेन 'संस्कारान्ते प्रतिनिध्युपादानेऽप्यनिर्वृत्ते प्रयोजने मुख्येनैव समापनम्' इति सिद्धान्तः स्थापितः। एकाधिकरणपक्षे तु 'मुख्याधिगमे मुख्यमागमो हि तदभावात्' (जैसू. ६।३।१६। ३५) इति पूर्वाधिकरणेनैवास्यार्थस्य सिद्धिः। तथा च प्रतिनिध्युपादानस्य संस्कारान्तत्वस्वीकारेण 'गौणेनैव समाप्यते' इति निर्णयस्य मीमांसासिद्धान्तविरोधः स्पष्ट एव । तस्माच्चिन्त्यमिदं व्याख्यानम्। श्लोकत्रयस्यास्माकं प्रतिभासमानः सरलार्थस्त्वेवम्– प्रथमश्लोके 'उपात्ते, यस्मिन्कस्मिन्' इति 'मुख्ये' इत्यस्य विशेषणे । 'यस्मिन्कस्मिन्' इति षोडशश्लोकप्रकृतवैकल्पिकमुख्यद्रव्याभिप्रायेण । अपचारो लाभाभावो विनाशो वा। अत्र तु विनाश एव। शेषान्वयस्तुल्यः । अत्र मुख्योपादानं संस्कारान्तम्, प्रतिनिध्युपादानं प्रयोजननिर्वृत्त्यन्तम् । एवं च 'उपात्ते' 'उपादाय' इत्युपादनयोर्भेदान्न पौनरुक्त्यम्, मुख्यस्याप्युपादानस्योक्तत्वान्नापि न्यूनता । विंशे श्लोके प्रतिनिध्युपादानं प्रयोजननिर्वृत्त्यन्तमेव । तेन न मीमांसान्यायविरोधः ।

खदिरे कर्तव्यमिति मन्वानस्योत्तरमाह– उपात्ते इति । अत्रोपात्तत्वं पशुनियोजनादिकार्याभिनिर्वृत्तिपर्यन्तत्वं ग्राह्यम्, न ततः प्राक्, तत्र विशेषस्य वक्ष्यमाणत्वात् । कृते नियोजने लब्धोऽपि खदिरो निरर्थक एव । नियोजनार्थं हि तदुपादानम् । तच्च कृतं गुणानुरोधेन नाऽऽवर्तयितव्यम् । अतो नाऽऽदर्तव्यः खदिरः । तदुक्तम् 'नानर्थकत्वात्' (जैसू. ६।३।३७) इति । यस्मिन् कस्मिन्निति । न्यायप्राप्तप्रतिनिधौ वाचनिके वा । विजातीयमिति । वाचनिकत्वेन मन्दसदृशमपि । उपात्तत्वस्याविशेष उपात्तत्वसामान्येन, न तु कार्याभिनिर्वृत्तिरूपेण । तेन च वैलक्षण्यम् । पूर्वं खादिरादि । परं कदरादि । एवं व्रीह्यादिष्वपि द्रष्टव्यम् ।

पदप्र.

**[1]उपात्ते तु प्रतिनिधौ मुख्यार्थो लभ्यते यदि ।**
**तत्र मुख्यमनादृत्य गौणेनैव समाप्यते ॥**

यदा तु प्रतिनिधावुपात्ते तक्षणप्रोक्षणपेषणादिसंस्कारकरणोत्तरमपि मुख्यकार्योपयोगाच्च प्राक् मुख्यलाभे तु निर्णयमाह– उपात्ते इति । अत्रोपात्तत्वं संस्कारकर्मावसानावसायीति ज्ञेयम्, ततः प्राक् च पूर्वनिर्णीतत्वात् । इदं च गतत्वादाक्षिप्तमिति केचित् । पदप्र.

ननु– प्रयोजननिर्वृत्त्यन्तप्रतिनिध्युपादानस्य तदनुसारिणः 'प्रतिनिधिनैव समापनम्' इति निर्णयस्य च पूर्वश्लोकोक्तस्यैव विंशे प्रतिपादनात् भवत्पक्षेऽपि पौनरुक्त्यमापतितमेवेति चेत्– न, निर्णयस्योभयत्र समानत्वेऽपि पूर्वत्र मुख्यप्रतिनिध्योरुभयोरुपादानम्, विंशे तु प्रतिनिधेरेवेति परिस्थितेर्भेदात् । प्रतिनिधेरुपकल्पनान्तोपादानसत्त्वे तु निर्णयः सप्तदशेनैव कृत इति ।

प्रतिनिध्यपचारे मुख्यसदृशस्यैव ग्राह्यता

**[1]मुख्याभावे यदा गौणमुपात्तं सद्विनश्यति ।**
**तत्र मुख्योपमं गौणं ग्राह्यं गौणोपमं न तु ॥**

अथ व्रीह्यभावे प्रतिनिधित्वेन नीवारैः प्रयोगे प्रारब्धे नीवाराणामपहारादिनाऽभावे सति किं प्रतिनिधीभूतनीवारसदृशमुपादेयमुत मुख्यद्रव्यं व्रीहिरूपं तत्सदृशं वेति । तत्र यथैव वैकल्पिकेष्वेकस्मिन् प्रवृत्ते तस्यैव तत्प्रयोगाङ्गत्वात्तदपचारे वैकल्पिकान्तरं मुख्यमपि तत्प्रयोगानङ्गत्वान्नोपादीयते । तथैव प्रतिनिधौ प्रवृत्ते तस्यैव तस्मिन् प्रयोगेऽङ्गत्वात्तदपचारे तत्सदृशमेवोपादेयं न तु मुख्यं तत्सदृशं वा, तस्य प्रयोगानङ्गत्वात्, इति प्राप्ते सिद्धान्तमाह– मुख्याभावे इति । प्रतिनिधौ नीवारे विनष्टे मुख्यलाभे मुख्यमेव ग्राह्यम्, तदलाभे नीवारभिन्नं व्रीहिसदृशमेवेति, न तु कदाचिन्नीवारसदृशमित्यर्थः । न हि नीवाराणामङ्गत्वमस्ति, श्रुतिलिङ्गादिप्रमाणाभावात् ।

पदप्र.

प्रधानमात्रपर्याप्तस्यापि मुख्यस्यैव ग्रहणम्, न तदधिकस्यापि प्रतिनिधेः

**[2]संस्काराणामयोग्योऽपि मुख्य एव हि गृह्यते ।**
**न तु संस्कारयोग्योऽन्यो गृह्यते प्रतिरूपकः ॥**

**[3]अवत्तमात्रपर्याप्तव्रीहिद्रव्यस्य संभवे ।**
**पुरोडाशमहत्त्वार्थं न नीवारपरिग्रहः ॥**

यदा पुनरश्वशफपरिमाणाय शेषकार्येभ्यश्चापर्याप्ताः पुरोडाशजातिमात्राभिव्यक्तिसमर्था व्रीहयोऽल्पेऽपि

---

(१) त्रिम. २।२० ; स्मृसार. ३९ मुख्यार्थो (मुख्योऽर्थो) समाप्यते (समापयेत्) ; प्रपा. ४५ मुख्यार्थो (मुख्यं वै) ; मुक्ता. १६ लभ्यते यदि (यदि लभ्यते) समाप्यते (समापयेत्) स्मृत्यर्थसारे : ३६२ तत्र (तदा) समाप्यते (समापयेत्) स्मृत्यर्थसारे ; विपा. १७२ (भागः २) (=).

(१) त्रिम. २।२१ ; स्मृसार. ३९ सद्वि (सद्वि) ; मुक्ता. १६ स्मृत्यर्थसारे : ३६२ मुख्याभावे (मुख्यालाभे) स्मृत्यर्थसारे ; आन. ६९ (=) मुख्याभावे (मुख्यालाभे).

(२) त्रिम. २।२२ ; स्मृसार. ३९ ; मुक्ता. ३६१ न तु (न हि) स्मृत्यर्थसारे ; आन. ६९ (=) न तु (न हि).

(३) त्रिम. २।२३ ; स्मृसार. ३९ व्रीहि (मुख्य) ; मुक्ता. ३६१ पूर्वार्धे (कार्यनिर्वृत्तिपर्याप्तमुख्यद्रव्यस्य संभवे ।) स्मृत्यर्थसारे ; आन. ६९ (=) मुक्तावत्.

लभ्यन्ते, तदा तैरेव पुरोडाशः कर्तव्य उत नीवारैरिति संशयः । तत्राश्वशफपरिमाणस्य भूयसां शेषकार्याणां चानुग्रहाय व्रीहिशास्त्रमेकं बाधितव्यम् । किंच, प्रतिनिध्युपादाने तस्य नात्यन्तबाधोऽपि । व्रीह्युपादाने हि शेषकार्याणामत्यन्तलोपः स्यात् । अतो नीवारा एवोपादेया इति पूर्वपक्षे प्राप्ते सिद्धान्तमाह– संस्कारणामिति द्वाभ्याम् । संस्कारास्तक्षणमहत्त्वादयः । अयोग्यत्वं चाल्पतया । अन्यः नीवारकदरादिः । पदप्र.

मुख्यस्य प्रधानापर्याप्तत्वे प्रतिनिधेरेव ग्रहणम्

**[1]मुख्ये कार्यासमर्थे तु लब्धेऽप्येतस्य नाऽऽदरः ।**
**प्रतिरूपमुपादाय शक्तं तेन प्रयुज्यते ॥**

यदा तु प्रधानयागाक्षमा व्रीहयो लभ्यन्ते, तत्रापि पूर्ववत्प्रतिनिध्यनुपादानशङ्कां परिहरति– मुख्ये इति । एतस्य मुख्यस्य । शक्तं समर्थम् । प्रतिरूपं प्रतिनिधिम् । अनादरः( ? नाऽऽदरः ) अग्रहणम् । पदप्र.

द्रव्यगुणविरोधे द्रव्यानुरोधेन प्रतिनिधानम्, न गुणानुरोधेन

**[2]कृष्णव्रीह्यादिके द्रव्ये शिष्टेऽपचरिते सति ।**
**ग्राह्योऽकृष्णोऽपि सन् व्रीहिर्नाव्रीहिः कृष्णगुण्यपि ॥**

अथ यत्र द्रव्यगुणविरोधस्तत्र कथम् ? तद्यथा– 'नैर्ऋतः परिहृत्यै कृष्णव्रीहीणां नखनिर्भिन्नानाम्' इति । तत्र संशयः । ये व्रीहयः सन्ति मुख्याः ते अकृष्णाः । ये च नीवारास्ते कृष्णाः । तत्र किं मुख्यद्रव्यमनादृत्य गुणानुरोधेन नीवारोपादानम्, उत कृष्णं गुणमनादृत्य मुख्यद्रव्यं व्रीहयः ? इति । तत्र व्रीहीणामुपादाने कृष्णगुणहानिः सर्वथा, नीवाराणामुपादाने तस्यानुग्रहः, व्रीहिशास्त्रमपि किंचिन्न्यूनं संपादितं भवति । अतः कृष्णानां नीवाराणामुपादाने प्राप्ते आह– कृष्णेति । अपचरितं अभावः$ । अव्रीहिः नीवारादिः । पदप्र.

प्रतिनिधिसादृश्यप्रयोजकसाधर्म्याणि, तेषां बलाबलं च

**[1]कार्यै रूपैस्तथा पर्णैः क्षीरैः पुष्पैः फलैरपि ।**
**गन्धै रसैः सदृग्ग्राह्यं पूर्वाभावे परं परम् ॥**

अथ मुख्यद्रव्यालाभे सुसदृशं ग्राह्यमिति प्राक् प्रपञ्चितम् । तत्र सुसदृशालाभे मन्दसदृशं न ग्राह्यम् । तदलाभे तु मन्दसदृशमपि । क्वचित्तु सुसदृशालाभेऽपि वचनान्मन्दसदृशमपि गृह्यते, यथा पूतिकाः । तत्रोभयोः परिज्ञानार्थमाह– कार्यैरिति । यत्र बहुधर्माणां संभवस्तत्र सुसदृशत्वम्, अन्यत्र मन्दसदृशत्वम् । अथवा यत्र पूर्वपूर्वधर्मस्थितिः तत्र सुसदृशत्वम्, अन्यत्र मन्दसदृशत्वम् । अत एवाऽऽह– पूर्वेति । पूर्वस्य कार्यादिकस्य । परम् उत्तरम् । कार्यैरिति पुरोडाशादिरूपकार्यनिष्पादकसामान्यैरित्यर्थः । पदप्र.

मुख्यं हविस्तत्प्रतिनिधयश्च, निषिद्धद्रव्याणि

**[2]हविर्व्रीहिमयं कार्यं यद्वा यवमयं भवेत् ।**
**तयोरभावे श्यामाका नीवारा वा हविर्भवेत् ॥**

प्रतिनिधौ सुसदृशं ग्राह्यमित्युक्तम् । तच्च रूपादिना ज्ञातव्यम् । तदेव विशदयति– हविरिति । यत्र सामान्येन चरुपुरोडाशचोदना तत्र व्रीहीन् यवान् वा प्रतीयात् । तदाह कात्यायनः– 'व्रीहीन् यवान् वा हविषि' इति । यत्र विशेषतो द्रव्यचोदनाऽस्ति तत्र नेदं शास्त्रम्, यथा 'गावेधुकं चरुं निर्वपेत्' इति । तथा व्रीहियवालाभे

$ अपचरितपदस्य द्रव्यसामानाधिकरण्यात् 'अपचारोऽभावः' इति व्याख्यातुमुचितम् ।

(१) त्रिम. २।२४ ; स्मृसार. ३९.

(२) त्रिम. २।२५ ; स्मृसार. ३९ शिष्टेऽपचरिते ( शिष्टे यचरिते ) ; मुक्ता. ३६२ शिष्टेऽपचरिते ( शिष्टे प्रचरिते ) कृष्णगुण्यपि ( कृष्ण इत्यपि ) स्मृत्यर्थसारे.

(१) त्रिम. २।२६ पर्णैः ( वर्णैः ) ; स्मृसार. ३९ सदृक् ( सदा ) ; मुक्ता. ३६१ कार्यै ( कार्ये ) ग्राह्यं (ग्राह्यः) परं परम् ( परः परः ) स्मृतिरत्ने.

(२) त्रिम. २।२७ ; स्मृसार. ३९ ( व्रीहिर्यवो वा श्यामाको नीवारो वा हविर्भवेत् । ) ; संग. ३६.

सुसदृशं श्यामाकनीवाररूपमेव, नान्यत् । अप्रक्रान्तविषयमिदम् । अतस्तदेव ग्राह्यम् । पदप्र.

**[1]वेणुयवा गोरसं वा कन्दं मूलं फलं जलम् ।**
**सत्यं वा हविरेतेषां यथासंभवमाहरेत् ॥**

तस्याप्यलाभे मन्दसदृशमाह- वेणुयवा इति । गोरसं दधिदुग्धादि । अनिषिद्धं कन्दादि हविः । फलं यज्ञियवृक्षीयम् । जलं वृक्षकषायः सारो वा । सर्वालाभे वाचनिकं प्रतिनिधिमाह- सत्यमिति । सत्यं सत्यभाषणम् । 'पूर्वाभावे परं परम्' इत्यस्यानुवृत्त्यर्थमाह- यथेति । पदप्र.

**[2]प्रतिनिध्यन्तरं सत्यं विज्ञेयं हविरत्यये ।**
**प्रधानदेवतोद्देशात्संत्यजेत्सत्यमात्मना ॥**

ईषदपि सादृश्याभावेन प्रतिनिध्य( ? निधित्वा )-संभवादाह- प्रतिनिध्यन्तरमिति । वचनात् प्रतिनिधित्वमस्य । अतः प्रतिनिध्यन्तरं वक्ष्यमाणं वाचनिकप्रतिनिधित्वम्, न तु न्यायप्राप्तम् । सत्यस्य यागसाधनत्वमाह- प्रधानेति । तथा च 'अग्नयेऽग्नीषोमाभ्यामिदं सत्यं न मम' इति प्रयोगः । पदप्र.

**[3]अतोऽन्यदपि वा ग्राह्यं सदृशं धान्यमात्रकम् ।**
**न ग्राह्याः सर्वदा माषा वरटाणुककोद्रवाः ॥**

वेणुयवादीनामुपलक्षणार्थत्वमाह- अत इति । अतः उक्तेभ्योऽन्यत् । सदृशं मन्दसदृशम् । 'मौद्गं चरुं निर्वपेत्' इति श्रुतम् । तत्र मुद्गाभावे सुसदृशानां माषाणां प्रतिनिधित्वेन प्राप्तेस्तदर्थं सुसदृशमपि निषिद्धं न प्रतिनिधेयमित्याह- न ग्राह्या इति । सर्वदा सुसदृशालाभे सुसदृशा अपि माषा मुद्गाभावे न प्रतिनिधेया इति भावः । 'अयज्ञिया वै माषा अयज्ञिया वरटाः' इति तेषामयज्ञियत्वकथनेन तन्निषेधात् । तथा व्रीह्यभावे अणवः कोद्रवाश्चायज्ञियाः न प्रतिनिधेयाः । पदप्र.

**[1]यद्वा व्रीहियवाभावे तुषतण्डुलयोगिनीः ।**
**औषधीः परिगृह्णीयादणुकोद्रववर्जिताः ॥**

प्रकारान्तरेण सुसदृशत्वमुपदेशयितुमाह- यद्वेति । तुषतण्डुलवत्त्वेन साधर्म्ये व्रीहियवाभावे ओषधीषु ज्ञातव्यम् । अणुकोद्रवाणां तु तत्त्वेऽपि निषिद्धत्वान्न प्रतिनिधिग्रहणम् । पदप्र.

**[2]ग्राम्याणां वा भवेद्ग्राम्यमारण्यानामरण्यजम् ।**
**यवाभावे तु गोधूमास्ततो वेणुयवादयः ॥**

अधुना तेष्वेव सुसदृशत्वं प्रकारान्तरेणाऽऽह- ग्राम्याणामिति । उदाहरणार्थमाह- यवाभावे इति । यवसमीपद्रव्याभावे, सामीप्यवर्णाकृत्यादिषु सामीप्यं बलवदिति न्यायात् । तस्मात् यवाभावे व्रीहय एव ग्राह्या इति । गोधूमाभावे वेणुयवाभावे ओषधयः । ग्राम्याणां प्रतिनिधिः ग्राम्यः । आरण्यानामारण्यः । तदभावे तुषतण्डुलयोगिन्य ओषधयः, सामीप्यात् । तस्याभावे गोधूमाः, आकृतिसाम्यात् । तदभावे वेणुयवादयः, जातिसाम्यात् । सामीप्यं च ग्राम्यत्वे सति चोदनागतयागसाधनत्वम् । 'क्लृप्तकल्प्ययोः क्लृप्तं बलवत्' इति न्यायाच्च । एवं च, तुषतण्डुलयोगित्ववशात्क्रमप्यनुगृहीतं भवति । प्रपञ्चितं चैतदाश्वलायनसूत्रभाष्ये । गोधूमानामहविष्ट्वं चोक्तं स्मृतौ- 'तिलमुद्गादृते शैम्ब्यं सस्ये गोधूमकोद्रवौ ।' इति । 'अक्षारलवणं हौम्यम्' इति धर्मसूत्रम् । गोधू-

---

( १ ) त्रिम. २।२८ ; स्मृसार. ३९ पूर्वार्धे ( वेणुर्यवाः स्वरसं वा कन्दमूलफलं जलम् । ) रेतेषां ( रेतेषु ) माहरेत् ( माचरेत् ) ; मुक्ता. ३६१ ( यद्वा यज्ञियवृक्षस्य कन्दं मूलं फलं जलम् । सत्यं वा हविरेतेषु यथासंभवमाचरेत् ॥ ) स्मृत्यर्थसारे ; संग. ३६ कन्दं मूलं फलं ( कन्दमूलफलं ).

( २ ) त्रिम. २।२९ ; स्मृसार. ३९ मात्मना (मात्मनः) मुक्ता. ३६१ पू. स्मृत्यर्थसारे ; संग. ३६ स्मृसारवत्.

( ३ ) त्रिम. २।३० ; स्मृसार. ४० उत्तरार्धे ( न ग्राह्यं सर्वथा माषवरकोदारकोद्रवम् ॥ ) ; मुक्ता. ३६१ ( न ग्राह्यं सर्वथा माषवरकोदारकोद्रवम् ॥ ) उत्त., स्मृत्यर्थसारे ; संग. ३६ उत्तरार्धे (न ग्राह्यं सर्वथा माषमसूरदरकोद्रवम् ॥ ).

( १ ) त्रिम. २।३१ ; स्मृसार. ४० औषधीः परि ( ओषधीः प्रति ) दणुको ( दाणुको ) ; संग. ३६ औषधीः परि ( ओषधीः प्रति ).

( २ ) त्रिम. २।३२ ; स्मृसार. ४० ; संग. ३६.

मध्यपूर्वार्धे अवदेये न विकल्पस्येति चेत्, तन्न, शा( ? अशा )स्त्रार्थत्वात्। 'मध्यादवद्यति' इत्येतावदेव श्रूयते, न तु 'सकलस्य पुरोडाशस्य मध्यात्' इति। 'तस्मात् पूर्वशेषादेवावदेयम्'। तन्न, 'गुणहानौ तु शेषभावात्' ( काश्रौ. १।१२६ )। हविषो मध्यपूर्वार्धभागस्य यागं प्रति गुणभूतस्य यागसाधनभूतस्य हानौ नाशे सति न पूर्वशेषादवदेयम्। कुतः ? शेषभावात्। शेषत्वादेव। तस्यावशिष्टस्य शेषकार्यार्थत्वादित्यर्थः। कृत्स्नस्य हि पुरोडाशस्य यो मध्यदेशस्तदपादानको यस्तस्योपरितनोऽङ्गुष्ठपर्वमात्रावयवः सोऽवदातव्यः। अन्यस्त्ववदेयस्यापादानभूतः। न चासाववदातव्यः। स त्विडादिशेषकार्यार्थः। अतो नासौ हविः। यत्तु हविः तद्विनष्टम्। तद्विनाशे च हविरन्तरमेवोत्पाद्यम्। यदा च द्व्यवदानस्यैव यागार्थता, ततस्तद्विनाशे शेषस्य कार्या( ? यागा )र्थत्वाभावात् द्रव्यान्तरं यागार्थमुत्पाद्यम्। यदाऽपि समस्तपुरोडाशसाध्यो यागस्तदाऽपि द्व्यवदाननाशे तस्य विकलत्वादविकलं हविरन्तरमुत्पाद्यम्। तस्मात् साधूक्तम् 'अवत्तनाशेऽन्यत्' इति। तदुक्तम्— 'संस्काराणां पुरोडाशे द्व्यवदानं प्रयोजकम्। तद्विनाशाच्च नष्टास्ते नावदेयमतस्ततः॥ गृहीतौ मध्यपूर्वार्धौ तौ विनष्टावुभावपि। अतः शेषस्य शेषत्वात्प्रधानत्वं न युज्यते॥' इति। अत एवाऽऽश्वलायनग्रहणं कुर्वन्नेकदेशिमतमिति सूचयति। अन्यहविषोऽसंभवे तु वक्ष्यते— 'येषां केषांचिदन्येषां हविषामप्यसंभवे। सर्वत्राऽऽज्यमुपादेयं भरद्वाजमुनेर्मतात्॥' इति।

पद्प्र.

पशुप्रतिनिधिसाधर्म्यम्

**पशावुपाकृते याते मृते वाऽस्मिन्नकामतः।**
**अन्यं तद्रूपतद्वर्णतद्वयस्कमुपावहेत्॥**

अथ प्रसङ्गादाह— पशाविति। उपाकृते उपाकरणे कृते सति याते पलायिते मृते वा अन्यं पश्वन्तरमुपावहेत् आलभेत। तदुक्तं कात्यायनेन— 'पशुश्चेदुपाकृतः पलायेत वायवे तमनूद्दिश्यान्यं तद्वर्णं तद्वयसमालभेत' इति। अकामत इति। पलायनोत्तरं महता प्रयत्नेन अन्वेषितव्यः। ततोऽप्यलाभेऽन्यमालभेतेति भावः। मरणे तु विशेषमाह कात्यायनः— 'प्राक् प्रयाजेभ्यश्चेन्नियुक्तो म्रियेतान्यमालभेत। पूर्वस्य वपां दक्षिणाग्नौ जुहुयात् सोमश्चेन्मार्जालीये ईजानाः पितरः' इत्यादि। पद्प्र.

प्रतिनिध्युपाकरणोत्तरं प्राप्तस्य पूर्वपशोरनादरणम्

**तस्मिन्नुपाकृते पूर्वः पशुः संप्राप्यते यदा।**
**नाऽऽद्रियेत तदा पूर्वमुपालम्भः परस्य वा॥**

पश्वन्तरोपादाने कृते यदि पूर्वो लब्धः स्यात्तदा किं कुर्यादित्यत आह— तस्मिन्निति। पूर्वं पशुं नाऽऽद्रियेत। परस्योपालम्भः। पूर्वस्योपालम्भो वायवेऽनुपालम्भो वा। तदुक्तम्— 'उपालभ्यं( ? ध्यं ) तं वायवे तम( ? तद )नादरणं वा' इति। पद्प्र.

गवाश्वौ छागमेषौ च परस्परं प्रतिनिधी

**पशुप्रतिनिधी ज्ञेयौ गौरश्वश्च परस्परम्।**
**पशुयागप्रसिद्ध्यर्थं छागमेषौ परस्परम्॥**

पशौ पलायिते तस्मिन् अनुपलभमाने च प्रतिनिधिमाह— पश्विति। अश्वगवयोरन्योन्यं प्रातिनिध्यम्, सामान्यात्। एवं छागमेषयोः। पद्प्र.

जातिदोषाभावयोर्विरोधे दोषाभावो बलीयानिति मतम्, दोषगणना च

**कूटकर्णस्तथा काणः खण्डो वण्डस्त्वपन्नदन्।**
**श्रोणः सप्तशफश्चेति न स्यात्प्रतिनिधिः पशोः॥**

ननु सामान्यं प्रतिनिधावुपादेयमिति ( उक्तम् )। ततश्च ( अविकल )च्छागाभावे मेषापेक्षया सामान्यात् ( कार्यात् ? ) ( अविकलः ) छाग उपालम्भितव्य इति प्राप्ते आह— कूटेति द्वाभ्याम्। कूटकर्णः छिन्नकर्णः। काणः एकाक्षः। खण्डः अपुच्छः। वण्डः भग्नपृष्ठः। अपत् एकेन द्वाभ्यां त्रिभिर्वा चरणैर्हीनः। अदन् अदन्तः। श्रोणः अमुष्कः। सप्तशफः एकेन शफेन न्यूनः। तथा एकशफाश्वाकारचरणाग्रः। एते मुख्या अपि यथोक्तच्छागाभावे नोपादेयाः, किं तु मेष एवोपादेयः। पद्प्र.

**अभक्ष्यत्वादेकशफो होमकार्येषु न क्वचित् ।**
**ग्राह्यः प्रतिनिधित्वेन सत्याषाढनिरूपणात् ॥**

तत्र हेतुमाह– अभक्ष्यत्वादिति । दुष्टत्वादिति भावः । तदाह कात्यायनः– 'शिष्टभक्ष्यप्रतिषिद्धं दुष्टम्' इति । पदप्र.

जातिदोषाभावयोर्विरोधे जातिर्बलीयसीति मतम्

**भरद्वाजस्तु नातीव निषिद्धं द्रव्यमाहरेत् ।**
**सामान्यचोदितं क्वाऽपि विशेषे विनिवारितम् ॥**

सत्याषाढमतमुक्त्वा भरद्वाजमतमुपन्यस्यति– भरद्वाज इति । अतीव निषिद्धम्, 'अयज्ञिया माषाः' इत्यादि । अधिकरणमवतारयति– सामान्येति । यथा 'अग्नीषोमीयपशुमालभेत' इत्यादि सामान्येन श्रुतम् । क्वापि कुत्रापि विशेषशास्त्रे विनिवारितं निषिद्धम् । पदप्र.

**अनिषिद्धविशेषत्वमलब्धं चेज्जिघृक्षया**
**( ? क्षता ) ।**
**तत्र जात्यन्तरं किं तत्सदृशं गृह्यतामुत ॥**
**तज्जातीयो विशेषो वा निषिद्ध इति संशये ॥**

विचारविषयमाह– अनिषिद्धेति । अनिषिद्धो वाक्येन विशेषो यस्मिन्$ तादृशमलब्धं चेदित्यर्थः । संशयमाह । जिघृक्षये( ? क्षते )ति । पदप्र.

$ टीकाकृताऽत्र त्वप्रत्यय उपेक्षितः । तत्स्थाने किंचिदक्षरान्तरमपि न टीकातः प्रतीयते । ततश्च न्यूनाक्षरत्वाच्छ्लोकप्रासभङ्गापातः । यथाश्रुतं त्वेवं योजनीयम्– यदा विशेषशब्दः करणवचनस्तदा निषिद्धो विशेषः विशेषणं कूटकर्णत्वादि यस्य व्यक्तिरूपद्रव्यस्य तत् निषिद्धविशेषम्, तस्य भावः निषिद्धविशेषत्वं कूटकर्णत्वादि विशेषणम्, अविद्यमानं निषिद्धविशेषत्वं यस्य व्यक्तिद्रव्यस्य तत् तथा । अनिषिद्धो व्यक्तिविशेष इति तात्पर्यार्थः । यदा तु विशेषशब्दः कर्मवचनः, तथा च विशिष्टं व्यक्तिद्रव्यं तदर्थः, तदा विशेषस्य कूटकर्णत्वादिविशिष्टव्यक्तिद्रव्यस्य भावः विशेषत्वं कूटकर्णत्वादि विशेषणम्, निषिद्धं विशेषत्वं यस्य व्यक्तिद्रव्यस्य तत् निषिद्धविशेषत्वम्, तद्भिन्नम् अनिषिद्धविशेषत्वम् । तात्पर्यार्थस्तु पूर्ववदेवेति ।

**वरं जात्यन्तरं ( ? न्तरात् ) तत्र निषिद्धोऽपि**
**स्वजातिमान् ।**
**अकूटच्छागालाभे स्याच्छागः कूटोऽपि न**
**त्वविः ।**
**कूटच्छागाद्यभावे स्यान्मेषादिरिति भाष्यते ॥**

पूर्वोक्तं सत्याषाढमतं पूर्वपक्षीकृत्योत्तरपक्षमाह– वरमिति । मेषविषयमाह– कूटेति । पदप्र.

**तस्माद्द्रव्यान्तराणां च निषिद्धानामशेषतः ।**
**धान्यकाष्ठतृणादीनामादानं युज्यते क्वचित् ॥**

एवमेव न्यायमोषध्यादिद्रव्येष्ववतारयति – तस्मादिति । धान्यं व्रीह्यादिषु । काष्ठं पलाशेध्मे । तृणं बर्हिषि । एतन्मतस्यास्वरसादाह– क्वचिदिति । पदप्र.

पश्ववदाननाशे घृतं प्रतिनिधिः, सर्वावदाननाशेऽपि घृतमेवेति मतम्

**प्राप्तं पश्ववदानानां यावतामवलोपनम् ।**
**तावत्कृत्वो घृतं ग्राह्यमपि सर्वविलोपने ॥**

पश्ववदानहानौ पूर्वोक्तन्यायेन अन्यपश्वालम्भप्राप्तौ सिद्धान्तमाह– प्राप्तमिति । पदप्र.

सर्वपश्ववदाननाशे पश्वन्तरं प्रतिनिधिरिति मतान्तरम्

**अन्ये पश्ववदानानां निःशेषमवलोपने ।**
**तत्राऽऽज्यं न ग्रहीतव्यं पशुरेवेति मन्वते ॥**

अन्याचार्यसिद्धान्तमाह– अन्य इति । एकस्य द्वयोस्त्र्यादीनां नाशे चाऽऽज्येनाव( ? ज्यमा )देयम् । सर्वावदाननाशे पश्वन्तरमेवेति मन्यन्ते । पदप्र.

हृदयनाशे पश्वन्तरं घृतं वा प्रतिनिधिरिति मतद्वयम्

**हृदयस्य विनाशे तु पशुमन्यं प्रयोजयेत् ।**
**यद्वा कातीयसूत्रेण तत्स्थानेऽपि घृतं भवेत् ॥**

हृदयमात्रनाशे विशेषमाह– हृदयस्येति । 'हृदयं पशुः' इति वचनात् । कात्यायनमतमुपन्यस्यति– यद्वेति । तत्स्थाने हृदयस्थानेऽपि । तथा चाऽऽह कात्यायनः– 'सर्वेषां वाऽऽज्यस्य जुहुयादर्थवादमात्रं पशुवचनम्' । पदप्र.

वपानाशे पश्वन्तरं घृतं वा प्रतिनिधिरिति मतद्वयम्

**पश्वावृत्तिर्वपानाशे न त्वाज्यं तत्र गृह्यते ।**
**भरद्वाजमतादन्ये तत्राप्याददते घृतम् ॥**

वपानाशे विशेषमाह– पश्वावृत्तिरिति । भरद्वाजमतेनाऽऽह– भरद्वाजेति । पदप्र.

पश्वन्तरालम्भपक्षे पूर्वपशुशेषस्य प्रतिपत्तिः

**यदा पश्वन्तरालम्भपक्षोऽत्र परिगृह्यते ।**
**नष्टशेषं पशोर्भागमुत्करे संत्यजेत्तदा ॥**

यत्र यत्र पश्वन्तरालम्भो विहितोऽस्ति तत्र पूर्वपशोः प्रतिपत्त्यर्थमाह– यदेति । पदप्र.

आज्यस्य सर्वप्रतिनिधित्वम्

[1]**येषां केषांचिदन्येषां हविषामप्यसंभवे ।**
**सर्वत्राऽऽज्यमुपादेयं भरद्वाजमुनेर्मतात् ॥**

उक्तार्थमुपसंहरति । पशुनाशवद्धविरन्तरासंभवेऽपि आज्यमुपादेयमित्याह– येषामिति । स्पष्टम् । पदप्र.

बर्हिरर्थे कुशा मुख्याः, कुशप्रतिनिधयः, तत्र मतान्तरं च

[2]**बर्हिः कुशमयं ग्राह्यं न लभ्यन्ते कुशा यदि ।**
**शरशैर्यमुतवाश्ववालमौञ्जार्जुनेक्षवः ॥**

[3]**सुगन्धितेजना दारुदूर्वाक्षीरद्रुमा अपि ।**
**कुशाभावे ग्रहीतव्या बर्हिःकार्ये पृथक् पृथक् ॥**

कुशमयं बर्हिरिति तावन्मुख्यः कल्पः । तदसंभवे शरादयो ग्राह्याः । पदप्र.

[1]**यद्वा सर्वतृणेभ्योऽपि ग्राह्यं बर्हिर्यथेप्सितम् ।**
**शुकशुम्बकृष्णमूलदुर्गन्धितृणवर्जितम् ॥**

मतान्तरमाह– यद्वेति । शुकशुम्बादिवर्जनं यथा भवति तथा सर्वतृणेभ्यो बर्हिर्ग्राह्यम् । शुकशुम्बादिवर्जितेभ्यः सर्वतृणेभ्य इति यावत् । पदप्र.

[2]**बौधायनादिभिः प्रोक्तो विधिरत्र मतात्पुनः ।**
**सूकलानेकलांश्चापि वर्जयन्त्यपरे बुधाः ॥**

बौधायनादिभिरिति । सोऽयं बौधायनादिसंमतो विधिः । मतात्पुनरिति । मतादिति ल्यब्लोपे पञ्चमी । 'पुनरप्रथमे भेदे' इति कोषात् मतान्तरमाश्रित्यापरे सूकलानेकलांश्च वर्जयन्ति । 'सदृशानेकलांश्चापि' इति पाठान्तरम् । पदप्र.

[3]**कुशाभावे कठाः प्राहुः पर्वपल्लवदोषधीः ।**
**वरूकरत्तारकटकूपरिध्याधकवर्जिताः (?) ॥**

मतान्तरमाह– कुशाभाव इति । पदप्र.

---

(१) त्रिम. २१७३ ; स्मृसार. ४१ मप्यसंभवे (मथ संभवे) ; मपा. १८१ स्मृत्यर्थसारे ; आन. ६९ (=).

(२) त्रिम. २१७६ ; स्मृसार. ३७ कुशमयं (काशमयं) लभ्यन्ते कुशा (लभ्येत कुशौ) उत्तरार्धे (शरोर्यनुजवाश्चैव वालमौञ्जार्जुनेक्षवः ॥) ; प्रपा. ३४ कुशमयं (काशमयं) उत्तरार्धे (दारूशीरमुचथ्यांश्च वालमुञ्जार्जुनेक्षवः ॥) स्मृत्यर्थसारे ; प्र. ५० कुशमयं (काशमयं) उत्तरार्धे (शरोशीरमुचथ्याश्च वालमुञ्जार्जुनेक्षवः ॥) स्मृत्यर्थसारे ; मुक्ता. २३४ कुशमयं (काशमयं) शरशौर्यमुतवाश्व (शरैरकासूकलाश्च) स्मृत्यर्थसारे ; प्रका. ३४ प्रवत्, स्मृत्यर्थसारे.

(३) त्रिम. २१७७ ; स्मृसार. ३७ दारुदूर्वा (दार्वं दूर्वा) पू. ; प्रपा. ३४ सुगन्धितेजना (सुगन्धयोर्जुना) पू., स्मृत्यर्थसारे ; प्र. ५० तेजना (तेर्जुना) पू., स्मृत्यर्थसारे ; मुक्ता. २३४ दारु (दारा) पू., स्मृत्यर्थसारे ; प्रका. ३४ पू., स्मृत्यर्थसारे.

(१) त्रिम. २१७८ मूलदुर्गन्धि (तूलदुर्गन्ध) ; स्मृसार. ३७ यद्वा (यदा) शुकशुम्ब (शूलशुण्ड) ; प्रपा. ३४ शुकशुम्बकृष्णमूल (शुष्कमूलं कृष्णमूलं) स्मृत्यर्थसारे ; प्र. ५० ग्राह्यं (शस्तं) शुकशुम्ब (शुक्रमूल) स्मृत्यर्थसारे ; मुक्ता. २३४ (यद्वा सर्वतृणैर्वाऽपि ग्राह्यं बर्हिर्यथोचितम् । शुष्कशुण्डं कृष्टमूलं दुर्गन्धितृणवर्जितम् ॥) स्मृत्यर्थसारे ; प्रका. ३४ प्रवत्, स्मृत्यर्थसारे.

(२) त्रिम. २१७९ ; स्मृसार. ३७ सूकलानेकलांश्चापि (शूकलानेरकां श्चापि) उत्त. ; मुक्ता. २३४ नेकलांश्चापि (नेरकांश्चापि) उत्त., स्मृत्यर्थसारे.

(३) त्रिम. २१८० ; स्मृसार. ३७ कठाः (परे) पर्वपल्लव (पर्णवल्लस) उत्तरार्धे (वन्धूकशूकरेष्विष्टः परिव्याधकवर्जितः ॥).

[1]मुख्यान्येवेति भाषन्ते केचित्काशान् कुशाच्छ-रान् ।
बल्वजान्पुण्डरीकाणि यवव्रीहितृणान्यपि ॥

मतान्तरमाह— मुख्यानीति । काशकुशादयः सर्वे मुख्याः, न तु काशादीनां कुशप्रतिनिधित्वमित्यर्थः । पद्प्र.

मुख्य इध्मवृक्षः, तत्प्रतिनिधयः, निषिद्धवृक्षाश्च

[2]पालाशः खादिरो वेध्मो मुख्यः स्यात्तदलाभतः ।
शमीवटोदुम्बरज आश्वत्थस्तदलाभतः ।
वनस्पतीनां सर्वेषामिध्मः कार्यो विशेषतः ॥

इध्मः नाम अग्नीन्धनार्थः प्रादेशद्वयपरिमितकाष्ठरूपः । स च पालाशः खादिरो वेति मुख्यः कल्पः । तदसंभवे प्रतिषिद्धवर्जं सर्ववनस्पतीनां कार्यः । खादिरपालाशयोर्विकल्पः । पद्प्र.

[3]तत्रैतान् वर्जयेद्वृक्षान् कोविदारविभीतकौ ।
कपित्थं करभं राजवृक्षं शाकद्रुमं तथा ॥
[4]नीपं निम्बं करञ्जं च तिलकं शाल्मलीमपि ।
श्लेष्मातकमपि त्यक्त्वा ग्राह्योऽन्यः सकलो द्रुमः ॥

प्रतिषिद्धानाह— तत्रेति द्वाभ्याम् । एतांस्त्यक्त्वाऽन्यः सकलो द्रुमो ग्राह्य इति स्पष्टार्थमभिधानम् । पद्प्र.

उलूखलमुसलयोः प्रकृतिः प्रकृतिप्रतिनिधिश्च

[1]खादिरो मुसलः कार्यः पालाशः स्यादुलूखलः ।
यद्वोभौ वारणौ कार्यौ तदभावेऽन्यवृक्षजौ ॥

मुसलोलूखलयोर्विधिमाह— खादिर इति । पद्प्र.

दक्षिणार्थगवीप्रत्याम्नायाः

[2]न लभ्यन्ते यदा गावो दक्षिणार्थेन चोदिताः ।
प्रत्येकं तत्र निष्कः स्यात्तदर्धं पाद एव वा ॥

निष्कादयो गोः प्रत्याम्नायाः । निष्कस्त्वनेकधा स्मर्यते । तथा चामरः— 'साष्टे शते सुवर्णानां हेम्न्युरोभूषणे पले । दीनारेऽपि च निष्कोऽस्त्री' इति । दीनारो ब्रह्मगुप्तेन व्याख्यातः । यथा— 'दीनारो रूपकैरष्टाविंशत्या परिकीर्तितः । सुवर्णसप्ततितमो भागो रूपक उच्यते ॥' । मनुः— 'चतुःसौवर्णिको निष्कः' इति । पद्प्र.

मुख्यस्य बहुव्यक्तिकत्वे यथालाभं मुख्यव्यक्तीनां शेषे च प्रतिनिधिव्यक्तीनां ग्रहणम्

द्रव्याणामेकजातीनां बहूनां यत्र चोदना ।
तत्रार्धं मुख्यलाभेऽपि शेषे प्रतिनिधिर्भवेत् ॥
सर्वोऽपि मुख्य एव स्यात्सर्वो गौणोऽथवा भवेत् ।
इत्येवमेकरूपत्वे न युक्तः कर्तुमाग्रहः ॥

दक्षिणार्थगो–हेम–वस्त्राणां प्रत्याम्नायाः

गावो हेमानि वस्त्राणि चोद्यन्ते यत्र दक्षिणाः ।
तदभावे ददेन्मन्थांस्तत्संख्यानथवौदनान् ॥

मन्थास्तु 'दधिमधुसलिलेषु सक्तवः पृथगेते विहितास्त्रयस्तु मन्थाः ।' इति गृह्यासंग्रहे व्याख्याताः । पद्प्र.

---

(१) त्रिम. २१८१ ; स्मृसार. ३७ मुख्यान्येवेति भाषन्ते (मुख्यान् दर्भान् विशेषेण).

(२) त्रिम. २१८२ द्वितीयार्धं नास्ति ; स्मृसार. ३८ रो वेध्मो (रश्चेध्मो) ; प्रपा. ३८ (=) तृतीयार्धमात्रम् ; पप्र. १०५ म्बरज (म्बरजा) स्मृत्यर्थसारे ; मुक्ता. ३६० बरज आश्वत्थ (वरजा आश्वत्था) स्मृत्यर्थसारे.

(३) त्रिम. २१८३ ; स्मृसार. ३८ विभीतकौ (विभीतकान्) कपित्थं करभं (कपित्थामलकौ) ; प्रपा. ३८ (=) पूर्वार्धे (तत्रापि वर्जयेद्विद्वान् कोविदारविभीतकान् ॥) कपित्थं करभं (कपित्थामलकौ) ; पप्र. १०५ विभीतकौ (विभीतकान्) कपित्थं करभं (कपित्थामलकं) स्मृत्यर्थसारे ; मुक्ता. ३६० कपित्थं करभं (कपित्थामलकौ) स्मृत्यर्थसारे.

(४) त्रिम. २१८४ ; स्मृसार. ३८ ; प्रपा. ३८ (=) पू. ; पप्र. १०५ स्मृत्यर्थसारे ; मुक्ता. ३६० स्मृत्यर्थसारे.

(१) त्रिम. २१८९–९० ; स्मृसार. ३८ तदभावे (तदलाभे) ; पप्र. १०७–१०८ पालाशः स्यादुलूखलः (पालाशं स्यादुलूखलम्) शेषं स्मृसारवत्, स्मृत्यर्थसारे.

(२) त्रिम. २१९२–९६.

**तयोरभावे कन्दानि मूलान्याहो फलानि च ।**
**नित्यस्य कर्मणः कार्यं सर्वथैव समापनम् ॥**

तयोर्मन्थौदनयोः । पदप्र.

यज्ञोपवीतप्रतिनिधिः

[1]**यज्ञोपवीतस्याभावे वस्त्रोपव्यानमाचरेत् ।**
**तदभावे तु सूत्रेण त्रिवृतोपव्ययेत सः ॥**

यज्ञोपवीतम् उपदिष्टगुणोपेतम् ब्रह्मसूत्रम् । तस्याभावे वस्त्रेण, तस्याप्यभावे त्रिवृता सूत्रेणोपव्यानं कुर्यात् । पदप्र.

मुख्यवृत्तिमुख्यद्रव्ययोर्विरोधे मुख्यद्रव्यं बलीयः

**मुख्यवृत्त्यर्जितं गौणं द्रव्यं यद्यपि विद्यते ।**
**तथाऽऽपि गौणवृत्त्याऽऽप्तं मुख्यं द्रव्यं ग्रहीष्यते ॥**

वर्णानुसारेणानुशिष्टा वृत्तिर्मुख्या । अनन्तरवर्णवृत्तिः पूर्वस्य गौणी । वृत्तिर्जीवनोपायः प्रतिग्रहादिरूपः । आप्तम् अर्जितम् । पदप्र.

मन्त्रोक्तगुणामन्त्रोक्तगुणयोर्विरोधे मन्त्रोक्तगुणा बलीयांसः

[2]**मन्त्रोक्तानुक्तगुणकं चोदितं चेन्न लभ्यते ।**
**मन्त्रानुक्तगुणं हित्वा स्यान्मन्त्रोक्तगुणादरः ॥**

मन्त्रोक्तगुणकम्, मन्त्रानुक्तगुणकं ब्राह्मणोक्तगुणकमित्येतत् । यत्र मन्त्रब्राह्मणाभ्यां पृथक् पृथक् गुणा अभिहिताः, तत्र तदुभयगुणयुक्तद्रव्यालाभे ब्राह्मणोक्तगुणानुपेक्ष्य मन्त्रोक्तगुणा एवाऽऽदरणीया इत्यर्थः । पदप्र.

अवयव-गुणविरोधे गुणा बलीयांसः

**विशिष्टावयवद्द्रव्यं विशिष्टगुणयोगि च ।**
**चोदिताङ्गमलभ्यं वै तत्र कार्यो गुणादरः ॥**

यत्राङ्गद्रव्यस्यावयवविशेषा गुणविशेषाश्चोपदिष्टास्तत्रोभयोपसंहारासंभवे गुणादरः कार्यः । पदप्र.

(१) त्रिम. २।९८, १००.
(२) त्रिम. २।१०२-१०९.

परिमाणरूपविरोधे रूपं बलीयः

**स्थूलादिपरिमाणं च द्रव्यं शुक्लादिरूपवत् ।**
**चोदिताङ्गमलभ्यं चेत्तत्र रूपादरो भवेत् ॥**

शिष्टयोः परिमाणरूपयोरुपसंहारासंभवे परिमाणमुपेक्ष्य रूपमादरणीयम् । पदप्र.

दूरगुणासन्नगुणविरोधे आसन्नगुणा बलीयांसः

**दूरासन्नगुणोपेतमङ्गं न प्राप्यते यदि ।**
**दूरवर्तिगुणं हित्वा स्यादासन्नगुणादरः ॥**

अङ्गद्रव्यस्य दूरवर्तिन आसन्नाश्च गुणा यत्रोपदिष्टास्तत्रोभयोपसंहारासंभवे आसन्नगुणादरः कार्यः । पदप्र.

सबलदुर्बलधर्मविरोधे सबलधर्मादरः

**नानाधर्मवदङ्गं चेदलभ्यं तत्र गृह्यते ।**
**स्वभावबलवद्धर्म बलवच्छास्त्रचोदितम् ॥**

यत्राङ्गे नाना धर्मा उपदिष्टास्तत्र तावद्धर्मयुतस्याङ्गस्यासंभवे यो धर्मः स्वभावतो बलवान् यो वा बलवता शास्त्रेणोपदिष्टस्तद्धर्मयुतमङ्गं ग्रहीतव्यम् । पदप्र.

मुख्यधर्माणामूहरहितमुख्यमन्त्राणां च प्रतिनिधौ प्रयोगः

**शास्त्रधर्मान्प्रतिनिधौ शक्त्या सर्वान्प्रयोजयेत् ।**
**मुख्याभिधायकान् मन्त्राननूहेनैव कीर्तयेत् ॥**

मुख्ये ये धर्माः शास्त्रेणोपदिष्टास्ते यावच्छक्ति प्रतिनिधौ प्रयोज्याः । मुख्याभिधायकाश्च मन्त्राः प्रतिनिधावनूहेनैव पाठ्याः । पदप्र.

प्रतिनिध्युपादाने प्रायश्चित्तं कार्यम्, न कार्यं चेति मतद्वयम्

**सर्वप्रतिनिधौ कार्यमनाज्ञातजपादिकम् ।**
**यद्वा प्रतिनिधानेनैवार्थसिद्धिः कठाशयात् ॥**

प्रतिनिध्युपादानेऽपि मुख्यस्य लोपात् प्रसक्तं वैगुण्यं अनाज्ञातजपादिना शमनीयम् । मतान्तरमाह— यद्वेति । प्रतिनिधिनैव कर्मसाद्गुण्यान्न तदर्थमनाज्ञातजपादिकमित्यर्थः । पदप्र.

न्याय्याभावे वाचनिकः प्रतिनिधिः

**यत्र प्रतिनिधिर्ज्ञातुं नैव शक्यः कथंचन ।**
**तत्रापि वाक्यसामर्थ्यात्तत्कार्येऽन्यद्विधीयते ॥**

न्यायप्राप्तप्रतिनिध्यभावेऽसदृशमपि वचनप्राप्तं प्रतिनिधेयमित्यर्थः । पदप्र.

सिद्धद्रव्यग्रहणेऽपि निष्पादनमन्त्रजपस्याऽऽवश्यकता, कृताकृतत्वम्, अभावश्चेति मतानि

[1]**छिन्नं लूनं च पिष्टं च सांनाय्यं मृन्मयं तथा ।**
**लोकसिद्धं गृहीतं चेन्मन्त्रा जप्याः कठाशयात् ॥**

यथाविध्यनुत्पाद्य लोकसिद्धं चेद्गृह्णीयात् तदा प्रयोगकाले तत्तन्मन्त्रा जप्तव्याः । पदप्र.

**छिन्नादि लोकसिद्धं चेदाद्रियेत क्रतुं प्रति ।**
**तत्तन्मन्त्रजपं प्राह भरद्वाजः कृताकृतम् ॥**

मतान्तरमाह— छिन्नादीति । तथा च भरद्वाजमते तत्तन्मन्त्रान् जपेद्वा न वा जपेत् । पदप्र.

**छिन्ने चावहते लूने पिष्टे दग्धे च मृन्मये ।**
**खाते च लौकिके प्राप्ते जपो नास्त्येव वाजिनाम् ॥**

मतान्तरमाह— छिन्ने इति । तथा च कठानां मन्त्रजपो नियतः, भरद्वाजीयानां कृताकृतः, वाजिनां तु न भवत्येव । पदप्र.

नित्यनैमित्तिकयोर्मुख्यकालातिपाते गौणकाले कर्तव्यता, गौणस्य मुख्यसादृश्यं च

[2]**मुख्यकाले यदाऽवश्यं कर्म कर्तुं न शक्यते ।**
**गौणकालेऽपि कर्तव्यं गौणोऽप्यत्रेदृशो भवेत् ॥**

(१) ईदृशः मुख्यकालसदृशः । अनेनास्य प्रतिनिधित्वेन योग्यता दर्शिता । ¶चका. ९२२

¶ मपा., इन्दु. चकागतम् ।

(१) त्रिम. २।१३७–१३९.

(२) त्रिम. २।१५० ; चका. ९२२ ; मपा. १८३ : १८५ उत्त. ; गभा. ११३ ; निप्र. १० गौणोऽप्यत्रेदृशो भवेत् (गौणोऽप्येतादृशो मतः) ; आर. ६ कात्यायनः ; संग. ३०८ ; सस्मृ. २७ कात्यायनः ; इन्दु. ९.

(२) अथेदानीं कालातिपाते विधिमाह— मुख्येति । अवश्यमित्यनेन काम्यानां कालातिपाते लोप एवेति ध्वनितम् । पदप्र.

विशिष्टकर्मणां गौणकालस्य लक्षणं मतभेदेन

[1]**एवमागामियागीयमुख्यकालादधस्तनः ।**
**स्वकालादुत्तरो गौणः कालः पूर्वस्य कर्मणः ॥**

(१) उत्तरग्रहान्न पूर्वकालस्य गौणत्वम् । तेन समस्यहोमादौ अल्पद्वादश्यां च माध्याह्निकस्यापकर्षे न प्रायश्चित्तम् । § आर. ६

(२) कतिचिदुदाहरणानि प्रदर्श्येदानीं सामान्यत आह— एवमिति । पदप्र.

[2]**यद्वाऽऽगामिक्रियामुख्यकालस्याप्यन्तरालवत् ।**
**गौणकालत्वमिच्छन्ति केचित् प्राक्तनकर्मणि ॥**

(१) इदं श्रौतपरम् । आर. ६

(२) मतान्तरमाह— यद्वेति । अन्तरालवत् मध्यकालस्येव । पदप्र.

गौणकालेऽपि प्रायश्चित्तपूर्वकं प्रायश्चित्तं विना वाऽनुष्ठानमिति पक्षद्वयम्

[3]**गौणेष्वेतेषु कालेषु कर्म चोदितमाचरेत् ।**
**प्रायश्चित्तप्रकरणे प्रोक्तां निष्कृतिमाचरेत् ॥**

§ इन्दु. आरगतम् ।

(१) त्रिम. २।१५७ ; स्मृसार. ४१ यागीय (कार्यस्य) ; चका. ९१९ पूर्वस्य (सर्वस्य) उत्त. ; मपा. १८१ एवमा (यश्चा) ; प्रपा. ५८ स्मृसारवत्, स्मृत्यर्थसारे ; उत्त. १३२ श्राद्धचिन्तामणिकृत्यतत्त्वार्णवयोः ; मुक्ता. १४ उत्त. स्मृतिरत्नावल्याम् ; आर. ६ (स्वकालादुत्तरः कालो गौणः सर्वस्य कर्मणः ॥) उत्त. ; सस्मृ. २७ उत्त., रत्नावल्याम् ; इन्दु. १० पूर्वस्य कर्मणः (स्यात्सर्वकर्मसु) उत्त.

(२) त्रिम. २।१५८ ; चका. ९१९ ; मपा. १८१ ; उत. १३२ हरिहरपद्धतौ ; संत. ८८५ (=) निर्देशमात्रम् ; मुक्ता. १४ स्मृतिरत्नावल्याम् ; आर. ६ ; सस्मृ. २७ रत्नावल्याम् .

(३) त्रिम. २।१५९ ; स्मृसार. ४१ (सर्वत्र गौणकालेषु कर्म चोदितमाचरेत् । प्रायश्चित्तं व्याहृतिभिर्हुत्वा

**$[1]प्रायश्चित्तमकृत्वा वा गौणकाले समाचरेत् ।
नित्येष्टिमग्निहोत्रं च भरद्वाजीयभाष्यतः ॥**

(१) निष्कृतिं प्रायश्चित्तम् । देशकालशक्त्यपेक्षया प्रायश्चित्तकरणमकरणं वेति व्यवस्था । *मपा. १८३

(२) गौणकालेऽपि प्रायश्चित्तं कृत्वैवातिपतितं कर्म कर्तव्यमित्याह— गौणेष्विति । मतान्तरमाह— प्रायश्चित्तमकृत्वेति । प्रायश्चित्तमकृत्वैव नित्येष्टिमग्निहोत्रं च गौणकाले कुर्यादिति भरद्वाजसूत्रभाष्यकृतां मतम् । पदप्र.

(३) अत्र गौणकाले प्रायश्चित्तकरणाकरणयोर्व्यवस्था समर्थासमर्थभेदेन । समर्थत्वं तु द्रव्यसामर्थ्ये शरीरसामर्थ्ये चेत्याद्यनेकविधम् । इन्दु. ९

मुख्यकालमुख्यसाधनयोर्विरोधे मुख्यकालो बलीयान्

**[2]मुख्यकाले हि मुख्यं चेत् साधनं नैव लभ्यते ।
तत्कालद्रव्ययोः कस्य मुख्यत्वं गौणताऽपि वा ॥**

$ यद्यपीदं वचनं नित्येष्ट्यग्निहोत्रमात्रविषयकम् , तथाऽपि निबन्धकारैरुत्तरार्धमुपेक्ष्य पूर्वार्धमात्रस्य सामान्यविषयकत्वाभ्युपगमात्संगृहीतम् ।

* आर. मपागतम् ।

कर्म समाचरेत् ॥ ); चका. ९२३ रणे प्रो (रणप्रो) ; मपा. १८३ तमाचरेत् ( तमाचरन् ) रणे प्रो ( रणप्रो ) ; प्रपा. ५८ स्मृसारवत् , तमाचरेत् (तमाचरन्) इति विशेषः , स्मृत्यर्थसारे ; उत. १३२ ष्वेतेषु (षु तेषु) तमाचरेत् (तमारमेत्) रणे प्रो (रणप्रो) भरद्वाजः ; मुक्ता. १४ तमाचरेत् (तमाचरन्) निष्कृति (निर्वृत्ति) स्मृतिरत्नावल्याम् ; आर. ६ सर्वं प्रपावत् ; सस्मृ. २७ पू. रत्नावल्याम् ; इन्दु. ९ मपावत् .

(१) त्रिम. २।१६० ; चका. ९२३ पू. ; मपा. १८३ काले ( कालं ) पू. ; मुक्ता. १४ वा (न) पू., स्मृतिरत्नावल्याम् ; आर. ६ पू. स्मृत्यर्थसारे ; सस्मृ. २७ वा (तु) पू., रत्नावल्याम् ; इन्दु. ९ पू.

(२) त्रिम. २।१६१ ; स्मृसार. ४१ हि (तु) पू. ; चका. ९२४ ; मपा. १८५ ; मुक्ता. १४ स्मृतिरत्नावल्याम् ; सस्मृ. २७ शातातपस्मृतौ.

**[1]मुख्यकालमुपाश्रित्य गौणमप्यस्तु साधनम् ।
न मुख्यद्रव्यलोभेन गौणकालप्रतीक्षणम् ॥**

(१) * अथ मुख्यकालातिक्रमे कालाः । ते च गौणा वाचनिकाश्चेति द्विप्रकाराः । तदेवं विचार्यते— मुख्यकालासंभवे गौणकालग्रहणं कार्यं न वेति, ननु को मुख्यः ? को वा गौणः ? यो विहितः स मुख्यः । यथा वृद्धिश्राद्धादौ प्रातरादिः । यश्चाविहितः तत्समीपवर्ती तेष्वेवाङ्गभावं नीयमानः संगवादिः सः गौणः । तदाह त्रिकाण्डमण्डनः— ‘ ( एवमागामियागीयमुख्यकालादधस्तनः । ) स्वकालादुत्तरो गौणः कालः सर्वस्य कर्मणः । यद्वाऽऽगामिक्रियामुख्यकालस्याप्यन्तरालवत् । गौणकालत्वमिच्छन्ति केचित् प्राक्तनकर्मणि ॥ ’ इति । अस्यार्थः— पूर्वोत्तरयोः पूर्वस्य कर्मणो यः स्वकालः तस्मादुपरितनः उपरितनकर्मकालाच्च पूर्वभावी, पूर्वापरयोरन्तरालकाल इति यावत् , स पूर्वस्मिन् कर्मणि गौणः । यद्वा, यथोक्तान्तरालवदागामिक्रियामुख्यकालस्यापि पूर्वस्मिन् कर्मणि गौणकालतां मन्यन्ते इति । कथं पुनरुत्तरकर्मकालस्य पूर्वकर्मानुष्ठानाय ग्रहणमाशङ्क्यते ? यतः स्वकालात् प्रच्युतं पूर्वं कर्म तावद्विनष्टप्रायम् , उत्तरं च स्वकालादप्रच्युतत्वादविनष्टरूपम् । तत्र यद्युत्तरकर्मकाले पूर्वं कर्म क्रियते तदा विनष्टसमाधानार्थमविनष्टविनाशनं प्रसज्जते । तन्मृतजीवनाय जीवन्मरणमिव( ? न्मारणमिव ) स्यात् । अत्र ब्रूमः- उत्तरे कर्मकाले द्वयोरवकाशे सतीदमुच्यते, न पुनरसत्यपि तस्मिन्निति । ननु मुख्यकालसमीपवर्तिनः

* अयमेव शास्त्रार्थः प्रायो यथाक्षरक्रमं श्राद्धप्रकरणेऽपि हेमाद्रिणा प्रतिपादितः । तदवष्टम्भेनात्र काश्चिच्छुद्धयः संपादिताः ।

(१) त्रिम. २।१६२ ; स्मृसार. ४१ ; चका. ९२४ गौणमप्यस्तु (गौणं मुख्यस्य) ; मपा. १८५ लोभेन ( लाभेन) ; निप्र. १९९ (=) ; कालमुपाश्रित्य ( कालानुरोधेन ) लोभेन (लाभेन) ; मुक्ता. १४ मुख्यकालमुपाश्रित्य ( मुख्यं कालं समाश्रित्य ) स्मृतिरत्नावल्याम् ; सस्मृ. २७ कालमुपाश्रित्य ( कालं समाहृत्य ) शातातपस्मृतौ.

कालस्याभिधेयाऽविनाभूतप्रवृत्तिलभ्यत्वाल्लाक्षणिकत्वमेवो- चितम्। सत्यमेवम्, तथाऽऽपि तत्कालोपलक्षणीभूतातप- मार्दवादिगुणोपनीतया लौकिक्या प्रातरादिशब्दप्रवृत्त्या तस्य गौणत्वमप्यस्त्येवेति गौणत्वोक्तिर्न विरुध्यते। ननु तदनुपदेशात्कथं ग्राह्यत्वमाशङ्क्यते? प्रतिनिधिन्याये- नेति ब्रूमः। नन्वेवं तर्हि यथाकथंचित् सादृश्यान्मध्या- ह्नादावपि कदाचित् प्रातरादिकृत्यानि प्रसज्जेरन्। किमत्रानिष्टम्? क्रियते एव हि कदाचिदत्यन्तसादृश्यवतः प्रचुरगौणप्रयोगसङ्गिनः संगवादेरलाभे।

तदेवमस्मिन् संशये कश्चित् 'पूर्वाह्णे दैविकं श्राद्धम्' इत्यादिकालसंयुक्तेषु वाक्येषु कालं प्रति कर्मणो गुणभावेन विधानं मत्वा प्रधानभूतविहितकालातिक्रमेण गुणभूत- कर्मानुग्रहाय कालान्तरानुष्ठानं न कार्यमिति पूर्वपक्षमभि- प्रेत्य सिद्धान्तितवान्— काले हि कर्म चोद्यते, न कर्मणि कालः। अतः कर्मणामेव प्राधान्यम्, कालमनूद्य कर्मणो विधानात्। ततः कर्म प्रति गुणभूतविहित- कालातिक्रमे प्रधानभूतकर्मानुग्रहार्थं गौणकालेऽप्यनुष्ठानं कार्यम्, कालहानेः कर्मणोऽपि त्यागस्यान्याय्यत्वात्। न ह्येकं व्यञ्जनं विना शेषभोजनमेव त्यज्यते।

तदयुक्तम्। न तावत् कर्मगुणीभावेनात्र पूर्वपक्षो घटते, कर्मणः फलसंबन्धात्, 'फलवत् संनिधौ अफलं तदङ्गम्' इति न्यायेन कालस्यैवाङ्गत्वात्। न च कर्मणः कालार्थतया परार्थत्वात् फलश्रुतिरर्थवाद इति वाच्यम्, कालस्य फलवत्कर्मार्थत्वावगमात्। नापि कालगुणी- भावोक्तः सिद्धान्तो घटते, असिद्धहेत्वाभासोपन्यासात्। न ह्यत्र कालानुवादेन कर्म विधीयते, कालस्यान्यतः प्राप्तिविरहात्। ननु कालस्य वाक्यान्तरेण प्राप्त्यभावेऽ- प्यमावास्यादिरूपेण लोकव्यवहारादेव ज्ञातस्यानुवादो भविष्यति। मैवम्, लोकसिद्धकालस्वरूपानुवादेन कर्म- विधावस्य स्वयमफलत्वेन फलवत्कर्माङ्गत्वाभावेन च विधेरानर्थक्यप्रसङ्गात्। किं चास्मिन् कर्मणि उद्देश्यस्य कालस्य न कर्मान्तरसंबन्धो घटते, तस्यैतत्कर्मानुष्ठानेऽन- न्तरमेवानुष्ठितत्वात्। नन्वेवं तर्हि 'यजेत स्वर्गकामः' इत्यत्रापि लोकादेवावगतं स्वर्गकामिनमनूद्य यागविधेरव- धारणात् कथं न विध्यानर्थक्यम्? उच्यते— यद्यपि स्वर्ग- कामस्योद्देश्यतया वाक्येऽन्वयः प्रतीयते, तथाऽपि भाव- नायाः(? नया) प्रथमं भाव्यस्यापेक्षणात् पुरुषस्य च सिद्धरूपतया तदनर्हत्वात्स्वर्गकामपदेन कामनाविषयभूतः स्वर्ग एव साध्यत्वेन समर्प्यते, स्वर्गकामस्तु पूर्वसिद्ध एवानूद्यते। यथा 'लोहितोष्णीषाः ऋत्विजः प्रचरन्ति' इत्यादौ विशेष्याणामृत्विजां प्राप्तत्वादप्राप्तविशेषणमात्रपरत्वं वाच्यम्, एवमिहापि। तदुक्तं मण्डनमिश्रैः— 'अपे- क्षितत्वाद् भाव्यस्य कामशब्दा हि तत्पराः। विशेषण- प्रधानत्वं दण्डीत्यादिषु दर्शितम्॥' इति। अतः कालानुवादेन तत्र कर्मविधिरित्ययुक्तम्। तदेवं यथोक्तौ पूर्वोत्तरपक्षावयुक्तौ।

कौ च तर्हि तौ युक्तौ? उच्यते— तत्र तावत् पूर्वपक्षः— नित्यं नैमित्तिकम् (? नित्ये नैमित्तिके) आवश्यकत्वेन प्राप्ते तादृग्विधस्वरूपनिर्वाहार्थं 'यथा शक्नुयात्' इत्युपबन्धे विहितासंपत्तौ तत्सदृशप्रतिनिधि- ग्रहणं कर्तव्यमिति स्थिते स्वकालासंपत्तौ गौणकालग्रहणं कार्यम्। तदाह त्रिकाण्डमण्डनः— 'मुख्यकाले यदाऽवश्यं कर्म कर्तुं न शक्यते। गौणकालेऽपि कर्तव्यं गौणोऽप्यत्रे- दृशो भवेत्॥' इति। ईदृशः मुख्यकालसदृशः। अनेनास्य प्रतिनिधित्वेन योग्यता दर्शिता। मृततिथावपि गौणकालग्रहणं दर्शयन्ति— 'यथाकथंचित् कर्तव्यं नित्यं कर्म विजानता। न प्राप्तस्य विलोपोऽस्ति पैतृकस्य विशेषतः॥' इति। तथा— 'दिवोदितानि कर्माणि प्रमादादकृतानि वै। यामिन्याः प्रहरं यावत्तावत्सर्वाणि कारयेत्॥'। 'संधौ रात्रौ न कर्तव्यं श्राद्धं खलु विचक्षणैः।' इत्यादिः संध्यादिकालविशेषनिषेधश्च गौणत्वेन तत्कालग्रहणप्राप्तौ सत्यामेवावकल्पते। नित्य- नैमित्तिकेषु च 'यथा शक्नुयात्तथा कुर्यात्' इत्युपबन्धसामर्थ्यात् नित्यवदाम्नातान्यप्यङ्गान्यनित्यानि भवन्ति। तथा च पैठीनसिः— 'प्रधानसचिवान्यङ्गानि भवन्ति न भवन्ति च' इति। ननु यदि मुख्यकालाति- क्रमे गौणकालग्रहणं न विरुद्धम्, तर्हि दर्शपूर्णमासपा- र्वणश्राद्धादीनाममावास्यादिविहितकालाभावे पञ्चम्यादिषु

कर्तव्यत्वं प्रसज्यते । का नामैषा प्रसक्तिः ? अभिमतमेव हि गौणकालस्वीकारवादिनस्तदा तदनुष्ठानम् । एतच्च गौणकालग्रहणं न काम्येषु, तत्र हि सर्वाङ्गोपसंहारशक्तस्यैवाधिकारप्रतिपादनात् । गौणकालग्रहणे तु कर्मानुष्ठाने कश्चिद्विशेषस्त्रिकाण्डमण्डनोक्तः प्रसङ्गादुच्यते— 'गौणेष्वेतेषु कालेषु कर्म चोदितमाचरेत् । प्रायश्चित्तप्रकरणप्रोक्तां निष्कृतिमाचरेत् ॥' । कालान्तरे चोदितं कर्म एतेषु पूर्वोक्तलक्षणेषु गौणकालेष्वाचरन् प्रायश्चित्तप्रकरणप्रोक्तां निष्कृतिं प्रायश्चित्तम् आचरेत् । पक्षान्तरमपि तेनैवोक्तम्— 'प्रायश्चित्तमकृत्वा वा गौणकाले समाचरेत् ॥' । अत्र 'अकृत्वा' इत्यत्र पूर्वकालताप्रतिपत्तिरविवक्षिता ।

तदेवं गौणकालग्रहणे प्राप्तेऽभिधीयते— सर्वत्र सप्तम्यन्तनिर्दिष्टस्य कालस्यानुपादेयत्वे उद्देश्यैकस्वभावस्य निमित्तत्वेनाभिधानादधिकारिविशेषणत्वे विहितकालमन्तरेणाधिकाराभावात् कालान्तरे कृतमकृतमेव स्यादिति गौणकालग्रहणं न कार्यम् । विहितकालाभावेऽधिकाराभावः सांतपनीयाधिकरणे 'प्रापणाच्च निमित्तस्य' (जैसू. ५।१।३३) इत्यत्र सूत्रे प्रतिपादितः । अत एव लौगाक्षिः— 'गणिताज्ज्ञायते कालः काले तिष्ठन्ति देवताः । वरं त्वेकाहुतिः काले नाकाले लक्षकोटिशः ॥' । यत्तु त्रिकाण्डमण्डनेन गौणकालग्रहणमुक्तम्, तत्पूर्वपक्षन्यायस्यैव सिद्धान्ततामभिमन्यमानेनोक्तमित्युपेक्षणीयम् । यत्तु 'यथाकथंचित्' इत्यादिस्मरणम्, न तत्र गौणकालग्रणं प्रतिपाद्यते, किंत्वग्रहणमेव । यतस्तस्यायमर्थोऽवगम्यते— स्वकालप्राप्तस्य कर्मणो मुख्यद्रव्याद्यसंपत्तिवशात् विलोपः अननुष्ठानं न कार्यम्, किंतु स्वकाले एव यथाकथंचिन्मुख्यद्रव्यसदृशोपादानेन किंचिद्विकलमपि कर्तव्यमिति । यदपि 'दिवोदितानि कर्माणि' इत्यादिवचनम्, न तेन सर्वेष्वपि कर्मसु सर्वेषां च गौणकालानां गौणकालयुक्त्या ग्रहणमुच्यते, किंतु केषुचिदेव कर्मसु किंचिदेव कालान्तरमनुकल्पत्वेन मुख्यकालवन्न्यायादप्राप्तमेव विधीयते । अतो नैतद्वचनबलेन संवत्सरर्तुमासतिथ्यादिकालविशेषविहितानि कर्माणि तत्तत्कालातिक्रमे कालान्तरेऽपि कर्तुं युज्यन्ते । यत्तु संध्यारात्र्योः श्राद्धनिषेधः, सोऽपि रागतः प्राप्तस्य भक्षणादेरिव न्यायाभासोत्पादितमोहप्राप्तस्योपपद्यते । अथवा— 'द्रव्यं ब्राह्मणसंपत्तिः श्राद्धं प्रति रुचिस्तथा', 'अकाले यदि वा काले तीर्थश्राद्धं सदा नरैः । प्राप्तैरेव हि कर्तव्यम्' इत्यादिभिः अपराह्णादिव्यतिरिक्तकालप्राप्तस्य श्राद्धस्य संध्यादिकालेष्वयं प्रतिषेधः । यत्तु मुख्यकालातिक्रमे नित्यनैमित्तिकानां गौणकालेऽनुष्ठानं दृश्यते, तत् क्वचिच्छिष्टगर्हापरिहारमनःपरितोषाद्यर्थं क्वचिच्चानुकल्पत्वेन कालान्तरविधेरित्यनवद्यम् । उपदिष्टकालातिक्रमे चाधिकाराभावादेव मुख्यद्रव्यलोभान्मुख्यकालातिक्रमो न कार्यः । एतदेव च संदेहपूर्वकमुपन्यस्य त्रिकाण्डमण्डनेन निर्णीतम्— 'मुख्यकाले हि मुख्यं चेत्साधनं नैव लभ्यते । तत्कालद्रव्ययोः कस्य मुख्यत्वं गौणताऽपि वा ॥ मुख्यकालमुपाश्रित्य गौणं मुख्यस्य साधनम् । न मुख्यद्रव्यलोभेन गौणकालप्रतीक्षणम् ॥' । तदेवमेतत्सिद्धम्— वचनमन्तरेण गौणकालग्रहणं न कार्यम्, सति तु वचने गौणस्य तस्मात्परस्यापि ग्रहणं कार्यमिति । † चका. ९१९–९२४

(२) कालद्रव्ययोः कस्य प्राधान्यमिति पृच्छति— मुख्येति । उत्तरमाह— मुख्येति । पदप्र.

नदीलक्षणं मतभेदेन

**[1]कूलद्वयान्तरालं तु नदीशब्देन नोच्यते ।**
**किंतु तद्देशवर्त्यैव जलसंघो नदी भवेत् ॥**
**अष्टौ धनुःसहस्राणि न प्रस्रवति यज्जलम् ।**
**नदीशब्दाभिधेयत्वं तस्येच्छन्ति न सूरयः ॥**
**एकेन नामधेयेन शतयोजनगामि यत् ।**
**उदकं तन्नदीशब्दवाच्यमित्यपरे जगुः ॥**

---

† मपा. एकदेशिपूर्वोत्तरपक्षौ विहाय चकावत् ।

(१) त्रिम. ३।७९–८१ ; संकौ. २३२ न प्रस्रवति (प्रस्रवन्ति च) च्छन्ति न (च्छन्तीह).

प्रसङ्गान्नदीलक्षणमाह— कूलेति। नदीशब्देन कूलद्वयस्यान्तरालं मध्यः नोच्यते, किंतु तद्देशवर्त्येव कूलद्वयान्तरालवर्ती जलसंघो नदीपदवाच्यो भवेत्। जलसंघं विशिनष्टि— अष्टाविति। अष्टौ अष्टसंख्याकानि धनुषां सहस्राणि, तत्परिमितदेशपर्यन्तमिति यावत्, यज्जलं न प्रस्रवति न वहति, तस्य जलस्य नदीपदवाच्यत्वं नेच्छन्ति। अपरे सूरयः अभियुक्ताः यत् जलमेकेन नामधेयेन यमुनादिनाम्ना शतयोजनगामि चतुःशतक्रोशगामि, तदुदकं नदीशब्दवाच्यमिति जगुः। क्रोशलक्षणं तु मत्स्यपुराणे— 'क्रोशो धनुःसहस्रे द्वे गव्यूतिर्द्विगुणा ततः। द्विगुणं योजनं तस्मात् प्रोक्तं संख्याविशारदैः॥'। धनुर्लक्षणं तत्रैव— 'चतुर्हस्तो धनुर्दण्डः' इति। पदप्र.

नित्यकर्मणो गौणकाले प्रायश्चित्तपूर्वकमनुष्ठानम्

**[1]कालातिक्रमणे कृत्वा प्रायश्चित्तं विधानतः।**
**ततो होमादिकं कर्म कुर्यान्नित्यं विचक्षणः॥**

प्रमादान्नित्याकरणे विशेषमाह— कालेति। कालातिक्रमणे मुख्यकालातिक्रमणे विधानतः यथाविध्युक्तं प्रायश्चित्तं कृत्वा होमादिकं नित्यं कर्म गौणकालेऽपि कुर्यात्। तदुत्तरं प्रायश्चित्तमात्रम्, न कर्म। पदप्र.

कालातीतं कृत्वैवोत्तरकर्मानुष्ठानम्

**[2]कालातीतेषु कार्येषु प्राप्तवत्स्वपरेषु च।**
**कालातीतानि कृत्वैव विदध्यादुत्तराणि तु॥**

एवमेव सर्वत्र साधारणन्यायमाह— कालातीतेष्विति। कालातीतं कर्म कृत्वोत्तरं कार्यम्, न तु मुख्यकाललोभेन कालातीतात्प्रागनुष्ठानम्। तच्च प्रायश्चित्तमकृत्वा कृत्वा वा कार्यमित्यन्यत्र विस्तरः। पदप्र.

गौणकालातिक्रमे प्रायश्चित्तमात्रम्

**[1]लुप्ते कर्मणि सर्वत्र प्रायश्चित्तं विनिर्दिशेत्।**
**प्रायश्चित्ते हुते पश्चान्नित्यं कर्म विधीयते॥**

सर्वथैव नित्यकर्मलोपो न कार्य इत्याशयेनाऽऽह— लुप्त इति। स्पष्टार्थम्। पदप्र.

## यज्ञपार्श्वकारिकाः (यज्ञपार्श्वः)

कर्मणि अग्निनियमः

**[2]लौकिके लोकसामान्ये क्रव्यादाग्नौ हुतं वृथा।**
**अयशियमनायुष्यं होमं तत्र न कारयेत्॥**
**न पैतृयज्ञिको होमो लौकिकेऽग्नौ विधीयते॥**

केवलमन्त्रपाठस्यापि साङ्गतासंपादकत्वम्

**[3]छिन्ने लूने तथा पिष्टे सांनाय्ये मार्तिके तथा।**
**कृत्स्ना मन्त्राः प्रयोक्तव्या मन्त्रा वै यज्ञसाधकाः॥**

चरुविधौ तु विद्याकरवाजपेयी— "यत्र प्रयोजनाभावनिश्चयः तत्रैव तदुपादानादिलोपः। यत्रानुष्ठानवेलायामेव पुरुषदोषेण प्रयोजनाभावो ज्ञायते, तदा प्राक् तन्निश्चयात् शास्त्रप्रापितः पदार्थो नियमापूर्वमात्रार्थमनुष्ठेय इति। अत एव यदा त्वालस्यादिना व्रीह्यादिस्थाने तण्डुला गृहीताः तदाऽपि अवघातादि समाचरन्ति याज्ञिकाः। पठन्ति च— 'घाते न्यूने तथा छिन्ने सांनाय्ये मान्त्रिके तथा। यज्ञे मन्त्राः प्रयोक्तव्या मन्त्रा यज्ञार्थसाधकाः॥'। मान्त्रिके मन्त्रसाध्ये अवघातादौ।

---

(१) त्रिम. (प्रकीर्णककाण्डम्) ८.

(२) त्रिम. (प्रकीर्णककाण्डम्) १०; प्रपा. ३९४ (कालातीतेषु होमेषु उत्तरेष्वागतेषु च। कालातीतानि हुत्वैव उत्तराणि समापयेत्॥) चन्द्रिकायाम्; गभा. २३३ कार्येषु (सर्वेषु); मुक्ता. ३५९ (कालातीतेषु होमेषु ह्युत्तरेष्वागतेषु च। कालातीतानि हुत्वैव ह्युत्तराणि समापयेत्॥) स्मृत्यर्थसारे; सिन्धु. ९४८; विपा. ७९ (भागः २) (कालातीतेषु होमेषु उत्तरेष्वागतेषु च। कालातीतानि हुत्वैव उत्तराणि ततश्चरेत्॥) चन्द्रिकायाम्: ४८० परेषु च (परेष्वपि); बाल. १।१२ पृ. ३३; संग. ३८०, ६३२ उत्त.; संदी. २४१ (भाग: २) (=) उत्त.

(१) त्रिम. (प्रकीर्णककाण्डम्) १२.

(२) यका. १।२, ३ पृ. १.

(३) यका. १।२४ पृ. ३; संत. ८६५ (=) (घाते न्यूने तथा छिन्ने सांनाय्ये मान्त्रिके तथा। यज्ञे मन्त्राः प्रयोक्तव्या मन्त्रा यज्ञार्थसाधकाः॥).

न्यूने तत्काले मन्त्रपाठाभावेऽपि यज्ञकाले मन्त्राः पाठ्याः । अस्मिंस्तु मन्त्रार्थज्ञानस्य नास्त्युपयोगः । इत्थमेवेदानीं प्रयोगानुष्ठानम् । " ( इति ) आह ।

संत. ८६५–८६६

स्वशाखीयमात्रानुष्ठानेन कृतार्थता, परशाखीयगुणोपसंहारः, स्वशाखीयं त्यक्त्वा परशाखीयानुष्ठाने दोषः

[1]न्यूनो वाऽप्यतिरिक्तो वा यः स्वशाखोच्छ्रितो विधिः ।
तेन संतनुयाद्यज्ञं न कुर्यात्पारशाखिकम् ॥
परशाखोऽपि कर्तव्यः स्वशाखायां न नोदितः ।
सर्वशाखासु यत्कर्म एकप्रत्यय इ(? यमि)ष्यते ॥
बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म प्रचोदितम् ।
तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत् ॥
[2]स्वशाखां यः परित्यज्य परशाखासु वर्तते ।
आच्छेदस्तस्य वंशस्य पतते रौरवं महत् ॥

गुर्वनुष्ठेयस्य गुरुसूत्रानुसारित्वम्

[3]गुरुणाऽनुष्ठितं तन्त्रं तत्सूत्रेण समाचरेत् ।
अन्यथा कर्महानिः स्यात्प्रायश्चित्ती भवेत्तु सः ॥

कर्मान्ते भोजनीयब्राह्मणसंख्या

[4]गर्भाधानादिसंस्कारे ब्राह्मणान् भोजयेद्दश ।
शतं विवाहसंस्कारे पञ्चाशन्मेखलाविधौ ॥
[5]आवसथ्ये त्रयस्त्रिंशच्छ्रौताधाने शतात्परम् ।
अष्टकं भोजयेद्भक्त्या तत्तत्संस्कारसिद्धये ॥

त्रयोविंशतीति द्वितीयान्तमार्षम् । पप्र. ११२

ब्राह्मणभोजन–मन्त्र–दक्षिणाहीनत्वे फलानि

[1]अन्नहीनो दहेद्राष्ट्रं मन्त्रहीनस्त्वथर्त्विजः ।
यज्ञस्तु दक्षिणाहीनो हिनस्ति यजमानकम् ॥
यस्य यज्ञे न भुञ्जीरन् ब्राह्मणा वेदपारगाः ।
अकृतस्तु भवेद्यज्ञो देवानां नोपतिष्ठते ॥

अन्वारम्भनियमः

[2]नित्यानां सकृदारम्भे काम्यानां तु पुनः पुनः ।
सोमसौत्रामणीवर्जमन्वारम्भः प्रशस्यते ॥

लौकिकाग्नेः संस्कार्यता

[3]गृह्याग्निव्यतिरिक्ते च कर्म यत्र प्रवर्तते ।
संस्कारादि प्रकर्तव्यं शान्तिके पौष्टिकेऽपि च ॥

कर्मभेदेन दर्भगुणभेदः, दर्भ–कुश–कुतप–बर्हिः–पवित्रसंज्ञाः

[4]कीदृशा यज्ञिया दर्भाः कीदृशाः पाकयज्ञिकाः ।
कीदृशाः पितृदैवत्या कीदृशा वैश्वदेविकाः ॥
हरिता यज्ञिया दर्भाः पीतकाः पाकयज्ञिकाः ।
समूलाः पितृदैवत्याः कल्माषा वैश्वदेविकाः ॥
अप्रसूताः स्मृता दर्भाः प्रसूतास्तु कुशाः स्मृताः ।
अमूलाः कुतपा ज्ञेया इत्येषा नैगमी श्रुतिः ॥
पुष्पिताग्रास्तु ये दर्भा न तान् बर्हिषि संस्तृणेत् ।
चातुर्मास्येषु तान् कुर्युः प्रस्तरार्थे तु याज्ञिकाः ॥
प्रादेशादधिका दर्भास्त्रिपत्रादधिकाश्च ये ।
कुशास्ते याज्ञिकैः प्रोक्ताः स्नानादिषु पवित्रकाः ॥

---

(१) यका. १।८०–८२ पृ. ७.

(२) यका. १।८३ पृ. ७ ; कृभ. ११७१.

(३) कृभ. ११७१.

(४) यका. १।८४ पृ. ७ ; अप. १।१४ संस्कारे (सर्वेषु) पू., कात्यायनः ; ब्रक. ७१ अपवत्, पू. ; गभा. २८ ; गप. ४७५ धानादिसंस्कारे (धानेषु सर्वेषु) पू. ; निप्र. २०५ पू. ; पप्र. ११२ अपवत्, पू. ; संग. ६१ ; संदी. ५१.

(५) यका. १।८५ पृ. ७. ; ब्रक. ७१ (आवसथ्ये त्रयोविंशत्यग्न्याधेये द्दशातपरम् ।) पू. ; गभा. २८ ; निप्र. २०५ (आवसथ्ये त्रयोविंशमग्न्याधेये शतात्परम् ।) पू. ; पप्र. ११२ (आवसथ्ये त्रयोविंशत्यग्न्याधेये शतात्परम् ।) पू.

(१) यका. १।९२, ९३ पृ. ८.

(२) यका. १।९५ पृ. ८.

(३) यका. १।९८ पृ. ८.

(४) यका. २।३–९ पृ. ९.

तृणसंज्ञास्तु ये दर्भा एकमात्राः स्मृतास्तु ते ।
ते बर्हिःसंज्ञिका दर्भा रत्न( ? त्नि )मात्राधिकाश्च ये ॥

पत्रद्वयात्मकं प्रोक्तं प्रादेशं च पवित्रकम् ।
पत्रत्रयात्मकं पित्र्ये ह्यथवा यत्र कुत्रचित् ॥

दशविधा दर्भाः, कुशेतराणां कुशप्रतिनिधित्वम्

[1]कुशाभावे तु काशाः स्युः काशाः कुशसमाः स्मृताः ।
काशाभावे ग्रहीतव्या अन्ये दर्भा यथाक्रमम् ॥

कुशाः काशा यवा दूर्वा उशीराश्च सकुन्दुराः ।
गोधूमा व्रीहयो मुञ्जा दश दर्भाः सबल्वजाः ॥

दर्भा दर्भकार्यकराः । उशीरो वीरणमूलम् । वीरणस्य पत्रादेर्निषेधो वक्ष्यते । कुन्दुरो रक्तकन्द इति नाम्ना प्रसिद्धस्तृणविशेषः । पप्र. ९९

धान्यमानं स्मार्तकर्मदक्षिणा च

[2]अष्टमुष्टि भवेत्किंचित्किंचिदष्टौ तु पुष्कलम् ।
पुष्कलानि च चत्वारि पूर्णपात्रं प्रचक्षते ॥

पूर्णपात्रलक्षणं तु गृह्यासंग्रहयज्ञपार्श्वपरिशिष्टप्रकाशयोः-अष्टेति । अत्र षट्पञ्चाशदधिकशतद्वयमुष्टिमितं पूर्णपात्रम् । असंभवे तु छन्दोगपरिशिष्टम् — 'यावता बहुभोक्तुश्च तृप्तिः पूर्णेन जायते । नावरार्ध्यं ततः कुर्यात्पूर्णपात्रमिति स्थितिः ॥' । संत. ८८१

[1]ग्रासमात्रा भवेद्भिक्षा उद्धृतं च चतुर्गुणम् ।
उद्धृतानि च चत्वारि हन्तकारो विधीयते ॥
धेनुर्वा यदि वाऽनड्वान्मेषका द्वादशापि वा ।
देवतानां विपर्यासे एतत्पुष्कलमुच्यते ॥
धान्यमुष्टिचतुःषष्टिरितरेषु च पुष्कलम् ।
पूर्णपात्रं भवेत्स्मार्ते वरो वा दक्षिणा सदा ॥

अग्निधमनसाधनानां विधिनिषेधाः फलानि च

[2]न पक्षेणोपधमनं न शूर्पेण न पाणिना ।
मुखेनाग्निं समिन्धीयान्मुखादग्निरजायत ॥
पक्षकेण भवेद्व्याधिः शूर्पेण धननाशनम् ।
पाणिना जायते मृत्युः कर्मसिद्धिर्मुखेन तु ॥

आज्यप्रतिनिधौ आज्यशब्दप्रयोगः

[3]तैलं प्रतिनिधिं कुर्यादाज्यार्थं याज्ञिको यदि ।
प्रकृत्यैव यदा(? तदा) होता कुर्याद्घृतवतीमिति ॥

घृतं वा यदि वा तैलं मेदो वा यदि वा वसा ।
दधि वाऽथ पयो वाऽपि प्रयोगं कथनेषु-( ? मेषु ) च ।
आज्यस्थाननियुक्तानामाज्यशब्दो विधीयते ॥

पात्रमानानि

[4]चमसानां तु वक्ष्यामि दण्डाः स्युश्चतुरङ्गुलाः ।
त्र्यङ्गुलं तु भवेत्खातं विस्तारश्चतुरङ्गुलः ॥

---

( १ ) पप्र. ९९ ; स्मर. १९ काशाः कुशसमाः ( कुशाः काशाः समाः ) यथाक्रमम् ( यथोचितम् ) प्रथमश्लोकमात्रम्, स्मृत्यन्तरे.

( २ ) यका. २।२७ – २८ पृ. १० ; संत. ८८१ मुष्टि ( मुष्टिः ) किंचित्किंचिदष्टौ ( कुञ्चिः कुञ्चयोऽष्टौ ) प्रचक्षते ( विधीयते) गृह्यासंग्रहयज्ञपार्श्वपरिशिष्टप्रकाशयोः ; संग. ४४ मुष्टि ( मुष्टिः ) प्रचक्षते ( तदुच्यते ) ; स्मर. ९२ किंचिदष्टौ तु ( किंचिच्चत्वारि ) नि च ( नि तु ) सुदर्शनभाष्ये, 'अष्टमुष्टि भवेत्किंचित्किंचिदष्टौ तु पुष्कलम् । पुष्कलैरष्टभिश्चैकः पूर्णपात्र उदीरितः ॥' इत्याधानवैजयन्त्यां पाठः ; संदी. ३२.

( १ ) यका. २।२८–३१ पृ. १०–११.

( २ ) यका. २।७२–७४ पृ. १४–१५.

( ३ ) यका. २।७४–७६ पृ. १५ ; संत. ८६९ ( घृतं वा यदि वा तैलं पयो वा दधि यावकम् । आज्यस्थाने नियुक्तानामाज्यशब्दो विधीयते ॥) एतावदेव, गृह्यासंग्रहेऽपि; संदी. ३२ ( घृतं वा यदि वा तैलं पयो दधि च यावकम् । संस्कारयोगादेतेषु आज्यशब्दो विधीयते ॥ ) एतावदेव.

( ४ ) यका. २।११७–११८ पृ. १८–१९ खातं ( स्कन्धं ) ; संदी. २९ विस्तारश्चतुरङ्गुलः ( विस्तारे चतुरङ्गुलम् ).

विकङ्कतमयाः श्लक्ष्णास्त्वग्बिलाश्चमसाः स्मृताः ।
अन्येभ्यो वाऽपि कार्याः स्युस्तेषां दण्डेषु लक्षणम् ॥

'चतुरङ्गुलं भवेत्खातम्' इति हरिहरसंमतः पाठः । संदी. २९

[१]उलूखलं जानुदघ्नं प्राकृतं परिकीर्तितम् ।
अरत्निमात्रं मुसलमरत्निः स्यात्स्रुवस्तथा ॥

[२]दृषद्रत्निप्रमाणेन चतुरस्रस्तथोपला ।
द्वादशाङ्गुलदीर्घा स्यात्परिणाहेऽङ्गुलानि षट् ॥

[३]अश्वत्थदलवत्प्रोक्तं दीर्घं स्याद्द्वादशाङ्गुलम् ।
पूर्णपात्रं तथा कुर्यात्प्रोक्षणीनां च पात्रकम् ॥

[४]प्रणीता द्वादशाङ्गुल्या विस्तारेण षडङ्गुला ।
चतुरङ्गुलखाता स्याच्चमसः परिकीर्तितः ॥

बाहुमात्रस्तु कूर्चः स्याद्विस्तारेण षडङ्गुलः ॥
रत्निमात्रस्तथा हेतिर्लोहसारसमुद्भवा ॥

पवित्रलक्षणम्, पवित्रच्छेदनसाधनानां विधिनिषेधौ फलानि च

[५]कुर्यात्प्रादेशमात्रं तु पवित्रं विष्णुदैवतम् ।
न नखेन न काष्ठेन नायोमृन्मयकेन च ॥

नखेन तु भवेद्व्याधिः काष्ठेनार्थो विनश्यति ।
आयसेन भवेन्मृत्युः कलहो मृन्मयेन तु ॥

ओषधीरन्तरतः कृत्वा अङ्गुष्ठाङ्गुलिपर्वसु ।
छिन्द्यात्पवित्राणि मखे ह्येवं धर्मो न लुप्यते ॥

(१) यका. २।१२६ पृ. १९.

(२) यका. २।१३० पृ. २०.

(३) यका. २।१३१ पृ. २० ङ्गुलम् (ङ्गुलैः) तथा (त्रिधा); संग. ३२.

(४) यका. २।१३२-१३३ पृ. २०.

(५) यका. २।१५९-१६२ पृ. २२.

## रेणुकारिकाः

गौणकाले कर्मानुष्ठानस्यानादिष्टप्रायश्चित्तपूर्वकत्वम्

[१]मुख्यकाले नरैः कर्म कर्तुं यदि न शक्यते ।
गौणकालेऽपि कर्तव्यं तदनादिष्टपूर्वकम् ॥

पारंपरिकशाखीयकर्मणः कर्तव्यता

[२]पारंपर्यगतो येषां वेदः सपरिबृंहणः ।
तच्छाखं कर्म कुर्वीत तच्छाखाध्ययनं तथा ॥

परिबृंहणानि अङ्गानि यस्य । संग. ९

देशान्तरलक्षणम्

[३]व्यवधाने महानद्या गिरेर्वा व्यवधानतः ।
वाचो यत्र विभिद्यन्ते तद्देशान्तरमुच्यते ॥

पात्राणां मानाकृतिप्रकृतिद्रव्याणि

[४]खादिरः स्फ्याकृतिर्वज्रोऽरत्निमात्रः प्रशस्यते ।
आसनं ब्रह्मणः कार्यं वारणं वा विकङ्कतैः ॥

[५]हस्तमात्रं चतुःस्रक्ति मूलदण्डसमन्वितम् ।
द्विषडङ्गुलसंख्याको मूलदण्डो विकङ्कतैः ॥

[६]प्रस्थमात्रोदकग्राही प्रणीताचमसो भवेत् ।
वैकङ्कतं पाणिमात्रं प्रोक्षणीपात्रमुच्यते ॥

[७]हंसवक्त्रप्रसेकं च त्वग्बिलं चतुरङ्गुलम् ।
दण्डस्तस्य प्रणीतानां स्यादप्यङ्गुष्ठमात्रतः ॥

(१) रेका. (अग्नि.) २९।३८, ३९; गभा. २३१ कारिकायाम्.

(२) रेका. (अग्नि.) ३२।३२; संग. ९ कुर्वीत (कर्तव्यं) गृह्यकारिकायाम्.

(३) रेका. (अग्नि.) ५४।९०; संग. २२५ पू.

(४) रेका. (अग्नि.) २।२६; गभा. २७ कतेः (कतम्) यज्ञपार्श्वसंग्रहकारिकानाम्ना सर्वा रेणुकारिकाः संगृहीताः.

(५) रेका. (अग्नि.) २।२७; गभा. २७ कतेः (कतः).

(६) रेका. (अग्नि.) २।२८; गभा. २७; संग. ३२ उत्त., कारिकाकारः; संदी. ३१ (=) उत्त.

(७) रेका. (अग्नि.) २।२९ स्यादप्यङ्गुष्ठमात्रतः (चमसाङ्गुष्ठमात्रकाः); गभा. २७ वक्त्र (मुख) पू.; संग. ३२ कारिकाकारः; संदी. ३१ (=). सर्वं गभावत्.

[1]आज्यस्थाली प्रकर्तव्या तैजसद्रव्यसंभवा ।
माहेयी वाऽपि कर्तव्या नित्यं सर्वाग्निकर्मसु ॥
आज्यस्थाल्याः प्रमाणं तद्यथाकामं तु कारयेत् ।
मृन्मय्यौदुम्बरी वाऽपि चरुस्थाली प्रशस्यते ॥
तिर्यगूर्ध्वसमिन्मात्रा दृढा नातिबृहन्मुखी ।
कुलालचक्रघटितमासुरं मृन्मयं स्मृतम् ॥
तदेव हस्तघटितं स्थाल्यादि खलु दैविकम् ॥

यज्ञवास्तु– मुष्टि– स्तम्ब– दर्भवटवः अनियतदर्भसंख्याः

यज्ञवास्तुनि मुष्टौ च स्तम्बे दर्भवटौ तथा ।
दर्भसंख्या न विहिता विष्टरास्तरणेषु च ॥

स्रुक्स्रुवयोर्मानम्

अङ्गुष्ठपर्ववृत्तास्योऽरत्निमात्रः स्रुवो भवेत् ।
पुष्करार्धं भवेत्खातं पिण्डकार्धं स्रुचस्तथा ॥
पिण्डकार्धं मुष्ट्यर्धमित्यर्थः । गभा. २७

पूर्णपात्रलक्षणं धान्यमानं च

[2]यावता बहुभोक्तुस्तु तृप्तिः पूर्णेन जायते ।
नावराध्यर्मतः कुर्यात्पूर्णपात्रमिति स्थितिः ॥
अष्टमुष्टि भवेत्किंचित् किंचिदष्टौ च पुष्कलम् ।
पुष्कलानि च चत्वारि पूर्णपात्रोऽथवा भवेत् ।
यवैर्वा व्रीहिभिः पूर्णं शूर्पं तत्पूर्णपात्रकम् ॥

वरलक्षणम्, पात्राणां मानाकृतिप्रकृतिद्रव्याणि

[3]वरोऽभिलषितं द्रव्यं सारभूतं स्वमुच्यते ।
शूर्पं त्वरत्निमात्रं स्यादैषिकं वैणवं तु वा ॥
लम्बा त्वरत्निमात्रा स्यादुपला च दृषत्तथा ।
विस्तारो दृषदः प्रोक्तो द्वादशाङ्गुलसंख्यया ॥
पालाशं जानुमात्रं स्यात्पृथुबुध्नमुलूखलम् ।
अर्धखातं बृहद्वक्त्रं मध्ये रास्नासमन्वितम् ॥
खादिरं मुसलं प्रोक्तमरत्नित्रयसंमितम् ।
प्रादेशमात्रं विज्ञेयं मेक्षणं तु विकङ्कतेः ॥
वृत्तमङ्गुष्ठपर्वाग्रमवदानक्रियाक्षमम् ।
ईदृशी संभवेद्दर्वी विशेषस्तमहं ब्रुवे ॥

[1]वारण्यरत्निमात्री स्याच्चतुर्थांशाधिकपुष्करा ।
हस्ताकारा च पृथ्वग्रा बुध्ने सर्पफणाकृतिः ॥
आकर्षफलकं हस्तमात्रं स्याद्धनुराकृतिः(?ति) ।
अग्रे सर्पफणाकारं खादिरं वा विकङ्कतेः ॥
कङ्कतानि त्रिदन्तीनि वारणानि भवन्ति हि ।
वारण्यरत्निमात्री स्यादभ्रिः शासं दशाङ्गुलम् ॥
द्वात्रिंशदङ्गुला शम्या वारणीत्यभिधीयते ।
श्रेपर्णान्परिधीन् कुर्याद्बाहुमात्रानशुष्ककान् ॥
[2]श्री(?श्रे)पर्ण्यौ हस्तमात्रे च श्रपण्यौ शूलमेव च ।
तच्छूलं यस्य कस्यापि यज्ञियस्य तरोर्भवेत् ॥
लौही वा मृन्मयी वा स्यात्पशुखा च यथार्थतः ।
पात्राणि वारणान्यत्र यानि प्रोक्तान्यसंभवे ॥
वैकङ्कतानि कार्याणि सूत्रान्तरमतादपि ।
अभावे मुख्यवृक्षस्य यज्ञियस्य तरोरिह ॥

---

(१) रेका. (अग्नि.) २।३०–३५ ; गभा. २७ प्रकर्तव्या (तु कर्तव्या) मात्रा दृढौ (मात्रदृढा) वृत्तास्यो (वृत्तश्चा).

(२) रेका. (अग्नि.) २।३५–३७ ; गभा. २७ बहु (ऽन्नेन) पूर्णेन (पूर्णैव) नावराध्यं (तं वरार्धं) त्रोऽथवा भवेत् (त्रं विधीयते) शूर्पं (भवेत्), 'अष्टमुष्टि' इति श्लोकः 'वरोऽभिलषितम्' इत्यर्धात्परं पठित इति क्रमे विपर्ययः.

(३) रेका. (अग्नि.) २।३८–४२ ; गभा. २७ स्वमुच्यते (तदुच्यते) लम्बा त्वरत्निमात्रा (लम्बं त्वरत्निमात्रं) ङ्कतेः (ङ्कतम्) ईदृशी संभवेत् (ईदृश्येव भवेत्) स्तम (स्ताम).

(१) रेका. (अग्नि.) २।४३–४६ ; गभा. २७ मात्री (मात्रा) बुध्ने (अग्रे) ङ्कतेः (ङ्कतम्) नशुष्ककान् (नपुष्करान्).

(२) रेका. (अग्नि.) २।४७–५१; गभा. २७ यथार्थतः + (लौही ताम्रमयी वाऽपि कुर्याच्चैव यथार्थतः।) रथादरणी ग्राह्ये (रथस्यारणी ग्राह्या) दृष्टं (दृष्टा).

यत्किंचित्पात्रजातं तदिति भास्करसंमतिः ।
अश्वत्थादरणी ग्राह्ये नान्यस्मादेव वृक्षतः ॥
एवं सर्वेषु शास्त्रेषु दृष्टं सूत्रान्तरेष्वपि ॥

कर्ममध्ये आचमनस्य निमित्तानि

[1]सर्वत्र कर्ममध्ये तु क्षुत आचमनं स्मृतम् ।
अधोवायुसमुत्सर्गे प्रहासेऽनृतभाषणे ।
क्रोधा( ? घेऽ )मेध्यश्च( ? श्व )शूद्रादिदर्शने
चोदकं स्पृशेत् ॥

## गृह्यासंग्रहः

निषिद्धसमिधां संज्ञाः , तासां लक्षणानि फलानि च

[2]मारणी राक्षसी रौद्री क्रव्यादी ब्रह्मराक्षसी ।
स्थूलजङ्घा कराली च वज्रहस्ता तथैव च ।
यमदूती च विज्ञेया इत्येताः समिधो नव ॥

अथेदानीं वर्जनीयाः समिध आह— मारणीति । इत्येता नव समिधो नामतो विज्ञेयाः । गृसंभा.

विशीर्णा विदला ह्रस्वा वक्रा स्थूला कृशा द्विधा ।
कृमिदष्टा च दीर्घा च वर्जनीयाः प्रयत्नतः ॥

यथाक्रममासां लक्षणं ब्रुवन् वर्जनीयत्वमाह— विशीर्णेति । विशीर्णा त्रुटिता पाटितेत्येतत् । इयं मारणीत्युच्यते । विदला दलरहिता, त्वचा वियुक्तेति यावत् । इयं राक्षसी । ह्रस्वा प्रादेशप्रमाणात् न्यूना । इयं रौद्री । वक्रा प्रसिद्धा । इयं क्रव्यादी । स्थूला अङ्गुष्ठात्स्थूला । इयं ब्रह्मराक्षसी । कृशा अङ्गुष्ठात् कृशा, अङ्गुष्ठस्थौल्यस्य विहितत्वात् । इयं स्थूलजङ्घा । द्विधा द्विशाखिका । इयं कराली । कृमिदष्टा कृमिभिर्दंष्टा । इयं वज्रहस्ता । दीर्घा प्रादेशाद्दीर्घा । इयं यमदूती । ता एताः समिधो यत्नतो वर्जनीयाः । तथा च कर्मप्रदीपः— ' नाङ्गुष्ठादधिका ग्राह्या समित्स्थूलतया क्वचित् । न वियुक्ता त्वचा चैव न सकीटा न पाटिता ॥ प्रादेशान्नाधिका नोना न तथा स्याद्द्विशाखिका । न सपर्णा न निर्वीर्या होमेषु च विजानता ॥ ' इति । गृसंभा.

विशीर्णाऽऽयुःक्षयं कुर्याद्विदला व्याधिसंभवा ।
ह्रस्वा मृत्युकरी रौद्री दुर्भगत्वं तु वक्रया ॥
विघ्नानि कुरुते स्थूला कृशा च रिपुवर्धिनी ।
द्विधा नाशयते ह्यर्थं भार्यां च प्रियबान्धवान् ॥
कीटदष्टाऽतिभयदा दीर्घा चैव सुतान् हरेत् ।
तस्मात्सर्वप्रयत्नेन वर्जनीयाश्च वर्जयेत् ॥

अथेदानीं विशीर्णादीनां वर्जनीयत्वे हेतुमुक्त्वा वर्जनममूषामुपसंहरति— विशीर्णेति । व्याधिसंभवा, व्याधेः संभवः यया, सा तथाविधा । ह्रस्वा रौद्रीति सामानाधिकरण्यम् । अस्मादप्यवगच्छामः— विशीर्णत्वादीनि यथाक्रमं मारण्यादीनां लक्षणानि इति । वक्रया दुर्भगत्वं प्राप्नोति । विघ्नानि विघ्नान् । अतिभयदेतिच्छेदः । निगदव्याख्यातमन्यत् । यस्मादेवम् , तस्माद्वर्जनीया एताः समिधो यत्नेन वर्जयेदिति विशीर्णादीनां वर्जनस्योपसंहारः । गृसंभा.

सर्वकामदाः समिधः

अकृशा चैव न स्थूला अशाखा चापलाशिनी ।
सक्षीरा नाधिकान्यूनाः समिधः सर्वकामदाः ॥

अथेदानीं सर्वकामदाः समिध आह— अकृशा चेति । कृशादयो व्याख्याताः , तद्वैपरीत्येनाकृशादयो व्याख्यातव्याः । अशाखा एकमात्रशाखारहिता, * द्विशाखिकेत्यर्थः । अपलाशिनी न सपत्रा । सक्षीरा न निर्वीर्या । क्षीरमत्र वृक्षदुग्धम् । न अधिकाः नाधिकाः, अनधिका इत्यर्थः । निपातसमानार्थेन नशब्देन समासः । न न्यूनाः अन्यूनाः । निपातेन समासः । नाधिकाश्च अन्यूनाश्च इति पश्चात् द्वन्द्वः । न इति भिन्नं वा पदं न अधिकाः , न च न्यूनाः , इत्यनुषङ्गेण व्याख्येयम् । एवंविधाः समिधः सर्वान् कामान् ददति इति सर्वकामदा उच्यन्ते । गृसंभा.

---

(१) रेका. (प्रा.) १।४–५ ; गभा. २३१ (=) प्रथमार्धमात्रम्.

(२) गृसं. १।२७–३३.

* इदं व्याख्यानं पूर्वव्याख्यानविरुद्धम् , पूर्वत्र वर्जनीयासु ' द्विधा ' इत्यस्य ' द्विशाखिका ' इति व्याख्यानात् ' अशाखा शाखाद्वयरहिता ' इति व्याख्यातुमुचितम् ।

गृह्याशब्दार्थः

[1]**पत्न्यः पुत्राश्च कन्याश्च जनिष्याश्चापरे सुताः ।**
**गृह्या इति समाख्याता यजमानस्य दायकाः ॥**

तत्र प्रथमं तावत् – 'अथातो गृह्याकर्माण्युपदेक्ष्यामः' इति गोभिलसूत्रस्थं गृह्यापदमनुद्भिन्नार्थं व्याकरोति द्वाभ्याम्– पत्न्यः इति । जनिष्या जनिष्यमाणाः । दायकाः दायहराः । निगदव्याख्यातमन्यत् । गृसंभा.

**तेषां संस्कारयोगेन शान्तिकर्मक्रियासु च ।**
**आचार्यविहितः कल्पस्तस्माद् गृह्या इति स्थितिः ॥**

तेषां पत्न्यादीनां संस्कारयोगेन संस्कारलाभार्थमित्यर्थः । तदिदमर्थं या विवाहादिक्रियाः क्रियन्ते तासु, शान्तिकर्मणां शान्त्यर्थकर्मणामलक्ष्मीनिर्णोदादीनां क्रियासु करणेषु च यः कल्पः शास्त्रविधिरपेक्षितः, स खल्वाचार्यविहितः आचार्येण गोभिलेन विहितः । तदर्थं गृह्यसूत्रं कृतमित्यर्थः । यस्मात् गृह्यानधिकृत्य आचार्येण सूत्राणि रचितानि, तस्मात् कारणादाचार्यगृह्यसूत्राणां गृह्या इति स्थितिः । गृह्यसंबन्धात् स्मृतिरपि गृह्येत्युच्यते, दण्डयोगात् दण्डः पुरुष इति यथा । गृसंभा.

गोचर्मशब्दार्थः

[1]**ऋषभैकशतं यत्र गवां तिष्ठति संवृतम् ।**
**बालवत्सप्रसूतानां गोचर्म इति तं विदुः ॥**

(१) 'गोचर्ममात्रं चतुरश्रं स्थण्डिलं०' – अत्र गोचर्मशब्दो यौगिक एव ग्राह्यः, न तु 'वृषभैकशतं ... बुधा विदुः' इति पारिभाषिकः, एतस्य दानविषयत्वात् प्रकृतेऽसंभवाच्च । एवं च गोर्यावत्प्रमाणं चर्म तदनुसारेणैव चतुरश्रस्थण्डिलकरणमत्र । संर. ४६

(२) अप्रसिद्धत्वात् स्वयमेव गोचर्मपरिमाणं व्याकरोति– ऋषभेति । ऋषभो वृषभः । तेन सममेकशतं बालवत्सप्रसूतानाम्– बालाः वत्साः प्रसूता यासाम्, सद्यःप्रसूतवत्सानामित्यर्थः । विशेषणसामर्थ्यात् बालवत्ससहितानां गवामेकशतं एकेन वृषभेण सह यत्र प्रदेशे संवृतं सम्यगसंकोचेन वर्तमानं तिष्ठति, तं प्रदेशं गोचर्म इति विदुः जानन्ति आचार्याः । अपर आह– यस्मिन् स्थाने ऋषभाणां शतं बालवत्सप्रसूतानां गवां च शतं संवृतम् एकीभूतं तिष्ठति, तत्स्थानं गोचर्म इति । तदसंगतम्, कुतः ? समासान्तर्निविष्टस्य शतशब्दस्यानुषङ्गकल्पनायां मानाभावात्, 'गवां शतं वृषश्चैको यत्र तिष्ठेदयन्त्रितः । एतद्गोचर्ममात्रं तु प्राहुर्वेदविदो जनाः ॥' इति स्मृत्यन्तरदर्शनाच्च । गृसंभा.

[1]**षट् पञ्च चतुरो वाऽपि त्रयो द्वौ वा शफौ स्मृतौ ।**
**गोचर्म इति शब्दोऽयं विधियोगे निपात्यते ॥**

चतुरः इति व्यत्यासेन प्रयुङ्क्ते । चत्वारः इत्यर्थः । वाऽपि इत्यपि व्यत्यासेन प्रयुङ्क्ते । अपि वा इत्यर्थः । तदयमर्थः– षट् शफाः पञ्च वा चत्वारो वा त्रयो वा शफाः गोचर्म इति स्मृताः, द्वौ वा शफौ गोचर्म इति स्मृतौ । योग्यत्वादुपस्थितत्वाच्च शफवतीनां गवामेव ग्रहणं वर्णनीयम् । तदेवं गोचर्मस्थानानामनियतपरिमाणत्वादाह– विधियोगे इति । पूर्वोक्तेषु परिमाणेषु विधियोगे विधानयोगे सति गोचर्म इत्ययं शब्दो निपात्यते । यत्र विहिते कर्मणि यावत् स्थानमपेक्षितम्, तत्र तावत्परिमितमेव स्थानं ग्राह्यमित्यभिप्रायः । गृसंभा.

वरपदार्थः

**वरं गां तु विजानीयाच्चतुर्वर्षामिति स्थितिः ।**
**दक्षिणानां विशिष्टं वै वरं तमपरं विदुः ॥**

चतुर्वर्षां गां वरं जानीयादिति शास्त्रमर्यादा । दक्षिणानां मध्ये विशिष्टं श्रेष्ठम्, तं गाम्, अपरं पूर्वोक्तादन्यं वरं जानन्त्याचार्याः । तमिति विधेयप्राधान्यविवक्षया पुंसा निर्देशः, लिङ्गव्यत्ययाद्वा । *नात्र कल्पे वर्षनियम इत्य-

(१) गृसं. १।३५–३७.
(२) गृसं. १।३९–४० ; संर. ४६ ऋषभै (वृषभै) उत्तरार्धे (बालवत्साशतं चैव गोचर्मेति बुधा विदुः ॥).

* 'नात्र कल्पे' इत्युक्त्वा पूर्वोत्तरार्धयोर्विधेयभेदप्रयुक्तो वाक्यभेदो व्याख्यातुरभिप्रेत इति स्पष्टम् । अत एव पूर्वत्र 'पूर्वोक्तादन्यम्' इत्यत्र 'पूर्वार्धोक्तादन्यम्' इत्येव व्याख्यातु-

(१) गृसं. १।४०–४१, ४२–४३.

वृष्यपरपर्याय उपवेशः इति नारायणोपाध्यायाः । 'उपवेशो हस्ताप्रतिरूपकः' इति दीक्षितभाष्यम् । स खल्वयं शङ्कुरुपवेशश्च द्वादशाङ्गुल इष्यते आचार्यैः । अत्रापि 'शङ्कुश्च खादिरः प्रोक्तो रजतेन विभूषितः ।' इति कर्मप्रदीपोक्तो विशेषो द्रष्टव्यः । गृसंभा.

पवित्रलक्षणं परिधिमानं च

**नवैः शोभनैरगर्भं पवित्रं तु कुशाग्रजम् ।**
**ललाटाच्चिबुकं प्राहुर्बाहुमात्राः परिधयः ॥**

नवैः, न पुनरास्तृतैरित्यर्थः । शोभनैः कुशैः पवित्रं प्राहुराचार्याः । बहुवचनं व्यक्तिभेदाभिप्रायम् । कथं ज्ञायते ? 'अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च । प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् ॥' इति कर्मप्रदीपे द्विदलस्योक्तत्वात् । अपर आह— 'चतुर्भिर्दर्भपत्रैश्च त्रिभिर्द्वाभ्यामथापि वा । पवित्रं कारयेन्नित्यं प्रशस्तं सर्वकर्मसु ॥' इति, 'पवित्रं तु द्विजः कुर्यात्कुशपत्रद्वयेन वा । पत्रत्रयेण वा कार्यं नैकपत्रेण कुत्रचित् ॥' इति चैवमादिस्मृत्यन्तरदर्शनात् बहुभिरपि कुशैः पवित्रं भवतीति किं व्यक्तिभेदाभिप्रायेण बहुवचनवर्णनया ? इति । संकेतितविशिष्टद्विदलासंभवे अवस्थाविशेषशून्यैस्त्रिभिश्चतुर्भिर्वा कुशैः पवित्रं भवतीति किल वदन्ति सांप्रदायिकाः । तदभिप्रायकत्वे तु 'नवैरगर्भैः (? नवैः शोभनैः)' इत्याद्युपादानं नातीव समञ्जसं स्यादिति सुधीभिरवधेयम् । पवित्रं विशिनष्टि— अगर्भं गर्भशून्यम्, कुशाग्रजं साग्रकुशेन जातम् । ललाटात् ललाटमारभ्य । ल्यब्लोपे पञ्चमी । चिबुकं चिबुकपर्यन्तम्, ललाटावधि चिबुकपर्यन्तपरिमाणमित्यर्थः । तदनेन 'तत एव बर्हिषः प्रादेशमात्रे पवित्रे कुरुते' (गोगृ. १।७।२१) इत्यादिसूत्रोक्तं पवित्रं व्याख्यातम् । 'ललाटप्रमाणेन चिबुकं संदंशं प्राहुराचार्याः' इति दीक्षितभाष्यम् । 'परिधीनप्येके कुर्वन्ति शामीलान् पार्णान् वा' (गोगृ. १।७।१६) इति सूत्रोक्तान् परिधीन् व्याचष्टे— परिधयो बाहुमात्रा भवन्ति । विशेषस्तु कर्मप्रदीपे— 'बाहुमात्राः परिधयो ऋजवः सत्वचोऽव्रणाः । त्रयो भवन्त्यशीर्णाग्रा एकेषां तु चतुर्दिशम् ॥' इति । गृसंभा.

संस्कारादोषनिवृत्तिः

[1]**दीप्ताग्नौ विस्फुलिङ्गेऽत्र वने दग्धेषु दारुषु ।**
**न च संस्कारदोषोऽस्ति तथा चरुकपालयोः ॥**

'विक्षिप्ते दीप्ताग्नौ' इति दीक्षितभाष्यम् । विस्फुलिङ्गे अग्निकणे, वने दवाग्निना दग्धेषु काष्ठेषु, चरौ च मार्जारादिदष्ट्याद्यल्पोपघाते, कपाले च संस्कारे प्रोक्षणादौ कृते सति दोषो नास्ति । गृसंभा.

ब्रह्मविष्टरयोर्लक्षणे

[2]**ब्रह्मविष्टरयोश्चापि संदेहे समुपस्थिते ॥**
[3]**ऊर्ध्वकेशो भवेद्ब्रह्मा लम्बकेशस्तु विष्टरः ॥**

ब्रह्मविष्टरयोः स्वरूपसंदेहे निर्णयमाह— ऊर्ध्वकेशो ब्रह्मा भवेत् । अधोलम्बितकेशो विष्टरो भवेत् । केशः अग्रम् । गृसंभा.

[4]**दक्षिणावर्तको ब्रह्मा वामावर्तस्तु विष्टरः ।**
[5]**कतिभिस्तु भवेद्ब्रह्मा कतिभिर्विष्टरः स्मृतः ।**
**पञ्चाशद्भिः कुशैर्ब्रह्मा तदर्धेन तु विष्टरः ॥**

---

(१) गृसं. १।८५–८६.

(२) गृसं. १।८८.

(३) गृसं. १।८९ ; चदा. १४४ ; प्रपा. ३५२ (=); निप्र. २०५ ; संत. ८६३, ८८७ ; प्रर. १०४ ; संप्र. ८२१; संकौ. २१४ ; संग २९ विधानपारिजातके : १५६; संव. १५५ ; संर. ५४४ ; संदी. २८. संतव्यतिरिक्तसर्वनिबन्धग्रन्थेषु परिशिष्टे इत्युक्तम्, क्वचित् छन्दोगपरिशिष्टमपि ।

(४) चदा. १४४ ; प्रपा. ३५२ (=) ; निप्र. २०५ छन्दोगपरिशिष्टे ; संत. ८६३, ८८७ ; प्रर. १०४ ; संप्र. ८२१; संकौ. २१४; संग. ३० विधानपारिजातके : १५६; संव. १५५ ; संर ५४४ ; संदी. २८. चदा. इत्यादिग्रन्थेषु परिशिष्टे इति ।

(५) गृसं. १।८९–९० ; चदा. १४३ रः स्मृतः (रो मतः) कुशैर्ब्रह्मा (भवेद्ब्रह्मा) ; प्रपा. ३५२ (=) रः स्मृतः (रो मतः) पञ्चाशद्भिः कुशैर्ब्रह्मा (पञ्चाशता भवेद्ब्रह्मा) ; गभा. ५३ कुशैर्ब्रह्मा (भवेद्ब्रह्मा) उत्त. ; निप्र. २०५ चदावत्, छन्दोगपरिशिष्टे ; संत. ८८७

ऋजुरक्षरार्थः । आभ्यां श्लोकाभ्यां गोभिलोक्तौ दर्भबटुविष्टरौ व्याख्यातौ । कर्मप्रदीपे तु 'यज्ञवास्तुनि मुष्ट्यां च स्तम्बे दर्भबटौ तथा । दर्भसंख्या न विहिता विष्टरास्तरणेष्वपि ॥' इति दर्भबटौ विष्टरे च दर्भसंख्या निषिद्धा । तदनयोर्विकल्पः— पञ्चाशद्भिर्वा कुशैर्भवति अपरिमितैर्वा कुशैः इति । कुतः ? द्वयोरप्यसच्छास्त्रेऽभिधानात् । 'संभवे पञ्चाशद्भिः कुशैरसंभवे अपरिमितैरिति व्यवस्थितोऽयं विकल्पः' इति नारायणोपाध्यायाः । रघुनन्दनस्तु छन्दोगोऽपि आचार्यपुत्रस्यैतद्वचनमित्यजानानः 'शाख्यन्तरीयमेतत् संख्यावचनम्' इति कल्पयांचकार । गृसंभा.

कृतमकृतं कृताकृतं चेति त्रैविध्यं हविषः

**[1]यवव्रीह्यकृतं ज्ञेयं तण्डुलादि कृताकृतम् ।**
**ओदनं तु कृतं विद्यान्न तस्य करणं पुनः ॥**

'अथ हविष्यस्यान्नस्याग्नौ जुहुयात् कृतस्य वाऽकृतस्य वा' ( गोगृ. १।३।६ ) इत्यादिसूत्रोक्तं कृतादिपदं व्याचष्टे— यवेति । ऋजुरक्षरार्थः । यवव्रीहि इति द्वन्द्वैकवद्भावः । तच्च गोधूमादीनामप्युपलक्षणम् । तण्डुलादि इत्यादिपदात् माषमुद्गादिवैदलादीनां ग्रहणम् । ओदनपदं मोदकपिष्टकादीनामप्युपलक्षणम् । 'तण्डुलादि इत्यादिपदात् सक्तुग्रहणम्' इत्यसंगतैषा कल्पना दीक्षितस्य । कुतः ? तस्य कृतत्वात् । कथं ज्ञायते ? यदयमोदनस्य कृतत्वे 'न तस्य करणं पुनः' इति हेतुतया निर्दिशति । अविशिष्टं खल्वेतत् सक्तौ । न हि तस्यापि पुनः करणमस्ति । तथा च कर्मप्रदीपः— 'कृतमोदनसक्त्वादि तण्डुलादि कृताकृतम् । व्रीह्यादि चाकृतं प्रोक्तमिति हव्यं त्रिधा मतम् ॥' इति । गृसंभा.

गोभिलगृह्यगतसर्वतःशब्दार्थः

**[1]दिशां च विदिशां चैव यत्र नोक्ता विचारणा ।**
**सर्वतस्तत्र शब्दोऽयं विधियोगे निपात्यते ॥**

यत्र विधियोगे विधानयोगे, दिशां पूर्वादीनां विदिशामाग्नेय्यादीनां च विचारणा नोक्ता नाभिप्रेता, तत्र 'सर्वतः' इत्ययं शब्दो निपात्यते क्रियते । तथा च गोभिलसूत्रम्— 'यत्र श्वभ्राः स्वयं खाताः सर्वतोऽभिमुखाः स्युः, तत्रावसानं प्राग्द्वारं यशस्कामो बलकामः कुर्वीत' ( गोगृ. ४।७।१०,१२ ) इति । दीक्षितः पुनः 'एवं दक्षिणैवं प्रतीच्येवमुदीची' ( गोगृ. ३।७।१५ ) इति सूत्रमत्रोदाजहार । गृसंभा.

मेक्षणस्य समिधां च मानम्

**[2]प्रादेशमात्रं कुर्वीत मेक्षणं समिधस्तथा ।**
**इध्मः समानवृक्षाणां द्विप्रादेशप्रमाणतः ॥**

मेक्षणं समिधश्च प्रादेशमात्रं कुर्यात् । इध्मस्तु द्विप्रादेशप्रमाणतः कर्तव्यः । स चायमिध्मः समानजातीयानां वृक्षाणाम्, संबन्धलक्षणा षष्ठी, करणीयः । न पुनः कतिचिदिध्माः खादिराः कतिचिच्च पालाशाः कर्तव्याः । गृसंभा.

समिद्गुणाः

**[3]प्रागग्राः समिधो देयास्ताश्च काम्येष्वपाटिताः ।**
**शान्त्यर्थेषु सशक्ताऽऽर्द्रा विपरीता जिघांसति ॥**

समिधः प्रागग्राः कृत्वा अग्नौ देयाः । ताश्च समिधः काम्येषु कर्मस्वपाटिताः कर्तव्याः । शान्त्यर्थेषु कर्मसु

---

गभावत्, उत्त.; प्रर. १०४ पञ्चाशद्भिः कुशैर्ब्रह्मा ( पञ्चाशता भवेद्ब्रह्मा ) उत्त.; संप्र. ८२१ पञ्चाशद्भिः ( पञ्चाशता ) शेषं चदावत्; सिन्धु. ११३५ प्ररवत्, उत्त.; संकौ २१४ प्ररवत्, उत्त.; संग. २९ पञ्चाशद्भिः कुशैर्ब्रह्मा ( पञ्चाशत्कुशको ब्रह्मा ) उत्त., विधानपारिजातके : १५५ संप्रवत्; संव. १५५ प्ररवत्, उत्त.; संर. ५४४ प्ररवत्, उत्त; संदी. २८ संगवत्, उत्त. चदा. इत्यादिग्रन्थेषु परिशिष्टे इति ।

( १ ) गृसं. १।९२–९३.

( १ ) गृसं. १।९४–९५.

( २ ) गृसं. १।९९–१००.

( ३ ) गृसं. १।१००–१०१; संग. ३३ सशक्ताऽऽर्द्रा ( सवल्कार्द्रा ) जिघांसति ( जिघांसताः ) : ३८ जिघांसति ( जिघांसता ) शेषं पूर्ववत्, गृह्यपरिशिष्टम्; संदी. ३१, ३७ सशक्ताऽऽर्द्रा ( सवल्कार्द्राः ) जिघांसति ( जिघांसनाः ).

सशक्ता, शक्तं शक्तिः तया सह वर्तमाना, समर्था सवीर्या इति यावत्, आर्द्रा च समित् कर्तव्या। जिघांसति हन्तुमिच्छति कर्मणि, अभिचारकर्मणीत्येतत्। एतद्विपरीता समित्कर्तव्या, निर्वीर्या शुष्का चेत्यर्थः। एतद्विपरीता समित् कर्त्री कर्मकर्तारं हन्तुमिच्छति इति वा वर्णनीयम्। गृसंभा.

आज्यसंज्ञा

[1]**अग्निना चैव मन्त्रेण पवित्रेण च चक्षुषा।**
**चतुर्भिरेव यत्पूतं तदाज्यमितरद्घृतम्॥**

'आज्यं संस्कुरुते' (गोगृ. १।७।१९) इति सूत्रोक्तमाज्यं व्याकरोति—अग्निनेति। अग्निना अधिश्रयणम्, मन्त्रेण 'देवस्य त्वा' इत्यादिना पवित्रेण च यथोक्तलक्षणेनोत्पवनम्, चक्षुषा वीक्षणम्। एभिश्चतुर्भिः यत्पूतं तदाज्यमित्युच्यते। एतदन्यदसंस्कृतं यत् तद्घृतम्। 'आज्यं संस्कुरुते' इति सूत्रे त्वाज्यशब्दे 'उद्वहेत द्विजो भार्याम्' इत्यादिवद्भाविनि भूतवदुपचारो बोद्धव्यः। गृसंभा.

होमशेषचरुणैव बलिहरणम्

[2]**चरवे यो विधिः प्रोक्तः स यज्ञ इति निश्चयः।**
**बलिं तेभ्यो न कुर्वीतोपसिद्धार्थैर्बलीन् हरेत्॥**

चरवे इति तादर्थ्ये चतुर्थी। चर्वर्थे यो विधिरुक्तः स खलु यज्ञे ज्ञातव्यः इत्याचार्याणां निश्चयः। अतो बलिकर्मार्थं तान् विधीन् न कुर्वीत। बलये तान् न कुर्वीत, इति वक्तव्ये, बलिं तेभ्यो न कुर्वीत इति व्यत्यासेन प्रयुङ्क्ते। बलिकरणार्थं चरुर्न पक्तव्यः इत्ययमत्र विवक्षितोऽर्थः। अतो यत्र कारणान्तराच्चरुः पच्यते, तत्र तस्मादपि बलिहरणमविरुद्धम्। तथा च गोभिलसूत्रम्—'सर्वस्य त्वेवान्नस्यैतान् बलीन् हरेत् पित्र्यस्य वा स्वस्त्ययनस्य वाऽर्थार्थस्य वा' (गोगृ. १।४।२०) इति। उप समीपे महानसे सिद्धार्थैः सिद्धैरन्नैर्बलीन् हरेत्। होमशेषेणैव बलिहरणस्य कर्तव्यत्वात् वैश्वदेवहोमोऽप्यनेन व्याख्यातः। मनुरप्याह— 'वैश्वदेवस्य सिद्धस्य गृह्येऽग्नौ विधिपूर्वकम्। आभ्यः कुर्याद्देवताभ्यो ब्राह्मणो होममन्वहम्॥' (मस्मृ. ३।८४) इति। विश्वे देवाः सर्वे देवाः, ते यस्य पाकस्य देवताः सोऽयं वैश्वदेवः, अहरहर्महानसे यत्पच्यते तदुच्यते। 'वैश्वदेवादन्नात्पर्युक्ष्य जुहोति' इति च गृह्यान्तरम्। तथा कात्यायनः— 'स्वशाखाविधिना हुत्वा तच्छेषेण बलिं हरेत्।' इति। गृसंभा.

मन्त्रानादेशे व्याहृतीनां मन्त्रत्वम्

[1]**यत्र मन्त्रा न विद्यन्ते व्याहृतीस्तत्र योजयेत्।**
**मन्त्राणामेव चाऽऽदेशे मन्त्रात्कर्म समाचरेत्॥**

यत्र मन्त्रा नोपदिश्यन्ते, तत्र व्याहृतीर्वक्ष्यमाणलक्षणाः योजयेत्, अन्यत्र सायंप्रातर्वैश्वदेवहोमादिभ्य इध्मादिभ्यश्च। मन्त्राणां पुनरुपदेशे मन्त्रात्कर्म कुर्यात् इत्यादरार्थमुक्तम्। गृसंभा.

व्याहृतिप्रशंसा, ओंकाराथशब्दयोर्माङ्गलिकत्वम्

**भूरादयो व्याहृतयो वेदेभ्यो निःसृताः पुरा।**
**महत्त्वं व्याहृतित्वं च प्राप्ताः स्वेनैव कर्मणा॥**

भूर्भुवः स्वरिति तिस्रो व्याहृतयः वेदेभ्यः ऋग्यजुःसामलक्षणेभ्यः पूर्वं निर्गताः। ताः खल्वेताः स्वेनैव कर्मणा वक्ष्यमाणलक्षणेन महत्त्वं व्याहृतित्वं च प्राप्ताः। महतो भावो महत्त्वम्। व्याहृतीनां भावो व्याहृतित्वम्। गृसंभा.

**ओंकारजननात्तासां महत्त्वं परिभाष्यते।**
**व्याहृता व्याहृतित्वं च तेन त्रैविद्यतां ययुः॥**

ओंकारस्य जननात्तासां महत्त्वमाचार्यैरुच्यते। ताश्च वेदेभ्यो व्याहृताः सत्यः व्याहृतित्वं ययुः। तेनैव वेदत्रयेभ्यो( ? वेदत्रयात् ) व्याहृतत्वेन हेतुना त्रैविद्यतां च

(१) गृसं. १।१०५–१०६; संत. ८६९ मितरद्घृतम् (मिति च स्मृतम्).
(२) गृसं. २।५.

(१) गृसं. २।६–८; संदी. ४५ (=) चाऽऽदेशे मन्त्रात् (चोद्दिष्टे मन्त्रैः) स्वेनैव (तेनैव) परि (प्रति) व्याहृता (व्याप्त्या च).

ययुः । त्रिवेदेषु( ? तिसृषु विद्यासु ) भवास्त्रैविद्याः, तद्भावस्त्रैविद्यता । अथवा, विद्या इति वेदमाचक्ष्महे । तिसृणां विद्यानां भावस्त्रैविद्यम्* । यस्माद्वेदत्रयेभ्यो(१) व्याहृताः, तस्माद्वेदत्रयभावं ययुरित्यर्थः । गृसंभा.

**'ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।**
**अण्डं भित्त्वा विनिर्यातौ तेनैतौ मङ्गलावुभौ ॥**

ओंकारश्च अथशब्दश्च द्वावेतौ ब्रह्मणोऽण्डं भित्त्वा पूर्वं निर्गतौ । 'कण्ठं भित्त्वा' इति पाठे व्यक्त एवार्थः । तेनैतावुभौ मङ्गलजनकौ । 'आयुर्घृतम्' इतिवत् तज्जनके तच्छब्दप्रयोगः । लिङ्गव्यत्ययश्छान्दसः । 'तेन माङ्गलिकावुभौ' इति पाठे व्यक्त एवार्थः । गृसंभा.

**अथैताः स्वव्याहृतयोऽयवीयस्यः पराः स्मृताः ।**
**ऐरावतः प्रतिक्षेत्रे वेदान्तेष्वाश्रिताश्च याः ॥**

अथ पूर्वोक्ता एताः स्वस्ववेदस्य व्याहृतयः अयवीयस्यः ज्येष्ठाः, पराः उत्कृष्टाः कथिताः । याश्च ऐरावतः प्रतिक्षेत्रे इरावतः स्थाने, ऊहगाने इत्येतत्, वेदान्तेषु च आश्रिताः इति ता एव व्याहृतयः स्तूयन्ते । एवं वा-यज्ञायज्ञीयसाम्नो योनिभूता ऋक् 'यज्ञा यज्ञा वो अग्नये गिरा गिरा च चक्षसे' इत्यादिका समाम्नायते । तत्र 'न गिरा गिरेति ब्रूयात् यद्गिरा गिरेति ब्रूयादात्मानमेव तदुद्गाता गिरेत्, ऐरं कृत्वोद्गेयम्' इति ब्राह्मणेन गिराशब्दं निषिध्य ऐरं कृत्वा गेयमित्युपदिष्टम् । तदुपदिष्टमैरमिति पदमत्र ऐरशब्देन निर्दिश्यते । ऐरं विद्यते अस्येत्यैरवान् । ऐरवानेव ऐरावान् । मत्वर्थीये परे पूर्वस्वरदीर्घश्छान्दसः । तद्योगाद्ग्रन्थोऽपि तथोच्यते । ऊहगाने उदाहरणम्— 'भूः । भुवाः । सुवाः' इति । वेदान्तेषु खल्वपि— 'भूः प्रपद्ये भुवः प्रपद्ये स्वः प्रपद्ये इत्यृग्वेदं प्रपद्ये यजुर्वेदं प्रपद्ये सामवेदं प्रपद्ये' इति । गृसंभा.

अविदासिह्रदलक्षणम्

**मध्ये स्थण्डिलमन्ते च वारिणा परिसंवृतम् ।**
**अविदासिनं ह्रदं विद्यात्तादृशं कर्मणो विदुः ॥**

मध्ये स्थण्डिलं स्थलम्, अन्ते च वारिणा परि सर्वतोभावेन संवृतं वेष्टितम् । एवंभूतं ह्रदम् अविदासिनं जानीयात् । तादृशं ह्रदं कर्मणो विदुर्जानन्त्याचार्याः । कर्मणः इति संबन्धलक्षणा षष्ठी । तदनेन 'पौर्णमास्यां रात्राववि-दासिनि ह्रदे नाभिमात्रमवगाह्याक्षततण्डुलानृगन्तेष्वास्येन जुहुयात् स्वाहेत्युदके' ( गोगृ. ४।५।२६ ) इति सूत्रोक्तः अविदासी ह्रदो व्याख्यातः । गृसंभा.

अभिरूपलक्षणम्

**यत्र विद्या च वित्तं च सत्यं धर्मः शमो दमः ।**
**अभिरूपः स विज्ञेयः स्वाश्रमे यो व्यवस्थितः ॥**

'अपवर्गेऽभिरूपभोजनं यथाशक्ति' ( गोगृ. १।१।६ ) इतिसूत्रोक्तमभिरूपं व्याकुरुते— यत्रेति । वित्तमिति भावप्रधानो निर्देशः । ख्यातिर्विचारो वा तदर्थः । अथवा, वित्तं धनमिति यथाश्रुत एवार्थः । 'वृत्तं च' इति पाठे वृत्तम् 'गुरुपूजा घृणा शौचं सत्यमिन्द्रियनिग्रहः । प्रवर्तनं हितानां च तत्सर्वं वृत्तमुच्यते ॥' इत्युक्तलक्षणम् । तत्र सत्यादीनां पुनरुपादानमादरार्थम् । शमः बहिरिन्द्रियनिग्रहः । दमः अन्तरिन्द्रियनिग्रहः । प्रसिद्धमन्यत् । यत्रैतानि विद्यन्ते, यश्च स्वाश्रमे गृह्यकर्मकर्तुरात्मीयाश्रमे समानाश्रमे व्यवस्थितः, गृहस्थ इति यावत् । सोऽयमभिरूपो विज्ञेयः । गृसंभा.

कर्मयोग्यायोग्याग्निहोमफलानि

**लौकिके लोकसामान्ये क्रव्यादाग्नौ वृथा हुतम् ।**
**याज्ञिकं पुण्यमायुष्यं कर्मणा नोपपद्यते ॥**

सामान्यं साधारणमित्यनर्थान्तरम् । लोकसामान्ये असंस्कृते इत्यर्थः । लौकिकस्याग्नेर्विशेषणमिदम् । तदयमर्थः— असंस्कृते लौकिके अग्नौ क्रव्यादाग्नौ श्मशानाग्नौ च हुतं होमः वृथा भवति । तदेव विवृणोति— आयुष्यम् आयुषे हितम्, याज्ञिकं यज्ञोद्भवं पुण्यं तेन कर्मणा नोत्पद्यते इति । सोऽयमसंस्कृते लौकिकाग्नौ

---

* अस्मिन्पक्षे 'तल्' प्रत्ययस्य साधुत्वं चिन्तनीयम् ।

(१) गृसं. २।९-१५.

होमे निन्दावादः। एतदभिप्रायेणैव लोकसामान्य इति लौकिकाग्नेर्विशेषणमुपात्तम्। अत एव संस्कृतं लौकिकमग्निमभिप्रेत्य तत्र होतुः फलवादं वक्ष्यति। लौकिकस्याप्यग्नेः संस्कारात्परं न लौकिकत्वमित्यसंगतैषा कल्पना रघुनन्दनस्य। कस्मात्? प्रमाणाभावात्, लोकसामान्ये इति विशेषणस्यार्थवत्तोपपत्तेश्च। तथात्वस्याभ्युपगमे च लौकिकेऽग्नौ होतुः फलवचनं न खल्वपि उपपत्स्यते। न खल्वसंस्कृते लौकिकेऽग्नौ होमं मन्यते भवान्। अपि चैवं सति 'अन्वष्टकास्वष्टकावदग्नौ हुत्वा' इति विष्णुसूत्रे अग्निग्रहणात् पितृयज्ञहोमस्य लौकिकाग्नौ निषेधाच्च अन्वष्टकायामनग्निमतां नाधिकारः, इति स्वोक्तमपि व्याहन्येत। लौकिकस्याप्यग्नेः संस्कारात्परं लौकिकत्वाभावे तत्रैव होमस्योपपत्तेः कथमनग्निमतां तत्रानधिकारं ब्रवीति? तदास्तां तावदार्षवचनविरोधः, यावत्स्ववचोव्याघातमपि नाऽऽलोचयति भवान् इति किमत्र ब्रूमः? यथा चानग्निमतामप्यस्त्यधिकारोऽन्वष्टकायां तथा गृह्यभाष्येऽभिहितमस्माभिः। गृसंभा.

**वैदिके लौकिके वाऽपि यज्जुहोति प्रयत्नतः।**
**वैदिके ब्रह्मलोकः स्याल्लौकिके पापनाशनम्॥**

वैदिके लौकिके वा संस्कृते अग्नौ यज्जुहोति, तस्य फलवचनमुत्तरार्धम्। गृसंभा.

प्लावनेतिकर्तव्यता

**[1]स्ववर्णाभिरनिन्द्याभिरद्भिरक्षतमिश्रितैः।**
**स्नानं चतुर्भिः कलशैः स्त्रीभिः स्त्रीं यत्र प्लावनम्॥**

यत्र विवाहादौ स्त्रीभिः कर्त्रीभिः स्त्रीं कन्यां प्रति प्लावनं क्रियते, तत्र अनिन्दिताभिः स्ववर्णाभिः समानवर्णाभिः स्त्रीभिः, ब्राह्मण्याः ब्राह्मणीभिः क्षत्रियायाः क्षत्रियाभिः वैश्यायाः वैश्याभिरित्यर्थः। चतुर्भिः कलशैः अक्षतमिश्रितैः, लिङ्गव्यत्ययोऽत्र द्रष्टव्यः, यवमिश्रिताभिरद्भिः स्नपनं कर्तव्यम्। गृसंभा.

विवाहविधिगतमन्त्रजपकर्तृत्वनियमः

**[1]विवाहे यो विधिः प्रोक्तो मन्त्रा दाम्पत्यवाचकाः।**
**वरस्तु ताञ् जपेत्सर्वानृत्विग्राजन्यवैश्ययोः॥**

विवाहे यो विधिरनिर्दिष्टकर्तृकः, 'प्रोक्ते नक्षत्रे षडाज्याहुतीर्जुहोति' (गोगृ. २।३।६) इत्यादिक आचार्येणोक्तः, तान् वरः कुर्यात्। अपर आह— 'विवाहे यो विधिरग्निस्थापनादिः प्रोक्तः, तं विधिं वरः कुर्यात्' इति। ये च दाम्पत्यवाचका मन्त्राः, तान् वरो जपेत्। एवं वा— विवाहे यो विधिराचार्येणोक्तः, तत्र दाम्पत्यवाचका ये मन्त्राः, तान् सर्वान् वरो जपेत्। क्षत्रियवैश्ययोः पुनस्तान् मन्त्रान् ऋत्विक् जपेत्। तस्मात् 'अपरेणाग्निमौदकोऽनुसंव्रज्य पाणिग्राहं मूर्धदेशेऽवसिञ्चति तथेतरां समञ्जन्त्वित्येतयर्चा' (गोगृ. २।२।१५) इति सूत्रे 'औदक एव मन्त्रं पठति' इति सरलावर्णनमसंगतम्। गृसंभा.

अपां ध्रुवासंज्ञा

**महानदीषु या आपः कौप्यान्याश्च ह्रदेषु च।**
**गन्धवर्णरसैर्युक्ता ध्रुवास्ता इति निश्चयः॥**

'अथ जन्यानामेको ध्रुवाणामपां कलशं पूरयित्वा' (गोगृ. २।१।१३) इत्यादिसूत्रोक्ता ध्रुवा अपो व्याकुरुते— महानदीष्विति। महानदीषु गङ्गाद्यासु या आपः, याश्च कूपोद्भवाभ्योऽन्याः तडागादिसंभवा आपः, ह्रदेषु अगाधजलेषु या आपः, ता इमाः शोभनगन्धवर्णरसैर्युक्ताः सर्वा अप्यापः ध्रुवाः इत्ययमाचार्यस्य निश्चयः। अन्ये तु वर्णयन्ति— 'कूपे या आपः, अन्याश्च तडागादिषु या आपः' इति। तेषां 'कौप्यान्याः' इति विसर्गलोपे संधिरार्षो द्रष्टव्यः। गृसंभा.

ह्रासनपदार्थः

**[2]उद्वर्तनं नखच्छेदो रोमच्छेदनमेव च।**
**स्रंसनं मेखलायाश्च ह्रासनानि विदुर्बुधाः॥**

(१) गृसं. २।२४–२५. (२) गृसं. २।३८.

अथेदानीं 'तत्रैनां सकेशनखामभ्यज्य ह्रासयित्वाऽऽप्लावयन्ति' (गोगृ. २।५।६) इति सूत्रोक्तं ह्रासनं व्याकुरुते– उद्वर्तनमिति। उद्वर्तनं कल्केन शरीरादाज्यादीनामपनयनम्। मेखलायाः काञ्च्याः स्रंसनम् अधःपातनम्। प्रसिद्धमन्यत्। एतानि ह्रासनानि जानन्ति पण्डिताः। गृसंभा.

गृह्यसूत्रगतसुरोत्तमपदार्थः

**[1]सर्वयज्ञेषु विप्राणामद्भिः पूर्वं प्रवर्तते।**
**तस्मात्सुरोत्तमा ह्यापो अद्भिरेवाभिषेचयेत्॥**

सर्वकर्मसु विप्राणां प्रथममद्भिः क्रिया प्रवर्तते। तस्मात्कारणात् आप एव सुरोत्तमाः। अतः अद्भिरेव कन्यामभिषेचयेत्। तदनेन 'सुहृत् सुरोत्तमेन सशरीरां त्रिर्मूर्धन्यभिषिञ्चेत्' (गोगृ. २।१।१०) इति सूत्रस्थं सुरोत्तमपदं व्याख्यातम्। अद्भिरित्यकारलोपाभावश्छान्दसः*। आह– कस्मात्पुनः कारणादापः सुरोत्तमा उच्यन्ते? उच्यते– नैघण्टुककाण्डे तावत् 'सुरा' इत्युदकनामसु पठितम्। तच्च तत्र पञ्चविंशतितमं नाम। तस्मादुत्तममुदकमेव सुरोत्तमशब्दस्यार्थः। गृसंभा.

चरोरपूपानां च मानम्

**[2]चतुर्मुष्टिश्चरुः कार्यश्चतुर्णामुत्तरोऽपि वा।**
**कपालस्य प्रमाणेन अपूपानष्टकाविधौ॥**

चरुतन्त्रे चतुर्मुष्टिपरिमितश्चरुः कर्तव्यः। अपि वा अथवा बहुदैवत्ये चरौ चतुर्णां मुष्टीनामुत्तरः अधिकोऽपि चरुः कर्तव्यः। अष्टकाविधौ तु कपालस्य प्रमाणेन अपूपान् मण्डकान् कुर्यात्। मुष्टिः पलमित्यनर्थान्तरम्। बद्धपाणिः कस्मान्नोच्यते? आचार्यविरोधादित्याह। एवं खल्वेकदैवत्येऽपि चरौ चतुर्मुष्टिकरणे आचार्यसूत्रं विरुध्येत। तथा च सूत्रम्– 'अमुष्मै त्वा जुष्टं निर्वपामीति देवतानामादेशं सकृत्, द्विस्तूष्णीम्' (गोगृ. १।७।३) इति। तस्मात् मुष्टिरत्र पलमेव इति प्रतिपद्यामहे। तदिदं हविःपरिमाणपरं वचनम्। अत एव कर्मप्रदीपेऽपि 'देवतासंख्यया ग्राह्या निर्वापाश्च पृथक् पृथक्। तूष्णीं द्विरेव गृह्णीयाद्धोमश्चापि पृथक् पृथक्॥ यावता होमनिर्वृत्तिर्भवेद्वा यत्र कीर्तिता। शेषं चैव भवेत्किंचित्तावन्तं निर्वपेच्चरुम्॥' इत्यत्र परवचनेन हविःपरिमाणमेवोक्तम्, न मुष्टिसंख्या, तस्याः पूर्ववचनेनैवोक्तत्वात्, 'तावन्तं चरुं निर्वपेत्' इत्यस्या वचनव्यक्तेर्हविःपरिमाण एव तात्पर्यावगतेश्च। तदनयोः परिमाणयोर्विकल्पो बोद्धव्यः, द्वयोरप्यसच्छास्त्रोक्तत्वात्। कात्यायनोऽपि 'भवेद्वा' इति वाशब्देन परिमाणान्तरं सूचयति। गृसंभा.

पितृयज्ञेषु प्रणवस्य संततत्वमुपांशुत्वं च

**[1]संततः प्रणवः कार्यः पितृयज्ञेषु ब्राह्मणैः।**
**उपांशुकरणं चापि सह कर्त्रा समस्वरैः॥**

पितृयज्ञेषु पितृकर्मसु कर्त्रा कर्मकर्त्रा सह समस्वरैर्ब्राह्मणैः संततः अविरतः, प्रतिमन्त्रमित्यर्थः। प्रणवः ओंकारः करणीयः। होमे अन्यत्र च 'नोंकुर्याद्धोममन्त्राणां पृथगादिषु कर्हिचित्। अन्येषां चाविकृष्टानां कालेनाऽऽचमनादिना॥' इति कर्मप्रदीपोक्तं द्रष्टव्यम्। 'स्वरादिमृगन्तमोंकारं त्रिमात्रं मकारान्तं कृत्वोत्तरस्य अर्धर्चेऽवस्येत् तत्संततम्' इति श्रौताश्वलायनोक्तलक्षणो वा संततो द्रष्टव्यः। उपांशु 'शनैरुच्चारयेन्मन्त्रमीषदोष्ठौ प्रचालयन्। किंचिच्छब्दं स्वयं विद्यादुपांशुः स जपः स्मृतः॥' इत्युक्तलक्षणं यथा भवति, तथा करणं च ज्ञेयम्। अथवा, उपांशुशब्दो विविक्तपर्यायोऽव्ययम्। तदयमर्थः– उपांशु विविक्ते पितृयज्ञस्य करणं बोद्धव्यम्। तथा च मनुः– 'शुचिं देशं विविक्तं च गोमयेनोपलेपयेत्।' इति। गृसंभा.

अतीतकर्माणि कृत्वैवोत्तरकर्माधिकारः

**कालातीतेषु होमेषु उत्तरेष्वागतेषु च।**
**कालातीतानि हुत्वैव उत्तराणि समारभेत्॥**

---

* लोपोऽयं न लोपत्वेन विहितः, किं तु अर्थसिद्धः। पूर्वरूपाभाव इत्यर्थः।

(१) गृसं. २।४१. (२) गृसं. २।७०.

(१) गृसं. २।७३–७५.

'आ सायमाहुतेः प्रातराहुतिर्नात्येति' (गोगृ. १।९।१४) इत्यादिसूत्रैरतीतहोमानामागामिहोमकाले करणमुपदिष्टम् । तत्र किमतीतहोमं कृत्वा आगामिहोमः कर्तव्यः, आहोस्वित् आगामिहोमं कृत्वा अतीतहोमः करणीयः ? इत्येतदिदानीं वर्णयिष्यामः— कालातीतेष्विति । ऋज्वर्थः श्लोकः । गृसंभा.

**यान्यतीतान्यतिक्रम्य उत्तराणि समारभेत् ।**
**न देवाः पितरस्तस्य प्रतिगृह्णन्ति तद्धविः ॥**

यः पुनर्यान्यतीतानि कर्माण्यकृत्वा उत्तराण्यारभते, देवाः पितरश्च तस्य तत् अतीतहोमीयं हविर्न प्रतिगृह्णन्ति । अथवा 'यानि' इति 'यः' इत्यर्थे व्यत्ययात् पदम् । यः अतीतान्यकृत्वा उत्तराण्यारभते, देवाः पितरश्च तस्य तत्सर्वमपि हविर्न प्रतिगृह्णन्ति ।

गृसंभा.

प्रागुदीच्या अपराजितेति संज्ञा

[1]**प्रक्रमणे तथोद्वाहे होमे स्विष्टकृते तथा ।**
**यस्यां दिशि विधिं प्राहुस्तामाहुरपराजिताम् ॥**

अथेदानीं 'अग्नये स्वाहेति पूर्वां तूष्णीमेवोत्तरां मध्ये चैवापराजितायां चैव दिशीति सायम्' (गोगृ. १।३।९) इति सूत्रोक्तामपराजितां दिशं व्याकुरुते— प्रक्रमणे इति । प्रक्रमणे वध्वाः सप्तपदीगमने, तथोत्तरविवाहे, स्विष्टकृद्धोमे च यस्यां दिशि विधानं प्राहुराचार्याः, तां दिशमपराजितां ब्रुवन्त्याचार्याः । प्रागुदीचीमैशानीमित्यर्थः । तथा च प्रक्रमणे गोभिलसूत्रम्— 'शूर्पेण शेषमग्नावोप्य प्रागुदीचीमभ्युत्क्रामयन्त्येकमिष इति' (गोगृ. २।२।११) इति । तथोत्तरविवाहे— 'प्रागुदीच्यां दिशि यद्ब्राह्मणकुलमभिरूपम्' (गोगृ. २।३।१) इति । तथा स्विष्टकृद्धोमे— 'अग्नये स्विष्टकृते स्वाहेत्युत्तरार्धपूर्वार्धे जुहुयात्' (गोगृ. १।८।१४) इति ।

गृसंभा.

(१) गृसं. २।७६–७७.

हविष्यपदार्थः

**अयुक्तमम्ललवणैरपर्युषितमेव च ।**
**हविष्यमेतदन्नाद्यमसुरैश्चाप्यसंयुतम् ॥**

अम्ललवणैर्न युक्तम्, न च पर्युषितम्, नाप्यसुरैर्मिश्रितम् । तदीदृशमोदनाद्यं हविष्यमाहुः । 'असुरः' इति नैघण्टुककाण्डे मेघनामसु पठितम् । तच्च तत्रोनत्रिंशत्तमं नाम । तथा च असुरैः मेघैर्मेघजलैर्न मिश्रितमित्येतत्, मेघोदकस्यापवित्रत्वात् । तथा च स्मरणम्— 'स्नानमाचमनं दानं देवतापितृतर्पणम् । शूद्रोदकैर्न कुर्वीत तथा मेघाद्विनिःसृतैः ॥' इति । अथवा, असुरैः क्षारविदाहिभिरमिश्रितमित्यर्थः । कथं ज्ञायते ? शृणु यथा ज्ञायते । असुरुपतापः इति ह्यनर्थान्तरम् । असुं रान्ति ददति ये क्षारादयस्ते खल्विमे असुरा भण्यन्ते । असुरैः इति लिङ्गव्यत्ययाद्वा पदं द्रष्टव्यम् । असुराभिरित्यर्थः । असुरा रजनी हरिद्रेत्यनर्थान्तरम् । बहुवचनादन्यैरप्येवंविधैरमिश्रितमिति । अपर आह— 'असुरैरश्वादिभिर्न भक्षितम्' इति । तदनेन 'हविष्यमन्नं प्रथमं परिजपितं भुञ्जीत' (गोगृ. २।३।१८) इति सूत्रोक्तं हविष्यमन्नं व्याख्यातम् । 'तावुभौ तत्प्रभृति त्रिरात्रमक्षारलवणाशिनौ' (गोगृ. २।३।१६) इत्यादिना सूत्रितमक्षारलवणमप्यनेनैव व्याख्यातं वेदितव्यम्, एतदनुपदमेव 'हविष्यमन्नम्' इति सूत्रणात् । तस्यैव खल्वक्षारलवणाशनस्य प्रथमे अशने विशेषविवक्षया सूत्रमिदं प्रववृते— 'हविष्यमन्नम्' इत्यादि । तदत्र लवणमात्रप्रतिषेधात् 'क्षारमृत्तिकादिकृतलवणभिन्नं लवणम् अक्षारलवणम्' इति रघुनन्दनव्याख्यानं नाऽऽदरणीयम्, यच्च 'लवणे सैन्धवसामुद्रे' इति हविष्यान्नविषयं स्मरणान्तरम्, तदप्येतद्व्यतिरिक्तविषयं बोद्धव्यम् । कस्मात्कारणात् ? स्वशास्त्रपरिभाषायाः शीघ्रमुपस्थितत्वात्, सामान्यस्य विशेषेतरपरत्वोपपत्तेश्च ।

गृसंभा.

दर्भ-कृष्णाजिन-मन्त्र-ब्राह्मणानां निर्माल्यत्वाभावः पुनः पुनर्विनियोगश्च

**[1]दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणाश्च विशेषतः ।**
**नैते निर्माल्यतां यान्ति नियोज्यास्तु पुनः पुनः ॥**

एकस्य पुनः पुनः श्राद्धभोक्तृत्वेऽपि दोषो नास्तीति प्रसङ्गादाह— दर्भा इति । कृष्णाजिनं कृष्णमृगचर्म । प्रसिद्धा अन्ये । एते दर्भादयो निर्माल्यतां निर्वीर्यतां न प्राप्नुवन्ति । एवं खल्वग्रिमश्लोके 'निर्माल्याश्चिति पावकाः' इति वचनमाञ्जस्येनोपपत्स्यते । तस्मात् पुनः पुनरपि नियोज्याः । तत्त्वकारस्त्वन्यथेमं श्लोकं पठति— 'दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणा हविरग्नयः । अयातयामान्येतानि नियोज्यानि पुनः पुनः ॥' इति । तत्र अयातयामत्वमपि अनिर्माल्यतापर्यवसायि बोद्धव्यम् । कुतः ? 'जीर्णं च परिभुक्तं च यातयाममिदं द्वयम् ।' इत्युक्तेः । स्मृत्यन्तरे तु विशेषः— 'संग्रहाद्वत्सरं यावच्छुद्धिः स्यादिध्मबर्हिषाम् । अतः परं न गृह्णीयाज्जपादौ यज्ञकर्मणि ॥' इति । अत्र च "मासे नभस्यमावस्या तस्यां दर्भचयो मतः । अयातयामास्ते दर्भा विनियोज्याः पुनः पुनः ॥' इति मरीचिवचनात् श्रावणामावस्यायामेव चितानां दर्भाणामयातयामत्वम् ।" एवमेके । "सर्वदैव चितानां दर्भाणामयातयामत्वम् । मरीचिवचनं तु 'वार्षिकांश्चतुरो मासान् नाऽऽहरेत्कुशमृत्तिकाः । आददीत तदभावे तु सद्यो यस्योपयोजनम् ॥' इति शिवरहस्यीयस्य निषेधस्यापवादकम्" एवमपरे । तदत्र भगवन्तो भूमिदेवाः प्रमाणम् । पूर्वस्तु कल्पो युक्तः प्रतिभाति । कुतः ? मरीचिवचने ते दर्भा इति तच्छब्देन नभस्यमावस्यायां चितान् दर्भान् परामृश्य तेषामयातयामत्वकथनादुभयोरेकवाक्यतोपपत्तेः । शिवरहस्यानार्षत्वं तु तेषामप्यनुमतम् । अन्धुकभट्टेनापि दानसागरेऽभिहितम् —'लोके प्रसिद्धमेतद्विष्णुरहस्यं शिवरहस्यं च । द्वयमिह न परिगृहीतं संग्रहरूपं च यत्नतोऽवधार्यम् ॥' इति । गृसंभा.

(१) गृसं॰ २१८५-८७.

दर्भादीनां निर्माल्यताभावापवादः

**दर्भाः पिण्डेषु निर्माल्या विप्राः प्रेतान्नभोजने ।**
**मन्त्राः शूद्रेषु निर्माल्या निर्माल्याश्चितिपावकाः ॥**

किममीषां न भवत्येव निर्माल्यता ? एवं खलु प्राप्तम् । तत इदमारभ्यते— दर्भा इति । पिण्डेषु प्रक्षिप्ता दर्भा निर्माल्या भवन्ति, कर्मानर्हा इत्यर्थः । प्रेतान्नस्य प्रेताशौचिनामन्नस्य प्रेतश्राद्धान्नस्य वा भोजने कृते विप्रा निर्माल्या भवन्ति । शूद्रेषु प्रयुक्ता मन्त्रा निर्माल्या भवन्ति । चितायां ये अग्नयः ते निर्माल्या भवन्ति । गृसंभा.

दर्भाणां पुनर्विनियोगापवादः

**पिण्डार्थं ये स्तृता दर्भास्तर्पणं तु कृतं तु यैः ।**
**धृतैः कृते च विण्मूत्र त्यागस्तेषां विधीयते ॥**

ये दर्भाः पिण्डनिर्वपणार्थं स्तृताः, यैश्च दर्भैः 'यैः कृतं पितृतर्पणम्' इति स्मरणात् पितृतर्पणं कृतम्, धृतैर्दर्भैः, इत्थंभावे तृतीया, विण्मूत्रे कृते च, तेषां दर्भाणां परित्यागः क्रियते । तत्र विशेषमाह लघुहारीतः— 'पिण्डार्थं ये स्तृता दर्भा यैः कृतं पितृतर्पणम् । मूत्रोच्छिष्टैर्धृता ये च तेषां त्यागो विधीयते ॥ नीवीमध्ये च ये दर्भा ब्रह्मसूत्रे च ये धृताः । पवित्रांस्तान्विजानीयाद्यथा कायस्तथा कुशाः ॥' इति । तदत्र 'मूत्रोच्छिष्टैर्धृता ये च' इत्यस्यापवादतया परवचनारम्भ इति नारायणोपाध्यायाः । एवं च विण्मूत्रोत्सर्गकाले नीवीमध्ये ब्रह्मसूत्रे वा धृतानां कुशानां त्यागो न करणीयः इत्युक्तं भवति । गृसंभा.

दक्षिणश्रवणस्पर्शे निमित्तानि उपपत्तिश्च

**[1]क्षुते निष्ठीवने चैव दन्तोच्छिष्टे तथाऽनृते ।**
**पतितानां च संभाषे दक्षिणं श्रवणं स्पृशेत् ॥**

क्षुते कृते । निष्ठीवने श्लेष्मादिनिरसने कृते । दन्तोच्छिष्टे दन्तलग्नोच्छिष्टे, जिह्वाभिमर्षणयोग्ये निगीर्णे वा इत्यभिप्रेतम् । कथं ज्ञायते ? 'दन्तश्लिष्टे दन्तवदन्यत्र जिह्वाभिमर्षणात् । प्राक् च्युतेरित्येके । च्युतेरास्रावव-

(१) गृसं॰ २१८९-९०.

द्वियान्निगिरन्नेव तच्छुचिः ' ( गौध. १।४४–४६) इति स्मरणात् । तथा अनृते मिथ्यावचने कथिते, पतितानां संभाषे च, दक्षिणं कर्णं स्पृशेत् । स खल्वयं कर्मकाले विधिरित्यवगच्छामः । ' सुप्त्वा भुक्त्वा क्षुत्वा स्नात्वा पीत्वा विपरिधाय च रथ्यामाक्रम्य श्मशानं चाऽऽचान्तः पुनराचामेत् ' ( गोगृ. १।२।३२ ) इति गोभिलसूत्रमपि कर्मकालादन्यत्र इति च प्रतिपद्यामहे । किं कारणम् ? परस्परविरोधो न भविष्यति इति । तथा च स्मरणम् –' क्षुते निष्ठीविते सुप्ते परिधानेऽश्रुपातने । कर्मस्थ एषु नाऽऽचामेद्दक्षिणं श्रवणं स्पृशेत् ॥ ' इति । गृसंभा.

**मरुतः सोम इन्द्राग्नी मित्रावरुणौ तथैव च ॥**
**एते सर्वे च विप्रस्य श्रोत्रे तिष्ठन्ति दक्षिणे ॥**

दक्षिणकर्णस्पर्शे हेतुविवक्षया इदमाह– मरुत इति । एतस्मात्कारणाद्दक्षिणश्रवणं स्प्रष्टव्यम् । मरुतः वायवः अमरा वा । सोमादीनां पृथगुपन्यासो विवक्षया भविष्यति । मित्रावरुणौ इति देवताद्वन्द्वे दीर्घः ।

गृसंभा.

स्वशाखानुक्तस्य परशाखीयस्य सर्वसाधारणस्य च कर्मणोऽनुष्ठानविधिः

**[1]आत्मतन्त्रेषु यन्नोक्तं तत्कुर्यात्पारतन्त्रिकम् ।**
**विशेषाः खलु सामान्या ये चोक्ता वेदवादिभिः ॥**

तन्त्रं शास्त्रमित्यनर्थान्तरम् । आत्मनस्तन्त्रेषु यन्नोक्तम्, तत् परतन्त्रोक्तं कुर्यात् । ये च सामान्याः सर्वशाखिसाधारणाः विशेषाः ' नित्यं स्नात्वा शुचिः कुर्याद्देवर्षिपितृतर्पणम् । ' इति, ' संतोषं परमास्थाय सुखार्थी संयतो भवेत् । ' इति चैवमादयः वेदवादिभिर्मन्वादिभिरुक्ताः, ते च कर्तव्याः । एवं वा– ये चं साधारणा विशेषाः आचमनादयः मन्वादिभिरुक्तास्ते च कर्तव्याः । तदिदं श्रौताभिप्रायं वचनम् । कथं ज्ञायते ? ' स्मार्तं साधारणं तेषु ग्राह्यं श्रौतेषु कर्मसु । ' इति गृह्यपरिशिष्टान्तरदर्शनात् । एवं वा– ये च सामान्याः साधारणाः परिभाषारूपा इत्येतत् । विशेषाः ' उच्चैर्ऋचा क्रियते, उच्चैः साम्ना, उपांशु यजुषा ' इत्येवमादयः वेदवादिभिरुक्ताः, ते च कर्तव्याः । वेदं वदितुं शीलं येषां ते इमे वेदवादिनो वेदप्रवक्तारः कठादयो भण्यन्ते । न खलु तत्रभवन्तो मन्वादयो वेदवादिनः, स्मर्तारो हि ते वेदार्थस्य । एवं वा– सामान्याः समानकर्माश्रयाः ये विशेषाः वेदवादिभिरुक्ताः, ते च करणीयाः । तदनेन शाखान्तरीयगुणानामपि शाखान्तरे उपसंहारः कर्तव्यः इत्युक्तं भवति । तथा च गृह्यपरिशिष्टान्तरम्– ' श्रौतेषु सर्वशाखोक्तं सर्वस्यैव यथोचितम् । ' इति । सेयं शाखान्तराधिकरणन्यायमूला स्मृतिरिति द्रष्टव्यम् । किं भवति तर्हि प्रयोजनं पूर्वार्धस्य ? ननु परार्धेनैव गुणोपसंहार उपदिष्टः । उच्यते– यदात्मतन्त्रे उपदिष्टं तत्र परतन्त्रोक्तगुणोपसंहारः परार्धस्यार्थः । यत् पुनर्नोपदिष्टमेवाऽऽत्मनस्तन्त्रे, तदपि परतन्त्रोक्तं करणीयमिति प्रयोजनं पूर्वार्धस्य । यथा खलु अग्निहोत्रमस्मच्छाखायां नोपदिष्टम्, तदपि याजुर्वेदिकमनुष्ठीयतेऽस्माभिः । तदेतत्परिशिष्टकृतः कात्यायनस्य वचनसंवादेनावधार्यते । तच्चोदाहरिष्यामः । गृसंभा.

स्वशाखोक्तौ परशाखीयानुष्ठाननिषेधः

**[1]ऊनो वाऽप्यतिरिक्तो वा यः स्वशाखोक्तमाचरेत् ।**
**तेन संतनुयाद्यज्ञं न कुर्यात्पारतन्त्रिकम् ॥**

स्वशास्त्रे न्यूनो वा अधिको वा यो विधिरुक्तः, तं स्वशास्त्रोक्तं विधिमाचरेत् । तेनैव यज्ञं विस्तारयेत् । परतन्त्रोक्तं न कुर्यात् । गृसंभा.

---

( १ ) गृसं. २।९१.

( १ ) गृसं. २।९२ ; पम्र. ७२ स्वशास्त्रोक्तमाचरेत् ( स्वशाखास्थितो विधिः ) तन्त्रिकम् ( शाखिकम् ) यज्ञपार्श्वपरिशिष्टे कात्यायनः ; बाल. १।८९ स्वशास्त्रोक्तमाचरेत् ( स्वशाखोदितो विधिः ) लौगाक्षिः ; इन्दु. ५ बालवत्, लौगाक्षिः ; कृभ. ११६८ ( = ) स्वशास्त्रोक्तमाचरेत् ( स्वशाखोदितो विधिः ) तन्त्रिकम् ( तान्त्रिकम् ) : ११७२ ( = ) निर्देशमात्रम् : १७३५ तन्त्रिकम् ( तन्त्रकम् ) शेषं बालवत्, लौगाक्षिः .

**[१]यः स्वशाखोक्तमुत्सृज्य परशाखोक्तमाचरेत् ।
अप्रमाणमृषिं कृत्वा सोऽन्धे तमसि मज्जति ॥**

यः पुनः स्वशाखोक्तं त्यक्त्वा परशाखोक्तमाचरति, स खल्वयमृषिं स्वशाखाचार्यमप्रमाणं करोति । स खल्वृषिमप्रमाणं कृत्वा अन्धे तमसि नरके पतति ।

इदमिदानीं संदिह्यते— एवं तावत् 'आत्मतन्त्रेषु यन्नोक्तम्' इत्यनेन पारतन्त्रिकमपि कर्तव्यतयोपदिष्टम्, 'ऊनो वाऽप्यतिरिक्तो वा' इत्यनेन 'यः स्वशाखोक्तमुत्सृज्य' इत्यनेन च पुनरेतन्निषिद्धम्, किं पुनरत्र तत्त्वम्? उभयं तत्त्वमित्याह । कुतः? उभयोरेवोपदेशात् । विरुद्धं तर्हि? न, विषयभेदात् । कथम्? उच्यते— 'आत्मतन्त्रेषु यन्नोक्तम्' इति तावच्छ्रौताभिप्रायम्, 'ऊनो वा' इत्यादिकं तु गृह्यशास्त्राभिप्रायकमिति विषयभेदादुभयं तत्त्वमिति निश्चीयते । कथं पुनर्ज्ञायते गृह्यशास्त्राभिप्रायेणोत्तरः पक्ष इति? पारिशेष्यादिति ब्रूमः । श्रौताभिप्रायेण पूर्वः पक्ष इति खल्ववोचाम । तस्मादुत्तरः पक्षः पारिशेष्याद्गृह्यशास्त्राभिप्रायेण भविष्यति । इतश्चैतदेवं भविष्यति, 'अप्रमाणमृषिं कृत्वा' इत्यभिधानात् । नो खल्वपि श्रौतेषु पारशाखिकमाचरन् ऋषिमप्रमाणं करोति । न खल्वृषिः कर्ता वेदस्य । नित्यो हि वेदराशिर्मीमांसकानाम्, अपौरुषेयश्चान्येषाम् । प्रवक्तेति चेत्, इति चेद्भवान् पश्यति मा भूत् कर्ता ऋषिर्वेदस्य, प्रवक्ता तु भवति । भवतु, किमतो भवति? एतदतो भवति— यद्येवं श्रौतेष्वपि पारशाखिकमाचरन् प्रवक्तारमृषिमप्रमाणं करोति । नैतत्साधु मन्यामहे । पूर्वसिद्धां हि वाचमृषिः प्रोवाच । पारशाखिकं चाऽऽचरन् तामेव वाचमप्रमाणं करोति, न ऋषिम् । न वा नित्यनिर्दोषस्य पूर्वसिद्धस्य वेदस्य अप्रामाण्यमनुपन्यस्य परसिद्धस्य प्रवक्तुर्ऋषेरप्रामाण्यं युक्तमुपन्यसितुम्, तदधीनसिद्धत्वात्तस्य । गृह्यशास्त्राभिप्रायत्वे तु वाक्यस्यैतत्स्यात् । वेदार्थमनुस्मरन् खल्वृषिः प्रयोगशास्त्रं रचयांचकार । तच्चातिक्रामन् नूनमृषिमप्राणं करोति । तदनुमितां श्रुतिमपि ऋषिमप्रमाणं कुर्वन्नेव अप्रमाणं करोति । शास्त्रान्तरदर्शनाच्चैवमवगच्छामः । तथा च नीलाम्बरादिधृतं गृह्यपरिशिष्टान्तरम्— 'प्रयोगशास्त्रं गृह्यादि न समुच्चीयते परैः । प्रयोगशास्त्रताहानेरनारम्भविधानतः ॥ बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म प्रकीर्तितम् । तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत् ॥ श्रौतेषु सर्वशाखोक्तं सर्वस्यैव यथोचितम् । स्मार्तं साधारणं तेषु ग्राह्यं श्रौतेषु कर्मसु ॥' इति । यथोचितमिति कुर्वन्नविरोधिन एव परोक्तस्य करणमनुजानीते । कात्यायनोऽपि कर्मप्रदीपे 'अक्रिया त्रिविधा प्रोक्ता मुनिभिः कर्मकारिणाम् । अक्रिया च परोक्ता च तृतीया चायथाक्रिया ॥' इति गृह्यशास्त्राभिप्रायेण परोक्तां क्रियां निन्दित्वा 'यन्नाऽऽम्नातं स्वशाखायां परोक्तमविरोधि च । विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत् ॥' इति श्रौतमेवाग्निहोत्रादिकं पारशाखिकं कर्तव्यमुपदिशति । तदेवमादिभिर्वचनैरवगच्छामः— श्रौतेषु पारशाखिकं करणीयं न गृह्योक्तेषु इति । आह— यदि प्रयोगशास्त्रं गृह्यादि परैर्न समुच्चीयते, परं तर्हि सामान्यं विधानमनर्थकं भवति । यदि भवत्यनर्थकम्, किमिति वयमुपालभ्येमहि? न युष्मानुपालभामहे, किंतु मा भूदनर्थकमिति तदपि समुच्चिनुमः इति ब्रूमहे । सत्यमेवं ब्रवीषि, न तु प्रमाणोपेतं ब्रवीषि । प्रयोगशास्त्रविरोधाद्धि नायं समुच्चयः सेद्धुमर्हति । यो हि सामान्यस्य विधानस्याऽऽनर्थक्यं परिजिहीर्षुस्तदपि समुच्चिनोति, स खल्वयं स्वशास्त्राचार्यमृषिं प्रमाणं सन्तमप्रमाणं करोति । क्रममपि प्रयोगशास्त्रीयं विरुणद्धि । उत्सृजति च स्वशाखाश्रयं विधानम् । सेयं पितरमुपेक्ष्य श्वशुरे गाढा भक्तिः । कात्यायनोऽपि 'स्वशाखाश्रयमुत्सृज्य परशाखाश्रयं तु यः । कर्तुमिच्छति दुर्मेधा मोघं तत्तस्य चेष्टितम् ॥' इत्यनेन एनं निन्दति । यो हि ऋषिभिर्निन्द्यते, स कथं श्रद्धेय-

(१) गृसं. २।९३ ; बाल. १।८९ पृ. २५३ स्मृत्यन्तरे ; कृभ. ९८५, ११७२ (=) पूर्वार्धे (यः स्वशाखां परित्यज्य परशाखां समाश्रयेत् ।), १७३५ (=) पूर्वार्धे ( स्वशाखाविधिमुत्सृज्य त्वन्यस्य विधिमाचरेत् ।) सोऽन्धे (त्वन्धे).

वचनस्तत्रभवतां शिष्टानां भवेत् । अथ यथोभयमपि न विरोत्स्यते तथा करिष्यामः । नैवं शक्यम् । कस्मात् ? असंभवात् । स्वशाखाश्रयस्य खल्वन्तराऽन्तरा किमपि किमपि सामान्यं विधानं निवेशयन् सामान्यमपि विधानमाकुलयति, स्वशाखाश्रयमपि । सोऽयं समुच्चयो न प्रयोगशास्त्रम् , न खल्वपि सामान्यं विधानमुपकरोति, क्रममन्यथयन् प्रधानमपि विगुणयति । तथा च वृद्धिमिष्टवतो मूलमपि नष्टं स्यात् । अथ क्रमः पदार्थानामुपकारे वर्तते । पदार्थप्राप्तेरुत्तरकालं हि क्रम आपतति । यदा च पदार्थः प्राप्नोति, तदा क्रम एव नास्ति । न खलु पश्चिमसिद्धेन क्रमेण विरोधात् पूर्वसिद्धः पदार्थ एव न कर्तव्यो भवति । तस्मात् न्यायविरोधस्त्वत्पक्षे दोषः । भवेदेतदेवम् , यदि वचनमत्रार्थे प्रमाणं न स्यात् । अस्ति च वचनं ‘प्रयोगशास्त्रम्’ इत्यादि । किमिव हि वचनं न कुर्यात् । न हि वचनस्य कश्चिदतिभारो नाम । भवदीयेऽपि पक्षे न्यायान्तरविरोधो जागर्ति । न च पदार्थोऽपि पूर्वसिद्धः । सिषाधयिषितः खल्वेष भवता । विषमश्चायमुपन्यासः । सर्वपदार्थानां शेषभूताः खल्वाचमनादयः पदार्थप्राबल्यादनुष्ठीयन्ते, न सर्वे । न चात्रानुतिष्ठासितानां शेषत्वं प्रामाणिकम् । भिन्नानि चेमानि कर्माणि प्रयोगशास्त्रीयाणि सामान्यानि च नामसाम्येऽपि यथासंभवं रूपभेदादिभ्यो हेतुभ्यः । संयोगचोदनाभेदमप्येतेषु बहुलमुपलभामहे । तत्रैवं सति कुत्र कस्य गुणानुपसंहरसि, कर्मभेदे गुणोपसंहारन्यायस्याविषयत्वात् । श्राद्धोऽसि चेत् , प्रयोगशास्त्रीयं विधानमनुष्ठाय यथासंभवं सामान्यमपि विधानं कामं पृथगेवानुतिष्ठ । किमित्युभयमपि विधानमन्यथयित्वा नरसिंहाकारमभिनवं विधानान्तरं स्वरुच्यैव निर्मिणोषि । यथा खल्वेकस्माद्वाक्यादाख्यातपदमन्यस्माच्च नामपदं गृहीत्वा यो वाक्यार्थः संपद्यते पुरुषकल्पनामूलः , तादृशो ह्ययं परिचिकल्पयिषितः प्रयोगो भवति । स खल्वनपेक्षणीयस्तत्रभवताम् । तथा चोक्तम्– ‘धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात्’ इति । अत एव स्वशाखाश्रययोर्वैश्वदेवबलिकर्मणोरन्ते सामान्ययोरपि तयोः काममनुष्ठानं कात्यायनः स्मरति कर्मप्रदीपे– ‘न स्यात्तां काम्यसामान्यजुहोतिबलिकर्मणी । पूर्वं नित्यविशेषोक्तजुहोतिबलिकर्मणोः ॥ काममन्ते भवेयातां न तु मध्ये कदाचन । नैकस्मिन्कर्मणि तते कर्मान्यत्तायते यतः ॥’ इति । यदि समुच्चयं कात्यायनोऽभिप्रैष्यत् नूनमवदिष्यत् । अवदनाच्चावगच्छामः– नैष समुच्चयः कात्यायनस्याभिप्रेतः इति । तस्मादियमेवावधारणा– श्रौतेषु पारशाखिकं सामान्यं च विधानं कर्तव्यम् , गृह्योक्तेषु तु पारशाखिकं न कर्तव्यमेव, सामान्यं च विधानं गृह्योक्तविधानानुष्ठानादनन्तरमिच्छया प्रयोगान्तररूपेण करणीयमिति । तदेवं सति ‘प्रयोगशास्त्रम्’ इत्यादीनि वचनान्यनुगृहीतानि भवन्ति, नान्यथा । श्रौतेषु च तासु तासु शाखासु तत्तच्छाखिनामेवर्त्विजां कर्मोपदिष्टम्, न सर्वेषाम् । सर्वशाखिभिश्चर्त्विग्भिः प्रायो यज्ञो निर्वहति, न तावन्मात्रैः इति विशेषोऽप्यस्ति । अन्येऽपि विशेषाः शाखान्तराधिकरणे शारीरके च द्रष्टव्याः । रघुनन्दनस्त्वेतदनालोचयन् वचनं चापश्यन् ‘सर्वत्रैवाविशेषेणाकाङ्क्षितं पारशाखिकं करणीयं न अनाकाङ्क्षितम्’ इति कल्पयांचकार । तदश्रद्धेयम् । आकाङ्क्षाऽपि तदभिप्रेता न प्रामाणिकी । यत्र हि यावती इतिकर्तव्यता निर्दिष्टा, तत्र तत एव आकाङ्क्षा निवर्तते विशेषहेतुं विना इति हि तान्त्रिकाणां निर्णयः । अवश्यं च तेनाप्येतद्वक्तव्यम् । अन्यथा पारशाखिकगुणोपसंहारेऽप्याकाङ्क्षा न निवर्तेत । इत्यस्तु, किं विस्तरेण । गृसंभा.

## अनन्तपाठककारिकाः

आचमन–प्राणायाम–गणेशादिस्मरण–देशकालस्मरण–चित्तैकाग्र्याणां कर्माङ्गत्वम्

**[1]दूर्वापाणिर्द्विराचम्य त्रिःकृत्वा( ? त्रिकृत्वो )ऽसून्नियम्य च ॥**
**[2]गणाधिपं गुरुं स्मृत्वा कुलपूजितदेवताम् ।**
**इष्टमन्यत्ततो देशकालौ स्मृत्वैकमानसः ॥**

( १ ) ततः संकल्पं कुर्यात् । संग. ६४
( २ ) कर्म कुर्यादिति शेषः । संदी. ५३

---

( १ ) संग. ६४.
( २ ) संग. ६४ ; संदी. ५३.

## कारिकाः

### गृह्यशब्दार्थाः

[1]आधाने चाऽऽवसथ्ये च अग्निहोत्रे गृहाश्रमे।
दायाद्यवित्तभागे च गृह्यशब्दो भवेदिति॥

(१) संग. २५.

### लुप्तकर्मानुष्ठानस्य वैकल्पिकत्वम्

[1]लुप्तं कर्म कृताकृतम्॥

कारिकायां यद्यपि 'लुप्तं कर्म कृताकृतम्' इति, तथापि कात्यायनोक्तेः 'कालातीतानि कृत्वैव विदध्या-दुत्तराणि तु।' इति मण्डनोक्तेश्च कात्यायनादियाजुषां लुप्तकर्मकरणमेव युक्तम्। संग. ६३२

(१) संग. ६३२.

# *अग्निमुखम्

## बौधायनश्रौतसूत्रम्

जयहोमः

‡ [1]अथ वै भवति येन कर्मणेर्त्सेत्तत्र होतव्या इति ॥

अभ्यातानहोमः अभ्यातानादिहोमक्रमश्च

स यत्कर्मर्त्सेदिदं मे समृध्येतेति तस्मिन्नभ्यातानाञ् जुहुयादिति । अभ्यातानान् होष्यन्नुपकल्पयते– पर्णमयं स्रुवं च स्रुचं च पर्णमयान् परिधीन् कुशमयं बर्हिः पर्णमयमिध्ममिति । अथ वृथाग्निमुपसमाधाय कुशमयं बर्हिः स्तीर्त्वा पर्णमयान् परिधीन् परिधाय पर्णमयमिध्ममभ्यज्य स्वाहाकारेणाभ्याधाय पर्णमयेन स्रुवेणोपघातं जुहोति 'अग्निर्भूतानामधिपतिः स माऽवतु' इति सप्तदश स्रुवाहुतीः । हुत्वा वाचयति– 'पितरः पितामहाः' इति । अपि वा पर्णमयेन स्रुवेण पर्णमय्यां स्रुचि चतुर्गृहीतं गृहीत्वा सर्वान् मन्त्रान् समनुद्रुत्य हुत्वाऽन्ततो वाचयति– 'पितरः पितामहाः' इति । अथ समस्तानामेव होमः । अभ्यातानानेवाग्रे जुहुयादथ जयानथ राष्ट्रभृतः । ब्राह्मणमुत्तरम् ॥

*अत्र अग्निमुखशब्देन लौकिक्या रूढ्या सर्वहोमसाधारणं सकलं तन्त्रं प्रतिपिपादयिष्यते । अस्मिन् प्रकरणे अङ्गप्रधानानां क्रमोऽनुष्ठानप्रकारः स्कन्दनभेदनादिनिमित्तकप्रायश्चित्तकलापश्चेति प्रयोगापरपर्याया इतिकर्तव्यतैव केवलं संगृह्यते, अग्निमुखसंबद्धमपि प्रयोगबहिर्भूतं होमतदितरकर्मसाधारणं च पात्रमान– समिद्दर्भलक्षण– प्रतिनिध्यादिविषयकं सर्वं शास्त्रार्थजातं कर्मपरिभाषाप्रकरणे संगृहीतं तत्रैव द्रष्टव्यम् ।

‡ जयाः पूर्वप्रकृताः ।

(१) बौश्रौ. १४।१६.

## आश्वलायनश्रौतसूत्रम्

आसनात्तृणनिरसनमुपवेशनं च

$ [1]अङ्गुष्ठोपकनिष्ठिकाभ्यां होतृषदनात्तृणं प्रत्यग्दक्षिणा निरस्येत्– 'निरस्तः परावसुः' इति । 'इदमहमर्वावसोः सदने सीदामि' इत्युपविशेद्दक्षिणोत्तरिणोपस्थेन ॥

दक्षिणं च तदुत्तरं च दक्षिणोत्तरम् । तद्वानुपस्थो दक्षिणोत्तरी, तेनोपविशेत् । गानार्यः.

ब्रह्मणो विषयः

[2]अथ ब्रह्मणः ॥

अथशब्दोऽधिकारार्थः । इदानीं ब्रह्मणोऽपि विषयो वक्ष्यन्ते इत्यर्थः । गानार्यः.

होत्राचमनयज्ञोपवीतशौचानि ॥

व्याख्यातानीत्यर्थः । स्नानाचमनादिना शुचिर्भूत्वा ब्रह्मत्वं करिष्यामीत्यागुरितो विहारं प्रविशन् प्राङ्मुख आचमनं कुर्यात्, कर्माङ्गत्वात् । यज्ञोपवीतग्रहणं पैतृकमानुषयोरपि कर्मणोर्वचनादृते यज्ञोपवीत्येव स्यादिति । शौचग्रहणं क्रत्वर्थमप्यशुचित्वसंपादि यत्तद्विहाराद्बहिः कर्तव्यमिति । एतच्चाप्राप्तं विधीयते । अयमपि तीर्थेन विहारं प्रपन्न इति प्राकृचेष्टताऽस्य प्राप्ताऽपि नेष्यते, 'यज्ञमनाः' इति कर्माभिमुख्य एव यज्ञमनस्त्वोपपत्तेः । अङ्कधारणमुपवेशाङ्गतया प्राप्तमदृष्टार्थतापरिहारायैव यावदासनमनुवर्तते । 'तत्र चेत् कर्म' इत्यस्यापि कर्मसंबन्धादव्यावृत्तिरविशिष्टैव । दक्षिणाङ्गता च 'तत्र चेत् कर्म' इत्यस्योत्तराङ्गत्वेनाविशेषादस्यापि भवति । गानार्यः.

$ होतृप्रकरणगतमपीदं वाक्यं ब्रह्मसाधारणत्वादत्र संगृहीतम् ।

(१) आश्रौ. १।१।३.

(२) आश्रौ. १।१।१२.

**नित्यः सर्वकर्मणां दक्षिणतो ध्रुवाणां व्रजतां वा ॥**

अन्यतः प्राप्तस्य ब्रह्मणोऽयं नियम उच्यते । ध्रुवाणां व्रजतां च पुरुषाणां यानि कर्माणि तेषां दक्षिणतो नित्यो भवेत् । प्राकृतानामप्राकृतानां च ध्रुवाणां नित्यं दक्षिणत्वं ध्रुवेणैव कर्तुं शक्यत इति ध्रुवेषु ध्रुव एव भवेत् । व्रजतां कर्मसु नित्यं दक्षिणत्वाय व्रजन्नेव भवेत् । ध्रुवाणां व्रजतामिति कर्तृविशेषणम्, न कर्मणाम् । नित्यत्वमत्रोपक्रमप्रभृत्या परिसमाप्तेर्दक्षिणत्वसिद्ध्यर्थम् । वाशब्दः समुच्चयार्थः । क्वचित्कर्मणि कश्चित्तिष्ठति कश्चिद्व्रजति, तत्र भूयसां धर्मः परिगृह्यते । गानाव्.

**चेष्टास्वमन्त्रासु स्थानासनयोर्विकल्पः ॥**

अमन्त्रेषु कर्मसु स्थानमासनं वा भवेत् । वाशब्देनैव विकल्पे सिद्धे विकल्पवचनमव्यवस्थया विकल्पसिद्ध्यर्थम् । तेनैकस्मिन्नपि प्रयोगे क्वचिदासनं क्वचित्स्थानमिति लभ्यते । गानाव्.

**आसीतान्यत्र ॥**

अन्यत्रेति । अनन्तरसूत्रद्वयविषयादन्यत्रेत्यर्थः ।

गानाव्.

**समस्तपाण्यङ्गुष्ठोऽग्रेणाऽऽहवनीयं परीत्य दक्षिणतः कुशेषूपविशेत् ॥**

समस्तौ पाणी अङ्गुष्ठौ च यस्य सोऽयं समस्तपाण्यङ्गुष्ठः । सव्येन पाणिना दक्षिणं पाणितलप्रदेशं गृह्णीयात् । दक्षिणेन सव्याङ्गुष्ठम् । एवं कृते पाणी अङ्गुष्ठौ च समस्तौ भवतः । एवंभूतोऽग्रेण आहवनीयं परीत्य तस्य दक्षिणतः कुशेषूपविशेत् । निरसनं कृत्वा कुशग्रहणात् सति संभवे त एवाऽऽसने प्रकल्पन्ते । दक्षिणत इति पुनर्वचनम् आहवनीयस्यैव दक्षिणतः, न क्रियमाणस्य कर्मण इत्येवमर्थम् । गानाव्.

**'बृहस्पतिर्ब्रह्मा ब्रह्मसदन आशिष्यते बृहस्पते यज्ञं गोपाय' इत्युपविश्य जपेत् ॥**

उपविश्यग्रहणं सकृदुपविश्य पुनरपि कर्मण एव दक्षिणतो न भवेत्, आ समाप्तेस्तत्रैवोपविशेदिति । गानाव्.

**एष ब्रह्मजपः सर्वयज्ञतन्त्रेषु साग्नौ यत्रोपवेशनम् ॥**

एष मन्त्रो ब्रह्मजपसंज्ञो भवति । स चातिदेशशब्दमनपेक्ष्य सर्वेषु यज्ञेषु भवति । तन्त्रग्रहणं पाकयज्ञेष्वपि प्रापणार्थम्, पाकयज्ञानामेतत्तन्त्रमिति तन्त्रशब्दत्वात्तेषामिति । साग्नौ यत्रोपवेशनमिति अग्निप्रणयनेन साग्निकत्वे कर्मणः प्रतिपन्ने यत्रोपवेशनं विहितं तत्रायं जपो भवति । एतदुक्तं भवति— एष जपः सर्वेषु यज्ञेषु प्रविष्टमात्रे भवेत् । अग्निप्रणयनवत्सु अग्निप्रणयनान्त एव भवति ।

गानाव्.

**उपविष्टमतिसर्जयते ॥**

अनुज्ञालाभार्थं मन्त्रेणाऽऽमन्त्रयतेऽध्वर्युरित्यर्थः । उपविष्टग्रहणं प्रवेशकालज्ञापनार्थम् । यस्मिन् काल उपविष्टस्योपवेशनानन्तरमध्वर्युणाऽतिसर्जनं संभवति तस्मिन् काले प्रविशेदित्यर्थः । गानाव्.

**'ब्रह्मन्नपः प्रणेष्यामि' इति श्रुत्वा 'भूर्भुवः स्वर्बृहस्पतिप्रसूतः' इति जपित्वा 'ॐ प्रणय' इत्यतिसृजेत् सर्वत्र ॥**

अध्वर्युमन्त्रपाठेऽप्शब्दसहितेऽपि याच्ञावचने प्रणयेत्येवानुजानीयात्, नापः प्रणयेत्यपि । श्रुत्वेति वचनं श्रुत्वा पश्चाज्जपेत्, न सहेति । जपित्वेति पूर्वस्योपांशुत्वाय उत्तरस्य च तन्त्रस्वरत्वाय । अतिसृजेदनुजानीयात् । सर्वत्रेति सर्वेष्वनुज्ञावचनेष्वस्य विधेः प्रापणार्थम् । गानाव्.

**यथाकर्म त्वादेशाः ॥**

प्राप्तस्यायं विशेषविधिः । यस्मै कर्मणेऽनुज्ञामिच्छति तदेव अनुजानीयात्, न प्रणयेत्येव । यथाकर्म कर्मानुरूपमादेशाः कर्तव्या इत्यर्थः । गानाव्.

**प्रणवाद्युच्चैः ॥**

उत्तरविवक्षार्थम् । गानाव्.

**ऊर्ध्वं वा प्रणवात् ॥**

उच्चैर्भवतीत्यर्थः । गानाव्.

**यच्च किंच मन्त्रवत् ॥**

सर्वत्र मन्त्रवति कर्मणि वाग्यमनं भवति । गानावृ.

**अन्यत्र विसृष्टवागबहुभाषी यज्ञमनाः ॥**

यज्ञमनाः क्रियमाणपदार्थपरामर्शी । विसृष्टवागपि यज्ञमनाः स्यादिति योगविभागः कृतः । गानावृ.

तूष्णींहोमेषु प्रजापतिदेवता–शब्दध्यानम्

[1]**प्रजापतिं मनसा ध्यायात्तूष्णींहोमेषु सर्वत्र ॥**

यत्र तु तूष्णींशब्दविशिष्टो होमश्चोद्यते तत्र प्रजापतिदेवतां ध्यायेत्, देवतासाध्यत्वाद्धोमस्य । ध्यानत्वादेव मानसत्वे सिद्धे मनोग्रहणं शब्दध्यानार्थम् । तेन चतुर्थ्यन्तं प्रजापतिशब्दं ध्यात्वा तदनन्तरं स्वाहेत्युपांशूक्त्वा जुहुयात् । होमेष्विति बहुवचनादेव प्रकरणादुत्कर्षे सिद्धे सर्वत्रग्रहणं गार्ह्येष्वपि प्रापणार्थम् । गानावृ.

## शाङ्खायनश्रौतसूत्रम्

स्वाहाकारान्तता होममन्त्राणां समिदाधानमन्त्राणां च

[2]**स्वाहाकारोऽन्ते होममन्त्राणाम् ॥**

येषां होममन्त्राणामाम्नाये एवान्ते स्वाहाकारो न पठितस्तेषामन्ते कर्तव्यः । आभा.

**समिदाधानमन्त्राणां च ॥**

समिधः आधीयन्ते हूयन्ते यैर्मन्त्रैस्ते समिदाधानमन्त्राः, तेषामप्यन्ते स्वाहाकारः प्रयोक्तव्यः । पूर्वसूत्रेणैव सिद्धे सत्यारम्भो नियमार्थः । अतः शाकलहोमे 'उदकाञ्जलींस्त्रीनप्सु जुहोति' इति न स्वाहाकारः । आभा.

## आपस्तम्बपरिभाषासूत्रम्

आघारवसोर्धारयोर्मन्त्रारम्भ–कर्मारम्भयोः संयोगः

[3]**आघारे धारायां चाऽऽदिसंयोगः ॥**

आघारः स्रुव्यादिः । धारा वसोर्धारादिः । आघारे धारायां च संततश्रुतिर्दृश्यते । तत्र कर्मादेर्मन्त्रादेश्च संयोगो भवति, संततश्रुतिमूलत्वादादिसंयोगस्य । हवृ.

यज्ञाङ्ग–यजमान–पत्नीभ्यः ऋत्विजां बहिर्भावः

**अन्तराणि यज्ञाङ्गानि बाह्याः कर्तारः ॥**

यज्ञाङ्गानि कर्तृव्यतिरिक्तानि सर्वाणि यज्ञाङ्गद्रव्याण्यभिधीयन्ते । पारिशेष्यादेव कर्तॄणां बाह्यत्वे सिद्धे 'बाह्याः कर्तारः' इति पुनर्वचनं यजमानपत्न्योरपि बाह्या ऋत्विज इति ज्ञापनार्थम् । अतः ऋत्विजामपि मुख्याजघन्यो बाह्य इति । उक्तं चाऽऽश्वलायनेन– 'उत्तरेण होतारमतिव्रजेद्दक्षिणेन दण्डं हरेत्' (आश्रौ. १।३।१) इति । हवृ.

हस्तगृहीतासंस्कृतयज्ञाङ्गस्यर्त्विग्बहिर्भावेऽपि न दोषः

**न मन्त्रवता यज्ञाङ्गेनाऽऽत्मानमभिपरिहरेत् ॥**

मन्त्रेण संस्कृतं मन्त्रवत् । मन्त्रवता तेनाऽऽत्मानं न वेष्टयेदित्यर्थः । 'अन्तराणि यज्ञाङ्गानि' इत्येव सिद्धे वचनं मन्त्रेणासंस्कृताङ्गस्य हस्तगृहीतस्य आत्मवेष्टनेऽपि न दोष इति ख्यापनार्थम् । हवृ.

होमेषु मन्त्राणां स्वाहाकारान्तता

$[1]**जुहोतिचोदनः स्वाहाकारप्रदानः ॥**

दर्वीहोमेषु हविषः सकृद्ग्रहणम्

**सकृद्गृहीत्वा ॥**

सकृद्गृहीत्वा दर्वीहोमा होतव्या इत्यर्थः । सारस्वतौ होमौ चतुर्होता चोदाहरणम् । हवृ.

आहुतिगणेषु यावदाहुति सकृद्ग्रहणं प्रत्याहुति पृथग्ग्रहणं वा

**आहुतिगणे प्रत्याहुति गृहीत्वा ॥**

नारिष्टहोमादिष्वाहुतिगणेषु यावत्य आहुतयस्तावन्त्याज्यानि गृहीत्वा विगृह्य विगृह्य होतव्या इत्यर्थः । हवृ.

---

(१) आश्रौ. १।२।३.

(२) शाश्रौ. १।२।२२–२३.

(३) आपप. २।२, १३–१४.

$ व्याख्यानं कर्मपरिभाषाप्रकरणे (सं. का. पृ. १०८४) द्रष्टव्यम् ।

(१) आपप. ३।४–११.

**न वा समवद्येत् ॥**

समवदानं सर्वग्रहणमधस्तनसूत्रे विहितं न कुर्यात्, हुत्वा हुत्वा पृथगेव गृह्णीयादित्यर्थः । पूर्वसूत्रेणास्य विकल्पः । हवृ.

अग्निहोत्रभिन्नदर्वीहोमेषु आहुत्याधारसमिदाधानाभावः

**समिदभावश्च ॥**

समिधः अभावः समिदभावः । अग्निहोत्रप्रकरणे 'यदेकां समिधमाधाय द्वे आहुती जुहोति । अथ कस्यां समिधि द्वितीयामाहुतिं जुहोति' इति लिङ्गदर्शनेन सर्वेषु दर्वीहोमेषु समिधः प्राप्तिमाशङ्क्य तन्निषेधार्थोऽयमारम्भः । हवृ.

**अग्निहोत्रवर्जम् ॥**

अग्निहोत्रस्यापि समिधः प्रतिषेधे प्राप्ते प्रतिप्रसूयते अग्निहोत्रे समिद्भवत्येवेति । हवृ.

जानुनिपातनादयो दर्वीहोमधर्माः

**अपरेणाग्निं दक्षिणं जान्वाच्यानाच्य वाऽऽसीनो दर्वीहोमाञ्जुहोति ॥**

अग्निमपरेण वेदेरुत्तरतः । 'नान्तराग्नी संचरति' इति प्रतिषेधात्, क्वचित् 'अन्तर्वेद्यामूर्ध्वस्तिष्ठन्' इत्यन्तर्वेदिविधानाच्च । जान्वाच्येति जानु भूमौ निपात्येत्यर्थः । अनाचनम् अनिपतनम्, संकुच्य वा । होमबहुत्वे प्रक्रम आरम्भप्रयोजनम् । हवृ.

**वचनादन्यथा ॥**

यथा सावित्राणि समिष्टयजुरिति । सामान्यविशेषयोर्विकल्पः कैश्चिदाश्रित इति तन्निषेधार्थमारम्भः । हवृ.

## कात्यायनश्रौतसूत्रम्

इध्माबर्हिषोः संनहनप्रकारः

**[1]अयुग्धातूनि यूनानि ॥**

यूनानां बन्धनार्थानाम् अयुग्मा धातवो भवन्ति । धातवः तृणमुष्टिप्रक्षेपाः । कर्क.

**प्रागग्रे यून उदगग्रं बर्हिराचिनोति ॥**

**उदगग्रे प्रागग्रमिध्मम् ॥**

आचिनोतीति वर्तते । कर्क.

**प्रत्यग्ग्रन्थीनवगूहति ॥**

प्रत्यक्शब्दः पश्चाद्भागवचनः न दिग्वाचकः, बर्हिष्यसंभवात् । कर्क.

इध्मसमित्संख्या

**अष्टादशेध्मं परिधिवृक्षाणाम् ॥**

अष्टादशकाष्ठमिध्मं कुर्यात् परिधिवृक्षसंबन्धिनम् । परिधिवृक्षाः पलाशादयः । कर्क.

**एकविंशतिं वा ॥**

एकविंशतिकाष्ठं वेध्मं कुर्यात्, शाखान्तरात् । वाशब्दो विकल्पार्थः । कर्क.

**ततः परिधीनेके ॥**

'तद्धैक इध्मस्यैवैतान् परिधीन्परिदधति' इति वचनात् । कर्क.

प्राक्संस्थता विदिक्संस्थता वाऽऽघारयोः

**प्राञ्चावाघारौ ॥**

होतव्यौ । कर्क.

**विदिशावेके ॥**

जुहति । कर्क.

सकृद्गृहीतेन होमः

**सकृद्गृहीतार्थावाप्तेः ॥**

सकृद्गृहीतेन होमः कर्तव्यः । सकृद्गृहीतेनैव हि होमार्थाभिनिर्वृत्तिरवाप्ता भवतीति । कर्क.

**अवषट्कारातिरेकाच्च ॥**

किंच, अवषट्कारास्वाहुतिषु द्वितीयमेवावदानमतिरिक्तं ज्ञापयति । कथम्? 'तद्वै चतुरवत्तं भवतीदं वा अनुवाक्याऽथ याज्याऽथ वषट्कारोऽथ सा देवता चतुर्थी यस्यै देवतायै हविर्भवति' इति प्रकृत्याऽऽह— 'अतिरिक्तं ह तदवदानं यत्पञ्चमम्' इति । तेन अवषट्कारास्वाहुतिष्वनुवाक्याद्यभावात् द्वितीयमेवावदानमतिरिक्तमिति ज्ञापितं भवति । तथा 'यच्चतुरुन्नैषीर्द्विरहौषीरथ के ते द्वे आहुती' इति द्वयोरतिरिक्ततां दर्शयति । कर्क.

---

(१) काश्रौ. १।५८–६४, २१७–२१८, २२१–२२२, २२४–२३३, २४६–२४७.

हविषो द्विरवदानम्

**तस्य द्विरवद्यति ॥**

तस्य सकलस्यैव देवतोद्देशेन गृहीतस्य होमे प्राप्ते वचनाद् द्विरवद्यति । कर्क.

जमदग्नीनां त्रिरवदानम्

**त्रिर्जमदग्नीनाम् ॥**

जमदग्नीनां त्रिरवद्येत्, 'पञ्चावत्तं जमदग्नीनाम्' इति वचनात् । कर्क.

तृतीयावदानदेशः

**पश्चात्तृतीयम् ॥**

अवदेयम् । कर्क.

सर्वेषां द्विस्त्रिर्वाऽवदानम्

**सर्वेषां वोभयमविधानात् ॥**

'सर्वेषां वोभयं भवतीति । चतुरवत्तं पञ्चावत्तं वा । कुत एतत्? अविधानाज्जमदग्नीनां पञ्चावत्तत्वस्य । माध्यंदिनानां पठ्यते— 'तद्वै चतुरवत्तं भवति उतो पञ्चावत्तमेव भवति' इति । शाखान्तरे तु— 'पञ्चावत्तं जमदग्नीनाम्' इति । तेन जमदग्नीनां पञ्चावत्तमेव, इतरेषां चतुरवत्तं पञ्चावत्तं वा । कर्क.

प्रथमद्वितीयावदानदेशः अवदानपरिमाणं च

**मध्यात् पूर्वार्धाच्चासंभिन्दन्नङ्गुष्ठपर्वमात्रमवदानम् ॥**

हविषो मध्यात्पूर्वार्धाच्चासंभिन्दन् अङ्गुष्ठपर्वमात्रमवदानं गृह्णीयात् । असंभिन्दन् अवदानमर्यादां कुर्वन् । कुत एतत्? अवदानसंभेदने हि मर्यादाबाधः, मर्यादाबाधे च मध्यात्पूर्वार्धाच्चेत्यस्य बाधः । कर्क.

**मात्रावद्दधिपयसोः ॥**

दधिपयसोरपि तन्मात्रमेवावदेयम् । कर्क.

उपस्तरणाभिघारणे

**आद्यन्तयोराज्यम् ॥**

कर्तव्यमिति शेषः । 'स आज्यस्योपस्तीर्य द्विर्हविषोऽवदायाथोपरिष्टादाज्यस्याभिघारयति' इति । कर्क.

स्विष्टकृतः सकृदवदानं द्विश्चाभिघारणम्

**एकप्रत्यवायं स्विष्टकृतः ॥**

स्विष्टकृतस्त्ववदाने एकमवदानं प्रत्यवैति । कर्क.

**द्विश्चाभिघारणम् ॥**

स्विष्टकृत्येव भवति । कर्क.

स्विष्टकृदवदानात्प्राचीनावदानोत्तरं हविषः प्रत्यभिघारणम्

**अवदाय प्रत्यभिघारणं प्राक् स्विष्टकृतः ॥**

'तस्माद्यस्य कस्य च हविषोऽवद्यति पुनरेव तदभिघारयति स्विष्टकृत एव तत्पुनराप्याययति' इति । कर्क.

यावत्प्रयोजनं द्रव्योपकल्पनम्

**अर्थप्रसंख्यया द्रव्योपकल्पनम् ॥**

कर्तव्यमिति शेषः । कर्क.

चर्मणामुत्तरलोमता प्राग्ग्रीवता च

**चर्माण्युत्तरलोमानि प्राग्ग्रीवाणि ॥**

कर्तव्यानीति शेषः । कर्क.

## लाट्यायनश्रौतसूत्रम्

कर्मकर्तृयज्ञाङ्गयोरव्यवधानमभिमुखता च

[१]**अव्यवायोऽव्यावृत्तिश्च यज्ञाङ्गैः ॥**

न व्यवायः अव्यवायः । न व्यावृत्तिः अव्यावृत्तिः । अन्तरागमनं व्यवायः, अनभिमुखता व्यावृत्तिः । केनाव्यवायोऽव्यावृत्तिश्च? यज्ञाङ्गैः । कर्मोपयतामिति वर्तते । अग्निभा.

## बौधायनगृह्यसूत्रम्

आघारवद्दर्वीहोमतन्त्रम्—स्थण्डिलकरणम् अग्निस्थापनं च

[२]**अथ शुचौ समे देशे अग्न्यायतनदेशं शकलेन त्रिः प्राचीनमुल्लिखेत् त्रिरुदीचीनम् ॥**

[३]**अथाद्भिरभ्युक्ष्य शकलं निरस्याप उपस्पृश्य याज्ञिकात्काष्ठादग्निं मथित्वा श्रोत्रियागाराद्वाऽऽहृत्य व्याहृतिभिर्निरुप्योपसमाधायोपतिष्ठते ॥**

(१) लाश्रौ. १।२।१५. (२) बौगृ. १।३।१.
(३) बौगृ. १।३।२ ; संर. ६१ (व्याहृतिभिर्न्युप्योपसमाधायोपतिष्ठते) एतावदेव.

[1]' जुष्टो दमूना अतिथिर्दुरोण इमं नो यज्ञमुप याहि विद्वान्। विश्वा अग्नेऽभियुजो विहत्य शत्रूयतामा भरा भोजनानि ॥' इति ॥

परिसमूहनपर्युक्षणपरिस्तरणानि

[2]अथैनं प्रदक्षिणमग्निं परिसमूह्य पर्युक्ष्य परिस्तीर्य प्रागग्रैर्दर्भैरग्निं परिस्तृणाति ॥

अपि वोदगग्राः पश्चाच्च पुरस्ताच्च भवन्ति ॥

दक्षिणानुत्तरानुत्तरानधरान् यदि प्रागुदगग्राः ॥

पात्राणामासादनं प्रोक्षणं च

उत्तरेणाग्निं प्रागग्रान्दर्भान् संस्तीर्य तेषु द्वन्द्वं न्यञ्चि पात्राणि संसादयति देवसंयुक्तान्येकैकशः पितृसंयुक्तानि सकृदेव मनुष्यसंयुक्तानि ॥

'यत् सह सर्वाणि मानुषाणि' इत्येतस्माद्ब्राह्मणात् ॥

पवित्रे कृत्वा तूष्णीं संस्कृताभिरद्भिरुत्तानानि पात्राणि कृत्वा प्रोक्ष्य विस्रस्येध्मं त्रिः सर्वाभिः प्रोक्षति ॥

ब्रह्मणः उदपात्रस्य च स्थानम्

दर्भेषु दक्षिणतो ब्राह्मण उपविशति, उत्तरत उदपात्रम् ॥

आज्यसंस्कारः

[3]अथ तिरःपवित्रमाज्यस्थाल्यामाज्यं निरुप्योदीचोऽङ्गारान्निरूह्य व्यन्तान्कृत्वा तेष्वधिश्रित्याभिद्योतनेनाभिद्योत्य द्वे दर्भाग्रे प्रच्छिद्य प्रक्षाल्य प्रत्यस्य पुनरभिद्योत्य त्रिः पर्यग्नि कृत्वा वर्त्म कुर्वन्नुदगुद्वास्य प्रत्यूह्याङ्गारान्बर्हिरास्तीर्य अथैनदुदीचीनाग्राभ्यां पवित्राभ्यां पुनराहारं त्रिरुत्पूय विस्रस्य पवित्रेऽद्भिः संस्पृश्याग्नावनुप्रहरति ॥

(१) बौगृ. १।३।३ ; संर. ६१ (जुष्टो दमूना अतिथिर्दुरोण इति) एतावदेव.

(२) बौगृ. १।३।४–१०.

(३) बौगृ. १।३।११ ; संर. ६९ (पवित्रे विस्रस्याद्भिः संस्पृश्याग्नावनुप्रहरति) एतावदेव : ६१० कस्यचिदंशस्यानुवादः.



दर्वीसंमार्गः

[1]अथ दर्वीं निष्टप्य दर्भैः संमृज्याद्भिः संस्पृश्य पुनर्निष्टप्य प्रोक्ष्य निधाय दर्भानद्भिः संस्पृश्याग्नावनुप्रहरति ॥

शम्यापरिधानम्, काम्या दर्व्यः

[2]अथ शम्याः परिदधाति । 'खादिरी दर्वी तेजस्कामस्यौदुम्बर्यन्नाद्यकामस्य पालाशी ब्रह्मवर्चसकामस्य' इति ॥

स्रुवस्य होमसाधनतानियमः, स्रुवप्रकृतिद्रव्याणि मतभेदेन

[3]अथ हैकेषां विज्ञायते– 'निर्ऋतिगृहीता वै दर्वी। यद्दर्व्या जुहुयान्निर्ऋत्याऽस्य यज्ञं ग्राहयेत्। तस्मात्स्रुवेणैव होतव्यम्' इति ॥

[4]पालाशेन स्रुवेणेत्यात्रेयः ॥

खादिरेणेत्याङ्गिरसः ॥

ताम्रायसेनेत्याथर्वणः ॥

कार्ष्णायसेनाभिचरन्निति सार्वत्रिकम् ॥

परिधानान्तस्य प्रतिनिधिनाऽनुष्ठानेऽनुमतिः

[5]अन्यो वाऽस्यैतावत्कृत्वाऽऽगमनं काङ्क्षेत् ॥

पतिपत्न्योरुपवेशनम्

अपरेणाग्निमुदीचीनप्रतिषेवणामेरकां साधिवासामास्तीर्य तस्यां प्राञ्चावुपविशत उत्तरतः पतिर्दक्षिणा पत्नी ॥

(१) बौगृ. १।३।१२.

(२) बौगृ. १।३।१३ ; संर. १९ (अथ शम्याः परिदधाति०).

(३) बौगृ. १।३।१४.

(४) बौगृ. १।३।१५–१८ ; संर. २०.

(५) बौगृ. १।३।१९–३९.

परिषेचनम्

अथान्वारब्धायां प्रदक्षिणमग्निं परिषिञ्चति ॥

'अदितेऽनुमन्यस्व' इति दक्षिणतः प्राचीनम् ॥

'अनुमतेऽनुमन्यस्व' इति पश्चादुदीचीनम् ॥

'सरस्वतेऽनुमन्यस्व' इत्युत्तरतः प्राचीनम् ॥

'देव सवितः प्र सुव' इति समन्तं प्रदक्षिणं समन्तमेव वा तूष्णीम् ॥

इध्माधानम् आघाराघारणं च

अथेध्ममभ्यज्य परि समिधं शिनष्टि । स्वाहाकारेणाभ्याधायाऽऽघारावाघारयति ॥

'प्रजापतये स्वाहा' इति मनसोत्तरे परिधिसंधौ संस्पृश्याक्ष्णया संततम् ॥

'इन्द्राय स्वाहा' इत्युपांशु दक्षिणे परिधिसंधौ संस्पृश्याक्ष्णया संततम् ॥

आज्यभागौ

अथाऽऽज्यभागौ जुहोति ॥

'अग्नये स्वाहा' इत्युत्तरार्धपूर्वार्धे ॥

'सोमाय स्वाहा' इति दक्षिणार्धपूर्वार्धे ॥

अग्निमुखसंज्ञकहोमः

अथाग्निमुखं जुहोति ॥

'युक्तो वह जातवेदः पुरस्तादग्ने विद्धि कर्म क्रियमाणं यथेदम् । त्वं भिषग्भेषजस्यासि कर्ता त्वया गा अश्वान्पुरुषान् सनेमिः स्वाहा ॥' ॥

'चतस्र आशाः प्र चरन्त्वग्नय इमं नो यज्ञं नयतु प्रजानन् । घृतं पिबन्नजरं सुवीरं ब्रह्म समिद्भवत्याहुतीनां स्वाहा ॥' ॥

'आ नो भद्राः क्रतवो यन्तु विश्वतोऽदब्धासो अपरीतास उद्भिदः । देवा नो यथा सदमिद्वृधे (अ)सन्नप्रायुवो रक्षितारो दिवेदिवे स्वाहा ॥' ॥

'विरूपाक्ष मा विबाधिष्ठा मा विबाध विबाधिथाः । निर्ऋत्यै त्वा पुत्रमाहुः स नः कर्माणि धारय स्वाहा ॥' ॥

'विरूपाक्षमहं यजे निजङ्घं शबलोदरम् । यो माऽयं परिबाधते श्रियै पुष्ट्यै च नित्यदा तस्मै स्वाहा ॥' ॥

'या तिरश्ची निपद्यसेऽहं विधरणी इति । तां त्वा घृतस्य धारयाऽग्नौ संराधिनीं यजे स्वाहा ॥' ॥

'संराधिन्यै देव्यै स्वाहा । प्रसाधिन्यै देव्यै स्वाहा । भूः स्वाहा । भुवः स्वाहा । सुवः स्वाहा । भूर्भुवः सुवः स्वाहा ।' इत्येतावत् सर्वदर्वीहोमानामेष कल्पः ॥

जयाभ्यातानराष्ट्रभृदमात्यप्राजापत्यहोमाः

[1]अथ तथोपविश्यान्वारब्धायां जयानभ्यातानान्राष्ट्रभृत इति हुत्वाऽथामात्यहोमाञ् जुहोति ॥

अथ प्राजापत्याञ् जुहोति– 'प्रजापते न त्वदेतान्यन्यः' इति ॥

स्विष्टकृद्धोमः

अथ सौविष्टकृतं जुहोति– 'यदस्य कर्मणोऽत्यरीरिचं यद्वा न्यूनमिहाकरम् । अग्निष्टत्स्विष्टकृद्विद्वान् सर्वं स्विष्टं सुहुतं करोतु मे । अग्नये स्विष्टकृते सुहुतहुत आहुतीनां कामानां समर्धयित्रे स्वाहा' इति ॥

परिध्यञ्जनम्, बर्हिरनुप्रहरणम्, शम्यापोहनम्, उत्तरपरिषेचनम्, दिग्व्युन्नयनम्, ब्रह्मणे वरप्रदानम्

अथ स्रुवेण परिधीननक्ति ॥

अथ परिस्तरात्समुल्लिप्याऽऽज्यस्थाल्यां प्रस्तरवद्बर्हिरक्त्वा तृणं प्रच्छाद्याग्नावनुप्रहरति ॥

अथ शम्या अपोह्य तथैव परिषिञ्चति ।

'अन्वमंस्थाः, प्रासावीः' इति मन्त्रान्तान् संनमयति ॥

अथ प्रणीतोद्धृयो दिशो व्युन्नीय ब्रह्मणे वरं ददामीति गां ब्राह्मणेभ्यः ॥

(१) बौगृ. १।४।३२–४४.

एष आघारवान् दर्वीहोमः ॥

आग्निहोत्रिकतन्त्रम्

अथापरः– परिसमूह्य पर्युक्ष्य परिस्तीर्याऽऽज्यं विलाप्योत्पूय स्रुक्स्रुवं निष्टप्य संमृज्य स्रुचि चतुर्गृहीतं गृहीत्वा सर्वान् मन्त्रान् समनुद्रुत्य सकृदेवाऽऽहुतिं जुहोति ॥

अग्निः स्विष्टकृद् द्वितीयः ॥

द्विर्जुहोति । द्विर्निमार्ष्टि । द्विः प्राश्नाति । उत्सृप्याऽऽचामति । निर्लेढि । इत्येष आग्निहोत्रिकः ॥

अपूर्वतन्त्रम्

अथापरः– परिसमूह्य पर्युक्ष्य परिस्तीर्य प्राकृतेन हविषा यावदाम्नातमाहुतीर्जुहोत्येष ह्यपूर्वः ॥

दर्वीहोमप्रकृतित्वे मतभेदाः

तत्रोदाहरन्ति– 'आघारं प्रकृतिं प्राह दर्वीहोमस्य बादरिः।आग्निहोत्रिकं तथाऽऽत्रेयः काशकृत्स्नस्त्वपूर्वताम् ॥' इति ॥

होमविशेषेऽग्निनियमः

[1]'यस्मिन्नग्नावुपनयति तस्मिन्ब्रह्मचर्यं तस्मिन्व्रतचर्यं तस्मिन्समावर्तनं तस्मिन्पाणिग्रहणं तस्मिन्गृह्याणि कर्माणि क्रियन्ते ॥

तस्मिन्काम्यानि तस्मिन्प्रजासंस्कारा इत्येके ॥

स्थण्डिलस्य श्वादिदूषितत्वे प्रायश्चित्तम्

[2]'अथातः सप्तपाकयज्ञानां प्रायश्चित्तानि व्याख्यास्यामः ॥

तत्राऽऽदित एवोपलिप्ते श्वा वेटको वा यदि गच्छेत्कीटो वा पिण्डकारी स्यात्तत्पुनरुपलिप्य प्रोक्षति– 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नेस्तेजसा प्रोक्षामि' इति । प्रोक्ष्य स्थण्डिलमुपलिप्य स्थण्डिलमुद्धरेत् ॥

स्थण्डिमुद्धृतं गौरश्वो वा यदि विकिरेदन्यद्वा श्वापदमधितिष्ठेत् तस्य पदमभ्युक्ष्य जपति– 'पृथिवि देवयजन्योषध्यास्ते मूलं मा हिंसिषम्' इति ॥

अथ कृतान्तेन प्रतिपद्यते ॥

प्रणीतापात्रभेदे प्रायश्चित्तम्

अथ यदि प्रणीतापात्रं भिद्येत तदभिमन्त्रयते – 'अभिन्नो घर्मो जीरदानुर्यत आत्तस्तदगन् पुनः' इति ॥

अथान्यदाहरति– 'घर्मो देवानप्येतु' इति । पूरयित्वा व्याहृतिभिरुपतिष्ठते ॥

प्रणीतापरासेके प्रायश्चित्तम्

अथ यदि प्रणीताः प्रणीयमानाः प्रणीता वा परासिच्येरन् ता अभिमन्त्रयते– 'अक्षितोऽस्यक्षित्यै त्वा मा मे क्षेष्ठा अमुत्रामुष्मिल्लोके' इति ॥

पूरयित्वोपतिष्ठते– 'भूरायुर्मे धारयत प्राणं मे धारयत प्रजां मे धारयत पशून् मे धारयत मा म आयुः प्राणाः प्रजाः पशवः परासिच्येरन्' इति ॥

दर्व्यादिनाशे प्रायश्चित्तम्

[1]'सर्वत्र दर्वीकूर्चप्रस्तरपरिधिबर्हिःपवित्रेध्मद्रव्यसंभाराणां चेद्दाहोपघातेषु नाशे विनाशे वाऽन्यं यथालिङ्गं कृत्वा यथालिङ्गमुपसाद्य– 'त्वं नो अग्ने', 'स त्वं नो अग्ने', 'त्वमग्ने अयाऽसि', 'प्रजापते' इत्येताभिः स्रुवाहुतीर्जुहुयात् ॥

परिस्तरणदाहे प्रायश्चित्तम्

अथ यदि परिस्तरणदाहे– 'अग्नये क्षामवते स्वाहा' इति हुत्वा परिस्तृणाति ॥

---

(१) बौगृ. २।६।१७, १८; बौगृप. १।१६।४ (तस्मिन्ब्रह्मचर्यं०) काम्यानि + (कर्माणि); मुक्ता. ३५४ नयति (नयनं) तचर्यं (तचर्या) गृह्याणि (गार्ह्याणि).

(२) बौगृ. ४।१।१–८.

(१) बौगृ. ४।२।१–११.

'इन्द्रं वो विश्वतस्परि', 'इन्द्रं नरः' इति द्वाभ्यां परिस्तीर्य जुहोति– 'इन्द्राय स्वाहा' इति ॥

परिधिदाहे प्रायश्चित्तम्

अथ यदि परिधिदाहे अन्यं यथालिङ्गमुपसाद्य जुहोति– 'परि त्वाऽग्ने पुरं वयम्' इति ॥

वस्त्रनाशादौ प्रायश्चित्तम्

अथ वस्त्राणां प्रोक्षितानां चेद्दाहोपघाते नाशे विनाशे अन्यद्यथालिङ्गं कृत्वा यथालिङ्गमुपसाद्य जुहोति– 'सोमाय स्वाहा' इति ॥

अथ सिचाऽभिघातः स्यात्तदभिमन्त्रयते– 'सिगसि नसि वज्रोऽसि नमस्ते अस्तु मा मा हिंसीः' इति। दशासूत्रमादाय मुखवातेन प्रध्वंसयेत् ॥

गवादीनामपसव्यगमने प्रायश्चित्तम्

अथ यदि गौर्वाऽश्वो वा श्वमृगमहिषमेषवराहदंष्ट्रवन्तो वाऽन्यच्छ्वापदमपसव्यं गच्छेत्तस्य पदमभ्युक्ष्य जपति– 'तद्विष्णोः परमं पदम्' इति ॥

रौद्राभिव्याहारे प्रायश्चित्तम्

एतेनैव रौद्रमभिव्याहरेद्वा(अथ यद्येत एव रौद्रमभिव्याहरेयुः*) रौद्यावृचौ जुहुयाज्जपेद्वा– 'त्वमग्ने रुद्रः', 'आवो राजानम्' इति ॥

शकुनाभिव्याहारे प्रायश्चित्तम्

अथ यदि शकुनमभिव्याहरेत्तां वाचमनुमन्त्रयते– 'द्विपच्चतुष्पदस्माकं सर्वमस्त्वनातुरम्।', 'उद्गातेव शकुने साम गायसि ब्रह्मपुत्र इव सवनेषु शंससि। स्वस्ति नः शकुने अस्तु प्रति नः सुमना भव ॥' इति ॥

सालावृकीशब्दे प्रायश्चित्तम्

अथ यदि सालावृकी वाश्येत तामनुमन्त्रयते– 'दीर्घमुखि दुर्हणु मा स्म दक्षिणतो वदः। यदि दक्षिणतो वदाद्द्विषन्तं मेऽवबाधासै ॥' इति ॥

* एवं बोधायनीयगृह्यकर्मसमुच्चयपाठः।

क्षुते निष्ठीवने च प्रायश्चित्तम्

* अथ यद्यर्थी स्यात्परिक्षवे परिकासने चाप उपस्पृश्य जपेत्– 'अनुहवं परिहवं परीवादं परिक्षपम्। दुःस्वप्नं दुरुदितं तद् द्विषद्भ्यो दिशाम्यहम् ॥', 'अनुहूतं परिहूतं शकुने यदशाकुनम्। मृगस्य सृतमक्षणया तद् द्विषद्भ्यो दिशाम्यहम् ॥' इति ॥

अग्नेः स्वयं प्रज्वलने प्रायश्चित्तम्

[1]सर्वत्र स्वयं प्रज्वलितेऽग्नौ समिधावादधाति 'उद्दीप्यस्व जातवेदः' इति द्वाभ्याम् ॥

द्रव्यहविर्मन्त्रकर्मादीनामतिपत्तिस्कन्दनभेदनादौ अनाम्नातप्रायश्चित्तम्

[2]अथ पाकयज्ञानां प्रायश्चित्तिः ॥

तद्यथा– द्रव्यहविर्मन्त्रकर्मादीनामतिपन्नस्कन्नभिन्नभग्ननष्टदुष्टविपरीतदग्धाशृत्यनिकृ(ग्धाशृतातिशृ¶)तानामनाम्नातेषु जुहुयात्– 'मनो ज्योतिः', 'अयाश्चाग्ने', 'यदस्मिन् कर्मणि', 'स्वस्ति न इन्द्रो वृद्धश्रवाः' इति। व्याहृतिभिश्च ॥

व्याहृतीनां प्रयोगे य(? गेऽय)थाकृतं यथावद्भवतीत्याचार्या ब्रुवते ॥

तत्रोदाहरन्ति– भूरित्यृचो भुव इति यजूंषि सुवरिति सामानि ॥

* बोधायनीयगृह्यकर्मसमुच्चये यथात्रत्यक्रमं पठितेषु प्रायश्चित्तेषु अत्र स्थले– "अथ यद्यग्नेरेकदेशमपहरेयुस्तदा 'मनो ज्योतिः' इति स्रुवाहुतिं जुहुयात्' इति प्रयोगमालायामुक्तम्। 'अथ परिक्षवे परिकासने ...'' इति पठितम्।

¶ बोधायनीयगृह्यकर्मसमुच्चये पाठः।

(१) बौगृ. ४।३।१.

(२) बौगृ. ४।५।१–७.

प्रायश्चित्तहोमानां मतभेदेन स्थानानि

प्रवृत्ते कर्मणि प्रधानादौ जुहुयादिति बोधायनः ॥

प्रधानान्त इति शालिकिः ॥

पुरस्तात् स्विष्टकृत इत्यौपमन्यवः ॥

दर्भास्तरणादिविपर्यये प्रायश्चित्तम्

[1]अथ विपरीतदर्भास्तरणपवित्रकरणपात्रसादनप्रोक्षणीसंस्कारब्रह्मप्रणीताहविर्निर्वापणाज्यसंस्कारस्रुक्संमार्जनपरिधिपरिषेचनेध्माभ्याधानविपरीतेषु प्रायश्चित्तम्– 'ततं म आपः', 'यत्पाकत्रा', मनस्वती, मिन्दाहुती, महाव्याहृतीः, व्याहृतयश्च प्रायश्चित्तं जुहुयादिति बोधायनः ॥

पशुपक्ष्यादीनामन्तरागमने प्रायश्चित्तम्

[2]अथ प्रायश्चित्तानि व्याख्यास्यामः– भग्ननष्टदुष्टविपरीतस्फुटितद्विजश्वबिडालकाकखरमृगपशुपक्षिसरीसृपाणामन्यत् कीटो वा ऋत्विजोऽग्नीनन्तरा गच्छेत्– दुर्गा, मनस्वती, महाव्याहृतीस्तिस्रस्तन्तुमतीर्जुहुयात् । सैव ततः प्रायश्चित्तिः ॥

पाकयज्ञेषु प्रयाजानूयाजसामधेनीनामभावः, दर्वीहोमेषु चरोरवदानधर्मेण होमः

[3]अथातः सप्तपाकयज्ञानां प्रायश्चित्तसमुच्चयं व्याख्यास्यामः ॥

हुतः प्रहुत आहुतः शूलगवो बलिहरणं प्रत्यवरोहणमष्टकाहोम इति सप्तपाकयज्ञानां न प्रयाजा इज्यन्ते, नानूयाजाः, न सामिधेनीरन्वाह ॥

तेषु कर्मस्वग्निमुपसमाधाय संपरिस्तीर्य यत्र यत्र दर्वीहोमं कुर्यात्तत्र तत्र चरुं समवदाय जुहोति ॥

(१) बौगृ. ४।७।१.

(२) बौगृ. ४।८।१.

(३) बौगृ. ४।९।१–१५.

स्कन्दनभेदनादौ मक्षिकादिस्पर्शे च प्रायश्चित्तम्

सर्वत्र स्कन्ने भिन्ने छिन्ने क्षामे विपर्यासे उद्दाहे ऊनातिरिक्ते पवित्रनाशे पात्रभेदे द्वे मिन्दाहुती जुहोति ॥

मक्षिकैर्मशकैर्वा रोमभिः पिपीलिकैर्वा व्यापद्येत प्रजापतये होमं कुर्यात् ॥

व्यापन्नमाज्यमव्यापन्नमन्तर्हितमनाज्ञातप्रायश्चित्तं(अनाम्नातप्रायश्चित्तं $) यज्ञसमृद्धीर्जुहोति ॥

अन्तरागमने अन्तर्धाने च प्रायश्चित्तम्

अन्तरागमने प्रायश्चित्तम्–दशहोतारं चानुख्यां च जुहोति ॥

अन्तर्हिते प्रायश्चित्तम्– चतुर्होतारं चानुख्यां च जुहोति ॥

मण्डूकसर्पमूषिकमार्जारान्तरागमने प्रायश्चित्तम्– पञ्चहोतारं चानुख्यां च जुहोति ॥

विकृतरूपादौ प्रायश्चित्तम्, अनादिष्टप्रायश्चित्तं च

विकृतरूपे विकृतशब्दे विस्फुटे प्रायश्चित्तम्–शंयुवाकं चानुख्यां च जुहोति ॥

अनादिष्टं सर्वप्रायश्चित्तं व्याख्यातं वारुणीमिति निर्दिशेत् ॥

संस्कारान्ते अग्न्युत्सादे प्रायश्चित्तम्

संस्कारान्तेऽग्नावुत्सन्ने तद्भस्मसमारोपणं समिधं वा यदि नोपविन्देद्याज्ञिकं वा प्रायश्चित्तम्–महाव्याहृतीः प्रणवं मनस्वतीं च जुहोति ॥

स्वरादिभ्रेषे प्रायश्चित्तम्

स्वराक्षरपदवृत्तभ्रेषेषु 'आभिर्गीर्भिः' इति ॥

पाकयज्ञेषु सदस्येभ्यो दक्षिणादानं सदस्यानां कार्यं च

सर्वत्र पाकयज्ञानां सदस्येभ्यो धेनुमृषभमनड्वाहं दद्यात् ॥

सदस्याः सर्वप्रायश्चित्तानि प्रतिनिधींश्च बोधयिष्यन्तीति ॥

$ बोधायनीयगृह्यकर्मसमुच्चये पाठः ।

होमकाले अग्न्युपशमने प्रायश्चित्तम्

[1]अथ यदि होमकालेष्वग्निरुद्वातः स्यात् सर्वं तत् 'अपहताः' इति प्रोक्ष्य स्थण्डिलमुद्धृत्याग्निमुपसमाधाय संपरिस्तीर्य प्रायश्चित्तं जुहोति– 'अयाश्चाग्ने', 'पञ्चहोता', 'ब्राह्मण एकहोता' दश, मनस्वतीः, मिन्दाहुती, महाव्याहृतीः, व्याहृतयश्च(? तीश्च) प्रायश्चित्तं जुहुयादिति* ॥

## बौधायनगृह्यपरिभाषासूत्रम्

स्थण्डिलकरणम्

[2]अथ शुचौ समे देशे इति कथं विज्ञायते ॥

गोमयेन गोचर्ममात्रं चतुरश्रं स्थण्डिलमुपलिप्तं भवति तच्छुचिर्भवति ॥

तस्य मध्यत उद्धृत्यावोक्ष्यारत्निमात्रं समचतुरश्रं स्थण्डिलं करोति। तत्रोल्लेखनादि कर्म प्रतिपद्यते ॥

ब्रह्मोपवेशनं ब्रह्मप्रतिनिधिश्च

दर्भेषु दक्षिणतो ब्राह्मण उपविशति। स यद्युपविशति आ दिशो व्युन्नयनादास्ते ॥

यद्यु वै नोपविशति दर्भेषु दक्षिणतः प्रागग्रं कूर्चं निधाय 'ओं भूर्भुवः सुवरों ब्रह्मन् ब्रह्मासि नमस्ते ब्रह्मणे' इत्युपतिष्ठते। ब्रह्मैवात्राऽऽसीनो भवति। तस्मै वरं ददाति। ब्राह्मणं वा भोजयेदिति ॥

एतेन सशिरस्को यज्ञः। 'यो वै यज्ञस्य शिरो वेद शीर्षण्वान् मेध्यो भवति' इति ॥

उदपात्रादिस्थापनमुत्तरतः

उत्तरत उदपात्रं ब्राह्मणमिध्माबर्हिरिति। 'एतद्वै यज्ञस्य शिरः। य एवं वेद शीर्षण्वान् मेध्यो भवति' इति ब्राह्मणम् ॥

शम्यानां परिधीनां च विकल्पः, परिधानावश्यकता, परिसमूहनादिविधिः

अथ शम्याः परिदधाति। 'शम्या वा परिधयो वा' इति विज्ञायते। 'नापरिधाय जुहुयाद्रक्षसामपहत्यै' इति ॥

सर्वत्र परिसमूहनपर्युक्षणपरिस्तरणपरिधानोपसमाधानालङ्करणमित्यादरादाचार्याः (दाचाराः $) ॥

ब्राह्मणानुज्ञा

सर्वत्रालङ्कृत्य ये तत्र ब्राह्मणाः सन्तिताननुज्ञाप्य कुर्वीत। यत्कारी स्यात् समृद्धमेवास्य तत् ॥

आघारवद्दर्वीहोमेषु याज्यापुरोनुवाक्ययोर्विधानम्, अनाम्नातेषु सर्वप्रायश्चित्तम्

[1]सर्वत्र दर्वीहोमेष्वाघारवत्सु 'पुरोनुवाक्यामनूच्य याज्यया जुहोति सदेवत्वाय' इति ब्राह्मणम् ॥

यत्रैकाऽऽम्नाता स्यात्तां द्विरभ्यावर्तयेत् ॥

'तत्सवितुर्वरेण्यम्' इत्यनुद्रुत्याऽऽम्नातया जुहोति। अथवा 'भूर्भुवः सुवरोम्' इत्यनुद्रुत्य 'तत्सवितुर्वरेण्यम्' इति जुहोति ॥

अनाम्नातेषु तदेतत्सर्वप्रायश्चित्तम् ॥

---

* "अथ यदि होमकालेष्वग्निरुद्वातः स्यात्सर्वं तत् 'अपहताः' इति प्रोक्ष्य 'अयं ते योनिः' इति क्षिप्रं तद्भस्म समिधि समारोप्य स्थण्डिलमुद्धृत्य लौकिकाग्निं प्रतिष्ठाप्य 'आजुह्वानः, उद्बुध्यस्वाग्ने' इति द्वाभ्यां समारोपितसमिधमाधाय संपरिस्तीर्य प्रायश्चित्तं जुहोति– 'अयाश्चाग्ने, पञ्चहोता, ब्राह्मण एकहोतेत्यादि दश, मनस्वतीः, मिन्दाहुती, महाव्याहृतीः, व्याहृतीश्च' इति ॥" इति बोधायनीयगृह्यकर्मसमुच्चयपाठः।

(१) बौगृ. ४।१०।१.

(२) बौगृप. १।५।१–१०; हिगृशे. ४।१२ तृतीयसूत्रे– स्थण्डिलं (सैकतं स्थण्डिलं) चतुर्थसूत्रे– व्युन्नयनादास्ते (व्युन्नयनाशास्ते) दशमसूत्रे– कुर्वीत (कुर्विति).

$ बोधायनीयगृह्यकर्मसमुच्चयपाठः।

(१) बौगृप. १।६।१–४; हिगृशे. ४।१३.

आग्निहोत्रिकतन्त्रम्

[1]अथात आग्निहोत्रिकं व्याख्यास्यामः ॥

सर्वमेवैतत्स्वाहाकारप्रदानं कुर्यादिति सिद्धम् ॥

आ परिधानात् कृत्वा 'अमुष्मै स्वाहा' इति दैवतं जुहोति ॥

अग्निः स्विष्टकृद्द्वितीयः ॥

द्विर्जुहोति । द्विर्निमार्ष्टि । द्विः प्राश्नाति । उत्सृप्याऽऽचामति । निर्लेढीति ॥

एष आग्निहोत्रिकः ॥

आपूर्विकतन्त्रम्

अथातोऽपूर्वं व्याख्यास्यामः ॥

सायंप्रातर्दशहोतारं जुहुयात् । पर्वसु चतुर्होतारम् । आग्रयणेष्वज्यानीः । चातुर्मास्येषु पञ्चहोतारम् । पशुबन्धे षड्ढोतारम् । ऋतुमुखीयम् । सोमे सप्तहोतारमिति । पयसा दशहोतारं जुहुयात् । अन्नेन चतुर्होतारम् । पायसेनाज्यानीः । पृषदाज्येन पञ्चहोतारम् । आमिक्षया षड्ढोतारम् । आज्येन ऋतुमुखीयम् । सोमेन सप्तहोतारमिति ॥

स एष औपासननिष्ठानां याथातथ्यदर्शिनां निरीप्सितानां श्रद्दधानानामपूर्वो होमः प्रजासंस्कारार्थो वा । किंचिज्ज्ञानानां प्राकृतेन हविषा यत्कामयते तज्जुहोति । हुतमेवास्य तद्भवति ॥

इत्यपूर्वो व्याख्यातः ॥

## बौधायनगृह्यशेषसूत्रम्

आघारवद्दर्वीहोमपदार्थानुक्रमः

[2]अथातः सप्तपाकयज्ञानामुक्तं तच्छेषं व्याख्यास्यामः ॥

[3]पवित्रकरणं प्रोक्षणीसंस्कारं प्रणीताप्रणयनं स्रुक्स्रुवसंमार्जनमिति दर्शपूर्णमासवत्तूष्णीम् ॥

( १ ) बौगृप. २।१।३९-४८.

( २ ) बौगृशे. १।१।१ ; हिगृशे. ४।१ ( अथातो गृह्यशेषं व्याख्यास्यामः ).

( ३ ) बौगृशे. १।१।२; हिगृशे. ४।१ संस्कारं (संस्करणं).

[1]अथाग्निं परिस्तीर्य दक्षिणेनाग्निं ब्रह्मायतने दर्भान् संस्तीर्योत्तरेणाग्निं प्रागग्रान् दर्भान् संस्तीर्य तेषु पात्राणि सादयित्वा तूष्णीं संस्कृताभिरद्भिरुत्तानानि पात्राणि कृत्वा विस्रस्येध्मं त्रिः सर्वाभिः प्रोक्ष्य दर्भेषु दक्षिणतो ब्राह्मणमुपवेशयति दर्शपूर्णमासवत्तूष्णीम् ॥

[2]'प्रादेशमात्राण्येकविंशतिरिध्मदारूणि भवन्ति' इति ब्राह्मणेन व्याख्यातम् ॥

[3]अथेध्ममभ्यज्य परिसमिधं शिनष्टि ॥

स्वाहाकारेणाभ्याधायाऽऽघारावाघार्याऽऽज्यभागौ प्रतिमुखं प्रबाहुग्जुहोति ॥

[4]प्रसिद्धमाऽग्निमुखात्कृत्वा स्रुवेण दर्व्यामुपस्तीर्य पूर्वार्धादवदायापरार्धादवद्यत्यभिघारयति प्रत्यनक्ति ॥

[5]यदि पञ्चावत्ती स्याद्दर्व्यामुपस्तीर्य मध्यात् पूर्वार्धादवदायापरार्धादवद्यत्यभिघारयति प्रत्यनक्ति ॥

स्रुवं निमृज्य यथादेवतं पुरोनुवाक्यामनूच्य याज्यया जुहोति ॥

अथोपस्तीर्य सकृदुत्तरार्धात् स्विष्टकृतमवद्यति । द्विरभिघारयति । न प्रत्यनक्ति ॥

तमन्तःपरिधि सादयित्वा यथाऽऽम्नातमाज्याहुतीर्जुहोति ॥

व्याहृतिभिरनाम्नातेषु ॥

अथ स्विष्टकृतमादायोत्तरार्धपूर्वार्धे जुहोति पूर्वेण वा त्रेतं (? वाऽत्रैतं) मेक्षणमनुप्रहरति ॥

( १ ) बौगृशे. १।१।३; हिगृशे. ४।१ ब्राह्मणं ( ब्रह्माणं).

( २ ) बौगृशे. १।१।५ ; हिगृशे. ४।१ ब्राह्मणेन व्याख्यातम् ( ब्राह्मणम् ); संर. ६५ तिरिध्म (तिमिध्म).

( ३ ) बौगृशे. १।१।७-८ ; हिगृशे. ४।१.

( ४ ) बौगृशे. १।१।९ ; हिगृशे. ४।१ माऽग्निमुखात् ( मग्निमुखात् ).

( ५ ) बौगृशे. १।१।१०-१७ ; हिगृशे. ४।१.

अथैनत् संस्रावेणाभिजुहोति ॥

दर्व्यामप आनीय संक्षालनमन्तःपरिधि निनयति ॥

[1]निर्णिज्य स्रुचं निष्टप्याद्भिः पूरयित्वा बहिःपरिधि निनयति ॥

[2]अथ समिधमाधाय जयाञ्जुहोति– 'चित्तं च स्वाहा' इति ॥

[3]त्रयोदश स्रुवाहुतीर्हुत्वाऽभ्यातानाञ्जुहोति– 'अग्निर्भूतानामधिपतिः स माऽवत्वस्मिन् ब्रह्मन्नस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मन्नस्यां देवहूत्यां स्वाहा' इति ॥

[4]सप्तदश स्रुवाहुतीर्हुत्वा वाचयति– 'पितरः पितामहाः परेऽवरे ततास्ततामहा इह माऽवत' इति ॥

[5]अथ राष्ट्रभृतो जुहोति– 'ऋताषाडृतधामाऽग्निर्गन्धर्वः स इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा, तस्यौषधयोऽप्सरस ऊर्जो नाम ता इदं ब्रह्म क्षत्रं पान्तु ताभ्यः स्वाहा' इति ॥

एवमेवाऽऽन्तादनुवाकस्यान्यत्र 'भुवनस्य पते, स नो भुवनस्य पते' इति ॥

[6]अथामात्यहोमाञ् जुहोति– 'यद्देवा देवहेडनम्' इत्याऽन्तादनुवाकस्य प्रत्यृचम् ॥

(१) बौगृशे. १।१।१८ ; हिगृशे. ४।१ निनयति + (अत्रैके सौविष्टकृतं समामनन्ति) इदं वाक्यमादर्शपुस्तके कंसस्थितम्.

(२) बौगृशे. १।१।१९ ; हिगृशे. ४।१.

(३) बौगृशे. १।१।२० ; हिगृशे. ४।१ (त्रयोदश स्रुवाहुतीर्हुत्वाऽभ्यातानाञ् जुहोति– 'अग्निर्भूतानामधिपतिः' इति) एतावदेव.

(४) बौगृशे. १।१।२१ ; हिगृशे. ४।१ वाचयति .. ... इति (प्राचीनावीती जुहोति जपति वेत्येके 'पितरः पितामहाः' इति).

(५) बौगृशे. १।१।२२–२३ ; हिगृशे. ४।१.

(६) बौगृशे. १।१।२४.

[1]अथ प्राजापत्यां जुहोति– 'प्रजापते न त्वदेतान्यन्यः' इति ॥

[2]अथ सौविष्टकृतं जुहोति– 'यदस्य कर्मणः' इति ॥

स्रुवेण परिधीननक्ति ॥

[3]अथ परिस्तरात् समुल्लिप्याऽऽज्यस्थाल्यां प्रस्तरवद्बर्हिरक्त्वा तृणं प्रच्छिद्याग्नावनुप्रहृत्य तूष्णीं तृणं चाथ शम्या अपोह्य परिधीननुप्रहरति ॥

[4]मध्यमं परिधिमनुप्रहृत्याथेतरावुपसमस्यति ॥

अथैनान् संस्रावेणाभिजुहोति ॥

अथाग्रेणाग्निं यथाम्नातं हुतशेषं दत्त्वा शेषं कुर्यादन्यत्र विवाहशेषात् ॥

तथैव परिषिञ्चति। 'अन्वमंस्थाः, प्रासावीः' इति मन्त्रान्तान् संनमयति ॥

अथ प्रणीताभ्यो दिशो व्युन्नयति दर्शपूर्णमासवत् तूष्णीम् ॥

ब्रह्माणं विसृज्य शेषं प्राश्नाति– 'आयुरसि विश्वायुरसि' इति ॥

प्राश्याप आचम्य जठरमभिमृशति– 'यत इन्द्र भयामहे, स्वस्तिदा विशस्पतिः' इति द्वाभ्याम् ॥

शेषमभिघारितं ब्राह्मणाय दद्यात् ॥

पत्न्या हविःशेषभक्षणस्य निषेधः

न पत्न्या हविषां भक्षणमन्यत्रोच्छिष्टमभिसंपाताभिहुतानां पिण्डदानस्य शेषं च नैव देवताहुतशेषमन्यत्र ब्रह्मौदनात् ॥

(१) बौगृशे. १।१।२५ ; हिगृशे. ४।१ (न त्वदेतान्यन्यः०).

(२) बौगृशे. १।१।२६–२७ ; हिगृशे. ४।१.

(३) बौगृशे. १।१।२८ ; हिगृशे. ४।१ रक्त्वा (रङ्क्त्वा).

(४) बौगृशे. १।२९–३७ ; हिगृशे. ४।१ यथाम्नातं (यथासमाम्नातं).

पात्रासादनक्रमः

[1]कथमु खलु पात्रसादनानामानुपूर्व्यं भवति । आज्यस्थालीं स्रुवं च जुहूं च दर्वीं च प्रणीताप्रणयनं प्रोक्षणीपात्रं चरुस्थालीं मेक्षणं चेध्माबर्हिरिध्मप्रव्रश्चनान्येवमेवान्यानि द्वन्द्वं न्यञ्चि न हीने नातिरिक्ते सादयति ॥

आपूर्विकतन्त्रम्

[2]अथातोऽपूर्वं व्याख्यास्यामः ॥

परिसमुह्य पर्युक्ष्य परिस्तीर्य परिषिच्योपसमाधाय अलङ्कृत्य यावदाम्नातमाहुतीर्जुहोति । आद्यन्तयोर्व्याहृतिभिराज्याहुतिः । परिधानं प्रणीताप्रणयनं ब्रह्मोपवेशनं च न विद्यते । विद्यते वा पूर्वैर्मन्त्रैरुपांशूक्त्वा 'उत्सृजत' इत्युच्चैः । एवमेवोपकल्पयतीति विज्ञायते ॥

पाकयज्ञेषु कर्तुस्तिष्ठत्त्वनिषेधः , पाकयज्ञसंस्थालक्षणम्

पाकयज्ञसंस्थानां न तिष्ठद्धोमो विद्यते । विज्ञायते च– 'अन्यत्र विहारादधूयते सर्वास्ताः पाकयज्ञसंस्थाः' इति ॥

आद्यन्तयोः परिषेचनम्

अथ संस्थायामाद्यन्तयोः परिषेचनं यथा पुरस्तात् ॥

आधारसमिध आवश्यकत्वम्

विज्ञायते– 'नासमित्के जुहुयात् । यदसमित्के जुहुयाद्यथाऽजिह्वेऽन्नं दद्यात्तादृक् (तत्) । तस्मात्समिद्धत्येव होतव्यम्' इति ॥

अनादिष्ट उपसमाधाय होतव्यम्, अनादिष्ट उपहत्यैव होतव्यमिति ॥

मेक्षणस्याऽऽहुतिसाधनत्वम्

मेक्षणेन 'अमुष्मै स्वाहा अमुष्मै स्वाहा' इति दैवतं जुहोति ॥

(१) बौगृशे. १।२।९ ; हिगृशे. ४।२ पात्रसा (पात्रासा).

(२) बौगृशे. १।३।१–९ ; हिगृशे. ४।३.



हविर्विशेषेषु हस्तस्य होमसाधनत्वम्

अथाप्युदाहरन्ति–
'ओषध्यः सक्तवः पुष्पं काष्ठं मूलं फलं तृणम् ।
एतद्धस्तेन होतव्यं नान्यत्किंचिदचोदनात् ॥'
इति ॥

पदार्थविशेषक्रमः

ओषध्यादिवद्बलिहरणं प्राक्परिषेचनाद्धुतशेषप्रदानं प्राशनं चैवमेव मूर्ध्नि संस्रावहोमः प्रदक्षिणं चान्यत्रोपनयनात् ॥

उत्करहोमतन्त्रम्

[1]अथ यद्युत्करेऽग्न्युपस्थानादि समानम् । निवर्तते पूर्णाहुतिः । समानमत ऊर्ध्वम् ॥

स्थण्डिलकरणम्

[2]अथातः स्थण्डिलविधिं व्याख्यास्यामः ॥

[3]सिकताश्चतुरङ्गुलं प्राचीनमुद्धृत्य पश्चाङ्गुलिप्रमाणं पश्चिमत ऊर्ध्वमङ्गुलिविशेषं दक्षिणत ऊर्ध्वमङ्गुलिविहीनमुत्तरतः पञ्चप्रस्थं सिकताः शुचयः शुक्ला अनार्द्रा अरत्निमात्रं समचतुरश्रं प्राक्प्रवणं स्थण्डिलं करोति ॥

पश्चादित्यन्तं प्राक्प्रवणत्वपक्षे । ऊर्ध्वाङ्गुलिविशेषमित्याद्युदक्प्रवणत्वपक्षे । उर्ध्वाङ्गुलिप्रमाणस्य यावान् विशेषो भवति तावत्परिमितो दक्षिणत उच्छ्रायः । ऊर्ध्वाङ्गुलिप्रमाण उत्तरत उच्छ्राय इत्यर्थः । सिकताप्रमाणं वर्णविशेषेणाऽऽकारविशेषश्च बौधायनसूत्रे– पञ्चप्रस्थेति । सिकता मृत्पांसवः । पञ्चप्रस्थसिकता इति प्रमाणं हस्तमात्राभिप्रायम् । संर. ५१

(१) बौगृशे. १।३।१३ ; हिगृशे. ४।३.

(२) बौगृशे. १।४।१ ; हिगृशे. ४।४.

(३) बौगृशे. १।४।२ ; हिगृशे. ४।४ ; संर. ५१ (सिकताश्चतुरङ्गुलं प्राचीनमुच्छ्रयति पञ्चाङ्गुलं पश्चादूर्ध्वाङ्गुलिविशेषं दक्षिणत ऊर्ध्वाङ्गुलिप्रमाणमुत्तरतः पञ्चप्रस्थसिकताः शुचयः शुक्ला अनार्द्रा अरत्निमात्रं समचतुरश्रं ब्राह्मणस्य रक्तवर्णं त्रिकोणं क्षत्रियस्य पीतवर्णं रथचक्रवद्वैश्यस्य प्राक्प्रवणमुदक्प्रवणं वा स्थण्डिलं करोति).

[1]न लोष्टेन न काष्ठेन न शर्करैर्न नखैः।
काष्ठेन व्याधितः स्याल्लोष्टेन कुलनाशनम्।
शर्करैः पुत्रनाशः स्यान्नखैर्बन्धुविनाशनम्॥

[2]तस्मात्सुवर्णरजतताम्रशकलेन व्रीहिभिर्यवैर्वा दर्भैस्तदङ्गुष्ठेन च महानाम्न्या चोपसंगृह्य तस्य मध्यतः प्राचीनं संततमृजुमुल्लिखेत्। किंदेवत्यं किंमन्त्रमिति? ब्रह्मदेवत्यं 'ब्रह्म जज्ञानम्' इति॥

रेखालेखनसाधनानि– न लोष्टेनेत्यादि। महानाम्नी उपकनिष्ठिका। उपसंग्रहणान्तमेव अविरोधादत्रोपयुज्यते। रेखालेखनप्रकारस्तु तिस्रः प्राचीस्तिस्र उदीची रेखाः कृत्वेत्यनेन विरुद्धत्वान्नोपयुज्यते। संर. ५६

[3]तस्य दक्षिणतः प्राचीनं संततमृजुमुल्लिखेत्। किंदेवत्यं किंमन्त्रमिति? यमदेवत्यं 'नाके सुपर्णम्' इति॥

[4]तस्योत्तरतः प्राचीनं संततमृजुमुल्लिखेत्। किंदेवत्यं किंमन्त्रमिति? सोमदेवत्यम् 'आप्यायस्व समेतु ते' इति॥

[5]तस्य मध्यत उदीचीनं संततमृजुमुल्लिखेत्। किंदेवत्यं किंमन्त्रमिति? रुद्रदेवत्यं 'यो रुद्रो अग्नौ' इति॥

(१) बौगृशे. १।४।३; हिगृशे. ४।४; संर. ५६ न शर्करैर्न नखैः (न शर्करया न नखेन) काष्ठेन + (वै) तृतीयार्धे (शर्करया पुत्रनाशः स्यान्नखेन बन्धुनाशनम्।).

(२) बौगृशे. १।४।४; हिगृशे. ४।४ (किंदेवत्यं किंमन्त्रमिति? ब्रह्मदेवत्यं 'ब्रह्म जज्ञानम्' इति०); संर. ५६ दर्भैस्तदङ्गुष्ठेन (दर्भैरङ्गुष्ठेन) मध्यतः (मध्यमं) शेषं हिगृशेवत्.

(३) बौगृशे. १।४।५; हिगृशे. ४।४ (किंदेवत्यं... ...इति॥०)

(४) बौगृशे. १।४।६; हिगृशे. ४।४ (किंदेवत्यं... ...इति॥०).

(५) बौगृशे. १।४।७; हिगृशे. ४।४ (किंदेवत्यं... ...इति॥०).

[1]तस्य पश्चादुदीचीनं संततमृजुमुल्लिखेत्। किंदेवत्यं किंमन्त्रमिति? विष्णुदेवत्यम् 'इदं विष्णुर्वि चक्रमे' इति॥

[2]तस्य पुरस्तादुदीचीनं संततमृजुमुल्लिखेत्। किंदेवत्यं किंमन्त्रमिति? इन्द्रदेवत्यम् 'इन्द्रं विश्वा अवीवृधन्' इति। एतस्मात् स्थण्डिलविधिर्भवति॥

अग्नेर्वर्जनीया दोषाः स्थापनमन्त्रश्च

[3]नकपालो नधूमो नज्वालो नविस्फुटो ननम्रमुखो द्रप्सं पतितं मुखज्वलितं च वर्जयित्वा 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां भूर्भुवः सुवरोम्' इत्याह भगवान् बोधायनः॥

सिकतादोषाः तत्फलानि च

[4]अथातः सिकतादोषं व्याख्यास्यामः॥

[5]भस्मकेशतुषकपालशर्करतृणास्थिपिपीलिकैरार्द्रसिकतानि वर्जयेत्॥

वर्जयेदित्यनन्तरं स्थण्डिलकरणमिति शेषः। पिपीलिकाग्रहणं जन्तूपलक्षणम्। संर. ५२

(१) बौगृशे. १।४।८; हिगृशे. ४।४ तस्य (तस्याः) (किंदेवत्यं......इति॥०).

(२) बौगृशे. १।४।९; हिगृशे. ४।४ (किंदेवत्यं... ...इति।०) एतस्मात् (एष).

(३) बौगृशे. १।४।१०; हिगृशे. ४।४ द्रप्सं (द्रप्सः) वर्जयित्वा (वर्जयेत्) (देवस्य त्वा ... ...बोधायनः ०).

(४) बौगृशे. १।५।१; हिगृशे. ४।५; संर. ५२ दोषं (दोषान्).

(५) बौगृशे. १।५।२; हिशगृे. ४।५; संर. ५२ शर्कर ... सिकतानि (शर्करातृणास्थिपिपीलिकावतीभिरार्द्राभिः सिकताभिः).

[1]भस्मना यजमानक्षयः केशेन स्त्रीमरणं तुषेण पुत्रघ्नं कपालैरर्थनाशनं शर्करैर्बन्धुवियोगस्तृणेन कर्मक्षयोऽस्थिना ग्रामविनाशः पिपीलिकै राष्ट्रविनाश आर्द्रसिकतैर्व्याधिभयं भवतीत्याह भगवान् बोधायनः ॥

परिस्तरणविधिः, ब्रह्मोपवेशनम्, प्रणीतासादनं च

[2]अथातः परिस्तरणविधिं व्याख्यास्यामः ॥

दर्भैरविच्छिन्नाग्रैरनखच्छिन्नैरविवर्णकैरव्याधिकर(?करैर) दग्धमूलैश्चतुरङ्गुलाधिकैर्मूलं छिन्द्याद्धस्तसममाज्येनाभ्यज्य वा स्पृष्ट्वाऽऽज्येन वा स्पृष्टैरद्भिरनुमृज्य 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां परिस्तृणामि' इति पुरस्तात्परिस्तीर्य, दक्षिणेन व्याहृतिभिः, पश्चिमेन 'उद्वयं तमसस्परि' इति, उत्तरेण 'अग्न आ याहि वीतये' इति, दक्षिणेनाग्निं ब्रह्मायतन उपवेश्य 'ओं भूर्भुवः सुवरों ब्रह्मन् ब्रह्मासि नमस्ते ब्रह्मन् ब्रह्मणे' इत्यासनं कल्पयित्वोत्तरेणाग्निं प्रणीताभ्यः कल्पयित्वा 'वरुणोऽसि धृतव्रतो वारुणमसि' इति ॥

एतस्मात्परिस्तरणविधिर्व्याख्यातः ॥

दर्वीहोमोपयोज्यदर्भाणां गणना

[3]सर्वत्र दर्वीहोमानामष्टोत्तरशतं दर्भाः— द्वे हस्तपवित्रे, द्वे आसनम्, प्रागुदीचीनाग्रैः षोडश परिस्तरणम्, दक्षिणतः प्रागग्रैः सप्तदश, पश्चादुदीचीनाग्रैरष्टादश, उत्तरतः प्रागग्रैः सप्तदश, पात्राणां पञ्च, सप्तदश ब्रह्मासनम्, प्रणीतासनं द्वे, द्वे आज्यपवित्रे, द्वे अभिद्योतने, द्वे दर्भाग्रे, द्वे पर्यग्निकरणे, स्रुक्संमार्जनं चतुर्थ्यं इति ॥

(१) बौगृशे. १।५।१३ ; हिगृशे. ४।५ भवतीत्याह (भवतीति विज्ञायते) (भगवान् बोधायनः ०); संर. ५२ तुषेण ...... भयं (तुषैः पुत्रनाशः कपालैरर्थनाशः शर्कराभिर्बन्धुवियोगस्तृणेन कर्मक्षयोऽस्थ्ना ग्रामनाशः पिपीलिकाभी राष्ट्रनाश आर्द्रसिकताभिर्भयं).

(२) बौगृशे० १।६।१–३ ; प्रका. १५–१६.

(३) बौगृशे. १।७।१ ; हिगृशे. ४।६ दर्वी (दर्वि) द्वे हस्तपवित्रे...... प्रागग्रैः सप्तदश (चत्वारि हस्तपवित्रे द्विपञ्चाशदासनं षोडश परिस्तरणं) प्रणीतासनं (प्रणीताप्रणयनं) स्रुक्संमा (स्रुवसंमा); प्रका. १६.

स्थण्डिलकरणम्

[1]अथ शुचौ समे देशे गोमयेन गोचर्ममात्रं चतुरश्रं स्थण्डिलं कृत्वा प्रादेशमात्रमुच्छ्रितं चतुरङ्गुलं वा किंचिद्दक्षिणत उन्नतो भवति ॥

[2]प्राचीनप्रवणं किंकामस्य ? उदीचीनप्रवणं किंकामस्य ? प्राचीनप्रवणं ब्रह्मवर्चसकामस्य। उदीचीनप्रवणमन्नाद्यकामस्य । प्रागुदक्प्रवणं प्रजाकामस्य। समं प्रतिष्ठाकामस्य ॥

होमोपयुक्तपदार्थानां देवताविधानम्,
देवताज्ञानफलम्

[3]उपलिप्तं वैश्वदेवत्यम्, उद्धत्यं नाकदेवत्यम्, अवोक्षणं पितृदेवत्यम्, सैकतं सिन्धुदेवत्यम्, उल्लेखनं यमदेवत्यम्, निरसनं रुद्रदेवत्यम्, स्पर्शनं वरुणदेवत्यम्, अग्निविधानं विष्णुदेवत्यम्, विहरणं वामदेवत्यम्, कर्म गायत्र्याः परिस्तरणदर्भाज्यस्थालीस्रुवजुहूनां पृथिवीदेवत्यम्, स्रुक् सोमदेवत्यम्, आज्यं वसुदेवत्यम्, पवित्रं विष्णुदेवत्यम्, चरुः प्रजापतिदेवत्यम्, मेक्षणमग्निदेवत्यम्, संमार्जनं रुद्रदेवत्यम्, कूर्चं प्रजापतिदेवत्यम्, उदकुम्भमब्देवत्यम्, प्रणीता

(१) बौगृशे. १।८।१ ; हिगृशे. ४।७ (चतुरश्रं०).

(२) बौगृशे. १।८।२ ; हिगृशे. ४।७ उदीचीनप्रवणं किंकामस्य + (प्रागुदक्प्रवणं किंकामस्य समं किंकामस्य); संर. ५२ (प्राचीनप्रवणं किंकामस्य ? उदीचीनप्रवणं किंकामस्य०).

(३) बौगृशे. १।८।३ ; हिगृशे. ४।७ पवित्रं विष्णुदेवत्यं (पवित्रं विष्णुदेवत्यः) गान्धर्वदेवत्यं (गन्धर्वदेवत्यं) भवति ॥ + (अथाप्युदाहरन्ति).

वरुणदेवत्यम्, अश्मा महेन्द्रदेवत्यम्, वासः सोमदेवत्यम्, कर्ता बृहस्पतिदेवत्यम्, धूममतिथिदेवत्यम्, इध्ममग्निदेवत्यम्, मध्यमपरिधिर्यजमानदेवत्यम्, दक्षिणपरिधिरिन्द्रदेवत्यम्, उत्तरपरिधिर्वरुणदेवत्यम्, ऊर्ध्वसमिधौ सूर्यदेवत्यम्, इन्द्राग्नियमनिर्ऋतिवरुणवायुसोमेशाना अष्टदिग्देवत्यम्, व्यजनं वायुदेवत्यम्, गन्धमश्विनिदेवत्यम्, पुष्पं गान्धर्वदेवत्यम्, धूपमिन्द्रदेवत्यम्, दीपं भानुदेवत्यम्, प्रयाजानूयाजमृतुदेवत्यम्, पक्वं प्रधानदेवत्यम्, उपहोमा यथालिङ्गदेवत्यम्, यत्र यत्र होमे मन्त्रविधानं तत्र तल्लिङ्गदेवत्यम्, परिषद् ब्रह्मदेवत्यम्, सदस्याः सर्वदेवत्यम्, अन्येषामनुक्तानां प्रजापतिदेवत्यम्। योऽस्य दैवतं मन्त्रतः कर्मतो वाऽभिज्ञाय जुहोति सोऽश्नुते श्रियमायुष्यमारोग्यं स्वर्ग्यं च भवति ॥

अग्निमुखपदार्थानुक्रमः

[1]अथाग्निमुखप्रयोगः ॥

शुचौ समे देशे गोमयेन गोचर्ममात्रं स्थण्डिलमुपलिप्य तत्र प्राङ्मुखः स्नानादिपञ्चकं कृत्वोपविश्य स्फ्येनोद्धत्यावोक्ष्य पञ्चप्रस्थसिकताभिः स्थण्डिलकरणम्। व्याहृतीभिर्नियुप्यारत्निमात्रं समचतुरश्रं कृत्वा तस्मिन् प्रादेशमात्रं चतुरश्रं दर्भैस्त्रिः प्राचीनमुल्लिखेदङ्गुष्ठानामिकाभ्यां कनिष्ठिकया वा। 'ब्रह्म जज्ञानम्' इति मध्ये, दक्षिणे 'नाके सुपर्णम्', उत्तरे 'आप्यायस्व' इति। त्रिरुदीचीनम्। मध्ये 'यो रुद्रः' इति, अप उपस्पृश्य, पश्चिमे 'इदं विष्णुः', प्राच्याम् 'इन्द्रं विश्वा अवीवृधन्' इति। दर्भं निरस्याप उपस्पृश्याग्नेरासनं कल्पयित्वा यथोक्तमग्निं पत्न्याऽऽहृतमङ्गाररूपं व्याहृतीभिर्निनियुप्य तत्पात्रेऽक्षतजलं निनयेत् ॥

अथ प्रोक्षितस्थूलकाष्ठत्रयेण तूष्णीमन्वाधायोपतिष्ठतेऽग्निम्– 'जुष्टो दमूनाः' इति ॥

अथाऽऽसनं कल्पयित्वा तृणं निरस्याप उपस्पृश्यात्र वा पूर्वं दक्षिणतः पश्चादुत्तरतोऽथैनं प्रदक्षिणमग्निं परिसमूह्य पर्युक्ष्य परिस्तीर्य दक्षिणानुत्तरानुत्तरानधरान् ॥

पात्रोत्तरासनं ब्रह्मदक्षिणासनं प्रणीतोत्तरासनं पश्चादात्मासनं सर्वं कल्पयित्वा पात्राणि सादयेत्। आज्यस्थालीं स्रुवं च जुहूं प्रणीतां च चरुस्थालीं प्रोक्षणीं चेध्माबर्हिश्चेध्मप्रव्रश्चनानि मेक्षणं च सादयित्वा दर्भैः प्रतिच्छाद्य शूर्पं कृष्णाजिनं चेत्यत्र दर्वीहोमो विकल्पे ॥

अथ बर्हिषः पवित्रे कुरुते प्रादेशमात्रे समे अप्रतिच्छिन्नाग्रे अनखच्छिन्ने तरुणे। तूष्णीमद्भिरनुमृज्य कृत्वा प्रोक्षण्यां निधायाप आनीय त्रिरुत्पूयाद्भिः प्रोक्ष्योत्तानानि पात्राणि कृत्वा विस्रस्येध्मं त्रिः प्रोक्ष्य ब्राह्मणमिष्टिवद्दक्षिणत उपवेश्य 'ओं भूर्भुवः सुवर्ब्रह्मन् ब्रह्मासि नमस्ते ब्रह्मन् ब्रह्मणे' इति ब्राह्मणमुपतिष्ठते। आ दिशो व्युन्नयनादास्ते ॥

यद्वा कूर्चमुपवेश्याभ्यर्च्य प्रणीतायां सपवित्रायां वरुणं पूजयित्वा सहपवित्रेण नासिकासममुत्थाप्योत्तरतः सादयन्ति– 'भूर्भुवः सुवरों वरुणोऽसि धृतव्रतो वारुणमसि' इति। तमभ्यर्च्य दर्भैः प्रतिच्छाद्याथ व्रीहीन्निर्वपति– 'अमुष्मै वो जुष्टं निर्वपामि' इति वा तूष्णीं वा। एवं त्रिः सकृत्तूष्णीम् ॥

तथा तानभ्युक्ष्यावहत्य त्रिष्फलीकृत्य त्रिः प्रक्षाल्य निदधाति। तण्डुलान् वा निर्वपति। तानभ्युक्ष्य त्रिः प्रक्षाल्यैवं निदधाति। स्थाल्यामपः पयो वाऽऽनीयाधिश्रित्य तिरःपवित्रं तण्डुलानावपति ॥

अथ पक्वमोदनं पायसं वा याचति ॥

तमभ्युक्ष्य स्रुवेण प्रणीताजलं निनयति ॥

(१) बौगृशे. ५।१।१–४२.

अग्नावधिश्रित्याथाऽऽज्यस्थाल्यामाज्यं निरुप्योदीचोऽङ्गारान्निरूह्य व्यन्तान् कृत्वा तेष्वधिश्रित्याभिद्योतनेनाभिद्योत्य द्वे दर्भाग्रे प्रच्छिद्य प्रक्षाल्य प्रत्यस्य पुनरभिद्योत्योभयं त्रिः पर्यग्नि कृत्वा वर्त्म कुर्वन्नुदगुद्वास्य प्रत्यूह्याङ्गारानथैनदुदीचीनाग्राभ्यां पवित्राभ्यां पुनराहारं त्रिरुत्पूय विस्रस्य पवित्रे अद्भिः संस्पृश्याग्नावनुप्रहरति ॥

अथ स्रुवं जुहूं मेक्षणं च संमृज्य त्रिरन्तरतस्त्रिर्बाह्यतस्तथा मूलैर्मूलं संमृज्याद्भिः संस्पृश्य पुनर्निष्टप्य निदधाति क्रमेण ॥

अथ दर्भानद्भिः संस्पृश्याग्नावनुप्रहरति ॥

पश्चादग्नेर्बर्हिः स्तीर्त्वा तत्राऽऽज्यं निदधाति । चरुमभिघार्योदञ्चमुद्वास्य बर्हिष्यासाद्य प्रतिष्ठितमभिघारयति ॥

स्थविष्ठो मध्यमो द्राघीयान् दक्षिणतोऽणिष्ठो ह्रसिष्ठ उत्तरत ऊर्ध्वे समिधावादधाति ॥

अथाग्निं परिषिञ्चति– 'अदितेऽनुमन्यस्व' इति दक्षिणतः प्राचीनम्, 'अनुमतेऽनुमन्यस्व' इति पश्चादुदीचीनम्, 'सरस्वतेऽनुमन्यस्व' इत्युत्तरतः प्राचीनम्, 'देव सवितः प्र सुव' इति समन्तं प्रदक्षिणम्। समन्तमेव वा तूष्णीं परिषिञ्चति ॥

अथाग्निमैन्द्रादिक्रमेणाभ्यर्च्य परिसमिधं शिनष्टि। ब्राह्मणेनानुज्ञातः स्वाहाकारेणाभ्याधायानूयाजसमिधमिध्मसंनहनं प्रणीतापात्रं निधायाऽऽघारावाघारयति– 'प्रजापते स्वाहा' इति मनसोत्तरे परिधिसंधौ संस्पृश्याक्ष्णया संततम्, 'इन्द्राय स्वाहा' इत्युपांशु दक्षिणे परिधिसंधौ संस्पृश्याक्ष्णया संततम् ॥

अथाऽऽज्यभागौ जुहोति– 'अग्नये स्वाहा' इति दक्षिणार्धपूर्वार्धे ॥

प्रतिमुखं प्रबाहुग्जुहोति– 'सोमाय स्वाहा' इति दक्षिणार्धपूर्वार्धे। अथाग्निमुखं जुहोति– 'युक्तः, चतस्रः' आरभ्य व्याहृत्यन्तं हुत्वाऽथ चरुप्रायश्चित्तं हुत्वा चरुमभिघार्याथाव्रत्यप्रायश्चित्तं कृत्वा स्रुवेण जुह्वामुपस्तीर्य मेक्षणेन चरुमालोड्य पूर्वार्धादवदायापरार्धादवद्यत्यभिघारयति प्रत्यनक्ति । पुरस्तात् स्रुवाहुतिं हुत्वा यथोक्तं पक्वाज्जुहोत्युपरिष्टात्स्रुवाहुतिं च ॥

अथोपस्तीर्योत्तरार्धात् स्विष्टकृत्सकृदवद्यति, द्विरभिघारयति, न प्रत्यनक्ति । अन्तःपरिधि सह मेक्षणेन सादयित्वा यथोक्तमाज्याहुतीर्जुहोति ॥

अथ पुरस्तात्स्रुवाहुतिं स्विष्टकृतमुपरिष्टात्स्रुवाहुतिं च हुत्वाऽप उपस्पृश्य मेक्षणमग्नौ प्रहृत्याथैनत्संस्रावेणाभिजुहोति स्रुक्स्रुवाभ्याम् ॥

जुहूसंक्षालनमन्तःपरिधि निनयति ॥

निर्णिज्य स्रुचं निष्टप्याद्भिः पूरयित्वा बहिःपरिधि निनयति ॥

स्थालीपाकेऽन्तःपरिधि बहिःपरिधि समन्त्रकम् ॥

अथानूयाजसमिधमाधायेध्मसंनहनमद्भिः संस्पृश्याग्नावनुप्रहरति ॥

अथ जयानभ्यातानान् राष्ट्रभृतोऽमात्यहोमांश्च हुत्वाऽथ चतुर्गृहीतेन स्रुवेण वा प्राजापत्यं हुत्वा इध्मप्रव्रश्चनान्यभ्याधाय प्रायश्चित्तानि सौविष्टकृतं च हुत्वा स्रुवेण परिधीननक्ति ॥

अथ परिस्तरान् समुल्लिप्याऽऽज्यस्थाल्यां प्रस्तरवद्बर्हिरक्त्वा तृणं प्रच्छाद्याग्नावनुप्रहरति ॥

अप उपस्पृश्य तृणं च मध्यमं परिधिमनुप्रहरति ॥

अथेतरावुपसमस्यत्यूर्ध्वेसमिधौ च ॥

अथैनान् संस्रावेणाभिजुहोति – 'वसुभ्यः' इति ॥

अत्र बलिं प्राशनं चान्यत्रोपनयनादन्यानि तत्तदुक्तकर्माणि ॥

अथाग्निं परिषिञ्चति– 'अन्वमंस्थाः, प्रासावीः' इति ॥

वरुणमुद्वास्य बर्हिषि दिशो व्युन्नीय 'प्राच्याम्' इत्यादिना स्वयं च प्रोक्ष्य ब्रह्मणे वरं दत्त्वा चरुशेषं सघृतं वा ब्रह्माणं विसृजति ॥

स्थालीपाकनक्षत्रहोमायुष्यहोमादिषु प्राशनमुक्तम् ॥

पञ्चावत्तिनामवदानधर्मः

पञ्चावत्तिनां पञ्चावदानं मध्यात् पूर्वार्धादपरार्धादवद्यति ॥

स्विष्टकृत उत्तरार्धाद्‍द्विरवद्यति ॥

शेषं पूर्ववत् ॥

बहुदेवत्ये चतुरवत्तिनामवदानधर्मः

अथ बहुदेवत्ये द्वितीयमवदानमपरार्धादवदाय पूर्वार्धादवद्यति । सर्वमेवमाऽन्तात् ॥

अथ स्विष्टकृत उपस्तीर्य यावती देवतासंख्या तावदवदानं सकृत्सकृत् । शेषं समानम् ॥

बहुदेवत्ये पञ्चावत्तिनामवदानधर्मः

तथा मध्यादपरार्धात्पूर्वार्धादवद्यति ॥

स्विष्टकृतो द्विर्द्विरवद्यति । शेषं समानं भवति ॥

सर्वन्यायं ज्ञात्वाऽऽचार्यमुखेन कुर्यात् ॥

आपूर्विकतन्त्रम्

[1]आपूर्विकेषु यावदर्थं द्रव्यसंस्कारः परिस्तरणपरिषेकौ यावदुक्ता आहुतयोऽन्यानि च वैशेषिकाणि कर्माणि ॥

आग्निहोत्रिकतन्त्रम्

[2]आग्निहोत्रिकेषु स्रुक्स्रुवौ प्रयुज्याऽऽज्यं संस्कृत्य चतुर्गृहीत्वा सर्वान्मन्त्राननुद्रुत्य प्रथमाहुतिं जुहोति । 'अग्नये स्विष्टकृते स्वाहा' इति द्वितीयाम् । अग्निहोत्रवत्त्रिः(? द्विः) प्राश्य स्रुचं दर्भैः प्रक्षालयति । यथोक्तानि वैशेषिकाणि कर्माणि ततः करोति ॥

(१) संर. ९४, ९५.

(२) संर. ९५.

## आश्वलायनगृह्यसूत्रम्

स्थण्डिलकरणादिपर्युक्षणान्तपदार्थक्रमः

[1]अथ खलु यत्र क्व च होष्यन्त्स्यादिषुमात्रावरं सर्वतः स्थण्डिलमुपलिप्योल्लिख्य षड्लेखा उदगायतां पश्चात्प्रागायते नानान्तयोस्तिस्रो मध्ये तदभ्युक्ष्याग्निं प्रतिष्ठाप्यान्वाधाय परिसमुह्य परिस्तीर्य पुरस्ताद्दक्षिणतः पश्चादुत्तरत इत्युदक्संस्थं तूष्णीं पर्युक्षणम् ॥

(१) 'अथ खलु... इत्युदक्संस्थम्' एतदन्तं केचित् । पृथगुपदेशात् तूष्णीं पर्युक्षणम् । कर्तव्यमिति वाक्यशेषः । अथशब्दोऽधिकारार्थः । कथम् ? इह अतः प्रभृति यानि कर्माणि विधीयन्ते तेषामेते धर्मा यथा स्युः । प्रागाम्नातस्य निवृत्त्यर्थम् । 'खलु' अयं निपातोऽनर्थकः । मिताक्षरेष्वनर्थकाः । यत्र क्व चेति किमर्थम् ? अनू(? नु)च्यमान एतस्मिन् होमविधिः प्रसज्येत । योऽयमहरहश्चोच्यते होमः 'तत् यदग्नौ जुहोति' इति, अत्रापि स्यात् । सर्वहोमानां चायं धर्म इष्यते साधारणः । तस्मात् यत्रक्वचग्रहणम् । एवमपि क्व चेति किमर्थम् । प्रसिद्धतन्त्राणामपि होमसामान्यात् कथमेते धर्माः स्युः । एवं यथासंभवं क्वचप्रयोजनम् । 'तस्याग्निहोत्रेण' इत्यत्र प्रतिषेधः । कथं पुनरत्र प्रतिषेधः ? अग्निहोत्रव्यपदेशात् । तदुपरिष्टात् विभावयिष्यामः । केषां चात्र संभवः ? अन्वाधानपरिसमूहनपरिस्तरणपर्युक्षणानाम् । तस्मात्क्वचग्रहणम् । 'इषुमात्रावरम्' इषोर्मात्रा इषुमात्रा अवरा यस्य तत् इषुमात्रावरम् । इषुप्रमाणमित्यर्थः । किं तत् ? स्थण्डिलम् । एतैः संस्कारैः भूमिप्रदेशं संस्करोति । सर्वत इति । किमिति ? समीक्ष्य अग्नेः प्रतिष्ठापनदेशमभिसमीक्ष्य ततः सर्वासु

६ (१) आगृ. १।३।१ ; प्रपा. ३० (अथ खलु यत्र... मध्ये तदभ्युक्ष्य) एतावदेव : ३१ (यत्र क्व च होष्यन्त्स्यात्) एतावदेव : ३३ (अग्निं प्रतिष्ठाप्यान्वाधाय) एतावदेव : ३८ (परिसमुह्य परिस्तीर्य ..... तूष्णीं पर्युक्षणम्) एतावदेव; प्रर. ३७ (यत्र क्व च होष्यन्त्स्यात्) एतावदेव.

दिक्षु। कथं पुनरेतत् ज्ञायते ? उत्तरत्र पुनर्विशेषणात्। उल्लिख्य षट् लेखाः। ऊर्ध्वं षण्णां लेखानामुल्लेखनं करोति। तस्मिन्नेव देशे, न सर्वस्मिन् स्थण्डिले पुनरुल्लेखनं कर्तव्यम्। उदगायतां पश्चात्। कस्य पश्चात् ? स्थण्डिलस्येति अधिकृतत्वात्। नेत्युच्यते। अग्नेः प्रतिष्ठापनदेशस्य पश्चात्। कस्मात् ? तस्य विशेषाधिकारात्। अत एव च तस्य सर्वत इषुमात्रावरं भवति। प्रागायते नानान्तयोः। तस्या लेखाया अन्तयोः असंसृष्टे प्रागायते लेखे उल्लिखति। तिस्रो मध्ये। प्रागायते(?यताः) तयोर्मध्ये तिस्रो लेखा उल्लिखति। अथैवं षट्के सिद्धे षड्ग्रहणं किमर्थम्? संबन्धार्थम्। कथम् ? अग्निना सर्वा लेखा अभिसंबध्यन्ते। अस्माच्च ज्ञायते अयं विशिष्टो देशो विवक्षित इति। यतो दिग्विभागः। तदभ्युक्ष्य अद्भिः। उपरि प्रोक्षणमभ्युक्षणम्। अग्निं प्रतिष्ठाप्य। होमसमर्थमग्निं निदधाति। तस्मिन्नन्वाधाय द्वे समिधावादधाति। ततः परिसमूहनम्। ततः परिस्तरणं कुशैः। पुरस्तात्प्रवृत्य उदक्संस्थम्। उदक्संस्थत्वे सिद्धे किमर्थं पुनरुदक्संस्थवचनम् ? प्रतिदिशामुदक्संस्थं यथा स्यादिति उदक्संस्थवचनम्। एकसूत्रभावं कुर्वतामेतत्प्रयोजनम्। ये पुनः पृथक्कुर्वन्ति ते कर्मशब्दाध्याहारं कुर्वन्ति उदक्संस्थं कर्म भवेदिति। परिस्तरणं चान्यानि च, यथा— उल्लेखनं तथा शिरउन्दनं परिसमूहनपर्युक्षणे च। सर्वत्रैवंप्रकाराण्युदाहरणानि। पर्युक्षणं तूष्णीं कर्तव्यम्। मन्त्राभावात् मन्त्रप्रतिषेधोऽनर्थकः। पर्युक्षणाचोदनासामर्थ्यात् मन्त्रप्राप्तिः। अग्निहोत्रदृष्टस्य ततः प्रकृतत्वान्न भविष्यति। तस्मात् यावदुक्तयैव क्रियया एव सिद्धे यदप्राप्तं मन्त्रं प्रतिषेधति तत् ज्ञापयति— अन्येषाममन्त्रप्राप्तानां कर्मणां कथं प्रवृत्तिः स्यात्। यथा त्रिस्त्रिः, पुनः पुनरुदकमादाय, आद्यन्तयोः, परिसमूहनपूर्वकं च।

देभा.

( २ ) अथशब्दोऽधिकारार्थः। इत उत्तरं यानि वक्ष्यन्ते तेषामेवायं होमविधिर्भवतीति। तेन वैश्वदेवः क्वचग्रहणेन प्राप्यमाणो होष्यद्धर्मो न भवति। खलुशब्दोऽपार्थकः, 'मिताक्षरेष्वनर्थकः' इति वचनात्। यत्रक्वचग्रहणमहरहःक्रियान्तरविध्याशङ्कानिवृत्त्यर्थम्। यत्र क्व च होष्यन् स्यादिति होममनूद्य धर्मविधिः। तर्हि यत्रेत्येवास्तु, क्वचग्रहणमनर्थकम्। न। तन्त्रप्रतिषेधविषयेऽप्यौपासनाग्निपरिचरणे एतत्सूत्रविहितपरिसमूहनपरिस्तरणपर्युक्षणानां प्राप्त्यर्थं क्वचग्रहणम्। लेखादयो न सन्तीति वक्ष्यामः। इषुमात्रा मात्रा यस्य स्थण्डिलस्य तदिषुमात्रम्। एकस्य मात्राशब्दस्य लोपः उष्ट्रमुखवत्। तच्च तदवरं च इषुमात्रावरम्। अवरं निकृष्टमित्यर्थः। सर्वतः सर्वासु दिक्षु। चतसृष्वित्यर्थः। चतसृष्वपि दिक्षु इषुमात्रप्रमाणं ततोऽधिकं वा चतुरश्रं स्थण्डिलं गोमयेनोपलिप्य षट् लेखा उल्लिखेत्। षड्ग्रहणं कथम् ? षट्स्वपि लेखासु अग्नेः स्थापनं यथा स्यादिति। केनचिद्यज्ञियेन शकलेन स्थण्डिलमध्ये उदग्दीर्घां प्रादेशमात्रां न्यूनां वा लेखामग्निप्रतिष्ठापनदेशस्य पश्चाल्लिखेत्। नानेत्यसंसर्गार्थम्। तस्या अन्तयोर्नाना असंसृष्टे प्रागायते लेखे लिखेत्। ततस्तिस्रो मध्ये असंसृष्टाः प्रागायताः लेखा लिखेत्। शकलं तत्रैव निधाय स्थण्डिलमभ्युक्ष्य शकलं निरस्याप उपस्पृश्याभ्यात्ममग्निं प्रतिष्ठाप्यान्वादधाति। ततोऽतिदेशप्राप्तं बर्हिष इध्मस्य च संनहनं करोति। अन्वाधानं नाम कर्माङ्गत्वेन द्वयोस्तिसृणां वा समिधामभ्याधानम्। ततः परिसमुह्य। परिसमूहनं नाम अग्नेः समन्तात्परिमार्जनम्। तच्चाग्निहोत्रवत्। ततः परिस्तीर्य पुरस्ताद्दक्षिणतः पश्चादुत्तरत इत्येवम्। उदक्संस्थवचनमेकैकस्यां दिशि उदक्संस्थताप्राप्त्यर्थम्। अथवा इत्युदक्संस्थमिति पृथग्योगः। निपातानामनेकार्थत्वात् इतिशब्द एवंप्रकारे। एवंविधं यत्कर्म सर्वदिक्संबद्धं परिसमूहनपर्युक्षणशिरस्त्रिरुन्दनादिकं तदपराजितायां दिश्यारभ्योदक्संस्थं कार्यमित्यर्थः। ततस्तूष्णीं पर्युक्षणं करोति। तूष्णींग्रहणं मन्त्रवर्जमन्ये धर्मा अग्निहोत्रदृष्टा भवन्तीत्येवमर्थम्। त्रिस्त्रिरेकैकम्, पुनः पुनरुदकमादाय, आदावन्ते च कर्मणां पर्युक्षणम्, उभयत्र च परिसमूहनपूर्वकत्वमिति। अत्र पुनः परिसमूहनविधानं मध्ये परिस्तरणसिद्ध्यर्थम्। एतस्मिन्काले उत्तरतोऽग्नेरपः प्रणयति चमसेन कांस्येन मृन्मयेन वा, उत्तरत्र निनयनदर्शनात्।

*गानावृ.

* प्रपा. गानावृवत्।

( ३ ) उपदेशक्रमादेव सिद्धे उदक्संस्थवचनं सर्वासु दिक्षूदक्संस्थता यथा स्यादिति । तेन प्राक्प्रतीच्योरपि प्रागग्रैरेव परिस्तरणं भवति । तथा चाऽऽपस्तम्बः— ' प्रागग्रैर्दर्भैरग्निं परिस्तृणाति ' ( आपगृ. १।१२ ) इति। तत्र तु कल्पान्तरमप्युक्तं ' प्रागुदगग्रैर्वा ' ( आपगृ. १। १३ ) इति । पर्युक्षणं परित उदकसेकः । तूष्णींवचनमाग्निहोत्रिके पर्युक्षणे दृष्टो मन्त्रो मा भूदिति । कथं पुनरतत्प्रकृतिके तस्मिन् तस्य प्रसङ्गः ? एतदेव ज्ञापयति— तत्र पर्युक्षणे दृष्टो धर्मोऽत्रापि प्रवर्तते इति । तेन पुनः पुनरुदकमादाय त्रिः पर्युक्षणं भवति । * अना.

आज्योत्पवनम्

[१]**पवित्राभ्यामाज्यस्योत्पवनम् ॥**

पवित्राभ्यामाज्यस्योत्पवनं कर्तव्यम् । आज्यार्थं सर्पिराज्यमुच्यते । उत्पवनोपायमुत्तरत्र विदधाति ।

¶ देभा.

[२]**अप्रच्छिन्नाग्रावनन्तर्गर्भौ प्रादेशमात्रौ कुशौ नानान्तयोर्गृहीत्वाऽङ्गुष्ठोपकनिष्ठिकाभ्यामुत्तानाभ्यां पाणिभ्यां ' सवितुष्ट्वा प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः ' इति प्रागुत्पुनाति सकृन्मन्त्रेण द्विस्तूष्णीम् ॥**

( १ ) अप्रच्छिन्नाग्रौ द्वौ । प्रकर्षेण छिन्ने अग्रे ययोस्तावेतौ प्रच्छिन्नाग्रौ । अप्रच्छिन्नाग्रौ ईषच्छिन्नाग्रावपि भवतः । अनन्तर्गर्भौ । मध्ये गर्भं ययोर्नास्ति तावेवानन्तर्गर्भौ । कौ तौ ? कुशौ । प्रादेशमात्रौ इति परिमाणनिर्देशः । एवंलक्षणे पवित्रे भवतः । नान्योन्यसंस्पृष्टार्थं नानान्तयोरिति ग्रहणम् । देशनियमार्थमङ्गुष्ठोपकनिष्ठिकाभ्याम् । अङ्गुष्ठश्च उपकनिष्ठिका च अङ्गुष्ठोपकनिष्ठिके । कनिष्ठिकाया उप वर्तते इत्युपकनिष्ठिका । ताभ्यामङ्गुष्ठोपकनिष्ठिकाभ्यामुभयोः पाण्योः । उत्तानाभ्यामिति पाण्योश्चेष्टाविशेषः । ' सवितुष्ट्वा ' इत्यनेन मन्त्रेण सकृत् , द्विस्तूष्णीम् । प्रागिति निर्देशः । उत्पुनातीति क्रिया ।

* सकृन्मन्त्रेणैत्येतन्न वक्तव्यम् , ' सर्वत्रैवं कर्मावृत्तौ ' इति सिद्धत्वात् । नेत्युच्यते । एकमन्त्रायां कर्मावृत्तावेव परिभाषा । इह तु मन्त्रबहुत्वात् प्रत्युत्पवनं मन्त्राः प्राप्ताः । ' सवितुष्ट्वा प्रसव उत्पुनामि ' इति प्रथमम् , ' अच्छिद्रेण पवित्रेण ' इति द्वितीयम् , ' वसोः सूर्यस्य रश्मिभिः ' इति तृतीयम् । एवं प्राप्ते सर्वैरेतैर्मन्त्रैः कथं प्रथममुत्पवनं स्यात् , ततो द्विः तूष्णीमित्येतावदर्थोऽयमारम्भः । एवमेके । नेत्यपरे । कस्मात् ? मन्त्रैकत्वात् । यदि मन्त्रैकत्वं ननु पूर्वया परिभाषया प्राप्तं सर्वत्रैव भवति । आवृत्तिर्नोदनाभावात् न प्राप्नोति । यद्येवमावृत्तिरेव नोदयितव्या— ' प्रागुत्पुनाति त्रिः ' इत्येवम् । लघुना सिद्धे किमर्थं गुर्वारम्भः क्रियते ? गुर्वारम्भं कुर्वन् तत् ज्ञापयति— कथमेतस्मिन् गृह्यकर्मणि ' सर्वत्रैवम् ' एषा परिभाषा न स्यात् , यावत् कर्माऽऽवर्तते तावन्मन्त्रस्याऽऽवृत्तिर्यथा स्यात् । यथा ' प्रदक्षिणं शिरस्त्रिरुन्दति ' , ' अग्निमुपस्पृश्य मुखं निमार्ष्टि त्रिः ' अभ्यासस्येत्येतत् प्रयोजनम् । येषां तु पूर्वार्थः तेषामेवमादिषु ' सर्वत्रैवम् ' इत्येषा परिभाषा भवति । नन्वयमर्थो यश्चासौ प्रागुक्तो दोषः सकृन्मन्त्रेणेत्येवमाद्यतिरिच्यते, स च न परिहृतः । अथ प्राग्ग्रहणं किमर्थम् ? ' तस्य नित्याः ' इति सिद्धत्वात् प्रत्यङ्निवृत्त्यर्थम् , शास्त्रान्तरदृष्टत्वात् । एवं ब्रुवता किं दर्शितं भवति ? अविप्रतिषिद्धाः शास्त्रान्तरदृष्टा विधयो भवन्तीति । किमर्थं पुनर्योगद्वयेन उत्पवनविधिः ? उच्यते । पुरस्तादाज्यग्रहणमवश्यं कर्तव्यं द्रव्यनिर्देशार्थम् , तदिहैव क्रियताम्— 'प्रागाज्यम् ' इति । तथा पवित्रग्रहणम् ईदृग्लक्षणयोः कुशयोः पवित्रसंज्ञाकरणार्थम् , तत्र तत्र पवित्रग्रहणे

* शेषं गानावृवत् ।

¶ गानावृ. , अना. , प्रपा. देभागतम् ।

( १ ) आगृ. १।३।२ ; प्रपा. ४३.

( २ ) आगृ. १।३।३ ; प्रपा. ४३ ; पप्र. ९६ ( अप्रच्छिन्नाग्रावनन्तर्गर्भौ प्रादेशमात्रौ कुशौ ) एतावदेव.

* ' सकृन्मन्त्रेण द्विस्तूष्णीम् ' इत्येतावदित्यर्थः ।

कथमीदृग्लक्षणयोः कुशयोर्ग्रहणं स्यात्, ‘चतुरश्चतुरो मुष्टीन्निर्वपति पवित्रे अन्तर्धाय’ ‘दक्षिणोत्तरौ पाणी संधाय पवित्रवन्तौ’ इत्येवमादि(?दौ)। एतदपीहैव कर्तव्यम्– ‘प्रादेशमात्रौ कुशौ पवित्रे’ इति। उभये एतस्मिन्नारब्धे किमधिकं शिष्टम्? उत्पुनातीत्येतदतिरिच्यते, उत्पुनातीति क्रियायाः चोदितत्वात्। एवं सिद्धे यत् क्रियां चोदयति तत्प्रदर्शयति– द्विविधमुत्पवनं भवति, तूष्णीं च मन्त्रवच्च, उद्धरणवत्। तत्र अनयोरुत्पवनयोः सर्वत्र विकल्पः? नेत्युच्यते। इह प्रकरणे समन्त्रकम्, प्रकरणान्तरे तूष्णीं वैतानिकेषु कर्मसु, यथा ‘प्रोष्य भूयो दशरात्रात् चतुर्गृहीतमाज्यं जुहुयात्’ ‘अनुदिते चतुर्गृहीतमाज्यम्’ इत्येवमादिष्वाज्यग्रहणेषु। न ह्यसंस्कृते आज्ये आज्यशब्दो भवति। नवनीतं नोत्पूतमित्युत्पवनचोदनात्। अत्रैवमेतत् कल्पयन्ति। यच्च प्राक् उक्तसंबन्धकरणप्रयोजनं विहितम् आगममपि(?) भवतीति, इदं ततः सिद्धम्। देभा.

(२) अथ किंलक्षणे पवित्रे? कथं वा उत्पवनं कार्यम्? इत्येतद्द्वयं निर्णेतुमाह– अप्रच्छिन्नाग्राविति। प्रशब्दः सूक्ष्मच्छिन्नाग्रयोरनिवृत्त्यर्थः। न विद्यते अन्तः मध्ये गर्भो ययोस्तौ तथोक्तौ, प्रादेशमात्रौ कुशौ। एवंलक्षणयुक्तौ कुशौ पवित्रसंज्ञौ। नानेत्यसंसर्गार्थम्। पवित्रे अन्तयोरसंस्पृष्टे अङ्गुष्ठोपकनिष्ठिकाभ्यामुत्तानाभ्यां पाणिभ्यां गृहीत्वा प्रागुत्पुनाति सकृन्मन्त्रेण द्विस्तूष्णीम्। प्रागिति पाठः कार्यः। प्राङिति पुल्लिङ्गपाठे तु कर्तुः प्राङ्मुखत्वं स्यात्। तच्च परिभाषासिद्धम्। ननु कर्मणश्चापि प्राक्त्वं तत एव सिद्धम्। सत्यम्। तत्तु शास्त्रान्तरदृष्टपुनराहारनिवृत्त्यर्थम्। तेन ज्ञायते शास्त्रान्तरदृष्टानामविरोधिनां पात्रासादनादीनामिच्छातः क्रियेति। इत्थं हि शास्त्रान्तरे दृष्टम्– परिस्तरणकाले उत्तरतोऽग्नेः कांश्चिद्दर्भानास्तीर्य ब्रह्मवत्सु कर्मसु दक्षिणतोऽग्नेरपि कांश्चिद्दर्भानास्तीर्य ततोऽग्निं पर्युक्ष्य उदगग्नेर्दर्भेषु द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति उभाभ्यां पाणिभ्याम्। अयं पात्रासादनक्रमः– ‘प्रोक्षणपात्रमथ स्रुवयुक्तं पात्रमपां प्रणयनाय विशिष्टम्। भाजनमाज्यहविर्ग्रहणार्थं त्विध्ममथो परिसादय दर्भान्॥’ इति आज्यहोमेषु। दर्वीमत्सु तु कर्मसु अयं क्रमः– ‘स्थालीं चरोः प्रोक्षणभाजनं च दर्वीस्रुवौ सादय दर्विहोमे। पात्रं प्रणीतार्थमथाऽऽज्यपात्रमिध्मं क्रमेण क्रमवित्कुशैश्च॥’। ततः ‘अप्रच्छिन्नाग्रौ’ इत्युक्तलक्षणे पवित्रे गृहीत्वा प्रोक्षणपात्रे निधायाप आसिच्य ताभ्यां त्रिरुत्पूय उत्तानानि पात्राणि कृत्वा विस्रस्येध्मं सर्वाणि पात्राणि प्रोक्षति। ततः प्रणीतापात्रं प्रत्यगग्नेर्निधाय तस्मिंस्ते पवित्रे अन्तर्धायाद्भिः पूरयित्वा गन्धादि प्रक्षिप्य पाणिभ्यां पात्रं नासिकान्तमुद्धृत्योत्तरतोऽग्निं दर्भेषु निधाय दर्भैः प्रच्छाद्याऽऽसादयेदिति। आचार्यस्य तु– पूर्णपात्रं कार्यम्, अन्यस्य तु करणेऽभ्युदयः, अकरणे न प्रत्यवाय इत्याशयः। इत्थं चान्यशास्त्रे दृष्टम्– पूर्णपात्रनिधानानन्तरं तत्रस्थे पवित्रे गृहीत्वाऽऽज्यस्थाल्यां निधायाऽऽज्यमासिच्योदगङ्गारानपोह्य तेष्वधिश्रित्याऽऽज्यमवज्वलयेत्। द्वे दर्भाग्रे प्रच्छिद्य प्रक्षाल्याऽऽज्ये प्रत्यस्य पुनर्ज्वलता तेनैवोल्मुकेन त्रिः परिहरेत् येनावज्वलनं कृतम्। ततः शनैः उदगुद्वास्याङ्गारानतिसृज्य तत्रस्थमेवाऽऽज्यमुत्पूय पवित्रे त्वद्भिः प्रोक्ष्याग्नौ विनिक्षिपेदिति। आचार्यस्योत्पवनं नित्यम्, अन्यत्पाक्षिकं पूर्ववदित्याकूतम्। स्रुक्स्रुवसंमार्जनमप्यन्यशास्त्रे दृष्टम्। तस्यापीच्छातः क्रिया। अनयोः संमार्ग उच्यते– दक्षिणेन हस्तेनोभौ गृहीत्वा सव्येन कांश्चिद्दर्भानादाय सहैवाग्नौ प्रताप्य जुहूं निधाय दक्षिणेन पाणिना स्रुवस्य बिलं दर्भाग्रैः प्रागारभ्य प्रागपवर्गं त्रिः संमृज्याधस्तादग्रेणैवाग्रमभ्यात्मं त्रिः संमार्ष्टि। ततो दर्भाणां मूलेन दण्डस्याधस्तात् बिलपृष्ठादारभ्य यावदुपरिष्टाद्बिलं तावत्त्रिः संमार्ष्टि। अथाद्भिः प्रोक्ष्य स्रुवं निष्टप्याऽऽज्यस्थाल्यां निधायोदकस्पृष्टैरेव दर्भैर्जुहूं चैवमेव संमार्ष्टि। ततो दर्भानद्भिः प्रक्षाल्याग्नावनुप्रहरेत्। एवं संमार्गः। स्विष्टकृदन्ते चेध्मसंनहनानामग्नौ प्रासनं दृष्टम्। अन्यदपि यदसच्छास्त्राविरुद्धं परशास्त्रे दृष्टं तदपीच्छातः कार्यमिति ज्ञापयितुं प्रागुत्पुनातीति पुनराहारप्रतिषेधः कृतः।

किंच 'उत्पुनाति त्रिः' इत्येव वाच्यं लाघवार्थम्। तथा सति 'सर्वत्रैवं कर्मावृत्तौ' इत्यनेन सकृन्मन्त्रेण द्विस्तूष्णीमिति सिध्यति। एवं सिद्धे इदं वचनं गृह्ये कर्मावृत्तौ मन्त्रावृत्तिर्भविष्यतीत्येवमर्थम्। पूर्वयोगः किमर्थः ? अस्याधिकारार्थ इति चेत्, तर्हि 'प्रागुत्पुनात्याज्यम्' इत्यत्रैव वाच्यम्। अथ पवित्रसंज्ञार्थः, तर्हि 'कुशौ पवित्रे' इत्यत्रैव वाच्यम्। उच्यते– पूर्वेणामन्त्रकमुत्पवनं विधीयते, अनेन तु समन्त्रकम्। तत्र वैतानिके अमन्त्रकम्, गृह्ये कर्मणि समन्त्रकमित्येवं विनिवेशः।

*गानावृ.

आज्यहोमेषु परिस्तरणविकल्पः

**[1]कृताकृतमाज्यहोमेषु परिस्तरणम्॥**

(१) आज्येन होमाः, तेष्वाज्यहोमेषु परिस्तरणं कृताकृतं भवति। तत्र कृताकृतशब्दमीषत्करणे उपदिशन्ति। लक्षणया इह तु क्रियायां वा अक्रियायां वा विकल्पेन वर्तते। कथं ज्ञायते ? अन्यत्रापि दृष्टत्वात्– 'कृताकृतावाज्यभागौ' इति। तेन आज्यहोमेषु परिस्तरणं विकल्पितमित्यर्थः। चौलकर्मप्रभृतिषु आज्यग्रहणं कुर्वते। तत् ज्ञापयति पाकयज्ञव्यतिरिक्तान्यन्यान्यपि कर्माणि भवन्तीति यदुक्तं तत् सिद्धम्। कर्मभेदाच्च। कर्मभेदेन ये होष्यद्धर्मा विहितास्ते तत्र भवन्ति। पूर्णपात्रेध्माघाराज्यभागस्विष्टकृतानि भवन्ति। पाकेन विधानम्। तेन (? पाकेन विरन्धितेन) यज्ञा इत्येवं विग्रहं कुर्वता(? ते)। नेत्यपरे। नात्र पाकशब्दः पक्तौ वर्तते इत्युक्तं प्राक्। तेन आज्यहोमानामपि पाकयज्ञसंज्ञाभावात् सर्वं तन्त्रं भवति पूर्णपात्रादि। आज्यग्रहणं पाकयज्ञैकदेशग्रहणार्थम्। पाकयज्ञानां सतां केचिदाज्यहोमा उच्यन्ते। तेष्वयं धर्मविशेषो यथा स्यात्। यथा वैतानिकसंज्ञा सामान्यात् सर्वकर्मसु प्रवर्तते। प्रतिविशिष्टाश्च इष्टिपशुसोमा इति। एवमिहापि पाकयज्ञसंज्ञाऽस्त्विति सिद्धम्। आज्यहोमाः किंलक्षणा भवन्ति ? येषु आज्यमेव द्रव्यम्, नान्यत्, ते आज्यहोमाः। एवं तर्ह्यतिप्रसङ्गः 'आ नः प्रजां जनयतु प्रजापतिरिति चतसृभिः प्रत्यृचं हुत्वा', 'राकामहम्' इत्येवमादिषु। सर्वाज्यहोमत्वे कस्मान्न भवति क्वचित् ? आज्यग्रहणात्। तेन चौलादिषु 'आज्याहुतीः' इत्येवमादिष्वयं धर्मो भवति, नान्यत्रेत्युत्तरत्र पुनः विभावयिष्यामः।

†देभा.

(२) कृतिरेव कृतम्। कृतं च अकृतं च यस्य तत् तथोक्तम्। आज्यमेव यत्र हविः स आज्यहोमः। अन्यथा आज्यग्रहणस्य वैयर्थ्यं स्यात्। सर्वत्र ह्याघारादयः सन्त्येव। आज्यहोमेषु परिस्तरणं कार्यं वा न वेत्यर्थः। अयं च परिस्तरणविकल्पो यत्राऽऽज्यग्रहणमस्ति, यथा 'आज्याहुतीर्जुहुयात्' इति, तत्रैव भवति, न पुनरनादिष्टाज्यहोमेषु। यद्यनादिष्टहोमेष्वप्ययं विकल्पः तत्राऽऽज्यग्रहणमपार्थकं स्यात्।

गानावृ.

पाकयज्ञेष्वाज्यभागविकल्पः ब्रह्मविकल्पश्च

**[1]तथाऽऽज्यभागौ पाकयज्ञेषु॥**

(१) येन प्रकारेण परिस्तरणं विहितं तेन प्रकारेण पाकयज्ञेषु आज्यभागौ भवतः। कर्तव्यौ वा न वेत्यर्थः। पाकयज्ञग्रहणं नानार्थप्रज्ञानार्थम्– अन्ये आज्यहोमा अन्ये पाकयज्ञा इति। अन्येषां पाकयज्ञग्रहणं सर्वपाकयज्ञपरिहारार्थं(? हारो) मा भूदिति, अयमपि विधिराज्यहोमेष्विति।

देभा.

(२) तथेति। कृताकृतावित्यर्थः। पाकयज्ञेषु सर्वेष्वाज्यभागौ कार्यौ वा न वेत्यर्थः। पाकयज्ञग्रहणमाज्यहोमाधिकारनिवृत्त्यर्थम्।

* गानावृ.

**ब्रह्मा च धन्वन्तरियज्ञशूलगववर्जम्॥**

(१) पाकयज्ञेषु च ब्रह्मा भवति वा न वेति। धन्वन्तरियज्ञे च शूलगवे च न विकल्पः। किं नित्यः,

---

* अना., प्रपा., पप्र. गानावृगतम्।

(१) आगृ. १।३।४ ; प्रपा. ५४ होमेषु परिस्तरणम् (होमेषूपस्तरणम्).

† अना. देभागतम्।

* अना. गानावृवत्।

(१) आगृ. १।३।५–६ ; प्रपा. ५४.

आहोस्विदनित्यः( ? दभावः ) ? नित्यः । कस्मात् ? दर्शनात् । 'ब्रह्माणमग्निं चान्तरा' (आगृ. १।१२।५); तथा 'वैद्यं चरित्रवन्तं ब्रह्माणम्' ( आगृ. ४।९।१४ ) इति । अभावे दर्शनं नोपपद्यते । तस्मान्नित्यः । यद्येवं प्रतिषेधोऽनर्थकः । अस्मादेव दर्शनात् नित्यो भविष्यति । नेत्युच्यते । पक्षे दर्शनस्य कृतार्थत्वात् प्रतिषेधो वक्तव्यः । का पुनः प्राप्तिरस्य ? दर्शनान्नित्यः सर्वकर्मणामित्येषा । तत्र य एते विकल्पार्था विहिताः किमेतेषां सह क्रिया अक्रिया वेति, आहोस्विदिच्छातः ? इच्छातो नित्यत्वं न वेति । कुतः ? आचार्यप्रवृत्तिदर्शनात् । यच्छूलगवे ब्रह्मणो नित्यत्वं विदधाति । कथम् ? परिस्तरणं स्यात् । ( ? परिस्तरणस्य ) नित्यत्वात् ब्रह्मणोऽपि नित्यत्वम् । एवं सिद्धे ब्रह्मणो नित्यत्वविधानादिच्छाविकल्पो भवतीति सिद्धम् । देभा.

( २ ) तथेत्यनुवर्तते । पाकयज्ञेष्विति च । ब्रह्मा च सर्वेषु पाकयज्ञेषु कृताकृतो भवति, धन्वन्तरियज्ञं शूलगवं च वर्जयित्वा । अथ तयोर्नित्यो भवति उत नैव भवति । नित्यो भवतीति ब्रूमः । कुतः ? तयोरुपदेशात् 'ब्रह्माणमग्निं चान्तरा' ( आगृ. १।१२।५ ), 'वैद्यं चरित्रवन्तं ब्रह्माणमुपवेश्य' ( आगृ. ४।९।१४ ) इति च । तर्हि तस्मादेव नित्योऽस्तु, किमनेनेति च शङ्का न कार्या । अस्मिन्विकल्पप्रतिषेधेऽसति उपदेशस्य पक्षे कृतार्थत्वात् तयोरपि ब्रह्मा चौलवत् कृताकृतः स्यात् । ब्रह्माऽस्ति चेत् प्रणीताप्रणयनात्पूर्वं समस्तपाण्यङ्गुष्ठो भूत्वाऽग्रेणाग्निं परीत्य दक्षिणतः कुशेषु 'निरस्तः परावसुः' इति तृणमङ्गुष्ठोपकनिष्ठिकाभ्यां प्रत्यग्दक्षिणां निरस्य 'इदमहमर्वावसोः सदने सीदामि' इति मन्त्रेणोपविशेत् । ततः 'बृहस्पतिर्ब्रह्मा ब्रह्मसदन आशिष्यते बृहस्पते यज्ञं गोपाय' इत्यन्तं ब्रह्मजपं जपेत् । ततो 'ब्रह्मन्नपः प्रणेष्यामि' इति कर्त्राऽतिसृष्टः -'भूर्भुवः स्वर्बृहस्पतिप्रसूतः' इति जपित्वा 'ॐ प्रणय' इत्यतिसृजेत् । केचिदतिसर्जनं प्रत्यतिसर्जनं च नेच्छन्ति । कर्मान्ते सर्वप्रायश्चित्तानि संस्थाजपं च कुर्यात् । सर्वदा यज्ञमना भवेदुदङ्मुखश्च । गानावृ.

( ३ ) योऽयं ब्रह्मा शास्त्रान्तरेषु प्रसिद्धः 'ब्रह्माणं दक्षिणतो दर्भेषु निषाद्य' इति प्राप्तः, सोऽप्यत्र कृताकृतः धन्वन्तरियज्ञं शूलगवं च वर्जयित्वा । अन्येषु पाकयज्ञेषु वैकल्पिकः, तयोस्तु नित्य इत्यर्थः । परिस्तरणादीनां चेच्छातो विकल्पः, अन्यतमं क्रियते अन्यतमं न, सर्वाणि वा क्रियन्ते न वेति । न तु सहप्रवृत्तिः सह वा निवृत्तिरिति नियमः, कारणाभावात् । अना.

इध्माबर्हिषोः संनहम्

[1]**इध्माबर्हिषोश्च संनहनम् ॥**

( १ ) इध्माबर्हिषोश्च संनहनं बन्धनमित्यर्थः । तच्च दर्शपूर्णमासाभ्यां व्याख्यातम् । शास्त्रान्तरे यथा दृष्टं तथा संनहनं कर्तव्यं समन्त्रकममन्त्रकं वा । देभा.

( २ ) अनयोश्च बन्धनं ताभ्यां व्याख्यातम् । इध्मः पञ्चदशदारुक इति शान्तिकर्मणि साधयिष्यामः । गानावृ.

( ३ ) संनहनं बन्धनम् । तच्च दर्शपूर्णमासाभ्यां व्याख्यातम् । समन्त्रकममन्त्रकं वा शास्त्रान्तरे दृष्टं पूर्वेद्युरिति । अना.

हविर्निर्वापः

[2]**तस्यैतस्यै देवतायै चतुरश्चतुरो मुष्टीन्निर्वपति–'पवित्रे अन्तर्धायामुष्मै त्वा जुष्टं निर्वपामि' इति ॥**

( १ ) तस्यैतस्यै इति वीप्सा क्रियते । चतुरश्चतुर इति एषा वीप्सा । मुष्टीनिति परिमाणार्थो निर्देशः । निर्वपतीति क्रिया चोद्यते । पवित्रे प्रागुक्ते । अन्तर्धाय 'अमुष्मै त्वा जुष्टं निर्वपामि' इत्यनेन मन्त्रेण । तत्रामुष्मै इति स्थाने विभक्त्यर्थो( ? स्थानविभक्त्यर्थो ) निर्देशः सर्वनाम्ना । † देभा.

† अना. देभावत् ।

( १ ) आगृ. १।१०।३ ; प्रपा. ३३ ; संर. ६३१ 'बहूचैः' इत्युक्तम् .

( २ ) आगृ. १।१०।६–१० ; प्रपा. ४१–४२.

( २ ) प्रणीताप्रणयनोत्तरकालं शूर्पे पवित्रे अन्तर्धाय व्रीहीन् यवान् वा असंभवे अन्यान् वा हैम्यान् एकैकस्यै देवतायै चतुरश्चतुरो मुष्टीन् निर्वपति— 'अमुष्मै त्वा जुष्टं निर्वपामि' इति। अमुष्मैशब्दस्य स्थाने चतुर्थ्या विभक्त्या देवतां निर्दिशेत्। चतुरश्चतुर इति वीप्सावचनमेकैकस्यै देवतायै चतुर्मुष्टिप्राप्त्यर्थम्। पवित्रे व्याख्याते। गानावृ.

हविःप्रोक्षणम्

**अथैनान्प्रोक्षति यथानिरुप्तम्—'अमुष्मै त्वा जुष्टं प्रोक्षामि' इति ॥**

( १ ) अथशब्दः प्रयुज्यते कथं सर्वेषु निरुप्तेषु प्रोक्षणं स्यादिति। तत्र निर्वपणप्रोक्षणे एकस्मिन्नेव पात्रे भवतः, न नानापात्रयोरिति। कुत एतत्? उत्तरत्र विभागदर्शनात्। यथाशब्दः प्रकारवाची। येन प्रकारेण निर्वापस्ततस्तेन प्रकारेण प्रोक्षणमपि कर्तव्यम्। केन पुनः प्रकारेण निर्वपणं कृतम्? तस्यैतस्यै, चतुरश्चतुरः, पवित्रे अन्तर्धायेति। प्रोक्षणेऽपि सर्वोऽयं विधिः प्रसज्येत। देभा.

( २ ) अथशब्दः कथम्। सर्वासामेव देवतानां निरुप्तेषु प्रोक्षणं स्यादित्येवमर्थम्। एनानिति बहुवचनं संश्लिष्टानेव प्रोक्षेत्, न विभज्येत्येवमर्थम्। यथानिरुप्तमिति तस्यैतस्यै देवतायै चत्वारिचत्वारि प्रोक्षणानि, समन्त्रकेषु निर्वापेषु समन्त्रकाणि, अमन्त्रकेष्वमन्त्रकाणि, पवित्रे अन्तर्धाय कुर्यादित्येवमर्थम्। निर्वापप्रोक्षणे एकस्मिन्नेव पात्रे भवतः, उत्तरत्र विधानात्। गानावृ.

( ३ ) अथशब्द आनन्तर्यार्थः। तेन सर्वेषु निरुप्तेषु निर्वापपदे समाप्तेऽनन्तरं प्रोक्षणम्। यथानिरुप्तमिति येन क्रमेण निर्वापः कृतः, तेन क्रमेण 'अग्नये त्वा जुष्टं प्रोक्षामि' 'अग्नीषोमाभ्यां त्वा जुष्टं प्रोक्षामि' इति। केचिदाहुः— तस्यैतस्यै, चतुरश्चतुरः, पवित्रे अन्तर्धायेति सर्वोऽयं विधिर्यथानिरुप्तमित्यनेनातिदिश्यते इति। अना.

अवघातः, फलीकरणम्, श्रपणम्

**अवहतांस्त्रिष्फलीकृतान्नाना श्रपयेत् ॥**

( १ ) अवहननं कृत्वा अथ त्रिः फलीकरणं करोति। फलीकरणं नाम अतुषकरणम्, विप्रमोकः। शुक्लीकृतानित्यर्थः। तत्रार्थात् त्रिः फलीकरणं संभवति। नाना श्रपयेत्। नाना, न सहेत्यर्थः। देभा.

(२) कृष्णाजिने उलूखलं कृत्वा पल्यवहन्यात्। त्रिः फलीकृतानिति त्रिः शुक्लीकृतानित्यर्थः। पिण्डपितृयज्ञे 'सकृत्प्रक्षाल्य' इति सकृद्ग्रहणादत्र त्रिः प्रक्षाल्येत्। ततो नाना श्रपयेत्। गानावृ.

( ३ ) अवहननं तुषविमोचनम्। फलीकरणं कणविमोचनम्। प्रक्षालनमपि त्रिर्भवति, आचारात्। नानेति पृथक्पात्रेषु श्रपयेदित्यर्थः। अना.

**समोप्य वा ॥**

एकत्र वा श्रपणं भवति। * देभा.

तण्डुलाभिमर्शः

**यदि नाना श्रपयेद्विभज्य तण्डुलानभिमृशेत् — 'इदममुष्मा इदममुष्मै' इति ॥**

यदीत्यनित्यार्थे। यदि नाना श्रपणं भवति ततस्तण्डुलान् विभज्य अभिमृशेत्— 'इदममुष्मै' इति। * देभा.

**[1]यद्यु वै समोप्य व्युद्धारं जुहुयात् ॥**

( १ ) यदि समोप्य श्रपयति व्युद्धारं जुहुयात्। उद्धृत्य नाना पात्रेषु पृथक्कृत्वेत्यर्थः। व्युद्धारं कृत्वा अभिमृश्य जुहुयात्। जुहुयादिति न वक्तव्यम्। कस्मात्? उत्तरत्र होमं वक्ष्यति। ब्रवीति जुहुयात् इति। उच्यते, कथं होमकालेऽप्युद्धारः स्यादिति। देभा.

( २ ) यदि समोप्य श्रपयेत् तथा सति चरुं व्युद्धृत्य एवमभिमृश्य ततो जुहुयात्। व्युद्धारमिति व्युद्धृत्येत्यर्थः।

---

* गानावृ., अना. देभावत्।

( १ ) आगृ. १।१०।११ ; प्रपा. ४६.

व्युद्धरणं नाम पात्रान्तरे पृथक्करणम्। जुहुयादिति वचनं होमकाले व्युद्धरेदित्येवमर्थम्। गानावृ.

(३) समोप्यपक्षे विशेषमाह— यद्यु वा इति। यद्यु वै इति निपातौ वाक्यालङ्कारे। * अना.

हविषामभिघारः, उद्वासनम्, आसादनं च,

इध्माधानम्

**[1]शृतानि हवींष्यभिघार्योदगुद्वास्य बर्हिष्यासाद्येध्ममभिघार्य 'अयं त इध्म आत्मा जातवेदस्तेनेध्यस्व वर्धस्व चेद्ध वर्धय चास्मान् प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधय स्वाहा' इति॥**

(१) शृतानि पक्वानि। शृतमात्राणि, नाप्यशृतानि नापि दग्धानीत्यर्थः। अभिघार्योदगुद्वास्येति पाठः। उदङ्ङुद्वास्येत्येवं पठ्यमाने उदङ्मुखस्य उद्वासनं प्राप्नोति। न चेष्टम्। तस्मादुदगुद्वास्येति पाठः क्रियते। बर्हिष्यासाद्येति। तत्र केचिदेतस्मिन् काले बर्हिष आस्तरणं कुर्वन्ति, केचित् पूर्वास्तृते एव बर्हिःशब्दं कल्पयन्ति। एतस्मिन् काले पुनरभिघारणमिच्छन्ति। इध्ममभिघार्य 'अयं त इध्म आत्मा' इत्यनेन मन्त्रेण जुहुयात्। देभा.

(२) उत्तरतोऽग्नेराज्यमुत्पूयाग्नेः पश्चाद्बर्हिरास्तीर्याऽऽज्यमासाद्य ततः शृतानि हवींष्यभिघार्योदगुद्वास्य बर्हिष्यासाद्य तत इध्ममभिघार्य 'अयं ते' इति मन्त्रेणाग्नावादध्यात्। बर्हिष्यासाद्य पुनरभिघार्येति केचित् पठन्ति। गानावृ.

(३) आदध्यादिति शेषः, वक्ष्यमाणं वाऽपेक्ष्यते। शृतानीति वचनान्नाशृतानि नापि विदग्धानि। उदगुद्वास्येति पाठः। उदङ्ङिति पाठे कर्तुरुदङ्मुखत्वं प्राप्नोति। बर्हिष्यासाद्य। अस्मादेवानुवादाद् गम्यते अस्ति बर्हिषः स्तरणमिति। तच्च पश्चादग्नेः। प्रादेशमात्रं बर्हिरिच्छन्ति। तस्मिन् हविरासाद्य। कल्पान्तरदर्शनात् प्रतिष्ठितमभिघारयति। खादिरः पालाशो वा एकविंशतिदारुरिध्मः, त्रयः परिधयः स्थविष्ठो मध्यमः अणीयान् द्राघीयान् दक्षिणार्ध्योऽणिष्ठो ह्रसिष्ठ उत्तरार्ध्यः (?), अरत्निमात्रे द्वे आघारसमिधौ, अनूयाजसमिदेका, पञ्चदश होमार्थाः। मध्यमं परिधिमुपस्पृश्योर्ध्वे आघारसमिधावादधाति दक्षिणार्धपूर्वार्धे उत्तरार्धपूर्वार्धे च। ततः पञ्चदशसमिधो युगपदादधाति 'अयं ते' इति स्वाहान्तेन। अना.

* शेषं देभावत्।

(१) आगृ. १।१०।१२ ; प्रपा. ४५–४६ बर्हिष्या॰ साद्य + (प्रत्यभिघार्य).

आघारौ आज्यभागौ च

**[1]तूष्णीमाघारावाघार्याऽऽज्यभागौ जुहुयात्— 'अग्नये स्वाहा, सोमाय स्वाहा' इति॥**

(१) तूष्णीमिति मन्त्रप्रतिषेधोऽपार्थकः। कस्मात्? अनुपदेशान्मन्त्रस्य। ब्रवीति। तूष्णींग्रहणं कुर्वन्नेतत् ज्ञापयति— मन्त्रवर्जिता येऽन्ये आघारधर्मास्तेषां यथा प्रवृत्तिः स्यादिति। के पुनस्ते धर्माः? पात्रं देवता इत्येवमादयः। आज्यभागाविति उत्तरयोराहुत्योः संज्ञा। प्रयोजनम्— 'तथाऽऽज्यभागौ पाकयज्ञेषु'। देभा.

(२) तूष्णींग्रहणं मन्त्रवर्जमन्ये धर्माः शास्त्रान्तरदृष्टाः कथं प्रवर्तेरन्निति। उत्तरपश्चिमाया आरभ्य दक्षिणपूर्वां प्रति अविच्छिन्नामाज्यधारां हरेत्। तथा दक्षिणपश्चिमाया आरभ्य उत्तरपूर्वां प्रत्याघारयेत्। स्रुवेणोभौ जुहुयात्। कुतः? यत्राऽऽज्यहोमे साधनान्तरानुपदेशस्तत्र स्रुवेण होम इति साधितम् 'एवंभूतोऽव्यक्तहोम-' (आश्रौ. १।१।११) इति सूत्रे व्याख्यातृभिः। यावन्मात्रं स्वशास्त्रानुक्तमपेक्षितं तावन्मात्रं ग्राह्यम्, न तु स्वशास्त्रे उक्तमपि। आज्यभागौ जुहुयात्— 'अग्नये स्वाहा, सोमाय स्वाहा' इति। आज्यभागावित्यनयोर्यागयोः संज्ञा। गानावृ.

(३) मन्त्रानुपदेशादेव सिद्धे तूष्णीमिति वचनात् दर्शपूर्णमासयोर्मन्त्रव्यतिरिक्ता ये आघारधर्मास्ते भवन्ति। तेन पूर्वमाघारं स्रुवेण जुहोति उत्तरं परिधिसंधिमन्वव-

(१) आगृ. १।१०।१३ ; प्रपा. ४६–४७.

हृत्य प्रजापतिं मनसा ध्यायन्, उत्तरं तु दक्षिणं परिधिसंधिमन्ववहृत्य जुहुयात् इन्द्रं मनसा ध्यायन्। स्थानाभिप्राणने तु न भवतः, कल्पान्तरे क्वचिदप्यदर्शनात्, 'आसीनो दर्वीहोमान् जुहोति' इति वचनाच्च। आज्यभागावित्युत्तरयोराहुत्योः संज्ञा। प्रयोजनम्— 'तथाऽऽज्यभागौ पाकयज्ञेषु' इति। 'उत्तरमाग्नेयं दक्षिणं सौम्यम्' इति वक्ष्यमाणत्वात् 'अमुष्मै स्वाहा' इति परिभाषयैव सिद्धे मन्त्रोपदेशः क्रमार्थः— पूर्वमाग्नेयः पश्चात् सौम्य इति। अना.

[1]**उत्तरमाग्नेयं दक्षिणं सौम्यम्॥**

(१) अग्नेरुत्तरपार्श्वे आग्नेयमाज्यभागं जुहुयात्, दक्षिणपार्श्वे तु सौम्यम्। स्रुवेणोभौ जुहुयात् पूर्ववत्। गानावृ.

(२) अनयोरेष देशविधिः। अग्नेरुत्तरपार्श्वे होतव्यत्वादुत्तरः, एवं दक्षिणः। अना.

**विज्ञायते — 'चक्षुषी वा एते यज्ञस्य यदाज्यभागौ'॥**

(१) किमर्थमनयोर्देशो विधीयते? देशविधानकारणमुत्तरमारभ्यते— विज्ञायते इति। विज्ञायते इति ब्राह्मणम्। ब्राह्मणादिदमाकृष्यते। अत्र किमर्थं ब्राह्मणवाक्यमन्त्रा इष्यन्ते(? माकृष्यते)? यथाऽन्येषु विधिषु मन्त्राः तथा ब्राह्मणवाक्यमन्त्राकर्षः क्रियते(? मन्त्राऽऽकृष्यते) इति। अत्र श्रुतिवाक्येनाऽऽज्यभागयोः दक्षिणसंस्थताविधानेन ज्ञापयति— अन्यत्रोदक्संस्थता प्राक्संस्थता वा भवति। देभा.

(२) आज्यभागौ यज्ञस्य चक्षुषी इत्येवं श्रूयेते इत्यर्थः। ¶ गानावृ.

[1]**तस्मात् पुरुषस्य हि प्रत्यङ्मुखस्याऽऽसीनस्य दक्षिणमक्ष्युत्तरं भवत्युत्तरं दक्षिणम्॥**

(१) इहापि उदक्संस्थता (अस्तु), प्रथमं सौम्यो ही(? हू)यतामिति, अथाप्युत्तरमारभ्यते— तस्मादिति। आग्नेयश्चाऽऽज्यभागो दक्षिणमक्षि भवति। तस्मान्न शक्यते आग्नेयं पश्चाद्धोतुम्, 'अग्नये स्वाहा' इति पूर्वोपदिष्टत्वात्। देभा.

(२) ततः किमित्याह— तस्मादिति। यज्ञपुरुषस्य हि प्रत्यङ्मुखस्याऽऽसीनस्य दक्षिणमक्ष्युत्तरं भवत्युत्तरं दक्षिणम्। तस्मात् दक्षिणसंस्थैव शक्या कर्तुम्, नोदक्संस्थेत्यर्थः। श्रुत्याकर्त्रोऽन्यत्र क्वचिदुदक्संस्थताऽपि यथा स्यादिति। तेन बलिहरणे प्रधानानामुत्तरतः पुरुषेभ्यो बलिहरणं सिद्धम्। गानावृ.

(३) आज्यभागौ नाम यदेते यज्ञाख्यस्य पुरुषस्य चक्षुषी, तस्मादेवंदेशौ। अत एव हि यदा पुरुषः प्रत्यङ्मुख आसीनो भवति, तदा दक्षिणमक्ष्युत्तरं भवति आग्नेयं चैतदुत्तरम्। सव्यं दक्षिणदिग्भागगतं भवति सौम्यं चैतत्। तस्मादेवंदेशाविति। उत्तरमाग्नेयं दक्षिणं सौम्यमिति वचनादेवैवंदेशत्वे सिद्धे ब्राह्मणवाक्यमनुकृष्यते— दक्षिणापवर्गेऽप्येवमेतौ होतव्याविति। तेनान्यत्रैवंजातीयके उदगपवर्गता भवति। अना.

आहुतिदेशः

[1]**मध्ये हवींषि प्रत्यक्तरं वा प्राक्संस्थान्युदक्संस्थानि वोत्तरपुरस्तात् सौविष्टकृतम्॥**

(१) आज्यभागयोर्वचनम्(?)। प्रत्यक्तरमिति पश्चिमोत्तरम्(? मतरम्) इत्यर्थः। प्राक्संस्थानि वा हवींषि उदक्संस्थानि वा भवन्ति। तदिदं न वक्तव्यम्, सिद्धत्वात्। नेत्युच्यते। यदि नाऽऽरभ्येत हवींषि इति मध्याधिकारोऽनुवर्तते। तस्मादारब्धव्यम्। अथात्र संशयः— किमेकैका आहुतिरुदक्संस्था भवति, आहोस्वित् सर्वा आहुतयः उदक्संस्था भवन्ति? तत्र सर्वासामाहुतीनामुदक्संस्थता भवति। तत्र उत्तरपूर्वे देशे सौविष्टकृतं जुहोति। देभा.

---

¶ अना. गानावृवत्।

(१) आगृ. १।१०।१४–१५; प्रपा. ४७.

(२) आगृ. १।१०।१६; प्रपा. ४७ (द्वि०).

(१) आगृ. १।१०।१७; प्रपा. ४८ (उत्तरपुरस्तात्सौविष्टकृतम् ०) : ५० (उत्तरपुरस्तात्सौविष्टकृतम्) एतावदेव.

(२) अग्नेर्मध्यप्रदेशे हवींषि जुहोति । प्रत्यक्तरे वा देशे हवींषि जुहोति । प्रत्यक्तरमिति द्वितीया सप्तम्यर्थे । तत्रापि देशे प्राक्संस्थानि वा जुहोति उदक्संस्थानि वा । ननु प्राक्संस्थानीत्यस्मिन्नसत्यपि उदक्संस्थानि वेति वाशब्दप्राप्तया प्राक्संस्थया सह विकल्पे सति पक्षे प्राक्संस्थत्वमपि सिध्यति । किमर्थं प्राक्संस्थवचनम् ? उच्यते । देशद्वयस्य संस्थाद्वयस्य चाऽऽनन्तर्ययोगो मा भूदित्येवमर्थम् । तेन देशद्वयेऽपि संस्थाद्वयस्य यथासंख्यता नास्तीति सिद्धम् । अग्नेरुत्तरपूर्वदेशे सौविष्टकृतं हविर्जुहोति । गानावृ.

(३) जुहुयादित्येव । संनिधानादाज्यभागयोर्मध्ये प्रधानाहुतिं जुहुयात् । आज्यभागयोरेव प्रत्यक्तरं पश्चिमतरं वा प्रधानाहुतिं जुहुयात् । प्राक्संस्थान्युदक्संस्थानि वेति । हवींषि जुहुयादित्येव । मध्ये हवींषीति वचनात् उपर्युपरि होमे प्राप्ते वचनम् । उत्तरपुरस्तादिति उत्तरपूर्वे भागे अग्नावेव स्विष्टकृद्देवत्यामाहुतिं जुहुयात् ।

अना.

अवदानधर्मः

**[१]मध्यात् पूर्वार्धाच्च हविषोऽवद्यति ॥**

(१) हविषो मध्यात् पूर्वार्धाच्च अवद्यति ।

देभा.

(२) हविषो मध्यात् पूर्वार्धाच्चाङ्गुष्ठपर्वमात्रं हविरवद्यतीति देशो नियम्यते । गानावृ.

(३) हविषो मध्याच्च पूर्वार्धाच्चावद्यति, उपस्तरणाभिघारणे द्वे, एवं चतुरवत्तम् । अना.

**मध्यात्पूर्वार्धात्पश्चार्धादिति पञ्चावत्तिनाम् ॥**

(१) अयमवदानक्रमो भवति । तत्र 'पश्चार्धाच्च' इति न वक्तव्यम् । एवमुच्यमाने सिध्यत्यर्थः, क्रमस्तु न सिध्यति, प्राक्संस्थतोदक्संस्थतानियमात् । तेन क्रमार्थमिदं वचनम् । कथमनेन क्रमेणावदानानां ग्रहणं स्यादित्यतो वचनमारभ्यते । देभा.

(२) पञ्चावत्तिनां तु मध्यात् पूर्वार्धात् पश्चार्धादित्येवमवदानं भवति । 'पश्चार्धाच्च' इत्येतावतैव सिद्धे 'मध्यात् पूर्वार्धात्' इति वचनं प्रत्यक्संस्थता यथा स्यात्, प्राक्संस्थता मा भूदित्येवमर्थम् । गानावृ.

(३) पञ्चावत्तिनो जमदग्नयः, तेषामयमवदानक्रमः । पश्चार्धाच्चेत्येतावत्युक्ते 'तस्य नित्याः प्राञ्चश्चेष्टाः' इति प्राक्संस्थता प्राप्नोति । तस्मात् क्रमार्थं गुरुसूत्रकरणम् । अना.

**[१]उत्तरार्धात् सौविष्टकृतम् ॥**

(१) अथ अवदानमवद्यति । अथात्र संशयः– किं विवक्षितमेकवचनम्, उताविवक्षितम् ? इति । उच्यते । विवक्षितमेकवचनम्, उपदेशात् । नेत्युच्यते । विवक्षिते एकवचने दोषः प्राप्नोति । को दोषः ? चतुरवत्तीनां (? चतुरवत्तता) न प्राप्नोति । कथम् ? उपस्तरणमवदाने प्रत्यभिघारणमिति । नायं दोषः । कथम् ? द्विः प्रत्यभिघारणं करोति । एवमपि पञ्चावत्तीनां चतुरवत्तता प्राप्नोति । द्विः प्रत्यभिघारणं करिष्यते इति विहितत्वात् । कस्मात् ? त्रिरभिघारणस्याविहितत्वात् । तेनैष दोषः प्राप्नोति एकवचने प्रतीयमाने । न, सौविष्टकृतमिति जातिवाचकोऽयं शब्दः । तस्मादुत्तरार्धगताद्धविषः पूर्वोक्तेन अवदानधर्मेण स्विष्टकृतोऽप्यवदानानि गृह्णाति ।

¶ देभा.

(२) सर्वेषां हविषामुत्तरार्धात् स्विष्टकृदर्थमवदानं प्रधानादवदानात् भूयः सकृत् सकृदवखण्डयति । पञ्चावत्तिनां तु एवम्– सकृत् सकृद्गृहीत्वा पुनरपि पूर्वावदानदेशस्य पुरस्तात् सकृत्सकृदवद्येत्, तथा दृष्टत्वात् । ततो द्विरुपरिष्टादभिघारयति पञ्चावत्ती चतुरवत्ती च ।

गानावृ.

**[२]नात्र हवींषि प्रत्यभिघारयति । स्विष्टकृतं द्विरभिघारयति ॥**

---

(१) आगृ. १।१०।१८–१९ ; प्रपा. ४७.

¶ अना. देभागतम् ।

(१) आगृ. १।१०।२० ; प्रपा. ४९.

(२) आगृ. १।१०।२१ ; प्रपा. ४९ (स्विष्टकृतं द्विरभिघारयति० ).

(१) अत्र तु अस्मिन् स्विष्टकृति हवींषि न प्रत्यभिघारयति। अत्रग्रहणमपार्थकम्। कस्मात्? अधिकारात्। नेत्युच्यते। 'न हवींषि प्रत्यभिघारयति' इत्येवमुच्यमाने सर्वत्र प्रत्यभिघारणप्रतिषेधः स्यात्। तस्मादत्रग्रहणं क्रियते। † देभा.

(२) स्विष्टकृति हविःशेषं न प्रत्यभिघारयति। अत्रग्रहणं अत्रैव नाभिघारयति, न प्रधानहविःष्वित्येवमर्थम्। हविःशब्दः शेषे वर्तते। यद्यवत्ते वर्तेत चतुरवत्तताऽऽहुतेर्न स्यात्। तत् न चेष्यते। गानावृ.

स्विष्टकृद्धोमः

[१] '**यदस्य कर्मणोऽत्यरीरिचं यद्वा न्यूनमिहाकरम्। अग्निष्टत्स्विष्टकृद्विद्वान्त्सर्वं स्विष्टं सुहुतं करोतु मे। अग्नये स्विष्टकृते सुहुतहुते सर्वप्रायश्चित्ताहुतीनां कामानां समर्धयित्रे सर्वान् नः कामान्त्समर्धय स्वाहा' इति ॥**

अनेनैव मन्त्रेण स्विष्टकृद्धोतव्यः। * देभा.

पूर्णपात्रनिनयनम्, तस्यावभृथत्वम्

[२] **बर्हिषि पूर्णपात्रं निनयेत् ॥**

निषिञ्चेदित्यर्थः। एतत्पूर्णपात्रं प्रागेव पूरितं भवति। कथं गम्यते? तद्भूतोपदेशात्। * देभा.

**एषोऽवभृथः ॥**

(१) यदिदं पूर्णपात्रनिनयनम् अयमवभृथः पाकयज्ञानां भवति। किं पुनः कारणं पूर्णपात्रनिनयनस्यावभृथत्वं विधीयते? अवभृथसंस्कृतं यथा स्यादिति। किं प्रयोजनम्? अवभृथधर्माः कथं स्युरिति। के पुनस्ते धर्माः? कालोऽभ्युक्षणमित्येवमादयः। कः पुनरवभृथस्य कालः? ऊर्ध्वं सर्वप्रायश्चित्तेभ्यः प्राक् संस्थाजपात्। कथं पुनरत्र सर्वप्रायश्चित्तानि भवन्ति? न भवन्ति। उच्यते। अथ कस्य सर्वप्रायश्चित्तानि भवन्ति? कर्तुः। नेत्युच्यते। ब्रह्मणः। किमेतावदेव? नेत्युच्यते। निरसनोपवेशने ब्रह्मजपः सर्वप्रायश्चित्तानि संस्थाजप इतीमानि पञ्च कर्माणि ब्रह्मणो भवन्ति। किं सर्वत्र भवन्ति? नेत्युच्यते। सत्यां प्रवृत्तौ। देभा.

(२) यदिदं पूर्णपात्रनिनयनमेषोऽस्य कर्मणोऽवभृथो भवति। अवभृथवचनमवभृथधर्मप्राप्त्यर्थम्। तेन कालोऽभ्युक्षणं च भवति। कालस्तु सर्वप्रायश्चित्तादूर्ध्वं प्राक् संस्थाजपात्। अनेनैवाभ्युपायेन सर्वप्रायश्चित्तानि संस्थाजपश्च कर्त्रा कार्याणीत्युक्तं भवति। निरसनोपवेशने ब्रह्मजपः सर्वप्रायश्चित्तानि संस्थाजप इति पञ्च ब्रह्मणो भवन्तीत्युक्तम्। तत्रैवं क्रमः— पूर्वं कर्ता सर्वप्रायश्चित्तानि जुहोति। ततो ब्रह्मा सर्वप्रायश्चित्तानि जुहुयात्। ततः कर्ता पूर्णपात्रं निनयति। ततः कर्ता संस्थाजपेनोपतिष्ठते। ततो ब्रह्मोपतिष्ठते। ततः कर्ता परिसमूहनपर्युक्षणे इति। अभ्युक्षणं च 'आपो अस्मान्', 'इदमापः', 'सुमित्र्या नः' इत्येतैर्मन्त्रैः। गानावृ.

(३) अभ्युक्षणं च भवति कर्तुः संस्कार्यस्य च। उपनयनादौ प्रतिदिशमुक्षणं चाऽऽचरन्ति। पाकयज्ञानामित्यनुच्यमाने प्रकरणात् स्थालीपाकेष्वेव स्यात्। पाकयज्ञग्रहणात्तु सर्वेषु पाकयज्ञेषु भवति। सर्वप्रायश्चित्तानि च ब्रह्मण इति केचित्। अन्ये त्वनित्यत्वाद्ब्रह्मणः प्रायश्चित्तस्यावश्यंभावित्वात् कर्तुरिति। * अना.

प्रकृततन्त्रस्य पाकयज्ञविषयत्वम्

**पाकयज्ञानामेतत्तन्त्रम् ॥**

(१) पाकयज्ञग्रहणं नियमार्थम्। एतत्तन्त्रमिति सर्वार्थम्। नेत्युच्यते। तेन तत्रावदानावभृथोऽपि सर्वत्र स्यात्। न चेष्यते। क्व चेष्यते? आज्यहोमेषु अवभृथवर्जं सर्वमन्यत् तन्त्रमिष्यते। उत्तराङ्गमपरे। पाकयज्ञवचनमाज्यहोमानां तन्त्रनिवृत्त्यर्थम्। तेन यावदुक्तमेव

† अना. देभावत्।

* गानावृ., अना. देभावत्।

(१) आगृ. १।१०।२२ ; प्रपा. ५०.

(२) आगृ. १।१०।२३–२६ ; प्रपा. ५२.

* शेषं गानावृवत्।

भवत्याज्यहोमेषु । तस्मात् पाकयज्ञाज्यहोमयोर्नानात्वं कल्पितं भवति । एकत्वमपरे । तदुक्तं प्राक् । अथ किमर्थं पाकयज्ञग्रहणं कर्तव्यम् ? सर्वपाकयज्ञाधिकारार्थम् । एतत्तन्त्रं सर्वपाकयज्ञानां वेदितव्यम् । अथ किं तन्त्रग्रहणेन गृह्यते इति । उपवासादिविधानम् । उपवासो न भवति, तस्येति नियमितत्वात् । इध्माबर्हिषोरपि संनहनं प्राप्नोति । तस्येत्यधिकारात् । नानुवर्तिष्यते अधिकारः । नेत्युच्यते । यदि नानुवर्ततेऽधिकारः, एवं सति देवता अपि सर्वत्र प्राप्नुवन्ति । नेत्युच्यते । नानुवर्ततेऽधिकारः । देवताश्च नान्यत्र भविष्यन्ति दर्शपूर्णमासवत्, तन्त्रग्रहणसामर्थ्यात् प्रत्यक्षाविधानात् देवतानामन्यत्र । तद्यथा, पौर्णमासीत्युपदेशे सति देवता न भवन्ति, एवमिहापि । देभा.

( २ ) एतत् तन्त्रं पाकयज्ञानां सर्वेषां भवतीत्यर्थः । पाकयज्ञग्रहणं स्थालीपाकसदृशानां हुतानामेव तन्त्रं यथा स्यात्, प्रहुतब्रह्मणिहुतानां मा भूदित्येवमर्थम् । अङ्गसंहतिस्तन्त्रम्, विध्यन्त इत्यर्थः । यद्यपि सर्वमुच्यते तथाऽपि न प्रधानदेवताः प्रसज्जन्ति, 'देवतागमे नित्यानामपायः' इति बाधदर्शनात् । गानावृ.

( ३ ) पाकयज्ञानामित्युभयत्रापि संबध्यते । पुरस्ताच्चोपरिष्टाच्च यदङ्गजातं तत् तन्त्रम् । अना.

दक्षिणा

**हविरुच्छिष्टं दक्षिणा ॥**

( १ ) यद्धुतशिष्टं तदेव दक्षिणां ददाति । दक्षिणाविधानात् मन्यामहे अन्यः कर्ता इति । स्वयंकर्तृत्वे सति दक्षिणादानं नोपपद्यते । अथ किं सर्वेषु पाकयज्ञेषु हविरुच्छिष्टं दक्षिणा भवति ? नेत्युच्यते । अथ केषु भवति ? उत्तरत्रैव वक्ष्यामः । देभा.

( २ ) उच्छिष्टं हविर्दक्षिणां ददाति ब्रह्मणे यद्यस्ति ब्रह्मा । तदभावे ब्राह्मणेभ्यः, कर्माङ्गत्वाद्दक्षिणानाम् । गानावृ.

( ३ ) हविषो यद्धुतशिष्टं सा दक्षिणा । अस्मादेव दक्षिणाविधानात् अन्यः कर्तेति गम्यते । तन्त्रव्यपदेशे कृते सत्युत्तरकालविधानाद्दक्षिणायाः पूर्वसूत्रेषु सर्वेषु पाकयज्ञेषु प्रवृत्तिर्न भवति । किं तर्हि ? पार्वण एव स्थालीपाके । सर्वेषु स्थालीपाकेष्वित्यन्ये । अना.



## आश्वलायनगृह्यपरिशिष्टम्

स्थण्डिलकरणम्, स्थण्डिललक्षणम्

**[१]अथ होष्यद्धर्मे किंचिदुच्छ्रिता समाऽकृत्रिमा भूमिः स्थण्डिलमुच्यते । तदिषुमात्रावरं सर्वतो गोमयेन प्रदक्षिणमुपलिप्य यज्ञियशकलमूलेनोल्लिख्य शकलं प्रागग्रं निधाय स्थण्डिलमभ्युक्ष्य शकलमाग्नेय्यां निरस्याप उपस्पृशेत् । एष आयतनसंस्कारः ॥**

अग्निस्थापनम्, अन्वाधानम्, अन्वाधानलक्षणम्

**[२]तत्राग्निं व्याहृतिभिरभ्यात्मानं प्रतिष्ठाप्यान्वादधाति ॥**

अत्र व्याहृतिभिरित्युपलक्षणम्, 'एह्यग्ने', 'जुष्टो दमूना' इत्येतयोर्मन्त्रयोर्हरदत्तेन मन्त्रभाष्येऽग्निप्रतिष्ठापनपरत्वेन व्याख्यातत्वात् । प्रपा. ३१

**[३]कर्मसंकल्पपुरःसरं द्रव्यदेवताग्रहणाय द्वयोस्तिसृणां वा समिधामभ्याधानमन्वाधानम् ॥**

इध्माबर्हिषोः संनहनम्, रज्जुकरणम्

**[४]अथेध्माबर्हिषी संनह्येत् । दर्भैः प्रादेशमात्रैस्त्रिसंधी त्रिवृते रज्जू कुर्यात् । पाणिभ्यां सव्योत्तराभ्यां पूर्वं वर्तयेत्, ततो दक्षिणोत्तरा-**

---

( १ ) आगृप. १।१४ ; प्रपा. ३० होष्यद्धर्मे ( होष्यन्धर्मे ).

( २ ) आगृप. १।१४ ; प्रपा. ३१ तत्र ( स्थण्डिले ) अभ्यात्मानं ( अभ्यात्मं ) ( अन्वादधाति० ) : ३२ ( अन्वादधाति ) एतावदेव.

( ३ ) आगृप. १।१४ ; प्रपा. ३३ ( द्रव्यदेवताग्रहणाय० ) ( अन्वाधानम् ० ).

( ४ ) आगृप. १।१४ संनह्येत् ( संनह्य ) ; प्रपा. ३४ त्रिसंधी त्रिवृते रज्जू ( त्रिसंधिं त्रिरावृतां रज्जुं ) वर्तयेत् ( आवर्तयेत् ) दक्षिणोत्तराभ्यां + ( पाणिभ्यां ) प्रदक्षिणावृतं ( प्रदक्षिणवृत्तं ) रज्जुं कुर्यात् ( ग्रन्थिं कुर्यात् ).

भ्यामन्ते प्रदक्षिणावृतं रज्जुं कुर्यात् । एतद्रज्जुकरणम् ॥

[1]प्रथमां रज्जुमुदगग्रामास्तीर्य प्रादेशमात्रां दर्भमुष्टिं छित्त्वा प्रागग्रां तस्यां निधाय तया बर्हिर्द्विरावेष्ट्य तन्मूलं च द्विरावेष्ट्य तां प्रथमवेष्टनस्याधस्तादुन्नयेत् । एवं द्वितीययेध्मं सकृदावेष्ट्य संनह्येत् । अरत्न्यायाम इध्मः पञ्चदशदारुकस्तद्गुपरि निदध्यात् । एतदिध्माबर्हिषोः संनहनम् ॥

परिसमूहनम्, परिस्तरणम्, पात्राद्यर्थे दर्भास्तरणम्, पर्युक्षणम्

[2]अथ सोदकेन पाणिना प्रागुदीच्या आरभ्य प्रदक्षिणमग्निं त्रिः परिसमुह्य प्रादेशमात्रैर्दर्भैः प्रदक्षिणं प्राच्यादिषु प्रतिदिशमुदक्संस्थं परिस्तृणीयात् । दक्षिणोत्तरयोः संधिषु मूलान्यग्रैराच्छादयेत् । द्राघिष्ठान् वा दर्भांस्तयोः स्तृणीयात् । उत्तरतः पात्रासादनाय दक्षिणतो ब्रह्मासनाय कांश्चिद्दर्भानास्तीर्याग्निं पर्युक्षेत् । एषोऽग्निसंस्कारः ॥

पात्रासादनम्

[3]अथ तेषु दर्भेषु पात्राणि न्यग्बिलानि द्वन्द्वं प्रागग्रमुदगपवर्गं प्रयुनक्ति । प्रोक्षणपात्रस्रुवौ चमसाज्यपात्रे इध्माबर्हिषीत्याज्यहोमेषु । तथा चरुस्थालीप्रोक्षणपात्रे दर्वीस्रुवौ चमसाज्यपात्रे इध्माबर्हिषी चेति दर्वीहोमेषु । प्रोक्षणपात्रमुद्धृत्य पवित्रे अन्तर्धायाप आसिच्य तूष्णीं ताः पवित्राभ्यां त्रिरुत्पूय पात्राण्युत्तानानि कृत्वेध्मं विस्रस्य पात्राणि ताभिरद्भिर्युगपत्त्रिः प्रोक्षेत् । एतत्पात्रासादनम् ॥

प्रणीताप्रणयनम्

[1]अथ चमसं प्रत्यगग्नेर्निधाय ते पवित्रे अन्तर्धायाद्भिः पूरयित्वा गन्धादि प्रक्षिप्य दक्षिणोत्तराभ्यां पाणिभ्यां नासिकान्तमुद्धृत्योत्तरतोऽग्नेर्दर्भेषु निधाय दर्भैः प्रच्छादयेत् । एतत्प्रणीताप्रणयनम् ॥

आज्यसंस्कारः

[2]अथ ते एव पवित्रे प्रागग्रेराज्यपात्रेऽन्तर्धायाऽऽज्यमासिच्य बहिः परिस्तरणादङ्गारानुदगपोह्य तेष्वाज्यमधिश्रित्योल्मुकेनावज्वाल्य दर्भाग्रे प्रच्छिद्य प्रोक्ष्याऽऽज्ये प्रास्य ज्वलता तेनैवोल्मुकेनाऽऽज्यं त्रिः परिहृत्योल्मुकं निरस्याप उपस्पृश्याऽऽज्यं कर्षन्निवोदगुद्वास्याङ्गारानतिसृज्याऽऽज्यमुत्पूय पवित्रे प्रोक्ष्याग्नौ प्रास्याप उपस्पृशेत् । एष आज्यसंस्कारः ॥

स्रुक्स्रुवसंमार्गः

[3]अथ बर्हिरात्मनोऽग्रे प्रागग्रमास्तीर्य तत्राऽऽज्यमासाद्य सह दर्भैर्दर्वीस्रुवावादायाग्नौ प्रताप्य दर्वीं निधाय स्रुवं सव्येन धारयन्दक्षिणेन पाणिना दर्भाग्रैर्बिलं प्रागारभ्य प्रादक्षिण्यं प्राग-

(१) आगृप. १।१४; बर्हिर्द्विरावेष्ट्य (बर्हिर्द्विरावेष्टयित्वा); प्रपा. ३४ द्विरावेष्ट्य (सकृदावेष्ट्य) प्रथमवेष्टनस्य (प्रथमं वेष्टितस्य) उन्नयेत् (उन्नमयेत्) (संनह्येत्०) स्तदुपरि (स्तमुपरि).

(२) आगृप. १।१४ मूलान्यग्रैः (मूलाग्रैः); प्रपा. ३८ प्रागुदीच्या (प्रागुदीचीं) दर्भांस्तयोः (दर्भांस्तथा) ब्रह्मासनाय (ब्रह्मासनार्थं).

(३) आगृप. १।१४ पवित्रे (पवित्रम्); प्रपा. ३९ दर्भेषु (पवित्रेषु) प्रागग्रमु (प्राक्संस्थान्यु) प्रोक्षणपात्रस्रुवौ (प्रोक्षणीपात्रस्रुवौ) इत्याज्यहोमेषु (चेत्याज्यहोमेषु) दर्वीहोमेषु (दर्विहोमेषु).

(१) आगृप. १।१५; प्रपा. ४१.

(२) आगृप. १।१५; प्रपा. ४४ अथ ते एव पवित्रे प्रागग्रेराज्य (अथ ते पवित्रे आज्य) (बहिः परिस्तरणात्०) अवज्वाल्य (अवज्वल्य) प्रोक्ष्य (प्रक्षाल्य).

(३) आगृप. १।१५; प्रपा ४४ सह दर्भैः (सदर्भौ) धारयन् (आदाय) प्रादक्षिण्यं (प्रादक्षिण्येन) परिमृज्य (संमृज्य).

पवर्गं त्रिः परिमृज्य तैरेव बिलपृष्ठमभ्यात्मं त्रिः संमृज्याथ पृष्ठादारभ्य यावदुपरिबिलं दण्डं दर्भमूलैस्त्रिः संमृज्य स्रुवं प्रोक्ष्य प्रताप्योदगाज्याद्बर्हिष्यासाद्योदकस्पृष्टैस्तैरेव दर्भैरेवं दर्वीं च संस्कृत्य स्रुवादुदङ् निधाय दर्भान्प्रोक्ष्याग्नौ प्रहरेत् । एष स्रुक्स्रुवसंमार्गः ॥

ब्रह्मत्वप्रयोगः, ब्रह्मणः पञ्च कर्माणि

[1]अथ ब्रह्माऽस्ति चेत् क्रियेत । स प्राक्प्रणीताप्रणयनात् समस्तपाण्यङ्गुष्ठो भूत्वाऽग्रेणाग्निं परीत्य दक्षिणत आस्तीर्णेषु दर्भेषु 'निरस्तः परावसुः' इति तृणमङ्गुष्ठोपकनिष्ठिकाभ्यां नैर्ऋत्यां निरस्याप उपस्पृशेत् । 'इदमहमर्वावसोः सदने सीदामि' इत्युदङ्मुख उपविश्य 'बृहस्पतिर्ब्रह्मा ब्रह्मसदनमाशिष्यते बृहस्पते यज्ञं गोपाय' इति मन्त्रं ब्रह्मा जपेत् । अपां प्रणयने 'ब्रह्मन्नपः प्रणेष्यामि' इत्यतिसृष्टः 'ओं भूर्भुवः स्वर्बृहस्पतिप्रसूतः' इति जपित्वा 'ओं प्रणय' इत्यतिसृजेत् । सर्वदा च यज्ञमना भवेत् । एके नेच्छन्ति । निरसनमुपवेशनं जपः प्रायश्चित्तहोमः संस्थाजपेनोपस्थानं चेति पञ्च कर्माणि ब्रह्मणः ॥

स्थालीपाकतन्त्रम्

[2]अपः प्रणीय शूर्पे व्रीहीन्निरुप्य प्रोक्ष्य प्राग्ग्रीवमुत्तरलोम कृष्णाजिनमास्तीर्य तत्रोलूखलं निधाय तानवहत्य तण्डुलांस्त्रिःफलीकृतांस्त्रिः प्रक्षाल्य श्रपयेत् ॥

[3]यदि सह श्रपयेच्चरुं व्युद्धृत्य 'इदममुष्मा इदममुष्मै' इत्यभिमृशेत् ॥

(१) आगृप. १।१६ उपस्पृशेत् (उपस्पृश्य); प्रपा. ४०-४१ नैर्ऋत्यां (निर्ऋत्यां) ब्रह्मसदनमाशिष्यते (ब्रह्मसदन आशिष्यते) (मन्त्रं०) नेच्छन्ति (नैतदिच्छन्ति).

(२) आगृप. १।१७ निरुप्य (निरूप्य); प्रपा. ४२ तानवहत्य (तान्पल्यवहत्य).

(३) आगृप. १।१७ व्युद्धृत्य (विहृत्य); प्रपा. ४६.

[1]स्विष्टकृतं द्विरुपरिष्टादभिघारयेत् । पञ्चावत्ती द्यावत्तात्पुरस्ताच्चावद्येत् ॥

[2]इध्मरज्जुं विस्रस्याग्नौ प्रास्य 'अयाश्चाग्नेऽसि' 'अतो देवाः' 'इदं विष्णुः' इत्येताभिर्व्याहृतिभिश्च जुहुयात् । एताः सप्त सर्वप्रायश्चित्ताहुतयः । एताश्च ब्रह्मा कर्तारं परीत्य प्रत्यगुदीच्यामवस्थाय जुहुयात् ॥

[3]अथ बर्हिषि पूर्णपात्रं निनीय ताभिरद्भिः 'आपो अस्मान्मातरः शुन्धयन्तु', 'इदमापः प्रवहत' इत्येताभ्यां 'सुमित्र्या न आप ओषधयः सन्तु' इत्येतेन चाऽऽत्मानं शिरसि मार्जयेत् । संस्कार्यमपि संस्कारकर्मसु । अथाग्निम् 'ॐ च मे' इति संस्थाजपेनोपतिष्ठते । ततो ब्रह्मा च । अथ कर्ताऽग्नेः परिसमूहनपर्युक्षणे कुर्यात् । एतदेव तन्त्रमन्येषु स्थालीपाकवत्सु कर्मसु ॥

## कौषीतकिगृह्यसूत्रम्

स्थण्डिलकरणम्, अग्निस्थापनम्, परिसमूहनम्

[4]चतुरस्रं गोमयेन स्थण्डिलमुपलिप्य ॥

पूर्वयोर्विदिशोर्दक्षिणां प्राचीं पित्र्ये ॥

उत्तरां दैवे ॥

प्राचीमेवैके ॥

उदक्संस्थां मध्ये लेखां लिखित्वा ॥

(१) आगृप. १।१७ द्यावत्तात्पु (द्यावत्ती पु); च्चावद्येत् (दवद्येत्); प्रपा. ४९ स्विष्टकृतं (स्विष्टकृति) रुपरिष्टा (रुपरि शिष्टा).

(२) आगृप. १।१७ सप्त सर्व (सर्वाः) एताश्च ब्रह्मा कर्तारं (एता ब्रह्मणा कर्तव्याः); प्रपा. ५० इध्मरज्जुं (इध्मबन्धनरज्जुं) प्रास्य (प्रास्येत्).

(३) आगृप. १।१७ एतदेव ......कर्मसु (एतत्तन्त्रमन्येषामस्थालीपाकवत्सु कृतकर्ममन्त्रान्जुहुयात्); प्रपा. ५२ (अथ०) इत्येतेन (इत्यनेन) संस्कार्यमपि (संस्कार्यानपि).

(४) कौगृ. १।७।२-१२.

[1] तस्यै दक्षिणत उपरिष्टादूर्ध्वामेकां मध्य एकामुत्तरत एकाम् ॥

[2] ता अभ्युक्ष्य ॥

[3] 'अग्निं प्र णयामि मनसा शिवेनायमस्तु संगमनो वसूनाम् । मा नो हिंसीः स्थविरं मा कुमारं शं नो भव द्विपदे शं चतुष्पदे ॥' इत्यग्निं प्रणीय ॥

तूष्णीं वा ॥

प्रदक्षिणमग्नेः समन्तात् पाणिना सोदकेन त्रिः प्रमार्ष्टि । तत् समूहनमित्याचक्षते ॥

सकृदपसव्यं पित्र्ये ॥

परिस्तरणम्, ब्रह्मोपवेशनम्, प्रणीताप्रणयनम्

[1]अथ परिस्तरणम् ॥

प्रागग्रैः कुशैः परिस्तृणाति त्रिवृत् पञ्चवृद्वा ॥

पुरस्तात् प्रथममथ पश्चादथ परचात् ॥

मूलान्यग्रैः प्रच्छादयति ॥

सर्वाश्चाऽऽवृतो दक्षिणतःप्रवृत्तय उदक्संस्था भवन्ति ॥

दक्षिणतो ब्रह्माणं प्रतिष्ठाप्य 'भूर्भुवः स्वः' इति ॥

सुमनोभिरलंकृत्य ॥

उत्तरतः प्रणीताः प्रणीय 'को वः प्रणयति' इति ॥

सव्येन कुशानादाय दक्षिणेनापनौति ॥

दक्षिणं जान्वाच्य ॥

सव्यं पित्र्ये ॥

नाऽऽज्याहुतिषु नित्यं परिस्तरणम् ॥

नित्याहुतिषु चेति माण्डूकेयः ॥

(१) कौगृ. १।८।१-१३.

आज्यसंस्कारः, अबुत्पवनम्

[1]कुशतरुणे अविषमे अविच्छिन्नाग्रे अनन्तर्गर्भे प्रादेशेन मापयित्वा कुशेन छिनत्ति – 'पवित्रे स्थः' इति ॥

द्वे त्रीणि वा भवन्ति ॥

प्रागग्रे धारयन् 'वैष्णव्यौ' इत्यभ्युक्ष्य ॥

कुशतरुणाभ्यां प्रदक्षिणमग्निं त्रिः पर्युक्ष्य ॥

'महीनां पयोऽसि' इत्याज्यस्थालीमादाय ॥

'इषे त्वा' इत्यधिश्रित्य ॥

'उर्जे त्वा' इत्युदगुद्वास्य ॥

उदगग्रे पवित्रे धारयन्नङ्गुष्ठाभ्यां चोपकनिष्ठिकाभ्यां चोभयतः प्रतिगृह्योर्ध्वाग्रे प्रह्वे कृत्वाऽऽज्ये प्रत्यस्यति– 'सवितुष्ट्वा प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः' इति ॥

आज्यसंस्कारः सर्वत्र ॥

नासंस्कृतेन जुहुयात् ॥

स्रुवे चापः– 'सवितुर्वः' इति ॥

ताः प्रणीताः प्रोक्षणीश्च ॥

आघारौ, आज्यभागौ, कुशप्रहरणम्, समिदाधानम्, पर्युक्षणम्

[2]स्रुवः पात्रम् ॥

अर्थलक्षणग्रहणम् ॥

सव्येन कुशानादाय दक्षिणेन मूले स्रुवं 'विष्णोर्हस्तोऽसि' इति ॥

स्रुवेणाऽऽज्याहुतीर्जुहोति ॥

उत्तरपश्चार्धादग्नेरारभ्याविच्छिन्नं दक्षिणतो जुहोति– 'त्वमग्ने प्रमतिः' इति ॥

(१) कौगृ. १।८।१४–२५ ; संग. ३२ (कुशतरुणे अविषमे अविच्छिन्नाग्रे प्रादेशेन मापयित्वा कुशेन छिनत्ति) एतावदेव.

(२) कौगृ. १।९।१–८, १०–१७ ; संत. ८७७ (उत्तरमाग्नेयं दक्षिणे सौम्यं मध्येऽन्याहुतयः) एतावदेव.

दक्षिणपश्चार्धादग्नेरारभ्याविच्छिन्नमुत्तरतो जुहोति— 'यस्येमे हिमवन्तः' इति ॥

आग्नेयमुत्तरमाज्यभागं सौम्यं दक्षिणम् ॥

मध्येऽन्याहुतयः ॥

नाऽऽज्याहुतिषु नित्यावाज्यभागौ स्विष्टकृच्च ॥

नित्याहुतिषु चेति माण्डूकेयः ॥

महाव्याहृतिसर्वप्रायश्चित्तप्राजापत्यान्तरमेतदावापस्थानम् ॥

आज्ये हविषि सव्ये पाणौ ये कुशास्तान् दक्षिणेनाग्रे संगृह्य मूले सव्येन तेषामग्रं स्रुवे समनक्ति मध्यमाज्यस्थाल्यां मूलं च ॥

अथ चेत् स्थालीपाकेषु स्रुच्यग्रं मध्यं स्रुवे मूलमाज्यस्थाल्याम् ॥

तानन्नु प्रहृत्य— 'अग्नेर्वासोऽसि' इति ॥

तिस्रः समिधोऽभ्याधाय ॥

यथोक्तं पर्युक्षणम् ॥

चतुरस्रं गोमयेन स्थण्डिलस्योपलेनम् । उदक्संस्थां मध्ये रेखां कृत्वा तस्या उपरि प्राङ्मुखं रेखात्रयमुदक्संस्थं कृत्वा उद्धृत्याद्भिरभ्युक्ष्य ततः 'अग्निं प्र णयामि मनसा शिवेनायमस्तु संगमनो वसूनाम् । मा नो हिंसीः स्थविरं मा कुमारं शं नो भव द्विपदे शं चतुष्पदे ॥' इत्यनेन मन्त्रेण एकारान्तेन अग्निं प्राञ्चं प्रणयति । तूष्णीं वा । ततः पाणिना सोदकेन प्रदक्षिणं त्रिः परिसमुह्य ततः कुशैः पुरस्तादारभ्य प्रदक्षिणमभ्युक्षणं कृत्वा दक्षिणतोऽग्नेर्ब्रह्मासनमुत्तरतः प्रणीतासनं कुर्यात् । ततो ब्रह्मा( ? ह्माणम् ) उदककमण्डलुं विष्टरं वा पुरस्तादग्नेर्नीत्वा 'भूर्भुवः स्वः' इत्यनेन मन्त्रेण दर्भासने स्थापयित्वा पुष्पैरर्चयति । ततः 'को वः प्रणयति' इत्यनेन मन्त्रेणापः प्रणीय 'भूर्भुवः स्वः' इत्यनेन मन्त्रेण प्रतिष्ठाप्य ततः परिस्तरणम् । सव्येन कुशान् गृहीत्वा दक्षिणं जान्वाच्य दक्षिणेन हस्तेन पुरस्तादग्नेस्त्रिः स्तृणाति । अथ पश्चात्त्रिभिः त्रिः । एवं त्रिभिः स्तरणैर्नव भवन्ति । अथवा पञ्चकृत्वः स्तरणं कुर्यात्, ततः पञ्चदश भवन्ति । अपरे त्वेवं व्याचक्षते— सकृत्सकृत् स्तरणं कुर्यात्, ततस्त्रीणि पञ्च वा भवन्ति । मूलान्यग्रैः प्रच्छादयति । स्तरणादनन्तरं कुशतरुणे समेऽप्रशीर्णाग्रे अनन्तर्गर्भे प्रादेशेन मापयित्वा कुशमन्तर्धाय 'पवित्रे स्थः' इत्यनेन मन्त्रेण छित्वा प्रागग्रे कृत्वा 'वैष्णव्यौ' इत्यनेन मन्त्रेणाद्भिरभ्युक्षेत् । त्रीणि वा पवित्राणि कुर्यात् । मन्त्रस्तु स एव । ततः पवित्राभ्यां प्रदक्षिणमग्निं त्रिः पर्युक्ष्य 'महीनां पयोऽसि' इत्यनेन मन्त्रेणाऽऽज्यस्थाल्यादानम्, 'इषे त्वा' इत्यनेन मन्त्रेणाधिश्रयणम् । स्रुवमधोबिलं प्रताप्य संमार्जनकुशैः संमृज्य पुनः प्रताप्य निदधाति । 'ऊर्जे त्वा' इत्यनेन मन्त्रेण उदगुद्वासनं कृत्वा दक्षिणहस्तेनोपकनिष्ठिकाङ्गुष्ठाभ्यां पवित्राग्रे गृहीत्वा एवं वामहस्तेन मूले गृहीत्वोदङ्मुखे ततो मध्ये कृत्वा 'सवितुष्ट्वा प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः' इत्यनेन मन्त्रेणाऽऽज्यमुत्पुनाति । ततः 'सवितुर्वः प्रसवः' इति कृतेनानेनैव मन्त्रेण स्रुवस्था अप उत्पुनाति । ततस्ताः प्रणीताः प्रापयेत् । ततः स्तरणसमित्पात्रद्रव्याणां प्रोक्षणम् । अपरे त्वेवं व्याचक्षते— स्रुवस्था अप उत्पूय स्तोकं प्रणीताः प्रापयेत्, शेषं प्रोक्षणं कुर्यात् । ततश्चरुपात्रमादाय पवित्रे अन्तर्हिते कृत्वा दक्षिणहस्तेन तण्डुलमुष्टिं चरुपात्रे निर्वपति । यद्दैवत्यश्चरुर्भवति तमुच्चार्य 'अग्नये जुष्टं निर्वपामि' इति मुष्टित्रयम्, तूष्णीं चतुर्थम् । एवं सर्वचरुनिर्वपणे द्रष्टव्यम् । आसादनं प्रोक्षणं त्रिः प्रक्षालनं त्रिः श्रपणम् । ततः सप्तदश समिधोऽभ्याधाय 'विष्णोर्हस्तोऽसि' इत्यनेन मन्त्रेण सव्येन कुशान् दक्षिणेन मूले स्रुवं युगपद्गृहीत्वा दक्षिणं जान्वाच्य जानुभ्यामन्तरा दक्षिणं बाहुं कृत्वाऽऽघारसंज्ञके द्वे आहुती जुहोति । 'त्वमग्ने प्रमतिस्त्वं पिताऽसि नः' इत्यनेन मन्त्रेणोत्तरतः पश्चार्धात् अग्नेरारभ्याविच्छिन्नं दक्षिणतो हुत्वा 'यस्येमे हिमवन्तो महित्वा' इत्यादिना मन्त्रेण दक्षिणतः पश्चार्धादग्नेरारभ्याविच्छिन्नमुत्तरतो हुत्वा ततः 'अग्नये स्वाहा' इत्युत्तरमाज्यभागं 'सोमाय स्वाहा' इति दक्षिणम् । 'अग्नये स्विष्टकृते स्वाहा' इति स्विष्टकृते हुत्वा ततो

'भूः स्वाहा, भुवः स्वाहा, स्वः स्वाहा, भूर्भुवः स्वः स्वाहा' इति महाव्याहृतयश्चतस्रः । ततः 'भूर्भुवः स्वः स्वाहा', 'अयाश्चाग्नेऽस्यनभिशस्तिपाश्च सत्यमित्त्वमया असि । अयासामनसत्ततोऽयासं हव्यमूहिषे अया नः कृणुहि भेषजं स्वाहा ॥' इति सर्वप्रायश्चित्तसंज्ञके द्वे आहुती । ततः 'प्रजापतये स्वाहा' इति जुहुयात् । ततः सव्ये पाणौ ये कुशास्तान्दक्षिणेनाग्रे संगृह्य, मूले सव्येन, तेषामग्रं स्रुवे समनक्ति । मूले सव्येन गृहीत्वा मध्यमाज्यस्थाल्यां त्यक्त्वा( अक्त्वा ? ) मूलांश्च, तान् 'अग्नेर्वासोऽसि' इत्यनेन मन्त्रेणाग्नौ क्षिपेत् । ततस्तिस्रः समिधोऽभ्याधाय पूर्ववत्पर्युक्षणम् । ततः 'इदमापः प्रवहत' इति तृचेन मार्जनं कृत्वा पवित्रे तेनाग्नौ( ? तेऽग्नौ ) क्षिपेत् । ततोऽग्नेरात्मनश्चोत्तरेण नीत्वा प्रणीता अग्नेः पुरस्ताद्धस्तमानीय दक्षिणतः पश्चाद्विमुच्य ब्रह्माणं चाग्नेः पुरस्तादानीय विमुञ्चति । स्रुवं च प्रताप्योन्नयत्यानीय विमुञ्चति ।

कौगृसं. १।७–९

पाकयज्ञेषु प्रयाजाद्यभावः

'त एतेऽप्रयाजा अननुयाजा अनिला अनिगदा असामिधेनीकाश्च सर्वे पाकयज्ञा भवन्ति ॥

अनूर्ध्वज्ञुत्वं व्यूढजानुत्वं च होतृधर्मौ

अनूर्ध्वज्ञुर्व्यूढजानुर्जुहुयात्सवेदा हविः ।
न हि बाह्यहुतं देवाः प्रतिगृह्णन्ति कर्हिचित् ॥

## आपस्तम्बगृह्यसूत्रम्

परिस्तरणम्

'अग्निमिद्ध्वा प्रागग्रैर्दर्भैरग्निं परिस्तृणाति ॥
प्रागुदगग्रैर्वा ॥

( १ ) उक्ताः पाकयज्ञपरिभाषाः । अथ तेषां साधारणतन्त्रं वक्ष्यते— अग्निमिद्ध्वेति । तदग्नेरुपसमाधानमित्युच्यते । एतच्च कर्माङ्गम् । कः पुनरत्राग्निः ? पत्नीसंबन्धेष्वौपासनः, अन्यत्र लौकिकः । केचिज्जातकर्मप्रभृति परिग्रहमग्नेरिच्छन्ति । अन्ये पुनः उपनयनप्रभृति । अपरे समावर्तनादि, 'यत्रान्त्यां समिधमादध्यात्तं वा परिगृह्णीयात्' इति । यत्र तु प्रसिद्धोऽग्निर्नास्ति तत्र श्रोत्रियागारादाहरणं मथनं वा । 'यत्र क्व चाग्निम्' इत्ययं तु देशसंस्कारः सर्वत्र भवति यदि स्यादसंस्कृतो देशः । केचिद्देशसंस्कारं कर्माङ्गमिच्छन्ति । तदा धारणमग्नेरुखायामाहुः । अग्निमिद्ध्वेति प्रकृते पुनरग्निग्रहणं येषु तन्त्रं न प्रवर्तते तत्रापि परिस्तरणं यथा स्यादिति— अग्निं परिस्तृणाति सर्वत्रेति । उपसमाधानं तु तत्रार्थसिद्धम् । प्रागुदगग्रैर्वा । अथ वा न सर्वतः प्रागग्रैरेव परिस्तरणम् । किं तर्हि ? प्रागग्रैरुदगग्रैश्च । तत्रोदगग्राः पश्चात्पुरस्ताच्च । अनाकुला.

( २ ) एवं प्रयोगानुबन्धं कालादिकमुक्त्वा इदानीं सर्वगार्ह्यप्रधानहोमानां साधारणतन्त्रनामानं प्राच्योदीच्याङ्गसमुदायं प्रयोज्यभेदमाह — 'अग्निमिद्ध्वा' इत्यादि 'मन्त्रसंनामः' ( आपगृ. २।८ ) इत्यन्तेन । अत्र च अग्निपदार्थविशेषप्रतिपत्त्यर्थं स्मार्तेष्वग्निर्निरूप्यते । तत्र याज्ञवल्क्यवचनम्— 'कर्म स्मार्तं विवाहाग्नौ कुर्वीत प्रत्यहं गृही ।' ( यास्मृ. १।९७ ) इति । अस्यार्थः— गृही गृहस्थः सपत्नीकः स्मार्तं कर्म विवाहाग्नौ औपासनाग्नौ कुर्वीत । यस्य कर्मणः प्रयोगे संकल्पावघातान्वारम्भद्रव्यत्यागानुमत्यादिपदार्थद्वारा पत्न्याः सहत्वं तत्कर्म स्वौपासने कुर्वीत इत्येतत् । अथवा यस्य अग्निसाध्यस्य कर्मणः फलं साक्षात् कर्मान्तरप्रणाल्या वा जायापतिगाम्यन्यतरगामि वा भवति तत् कर्म गृही स्वौपासने कुर्यात्, 'कुर्वीत' इत्यात्मनेपदश्रवणादिति ।

एवं च स्मार्तानि पाकयज्ञसीमन्तादीनि औपासनाग्नौ कर्तव्यानि । गृहप्रवेशोऽपि तत्कर्मजन्यवास्तुशान्तेः जायापत्यायुराद्यर्थत्वादौपासन एव । तथा पित्रादेर्मातामहादेश्च सपिण्डीकरणमप्यौपासने, सपिण्डीकरणफलस्य प्रेतत्वनिवृत्त्या पितृत्वप्राप्तिरूपस्याऽऽभ्युदयिकमासिश्राद्धादौ संप्रदानार्थत्वात्, तत्फलस्य च जायापतिगामि-

---

( १ ) कौगृ. १।१०।५, ८.

( २ ) आपगृ. १।१२–१६ ; प्रका. १४ ( देवसंयुक्तानि० ).

त्वादिति । अत एव सपिण्डीकरणं सर्वैरपि पुत्रैर्न कर्तव्यम्, एकेनापि कृते पितृतया संप्रदानत्वसिद्धेः । अतो यत्र पत्न्याः सहत्वं क्रियाफलं वा जायापतिगामि तत्कर्म औपासन एव । यदि तु पुत्रोऽनग्निरनुपनीतादिः संवत्सरे पूर्णेऽवश्यं कर्तव्यत्वात् सपिण्डीकरणं करोति, तदा श्रोत्रियागारादाहृतेऽग्नौ, बौधायनेन 'अथवा श्रोत्रियागारादेव तमौपासनम्' इत्यौपासनसंस्तवात्, आचाराच्च । अनुपनीतोऽपि पुत्रः श्राद्धाधिकार्येव 'अर्हत्यनुपनीतोऽपि विनाऽप्यग्निं विनाऽऽपदम् ।' इति वचनात्, 'न ब्रह्माभिव्याहारयेदन्यत्र स्वधानिनयनात्' (गौध. २।९) इति गौतमवचनस्य-स्वधाशब्दस्य सकलौर्ध्वदेहिकप्रदर्शनार्थत्वाच्च । 'भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव वा । सपिण्डीकरणं कृत्वा कुर्यादभ्युदयं ततः ॥' इति वचनात् यदा भ्रातृपुत्रादिः करोति, तदा यथोक्तसहत्वफलभागित्वयोरभावात् श्रोत्रियागारादाहृताग्नावेव । अन्ये तु भ्रात्रादिगतपितृत्वप्राप्तिरपि पुत्रगतपूतत्वादिफलवत् पतिगामि फलमित्यौपासने, तच्चिन्त्यम् । तथा जातकर्मचौलोपाकरणसमापनगोदानसमावर्तनान्यपि । तथोपनयनमपि । आचार्यकरणसिद्ध्यर्थमुपनयनमिति मतेऽपि नाऽऽचार्यस्यौपासने, तस्य नित्यधार्यत्वात् 'गृहमेतमग्निं धारयन्ति' (आपगृ. ११।१९) इति सूत्रविरोधात् । विवाहोऽप्यस्मिन्, निर्मन्थ्ये वा, असंभवाद्विवाहजन्यौपासनस्य । संभवेऽपि प्रथमौपासनस्य न तस्मिन् द्वितीयादिविवाहः, 'यां कामयेत राष्ट्रमस्यै प्रजा स्यादिति तस्या औपासने' इति प्रतिभार्यमौपासनभेदावगमात्, बौधायनीये अग्निद्वयसंसर्गविधानात्, आचाराच्च । कर्मार्थस्यौपासनस्य संस्कृते देशे अनुपसमाहितस्यान्यस्य वाऽग्नेः 'यत्र क चाग्निम्' (आध. २।१।१३) इति धर्मशास्त्रोक्तविधिना अग्निप्रतिष्ठापनं कर्तव्यम् । केचित्— इदं नाग्न्यङ्गम्, कर्माङ्गमेवेति प्रतिकर्म कार्यम्, उखायां चाग्नेर्धारणमिति ।

अथ सूत्रं व्याख्यायते— अग्निमिद्ध्वा, इन्धीतेत्यर्थः । यद्यप्यर्थप्राप्तमग्नेरिन्धनं तथाऽप्येतद्वचनात् इद्धमपि पुनरिन्धीत । अत्र विध्यर्थे लिङादौ ग्राह्ये क्त्वाग्रहणमिन्धनस्य परिस्तरणपूर्वकालतानियमार्थम् । तेन इन्धनानन्तरं परिस्तरणमेव कार्यम्, न तु तयोर्मध्येऽवश्यकार्यमपि मूत्रनिरसनादि कर्मार्थसंभारोपकल्पनं च । नन्वेकस्मिन्सूत्रे इन्धनपरिस्तरणयोर्विधाने वाक्यभेदः स्यात् । सत्यं न तु सूत्रे वाक्यभेदो दोषः, सूचनात्सूत्रमिति निर्वचनात् । इत्थमेव व्याख्यानं प्रयोजनं च सर्वत्र क्त्वाग्रहणेषु ।

प्रागग्रैर्दर्भैरग्निं परिस्तृणाति । सर्वासु दिक्षु प्रागग्रैः कुशैरग्निं परिस्तृणाति । अथवा प्रागग्रैरुदगग्रैश्च दर्भैरग्निं परिस्तृणाति । दक्षिणत उत्तरतश्च प्रागग्रैः, पश्चात्पुरस्ताच्चोदगग्रैः, 'उदगग्राः पश्चात्पुरस्ताच्च' (आपश्रौ. १।१४।१४) इति श्रौते दर्शनात् । एतान् कुशान् दक्षिणानुत्तरान् करोति, उत्तरांश्चाधरान्, बौधायनभरद्वाजगृह्याभ्यामुक्तत्वात्— 'दक्षिणतः पक्ष उपरिष्टाद्भवत्यधस्तादुत्तरः' इति । अत्र 'अग्निमिद्ध्वा' इति प्रकृतेऽप्यग्नौ 'अग्निम्' इति पुनर्वचनं नियमार्थम्— अग्निमेव परिस्तृणाति, नान्यदङ्गमपीति । तेन उत्तरेण पूर्वेण वा निहितमुदकं बहिरेव भवति । केचित् अतन्त्रकेष्वपि कर्मस्वग्निः परिस्तीर्य एवेति नियमार्थमिति । ताद.

**दक्षिणाग्रैः पित्र्येषु ॥**

**दक्षिणाप्रागग्रैर्वा ॥**

(१) पितृदैवत्येषु कर्मसु दक्षिणाग्रैः परिस्तरणम् । अथवा दक्षिणाग्रैः प्रागग्रैश्च । तत्र दक्षिणाग्राः पश्चात् पुरस्ताच्च । अनाकुला.

(२) पित्र्येषु मासिश्राद्धादिषु कर्मसु सर्वासु दिक्षु दक्षिणाग्रैः परिस्तृणाति । यद्वा दक्षिणाग्रैः प्रागग्रैश्च दर्भैः । पश्चात्पुरस्ताच्च दक्षिणाग्रैः, उत्तरतो दक्षिणतश्च प्रागग्रैः । उत्तरानुत्तरान् दक्षिणांश्चाधरान् कुर्यात् । तथा प्रागुपक्रम्य प्रसव्यं परिस्तृणाति । ताद.

### पात्रासादनम्

**उत्तरेणाग्निं दर्भान्त्संस्तीर्य द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति देवसंयुक्तानि ॥**

(१) परिस्तरणानन्तरं अग्नेरुत्तरतः पात्रप्रयोगार्थं दर्भान् प्रागग्रान् संस्तृणाति । प्रथितं स्तरणम् । प्रयुनक्ति सादयति । न्यञ्चि न्यग्भूतानि । सर्वाणि च द्रव्याणि

प्रयोजनवन्ति पात्रग्रहणेन गृह्यन्ते । तेनोपनयनादौ मेखलादीनामपि सादनं भवति । तत्र यानि देवसंयुक्तानि तानि द्वन्द्वं प्रयुनक्ति । द्वे द्वे इत्यर्थः । पार्वणादीनि देवकर्माणि । अग्निग्रहणमनर्थकम्, अधिकृतत्वात् 'अग्निमिद्ध्वा' इति । ज्ञापकार्थं चैतत् ज्ञापयति– अग्निपरिस्तरणे विहितोऽयं पात्रप्रयोगे नानुवर्तते इति । कदा (? कः) पुनरसौ ? दर्भाग्रविशेषस्तन्त्राभावे प्रवृत्तिश्च । तेन पित्र्येष्वपि प्रागग्राणामेव संस्तरणमग्नेश्चोत्तरतः, तन्त्राभावे च पात्रप्रयोगाभावात् । अधिकारात्त्वग्निप्रतिपत्तावेव । तदप्युभयं प्रतिपत्तव्यं स्यात् अधिकारादेव । अनाकुला.

(२) अग्नेरुत्तरतोऽदूरेण दर्भान् संस्तृणाति । एते च प्रागग्राः, बौधायनगृह्यात् । प्रथितं च स्तरणम्, समुपसर्गात् । उदक् च स्तरणापवर्गः । पित्र्येष्वप्यग्नेरुत्तरत एव प्रागग्रैः, 'उत्तरत उपचारो विहारः' (आपप. २।१०) इति सिद्धेऽपीहाप्युत्तरेणेति वचनात्, प्रकृतेऽप्यग्नौ 'अग्निम्' इत्यधिकशब्दस्य अधिकार्थपरत्वस्य युक्तत्वात् परिस्तरणवद्विशेषस्यानुक्तेश्च । अपवर्गस्तु दक्षिणत एव । देवसंयुक्तानि देवकर्मसंयुक्तानि । पात्राणि दर्व्यादीनि । द्वन्द्वं द्वे द्वे । न्यञ्चि अधोबिलानि । प्रयुनक्ति सादयति । ननु उत्तरत्र 'मनुष्यसंयुक्तानि' 'पितृसंयुक्तानि' इति विशेषणेनैव सिद्धत्वात् 'देवसंयुक्तानि' इति व्यर्थम् । न, दैवानि हि कर्माणि द्विविधानि– पुरुषार्थरूपाणि मनुष्यसंस्कारकाणि च । तत्रोभयत्रापि दैवपात्राणां दर्व्यादीनां द्वन्द्वतासिद्ध्यर्थत्वात् । ताद.

**[1]सकृदेव मनुष्यसंयुक्तानि ॥**

(१) यानि मनुष्यसंयुक्तानि पात्राणि तानि सकृदेव प्रयुनक्ति, न द्वन्द्वम् । मनुष्यकर्माणि विवाहादीनि । एवकारः क्रियाभ्यावृत्तिप्रतिषेधार्थः । पात्रबाहुल्यात् द्वाभ्यां बाहुभ्यां सादनाशक्तावप्युपायेन सकृदेव सादनमिति । केचित् मेखलादीनामेव मनुष्यसंयुक्तानां सकृत्प्रयोगमिच्छन्ति, न होमार्थानाम् । वयं तु मनुष्यसंयुक्तानि मनुष्यकर्मसंयुक्तानीत्यवोचाम । अनाकुला.

(२) तत्र मनुष्यसंस्कारकर्मार्थेषु केषुचित् पात्रेष्वपवादमाह– सकृदिति । मनुष्यसंयुक्तानि मनुष्यद्वारा संयुक्तानि अश्मवासोमेखलादीनि सकृदेव क्रियाभ्यावृत्तिपरिहारेण प्रयुनक्ति पात्रबहुत्वेऽप्युपायेन । केचित् मनुष्यसंस्कारकर्मसु दर्व्यादीन्यपि सकृदेवेति । ताद.

**एकैकशः पितृसंयुक्तानि ॥**

यानि पितृकर्मसंयुक्तानि तान्येकैकशः प्रयुनक्ति । एकमेकमित्यर्थः । * अनाकुला.

पवित्रसंस्कार–प्रोक्षणीसंस्कार–पात्रप्रोक्षणानां तूष्णींभावः

**[1]पवित्रयोः संस्कार आयामतः परीमाणं प्रोक्षणीसंस्कारः पात्रप्रोक्ष इति दर्शपूर्णमासवत्तूष्णीम् ॥**

(१) पवित्रयोः संस्कारः 'तृणं काष्ठं वा' (आपश्रौ. १।११।८) इत्येवमादिः । तयोरायामतो यत् परीमाणं दीर्घप्रमाणं 'प्रादेशमात्रौ' (आपश्रौ. १।११।९) इत्येतत् । प्रोक्षणीसंस्कारः 'पवित्रान्तर्हितायामग्निहोत्रहवण्याम्' (आपश्रौ. १।११।९) इत्यादिः । तत्राग्निहोत्रहवण्या इहाभावात् पात्रान्तरं प्रापयते । 'उत्तानानि पात्राणि' (आपश्रौ. १।११।९) इत्यादि पात्रप्रोक्षणम् । तदेतत् पदार्थचतुष्टयं (दर्शयति । ?) दर्शपूर्णमासयोरिवात्रापि कर्तव्यम् । तूष्णीमिति मन्त्रप्रतिषेधः । यथा प्रोक्षणे पात्राणामुक्ता क्रिया विस्रंसनं चेध्मस्य तदन्तर्भावादेव सिद्धम् । इदं तु वचनं नियमार्थम्– पवित्रयोरेवाऽऽयामतः परिमाणं यथा स्यात्, इध्मस्य दर्भाग्रयोश्चाऽऽज्ये प्रत्यस्यमानयोर्मा भूदिति । कथं पुनस्तत्र प्रसङ्गः ? एतदेव ज्ञापयति–भवत्यत्रापि दर्शपूर्णमासवत्तूष्णीं संस्कार इति । आयामग्रहणमायामपरिमाणस्यैव पवित्रयोर्नियमेन यथा स्यात् ।

---

(१) आपगृ. १।१७–१८.

* ताद. अनाकुलावत् ।

(१) आपगृ. १।१९ ; प्रका. १४ (परीमाणं प्रोक्षणीसंस्कारः ०).

तेन संख्यापरीमाणं दार्शपूर्णमासिकमेवेध्मस्य भवति । तेनात्राविद्यमानेष्वनूयाजेषु न एकविंशतिदारुरिध्मो भवति । उपहोमास्त्वनूयाजार्थे भवन्ति । अनाकुला.

(२) पवित्रयोः संस्कारो दर्शपूर्णमासाभ्यां तुल्यं मन्त्रवर्जं कार्यः । समावप्रच्छिन्नाग्रौ दर्भौ प्रादेशमात्रौ पवित्रे कुरुते, तृणं काष्ठं वाऽन्तर्धाय छिनत्ति, न नखेन । ततोऽप उपस्पृशेत्, 'रौद्रराक्षस···' (आपप. २।९) इति वचनात् । ततस्तयोर्मूलादारभ्याऽऽग्रादद्भिर्मार्जनम् । तयोश्चाऽऽयामतः परीमाणं दर्शपूर्णमासवदेव । यद्यपि 'पवित्रयोः संस्कारो दर्शपूर्णमासवत्' इति वचनादेव तद्वदायामतः परीमाणं प्राप्तम्, तथाऽपि येदायामतः परीमाणं प्रादेशमात्राविति तदेव तद्वत्, न त्विह पृथुत्वेनापि साम्यमित्येवमर्थम् 'आयामतः परीमाणम्' इति पुनर्वचनम् ।

केचित्— पवित्रयोरेवाऽऽयामतः परीमाणं दर्शपूर्णमासवत्, न त्विध्मस्य दर्भाग्रयोश्चाऽऽज्ये प्रत्यस्यमानयोरिति नियमार्थं पुनर्वचनम् । एवं ब्रुवतैव सूत्रकारेण दर्शपूर्णमासवत्तूष्णीमिध्मस्य दर्भाग्रयोश्च संस्कारः प्रसिद्धवदभ्यनुज्ञातः । तथैव चाऽऽचारः । तेन खादिरः पालाशो वा शुल्बसंनद्ध इध्मो विस्रस्य त्रिः प्रोक्षितव्यः । पार्वणे च पूर्वेद्युः संनद्धव्यः । दर्भाग्रे च 'तृणं काष्ठं वा' (आपश्रौ. १।११।८) इत्यादिविधिना संस्कृत्याऽऽज्ये प्रत्यसितव्ये । अत्र च यद्यप्ययमर्थः 'आयामतः' इति वा 'परिमाणम्' इति वाऽन्यतरेण सिद्धः, तथाऽपि नियमान्तरार्थमेवमुक्तम् । आयामत एव यत्परिमाणं तदेव पवित्रयोः दर्शपूर्णमासवत्, न संख्यातः परिमाणम् । तेनेध्मस्य संख्यापरिमाणं दार्शपूर्णमासिकमेव 'एकविंशतिदारुमिध्मम्' (आपश्रौ. १।५।५) इति, आयामस्यैव पवित्रयोर्नियमितत्वात् । यद्यप्यनूयाजाभावादेकविंशत्या न कार्यम्, तथाऽप्येतद्बलात्तत्स्थाने जयादयः कल्प्याः— इत्ययुक्तं भूयिष्ठं च पूर्वव्याख्यानेनान्यथासिद्धेऽपि सूत्रे कल्पयन्ति ।

प्रोक्षणीसंस्कारोपि दर्शपूर्णमासवत्तूष्णीम् । उदगग्राभ्यां पवित्राभ्यामन्तर्हितायां वैकङ्कत्यां स्रुच्यप आनीय ताभ्यां त्रिरुत्पूय प्रोक्षेत् । पात्रप्रोक्षणमपि तद्वत्तूष्णीम् । उत्तानानि पात्राणि कृत्वेध्मं च विस्रस्य ताभिः सपवित्रेण पाणिना त्रिः प्रोक्षेत् । तात्द.

प्रणीतासंस्कारः

**[1]अपरेणाग्निं पवित्रान्तर्हिते पात्रेऽप आनीयोदगग्राभ्यां पवित्राभ्यां त्रिरुत्पूय समं प्राणैर्हृत्वोत्तरेणाग्निं दर्भेषु सादयित्वा दर्भैः प्रच्छाद्य ॥**

(१) पात्रप्रोक्षणानन्तरमपरेणाग्निं प्रणीतार्थे पात्रे पवित्रं निधाय तस्मिन्नुदगग्रे पवित्रे अन्तर्धायाप आनीय पवित्राभ्यामुदगग्राभ्यां त्रिरुत्पुनाति प्रागपवर्गम् । अग्निग्रहणं पात्राधिकारात् । 'अङ्गुष्ठोपकनिष्ठिकाभ्यामुत्तानाभ्यां पाणिभ्याम्' इति कल्पान्तरे दृष्टो विशेषः । उत्पूय ता अपः समं प्राणैर्हरति । मुखेन तुल्यमित्यर्थः । हृत्वोत्तरेणाग्निं दर्भेषु संस्तीर्णेषु सादयति । अग्निग्रहणं पात्रैर्व्यवधानं मा भूदिति । सादयित्वा दर्भैः प्रच्छादयति । सर्वं चैतत् पवित्रहस्तः करोति । अनाकुला.

(२) अत्र प्रकृतयोरपि पवित्रयोः पुनर्ग्रहणात् पाण्योः प्रागग्रत्वमाचारसिद्धम् 'अङ्गुष्ठोपकनिष्ठिकाभ्यामुत्तानाभ्यां पाणिभ्याम्' (आगृ. १।३।३) इत्याश्वलायनोक्तं च ज्ञापितम् । उत्तरेणाग्निं पुनः स्तीर्णेषु दर्भेषु सादयति, 'दर्भेषु' इति वचनात् । अन्ये पूर्वस्तीर्णेषु । ¶तात्द.

ब्राह्मणोपवेशनम्

**ब्राह्मणं दक्षिणतो दर्भेषु निषाद्य ॥**

(१) प्रकृतत्वादग्नेः दक्षिणतः । तत्रापरेणाग्निं दक्षिणातिक्रम्य तूष्णीं तृणं निरस्योपवेशनमिच्छन्ति । अग्रेणाग्निं परीत्यान्ये । 'हौत्रब्रह्मत्वे स्वं(? स्वयं) कुर्वन् ब्रह्मासनमुपविश्य चि(? छ)त्रमुत्तरासङ्गं कमण्डलुं वा तत्र कृत्वाऽथान्यत् कुर्यात्' (खागृ. १।१।२६) इति कल्पान्तरम् । 'कृताकृतमाज्यहोमेषु परिस्तरणम् । तथाऽऽज्यभागौ (वा ?) । ब्रह्मा च' (आगृ. १।३।४, ५,६) इत्याश्वलायनः । अनाकुला.

¶ शेषं अनाकुलागतम् ।

(१) आपगृ. १।२०-२१; प्रका. १४.

(२) अग्निमिद्ध्वेति प्रकृतत्वात् अग्नेर्दक्षिणतो दर्भेषु कंचिद्ब्राह्मणमुपवेशयेत्, न तु दर्शपूर्णमासवद्ब्रह्माणम्, समानविधानवचनानां चोदनालिङ्गानि विनाऽत्र तदीयस्य ब्रह्मणः प्राप्त्यभावात्, 'ब्राह्मणं दक्षिणतो दर्भेषु निषाद्य' इति कृत्स्नविधानाच्च। तेनात्र ब्रह्मधर्माः वरणतृणनिरसनादयो न कर्तव्याः। पितृभूतर्त्विक्पक्षेऽपि यः पितुर्ब्रह्मा स एवात्र निषाद्यते इति नियमो नास्ति।

अन्ये तु– श्रौते ब्रह्मा दक्षिणेनाग्निं दर्भेषु निविष्टो दृष्टः। तथैव बह्वृचानां छन्दोगानां च गृह्ये ब्रह्मेत्येव चोदितः। अतोऽत्रापि 'ब्राह्मणं दक्षिणतः' इति लक्षणया ब्रह्मैव चोद्यते। तेन संभवन्तो ब्रह्मधर्मा इहापीति। तन्न, स्वगृह्यस्थस्य ब्राह्मणशब्दस्य श्रुत्यर्थत्यागेन परगृह्याल्लक्षणाश्रयणस्यायुक्तत्वात्। न च दक्षिणतो निषादितस्य ब्राह्मणमात्रस्य ब्रह्मत्वं सूत्रकारस्येष्टम्। यदि हि तथा स्यात्, 'यं ब्राह्मणं विद्यां विद्वांसं यशो नर्च्छेत्' (आपश्रौ. १४।१३।७) इत्यत्राल्पैरेवाक्षरैः 'ब्रह्मणे वरं ददाति' इति ब्रूयात्, न पुनस्त्रिगुणैः 'यो दक्षिणत आस्ते तस्मै वरं ददाति' (आपश्रौ. १४।१३।९) इति। संभवतां धर्माणां प्राप्तौ मन्त्राणामपि प्राप्तिर्दुर्वारा। 'ब्राह्मणं दक्षिणतो निषाद्य' इत्यत्रानुक्तानां मन्त्रादीनां परिसंख्येयं चेति वदतां चोक्तरीत्या स्वार्थपरत्वे संभवति दोषत्रययुक्तपरिसंख्याश्रयणं निर्हेतुकम्।

तात्.

आज्यसंस्कारः

**'आज्यं विलाप्यापरेणाग्निं पवित्रान्तर्हितायामाज्यस्थाल्यामाज्यं निरुप्योदीचोऽङ्गारान्निरूह्य तेष्वधिश्रित्य ज्वलताऽवद्युत्य द्वे दर्भाग्रे प्रत्यस्य त्रिः पर्यग्नि कृत्वोदगुद्वास्याङ्गारान् प्रत्यूह्योदगग्राभ्यां पवित्राभ्यां पुनराहारं त्रिरुत्पूय पवित्रे अनुप्रहृत्य ॥**

---

(१) आपगृ. १।२२; प्रपा. ४४ (अपरेणाग्निं पवित्रान्तर्हितायामाज्यस्थाल्यामाज्यं निरुप्य) एतावदेव; प्रका. १४; संर. ७० प्रपावत्.

(१) अथाऽऽज्यसंस्कारः। तत्र विलापनमाज्यस्य यस्मिन्कस्मिंश्चिदग्नौ भवति, उत्तरत्राऽऽज्य(? ऽग्नि)ग्रहणात्। निर्वापः आनयनम्। पुनराज्यग्रहणमनाघारेऽपि कर्मणि संस्कारः आज्यस्य यथा स्यात्– आज्यं सर्वत्र निरुप्य जुहोतीति। निरूहणं पृथक्करणम्। उदग्वचनं पित्र्येष्वपि यथा स्यात्। एतेनोद्वासनं व्याख्यातम्। अवद्योतनं ज्वलता तृणेनावदीपनम्। तत्र द्वे दर्भाग्रे पवित्रवत्संस्कृत्याऽऽज्ये प्रत्यस्यति प्रक्षिपति। द्विग्रहणम् 'एकं वा' इत्यस्याग्निहोत्रदृष्टस्य विकल्पस्य प्रतिषेधार्थम्। तेनाऽऽग्निहोत्रिकेऽपि तन्त्रे द्वे एव दर्भाग्रे भवतः। ततस्तदाज्यं त्रिः प्रदक्षिणं पर्यग्नि करोति आज्यस्य सर्वतोऽग्निं त्रिरावर्तयति तृणेनोल्मुकेन वा। तत्र पित्र्येष्वपि प्रदक्षिणं पर्यग्निकरणमिच्छन्ति। उद्वासनं निर्हरणम्। प्रत्यूहनम् अग्निना संसर्जनम्। पुनराहारं पुनराहृत्याऽऽहृत्य। त्रीण्येतानि उत्पवनानि प्रत्यगपवर्गाणि। अनुप्रहरणमग्नौ, प्रकरणात्, 'विस्रस्याद्भिः संस्पृश्य' इति कल्पान्तरात्।

अनाकुला.

(२) यद्यपि 'सर्पिराज्यं प्रतीयात्' (आपप. १।२५) इति परिभाषासिद्धं विलापनम्, तथाऽपि विलीनमप्याज्यं होमार्थेऽग्नौ कर्मार्थं पुनर्विलापयेत्। ततोऽग्नेः पश्चात् स्थापितायां पवित्रान्तर्हितायामाज्यस्थाल्यां तदाज्यमानयेत्। 'आज्यं विलाप्य' इति प्रकृतेऽपि पुनराज्यग्रहणमाज्यस्यैव निर्वापादयः, न पुनः 'दध्न एवाञ्जलिना जुहोति' (आपगृ. २२।१०) इत्यत्र पशुप्रभवस्य होमद्रव्यत्वेऽपि यदीयतदीयन्यायाद्दध्नो भवेयुरित्येवमर्थम्। केचित्– अतन्त्रकेऽपि कर्मण्याज्यं निर्वापादिभिः संस्कार्यमित्येवमर्थमिति। अग्निमित्यग्नेरेव पश्चात्, न ब्राह्मणस्येति। केचित्तु– अन्यस्मिन्नग्नौ विलापनम्, होमार्थाग्नेरेव पश्चान्निर्वाप इत्येवमर्थमिति।

अथाङ्गारानुदीचो निरूह्य निर्वर्त्य, तेष्वङ्गारेषु आज्यमधिश्रित्य, ज्वलता तृणेनावद्युत्य अधोगामिन्या दीप्त्या द्योतयित्वा, द्वे दर्भाग्रे अनियतायामे तृणाद्यन्तर्धाय छित्त्वाऽद्भिः संस्पृश्य ते युगपदाज्ये प्रक्षिपेत्, द्वे इत्यधिकशब्दात्, आचाराच्च। अथोल्मुकमादायाऽऽज्ये

प्रदक्षिणं त्रिः पर्यग्नि कृत्वा समन्ततोऽग्निमावर्त्य तदुदगवतारयेत्। अत्र निरूहणोद्वासनयोरुदगपवर्गस्य 'तथाऽपवर्गः' (आपगृ. १।६) इति सिद्धस्य पुनर्विधानमेतयोर्नित्यमुदगेवापवर्गः, न तु दैवे विकल्पेनापि प्रागपवर्गः, नापि पित्र्ये दक्षिणतोऽपवर्ग इति नियमार्थम्। तथैव पित्र्येष्वेतयोर्मध्यस्थं पर्यग्निकरणमपि संदंशन्यायाद्दैववत्प्रदक्षिणमेव। इत्थमेव शिष्टाचारः। ततोऽङ्गारान्पूर्वं निरूढान् प्रत्यूह्य पुनरायतनस्थाग्निना संयोज्य। अत्राऽऽज्यसंस्कारकाणामङ्गाराणां प्रत्यूहनविधानात् 'अपवृत्ते कर्मणि' (आपप. ४।२३) इति न लौकिकत्वम्। अवद्योतनपर्यग्निकरणाग्न्योस्तु यदा आयतनस्थादुपादानं तदा तयोरग्न्योरपवृत्तकर्मत्वेन लौकिकत्वात् त्यागः। यदा तु निरूढात् तदा तस्मिन्नेव क्षेपः। अथ पूर्ववदुदगग्राभ्यां पवित्राभ्यां पुनराहारं त्रिरुत्पूय पुनराहृत्याऽऽहृत्य त्रिरुत्पूय। अत्र पुरस्तादारभ्य पश्चान्नीत्वा पुरस्तात् परिसमाप्तिः। केचित्— आङो बलाद्विपरीतमाहुः। ततस्ते पवित्रे अनुप्रहृत्य आचारानुकूलं प्रहृत्य, यदि ग्रन्थिः स्यात्तदा विस्रस्याद्भिः संस्पृश्य प्रागग्रे अग्नौ प्रहरेदित्यर्थः। ताद.

स्रुक्स्रुवसंमार्गः

**'येन जुहोति तदग्नौ प्रतितप्य दर्भैः संमृज्य पुनः प्रतितप्य प्रोक्ष्य निधाय दर्भानद्भिः संस्पृश्याग्नौ प्रहरति ॥**

(१) संमार्जनं स्रुग्वत्। प्रतितपनं न्यग्भूतस्य तपनम्। अग्निग्रहणमनर्थकम्, अन्यत्र प्रतितपनस्यासंभवात्। तत्क्रियते दर्शपूर्णमासयोः संमार्जने ये धर्मास्तेषामिह प्राप्त्यर्थम्— आहवनीये गार्हपत्ये वा चोदितं यत्प्रतितपनं तदस्मिन्नग्नौ भवतीति। अग्निमात्रं भिद्यते, अन्यत् समानम् 'स्रुवमग्रैः' (आपश्रौ. २।४।४) इत्यादि। अग्नौ प्रहरतीति पुनरग्निग्रहणं स्रुक्संमार्जने दृष्टं वैकल्पिकमग्नौ प्रहरणं मा भूदिति। अतोऽपि विज्ञायते स्रुक्संमार्जनधर्मा इह प्रवर्तन्ते इति। पाकयज्ञेषु च दर्व्या होमः, कल्पान्तरे दृष्टत्वाद्दर्शनाच्च। यदयं समावर्तने 'दर्व्यामाधायाऽऽज्येनाभ्यानायन्' (आपगृ. १२।९) इत्यन्यपरे वाक्ये दर्वीं प्राप्तां दर्शयति। यच्चायं 'सकृदुपहत्य' (आपगृ. ७।६) इति उपघातं स्थालीपाकाद्दर्शयति तदपि नादर्व्यामुपपद्यते। तत्राऽऽज्यहोमेष्वेका दर्वी। स्थालीपाकेषु द्वे होमार्थे चावदानार्थे च। उभयोरपि संमार्जनम्, अवदानस्य होमार्थत्वात्, यथाऽग्निहोत्रे स्रुवस्य। तत्र दर्वीमग्नौ प्रतितप्येति वक्तव्यम्। येन जुहोतीति किमुच्यते? 'मध्यमेनान्तमेन वा पलाशपर्णेन' (आपगृ. २२।४) इत्यत्रापि यथा स्यात्, अग्निहोत्रे आग्निहोत्रिके च तन्त्रे यथा स्यादिति। यद्येवमञ्जलेरपि प्रसङ्गः। विवाहसर्पयज्ञादिषु ज्ञापकात् सिद्धम्। यदयमौपकार्ये पार्वणवदिति यत्नं करोति तत् ज्ञापयति— अञ्जलिहोमा अधर्मग्राहकाः यावदुक्तधर्माण इति। तेन सादनादि त्रयमञ्जलेर्न भवति। अनाकुला.

(२) येन पात्रेण दर्व्या स्रुवेणाञ्जलिना वा जुहोति तदग्नौ प्रतितप्येत्यादि व्यक्तार्थम्। दर्व्याश्च होमपात्रत्वं 'दर्व्यामाधायाऽऽज्येनाभ्यानायन्' (आपगृ. १२।९) इत्यन्यपरे वाक्ये सिद्धवद्दर्शनात्, आचाराच्च। बोधायनेन तु 'निर्ऋतिगृहीता वै दर्वी' इति दर्वीनिन्दा स्रुवविधानार्था, न तु दर्व्या निषेधार्था। अतो दर्वीस्रुवयोर्विकल्पः। तत्र केवलाज्यहोमेषु एकैव दर्वी स्रुवो वा, उपस्तरणाद्यभावात्। चर्वादिहोमेषु तु द्वे दर्व्यौ स्रुवौ वा उपस्तरणाद्यर्थं होमार्थं च। उपस्तरणाद्यर्थस्यापि संस्कारः, उपस्तरणादिप्रदानान्तस्य होमपदार्थत्वात्, श्रौते स्रुवस्यापि संस्कारदर्शनात्, आचाराच्च। दर्व्यादीनां त्रयाणां तन्त्रवद्धोमेष्वेव संस्कारः, अतन्त्रकेषु तन्त्रान्तर्गतधर्मानुपपत्तेः। तेन 'अनुगतेऽपि वोत्तरया जुहुयात्' (आपगृ. ५।२०), 'सर्षपान् फलीकरणमिश्रान्' (आपगृ. १५।६) इत्यादिषु न दर्व्यादीनां संस्कारः। अत्र 'अग्नौ प्रतितप्य, अग्नौ प्रहरति' इत्यर्थसिद्धाग्निग्रहणमेवनामा- (? तावान )यं कृत्स्नविधिरिति ज्ञापयितुम्। तेन 'स्रुवमग्रे' (तैब्रा. ३।३।१) इत्याद्यैष्टिकस्रुक्संमार्जनधर्माणामिहानुपपत्तिप्रसङ्ग एव।

(१) आपगृ. २।१–५ ; प्रका. १५.

केचित्— 'अग्नौ प्रतितप्य, अग्नौ प्रहरति' इति प्रयोजनान्तरशून्यादग्निग्रहणादैष्टिकस्रुक्संमार्गधर्मा इहापि भवन्तीति। प्रतितपनं त्वस्मिन्नेवाग्नौ। इह च संमार्गदर्भाणामग्नावेव प्रहरणम्, न पुनर्वैकल्पिकम्। तथा 'येन जुहोति' इत्यत्र सामान्यवचनं 'मध्यमेनान्तमेन वा पलाशपर्णेन' (आपगृ. २२।४) इत्याद्यतन्त्रकेऽपि कर्मणि आग्निहोत्रिके च विधौ होमार्थपात्रस्यापि संस्कारो यथा स्यादित्येवमर्थम्। अञ्जलेस्त्वपूपहोमे अवदानप्राप्त्यर्थेन 'पार्वणवत्' (आपगृ. २२।१) इति यत्नेनाञ्जलिहोमा अपूर्वा यावदुक्तधर्माण इति ज्ञापनान्न संस्कार इति।

तात.

शम्यापरिधानम्

**शम्याः परिध्यर्थे विवाहोपनयनसमावर्तनसीमन्तचौलगोदानप्रायश्चित्तेषु ॥**

(१) अथ परिधीन् परिदधाति। दर्शपूर्णमासवत्सर्वं तूष्णीम्। तत आघारसमिधौ। कुत एतत्? प्रसिद्धवदभ्यनुज्ञानाच्छम्याः परिध्यर्थं इति। परिध्यर्थे परिधिकार्ये इत्यर्थः। शम्याः लोकप्रसिद्धाः युगप्रान्तयोश्छिद्रेषु कीलरूपाः काष्ठविशेषाः। तासां सहेध्मेन संनहनम्। प्रायश्चित्तम् अद्भुतोत्पातप्रायश्चित्तम्। विवाहे च हृदयसंसर्गार्थे सर्वत्र शम्याः। विवाहादिभ्योऽन्यत्र सर्वत्र पार्वणादिषु परिधय एव। चौलग्रहणमनर्थकम्, सीमन्तातिदेशात्सिद्धम्। ज्ञापकार्थं तु एतत् ज्ञापयति— विवाहादिष्विह संकीर्तितेष्वेव शम्याः, न तैरतिदिष्टेष्विति। तेन सीमन्तादतिदिष्टे पुंसवने परिधय एव। पार्वणादिषु च पक्वहोमेषु, तथा(? तत्र) 'एवमत ऊर्ध्वम्' (आपगृ. ७।१७) इति वैवाहिकेन स्थालीपाकादिति- (? वैवाहिकस्थालीपाकातिदेश)दर्शनात्प्रसङ्गः।

अनाकुला.

(२) विवाहादिषु कर्मसु परिध्यर्थे परिधीनां कार्ये परिधीनां स्थाने इति यावत्, शम्याः युगकीलका भवन्ति। ताश्च पलाशादीनामन्यतमेन क्लृप्ताः परिधिस्थौल्यायामाः, तत्स्थानापन्नत्वात्। युक्तं चैतत्, यस्मादेवंविधे विषये वार्तिककारपादैरुक्तम्— 'संभवन्ती खलेवाली खादिरी किं नु बाध्यते।' इति।

अत्र विवाहशब्देन स्थालीपाकवर्जितः साङ्गो विवाहो गृह्यते। तद्वर्जनकारणम् 'पार्वणेन' (आपगृ. ७।२३) इत्यत्र वक्ष्यामः *। सीमन्ते शम्याविधानादेव तद्विकारे चौले चौलविकारे च गोदाने शम्याप्राप्तावपि तयोर्ग्रहणं सीमन्तविकारेऽपि पुंसवने तासां निवृत्त्यर्थम्। प्रायश्चित्तं च 'अगारस्थूणाविरोहणे' (आपगृ. २३।९) इत्यादिना विहितम्। अत्र च 'पलाशकाष्मर्य' (आपश्रौ. १।५।६) इत्यादिसूत्रोक्तगुणयुक्तांस्त्रीन् परिधीन् संस्पृष्टान् 'परिधीन् परिदधाति' (तैब्रा. ३।३।७) इत्यादिविधानात् तूष्णीं परिदध्यादिति सूत्रकारस्याभिप्रायः, 'शम्याः परिध्यर्थे' इति सिद्धवत्परिधीनङ्गीकृत्य तत्स्थाने शम्याविधानात्, आचाराच्च।

तात.

परिषेचनम्

**अग्निं परिषिञ्चति 'अदितेऽनुमन्यस्व' इति दक्षिणतः प्राचीनम्। 'अनुमतेऽनुमन्यस्व' इति पश्चादुदीचीनम्। 'सरस्वतेऽनुमन्यस्व' इत्युत्तरतः प्राचीनम्। 'देव सवितः प्रसुव' इति समन्तम् ॥**

(१) परिषेचनम् उदकेन पर्युक्षणम्। अग्निग्रहणं परिध्यधिकाराद्बहिः परिधिर्मा(? धेर्मा) भूदिति। प्राचीनमुदीचीनमित्युच्यते प्रागुदग्वा(? ञ्चा)यतं परिषेचनकर्म यथा स्यादिति। तथाऽपवर्गस्तु परिभाषासिद्ध एव। 'देव सवितः प्रसुव' इत्येतावान्मन्त्रः, कल्पान्तरेषु भूयःसु तथा दर्शनात्। बोधायनीये च विस्पष्टमेतत्

---

* 'पार्वणेनातोऽन्यानि कर्माणि व्याख्यातान्याचाराद्यानि गृह्यन्ते' इति सूत्रम्। अत्र पार्वणशब्देन वैवाहिकाग्नेयस्थालीपाको गृह्यते। तत्रेदं तात्पर्यदर्शनम्— 'नन्वेवमपि शीघ्रबोधकत्वात् वैवाहिकेनेति वक्तव्ये किमर्थमस्य विवाहाङ्गस्यापि सतो विवाहासंबन्धं तिरस्कृत्य 'पार्वणेन' इत्याह? उच्यते— इतराङ्गवदस्य न शम्याः, किंतु शिष्टाचारसिद्धाः परिधय एवेत्येवमर्थम्।' इति।

'अन्वमंस्थाः प्रासावीरिति मन्त्रान्तान् संनमयति' ( बौगृ. १।४।३७ ) इति । छन्दोगानामेव त्वयं मन्त्रादिः । समन्तं सम( ? समन्ततः ) इत्यर्थः । तत्र पुरस्तादुपक्रम्य प्रदक्षिणं सर्वत्र प्रतिमन्त्रमुदकदानम् ।

अनाकुला.

( २ ) अग्निमेवोदकेन परिषिञ्चति, न परिध्याद्यङ्गमपि । तद्विधिमाह– अदितेऽनुमन्यस्वेत्यादिना । प्राचीनं प्रागायतम् । उदीचीनं उदगायतम् । समन्तं सर्वतः । अत्र 'देव सवितः प्रसुव' इत्येतावानेव मन्त्रः, नर्चं आदिप्रदेशः, तथा नोत्तरे परिषेचने 'प्रासावीः' इति प्रसुवपदस्योहः, वैश्वदेवकाण्डे एकाग्निविधावेवमेवाऽऽम्नातानाम् 'अदितेऽनुमन्यस्व' इत्यादीनामष्टानां यजुषां पूर्वोत्तरपरिषेचनस्थेष्वष्टसु व्यापारेषु श्रुतिस्थानाभ्यां विनियोगात्, वाजपेयप्रकरणस्थाया ऋचः स्वतोऽत्रापि विनियोगायोग्यत्वात्, आदिप्रदेशे समुदायलक्षणापत्तेः, यजुःप्राये मन्त्राष्टके ऋचोऽप्रतीतत्वात्, ऊहपक्षे आर्षपाठबाधप्रसङ्गात्, 'तस्मादृचं नोहेत्' इति बह्वृचश्रुतिविप्रतिषिद्धस्य ग्रहणप्रसङ्गात्, अस्मदीयानामाचाराच्च । विस्पष्टं चैतत् बोधायनानाम्– 'अन्वमंस्थाः, प्रासावीरिति मन्त्रान्तान् संनमयति' ( बौगृ. १।४।३७ ) इति । एवं चोत्तरपरिषेचने 'अन्वमंस्थाः, प्रासावीः' इति पूर्वमन्त्रेभ्यो विशेषमात्रस्य पाठः, न पुनरूहः । यथाऽग्नौ 'एतेनैव त्रैष्टुभेन छन्दसाऽहरिष्टकामुपदधे' इति । संनामशब्दश्चात्र गौणः । अत एवैते मन्त्राः वैश्वदेवकाण्डमुपाकृत्य प्रागुत्सर्जनादध्येतव्याः, ब्रह्मयज्ञपारायणयोश्च ।

तात्.

पैतृकेषु परिषेचने विशेषः

**पैतृकेषु समन्तमेव तूष्णीम् ॥**

अक्रियमाण एवकारे समन्तपरिषेचने मन्त्रप्रतिषेधार्थमेतत् स्यात् । एवकारात्तु दक्षिणतः प्राचीनमित्यादेः त्रयस्य निवृत्तिः ।

§ अनाकुला.

§ तात्. अनाकुलावत् ।

आघारौ

**इध्ममाधायाऽऽघारावाघारयति दर्शपूर्णमासवत्तूष्णीम् ॥**

( १ ) इध्म इति समुदायस्योपदेशात् पञ्चदशदारुमिध्मं सकृदेवाऽऽदधाति । 'अभिघार्य' इति कल्पान्तरम् । दर्शपूर्णमासवदिति 'उत्तरं परिधिसंधिमन्ववहृत्य', 'दक्षिणं परिधिसंधिमन्ववहृत्य' इत्येवमादिना विधाने तूष्णीमिति मन्त्रोच्चारणप्रतिषेधः । तेन 'प्रजापतिं मनसा ध्यायन्' इत्येतदपि न भवति, मनसा मन्त्रोच्चारणं तत्र विधीयत इति कृत्वा । काम्यानामाघारकल्पानामिहाप्रवृत्तिः, प्रकृति( ? त )विषयत्वात्तेषाम् । केचित् स्रुवेण पूर्वमाघारमिच्छन्ति । अन्ये पुनः उभावपि दर्व्यैव । वेदोपभृतोरभावात् उपयमनमपि न भवति । आसीन एव चेतरमप्याघारं जुहोति । न चाभिप्राणिति । अत्र प्रमाणमुपरिष्टाद्वक्ष्यामः ।

अनाकुला.

( २ ) इध्ममग्नावादधाति । स च खादिरः पालाशो वा पञ्चदशसंख्याकोऽर्थलक्षणस्थौल्यायामः, इध्मनामधेयात्, श्रौते दर्शनाच्च । युगपच्चाऽऽधानम्, 'इध्मम्' इत्येकवचनेन समुदायस्य विवक्षितत्वात् । तच्च तूष्णीम्, मन्त्रस्याविधानात् । अन्ये– 'तूष्णीम्' इत्यारभ्येदमेकं सूत्रं कृत्वा, हिरण्यकेशिनां यो मन्त्रः 'अयं त इध्मः' इति, सः 'अनुक्तमन्यतो ग्राह्यम्' इति न्यायेन नोपसंहर्तव्य इति व्याचक्षते । तेषां पैतृकेषु समन्तपरिषेचनं समन्त्रकं स्यात् । केचित् ग्रह्यान्तरात् इध्मोऽभिघार्याऽऽधेय इति । आघारौ आघारनामकौ होमौ द्वौ । आघारयति दीर्घधारया जुहोति, दर्शपूर्णमासवत् । 'उत्तरं परिधिसंधिमन्ववहृत्य... दक्षिणाप्राञ्चमृजुं संततं ज्योतिष्मत्याऽऽघारमाघारयन् सर्वाणीध्मकाष्ठानि संस्पर्शयति' ( आपश्रौ. २।१२।७ ) 'दक्षिणं परिधिसंधिमन्ववहृत्य' ( आपश्रौ. २।१३।८ ) 'प्राञ्चमुदञ्चम्' ( आपश्रौ. २।१४।१ ) इत्यादि 'ऋजू प्राञ्चौ होतव्यौ तिर्यञ्चौ वा व्यतिषक्तावव्यतिषक्तौ वा' ( आपश्रौ. २।१२।८ ) इति वैकल्पिकास्त्रय आघारपक्षा एव दर्शपूर्णमासाभ्यां तुल्यं कर्तव्याः, न पुनर्द्वितीयाघारस्य 'पूर्वार्धे मध्ये

पश्चार्धे वा जुहुयात्' (आपश्रौ. २।१४।८) इत्यनाघारपक्षोऽपि। इमौ च द्वावप्यासीनो दर्व्या तूष्णीमाघारयति, दर्वीहोमानामपूर्वत्वेनैष्टिकाघारधर्माणां मन्त्राणां चाप्राप्तेः। तूष्णीमिति 'तूष्णीं पञ्चाऽऽज्याहुतीर्हुत्वा' (आपगृ. २२।४) इतिवत् स्वाहाकारस्यापि निवृत्त्यर्थम्। अत उभयोरप्याघारयोः प्रजापतिर्देवता, 'यत्तूष्णीं तत्प्राजापत्यम्' (तैब्रा. २।१।४) इति श्रुतेः। कथं पुनरिमावजुहोतिचोदनौ दर्वीहोमौ ? उच्यते– यद्यपि जुहोतीत्येवं न चोदनाऽस्ति, तथाप्याघारयतीति दीर्घधारागुणकजुहोतिचोदनार्थत्वात् याज्ञिकप्रसिद्धेश्च दर्वीहोमावेव। किंच 'अथाऽऽज्यभागौ जुहोति' (आपगृ. २।६) इत्याज्यभागौ स्पष्टमेव दर्वीहोमौ, तत्साहचर्यादाघारावपि तथा। यथा अंश्वोरनारभ्याधीतस्य विनियोगसंनिधेरभावेऽप्यदाभ्यसाहचर्यात् सोमनियोगसंबन्धः।

एवं वा व्याख्यानम्– आघारावाघारयति। 'पुरस्तादुदग्वोपक्रमः' (आपगृ. १।५) इत्येतस्मात्परत्वेन प्रबलां 'तथाऽपवर्गः' (आपगृ. १।६) इति गार्ह्यपरिभाषामनुसृत्य प्रागपवर्गाभ्यामुदगपवर्गाभ्यां वा दीर्घधाराभ्यां जुहोति, न तु कोणदिगपवर्गाभ्याम्। नाप्यैष्टिकाघारधर्मा मन्त्राश्च, अपूर्वत्वादेव। देवते तु दर्शपूर्णमासवत् प्रथमस्य प्रजापतिः, द्वितीयस्येन्द्र इत्यर्थः। तूष्णीमिति पूर्ववदेव।

अन्ये तु– आघाराविति नामधेयं 'मासमग्निहोत्रं जुहोति' इतिवत् ऐष्टिकाघारधर्मातिदेशकम्। अत्र 'स्रुवेण ध्रुवाया आज्यमादाय... आसीनोऽन्यम्(? आसीन उत्तरम्)... आघारमाघारयन्' (आपश्रौ. २।१२।७) 'जुहेहीति जुहूमादत्ते' (आपश्रौ. २।१३।२) इत्यादिषु सर्वेषु आघारधर्मेषु तन्मन्त्रेषु च प्राप्तेषु '(आघारौ ? *) आघारयति' इति परिसंख्यार्थम्– आघारयतीति दीर्घाधाराधर्मकावेव होमौ कुर्यात्, नान्यधर्मकाविति। 'तूष्णीम्' इति तु धर्मावान्तरभेदानां मन्त्राणां निवृत्त्यर्थम्। दर्शपूर्णमासवदिति त्वनर्थकमेव– इत्याहुः। तन्न, दर्वीहोमयोरपूर्वयोः विशेषतश्चाङ्गभूतयोः धर्मातिदेशानपेक्षत्वात्, स्वतश्च नाम्नो धर्मलक्षणाया अयुक्तत्वात्, आघारयतीत्यत्र च सति गत्यन्तरे परिसंख्याया अन्याय्यत्वात्, आघारव्यतिरिक्तधर्मपरिसंख्याने चातिदेशवैफल्यात्, परिसंख्यायाश्च मन्त्रपरिसंख्यानेऽपि सामर्थ्यात् तूष्णींपदस्य वैयर्थ्यापत्तेः, दर्शपूर्णमासवदिति पदं व्यर्थमिति स्वेनैवोक्तत्वात्, 'आघारावाघारयति' इति च पदयोरतिदेशपरिसंख्यार्थत्वे होमविधायकशब्दाभावात्, तद्भावाय च परिसंख्यात्यागे सर्वेषामाघारधर्माणां शिष्टाचारविरुद्धानुष्ठानापातात्, आज्यभागादीनामपीत्थमतिदेशे अभ्युपेये तत्राप्यैष्टिकाज्यभागादिधर्माणां सर्वेषामनुष्ठानप्रसङ्गाच्च। तस्मात्पूर्वे एव व्याख्याने सुष्टू (?सुष्ठु)। यतः अपूर्वाविवाऽऽघारौ, यतश्च 'समिदभावश्च। अग्निहोत्रवर्जम्।' (आपप. ३।८,९) इति परिभाषा, अत एव आघारसमिधोर्निवृत्तिः। अन्ये कुर्वन्ति। तस्मिन्पक्षे परिधिनिधानानन्तरम्, श्रौते तथा दृष्टत्वात्। अनूयाजसमित् अनुयाजाभावादेव निवृत्ता। तेनेध्मसंनहनं परिधिभिः सहाष्टादशधा, विंशतिधा वा, न पुनरेकविंशतिधा। ताद.

* 'आघारौ' इति नामधेयस्य ऐष्टिकधर्मातिदेशकत्वात् 'आघारयति' इति पदस्यैव परिसंख्यार्थत्वात् 'आघारौ' इति पदमत्राधिकं प्रमादपतितमिति भाति।

### आज्यभागौ

**[1]अथाऽऽज्यभागौ जुहोति 'अग्नये स्वाहा' इत्युत्तरार्धपूर्वार्धे 'सोमाय स्वाहा' इति दक्षिणार्धपूर्वार्धे समं पूर्वेण ॥**

(१) अग्नेरुत्तरभागः उत्तरार्धः, पूर्वभागः पूर्वार्धः, तयोरन्तरालमुत्तरार्धपूर्वार्धः। सममिति देशतः। समं तौ होतव्यौ न विषमावित्यर्थः। उपदेशादाघारानन्तर्ये सिद्धे अथेति वचनं संबोधनार्थम्। किं सिद्धं भवति ? आघारयोराज्यभागयोश्च साधर्म्यं सिद्धं भवति। तेन ज्योतिष्मत्यग्नौ होमः। आघारयोः प्रसिद्धो धर्मः। तस्याऽऽज्यभागयोरपि प्रवृत्तिः। तथा आज्यभागयोः प्रसिद्धो धर्म आसीनहोमोऽप्युच्छ्वासाभावश्च। तस्या-

(१) आपगृ. २।६ ; प्रपा. ४७ ; प्रका. १५.

ऽऽघारयोरपि प्रवृत्तिः । तेन यदुक्तमुत्तरस्मिन्नप्याघारे स्थानाभिप्राणने न भवत इति तदुपपन्नं भवति । आज्यभागाविति होमयोः संज्ञा । प्रयोजनम् 'अग्नेरुपसमाधानाद्याज्यभागान्ते' इत्येवमादयः । अनाकुला.

(२) अथ आघारानन्तरमर्थकृत्यमप्यकृत्वा आज्यभागनामकावपूर्वौ होमौ जुहोति । तत्र प्रथमम् 'अग्नये स्वाहा' इति मन्त्रेणाग्नेरुत्तरार्धपूर्वार्धे, प्रागुदीच्यामित्यर्थः । द्वितीयं 'सोमाय स्वाहा' इति दक्षिणार्धपूर्वार्धे, दक्षिणपूर्वस्यामित्यर्थः । समं पूर्वेण आघारसंभेदमवधिं कृत्वाऽक्षणया रज्ज्वा यावत्यन्तरे पूर्वो हुतः तावत्यन्तरे एवोत्तरं जुहोति, न पुनः संनिकृष्टं विप्रकृष्टं वा । तात्.

प्रधानाहुतयः, जयादिसौविष्टकृतान्ता उपहोमाः

**'यथोपदेशं प्रधानाहुतीर्हुत्वा जयाभ्यातानान् राष्ट्रभृतः प्राजापत्यां व्याहृतीर्विहृताः सौविष्टकृतीमित्युपजुहोति-- 'यदस्य कर्मणोऽत्यरीरिचं यद्वा न्यूनमिहाकरम् । अग्निष्टत्स्विष्टकृद्विद्वान् सर्वं स्विष्टं सुहुतं करोतु स्वाहा' इति ॥**

(१) यथोपदेशमिति । यस्मिन्यस्मिन् कर्मणि याः प्रधानाहुतयः इत्युपदिश्यन्ते, यथा 'अन्वारब्धायामुत्तरा आहुतीः' (आपगृ. ५।१) इति, तास्ता इत्यर्थः । जयाः 'चित्तं च चित्तिश्च' (तैसं. ३।४।४) इत्येवमादयः । अभ्यातानाः 'अग्निर्भूतानाम्' (तैसं. ३।४।५) इत्यादयः । राष्ट्रभृतः 'ऋताषाडृतधामा' (तैसं. ३।४।७) इत्यादयः । 'प्रजापते न त्वदेतानि' इत्येषा प्राजापत्या । व्याहृतयः प्रसिद्धाः । विहृतवचनं समस्तनिवृत्त्यर्थम् । एतेषामनुपदेशः सिद्धत्वात् । सौविष्टकृती अप्रसिद्धत्वात्पठिता ।

ननु एषाऽपि सूत्रे पठिता— 'यदस्य कर्मणोऽत्यरीरिचं यद्वा न्यूनमिहाकरम् । अग्निष्टत्स्विष्टकृद्विद्वान् सर्वं स्विष्टं सुहुतं करोतु (स्वाहा ?)' (आपश्रौ. ३।१२।१) इति सर्वप्रायश्चित्तेषु । एवं तर्हि एतत् ज्ञापयति— पाकयज्ञविधिरयमन्येषामपि केषांचित् साधारण इति । दृश्यते च कालगिरेयाणामनेन प्रवृत्तिः । विवाहादिषु कर्मसु ये होमाश्चोदितास्तेष्वेतस्य प्राप्त्यर्थं तेषां कालोपदेशार्थमिदम्, जयादीनां पुरस्तादाज्यभागयोश्चोपरिष्टात् प्रधानाहुतय इति नार्थः, एतदर्थेनानेन तत्रैवोभयोरप्युपदिष्टत्वात् । 'अग्नेरुपसमाधानाद्याज्यभागान्त उत्तराहुतीर्हुत्वा' इति 'स्थालीपाकाज्जुहोति' इत्यतिदेशात्तत्र प्राप्तिः । पार्वणे तु यथा तथा आग्नेयस्थालीपाकविधौ वक्ष्यामः ।

अथ येषु 'आज्यभागान्ते' इति वा 'जयादि प्रतिपद्यते' इति वा वचनं नास्ति, यथा पण्यफलीकरणहोमे, तत्र प्राप्त्यर्थमिदमुच्यते । विवाहादिषु तन्त्रविधानमनर्थकम्, 'आज्यभागान्ते' 'जयादि प्रतिपद्यते' इति वचनात् । पण्यहोमादयोऽपूर्वा यावदुक्तधर्माणः । इदं तर्हि प्रयोजनं कल्पान्तरोक्तानि नित्यानि नैमित्तिकानि काम्यानि वा यद्यस्मदादिभिरनुष्ठीयन्ते तदा तेष्वपि एतस्य तन्त्रस्य प्रवृत्तिर्यथा स्यादिति । नन्वेतदपि पार्वणातिदेशदर्शनात् सिद्धम् 'आचाराद्यानि गृह्यन्ते' इति, सत्यम्, पक्वहोमेषु सिद्धम्, न त्वाज्यहोमेषु 'कूश्माण्डैर्घृतम्' इत्यादिषु, तस्यापक्वविषयत्वात् । विवाहादिषु तन्त्रविधाननियमार्थं यस्मिन् गृहमेधचोदितास्तेषु अत्र 'अग्नेरुपसमाधानाद्याज्यभागान्ते' इति 'जयादि प्रतिपद्यते' इति वा वचनं तत्रैव तन्त्रप्रवृत्तिः इति । तेन पण्यहोमादयो यावदुक्तधर्माण इति सिद्धम् । प्रधानाहुतिग्रहणं जयादेराज्यभागान्तस्य च तत्र प्रसिद्ध्यर्थम् । उपजुहोतीति उपशब्द आनन्तर्यार्थः । तेन प्रधानाहुत्यनन्तरमुपहोमाः । तेनेशानयज्ञे परिषेचनान्ते बलिहरणं भवति । श्राद्धे वाऽनुपदेशनं स्थालीपाके च बर्हिरनुप्रहरणम् । सौविष्टकृतीमित्युच्यते स्विष्टकृद्देवतेति ज्ञापनार्थम् । तेनाऽऽज्यहोमस्विष्टकृत् पक्वहोमेषु भवति । अनाकुला.

(२) यथोपदेशं येन येन हविरादिना विवाहादिषु प्रधानाहुतय उपदिष्टास्तेन तेन विधानेन ता हुत्वा । जयाः 'चित्तं च स्वाहा' (तैसं. ३।४।४) इति त्रयोदश । 'अग्निर्भूतानामधिपतिः स माऽवत्व-

(१) आपगृ. २।७-८ ; प्रका. १५.

सिन्' (तैसं. ३।४।५) इति सानुषङ्गा अभ्याताना अष्टादश। 'ऋताषाट्' (तैसं. ३।४।७) इति राष्ट्रभृतो द्वाविंशतिः। तत्र ऋताषाडित्यनुद्रुत्य तस्मै स्वाहेत्यन्तेन प्रथमामाहुतिं जुहोति। 'ताभ्यः स्वाहा' इत्येतावतैवोत्तराम्। एवमुत्तरे पञ्च पर्यायाः। तत्र 'नाम स इदं ब्रह्म' इत्यनुषङ्गः, 'ताभ्यः स्वाहा' इति च। 'भुवनस्य पते ... स्वस्तिं स्वाहा' इति त्रयोदशी। 'परमेष्ठी' इत्यादयः पूर्ववच्चत्वारः पर्यायाः। 'स नो भुवनस्य पते ... यच्छ स्वाहा' इति द्वाविंशी। 'प्रजापते न त्वदेतानि' इति ऋक् प्राजापत्या, 'प्राजापत्यर्चा वल्मीकवपायामवनयेत्' (तैब्रा. ३।७।२) इति श्रुतेः, सूत्रकारेण 'प्रजापते न त्वदेतानीति प्राजापत्यर्चा वल्मीकवपायामवनीय' (आपश्रौ. ९।२।४) इति व्याख्यातत्वात्। व्याहृतीः विहृताः, 'भूः स्वाहा, भुवः स्वाहा, सुवः स्वाहा' इति। सौविष्टकृती 'यदस्य कर्मणः' इत्यृक्। अत्र चास्याः स्विष्टकृद्देवताकत्वं लिङ्गादेव सुगमम्। देवताज्ञानस्य कर्माङ्गत्वमपि 'यो ह वा अविदितार्षेयच्छन्दोदेवताब्राह्मणेन मन्त्रेण याजयति वाऽध्यापयति वा स्थाणुमृच्छति' इत्यादिश्रुतेः, 'अविदित्वा ऋषिं छन्दो दैवतं योगमेव च। योऽध्यापयेज्जपेद्वाऽपि पापीयान् जायते तु सः॥' इति स्मृतेश्च सिद्धम्। अतो यत्राऽऽर्षेयादिज्ञानानां नैवंविधः पुनर्विधिः तत्र तानि पाक्षिकाणीति गम्यते। एवमेता जयादिका अष्टपञ्चाशदाहुतीः प्रधानहोमानन्तरमुपजुहोति। यत्रापि सर्पबल्यादौ पार्वणातिदिष्टः स्विष्टकृत् तत्रापि प्रधानाहुत्यनन्तरमेवैताः, ततः स्विष्टकृत्, क्त्वाप्रत्ययात्, उपोपसर्गाच्च।

केचित्— स्विष्टकृतोऽनन्तरं जयादयः, 'अग्निः स्विष्टकृद्द्वितीयः' (आपगृ. ७।७) इति स्विष्टकृतः प्रधानतुल्यधर्मत्वज्ञापनादिति। ननु यत्रैव सर्वप्रधानहोमानन्तरं साधारण्येन जयादय उपदिष्टाः, किमर्थं तत्र तत्र 'जयादि प्रतिपद्यते' इति वचनम्? उच्यते— यत्रैतद्वचनं नास्ति पार्वणादौ, न तत्र जयादय इत्येवमर्थम्। एवं तर्ह्यत्र साधारणविधानमेवानर्थकम्। न, केवलं जयादिविध्यर्थत्वात्। अन्यथा विवाहादावेतेष्वन्वारम्भोऽपि स्यात्। किं च असिन्नसति तत्र तत्र 'जयाभ्यातानान्' इत्यादि 'मन्त्रसंनामः' इत्यन्तो गुरुर्ग्रन्थः पुनः पुनः पठितव्यः स्यात्। तस्मादन्वारम्भादिनिवृत्त्यर्थं ग्रन्थलाघवार्थं चेदं साधारणविधानम्।

केचित्— यत्राऽऽज्यभागान्तं पुरस्तात्तन्त्रं तत्र सर्वत्र जयाद्युत्तरतन्त्रम्, एतयोर्मध्ये 'यथोपदेशं प्रधानाहुतीः' इत्यविशेषेण प्रधानहोमानां विधानात्। आग्नेयेऽपि च स्थालीपाके जयादिर्विद्यत एव, 'सिद्धमुत्तरम्' (आपगृ. ७।१४) इति पदद्वयसूत्रेण जयाद्युत्तरतन्त्रोपदेशात्, मासिश्राद्धे च 'पार्वणेन' (आपगृ. २२।१) इत्यतिदेशात्। आज्यहोमेषु जयाद्यनन्तरं श्रौतवत् तूष्णीं परिधीनग्नौ प्रहृत्य तान् दर्वीसंस्रावेणाभिजुहोति, परिधितत्संस्काराणां श्रौतवदभ्यनुज्ञानस्योक्तत्वात्, कृतकार्याणां प्रतिपत्त्यपेक्षत्वात्, आचाराच्च। शम्याश्चेत्, अस्मिन् काले अपोह्याः, 'अथ शम्या अपोह्य' (बौगृ. १।४।३७) इति बोधायनवचनात्, आचाराच्च। ताद.

परिषेचनम्

**पूर्ववत् परिषेचनम्, 'अन्वमंस्थाः, प्रासावीः' इति मन्त्रसंनामः॥**

(१) पूर्ववदिति। पैतृकेषु समन्तमेव तूष्णीम्। अन्यत्र मन्त्रवन्ति चत्वारि परिषेचनानि। संनमनं संनामः, ऊह इत्यर्थः। 'अनुमन्यस्व' इत्यस्य 'अन्वमंस्थाः' इति संनामः। 'प्र सुव' इत्यस्य 'प्रासावीः' इति। प्राक् परिषेचनात् तूष्णीं परिधीनां प्रहरणम्। पुरस्तादुपहोमानामेकविंशत्या(? विंश्या) समिधोऽभ्याधानम्। बर्हिरनुप्रहरणमाज्यहोमेषु नास्ति, लेपयोरित्यस्य पक्वहोमविषयत्वात्। परिषेचनान्ते प्रणीताविमोकः। ब्रह्मा च कर्मान्ते यथेतं प्रतिनिष्क्रामति। मन्त्रसंनाम इति मन्त्रग्रहणं मन्त्राणामयमूहविधिर्यथा स्यात्। अन्यथा अग्नेरपि संनामः संभाव्येत, संनामशब्दस्यान्यत्रापि दर्शनात्, यथा— 'संनमयत्यनुमार्ष्टि वा' इति।

अनाकुला.

(२) अग्निपरिषेचनं पूर्ववत्। अयं तु विशेषः— 'अदितेऽनुमन्यस्व' इत्यादिषु त्रिषु 'अनुमन्यस्व' इत्यस्य

स्थाने 'अन्वमंस्थाः' इति, 'देव सवितः' इत्यत्र 'प्रसुव' इत्यस्य स्थाने 'प्रासावीः' इति । अत्र श्रौतवत् प्रणीता विमुञ्चति तूष्णीम्, कृतकार्याणामासां प्रतिपत्त्यपेक्षत्वात्, 'प्रणीताभ्यो दिशोऽभ्युपनीय' (बौगृ. १।४।३८) इति बोधायनवचनात्, आचाराच्च । ब्राह्मणश्च यथाशक्ति दानमानादिना सत्कृतो गच्छेत् ।

अत्रेयं स्थितिः— 'अग्निमिद्ध्वा' इत्यादिः 'मन्त्रसंनामः' इत्यन्तः प्राच्योदीच्याङ्गसमुदायः सर्वगार्ह्यप्रधानहोमानां साधारणः, 'यथोपदेशं प्रधानाहुतीर्हुत्वा' इति प्राच्योदीच्यपदार्थापेक्षया होमानामविशेषेण प्राधान्याभिधानात् । एवं च अहोमेषु नामकरणादिषु तन्त्रस्याप्रसङ्ग एव ।

नन्वेवं 'अग्नेरुपसमाधानाद्याज्यभागान्ते' इति किमर्थस्तत्र तत्र पुनरुपदेशः ? उच्यते— यत्र केवलाज्यहविःषु उपनयनादिषु अस्योपदेशः तत्रैवेदं तन्त्रम्, यत्र पुनः 'अपि वोत्तरया जुहुयात्' (आपगृ. ५।२०) 'काममन्युभ्यां वा जुहुयात्' (आध. १।२६।१३) इत्यादिषु नोपदेशः, नैव तत्रेदं तन्त्रमिति नियमार्थः । कुत एतत् ? केवलाज्यहविःष्वेव प्रयोजनान्तरमन्तरेणास्य तन्त्रस्योपदेशात् । उपाकरणसमापनादीनां तु तत्र तन्त्रोपदेशाभावेऽपि 'कूश्माण्डैर्जुहुयाद्घृतम्' इत्यादेरिव तन्त्रार्थित्वावगमात् अनेन साधारणविधानेनैव तन्त्रम् । तन्त्रार्थित्वावगमस्तु गृह्यान्तरेषु तन्त्रवतामेवोपदेशात्, आपस्तम्बदर्शनानुगतोपदेशात्, अविगीतशिष्टाचाराच्च ।

यद्येवमाज्यौषधहविष्केऽपि विवाहे किमर्थस्तन्त्रोपदेशः ? उच्यते— लाजहोमानां कृत्स्नविधानेन तन्त्रानपेक्षत्वात् उपनयनादिवदाज्यहोमार्थ एव तन्त्रोपदेशः । तथा 'तस्मिन्नुपविशत उत्तरो वरः' (आपगृ. ४।९) इत्यस्यानन्तरमेवाग्नेरुपसमाधानादि, न तु 'यथास्थानमुपविश्य' (आपगृ. ५।१) इत्यस्यानन्तरमिति क्रमार्थश्च । तथा केवलौषधहविषि स्थालीपाकेऽपि क्रमार्थ एव । यद्यपि श्रौते दर्शनात् पात्रप्रोक्षणानन्तरमवघातादि युक्तम्, तथाऽप्येतद्वचनबलात् तन्त्रात् पुरस्ता-



देवेति । ऐशानेऽपि स्थालीपाके स्थण्डिलकल्पनान्ते तन्त्रम्, न तु पार्वणवद्गृह एव प्रतिष्ठिताभिघारणानन्तरमिति क्रमार्थ एव । केचित्— कल्पान्तरविहितेषु अपार्वणातिदेशेषु आज्यहोमेषु तन्त्रार्थिषु 'कूश्माण्डैर्जुहुयाद्घृतम्' इत्यादिष्वस्य प्राप्त्यर्थं यथोपदेशमिति सामान्यविधानम् । अत्रत्येषु तु विवाहादिषु येष्वेव पुनर्विधानं तत्रैव, नान्यत्र पण्यहोमादिष्विति नियमार्थं तत्र तत्र तन्त्रविधानम् । पित्र्येषु तु 'एकैकशः पितृसंयुक्तानि' (आपगृ. १। १८) इत्यादिविशेषविधानात्तन्त्रसिद्धिरिति । ताद.

पाकयज्ञपदार्थः

**[1]लौकिकानां पाकयज्ञशब्दः ॥**

(१) लोके भवा लौकिकाः लोकस्मृतिलक्षणा इत्यर्थः । लोकशब्देन शिष्टा उच्यन्ते । पाकयज्ञ इति विवाहादीनां संज्ञा विधीयते । पाकशब्दः अल्पवचनः, यथा 'क्षिप्रं यजेत पाको देवः' (आपगृ. २०।१५) इति । पाकगुणको यज्ञः पाकयज्ञ इति निर्वचने आज्यहोमेषु संज्ञा न स्यात् । तत्संज्ञाप्रयोजनं 'यज्ञं व्याख्यास्यामः' (आपप. १।१) इत्यत्र एतेषामन्तर्भावः, 'निर्ऋतिं पाकयज्ञेन यजेत' इत्यत्र च धर्मप्राप्तिः । अनाकुला.

(२) एवं सर्वगार्ह्यहोमानां साधारणं स्मार्तं विधिमुक्त्वा इदानीं पाकयज्ञेषु वैकल्पिकं श्रौतं विधिमाह— लौकिकानामिति । लोकयन्ति वेदैर्वेदार्थानिति लोकाः त्रैविद्यवृद्धाः द्विजन्मानः । तैर्लोकैराचर्यन्ते यानि कर्माणि तानि लौकिकानि, तेषां मध्ये सप्तानामौपासनहोमादीनां पाकयज्ञशब्दः संज्ञात्वेन प्रसिद्धः, न तु श्रौतानां विवाहादीनां च, तत्र लोकानामप्रयोगात् । यदि लोकप्रयोगादेवैषां पाकयज्ञनामता प्रसिद्धैव, तर्हि 'पाकयज्ञेषु ब्राह्मणावेक्षो विधिः' इत्येतावताऽलम्, किमर्थं 'लौकिकानां पाकयज्ञशब्दः' इति ? उच्यते— पाकेन पक्वेन चरुणा साध्यो यज्ञः पाकयज्ञः इत्येवं व्युत्पन्न-

---

(१) आपगृ. २।९ ; गोभि. ८।१९ ; चम. ११८ ; मुक्ता. ६८.

संज्ञानुवादात् नान्तरीयकावगतश्रुरुरेवाऽऽग्निहोत्रिकविधौ हविः, न पुनर्विध्यन्तरवदाज्यादिकमपीति नियमज्ञापनार्थम्। बौधायनेन तु अत्र आज्यं हविरुपदिष्टम्। न त्वाग्निहोत्रिकं हविरिह भवति, अग्निहोत्रधर्मप्रापकप्रमाणाभावात्। 'द्विर्जुहोति' (आपगृ. २।११) इत्येवमादयः पुनः पञ्च पदार्था वचनबलाद्भवन्ति। देवतास्तु तत्तन्मन्त्रप्रतिपाद्या एव। ताद.

ब्राह्मणावेक्ष (आग्निहोत्रिक) तन्त्रम्

[१]**तत्र ब्राह्मणावेक्षो विधिः॥**

**द्विर्जुहोति, द्विर्निमार्ष्टि, द्विः प्राश्नाति, उत्सृप्याऽऽचामति, निर्लेढीति॥**

(१) तत्र तेषु पाकयज्ञेष्वपरो विधिर्ब्राह्मणावेक्ष इत्याचक्षते। ब्राह्मणमात्मनि प्रमाणत्वेनावेक्षते इति ब्राह्मणावेक्षः ब्राह्मणदृष्ट इत्यर्थः। विधिः-प्रयोगः। यः प्रागुक्त आघारवान् दर्शपूर्णमासप्रकृतिः, अयं त्वग्निहोत्रप्रकृतिः ब्राह्मणावेक्षः। उभयोर्विकल्पस्तत्रेत्युच्यते—येषु पाकयज्ञेषु आघारवतस्तन्त्रस्य प्रवृत्तिः तत्रैवास्य विकल्पेन प्राप्तिरिति दर्शनार्थम्। तेन पण्यहोमादिषु अस्य विधेरप्रवृत्तिः। तत्र 'द्विर्जुहोति' इत्यनेन अग्निहोत्राहुत्योरुभयोर्धर्मः पाकयज्ञेषु प्रधानाहुतिं स्विष्टकृतं चाधिकृत्य विहितो वेदितव्यः। 'द्विर्निमार्ष्टि' इति चाग्निहोत्रवल्लेपनिमार्जनम्। 'द्विः प्राश्नाति' इत्यङ्गुलिप्राशनम्। 'उत्सृप्याऽऽचामति' इति च यत्तत्र तृतीयं प्राशनं 'बर्हिषोपयम्योदङ्ङावृत्योत्सृप्याऽऽचामति' इति, तच्चोदितम्। 'निर्लेढि' इति यत्तत्र 'द्विः स्रुचं निर्लिह्य' इति च, तच्चोदितम्। यावता च विधानेन होमादिसंसिद्धिस्तावदमन्त्रवदग्निहोत्रादेव प्रत्येतव्यम्। तद्यथा— स्रुवेणोन्नयनम्, पालाशी समिदाहुतिधारणार्था, चतुर्गृहीतं पञ्चगृहीतमिति। तत्र प्रयोगः— अग्निमिद्ध्वा परिसमूह्य, परिस्तीर्य, पर्युक्ष्य, आज्यहोमेष्वाज्यं संस्कृत्य, पक्वहोमेषु स्थालीपाकम्, स्रुक्स्रुवं संमृज्य यावत्प्रधानाहुति चतुर्गृहीतानि पञ्चगृहीतानि वा समवद्यति। यत्रोभयं हविस्तत्र तस्योभयस्य, यथा मासिश्राद्धे। ततः पश्चादग्नेर्बर्हिष्युपसाद्य पालाशीं समिधमाधाय सर्वानेव मन्त्रान् समनुद्रुत्य सकृदेव प्रधानाहुतीर्हुत्वा प्रातरग्निहोत्रवल्लेपमपमृज्य बर्हिषि निमार्ष्टि यद्यहनि कर्म। अथ रात्रौ सायमग्निहोत्रवत्। ततः सौविष्टकृतीं द्वितीयामाहुतिं उत्तराहुतिवज्जुहोति— अग्नये स्विष्टकृते स्वाहेति स्थालीपाकेषु, यदस्य कर्मण इत्याज्यहोमेषु। ईशानयज्ञे तु कर्म तत्र चोदितेन मन्त्रेण। ततः पूर्ववल्लेपमवमृज्य प्राचीनावीती दक्षिणतो भूमौ निमार्ष्टि। ततः स्रुचं सादयित्वा अङ्गुलिप्राशनादिनिर्लेपनान्तमग्निहोत्रवत्। ततो दर्भैः स्रुक्प्रक्षालनम्, ततः परिसमूहनपर्युक्षणे। एतदाग्निहोत्रिकं नाम तन्त्रं सर्वपाकयज्ञेषु आघारवता तन्त्रेण सह विकल्प्यते। अनाकुला.

(२) तत्र तेषु पाकयज्ञेषु मध्ये पार्वणादिषु पञ्चसु ब्राह्मणावेक्षो विधिर्भवति। यो विधिः प्रत्यक्षमेव ब्राह्मणमवेक्षते, नाग्निमिद्ध्वेत्यादिवल्लोकाचारानुमेयम्, सोऽप्येषु विकल्पेन भवतीत्यर्थः। नानयोर्विध्योर्मिथः संसर्गः। नापि स्मार्तस्थानेन बाधः, प्रत्यक्षब्राह्मणस्यापि स्मृत्यनुवादे कल्पसूत्राधिकरणन्यायेन स्मृतितुल्यप्रमाणत्वात्। अत एव 'सर्वं पाप्मानं तरति ब्रह्महत्यां योऽश्वमेधेन यजते' (तैसं. ५।३।१२) इति श्रुत्याः 'यजेत वाऽश्वमेधेन' (मस्मृ. ११।७४) इति मनुस्मृत्यनुवादेन अश्वमेधद्वादशवार्षिकयोर्विकल्पः। बौधायनीये च व्यक्तोऽयमर्थः। तत्रोदाहरन्ति— 'आघारं प्रकृतिं प्राह दर्वीहोमस्य बादरिः। अग्निहोत्रं तथाऽऽत्रेयः काशकृत्स्नस्त्वपूर्वताम्॥' (बौगृ. १।४।४४) इति, 'तां न मिथः संसादयेदनादेशात्' (बौगृ. १।५।१) इति। होममन्त्रादयस्तु विध्यन्तरीया अर्थादाचाराच्चेहापि भवन्ति। यद्यस्यापि स्मृतितुल्यमेव प्रामाण्यम्, किमर्थं 'ब्राह्मणावेक्षः' इति? उक्तोत्तरमेवैतत्। आग्निहोत्रिकविधौ भ्रेषे 'यदि यजुष्टः' (ऐब्रा. २५।९) इति श्रौतं प्रायश्चित्तम्, न तु स्मार्तनाशे 'यद्यविज्ञाता सर्वव्यापद्वा' (ऐब्रा. २५।९) इति।

(१) आपगृ. २।१०-११.

सर्वे प्रधानहोमाः प्रधानहोमत्वसामान्यादेको होम इत्यभिप्रेत्य स्विष्टकृदपेक्षया श्रुतिः द्विर्जुहोतीत्याह, न पुनर्द्विरेव जुहोतीति, 'सप्तदश प्राजापत्यान्' (तैब्रा. १।३।४) इतिवदिह संप्रतिपन्नदेवतैकत्वाभावात्। केचित् यावन्तः प्रधानहोमास्तावन्ति चतुर्गृहीतानि स्रुचि सहावदाय होममन्त्रान्सर्वाननुद्रुत्य सकृदेव जुह्वति। द्विर्निमार्ष्टीत्यादि व्यक्तार्थम्।

प्रयोगस्तु— न परिस्तरणदर्वीसंस्कारोपस्तरणादीनि, अत्रानुपदेशात्। चरुपाकस्त्वर्याद्वियत एव। तेन चरुणा प्रधानाहुतिस्विष्टकृत्प्राशनभक्षणेभ्यः पर्याप्तेन दर्वीं पूरयित्वाऽपरेणाग्निं दर्भेषु सादयित्वाऽऽदाय तत्तन्मन्त्रैः सर्वाः प्रधानाहुतीः क्रमेण हुत्वा दर्व्यास्ततो लेपमादाय दर्भैर्निमृज्य शेषात्स्विष्टकृते हुत्वा प्राचीनावीती पुनर्लेपमादाय दक्षिणतो भूम्यां निमृज्याप उपस्पृश्य यज्ञोपवीती दर्व्या लेपमङ्गुल्याऽऽदाय प्राश्य शुद्ध्यर्थमाचम्य पुनरप्येवं कृत्वा उदङ्ङावृत्योत्सृप्य दर्व्या हविःशेषं सर्वं भक्षयित्वा तां निर्लिह्याऽऽचम्य तां दर्भैरद्भिः प्रक्षालयेदिति।

ननु वैश्वदेवौपासनहोमयोः कस्मान्नायं विधिः? उच्यते— तत्र 'उभयतः परिषेचनम्' (आपगृ. ७।२२) इति एककार्ययोः द्वयोरपि विध्योः परिसंख्यानात्, अत एव बर्हिर्लेपप्रतिपत्त्योरभावाच्च। केचित्तु— पाकयज्ञ इत्यत्र पाकशब्दस्याल्पवाचकत्वात् विवाहादयोऽपि सोमाद्यपेक्षया पाकयज्ञा इति तेष्वप्ययं विधिरिति। तन्न, तेषां मनुष्यसंस्कारार्थत्वेन अप्राधान्यात्प्रधानवाचियज्ञशब्दवाच्यत्वानुपपत्तेः। ताद.

### अवघातस्य पत्नीकर्तृकत्वम्

**[1]पत्न्यवहन्ति ॥**

(१) अरुन्धतीदर्शनानन्तरमगारं प्रविश्य व्रीहीन् यवान् वा नवान्नग्रये संकल्पितान् निर्वपति यावद्धोमाय ब्राह्मणभोजनाय च पर्याप्तं मन्यते। प्रोक्षणं च तूष्णीं संस्कृताभिरद्भिः। ततस्तान् पत्न्यवहन्ति। 'एना पत्न्या' इत्यादिवत् 'साऽवहन्ति' इति सर्वनाम्ना निर्देशे कर्तव्ये पत्नीग्रहणं पत्नीकर्मेदं यथा विज्ञायेत। इतरथा याजमानं विज्ञायेत। वधूरिह यजमानेति कृत्वा पार्वणादिषु पत्युरवहननं प्राप्नोति। अनाकुला.

(२) स्थालीपाकार्थं व्रीह्यादिकम्। 'साऽवहन्ति' इति वक्तव्ये 'पत्न्यवहन्ति' इत्यधिकाक्षरात् पत्न्यवघातमेव कुर्यात्, न तु श्रपणादिकमपि। तदादिकं वर एव। केचित्— पत्नीत्यारम्भादवहननं पत्नीकर्मैव, न तु यजमानकर्म। यजमानकर्मत्वे हि सहाधिकारे पार्वणादौ पत्युरवहननं स्यात्, तस्य तत्र यजमानत्वात्। अत एव पार्वणादौ नान्वारम्भः, पत्न्यवहन्तीतिवत् पत्न्यामन्वारब्धायामित्यवचनादिति। मैवम्, वध्वेकाधिकारस्यैव निरस्तत्वात्। ताद.

### श्रपणादिप्रधानहोमान्तपदार्थक्रमः

**श्रपयित्वाऽभिघार्य प्राचीनमुदीचीनं वोद्वास्य प्रतिष्ठितमभिघार्याग्नेरुपसमाधानाद्याज्यभागान्तेऽन्वारब्धायां स्थालीपाकाज्जुहोति ॥**

(१) ततस्तानवहतांस्त्रिष्फलीकृतान् प्रक्षाल्य श्रपयति वरः। अग्नेरुपसमाधानादिवचनं तन्त्रविधानार्थं कालविधानार्थं च, प्रतिष्ठिताभिघारणान्ते कथं तन्त्रं प्रतिपद्येत, न प्रागिति। तेनाभिघारणमसंस्कृतेनाऽऽज्येन भवति। अत्रापि सकृदेव पात्रप्रयोगः। तथा शम्याः, विवाहशेषत्वादस्य। नेत्यन्ये।

आज्यभागान्तवचनम् अन्वारम्भकालोपदेशार्थम्। स्थालीपाकादित्यनर्थकम्, तस्य होमार्थत्वात्। न च वाच्यं ब्राह्मणभोजनार्थं स्थालीपाकः, होमस्त्वाज्यादेव प्राप्नोतीति। यागविधानात् देवताविधानाच्च। एवं तर्हि शैलीयमाचार्यस्य— यत्रोभयं हविर्भवत्याज्यं चौषधयश्च तत्र प्रधानाहुतिविशेषणं करोति स्थालीपाकादन्नादपूपादाज्याहुतिरिति। तेन यत्र विशेषणं नास्ति तत्रैकमेव हविरिति सिद्धं भवति। तेनाऽऽग्रयणे आज्यस्याभावः। ततश्च सकृदुपघातपक्ष एव तत्र भवति, आज्याभावेनोपस्तरणाभिघारणयोरसंभवात्। विवाहे च 'यथास्थानमुपविश्य' इत्यत्र आज्याहुतिरिति विशेषणाभावादाज्यमेव

(१) आपगृ. ७।२–१५, १७–१८, २३–२५.

तत्र धर्मवद्धविः, लाजास्त्वधर्मका इति सिद्धम्। अनाकुला.

(२) उद्वास्य सौकर्यादपरेणाग्निं प्रतिष्ठाप्य। प्रतिष्ठितमभिघारयति। ओषधिहविष्केऽप्यत्र तन्त्रविधानं क्रमार्थमित्युक्तमेव। आज्यभागान्तेऽन्वारब्धायाम्। उपस्तरणप्रभृत्यन्वारम्भः प्रधानहोमान्तम्। ताद.

अवदानधर्मः

**सकृदुपस्तरणाभिघारणे द्विरवदानम्॥**

(१) अनेन पौरोडाशिकोऽवदानकल्पः इह प्रदर्शितो विज्ञेयः। तस्मात् 'अङ्गुष्ठपर्वमात्रम्' (आपश्रौ. २।१८।१०) इत्याद्यपि भवति। पञ्चावत्तं च पञ्चावत्तिनाम्। प्रत्यभिघारणं च हविषः लाजावदानवत्। 'उपस्तीर्य द्विरवदाय (द्विः?) अभिघारयति' इति वक्तव्ये सकृद्वचनमुपस्तरणाभिघारणयोश्चतुरवत्तसंपादनार्थतां ज्ञापयितुम्। तेन चतुरवत्ताभावे उपस्तरणाभिघारणयोरप्यभावः। यथा 'सकृदुपहत्य जुहुयात्' (आपगृ. ७।७), 'दध्न एवाञ्जलिना' (आपगृ. २२।१०) इत्यादौ। अनाकुला.

(२) होमदर्व्या स्रुवेण दर्व्यन्तरेण वा सकृदुपस्तरणं कार्यम्। ततश्चरोर्द्विरवदानम्। त्रिर्जमदग्नीनाम्, सकृच्चाभिघारणम्। ततः स्विष्टकृदर्थं चरोः प्रत्यभिघारणम्, अस्यैष्टिकावदानविधिप्रदर्शनार्थत्वादाचाराच्च। ताद.

देवतानाम्नो मन्त्रत्वम्

**अग्निर्देवता स्वाहाकारप्रदानः॥**

(१) प्रधानद्वित्वादुत्तरविवक्षया सिद्धानुवादोऽयम्। अग्निरेव देवता पूर्वस्य होमस्य येयमाग्नेयेनेति विहिता। उत्तरस्यान्या विधीयत इति। स्वाहाकारेण प्रदानं प्रक्षेपो यस्मिन् सः स्वाहाकारप्रदानः स्थालीपाकस्य होमः। अविशेषात् पूर्वश्चोत्तरश्च। तत्र स्वाहाकारसंयोगाद्देवताशब्दश्चतुर्थ्यन्तो भवति— 'अग्नये स्वाहा, अग्नये स्विष्टकृते स्वाहा' इति। 'जुहोतिचोदनः स्वाहाकारप्रदानः' (आपप. ३।४) इत्येव सिद्धे वचनमिदं कल्पान्तरेषु केषुचित् मन्त्रेण प्रदानं चोदितम् 'अमुष्मै स्वाहेति जुहुयात्, ऋचा वा तद्देवतया' इति, 'पुरोनुवाक्यामनूच्य याज्यया जुहुयात्' इति च, तत्प्रतिषेधार्थम्। एवमपि 'स्थालीपाकाज्जुहोत्यग्नये स्वाहा' इत्येव वक्तव्यम्, स्विष्टकृति च 'स्विष्टकृते स्वाहा' इति। इदं तु वचनं पार्वणातिदिष्टेषु 'यथोपदेशं देवताः' इत्यत्र मन्त्रप्रतिषेधार्थम्। तेन 'पौर्णमास्यां पौर्णमासी' (आपगृ. ७।२८) इत्येवमादिषु यत्र स्थालीपाकस्य देवतैव चोद्यते तत्र देवताशब्देनैव होमः, न तद्दैवत्येन मन्त्रेणेति सिद्धम्। अनाकुला.

(२) देवतामाह— अग्निरिति। अग्निर्देवतेति विहिताग्निविशेषणार्थमयं परिभाषोक्तानुवादः। कथं विशेष्यते? इति चेत्, सोऽग्निः स्वाहाकारप्रदानश्चेद्देवता, स्वाहाकारयोग्यया चतुर्थ्या विभक्त्या युक्तश्चेदित्यर्थः।

ननु 'अन्वारब्धायामग्नये जुहोति' इति वक्तव्ये किमर्थमधिकाक्षरम् 'अग्निर्देवता स्वाहाकारप्रदानः' इत्युपदिश्यते? उच्यते— शब्दो देवता, नार्थः, अर्थोऽपि यागे चोदितचतुर्थ्यन्तस्ववाचकशब्देनैवोपकरोति, अर्थस्योद्देष्टुमशक्यत्वात्, उपकारान्तरस्य च दुर्निरूपत्वादिति मीमांसकमतमिह नाभिमतम्, अर्थ एव देवतेति स्वमतज्ञापनार्थम्। कथमिति चेत्? कर्मणि प्रयोगानर्हस्य प्रथमान्तस्याग्निशब्दस्य प्रयोगात्। नन्वर्थस्य देवतात्वे सत्यप्युपकारः शब्देनैवेति नानुष्ठाने विशेषः। मैवम्, न केवलं चतुर्थ्यन्तशब्दोच्चारणमेवानुष्ठेयम्, किं त्वर्थस्य ध्यानमपीति। अत्र तु ज्ञापकम् 'आग्नेया इति तु स्थितिः' इत्यादि निरुक्तकारवचनम्।

केचित्— कल्पान्तरेषु 'अमुष्मै स्वाहेति जुहुयात् ऋचा वा तद्दैवत्यया' इति विकल्पः चोदितः। स मा भूदस्माकम्। पार्वणेषु तद्विकारेषु च 'अमुष्मै स्वाहा' इत्येव जुहुयादित्येवमर्थमिति। ताद.

होमे उपघातपक्षः

**अपि वा सकृदुपहत्य जुहुयात्॥**

(१) यया दर्व्या होमस्तयैव सकृदुपहत्य जुहुयात्। अत्र पक्षे उपस्तरणाभिघारणयोरप्यभाव इति सिद्धम्।

केचित् कुर्वन्ति। जुहुयादिति वचनं स्विष्टकृत्यपि प्राप्त्यर्थम्। अनाकुला.

(२) अथवा दर्व्या सकृत् स्थालीपाकाद् गृहीत्वा जुहुयात्, न तु पूर्ववच्चतुरवत्तं पञ्चावत्तं वा, अपूर्वत्वाद्दर्विहोमानाम्। ताद.

स्विष्टकृद्धोमः

**अग्निः स्विष्टकृद्द्वितीयः ॥**

(१) अग्निः स्विष्टकृद्द्वितीयो भवति देवतात्वेन। द्वितीयवचनं पूर्वेण तुल्यधर्मत्वज्ञापनार्थम्। तेन 'यथोपदेशं प्रधानाहुतीः' इत्यादौ स्विष्टकृतोऽपि ग्रहणं भवति। तथा 'सकृदुपहत्य जुहुयात्', 'स्वाहाकारप्रदानः' इत्येतयोश्च प्रवृत्तिः। अनाकुला.

(२) देवतेति शेषः। स्थालीपाकशेषात् द्वितीयो होमः कर्तव्यः। तस्मिन् अग्निः स्विष्टकृद्देवतेत्यर्थः। अर्थसिद्धेऽपि द्वितीये( ? यत्वे ) 'द्वितीयः' इति ग्रहणे प्रयोजनम् 'सदसस्पतिर्द्वितीयः' (आपगृ. ८।२) इत्यत्र वक्ष्यते*।

केचित्— पूर्वहोमेन तुल्यधर्मत्वज्ञापनम्। तथा च सति 'यथोपदेशं प्रधानाहुतीः' इत्यत्र स्विष्टकृतमपि हुत्वा जयादीत्येवमादि भवेदिति। ताद.

प्रधान–स्विष्टकृतोरवदानधर्मः आहुतिस्थानं च

**सकृदुपस्तरणावदाने द्विरभिघारणम् ॥**

(१) अत्रापि पौरोडाशिकस्विष्टकृतोऽवदानकल्पः प्रदर्शितो विज्ञेयः। तेन 'द्विः पञ्चावत्तिनः, उत्तरमुत्तरं ज्यायांसम् ( ? ज्यायः ), 'न हविः प्रत्यभिघारयति' (आपश्रौ. २।२१।३–५) इति विशेषाः इहापि द्रष्टव्याः। अनाकुला.

* "ननु– सदसस्पतिरध्यायोपाकरणसमापनयोर्नवमः, काण्डोपाकरणसमापनयोः षष्ठः। एवमयमद्वितीयोऽपि किमर्थं द्वितीय इत्युच्यते ? द्वितीयस्य स्विष्टकृतः स्थानेऽयं सदसस्पतिर्भवेदित्येवमर्थम्। इदमर्थमेव च पूर्वत्र 'अग्निः स्विष्टकृद् द्वितीयः' इत्युक्तम्।" इति तत्र वक्ष्यते।

(२) अस्य त्ववदानविधिमाह— सकृदिति। सकृदुपस्तरणमवदानं च द्विरभिघारणं च कार्यम्। जमदग्नीनां तु द्विरवदानम्। अवदानं दैवताज्ज्यायः। नापि हविःप्रत्यभिघारणम्, ऐष्टिकसौविष्टकृतावदानविधिप्रदर्शनार्थत्वात्, आचाराच्च। ताद.

**मध्यात् पूर्वस्यावदानम् ॥**

(१) पूर्वस्य प्रधानहोमस्येत्यर्थः। उपघातपक्षार्थं वचनम्। चतुरवत्तपक्षे तु पौरोडाशिकत्वात् सिद्धम्। ननु तत्रापि 'पूर्वार्धाद्द्वितीयम्, पश्चार्धात्तृतीयम्' (आपश्रौ. २।१८।१०) इत्येतयोर्देशविशेषयोः प्रतिषेधार्थं स्यात्। यद्येवम् 'उत्तरार्धादुत्तरस्य' इति स्विष्टकृति नाऽऽरब्धव्यम्, विशेषाभावात्। तस्माच्चतुरवत्तपक्षे पौरोडाशिक एव विधिः। इदं तु वचनमुपघातपक्षार्थम्। अनाकुला.

(२) हविषो मध्यात् पूर्वस्य दैवतस्यावदानं कार्यम्। उपघातपक्षार्थ एवायमारम्भः, चतुरवत्तपक्षे त्वैष्टिकविधिप्रदर्शनबलात् 'मध्यादङ्गुष्ठपर्वमात्रावदानं तिरश्चीनमवद्यति, पूर्वार्धाद्द्वितीयमनूचीनं चतुरवत्तिनः, पश्चार्धात्तृतीयं पञ्चावत्तिनः' (आपश्रौ. २।१८।१०) इत्यवदानस्थानसिद्धेः। एतेनोपघातपक्षे चतुरवत्तधर्मे उपस्तरणादिर्न प्रवर्तते इति दर्शयति। ताद.

**मध्ये होमः ॥**

(१) आघारसंभेदो मध्यम्। अत्रापि पौरोडाशिक एव होमदेशो दर्शितो विज्ञेयः। तेनाऽऽहुतीनामनेकत्वे 'पूर्वां पूर्वां संहिताम्' (आपश्रौ. २।१९।९) इत्येवमादयो विशेषा इहापि भवन्ति। अनाकुला.

(२) होमः प्रक्षेपः। दैवतस्य अग्नेर्मध्ये आघारसंभेदे। प्रधानाहुतिबहुत्वे 'पूर्वां पूर्वां संहिताम्' (आपश्रौ. २।१९।९) इति च भवति। अयं तूभयपक्षार्थः। ताद.

**उत्तरार्धादुत्तरस्य ॥**

(१) अयमप्युपघातपक्षार्थ आरम्भः। अनाकुला.

(२) उत्तरार्धाद्धविष उत्तरस्य स्विष्टकृत अवदानं कार्यम्। अयमपि पूर्ववदुपघातपक्षार्थ एव। ताद.

**उत्तरार्धपूर्वार्धे होमः ॥**

( १ ) अत्रापि पौरोडाशिकस्य स्विष्टकृतो धर्मो विज्ञेयः । तेन 'असंसक्तामितराभिः' ( आपश्रौ. २।२१। ६ ) इति विशेष इहापि भवति । होमग्रहणे अनाश्रीयमाणे उत्तरार्धपूर्वार्धे इत्यस्य ' लेपयोः प्रस्तरवत् ' इत्युत्तरेणापि संबन्धः संभाव्येत । अनाकुला.

( २ ) तस्य स्विष्टकृतो होमः अग्नेरुत्तरार्धपूर्वार्धे । अस्यापि प्रदर्शनार्थत्वात् ' असंसक्तामितराभिराहुतिभिः ' ( आपश्रौ. २।२१।६ ) इत्यपि भवति । ताद.

बर्हिःप्रहरणम्

**लेपयोः प्रस्तरवत्तूष्णीं बर्हिरङ्क्त्वाऽग्नौ प्रहरति ॥**

(१) यस्मिन् बर्हिषि प्रतिष्ठितं हविराज्यं च तस्मात् किंचिदुपादाय तद्बर्हिरन्नस्य चाऽऽज्यस्य च यौ लेपौ तयोः प्रस्तरवत्तूष्णीमङ्क्त्वा प्रस्तरवदेव तूष्णीमग्नौ प्रहरति । अत एव प्रतिपत्तिविधानादपरेणाग्निं बर्हिषः स्तरणं भवति, हविषश्च तत्राऽऽसादनम् । कल्पान्तरे च स्पष्टमेतत्— ' शृतानि हवींष्यभिघार्य उदगुद्वास्य बर्हिष्यासाद्य' इति । केचिदग्निपरिस्तरणादञ्जनं मन्यन्ते । प्रस्तरवदिति वचनात् त्रिषु स्थानेष्वञ्जनं भवति । तत्र चतुरवत्तपक्षे यया होमः तस्यामग्रस्य, ययोपस्तरणाभिघारणे तस्यां मध्यस्य, आज्यस्थाल्यां मूलस्य चाञ्जनं भवति । उपघातपक्षे तूपस्तरणाभिघारणार्थाया दर्व्या अभावादाज्यस्थाल्यां मध्यस्य, मूलस्य चरुस्थाल्याम् । अक्तस्य ' तृणमपादाय' ( आपश्रौ. ३।१४।७ ) इत्येतदपि भवति । तथा यया होमस्तस्या प्रतिष्ठापनं च आग्नीध्रकर्म च स्वयमेव करोति । अनाकुला.

( २ ) होमोपस्तरणाद्यर्थदर्वीद्वयलेपयोः पात्रप्रयोगार्थं संस्तीर्णस्य च बर्हिषः प्रतिपत्तिमाह— लेपयोरिति । लेपयोः दर्वीद्वयलग्नयोः पात्रासादनार्थं संस्तीर्णे बर्हिः प्रस्तरवत् तूष्णीमङ्क्त्वा तद्वदेवाग्नौ प्रहरति । इदमपि प्रदर्शनार्थम् । तेनाञ्जनादिसंस्रावान्तं श्रौतवत्तूष्णीं करोति । ननु— प्रस्तरवदितीहानुपपन्नम् , बर्हिषोऽग्रमध्यमूलानां द्वयोर्दर्व्योः प्रस्तरवदञ्जनासंभवात् । उच्यते— होमदर्व्यामग्रमनक्ति, इतरस्यां मध्यमूले, ' अन्ताल्लोपो विवृद्धिर्वा ' ( आपप. ४।१३ ) इति वचनात् । एवं त्रिर्द्विर्वा । ' अथापरम् ' इति पक्षे सकृदेवोपस्तरणाद्यर्थायां मूलम् , होमार्थायां मध्याग्रे ।

अन्ये तु आज्यस्थालीं ध्रुवास्थाने पक्षत्रयेऽपि कुर्वन्ति, अञ्जनस्योपयुक्तपात्रलेपप्रतिपत्त्यर्थत्वात् 'इडान्तं वाऽऽहवनीये शंय्वन्तं गार्हपत्ये ' (आपश्रौ. ३।१४।६) इति पक्षे ' आज्यस्थाल्यां मूलम्' (आपश्रौ. ३।१४।७ ) इति दर्शनाच्च । इह तु पक्षे लेपयोरिति द्विवचनमाज्यौषधिलेपाभिप्रायम् , न तु पूर्ववदाधारद्वित्वाभिप्रायम् ।

केचित्— कल्पान्तरादपरेणाग्निं यस्मिन् बर्हिषि हविराज्यं च प्रतिष्ठितं तस्माद्वा, परिस्तरणाद्वा किंचिदुपादायाञ्जनमिति । तन्न, कल्पान्तरोक्तबर्हिःप्रतिष्ठापनोपसंहारस्य पाक्षिकत्वेन नित्यवदञ्जनानुपपत्तेः । ताद.

उत्तरतन्त्रम् , उत्तरपरिषेचनं वा मतभेदेन

**सिद्धमुत्तरं परिषेचनम् ॥**

( १ ) उत्तरं तन्त्रं जयादि यथासिद्धमत्रापि कर्तव्यमित्यर्थः । कथं च सिद्धम् ? ' उपजुहोति ' (आपगृ. २। ७ ) इति वचनात् प्रधानहोमानन्तरम् । तेनोपहोमानामुपरिष्टाद्बर्हिषोऽनुप्रहरणं भवति । अन्यथा प्रधानहोमानन्तरमुपदेशादुपहोमानां पुरस्तादनुप्रहरणं स्यात् ।

परिषेचनमिति । अत्र कृत्वेत्यध्याहर्तव्यम् । परिषेचनं कृत्वा परिषेचनान्तं कृत्वेत्यर्थः । किमर्थमिदम् ? परिषेचनान्ते ब्राह्मणभोजनाद्येव कर्म प्रतिपाद्येत नान्यदित्येवमर्थम् । अन्ये तु सिद्धमुत्तरं परिषेचनमित्येकमेव योगं पठन्तो व्याचक्षते । तेनेह स्थालीपाके प्रधानहोमानन्तरं तन्त्रशेषस्य प्राप्तस्य परिषेचनमेव सिद्धमन्यदसिद्धमिति । तेनोपहोमानामिह लोपश्चोद्यत इति । तेषाम् ' उत्तरम् ' इति व्यर्थम् । अनाकुला.

(२) अत्र वचनाभावात् जयादिनिवृत्तौ सत्यां तद्बद्धक्रममपि परिषेचनं न निवर्तते, अग्न्यङ्गत्वादित्याह— सिद्धमिति । स्पष्टमेतत् । ततः प्रणीताविमोकोऽपि ।

केचित्— सिद्धमुत्तरमिति पदद्वयमेकं वाक्यम् । सिद्धमविकृतम् । उत्तरं तन्त्रशेषं जयादि । एतच्चेहोत्कृष्य

पठितमपि 'यथोपदेशं प्रधानाहुतीर्हुत्वा जयाभ्यातानान्' (आपगृ. २।७) इति श्रौतक्रमस्य बलीयस्त्वात् प्रधानतुल्यधर्मकस्विष्टकृतोऽनन्तरमेव । तथा 'परिषेचनम्' इत्यस्यानन्तर्यविध्यर्थम् । परिषेचनान्तं कृत्वा ब्राह्मणभोजनमेवेति । तन्न, सिद्धमुत्तरं परिषेचनमिति प्रतीताभ्यर्हितसामानाधिकरण्यान्वयबाधेन महादोषवाक्यभेदकल्पनापेक्षत्वात् । तथा वचनाभावादिह जयाद्येव नास्ति, दूरे क्रमबलाबलकथा । तथा 'परिषेचनम्' इत्यस्यापि सिद्धमुत्तरमित्येतदन्वयनिराकाङ्क्षत्वात् कृत्वेत्यध्याहारो निर्बीजः । आनन्तर्यं तु पाठप्राप्तं न विधेयमेव । तस्माद्वरं यथोक्तशङ्कानिवृत्त्यर्थमेवेदं सूत्रमिति । ताद.

हविःशेषेण ब्राह्मणभोजनम्

**तेन सर्पिष्मता ब्राह्मणं भोजयेत् ॥**

(१) सर्पिष्मतेति वचनमतिशयार्थम्, अभिघारणेन प्रागपि सर्पिष्मत्त्वात् । लौकिकेन सर्पिषा प्रभूतेनोपसिञ्च्येत्यर्थः । यो दक्षिणत आस्ते स इह ब्राह्मणः, तं भोजयेत् वधूर्वरो वा । अनाकुला.

(२) तेन हविःशेषेण । सर्पिष्मता प्रभूतलौकिकाज्योपसिक्तेन । ब्राह्मणं दक्षिणतो दर्भेषु निषादितं भोजयेत्, तस्येह प्रकृतत्वात् । इह तु सर्पिष्मतेति मतुबतिशयार्थः । भोजयेदिति बलाच्च होमब्राह्मणभोजनायालं चरुः कार्यः । ताद.

पार्वणस्थालीपाके तन्त्रातिदेशः

***एवमत ऊर्ध्वं दक्षिणावर्जमुपोषिताभ्यां पर्वसु कार्यः ॥**

(१) अतः स्थालीपाकादूर्ध्वं दक्षिणां वर्जयित्वा उपोषिताभ्यां 'पर्वसु चोभयोरुपवासः' (आध. २।१।४) इत्यनेन प्रकारेण कृतोपवासाभ्यां गृहमेधिभ्यां पर्वसु पौर्णमासीषु चामावास्यासु च एवमेवाऽऽग्नेयस्थालीपाककल्पेन स्थालीपाकः कार्यः । कल्पातिदेशोऽयम् । पर्वसु स्थालीपाकः कार्यः, तस्य च 'आग्नेयेन स्थालीपाकेन याजयति' (आपगृ. ७।१) इत्येवमादिः 'तस्मा ऋषभं ददाति' (आपगृ. ७।१६) इत्येवमन्तः कल्प इत्यर्थः । अत्रोपोषिताभ्यामिति द्विवचननिर्देशादुभावप्यधिकारिणौ, तत्र तु पत्न्येव । दक्षिणा चेह नास्तीत्येतावान् विशेषः । तत्र पार्वणे विवाहनिमित्ता विशेषाः सकृत्पात्राणि शम्या इत्यादयो न कर्तव्याः । अन्वारम्भोऽपि न कर्तव्यः, यजमानकर्मत्वात् । अत्र चोभयोर्यजमानत्वात् । अस्तु तर्ह्यन्यो याजयिता, अन्वारम्भश्चोभयोः । तदपि न, ज्ञापकात् । यदयं *हृदयसंसर्गान्वारम्भं विदधाति तत् ज्ञापयति— न पार्वणादिष्वन्वारम्भो भवतीति । अन्यथा पार्वणातिदेशादेवान्वारम्भः सिद्धः स्यात् । 'पाणिग्रहणादधि गृहमेधिनोर्व्रतम्' (आध. २।१।१) इत्यादौ साङ्गं विवाहकर्म विवक्षितम् । तेन संवेशनान्ते विवाहकर्मणि निष्ठिते पञ्चमहायज्ञादीनां गृहस्थधर्माणां प्रवृत्तिः । पार्वणस्य त्वस्य प्रागपि संवेशनात् स्यात् । (आग्नेयस्थाली)पाकादूर्ध्वं पर्वप्राप्तौ प्रवृत्तिर्भवति । तदर्थमाह— अत ऊर्ध्वमिति । तस्य च पौर्णमास्यामुपक्रमो नामावास्यायाम्, श्रौतयोस्तथा दर्शनात्, तत्स्थानापन्नत्वाच्चानयोः । छन्दोगाश्चाऽऽमनन्ति— 'अमावास्या चेत्पूर्वमापद्यते पौर्णमासेनेष्ट्वाऽथ तत्कुर्यात् । अकृत्वा पौर्णमासीमाकाङ्क्षेदित्येके' (खागृ. २।१।२,३) इति । 'पर्वसु चोभयोरुपवासः' इत्यत्र सिद्धे उपोषिताभ्यामिति वचनमस्मिन् कर्मणि उभयोरप्यधिकारप्रदर्शनार्थम् । एवमप्युभाभ्यामित्येव वक्तव्यं नोपोषिताभ्यामिति । तस्मात् 'पर्वसु चोभयोरुपवासः' इति प्राप्तमुपवासं प्रकृत्यंशेनानूद्य द्विवचनेन द्वयोरधिकारः प्रदर्श्यते— उपोषिताभ्यामिति । तेन यजनीयेऽहन्येव स्थालीपाकः सिद्धो भवति । पञ्चदश्यां पूर्वेद्युः कर्म । तथा

* पार्वणस्थालीपाकस्यात्राम्नातत्वेऽपि स्थालीपाकान्तरेषु तत्कल्पातिदेशादिदं सूत्रद्वयमत्र संगृहीतम् ।

* 'हृदयसंसर्गेऽन्वारम्भम्' इति पाठेन भवितव्यम् । 'उभयोर्हृदयसंसर्गमीप्सुः' (आपगृ ९।४) इत्यादिना विहिते हृदयसंसर्गफलके कर्मणीत्यर्थः ।

चाऽऽश्वलायनः— 'अथ पार्वणस्थालीपाकः । तस्य दर्शपूर्णमासाभ्यामुपवासः । इध्माबर्हिषोश्च संनहनम्' ( आगृ. १।१०।१–३ ) इति । उभाभ्यां पर्वसु कार्य इत्युच्यमाने पर्वस्वेव स्थालीपाकः स्यात्, उपवासश्च, निर्देशतुल्यत्वात् । अनाकुला.

( २ ) अतः स्थालीपाकादूर्ध्वमुपोषिताभ्यां 'पर्वसु चोभयोरुपवासः' ( आध. २।१।४ ) इत्यादिविधिना कृतोपवासाभ्यां जायापतिभ्यां पर्वसु पौर्णमासीष्वमावास्यासु च द्वितीयासु दक्षिणावर्जम् ऋषभदानवर्जम् एवम् एवंप्रकारः एतत्स्थालीपाकसदृशो होमः कर्तव्य इति विधिः । धर्मशास्त्रे तु 'श्वोभूते स्थालीपाकः' ( आध. २।१।१० ) इत्युपवासादिधर्मसंबन्धार्थोऽनुवादः । सादृश्यं चात्र द्रव्यदेवतादिसमस्तधर्मनिबन्धनम् । यथा 'एतस्यैव रेवतीषु' ( ताब्रा. १७।८।१ ) इति, यथा वा 'मासमग्निहोत्रं जुहोति' इति । तत्र तु 'एतस्य' 'अग्निहोत्रम्' इति पदाभ्याम्, इह तु एवंपदेनेति भेदः । ननु— दर्वीहोमेष्वतिदेशो नास्ति, अपूर्वत्वात्तेषाम् । सत्यम्, नास्ति चोदनालिङ्गात्, वचनात्त्वतिदेशः केन वार्यते ?

केचित्— नायं धर्मातिदेशः, सौर्यादिष्विव हविर्दैवतस्यानुपदेशात् । अतः कल्पातिदेश एव, 'श्वोभूतेऽन्वष्टका, तस्या मासिश्राद्धेन कल्पो व्याख्यातः' इतिवदिति । नैतत्, हविर्दैवतस्यानुपदेशेऽपि 'मासमग्निहोत्रं जुहोति' इत्यादिषु धर्मातिदेशस्य दृष्टत्वात् ।

अपरे तु— 'एकस्य तूभयत्वे संयोगपृथक्त्वम्' ( जैसू. ४।३।५ ) इति न्यायेन प्रकृतस्यैव स्थालीपाकस्य 'एवं पर्वसु कार्यः' इत्यधिकारान्तरसंबन्धविधिरिति । एतदपि न । एवं सति 'एष कार्यः' इति सूत्रं स्यात्, न तु 'एवं कार्यः' इति । किंच पर्वस्वन्वारम्भोऽपि स्यात्, यतः समस्तधर्मकस्यैव प्रकृतकर्मणोऽधिकारान्तरविध्युपगमः । धर्मातिदेशे तु यथा नान्वारम्भस्तथोक्तमेव 'अथैनामाग्नेयेन' इति सूत्रमतिदेशविशेषार्थमिति वदता भाष्यकारेण ।

अत्र च 'अत ऊर्ध्वम्' इति वचनं विवाहमध्येऽपि पर्वारम्भार्थम् । यद्यप्यत ऊर्ध्वमित्यविशेषवचनम्, तथाऽपि पौर्णमास्यामेवाऽऽरम्भः, कालैक्येन प्रयोजनैक्यात्, स्थानापत्त्या चास्यामेव दर्शपूर्णमासानुकारित्वात् तयोः पौर्णमास्यामेवाऽऽरम्भदर्शनात् । व्यक्तं चैतच्छन्दोगानाम्— 'अमावास्या चेत्पूर्वमापद्येत पौर्णमासेनेष्ट्वाऽथ तत्कुर्यात्, अकुर्वन्पौर्णमासीमाकाङ्क्षेदित्येके' ( खागृ. २।१।२–३ ) इति । तस्मात् स्थालीपाकानन्तरं पौर्णमासी चेत् पूर्वमागच्छेत्, तदा विवाहमध्येऽपि पर्वारम्भः । मासिश्राद्धस्य त्वारम्भश्चतुर्थीहोमान्ते अपरपक्षे, शिष्टाचारात्, बोधायनवचनात्, कर्ममध्ये कर्मान्तरारम्भस्यायुक्तत्वाच्च । तथा वैश्वदेवस्यापि 'तेषां मन्त्राणामुपयोगे द्वादशाहमधःशय्या' ( आध. २।३।१३ ) इत्यादिव्रतं सपत्नीकश्चरित्वा प्रशस्तेऽहन्यारम्भः । ताद.

पार्वणस्थालीपाकदक्षिणा

## पूर्णपात्रस्तु दक्षिणेत्येके ॥

( १ ) पात्रशब्दः उभयलिङ्गः । धान्यमुष्टिशतस्य पूर्णं पात्रं पूर्णपात्रमित्याहुः । दक्षिणा चेयं ब्रह्मणे देया । अनाकुला.

( २ ) धान्यादेः पूर्णं यत्किंचित् पात्रं पूर्णपात्रम् । यद्वा— 'अष्टमुष्टिं भवेत् किंचित् किंचिच्चत्वारि पुष्कलम् । पुष्कलानि च चत्वारि पूर्णपात्रं प्रचक्षते ॥' इति वचनात् धान्यमुष्टीनामष्टाविंशत्यधिकं शतं पूर्णपात्रम् । पात्रशब्दश्चोभयलिङ्गः । तुशब्दात् पर्वस्वयं विकल्पः, न वृषभदाने । ताद.

स्थालीपाकान्तरेषु उक्ततन्त्रातिदेशः

## पार्वणेनातोऽन्यानि कर्माणि व्याख्यातान्याचाराद्यानि गृह्यन्ते ॥

( १ ) पर्वसु भवः पार्वणः । तेन पार्वणेन स्थालीपाकेन अतः अस्मात्पार्वणात् अन्यानि कर्माणि व्याख्यातानि यान्याचाराद्गृह्यन्ते ज्ञायन्ते तानि सर्वाणि । अयमपि कल्पातिदेशः । योऽयं पार्वणस्य कल्पः 'एवमत ऊर्ध्वम्' इत्यादिः 'पूर्णपात्रस्तु दक्षिणेत्येके'

इत्येवमन्तः, स एव सर्वेषां पाकयज्ञानां कल्प इत्यर्थः। तत्रोपवासः पार्वणादन्यत्र न भवति, पर्वसंयोगेन प्रकरणान्तरे विधानात्, उपोषिताभ्यामित्यस्य चाविधायकत्वात्। नन्वस्मिन्वैवाहिके धर्मा आम्नाताः, पार्वणस्यापि तत एवातिदिष्टाः, ततश्चान्येषामपि तत एवातिदेशः कर्तव्यः। 'दक्षिणावर्जम्' 'पूर्णपात्रस्तु दक्षिणेत्येके' इत्यस्य विशेषस्य परिग्रहार्थस्तु पार्वणेनातिदेशः। 'अतोऽन्यानि' इति वचनं समानजातीयपरिग्रहार्थम्। तेन पक्वगुणेष्वेव स्थालीपाकेषु पशुषु चायमतिदेशः, नाऽऽज्यगुणकेषु। केचित् तत्रापीच्छन्ति। कर्माणीति वचनात् कर्मणामेव पार्वणव्याख्यातत्वम्, न कालकर्तृधर्माणाम्। तेन 'निर्ऋतिं पाकयज्ञेन' (आध. १।२६।८) इत्यत्र पत्नीवत्त्वं पर्वनियमश्च न भवति, हृदयसंसर्गादिषूपवासश्च। व्याख्यातानीति वचनात् व्याख्यानमेव पार्वणेनान्येषां कर्मणाम्, न प्रकृतिविकृतिभावः। तेनानारब्धपार्वणस्यापि कालागमे सर्पबल्यदौ प्रवृत्तिर्भवति। आचाराद्यानि गृह्यन्ते इति वचनात् अस्मिन् शास्त्रेऽनुपदिष्टानामपि शास्त्रान्तरदृष्टानां पक्वगुणकानामयमुपदेशो भवति। यथा—'काम्यानां स्थाने काम्याश्चरवः' (आगृ. ३।६।१,२) 'षडाहुतिश्चरुः' (आगृ. ३।६।४) इत्येवमादीनाम्।

अनाकुला.

(२) पार्वणेन वैवाहिकेन स्थालीपाकेन। अतोऽन्यानि अस्मादन्यानि सर्पबल्यादीनि यान्याचाराद्गृह्यन्ते तानि कर्माणि व्याख्यातानि। तेष्वेतद्धर्मातिदेश इत्यर्थः।

ननु— कथं पार्वणशब्दवाच्यत्वं वैवाहिकस्थालीपाकस्य? इति चेत्, नित्यस्तावत् 'उपोषिताभ्यां पर्वसु कार्यः' (आपगृ. ७।१७) इति पर्वसु भवत्वात् पार्वणः, तस्य च पार्वणस्यायं प्रकृतित्वेन संबन्धीति 'तस्येदम्' (पा. ४।३।१२०) इति पार्वणशब्दादण्प्रत्यये कृते पार्वण इत्येवं रूपं भवति। यद्यपि कर्मान्तराणामप्ययं प्रकृतिः, तथाऽप्यस्य पार्वणसंबन्धितया व्यपदेश्यत्वमेव युक्तम्, यतोऽत्र कर्मणि द्रव्यदेवतयोरप्यतिदेशः। कर्मान्तरेषु त्वितरधर्माणामेवेति।

नन्वेवमपि शीघ्रावगतस्य नित्यस्य पार्वणस्य प्रकृतित्वे संभवति किमिति विलम्बितावगम्यस्य वैवाहिकस्य प्रकृतित्वमुच्यते? इति चेत्, न, वैवाहिके एव धर्मोपदेशपौष्कल्यात्, इतरत्र तदभावाच्च। प्रसिद्धश्चैष न्यायः— 'यस्य पुष्कलो धर्मोपदेशः सोऽन्येषां प्रकृतिः, न हि भिक्षुको भिक्षुकान् याचितुमर्हति' इति। तस्माद्युक्तं वैवाहिकस्यैव प्रकृतित्वम्।

अस्य च वैवाहिकस्य पार्वणशब्दवाच्यत्वं धर्मशास्त्रे व्यक्तमेव, 'पर्वसु चोभयोरुपवासः। औपवस्तमेव कालान्तरे भोजनम्। तृप्तिश्चान्नस्य। यच्चैनयोः प्रियं स्यात् तदेतस्मिन्नहनि भुञ्जीयाताम्। अधश्च शयीयाताम्। मैथुनवर्जनं च। श्वोभूते स्थालीपाकः। तस्योपचारः पार्वणेन व्याख्यातः' (आध. २।१।४–११) इति नित्यस्य पार्वणेन व्याख्यानाभिधानात्, पर्वसंबन्धिनः कर्मान्तरस्यात्रासंभवात्, नित्यस्य च नित्येनैव व्याख्याने आत्माश्रयदोषात्।

नन्वत्र केचित्— 'यच्चैनयोः प्रियं स्यात्तदेतस्मिन्नहनि' इत्येतच्छब्देनैकवचनान्तेन 'पर्वसु च' इति बहुवचनान्तनिर्दिष्टपर्वाहःपरामर्शानुपपत्तेः 'पाणिग्रहणादधि गृहमेधिनोर्व्रतम्' (आध. २।१।१) इति परमप्रकृतं पाणिग्रहणनक्षत्रं परामृश्यते। तेन प्रतिसंवत्सरं पाणिग्रहणनक्षत्रे प्रियभोजनादि कार्यम्। श्वोभूते च स्थालीपाकः कर्तव्यः। तस्य च कर्मान्तरस्योपचारः पार्वणेन नित्येन व्याख्यात इत्याहुः। तत्कथं धर्मशास्त्रे व्यक्तं वैवाहिकस्य पार्वणशब्दवाच्यत्वमिति।

तन्न, यतोऽत्र व्रतमेव परमप्रकृतम्, पाणिग्रहणस्य तु तदवधितया कीर्तनमात्रम्। नक्षत्रं तु गम्यमानमेव। गम्यमानं चैतच्छब्देन परामृष्टुं प्रियभोजनादिना विशेषयितुं च नार्हम्। तदाहुराचार्याः— 'गम्यमानस्य चार्थस्य नैव दृष्टं विशेषणम्। शब्दान्तरैर्विभक्त्या वा धूमोऽयं ज्वलतीतिवत्॥' (तन्त्रवा. १।१।७) इति। अतश्चात्र 'पर्वसु च' इत्युद्देश्यगतबहुत्वस्याविवक्षितत्वात् श्रुताव्यवहितस्य प्रकृतस्य पर्वाहस्यैव परामर्शो विशेषणं च युक्तम्। अत उपवासादेरिव प्रिय-

भोजनादेरपि पर्वसंबन्धात् 'श्वोभूते स्थालीपाकः' इत्युपवासादिधर्मविधानार्थमेव 'उपोषिताभ्यां पर्वसु कार्यः' इति गृह्यविहितस्य स्थालीपाकस्यानुवाद एव, न कर्मान्तरस्य विधिः। अनुवादे च 'तस्योपचारः' इति दूरस्थस्य परामर्शो घटते। विधौ तु 'अस्योपचारः' इति स्यात्। एवं च यद्यपि 'श्वोभूते स्थालीपाकः' इत्यापाततोऽनुवादस्वरूपः, तथाऽपि यस्येमे विधीयमाना उपवासप्रियभोजनादयो धर्माः संबन्धिनस्तस्योपचारः पार्वणेन व्याख्यात इति साध्याहारमेवेदं सूत्रं व्याख्येयम्। तस्माद्धर्मशास्त्रेऽपि वैवाहिकस्य पार्वणशब्दव्यपदेश्यस्यैव प्रकृतित्वम्, न नित्यस्येति सिद्धम्।

नन्वेवमपि शीघ्रबोधकत्वात् वैवाहिकेनेति वक्तव्ये किमर्थमस्य विवाहाङ्गस्यापि सतो विवाहसंबन्धं तिरस्कृत्य 'पार्वणेन' इत्याह? उच्यते— इतराङ्गवदस्य न शम्याः, किंतु शिष्टाचारसिद्धाः परिधय एवेत्येवमर्थम्।

अत्र च अतोऽन्यानीत्याह— एतत्सदृशान्येवौषधप्रधानहवींषि सर्पबल्यादीनि कर्माण्यनेन व्याख्यातानि, न त्वनेन तत्सदृशानि(? न त्वनेतत्सदृशानि) पशुप्रभवप्रधानहवींषि वपाहोमादीनीति वक्तुम्। कुत एतत्? 'तत्र सामान्याद्विकारो गम्येत' (आपप. ३।४०) इति परिभाषावचनात्, किंच अतोऽन्यानीत्यस्य नञ्समासप्रभेदविग्रहवाक्यत्वात् 'नञिवयुक्तमन्यसदृशादिकरणे तथा ह्यर्थावगतिः' (व्या. प. ७४) इति नञ्समासभेदार्थनिर्णयात्, वाक्यसमासयोर्भिन्नार्थत्वे चासमर्थसमासापत्तेः। औषधानि हवींषि पशुप्रभवानि च कानि कतिधा च? इति चेत्— पुरोडाशः, ओदनः, यवागूः, तण्डुलाः, पृथुकाः, लाजाः, सक्तवः, पिष्टानि, फलीकरणानि, धानाः, करम्भाः, सुरा इत्यौषधानि द्वादशविधानि। पयः, दधि, आज्यम्, आमिक्षा, वाजिनम्, अवदानानि, पशुरसः, शोणितम्, त्वक्, वपा इति पशुप्रभवानि दशविधानि। 'अथ कर्माण्याचाराद्यानि गृह्यन्ते' (आपगृ. १।१) इति प्रकृतेऽप्यत्र पुनर्वचनं गृह्यप्रश्नेऽनुक्तानां महाराजस्थालीपाकगणहोमादीनामेतद्विकृतित्वं वक्तुम्।

ननु— यद्यनेनैव सूत्रेण औषधहविष्केषु कर्मसु पार्वणतन्त्रातिदेशः, किमर्थम् 'अस्तमिते स्थालीपाकः, पार्वणवदाज्यभागान्ते' (आपगृ. १८।५–६) इति सर्पबलौ पुनर्वचनम्? उच्यते— यद्यपि श्रौत आग्रयणे वैश्वदेवादीनां भूयस्त्वेन पौर्णमासतन्त्राशङ्कायामैन्द्राग्नस्य मुख्यत्वात् 'मुख्यं वा पूर्वचोदनाल्लोकवत्' (जैसू. १२।२।२३) इति सिद्धान्तन्यायेन 'आमावास्यं तन्त्रम्' (आपश्रौ. ६।२९।५) इति दर्शितम्, तथाऽप्यत्रान्येषां हविषां बहुत्वेऽप्यौषधस्य मुख्यत्वात् पार्वणतन्त्रतैवेति मुख्यन्यायं मन्दबुद्धिहितार्थं दर्शयितुमेव पुनश्चोक्तं 'पार्वणवदाज्यभागान्ते' इति। तेन मासिश्राद्धे अष्टकाकर्मणि च पार्वणमेव तन्त्रम्। यद्यप्यष्टकायां वपाहोमस्य मुख्यस्यापूर्वत्वम्, तथाऽप्यन्येषां कृत्स्नविधानाभावादौषधत्वात् 'स्विष्टकृत्प्रभृतिसमानमा पिण्डनिधानात्' (आपगृ. २२।८) इति दर्शनाच्च पार्वणमेव तन्त्रम्। अपूपहोमे तु 'पार्वणवत्' (आपगृ. २२।१) इति पुनर्वचनमपूपमांसौदनपिष्टान्नहोमानां स्थाने विकल्पेन विहितस्यौषध(? स्यानौषध)हविष्कस्यापि दधिहोमस्य पार्वणतन्त्रप्राप्तिं ज्ञापयितुम्, न त्वपूपहोमार्थम्, तस्यौषधहविष्ट्वादेव पार्वणतन्त्रप्राप्तेः। तत्स्थानापन्नेषु च तद्धर्मप्राप्तिर्दृष्टा। यथा 'यस्य हविषे वत्सा अपाकृता धयेयुस्तत्स्थाने वायव्यां यवागूं निर्वपेत्' (आपश्रौ. ९।१।२३) इति सांनाय्यस्थाने विहिताया यवाग्वाः सांनाय्यधर्माः।

केचित्— नित्यस्य पार्वणस्य यः कल्पः स एव सर्वेषां यज्ञानां कल्पः। यद्यपि वैवाहिके धर्माम्नानम्, तथापि नित्यस्यैव कल्पातिदेशः 'दक्षिणावर्जम्' इत्यस्य परिग्रहार्थः। अतोऽन्यानीति वचनादेतत्सदृशानां पक्वगुणानामेव स्थालीपाकानां पशूनां चायं विकल्पः(? कल्पः), न त्वाज्यगुणकानाम्। कर्माणीति वचनात् कर्ममात्रस्यैव व्याख्यानम्, न तु कर्तृतद्धर्मकालादीनाम्। तेन 'गर्दभेनावकीर्णी निर्ऋतिं पाकयज्ञेन यजेत' (आध. १।२६।८)

इत्यत्र पशौ न पत्नीवत्त्वम्, नापि हृदयसंसर्गादिषु पर्वणो नियमः, विशेषतश्चोपवासस्य धर्मशास्त्रे पर्वसंबन्धेन विधानात्। व्याख्यातानीति वचनादन्येषां नैतद्विकृतित्वम्। तेनानारब्धपार्वणोऽपि तेष्वधिकारी। हृदयसंसर्गादिषु पुनस्तन्त्रविधानमाज्यहोमवन्नियमार्थम्। एतद्गृह्योपदिष्टेषु यत्र वचनं तत्रैव तन्त्रम्, नान्यत्र। तेनाऽऽग्रयणे तन्त्रलोप इति।

तन्न, यत उपदिष्टधर्मकस्य वैवाहिकस्य धर्मातिदेशोऽपि नैव दोषः। प्रत्युत नित्यस्य कल्पातिदेशे पर्वादीनामप्यतिदेशाद्दोषः। कर्माणीति वचनान्नेति चेत्– न, तस्योद्देश्यसमर्पणोपक्षीणत्वात्। अखण्डग्राहिणश्चोदकस्योच्छृङ्खलत्वात्। दक्षिणाभावस्तु प्रयोजनं तस्य 'योऽस्यापचितस्तस्मा ऋषभं ददाति' (आपगृ. ७।१६) इति सिद्धम्। तथा सदृशेष्वयमतिदेश इत्युक्तिमात्रम्, असदृशेष्वपि पशुष्वभ्युपगमात्। पक्वत्वात् सादृश्ये द्रव्यत्वादाज्येऽपि स्यात्। न चैवं व्याख्यातशब्दः प्रकृतिविकृतित्वाभावार्थः, 'एतेन वैश्वसृजो व्याख्यातः' (आपश्रौ. १९।१५।१) इत्यादौ प्रकृतिविकृतित्वस्य दृष्टत्वात्। तथा नैकस्मिन्नाग्रयणे तन्त्रलोपफलार्थं नियमार्थानि बहूनि सूत्राण्यारब्धव्यानि, 'अविकृतमातिथ्यमाग्रयणं च' इत्येतावन्मात्रसूत्रादेव स्वाभिमतसिद्धेः। अतस्तानि तन्त्रसूत्राणि यथोक्तप्रयोजनार्थानि। आग्रयणमपि तन्त्रवदेव।

तादः

**यथोपदेशं देवताः॥**

**अग्निं स्विष्टकृतं चान्तरेण॥**

(१) पार्वणेनातोऽन्यानीत्ययं कल्पातिदेशः इत्युक्तम्। तेन पार्वणे ये देवते यश्च स्थालीपाकः तेषां सर्वेषु कर्मसु प्रवृत्तिः। तत्रतत्रोपदिष्टाभिस्तु देवताभिः पार्वणदेवतयोः बाधे प्राप्ते तन्निवृत्त्यर्थं वचनम्, तत्र चोदितानां देवतानां देशविधानार्थं च– योऽयमग्निः पार्वणो यश्च स्विष्टकृत्, तावन्तरेण तयोर्मध्ये ता देवता यष्टव्या इति। तत्र पार्वणस्याग्नेः पार्वणमेव हविः, तत्र तत्र विहितानां तत्र तत्र विहितम्। स्विष्टकृतस्तु सर्वो हविःशेषः, अन्यत्र तथा दर्शनात्। अन्ये तु तत्र विहितादेव हविषः पार्वणदेवतयोरपि इज्यामिच्छन्ति।

अपर आह– नात्र पार्वणदेवते अनूद्येते अग्निश्च स्विष्टकृच्च। किं तर्हि? आगन्तुके एते अनेनैव वचनेन विधीयेते। तत्र हविषोऽनुपदिष्टत्वात् अग्नेराज्यं हविः। स्विष्टकृतस्तु सर्वो हविःशेष इति। सर्वथा सर्वेष्वेव पार्वणातिदिष्टेष्वग्निः पूर्वं यष्टव्यः। तथा च श्रौतेषु दृश्यते– 'येन यज्ञेनेर्त्सेत् कुर्यादेव तत्राऽऽग्नेयम्' इति। यथाभाष्यं व्याख्यायते– पार्वणव्याख्यातेषु सर्वेष्वेव कर्मसु यथोपदेशं देवता यजति, अग्निं स्विष्टकृतं च यजति योऽयमग्निः स्विष्टकृत् पार्वणे द्वितीयो देवताविशेषः तं च यजति तस्मादेव हविषः यत्तत्र तत्रोपदिष्टानां हविरिति। तत्र यथोपदेशं देवता इत्यनुवादः स्विष्टकृतः समुच्चयविधानार्थः। असति समुच्चये तेषु तस्य प्रवृत्तिर्न स्यात्, तत्र तत्रोपदिष्टाभिर्देवताभिर्निर्वर्तितत्वात्, अग्नेरिव स्विष्टकृतोऽपि प्रधानदेवतावच्चोदितत्वात्– 'अग्निः स्विष्टकृद्द्वितीयः' इति। अन्तरेण इत्यनेन तु तस्यैव स्विष्टकृतो देशो नियम्यते– प्रधानाहुतीश्चोपहोमांश्चान्तरेणाग्निं स्विष्टकृतं यजतीति। तेन यत्रापि 'उत्तरा आहुतीर्हुत्वा जयादि प्रतिपद्यते, आज्याहुतीरुत्तराः, जयादि प्रतिपद्यते' इति च क्रमपरं वचनम्, तत्रापि नित्यमग्निः स्विष्टकृदस्मिन्नन्तराले यष्टव्यो भवतीति। प्रकरणाच्च प्रधानाहुतीरुपहोमांश्चान्तरेणेत्यर्थोऽपि लभ्यते।

अनाकुला.

(२) अत्रास्वपदो विग्रहः, अव्ययीभावसमासत्वात्। अध्याहारश्च, साकाङ्क्षत्वात्। यथोपदेशं सर्पबल्यादिषु याश्च यावत्यश्च येन येन प्रकारेण मन्त्रविधानादिनोपदिष्टाः देवतास्ता एव भवन्ति, न पार्वणदेवताः। न तेषु पार्वणं प्रधानं समुच्चेतव्यमित्यर्थः।

ननु– विकृतावुपकारमुखेन तज्जनकानां धर्माणामतिदेशः, प्रधानं चोपकार्यम्, नोपकारजनकम्। पार्वणे च स्थालीपाकहोमयोः प्रथमो होमः प्रधानम्। अतस्तस्यातिदेश एव नास्ति। दूरे तत्समुच्चयाशङ्का, यन्निरासायेदं सूत्रं स्यात्। 'षड्भिर्दीक्षयति' (तैसं. ५।१।९)

इत्यत्र तु प्राकृतीनां दीक्षाहुतीनामङ्गत्वाददतिदेशः, अदृष्टार्थत्वाच्च समुच्चयः, यथोपदिष्टानां प्रकृतिक्लृप्तक्रमबाधभयादन्ते निवेशश्च युक्त एव। सत्यमेवम्, किंतु गार्ह्यकर्मानुष्ठातॄणां मध्ये ये मन्दबुद्धयोऽङ्गप्रधानयोरतिदेश्यानतिदेश्ययोश्च अनभिज्ञास्ते पार्वणेनेत्यविशेषेणातिदेशप्रतिभासात् 'षड्भिर्दीक्षयति' इत्यादौ दर्शनमात्राच्च प्रधानातिदेशतत्समुच्चयावुपदिष्टप्रधानानामन्ते निवेशं च मन्यन्ते। तन्निरासायेदं सूत्रम्।

अथ वैकृतप्रधानहोमानां स्थानमर्थादग्निमुखसौविष्टकृतयोश्च विदधाति— अग्निमिति। 'यथोपदेशं देवताः' (आपगृ. ७।२४) इत्यनुवर्तते। यथोपदेशं देवताः ये विकृतावुपदिष्टाः प्रधानहोमाः ते अग्निं स्विष्टकृतं चान्तरेण आग्नेयसौविष्टकृतयोर्होमयोर्मध्ये भवेयुः। अत्र च स्विष्टकृतमितिवदग्निमित्यपि सिद्धानुवादात् अन्यतश्च प्राप्त्यभावात् योगविभागेन 'अग्निमुद्दिश्य जुहुयात्' इत्यन्योऽप्यर्थो विधीयते। विभक्तस्य सूत्रस्य चायं विवक्षितोऽर्थः— सर्वेषु तन्त्रवत्स्वौषधहोमेषु दधिहोमेषु चोपाकरणसमापनयोश्च शिष्टाचारात् 'अग्नये स्वाहा' इत्याज्येन अग्निमुखाख्यमङ्गहोमं सर्वेभ्योऽपि प्रधानहोमेभ्यः पूर्वं जुहुयादिति।

नन्वत्र 'स्विष्टकृतम्' इति व्यर्थम्, सर्वत्र स्विष्टकृतः शेषप्रतिपत्त्यर्थत्वात् स्वत एवासावन्ते एव भवतीति। नैवम्, विकृतिषु द्विविधाः प्रधानहोमाः— पार्वणविकारा अपूर्वाश्च, तेषामुभयेषामप्यन्त एव स्विष्टकृद्यथा स्यादित्येवमर्थत्वात्। अन्यथा यद्धोमाङ्गं स्विष्टकृत्तदन्त एव स्यात्। तथाऽग्निमिति चोभयेभ्यः प्रधानाहुतिभ्यः पूर्वमेवाग्निमुखमित्येवमर्थं स्विष्टकृद्वन्नियम इति।

केचित्— 'यथोपदेशं देवता अग्निं स्विष्टकृतं च' इत्येवमन्तमेकं सूत्रम्। तस्यार्थः— 'अग्निः स्विष्टकृद् द्वितीयः' (आपगृ. ७।७) इत्यत्र स्विष्टकृतः प्रधानहोमतुल्यधर्मत्वज्ञापनात् विकृतिषु च पार्वणप्रधानलोपे सति तस्यापि लोपः स्यात्, स मा भूदित्यनेन सूत्रेण 'यथोपदेशं देवताः' इत्यनूद्य, 'अग्निं स्विष्टकृतं च कुर्यात्' इति तासु तस्य समुच्चयो विधीयते। तथा 'अन्तरेण' इति पदमेकं सूत्रम् 'अन्तरा त्वाष्ट्रेण' इत्यादिवत्। प्रकरणाद्वैकृतप्रधानहोमानां जयादीनां च मध्ये सर्वास्वपि विकृतिषु स्विष्टकृन्नित्य एवेत्यर्थः। इतरथा क्वचित्तस्य लोपः स्यात्, 'स्थालीपाकादुत्तरा आहुतीर्हुत्वा जयादि प्रतिपद्यते' (आपगृ. ९।४) इत्यादि परिसंख्येति कृत्वेति।

तन्न, विभागे साकाङ्क्षयोर्द्वितीयान्तयोः 'अग्निम्, स्विष्टकृतम्' इत्येतयोः अन्तरेणेत्यनेन संबन्धाकाङ्क्षेण एकवाक्यत्वे संभवति वाक्यभेदस्यायुक्तत्वात्, 'अग्निः स्विष्टकृद्द्वितीयः' इत्यस्य प्रयोजनान्तरपरत्वाच्च। तथाऽपि यदि स्विष्टकृतः प्रधानतुल्यधर्मकत्वम्, तदा तल्लोपेऽपि प्रधानलोपप्रायश्चित्तमेवाऽऽपद्यते। तथा 'अन्तरेण' इत्यस्य यथोक्तश्रुतसंबन्ध्यन्वयसंभवे अप्रकृतगम्यमानान्वयो न युक्तः। व्यर्थं चैतत्, स्वमते स्विष्टकृतः समुच्चयविधानादेव त्रिदोषायाः परिसंख्याया अपि निरस्तत्वात् तस्य सर्वत्र नित्यत्वेनालोपसिद्धेः। ताद.

## हिरण्यकेशिगृह्यसूत्रम्

### अग्निस्थापनम्

**[१]प्राचीनप्रवण उदीचीनप्रवणे प्रागुदक्प्रवणे समे वा देश उद्धत्यावोक्ष्याग्निं मथित्वा लौकिकं वाऽऽहृत्य न्युप्योपसमादधाति ॥**

(१) प्राचीनोदीचीनप्रागुदगवनतानामन्यस्मिन् समे वा देशे शास्त्रान्तरे दर्शनादिषुमात्रावरेऽग्न्यायतने उद्धत्याभ्र्याऽन्येन वा। पुनर्धर्मशास्त्रे दर्शनादुपसमाधानदेशे तिस्रो रेखाः प्राचीरुदगपवर्गास्तिस्र उदीचीः प्रागपवर्गा लिखित्वा कृत्स्नमग्न्यायतनमद्भिरवोक्ष्य उत्सिच्य अवोक्षणोदकशेषमुत्तरेण पूर्वेण वाऽन्यदुपनिदध्यात्। याज्ञिकात्काष्ठादग्निं मथित्वा लौकिकं वाऽऽहृत्य श्रोत्रियागारादग्न्यायतनमध्ये उपसमादधाति काष्ठान्यभ्याधाय प्रज्वलयतीत्यर्थः। मातृद.

(१) हिगृ. १९।१।७; सर. ४९ (अग्निं ... ... ... उपसमादधाति०): ५६ (प्राचीनप्रवण...... अवोक्ष्य०).

(२) अस्यार्थः— प्राचीनप्रवणाद्यन्यतमे देशे आयतनं विधाय तदभ्र्याऽन्येन वा खनित्रेणोद्धत्यावोक्षेत् । प्रवणः क्रमनिम्नः । समे वा देशे इति सप्तमीनिर्देशेन देशव्यतिरिक्तस्यैव कस्यचित्पदार्थस्योद्धननादिक्रियाकर्मत्वे प्रदर्शिते तत्र स च कः पदार्थ इत्याकाङ्क्षायामायतनपदार्थस्य ग्रहणम् । एतेन केवले देशे एवोद्धननप्रोक्षणे उक्त्वा तत्र स्थण्डिलकरणमुक्तं तत्परास्तम् ।

† संर. ४९

परिस्तरणम्

[१]**प्रागग्रैर्दर्भैरग्निं परिस्तृणाति ॥**

(१) तमग्निं प्रागग्रैर्दर्भैः पुरस्ताद्दक्षिणतः पश्चादुत्तरत इति परिस्तृणाति । हस्वा उदगपवर्गाः पश्चात्पुरस्ताच्च भवन्ति । मातृव्.

(२) अत्र दर्भैरिति वचनादेकैकस्मिन्भागे चत्वारश्चत्वारो दर्भा आचारात् । न्यायेन तु बहुत्वं त्रित्वे पर्यवस्यतीति वैजयन्त्याम् । † संर. ६२

**अपि वोदगग्राः पश्चात्पुरस्ताच्च भवन्ति ॥**

अपि वा पश्चात्पुरस्ताच्च ये दर्भास्त उदगग्रा भवन्ति । प्रागग्रा एव दक्षिणा उत्तराश्च । * मातृव्.

[२]**दक्षिणानुत्तरान् करोत्युत्तरानधरान् यदि प्रागुदगग्राः ॥**

प्रागग्राश्चोदगग्राः, प्रत्येकमग्रशब्दः परिसमाप्यते । यदि परिस्तरणदर्भाः प्रागुदगग्रा भवन्ति, एतस्मिन्पक्षे इत्यर्थः । तत्र दक्षिणान्दर्भान् पूर्वापरेभ्यो दर्भेभ्य उत्तरान् उपरिशयान् करोति । 'यदि प्रागुदगग्राः' इति वचनमुत्तरे एव पक्षेऽयं विधिः स्यात्, न प्रागग्रपक्षे इत्येतदर्थम् । नैतदस्ति, आनन्तर्यादसंभवादेतत्सिद्धं हि । एवं तर्हि श्रौतेष्वपि स्तरणमधरोत्तरभाव एव भवेदितीदं दक्षिणप्रागग्रतायामपि उदगग्रताया अपवादं वा दक्षिणाग्रताया एवं भवत्येव । ¶ मातृव्.

ब्रह्मायतने दर्भसंस्तरणम्

[१]**दक्षिणेनाग्निं ब्रह्मायतने दर्भान्संस्तीर्य ॥**

(१) दक्षिणेन परिस्तीर्णमग्निं ब्रह्मण आयतने प्रवेशनदेशे दर्भान् सम्यग्बहुलान् संस्तीर्य । मातृव्.

(२) आयतने उपवेशनदेशे । *संर. ६२

आत्मन्यग्निग्रहणम्

**'मयि गृह्णामि, यो नो अग्निः' इति द्वाभ्यामात्मन्नग्निं गृहीत्वा ॥**

(१) 'मयि, यो नः' इति द्वाभ्यामात्मीयमग्निमात्मनि गृहीत्वा, तथा संकल्पयित्वेत्यर्थः । मातृव्.

(२) मयि, यो न इत्यग्निं हृदि स्थितं द्वाभ्यां दर्भाभ्यां संस्थाप्येति 'आत्मन्नग्निं गृहीत्वा' इत्यस्यार्थो गृह्यकारिकाकृता प्रदर्शितः, स भाष्यविरोधादुपेक्ष्यः । आत्मन्यग्निग्रहणसमये सकुशं दक्षिणहस्तं हृदि धृत्वेति प्रयोगान्तरे यदुक्तं तत्र मूलं चिन्त्यम् । *संर. ६२

पात्रासादनम्, इध्मसंनहनं च

**उत्तरेणाग्निं दर्भान्संस्तीर्य यथार्थं द्रव्याणि प्रयुनक्ति ॥**

(१) अग्नेरुत्तरतो दर्भान् परिस्तीर्य यथार्थं यथाप्रयोजनं द्रव्याणि प्रयुनक्ति । कानि तानि ? यानि अश्मादीनि दश, येनान्येन प्रयोजनं तच्च । अग्निग्रहणमनर्थकम्, 'अग्निं मथित्वा' इत्यधिकारात् । यथा परिस्तरणे नानर्थकम्, अस्यैवाग्नेः संप्रत्ययार्थम् । परिस्तरणं त्रेताग्नेरपि स्यात् परिस्तरणदर्भा होमेषु भवेयुरिति । तत्राग्निहोत्रराजाभिषेकयोः पूर्ववचनं श्रौतप्रायश्चित्तार्थं क्रमार्थं प्रागुदगग्रतानियमार्थं च । स्थानादौ क्षेत्रपत्ये चाग्निकार्ये प्रवृत्तेरग्नेरपि स्यात् परिस्तरणम् । केचिदिहैव परिस्तरणस्यानित्यत्वख्यापनार्थमग्निग्रहणं मन्यन्ते । तथोक्तं बहुवृ-

† शेषं मातृवृवत् ।

* संर. मातृवृवत् ।

(१) हिगृ. १९।१।८–९ ; संर. ६१.

(२) हिगृ. १९।१।१० ; प्रका. १६ ; संर. ६१.

¶ संर. मातृवृगतम् ।

* शेषं मातृवृवत् ।

(१) हिगृ. १९।१।११–१३ ; संर. ६२.

चानाम्— 'कृताकृतमाज्यहोमेषु परिस्तरणम्' इति । तत्राऽऽचाराद्वैदिकेषु परिस्तरणम् । उत्तरेणाग्निमित्यत्राप्यग्निग्रहणमात्मीयमग्निमित्यात्मीयस्याग्नेर्ग्रहणार्थम् । यथार्थमिति वचनमुच्यमानानामपि प्रयोजनाभावे निवृत्त्यर्थम् ।

मातृद.

(२) यद्यपि गृह्ये बर्हिर्नोक्तं तथाऽपि श्रौते दर्शनाच्छिष्टसमाचाराच्च ग्राह्यम् । तत्प्रमाणे विशेषः स्मृत्यन्तरे— 'यज्ञियानां तृणानां तु अग्रे प्रादेशमात्रतः । प्रच्छिद्य प्रतिगृह्णीयान्मुष्टिमात्रं तु बर्हिषि ॥' इति । मुष्टिमात्रमेकहविष्केषु स्थालीपाकादिकर्मसु । अनेकहविष्केषु तु सर्वेषां हविषामासादनं यथा भवति तथा पर्याप्तं बर्हिर्ग्राह्यम्, 'अर्थात्परिमाणम्' इति कात्यायनोक्तेः ।

* संर. ६२

[1]एकविंशतिदारुमिध्मं संनह्यत्याहुतिपरिमाणं वा ॥

(१) एकविंशतिकाष्ठमिध्मं संनह्यति प्रयुनक्तीत्यर्थः । आहुतीनां परिमाणं संख्या । आहुतिपरिमाणमिव परिमाणं यस्य स आहुतिपरिमाणः । उष्ट्रमुखवदुत्तरपदलोपः । यावत्य आहुतयस्तावद्दारुको भवेदित्यर्थः । उपहोमवर्जिता अङ्गप्रधानाहुतयो गणयितव्याः, जयादीनामुपहोमानां न गणनेत्येके । तैरपि सहेत्यपरे । जयाद्यभाव आहुतिपरिमाणत्वे प्रायश्चित्तानामुत्पन्नानां प्रत्याहुतीध्माधानं कार्यम्, इतरत्र न, सर्वार्थत्वादिध्मस्य । दर्शपूर्णमासवद्वृक्षनियमः, 'तस्य दर्शपूर्णमासाभ्यामुपवास इध्माबर्हिषोश्च संनहनम्' इति बह्वृचानां वचनात् । 'यः कश्चिद्यज्ञियो वृक्षः' इति वचनादित्यपरे ।

मातृद.

(२) एकविंशतिदारुम् एकविंशतिकाष्ठम् इध्मं संनह्यति संनह्य प्रयुनक्तीत्यर्थः । अथवा यथाश्रुत एवार्थः । अस्मिन्कल्पे दर्व्यासादनात्प्राक् संनहनमात्रं कार्यम् । आसादनं तु 'येन चार्थः' इतिवचनेनोपवेषासादनोत्तरमेव, श्रौते दृष्टत्वात् । संनहनोत्तरमनधोनिधानमपि कार्यम् । बर्हिषोऽपीध्मात्पूर्वं संनहनम्, श्रौते दर्शनात् । इध्मेन सह बर्हिषोऽप्यासादनम् । न च प्रोक्षणीपात्रासादनानन्तरमेवेध्माबर्हिषोरासादनमस्त्विति वाच्यम्, स्वसत्तयोपयोगिनां पदार्थानामासादनानन्तरमेव स्वलोपेनोपयोगिनां पदार्थानामासादनस्योचितत्वात् ।

त्रिविधा ह्युपयोगिनः पदार्थाः, केचन स्वसत्तया, स्वान्यथाभावेन केचन, स्वलोपेन केचन । तत्र दर्व्याज्यस्थालीप्रणीताप्रणयनप्रोक्षणीपात्रोपवेषाः स्वसत्तया होमोपयोगिनः । अश्माहतवस्त्रद्वयोत्तरीयार्थाजिनमौञ्जीमेखलादण्डकौपीनतद्बन्धनार्थसूत्रोपवीतभिक्षापात्रकूर्चाः स्वसत्तया उपनयनोपयोगिनः । स्वान्यथाभावेनोपयोगिनो व्रीहयः स्थालीपाके । स्वलोपेन साधारणहोमोपयोगिनः संमार्गदर्भबर्हिरिध्मावज्वलनदर्भाज्यात्मकाः । सप्त पलाशसमिधः स्वलोपेनोपयोगिन इति । एवं तत्र तत्र ज्ञेयम् । स्वसत्ता स्वस्य पात्रादेः सत्ताऽविकारिस्वरूपम् । स्वान्यथाभावः स्वस्य व्रीह्यादेरन्यथाभावस्तण्डुलौदनादिरूपः । स्वलोपः स्वस्य समिदादेर्लोपः नाशः । एवंप्रकारैर्यज्ञसाधनपदार्थास्त्रिविधा भवन्ति । यथाऽऽहुर्भट्टाचार्याः— 'स्वान्यथाभावसत्ताभ्यां स्वलोपेन च साधकाः । त्रिविधाः संप्रयुज्यन्ते कर्मणां विनियोजकाः ॥' इति ।

* संर. ६३

[1]तस्मिञ्छम्याः परिधीनिध्म उपसंनह्यति ॥

(१) तस्मिन्निध्मे शम्याकृतिकांस्त्रीन् परिधीनुपसंनह्यति । शम्याशब्दः इहाऽऽकृतिवचनः, यथा यज्ञायुधेषु । तस्मात्ते याज्ञिकस्य वृक्षस्य । केचिद् भूतोपदेशं मन्यमानाः शम्या एवोपाददते, तेषां यज्ञायुधेऽपि प्रसङ्गः स्यात् । एके परिधीनधिकानिच्छन्ति, चतुर्विंशतिदारुत्वं हीध्मानां दृष्टमिति । अपरे संख्यायां परिधीनन्तर्भावयन्ति, तथा दर्शपूर्णमासयोर्दृष्टत्वात्, बह्वृचानां च 'इध्माबर्हिषोश्च संनहनम्' इति दर्शपूर्णमासाभ्यामतिदेशात् । आहुतिपरिमाणत्वे प्रत्याहुति समिधां दर्शनादभ्यधिकत्वमेव

---

* शेषं मातृदवत् ।

(१) हिगृ. १९।१।१५; संर. ६३.

* शेषं मातृदवत् ।

(१) हिगृ. १९।१।१६ ; संर. ६३, ६५.

न्याय्यम् । ग्रन्थस्य त्वयमर्थः– शम्याः परिधीनुपसंनह्यति इत्युच्यमाने पृथगम्यधिकानामुपसंनहनं प्राप्नोति, तन्मा भूदिति तस्मिन्निध्म इत्युच्यते । तस्मिन्नित्येव सिद्धे इध्म-ग्रहणमिध्मसंख्यायां परिधीनामन्तर्भावार्थम् । इध्म इत्येव सिद्धे तस्मिन्निति वचनमाहुतिपरिमाणत्वेऽम्यधिका एवेति ख्यापनार्थम् । मातृद्.

(२) 'शम्याभिः परिदधाति' इत्युत्तरत्र विधानादेव परिधीनां शम्याकृतित्वे सिद्धे इह शम्याग्रहणमुपसंनहन-काले एव शम्याकृतित्वसंपादनं यथा स्यात् , ऊर्ध्वं मा भूदित्येतदर्थम् । ¶ संर. ६४

**[1]दर्वीं कूर्चमाज्यस्थालीं प्रणीताप्रणयनं प्रोक्षणीपात्रं येन चार्थः ॥**

दर्वी, 'कृदिकारादक्तिनः' इतीकारः, पालाशी होमार्थत्वात्खादिर्यपि दृष्टा शाखान्तरे । तस्या आकृति-र्लोकप्रसिद्धा । कूर्चः सावित्रीवाचनार्थमासनम् । पुनरुप-नयने पौष्करसादिपक्षे च प्रयोक्तव्यः , नेतरत्र । आज्य-स्थाली मृन्मयी प्रसिद्धा । प्रणीताः प्रणीयन्ते येन तत्प्रणीताप्रणयनम् । तदपीह मृन्मयमेव, अन्यस्यावच-नात् । येन चार्थ इत्यनुक्तानामपि प्रयोजनवतामुपसंग्रहा-र्थम् । यथा प्रोक्षणार्थं पात्रम् , बहिरङ्गारनिरूहणार्थं काष्ठमिति । † मातृद्.

**सकृदेव सर्वाणि यथोपपादं वा ॥**

(१) सकृदेव युगपदेव सर्वाणि प्रयुनक्ति । यथोपपादं वा यथासंभवं वेत्यर्थः । यथोपपदमित्यपपाठः । एव-कारकरणम् एवमेव सर्वत्र, नान्यथेत्येतदर्थम् । केचिद्दैवेषु द्वन्द्वम् , पित्र्ये एकैकम् , मानुषे सह सर्वाणीति विदधिरे हि । अथवा सकृदेव सर्वाणि, 'यत्सह सर्वाणि मानुषाणि' इति दर्शनात् । द्वन्द्वस्तुत्यर्थत्वेऽप्यस्य नित्यानुवादत्वा-दाचारबोधकत्वमस्ति । अत एव नान्यथेत्यवधारणार्थमेव-कारः । यथोपपादं यथैवोपपद्यन्ते तथैव प्रयुनक्ति । तान्यत्र पित्र्येष्वेकैकमष्टकादिषु, 'यदेकमेकं संभरेत् पितृदेवत्यानि स्युः' इति दर्शनात् । दैवेषु स्थालीपाकेषु द्वन्द्वम् , 'यत् द्वे द्वे दैवानि' इति दर्शनात् । मानुषेषु स्नानादिषु सकृदेव सर्वाणि , उक्तो हेतुरिति ।

मातृद्.

(२) सकृदेव युगपदेव सर्वाणि उक्तान्यनुक्तानि च प्रयोजनवन्ति पात्राणि द्रव्याणि च प्रयुनक्ति । यथोपपादं यथासंभवं वेत्यर्थः । 'यदेकमेकं संभरेत् पितृदेवत्यानि स्युः' इति श्रुत्या पित्र्येष्वेकैकस्यैव पात्रस्य संभरणविधा-नात् पित्र्येषु मासिकश्राद्धाष्टकादिष्वेकमेकं सादनीयम् । 'यत्सह सर्वाणि मानुषाणि' इति श्रुत्या मानुषेषु युगप-त्पात्रसंभरणविधानादुपनयनादिषु मानुषेषु युगपत्पात्र-सादनम् । 'द्वे द्वे संभरति' इति श्रुत्याऽवशिष्टेषु दैवेषु कर्मसु द्वन्द्वं पात्रासादनमिति व्यवस्थैव वा यथोपपाद-शब्दार्थः । कूर्चस्य तूपनयन एवोपयोगः । उत्तरत्र 'पात्राण्युत्तानानि कृत्वा' इति विधानादासादने न्यग्बिलता गम्यते । संर. ६६

ब्रह्मोपवेशनम्

**[1]एतस्मिन्काले ब्रह्मा यज्ञोपवीतं कृत्वाऽप आचम्यापरेणाग्निं दक्षिणाऽतिक्रम्य ब्रह्मसदना-त्तृणं निरस्याप उपस्पृश्याग्निमभिमुख उप-विशति ॥**

(१) एतस्मिन्काले ब्रह्मर्षिर्यज्ञोपवीतं कृत्वो-त्तरेणापरेण वा कर्तारं गत्वा अपरेणाग्निं दक्षिणातिक्रम्य ब्रह्मसदनात्तूष्णीं तृणं निरस्याप उपस्पृश्याग्निमभिमुख उपविशति । एतस्मिन् काल इति वैदिकेऽपि पात्रासादना-नन्तरमेव ब्रह्मणः प्रवेशः , नार्वागित्येतदर्थम् । अप आचम्येति शुद्धस्यापि कर्माङ्गं पुनराचमनम् । यज्ञो-

¶ शेषं मातृदवत् ।

† संर. मातृदगतम् ।

(१) हिगृ. १९।१।१७–१८ ; संर. ६६ (प्रोक्षणी-पात्रं० ).

(१) हिगृ. १९।१।१९ ; संग. २९ (एतस्मिन् काले० ) कृत्वाऽप (कृत्वा) ब्रह्मसदनात् (ब्रह्मासनात्) ; संर. ६६.

पवीतग्रहणं कर्माङ्गस्याऽऽविकाजिनस्य वाससो वोपादानार्थम्, पित्र्ये वा तस्य प्राचीनावीतित्वनिराकरणार्थम्। अथवा यज्ञोपवीतं कृत्वेति यज्ञोपवीतस्य प्राधान्यख्यापनार्थम्। तेन ब्रह्मालाभे तत्स्थाने यज्ञोपवीतं वा स्यात्। तथैकेषामुक्तम्— 'छत्रं यज्ञोपवीतं कमण्डलुं वा' इति। अथवा पूर्वोक्तमेव प्रयोजनम्। एतस्मिन् काले इति वचनमनित्यः पुरुषो नित्यः काल इत्येतदर्थम्। तेन छत्रादीनामेको वा ब्रह्मणः स्थाने स्यात्। अप उपस्पृश्येत्यत्र सूत्र एवोक्तं प्रयोजनम्। श्रौतप्रायश्चित्तार्थत्वमिहैव स्यात्, नान्यत्र। इहापि वैशेषिकेष्वेव धर्मेषु श्रौतमित्येकेषां मतेऽन्यत्प्रयोजनम्। मातृवृ.

(२) अपरेणेत्यनेन पात्रहोमकर्तुरन्तरङ्गत्वं बाध्यते। ब्रह्मणः सदनम् आसनम्, तस्मात्तृणं निरस्येदित्यर्थः। ब्रह्मेति वचनमन्येषामप्यासनानि सन्तीति गमयति। तेन सर्वैरप्यृत्विग्भिः स्वस्वासने उपविश्यैव कर्म कर्तव्यम्, न तु केवलं भूमिष्ठैरिति। यजमानेन श्रौते दर्शनात्स्वासनात्तृणनिरसनमपि कार्यम्। ब्रह्मसदनात्तृणं निरस्येति दर्शनात्तृणमयमासनमिति गम्यते। स्मृतित एव निरसनोत्तरमुदकस्पर्शे सिद्धे पुनर्वचनं श्रौतप्रायश्चित्तार्थम्। एतच्च यज्ञोपवीतकरणादिकं सर्वं स्वकर्म यजमानेन वृतः सन्नेव कुर्यात्, 'नावृता याजयेयुः' इति वरणरहितस्य कर्मणि प्रवृत्तिनिषेधात्। ऋत्विक्त्वं तु वरणभरणाधीनमित्यृत्विगधिकरणे मीमांसकैर्विस्तरेण प्रपञ्चितमस्ति, तत्तत्र द्रष्टव्यम्। श्रौते तु सत्रे वरणभरणाभावेऽपि होत्रादिसंज्ञानिर्वाहार्थं संकल्पविशेषस्यापि निमित्तता मीमांसकैरङ्गीकृता। § संर. ६७

प्रणीतासंस्कारः

**[1]समावप्रच्छिन्नाग्रौ दर्भौ प्रादेशमात्रौ पवित्रे कृत्वाऽन्येन नखाच्छित्त्वाऽद्भिरनुमृज्य पवित्रान्तर्हिते पात्रेऽप आनीयोपबिलं पूरयित्वोदगग्राभ्यां पवित्राभ्यां त्रिरुत्पूयोत्तरेणाग्निं दर्भेषु सादयित्वा दर्भैरपिदधाति ॥**

(१) समादधातीत्येवमादि सूत्र एवोक्तम्। द्वे पवित्रे कृत्वा। कथं करोति? अन्येन नखात्तृणेन काष्ठेन वा छित्त्वा करोति। कृत्वाऽद्भिरनुमृज्य पवित्राभ्यामन्तर्हिते पात्रे प्रणीताप्रणयनेऽप आनीयोपबिलं पूरयित्वा, यथा न स्कन्दत्युत्पवनेन, उदगग्राभ्यां पवित्राभ्यां त्रिरुत्पूयोत्तरेणाग्निं दर्भेषु सादयित्वा दर्भैरपिदधाति। मातृवृ.

(२) समौ वर्णरूपाभ्याम्, दैर्घ्येण साम्यस्य तु प्रादेशमात्रावित्यनेनैव सिद्धत्वात्। प्रच्छिन्नाग्रावित्यत्र प्रशब्दो दुर्लक्ष्यसाग्रतानिवृत्त्यर्थः। प्रादेशमात्रौ प्रादेशप्रमाणौ एतादृशौ यौ दर्भौ तौ पवित्रौ पवनयोग्यौ संस्कारैः करोति। पवित्रशब्दो यद्यपि विशेष्यलिङ्गोऽस्ति तथाऽपि पवनसाधने नपुंसक एव दृश्यते। द्विवचनं तद्भूतावयवत्वात्। भूमौ तृणं काष्ठं वाऽन्तर्धाय दर्भाग्रे प्रादेशमात्रावशेषयंस्तदुपरि धृत्वा तच्च नखादन्येन असिदेन काष्ठेन वा छित्त्वा पवनयोग्यौ करोति। कृत्वाऽद्भिरनुमार्ष्टि मूलादारभ्याग्रपर्यन्तं सोदकेन हस्तेन मार्ष्टि। एतच्च धूल्यपसारणार्थम्। तेन धूल्यभावे न कार्यमिति केचित्। अदृष्टार्थं कर्तव्यमेवेत्यन्ये।

ततः पात्रं गृहीत्वा पवित्राभ्यामन्तर्हिते तस्मिन् प्रणीताप्रणयनपात्रेऽप आनीयोपबिलं पूरयेत् यथा न स्कन्दत्युत्पवनादिना। तत उदगग्राभ्यां त्रिरुत्पूयोत्तरतोऽग्नेः संनिकृष्टतरे देशे दर्भेषु सादयित्वा दर्भैरपिदधातीत्यर्थः। उदगग्राभ्यां पवित्राभ्यामित्यत्र पवित्रग्रहणं हस्तयोरुदगग्रताव्यावृत्त्यर्थम्। 'समावप्रच्छिन्नाग्रौ दर्भौ प्रादेशमात्रौ पवित्रे करोति' इत्येतस्मिन्कात्यायनसूत्रे देवयाज्ञिकपितृभूतिहरिस्वामिनः पवित्रयोरेव समानत्वोक्तेरच्छेदनेन पवित्रे एव समे कार्ये, न तु समप्रमाणौ कुशौ छित्त्वेत्यत्राऽऽग्रहः। भिन्नप्रमाणावपि छित्त्वा समौ कार्याविति तात्पर्यार्थ इति विशेषमाहुः। संर. ६७-६८

§ शेषं मातृवृवत्।

(१) हिगृ. १९।१।२०; मुक्ता. २३३ (समावप्रच्छिन्नाग्रौ दर्भौ प्रादेशमात्रौ पवित्रे कुरुते) एतावदेव, सूत्रकार इति निर्देशः; संर. ६७.

प्रोक्षणीसंस्कारः पात्रप्रोक्षणं च

**[१]तिरःपवित्रं प्रोक्षणीः संस्कृत्य यथा पुरस्ताद् बिलवन्त्युत्तानानि कृत्वा विषायेध्मं त्रिः सर्वाभिः प्रोक्षति ॥**

(१) पवित्रे अन्तर्धाय प्रोक्षणीः संस्कृत्य यथा पुरस्तात् प्रणीतावत् बिलवन्ति पात्राण्युत्तानानि कृत्वा विमुच्येध्मं सर्वाभिस्त्रिः प्रोक्षति पात्राणि । प्रोक्षणीः संस्कृत्ये-त्येव सिद्धे तिरःपवित्रमिति वचनं प्रागप्यस्माद्धर्मोऽ-स्तीति ज्ञापयति । तेन तूष्णीं पात्रस्य त्रिः प्रक्षालनं द्विस्त्वासिच्य पूरणं प्रणीतास्विव न भवतीति गम्यते । यथोपपादमित्यभिप्रायेण सर्वाभिरित्यवशेषप्रतिषेधार्थम् । मातृद्.

(२) प्रोक्षणलक्षणं संग्रहे— ' उत्तानेन तु हस्तेन कर्तव्यं प्रोक्षणं भवेत् । ' इति । $ संर. ६८

दर्वीसंमार्गः

**दर्वीं निष्टप्य संमृज्य पुनर्निष्टप्य निदधाति ॥**

(१) दर्वीमग्नौ निष्टप्य संमृज्य पुनर्निष्टप्य निद-धाति । जुहूवत्संमार्ग इत्युपदिशन्ति । निधानं दर्भेष्विति । निशब्दादध एव, नोपरि वा काष्ठादौ । मातृद्.

(२) चरुहोमे उपस्तरणाभिघारणाद्यर्थं स्रुवस्याप्यपे-क्षितत्वात्तस्य च संस्कृतस्यैवोपस्तरणाभिघारणादिरूपकर्म-निष्पादने योग्यत्वादासादनप्रोक्षणनिष्टपनसंमार्गादिरूपाः संस्कारा दर्वीवत्स्रुवस्यापि कार्याः । ते च दर्व्या सहैव । संमार्गस्तु श्रौतस्रुवसंमार्गवत्प्रथममेव कर्तव्यः । निधानं दर्भेष्विति केचित् । $ संर. ६८

**संमार्गानभ्युक्ष्याग्नावादधाति ॥**

संमार्गानद्भिरभ्युक्ष्याग्नावादधाति । † मातृद्.

आज्यसंस्कारः

**[१]आज्यं विलाप्य पवित्रान्तर्हितायामाज्य-स्थाल्यामाज्यं निरुप्योदीचोऽङ्गारान्निरुह्य तेष्वधि-श्रित्यावद्योत्य दर्भतरुणाभ्यां प्रत्यस्य त्रिः पर्यग्नि कृत्वोदगुद्वास्याङ्गारान् प्रत्युह्योदगग्राभ्यां पवि-त्राभ्यां पुनराहारमाज्यं त्रिरुत्पूय पवित्रे प्रोक्ष्या-ग्नावाधाय ॥**

(१) आज्यं बहिरेव विलाप्य द्रवीकृत्य पवित्रा-न्तर्हितायामाज्यस्थाल्यामाज्यं निरुप्य । पुनराज्यग्रहणं प्राधान्यख्यापनार्थम्, तेन गव्यमाज्यं स्यात् । द्रव्यान्तर-संसर्गप्रतिषेधार्थं वा तेन शोधयित्वा उपरिपवनेन ग्राह्यम् । उदीचः उदङ्मुखानङ्गारान् केनचित्काष्ठेन निरुह्य तेष्वाज्यमधिश्रित्यावद्योत्य दर्भैरवाचीनज्वालैरुपरि ज्वलयित्वा दर्भतरुणाभ्यां दर्भाग्राभ्यां प्रत्यस्य तस्मिंस्ते प्रास्येत्यर्थः । उल्मुकेन त्रिः पर्यग्नि कृत्वोदगपवर्गं तदु-द्वास्य तानङ्गारांस्तेनैव काष्ठेन प्रत्युह्य अग्नौ पुनः प्रक्षिप्य निरस्य काष्ठम् उदगग्राभ्यां पुनराहृत्य त्रिरुत्पूय पश्चा-दारभ्य प्रागपवर्गमुत्पूय पुनराहृत्य, एवं त्रिः करणं दर्शपूर्णमासयोरेवोक्तम् । पुनराज्यग्रहणं नवनीतस्यापि पितृयज्ञे उत्पवनेन पुनराहारार्थम् । अपरे पूर्वमाज्यग्रहण-मिदं च तूष्णीमेवाऽऽज्येनान्य( ? तूष्णीकेनाऽऽज्येनेत्य)त्राय-मेव संस्कारविधिः, न दर्शपूर्णमासादिक एव मन्त्रवर्ज-मित्येतदर्थमित्याहुः । तथैव तत्रैवोक्तम् । पवित्रे अग्ना-वाधाय । पुनः पवित्रग्रहणं विस्रस्य पृथग्भूतयोः सहाभ्या-धानार्थम् । तस्मादादित एव । ते च द्वे स्याताम् । कारणं दर्शपूर्णमासयोरेवोक्तम् । व्यक्तं च बौधायने ' पवित्रे विस्रस्याद्भिः संस्पृश्य ' इत्याह । मातृद्.

(२) आज्यस्थाल्यां पवित्रे पश्चाद्भागमारभ्य प्राग्भागं नीत्वा पुनः पश्चाद्भागमानीयोत्पुनाति । पुन-र्द्विरेवमेव । श्रुत्यैव प्रत्यगपवर्गताऽत्र विहितोत्सर्गस्य बाधिका । ब्राह्मणे ' पुनरहारम् । एवमिव हि प्राणा-पानौ संचरतः ' इति पवित्रयोः प्राणापानरूपयोः संचार

$ शेषं मातृवृवत् ।

† संर. मातृवृवत् ।

(१) हिगृ. १९।१।२१–२३ ; संर. ६८.

(१) हिगृ. १९।१।२४ ; संर. ६९ निरुह्य ( निरूह्य ) प्रत्युह्य ( प्रत्यूह्य ) ( प्रोक्ष्य० ).

उक्तः । प्राणो हि प्रागपवर्गे संचरति तस्य मुखनासिकानिरोधेन यतो निरोधः । अपानः प्रत्यगपवर्गे तस्य निरोधोऽपानद्वारलिङ्गनिरोधेन यतो दृश्यते । तस्मात्प्राणापानगतिभ्यां क्रमिकाभ्यां पुनराहारे प्रत्यगपवर्गता न निवार्येति । पुनराहारमिति णमुल्प्रत्ययान्तम् । पुनराहारोऽङ्गमुत्पवनस्य । ¶ संर. ६९

शम्यापरिधानम्

**[1]शम्याभिः परिदधाति । अपरेणाग्निमुदीचीनकुम्बां मध्यमां निदधाति ॥**

शम्याभिः परिधिभिः अग्निं परिदधाति । कुम्बां कुम्बं स्थूलप्रदेशमाहुः । अपरेण मध्यमां निदधाति ।

§ मातृवृ.

**दक्षिणेनाग्निं संस्पृष्टां मध्यमया प्राचीनकुम्बाम् ॥**

दक्षिणेनाग्निं मध्यमया संस्पृष्टां प्राचीनकुम्बां दक्षिणां शम्यां निदधाति ।

‡ मातृवृ.

**उत्तरेणाग्निं संस्पृष्टां मध्यमया प्राचीनकुम्बाम् ॥**

उत्तरेणाग्निं मध्यमयैव संस्पृष्टां प्राचीनकुम्बामुत्तरां शम्यां निदधाति । अधरोत्तरभावः परिस्तरणवदत्र द्रष्टव्यः । इहाधिकारादेव सिद्धे त्रीण्यग्निग्रहणानि क्रियन्ते तानि केवलस्याग्नेः संप्रत्ययार्थम् , परिस्तरणस्य मा भूदिति । तेनोपर्यैव परिस्तरणानामग्नेः परिधानं कार्यम् , न बाह्यत इति । इतरथा पात्रासादनवद्ब्रह्मसदनवच्च बाह्यतश्च प्राप्नोति हि । दक्षिणोत्तरयोः पुनर्ग्रहणं संस्पृष्टामिति संशब्दश्चाग्नेर्दक्षिणतश्चोत्तरतश्च तयोर्निधानं सम्यक्स्पर्शनेनाधरोत्तरभावश्च यथा स्यादिति । इतरथा मध्यमस्यैव दक्षिणतश्चोत्तरतश्च निधानं स्पर्शमात्रं च प्राप्नोतीति । उक्तं बौधायनीये-- अधरोत्तरभावश्च परिस्तरणवत् ।

‡ मातृवृ.

कर्त्रुपवेशनम्

**अपरेणाग्निं प्राङ्मुख उपविशति ॥**

अपरेणाग्निं प्राङ्मुखः कर्ता आचार्य उपविशति । सिद्धस्यैवोत्तरविधिकालार्थमनुकीर्तनम् । अथवा प्राग्दिशमुखयोः कर्मवशेन नियतत्वख्यापनार्थम् । अग्निग्रहणं त्विह परिस्तीर्णस्य संप्रत्ययार्थम् । मातृवृ.

परिषेचनम्

**[1]अथ परिषिञ्चति ॥**

अथ अनन्तरमाचार्यः परिषिञ्चति सर्वतः सिञ्चतीत्यर्थः । * मातृवृ.

**'अदितेऽनुमन्यस्व' इति दक्षिणतः प्राचीनम् ॥**

कथं परिषिञ्चति ? – अदित इति । दक्षिणतोऽग्नेः प्राचीनमुदकं सिञ्चति । * मातृवृ.

**'अनुमतेऽनुमन्यस्व' इति पश्चादुदीचीनम् ॥**

पश्चादग्नेरुदीचीनमुदकं सिञ्चति । मातृवृ.

**'सरस्वतेऽनुमन्यस्व' इत्युत्तरतः प्राचीनम् ॥**

उत्तरतोऽग्नेः प्राचीनमुदकं सिञ्चति । सरस्वत इत्येतस्मिन्मन्त्रे पत्नी गर्भिणी( ? पत्नयो गर्भिणय ) इतिवत्स्त्रियां छान्दसे ह्रस्वत्वे संबुद्धिलोपो गुणश्च स्यात् ।

¶ मातृवृ.

**'देव सवितः प्रसुव' इति सर्वतः प्रदक्षिणम् ॥**

सर्वतः प्रदक्षिणमग्निं सिञ्चति । सावित्रहोममन्त्रस्याऽऽदिग्रहणमेतदित्येके, छन्दोगानां तथा दर्शनात् । तन्नेत्युत्तरत्र प्रतिपादयिष्यामः । प्रदक्षिणवचनं प्रत्येकं सर्वत्र मा भूदिति, सकृदेव परिषेकः स्यादित्येतदर्थम् ।

* मातृवृ.

इध्माधानम्

**[2]परिषिच्येध्ममङ्क्त्वाऽभ्यादधाति– 'अयं त इध्म आत्मा जातवेदस्तेनेध्यस्व वर्धस्व चेन्धि**

---

¶ शेषं मातृवृवत् ।
§ संर. मातृवृगतम् ।
‡ संर. मातृवृवत् ।
( १ ) हिगृ. १९।१।२५–२८ ; संर. ७०.

* संर. मातृवृवत् ।
¶ संर. मातृवृगतम् ।
( १ ) हिगृ. १९।१।३०–३४ ; संर. ७१–७२.
( २ ) हिगृ. १९।१।३५ (अङ्क्त्वा० ) ; संर. ७२.

वर्धय चास्मान् प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधय स्वाहा ' इति ॥

( १ ) परिषिच्यैवमिध्ममाज्येन दर्व्याऽङ्क्त्वा प्रक्षालयित्वा( ? प्रज्वलिता )ग्नौ हस्तेनाभ्यादधाति ' अयं त इध्मः ' इत्यनेन । परिषिच्य ... एतदन्तं परिषेचनख्यापनार्थम् । परिषेकविसर्गयोर्मध्ये कर्मान्तरप्रतिषेधार्थमित्येके । अथ वा प्रतिषेधविषयेऽपि नित्यं समन्त्रः परिषेकः, सूतकाग्नावपि तूष्णीमित्येतदर्थम् । मातृवृ.

( २ ) परिषिच्यैवमग्निमिध्ममाज्येन दर्व्याऽङ्क्त्वा प्रज्वलिताग्नौ हस्तेनाभ्यादधाति ' अयं त इध्मः ' इत्यनेन मन्त्रेण । इध्माभ्याधानस्याजुहोतिचोदितत्वेऽपि वचनात् स्वाहाकारः । एवं सर्वसमिदाधाने द्रष्टव्यम् । परिषिच्येति वचनममन्त्रकेऽपि परिषेके दक्षिणतः प्राचीनमित्यारभ्य सर्वतः प्रदक्षिणमित्यन्तः परिषेको यथा स्यात्, न तु सर्वतः प्रदक्षिणमित्येतावानेवेति ख्यापनार्थं परिषेकेध्माभ्यञ्जनयोर्मध्ये कर्मान्तरप्रतिषेधार्थं च । तेन सचरुतन्त्रहोमे परिषेकात्पूर्वमेव चरूद्वासनं सिद्धं भवति । संर. ७२

आघारौ

[1]अथ दर्व्या जुहोति ॥

( १ ) अथ इध्माधानादनन्तरं होमान् वक्ष्यमाणान् दर्व्या जुहोति । अथशब्दः इध्माघारयोः संबन्धार्थः । तेनाऽऽघारवत्येव दर्विहोमः, नान्यत्र । मातृवृ.

( २ ) अथशब्द इध्माभ्याधानाघारयोः संबन्धार्थः । तेन यत्र यत्राऽऽघारौ तत्रैवेध्माभ्याधानम्, नान्यत्र । एतेन आपूर्विक इध्माभ्याधानं नेति सिद्धं भवति । एतमिध्माभ्यञ्जनमपि दर्व्यैव भवतीति च । * संर. ७३

उत्तरं परिधिसंधिमन्ववहृत्य दर्वीं ' प्रजापतये मनवे स्वाहा ' इति मनसा ध्यायन् दक्षिणाप्राञ्चमृजुं दीर्घं संततं जुहोति ॥

( १ ) उत्तरं परिधिसंधिमनु लक्षयित्वा, तेन पथेत्यर्थः । अवहृत्य प्रवेश्य दर्वीम्, ' प्रजापतये ' इत्यनेन मन्त्रेण मनसा ध्यायन्ननुच्चारयन् वाचा शब्दम्, दक्षिणाप्रागपवर्गमकुटिलमायतमविच्छिन्नं जुहोति आघारयतीत्यर्थः । दर्वीग्रहणं स्थाल्या सहान्ववहृत्य पश्चादुपादाय होमप्रतिषेधार्थम् । तस्मात्पूर्वमेवोपादाय प्रवेश्याऽऽघारयितव्यम् । मातृवृ.

( २ ) दक्षिणाप्राञ्चमिति वचनं तिर्यक्त्वनिरासार्थम् । ऋजुमिति वचनं जिह्मत्वनिरासार्थम् । दीर्घमिति वचनं शास्त्रान्तरोक्तस्य ' द्वेष्यस्य ह्रस्वम्' इति कल्पनिरासार्थम् । संततमिति ' द्वेष्यस्य न्यञ्चं विच्छिनत्ति' इत्येतस्य कल्पस्य निरासार्थम् । * संर. ७४

दक्षिणं परिधिसंधिमन्ववहृत्य 'इन्द्राय स्वाहा' इति प्राञ्चमुदञ्चमृजुम् ॥

( १ ) दक्षिणं परिधिसंधिमनु लक्षयित्वा, तेन पथेत्यर्थः । ' इन्द्राय स्वाहा ' इत्यनेन प्रागुदगपवर्गमृजुं दीर्घं संततं जुहोतीत्येव । मनसा ध्यायन्निति निवर्तते । अतो वाचैवाभिघारयति । एतयोराघारयोर्ज्योतिष्मति होमः सर्वेषामिध्मकाष्ठानां संस्पर्शनं चेष्यते । मातृवृ.

( २ ) उत्तराघारे ऋजुग्रहणं दीर्घसांतत्ययोरनावश्यकत्वद्योतनार्थम् । ' आघारे धारायां चाऽऽदिसंयोगः ' इत्यापस्तम्बोक्तविशेषस्वीकारे तु मन्त्रारम्भसमकालमाघारयोरारम्भः । * संर. ७४

आज्यभागौ

आघारावाघार्याऽऽज्यभागौ जुहोति ॥

( १ ) तावाघार्येति पूर्वोक्तयोर्होमयोराघारसंबन्धार्थम् ( ? संज्ञार्थम् ) । नैतदस्ति, संज्ञायां संव्यवहाराभावात् । अथापि ज्ञानम्, आघारयतीत्येव ब्रूयात् । आघाराज्यभागयोस्तर्हि संबन्धार्थम्, आघारावाज्यभागौ( ? आघारवत्याज्यभागौ ) स्याताम्, नेतरत्रेति । आज्यभागाविति संज्ञासंव्यवहारार्थम् ' आज्यभागान्तं कृत्वा ' इत्यत्र । मातृवृ.

* शेषं मातृवृवत् ।

[1] हिगृ. १९।१।३६-४२ ; संर. ७३ संततं जुहोति ( संततं ).

* शेषं मातृवृवत् ।

(२) आघारावाघार्येति वचनमनन्तरोक्तयोर्होमयोराघारसंज्ञार्थम् । तेन ज्योतिष्मत्यग्नौ होमः सर्वेषामिध्मकाष्ठानां संस्पर्शनं च सिद्धं भवति । ‡ संर. ७४

**'अग्नये स्वाहा' इत्युत्तरार्धपूर्वार्धे, 'सोमाय स्वाहा' इति दक्षिणार्धपूर्वार्धे ॥**

अग्नेरुत्तरार्धस्य पूर्वार्धमुत्तरपूर्वार्धम् । तथा दक्षिणार्धस्य पूर्वार्धं दक्षिणपूर्वार्धम् । जुहोतीति उभयोः शेषः ।

*मातृवृ.

प्रधानाहुतिदेशः

**तावन्तरेणेतरा जुहोति ॥**

तावाज्यभागावन्तरेण तद्धोमदेशयोर्मध्ये इतराहुतीर्जुहोति । तावन्तरेण जुहोतीत्येतावत्युच्यमाने 'युक्तो वह' इत्येतासामेव देशसंबन्धः प्रसज्येत, स मा भूत्, सर्वासामेव भवतीतीतरा इति वचनम् । *मातृवृ.

साधारणाज्याहुतयः

**'युक्तो वह जातवेदः पुरस्तादग्ने विद्धि कर्म क्रियमाणं यथेदम् । त्वं भिषग्भेषजस्यासि कर्ता त्वया गा अश्वान् पुरुषान् सनेम स्वाहा ॥ या तिरश्ची निपद्यसेऽहं विधरणी इति । तां त्वा घृतस्य धारयाऽग्नौ संराधनीं यजे स्वाहा ॥ संराधन्यै देव्यै स्वाहा ॥ प्रसाधन्यै देव्यै स्वाहा' इति ॥**

(१) युक्तो वह०, या तिरश्ची०, संराधन्यै०, प्रसाधन्यै० इति चतस्रो जुहोति । द्वितीये संराधनीमिति पठितव्यम्, यजेः सकर्मकत्वादित्येके । यथापठितमेव विभक्तिव्यत्ययादित्यन्ये । तत्र, उदीच्यानां संराधनीमिति पाठः । तस्मान्निरनुनासिकोऽपपाठः । स्वाहाकारस्य पाठेऽपि त्वसमाप्ते यज इत्येतदन्तो होममन्त्रः । 'मन्त्रान्ते नित्यः स्वाहाकारः' इति परिभाषया स्वाहाकारः स्यात् । मातृवृ.

(२) 'या तिरश्ची' इत्येतस्मिन्मन्त्रे संराधनीमित्येव पाठः, यजेः सकर्मकत्वादित्येके । 'संराधनी यजे' इत्येव पाठो विभक्तिव्यत्ययादित्यन्ये । निरनुनासिकः पाठोऽपपाठ एवेति मातृदत्तः । छान्दसः पाठ इति तु युक्तम् । संर. ७४

सर्वदर्विहोमेषु कल्पातिदेशः

**'सर्वदर्विहोमाणामेष कल्पः ॥**

(१) दर्व्या होमादिष्टस्य दारुणा व्युत्पादनात्तत्कर्तृकाणां दर्विहोम इति समाख्या । तस्मात्तेऽपि होमा दर्विहोमा इति श्रौतेष्वूक्तम् । सर्वे दर्विहोमाः सर्वदर्विहोमाः । के पुनस्ते ? उपनयनस्नानविवाहाष्टकादयः । तेषामेष कल्पो विधिर्भवति योऽसावुद्धननादिरनुक्रान्तः । यद्येवमेष योगो व्याहृतिविधानानन्तरं कार्यः । इष्यते हि व्याहृतिपर्यन्तो विधिः । सर्वत्र श्रौत इष्यते यतस्तत्र 'व्याहृतिपर्यन्तं कृत्वा' इत्याह । तत्र न कर्तव्यं भविष्यति । एवं तर्ह्यनुक्रान्तोऽनुक्रम्यमाणस्य यो विधिः क्रत्वर्थः परिषेकविसर्गान्तः सोऽभिप्रेत इष्यते च । सर्वत्र प्रवृत्तिश्चातश्चेष्यते यतस्तत्र वारुण्याद्यनुक्रमति । यद्येवमन्ते वक्तव्यम् । नैवं शक्यम् । सर्वस्य हीतिकर्तव्यताकलापस्य सर्वदर्विहोमेषु प्रसङ्गः स्यात् । तत्र को दोषः ? सायंप्रातर्होमादिष्वतिप्रसङ्गात् । अत्र पुनः क्रियमाणे त्रिधौ समाप्तेषु धर्मेषु विधानात् क्वचिदेकदेशस्य क्वचित्सर्वस्य चातिदेशः सिद्धो भविष्यति । तदुत्तरत्र वक्ष्यामः । अथ सर्वग्रहणं किमर्थम् ? त्रिप्रकारा दर्विहोमाः, आघारवन्तः आपूर्विकाः अग्निहोत्रिकाश्चेति । तत्र येषामेतदन्तं सर्वं भवति ते आघारवन्तः । येषां यावदुक्ता एवाऽऽहुतयस्ते आपूर्विकाः । येषां द्विर्होमास्त्रिः प्राशनं तेऽग्निहोत्रिकाः । तेषां सर्वेषामनेनातिदेशः स्यादित्येतदर्थम् । बहुवचनात्तत्सिद्धिरिति चेन्न । बहुत्वान्नानाहविष्कृत्वा( ? ष्कत्वा)चैषां युज्यते बहुवचनमिति । आपूर्विकेषु यावदर्थं द्रव्यसंस्कारः परिस्तरणं परिषेकविसर्गौ चातिदिश्यन्ते । यावदुक्तप्रधानाहुतयोऽन्यानि च वैशेषिकाणि कर्माणि

---

‡ शेषं मातृवृवत् ।

* संर. मातृवृवत् ।

(१) हिगृ. १९।१।४३ ; संर. ९३, ९४.

भवन्ति । एवमेवाग्निहोत्रिकेषु । तत्र "स्रुक्स्रुवौ प्रयुज्य संस्कृत्य चतुर्गृहीतं गृहीत्वा सर्वान्मन्त्राननुद्रुत्य प्रथमाहुतिं जुहोति । 'अग्नये स्विष्टकृते स्वाहा' इति द्वितीयाम् । अग्निहोत्रवत्त्रिः प्राश्य स्रुवं दर्भैः प्रक्षालयति । यथोक्तानि वैशेषिकाणि कर्माणि" इति बौधायनोक्तम् । आघारवतामापूर्विकाणां चेह दर्शनमस्ति, नाग्निहोत्रिकाणाम् । तस्मात्ते न सन्तीत्येके । तत्र येष्वाघारवत्त्वमेव, येषु वा आपूर्विकत्वमेव, येषु चोभयं विकल्पते, तेष्वग्निहोत्रिकत्वमपि संभवति, तांस्तत्रैव वक्ष्यामः ।

मातृदत्त.

(२) अमुमुपनयनोपदिष्टं होमविधिमन्यत्राप्यतिदिशति— 'सर्वदर्विहोमाणामेष कल्पः' इति । अस्यार्थः— जुहोतिचोदितानि कर्माणि दर्वीहोमाः, तेषु सर्वेष्वेष उद्धननादिः प्रसाधनीदेवीहोमान्तोऽनुक्रान्तः कल्पो विधिर्भवति । अथवैष प्रसाधनीदेवीहोमान्तोऽनुक्रान्तो व्याहृतिहोमवारुणीहोमादिरनुक्रम्यमाणश्च कल्पो विधिर्भवतीत्यर्थः । पूर्वस्मिन् कल्पेऽग्रे तत्र तत्र 'व्याहृतिपर्यन्तं कृत्वा' इति वचनम् 'इमं मे वरुण, तत्त्वा यामि' इत्यादिविधानं चाप्राप्तत्वात् अपूर्वविधानार्थम् । द्वितीयकल्पे त्वनुवादो भवति । सर्वग्रहणं यत्र यत्र व्याहृतिहोमविधानं वारुण्याद्यनुक्रमणं च न कृतं भवति तादृशेषु सूत्रोक्तेषु शास्त्रान्तरोक्तेष्वपि च कर्मसु प्रसाधनीदेवीहोमान्तविधिप्रापणार्थम् । अस्मिन् व्याख्याने औपासनहोमेऽतिप्रसङ्गः, सः 'व्रीहिभिर्यवैर्वा हस्तेनैते आहुती जुहोति' इत्यत्राऽऽहुतिग्रहणेन वारणीयः । एतत्कथमिति चेदुच्यते— एते जुहोतीत्येतावतैव सिद्धे आहुतिग्रहणं नियमार्थम् । आहुती एव केवले स्याताम्, नेतरत्तन्त्रमिति । अस्मिन्कल्पे परिस्तरणपरिषेकयोरपि निवृत्तिः । वैश्वदेवे तु 'उभयतः परिषेचनम्' इति प्राप्तस्य परिषेकस्य पुनर्वचनबलात् 'यथोपदेशं कुरुते' इति वचनबलाच्चेतरतन्त्रनिवृत्तिः । द्वितीयकल्पे तत्र तत्र व्याहृतिहोमविधानं वारुण्याद्यनुक्रमणं च परिसंख्यार्थम् । तेनेतरत्र प्रसाधनीदेवीहोमान्त एव विधिर्भवति, न सर्वः । आग्नेयस्थालीपाके तु 'उद्वास्य' इति ल्यप्प्रत्ययेन होमाव्यवधानस्योक्तेः इध्माभ्याधानादि प्रसाधनीदेवीहोमान्तं तन्त्रं निवर्तते । न च श्रपणात्पूर्वमेवेध्माभ्याधानादि प्रसाधनीदेवीहोमान्तमस्तु इति वाच्यम्, तादृशानुष्ठानस्य शास्त्रान्तरविरुद्धत्वेनास्वीकारात् । न च प्रणीताप्रणयनस्य आत्मन्यग्निग्रहणस्य ब्रह्मणश्च निवृत्तिः, 'सर्वदर्विहोमाणामेष कल्पः' इत्यनेनेध्माभ्याधानपूर्वतनतन्त्रप्रवर्तने बाधकाभावात् । अथवा 'आपूर्विकेषु यावदर्थं द्रव्यसंस्कारः परिस्तरणपरिषेकौ यावदुक्ता आहुतयोऽन्यानि च वैशेषिकाणि कर्माणि' इति बौधायनवचनसिद्धमापूर्विकत्वमत्र । तेन प्रणीताप्रणयनादीनामपि निवृत्तिः । आपूर्विकेष्वप्राप्तत्वात्स्विष्टकृद्विधानम्, सौविष्टकृतीं जुहोतीत्येतावदुच्यमाने 'यदस्य' इत्यनेन होमः स्यात्स मा भूदित्येतदर्थम् 'अग्नये स्विष्टकृते जुहोति' इत्येवं वचनम् । आघारतन्त्राभावादेव वारुण्यादिनिवृत्तिः । पूर्वपरिषेकसंबन्धादेवोत्तरपरिषेकप्राप्तिः । परिस्तरणविसर्गस्त्वार्थिकः ।

अथवैवं सूत्रार्थः— जुहोतिचोदितानि कर्माणि दर्विहोमाः, तेषु सर्वेष्वेष यथायोग्यं कल्पो विधिर्भवतीति । सर्वग्रहणम्— त्रिप्रकारा दर्विहोमाः, आघारवन्तः आपूर्विका आग्निहोत्रिकाश्च, तेषु सर्वेष्वनेनातिदेशः स्यादित्येतदर्थम् । यत्र आघारवान्दर्विहोमस्तत्र सर्व एव योग्यो विधिः । यत्राऽऽपूर्विको दर्विहोमस्तत्र यावदर्थं द्रव्यसंस्कारः परिस्तरणपरिषेकौ चेत्येतेषामेव योग्यत्वादेतावानेव विधिः । नन्वापूर्विकशब्दबलात्केवलं यावदुक्तो होमोऽन्यानि वैशेषिकाणि कर्माणि चेत्येतावदेवानुष्ठेयम्, नान्यान्यङ्गान्यत्रानुष्ठेयानीति चेत्, सत्यम्, 'नासंस्कृतेन द्रव्येण जुहुयात्' इति शास्त्रान्तरे असंस्कृतद्रव्यहोमनिषेधेन द्रव्यसंस्कारस्याऽवश्यकत्वात् । अधिकरणसंबन्धित्वात्परिस्तरणपरिषेकावपि । न चैवमिध्माभ्याधानमप्यग्निसंबन्धित्वात्स्यादिति वाच्यम्, बौधायनेनानुक्तत्वेन तदभावस्यैव सिद्धेः । आघाराभावादपीध्माभ्याधानस्याभावः, इध्माभ्याधानस्याऽऽघारसंबन्धित्वेनैकसंबन्धिनिवृत्तावपरसंबन्धिनोऽपि निवृत्तेर्निर्विवादत्वात् । एतयोः परस्प संबधित्वे ज्ञापकं तु 'अथ दर्व्या जुहोति'

इत्यस्मिन्सूत्रे प्रदर्शितम् । सर्वं चैतदाह बौधायनः— 'आपूर्विकेषु यावदर्थं द्रव्यसंस्कारः परिस्तरणपरिषेकौ यावदुक्ता आहुतयोऽन्यानि च वैशेषिकाणि कर्माणि' इति । द्रव्यग्रहणं होमसाधनोपलक्षणम्, 'नासंस्कृतेन पात्रेण जुहुयात्' इति शास्त्रान्तरसंवादात् । एतावन्त्येवाङ्गान्याग्निहोत्रिकेषु— संस्कृताज्येन चतुर्गृहीत्वा सर्वान्मन्त्राननुद्रुत्य प्रथमाहुतिः, 'अग्नये स्विष्टकृते स्वाहा' इति द्वितीयाहुतिः, ततोऽग्निहोत्रवत् त्रिः प्राशनम्, स्रुचो दर्भैः प्रक्षालनम्, यथोक्तानि वैशेषिकाणि कर्माणि । तथा च बौधायनः— 'आग्निहोत्रिकेषु स्रुक्स्रुवौ प्रयुज्याऽऽज्यं संस्कृत्य चतुर्गृहीत्वा सर्वान्मन्त्राननुद्रुत्य प्रथमामाहुतिं जुहोति, अग्नये स्विष्टकृते स्वाहेति द्वितीयाम्, अग्निहोत्रवत्त्रिः प्राश्य स्रुचं दर्भैः प्रक्षालयति, यथोक्तानि वैशेषिकाणि कर्माणि ततः करोति' इति । दर्विहोमाणामित्यत्र बहुवचनं नानाहविष्कत्वाद्युज्यते । एतच्चोभयकल्पे अपि समानम् । सर्वत्रैष कल्प इति वक्तव्ये दर्विहोमवचनं जुहोतिचोदितेष्वेव कर्मस्वेष कल्पो यथा स्यात्, जपत्यादिचोदितेषु मा भूदित्येतदर्थम् । एतदप्युभयकल्पे समानम् । यत्रोभयानुवादोऽन्यतरानुवादो वा तत्राऽऽघारवदेव तन्त्रम् । अन्यत्र त्रयाणां द्वयोर्वा विकल्पः कुत्रचिन्नियमो वा । तत्र निवृदन्नहोमे बहिःसंस्कृतान्नप्रापकोपस्थितवचनबलात् आपूर्विकत्वमेव । मासिकश्राद्धे बहिःसंस्कृतान्नहोमेऽप्याघारवत्तन्त्रदर्शनादाघारवत्तन्त्रमपि पक्षे । स्थालीपाके तु व्याख्यानद्वयेऽप्यापूर्विकत्वमेव । भाष्यकृता तु पक्षे आघारवत्तन्त्रमप्यत्रोक्तम् । यत्र केवले चरुहोमे स्थालीपाकशब्देन विधानं नास्ति, किंतु चरुशब्देन, पक्वाज्जुहोतीत्येवं वा, तत्राऽऽपूर्विकतन्त्रमेव । यत्र त्वाज्यादिहोमसहितश्चरुहोमः तत्राऽऽघारवत्तन्त्रेणैव चरुहोमः । एतद्विषये ज्ञापकम् 'अथैनामाग्नेयेन स्थालीपाकेन याजयति' इत्यस्मिन्सूत्रे प्रदर्शयिष्यते । एकाहुतिकेषूदद्रवणादिनिमित्तकेषु होमेषु त्रयाणां द्वयोर्वैच्छिको विकल्पः । द्वित्र्याद्याहुतिकेषु होमेषु 'सर्वाननुद्रुत्य प्रथमामाहुतिं जुहोति' इत्येतस्य विधेः स्वसूत्रविरुद्धत्वान्नाऽऽग्निहोत्रिकविधिः । औपासनहोमे त्वापूर्विकमेव तन्त्रम् । अत्र यद्यप्यतिदिष्टो विशेषविहितो वा द्रव्यसंस्कारो नास्ति तथाऽपि 'नासंस्कृतेन द्रव्येण जुहुयात्' इति शास्त्रान्तरेऽसंस्कृतद्रव्यहोमनिषेधाच्छ्रौतहोमोपदिष्टो मन्त्रवर्जं यथायोग्यं द्रव्यसंस्कारः कार्य एव । एवं श्रौतहोमोपदिष्टो होमसाधनसंस्कारोऽपि । स च निष्टपनमार्जनात्मकः । हस्तेन होमे सव्यहस्तेन दक्षिणहस्तस्य परिमार्जनम् । आज्येन औपासनहोमपक्षे आज्यसंस्कारो गृह्योक्तो मन्त्रवर्जं श्रौतो वा कार्यः । परिस्तरणपरिषेकावपि कार्यौ । अस्मिन्कल्पे आहुतिग्रहणप्रयोजनमङ्गुल्युत्तरपार्श्वेन होमसिद्धिरेव । वैश्वदेवे इतरतन्त्रनिवृत्तिः पूर्ववदेवात्रापि । शास्त्रान्तरप्रोक्तेषु चर्वतिरिक्तद्रव्यसाध्येषु कर्मसु तु आघारवत्तन्त्रमापूर्विकं तन्त्रं वेति यथाचारं व्यवस्थितं ज्ञेयमिति दिक् ।

संर. ९३–९६

होममन्त्राणां स्वाहाकारान्तता

[1] **मन्त्रान्ते नित्यः स्वाहाकारः ॥**

तेषु दर्विहोमेषु यैर्मन्त्रैर्होमस्तेषामन्ते नित्यः स्वाहाकारः स्यात् । यत्र पाठो नास्ति स्वाहाकारस्य तदर्थमयं पाठः । इदानीं किमर्थम्? मन्त्रचिकीर्षार्थम् । तत्र श्रौतं प्रायश्चित्तमितरत्र स्मार्तम् । इतरग्रहणं पित्र्येऽपि यत्र स्वधाकारो न पठ्यते तत्र स्वधाकारस्यापि प्रदानार्थत्वान्नास्ति स्वाहाकारः । तत्राप्येके स्वाहाकारं कुर्वन्ति नित्यवचनात् । श्रौते विहितमिह न स्यादितीदं सूत्रम् । मातृ.

व्याहृतिहोमः

[2] **'भूर्भुवः सुवः' इति व्याहृतिभिर्जुहोत्येकैकशः समस्ताभिश्च ॥**

भूर्भुवः सुवरिति व्याहृतिभिर्जुहोति । एकैकशः एकैकया 'भूः स्वाहा, भुवः स्वाहा, सुवः स्वाहा' इति । समस्ताभिश्च । भूर्भुवः सुवरिति वचनं व्याहृतिबहुत्वादिष्टपरिग्रहार्थम् । भूर्भुवः सुवरित्येव सिद्धे व्याहृतिभिरिति वचनमेतासामेवान्यत्र व्याहृतिग्रहणे संप्रत्ययार्थम् । तेन

(१) हिगृ. १९।१।४४.
(२) हिगृ. १९।१।४६ ; संर. ७४.

'व्याहृतिभिरन्वादधाति, व्याहृतिभी राकामहम्' इत्येवमादिषु श्रौतेषु स्मार्तेषु चैतासामेव संप्रत्ययः सिद्धो भवति। ननु 'भूर्भुवः सुवरिति व्याहृतयः' इत्येतेनैव सिद्धम्। न सिध्यति। तेनाऽऽधान एवेष्टपरिग्रहः कृतः स्यादिति। * मातृवृ.

साधारणाज्याहुतयः

**[१] 'इमं मे वरुण' 'तत्त्वा यामि' 'त्वं नो अग्ने' 'स त्वं नो अग्ने' 'त्वमग्ने अयास्ययासन्मनसा हितः। अयासन् हव्यमूहिषेऽया नो धेहि भेषजं स्वाहा॥' 'प्रजापते' इत्येषा॥**

(१) 'त्वमग्ने अयासि' इत्येवं स्यात्, इह कृत्स्नः पाठः पुरस्तात् आम्नानाद्दर्शपूर्णमासयोश्चेह न्यायादपवादग्रहणमनर्थकम्। उपनयनस्य प्राथम्यात्प्राजापत्यायामपि 'एषा' इति वचनं मनसा होमार्थं केचिन्मन्यन्ते। 'तस्मान्मनसा प्रजापतये जुहृति' इति दर्शनात् तच्चेत्युक्तम्। दर्शनमप्याघारविषयत्वादकारणम्, कारणत्वे च दर्शपूर्णमासयोराश्वमेधिके 'तिरः' इत्येवमादौ यज्ञः (? त्नः) कर्तव्यः। तत्र चेष्टत्वमन्तरेण न सिद्धिः, इहापि न सिद्धिः। सूत्रे चेन्नेष्टमिहापि नेष्टमेव। तस्माद्वाचैव होतव्यम्। मातृवृ.

(२) प्राजापत्यायाम् 'एषा' इति वचनं यत्र यत्र सामान्यतः प्राजापत्या विहिता भवति तत्रैषैव ज्ञेयेत्येतदर्थम्। केचित्तु मनसा होमार्थं मन्यन्ते, 'तस्मान्मनसा प्रजापतये जुहृति' इति दर्शनात्। तन्न, एतस्य दर्शनस्याऽऽघारविषयत्वात्। तस्माद्वाचैव होतव्यम्। संर. ७५

स्विष्टकृद्धोमः

**'यदस्य कर्मणोऽत्यरीरिचं यद्वा न्यूनमिहाकरम्। अग्निष्टत्स्विष्टकृद्विद्वान्त्सर्वं स्विष्टं सुहुतं करोतु मे॥ अग्नये स्विष्टकृते सुहुतहुते सर्वहुत आहुतीनां कामानां समर्धयित्रे स्वाहा' इत्युत्तरार्धपूर्वार्धेऽसंसक्तामितराभिराहुतिभिर्जुहोति॥**

यदस्येत्यनेन स्विष्टकृदाहुतिमुत्तरार्धपूर्वार्धेऽग्नेः, इतराभिराहुतिभिः असंसक्तामसंस्पृष्टाम्। आहुतीभिरिति दीर्घोऽपपाठः। अतिहाय इतराहुतीर्जुहोति। * मातृवृ.

जयादिहोमानां स्थानविकल्पः

**अत्रैके जयाभ्यातानान् राष्ट्रभृत इत्युपजुहृति पुरस्तात्स्विष्टकृतः॥**

(१) अत्र अस्मिन्कर्मणि पुरस्तात्स्विष्टकृतः एके आचार्याः जयाभ्यातानान् राष्ट्रभृतश्च जयांश्चाभ्यातानांश्च राष्ट्रभृतश्च। इतिशब्दः समुच्चयार्थः। प्रकारार्थ इत्येके। जयानामप्यत्रैकेषां राष्ट्रभृतामनन्तरमुपहोमत्वेनोपदेशाज्जयान् जुहृति(?) प्रधानाहुतिसमीपे जुहृति। एके इति वचनादनित्यो जयादीनां होमः। यद्यत्रेति कर्म प्रकृतं निर्दिश्यते नार्थोऽनेन, प्रकरणादेव सिद्धत्वात्। देशार्थः तर्हि अस्मिन्देशे जुहृति इति। ननु तदपि कर्म पुरस्तात् स्विष्टकृत एव सिद्धम्। एवं तर्हि देशमात्रेण जयादीनां प्राजापत्यान्ते संबन्धः, नोपहोमत्वेनेत्येतदर्थम्। तस्माद्व्याहृतिपर्यन्तस्य वारुण्यादेश्चाङ्गत्वमेव। तथोक्तमधस्तात्। यद्येवमन्नप्राशनादिषु प्रधानाहुतेरेवाऽऽम्नानात्ता(? त्का)सामेत उपहोमाः स्युः? एवं तर्हि तदुभयमेव तत्र प्रधानमिति ब्रूमः। एवमपि तस्यैव तत्कथमिदमङ्गत्वादप्रधानत्वमित्युपपन्नमपि तत्र यत्रेति वचनं जयादिष्वस्ति तत्किं कुर्यात्। एवं तर्हि यदूर्ध्वमाज्यभागाभ्यां व्याहृतिपर्यन्तं कर्तव्यं तत्साधारणं प्रधानमिति क्रमः। यच्चाऽऽयुर्दादिति तद्वैशेषिकमिति। तच्च प्रधानस्याङ्गरूपत्वादङ्गवदतिदेशः कृतो द्रष्टव्यः। अथ किमर्थं जयादीनामेव पृथक्समासः, न राष्ट्रभृद्भिः सह? राष्ट्रभृतामपि सन्ति सहचारिण इति ख्यापनार्थम्। के ते? काण्डादयो ये तत्र। साक्षादवचनात्तेषां विकल्पः। ततो जयादयस्त्रयः अनुवाका उपहोमपक्षे नित्यमुपहोतव्याः। 'यद्देवा देवहेडनम्' इति विकल्पेन चतुर्थे विदधे। नित्यमपि बौधायनः। मातृवृ.

---

* संर. मातृवृवत्।

(२) हिगृ. १९।१।४८–५५; संर. ७५.

* संर. मातृवृवत्।

(२) अत्र अस्मिन्कर्मणि पुरस्तात् स्विष्टकृतः एके आचार्याः जयाश्चाभ्यातानाश्च जयाभ्यातानाः तांश्च राष्ट्रभृतश्च । इतिशब्दः समुच्चयार्थः । प्रकारार्थः इत्येके । जयानामभ्यातानानां राष्ट्रभृतामनन्तरमुपहोमत्वेनोपदेशात् जयादीन् जुह्वति प्रधानाहुतिसमीपे जुह्वति । अत्रेति वचनं वेदाध्ययनार्थत्वेन मुख्ये उपनयने एव यथा स्यात् न प्रायश्चित्तार्थोपनयने इत्येतदर्थम् । ननु प्रजापत इत्येषेत्यनन्तरमेव ‡ 'चित्तं च स्वाहा, चित्तिश्च स्वाहा' इत्यारभ्य 'ताभ्यः स्वाहेत्युत्तराम्' इत्यन्तं सूत्रं पठित्वा 'यदस्य कर्मणोऽत्यरीरिचम्' इत्यारभ्य 'राष्ट्रभृत इत्युपजुह्वति' इत्येतदन्तं सूत्रमनन्तरं कर्तव्यम् । एवं च 'पुरस्तात् स्विष्टकृतः' इति वचनं न कर्तव्यमित्येतादृशं लाघवं परित्यज्य गौरवाङ्गीकरणं पुरस्तात्स्विष्टकृत एते उपहोमाः स्विष्टकृतमुत्तरं वेति प्रदेशविकल्पो नात्र किंत्वनुष्ठानविकल्प एवेति बोधनार्थम् । 'पुरस्तात्स्विष्टकृतः' इति वचनं स्विष्टकृदुत्तरकालताव्यावृत्त्यर्थम् ।‡ अथ किमर्थं जयाभ्यातानानामेव पृथक्समासः, न राष्ट्रभृद्भिः सहेति, राष्ट्रभृतामपि सन्ति सहचारिण इति ख्यापनार्थम् । के ते ? 'यद्देवा देवहेडनम्' इत्यच्छिद्रकाण्डपठितमन्त्रकरणका होमाः । तेषां साक्षादवचनाद्विकल्पः । विदधे च विकल्पेन 'यद्देवा देवहेडनम्' इत्यनुवाकेन होमं चतुर्थं बौधायनः । संर. ७५–७६

जयहोमाः

**'चित्तं च स्वाहा चित्तिश्च स्वाहा' इति जयान् जुहोति, 'चित्ताय स्वाहा चित्तये स्वाहा' इति वा ॥**

जयादीनां प्रत्येकमनुक्रमणं ज्ञानार्थं विशेषविधानार्थं च । 'चित्तं च स्वाहा' इति यथापाठं त्रयोदश जयान् जुहोति । 'देवासुराः' इत्यादि ब्राह्मणम् । 'चित्ताय स्वाहा' इत्येवं चतुर्थ्यन्तैर्द्वादशभिः जुहुयात्, अविकृतैव त्रयोदशी । एवमपि शाखान्तरेऽस्ति पाठ इति अवगन्तव्यम् । आकूतौ यथा । तत्र होतव्यं विसंज्ञया वाऽऽरम्भणीयानामेवमनुक्तत्वात्तत्रैव पाठो नास्तीत्यवगन्तव्यम् । सर्वत्र सत्येवं पाठ इहापि पूर्वपक्षश्चतुर्थ्यन्तताऽस्ति पाठ इति संग्रहकार आह । * मातृवृ.

अभ्यातानहोमाः

**'अग्निर्भूतानामधिपतिः स माऽवतु' इत्यभ्यातानान् ॥**

'अग्निः' इत्यष्टादशाभ्यातानान् जुहोति ।

¶ मातृवृ.

**'अस्मिन्ब्रह्मन्नस्मिन्क्षत्रे' इत्यभ्यातानेष्वनुषजति ॥**

'अस्मिन्ब्रह्मन्' इत्यादि 'देवहूत्याम्' इत्येतदन्तमभ्यातानेष्वनुषजति । किमुच्यते 'अस्मिन्ब्रह्मन्' इत्येतदनुषजतीति ? ननु 'अधिपतिः स माऽवतु' इत्येतस्याप्यनुषङ्गः कर्तव्यः । सत्यम् । तत्रासंदेहः, विप्रतिपत्त्यभावात् नपुंसकलिङ्गेन बहुवचनेन च विकृते विषये पाठदर्शनाच्च । 'अस्मिन्ब्रह्मन्' इत्यत्र विवदन्ते । 'पितरः पितामहाः' इत्यस्यैवायं पाठः, शेषः सप्तदशसु होमेषु प्रतिहोमं होमान्तरवचनमन्त्र इति केचित् विदधिरे । तस्मात्तस्यैवानुषङ्गतोक्ता, तुल्ययोगित्वस्य सर्वेषु अस्य विद्यमानत्वादनेन वाक्यसमाप्तिर्ज्ञायते । * मातृवृ.

**'पितरः पितामहा' इति प्राचीनावीती जुहोत्युपतिष्ठते वा ॥**

पितरः इत्येतामाहुतिं प्राचीनावीती जुहोति । उपतिष्ठते वाऽनेन मन्त्रेण प्राचीनावीती पितॄन् । अग्निमित्येके । लिङ्गविरोधस्तथा स्यात् । ¶ मातृवृ.

---

‡ एतच्चिह्नान्तर्गतग्रन्थस्थाने आदर्शपुस्तके "अत्रैके जयाभ्यातानान् राष्ट्रभृत इत्युपजुह्वति' इत्येतावदेव सूत्रं कर्तव्यम् । स्विष्टकृतः पुरस्तादनुष्ठानं तु विधानक्रमादेव सिध्यतीति किमर्थं गुरुसूत्रकरणम् ? इति चेन्न, 'येन कर्मणेर्त्सेत्' इति वचनात् कर्मसमृद्ध्यर्थं श्रौते गार्ह्ये स्मार्ते च कर्मणि यदि होमः क्रियते तत्र पुरस्तात् स्विष्टकृत एव भवेदिति ज्ञापनार्थत्वात्" इति पाठान्तरं दत्तम् ।

* संर. मातृवृगतम् ।

¶ संर. मातृवृवत् ।

राष्ट्रभृद्धोमाः

**'ऋताषाड्तधामा' इति राष्ट्रभृतः। पर्याय-मनुद्रुत्य 'तस्मै स्वाहा' इति पूर्वामाहुतिं जुहोति, 'ताभ्यः स्वाहा' इत्युत्तराम् ॥**

ऋताषाडिति राष्ट्रभृतो जुहोति । द्वादशैते पर्यायाः । ते सप्तमोत्तमा एकाहुतिकाः ¶ । तत्र पर्यायममुष्मै (? मनुद्रुत्य) तस्मै स्वाहेति पूर्वामाहुतिं जुहोति । ताभ्यः स्वाहेत्युत्तरां जुहोति । अत्र पर्यायमनुद्रुत्य इत्येतदनुवर्तते । नानुवर्तते इत्येके । तेषां सर्वपर्यायेषु नामादिपान्त्वन्तोऽनुषङ्ग इति । तत्र पर्यायमनुषङ्गमनुद्रुत्य तस्मै स्वाहेति पूर्वा आहुतिर्होतव्या । यथा 'संहितो विश्वसामा सूर्यो गन्धर्वस्तस्य मरीचयोऽप्सरस आयुवो नाम स इदं ब्रह्म क्षत्रं पातु ता इदं ब्रह्म क्षत्रं पान्तु तस्मै स्वाहा' इति । ताभ्यः स्वाहेत्येवोत्तराम् । एवमुत्तरास्वपि । तथा सति ताभ्य इत्येतस्य साकाङ्क्षस्यौषधयोऽप्सरस इत्यन्वयमपेक्षमाणस्य पृथक्प्रयोगो नोपपद्यत इति । अपरे त्वेवं वर्णयन्त इत्याहुः— तेषां पूर्वाहुतिः पर्यायं सानुषङ्गमनुद्रुत्य होतव्या । यथा— 'ऋताषाड्तधामाऽग्निर्गन्धर्वस्तस्यौषधयोऽप्सरस ऊर्जो नाम स इदं ब्रह्म क्षत्रं पातु ता इदं ब्रह्म क्षत्रं पान्तु तस्मै स्वाहा' इति । $ एवमुत्तरास्वपि । तत्र पूर्वस्यामाहुतावयं पिण्डार्थः— य एवं गुणवान् गन्धर्वस्तस्य स्वभूता एवंनामानोऽप्सरसः, स ताभिः सहेदं ब्रह्म क्षत्रं पातु, ताभ्यः(? तस्मै) स्वाहा हविर्जुहोमीति । उत्तरस्याम् * । अन्येषां त्वेवमेव सूत्रार्थः— अर्थवशेन पदानि सहानुवर्गे(? षङ्गे)ण विभज्य पूर्वोत्तरयोराहुत्योः अनुद्रवणम् । पर्यायैकदेशे च पर्यायशब्दस्तैलघृतपञ्चालादिशब्दवत् । तत्रैवं प्रयोगः— 'ऋताषाड्तधामाऽग्निर्गन्धर्वः स इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा । तस्यौषधयोऽप्सरस ऊर्जो नाम ता इदं ब्रह्म क्षत्रं पान्तु ताभ्यः स्वाहा' इति । एवमुत्तरास्वपि । तत्र यथासमाम्नातं चाऽऽनुपूर्व्येण व्याख्यातमिति संकर्षे विचारितत्वात् । आद्यं व्याख्यानम् । 'यस्य स्याद्येन संबन्धो दूरस्थस्यापि तस्य सः । अर्थतो ह्यसमर्थानामानन्तर्यमकारणम् ॥' इत्युक्त्वाऽस्योदाहरणत्वेन राष्ट्रभृतीयानां मन्त्रा मिश्रलिङ्गाः समर्पिता इत्युक्तम् । सूत्रकारस्यानार्जवादसदन्यद्याख्यातम् । मध्यमं त्वार्षबाधाभावादर्थस्य संबन्धस्य चानेन प्रकारेण परिकल्पयितुं शक्यत्वाच्च । तत्र युक्तं ग्राह्यम् । अग्निकल्पेऽप्येवमेव व्याख्यातम् । सूत्रान्तराध्यायप्रबोधनार्थमिहापि पुनर्व्याख्यातम् । दृश्यन्ते बहवोऽनेन ग्रन्थेन गृह्याणि कुर्वाणाः । $ मातृव्र.

उत्तरपरिषेचनम्

**[1]अथ परिषिञ्चति यथा पुरस्तात् ॥**

अथाग्निं परिषिञ्चति यथा पुरस्तात् पूर्वस्मिन् काले यथा । यथा पुरस्तादिति पूर्वधर्मातिदेशार्थम् । अथशब्दः पूर्वैरतुल्यत्वख्यापनार्थः । तेन सर्वदर्विहोमाणामिदमङ्गम्, नोपनयनस्यैव । § मातृव्र.

**'अन्वमंस्थाः, प्रासावीः' इति मन्त्रान्तान् संनमति ॥**

मन्त्रान्तश्च मन्त्रान्तश्च मन्त्रान्तश्च मन्त्रान्ताः, तान् मन्त्रान्तान् । अन्वमंस्थाः इति च प्रासावीरिति च संनमति । यथा— 'अदितेऽन्वमंस्थाः' 'देवसवितः प्रासावीः'

---

¶ सप्तमोत्तमौ एकाहुतिकौ येषु ते सप्तमोत्तमैकाहुतिकाः इति बहुव्रीहिणा भाव्यम् ।

$ अत्र ग्रन्थ उच्छिन्न इति भाति । स च संभावनया यथा— "एवमुत्तराहुतिः पर्यायं सानुषङ्गमनुद्रुत्य होतव्या । यथा 'ऋताषाड्तधामाऽग्निर्गन्धर्वस्तस्यौषधयोऽप्सरस ऊर्जो नाम स इदं ब्रह्म क्षत्रं पातु ता इदं ब्रह्म क्षत्रं पान्तु ताभ्यः स्वाहा' इति ।" इति ।

* अत्रापि ग्रन्थ उच्छिन्न इति भाति । स च संभावनया यथा— 'आहुतावयं पिण्डार्थः— य एवंगुणवान्गन्धर्वस्तस्य स्वभूता एवंनामानो या अप्सरसस्तास्तेन सहेदं ब्रह्म क्षत्रं पान्तु, ताभ्यः स्वाहा हविर्जुहोमीति ।' इति ।

$ संर. मातृव्रगतम् ।

§ संर. मातृव्रवत् ।

(१) हिगृ. १९।२।२८–२९ ; संर. ७७.

इति । तत्र मन्त्रानित्येव सिद्धेऽन्तग्रहणं देव सवितः प्रसुवेति यावदुक्तमेव समग्रः, नाऽऽदिग्रहणमिति ख्यापनार्थम् । अत्र प्राक् परिषेचनात् परिधीन् दर्व्याऽङ्क्त्वा परिस्तरणेभ्यः किंचिद्बर्हिरादाय तस्य दर्व्यामग्रम् आज्यधान्यां मध्यं मूलं चेति प्रस्तरवत्तूष्णींमङ्क्त्वा तृणमपादाय निधाय प्रस्तरवत्तूष्णीमनुप्रहृत्य पुनस्तृणं चानुप्रहृत्य परिधींश्च पूर्ववत्तूष्णीमनुप्रहृत्य संस्रावेणाभिजुहोति । अथ परिषेकं कृत्वाऽग्रेणाग्निं प्रणीताः पर्याहृत्यापरेणाग्निं निधाय किंचिदुदकमासिच्य पूर्ववत्तूष्णीं मार्जयेत् । यथाश्रद्धं दक्षिणां ददाति, ब्रह्मा च प्रतिनिष्क्रामति । एष विधिराघारवत्सु दर्विहोमेषु गृह्यान्तरे दृष्टः । अस्माकमपि न विरुध्यते । केचिदिमं नेच्छन्ति । केचिद्वास्तुबलिकर्मानन्तरं कुर्वन्ति । ‡ मातृवृ.

अन्नहोमेषु मन्त्रदेवताविधिः

[1] **'अग्नये स्वाहा, सोमाय स्वाहा, अग्नयेऽन्नादाय स्वाहा, अग्नयेऽन्नपतये स्वाहा, प्रजापतये स्वाहा, विश्वेभ्यो देवेभ्यः स्वाहा, सर्वाभ्यो देवताभ्यः स्वाहा, अग्नये स्विष्टकृते स्वाहा' इति ॥**

***सर्वत्रैवमनादिष्टदै( ? दे )वते ॥**

**'अमुष्मै स्वाहा' इति यथादेवतमादिष्टदेवते ॥**

## मानवगृह्यसूत्रम्

स्थण्डिलकरणम् अग्निस्थापनं च

[2] **प्रागुदक्चं लक्षणमुद्धत्यावोक्ष्य स्थण्डिलं गोमयेनोपलिप्य मण्डलं चतुरस्रं वाऽग्निं निर्मथ्याभिमुखं प्रणयेत् ॥**

प्रागुदञ्चं लक्षणं मण्डलं चतुरस्रं वा स्थण्डिलं गोमयेनोपलिप्य उद्धत्यावोक्ष्य लक्षणं कृत्वा, प्रागुदञ्चरेखाभिप्रायेण, गृह्यान्तरदर्शनात् । पञ्च प्राच्यो रेखाः उदीच्येका प्रथमा । अन्यस्तु नैव गृह्यान्तरापेक्षा, यतः स्वपरिशिष्ट एव युक्तम्( ? उक्तम् ) – 'रज्जुः शयार्धषष्ठा ( सा ) साङ्गुला तनु( ? )याज्ञिकी' । चतुर्षु षडङ्गुलोनेषु लक्षणमाह– सार्धे च शये, सपादेऽन्यतः– 'षडङ्गुल्यूनाश्चत्वारः प्राचीपश्चात्त्रयः शयाः । पूर्वार्धेऽर्धतृतीयाः स्युः सा वेदी पाकयाज्ञिकी ॥' । अपि वा– 'सत्र्यङ्गुलं शयमित्वा( ता ) सर्वतः परिलेखयेत् । धिष्ण्यं तत्र प्रकुर्वीत यवोनानि चतुर्दश ॥ खण्डमण्डलयोश्चैव त्रिभागमवशेषयेत् । खरप्रमाणा रेखाः स्युरुदीची प्रथमा भवेत् ॥ पञ्च प्राच्यस्ततो लेखा दक्षिणे चोत्तरेण तु । दक्षिणे चोत्तरे चान्ये तयोर्मध्ये तु पञ्चमी ॥ लेखानामानुपूर्व्येण देवताः संप्रकीर्तिताः । पृथिव्यग्निश्च वायुश्च सोम इन्द्रः प्रजापतिः ॥ लक्षणे तु कृते तस्मिन्नग्नेः प्रणयनं भवेत् ॥' इति । तत्र रज्जुस्तावत् कर्तव्या, अर्धः षष्ठः यस्याः सा, सार्धपञ्चशया इत्यर्थः । साङ्गुला अङ्गुलेनैकेनाधिका, तनुः तन्वी नातिस्थूला, याज्ञिकी यज्ञियतृणमयी कुशमयी मुञ्जमयी वा, चतुर्षु षडङ्गुलोनेषु लक्षणचतुर्षु प्रकृतत्वात् शयेषु षड्भिरङ्गुलैरूनेषु, लक्षणं चिह्नम्, कुर्यादिति क्रियापदस्य अध्याहारः । लक्षणमिति केचिन्न पठन्ति, तदा लक्षणमर्थात् बोद्धव्यम् । सार्धे शये द्वितीयम्, सपादे तृतीयम् । षडङ्गुलोनाश्चत्वारः शया यस्याः सा तथा तथोक्ता वेदिरिति, पश्चात् पश्चार्धे त्रयः शया यस्याः सा, पूर्वार्धे पूर्वस्मिन्देशेऽर्धतृतीयो यस्याः सा तथोक्ता, सा वेदिरिति सा एवंविधा पाकयाज्ञिकी पाकयज्ञेषु भवतीत्यर्थः । 'द्विगुणा शतसाहस्रे कोट्यां पञ्चगुणा स्मृता ।' केचिदेतत्पठन्ति । शतसाहस्रे लक्षहोमे, कोट्यां कोटिहोमे, सावित्रीकल्पे भवतीत्यर्थः । अपि वा सत्र्यङ्गुलमिति सुबोधाः( ? धम् ) । धिष्ण्यम् आयतनम्, तत्र तस्यां वेद्याम्, प्रकर्षेण प्रयत्नेन कुर्यादित्यर्थः । किंपरिमाणमित्याह– यवेन ऊनानि चतुर्दशाङ्गुलानि

‡ संर. मातृवृगतम् ।

* अनयोः सूत्रयोर्व्याख्यानं कर्मपरिभाषाप्रकरणे (सं. का. पृ. ११२३–११२४ ) द्रष्टव्यम् ।

( १ ) हिगृ. १९।२।४०–४२.

( २ ) मागृ. २।२।१–२.

मित्वा यवचतुर्भागोऽङ्गुलस्य, अवयवशब्दत्वात् । सत्य-ङ्गुलमिति अङ्गुलशब्दस्य प्रकृतत्वाच्च चतुर्दशाङ्गुलानि ज्ञेयानि । सर्वतः परिलेखयेत् प्रकृतत्वात् सर्वतः परिलेखमुल्लिखेत् । खण्डमण्डलयोश्चेति खण्डशब्देन वेदिरुच्यते । तयोरन्तरे खण्डं कृत्वा मण्डलमिति परिवर्तुलं द्वितीयमुच्यते, तयोस्त्रिभागं तृतीयं पश्चादव-शेषयन् खरं कुर्यादित्यर्थः । खरप्रमाणाः खरसामान्याः, शेषं सुबोधम् । एवमुक्ते लक्षणे सति किमिति गृह्यान्तरदर्शनमुपन्यस्यते । अरे एतदेव तत्रतत्राऽऽह 'प्राचीनं मध्यमाद्वंशादपराह्णे लक्षणं करोति' इत्यादौ । अत एव चेह सूत्रितं 'स्थण्डिलं गोमयेनोपलिप्य' मण्डलं वर्तुलम्, चतुरस्रं वा चतुष्कोणं चेत्युभयथा लक्षणार्थमिति मयैवाभिहितम् । अग्निं निर्मथ्य । विद्यमानेऽग्नौ मन्थनमयुक्तम् । सोमे अदृष्टार्थे चेत् सर्वस्थालीपाकेषु स्यात् । एतेन स्थालीपाकातिदेशा-द्वक्ष्यमाणं चानुमहदग्नावेवंविधानेन मन्थनार्थे वचनं स्थालीपाकस्याप्यस्य रुषस्वतीव प्रायश्चित्तत्वं स्यात् । नाप्युद्धृत्याग्निं पुनर्लक्षणकरणाभिमुखं प्रणयनं मन्थन-स्यापि यागशिष्टं तु प्रणयनं पुनरेव स्यात् अस्मा-च्छालाग्निकरणात् । शालाग्निविधानानन्तरमेव प्रागुदञ्च-मित्यादि, युक्तं चैतद् दक्षिणादानानन्तरमेव पूर्वम् । इदं तु द्वितीयदेशसंस्कारादि पुनर्मन्थनप्रणयनयो-र्वाऽऽग्नेयस्य स्थालीपाकस्य च प्रकृतत्वादग्न्याधेयत्वा-वगतेः यद्यत्र तुल्यकार्यत्वाद्विकल्पः पूर्वेणाप्यग्निः संस्क्रियते दक्षिणादानपर्यन्तेन प्रागुदञ्चेति समुच्चयाङ्-गाङ्गिभावौ तु न कल्प्येते लभते यत्रा( ? )शुद्धभाव-स्याग्निमन्थनदर्शनात् । न मध्यव्यवस्था यदि एकादशे अह्नि प्रागुदञ्चविधानेनाग्निं निष्पाद्य प्राग्वा............ दि कुर्यात् पूर्वविधानं स्यात् । पूर्वविधानेनाप्येका-दशेऽह्नि स्यात् । स्मृत्यन्तरात्तद्द्वादशे वा स्याद्दिवसे, अपराह्णे तु चिन्तयेत् । ब्राह्मणं निमन्त्रयेत् । तत्र चतुःप्राश्यं च कारयेदिति । अथवा जागरणमात्रस्यैव बाधः, प्रधानकालानुग्रहात् यथा सद्यःकालया पौर्णमास्या यजेतेति पर्वणीत्यादावरणिपाणी जागरणस्यार्थवत्त्वं द्वादशे अहनि इति बर्हिराख्यातवान् वाग्यता नाम काचि-द्बर्हिर्ग्रन्थान्तरत्वात् । अत्रैव किमिति न स्यात् ? द्वादशेऽहनि श्राद्धविधानात् एकादशेऽहन्येव स्यात् । विकल्पो वा । द्वादशेऽहनि श्राद्धं विदधत् ज्ञापयते— आदशाहं यावत्त्रयाणामेव वर्णानामाशौचं स्यादेकादशे-ऽहनि श्राद्धादेरुत्कर्षात् स्मृत्यन्तरविरोधान्नेति चेत् स्मृत्यन्तरमनुसरति । एकादशेऽहन्येव स्याद्विकल्पो वा द्वादशे अहनि श्राद्धं विदधदेवं ज्ञापयति । नास्त्येकान्ते जन्माग्निधारणमितरथोद्वाहिके तन्मते श्राद्धं महायज्ञ-( ? ज्ञा )श्च एकादशाहवदन्यस्मिन्काले न स्युः । ततश्च जीवत्पिता नोद्वाहिकं धारयेत् एकादशेऽहनि श्राद्धादे-रदर्शनात् कर्मप्रयुक्तत्वावधारणं तेषु विकारात् कुतस्तदिति येनोक्तमेकादशेऽह्नि यन्मासान्तमैन्द्रियस्यावां वा कुर्यात् तस्य श्राद्धवेलायां किमसौ काकैर्भक्षितो न च द्वादशेऽह-नीति नियमार्थं साग्नि श्राद्धाधिकारित्वं तु परार्थत्वात् । राजन्यवैश्ययोरपि प्रसङ्गात् । अन्यस्तु अग्निमन्थनं प्रव-चनवत् दर्शयति । यदि यथा श्रोत्रियो दर्शपौर्णमासयो-राहवनीयस्योद्धाराङ्गभूतयोः सान्तयोरग्निमन्थनं तेन यथा-तन्त्रोक्तमुव ... ... त्स्वशने भुक्ते गार्हपत्यादाहवनीयं ज्वलन्तं प्रणयतीति यथारात्रिनिर्मथ्याभिमुखं प्रणयेदिति प्रथमार्धं लुप्यते येन स्थालीपाकानां ते प्राप्नोति । भवतु, को दोषः ? यथा तत्र सर्वेषां( ? र्वासां ) विकृतीनां पत्नमानेष्टिप्रभृतीनामाहवनीयस्योद्धारः, एवमिहापि सर्व-विकृतीनामग्निमन्थनमिति को विरोधः ? अदृष्टार्थत्वप्रसङ्ग इति चेत्तत्र तर्हि का वार्ता ? तस्माद्यथा आहवनीयस्यो-द्धारः, एवमिहापि सर्वप्रसङ्गेन । यस्तु(?) मौनव-ददृष्टार्थत्वमाशङ्कि तन्न तर्हि मिथ्यावदत्राग्निं मथित्वाऽग्नेः प्रक्षेपः । अपि तु लक्षणमुद्धृत्यावोक्ष्य अग्निं मथित्वा प्रणयेदित्युक्तं यथाऽनुष्ठानं दृश्यते लोके तत्र किं वयं कुर्मः ? कमुपालभेते ? शास्त्रस्यार्थस्तावदीदृग्विज्ञायते, नापि लोकस्य शास्त्रविरुद्धमनुष्ठानम्, यतस्तत्रापि नित्य-धारणमस्ति । तथा चोक्तं च— 'शुश्रुवान् ब्राह्मणो ग्रामणी राजन्यो बहुपुष्टो वैश्यस्तेषां नित्यधृतः' इति । एवं यथा तत्र नित्यधारणं तथेहापि भवतीति न कश्चि-

द्विरोधः । अत एव पौर्णमासी पूर्वाऽयुक्ता यागे तथाऽमावास्यायामिति प्रागेवोक्तम् । पूर्णत्वमपि उपवासपौर्णमासीमदर्शनेऽमावास्यायामित्यभिधाय पुनरुक्तम्— 'पूर्णे चन्द्रमस्युपवसेत्पौर्णमासीमदर्शनेऽमावास्यामुपवसेत्'। पूर्वे च पौर्णमास्यमावास्ययोर्ये पूर्वे तिथी चतुर्दश्यौ तयोश्च उपवसथं कुर्यादित्यर्थः । एवं च कृत्वा शालायां पौर्णमास्याममावास्यायां दर्शपूर्णमासौ कुर्वन्ति । ये तु शाखान्तरीये नानुतिष्ठन्ति मैत्रायणीयानां चोपालम्भं कुर्वन्ति ते श्रोत्रिया वराकाः । कुतः सम्यक्शास्त्रार्थपरिज्ञानं तेषाम् ? अथ परस्परयोः शास्त्रार्थानुष्ठानं तेषाम्, यत एवं श्रूयते— 'दर्शेऽदर्शने यजेत । पौर्णमास्याममावास्यायां यजेत' इति । पूर्वा च पौर्णमास्यमावास्ययोर्दर्शपौर्णमासौ कुर्वन्ति । यस्तु शाखान्तरीयलोके प्रसिद्धेऽन्तरा प्रतिदिश्च( ? ) लोकः । खा( ? ) तदेवं पौर्णमास्यां यागार्हायामग्न्याधानादि उपक्रम्य प्रतिपादितमथवा चतुर्दश्यामुपक्रम्य पौर्णमास्यामेव प्रधानानुष्ठानमिति श्रुत्यर्थमनुष्ठितं भवति इति भगवता मानवकेनोक्तम् । पूर्वे चेति नाम 'चित्रो यूपस्य स्वरुं कुर्यात्' इतिवत् । अष्टाभा.

पवित्रकरणं स्थालीपाकश्रपणं च

**दर्भाणां पवित्रे मन्त्रवदुत्पाद्याऽऽग्नेयं स्थालीपाकं श्रपयति ॥**

दर्भाणामिति षष्ठी दर्भास्तरणे यः पाश्चात्येभ्यः पवित्रे समे प्रादेशमात्रेऽच्छिन्नाग्रे दर्भेण छिनत्ति 'वैष्णवे स्थ' इति मन्त्रोऽधीयते इति मन्त्रग्रहणे च पूर्ववत् । अन्यस्तु ओषध्या व्रीह्यादिना मन्त्रवद्ग्रहणादिहान्यत्तूष्णीं दार्शपौर्णमासिकं भवतीति दर्शयति । आग्नेयमग्निर्देवत्यम् । स्थालीति । गृह्यसंबन्धात् स्थाल्यां पच्यते स्थाल्यामिव वा पच्यते इति स्थालीपाकं श्रपयति । अन्यस्तु गृह्ये स्थालीपाकः एव भवति, न तु पुरोडाश इत्युक्तः स्यादिति । अष्टाभा.

**[1]पवित्रान्तर्हितेऽप आनीय तण्डुलानोप्य मेक्षणेन प्रदक्षिणं पर्यायुवञ्जीवतण्डुलं श्रपयति ॥**

कथमित्याह— पवित्रान्तर्हिते । पवित्राभ्यामन्तर्हितमन्तर्धानं पवित्रापवित्रे अन्तर्धायेत्यर्थः । अप उदकम्, आनीयाऽऽसिच्य, तण्डुलानोप्य प्रक्षिप्य, मेक्षणेन प्रदक्षिणं पर्यायुवन् सव्यमाड्वालयन् जीवतण्डुलम् ईषत्स्विन्नम्, श्रपयतीति वाक्यपूरणार्थं पुनरुक्तम् । अन्यस्तु जीवतण्डुलमिति जीवसंयुक्ता व्रीह्यन्तःस्थिताः सन्तः प्रसवसमर्थाः, न तु दग्धबीजभावा अबीजभावा अन्यन्तता उदकोदधिनाथाः खलादौ स्थिता दग्धबीजभावाय वेत्यर्थयति दुःश्रिते हविषि प्रायश्चितं श्रूयते । अष्टाभा.

**[2]घृतेनानुत्पूतेन नवनीतेन वोत्पूतेन शृतमभिघार्योत्तरत उद्वासयति ॥**

घृतेनानुत्पूतेन । घृतस्योत्पवनं स्याद्यदि न प्रतिषिध्येत । नवनीतेन वोत्पूतेनेत्यन्त्यपठितमुभयशेषमाशङ्क्यते । अन्यस्तु घृते सिच्यमाने आज्यार्थे घृतेनानुत्पूतेनाश्रितमभिघारयेदविद्यमाने तु नवनीते । विद्यमाने च तेन मन्त्रादुत्पूतेनेति वाऽभिघारयेत् । अनेनैव च न्यायेनाऽऽज्ये प्रतिवासयमेव न ते धर्मा विज्ञेयाः । श्रितं श्रपितमभिघार्येत्युक्त्वा उत्तरतः उत्तरस्मिन् स्थानेऽग्नेर्देशमुद्वासयति । अवतारयति । अष्टाभा.

परिसमूहनादिर्बर्हिःस्तरणान्ताः पदार्थाः

**'इमं स्तोममर्हते' इत्यग्निं परिसमुह्य पर्युक्ष्य परिस्तीर्य पश्चादग्नेरेकवद्बर्हिः स्तृणाति ॥**

'इमं स्तोमम्' पूर्वसंस्कारोऽग्नेः, अर्चिष्मादयो य इत्यनुग्राहकस्थालीपाकाः । अष्टाभा.

**उदक्प्राक्तूलान्दर्भान्प्रकृष्य दक्षिणांस्तथोत्तरानग्रेणाग्निं दक्षिणैरुत्तरानवस्तृणाति ॥**

इतरयापसूरणे गुणमाह — उदक्प्राक्तूलान्दर्भान् उत्तरान् प्रकृष्टान् दर्शस्थानात् । प्रागग्रान् पश्चार्धे

(१) मागृ. २।२।३ ; संग. ३५ (प्रदक्षिणं०).
(२) मागृ. २।२।४–१२.

स्तीर्त्वा ततः स्तरणात् प्रकृष्य प्राक् स्तीर्त्वा दक्षिणान् दर्भांस्तथा उत्तरांश्च दर्भान्प्रकृष्य दक्षिणैः प्रकृष्टैर्दर्भैरुत्तरान्प्रकृष्टान् दर्भानवस्तृणाति आच्छादयति । अग्रेणाग्निं प्रकृष्यशब्दात् । अष्टाभा.

ब्रह्मार्थं पत्न्यर्थं च दर्भास्तरणम्

**दक्षिणतोऽग्नेर्ब्रह्मणे संस्तृणात्यपरं यजमानाय पश्चार्धे पत्न्यै ॥**

दक्षिणतोऽग्नेः आसनास्तरणादि स्यात् ब्रह्मणे, संस्तरणसंबन्धात् । अपरं यजमानायेति व्यपदेशाद्धिगम्यते मन्त्रकारवत् । स्वयंकर्तृकाण्यपि गार्ह्याणि केषांचित्तदपि स्याद्विकल्पे सव्यवसाया वा यदा रिद्धिज्ञा स्यात् यत्र शब्दविहितम् , अत्र नित्यं स्यात् न विकल्पः । ऋत्विगव्यङ्ग इति यथा पश्चार्धे । दक्षिणत इत्यधुना प्रदर्शितः पश्चादिति पत्नी स्वयं साक्षात् पश्चात्तस्य कर्तृभ्यः । अष्टाभा.

पात्रासादनम्

**उत्तरतः संस्तीर्णे पवित्रे स्रुक्स्रुवावाज्यस्थालीं प्रक्षाल्य संस्तीर्णे द्वे द्वे प्रयुनक्ति ॥**

उत्तरतः अग्नेरिति गम्यते, विना( ? धा )नसादृश्यात् । संस्तीर्णे पश्चात्संस्तीर्य पवित्रे द्वे स्रुवौ द्वौ स्रुक् च स्रुवश्चेति गृह्यशेषि( विगृह्यैकशेषि )समासः । सरूपाणां मध्ये एकशेषोऽस्ति । यथा क्षौमे वसानौ इति । लोकेऽपि कुस्थाने मयादे( ? )रुभयथेति । अन्यस्तुसामरक्षणयोः स्रुवेण जुहूर्लक्ष्यते । तथा च श्रौते ' स्रुवः जुहूरुपभृत् ध्रुवा ' इति स्रुवेण सह जुहूप्रयोग उक्तः । एतदेव मनसि कृत्वा स्रुचाविति द्विवचननिर्देशोऽत्र प्रयोग उक्तो भगवता आचार्येण । आज्यस्थाली आज्यधानी प्रयुनक्ति । दृष्टो दारुचिः । तच्च फलताम्रपलाशादिकम् । अष्टसमिधमित्यष्टौ समिधः । ताश्चेध्मसमानवृक्षस्य भवन्ति । अष्टाभा.

आज्यसंस्कारः , संमार्गः , आज्यावेक्षणं च

**तूष्णीं दक्षिणत आज्यं निरूप्य मन्त्रवत्पर्यग्नि कृत्वा तूष्णीं स्रुक्स्रुवौ संमृज्य ' अदब्धेन त्वा चक्षुषाऽवेक्षे ' इति पत्न्याज्यमवेक्षते ॥**

तूष्णीं वाऽऽज्यस्थाल्यादि धर्मपरिप्राप्त्यर्थं तूष्णींग्रहणम् । मन्त्रवत् स्थालीपाकस्य पर्यग्निकरणं गृह्यान्तरात् अन्वेष्टव्यम् । अनवश्रितस्य हि हविषः पर्यग्निकरणचोदना । अन्यस्तु सामान्येन सर्वबर्हिषामिध्मादीनां पर्यग्निकरणं बोद्धव्यम् । इध्मस्य हविष्ट्( ? ष्ट्वं) युक्तम् , ब्राह्मणवाक्ये ' प्रेध्ममुख्यंति प्रहविरिध्मः ' इति । मन्त्रपर्यग्निकरणे परिवा जपति परिधि तूष्णीं स्रुक्स्रुवौ संमृज्य तूष्णीं ग्रहणाद्वेदप्रख्यादिष्वपरादि संमार्जनं प्रक्षेपणं संमार्जनम् । ' अदब्धेन त्वा ', मन्त्रवदिति वक्तव्ये अदब्धेनेति वैचित्र्यार्थम् । अष्टाभा.

**तूष्णीमधिश्रित्योपाधिश्रित्य पश्चादग्नेरुपसाद्य मन्त्रवदुत्पूयावेक्षते ॥**

**' तेजोऽसि ' इत्याज्यं यजमानोऽवेक्षते ॥**

**आज्यस्थाल्यां स्रुवं निधायाग्रेण स्थालीपाकमन्वायातयत्यपरेण मेक्षणम् ॥**

इध्माधानम् आघारणं च

**[1]तूष्णीं प्राञ्चमिध्ममुपसमाधाय ब्रह्माणमामन्त्र्य ' ओं जुहुधि ' इत्युक्ते दक्षिणेन हस्तेनान्तरेण जानुनी प्राङासीन आघारौ जुहोति, प्राजापत्यमुत्तरार्धे प्राञ्चं मनसा, ऐन्द्रं दक्षिणार्धे प्राञ्चमेव ॥**

तूष्णीमधिश्रित्य अग्नौ आज्यमित्यर्थः । उपाधिश्रित्य तस्मिन्नेवाग्नौ पूर्वार्धे भवशब्दात्पश्चाद्बर्हिषी सादयित्वा मन्त्रवदुत्पूयावेक्षतिसमानकर्तृकत्वादध्वर्युरवेक्षते । यद्वा यजमानकर्तृकपक्षोऽप्यस्ति दर्शयति न वा पूर्वत्वाददब्धयोरवेक्षणं कुतस्तेजोऽसीत्याज्यं यजमानः अवेक्षते इति । संनियोगशिष्टो मन्त्रकर्तृविशेषो मन्त्रवदिति वचनादवगम्यते, तस्मादवेक्षतेर्द्व्यर्थकल्पनातो वर स्वयंकर्तृकत्वकल्पना, गृह्यान्तरदर्शनात् । अन्यस्तु मन्त्रवदुत्पूयावेक्षते, सर्वमध्वर्युकर्तृत्वम् , यजमानस्य तु ' तेजोऽसि ' इत्यनेनैवावेक्षणम् , उत्पवनम् , 'विष्णोर्मनसा ' इत्यादिना श्रौते

---

( १ ) मागृ. २।२।१३ ; संग. ४१ ( तूष्णीं प्राञ्चमिध्ममुपसमाधाय ब्रह्माणमामन्त्र्य ' ॐ जुहुधि ' इत्युक्ते० ) दक्षिणेन ( दक्षिण ) प्राङासीन ( आसीन ).

दर्शनात् । इध्ममुपसमाधाय । कुत एतत् ? यत् 'प्राञ्च-मिध्ममुपसमाधाय वैतसमिध्ममुपसमाधाय' इति । सति गुणविधिपरे वाक्ये इध्मशब्दोऽनूद्यते । इतरथोभयविधाने वाक्याद्भिद्येत । तस्मात्प्रकृतौ इध्मोऽस्तीति केनचित् व्याख्यातम् । तदसत् । न ह्यप्राप्तविधानेऽनेन गुणविधौ वा वाक्यभेदो दुष्यति । यथागरणिसोद्यन्ते स्थालीपाकस्यामाकति । तथा च गृह्यान्तरेषु केषुचित् नैव इध्माः पठ्यन्ते । तस्माद् गृह्यान्तरादिध्मोपसमाधानमात्रमित्यवैम्यहम्, युक्तं च शाखान्तरादेवोप(य)मं ग्रहणं वैतसमिदमिति विकृतौ दर्शितम् । अन्यस्तु तूष्णीमिध्ममुपसमाधायेति केचित्पठन्ति, न केवलमत्र यावत् पूर्वत्रापि पात्रप्रयोगे अष्टादशां दार्विध्ममिति व्याख्यातश्च यया । अत एव विकृतौ दर्शनमुत्पन्नम् । ब्रह्माणमामन्त्र्य 'ब्रह्मन् होष्यामि' इति 'ओं जुहुधि' ब्रा(ब्र)ह्मणा एव 'जुहुधि यज्ञम्' इत्यादि, केचिन्नेच्छन्ति प्रकृतिविकाराभावादिति सर्वत्रशब्दो ब्रह्मत्वसूत्रेऽस्ति एषोऽनुज्ञातः सर्वत्रेति अतोऽत्रापि स्यादित्यन्ये । अन्यस्तु एतस्मिन्नेव वा परत्र व्या(? वा) । सूत्राण्यन्येन व्याख्यातानि । अहं तु व्याख्यास्यामि चरूनसंचारयत्यपरेण मेक्षणं तूष्णीमिध्ममुपसमाधाय ब्रह्मणाऽनुज्ञातश्चरून्संचारयति श्रितानि पूर्वमुत्तरोत्तरत उद्वासितानि, छान्दसो बहुवचनो द्रष्टव्यः(?) विवक्षया वाऽधिकृत्य यक्षं वा तान्युत्तरतो देशान्तरं संचार्यन्ते प्रयोगप्राशुभावाय । तत्र किंचिद्दक्षिणं देशं नयन्ति । केचिदाहुः— स्रुक्स्रुवाणां पश्चात् स्थाप्यते श्रौते यथा दर्शनात् । तथा च तत्रोक्तम्— 'अपरेण स्रुक् दण्डापात्रीम्' इति । एतेनापरेण मेक्षणमात्मन इति केचित् । अन्यः स्रुक्स्रुवादीनामपरेण मेक्षणस्याप्रधानत्वात्तदा एवार्थात् पूर्वेण स्रुचादीनां चरुसंचरे तूष्णीमिध्माः समाधाय इत्यर्थः । समानोत्तरेत् मेक्षणस्याप्रधानत्वात् । अन्तरेण जानुनी बाहू कृत्वेत्यध्याहारः, स्मृत्यन्तरात् । अन्यस्तु सामर्थ्याद्बाहू ज्ञेयौ, तयोरेव योगाधाने जानुमध्यसंयोगसंभवात् । प्राक् प्राङ्मुखः । आसीन उपविष्टः । दक्षिणेन हस्तेन स्रुवादि गृहीत्वा । अन्तरेण सव्ये जान्वोः इत्यर्थः । आघारौ जुहोति । कथमित्याह— प्राजापत्यं मनसा संबन्धोऽत्र इन्द्रायेति देवतासंगतिर्नोर्ध्वोऽध्वर इति मन्त्रः । प्राणाद्दक्षिणार्धे इत्यपूर्वविधिः । आघारौ जुहोति सामान्योपदेशः । पूर्ववदेतस्य मते अन्तरेण जानुनी इति न पूर्वशेषः प्रकरणधर्मत्वात् । अष्टाभा.

आज्यभागौ

**'अथाऽऽज्यभागौ जुहोत्याग्नेयमुत्तरार्धे सौम्यं दक्षिणार्धे समावनक्ष्णौ ॥**

आग्नेयमुत्तरार्धे सौम्यं दक्षिणार्धे समावनक्ष्णाया साम्यञ्चौ अकुटिलतया । अन्यस्तु समानौ सदृशापेक्षावित्यर्थः । छन्दोवत्सूत्राणि इति छान्दसो वा निर्देशः । अध्येतृप्रमादाद्वा विपरीतः पाठः । अष्टाभा.

साधारणाज्यहोमः

**'युक्तो वह, यदाकूतम्' इति द्वाभ्यामग्निं योजयित्वा नक्षत्रमिष्ट्वा नक्षत्रदेवतां यजेत् तिथिं तिथिदेवतामृतुमृतुदेवतां च ॥**

युक्तो वह जा० । इह पठितव्यो विवाहे वा । ज्वलनात्मकस्याग्नेर्भवस्तदा महात्मानमग्निं योजयित्वाऽध्यस्य इत्यर्थो मे निर्देशः । अध्येतृप्रमा अध्यस्येत्यर्थमेव योजयिता तस्य चोदितत्वात् । नक्षत्रमिष्ट्वा । षडेते यागाः । एतैरेव शब्दैर्यागः, न तु कृत्तिकादिभिः । अथ कृत्तिकादिभिस्तदा अष्टाविंशतिराहुतयो नक्षत्रेभ्यः, षड् ऋतुभ्यः, पञ्चदश तिथिभ्यः, तावत्य एव तद्देवताभ्यः स्युः । नक्षत्रदीनामवचनात् तत्तत्त्वादेके बहु नक्षत्राय स्वाहेति युक्तं सर्वनक्षत्राण्येव इष्टानि भविष्यन्ति । यथा विश्वस्मै भूतायेति । वर्तमानकालीनं नक्षत्रादि यष्टव्यमित्यत्र किं प्रमाणम् ? एकवचनमिति चेन्न सामान्यविवक्षयाऽपि पूज्यते(? युज्यते) तदत्र शाखान्तरनिर्णयः । तिथिदेवता प्रतिपदं स्वाहेति वदना-(ता) तिथीनां चन्द्रमाः अथवा शास्त्रान्तराद्ब्रह्मादयः । ऋतुमृतुदेवतां शास्त्रान्तरप्रसिद्धा वा । अन्येनार्तवस्तेभ्यः स्वाहेति वदता दर्शिता तस्यास्तु सर्वे चेदाल्न-

(१) भागृ. २।२।१४–२१.

विशीर्णमिव प्रतिभाति । अयं शक्योऽर्थः । नक्षत्रमिष्ट्वा यस्यां तिथौ यत् नक्षत्रं तदेव स्वेन नामधेयेनेति तस्यैवाऽऽत्मीया देवता श्रुत्युक्तायतना हि सामान्येनादेशो भवति । यथा नाग्न्यादयो देवता देवशब्देनेज्यन्ते, अपि त्वग्न्यादिशब्देन, तथा नक्षत्रादीति द्रष्टव्यम् ।

अष्टाभा.

अवदानधर्मः प्रधानहोमश्च

**उपस्तीर्याऽप उपस्पृश्य मेक्षणेन स्थालीपाकस्यावद्यति मध्यात्पूर्वार्धाद् द्वितीयं पश्चार्धात्तृतीयं यदि पश्चावदानस्य ॥**

**अवत्तमभिघार्य स्थालीपाकं प्रत्यभिघारयति ॥**

स्रुचि स्रुवेणाप उपस्पृश्योदकं स्पृष्ट्वा मेक्षणेन समिधा शृतस्थालीपाकस्य ओदनस्य अवद्यति उपसृज्योपस्तीर्याऽऽनयति । मध्यादन्तरात्, पूर्वार्धात् पूर्वभागात् । द्वितीयं द्वयोः पूरणं पश्चार्धात् । तृतीयं त्रयाणां पूरणम् । अवद्यति अत्र संबन्धः । पश्चावदानकल्पस्य जामदग्न्यादेरवत्तमभिघार्याऽऽज्येन प्रत्यवघारयत्येवाखडितमभिघारणं कृत्वा ।

अष्टाभा.

**'अग्नये स्वाहा' इति मध्ये जुहोति ॥**

**'यो देवानामसि' इति रौद्रस्य ॥**

अग्नये आज्यभागयोर्मध्ये जुहुयादित्यर्थः । किंचेति 'यो देवा' अनया ऋचा रौद्रस्य स्थालीपाकस्य मध्ये यदि विकृतौ रौद्रो न स्यादिहैव द्वितीयो रौद्रः स्थालीपाकः प्राप्यत इति स्यात् ।

अष्टाभा.

जयहोमः [१]स्विष्टकृद्धोमश्च

**जयान्हुत्वाऽऽज्यस्य स्विष्टकृते समवद्यत्युत्तरार्धात् सकृद् द्विमात्रम् । द्विर्वा यदि पश्चावदानस्य ॥**

'जया' जयष्टक(?)त्रयोदशाहुतिका आकूताय स्वाहेत्यादि, स्विष्टकृते समवद्यति इति निगदसिद्धम् । अन्यस्तु समवद्यति सहिताभ्यामाज्यस्थालीपाकाभ्यामित्यर्थः । उत्तरावदुत्तरस्य देशात् सकृदेकेनैव प्रयत्नेन, द्विमात्रं द्विगुणम्, अवदानात् । अवदानश्चाङ्गुष्ठपर्वमात्रः श्रौतादवगन्तव्यः । द्विर्वा द्वौ वा, यदि पञ्चावदानः स्यात् । यजमान इत्यर्थः ।

अष्टाभा.

**अवत्तं द्विरभिघार्य नात ऊर्ध्वं स्थालीपाकं प्रत्यभिघारयति ॥**

[१] **'अग्नये स्विष्टकृते स्वाहा' इत्यसंसक्तमुत्तरार्धपूर्वार्धे जुहोति ॥**

अवत्तं गृहीत्वेति स्रुचि द्विरभिघार्यं द्विरभिघारयेदिति, नात ऊर्ध्वं स्विष्टकृतादुत्तरकालम्, स्थालीपाकं प्रत्यभिघारयेदित्यर्थः । उत्तरार्धपूर्वार्धे तु उत्तरस्मिन्देशे असंसक्तः सर्वाभिराहुतिभिर्जुहुयादित्यर्थः । एतेन मयैव व्याख्याता अनेन व्याख्याताः पठिताः ।

अष्टाभा.

साधारणाज्यहोमः

[२]**मेक्षणं दर्भांश्चाऽऽधायानुमतिभ्यां व्याहृतिभिश्च 'त्वं नो अग्ने' 'स त्वं नो अग्ने' 'अयाश्चाग्नेऽसि' इत्येताभिर्जुहुयात् ॥**

**'वि ते मुञ्चामि रशनां वि रश्मीन्' इति च हुत्वा पवित्रेऽनु प्रहृत्याऽऽज्येनाभिजुहोति ॥**

मेक्षणैः । अग्नेरिति शेषः अनु अनुमतिदेवताभ्यामृग्भ्यामन्वद्य नोऽनुमति रतिमहु इति च व्याहृतयः । शुक्रिये पठ्यते । गृह्यान्तरे च भूः स्वाहेतिप्रभृतयस्त्वं नो अग्ने हुत्वेति पवित्रे अपवित्रे अभिव्याप्य ते आहृत्य यथा तथा जुहोति । निगदमन्यत् ।

अष्टाभा.

समिदाधानम् उपस्थानं मार्जनं च

**'एधोऽस्येधिषीमहि' इति समिधमादधाति, 'समिदसि समेधिषीमहि' इति द्वितीयाम् ॥**

**'अपो अद्यान्वचारिषम्' इत्युपतिष्ठते ॥**

**आपोहिष्ठीयाभिर्मार्जयेत् ॥**

एधोऽस्येति । आदधति इति बहुवचनात्पत्न्याद्यादध्यात्तूष्णीमवभृथवत् । अपो अद्य अग्निमभिदधतीत्यर्थः । आपोहिष्ठियाभिरापोहिष्ठशब्दवतीभिरित्यर्थः । मार्जयन्ते पावयन्त्यात्मानम् ।

अष्टाभा.

(१) मागृ. २।२।२२ ; संग. ४३ सक्त (सक्ता).
(२) मागृ. २।२।२३-२७.

दक्षिणा

[1]**पूर्णपात्रं दक्षिणा ॥**

पूर्णपात्रमासितं भव दक्षिणा ब्रह्माध्वर्युभ्याम् । पूर्णपात्रमित्युत्तरपदप्राधान्यम् । पात्रस्यैव पूर्णपीठरादेर्दानम्, तण्डुलादेर्द्रव्यस्य पूरणार्थत्वाद्गुणत्वम् । अन्यस्तु– यद्यप्युत्तरपदप्राधान्यं तथा द्रव्यस्य तण्डुलादि दानं मन्तत्वादर्थ( ? )स्तस्यैव प्राधान्यम् । अन्यश्च द्रव्यस्य परिमाणार्थत्वेन पात्रस्य उपादानमिति गुणभूतेऽत्र मात्राद्रव्यस्य प्रदेयत्वान्मतिमेयत्वाच्च प्रधानभूतत्वेन । अष्टाभा.

बर्हिःप्रहरणम्

**बर्हिरनुप्रहरति ॥**

बर्हिरनुप्रहरति अग्नौ प्रक्षिपतीत्यर्थः । अष्टाभा.

तन्त्रातिदेशः

**एतेन स्थालीपाकेन स्थालीपाकाः सर्वे व्याख्याताः ॥**

एतेन । अतिदेशसूत्रमिदम् । अनुपदिष्टकर्मका ये अग्नीषोमीयप्रभृतयः स्थालीपाकास्ते एवंधर्मकाः । स्थालीपाक उपलक्षणं ततो वा कर्मादयोऽप्येवंधर्मका इति एवं च प्राक्पक्षकृतालिङ्ग इत्यत्र केनचिद्व्याख्यानं महता प्रयत्नेन कृतमिध्म(ध्माना)मुपसमाधानार्थं स्थालीपाकाद्यजमानस्य प्राशनार्थं च । अत्र तु वार्ताऽपि ते न श्रुता आज्यस्थाल्यां स्रुवं निधायाग्रेण स्थालीपाकमन्वापातयति अपरेण मेक्षणमिति प्राङासीन आघारा इति आख्यानजयन ब्राह्मणमित्येतेषु इत इध्ममुपसमाधायेत्यादिकं चिरंतनैः अपठितत्वात् अन्येन तु अन्येषां मतमुक्तं नात्र पवमानादयः स्थालीपाका भवन्तीति अपठितत्वादित्यभिप्रायः । सत्यम्, तथाऽपि गृह्यान्तरे 'अग्न्याधेयदेवताभ्यो जुहुयात्' इति वचनाद्यदि क्रियते न दोषः । अथातः सर्वार्थमिदं सूत्रम् । अतन्त्राभावे पर इति परमतम् । अप्रतिषिद्धमनुमतमिति सर्वशास्त्रेषु निश्चितमिति अन्येषूक्तं मया तत्रैव यथा पवमानादयो भवन्ति । अष्टाभा.

## भारद्वाजगृह्यसूत्रम्

स्थण्डिलकरणम् अग्निस्थापनं च

[1]**प्राचीनप्रवण उदीचीनप्रवणे समे वा देशे स्थण्डिलमुद्धत्यावोक्ष्याग्निं मथित्वा लौकिकं वाऽऽहृत्य न्युप्योपसमादधाति ॥**

[2]**'भूर्भुवः सुवरोम्' इत्यग्निं प्रतिष्ठापयति ॥**

परिस्तरणम्, ब्रह्मार्थे दर्भास्तरणम्, आत्मन्यग्निग्रहणम्, पात्रासादनम्, ब्रह्मोपवेशनम्,

पवित्रकरणम्

[3]**प्रागग्रैर्दर्भैरग्निं परिस्तृणाति । अपि वोदगग्राः पश्चात् पुरस्ताच्च भवन्ति । दक्षिणः पक्ष उपरिष्टाद्भवत्यधस्तादुत्तरः । दक्षिणेनाग्निं ब्रह्मायतने दर्भान्संस्तीर्य 'मयि गृह्णाम्यग्रे' 'अग्निम्' इति द्वाभ्यामात्मन्यग्निं ध्यात्वोत्तरेणाग्निं पात्रेभ्यः संस्तीर्य यथार्थं द्रव्याणि प्रयुनक्ति । एकविंशतिदारुमिध्मं संनह्यति । आहुतिपरिमाणं वा । तस्मिञ्छम्याः परिधीनुपसंनह्यति । दर्वीं कूर्चमाज्यस्थालीं प्रणीताप्रणयनं प्रोक्षणीपात्रमुपवेषं येन चार्थः सकृदेव सर्वाणि यथोपपादं वा । एतस्मिन्काले ब्रह्मा यज्ञोपवीतं कृत्वाऽप आचम्यापरेणाग्निमतिक्रम्य दक्षिणतो ब्रह्मायतनात् तृणं निरस्याप उपस्पृश्याग्निमभिमुख उपविशति । अपरेणाग्निं प्राङ्मुख उपविश्य समावप्रच्छिन्नाग्रौ दर्भौ प्रादेशमात्रौ पवित्रे कृत्वाऽन्येन नखाच्छित्त्वाऽद्भिरनुमृज्य ॥**

प्रणीताप्रोक्षणीसंस्कारः, पात्रप्रोक्षणम्, दर्वीसंमार्गः,

आज्यसंस्कारः, शम्यापरिधानम्,

कर्तुरुपवेशनम्, आचमनं च

[4]**पवित्रान्तर्हिते पात्रेऽप आनीयोपबिलं पात्रं पूरयित्वोदगग्राभ्यां पवित्राभ्यां त्रिरुत्पूय समं प्राणैर्धारयमाणोऽविषिञ्चन्हरति । उत्तरेणाग्निं प्रणीताः सादयित्वा दर्भैरपिदधाति । प्रणीतावत्**

---

(१) मागृ. २।२।२८–३० ; संग. ४४.

(१) भागृ. १।१. (२) संर. ५९.
(३) भागृ. १।२. (४) भागृ. १।३.

प्रोक्षणीः संस्कृत्य बिलवन्त्युत्तानानि कृत्वा विषायेध्मं त्रिः सर्वाभिः प्रोक्षति। दर्वीं निष्टप्य संमृज्य पुनर्निष्टप्य निदधाति। संमार्गानभ्युक्ष्याग्नावादधाति। पवित्रान्तर्हितायामाज्यस्थाल्यामाज्यं निरुप्योत्तरेणाग्निमङ्गारान्निरूह्य तेष्वधिश्रित्यावद्योत्य दर्भतरुणाभ्यां प्रत्यस्य त्रिः पर्यग्नि कृत्वोदगुद्वास्याङ्गारान्प्रत्यूह्योदगग्राभ्यां पवित्राभ्यां पुनराहारं त्रिरुत्पूय पवित्रे अग्नावाधाय शम्याभिः परिदधाति। अपरेणाग्निमुदीचीनकुम्बां शम्यां निदधाति। संस्पृष्टे मध्यमया प्राचीनकुम्बे दक्षिणामुत्तरां च। अपरेणाग्निमुदगग्रं कूर्चं निधाय तस्मिन्प्राङ्मुख उपविशति। यज्ञोपवीतं कृत्वाऽप आचम्य ॥

परिषेचनम्, इध्माधानम्, आघारौ, आज्यभागौ, प्रधानाहुतिदेशः, तन्त्रातिदेशः, मन्त्राणां स्वाहाकारान्तता, अनादिष्टमन्त्रके देवतानाम्नः मन्त्रत्वम्, अनादिष्टदेवताके अग्न्यादयो देवता मन्त्राश्च, व्याहृतिहोमः

[1]अथ परिषिञ्चति 'अदितेऽनुमन्यस्व' इति दक्षिणतः। 'अनुमतेऽनुमन्यस्व' इति पश्चात्। 'सरस्वतेऽनुमन्यस्व' इत्युत्तरतः। 'देव सवितः प्रसुव' इति समन्तम्। एवं हुत्वा परिषिञ्चति। कृतवन्मन्त्रान्नमति। इध्मं त्रेधाऽभ्यज्य सकृदेवाऽऽदधाति— 'अयं त इध्म आत्मा जातवेदस्तेन वर्धस्व चेन्धि वर्धय चास्मान्प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधय स्वाहा' इति। उत्तरं परिधिसंधिमन्ववहृत्य दर्वीं दक्षिणाप्राञ्चमासीनः संततमृजुमाघारमाघारयति प्रजापतिं मनसा ध्यायन्। न च स्वाहा करोति। दक्षिणं परिधिसंधिमन्ववहृत्य 'इन्द्राय स्वाहा' इति प्राञ्चमुदञ्चं संततमृजुमाघारमाघार्याऽऽज्यभागौ जुहोति। 'अग्नये मेधपतये स्वाहा' इत्युत्तरार्धपूर्वार्धे। 'सोमाय मेधपतये स्वाहा' इति दक्षिणार्धपूर्वार्धे। तावन्तरेणेतरा आहुतीर्जुहोति। सर्वदर्विहोमाणामेष कल्पः। मन्त्रान्ते नित्यः स्वाहाकारः। अमन्त्रास्तु 'अमुष्मै स्वाहा' इति यथादेवतमादिष्टदेवते। अथानादिष्टदेवते 'अग्नये स्वाहा, सोमाय स्वाहा, प्रजापतये स्वाहा, विश्वेभ्यो देवेभ्यः स्वाहा, अग्नये स्विष्टकृते स्वाहा' इति। व्याहृतिभिर्जुहोत्येकैकशः समस्ताभिश्च ॥

साधारणाज्यहोमः, जयादिहोमाः, पुनराज्यहोमः, स्विष्टकृद्धोमः, प्राजापत्यहोमः, दक्षिणा च

[2]तत एता आहुतीर्जुहोति— 'या तिरश्ची निपद्यसेऽहं विधरणी इति। तां त्वा घृतस्य धारया जुहोमि वैश्वकर्मणीं स्वाहा ॥' 'याऽनूची निपद्यसेऽहं संराधनी इति। तां त्वा घृतस्य धारयाऽग्नौ संराधनीं यजे स्वाहा ॥' 'संराधन्यै देव्यै स्वाहा ॥' 'प्रसाधन्यै देव्यै स्वाहा ॥' 'सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम्। सनिं मेधामयासिषं स्वाहा ॥' 'युक्तो वह जातवेदः पुरस्तादग्ने विद्धि कर्म क्रियमाणं यथेदम्। त्वं भिषग्भेषजस्यासि कर्ता त्वया गा अश्वान्पुरुषान्सनेम स्वाहा ॥' ॥

[3]जयाभ्यातानान्राष्ट्रभृत इति हुत्वैता आहुतीर्जुहोति— 'पूर्णा पश्चात्' 'इमं मे वरुण' 'तत्त्वा यामि' 'त्वं नो अग्ने' 'स त्वं नो अग्ने' 'त्वमग्ने अयासि' 'अयाश्चाग्नेऽस्यनभिशस्तीश्च' 'यदस्य कर्मणोऽत्यरीरिचम्' 'प्रजापते' इति। उत्तमां हुत्वा गुरवे वरं ददाति ॥

पयोदधिपृषदाज्यानां संस्कारः, स्कन्दनभेदनादिनिमित्तकप्रायश्चित्तानि

[3]अथ गृह्यप्रायश्चित्तानि। यानि स्मर्यन्ते तानि वक्ष्यामः। शेषाणि वैतानिकानि स्युः। होम-

(१) भागृ. १।४.
सं. का. १७९

(१) भागृ. १।५. (२) भागृ. १।६.
(३) भागृ. ३।१८.

देवतायाः समाम्नानात्फलश्रुतेश्च। पयोदधिपृषदाज्यानामाज्यवत्संस्कारः। न दध्नोऽधिश्रयणम्। प्रत्यसने परिषेचनमद्भिः। सर्वत्र स्कन्ने भिन्ने क्षामे दग्धे विपर्यासेऽन्तरिते च द्वे मिन्दाहुती जुहोति 'यन्म आत्मनो मिन्दाऽभूत्' 'पुनरग्निश्चक्षुरदात्' इति द्वाभ्याम्। अथ स्कन्ने 'सं त्वा सिञ्चामि' इति स्कन्नमभिमन्त्र्य 'उन्नम्भय पृथिवीम्' इत्यपोऽभ्यवहृत्य 'भूः' इत्युपस्थाय 'अस्कान्द्यौः पृथिवीम्' इत्याहुतिं जुहोति। अथाऽऽज्यं चेत् 'देवाञ्जनमगन्यज्ञः' इति चानुमन्त्रणं किंचिच्च दद्यात्। भिन्ने 'भूमिर्भूमिमगात्' इति भिन्नमभिमन्त्र्य 'उन्नम्भय पृथिवीम्' इत्यपोऽभ्यवहृत्य 'त्रयस्त्रिंशत्तन्तवः' इत्येतया जुहुयात्। अग्नौ प्रक्षेपणं दारुमये। अथ क्षामे 'निर्ऋत्यै त्वा' इति विदग्धमभिमन्त्र्य 'त्वं पराची त्वमवाची त्वं रक्षांसि गच्छ' इति दक्षिणापरमुत्तरापरं वा दिशं तं प्रति निरस्यति। 'अग्नी रक्षांसि सेधति' इति तिस्र आज्याहुतीर्जुहुयात्॥

[1]हविष्य आगमनमन्यस्य। एकदेशश्चेदुद्धृत्यैतत् कृत्वैतया जुहुयात्। एतेनाशृतदुःशृते व्याख्याते। अपोऽभ्यवहरेत्। यत्र क्व चेन्धनमग्नावादध्यात् स्वाहाकारेणाऽऽदधातीति विज्ञायते। 'रुद्राय त्वा' इत्यशृतमभिमन्त्र्य 'यमाय त्वा' इति दुःशृतम्। अथ परिस्तरणदाहे 'अग्नये क्षामवते नमो नमः क्षामवान्मा मा हिंसीन्मा मे गृहं मा मे धनं मा मे प्रजां मा मे पशून्' इत्यभिमन्त्र्य 'अग्नये क्षामवते नमो नमः' इत्याहुतिं जुहुयात्। 'इन्द्रं वो विश्वतः परि' इति पुनः परिस्तीर्य 'इन्द्राय स्वाहा' इत्याहुतिं जुहुयात्। अथ परिधिदाहे 'प्रदाव्यायाग्नये नमो नमः प्रदाव्याय' इति। समानमत ऊर्ध्वम्। 'अग्नेः समिदसि' इति पश्चार्धे 'यमस्य समिदसि' इति दक्षिणार्धे 'सोमस्य समिदसि' इत्युत्तरार्धम्। 'इन्धानास्त्वा शतं हि मा' इत्याहुतिं जुहुयात्। दुष्टेऽन्यं परिदध्यात् 'गन्धर्वोऽसि' इति प्रतिमन्त्रम्। अथ विपर्यासे 'त्वं नो अग्ने' 'स त्वं नो अग्ने' 'त्वमग्ने अयासि' 'प्रजापते' इति चतस्र आहुतीर्जुहुयात्। एता एवान्तरिते 'मनो ज्योतिर्जुषताम्' इति पञ्चमीम्। अन्तरितं च कुर्यात्संस्थिते चेजानीयात्। किंचिच्च दद्यात्॥

(१) भागृ. ३।१९.

## काठकगृह्यसूत्रम्

औपसदेऽग्नौ पाकयज्ञाः

§[1]एष औपसदोऽग्निर्वैवाहनो वा॥

तस्मिन् पाकयज्ञाः॥

अग्निमुखपदार्थक्रमः

तेषामुक्तमुपसमाधानम्॥

यथाचरितं च पवित्रसंस्करणाज्यनिर्वपणग्रहणाधिश्रयणोत्पवनमवेक्षणं च॥

प्रागाज्यभागाभ्यामुक्ता आघारौ॥

'युक्तः पुरस्तात्' इति पञ्चभिराज्यस्य जुहोति॥

'आयुषः प्राणम्' इति संतनीर्जुहोति॥

जयाभ्यातानाराष्ट्रभृतश्च॥

वार्त्रघ्नावाज्यभागौ॥

प्रधानावापः

स्विष्टकृदाज्यभागा अन्तरेणाऽऽवापः॥

साधारणाज्यहोमः, स्विष्टकृद्धोमः, प्रायश्चित्तानि

ऋतुतिथिनक्षत्रदेवताश्च यजेत॥

§ एतेषां सूत्राणां व्याख्यानानि संस्कारोपोद्घातप्रकरणे (सं. का. पृ. २४) द्रष्टव्यानि।

(१) कागृ. ४७।१-१०, १२-१६.

प्राक् स्विष्टकृत उपहोमाः ' इह गावः ' ' अयं यज्ञः ' ' आ नः प्रजाम् ' । धूर्भिरुपधूर्भिश्च हुत्वा ' इडामग्ने ' इति स्विष्टकृतम् ॥

' त्वं नो अग्ने ' इति द्वाभ्यां जुहुयात् ' अयाः ' ' भूः ' इति च ॥ ( ¶सर्वप्रायश्चित्तानि ' मनो ज्योतिः ' इति सप्तभिः ॥ )

परिस्तरणानुप्रहरणविकल्पः

परिस्तरणान्यनुप्रहरेत् । नानुप्रहरेदित्येके ॥ एवं सर्वा देवताश्चेज्यानि च ॥

## वाराहगृह्यसूत्रम्

अग्निमुखपदार्थक्रमः

[1]आहिताग्निः गोमयेन गोचर्ममात्रं चतुरश्रं वा स्थण्डिलमुपलिप्येषुमात्रं तस्मिन् लक्षणं कुर्वीत । ' सत्यसदसि ' इति पश्चार्धादुदीचीं लेखां लिखेत् । ' ऋतसदसि ' इति दक्षिणार्धात् प्राचीम् । ' घर्मसदसि ' इत्युत्तरार्धात् प्राचीम् । मध्ये द्वे तिस्रो वा प्राचीः । ' ऊर्जस्वती ' इति दक्षिणाम् । ' पयस्वती ' इत्युत्तराम् । ' इन्द्राय त्वा ' इति मध्याद्वा सर्वाः प्रादेशमात्र्यो दर्भेणावलिखेत् । अद्भिः प्रोक्ष्याग्निं सादयति । परिसमुह्य पर्युक्ष्य परिस्तीर्य तूष्णीमिध्माबर्हिः संनह्य प्रागग्रैर्दक्षिणारम्भैरुदक्संस्थैरयुग्मैर्धातुभिः स्तृणाति । दक्षिणतोऽग्नेर्ब्राह्मणमुपवेश्योत्तरत उदकपात्रं बर्हिषः पवित्रे कुरुते । समिधावप्रच्छिन्नप्रान्तौ दर्भौ प्रादेशमात्रौ ' पवित्रे स्थो वैष्णव्ये ' इत्योषध्या छित्त्वा ' विष्णोर्मनसा पूते स्थः ' इत्यद्भिस्त्रिरुन्मृज्य प्रोक्षणीधर्मैः संस्कृत्य प्रणीताः प्रणीय निर्वपणप्रोक्षणसंवपनमिति यथादैवतं चरुमधिश्रित्य स्रुक्स्रुवौ प्रमृज्याभ्युक्ष्याग्नौ प्रताप्याद्भिरासिच्य ' अच्छिन्नपत्र ' इत्याज्यमग्नावधिश्रयति । ' पृश्नेः पयोऽसि ' इत्याज्यं निर्वपति । ' परि वाजपतिः ' इत्याज्यं हविश्च त्रिः पर्यग्नि करोति । ' देवस्त्वा सवितोत्पुनातु ' इत्याज्यं श्रपयति । तूष्णीमिध्माबर्हिः प्रोक्ष्य यथाम्नातमभि परिस्तृणाति । परिधीन् परिदधाति । ' ओजोऽसि ' इत्याज्यमवेक्ष्य पश्चादग्नेर्दर्भेष्वासादयति । अभिघार्य स्थालीपाकमुत्तरत उद्वासयति । सकृदेवेध्ममादा( ? धा )य ' विरूपाक्षः प्रथमो होमानाम् ' ब्राह्मणमामन्त्र्य समिधमादा( ? धा )याऽऽघारावाघार्याऽऽज्यभागौ हुत्वा ' युनज्मि त्वा ' इति च योजयित्वा जुहोति । ' युक्तो वह ' इति हविर्ह्रायते । कामं पुरस्ताद्धुरो जुहोति ' युक्तो वह जातवेदः पुरस्तादिदं विधि( ? द्धि ) क्रियमाणं यथेह । त्वं भिषग्भेषजस्यासि गोप्ता त्वया प्रसूता गामश्वं पुरुषं सनेमि स्वाहा ॥ ' इति । ' विश्वाऽग्ने त्वया वयं धारा उदन्या इव । अति गाहेमहि द्विषम् ॥ ' इति नक्षत्रमिष्ट्वा देवतां यजेत । अहोरात्रमृतुं तिथिं च । अभिघार्य यद्दैवतं हविः स्यात्तज्जुहुयाद्यथादेवतम् । यथादेवतया चर्चा । ' आकूताय स्वाहा' इति । जयान् जुहुयात् । ' प्रजापतिः प्रायच्छदिडामग्ने ' इति स्विष्टकृतमुत्तरार्धपूर्वार्धे जुहुयात् । मेक्षणमुपयामं पवित्रे चान्वादध्यात् । ' अन्वद्य नो अनुमतिः ' ' अन्विदनुमते त्वम् ' ' भूः स्वाहा ' इति प्रायश्चित्ताहुतीश्च । ' त्वं नो अग्ने ' ' स त्वं नो अग्ने ' ' मनो ज्योतिः ' ' त्रयस्त्रिंशत्तन्तवः ' ' अयाश्चाग्नेऽसि ' इति च । ' इमं स्तनं मधुमन्तं धयाय प्रपीनमग्ने सलिलमध्ये । उत्संजिषस्व मधुमन्तपूर्वी समुद्र्यं सदनमाविवेश स्वाहा ॥ ' इति परिधिविमोकमभिजुहोति । ' अन्नपते ' इत्यन्नस्य जुहुयात् । ' एधोऽस्येधिषीमहि स्वाहा ' इति समिधमादधाति ।

---

¶ आदर्शपुस्तके कंसस्थितं वाक्यं सूत्रावयवत्वेन मुद्रितम् । भाष्यग्रन्थेभ्यस्तु नायं सूत्रावयव इति निर्णीयते ।

(१) वागृ. २१.

'समिदसि समेधिषीमहि' इति द्वितीयाम् । बर्हिषि पूर्णपात्रं निनयेत् । एषोऽवभृथः पाकयज्ञानाम् । आपोहिष्ठीयाभिर्मार्जयित्वा पर्युक्षेत । वरो दक्षिणा । अश्वं वरं विद्यात् । गामित्येके ॥

## आग्निवेश्यगृह्यसूत्रम्

स्थण्डिलकरणम् अग्निस्थापनं च

[1]प्राचीनप्रवण उदीचीनप्रवणे प्रागुदक्प्रवणे समे वा देशे उद्धत्यावोक्ष्य सिकताभिः स्थण्डिलं कृत्वोल्लिख्याग्निं मथित्वा लौकिकं वाऽऽहृत्य निधाप्योपसमादधाति ॥

परिस्तरणम्

प्रागग्रैर्दर्भैः परिस्तृणाति । अपि वोदगग्राः पश्चात् पुरस्ताच्च भवन्ति । दक्षिणानुत्तरान् करोत्युत्तरानधरान् यदि प्रागुदगग्राः ॥

दर्भसंस्तरणम्, आत्मन्यग्निग्रहणम्, पात्रासादनम्

दक्षिणेनाग्निं ब्रह्मायतने दर्भान् संस्तीर्य 'मयि गृह्णामि' 'यो नो अग्निः' इति द्वाभ्यामात्मानमग्निं(? आत्मन्यग्निं) गृहीत्वोत्तरेणाग्निं दर्भान्संस्तीर्य अथास्य(? यथार्थं) द्रव्याणि प्रयुनक्ति ।

एकविंशतिदारुमिध्ममस्थे(? मिध्मं संनह्य)-त्याहुतिपरिमाणं वा । एतस्मिन् शम्याः परिधीनिध्म उपसंनह्यति । दर्वीं कूर्चमाज्यस्थालीं प्रणीताप्रणयनं येन चान्यानि प्रोक्ष्यते(? प्रोक्षते) तच्च । सकृदेव सर्वाण्याथो(? णि यथो)-पपादं वा ॥

ब्रह्मोपवेशनम्

एतस्मिन् काले ब्रह्मा यज्ञोपवीतं कृत्वाऽप आचम्यापरेणाग्निं दक्षिणाऽतिक्रम्य ब्रह्मासनात्तृणं निरस्याप उपस्पृश्याग्निमभिमुखमुपविशति ॥

(१) आग्निगृ. १।१।१.

पवित्रकरणम्, प्रणीता-प्रोक्षणीसंस्कारः, पात्रप्रोक्षणम्, दर्वीसंमार्गः

समावप्रच्छिन्नाग्रौ दर्भौ प्रादेशमात्रे पवित्रे कृत्वाऽन्येन नखाच्छित्त्वाऽद्भिरनुमृज्य पवित्रान्तर्हिते पात्रेऽप आनीयोपबिलं पूरयित्वोदगग्राभ्यां पवित्राभ्यां त्रिरुत्पूयोत्तरेणाग्निं दर्भेषु सादयित्वा दर्भैरपिदधाति । तिरःपवित्रं प्रोक्षणीः संस्कृत्य यथा पुरस्तात् बिलवन्त्युत्तानानि कृत्वा विषायेध्मं त्रिः सर्वाभिः प्रोक्षति । दर्वीं निष्टप्य संमृज्य पुनर्निष्टप्य निदधाति । समाग्रा-(? संमार्गा)नभ्युक्ष्याग्नावादधाति ॥

आज्यसंस्कारः

आज्यं विलाप्य पवित्रान्तर्हितायामाज्यस्थाल्यामाज्यं निरुप्योदीचोऽङ्गारान्निरू(? रु)ह्य तेष्वधिश्रित्यावद्योत्य दर्भतृणा(? तरुणा)भ्यां प्रत्यस्य त्रिः पर्यग्नि कृत्वोदगुद्वास्याङ्गारान् प्रत्यूह्योदगग्राभ्यां पवित्राभ्यां पुनराहारमाज्यं त्रिरुत्पूय पवित्रे अग्नावादधाति ॥

शम्यापरिधानम्, कर्त्रुपवेशनम्

शम्याभिः परिधिभिः परिदधाति । अपरेणाग्निमुदीचीनकुम्बां मध्यमां निदधाति । दक्षिणेनाग्निं संस्पृष्ट्वा(? संस्पृष्टां) मध्यमया प्राचीनकुम्बाम् । उत्तरेणाग्निं संस्पृष्ट्वा (? संस्पृष्टां) मध्यमया प्राचीनकुम्बाम् । अपरेणाग्निं प्राङ्मुख उपविशति ॥

परिषेचनम् इध्माधानं च

अथ परिषिञ्चति । 'अदितेऽनुमन्यस्व' इति दक्षिणतः प्राचीनम् । 'अनुमतेऽनुमन्यस्व' इति पश्चादुदीचीनम् । 'सरस्वतेऽनुमन्यस्व' इत्युत्तरतः प्राचीनम् । 'देव सवितः प्रसुव' इति सर्वतः प्रदक्षिणम् । परिषिच्येध्ममाज्येनाभ्यज्याभ्यादधाति । 'अयं त इध्म आत्मा जातवेदस्तेनेध्यस्व वर्धस्व चेद्ध(? चेन्धि) वर्धय

चास्मान् प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधय स्वाहा ' इति ॥

आघारौ, आज्यभागौ, आहुतिदेशश्च

अथ दर्व्या जुहोति । उत्तरं परिधिसंधिमन्ववहृत्य 'प्रजापतये मनवे स्वाहा' इति मनसा ध्यायन् दक्षिणाप्राञ्चमुदञ्चमृजुं संततं जुहोति । दक्षिणं परिधिसंधिमन्ववहृत्य 'इन्द्राय स्वाहा' इति प्राञ्चमुदञ्चमृजुम् । आघारावाघार्याऽऽज्यभागौ जुहोति । 'अग्नये स्वाहा' इत्युत्तरार्धपूर्वार्धे । 'सोमाय स्वाहा' इति दक्षिणार्धपूर्वार्धे । तावन्तरेणेतराहुतीर्जुहोति ॥

साधारणाज्यहोमः, कल्पातिदेशः

'युक्तो वह जातवेदः पुरस्तादग्ने विद्धि कर्म क्रियमाणं यथेदम् । त्वं भिषग् भेषजस्यासि कर्ता त्वया गा अश्वान् पुरुषान् सनेमि( ? म ) स्वाहा ॥' । 'या तिरश्ची निपद्यसेऽहं विधरणी इति । तां त्वा घृतस्य धारयाऽग्नौ संराधन्यै यजे स्वाहा ॥' । 'संराधन्यै देव्यै स्वाहा' । 'प्रसाधन्यै देव्यै स्वाहा' । 'भूः स्वाहा । भुवः स्वाहा । स्वः स्वाहा । भूर्भुवः स्वः स्वाहा' इति । सर्वदर्वीहोमानामेष कल्पः ॥

'मन्त्रान्ते नित्यः स्वाहाकारः । अमन्त्रासु 'अमुष्मै स्वाहा' इति यथादैवतम् । 'भूर्भुवः स्वः' इति व्याहृतिभिर्जुहोत्येकैकशः समस्ताभिश्च ॥

साधारणहोमः, प्राजापत्यहोमः

'इमं मे वरुण' 'तत्त्वा यामि' 'त्वं नो अग्ने' 'स त्वं नो अग्ने' 'त्वमग्ने अयास्ययासन् मनसा हितः । अयासन् हव्यमूहिषे अया नो धेहि भेषजं स्वाहा ॥' । 'प्रजापते' इत्येषा ॥

स्विष्टकृद्धोमः

'यदस्य कर्मणोऽत्यरीरिचं यद्वा न्यूनमिहाकरम् । अग्निष्टत्स्विष्टकृद्विद्वान् सर्वं स्विष्टं सुहुतं करोतु मे । अग्नये स्विष्टकृते सुहुतहुते सर्वहुते सर्वप्रायश्चित्ताहुतीनां कामानां समर्धयित्रे स्वाहा ॥' इत्युत्तरार्धपूर्वार्धेऽसंसक्तामितराभिराहुतिभिर्जुहोति ॥

जयादिहोमस्थाने मतान्तरम्

अत्रैके जयाभ्यातानान् राष्ट्रभृत इत्युपजुह्वति पुरस्तात् स्विष्टकृतः ॥

जयहोमः

'चित्तं च स्वाहा । चित्तिश्च स्वाहा ।' इति जयाञ्जुहोति । 'चित्ताय स्वाहा । चित्तये स्वाहा ।' इति वा ॥

अभ्यातानहोमः

'अग्निर्भूतानामधिपतिः स माऽवतु' इत्यभ्यातानान् । 'अस्मिन्ब्रह्मन्नस्मिन् क्षत्रे' इत्यभ्यातानेष्वनुयुञ्जति । 'पितरः पितामहाः परेऽवरे' इति प्राचीनावीती जुहोत्युपतिष्ठति (वा) ॥

राष्ट्रभृद्धोमः

'ऋताषाडृतधामा' इति राष्ट्रभृतः । पर्यायमनुद्रुत्य 'तस्मै स्वाहा' इति पूर्वामाहुतीं जुहोति । 'ताभ्यः स्वाहा' इत्युत्तराम् ॥ *

स्थण्डिलकरणम् अग्निस्थापनं च

[1]'अथ शुचौ समे देशेऽग्न्यायतने शकलेन त्रिः समुद्धृत्य शकलं निरस्याप उपस्पृश्याग्निमद्भिरवोक्ष्योद्धन्ति । 'यदेवास्या अमेध्यं तदपहन्त्यपोऽवोक्षति शान्त्या' इति ब्राह्मणम् । पञ्चप्रस्थं शुचि शुक्लं सिकतमनार्द्रं विविच्य स्थण्डिलं कृत्वा समचतुरश्रमरत्निमात्रमुदक्प्राक्प्रवणं प्रादेशमात्रं व्रीहिभिर्दक्षिणतः प्राचीं लेखां लिखति ।

---

(१) आग्निगृ. १।१।२.

* अस्त्यत्राऽऽदर्शपुस्तके 'आग्निवेश्यगृह्यप्रयोगग्रन्थपर्यालोचनयाऽत्र प्रायश्चित्ताहुतिविधायकं वाक्यं गलितमिति प्रतिभाति' इति टिप्पणी ।

(१) आग्निगृ. २।३।१.

एवं मध्यममेवमुत्तरतः। व्रीहिभिः पश्चादुदीचीं लेखां लिखति । एवं॰ मध्यममेवं पुरस्तात् । व्रीहीनपोह्याप उपस्पृश्याद्भिरवोक्ष्य 'ॐ भूर्भुवः स्वरों प्रतिष्ठ' इत्यग्निमुपसमाधाय ... ॥

होमसंबन्धिप्रायश्चित्तानि पयोदध्यादिसंस्कारश्च

[1]अथातो नैमित्तिकानि प्रायश्चित्तानि व्याख्यास्यामः ॥

यदि होमो मध्ये विच्छिन्नः स्याद् 'वेदाहमेतं पुरुषं महान्तम्' इति तिस्र ऋचो जपेत्। द्वे मिन्दाहुती हुत्वा पुनः शेषं समापयेत्। यदि पात्राणि शुनाद्यवलीढे दारुमयान्यग्नौ प्रक्षिपेत्; मृण्मयानि चाप्सु प्रक्षिपेत्, लोहमयानि भस्मना शुध्यन्ति । अन्यानि नवानि पात्राणि संगृह्य 'विष्णो त्वं नो अन्तमः', 'विष्णोर्नु कं वीर्याणि प्र वोचम्' इति द्वे ऋचौ जपेत्। 'यन्म आत्मनो मिन्दाऽभूत्', 'पुनरग्निश्चक्षुरदात्', 'इमं मे वरुण', 'तत्त्वा यामि', 'त्वं नो अग्ने' इति षडाहुतीर्जुहुयात् । यद्यग्निमुदक्याद्यवलीढे अग्निमुद्वास्य पूर्ववच्छौचं कृत्वा अग्निं मथित्वा लौकिकं वाऽऽहृत्य स्रुक्स्रुवौ निष्टप्य संमृज्य स्रुचि चतुर्गृहीतं गृहीत्वा पूर्णाहुतिं हुत्वा पूर्ववत् संस्कारं करोति। यद्यरण्यशुचिर्भवेदन्यामाहृत्यैव चतुर्गृहीतं गृहीत्वा पुरुषसूक्तेन मनसाऽनुद्रुत्य जुहोति ॥

[2]पयोदधिपृषदाज्यानामाज्यवत्संस्कारः । न दध्नोऽधिश्रयणं प्रत्यसनं प्रतिवेषणमग्नि(? द्भिः)। सर्वत्र स्कन्ने भिन्ने क्षामे दग्धे विपर्यासेऽन्तरिते च द्वे मिन्दाहुती जुहुयात्– 'यन्म आत्मनो मिन्दाऽभूत्', 'पुनरग्निश्चक्षुरदात्' इति । स्कन्ने 'सं त्वा सिञ्चामि' इति स्कन्नमभिमन्त्र्यापोह्यावसिच्य 'भूः' इत्युपस्थाय 'अस्कान्द्यौः पृथिवीम्' इति द्वे आहुती जुहुयात्। आज्यं चेत् 'देवाञ्जनवनस्पतिर्महस' इति चानुमन्त्र्य किंचिच्च दद्यात् । अथ भिन्ने 'भूमिर्भूम्ना' इति भिन्नमभिन्त्र्य 'उन्नम्भय पृथिवीम्' इत्यपोह्यावसिच्य 'त्रयस्त्रिंशत्तन्तवः' इत्येतया जुहुयात्। अग्नौ प्रक्षिपेद् दारुमयाणि। अथ क्षामे 'निर्ऋत्यै त्वा' इति दग्धमभिमन्त्र्य किंचित् 'त्वं पराची त्वमवाची त्वं रक्षांसि गच्छ' इति दक्षिणापरमुत्तरापरं वा दिशं प्रति निरस्य 'अग्नी रक्षांसि सेधति' इति तिस्र आज्याहुतीर्जुहुयात् ॥

हविषामभिगमनस्यैकदेशं चेदुद्धृत्य तत्कृत्वैतया जुहुयात्। एतेनाशृतदुःशृतौ व्याख्यातौ। अपोऽभ्यवहरेत्। 'रुद्राय त्वा' इत्यशृतमभिमन्त्र्य ('यमाय त्वा' इति दुःशृतम्)। अथ परिस्तरणदाहे 'अग्नये क्षामवते नमो नमः क्षामवन्मा मा हिंसीर्मा मे गृहं मा मे धनं मा मे पशून्' इत्यभिमन्त्र्य 'अग्नये क्षामवते स्वाहा' इति जुहुयात्। 'इन्द्रं वो विश्वतस्परि' इति पुनः परिस्तीर्य 'इन्द्राय स्वाहा' इति जुहुयात्। अथ परिधिदाहे 'प्रदाव्यायाग्नये नमो नमः प्रदाव्याय' इति। समानमत ऊर्ध्वम्। 'अग्नेः समिदसि' इति पश्चार्धम्, 'यमस्य समिदसि' इति दक्षिणार्धम्, 'सोमस्य समिदसि' इत्युत्तरार्धम्। 'इन्धानास्त्वा शतं हि मा' इति द्वे आहुती जुहुयात्। जुष्टेऽन्यं परिदध्यात् 'गन्धर्वोऽसि' इति प्रतिमन्त्रम्। अथ विपर्यासे 'त्वं नो अग्ने', 'स त्वं नो अग्ने', 'त्वमग्ने अयाऽसि', 'प्रजापते' इति चतस्र आहुतीर्जुहुयात् । एता एवान्तरिते । 'मनो ज्योतिः' (इति) पञ्चमीम्। अन्तरितं च कुर्यात्। संस्थिते चेत् किंचिच्च दद्यात् ॥

(१) आग्निगृ. २।७।८.
(२) आग्निगृ. २।७।९.

## पारस्करगृह्यसूत्रम्

अग्निमुखपदार्थक्रमः

¹अथातो गृह्यस्थालीपाकानां कर्म ॥

परिसमुह्योपलिप्योल्लिख्योद्धृत्याभ्युक्ष्याग्निमुपसमाधाय दक्षिणतो ब्रह्मासनमास्तीर्य प्रणीय परिस्तीर्यार्थवदासाद्य पवित्रे कृत्वा प्रोक्षणीः संस्कृत्यार्थवत्प्रोक्ष्य निरुप्याऽऽज्यमधिश्रित्य पर्यग्नि कुर्यात् ॥

स्रुवं प्रतप्य संमृज्याभ्युक्ष्य पुनः प्रतप्य निदध्यात् ॥

आज्यमुद्वास्योत्पूयावेक्ष्य प्रोक्षणीश्च पूर्ववदुपयमनान् कुशानादाय समिधोऽभ्याधाय पर्युक्ष्य जुहुयात् ॥

एष एव विधिर्यत्र क्वचिद्धोमः ॥

(१) श्रौतान्याधानादीनि कर्माण्युक्तानि, तदनन्तरं स्मार्तान्यनुविधीयन्ते, तत्रैतदादिमं सूत्रम् – 'अथातो गृह्यस्थालीपाकानां कर्म' इति । व्याख्यास्यते इति सूत्रशेषः । तत्रायमथशब्द आनन्तर्ये द्रष्टव्यः श्रौतानुविधानानन्तरं स्मार्तान्यनुविधीयन्ते इति । आनन्तर्यप्रज्ञप्तिप्रयोजनं श्रौतेष्वधिकाराद्युपस्पृशेदप इत्येवमन्तं सर्वकर्मसाधारणं यत्तस्यात्रापि प्रवृत्तिर्यथा स्यादिति । पूर्वं प्रवृत्तं श्रौतानामुपनिबन्धनमित्येतत्सूत्रकारप्रवृत्त्या ज्ञायते – 'प्रोष्येत्य गृहानुपतिष्ठते पूर्ववत्' इति । श्रौतेषु गृहोपस्थानं विहितं तत् पूर्ववदित्यनेनातिदिश्यते, तथा 'प्रोक्षणीश्च पूर्ववत्' इति । अतःशब्दो हेत्वर्थः । यस्माच्छ्रौतान्यभिहितानि, स्मार्तान्येवानुशिष्यन्ते, अतस्तानि वक्तव्यानीति । ननु च पूर्वं स्मार्तानां गर्भाधानादीनामनुष्ठानं पश्चाच्छ्रौतानामित्यतोऽनुष्ठानक्रमेण स्मार्तान्येव पूर्वमभिधेयानीति । अत्रोच्यते– नैतदेवम्, प्रत्यक्षश्रुतित्वात् । प्रत्यक्षा हि श्रुतयः श्रौतेषु, स्मार्तेषु च पुनः कर्तृसामान्यादनुमेया श्रुतयः । स्मार्तानामपि हि वेदमूलत्वमुक्तम् । तस्मात्प्रत्यक्षश्रवणात्तान्येव पूर्वमभिधीयन्ते, न गर्भाधानादीनि । अपरे त्वन्यथा वर्णयन्ति– स्मरणादेव स्मृतीनां प्रामाण्यम् । अव्यवच्छिन्नं हि स्मरणमष्टकादीनाम्– 'अष्टकाः कर्तव्याः' इति । अनादिरयं संसारः । स्मरणमप्येषामनाद्येवेति । ननु चोक्तमापस्तम्बेन 'तेषामुत्सन्नाः पाठाः प्रयोगादनुमीयन्ते' इति । अतो वेदमूलकत्वम् । नैतदेवम् । शाखानां सतीनामुत्सादो भवति, नासतीनाम् । तत्रायं दोषः स्यात्– य एव कश्चित्कांचिच्छाखां न पठति तस्यैतद्विहितं स्मार्तं स्यात्, यस्तु पुनः पठेत्तस्य श्रौतमिति । तत्र पुरुषापेक्षया तदेव श्रौतं स्मार्तं चेत्ययुक्तरूपता स्यात् । स्मरणात् स्मृतिरिति चान्वर्थिकी संज्ञा, युक्तकर्मानुष्ठानं स्मरणं मनुगौतमवसिष्ठापस्तम्बादिभिर्ग्रन्थेनोपनिबद्धम् । तस्मात्कर्तृसामान्यादनुष्ठेयोऽयमर्थ इत्यनुमीयते । तथा च लिङ्गम्– नैमित्तिकं व्याहृतिहोमं प्रकृत्याऽऽमनन्ति– 'यद्यृक्तो भूरिति चतुर्गृहीतमाज्यं गृहीत्वा गार्हपत्ये जुहवथ यदि यजुष्टो भुव इत्याग्नीध्रीये अन्वाहार्यपचने वा हविर्यज्ञे, यदि सामतः स्वरित्याहवनीये' इति प्रकृत्याऽऽह– 'यद्यविज्ञातं तत्सर्वाण्यनुद्रुत्याऽऽहवनीये जुहवथ' इति । अविज्ञातं च यन्न विज्ञायते किमाग्वेदिकं याजुर्वेदिकं सामवेदिकं वेति । विनष्टं कर्म तत्स्मार्तमविज्ञातमित्युच्यते । वेदमूलत्वे ह्यवश्यमेवान्विष्यमाणं ज्ञायेत तत्किंमूलमिति, तस्मात्स्मृतिप्रवाहादेवायमर्थोऽनुष्ठेय इति गम्यते । गृह्यस्थालीपाकानां कर्मेति । गृह्यः शालाग्निः आवसथ्य औपासन इत्यनर्थान्तरम् । तत्र ये स्थालीपाकाः ते गृह्यस्थालीपाकाः । स्थालीपाकग्रहणं चाऽऽज्यपुरोडाशधानासक्त्वाद्युपलक्षणार्थम् । कथं ज्ञायते ? येन स्थालीपाकमुपक्रम्याऽऽज्यमुपसंहरति 'निरुप्याऽऽज्यमधिश्रित्य' इत्येवमादि । आज्यग्रहणमपि स्थालीपाकाद्युपलक्षणार्थमेव । सर्वेषामेवेदं साधारणं कर्मोच्यते, न ह्यत्र प्रकृतिविकारभाव इति । विध्यादिविध्यन्तवती प्रकृतिरित्युच्यते, यत्र पुनर्विध्यादिमात्रम्, विध्यन्तो नास्ति, सा विकृतिरिति । न चात्र विध्यादिविध्यन्तस्वरूपता, सर्वाण्येव स्थालीपाकादीनि प्रकृत्य धर्मविधानम् ।

(१) पागृ. १।१।१–५ ; संग. २ ; संदी. २४.

परिसमुह्योपलिप्योल्लिख्योद्धृत्याभ्युक्ष्याग्निमुपसमाधाये-त्येवमादि पर्यग्नि कुर्यादित्येवमन्तं सूत्रम् । परिसमूहनादयः पञ्च पदार्था भूमिशुद्ध्यर्था इति केचित् । तदयुक्तम्, न ह्यशुद्धे देशेऽग्नेः स्थापनप्रवृत्तिर्युक्तेति । तस्मादग्न्यर्था एव, यत्र यत्राग्नेः स्थापनं तत्र तत्रैते कर्तव्या इति । न च गृह्यस्थालीपाकादिकर्मान्तर्भाव एषाम्, येन 'एष एव विधिः यत्र क्वचिद्धोमः' इत्यभिहितेऽपि पुनरभिधीयते— 'उपलिप्त उद्धतावोक्षितेऽग्निमुपसमाधाय' इति । नूनमनेनाप्रवृत्तिस्तत्रेति । तस्मादग्न्यर्था एवैत इति । तथा च लिङ्गम्— 'उद्धते वा अवोक्षितेऽग्निमादधाति' इति । प्रयोजनं स्वस्थानस्थित एवाग्नौ क्रियमाणे स्थालीपाकादौ न क्रियन्ते । 'दक्षिणतो ब्रह्मासनमास्तीर्य' इत्यासनमात्रं स्यात्, न ब्रह्मा, आस्तरणमात्रोपदेशात्, क्वचिच्चोपवेशनविधानात् 'दक्षिणतो ब्रह्माणमुपवेश्य' इति । नैतत्, अदृष्टप्रसङ्गात् । न ह्यदृष्टाय कश्चिदासनप्रकल्पनं कुर्यात् । ब्रह्मासनव्यपदेशानुपपत्तेश्च । तस्मादुपवेशनार्थमास्तरणम् । यत्तूक्तम् 'दक्षिणतो ब्रह्माणमुपवेश्य' इति, तदुदपात्रावसरविधित्सया प्रस्तुतब्रह्मोपवेशनज्ञापकम्, ब्रह्मासनं चाऽऽस्तीर्य कर्तव्यम् । प्रणीय अपः, अपां हि प्रणयनं सर्वार्थं दृष्टम्, इहापि तद्वत्सर्वार्थानामपां प्रणयनम् । परिस्तीर्य अग्निम् । अर्थवदासाद्येति, प्रयोजनवत्पात्रजातमासादयतीत्यर्थः । तच्च कार्यक्रमेण मुख्यक्रमानुग्रहात् । पवित्रे कृत्वा, यथा प्रदेशान्तरे कृते इति । प्रोक्षणीः संस्कृत्य उत्पवनोद्दि( ? दि )गङ्गनादिना । अर्थवत् प्रोक्ष्य, कार्यवतः प्रोक्षणम् । निरुप्याऽऽज्यमधिश्रित्य, आज्यनिर्वाप औपयिकस्य पृथक्क्रिया । अधिश्रित्य अग्नौ । पर्यग्नि कुर्यात् आज्यं स्थालीपाकं चेति, उपलक्षणार्थत्वादाज्यस्य ।

स्रुवं प्रतप्य तापयित्वा । तमेव दर्भैः संमृज्याभ्युक्ष्य पुनः प्रतप्य निदध्यात् ।

आज्यमुद्वास्य अग्नेः सकाशात् । उत्पूय पवित्राभ्यां तदेवाऽऽज्यम् । अवेक्ष्य, प्रोक्षणीश्च पूर्ववत् । चशब्दादाज्यं पूर्ववदेव, अतः पवित्राभ्यामित्युक्तम् । प्रोक्षणीसंस्कारश्च पर्युक्षणार्थः । स्रुवस्यापि संस्कारो होमार्थः, तत्संस्कारस्यादृष्टार्थता मा भूदिति । उपयमनान् कुशानादाय समिधोऽभ्याधायेति । उपयमना उपग्रहार्थीया दर्भाः । पर्युक्ष्य जुहुयात् । पर्युक्षणं प्रोक्षणीभिरित्युक्तम् ।

एष एव विधिर्यत्र क्वचिद्धोमः इति । एष विधिरेव, न मन्त्राः, समाम्नायाभावात् । यत्र क्वचिद्धोमः शान्तिकपौष्टिकादिष्वपीति । क्वचिच्छन्दश्च गृह्याग्निव्यतिरेकेणापि यथायं विधिः स्यादिति । यथा 'दावाग्निमुपसमाधाय घृताक्तानि कुशेण्ड्वानि जुहुयात्' इति ।

*कभा.

( २ ) अथातो गृह्यस्थालीपाकानां कर्म । अथ श्रौतकर्मविधानानन्तरम्, यतः श्रौतानि कर्माणि विहितानि, स्मार्तानि तु विधेयानि, अतो हेतोर्गृह्ये आवसथ्येऽग्नौ ये स्थालीपाका गृह्यस्थालीपाकाः, तेषां गृह्यस्थालीपाकानां कर्म क्रिया अनुष्ठानमिति यावत् । वक्ष्यते इति सूत्रशेषः । तत्राऽऽदावाधानादिसर्वकर्मणां साधारणो विधिः प्रथमकण्डिकयोच्यते । तत्र गृह्येष्वावसथ्याधानादिषु सर्वकर्मसु यजमान एव कर्ता, नान्य ऋत्विक्, तस्यानुक्तत्वात् ।

अथ यजमानः सुस्नातः सुप्रक्षालितपाणिपादः स्वाचान्तः कर्मस्थानमागत्य वारणादियज्ञियवृक्षोद्भवासने प्रागग्रानुदगग्रान् वा त्रीन् कुशान्दत्त्वा प्राङ्मुख उपविश्य वाग्यतः शुद्धायां भूमौ सप्तविंशत्यङ्गुलं मण्डलं परिलिख्य तत्र परिसमुह्य त्रिभिर्दर्भैः पांसूनपसार्य । उपलिप्य गोमयोदकेन त्रिः । उल्लिख्य त्रिः खादिरेण हस्तमात्रेण खड्गाकृतिना स्फ्येन प्रागग्रा उदक्संस्थाः स्थण्डिलपरिमाणास्तिस्रो रेखाः कृत्वा । उद्धृत्य अनामिकाङ्गुष्ठाभ्यां यथोल्लिखिताभ्यो लेखाभ्यः पांसूनुद्धृत्य । अभ्युक्ष्य मणिकाद्भिरभ्युक्ष्य अभिषिच्य । अग्निमुपसमाधाय कर्मसाधनभूतं लौकिकं स्मार्तं श्रौतं वाऽग्निमात्माभिमुखं स्थापयित्वा । दक्षिणतो ब्रह्मासनमास्तीर्य तस्याग्नेर्दक्षिस्यां दिशि ब्रह्मणे आसनं वारणादियज्ञियदारुनिर्मितं पीठमास्तीर्य कुशैः स्तीर्त्वा तत्र वरणाभरणाभ्यां पूर्वसंपादितं कर्मसु तत्त्वज्ञं ब्रह्माणम्, तदभावे पञ्चाशत्कुशनिर्मितम्,

* जभा. कभावत् ।

अग्नेरुत्तरतः प्राङ्मुखमासीनं स्वयमुदङ्मुख आसीनोऽनुलेपनपुष्पमाल्यवस्त्रालङ्कारादिभिः संपूज्य 'अमुककर्माहं करिष्ये, तत्र मे ( त्वम् ? )अमुकगोत्रामुकप्रवरामुकशर्मन् ब्राह्मण, त्वं ब्रह्मा भव' इति वृत्वा 'भवामि' इत्युक्तवन्तमुपवेश्य । प्रणीय, अप इति शेषः । तद्यथा— अग्नेरुत्तरतः प्रागग्रं कुशैरासनद्वयं कल्पयित्वा वारणं द्वादशाङ्गुलदीर्घं चतुरङ्गुलविस्तारं चतुरङ्गुलखातं चमसं सव्यहस्ते कृत्वा दक्षिणहस्तोद्धृतपात्रस्थोदकेन पूरयित्वा पश्चिमासने निधायाऽऽलभ्य पूर्वासने स्थापयित्वा । परिस्तीर्य अग्निम्, बर्हिर्मुष्टिमादाय ईशानादि प्रागग्रैर्बर्हिभिरुदक्संस्थमग्नेः परिस्तरणं कृत्वा । अर्थवदासाद्य, यावद्भिः पदार्थैरर्थः प्रयोजनं तावतः पदार्थान् द्वन्द्वं प्राक्संस्थानुदगग्रानग्नेरुत्तरतः पश्चाद्वा आसाद्य । तद्यथा— पवित्रच्छेदनानि त्रीणि कुशतरुणानि, पवित्रे साग्रे अनन्तर्गर्भे द्वे कुशतरुणे, प्रोक्षणीपात्रं वारणं द्वादशाङ्गुलदीर्घं करतलमितखातं पद्मपत्राकृति कमलमुकुलाकृति वा, आज्यस्थाली तैजसी मृन्मयी वा द्वादशाङ्गुलविशाला प्रादेशोच्चा, तथैव चरुस्थाली, संमार्गकुशास्त्रयः, उपयमनकुशास्त्रिप्रभृतयः, समिधस्तिस्रः पालाश्यः प्रादेशमात्र्यः, स्रुवः खादिरो हस्तमात्रः अङ्गुष्ठपर्वमात्रखातपरिणाहवर्तुलपुष्करः, आज्यं गव्यम्, चरुश्चेत् व्रीहितण्डुलाः, षट्पञ्चाशदधिकमुष्टिशतद्वयपरिमितं पराध्यें बहुभोक्तृपुरुषाहारपरिमितमपराध्यें तण्डुलाद्यन्नम्, पूर्णपात्रं दक्षिणा वरो वा यथाशक्ति हिरण्यादिद्रव्यम् । पवित्रे कृत्वा प्रथमं त्रिभिः कुशतरुणैरग्रतः प्रादेशमात्रं विहाय द्वे कुशतरुणे प्रच्छिद्य । प्रोक्षणीः संस्कृत्य प्रोक्षणीपात्रं प्रणीतासंनिधौ निधाय तत्र पात्रान्तरेण हस्तेन वा प्रणीतोदकमासिच्य पवित्राभ्यामुत्पूय पवित्रे प्रोक्षणीषु निधाय दक्षिणेन हस्तेन प्रोक्षणीपात्रमुत्थाप्य सव्ये कृत्वा तदुदकं दक्षिणेनोच्छाल्य प्रणीतोदकेन प्रोक्ष्य । अर्थवत्प्रोक्ष्य अर्थवन्ति प्रयोजनवन्ति आज्यस्थाल्यादीनि पूर्णपात्रपर्यन्तानि प्रोक्षणीभिरद्भिरासादनक्रमेणैकैकशः प्रोक्ष्य असंचरे प्रणीताग्न्योरन्तराले प्रोक्षणीपात्रं निधाय । निरुप्याऽऽज्यं आसादितमाज्यमाज्यस्थाल्यां पश्चादग्नेर्निहितायां प्रक्षिप्य, चरुश्चेच्चरुस्थाल्यां प्रणीतोदकमासिच्य आसादितांस्तण्डुलान् प्रक्षिप्य । अधिश्रित्य तत्राऽऽज्यं ब्रह्माऽधिश्रयति, तदुत्तरतः स्वयं चरुम्, एवं युगपदग्नावारोप्य । पर्यग्नि कुर्यात् ज्वलदुल्मुकं प्रदक्षिणमाज्यचर्वोः समन्ताद्भ्रामयेत् अर्धशृते चरौ ।

स्रुवं प्रतप्य दक्षिणेन हस्तेन स्रुवमादाय प्राञ्चमधोमुखमग्नौ तापयित्वा । सव्ये पाणौ कृत्वा दक्षिणेन संमार्गाग्रैर्मूलतोऽग्रपर्यन्तं संमृज्य मूलैरग्रमारभ्य अधस्तान्मूलपर्यन्तम् । अभ्युक्ष्य प्रणीतोदकेनाभिषिच्य । पुनः प्रतप्य निदध्यात् पुनः पूर्ववत्प्रतप्य दक्षिणतो निदध्यात् ।

आज्यमुद्वास्य आज्यमुत्थाप्य चरोः पूर्वेण नीत्वा अग्नेरुत्तरतः स्थापयित्वा चरुमुत्थाप्य* आज्यस्य पश्चिमतो नीत्वा आज्यस्योत्तरतः स्थापयित्वा आज्यमग्नेः पश्चादानीय चरुं चाऽऽनीय आज्यस्योत्तरतो निधाय । एवं त्रिचतुरादीन्यन्यान्यपि हवींष्युद्वासयेत्, अधिश्रितानां पूर्वेणोद्वासितानां पश्चिमतो हविष उद्वास्याऽऽनयनमिति याज्ञिकसंप्रदायात् । उत्पूय ऊर्ध्वं पूर्ववत् पवित्राभ्याम् । अवेक्ष्य अवलोक्याऽऽज्यं तस्मादपद्रव्यनिरसनम् । प्रोक्षणीश्च पूर्ववत् पवित्राभ्यामुत्पूय पूर्ववत् । उपयमनान् कुशानादाय दक्षिणपाणिना गृहीत्वा सव्ये निधाय । समिधोऽभ्याधाय तिष्ठन्समिधः प्रक्षिप्य । पर्युक्ष्य जुहुयात् प्रोक्षण्युदकेन सर्वेण सपवित्रेण दक्षिणचुलुकेन गृहीतेन अग्निमीशानादि उदगपवर्गं परिषिच्य जुहुयात् आघारादीन् । संस्रवधारणार्थं पात्रं प्रणीताग्न्योर्मध्ये निदध्यात् ।

एष एव विधिर्यत्र क्वचिद्धोमः । एषः परिसमूहनादिपर्युक्षणपर्यन्तो विधिरेव, न मन्त्राः, क्वचित् यत्र क्वचन लौकिके स्मार्ते वाऽग्नौ होममात्रं तत्र वेदितव्यः ।

* हभा.

( ३ ) अथातो गृह्यस्थालीपाकानां कर्म । प्रोच्यते इति सूत्रशेषः । अत्रायमथशब्दः आनन्तर्यं मङ्गलं च बोधयति । न च सकृदुच्चरितस्य सकृदर्थगमकत्वमिति

---

* गभा. हभावत् ।

विरोधः, शक्त्याऽऽनन्तर्यमात्रं बोधयति, श्रवणान्मङ्गलमिति संप्रदायः। नवीनास्तु— नानार्था( ध्य )वसायार्थं सकृत्प्रोच्चरितमपि पदमनेकार्थप्रत्यायकं भवत्येव, तात्पर्यज्ञानस्य शाब्दबोधहेतुत्वादित्याहुः। यत्तु प्रश्नार्थोऽयमथशब्द इति। तन्न, संदेहजिज्ञासामूलकत्वात्प्रश्नस्य, प्रकृते च संदेहाभावात्। अनध्यवसायमूलकः प्रश्नश्चेत्। न, अतःशब्दानन्वयापत्तेः। केचित्तु क्रमतात्पर्यकतामाहुः। तदपि न। प्रधानफलफलकत्वेनाङ्गानां फलोत्पत्तौ प्रधानमुपकर्तुं प्रवृत्तानां युगपदनुष्ठानाशक्यत्वेन क्रमाकाङ्क्षायाम् 'अथैनौ' इत्यादिनोपात्तोऽथशब्दः वस्त्रपरिधानाद्यानन्तर्यमञ्जनादेर्बोधयितुं समर्थो भवेत्। तच्च न, पूर्वोपक्रान्तपदार्थाभावात्। ननु एवमानन्तर्यार्थतां वर्णयतः का गतिः? किंच ( न ) क्रमतात्पर्यकतायां तत्कालजातकर्माद्यकरणदोषः, व्यवधानेऽपि क्रमभङ्गाभावात्। (अतः) क्रमार्थतैव युक्तेति चेत्। न, अव्यवधानार्थमेवानन्तर्यार्थसमाश्रयणात् विवाहानन्तरमावसथ्यमिति। अन्यथा आधाने कालबाधेऽपि दोषाभावेन प्रायश्चित्तादिकर्तव्यताबोधकविधेरप्रामाण्यप्रसङ्गः। अतःशब्दो हेत्वर्थः। अधिकारिणा आधानाद्यविलम्बेन कर्तव्यमिति यतः प्रतिपादितमतस्तस्याऽऽधानादिसकलकर्मानुष्ठानाय गृह्यस्थालीपाकानां कर्म मया प्रोच्यते इत्यन्वयः। मशकनिवृत्त्यर्थं धूमार्थिनो हेतुत्वेन वह्न्युपादानवत् फलार्थं स्मृत्यर्थाद्यनुष्ठानार्थिनो हेतुत्वेन ग्रन्थोपादानम्। धूमे वह्निवत्तदर्थानुष्ठाने सूत्रस्यापि हेतुत्वमतःशब्दार्थः। केचित्तु यतः श्रौतान्युक्तान्यतस्तत्राधिकारपङ्गुन्यायेना( ? )धिकारसंपादकतया स्मार्तानि वक्तव्यानि, अतो हेतोर्गृह्यस्थालीत्यादि ( इति ) अन्यथा हेत्वर्थतामतःशब्दस्य वर्णयन्ति। गृहं गृहिण्यन्वितम्। तत्रभवो गृह्यः। स्थाल्यां ताम्रादिनिर्मितायां तण्डुलादेः पाकः स्थालीपाकः। गृह्यश्चासौ स्थालीपाकः, तेषामित्यर्थः। अत्र व्याख्यास्यते इत्यध्याहारं वर्णयन्तः हरिहरादयः प्रष्टव्यास्तावदेषा कस्य प्रतिज्ञा? सूत्रकर्तुर्वा तेषां वा? न तावदाद्यः, आचार्येण कस्याप्यख्यानात्। न द्वितीयः, अनभ्युपगमात् अध्याहारानुपपत्तेश्चेति दिक्।

एवं च गृह्यस्थालीपाकानां यत्कर्म तत्कथमनुष्ठेयमित्याकाङ्क्षायामावसथ्यादिसकलकर्मसाधारणीं परिभाषामाह— परिसमुह्य, जलैरिति शेषः। उपलिप्य, गोमयेनेति शेषः। उल्लिख्य, स्फ्येनेति शेषः। उद्धृत्य, अनामिकाङ्गुष्ठाभ्यामिति शेषः। अभ्युक्ष्य, पवित्रोदकेनेति शेषः। एते च स्थालीपाकाद्यङ्गम्। अग्निमुपसमाधाय, आवसथ्याग्निहोत्राद्यग्निमिति शेषः। कथमेतत्? 'सामान्ये प्रमाणपक्षपातः' इति न्यायादिति चेत्। न, लौकिकविषये 'पञ्चसु बहिःशालायाम्' इत्यारभ्य 'उपलिप्त उद्धतावोक्षितेऽग्निमुपसमाधाय' इत्यस्यापवादस्याऽऽचार्येण सूत्रणात्। 'उपलिप्त उद्धतावोक्षितेऽग्निमुपसमाधाय' इत्ययमपवादः परिसमुह्येत्याद्युत्सर्गविधिं बाधते। यद्वा माऽस्तु प्रकृते सामान्यविशेषभावः, तथाऽपि विवाहप्रकरणे त्रयाणामेव संस्काराणामुपादानादेते पञ्च संस्कारा अग्निहोत्रादिविषया एवेति ज्ञायते। अन्यथा उपलिप्त इत्यादीनां संभारवदाधिक्यापत्तिरिति ध्येयम्। दक्षिणतो ब्रह्मासनमास्तीर्य। अग्नेर्दक्षिणतः ब्रह्मणा उपलक्षितमासनम्, तत्र आस्तरणं वस्त्रादि ब्रह्मासनास्तरणम्, तत्कृत्वेत्यर्थः। यद्वा 'पञ्चाशद्भिः कुशैर्ब्रह्मा' इत्युक्तत्वात्पञ्चाशत्संख्याककुशबटुं वा स्थापयित्वेत्यर्थः। न तु साक्षाद्ब्रह्मणः उपवेशनम्, 'दक्षिणतो ब्रह्माणमुपवेश्य' इति चतुर्थीकर्मणि सूत्रणात्। कारिकाकारोऽपि— 'अचेतने ब्रह्मशब्दः कुशमुष्टौ च वेदवत्। कुशानां संनिधे( ? )युक्तः समास्तीर्येति लिङ्गतः॥'। कर्काचार्यास्तु— सर्वत्र साक्षादेव ब्रह्मणः उपवेशनम्, न च 'दक्षिणतो ब्रह्माणमुपवेश्य' इत्यनेन पौनरुक्त्यम्, तस्यावसरज्ञापनार्थत्वादित्याहुः। तदपरे दूषयन्ति— स्थालीपाकश्रपणपूर्वकालता ह्यवसरः, स च 'उत्तरत उदपात्रं प्रतिष्ठाप्य स्थालीपाकं श्रपयित्वा' इत्यनेनैव लभ्यते, पूर्वकालतायाः समानकर्तृकयोः क्त्वावाच्यत्वात्। क्त्वाप्रत्ययार्थो ह्युत्तरकालता। तथा च 'उदपात्रं प्रतिष्ठाप्य स्थालीपाकं श्रपयत्वा' इत्यनेन स्थालीपाकश्रपणस्योदपात्रस्थापनोत्तरकालता बोध्यते। तेन स्थालीपाककरणप्राक्कालतायाः क्त्वाप्रत्ययादेव लाभात् व्यर्थं तदर्थं 'दक्षिणतो ब्रह्माणमुपवेश्य' इत्येतत्सूत्रं

स्यात्। अत एवं ज्ञायते— चतुर्थीकर्मादौ यत्र साक्षाद्ब्रह्मोपवेशनमुक्तं तत्रैव प्रत्यक्षब्रह्मोपवेशनम्, नान्यत्रेति वदन्ति। प्रणीय, अप इति शेषः। अग्नेरुत्तरतः कौशं पूर्वापरमासनद्वयं प्रकल्प्यापरासने उदपूर्णं चतुष्कोणं चमसं निधायाऽऽलभ्य ब्रह्मासनमीक्ष्य पूर्वासने निदध्यादित्यर्थः। एतच्च प्रणीताप्रणयनं दृष्टफलं सर्वार्थं चेति कर्काचार्याः। दृष्टार्थतायामपि संयवनार्थमिदमिति केचित्। उदककृत्यं सर्वं प्रणीताजलेन चेत्क्रियते तदा स्वकाले कर्मानुष्ठानं क्लृप्तेनैव निर्वाहश्च। उक्तं च— 'लभ्यमाने तु दृष्टेऽर्थे नादृष्टस्य प्रकल्पना।' इति। तस्मात्सर्वार्थाः प्रणीता इति। 'प्रणीताभिः संयौति' इति श्रवणात्संयवनार्था इत्यन्ये। यदि हि सर्वार्थं प्रणीताप्रणयनं भवेत्तदा प्रणयनसंस्कृतनीरसंसर्गः प्रतीयेत। तस्य च संयवनेनैव प्रतीयमानत्वात्संयवनार्थतैवेति। तदेतत्तुच्छम्, पक्षाद्यादिषु संयवनाभावेऽपि प्रणीतादर्शनात्। अथ नियोगसाधनीभूतद्रव्ये अपःसंयवनं तदर्थः (इति चेत्, न), लक्षणापत्तेः। अथ प्रणयनादेः संस्कारस्य श्रुतित एव लाभाच्छ्रुतौ च संयवनार्थतैव दृष्टेति चेत्। प्रणीतायाः संयवनार्थत्वे उपसदि संयवनव्यतिरेकात्प्रणीताया अपि व्यतिरेकः प्रसज्येत। तथा च प्रसक्तिव्यतिरेकप्रतियोग्युल्लेखं सूत्रकृन्न कुर्यात्, कृतवांश्च तदुल्लेखं 'प्रणीताद्युपसत्' (काश्रौ. ८।३५) इति सूत्रकृत्। किंच सविधे पशौ प्रणीताव्यतिरेकेऽपि क्रतुनिर्वाहसंदर्शनात् संयवनरूपदृष्टार्थताऽदृष्टसाधारणार्थता वेत्येतदविचाररमणीयम्। किंच 'अपः प्रणयति' इत्युपक्रम्य 'ततो देवा एतं वज्रं ददृशुर्यदपः' इत्याद्यर्थवादपर्यालोचनया विघ्ननिवर्तकत्वं प्रणीतायाः प्रतिपाद्यत इति प्रतीयते। तच्च साक्षान्न संभवतीत्यदृष्टमेव व्यापार इति सिद्धं शतपथश्रुतित एव प्रणीताया अदृष्टार्थत्वम्। परिस्तीर्य, प्रागग्रैरुदगग्रैश्च तृणैरग्नेः परिस्तरणं कृत्वेत्यर्थः। प्राच्यां प्रथममुदगग्रैः प्रक्षेपः। दक्षिणतः प्रागग्रैः। ततः प्रतीच्यामुदगग्रैः। तत उदीच्यां प्रागग्रैः। अर्थवदासाद्य, अर्थः प्रयोजनम्, तद्वत्पात्रसमुदायमासाद्य स्थापयित्वा, प्रारब्धक्रियास्तोमनिष्पादकनिःशेषसामग्रीनिष्पादनं कुर्यादित्यर्थः। तद्यथा— पवित्रच्छेदनानि त्रीणि, पवित्रे द्वे, प्रोक्षणीपात्रम्, चर्वादिमिति चरुस्थाली, संमार्गकुशाः, उपयमनकुशाः, समिधः, स्रुवः, आज्यम्, तण्डुलाः, बर्हिः, पूर्णपात्रं वरो वा। दर्विहोमेषु पाकयज्ञेषु पक्षादिप्रभृतिषु पौर्णमासधर्माणां कात्यायनचरणैरतिदिष्टत्वात्प्रकृते च पाकयज्ञानां परिभाषासूत्रार्थस्य पर्यालोच्यमानत्वादतिदेशप्राप्ताः ग्रहणासादनप्रोक्षणादयः पौर्णमासधर्मा अपि लिख्यन्ते। ननु एत एव कथम्? 'स्थालीपाकेषु ग्रहणासादनप्रोक्षणानि, मन्त्रदेवताभ्यः०' (कौगृ. १।३) इति शाङ्खायनोक्तेः। तेन स्फ्योपहितमोषधीकरणम्। ततः चर्वादिग्रहणम् 'अमुष्यै देवतायै जुष्टं गृह्णामि' इत्येवं मुष्टित्रयम् *। चतुर्थ(? ष्टव)संख्यापूरणीं मुष्टिं विनैव मन्त्रं गृह्णीयात्। यथादैवतमन्यत्। चर्वादेस्त्रिस्त्रिः क्षालनम्, ततः वाग्यमनम्। पवित्रे कृत्वा, कुशौ समावप्रशीर्णाग्रावनन्तर्गर्भौ कुशैः छित्त्वेत्यर्थः। न नखैः, शाखान्तरे निषिद्धत्वात्। प्रोक्षणीः संस्कृत्य प्रोक्षणीरिति जलवाचिपदम्। ताः संस्कृत्येत्यर्थः। प्रोक्षणीसंस्कारश्चैवम्— आदौ प्रोक्षणीपात्रे नीरप्रक्षेपः, ततः पूर्वसंपादितपवित्राभ्यामुत्पवनम्, पात्रस्य ततः सव्यहस्ते निधानम्, दक्षिणेनोदिङ्गनम्, ताभिरेव तासां प्रोक्षणमिति। अर्थवत्प्रोक्ष्य, अर्थः प्रयोजनम्, तद्वत्। स्मृतिबोधितप्रारब्धक्रियासंपादकं चर्वादि घृतादिकं पात्रादिकं च सर्वं प्रोक्षणीनामधेयाभिरभिषिच्येत्यर्थः। तथा च दक्षिणहस्तोपात्तप्रोक्षणीभिः समग्रं पात्रसमुदायं सकृदेव प्रोक्षणीयमित्यर्थः, श्रुतौ 'शुन्धध्वम्' इति मन्त्रलिङ्गात्। अत्राऽऽह कर्कः— प्रोक्षणस्य पात्रोद्देशेन विधानात् पात्राणां च संस्कार्यत्वात्प्रतिसंस्कार्यं संस्कारावृत्तेर्न्याय्यत्वात्प्रतिपात्रं प्रोक्षणमिति। श्रुतावुद्देश्यगतं बहुत्वं न विवक्षितमिति। नैतदपि विचारसहम्। तथा हि— क्रमावेदकमानापेक्षा तत्रैव यत्राशक्यानुष्ठानमनेकविषयमेकं कर्म। न चैतत्प्रकृते, सकृदेव सर्वेषां प्रोक्षणस्य शक्ति-

* मुष्टीनां त्रयं यस्मिन्निति यथाकथंचिद्योज्यम्।

गोचरत्वात् । अथाऽऽसादनकालीनक्रमरूपविशेषाश्रयादेकत्वप्रतीतिरिति चेत्तर्हि शब्दबुद्धिकर्मणां विरम्य व्यापाराभावादेकस्यैव प्रोक्षणं भवेत् । अथ सर्वेषां संस्कार्यत्वादावृत्तिराश्रयणीयेति चेत्, तर्हि किमर्थमुक्तमुद्देश्यगतमनेकत्वं न विवक्षितमिति । तदा हि फलवत्यविवक्षा स्यात् यदैकत्वद्वित्वान्यतरसंख्यावच्छिन्नस्य सामर्थ्यात्प्राप्तौ सत्यां बहुत्वसंख्यावच्छिन्नस्य शब्दबोध्यस्याविवक्षामाश्रित्य सामर्थ्याक्षेपाद्यथाप्राप्तेषु सर्वग्रहेषु संमार्गोऽङ्गीक्रियते । किंच विवक्षितमविवक्षितं वेति जिज्ञासाऽपि तत्रैव, यत्र कर्तृकालदेशफलसंस्कार्याणां विधिबोधिता भिन्ना संख्या, भिन्ना च सामर्थ्याक्षिप्ता । न चैवं प्रकृते । तस्मान्मन्त्रात्मकवेदगतं बहुत्वं न विवक्षितमित्येतद्रिक्तं वचः । अथाऽऽसादनक्रमदर्शनसंजातः प्रोक्षणेऽपि क्रमसंशयो विना प्रमाणं कथमपनेय इति चेत्, तर्हि युगपदनेकप्रोक्षणस्य लाघवात्प्राप्तौ क्रमे किं प्रमाणमिति विपरीता प्रमाणापेक्षा । अथ सुहृद्भावेन पृच्छामि विना प्रमाणं कथं संशयोऽपनेयः ( इति ? ) — सर्वपात्राणां युगपत्प्रोक्षणे शक्यानुष्ठाने किं सकृदेव कर्तव्यम्, किंवा आसादने क्रमदर्शनात्क्रम आश्रयणीयः ? इति । शब्दावगम्येऽर्थे शब्द एव प्रमाणम्, नान्यदिति मन्त्रलिङ्गमेव प्रमाणम्, ‘शाब्दी ह्याकाङ्क्षा शब्देनैव पूर्यते’ इति न्यायादिति । एतेन प्रोक्षणकर्तव्यताबोधकवेदविनियुक्तमन्त्रस्मारितबहुत्वस्य कथमुद्देश्यगतत्वम् ? साक्षादुद्देश्यगतस्य पूजार्थतां नोपपादयाम इत्यपास्तम्, क्रियाहेत्वर्थस्मारकमन्त्रगतबहुत्वस्याप्युद्देश्यगतबहुत्वतात्पर्यकत्वात्, ‘यत्परः शब्दः स शब्दार्थः’ इति न्यायात् । तथाऽपि प्रतिसंस्कार्यं न्यायाकृष्टा संस्कारावृत्तिः कथमपहस्तयितुं शक्येति चेत् । न, ‘व्रीहीन्प्रोक्षति’ इत्यत्र व्रीहीणामपि संस्कार्यत्वात् प्रतिव्रीहि प्रोक्षणापत्तेः । ननु चरुपुरोडाशाद्यनेकहविषां सकृदेव प्रोक्षणं कुतो नेति चेत्, ‘तद्यस्यै देवतायै हविर्भवति तस्यै मेध्यं करोति’ इति देवतोद्देश्यकहविःसंबन्धेन प्रोक्षणसंबन्धं दर्शयन्ती श्रुतिरेवात्र प्रमाणमित्युत्तरदानं यथा, तथा ‘यज्ञपात्राणि प्रोक्षति दैव्याय कर्मणे शुन्धध्वम्’ इत्येवमाकारा सकृत्प्रोक्षणादेः श्रुतिरेवात्र प्रमाणमिति किं पुनर्भवतोऽमुना विक्लवविक्रोशमात्रेण । अपरे तु— ‘पात्राणि प्रोक्षति, व्रीहीन् प्रोक्षति’ इत्यादौ पात्रव्रीह्यादेः संस्कार्यतामेव नाङ्गीकुर्मः । तथा च कथं प्रतिसंस्कार्यं संस्कारावृत्तिः ? तत्र परेषामयमाशयः— ‘व्रीहीन् प्रोक्षति’ इत्यादौ व्रीह्यादेस्तावत्प्रोक्षणादिकर्मता प्रतीयते । सा च तत्फलाधारत्वव्यतिरेकेणानुपपद्यमाना व्रीह्यादेस्तत्फलाधारतां बोधयति । कथमन्यथा प्रोक्षितानामेवावघातादावुपयोगः ? प्रोक्षणस्य चिरध्वस्तत्वात् । न च प्रोक्षणमुपलक्षणं तद्ध्वंसो वा व्यापार इति वक्तुं शक्यम् । यागादौ तथाभावप्रसङ्गेनापूर्वकल्पनाया अभावप्रसङ्गात् । चेतनस्य संस्कार्यत्वे व्रीहेः कर्मता न स्यादित्युक्तम् । तथा च पात्रव्रीह्यादिषु कर्मत्वान्यथानुपपत्तिप्रसूतार्थापत्त्या पात्रादेः संस्कार्यतायामावेदितायां प्रतिसंस्कार्यं संस्कारावृत्तिरपि न्यायसमर्पितैवेति तेषां निगर्वः । अत्र वदन्ति । प्रोक्षणादिजन्योऽतिशयः यागजन्यातिशयसमानाधिकरण एव कल्प्यते लाघवात् । न च चेतनस्य संस्कार्यत्वे व्रीहेः कर्मत्वानुपपत्तिः, प्रोक्षणजन्यसंयोगरूपफलभागित्वेनैव तदुपपत्तेः । न च संयोगावच्छिन्नक्रियाविशेषस्यैव प्रोक्षणपदार्थतेति वाच्यम् । ग्रामं गच्छतीत्यादौ ग्रामादेस्तादृशक्रियानाधारत्वेन कर्मत्वानुपपत्तिप्रसङ्गात् । तस्माद्यथा क्रियाविशेषणीभूतसंयोगाधारतया ग्रामादेः कर्मत्वं तथा प्रकृतेऽपीति । कथमन्यथा सक्तून् प्रोक्षतीत्यादौ लौकिकप्रोक्षणे सक्तूनां कर्मता । किंच, ‘व्रीहीन् प्रोक्षति’ इत्यत्र व्रीहेः प्रोक्षणजन्यसंस्काराश्रयत्वे कल्प्यमाने किं प्रतिव्रीहि व्यक्तिवृत्तयो भिन्ना व्रीहिसमसंख्याः संस्काराः कल्प्यन्ते, यद्वा तावद्व्रीहिव्यक्तिवृत्त्येक एव वा । न तावदाद्यः, गौरवात् । न द्वितीयः, किंचिद्व्रीहिनाशात्तन्नाशे अवशिष्टव्रीहेरुत्तरत्रोपयोगोऽवघातादौ न स्यात् । न च यावदाश्रयनाशः प्रयोजक इति वाच्यम्, गौरवात् । तस्माच्चेतन एव संस्कार्यः । एवं च चेतनसमवेतसंस्कारेण स्वरूपसंबन्धाद्वा व्रीहेः कर्मत्वमिति न किंचिदनुपपन्नमित्याहुः । निरुप्याऽऽज्यम्, ‘कुशैरसत्सु’ इति कात्यायनोक्तेः कुशोपग्रहः सन् आज्यस्थाल्यामाज्यं प्रक्षिपेदित्यर्थः । अधिश्रित्य,

अग्नेरुपरीति शेषः । प्राक्सूत्रादाज्यपदानुवृत्तिः । उपलक्षणमेतत् । तथा च चर्वाद्यविनाभूतक्रियायां चर्वादिकमप्यधिश्रित्येत्यर्थः । पर्यग्नि कुर्यात्, अधिश्रितघृतचर्वादेः परित एकं ज्वलदुल्मुकं प्रादक्षिण्येन भ्रामयित्वाऽप्रदक्षिणं कर्माऽऽनयेदित्यर्थः । ततः श्रपणम् ।

स्रुवं प्रतप्य, अर्धशृते चर्वादौ स्फ्योपग्रहः । स्रुवं प्रतप्य । खादिरोऽरत्निमात्रः स्रुवोऽङ्गुष्ठपर्ववृत्तपुष्करः, स्फ्योऽस्याकृतिः, कात्यायनप्रणयनात् । संमृज्य, कुशैरिति शेषः । ते च त्रयः पञ्च सप्त वा आचारात् । अभ्युक्ष्य, प्रोक्षणीनां क्लृप्तत्वात्तज्जलेनेति शेषः । पुनः प्रतप्य, पुनःपदोपादानात्स्रुवमिति शेषः । निदध्यात्, स्थापनीयचर्वादेर्दक्षिणत इत्यर्थः ।

आज्यमुद्वास्य, कुशोपग्रहः घृतमुदीच्यामवतार्येत्यर्थः । ततः प्रोक्षण्यपरेण निधानम् । उत्पूय, पवित्राभ्यामिति शेषः । अवेक्ष्य, आज्यमिति शेषः । प्रोक्षणीश्च पूर्ववत्, पवित्राभ्यामुत्पूयेत्यर्थः । प्रोक्षण्यादानं समिद्विस्रंसनं पक्षाद्यादिष्वष्टादश अन्यत्र विंशतिः । समित्प्रोक्षणम्, वेदिप्रोक्षणम् । अग्नेरपरस्यामुदगग्रस्य बर्हिषः प्रोक्षणम् । सशेषो मूलावसेकः । प्रोक्षणीपात्रनिधानम्, बर्हिर्बन्धनमास्तीर्य कुशैरवच्छादनम् । त्रिवृत्स्तरणं बर्हिषः । शृतस्य चर्वादेरभिघारः । उद्वासनं शृतानां तु पूर्वेण उद्वासितानां तु पृष्ठतः । आज्यादुत्तरस्यां क्रमेण निधानम् । क्रमेण चर्वादौ प्राणदानम् । वेद्यां बर्हिषि आज्यादिक्रमेण निधानम् । उपयमनान् कुशानादाय उपयमनसंज्ञकान् कुशान् दक्षिणहस्तेन गृहीत्वा सव्ये कृत्वा । समिधोऽभ्याधाय तिष्ठन्, सप्तदशसमिधः विकृतौ, प्रकृतौ पक्षादिषु पञ्चदश समिधः, अग्नौ प्रक्षिप्य, 'सर्वेषु (च) कर्मसु प्रतिश्रुतादिषु प्रादेशमात्रीः पालाशीः समिधः सप्तदश हुत्वा पश्चात्स्रुवग्रहणम्, दर्शपूर्णमासयोः पञ्चदश' (कौगृ. ६।१०) इति शाङ्खायनसूत्रात् । पर्युक्ष्य, दक्षिणहस्तोपात्तेन सपवित्रेण प्रोक्षणीजलेन अग्निमिति शेषः । प्रोक्षणीपात्रं च संस्रवधारणार्थं प्रणीताग्न्योरन्तरा स्थाप्यम् । जुहुयात्, आघाराज्यभागादिनामधेयाः आहुतीरिति शेषः ।

एष एव विधिर्यत्र क्वचिद्धोमः, एषः परिसमूहनादिपर्युक्षणान्तो विधिः क्रियाकलापः । एवकारस्तु प्रणयनादिक्रियाकलापे 'कस्त्वा' इत्यादिमन्त्रजन्यार्थस्मृतेः करणत्वव्यवच्छेदार्थः । इयं परिभाषा ।                विभा.

सर्वहोमसाधारण्यश्चतुर्दशाऽऽहुतयः

**[1]अन्वारब्ध आघारावाज्यभागौ महाव्याहृतयः सर्वप्रायश्चित्तं प्राजापत्यं स्विष्टकृच्च ॥**

(१) आघारौ पूर्व उत्तरश्च । उत्तराघारे प्रतिनिगद्य होमत्वम् । नह्यत्र मन्त्रोऽस्ति । आज्यभागौ एक आग्नेयः अपरः सौम्यः । भूर्भुवः स्वरित्येता महाव्याहृतयः । 'त्वं नो अग्ने' इति चैवमादि सर्वप्रायश्चित्तम् । प्राजापत्यं प्रजापतिदेवत्यो होमः । स्विष्टकृत् 'अग्नये स्विष्टकृते स्वाहा' इति वक्ष्यत्युपरिष्टात् ।                कभा.

(२) अन्वारब्धः ब्रह्मणा संस्पृष्टः । महाव्याहृतयस्तिस्रः भूर्भुवः स्वरिति । 'त्वं नो अग्ने' इत्यादिमन्त्रपञ्चकं सर्वप्रायश्चित्तम् ।                $ जभा.

(३) अत्र वैवाहिकहोमप्रसङ्गेन सर्वकर्मसाधारणीं परिभाषां करोत्याचार्यः । तद्यथा— ब्रह्मणा दक्षिणबाहौ दक्षिणहस्तेन अन्वारब्धे कर्तरि आघारसंज्ञके आज्याहुती, यथा— मनसा 'प्रजापतये स्वाहा' 'इदं प्रजापतये', मनसा त्यागमपि, 'इन्द्राय स्वाहा' 'इदमिन्द्राय'। आज्यभागौ आज्यभागसंज्ञकौ होमौ । यथा— 'अग्नये स्वाहा' 'इदमग्नये', 'सोमाय स्वाहा' 'इदं सोमाय'। महाव्याहृतयः भूराद्यास्तिस्रः । यथा— 'ॐ भूः स्वाहा', 'इदमग्नये' 'इदं भूः' इति वा त्यागः । तथैव 'ॐ भुवः स्वाहा', 'इदं वायवे' 'इदं भुवः' इति वा । 'ॐ स्वः स्वाहा', 'इदं सूर्याय' 'इदं स्वः' इति वा । सर्वप्रायश्चित्तसंज्ञकाः पञ्चाहुतयः । यथा— 'त्वं नो अग्ने' इत्यादि 'प्रमुमुग्ध्यस्मत्स्वाहा' 'स त्वं नो अग्ने... सुहवो न एधि स्वाहा', 'इदमग्नीवरुणाभ्याम्'। द्वाभ्यां त्यागः । 'अयाश्चाग्नेऽस्य-

---

$ शेषं कभावत् ।

(१) पागृ. १।५।३–४ ; संग. ४० ; संदी. ३८०

नभिशस्तिपाश्च सत्यमित्त्वमया असि। अया नो यज्ञं वहास्यया नो धेहि भेषजं स्वाहा॥', 'इदमग्नये अयसे'। 'ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः। तेभिर्नो अद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा॥', 'इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च, न मम'। 'उदुत्तमम्' इत्यादि 'अदितये स्याम स्वाहा', 'इदं वरुणाय'। प्राजापत्यं प्रजापतिदेवताको होमः। यथा— 'प्रजापतये स्वाहा', 'इदं प्रजापतये'। स्विष्टकृच्च स्विष्टकृद्धोमः। यथा— 'अग्नये स्विष्टकृते स्वाहा', 'इदमग्नये स्विष्टकृते'। चकारः सर्वसमुच्चयार्थः।

हभा.

(४) आघारौ आज्यभागौ च विधीयेते। आघारः पूर्व उत्तरश्च। तत्र तूष्णीं पूर्वः। हरिहरेण 'प्रजापतये स्वाहा' इति पूर्वाघारो दर्शितः, तदतीवाशुद्धम्। न ह्यत्र मन्त्रोऽस्ति। दर्शपूर्णमासयोः परिभाषातः प्राप्तः स्वाहाकारोऽपि प्रतिषिध्यते— 'न स्वाहेति च नानिरुक्तं हि मनो निरुक्तं ह्येतद्यत्तूष्णीम्' इति। ननु आघारादिपृष्ठभावेन वेद्यादिकं कुतो नाऽऽयाति ? उच्यते— 'गृह्यस्थालीपाकानां कर्म' इत्युपक्रम्य 'एष एव विधिर्यत्र क्वचिद्धोमः' इत्यनेनैवं ज्ञायते— यावन्तोऽत्र पदार्था उक्तास्तावन्त एव भवन्ति, नान्ये। उत्तराघारे प्रतिनिगद्य होमत्वम्, नह्यत्र मन्त्रोऽस्ति। एवमाज्यभागयोरपि। अन्वारम्भश्च कुशेन, निगमपरिशिष्टात्।

§ गभा.

(५) कन्यावराभ्यामन्वारब्ध आचार्यः।

§ विभा.

(६) अन्वारब्धः ब्रह्मणा कृतान्वारम्भः। यद्यपि 'दानवाचनान्वारम्भवरवरणव्रतप्रमाणेषु यजमानं प्रतीयात्' इति कात्यायनपरिभाषातः यजमानकर्तृकोऽन्वारम्भः सर्वत्र, तथाऽप्यत्र होमे यजमान एव कर्तेति स्वस्मिन् स्वकर्तृकान्वारम्भासंभवेन होमकर्तुरन्वारम्भस्य यजमानकर्तृकस्यासंभवात् अन्यकर्तृक एवान्वारम्भो वाच्यः। अन्यश्च न पत्नी अक्लृप्तो वा कश्चित्, 'कर्मणि पुरुषाणाम्' इति कात्यायनपरिभाषया क्लृप्तर्त्विजामेव कर्मकर्तृत्वबोधनात्। प्रकृते च ब्रह्मणः सत्त्वात् तत्कर्तृक एवान्वारम्भ इति। अथैवमुक्तपरिभाषया ब्रह्मण एव सकलेतिकर्तव्यताकलापकर्तृत्वमस्तु, अन्वारम्भे यजमानस्यैव कर्तृत्वमस्त्विति चेन्न, परिसमुह्येत्यादिभिर्ल्यबन्तैः परिसमूहनादीनां सर्वेषां पदार्थानां समानकर्तृकत्वलाभात्। परिसमूहनादौ तु न ब्रह्मणः कर्तृत्वम्, तदानीं तस्याविद्यमानत्वात्। न हि ब्रह्मोपवेशनात् पूर्वमपि तस्मिन् कर्मणि ब्रह्माऽस्ति, येन तत्कर्तृकं परिसमूहनादि भवेत् इति। 'ब्रह्मैवैक ऋत्विक् पाकयज्ञेषु स्वयं होता भवति' इति गोभिलगृह्याच्च। ब्रह्मणा दक्षिणे बाहौ दक्षिणहस्तेन अन्वारम्भे कृते सति आघारसंज्ञके आहुती जुहोति। आघारशब्देन होमविशेषौ। तत्र पूर्वाघारः प्राजापत्यः अग्नेरुत्तरभागे। उत्तराघारः ऐन्द्रः अग्नेर्दक्षिणभागे। 'स यदुभयत आघारयति' इति श्रुतेः, 'दक्षिणहस्तेनान्तरेण जानुनी आसीन आघारौ जुहोति प्राजापत्यमुत्तरार्धे प्राञ्चं मनसा ऐन्द्रं दक्षिणार्धे प्राञ्चमेव' इति मैत्रायणीयगृह्याच्च। आज्यभागौ अग्निदैवत्यसोमदैवत्यौ होमविशेषौ। तत्र आग्नेयमुत्तरपूर्वार्धे, सौम्यं दक्षिणपूर्वार्धे, अतिप्रज्वलितप्रदेशे वा तदुभयं जुहोति 'आग्नेयमुत्तरपूर्वार्धे दक्षिणपूर्वार्धे सौम्यं समिद्धतमे वा' इति कात्यायनोक्तेः। अत्र च सर्वत्रान्ते स्वाहाकारः कार्यः, सीतायज्ञप्रकरणे 'मन्त्रवत्प्रदानमेकेषाम्। स्वाहाकारप्रदाना इति श्रुतेर्विनिवृत्तिः' इति सूत्रेण पारस्करेणैव सर्वत्र स्वाहाकारेणैव होमस्य उक्तत्वात्। 'स्वाहाकारः सर्वत्र' इति 'स्वाहाकारप्रदानाः' इति च कात्यायनसूत्रात् स्वाहाकारपरिप्राप्तौ तदेकवाक्यत्वाय चतुर्थ्यन्तं देवतापदमुच्चार्य स्वाहान्तेन होमः कार्य इति। तथा च शाङ्ख्यायनं गृह्यम्— 'अनाम्नातमन्त्रास्वादिष्टदेवतास्वमुष्मै स्वाहेति जुहुयात्' इति। हिरण्यकेशिगृह्यं च— 'सर्वदर्विहोमानामेष कल्पो मन्त्रान्ते स्वाहा-

§ शेषं हभागतम्।

कारोऽमन्त्रास्त्वमुष्मै स्वाहेति यथादैवतम्' इति। एते सर्वेऽपि होमाः समिद्धे कार्याः। तथा च छन्दोगपरिशिष्टे कात्यायनः– 'योऽनर्चिषि जुहोत्यग्नौ व्यङ्गारिणि च मानवः। मन्दाग्निरामयावी च दरिद्रश्चापि जायते॥ तस्मात्समिद्धे होतव्यं नासमिद्धे कदाचन। आरोग्यमिच्छन्नायुश्च श्रियमात्यन्तिकीं तथा॥'। अग्निधमनेऽपि विशेष उक्तस्तत्रैव– 'जुहूषंश्च हुते चैव पाणिशूर्पास्यदर्विभिः। न कुर्यादग्निधमनं कुर्याद्वा व्यजनादिना। मुखेनैके धमन्त्यग्निं मुखाद्ध्येषोऽध्यजायत॥' इति। मुखेन धमनं कालौ न भवति इत्याहतुर्माधवपृथ्वीचन्द्रोदयौ– 'प्रजार्थे तु द्विजाग्र्याणां प्रजारणिपरिग्रहः। ब्राह्मणानां प्रवासित्वं मुखाग्निधमनं तथा॥' इति। न भवति इत्यनुवर्तते। यत्तु वंशादि व्यवधाय धमनमाचरन्ति तन्मुखविप्रुट्पतनशङ्कया। गौतमस्तु सामान्येनैव मुखं निषेधयति– 'अग्निमुखोपधमनविगृह्यवादादि वर्जयेत्' इति। एवं 'प्रजापतये स्वाहा' इति मन्त्रेण पूर्वाघारो भवति इति तु पद्धतयः। त्यागश्च 'इदं प्रजापतये, न मम' इत्येवम्। स च पत्नीयजमानाभ्यामुभाभ्यामपि कार्यः, उभयोः स्वामित्वाविशेषात्, 'प्रधानं स्वामी फलयोगात्' इति कात्यायनेन सामान्यतः स्वामिन एव त्यागकरणस्योक्तत्वात्। मण्डनेन तु विशेषः– 'तुल्य एवाधिकारः स्याद् दम्पत्योरुभयोरपि। कर्तृत्वं च तयोस्तुल्यं द्रव्यत्यागे प्रचक्षते॥ यद्वा त्यागं पतिः कुर्यात् पत्नी तदनुमन्यते। अधिकारे च वैषम्यं प्रोक्तं शब्दानुसारिणा॥ प्राधान्येन स्वनिष्ठः सन् यजमानोऽधिकारवान्। पत्नी तत्परतन्त्रा सत्यङ्गभूताधिकारिणी॥'। तथा– 'संनिधौ यजमानः स्यादुद्देशत्यागकारकः। असंनिधौ तु पत्नी स्यादुद्देशत्यागकारिका॥ असंनिधौ तु पत्न्याः स्यादध्वर्युस्तदनुज्ञया। उन्मादे प्रसवे चर्तौ कुर्वीतानुज्ञया विना॥'। तथा– 'उभावप्यसमर्थौ चेन्नियुक्तः कश्चन त्यजेत्।' इति। महाव्याहृतयः अध्येतृप्रसिद्धाः भूर्भुवः स्वस्तिस्रः। सर्वानुक्रमेऽपि– 'भूर्भुवः स्वस्तिस्रो महाव्याहृतयोऽग्निवायुसूर्यदैवत्याः क्रमेण' इति। सर्वप्रायश्चित्तमिति 'त्वं नो अग्ने' इत्यादिमन्त्रकरणकपञ्चहोमानां संज्ञा। "सर्वप्रायश्चित्तं पञ्चभिः प्रत्यृचं 'त्वं नो अग्ने' इति द्वाभ्याम्, 'अयाश्चाग्ने' 'ये ते शतम्' 'उदुत्तमम्'" इति च कात्यायनसूत्रम्। प्राजापत्यं प्रजापतिदैवत्यं कर्म, होम इति यावत्। स्विष्टकृच्च। स्विष्टकृच्छब्देन स्विष्टकृद्दैवत्यो होम उच्यते। स च 'अग्नये स्विष्टकृते स्वाहा' (इति)। अत्रावदाने हविष उत्तरार्धादवदाय अग्नेरुत्तरार्धे होतव्यम्, स्विष्टकृतं प्रकृत्यैव 'स वा उत्तरार्धादवद्यत्युत्तरार्धे जुहोति' (शब्रा. १।७।३।२०) इति श्रुतेः। पूर्वं हुताभिराहुतिभिः संसर्गो यथा न भवति तथा च होतव्यम्। 'असंसृष्टामाहुतिभिः' इति कात्यायनसूत्रम्। 'अग्नये स्वाहेत्यसंसक्तामुत्तरार्धपूर्वार्धे जुहोति' इति मैत्रायणीयगृह्याच्च।

¶ संग. ४०-४३

**एतन्नित्यं सर्वत्र॥**

(१) एतत् चतुर्दशाहुतिकं नित्यं सर्वकर्मसु भवति यत्र यत्र होमोऽस्ति। यथा– 'घृताक्तानि कुशेण्ड्वानि जुहुयात्' इति। यत्र पुनर्होम एव नास्ति, यथा स्तरारोहणे लाङ्गलयोजने च, तत्रैतन्न भवति।

* कभा.

(२) नित्यं सर्वत्र सर्वस्मिन् होमे एतदाहुतिचतुर्दशकं नित्यम्, भवत्येवेत्यर्थः। विशेषविधिं विनेति शेषः। तत् नित्यावसथ्यहोमादौ न भवतीति ध्येयम्।

विभा.

आज्यातिरिक्ते हविषि स्विष्टकृद्धोमक्रमः

**'प्राङ्महाव्याहृतिभ्यः स्विष्टकृदन्यच्चेदाज्याद्धविः॥**

(१) यत्राऽऽज्यव्यतिरिक्तमन्यदपि हविर्भवति तत्र महाव्याहृतिहोमात् प्राक् स्विष्टकृद्धोमः, यथा पक्षादाविति। कभा.

---

¶ संदी. संगवत्।

* जभा., हभा., गभा. कभावत्। संग. कभागतम्।

(१) पागृ. १।५।५; संग. ४३, २७०.

(२) यत्राऽऽज्यव्यतिरिक्तमन्यद्धविर्भवति पक्षादाविव, तत्र महाव्याहृतिहोमात् प्राक् स्विष्टकृद्धोमः, अन्यत्र सर्वाहुत्यन्ते । $जभा.

(३) चेद्यदि आज्यद्रव्यादन्यद् द्रव्यं चर्वादिकमपि भवति तदा महाव्याहृतिहोमात् प्राक् पूर्वं स्विष्टकृद्धोमो भवति चर्वादिद्रव्यशेषादेव । केवलाज्यहोमे तु सर्वहोमान्ते आज्येनैव स्विष्टकृत् । गभा.

(४) आज्याचेदितरदनुपहतं चर्वादि हविः स्यात्तदा महाव्याहृतिहोमात् प्राक् प्रधानहोमानन्तरमेव स्विष्टकृद्धोमो भवतीत्यर्थः । विभा.

जयाभ्यातानराष्ट्रभृतां विधिः

**'राष्ट्रभृत इच्छञ्जयाभ्यातानांश्च जानन् ॥**
**येन कर्मणेर्त्सेदिति वचनात् ॥**

(१) राष्ट्रभृत इच्छन् विवाहे एव जुहोति । 'चित्तं च चित्तिश्च' इत्येवमादि— 'प्रजापतिर्जयानिन्द्राय' इत्येवमन्ता जयाः, मन्त्रलिङ्गात् । शेषा अभ्यातानाः मन्त्राः । एतांश्च इच्छन्नेव जुहोति । जानञ्छब्दो विकल्पार्थः । चशब्दो राष्ट्रभृद्भिः संनियोगार्थः । जयाभ्यातानांश्चेच्छया जुहोतीति कुत एतत् ? 'येन कर्मणेर्त्सेत्' इति वचनात् । येन कर्मणा ऋद्धिमिच्छेत् तत्र जयाञ्जुहोतीति वचनं भवति । अतश्चान्यत्रापि ऋद्धिमिच्छता जया(?य)होमः कर्तव्य इति गम्यते । § कभा.

(२) विवाहे वैवाहिके होमकर्मणि राष्ट्रभृतः राष्ट्रभृत्संज्ञकाः आहुतीः आवपेदित्यध्याहारः । जयाश्च अभ्यातानाश्च जयाभ्यातानाः, ताञ्जयाभ्यातानांश्च आवपेत् । किं कुर्वन् ? इच्छन् राष्ट्रभृज्जयाभ्यातानानां होमफलं कामयन् । किं प्रमाणम् ? इति चेत्, 'जानन् येन कर्मणेर्त्सेदिति वचनात्' । येन कर्मणा, अस्मिन्कर्मणि ओप्य तेन यत्फलं भवतीति जानन् विदन् तत्कर्मफलमिच्छन् तस्मिन्कर्मणि तत्कर्म आवपेदिति वचनात् श्रुतेरित्यर्थः । तत्र राष्ट्रभृतो यथा— 'ऋताषाडृतधामाऽग्निर्गन्धर्वः' इत्यादिका द्वादश मन्त्रा राष्ट्रभृत्संज्ञकाः । हभा.

(३) जानन् इच्छन् जुहोति । अतश्च विकल्पः । जैमिनिस्तु जयादीनामनारभ्याधीतानां 'येन कर्मणेर्त्सेत्तत्र जयाञ्जुहुयात्' इत्यादिभिर्वाक्यैरेव सामान्यतो लौकिकवैदिककर्माङ्गत्वे प्राप्ते, जयादयस्तु वैदिकाः, तेन यत्राऽऽहवनीयोऽस्ति तत्रैते स्युरिति सिद्धान्तितवान् । ‡ गभा.

(४) राष्ट्रभृत्संज्ञकांश्चान्तराऽऽवपेदित्यर्थः । प्रयोगश्च— 'ऋताषाडृतधामाऽग्निर्गन्धर्वः स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट्' । 'इदमग्नये गन्धर्वाय' इति त्यागः । 'तस्यौषधयोऽप्सरसो मुदो नाम ताभ्यः स्वाहा' । 'इदमोषधिभ्योऽप्सरोभ्यः' । एवं सर्वत्र त्यागे विशेषः । 'इदं सूर्याय गन्धर्वाय, इदं मरीचिभ्योऽप्सरोभ्यः, इदं चन्द्रमसे गन्धर्वाय, इदं नक्षत्रेभ्योऽप्सरोभ्यः, इदं वाताय गन्धर्वाय, इदमद्भ्योऽप्सरोभ्यः, इदं यज्ञाय गन्धर्वाय, इदं दक्षिणाभ्योऽप्सरोभ्यः, इदं मनसे गन्धर्वाय, इदमृक्सामभ्योऽप्सरोभ्यः' । ¶ विभा.

जयहोममन्त्राः

**§ [१] 'चित्तं च चित्तिश्चाऽऽकूतं चाऽऽकूतिश्च विज्ञातं च विज्ञातिश्च मनश्च शाक्वरीश्च दर्शश्च**

$ हभा., संग. जभावत् ।

§ जभा. कभावत् ।

(१) पागृ. १।५।७,८ ; संग. २७०.

‡ शेषं कभावत् । संग. गभावत् । संग्पुस्तके 'जैमिनिस्तु... ... ...सिद्धान्तितवान्' इत्यस्मिन्ग्रन्थे टिप्पणी— 'एतेन विवाहप्रकरणाम्नानादत्रैव स्मार्ते जयादयः स्युः, नान्यत्रेति फलितम्' इति ।

¶ शेषं हभावत् ।

§ तैत्तिरीयसंहितायामयं मन्त्र एवंरूपो दृश्यते— 'चित्तं च चित्तिश्चाऽऽकूतं चाऽऽकूतिश्च विज्ञातं च विज्ञानं च मनश्च शाक्वरीश्च दर्शश्च पूर्णमासश्च बृहच्च रथन्तरं च प्रजापतिर्जयानिन्द्राय वृष्णे प्रायच्छदुग्रः पृतनाज्येषु तस्मै विशः समनमन्त सर्वाः स उग्रः स हि हव्यो बभूव ॥' (तैसं. ३।४।४।१) ।

(१) पागृ. १।५।९-१० ; संग. २७०,२७२.

**पौर्णमासं च बृहच्च रथन्तरं च । प्रजापतिर्जया-निन्द्राय वृष्णे प्रायच्छदुग्रः पृतनाजयेषु । तस्मै विशः समनमन्त सर्वाः स उग्रः स इ हव्यो बभूव स्वाहा ' इति ॥**

(१) 'चित्तं च चित्तिश्च ' इत्यत्र केचित् चतुर्थ्यन्तेन प्रयोगमिच्छन्ति, तदयुक्तम् । न ह्येतानि देवतापदानि, किं तर्हि ? मन्त्रा एव । मन्त्राणां च यथाऽऽम्नातानामेव प्रयोग इष्यते इति । $ कभा.

(२) स्वाहाकारस्त्वन्ते भवत्येव, 'स्वाहाकारप्रदानाः' इति श्रुतेः । त्यागे तु भवत्येव चतुर्थ्यन्तम्, अमन्त्रत्वात्त्यागस्य । ¶ जभा.

(३) मन्त्रार्थः— चित्तं चेति प्रजापतिर्यथेन्द्राय जयान् प्रायच्छत् तथा चित्तादि च मह्यमपि प्रयच्छत्विति क्रियां विपरिणम्योत्तरत्र संबन्धः । तस्मै च सुहुतमस्तु । तत्र चित्तं ज्ञानाधारं हृदयम्, चित्तिः तत्रत्या चेतना । आकूतं चाभिमतम्, आकूतिश्चाभिमानः । यद्वा चित्तं ज्ञानेन्द्रियम् । जातावेकवचनम् । चित्तिः तद्देवता । आकूतं कर्मेन्द्रियम्, आकूतिः तद्देवता । विज्ञातं शिल्पादिज्ञानमपरोक्षम्, विज्ञातिः तद्देवता । मनः प्रसिद्धम् । शक्वरीः शक्वर्यस्तच्छक्तयः । दर्शपौर्णमासौ तद्देवते । बृहद्रथन्तरे सामनी तद्देवते वा । सर्वत्र प्रथममन्त्रोक्तवाक्यार्थः संबध्यते । प्रजापतिः परमेश्वरः, जयन्ति शत्रूनिति जयाः, तान् जयान् मन्त्रानिन्द्राय प्रायच्छत् ददौ । किमर्थम् ? वृष्णे अभिमतार्थवर्षणाय । इन्द्रविशेषणं वा । ततः स इन्द्रः पृतनाजयेषु असुरसेनाविजयाख्यकर्मसु उग्रः प्रचण्डो बभूव । किंच, ततस्तस्मै इन्द्राय विशः प्रजाः समनमन्त सम्यङ् नेमुः । स इ, इश्चार्थे, स चेन्द्रः हव्यः हवनीयः इज्यः बभूव । स्वाहा तस्मै सुहुतमस्तु । तथा च तैत्तिरीया श्रुतिः— 'देवासुराः संयत्ता आसन् । स इन्द्रः प्रजापतिमुपाधावत् । स तस्मा एताञ्जयान् प्रायच्छत् । तानजुहोत् । ततो देवा असुरानजयन् । तज्जयानां जयात्वम्' इति । अत्र 'प्रजापतिर्जयान्' इत्येकेनापि जया( ? जय)-लिङ्गेन छत्रिन्यायेन त्रयोदशमन्त्रा जया इत्युच्यन्ते । इमानि शाखान्तरोपदिष्टानि देवतापदानि, एषां प्रयोगकाले संप्रदानलक्षणेन संप्रयोगः 'चित्ताय स्वाहा' इत्यादिः इति भर्तृयज्ञः । नेति कर्कादयः । न चेमानि देवतापदानि । किं तर्हि ? मन्त्राश्चैते । ते च यथाम्नाता एव प्रयोक्तव्याः । गभा.

(४) जयाहुतीनां देवताः प्राह— 'चित्तं च चित्तिश्चाऽऽकूतं चाऽऽकूतिश्च' इत्यादि 'स इ हव्यो बभूव स्वाहा' इत्यन्तं सूत्रम् । प्रयोगश्चैवम्— 'चित्ताय स्वाहा । इदं चित्ताय । चित्त्यै स्वाहा । इदं चित्त्यै' । एवमन्यत्र । 'आकूताय स्वाहा । आकूत्यै स्वाहा । विज्ञाताय स्वाहा । विज्ञात्यै स्वाहा । मनसे स्वाहा । शक्वर्यै स्वाहा । दर्शाय स्वाहा । पौर्णमासाय स्वाहा । बृहते स्वाहा । रथन्तराय स्वाहा । प्रजापतिर्जयानिन्द्राय वृष्णे प्रायच्छदुग्रः पृतनाजयेषु । तस्मै विशः समनमन्त सर्वाः स उग्रः स इ हव्यो बभूव स्वाहा ॥' इति । 'इदं प्रजापतये' इति त्यागः । विभा.

अभ्यातानमन्त्राः

**'अग्निर्भूतानामधिपतिः स माऽवत्विन्द्रो ज्येष्ठानां यमः पृथिव्या वायुरन्तरिक्षस्य सूर्यो दिवश्चन्द्रमा नक्षत्राणां बृहस्पतिर्ब्रह्मणो मित्रः सत्यानां वरुणोऽपां समुद्रः स्रोत्यानामन्नं साम्राज्यानामधिपति तन्माऽवतु सोम ओषधीनां सविता प्रसवानां रुद्रः पशूनां त्वष्टा रूपाणां विष्णुः पर्वतानां मरुतो गणानामधिपतयस्ते माऽवन्तु पितरः पितामहाः परेऽवरे ततास्ततामहाः । ‡ इह माऽवन्त्वस्मिन् ब्रह्मण्यस्मिन्**

$ हभा. कभावत् ।

¶ शेषं कभावत् ।

‡ तैत्तिरीयसंहितायामयं भागः एवं दृश्यते— 'इह माऽवत । अस्मिन् ब्रह्मन्नस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मन्नस्यां देवहूत्याम्' ( तैसं. ३।४।५।२ ) ।

क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मण्यस्यां देवहूत्यां स्वाहा ' इति सर्वत्रानुषजति ॥

(१) 'अग्निर्भूतानाम्' इत्येवमादिषु 'अधिपतिः स माऽवतु' इति सर्वत्रानुषङ्गः। एवमेव स्पर्यंते इति। एवं च सति 'अन्नं साम्राज्यानाम्' 'मरुतो गणानाम्' इति च विशेषेणैव पाठः। 'पितरः पितामहाः' इत्येवमादि 'परं मृत्यविति चैके' इति यावत्सूत्रम्।

कभा.

(२) 'अग्निर्भूतानाम्' इत्येवमादिषु 'अधिपतिः स माऽवतु' इति सर्वत्रानुषङ्गः, 'अस्मिन् ब्रह्मन्' इत्यादेश्च। एवमेव स्पर्यत इति। एवं च सति 'अन्नं साम्राज्यानामधिपति' 'मरुतो गणानामधिपतयः' इति च विशेषेणैव पाठः। 'अग्निर्भूतानाम्' इत्यष्टादश मन्त्रा अभ्यातानसंज्ञाः। तथा च श्रुतिः— 'यद्देवा अभ्यातानैरसुरानभ्यातन्वत तदभ्यातानानामभ्यातानत्वम्' इति। अभ्यातन्वत आयुधानि प्राहिण्वत।

* जभा.

(३) मन्त्रार्थः— अग्निः प्रजापतिः भूतानां स्थावरादीनामधिपतिः ईशः स मा माम् अवतु पातु। क? अस्मिन् ब्रह्मणि अस्मिन् ब्रह्मकर्मणि होमादौ, पुनरस्मिन् क्षत्रे क्षत्रकर्मणि प्रजापालनादौ, पुनरस्यामाशिषि ब्राह्मणैः संपादितेष्टाशंसने, पुत्रादिसुखकामनायां वा। कुत्र? अस्यां कन्यायाम्। किंभूतायाम्? पुरोधायां पुरःस्थितायाम् अस्मिन् कर्मणि विवाहे, अस्यां देवहूत्यां देवताह्वाने देवतोद्देशेन होमे वा। स्वाहा सुहुतमस्तु। अयं च वाक्यार्थः उपरिष्टादपि सप्तदशसु संबध्यते। शेषं स्पष्टम्। एतेऽष्टादश मन्त्रा अभ्यातानाः। 'अग्निर्भूतानाम्' इत्यादि 'सुगं नु पन्थाम्' इत्यन्ता द्वाविंशतिरभ्यातानाः इति कर्ककारिकाकारौ।

‡ गभा.

* हभा, विभा. जभावत्।

‡ शेषं जभावत्।

## गोभिलगृह्यसूत्रम्

### स्थण्डिलकरणम्

[१]अनुगुप्ता अप आहृत्य प्रागुदक्प्रवणं देशं समं वा परिसमुह्योपलिप्य मध्यतः प्राचीं लेखामुल्लिख्योदीचीं च संहतां पश्चान्मध्ये प्राचीस्तिस्र उल्लिख्याभ्युक्षेत् ॥

अनुगुप्ता आच्छादिताः। पतितादिभिरदृष्टा इति यावत्। प्राङ्नीचादिफलमाह गृह्यासंग्रहे गोभिलपुत्रः— 'प्राङ्नीचं ब्रह्मवर्चस्यमुदङ्नीचं यशोत्तमम्। पित्र्यं दक्षिणतो नीचं प्रतिष्ठालम्भकं समम् ॥'। यशोत्तममित्यत्र 'सान्ता अप्यदन्ताः' इत्युक्तेरदन्तोऽपि यशशब्दः गयाशिर इतिवत्। परिसमुह्य सर्वतः कुशैः पांश्वादिकमपसार्य उत्तरस्यां दिशि सार्धहस्तोपरि क्षिपेत्, 'परिसमुह्य वितस्तित्रये उत्तरत उत्करं करोति' इति हरिशर्मवचनात्। तत उपलेपनम्। तत्र कारणमाह गृह्यासंग्रहः— 'इन्द्रेण वज्राभिहतः पुरा वृत्रो महासुरः। मेदसा तस्य संक्लिन्ना तदर्थमुपलेपयेत् ॥' इति। मध्यतः स्थण्डिलाभ्यन्तरे दक्षिणांशे, न तु मध्यांशे, उदग्गतैकविंशत्यङ्गुलरेखानुरोधात्, अन्यथा 'कुशैः संमार्जयेद्भूमिं शुद्धामादौ शुचिस्ततः। हस्तमात्रां चतुरस्रां गोमयेनोपलेपयेत् ॥' इति भारद्वाजीयहस्तप्रमाणस्थण्डिले तदनुपपत्तेः। प्राचीं प्राग्गताम्। उदीचीं च संहतां पश्चादिति। प्राग्गतायाः पश्चिमे भागे संलग्नामुदगग्राम्। मध्ये उदग्गतायाः प्राचीः प्रागग्रास्तिस्रो रेखाः। उल्लिख्याभ्युक्षयेदिति। रेखाभ्य उत्थितमृत्तिकोद्धरणपूर्वकमभ्युक्षयेत्, 'उल्लिख्योद्धृत्याभ्युक्षयेत्' इति कात्यायनसूत्रात्। उत्करप्रक्षेपदेशमाह गृह्यासंग्रहः— 'उत्करं गृह्यरेखाभ्योऽरत्निमात्रे निधापयेत्। द्वारमेतत्पदार्थानां प्रागुदीच्यां दिशि स्मृतम् ॥' इति।

रेखाप्रमाणमाह छन्दोगपरिशिष्टे कात्यायनः— 'दक्षिणे प्राग्गतायास्तु प्रमाणं द्वादशाङ्गुलम्। तन्मूललग्ना

(१) गोगृ. १।१।९–१०; संत ८५८ प्रवणं (प्लवनं) लेखा (रेखा) भ्युक्षेत् (भ्युक्षयेत्).

योदीची तस्या एवं नवोत्तरम् ॥ उदग्गतायाः संलग्नाः शेषाः प्रादेशमात्रिकाः। सप्तसप्ताङ्गुलांस्त्यक्त्वा कुशेनैव समुल्लिखेत् ॥'। नवोत्तरं नवाधिकं द्वादशाङ्गुलम्, एकविंशत्यङ्गुलमित्यर्थः । शेषा उक्तरेखयोरवशिष्टास्तिस्रः । कुशेनेति सर्वत्राभिसंबध्यते । एवकारेण शाखान्तरोक्तस्फ्यस्याव्यावृत्तिः । रेखाणां देवता वर्णाश्चाऽऽह स्मृतिः– 'प्राग्गता पार्थिवी ज्ञेया ह्याग्नेयी चाप्युदग्गता। प्राजापत्या तथा चैन्द्री सौमी च प्राक्कृताः स्मृताः ॥ पार्थिवी पीतवर्णा स्यादाग्नेयी लोहिता भवेत् । प्राजापत्या भवेत्कृष्णा नीला चैन्द्री प्रकीर्तिता । श्वेतवर्णा च सौमी स्याद्रेखाणां वर्णलक्षणम् ॥ '। अग्निस्थापनपर्यन्तं सव्यहस्तप्रादेशस्य विधानमाह गृह्यासंग्रहः– 'सव्यं भूमौ प्रतिष्ठाप्य प्रोल्लिखेद्दक्षिणेन तु । तावन्नोत्थापयेत्पाणिं यावदग्निं निधापयेत् ॥'। मानकर्तारमाह छन्दोगपरिशिष्टे कात्यायनः– 'मानक्रियायामुक्तायामनुक्ते मानकर्तरि । मानकृद्यजमानः स्याद्विदुषामेष निश्चयः ॥'। अङ्गुष्ठाङ्गुलिमानमाह स एव– 'अङ्गुष्ठाङ्गुलिमानं तु यत्र यत्रोपदिश्यते । तत्र तत्र बृहत्पर्वग्रन्थिभिर्मिनुयात्सदा ॥' । यजमानासंनिधौ होमे तु साधारणाङ्गुलिमानं यथा कपिलपञ्चरात्रम् 'अष्टभिस्तैर्भवेज्ज्येष्ठं मध्यमं सप्तभिर्यवैः । कन्यसं षड्भिरुद्दिष्टमङ्गुलं मुनिसत्तमैः ॥'। तैः प्रक्रम्यमानयवैः । कन्यसं कनिष्ठम् । मानं तु पार्श्वेन, 'षड्यवाः पार्श्वसंमिताः ' इति कात्यायनवचनात् । * संत. ८५८–८५९

## लक्षणावृदेषा सर्वत्र ॥

(१) परिसमूहनादि परिषेकान्तं कर्म लक्षणसंज्ञकम्। तस्य लक्षणस्याऽऽवृत् प्रक्रिया सर्वत्र यत्र यत्राग्निप्रणयनं तत्र तत्र बोध्या । संत. ८५८

(२) "इदं च भूसंस्कारकं कर्म, अग्निसंस्कारकं च। तथा च गृह्यान्तरम्– 'संमृज्योपलिप्योल्लिख्योद्धृत्याभ्युक्ष्यैष भूसंस्कारोऽग्नावनुगते भूयः ' इति". इति भाष्यकारः । * मृदुला.

### अग्निस्थापनम्

[१] '**भूर्भुवः स्वः** ' **इत्यभिमुखमग्निं प्रणयन्ति ॥**

(१) अग्निम् अभिमुखं होत्रभिमुखं प्रणयन्ति रेखोपरि स्थापयन्ति, 'प्राञ्चं नीत्वाऽऽवर्त्य स्थापयन्ति ' इति हरिशर्मधृतवचनात् । तत्प्रकारमाह गृह्यासंग्रहे– 'शुभं पात्रं तु कांस्यं स्यात्तेनाग्निं प्रणयेद्बुधः । तस्याभावे शरावेण नवेनाभिमुखं च तम् ॥ सर्वतः पाणिपादान्तः सर्वतोऽक्षिशिरोमुखः । विश्वरूपो महानग्निः प्रणीतः सर्वकर्मसु ॥'। एवं चाग्निप्रणयनानन्तरं 'सर्वतः ...' इत्यस्य पाठो युज्यते, 'प्रणीतः' इति मन्त्रलिङ्गात् । अन्यथा स्थापनानन्तरमेतदभिधानं व्यर्थं स्यात् । ताम्रपात्रमप्याह देवीपुराणम्– 'ताम्रपात्रे शरावे वा आनयित्वा हुताशनम् । अग्निप्रणयनं कुर्याद्यजमानसुखावहम् ॥' इति । अत्रिरपि– 'पात्रान्तरेण पिहिते ताम्रपात्रादिके शुभे । अग्निप्रणयनं कुर्याच्छरावे तादृशेऽपि वा ॥ '। यत्तु 'शरावे भिन्नपात्रे वा कपाले वोल्मुकेऽपि वा । नाग्निप्रणयनं कुर्याद्व्याधिहानिभयावहम् ॥' इति स्मृतिसागरधृवचनं तत् मुख्यकांस्यादिमयसद्भावे निषेधकमिति राघवभट्टः । संत. ८५९–८६०

(२) यत्तु 'शरावे भिन्नपात्रे वा कपाले वोल्मुकेऽपि वा । नाग्निप्रणयनं कुर्याद् व्याधिहानिभयावहम् ॥' इति स्मृत्यन्तरम्, तदुदाहृतवचनविरोधात्कौथुमादिव्यतिरिक्तविषयम् । ¶ मृदुला.

### ब्रह्मोपवेशनम्

[२]**अग्रेणाग्निं परिक्रम्य दक्षिणतोऽग्नेः प्रागग्रान् दर्भानास्तीर्य ॥**

* मृदुला. संतगतम् ।

* शेषं संतवत् ।

¶ शेषं संतगतम् ।

(१) गोगृ. १।१।११; संत. ८५९ भूर्भुवः (ओं भूर्भुवः).

(२) गोगृ. १।६।१३ ; संत. ८६२ दर्भा (कुशा).

(१) अथ ब्रह्मस्थापनम् । तच्च होतृकर्तृकमेव, 'अग्निमुपसमाधाय दक्षिणतो ब्रह्मासनमास्तीर्य' इति कात्यायनेनैककर्तृकत्वाभिधानात् । ब्रह्मोपवेशनप्रकारमाह गोभिलः– 'अग्रेणाग्निं...' इति । अस्यार्थः– अग्रेण पूर्वदिशा प्रदक्षिणेनाग्निं गत्वा अग्नेर्दक्षिणस्यां दिशि प्रागग्रान्दर्भानास्तीर्य । 'अन्यच्चेष्टेत्' इति वक्ष्यमाणेन संबन्धः, न तु 'निरस्यति' इत्यनेन, अत्र ब्रह्मेति कर्तृनिर्देशात् । न च ब्रह्मेत्यासनेन संबन्धः, उपवेशनात् पूर्वं तत्संबन्धाभावात् । अतो दर्भास्तरणान्तं याजमानिकम् । तत्र ब्रह्मासनस्थाने आस्तरणात् पूर्वं वारिधारामाह गृह्यासंग्रहः– 'उदधारामविच्छिन्नामग्निमारभ्य दक्षिणम् । दद्याद्ब्रह्मासनस्थाने सर्वकर्मसु नित्यशः ॥' । अत्र तु धारासहितमुदकपात्रं गृहीत्वा अग्नेरुत्तरतः प्रभृति दक्षिणदेशं गत्वाऽरत्निमात्रान्तरिते देशे पूर्वाभिमुखं वारिधारादानमिति विशेषो भवदेवभट्टोक्तः । संत. ८६२

(२) आस्तीर्य, तृणं निरस्यतीति वक्ष्यमाणेन संबन्धः । अत्रोपवेशनं प्राङ्मुखता च परिभाषाबलात् । तथा च कात्यायनः– 'आसीन ऊर्ध्वः प्रह्वो वा नियमो यत्र नेदृशः । तदासीनेन कर्तव्यं न प्रह्वेण न तिष्ठता ॥' इति । प्रह्वेण अवनतेन । न तिष्ठता नोर्ध्वजानुना । तथा– 'यत्र दिङ्नियमो नास्ति जपहोमादिकर्मसु । तिस्रस्तत्र दिशो ज्ञेया ऐन्द्री सौम्यपराजिता ॥' इति । ऐन्द्री पूर्वा । सौमी उत्तरा । अपराजिता ऐशानी ।

¶ मृदुला.

**[१]तेषां पुरस्तात्प्रत्यङ्मुखस्तिष्ठन् सव्यस्य पाणेरङ्गुष्ठेनोपकनिष्ठिकया चाङ्गुल्या ब्रह्माऽऽसनात्तृणमभिसंगृह्य दक्षिणापरमष्टमं देशं निरस्यति –'निरस्तः परावसुः' इति ॥**

(१) ब्रह्मा तु तेषां पुरस्तात् आस्तृतकुशानां पूर्वदिग्भागे तिष्ठन् अनुपविष्टः । सव्यस्य वामस्य । उपकनिष्ठया अनामिकया । आसनात् यजमानास्तृतात् तृणं कुशपत्रं गृहीत्वा दक्षिणापरं दक्षिणपश्चिमदेशम् अ (न्व ?)-ष्टमम् उभयदिगष्टमभागम्, नैर्ऋतमिति यावत्, 'निरस्तः परावसुः' इत्यनेन प्रक्षिपतीति । संत. ८६२–८६३

(२) मन्त्रार्थस्तु– अपकृष्टो भागो रक्षोधिष्ठानभूतः परावसुरित्युच्यते । स चानेन तृणनिरसनेन स्थानादस्मान्निरस्तो निराकृतो वेदितव्यः । तेनैतत्स्थानं पवित्रतरमुपजातमित्यर्थः । * मृदुला.

**[१]अप उपस्पृश्याथ ब्रह्माऽऽसन उपविशति – 'आ वसोः सदने सीदामि' इति ॥**

(१) अप उपस्पृश्य दक्षिणपाणिना जलं स्पृष्ट्वा, अथ अनन्तरम्, आसने ब्रह्मासनत्वेन कल्पिते उपविशति 'आ वसोः सदने सीदामि' इति मन्त्रेण, एवमेव भट्टनारायणव्याख्यानात् । 'तेषां पुरस्तात्' इत्यादि 'आ वसोः सदने सीद' इत्यन्तं यजमानकर्तृकम्, सीदामीति प्रतिवचनं ब्रह्मकर्तृकमिति भवदेवभट्टकल्पनं कल्पनमेव, सीदेति सूत्रानुपात्तत्वाच्च । संत. ८६३

(२) अपः उदकम्, उपस्पृश्य आचम्य, 'उपस्पर्शस्त्वाचमनम्' इत्यमरः । 'अन्यच्चेष्टेत' इति वक्ष्यमाणेन (१।६।२१) अस्य अभिसंबन्धो वर्णनीयः । तथा च श्लोकं पठति( ? न्ति )–'येन यस्याभिसंबन्धो दूरस्थस्यापि तस्य सः । अर्थतो ह्यसमर्थानामानन्तर्यमकारणम् ॥' इति । अत्र यजमान एव कर्ता । अतः परं ब्रह्मणः कर्मोपदिशति– अथेत्यादि । अथ अनन्तरम्, ब्रह्मा आसने यजमानोपकल्पिते समास्तृतदर्भे, उपविशति । तत्र मन्त्रमाह– 'आ वसोः' इति । अस्यार्थः– वसु धनं दक्षिणाद्रव्यम् । आ तत्प्राप्तेः सदने कुशास्तरणस्थाने अहं सीदामि उपविशामीति । वीरेश्वरादिपद्धतिषु तु 'ॐ आ वसोः सदने सीद' इत्येवं यजमानेन धृतदक्षिणकरः स्वासन उपवेशितो ब्रह्मा 'ॐ सीदामि' इति ब्रूयादित्युक्तम् । मृदुला.

---

¶ शेषं संतवत् ।

(१) गोगृ. १।६।१४ ; संत. ८६२ कनिष्ठिकया (कनिष्ठया) अष्टमं (अष्टम).

* शेषं संतवत् ।

(१) गोगृ. १।६।१५ ; संत. ८६२ सन उप (सनमुप).

ब्रह्मनियमाः

**[1]अग्निमभिमुखो वाग्यतः प्राञ्जलिरास्त आ कर्मणः पर्यवसानात् ॥**

स खल्वयम् अग्निमभिमुखः आभिमुख्येनाग्नेरवस्थितः, उदङ्मुखः इत्यर्थः । वाग्यतः संयतवाक्, प्राञ्जलिः कृताञ्जलिपुटः सन्, आस्ते उपविशति । कियन्तं कालम्? आ कर्मणः पर्यवसानात् । कर्मसमाप्तिपर्यन्तमित्यर्थः । मृदुला.

**[2]भाषेत यज्ञसंसिद्धिम् ॥**

(१) होत्राऽन्यथा क्रियमाणे कर्मणि तत्सिद्ध्यर्थम् एतदेवं कुरु, एतत्कृत्वैतत्कुरु, इत्यादि भाषेत । संत. ८६३

(२) वाग्यत इत्यत्र प्रतिप्रसवमाह— भाषेतेति । यज्ञसंसिद्धिम्, अधिकृत्य इति शेषः । एतदन्यत्रास्य वाग्यतत्वमित्यर्थः । कृताकृतावेक्षणं हि तत्कर्म निर्दिष्टम्, स च 'ब्रह्मा चतुर्विद्यो भवति' इति, चतुर्विद्यः सर्वार्थवित्, इति सर्वं कर्म यथावदुपदेष्टुमीष्टे । तथा चैतदन्यत्रास्य मौनमुक्तं भवति । * मृदुला.

**नायज्ञियां वाचं वदेत् ॥**

तदेवाऽऽह— अयज्ञियाम् यज्ञानर्हां संस्कृतामपि वाचं न वदेत्, कुतः पुनरसंस्कृताम्? यत्र हि 'साधुभिर्भाषितव्यम्, न म्लेच्छितवै, नापभाषितवै' इति श्रुतिर्विरुध्यते । मृदुला.

**[3]यद्ययज्ञियां वाचं वदेद्वैष्णवीमृचं यजुर्वा जपेत् ॥**

**[4]अपि वा 'नमो विष्णवे' इति ब्रूयात् ॥**

(१) अत्रापि अयज्ञियाम् असंस्कृतां वदेद्यदि तदा वैष्णवी ऋक् 'इदं विष्णुः' इति, यजुः 'विष्णोर्विराड- (? विष्णो रराट)मसि' इत्यादि, 'नमो विष्णवे' इति प्रकारत्रितयान्यतमप्रकारं प्रायश्चित्तमिति । संत. ८६३

(२) यदि कुतश्चित् कारणात्, अयज्ञियां यज्ञानर्हाम्, वाचं वदेत् तर्हि वैष्णवीं विष्णुदेवताकाम्, ऋचम् 'इदं विष्णुर्विचक्रमे' इत्यादिलक्षणाम्, तदज्ञाने यजुरपि 'विष्णो रराटमसि' इत्यादिकम्, जपेत्तद्दोषशान्त्या इत्यर्थः । 'प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् । स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः ॥' इति स्मृत्यन्तराभिधानं चात्रोपोद्बलकं द्रष्टव्यम् ।

अपि वा अथवा, तयोरज्ञानदशायां क्रियालाघवेन वा, विष्णुस्मरणमात्रस्य विधेयस्य तावताऽप्युपपत्तेरित्यर्थः । मृदुला.

हौत्रब्रह्मत्वयोरेककर्तृकत्वे विशेषविधिः

**[1]यद्यु वा उभयं चिकीर्षेद्धौत्रं चैव ब्रह्मत्वं चैवैतेनैव कल्पेन छत्रं वोत्तरासङ्गं वोदकमण्डलुं दर्भवटुं वा ब्रह्मासने निधाय तेनैव प्रत्याव्रज्याथान्यच्चेष्टेत ॥**

(१) यद्युवेत्यशक्तौ । उत्तरासङ्गम् उत्तरीयम् । दर्भबटुः कुशमयब्राह्मणः । स चापरिमितकुशदलैर्भवतीति भट्टभाष्यात्, एकपत्रीकृतान् कुशानित्यपि भवदेवभट्टलिखनाच्च दलैर्व्यवह्रियते । तत्रापरिमितसंख्यात्वमाह छन्दोगपरिशिष्टम्— 'यज्ञवास्तुनि मुष्ट्यां च स्तम्बे दर्भवटौ तथा । दर्भसंख्या न विहिता विष्टरास्तरणेष्वपि ॥' इति । एतच्छन्दोगपरम् । अन्येषां शान्तिदीपिकायाम्— 'सप्तभिर्नवभिर्वाऽपि सार्धद्वितयवेष्टितम् । ओंकारेणैव मन्त्रेण द्विजः कुर्यात् कुशद्विजम् ॥' । कर्मोपदेशिन्यां तु नवभिरित्यत्र पञ्चभिरिति पाठः । एतदेकवाक्यतया

---

* शेषं संतवत् ।

(१) गोगृ. १।६।१६ ; संत. ८६२ अग्निमभि (अन्यभि).

(२) गोगृ. १।६।१७–१८ ; संत. ८६२.

(३) गोगृ. १।६।१९ ; संत. ८६२ वदेत् + (तदा).

(४) गोगृ. १।६।२० ; संत. ८६२ इति (इत्येवं).

(१) गोगृ. १।६।२१ ; संत. ८६२ द्धौत्रं ......... प्रत्याव्रज्या (द्धौत्रं ब्रह्मत्वं चैवैतेन कल्पेन छत्रमुत्तरासङ्गं सोदककमण्डलुं दर्भवटुं वा ब्रह्मासने निधाय तेनैव प्रत्याव्रज्या) च्चेष्टेत (च्चेष्टत्).

'द्विरावृत्त्याऽथ मध्ये वै अर्धवृत्त्याऽन्तदेशतः । ग्रन्थिः प्रदक्षिणावर्तः स ब्रह्मग्रन्थिसंज्ञकः ॥' इति कालिकापुराणोक्तं व्याख्येयम् । रत्नाकरे गृह्यासंग्रहपरिशिष्टम्–'ऊर्ध्वकेशो भवेद्ब्रह्मा लम्बकेशस्तु विष्टरः । दक्षिणावर्तको ब्रह्मा वामावर्तस्तु विष्टरः ॥' । एतेनैवेत्येवकारः स्वयंकर्तृकपक्षे 'आ वसोः सदने सीदामि' इत्यस्य मन्त्रस्य ऊहप्रतिषेधार्थः, 'स्वयं चेदुभयं कुर्यात्' इति छन्दोगपरिशिष्टात् । कृताकृतावेक्षणवत् स्वयं तत्कुशोपवेशनस्य कर्तव्यत्वात् कुशमयब्राह्मणादिप्रतिनिधिना तदुपपत्तेः तेनैव पूर्ववर्त्मनेति भट्टभाष्यम् । अथेति विशिष्टमानन्तर्यं द्योतयति । तच्च द्रव्योपयोगक्रमेणाग्नेरुत्तरतः उदगग्रान् पूर्वक्रमेणाऽऽसाद्य वीक्ष्य प्रोक्ष्य चेति । अथानन्तरमन्यद्वक्ष्यमाणं कर्म चेष्टेत् कुर्याद्यजमानः । परस्मैपदं छन्दोवत्सूत्राणि भवन्तीत्युक्तेः । संत. ८६३–८६४

(२) यदि पुनरन्यो ब्राह्मणो ब्रह्मकर्मसंपादनसमर्थो न कथंचित् लभ्येतेत्येवं वितर्के उः प्रयुक्तः । तदा निश्चयेन स्वयमेव उभयं चिकीर्षेत् कर्तुमिच्छेत्, इति निश्चयार्थे वैशब्दः प्रयुक्तः । किं तदुभयम् ? तदाह– हौत्रं चैव ब्रह्मत्वं चैवेति । हौत्रं होतुः कर्म । 'तस्येदम्' (पा. ४।३।१२०) इत्यर्थे अणादिवृद्धिः । ब्रह्मत्वं ब्रह्मणः कर्म । अत्र कर्मणि त्वः । कथमित्यपेक्षायामाह– एतेनैव कल्पेन पूर्वोक्तयैवाऽऽवृता अग्रेणाग्निमित्यादिकया । अत्रास्वरसमनुसंधायाऽऽह– छत्रं वेति । छत्रादीनामन्यतमं स्वीयं ब्रह्मासने निधाय स्थापयित्वा तेनैव पथा, येन पूर्वं परिक्रमणं कृतम्, प्रदक्षिणेनाग्निं प्रत्याव्रज्य परिक्रम्य अथ अनन्तरम् अन्यत् वक्ष्यमाणं भूमिजपपरिसमूहनादिकं चरुश्रपणादिकं वा कर्म चेष्टेत कुर्यादित्यर्थः । छत्रमातपत्रम्, छादयते छायया वा त्रायते इति व्युत्पत्तेः । उत्तरासङ्गम् उत्तरीयम् । उदकमण्डलुः उदकपूर्णपात्रम् । 'उदकस्योदः संज्ञायाम्' (पा. ६।१।५७) इत्युदादेशः । दर्भवटुः ब्रह्मग्रन्थियुतमृजुकुशत्रयम् । 'कुशाः पवित्रम्' इत्युक्तेरत्र कुशत्रयमुपादीयते । कात्यायनेन तु– 'यज्ञवास्तुनि मुष्ट्यां च स्तम्बे दर्भवटौ तथा । दर्भसंख्या न विहिता विष्टरास्तरणेष्वपि ॥' इत्युक्तम् । यज्ञवास्तुनि दर्भजूटिकाहोमे । मुष्ट्यां 'पत्नी सकृदाच्छिन्नां दर्भमुष्टिं स्तृणाति' इति विहितायाम् । स्तम्बे 'उत्तरतोऽग्नेर्दर्भस्तम्बं निदधाति' इति श्रवणाकर्मोक्ते । दर्भवटौ कुशमय्यां ब्रह्मप्रतिकृतौ । गृह्यासंग्रहे तु संख्या प्रोक्ता (अङ्गिरसा ?)– 'ब्रह्मविष्टरयोश्चापि संदेहः समुपस्थितः । कतिभिस्तु कुशैर्ब्रह्मा कतिभिर्विष्टरः स्मृतः ॥ पञ्चाशद्भिः कुशैर्ब्रह्मा तदर्धेन तु विष्टरः । ऊर्ध्वकेशो भवेद्ब्रह्मा लम्बकेशस्तु विष्टरः । दक्षावर्तो भवेद्ब्रह्मा वामावर्तस्तु विष्टरः ॥' इति । कुशैरित्युपलक्षणम्, तेन 'पञ्चाशत्पत्रको ब्रह्मा तदर्धेन तु विष्टरः ।' इति वचनं संगच्छते । एवं च कातीयसंख्याऽनियमोक्तिरेतावत्कुशाद्यभावे इति द्रष्टव्यम् ।

मृदुला.

हविर्निर्वापः

**[१]अथोलूखलमुशले प्रक्षाल्य शूर्पं च पश्चादग्नेः प्रागग्रान् दर्भानास्तीर्योपसादयति ॥**

(१) अथ द्रव्यासादनम् । तत्र कात्यायनः– 'प्राञ्चं प्राञ्चमुदगग्नेरुदगग्रं समीपतः । तत्तथाऽऽसादयेद् द्रव्यं यद्यथा विनियुज्यते ॥' इति । भट्टभाष्ये धृतं च –'द्रव्याणामुपक्लृप्तानां होमीयानां यथाक्रमम् । सादयन् वीक्षणं कुर्यादद्भिरभ्युक्षणं तथा ॥' । छन्दोगपरिशिष्टम्– 'आज्यस्थाली च कर्तव्या तैजसद्रव्यसंभवा । माहेयी वाऽपि कर्तव्या नित्यं सर्वाग्निकर्मसु ॥' । अथ यदि प्रकृतकर्मणि चरुहोमस्तदा अस्मिन्नेव समये चरुं श्रपयेत्, गोभिलेन ब्रह्मस्थापनानन्तरं तद्विधानात् ।

अथ चरुविधानम् । तत्र गोभिलः– 'अथोलूखल.... .... .... ... प्रत्यभिघारयेत्' इति । अस्यार्थः– उपसादयति स्थापयति । संत. ८६४

(२) अथ द्रव्याण्यासाद्य संप्रोक्ष्य च पूर्वमासादिते उलूखलमुशले शूर्पं चेत्येतत् त्रयम् 'मुशलोलूखले वार्क्षे स्वायत्ते सुदृढे तथा । इच्छाप्रमाणे भवतः शूर्पं वैणवमेव

(१) गोगृ. १।७।१ ; संत. ८६४ अथोलू (अथोदू) मुशले (मुषले) दर्भा (कुशा).

च ॥' इति कर्मप्रदीपोक्तलक्षणं प्रक्षाल्य पश्चादग्नेः प्रागग्रान् दर्भानास्तीर्य तत्रोपसादयति स्थापयेदित्यर्थः । पूर्वं खल्वग्नेरुत्तरतः समासादितानां शूर्पोलूखलमुशलानामिदानीमग्नेः पश्चिमतः स्थापनं कर्तव्यं निर्वापाद्यर्थम् । मृदुला.

**[1]अथ हविर्निर्वपति व्रीहीन् वा यवान् वा कंसेन चरुस्थाल्या वा ॥**

**[2]'अमुष्मै त्वा जुष्टं निर्वपामि' इति देवतानामादेशं सकृद् द्विस्तूष्णीम् ॥**

(१) देवतानामोद्देशं देवतानामोच्चारणं यथा स्यात्तथा 'अमुष्मै त्वा जुष्टं निर्वपामि' इत्यनेन उलूखलोपरि व्रीह्यादीन् कांस्यादिना सकृन्निर्वपेत् । अत्रामुष्मा इत्यत्र चतुर्थ्यन्तनामोच्चारणम् । अत एव कात्यायनः— 'असाविति नाम गृह्णाति' । नारायणीयेऽपि— 'अदःपदं हि यद्रूपं यत्र मन्त्रे हि दृश्यते । साध्याभिधानं तद्रूपं तत्र स्थाने नियोजयेत् ॥' । अतोऽदःपद एव नामोहः, न तु विरूपाक्षजपादाविदमित्यादौ । एवं च 'अग्नये त्वा जुष्टं निर्वपामि' इति सामगानां यजुःप्रयोगः । गोभिले निर्वापमात्रश्रुतेः यजुर्वेदिकसमन्त्रकग्रहणप्रोक्षणे सामगेन न कार्ये । यजुःपरिभाषामाह जैमिनिः— 'शेषे यजुःशब्दः' इति । शेषे मन्त्रभिन्ने मन्त्रजाते । ततश्च यन्मन्त्रजातं प्रश्लिष्टपठितं गानपादभेदरहितं तत् यजुरिति । बहुदैवत्ये च बहुदेवतानामभिः प्रत्येकं निर्वापः । अन्ननिर्वापो मन्त्रेणैव, होमोऽपि पृथक्, निर्वापपरिमाणं तु होमसंख्याशेषस्थित्यनुसारेणेत्याह छन्दोगपरिशिष्टम्- 'देवतासंख्यया गृह्यनिर्वापांश्च पृथक् पृथक् । तूष्णीं द्विरेव गृह्णीयाद्धोमश्चापि पृथक् पृथक् ॥ यावता होमनिर्वृत्तिर्भवेद्वा यत्र कीर्तिता । शेषं चैव भवेत् किंचित्तावन्तं निर्वपेच्चरुम् ॥' । यद्यपि देवतासंख्ययेति वचनं 'चरुः समसनीयो यः' इत्युपक्रम्य पठितं तथाऽप्याकाङ्क्षाया लाघवेन चरुसामान्यपरमिति । चरुविधौ तु विद्याकरवाजपेयी— यत्र प्रयोजनाभावनिश्चयस्तत्रैव तदुपादानादिलोपः । यत्रानुष्ठानवेलायामेव पुरुषदोषेण प्रयोजनाभावो ज्ञायते तदा प्राक् तन्निश्चयात् शास्त्रप्रापितः पदार्थो नियमापूर्वमात्रार्थमनुष्ठेय इति । अत एव यदा त्वालस्यादिना व्रीह्यादिस्थाने तण्डुला गृहीताः तदाऽपि अवघातादि समाचरन्ति याज्ञिकाः, पठन्ति च— 'घाते न्यूने तथा छिन्ने सांनाय्ये मान्त्रिके तथा । यज्ञे मन्त्राः प्रयोक्तव्या मन्त्रा यज्ञार्थसाधकाः ॥' । मान्त्रिके मन्त्रसाध्ये अवघातादौ । न्यूने तत्काले मन्त्रपाठाभावेऽपि यज्ञकाले मन्त्राः पाठ्याः । अस्मिंस्तु मन्त्रार्थज्ञानस्य नास्त्युपयोगः । इत्थमेवेदानीं प्रयोगानुष्ठानमाह । चरुस्थालीयपरिमाणमाह छन्दोगपरिशिष्टम्— 'तिर्यगूर्ध्वसमिन्मात्रा दृढा नातिबृहन्मुखी । मृण्मय्यौदुम्बरी वाऽपि चरुस्थाली प्रशस्यते ॥' । गर्भप्रस्तारदीर्घा( ? दैर्घ्या )भ्यां प्रादेशप्रमाणा चरुस्थाली औदुम्बरी ताम्रमयी । एषा पायसचरावपि न निषिद्धा, 'पयोऽनुद्धृतसारं च ताम्रपात्रे न दुष्यति ।' इति स्मृतिसागरधृतवचनाच्च । अत एव शारदातिलके— 'ततश्च संस्कृते वह्नौ गोक्षीरेण चरुं पचेत् । मन्त्रेण क्षालिते पात्रे नवे ताम्रमयादिके ॥' । संत. ८६४

(२) अथेति उलूखलमुशलासादनानन्तरमित्यर्थः । हविः हवनीयं निर्वपति उलूखले निःक्षिपेत् । हविर्विशेषाकाङ्क्षायामाह— व्रीहीन् वा यवान् वा । वाशब्दौ तुल्यवद्विकल्पार्थौ । एवमग्नेऽपि । निर्वापसाधनमाह— कंसेनेति । तत्र कंसं वर्तुलाकारयज्ञियपात्रभेद इति शब्दकल्पद्रुमः । 'कंसोऽस्त्री तैजसद्रव्ये कांस्ये मानेऽसुरे तु ना ।' इति मेदिनी । 'कंसोऽस्त्री पानभाजनम्' इत्यमरः । तत्र मन्त्रमाह— अमुष्मा इति । अदःशब्दो विप्रकृष्टमभिमतमनिर्दिष्टनामानमभिदधदिहाग्न्यादिषु कंचिदभिदधाति । अमुष्मै इत्यादिना 'अग्नये त्वा जुष्टं निर्वपामि' इत्येवं देवताया वेदमेयत्यागोद्देश्याया नाम्न आदेशं समुच्चारणं यथा भवति तथा सकृत् एकवारं निर्वपति ।

---

(१) गोगृ. १।७।२ ; संत. ८६४ निर्वपति ( निर्वहेदिति ) व्रीहीन्वा ( व्रीहीन् ) कंसेन ( कांस्येन ).

(२) गोगृ. १।७।३ ; संत. ८६४ नामादेशं ( नामोद्देशं ) सकृद् + ( यजुषा ).

द्विः वारद्वयं तूष्णीममन्त्रं निर्वपतीति संबन्धः । अत्र च यावता निरुप्तेन होमो निर्वर्त्यते किंचिच्चावशिष्यते तावत्परिमितमेव हविर्निर्वप्तव्यम् । बहुदैवत्ये च चरौ न प्रत्येकमेवानुनिर्वापौ कर्तव्यौ, किंतु तन्त्रेण द्वावेवानुनिर्वापौ सर्वशेषे करणीयौ । तदेतत्सर्वं कर्मप्रदीप आह— 'चरुः समशनीयो यस्तथा गोयज्ञकर्मणि । वृषभोत्सर्जने चैव अश्वयज्ञे तथैव च ॥ श्रावण्यां वा प्रदोषे यः कृष्यारम्भे तथैव च । कथमेतेषु निर्वापाः कथं चैव जुहोतयः ॥ देवतासंख्यया ग्राह्या निर्वापाश्च पृथक् पृथक् । शेषश्चैव भवेत् किंचित्तावन्तं निर्वपेच्चरुम् ॥' इति । अत्र एतेषु इति एतत्प्रकारेष्वन्येष्वपीत्यर्थः ।

मृदुला.

अवघातः

[1]**अथ पश्चात्प्राङ्मुखोऽवहन्तुमुपक्रमते दक्षिणोत्तराभ्यां पाणिभ्याम् ॥**

(१) दक्षिणोत्तराभ्यामिति दक्षिण उत्तरत उपरि ययोः पाण्योस्ताभ्यां मुषलं गृहीत्वा इति शेषः । संत. ८६६

(२) अथेति पूर्वप्रकृतार्थम् । अथ पूर्वप्रकृतेनाऽऽसादितेन मुशलेन पश्चात् निर्वपणस्य उलूखलस्य वा । प्राङ्मुख आसीनश्च, परिभाषाबलात् । पूर्वप्रकृतानेव निरुप्तान् व्रीहीन् वा यवान् वा, अवहन्तुं कण्डितुम् उपक्रमते आरभेत कथम् ? दक्षिणोत्तराभ्यां दक्षिणः (करः) उत्तरः उपरि गतः ययोस्ताभ्यां पाणिभ्यां गृहीतेन मुशलेनेत्यर्थः ।'उपक्रमत इति वचनादुपक्रम एवायं नियमः, ततश्च शिष्येणापि पश्चादवहननं कारयतो न दोषः' इति भट्टभाष्यम् । मुरारिमिश्राश्चैवमेवाऽऽहुः ।

मृदुला.

फलीकरणं प्रक्षालनं च

[2]**त्रिः फलीकृतांस्तण्डुलांस्त्रिर्देवेभ्यः प्रक्षालयेदित्याहुर्द्विर्मनुष्येभ्यः सकृत् पितृभ्यः ॥**

(१) त्रिः फलीकृतान् त्रिधा वितुषीकृतान् कण्डलप्रच्छट( ? कण्डनप्रच्छोट )नाभ्यामिति शेषः ।

संत. ८६६

(२) त्रिः वारत्रयम् । फलीकृतान् निस्तुषीकृतान् शूर्पेण । तण्डुलानित्युपलक्षणं यवादीनामपि । देवेभ्यः देवानुद्दिश्य त्रिष्प्रक्षालयेदित्येवमाहुराचार्याः । मृदुला.

तण्डुलावापः

[1]**पवित्रान्तर्हितांस्तण्डुलानावपेत् ॥**

पवित्रान्तर्हितान् पवित्रम् अन्तर्हितं व्यवहितं येषां तान् । तेन चरुस्थाल्यामुत्तराग्रं पवित्रं निःक्षिप्य तण्डुलान् निक्षिपेत् । ¶ संत. ८६६

स्थालीपाकश्रपणम्

**कुशलशृतमिव स्थालीपाकं श्रपयेत् प्रदक्षिणमुदायुवन् ॥**

कुशलशृतमिवेति । कुशलेन पाकनिपुणेन शृतम्, यथा न दग्धं नातिक्लिन्नं न मन्दपक्वं तथा स्थालीपाकं यथा स्यात्तथा श्रपयेत् । अत एव छन्दोगपरिशिष्टम्— 'स्वशाखोक्तचरुः स्विन्नो ह्यदग्धोऽकठिनः शुभः । न चातिशिथिलः पाको न च वीतरसो भवेत् ॥' । वीतरसः गालितमण्डः । प्रदक्षिणमुदायुवन्निति । प्रदक्षिणावर्तं यथा स्यात्तथा मेक्षणेन ऊर्ध्वमीषन्मिश्रयन् । 'यु मिश्रणे' इत्यस्य रूपमेतत् । ¶ संत. ८६६

अभिघारणोद्वासनप्रत्यभिघारणानि

**शृतमभिघार्योदगुद्वास्य प्रत्यभिघारयेत् ॥**

(१) शृतम् ( इति ? ) अभिघार्येति । स्फुटितं चरुमाज्यश्रवणा( ? माज्यस्रावेणा )ऽऽप्लाव्य उदगग्नेरुत्तरस्यामुत्तार्य प्रत्यभिघारयेत् पुनर्घृतेन तथा सेचयेत् । वृषोत्सर्गे तु अभिघारणद्वयात् पूर्वं ज्वलदङ्गारेण विद्योतनद्वयमाह छन्दोगपरिशिष्टम्— 'अधिशृतमवद्योत्य सुशृतं चाभिघारयेत् । घृतेन सेचयेत् पश्चात् पुनरेवाभिघारयेत् ॥' ।

संत. ८६६–८६७

---

(१) गोगृ. १।७।४ ; संत. ८६४ पश्चात्प्राङ्मुखोऽव (पश्चादव).

(२) गोगृ. १।७।५ ; संत. ८६४ दैवेभ्यः (दैवताभ्यः) (इत्याहुः०) पितृभ्यः + (इति).

¶ मृदुला. संतवत् ।

(१) गोगृ. १।७।६–८ ; संत. ८६४.

(२) गृह्यासंग्रहे– ' पवित्रमन्तरा कृत्वा चरुं प्राज्ञोऽभिघारयेत् । उद्वास्य चैवं विधिवदेवं तन्त्रं न लुप्यते ॥ ' इति, ' चतुर्मुष्टिश्चरुः कार्यश्चतुर्णामुत्तरोऽपि वा । ' इति च । * मृदुला.

परिस्तरणम्

**[१]अग्निमुपसमाधाय कुशैः समन्तं परिस्तृणुयात् पुरस्ताद्दक्षिणत उत्तरतः पश्चादिति ॥**

(१) उपसमाधाय ज्वालयित्वा, समस्तं सर्वतः, पुरस्तादित्यनेन क्रमेण । संत. ८६८

(२) अग्निम् उपसमाधाय समिद्भिः समिध्य, कुशैः पूर्वासादितैः बर्हिःस्वरूपैः विशाखाप्रतिलूनैः, समन्तं समन्तात् सर्वतः, अग्नेर्बहिः परिस्तृणुयात् आच्छादयेत् । ' स्तृञ् आच्छादने ' ( स्वा. उ. ), लिङ् विधौ । स्तरणक्रममाह– पुरस्तादिति । पूर्वस्यां दक्षिणस्याम् उत्तरस्यां पश्चिमायामित्येवं क्रमेणेत्यर्थः । अत्र समन्तमिति द्वितीया पञ्चम्यर्थे व्यत्ययेन ( पा. ३।१।८५ ) । समस्तमिति पाठः प्रामादिकः । मृदुला.

**[२]सर्वतस्त्रिवृतं पञ्चवृतं वा ॥**

(१) सर्वतः सर्वासु दिक्षु, त्रिवृतं पञ्चावृतं वा । संत. ८६८

(२) सर्वतः सर्वासु दिक्षु, त्रिवृतं त्रिवारम्, पञ्चवृतं पञ्चवारं वा । परिस्तृणुयादित्यनुवर्तते । मृदुला.

**[३]बहुलमयुग्मसंहतम् ॥**

(१) बहुलं बहुलतृणकम्, अयुग्मं युग्मभिन्नम्, असंहतम् असंलग्नम्, पृथक् पृथक् । ' त्रिवृतं पञ्चावृतं वा ' इत्यनेन अयुग्मे सिद्धे अयुग्ममिति एकावृतस्य प्राप्त्यर्थम् । तथा च गृह्यान्तरम्– ' सकृत्त्रिर्वा प्रतिदिशं प्रदक्षिणमग्निं परिस्तृणाति ' इति । एवमेव भट्टनारायणचरणाः । तत्र सकृदावृतमशक्तविषयम् । संत. ८६८

(२) अथ कथं पुनरेकं परिस्तरणं संपद्यते ? यस्य त्रिः पञ्चकृत्वो वा करणमुपदिश्यते । तदुच्यते– बहुलमिति । बहुलं बहुतृणकम्, अयुग्माः संहताः परस्परं संलग्नाः कुशा यत्र तत् । तदेवं प्रतिदिशमयुग्मैः परस्परसंलग्नैः कुशैरेकं परिस्तरणं संपद्यते । तस्य खल्वस्य त्रिः पञ्चकृत्वो वा करणमुपदिश्यते इत्यर्थः । तदिदं परिस्तरणं पूर्वस्यामुत्तरान्ताद्दक्षिणान्तं यावत् । दक्षिणस्यां पूर्वान्तात्पश्चिमान्तं यावत् । यथा दक्षिणस्यां तथोत्तरस्याम् । यथा पूर्वस्यां तथा पश्चाद्दिशि कर्तव्यम् । परिस्तरणक्रियाविशेषणमेतत्सर्वं द्रष्टव्यमिति मुरारिमिश्राः प्राहुः । मृदुला.

**[१]प्रागग्रैरग्रैर्मूलानि च्छादयन् ॥**

(१) पूर्वास्तृतावृतानां मूलानि पश्चादावृताग्रैश्छादयन् परिस्तृणुयात् । एवं च प्रतिदिशं दर्भत्रयेणाऽऽवृतानि कृत्वा तेषां मूलानि तथैवाऽऽच्छाद्य तेषां मूलानि तथैवाऽऽच्छादयेत् । ततो दशदिक्षु स्वस्तिकान् दद्यात् इति भवदेवभट्टः । संत. ८६८

(२) अथेदानीं परिस्तरणप्रकारोऽभिधीयते– प्रागग्रैरिति । प्राक् प्रथमं पतितान्यग्राणि येषां तैस्तथाभूतैः कुशैः समन्तं परिस्तृणुयादिति सिंहावलोकितकेन समन्वयितव्यम्, तथैव कर्मठप्रसिद्धेः । कथमित्यपेक्षायामाह– अग्रैरिति । अग्रमूलक्रमेण स्थापितकुशानां मूलानि स्थाप्यमानकुशाग्रैः छादयन् ईशानादाग्नेयान्तं वायव्यानैर्ऋतान्तं प्राक्प्रतीच्योः, प्राक्प्रत्यक्क्रमेण च दक्षिणोत्तरयोरित्येष परिस्तरणक्रम आयाति । किंतु ' प्राञ्च्युदञ्चि वा कर्माणि संतिष्ठन्ते ' इति श्रुतेराजानिकशिष्टाचारपरिगृहीतत्वादाग्नेय्यामुत्तराग्रास्तीर्णकुशाग्राधस्तादास्तीर्यमाणकुशमूलं कार्यमित्येवमुदक्संस्था भवन्ति । तथा च सांख्यायनीये– ' प्रागग्रैः कुशैः परिस्तृणाति ' ( कौगृ.

---

* शेषं संतगतम् ।

(१) गोगृ. १।७।९ ; संत. ८६८ समन्तं ( समस्तं ).

(२) गोगृ. १।७।१० ; संत. ८६८ पञ्च ( पञ्चा ).

(३) गोगृ. १।७।११ ; संत. ८६८ युग्मसं ( युग्ममसं ).

(१) गोगृ. १।७।१२ ; संत. ८६८ ( रग्रै० ) च्छाद ( आच्छाद ).

१।८।२ ) इत्युपक्रम्य ‘ सर्वाश्चाऽऽवृतो दक्षिण-प्रवृत्तय उदक्संस्था भवन्ति ’ ( कौगृ. १।८।५ ) इत्युक्तम् । आवृतः प्रक्रियाः परिपाट्यो वा । ‘ आवृत्परिपाटी अनुक्रमः ’ इत्यमरः । आश्वलायनोऽपि— ‘दिक्षु सर्वासूदक्संस्था प्राच्यादिषु परिस्तृतिः । ’ इत्युक्तवान् । अत एव पार्वणे पश्चिमादारभ्य पूर्वान्तम्, आभ्युदयिके च दक्षिणादारभ्योत्तरान्तमर्घ्यादिक्रमः सकलशिष्टाचारपरिगृहीत उपलभ्यते । वीरेश्वरादयोऽपि ‘ आग्नेयादीशानान्तम् ’ इत्येवं परिस्तरणक्रमं स्वपद्धतौ वाजसनेयके लिखन्ति स्म । यत्तु— प्रागग्रैरित्यनेन प्राक्पश्चिमयोरपि पूर्वाग्राणामेव कुशानां परिस्तरणमिति केषांचिन्मतम्, तत्र परिधिकार्यनिर्वाहकताऽग्रे ( १।७।१६ ) वक्ष्यमाणा नोपपद्यते इति द्रष्टव्यम् । मृदुला.

**[1]पश्चाद्वाऽऽस्तीर्य दक्षिणतः प्राञ्चं प्रकर्षति तथोत्तरेण ॥**

परिस्तरणे प्रकारान्तरमाह— पश्चाद्वेति । वा अथवा, पश्चात् प्रतीच्याममग्नेः प्राच्यामिवाऽऽस्तीर्य दक्षिणतः दक्षिणस्यां प्राञ्चं पूर्वपूर्वाग्रक्रमेण यथा स्यात्तथा अग्रैर्मूलानि च्छादयन् प्रकर्षति प्रकीर्णयति, परिस्तृणाति । तथा तेनैव प्रकारेण, उत्तरेण उत्तरतः । पूर्वतस्तु सूर्य एव कार्यनिर्वाहको भावनया याज्ञिकानामित्यवगन्तव्यम् ।

मृदुला.

**दक्षिणोत्तराण्यग्राणि कुर्यात् ॥**

दक्षिणानि च तान्युत्तराणि चेति दक्षिणोत्तराणि, अग्राणि कुशानामिति शेषः । पश्चात् पुरस्ताद्वा यानि बर्हींषि स्तृतानि भवन्ति तेषामग्राणि दक्षिणोत्तरक्रमेण कुर्यात् इत्यर्थः । गृह्यवृत्तिकृतो भट्टनारायणोपाध्यायास्तु— पूर्वसूत्रे उभयहस्तेन कुशान् गृहीत्वा दक्षिणहस्तगृहीतैर्दक्षिणतः परिस्तृणाति, सव्यहस्तगृहीतैः अपि सव्यतः इत्यभिधाय, अत्र सूत्रे दक्षिणहस्तगृहीतकुशाग्राणि उत्तराणि उपरिष्टात् ऊर्ध्वं पूर्वस्यां दिशि, अर्थात् सव्यहस्तगृहीतान्यधराणि पश्चाद्दिशि इत्यर्थ इत्याहुः । महामहोपाध्यायमुरारिमिश्रास्तु— दक्षिणहस्तगृहीतकुशाग्राणि उत्तराणि उपरिष्टात्कुर्यात् । एवं चार्थात्सव्यहस्तगृहीतानि अधराणीत्यर्थ इत्याहुः । कतमोऽर्थोऽत्र याज्ञिकावृत्तिसिद्ध इति विद्वांस एव विदाङ्कुर्वन्तु । मृदुला.

**एष परिस्तरणन्यायः सर्वेष्वाहुतिमत्सु ॥**

एषः अनन्तरोक्तः परिस्तरणस्य न्यायः प्रकारः सर्वेष्वाहुतिमत्सु यत्र यत्र आहुतयस्तत्र तत्र भवति, अन्यत्र सायंप्रातर्होमादिभ्यः । तथा च कात्यायनः— ‘ यान्यधः स्तरणाम्नानान्न तेषु स्तरणं भवेत् । एककार्यार्थसाध्यत्वात् परिधीनपि वर्जयेत् ॥ ’ इति । स्तरणाम्नानादधः पूर्वं यानि आम्नातानि प्रातर्होमादीनि तेषु स्तरणं न भवेत् । एकेति । स्तरणवैकल्पिकान् स्तरणैककार्यकारित्वात्परिधीनपि तेषु वर्जयेदित्यर्थः । मृदुला.

परिधिपरिधानम्

**परिधीनप्येके कुर्वन्ति शामीलान् पार्णान् वा ॥**

कुशानां परिधीनां च खल्वभावे परिधीन् ‘ बाहुमात्राः परिधय ऋजवः सत्वचोऽव्रणाः । त्रयो भवन्त्यशीर्णाग्रा एकेषां तु चतुर्दिशम् ॥ ’ इति कर्मप्रदीपोक्तलक्षणसंख्याकानपि एके आचार्याः कुर्वन्ति परिस्तरणार्थम् । तानेव विशिनष्टि— शामीलान् शमीमयान् । तदलाभे पार्णान् पलाशमयान् वा । ‘ पलाशे किंशुकः पर्णो वातपोतः ’ इत्यमरः । परिधीनां विन्यासप्रकारमाह कर्मप्रदीपः— ‘ प्रागग्रावभितः पश्चादुदगग्रमथापरम् । न्यसेत्परिधिमन्यश्चेदुदगग्रः स पूर्वतः ॥ ’ इति । अत्र ‘ एके कुर्वन्ति ’ इत्यनेनैतदपि सूचयत्याचार्यः— स्तरणकल्पे परिधिरनर्थकः, स्तरणेनैव तत्कार्यस्य कृतत्वात् । परिधिर्हि असुरोपघातप्रतिषेधाय चतुर्दिक्षु क्रियते । गृह्यासंग्रहे तु— ‘ परिधींस्तु न कुर्वीत गृह्यकर्मसु याज्ञिकः । उदकाञ्जलयस्तिस्रस्ते वै परिधयः स्मृताः ॥ ’ इत्युक्तम् ।

मृदुला.

उदकार्थे स्रुवः प्रणीता वा

**उत्तरतोऽपां पूर्णः स्रुवः प्रणीता ॥**

उत्तरतः उत्तरस्यां दिशि अग्नेः । अपामद्भिः । शेषे षष्ठी । उदकेन पूर्णः संभृतः स्रुवो यथोक्तलक्षणः,

( १ ) गोगृ. १।७।१३–१८.

स एव प्रणीता तत्कार्यकृद्भवति । तदनेन संस्कारविशेषादप एवाभिधीयन्ते, ताभिश्च पर्युक्षणपवित्रमार्जनादय उदकार्थाः कर्तव्या इत्यभिप्रायः । 'प्रणीताभिरुदकार्थः कार्यः ' इति च गृह्यान्तरम् । अत्र गृह्यासंग्रहे– ' विहितप्रतिषिद्धां च प्रणीतां नोपकल्पयेत् । ' इति । प्रणीतां तत्पात्रम् । मृदुला.

**भावे न वा स्यादित्येके ॥**

भावः सत्तेत्यनर्थान्तरम् । भावे अन्यस्य महतः पात्रस्य प्रणीतादेः , अनन्तरोक्तः स्रुवः प्रणीतार्थकृन्न वा नैव स्यादित्येके आचार्या मन्यन्ते । मृदुला.

इध्माधानम् आज्यसंस्कारश्च

**[1]बर्हिषि स्थालीपाकमासाद्येध्ममभ्याधायाऽऽज्यं संस्कुरुते ॥**

( १ ) आस्तीर्णकुशेषु चरुं निधाय समिधमग्नावाधाय ज्वलनार्थत्वादमन्त्रकम् । तथा च कात्यायनः– ' इध्मोऽप्येधार्थमेवाग्नेर्हविराहुतिषु स्मृतः । ' । आज्यमाह गृह्यासंग्रहे– ' अग्निना चैव मन्त्रेण पवित्रेण च चक्षुषा । चतुर्भिरेव यत्पूतं तदाज्यमिति च स्मृतम् ॥ घृतं वा यदि वा तैलं पयो वा दधि यावकम् । आज्यस्थाने नियुक्तानामाज्यशब्दो विधीयते ॥ ' । एतद्वचनं यज्ञपार्श्वीयमपि । संत. ८६९

( २ ) बर्हिषि आस्तृते स्थालीपाकं चरुम् । आसाद्य स्थापयित्वा । इध्ममित्येकवचनं जात्यपेक्षम् । इध्मान्यथोक्तानभि आत्मनोऽभिमुखम् । आधाय ' इध्मोऽप्येधार्थमेवाग्नेर्हविराहुतिषु स्मृतः । ' इति कर्मप्रदीपदर्शनादमन्त्रकमग्नौ प्रक्षिप्य । ' अन्यत्राङ्गहोमादिभ्यः ' इति चन्द्रकान्तभाष्यम् । भट्टनारायणोपाध्याया अप्येवमेवाऽऽहुः । वस्तुतः समन्त्रकमिध्मस्येन्धनस्याप्याधानं वचनबलात् । तथा चाङ्गिराः– ' इध्मसंनहनाधानं चरुश्रपणमेव च । तूष्णीमेतानि कुर्वीत समन्त्रं चेध्ममादधेत् ॥ ' इति । यद्यपि समन्त्रकत्वे तूष्णीमिति विरुद्धम् , तथाऽपि तूष्णीमिति दर्शनान्मन्त्रस्य स्मरणमात्रम् , न तु पाठः , अतो न विरोधः । अत एव ' प्रजापतिं मनसा ध्यात्वा ' इति वीरेश्वरादिपद्धतिषु समिदाधाने उक्तम् । मन्त्रश्चात्र महाव्याहृतिरूप एव । तदुक्तं छन्दोगपरिशिष्टे– ' आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते । मन्त्रस्य देवतायाश्च प्रजापतिरिति स्थितिः ॥ ' इति । अनादेशे अविधाने । होमद्रव्यस्य इति शेषः । मन्त्रस्य देवतायाश्चेत्यत्र अनादेश इति संबध्यते । मन्त्रस्यानादेशे प्रजापतिदेवताको महाव्याहृतिमन्त्रः । स च समस्तव्याहृतित्रयात्मकः । देवतायाश्चानादेशे प्रजापतिर्देवतेति एकस्यैव प्रजापतिरित्यस्यार्थ इति कल्पतरुकारादयः । अत एव वचनान्तरमपि संगच्छते । तथाहि– ' यत्र मन्त्रा न विद्यन्ते व्याहृतीस्तत्र योजयेत् । मन्त्राणामेव चोद्देशे मन्त्रैः कर्म समाचरेत् ॥ भूरादयो व्याहृतयो वेदेभ्यो निःसृताः पुरा । महत्त्वं व्याहृतित्वं च व्याप्तास्तेनैव कर्मणा ॥ ओंकारजननात्तासां महत्त्वं प्रतिभाष्यते । व्याप्त्या च व्याहृतित्वं च तेन त्रैविध्यतां ययुः ॥ ' इति । अत एवाहोमेऽपि सामगब्राह्मणकर्तृकजलाहरणे व्याहृतीनामेव विनियोग इति सकलसमाचार इति शुभकर्मनिर्णये महामहोपाध्यायमुरारिमिश्राः प्राहुः । इध्मस्वरूपमुक्तमधस्तात् । अथ तत्र विशेषमाह अङ्गिराः– 'इध्मः समानवृक्षाणां द्विप्रादेशः प्रमाणतः । '। कात्यायनोऽपि– ' समिधोऽष्टादशेध्मस्य प्रवदन्ति मनीषिणः । दर्शे च पौर्णमासे च क्रियास्वन्यासु विंशतिम् ॥ ' इति । तथा– 'मूलमध्याग्रदेशेषु ईषत्सिक्तांस्तु निर्वपेत् । ' इति । अयं च सेको घृतादिनैव । अत एवोक्तं वीरेश्वरादिभिः स्वस्वपद्धतौ ' मूलमध्याग्रक्रमेण घृताक्तान् ' इति । स्थौल्यादिकं तु यथोक्तं धर्मान्तरमिध्मस्य समित्समानमेव ग्राह्यम् । तथा च समित्स्वरूपमुक्त्वा कात्यायनः– 'प्रादेशद्वयमिध्मस्य प्रमाणं परिकीर्तितम् । एवंविधाः स्युरेवेह समिधः सर्वकर्मसु ॥ ' इति । इह गृह्यकर्मणि । समिध्यते अग्निः एभिरिति व्युत्पत्त्या समिधः इध्म ः एवं-

---

( १ ) गोगृ. १।७।१९ ; संत. ८६९ बर्हिषि ( बर्हिःषु ) इध्ममभ्याधाय ( इध्ममग्नावाधाय ) ; पप्र. ११० ( आज्यं संस्कुरुते ) एतावदेव.

विधा एव समित्समाना एवेत्यर्थ इति मुरारिमिश्राः । आज्यमिति । अनक्त्यनेन इत्याज्यं सर्पिरादि । संस्कुरुते संस्कुर्याद्वक्ष्यमाणेन विधिना । मृदुला.

**[1]सर्पिस्तैलं दधि पयो यवागूं वा ॥**

किं तदाज्यं तदाह— सर्पिरिति । सर्पिः घृतम् । 'घृतमाज्यं हविः सर्पिः' इत्यमरः । तैलं तिलस्नेहम् । यवागूः भृष्टयवचूर्णं षड्गुणजले दुग्धे वा सिद्धं द्रवद्रव्यम् । यूयते मिश्र्यते असाविति 'यु मिश्रणे' इत्यस्मात्कर्मणि (उ. ३।८१) अगूप्रत्ययः । 'यवागूः षड्गुणजले सिद्धा स्यात्कृशरा घनाः ।' इतिं शार्ङ्गधरीये । अत्र पूर्वपूर्वासंभवे उत्तरोत्तरोपादानमिति द्रष्टव्यम् । सर्वमेतदाज्यमुच्यते । तदाह गृह्यासंग्रहे कात्यायनः— 'अग्निना चैव मन्त्रेण पवित्रेण च चक्षुषा । चतुर्भिरेव यत्पूतं तदाज्यमितरद्घृतम् ॥ घृतं वा यदि वा तैलं पयो वा दधि यावकम् । आज्यस्थाने नियुक्तानामाज्यशब्दो विधीयते ॥' इति । यावकं यवागूः । मृदुला.

**[2]तत एव बर्हिषः प्रादेशमात्रे पवित्रे कुरुते ॥**

(१) ततः आस्तृतात्, प्रादेशमात्रे विस्तृततर्जन्यङ्गुष्ठप्रमाणे । द्विवचनं दलापेक्षम्, न तु 'अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च । प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् ॥' इति कात्यायनोक्तद्विदलपवित्रस्य द्वित्वम्, तथात्वे प्रादेशमात्रे इति व्यर्थं स्यात् । अत एव कात्यायनेनैव 'आज्यस्योत्पवनार्थं यत्तदप्येतावदेव तु ।' इत्यत्र एकत्वेन निर्दिष्टम् । अनन्तर्गर्भिणं अन्तः गर्भस्याभावोऽनन्तर्गर्भम्, तद्युक्तम्, अन्तर्गर्भशून्यमित्यर्थः, 'अनन्तस्तरुणौ यौ तु कुशौ प्रादेशसंमितौ । अनखच्छेदिनौ साग्रौ तौ पवित्राभिधायकौ ॥' इति शौनकवचनैकवाक्यत्वात् । अत्र दलेऽपि कुशपदप्रयोगः । संत. ८६९–८७०

(२) आज्यसंस्कारप्रकारमाह— तत इति । ततः स्तृतादेवेत्यर्थ इति कौमुदी । तत्रायमाशयः— तत्पदस्य पूर्वप्रक्रान्तवाचकतया स्तृतस्य चाव्यवहितोपस्थितत्वात् तत्परामर्शौचित्यात् । न च विनियुक्तविनियोगविरोधः, औपदेशिकत्वात् । यथा 'व्रीहीन् प्रोक्षति' इत्यादौ प्रोक्षितानामेव व्रीहीणामवघातान्वयः । न च तत्र 'प्रोक्षिता व्रीहयोऽवघाताय कल्पन्ते' इति स्मरणात् सामानाधिकरण्यानुरोधात्तथोपदेशो गम्यत इति न दोष इति वाच्यम्, अत्रापि तत्पदस्य प्रक्रान्तवाचकत्वोपदेशसत्त्वात् । अत एव 'न तर्हि बर्हिष इव' इति कुसुमाञ्जलौ वर्धमानचरणैः 'बर्हिष इवेति व्यतिरेके दृष्टान्तः' इत्युक्तम् । धीरवीरादिपद्धतिरप्येवमेव । भाष्यकृतस्तु 'तत एव विस्तीर्णशेषादेव' इति व्याचक्षते । 'स्तृतेभ्यो न प्रचिनुयाद्यातयामं स्तृतं स्मृतम् ।' इति स्तृतनिषेधात्तेन च स्तरणक्रियैकदा नियमादृष्टजननात्तैनैव पवित्रकरणे विनियुक्तविनियोगविरोधाच्चानास्तृतादेव ग्रहणमुचितमिति तेषामाशयः । प्रादेशमात्रे विस्तृततर्जन्यङ्गुष्ठप्रमाणे । प्रमाणेऽर्थे मात्रच्प्रत्ययः । पवित्रे कुरुते इति द्विवचनं दलापेक्षम् । प्रादेशमात्रस्य बर्हिर्द्वयस्य खल्वत्र पवित्रकरणमुपदिश्यते । न हि द्विदलपवित्रस्य द्वित्वं शक्यते वक्तुम्, 'बर्हिषः प्रादेशमात्रे' इत्यभिधानात् । तथा च कर्मप्रदीपे कात्यायनः— 'अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च । प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् ॥ एतदेव हि पिञ्जूल्या लक्षणं समुदाहृतम् । आज्यस्योत्पवनार्थं यत्तदप्येतावदेव तु ॥' इति । 'समावप्रच्छिन्नाग्रौ दर्भौ प्रादेशमात्रौ पवित्रे करोति' इति च ब्राह्मणम् । अत एव शुभकर्मनिर्णये— "ननु– 'अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च ।' इति कात्यायनवचनादेतावद्विशेषणयुक्तं कुशपत्रद्वयं पवित्रपदार्थः, तत्र च द्विवचनविभक्त्यर्थद्वित्वान्वयात् पत्रचतुष्टयं तावल्लभ्यते, तथा चाऽऽचारविरोध इति चेत्, मैवम्, 'प्रादेशमात्रे पवित्रे कुरुते' इत्यत्र पवित्रपदस्य शक्यैकदेशपत्रमात्रपरत्वात् । मुख्यपरत्वे हि सूत्रे प्रादेशमात्रे इति विशेषणं व्यर्थमापद्येत, विशिष्टशक्तपदादेव तल्लाभसंभवात् । किंच 'पवित्रे स्थः' इति मन्त्रलिङ्गात् प्रकृतसूत्राच्च पत्रचतुष्टयविनियोगशङ्का मा भूदिति पवित्रलक्षणमभिधाय

(१) गोगृ. १।७।२० ; प्र. ११०.
(२) गोगृ. १।७।२१ ; संत ८६९ (पवित्रे०).

कात्यायनेनोक्तम्— 'आज्यस्योत्पवनार्थं यत्तदप्येतावदेव तु ।' इति । ननु विनिगमनाविरहात् कथं तदनुरोधेन सूत्रादौ मुख्यार्थत्याग इति चेत्, न, तस्य सूत्रतात्पर्यो-न्नायकत्वात् । तदुक्तम्— 'अस्पष्टानां विधिं सम्यग्दर्श-यिष्ये प्रदीपवत् ।' इति । एवं चाऽऽचारोपष्टब्धं 'पवित्रमन्तरा कृत्वा' इति गृह्यासंग्रहवचनमपि संगच्छते । एवं च 'पवित्रे स्थो वैष्णव्यौ' इत्यादि-मन्त्रस्थपवित्रपदानन्तरं यत्र यत्र द्विवचनविभक्तिरस्ति तत्र तत्र पवित्रपदं शक्यैकदेशदलपरमेव श्रोत्रिय-पदवत् । 'देवस्त्वा' इति मन्त्रस्थं पवित्रपदं च मुख्यपरमेव, अनुपपत्त्यभावात् । अत एव तत्र पवित्रेणे-त्येकवचनमपि संगच्छते इति दिक् । कश्चित्तु— 'कौशं द्विदलमेव च' इति पवित्रलक्षणे दलपदं न पत्रपरम्, अपि तु तदुभयपार्श्वपरमित्येकमेव पवित्रपदार्थः । तथा च न द्विवचनानुपपत्तिरिति प्रकृते समाधानमाह, तन्न, एवमप्यर्घादावेकपत्रात्मकपवित्रदानापत्तावाचारविरोधस्य, 'आज्यस्योत्पवनार्थं यत् तदप्येतावदेव तु ।' इति परि-शिष्टवचनविरोधस्य, सूत्रे प्रादेशमात्रे इति विशेषण-वैयर्थ्यस्य चापरिहारात् ।" इति मुरारिमिश्राः प्राहुः ।

मृदुला.

**[1]ओषधिमन्तर्धाय च्छिनत्ति, न नखेन, 'पवित्रे स्थो वैष्णव्यौ' इति ॥**

(१) ओषधिमन्तर्धाय व्रीह्यादिना अन्तरा कृत्वा ।

संत. ८७०

(२) ओषधिं व्रीह्यादिकम्, अन्तर्धाय अन्तरा कृत्वा, 'पवित्रे स्थः' इति मन्त्रेण छिनत्ति कुशेनैव कुशाग्रे इत्यर्थः । हे पवित्रे, युवां वैष्णव्यौ विष्णुदेवताके स्थः भवथः इति मन्त्रार्थः ।

मृदुला.

**[2]अथैने अद्भिरनुमार्ष्टि— 'विष्णोर्मनसा पूते स्थः' इति ॥**

(१) एने पवित्रे सव्येन मूलप्रदेशे गृहीत्वा दक्षि-णेनानुमृज्यात् 'विष्णोः' इति मन्त्रेण । संत. ८७०

(२) अथ अनन्तरमेव अविमुञ्चन् एने पवित्रे कुशपत्रे अनुमार्ष्टि सव्यहस्तेन मूलप्रदेशे गृहीत्वा दक्षिण-हस्तेन प्रणीतोदकेन 'विष्णोर्मनसा' इति मन्त्रेणानुमृज्या-दित्यर्थः । हे पवित्रे, युवां विष्णोः मनसा सम्य-गनुध्यानेन पूते पवित्रे स्थः भवथः इति मन्त्रार्थः ।

मृदुला.

**संपूयोत्पुनात्युदगग्राभ्यां पवित्राभ्याम् ॥**

(१) संपूय प्रकृतमाज्यं 'पवित्रमन्तरा कृत्वा स्थाल्यामाज्यं समावपेत् ।' इत्येत्र वक्ष्यमाणविधिना संपूयेति भट्टभाष्यम् । संपूय मक्षिकाद्यपनीय इति सरला । उत्पुनाति ऊर्ध्वं शोधयेत् । तत्प्रकारमाह — उदगग्रा-भ्यामिति ।

संत. ८७०

(२) संपूयेति प्रकृतत्वादाज्यम् । अत्राङ्गिराः— 'पवित्रमन्तरा कृत्वा स्थाल्यामाज्यं समावपेत् । एत-त्संपूतनं नाम पश्चादुत्पवनं स्मृतम् ॥' इति । स्थाल्यां तैजस्यां मृन्मय्यां वा । तथा च कात्यायनः— 'आज्य-स्थाली तु कर्तव्या तैजसद्रव्यसंभवा । माहेयी वाऽपि कर्तव्या नित्यं सर्वाग्निकर्मसु ॥ आज्यस्थाल्याः प्रमाणं तु यथाकामं तु कारयेत् । सुदृढामव्रणां भद्रामाज्य-स्थालीं प्रचक्षते ॥' इति । माहेयी मृन्मयी । सा च हस्तमात्रघटिता, न तु कुलालचक्रनिष्पन्ना ग्राह्या । तथा च स एव— 'कुलालचक्रनिष्पन्नमासुरं मृन्मयं भवेत् । तदेव हस्तघटितं प्रशस्तं हव्यकव्ययोः ॥' इति । उदगग्राभ्यां पवित्राभ्याम्, पवित्रघटितदलाभ्या-मित्यर्थः । उत्पुनाति ऊर्ध्वं शोधयति ।

मृदुला.

**[1]अङ्गुष्ठाभ्यां चोपकनिष्ठिकाभ्यां चाङ्गु-लिभ्यामभिसंगृह्य प्राक्शस्त्रिरुत्पुनाति 'देवस्त्वा**

---

(१) गोगृ. १।७।२२; संत. ८६९ य च्छि (यच्छि).

(२) गोगृ. १।७।२३-२४; संत. ८७०.

(१) गोगृ. १।७।२५; संत. ८७० कनिष्ठिकाभ्यां (कनिष्ठाभ्यां) (चाङ्गुलिभ्यां०) रश्मिभिः ... ... वसुभिः (रश्मिभिः स्वाहा' इति सकृज्जुहुयात्).

**सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः' इति सकृद्यजुषा द्विस्तूष्णीम् ॥**

(१) अङ्गुष्ठाभ्यामित्यादौ द्विवचनं पाणिद्वयार्थम् । एवमनेन प्रकारेण अभिसंयुज्य( ? संगृह्य ) प्रकृते पवित्रे प्राकूशः प्राग्गतं त्रिरुत्पुनाति अग्नौ वारत्रयं घृतं निक्षिपति । तत्प्रकारमाह– मन्त्रेण सकृत्, द्विस्तूष्णीम् ।

संत. ८७०

(२) कथमिति ? तत्प्रकारमाह– अङ्गुष्ठाभ्यामिति । तथा च एकहस्तानामिकाङ्गुष्ठाभ्यां मूलदेशे अपरहस्तानामिकाङ्गुष्ठाभ्यामग्रदेशेऽभिसंगृह्य अर्थात्पवित्रे गृहीत्वोत्तराग्राभ्यां ताभ्यामाज्यमादाय 'देवस्त्वा' इति यजुषा प्राङ्मुखं प्राक्शः । त्रिरिति । मन्त्रेण सकृदुत्पुनाति ऊर्ध्वं नीत्वा क्षिपति, द्विस्तूष्णीमित्यर्थः । अत्र व्यस्तहस्तानामिकाङ्गुष्ठाभ्यां पवित्रग्रहणमिति पद्धतिकृतो वीरेश्वरादयः । मन्त्रार्थस्तु– हे आज्य, त्वा त्वां सविता देवः आभ्याम् अच्छिद्रेण अच्छिद्राभ्यामव्यवच्छिन्नाभ्यां पवित्रेण पवित्राभ्याम् उत् अधिकं पुनातु अज्ञातकेशकीटादिदोषमपनयतु । किंच वसु तेजः रश्मिर्वा, तत्प्रधानत्वात्सोऽपि तथोच्यते । तस्य वसोः तेजोनिधेः सूर्यस्य रश्मिभिः किरणैः, 'किरणप्रग्रहौ रश्मी' इत्यमरः । त्वामुत्पुनात्विति संबन्धः । अभिधानभेदाभिप्रायेण सविता सूर्यादन्यः । पवित्रेणेति व्यत्ययेनैकवचनम् ।

मृदुला.

**[१]अथैने अद्भिरभ्युक्ष्याग्नावप्युत्सृजेत् ॥**

(१) अपिरेवार्थे । अथ अनन्तरमेवामुञ्चन् एने पवित्रे सव्येन गृहीत्वा दक्षिणेनाभ्युक्ष्य । संत. ८७०

(२) अथानन्तरमेवाविमुञ्चन्नेव एने पवित्रे सव्येन गृहीत्वा दक्षिणेन अद्भिः प्रणीताजलेनाभ्युक्ष्य दक्षिणेनैवाग्नावपि उत्सृजेत् निःक्षिपेदित्यर्थः । मृदुला.

**अथैतदाज्यमधिश्रित्योदगुद्वासयेत् ॥**

(१) आज्यं तद्घृतपात्रम् अधिश्रित्य अग्नेरुपरिकृत्य उदक् उत्तरतः उद्वासयेत् अवतारयेत् । संत. ८७०

(२) अथ उत्पवनानन्तरम् एतत् अनन्तरोक्तं सर्पिरादिरूपमाज्यमधिश्रित्य अग्नेरुपरि कृत्वा प्रतप्य उदक् उत्तरस्यामग्नेः कुशोपरि उद्वासयेत् अवतार्य स्थापयेत् । अत्र चाधिश्रयणं दधिभिन्नानामेवाऽऽज्यानाम्, न तु दध्नोऽपि, तत्र निषेधात् । तथा च कात्यायनः– 'आज्यानां सर्पिरादीनां संस्कारे विधिचोदिते । अनधिश्रयणं दध्नः शेषाणां श्रपणं स्मृतम् ॥' इति । तथा– 'यथा सीमन्तिनी नारी पूर्वगर्भेण संस्कृता । एवमाज्यस्य संस्कारः पूर्वेणैवोत्तरस्य तु ॥' इति । एवं च यत्किंचिदवशिष्टे संस्कृते घृतादौ पुनर्घृतान्तरप्रवेशने तत्र न संस्कारान्तरापेक्षा, सर्वापचारे पुनः तदपेक्षैव, तत्र संस्कारान्तराभावादिति द्रष्टव्यम् । वारत्रयमेवमाज्यसंस्कार इति पद्धतिकृतो वीरेश्वरादयः । मृदुला.

**[१]एवमाज्यस्य संस्करणकल्पो भवतीति ॥**

(१) यत्रैवाऽऽज्यसंस्कारस्तत्रैवायं कल्प इति । अत्र गर्भपात्रसंस्कारवत् सकृत्संस्कृताज्यपात्रे यानि निःक्षिप्यन्ते तेषां संस्कारान्तरो( ? न्तरं ) नास्तीत्याह गृह्यासंग्रहः– 'यथा सीमन्तिनी नारी पूर्वगर्भेण संस्कृता । एवमाज्यस्य संस्कारः संस्कारविधिचोदितः ॥' ।

संत. ८७०–८७१

(२) एवम् अनेन प्रकारेण आज्यस्य संस्करणकल्पो भवति । यत्र यत्राऽऽज्यं संस्क्रियते तत्र तत्रैवं कर्तव्यमित्यर्थः । इतिः कण्डिकापरिसमाप्त्यर्थः स्रुवादिसंस्कारसमुच्चयार्थो वा । तथा च गृह्यान्तरम्– 'स्रुवं प्रतप्य दर्भैः संमृज्याभ्युक्ष्य पुनः प्रतप्य निदध्यात्' इति । कर्मप्रदीपोऽप्याह– 'तेषां प्राक्शः कुशैः कार्यः संप्रमार्गो जुहूषता । प्रतापनं च लिप्तानां प्रक्षाल्योष्णेन वारिणा ॥' इति । मृदुला.

---

(१) गोगृ. १।७।२६–२७ ; संत. ८७०.

(१) गोगृ. १।७।२८ ; संत. ८७० ( एवमाज्यसंस्कारोऽपि भवतीति).

आज्यस्थालीपाकयोरासादनदेशौ

**[1]पूर्वमाज्यमपरः स्थालीपाकः ॥**

(१) अत्र पूर्वापरदेशे स्थित्याऽऽज्यस्थालीपाकयोस्तथा व्यपदेशः। तेन तौ पूर्वापरयोः स्थाप्यौ। तत्र प्रथमतोऽग्नेरुत्तरस्यामासादनम्, ततः कर्मकाले सौकर्यायाग्नेः पश्चात्। तथा च गृह्यान्तरम्— 'होत्रग्न्योरन्तरा आज्यहविषी आसादयेत्' इति। संत. ८७१

(२) इदानीं हविषः पश्चिमतः समासादनादेव वक्ष्यत्याचार्यः— 'अथैतद्धविरुच्छिष्टमुदगुद्वास्य' इति।

§ मृदुला.

उपघातहोमतन्त्रम्

**[2]पर्युक्ष्य स्थालीपाक आज्यमानीय मेक्षणेनोपघातं होतुमेवोपक्रमते ॥**

(१) चरुहोमे विशेषमाह गोभिलः— पर्युक्ष्येति। 'अदितेऽनुमन्यस्व' इत्येवं पर्युक्ष्य स्थालीपाके चरौ आज्यं प्रक्षिप्य मेक्षणेनोपघातं उपहत्यावदाय होतुमेवोपक्रमते आरभते। उपघातमिति 'हिंसार्थानैककर्मकात् *' इत्यनेन तृतीयान्तोपपदे णमा सिद्धम्। एवकारकरणमुपघातहोमे अभिघारणा( क्षता ? )यङ्गप्रतिषेधार्थम्, होतुमेवोपक्रमते, नान्यत्। उपघातहोमलक्षणमाह गृह्यासंग्रहे— 'पाणिना मेक्षणेनाथ स्रुवेणैव तु यद्धविः। हूयते चानुपस्तीर्य उपघातः स उच्यते ॥ यद्युपघातं जुहुयाचरावाज्यं समावपेत्। मेक्षणेन तु होतव्यं नाऽऽज्यभागौ न स्विष्टकृत् ॥'। बहुदैवत्यचरुहोमे तु उपघातहोम एव, 'चरौ तु बहुदैवत्ये होमस्तस्योपघातवत्।' इति परिशिष्टप्रकाशवचनात्। ततः प्रकृतहोमात्परापरयोस्तूष्णीं समित्प्रक्षेपमाह छन्दोगपरिशिष्टम्— 'समिधा(? दा)दिषु होमेषु मन्त्रदैवतवर्जिता। पुरस्ताच्चोपरिष्टाच्च इन्धनार्थं समिद्भवेत् ॥'। संत. ८७५

(२) द्विविधः खलु होमो याज्ञिकप्रसिद्धः, उपघातः उपस्तीर्णाभिघारितश्च। चरावाज्यं निःक्षिप्य विनैवाभिघारणादिकं यद्धूयते स उपघातः। यश्च स्रुचि स्रुवेणाऽऽज्येनाभिघार्य चरुमवदाय पुनराज्येनाभिघार्य हूयते स उपस्तीर्णाभिघारित इत्याख्यायते। स्रुवेण स्रुचि यदाज्यं प्रथमं गृह्यते तदुपस्तीर्णम्, हविरवदायानन्तरं यदाज्यं दीयते तदभिघारितमिति व्यपदिश्यते। यथा चोपस्तीर्णाभिघारितं होतव्यं तदनुपदं व्युत्पादयिष्यते। यथा चोपघातहोमस्तदत्र सूच्यते। तदेवमुपघातमिति पारिभाषिकी संज्ञा होमविशेषस्य। स खल्वयमुपघातहोमः समशनीयचरुपितृयज्ञचर्वोरन्यत्रापि बहुदैवत्ये चरौ आन्वष्टक्यचरौ च भवति। तदाह कर्मप्रदीपः— 'चरौ समशनीये तु पितृयज्ञचरौ तथा। होतव्यं मेक्षणेनान्यदुपस्तीर्णाभिघारितम् ॥' इति। 'चरौ तु बहुदैवत्ये होमस्तस्योपघातवत्।' इति च स्मरणम्। वक्ष्यति चान्वष्टक्ये — 'कंसे चरुं समादाय मेक्षणेनोपघातं जुहुयात्' इति। 'तत्रान्वष्टक्यपितृयज्ञयोः क्षिप्रहोमधर्मः, समशनीये तु ब्रह्मोपवेशनादितन्त्रधर्मः' इति भट्टनारायणोपाध्यायाः। वृषोत्सर्गहोमस्य तु बहुदैवत्येऽपि नोपघातत्वम्, तदाह कर्मप्रदीपः— 'एतेभ्य एव जुहुयान्मेक्षणेनावदाय च। स्रुच्याहुतीश्चरोः पृथक् सिञ्चेदाज्याभिघारितम् ॥' इति।

*मृदुला.

उपस्तीर्णाभिघारिततन्त्रम्, तत्र आज्यभागौ

**[1]यद्यु वा उपस्तीर्णाभिघारितं जुहुयादाज्यभागावेव प्रथमौ जुहुयात् ॥**

(१) स्रुवेण स्रुचि यदाज्यं प्रथमं गृह्यते तदुपस्तीर्णम्, यद्धविर्गृहीत्वाऽनन्तरमाज्यं दीयते तदभिघारितम्। यदि तथाविधं होतुमिच्छेत्तदाऽऽज्यभागावेव प्रथमं जुहुयात्। स्रुचा होमस्तु 'अनेन गृहीतं जुह्वा जुहोति' इति गृह्यान्तरात्। संत. ८७६

---

§ शेषं संतवत्।

* 'हिंसार्थानां च समानकर्मकाणाम्' इति पाणिनिसूत्रम्।

(१) गोगृ. १।८।१ ; संत. ८७१.

(२) गोगृ. १।८।२ ; संत. ८७५.

* शेषं संतगतम्।

(१) गोगृ. १।८।३ ; संत. ८७६ जुहुयादाज्य ( जुहुषेदाज्य ) प्रथमौ ( प्रथमं ); संप्र. ९०१ जुहुयादाज्य ( जुहुषेदाज्य ).

(२) उ इति वितर्कार्थको निपातः । वै इति निश्चयार्थः । यद्युपस्तीर्णाभिघारितं यथानुपदोक्तलक्षणं जुहुयात् तर्हि आज्यभागावेव प्रथमौ जुहुयात् । यद्वा तर्ह्येवाऽऽज्यभागौ प्रथमौ जुहुयादित्येवमवध्रियत एवकारेण । तदिमावाज्यभागौ उपघातहोमे न भवत इति दर्शयति । मुरारिमिश्रास्तु उपस्तीर्णाभिघारितं लक्षयित्वा "तथा वा जुहुयात् । एवकारो भिन्नक्रमः । तथा चोभयोरपि कल्पयोराज्यभागौ प्रथमौ जुहुयादेवेत्यर्थः । विकल्पश्च मेक्षणहोमेन सह व्यवस्थितः । व्यवस्थायामाह कात्यायनः— 'चरौ समशनीये तु पितृयज्ञचरौ तथा । होतव्यं मेक्षणेनान्यदुपस्तीर्णाभिघारितम् ॥' इति ।' (इत्याहुः) । मृदुला.

[1]**चतुर्गृहीतमाज्यं गृहीत्वा पञ्चावत्तं तु भृगूणाम् । 'अग्नये स्वाहा' इत्युत्तरतः 'सोमाय स्वाहा' इति दक्षिणतः प्राक्शो जुहुयात् ॥**

(१) स्रुवेण स्रुचि चतुर्धा गृहीतमाज्यम् । भृगूणां भृगुगोत्राणामिति सरला । 'पञ्चार्षेयाणाम्' इति गृह्यान्तरात् भार्गवप्रवराणामिति भट्टभाष्यम् । भृगुगोत्राणां भार्गवप्रवराणामिति भवदेवभट्टः । तेषां पञ्चवारं तथा गृहीत्वा 'अग्नये स्वाहा' इत्यनेन अग्नेर्मध्यदेशादुत्तरे प्राङ्मुखधारया जुहुयात्, 'उत्तरमाग्नेयं दक्षिणे सौम्यं मध्येऽन्याहुतयः' इति संख्यायनसूत्रात् । तथैव दक्षिणभागे 'सोमाय स्वाहा' इति जुहुयात् । संत. ८७७

(२) तन्त्रान्तरकारास्तु स्मरन्ति— 'जामदग्न्या वत्सविदा वार्ष्टिषेणास्तथैव च । भार्गवाश्च्यवना और्वाः पञ्चावत्तिन ईरिताः ॥' इति । $मृदुला.

अवदानधर्मः

[2]**अथ हविष उपस्तीर्यावद्यति ॥**

अथ अनन्तरम् । उपस्तीर्य प्रकृतत्वादाज्यं स्रुवेण स्रुचि निधाय । हविष इत्यवयवलक्षणा षष्ठी । तथा च हविषोऽवयवं मेक्षणेन अवद्यति अवदाय स्रुचि गृह्णातीत्यर्थः । मृदुला.

[1]**मध्यात्पूर्वार्धाच्चतुरवत्ती चेद्भवति । मध्यात्पूर्वार्धात् पश्चार्धादिति पञ्चावत्ती चेद्भवतीति ॥**

कथमवद्यतीत्युच्यते— मध्यादिति । मध्यात् चरोर्मध्यप्रदेशात् । पूर्वार्धात् चरोरित्येव । चशब्दश्च समुच्चयार्थो लुप्तवद् द्रष्टव्यः । तथा चान्यत्राप्युक्तं 'विनाऽपि चं समुच्चयो द्योत्यते गामश्वं पुरुषं पशुमिति यथा' इति । तथा च गृह्यान्तरम्— 'मध्यात्पूर्वार्धाच्च हविषोऽवद्यति' इति । चतुःकृत्वोऽवत्तान्यवदानानि सन्त्यस्येति मत्वर्थे इनिः । एवमग्रेऽपि । चेत् यदि अवदाता भवति, तर्हि मध्यात्पूर्वार्धाच्चावद्यतीति गतेन संबन्धः । चेत् यदि पुनः पञ्चावत्ती अवदाता भवति तदा चरोर्मध्यात्पूर्वार्धात् पश्चार्धात् अपरार्धाच्च अवद्यतीत्यर्थः । इति एवमवदानं भवतीति मन्तव्यम् । मृदुला.

[2]**अभिघारयत्यवदानानि ॥**

अवदानानि यथा स्रुचि गृहीतानि हवींषि अभिघारयति आज्यस्रुवेणाऽऽप्लावयति । बहुवचनं वक्ष्यमाणत्रिर्होमापेक्षया, व्यक्तिभेदापेक्षया वा । मृदुला.

**प्रत्यनक्त्यवदानस्थानान्ययातयामतायै ॥**

अवदानानां स्थानानि येभ्योऽवद्यति तानि मेक्षणक्षतस्थानानीत्यर्थः । बहुवचनं पूर्ववद्व्याख्येयम् । प्रति प्रत्येकं अनक्ति अक्तानि करोति । आज्यस्रुवेणाऽऽप्लावयतीत्यर्थः । किमर्थम् ? अयातयामतायै । यज्ञायोग्यता यातयामतेत्युच्यते । न यातयामता अयातयामता, तस्यै । एतदुक्तं भवति— मेक्षणक्षतेन यातयामता चरोरुत्पद्यते, आज्याप्लावनेन पुनरयातयामता तस्य भवतीति । मृदुला.

आग्नेयाहुतिः

**'अग्नये स्वाहा' इति मध्ये जुहुयात् ॥**

मध्ये अग्नेरेव । मृदुला.

---

$ शेषं संतवत् ।

(१) गोगृ. १।८।४ ; संत. ८७६ ; संप्र. ९०१.

(२) गोगृ. १।८।५ ; संप्र. ९०१.

(१) गोगृ. १।८।६ ; संप्र. ९०१ भवतीति (भवति).

(२) गोगृ. १।८।७–९ ; संप्र. ९०१ जुहुयात् (जुहोति).

§[1]सकृद्वा त्रिर्वैतेन कल्पेन ॥

कति जुहुयादित्युच्यते— सकृदिति । एतेन कल्पेन अनन्तरोक्तया आवृता परिपाट्या इत्यादरार्थमुक्तम् । सकृद्वा त्रिर्वा जुहुयात् । वाशब्दद्वयं तुल्यवद्विकल्पार्थम् । त्रित्वपक्षे च 'एका देया तिस्रो देयाः' इत्यादिवच्छ्रेयसो भूयस्त्वं कल्पयितव्यम् । अन्ये त्वाहुः— अभावविकल्पोऽयम्, त्रित्वपक्षाशक्तौ सकृत् । मृदुला.

स्विष्टकृद्धोमः

[1]अथ स्विष्टकृत उपस्तीर्यावद्यत्युरार्धपूर्वार्धात् । सकृदेव भूयिष्ठमवद्य द्विरभिघारयेत् ॥

(१) ततः प्रकृतदेवताचरुहोमानन्तरं स्विष्टिकृद्धोममाह गोभिलः— अथ स्विष्टिकृत इति । स्विष्टिकृदर्थे स्रुचि घृतस्रुवं दत्त्वा चरोरुत्तरपूर्वार्धादीशानकोणरूपात् मेक्षणेन बहुतरमेकवारं गृहीत्वा स्रुचि स्थापयित्वा वारद्वयं घृतेन सेचयेत् । संत. ८७७

(२) एवं किल चत्वार्यवदानानि संपद्यन्ते— सकृदुपस्तरणम्, अवदानं हविषः, द्विरभिघारणं चेति ।

¶ मृदुला.

[3]यद्यु पञ्चावत्ती स्याद् द्विरुपस्तीर्यावदाय द्विरभिघारयेत् ॥

पञ्चावदानपक्षे घृतस्रुवद्वयेनोपस्तरणम्, सकृत् हविर्निक्षेपः, पुनर्घृतेनाभिसेचनद्वयमिति ।

$संत. ८७७

[1]न प्रत्यनक्त्यवदानस्थानं यातयामतायै ॥

(१) अत्र मेक्षणक्षतस्थानं घृतेन न प्लावयेत् । पुनर्यागार्थमेव तत्, ततश्च यागायोग्यतारूपयातयामतायामपि न दोष इत्यर्थः । संत. ८७७

(२) स्विष्टकृतोऽर्थेऽवद्य होमान्तरकर्तव्यताभावात् तदर्थमयातयामतायै प्रत्यञ्जनमवदानस्थानस्य नोपयुज्यते इति न प्रत्यनक्तीति समासार्थः । अत्र 'मशकाय धूमः' इतिवन्निवृत्त्यर्थे भाक्तमिदं यातयामतायै इति । केचित्तु— संहितापाठे षष्ठ्यन्तं पठन्ति । तत्र निवृत्त्यर्थमित्यस्याध्याहारः क्लेशः । पञ्चम्यन्तत्वे तु हेतौ पञ्चमी 'विभाषा' (पा. २।३।२५) इति योगविभागाद्बोध्या । यातयामं पर्युषितम् । मृदुला.

[2]'अग्नये स्विष्टकृते स्वाहा' इत्युत्तरपूर्वार्धे जुहुयात् ॥

(१) ततः 'अग्नये स्विष्टिकृते स्वाहा' इत्यनेन ईशानकोणे जुहुयात् । संत. ८७७

(२) उत्तरपूर्वार्धे, अग्नेरेव । ऐशान्यामिति तदर्थः । मृदुला.

व्याहृतिहोमः

[3]महाव्याहृतिभिराज्येनाभिजुहुयात् ॥

(१) ततो भूर्भुवः स्वरिति तिसृभिर्महाव्याहृतिभिर्होमः । अस्य चरुहोमे पश्चादुद्देशान्न प्राक्करणमिति । संत. ८७७

---

§ इदमत्र निर्णेयम्— सर्वकर्मसाधारणेतिकर्तव्यतां निरूपयता तत्त्वकारेण पूर्वापरसूत्राणि संगृह्णताऽपि अत्रत्यपञ्चमादिदशमान्तानां सूत्राणामसंग्रहात् तन्मतेऽस्य दर्शपौर्णमासस्थालीपाकप्रधानहोमत्वं संभाव्यते । गोभिलीयगृह्यकर्मप्रकाशिकायामप्यस्य तत्त्वं प्रतीयते । मृदुलातो न किमपि निर्णीयते । सामश्रमिव्याख्यायां तत्रत्यपादटिप्पण्यां च स्पष्टमेवास्य साधारणहोमता प्रत्यपादीति ।

¶ शेषं संतवत् ।

(१) गोगृ. १।८।१० ; संप्र. ९०१ तेन (तैनैव).

(२) गोगृ. १।८।११ ; संत. ९७७ स्विष्ट (स्विष्टि) (अवद्यति०) उत्तरार्धपूर्वार्धात् (आरभ्योत्तरपूर्वार्धात्) (अवद्य०) ; संप्र. ८९८, ९०१ (अवद्य०).

(३) गोगृ. १।८।१२ ; संत. ८७७ यद्यु (यद्यु वा) रभि (रव) ; संप्र. ८९८ : ९०१ (द्विरुपस्तीर्यावदाय०).

$ मृदुला. संतवत् ।

(१) गोगृ. १।८।१३ ; संत. ८७७ ; संप्र. ८९८ ; ९०१.

(२) गोगृ. १।८।१४ ; संत. ८७७ स्विष्ट (स्विष्टि) ; संप्र. ८९८, ९०१ उत्तरपूर्वार्धे (उत्तरार्धपूर्वार्धे).

(३) गोगृ. १।८।१५ ; संत. ८७६ नाभिजु (न जु) : ८७७ ; संप्र. ८९८, ९०१.

(२) भूर्भुवः स्वरिति तिस्रो महाव्याहृतयः प्रसिद्धाः। कर्मप्रदीपोऽप्याह— 'भूराद्यास्तिस्र एवैता महाव्याहृतयोऽव्ययाः।' इति। ताभिः स्रुवेण कृत्वाऽऽज्येनाऽऽभिमुख्येन जुहुयात्। स खल्वयं महाव्याहृतिहोमश्चरुहोमे पश्चादेव, तथैवोपदेशात्। आज्याहुतिषु तु पुरस्तात्परस्ताच्च कर्तव्य इति वक्ष्यत्युपरिष्टात्। मृदुला.

प्रधानाहुतिस्थानम्

[1]**प्राक् स्विष्टकृत आवापः॥**

(१) आ उप्यते इति आवापः प्रधानहोमः, स तु स्विष्टकृद्धोमात्प्राक्, न तु पश्चादित्यर्थः। एवं च मुख्यहोमे त्वकृते यदि चरुर्नष्टो दुष्टो वा तदाऽन्यः पाच्यः, मुख्ये कृते यदि नाशदुष्टी स्याताम्, तदा आज्येनैव स्विष्टकृद्धोम इति सरला। संत. ८७७–८७८

(२) स्विष्टकृतस्तद्धोमात्प्राक्, आ उप्यते इत्यावापः प्रधानहोमः, कर्तव्य इति शेषः। मुख्य होममात्रे स्विष्टकृत्, तदन्ते महाव्याहृतिहोमः, * ततः कर्मापवर्गविहितां समिधमाधाय प्रायश्चित्तहोम आज्येनाऽऽज्यतन्त्रेण कार्यः, हविषोऽनादेशात्। स च यद्यपि 'सर्वस्यैव प्रायश्चित्तिः' इति श्रुतेरुल्लिखितुमुचितः, भट्टभाष्येऽपि 'एतत्सर्वं प्रायश्चित्तं क्षिप्रहोमवर्जं सर्वत्रैव स्यात्' इत्युक्तम्, तथाऽप्ययं प्रकृतहोमवैगुण्य एव तत्प्रशमनार्थो विधीयते इति नासाववैगुण्ये कर्तव्य इति नात्र सूत्रित आचार्येण, अनियतत्वादिति द्रष्टव्यम्।

अत्र मुख्यहोमेऽकृते यदि चरुर्नष्टो दुष्टो वा भवति तदाऽन्यः पाच्यः, मुख्ये कृते चेन्नाशदुष्टी स्यातां तदा आज्येनैव स्विष्टकृद्धोम इति सरलाकार आह। चन्द्रकान्तस्तु— 'एकदेशद्रव्यं चोत्पत्तौ विद्यमानसंयोगात्' (जैसू. ४।१।२७) इति जैमिनीयसिद्धान्तात् स्विष्टकृद्धोमस्य प्रतिपत्तिरूपत्वात् प्रतिपत्तेश्च प्रतिपाद्याभावे लोप एवाकरणे निरूपित इत्येवमाह। मुख्यहोमार्थमवत्ते हविषि नष्टे दुष्टे वा खल्वाज्येन होतव्यम्, न पुनरवदातव्यं न वाऽन्यत्पाच्यम्। कुतः? 'निर्देशाद्वाऽन्यदागम्यते' इति जैमिनीयसिद्धान्तात्, 'यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुरपहरेयुर्वा, आज्येन ता देवताः परिसंख्याय यजेरन्' इति च हविषो नाशे आज्यविधानात्। 'तत्र सर्वशब्दस्य निमित्तविशेषणत्वेनाविवक्षितत्वात् नाशमात्रे सर्वत्राऽऽज्यस्य विधिः' इत्यधिकरणमालायां माधवाचार्याः।

स खल्वयं प्रायश्चित्तहोमः व्यस्तसमस्तमहाव्याहृतिभिर्वा 'आज्ञातम्' इत्यादिना मन्त्रेण वा प्राजापत्यमन्त्रेण वा कर्तव्यः, 'तस्मादेतामेव जुहुयादपि वाऽऽज्ञातं यदनाज्ञातम्' इत्येवमादिकायां श्रुतौ विकल्पोपदेशात्। व्यक्तमाह कर्मप्रदीपः— 'यत्र व्याहृतिभिर्होमः प्रायश्चित्तात्मको भवेत्। चतस्रस्तत्र विज्ञेयाः स्त्रीपाणिग्रहणे यथा॥ अपि वाऽऽज्ञातमित्येषा प्राजापत्याऽपि वाऽऽहुतिः। होतव्या त्रिविकल्पोऽयं प्रायश्चित्तविधिः स्मृतः॥' इति। तदत्र त्रिविकल्प इत्यनेन कल्पान्तरस्य प्रतिषेधोऽवगम्यते। केचिदत्र 'पाहि नो यज्ञ एनसे स्वाहा' इत्यादिकमधिकं प्रायश्चित्तहोममाचक्षते। तदसारम्, इह तस्यानुपदेशात्। यदपि शाट्यायनकं ग्रन्थान्तरमत्राधीयते, तदप्यप्रमाणम्, अनार्षत्वात् परिशिष्टमध्यान्तःपातित्वासंभवाच्चेति भट्टनारायणोपाध्यायाः। शाट्यायनहोमस्य समूलत्वेऽपि शाखान्तरीयवचनमिति तत्त्वकारः। मृदुला.

मेक्षणप्रतिपत्तिः

[1]**हुत्वैतन्मेक्षणमनुप्रहरेत्॥**

(१) अनुहरेत् अग्नौ क्षिपेत्। एवम् उक्तप्रकारेण यथायथं कर्म समापयेत्।

अथोदीच्यम्। अत्र गोभिलः— 'समिधमाधायानुपर्युक्ष्य तथैवोदकाञ्जलीन् सिञ्चेत्। अन्वमंस्था इति मन्त्रे विशेषः' (गोगृ. १।३।११)।

---

* संस्कारतत्त्वीयः प्रायश्चित्तहोमशास्त्रार्थोऽग्रे 'हुत्वैतन्मेक्षणमनुप्रहरेत्' इति सूत्रे द्रष्टव्यः।

(१) गोगृ. १।८।१६ ; संत. ८७७ स्विष्ट (स्विष्टि) ; संप्र. ९०१.

(१) गोगृ. १।८।१९ ; संत. ८७७ मनुप्रह (मनुह).

अथ प्रायश्चित्तम् । होमानन्तरं कर्मवैगुण्यसमाधानार्थं प्रायश्चित्तं गोभिलानुक्तमपि तत्परिशिष्टोक्तं कुर्यात् । तद्यथा— 'यत्र व्याहृतिभिर्होमः प्रायश्चित्तात्मको भवेत् । चतस्रस्तत्र विज्ञेयाः स्त्रीपाणिग्रहणे यथा ॥ अपि वाऽऽज्ञातमित्येषा प्राजापत्याऽपि वाऽऽहुतिः । होतव्या त्रिविकल्पोऽयं प्रायश्चित्तविधिः स्मृतः ॥' । यत्र प्रायश्चित्तरूपो महाव्याहृतिहोमो विधीयते तत्र चतस्र आहुतयो होतव्याः, यथा विवाहे । तथा च गोभिलः— 'महाव्याहृतिभिः पृथक् समस्ताभिश्चतुर्थीम्' इति । अस्यार्थः— भूराद्याभिर्व्यस्ताभिस्तिसृभिस्तिस्र आहुतीः 'भूर्भुवः स्वः स्वाहा' इति समस्ताभिश्चतुर्थीं जुहुयात् । अपि वा अथवा 'आज्ञातं यदनाज्ञातम्' इति मन्त्रेणाऽऽहुतिर्होतव्या, 'प्रजापतये स्वाहा' इति वा । प्रायश्चित्तविधिर्विकल्पत्रयवान् मुनिभिः स्मृतः इत्यनेन पक्षान्तरं निरस्तम् । ततश्च भवदेवभट्टोक्तप्रायश्चित्तात्मकशाट्यायनहोमो निष्प्रमाणः, भट्टनारायणैर्गोभिलभाष्ये तदप्रमाणीकृतत्वात् । ततश्च प्रायश्चित्तहोमार्थं संकल्प्य 'अग्ने त्वं विधुनामाऽसि' इति नाम कृत्वाऽऽवाह्य संपूज्य समिधं प्रक्षिप्य 'आज्यद्रव्यमनादेशे जुहोतिषु विधीयते ।' इति छन्दोगपरिशिष्टात् आज्यद्रव्यकहोमत्वेन पूर्वापरं महाव्याहृतिहोमः । तथा च गोभिलः— 'आज्याहुतिष्वनादेशे पुरस्ताच्चोपरिष्टाच्च महाव्याहृतिहोमः' इति । एवं च तिसृभिर्महाव्याहृतिभिर्हुत्वा व्यस्तसमस्ताभिः प्रायश्चित्तरूपाश्चतस्र आहुतीर्हुत्वा तिसृभिर्महाव्याहृतिभिर्हुत्वा समित्प्रक्षेपेण प्रायश्चित्तं समापयेत् । संत. ८७८–८७९

(२) एतदिति संनिकृष्टं सौविष्टकृतं परामृश्यते । सेयं कर्मामेक्षणमुक्तलक्षणम् । अनुप्रहरेदग्नौ क्षिपेत् । थेस्य मेक्षणस्य अनन्तरमेव कर्मणः प्रतिपत्तिराख्याता । अन्ये त्वाहुः— महाव्याहृतिभिरपि हुत्वा मेक्षणमनुप्रहरेत्, न स्विष्टकृद्धोमानन्तरमेवेति । स खल्वयं मेक्षणप्रक्षेपोऽ(न्य ?)ब्रह्मकेषु होमेषु प्रत्येतव्यः, तत्र चरुशेषस्य तस्मै प्रतिपादयितव्यस्य वक्ष्यमाणत्वात्, अन्यत्र च मेक्षणेनैवोद्धृत्य तद्भोजनस्य सूत्रणात् । न चानुप्रहिते(?प्रहृते) नैव मेक्षणेनोद्धरणम् । तस्माद्यथोक्त एवार्थः । मृदुला.

हविःशेषभोजनम्

**[1]प्रक्षाल्य वैनेनोद्धृत्य भुञ्जीत ॥**

प्रक्षाल्य वा मेक्षणम् एनेन मेक्षणेनोद्धृत्य चरुशेषं भुञ्जीत यजमानः । तथा च यत्र हौत्रं ब्रह्मत्वं च स्वयमेव करोति सोऽस्य विषयः । यत्र चान्यो ब्रह्मा भवति तत्र वक्ष्यति— 'अथैतद्धविरुच्छिष्टम्' (१।९।१) इत्यादि । * अनन्वादेशोऽप्येनादेशश्छान्दसः ।

मृदुला.

स्रुवानुप्रहरणविकल्पः

**न स्रुवमनुप्रहरेदित्येक आहुः ॥**

स्रुवमग्नौ न क्षिपेदित्येके आचार्या वदन्ति । अस्मादेवावगम्यते— स्रुवमग्नौ क्षिपेदिति अन्ये वदन्तीति । तस्मादत्र विकल्पः । मृदुला.

यज्ञवास्तुकर्म

**[2]समिधमाधायानुपर्युक्ष्य यज्ञवास्तु करोति ॥**

समिदाधानानुपर्युक्षणयोः सिद्धयोः पुनर्वचनं क्रमार्थम् । यज्ञवास्तु इति वक्ष्यमाणस्य कर्मणो नामधेयम् । § संत. ८७९

---

* इदमत्रावधेयम्— किंचित्कार्यं विधातुमुपात्तस्य कार्यान्तरं विधातुं पुनरुपादानमन्वादेशः । तत्र प्रथमोपादानमिदमादिकार्यिशब्देनैव स्यादिति मृदुलाकारस्याभिमानः प्रतीयते, पूर्वसूत्रे स्वशब्देन मेक्षणोपादानेऽप्यत्रान्वादेशाभावाभिधानात् । वस्तुतस्तु 'अन्वादेशश्च कथितानुकथितमात्रं द्रष्टव्यम्, तद्‍द्वेष्यं विजानीयादिदमा कथितमिदमैव यदाऽनुकथ्यते इति' भाष्यात् यत्किंचिच्छब्देन प्रथमोपादानमिति सिद्धान्तः । अत एवाभियुक्तैः 'ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः । एतमातम्०' इत्यत्रानन्वादेशत्वे पूर्ववाक्येऽज्ञातज्ञापनात्मकविधानाभावरूपं हेत्वन्तरमाश्रितम् । तस्मादन्वादेशत्वाल्लौकिक एवायमेनादेश इति ।

§ मृदुला, संतगतम् ।

(१) गोगृ. १।८।२०–२१.

(२) गोगृ. १।८।२६ ; संत. ८७९.

[1]**तत एव बर्हिषः कुशमुष्टिमादायाऽऽज्ये वा हविषि वा त्रिरवदध्यादग्राणि मध्यानि मूलानीति 'अक्तं रिहाणा व्यन्तु वयः' इति ॥**

(१) कथं करोतीत्यत आह— तत इति । ततः तस्मादेव बर्हिषः आस्तृतकुशात् कुशमुष्टिमादायाऽऽज्येऽवदध्यात् मज्जयेत्, न चेदाज्यमवशिष्टं हविषि चरावादध्यात् अग्रादिप्रदेशम् 'अक्तम्' इति मन्त्रेण । स्थानभेदान्मन्त्रावृत्तिः ।

संत. ८७९

(२) किमिदं यज्ञवास्तु ? इत्याह— तत इति । ततस्तस्मादाहृतादेव बर्हिष इति नियमादन्यद्बर्हिर्व्यवच्छिद्यते । कुशमुष्टिमनियतसंख्याकं कुशमादायाऽऽज्ये यथोक्ते हविषि चरौ वा त्रिरवदध्यात् वारत्रयमञ्जयेत् अग्राणि मध्यानि मूलानीति क्रमेण । 'अक्तम्' इत्यादिमन्त्रेण वारत्रयपठितेन क्रमशः, प्रधानानुयायित्वाद्गुणानाम्, 'कर्मावृत्तौ तु मन्त्रस्याप्यावृत्तिर्गृह्यकर्मणि ।' इत्यभियुक्तवचनात् । यत्र खल्वनावृत्तिरिष्यते मन्त्राणाम्, प्रायेण तत्रोत्तरत्र तूष्णीमिति करोति, 'सकृद्यजुषा द्विस्तूष्णीम्' इत्येवम् । मन्त्रार्थस्तु— वयः पक्षिणः । 'विविष्किरपतत्रयः' इति पक्षिपर्यायेऽमरः । अक्तं घृतेनाभ्यक्तमिदं तृणं रिहाणाः लिहानाः आस्वादयन्तः । लिहेर्वर्णव्यत्ययः । व्यन्तु खादन्तु इति ।

मृदुला.

[2]**अथैनमद्भिरभ्युक्ष्याग्नावपर्व्य जपेत्— 'यः पशूनामधिपती रुद्रस्तन्तिचरो वृषा । पशूनस्माकं मा हिंसीरेतदस्तु हुतं तव स्वाहा ॥' इति ॥**

(१) अथ अनन्तरमेवामुञ्चन् एनं कुशमुष्टिमद्भिः प्रणीताद्भिरभ्युक्ष्याग्नावपवर्जयेत् दाहयेत् 'यः पशूनाम्' इति मन्त्रेण ।

संत. ८७९

(२) अथ अनन्तरमेवाभि( ? वि)मुञ्चन्नेनं कुशमुष्टिमद्भिरभ्युक्ष्य अग्नावपर्व्य प्रक्षिप्य जपेत् पठेत् य इत्यादिस्वाहान्तमन्त्रम्, 'एतद्धुतं तवास्तु' इति मन्त्रलिङ्गात् । अपवर्जयेदिति पाठे अपवर्जनं दानम्, अर्पणमिह तदर्थः । तदिदं प्रतिपत्तिकर्म, कृतार्थानां बर्हिषामिह विनियोगाम्नानात् । तस्मात् नष्टेषु बर्हिःषु न भवति । अत्र 'अग्नावप्युत्सृजेत्' इति मुरारिमिश्रधृतः पाठः । दहेदिति तदर्थः । समग्रमन्त्रलेखनं पारशाखिकत्वख्यापनाय । मन्त्रार्थस्तु— यः पशूनां गवाश्वादीनाम् अधिपतिः स्वामी अध्यक्षः रुद्रः रोदयिता परेषाम् शत्रूणाम्, तन्तिचरः अन्तरिक्षगामी, वृषा वर्षिता कामानामभिवर्षको वा जलानाम् । इति परोक्षमुक्त्वा अधुना प्रत्यक्षीकृत्योच्यते— हे रुद्र, त्वम् अस्माकं पशून् गवाश्वादीन् मा हिंसीः मा वधीः एतत् मयाऽभ्युद्यतं हुतं हव्यं तव प्रीतये स्वाहा सुहुतम् अस्तु भवतु ।

मृदुला.

[1]**एतद्यज्ञवास्त्वित्याचक्षते ॥**

(१) 'तत एव बर्हिषः' इत्यारभ्य यदुक्तं तत् यज्ञवास्तु इति वृद्धाः कथयन्ति । एतत्प्रयोजनं तु प्रतिपत्तिकर्मत्वेऽपि तद्द्रव्यनाशे एतत्कर्मप्राप्तावपि यज्ञो यस्मिन् वसतीति व्युत्पत्तिप्रतिपाद्यार्थसिद्ध्यर्थं कुशान्तरमुष्टिमादाय तत् कर्तव्यमिति । एवमेव भट्टभाष्यम् ।

अथ पूर्णाहुतिः । तत्र 'पूर्णाहुत्यां मृडो नाम' इति प्रागुक्तवचनात् मृडनामानमग्निमावाह्य संपूज्य 'दद्यादुत्थाय पूर्णां वै नोपविश्य कदाचन ।' इति भविष्याग्निपुराणाभ्यामुत्थाय पूर्णाहुतिं कुर्यात् ।

अथ वन्दनादिकर्म । तत्र वशिष्ठः— 'ऐशान्यामाहरेद्भस्म स्रुचाऽग्रेण स्रुवेण वा । वन्दनं कारयेत्तेन शिरःकण्ठांशकेषु च ॥ कश्यपस्येति मन्त्रेण यथानुक्रमयोगतः । ततः शान्तिं प्रकुर्वीत अवधारणवाचनम् । दक्षिणा च प्रदातव्या ग्रहाणां च विसर्जनम् ॥' । शान्तिः सामगानां वामदेव्यगानम् । तथा च गोभिलः— 'अपवृत्ते

---

(१) गोगृ. १।८।२७; संत. ८७९ आज्ये वा (आज्ये) मूलानीति (मूलानि).

(२) गोगृ. १।८।२८; संत. ८७९ वर्प्य जपेत् (वपवर्जयेत्), मन्त्रः समस्तो न पठितः.

(१) गोगृ. १।८।२९; संत. ८७९.

कर्मणि वामदेव्यगानं शान्त्यर्थम्' इति । अपवृत्ते समाप्ते । गानाशक्तौ त्रिधा पाठमाह छन्दोगपरिशिष्टम्— 'पर्युक्षणं च सर्वत्र कर्तव्यमदितेऽन्विति । अन्ते च वामदेव्यस्य गानमित्यथवा त्रिधा ॥' । 'गानं कुर्यादृचस्त्रिधा' इति वा पाठः । अवधारणम् अच्छिद्रावधारणम्, 'अच्छिद्रमिति यद्वाक्यं वदन्ति क्षितिदेवताः । प्रणम्य शिरसा ग्राह्यमग्निष्टोमफलैः समम् ॥' इति शातातपपराशरवचनात् । अवधारणं तच्च दक्षिणादानानन्तरं कर्तव्यम्, न तु पाठक्रमादरः, 'वृथा विप्रवचो यस्तु गृह्णाति मनुजः शुभे । अदत्त्वा दक्षिणां वाऽपि स याति नरकं ध्रुवम् ॥' इति नारदीयात् । अत एव भवदेवभट्टेनापि वामदेव्यगानानन्तरं दक्षिणाऽभिहिता, न त्वच्छिद्रावधारणात् परम् । होमदक्षिणा च स्वयंहोतृपक्षे ब्रह्मणे देया, 'ब्रह्मणे दक्षिणा देया यत्र या परिकीर्तिता । कर्मान्तेऽनुच्यमानायां पूर्णपात्रादिका भवेत् ॥' इति छन्दोगपरिशिष्टात् । गोभिलेनापि दर्शादियागमभिधाय 'पूर्णपात्रो दक्षिणा, तं ब्रह्मणे दद्यात्' इत्युक्तम् । त्रान्तत्वेऽपि पुंस्त्वं छान्दसम् । एतदनुसारात् कर्मान्त इति ब्रह्मसाध्यहोमान्तपरम्, न तु परिशिष्टप्रकाशोक्तनामकरणादिप्रधानकर्मान्तपरम् । अतः प्रधानकर्मदक्षिणां कर्मोपदेष्ट्रे आचार्याय दद्यात् । यजमानेतरहोतृपक्षे तु ब्रह्महोतृभेदेन दक्षिणा । विशेषानुपादाने होमदक्षिणैव ब्रह्महोतृभ्यां ग्रहीतव्या । स्वयमेव होतृब्रह्म-( ? हौत्रब्रह्मत्व )करणे अन्यस्मै दद्यात्, 'विदध्याद्धौत्रमन्यश्चेद्दक्षिणार्धहरो भवेत् । स्वयं चेदुभयं कुर्यादन्यस्मै प्रतिपादयेत् ॥' इति छन्दोगपरिशिष्टात् । पूर्णपात्रलक्षणं तु गृह्यासंग्रहयज्ञपार्श्वपरिशिष्टप्रकाशयोः— 'अष्टमुष्टिर्भवेत् कुञ्चिः कुञ्चयोऽष्टौ तु पुष्कलम् । पुष्कलानि च चत्वारि पूर्णपात्रं विधीयते ॥' । अत्र षट्पञ्चाशदधिकशतद्वयमुष्टिमितं पूर्णपात्रम् । असंभवे तु छन्दोगपरिशिष्टम्— 'यावता बहुभोक्तुश्च तृप्तिः पूर्णेन जायते । नावरार्ध्यं ततः कुर्यात् पूर्णपात्रमिति स्थितिः ॥' । अवरार्ध्यं न्यूनम् । ततः प्रागुक्तनारदीया(द)च्छिद्रावधारणं कुर्यात् । ततः साङ्गतार्थं 'तद्विष्णोः' इति मन्त्रेण विष्णुं स्मरेत्, 'प्रमादात् कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् । स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः ॥ तद्विष्णोरिति मन्त्रेण स्नायादप्सु पुनः पुनः । गायत्री वैष्णवी ह्येषा विष्णोः संस्मरणाय वै ॥' इति याज्ञवल्क्यात् । ततो 'गच्छध्वममराः सर्वे गृहीत्वाऽर्चां स्वमालयम् । संतुष्टा वरमस्माकं दत्त्वेदानीं सुपूजिताः ॥' इति विष्णुधर्मोत्तरीयेण विसर्जयेत् । अत्र सामान्यनिर्देशात् वसिष्ठवचने ब्रह्माणामित्युपलक्षणम् । ततः 'प्रीयतां पुण्डरीकाक्षः सर्वयज्ञेश्वरो हरिः । तस्मिंस्तुष्टे जगत्तुष्टं प्रीणिते प्रीणितं जगत् ॥' इति मत्स्यपुराणीयं पठेत् । इति सर्वहोमसाधारणेतिकर्तव्यता ।

संत. ८७९–८८१

(८२) 'तत एव बर्हिषः' इत्यादि यदुक्तं तदेतत्कर्म यज्ञवास्तु इत्याचक्षते आचार्याः । किमर्थमिदमुच्यते ? 'यज्ञवास्तु करोति' इति यदुक्तं (१।८।२६) तदत्र निगमनेन शाप्यते । अवचने खलु एतस्य हविःशेषार्पणमपि यज्ञवास्त्वित्याशङ्क्येतेति । अथात्र पूर्णहोमः । तत्र शौनकः— 'अथ पूर्णाहुतिं दद्याद्गन्धपुष्पफलान्विताम् । साक्षतामूर्ध्वकायश्च समपाच्छकदिङ्मुखः ॥' इति । ऊर्ध्वकायस्तिष्ठन् । एतेन परिभाषाबलादासीनेन होमोऽयं कार्य इति परास्तम्, सकलदेशीयाचारविरोधाच्च । कात्यायनः— 'ततः पूर्णाहुतिं कृत्वा सर्वतन्त्रसमन्विताम् । गां दद्याद्यज्ञवास्त्वन्ते ब्रह्मणे वाससी तथा ॥' इति । वस्त्रदक्षिणा च विशेषोपदेशस्थले एव । अन्यथा पूर्णपात्रादिकमेव, 'या यत्र परिकीर्तिता' इति वचनात् । मृदुला.

सहविःशेषान्नेन ब्रह्मतर्पणम्

**[1]अथैतद्धविरुच्छिष्टमुदगुद्वास्योद्धृत्य ब्रह्मणे प्रयच्छेत् ॥**

अथ हविःशेषप्रतिपत्तिं ब्राह्मणोक्तामाह— अथेति । अथेत्यानन्तर्यार्थम् । तदत्र प्रदक्षिणप्रणीताविमोकोदपात्रपूरणानि कृत्वाऽनन्तरमिति भट्टभाष्यम् । एतदभिप्रेतम्— हविरुच्छिष्टम् अवशिष्टम् उदक् उत्तरस्याम् उद्वास्य

(१) गोगृ. १।९।१–५.

उद्धृत्य पात्रान्तरे कृत्वा ब्रह्मणे प्रयच्छेत् दद्यात् । एतदिति समशनीयनवयज्ञत्रास्तूपशमनादिचरुभ्योऽन्यद् गृह्यते, तत्र तत्राऽन्यस्या अन्यस्याः प्रतिपत्तेरुपदेशादिति । एतदपि भिन्नब्रह्मपक्षे, अन्यथा पुरोहितायैवेति शुभकर्मनिर्णये मुरारिमिश्राः प्राहुः । मृदुला.

**तं तितर्पयिषेत् ॥**

न केवलं चरुशेषस्य ब्रह्मणे प्रदानमात्रम्, किं तर्हि ? तं ब्रह्माणं तितर्पयिषेत् तर्पयितुमिच्छेत्, यथाऽसौ तृप्यति तथा कर्तव्यमित्यर्थः । सनः प्रयोगोऽत्र मनोविशुद्धिप्रदर्शनार्थः । श्रद्धास्तिक्यादिगुणवता मनसा ब्रह्माणं तर्पयितुमिच्छेत्तत्कृतमतिशयं जानानः । तथा च स्मरणम्– 'श्रद्धाविधिसमायुक्तं कर्म यत्क्रियते नृभिः । सुविशुद्धेन भावेन तदानन्त्याय कल्पते ॥' इति । श्रद्धारहितस्यान्नमभोज्यमाहुराचार्याः । मृदुला.

**'ब्राह्मणस्य तृप्तिमनु तृप्यामि' इति हि यज्ञस्य वेदयन्ते ॥**

ब्राह्मणस्य तृप्तिमनु लक्ष्यीकृत्य अहं तृप्यामीत्येवं हि किल यज्ञस्याभिप्रायं वेदयन्ते ज्ञापयन्त्याचार्याः । एतस्मात्कारणात्तं तितर्पयिषेत् । सोऽयं ब्राह्मणशब्दो ब्रह्मपर एव, उपक्रमानुरोधात् । एतच्च ब्राह्मणे श्रुतमेवेहोद्धृतम् । मृदुला.

**अथ यदस्यान्यदन्नमुपसिद्धं स्यात् ॥**

यस्मादेवं ब्रह्मणस्तर्पणं तस्माच्चरुशेषस्यापचारे तेन वा तृप्त्यसंभवेऽन्येनाप्यन्नेन तं तर्पयेदित्याह– अथेति । अथ अनन्तरमेव भोजयेत्, नाऽऽत्मीयं भोजनकालमपि प्रतीक्षेतेत्यर्थः । अस्य यजमानस्य उप समीपे यत्किंचिच्चरोरन्यदन्नं सिद्धं निष्पन्नं स्यात्तेन निषिद्धातिरिक्तेन तं तितर्पयिषेदिति गतेन संबध्यते । प्रतिपत्तित्वेऽपि एतस्य वचनादन्नान्तरमुपादेयम् । चरुशेषप्रदानादनन्तरमन्यदपि अन्नं प्रयच्छेदिति वा वर्णनीयम् । मृदुला.

ब्राह्मणभोजनम्

**अथ ब्राह्मणान् भक्तेनोपेप्सेत् ॥**

अथ स्वपाकसिद्ध्यनन्तरं ब्राह्मणान् ब्रह्मातिरिक्तान् भक्तेन उपेप्सेत् तर्पयितुमिच्छेत् । अपवर्गेऽभिरूपभोजनं ब्रह्मणस्तर्पणेनैव मा मंस्तेति पुनरसूत्रयत् । मृदुला.

ब्रह्मणे दक्षिणादानम्

**[1]पूर्णपात्रो दक्षिणा, तं ब्रह्मणे दद्यात् ॥**

अत्र पूर्णपात्रादिपदात् दक्षिणाविशेषालाभे मूल्या-(? मूला)दिकमपि संगृह्णाति । तथा च मैत्रावरुणीयपरिशिष्टम्– 'दक्षिणाभावे मूलानां भक्ष्याणां दक्षिणां ददाति' इति । अत्र विशेषश्चन्द्रकान्तभाष्यादौ द्रष्टव्यः । ¶मृदुला.

मन्त्राणां स्वाहाकारान्तता

**[2]मन्त्रान्ते स्वाहाकारः ॥**

होममन्त्राणामन्ते अवसाने स्वाहाकारः कर्तव्य इति सूत्रशेषः । स खल्वयं हविस्त्यागार्थकः स्वाहान्तमन्त्रेषु नाऽऽद्रियते, अनर्थकत्वात् । तथा च तन्त्रान्तरम्– 'नमोऽन्ते न नमः कुर्यात्स्वाहान्ते द्विठमेव च । पूजायामाहुतौ चापि सर्वत्रायं विधिः स्मृतः ॥' इति । द्विठं स्वाहाकारम् । यत्र च मन्त्रादितोऽपि समाम्नातः स्वाहाकारो हविस्त्यागार्थको भवति तत्राप्यग्नौकरणहोमे मन्त्रान्ते स्वाहाकारान्तरं न कर्तव्यमेव, न्यायस्याविशेषात् । तदाहात्र कर्मप्रदीपः– 'स्वाहा कुर्यान्न चात्रान्ते न चैव जुहुयाद्धविः । स्वाहाकारेण हुत्वाऽग्नौ पश्चाद्धोमं समाचरेत् ॥' अत्र अग्नौकरणहोमे । सहपठितानां होममन्त्राणां चाऽऽदौ न प्रत्येकमोंकारः करणीयः । तदप्याह स एव– 'नोंकुर्याद्धोममन्त्राणां पृथगादिषु कुत्रचित् । अन्येषां च विकृष्टानां कालेनाऽऽचमनादिना ॥' इति । मृदुला.

वक्ष्यमाणधर्माणां काम्यविषयत्वं काम्याकाम्यविषयत्वं वा

**[3]काम्येष्वत ऊर्ध्वम् ॥**

**पूर्वेषु चैके ॥**

---

¶ शेषं संतगतम् । संतव्याख्यानं पूर्वत्र 'एतद्यज्ञवास्त्वित्याचक्षते' (सं. का. पृ. १४६०) इति सूत्रे द्रष्टव्यम् ।

(१) गोगृ. १।९।६ ; संत. ८८० ; संग. ४४ णा तं (णाऽन्नं) ; संर. ७८ पात्रो दक्षिणा तं (पात्रं दक्षिणां).

(२) गोगृ. १।९।२५.

(३) गोगृ. ४।५।१–२.

अत ऊर्ध्वं काम्येषु, विधिमुपदेक्ष्याम इति सूत्रशेषः। पूर्वेषु नित्यनैमित्तिकेष्वपि वक्ष्यमाणो विधिर्भवतीति चैके आचार्या मन्यन्ते। मृदुला.

भूमिजपः, परिसमूहनम्

[१]**पश्चादग्नेर्भूमौ न्यञ्चौ पाणी प्रतिष्ठाप्य 'इदं भूमेर्भजामहे' इति॥**

**वस्वन्तं रात्रौ धनमिति दिवा॥**

[२]**'इमं स्तोम्' इति तृचेन परिसमूहेत्॥**

(१) इदमिति मन्त्रं वस्वन्तं 'विन्दते वसु' इति रात्रौ, दिवा क्रियमाणे कर्मणि धनमित्यन्तं जपेत् 'विन्दते धनम्' इति। अत्र विन्यासे विशेषमाह छन्दोगपरिशिष्टम्– 'दक्षिणं वामतो बाह्यमात्माभिमुखमेव च। करं करेण कुर्वीत करणे न्यञ्चकर्मणः॥ कृत्वाऽग्न्यभिमुखौ हस्तौ स्वस्थानस्थौ सुसंहतौ। प्रदक्षिणं तथाऽऽसीनः कुर्यात्परिसमूहनम्॥' करेणेति षष्ठ्यर्थे तृतीया। दक्षिणहस्तमधोमुखं तथाविधवामहस्तस्य पृष्ठोपरिभावेन विपर्यस्तमात्माभिमुखं भूमिजपे कुर्यादित्यर्थः। अग्न्यभिमुखौ, नाऽऽत्माभिमुखौ। स्वस्थानस्थौ, न तु भूमिजपवद्व्यस्तौ। सुसंहतौ विस्तृततलग्नौ। तथा चाग्नेः परिसमूहनं विक्षिप्तावयवानामेकीकरणरूपं सुकरं स्यात्। एवमेव भट्टनारायणोपाध्यायौ। एतेन च 'दक्षिणहस्तेन कुशान्गृहीत्वा' इति भवदेवभट्टलिखनं निष्प्रमाणम्। 'इमं स्तोममर्हते' इति तृचेन परिसमूहेदिति। सूत्रस्य भाष्येयम्। एतदनुसारादेव ब्रह्मस्थापनानन्तरं भूमिजपपरिसमूहनादीति भवदेवभट्टवीरेश्वरोक्तं युक्तम्। भट्टभाष्ये तु भूमिजपं(?जपोत्तरं) तृचेन परिसमूहनं कुर्यात्, पश्चाद्ब्रह्मोपवेशनमिति। सरलापरिशिष्टप्रकाशयोस्तु भूमिजपानन्तरं चरुश्रपणमित्युक्तम्।

संत. ८६७–८६८

(२) कोऽसौ विधिरित्युच्यते– पश्चादिति। न्यञ्चौ अधोमुखौ। तथा च छन्दोगपरिशिष्टम्– 'दक्षिणं वामतो बाह्यमात्माभिमुखमेव च। करं करस्य कुर्वीत करणे न्यञ्चकर्मणः॥ कृत्वाऽग्न्यभिमुखौ पाणी स्वस्थानस्थौ सुसंयतौ॥' इति। वामत इति षष्ठीसमर्थात्तसिः। तेन वामस्य करस्य बाह्यमुपरिस्थमात्माभिमुखम् अग्न्यभिमुखं दक्षिणं करं कुर्वीतेति संबन्धः। एवं चोपरिकृतदक्षिणहस्तः करद्वयमधोमुखमग्न्यभिमुखं च भूमावारोप्य भूमिजपं कुर्यादिति पर्यवसितोऽर्थः। मन्त्रमाह– इदमिति। यथा– 'इदं भूमेर्भजामह इदं भद्रं सुमङ्गलम्। परा सपत्नान्बाधस्वान्येषां विन्दते धनम्॥' इति। अस्यार्थः– हे अग्ने, यदेतत् भूमेः संबन्धि स्थण्डिलं भवताऽधिष्ठितम् इदं वयं भजामहे सेवामहे। 'भज सेवायाम्' (भ्वा. आ.) लट्। गृह्णीम इति यावत्। किंभूतम्? भद्रं कल्याणकरं भजनीयं वा। सुमङ्गलं प्रशस्ततरम्। इदमिति पुनर्वचनमादरार्थम्। किंच, हे अग्ने, सपत्नान् शत्रून् अस्माकं पराबाधस्व सुष्ठु पीडय। किंच, योऽप्यनेन मन्त्रेण विवाहादियज्ञकर्मणि भवदधिष्ठितं भूमेरवयवं गृह्णाति सोऽपि अन्येषाम् ईश्वराणां धनिनाम् संबन्धि धनं विन्दते प्राप्नोति। इति।

वस्वन्तमिति। रात्रौ क्रियमाणे कर्मणि वसुशब्दान्तो मन्त्रः पठनीयः। दिवा दिवसे धनशब्दान्त इत्यर्थः।

इमं स्तोममिति। एवमादिना तृचेन, तिसृणामृचां समाहारस्तृचम्, तेन, 'इमम्' 'भराम' 'शकेम' इत्यृक्त्रयेणेत्यर्थः। ऋचो यथा– 'इमं स्तोममर्हते जातवेदसे रथमिव सं महेमा मनीषया। भद्रा हि नः प्रमतिरस्य संसद्यग्ने सख्ये मा रिषामा वयं तव॥ भरामेध्मं कृणवामा हवींषि ते चितयन्तः पर्वणापर्वणा वयम्। जीवातवे प्रतरां साधया धियोऽग्ने सख्ये मा रिषामा वयं तव॥ शकेम त्वा समिधं साधया धियस्त्वे देवा हविरदन्त्याहुतम्। त्वमादित्याँ आ वह तान् ह्युश्मस्यग्ने सख्ये मा रिषामा वयं तव॥' इति। आसामर्थः– वयम् इमं स्तुतिविशेषं संमहेमा संमहेम सम्यक् पूजोपकरणयुक्तं कुर्याम। छान्दसो दीर्घः। एवमग्नेऽपि। हि यतः नः

(१) गोगृ. ४।५।३–४; संत. ८६७.

(२) गोगृ. ४।५।५; संत. ८६७ स्तोममिति (स्तोममर्हत इति).

अस्माकम् अस्य अग्नेः सकाशात् भद्रा कल्याणी प्रमतिः प्रकृष्टा बुद्धिः संसदि सभायां जनसमाजे, जायत इति शेषः। यया वयमपि स्तोतुं प्रभवाम इति भावः। तस्मात् हे अग्ने, तव सख्ये मित्रत्वे स्थिता वयं केनचिदपि दुरात्मना मा रिषाम मा हिंसिष्महि हिंसिता मा भवेम।

हे अग्ने, ते त्वदर्थं वयमिध्मं यज्ञियदारुसमिधं आभराम आहराम। तथा पर्वणापर्वणा प्रतिपर्व हवींषि हवनीयानि चरुप्रभृतीनि चितयन्तः संचितानि कुर्वन्तः कृणवाम संपादयाम निर्वपामेति यावत्। किमर्थम्? प्रतरां प्रकृष्टतरकालं जीवातवे जीवनाय। किंच, हे अग्ने, धियः कर्माणि अस्माभिः क्रियमाणानि साधया साधय सफलानि कुरु। तव सख्ये मित्रत्वे स्थिता वयं केनचिद्दुरात्मना मा रिषाम मा हिंसिष्महि।

हे अग्ने, त्वमस्माकं धियः बुद्धीः कर्माणि वा। साधया साधय त्वदाराधनयोग्या निष्पादय। पूर्ववद्दीर्घश्छान्दसः। यथा वयं समिधं समिन्धयितुं शकेम शक्नुयाम। देवाः इन्द्रादयः त्वे त्वयि आहुतं प्रहुतं हविः हवनीयं चरुपुरोडाशादिकम् अदन्ति भक्षयन्ति, त्वन्मुखत्वात्तेषाम्। अतस्त्वं तान् आदित्यान् अदितिपुत्रान् देवान् आवह आवाहय। अन्तर्भावितण्यर्थोऽत्राऽऽवहतिः। हि यस्मात् वयं तान् उश्मसि उश्मि कामयामः। हे अग्ने, तव सख्ये मित्रत्वे स्थिता वयं केनचिदपि मा रिषाम हिंसिता मा भवेम इति।

परिसमूहेत् विक्षितानग्न्यवयवानेकीकुर्यात्, अन्यत्र क्षिप्रहोमेभ्यः। तथोक्तम्— 'न कुर्यात्क्षिप्रहोमेषु द्विजः परिसमूहनम्।' इति। परिसमूहनं चेदं दक्षिणहस्तेन, 'यत्र कर्तुरङ्गं न चोच्यते। दक्षिणस्तत्र विज्ञेयः' इति कातीयपरिभाषणात्। कुशत्रयेण चेति वीरेश्वरादयः। तत्प्रकारमाह कर्मप्रदीपः— 'प्रदक्षिणं तथाऽऽसीनः कुर्यात्परिसमूहनम्।' इति। एवं चोत्तरपूर्वदक्षिणक्रमेणैकैकयर्चा दक्षिणहस्तेन कुशत्रयं गृहीत्वा परिसमूहनं कर्तव्यमिति द्रष्टव्यम्।

मृदुला.

विरूपाक्षमन्त्रजपः

[1]**वैरूपाक्षः पुरस्ताद्धोमानाम् ॥**

(१) विरूपाक्षशब्दो विद्यतेऽत्र इति वैरूपाक्षः 'ओं भूर्भुवः स्वरोम्' इत्यादिको मन्त्रः होमानां वक्ष्यमाणप्रागुक्तनित्यनैमित्तिकानां पुरस्ताज्जप्यः। अस्य क्षिप्रहोमे पर्युदासमाह छन्दोगपरिशिष्टम्— 'न कुर्यात्क्षिप्रहोमेषु द्विजः परिसमूहनम्। विरूपाक्षं च न जपेत्प्रपदं च विवर्जयेत्॥'। क्षिप्रहोमेषु अब्रह्मकेषु सायंप्रातःसोष्यन्तीहोमादिषु ब्राह्मणः 'इमं स्तोममर्हते' इत्यादिमन्त्रकरणकपरिसमूहनं न कुर्यात्, विरूपाक्षप्रपदौ च त्यजेत्। संत. ८७३–८७४

(२) वैरूपाक्षः। विरूपाक्षशब्दो यस्मिन् वर्तते स विरूपाक्षः। अर्शआदित्वान्मत्वर्थीयोऽच्प्रत्ययः, ततः स्वार्थेऽण्प्रत्ययः। होमानां होमयुक्तमन्त्राणाम्। अयमपि अर्शआदिरेवावगन्तव्यः। पुरस्तात् पूर्वम्। भवतीति शेषः। अत्राप्यन्यत्र क्षिप्रहोमेभ्य इति द्रष्टव्यम्। मन्त्रो यथा— * 'भूर्भुवः स्वरों महान्तमात्मानं प्रपद्ये

---

* एतन्मन्त्रपाठः कलकत्ता–संस्कृतमहाविद्यालयेनैशवीये १९५८ तमे वत्सरे प्रकाशितात् छान्दोग्यमन्त्रब्राह्मणपुस्तकात् गृहीतः। मृदुलाकृतः क्वचित्पाठभेदोऽस्ति, स च तद्व्याख्यानादेव स्पष्टो भविष्यति। अपि च, 'भूर्भुवः स्वरों महान्तमात्मानं प्रपद्ये' इति मन्त्रांशः प्रपदमन्त्रशेषः, 'विरूपाक्षोऽसि' इत्यादिर्वैरूपाक्षमन्त्र इति मन्त्रविभागः सायणभाष्ये, गुणविष्णुभाष्ये, सामश्रमिव्याख्यायाम्, गोभिलीयगृह्यकर्मप्रकाशिकायां च स्पष्टं प्रतीयते। तत्त्वकारमृदुलाकारौ तु 'तानि मा मवन्तु' इत्यन्तः प्रपदः, 'भूर्भुवः स्वः' इत्यादिर्वैरूपाक्ष इति विभागमभिमन्येते। खादिरगृह्यसूत्रव्याख्याता रुद्रस्कन्दस्तु 'प्रपदं जपित्वा… …' (खागृ. १।२।२२) इति सूत्रव्याख्याने 'तपश्च तेजश्च' इत्यादेः 'ब्रह्मणः पुत्राय नमः' इत्यन्तस्य समग्रमन्त्रस्य प्रपदेति संज्ञामाह। तन्मते वैरूपाक्षेति मन्त्रसंज्ञा नास्त्येवेत्यर्थसिद्धम्। जैमिनिगृह्यसूत्रे तु सर्वस्यास्य विरूपाक्षेति संज्ञा।

(१) गोगृ. ४।५।६ ; संत. ८७३.

विरूपाक्षोऽसि दन्ताञ्जिस्तस्य ते शय्या पर्णे गृहा अन्तरिक्षे विमितं हिरण्मयम् । तद्देवानां हृदयान्ययस्मये कुम्भेऽन्तः संनिहितानि । तानि बलभृच्च बलसाच्च रक्षतोऽप्रमणी अनिमिषतः सत्यम् । यत्ते द्वादश पुत्रास्ते त्वा संवत्सरे संवत्सरे कामप्रेण यज्ञेन याजयित्वा पुनर्ब्रह्मचर्यमुपयन्ति । त्वं देवेषु ब्राह्मणोऽस्यहं मनुष्येषु । ब्राह्मणो वै ब्राह्मणमुप धावत्युप त्वा धावामि । जपन्तं मा मा प्रति जापीर्जुह्वन्तं मा मा प्रति हौषीः कुर्वन्तं मा मा प्रति कार्षीः । त्वां प्रपद्ये । त्वया प्रसूत इदं कर्म करिष्यामि । तन्मे राध्यतां तन्मे समृध्यतां तन्म उपपद्यताम् । समुद्रो मा विश्वव्यचा ब्रह्माऽनु जानातु तुथो मा विश्ववेदा ब्रह्मणः पुत्रोऽनु जानातु श्वात्रो मा प्रचेता मैत्रावरुणोऽनु जानातु । तस्मै विरूपाक्षाय दन्ताञ्जये समुद्राय विश्वव्यचसे तुथाय विश्ववेदसे श्वात्राय प्रचेतसे सहस्राक्षाय ब्रह्मणः पुत्राय नमः ' इति ।

अस्यार्थः— भूः पृथिवी, भुवः अन्तरिक्षम्, स्वः द्यौः, ॐ ओंकार आत्मा । एते यदात्मानः ततोऽपि महान्तं रुद्राग्निरूपमात्मानं प्रपद्ये प्रपन्नो भवामि । हे भगवन्, त्वं विरूपाक्षोऽसि विविधरूपनेत्रो भवसि । तथा च श्रुतिः— ' सर्वतः पाणिपादान्तः सर्वतोऽक्षिशिरोमुखः । विश्वरूपो महानग्निः प्रणीतः सर्वकर्मसु ॥ ' इति । किंच दन्ताञ्जिः दन्तानक्ति व्यञ्जयतीति । तस्य एवंभूतस्य ते तव शय्या शयनस्थानं पर्णे पर्णतुल्ये उपलेपनाभ्युक्षणादिभिः संस्कृते स्थण्डिले, ' भूमौ स्थानमग्नेः ' इति श्रुतेः । गृह गृहं च । सोर्लुक् ( पा. ७।१।३९ ) । अन्तरिक्षे भुवर्लोके । विमितं निर्मितं हिरण्यगर्भप्रभृतिभिः । कीदृशम् ? हिरण्मयं हिरण्यमयम् । तत् तस्मिन् । ङेर्लुक् । गृहे देवानाम् इन्द्रादीनां हृदयानि, तिष्ठन्तीति शेषः । कस्मिन्निव ? अयस्मये लौहमये कुम्भे, इवेति शेषः । अन्तः मध्ये संनिहितानि एकीभूतानि तानि देवताहृदयानि । बलभृच्च बलमुपचयात्मकं बिभर्तीति, क्विप् । बलसाच्च बलं विपक्षाणां सादयति स्फोटयतीति, क्विप् । एतन्नामकौ अग्नेः प्रतीहारौ, तौ अप्रमनी अप्रमादिनौ, अनिमिषत् अनिमिषन्तौ सन्तौ यदेतौ रक्षतः त्वां तत्सत्यम् । ताभ्यां हि रक्षिते अग्नौ यजमानः चरुपुरोडाशादि जुहोति । यत् ते तव द्वादश पुत्राः अन्याख्या एव, ते संवत्सरे संवत्सरे प्रत्यब्दं कामप्रेण अभिलाषपूरकेण यज्ञेन ज्योतिष्टोमादिना यजमानं याजयित्वा यागेन संपाद्य पुनः ब्रह्मचर्यं ब्रह्मभूतं त्वाम् उपयन्ति प्रविशन्ति । हे अग्ने, त्वं देवेषु देवलोकेषु ब्राह्मणोऽसि, अहं मनुष्येषु मनुष्यलोकेषु ब्राह्मणः वै निश्चयेन । लोकः ब्राह्मणमेव उपधावति आश्रयत्वेन ढौकते । अतः त्वा त्वाम् उपधावामि परिचरामि । उपधावनकारणमाह— ' जपन्तं ... कार्षीः ' इति । एतदुक्तं भवति— जपहोमकर्मकाले मम प्रातिकूल्यं मा गा इति । अतः त्वां प्रपद्ये प्रपन्नोऽस्मि । त्वया प्रसूतः अभ्यनुज्ञातः इदं प्रस्तुतं कर्म करिष्यामि । यत एवमतः तत् एतत्कर्म मे मम राध्यतां संसिध्यतु । तन्मे समृध्यतां संवर्धताम् । तन्मे उपपद्यतां फलप्रदानसमर्थं जायताम् । अत्र तन्मे इत्यादरातिशये भूयस्त्वम् । अथ यत्ते द्वादशपुत्रा इत्युक्तं तन्नामतः कतिचन प्रयोगतो निर्दिशति— समुद्रः समुद्र इव विश्वव्यचाः विश्वं व्यचति विविधं गच्छतीति विश्वव्यचाः ब्रह्म* तन्नामा अग्निश्च मा माम् अत्र कर्मणि प्रवृत्तम् अनुजानातु अनुज्ञापयतु । तथा तुथः तन्नामा विश्ववेदाः सर्वस्य कर्मजातस्य वेदिता ब्रह्मणः उक्तरूपस्य पुत्रः मा माम् अनुजानातु । तथा श्वात्रः तन्नामा प्रचेताः प्रकृष्टमनाः अग्निः एवं मैत्रावरुणः मित्रवरुणदेवत्यश्च माऽनुजानातु । पूर्ववदर्थः । हे अग्ने, यतस्त्वमेवमनेकभेदः ( ततः ) तस्मै तुभ्यं विरूपा ... पुत्राय नमः इति । मृदुला.

---

अत्र ' तपश्च तेजश्चेति जपित्वा ' इत्याद्यग्रिमसूत्रीयमृदुलाधृतं ' वैरूपाक्षं जप्तुमनाः ' इत्यादिच्छन्दोगपरिशिष्टवचनमनुसंधेयम् । इदं तु वचनं प्रसिद्धच्छन्दोगपरिशिष्टेऽन्यत्र वा कुत्रचिदस्माभिर्नोपलब्धम् ।

* छान्दोग्यमन्त्रब्राह्मणपुस्तके मूले ' ब्रह्माऽनु ' इति सावग्रहचिह्नं मुद्रितम् । प्रकृतपुस्तकशैलीतः ' ब्रह्मा ' इति छेदः संपादकाभिप्रेत इत्यनुमीयते । सायणभाष्येऽपि तथैव छेदः । गुणविष्णुभाष्ये तु मृदुलावत् ' ब्रह्म ' इति छेदः ।

प्रपदमन्त्रजपः

[१]काम्येषु च प्रपदः ॥

(१) प्रपदविधानमप्याह गोभिलः— काम्येष्विति। च एवार्थे। संत. ८७४

(२) काम्येषु होमवत्कर्मसु प्रपदश्च 'तपश्च तेजश्च' इत्यादि 'मामवन्तु' इत्यन्तो मन्त्रोऽपि जप्तव्यः पुरस्तादेव। मन्त्रो यथा— 'तपश्च तेजश्च श्रद्धा च ह्रीश्च सत्यं चाक्रोधश्च त्यागश्च धृतिश्च धर्मश्च सत्त्वं च वाक् च मनश्चाऽऽत्मा च ब्रह्म च तानि प्रपद्ये तानि मामवन्तु $'।

अस्यार्थः— तपः उपवासादि। तेजः प्रकाशात्मकम्। श्रद्धा कालुष्यापगमश्चित्तस्य धर्मः। ह्रीः लज्जा। सत्यं यथार्थवादित्वम्। अक्रोधः प्रतिकूलविषयेऽपि मनसः प्रसादः। त्यागः न्यायागतस्य धनस्य विधिना विसर्गः। धृतिः सौमनस्यम्। धर्मः यज्ञकर्म। सत्त्वम् आत्मनि प्रकाशात्मको गुणः। वाक् वचनम्। मनः संकल्पविकल्पकवृत्तिमानिन्द्रियविशेषः। आत्मा क्षेत्रज्ञः। ब्रह्म परं तत्त्वम्। चकाराः सर्वे परस्परापेक्षया समुच्चयार्थाः। तानि तपःप्रभृतीनि प्रपद्ये शरणं गच्छामि। अतः तानि इमं यज्ञं कुर्वन्तं मामवन्तु रक्षन्तु इति।

चन्द्रकान्तस्तु— द्विविधानि तावत्काम्यानि कर्माणि भवन्ति होमसंयुक्तानि अहोमकानि च। तत्र वैरूपाक्षो होमसंयुक्तेष्वेव, प्रपदस्तु सर्वत्रैव स्यादिति। चशब्दः एवकारार्थः इति तत्त्वकारः। अस्य प्रपदसमाख्याबीजं तु वैरूपाक्षस्य प्रथमं पदं स्थानमस्येति, 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु।' इत्यभिधानात्। मृदुला.

[२]'तपश्च तेजश्च' इति जपित्वा प्राणानायम्यार्थमना वैरूपाक्षमारभ्योच्छ्वसेत् ॥

(१) तत्र विरूपाक्षजपात् पूर्वं तत्पाठमाह स एव— तपश्चेति। 'तपश्च तेजश्च' इत्यादि जपित्वा वायुधारणपूर्वकं यं कंचिदर्थं साधयितुकामस्तन्मनास्तद्ध्यायन् (? तं ध्यायन्) विरूपाक्षमन्त्रं जप्त्वा वायुं रेचयेत्। अथ यदि काम्यकर्मार्थे कुशण्डिका तदा प्रपदजपानन्तरमिति भवदेवभट्टः। नित्यनैमित्तिकयोर्नास्य पाठः। ततः सर्वकर्मसाधारणं विरूपाक्षजपान्तं कर्म। संत. ८७४

(२) अथेदानीं प्रपदवैरूपाक्षयोर्जपप्रकारोऽभिधीयते — तप इति। 'तपश्च तेजश्च' इत्युक्तमन्त्रं प्रपदरूपं जपित्वा तत्परिसमाप्तौ प्राणानायम्य नियम्यानुच्छ्वसन्नेव अर्थमनाः योऽर्थः साधयितुमिष्टस्तन्मनास्तं ध्यायन् वैरूपाक्षं 'विरूपाक्षोऽसि' इत्यादिपदघटितमारभ्य आवृत्त्य उच्छ्वसेत् श्वासमुत्सृजेत्। तदुक्तं छन्दोगपरिशिष्टे— 'वैरूपाक्षं जप्तुमनाः प्राणानायम्य शक्तितः। भूराद्यारभ्य उच्छ्वसेदेवं सोममतेन तु। मतेनाजातशत्रोस्तु जपित्वा भूर्भुवः स्वरोम्॥' इति। ¶ क्षिप्रहोमः अनुदितहोमः। एवं चात्र निषेधात्तयोर्विधिरन्यत्राऽऽयाति, विशेषविधेः शेषनिषेधाभ्यनुज्ञाफलकत्वस्य तुल्यवित्तिवेद्यन्यायेन कल्पनात्। जपोऽयं समिधमेकां कुशफलपुष्पसहितां गृहीत्वा कार्यः। जपान्ते च कुशमैशान्यां परित्यज्य फलपुष्पं ब्रह्मणे निवेद्य समिधं तूष्णीमग्नौ क्षिपेत्, तथैवाऽऽचारात्। पद्धतिकृतोऽप्येवम्। अङ्गिराः— 'वैरूपाक्षं जपेन्मन्त्रं प्रपदं चैव यज्ञवित्।' इति। यज्ञवित्पदं तदाचारलाभाय। इदमपि समिदादिग्रहणे प्रमाणमिति द्रष्टव्यम्।

अथ यज्ञवास्त्वन्ते पूर्णहोमः। गोभिलीये— 'पूर्णाहुतिं च मूर्धानं दिव इत्यभिपातयेत्।' इति। पद्धतौ तु 'पूर्णहोमं यशसे जुहोमि' इति मन्त्रेणायं पूर्णहोम उक्तः।

$ पूर्वत्र वैरूपाक्षमन्त्रे (सं. का. पृ. १४६४) टिप्पणी द्रष्टव्या।

(१) गोगृ. ४।५।७; संत. ८७४.

(२) गोगृ. ४।५।८; संत. ८७४ (तपश्च तेजश्चेत्यादि जपित्वा प्राणानायम्य तन्मना वैरूपाक्षमावृत्तोच्छ्वसेत्).

¶ अत्र कियांश्चिद्ग्रन्थस्त्रुटित इति भाति। अथवा 'वैरूपाक्षः पुरस्ताद्धोमानाम्' इति सूत्रव्याख्यानगतः 'अत्राप्यन्यत्र क्षिप्रहोमेभ्य इति द्रष्टव्यम्' इति ग्रन्थोऽत्रानुसंधेयः। क्षिप्रहोम इत्यस्यानुदितहोम इति व्याख्यानमपि चिन्त्यम्। अथवा अनुदितहोमादित्यादिशब्दो भ्रष्टः कल्पनीयः।

मन्त्रलिङ्गात्तदप्यविरुद्धमेवेति दिक् । ततो 'वसुभ्यः स्वाहा' इत्यविच्छिन्नामाज्यधारामग्नौ दद्यात् । तत्र गृह्यासंग्रहकारः— 'यज्ञवास्तुक्रियाङ्गत्वाद्विधिदृष्टेन कर्मणा । आज्यधारामविच्छिन्नां पातयेदनलोपरि ॥' इति । ततः स्रुवलग्नसघृतभस्मना त्र्यायुषकरणम् । तत्र च 'ततोऽनासिकया कुर्याद्बिन्दुं सघृतभस्मना । हृदंसयोर्ललाटे च त्र्यायुषेतिपदैः क्रमात् ॥' इति वचनं प्रमाणयन्ति शिष्टाः । ततः 'वसुभ्यः स्वाहा' इति होमानन्तरम् । एतत्प्रकार उक्तोऽधस्तात्समन्त्रकः । मृदुला.

## खादिरगृह्यसूत्रम्

होमकर्तुरग्नेः पश्चादवस्थानम्

**[1]पश्चादग्नेर्यत्र होमः स्यात् ॥**

यस्मिन् प्रदेशे होमो विद्यते तत्र प्रधानमङ्गानि च पश्चादग्नेरुपविश्य कुर्यात् । स्यादिति व्याप्त्यर्थे 'भवति' इतिवत् । रुद्रभा.

मन्त्राणां स्वाहाकारान्तता

**स्वाहान्ता मन्त्रा होमेषु ॥**

ये पाठे न स्वाहान्ताः तेऽपि स्वाहान्ताः कार्याः । 'स्वाहा सोमाय पितृमते स्वाहाऽग्नये कव्यवाहनाय' इत्यत्र न स्वाहान्ताः, आद्येनैव कृतार्थत्वात्, 'पुरस्तात्स्वाहाकृतयो वा अन्ये देवा उपरिष्टात्स्वाहाकृतयोऽन्ये' (तैसं. ३।१।५) इति श्रुतेः । अधिकारात्सिद्धे मन्त्रा इति व्याप्त्यर्थम् । रुद्रभा.

ब्रह्मधर्माः

**दक्षिणतोऽग्नेरुदङ्मुखस्तूष्णीमास्ते ब्रह्माऽऽहोमात् प्रागग्रेषु ॥**

अग्नेर्दक्षिणतः, न होतुः । तूष्णीं वाग्यतः । आ होमात् प्रयोगसमाप्तेः । रुद्रभा.

**कामं त्वधियज्ञं व्याहरेत् ॥**

यज्ञोपकार्यन्तरितादि ब्रह्मा ब्रूयात् । अत एव कर्मविदेव ब्रह्मा । कामं त्विति लौकिकस्यापि कर्मोपकारिणो व्याहरणार्थम् । रुद्रभा.

**अयज्ञीयां वा व्याहृत्य महाव्याहृतीर्जपेत् ॥**

वाशब्दात् यज्ञियामप्यन्यथासिद्धाम् । जपेत् मनसा । व्याहृतय एव महाव्याहृतयः । 'इदं विष्णुः' इति वा ऋचम् । रुद्रभा.

हौत्रब्रह्मत्वयोरेककर्तृकत्वे विशेषः

**हौत्रब्रह्मत्वे स्वयं कुर्वन् ब्रह्मासनमुपविश्य छत्रमुत्तरासङ्गं कमण्डलुं वा तत्र कृत्वाऽथान्यत्कुर्यात् ॥**

आपत्कल्पोऽयम् । उत्तरासङ्गम् उत्तरीयं वासः । अथान्यदिति ब्रह्मोपवेशनात्पूर्वं निर्वृत्तं यत्कर्म तदनन्तरं विहितं यदवशिष्टं तदित्यर्थः । अत एव न कर्मादौ ब्रह्मोपवेशनम् । क्व तर्हि ? 'इदं भूमेः' इत्यस्यानन्तरमेव वक्ष्यामः । रुद्रभा.

अव्यावृत्तिरव्यवायश्च यजमानधर्मौ

**अव्यावृत्तिं यज्ञाङ्गैरव्यवायं चेच्छेत् ॥**

होमाङ्गैः सहाग्नेः पराङ्मुखो न भवेत्, अन्तरा च न गच्छेदित्यर्थः । कुर्यादित्यध्याहारात्सिद्धे इच्छेदिति, यदि प्रमादाद्व्यावृत्तिं व्यवायं वा कुर्यात् तदा पुनः प्रतिमुखः स्यात्, प्रत्यागच्छेदित्येवमर्थम् । पाकयज्ञसाधारणमिदं सूत्रम् । रुद्रभा.

स्थण्डिलकरणम्

**[1]पूर्वे भागे वेश्मनो गोमयेनोपलिप्य तस्य मध्यदेशे लक्षणं कुर्यात् ॥**

गृहस्याभिमुखे गृहैकदेशे भागे पूर्वोपलिप्तेऽपि स्वयं गोशकृतोपलिप्य उपलिप्तस्य मध्यदेशे लक्षणं कुर्यात् । लक्षणस्य स्वरूपमन्यतोऽवगन्तव्यम् । पांसुभिः स्थण्डिलं कुर्यादित्यर्थः । रुद्रभा.

**दक्षिणतः प्राचीं लेखामुल्लिख्य ॥**

स्थण्डिलस्य दक्षिणापरकोणादारभ्य प्रागपर्गां रेखामुल्लिखेत् । रुद्रभा.

---

(१) खागृ. १।१।१५, १९, २३–२७.

(१) खागृ. १।२।१–२४.

**तदारम्भादुदीचीं तदवसानात्प्राचीं तिस्रो मध्ये प्राचीः ॥**

पश्चिमरेखारम्भादुत्तरास्तिस्रः । कुतः ? 'अपित्र्यं सर्वं प्रागपवर्गमुदगपवर्गं वा' इति स्मृतिबाहुल्यात् । एवं सर्वत्र अनादेशे । रुद्रभा.

**तदभ्युक्ष्य ॥**

उल्लिखितं स्थण्डिलमद्भिरभ्युक्ष्य । रुद्रभा.

अग्निस्थापनम्

**अग्निमुपसमाधाय ॥**

स्थण्डिलस्य मध्ये अग्निं संमुखमभिमुखं निधाय । उपेति उपयोगाय( ? योगोऽयं ) यत्र यत्र शास्त्रेणाहोमार्थोऽप्यग्निर्निधीयते तत्र तत्र उपलेपनाद्येवं निधानान्तं कुर्यादित्येवमर्थम्, यथा *सर्पबलौ । इतरथा 'सर्वत्रैतद्धोमेषु कुर्यात्' इति वचनात् अहोमार्थे न स्यात् । रुद्रभा.

परिसमूहनम्

**'इमं स्तोमम्' इति परिसमूह्य( ? मुह्य ) तृचेन ॥**

निधीयमानस्याग्नेः प्रकीर्णान् कणान् समन्तत एकीभावं प्रापय्य प्रत्यृचं परिसमूहनं प्रागुपक्रममुदगपवर्गं कुर्यात्, निराकाङ्क्षत्वादृचाम् । अस्य विनियोगमात्रपरत्वान्नार्थैक्यकल्पनायां प्रभुत्वम् । रुद्रभा.

भूमिजपः

**पश्चादग्नेर्भूमौ न्यञ्चौ पाणी कृत्वा 'इदं भूमेः' इति ॥**

अग्नेरनन्तरमेव पश्चात्तृणादिभिः सहितौ भूमिगताववाङ्मुखौ हस्तौ कृत्वा 'इदं भूमेः' इति जपेत् । 'अन्येषां विन्दते वसु, अन्येषां विन्दते धनम्' इत्यनयोः तुल्यार्थत्वात् विकल्पेन मन्त्रान्तत्वम् । रुद्रभा.

**वस्वन्तं रात्रौ ॥**

तयोर्नियममाह— वस्वन्तमिति । रात्रिकाले विहितं यद्रात्रौ क्रियते तत्र वस्वन्तमेव । अनन्तरं ब्रह्मोपवेशनम् । कुतः ? अग्निनिधानात्पूर्वं तावत् नोपवेशनम्, 'दक्षिणतोऽग्नेः' इति वचनात् । परतोऽपि 'उपसमाधाय, समूह्य, न्यञ्चौ पाणी कृत्वेदं भूमेः' इति क्त्वाप्रत्ययेन समानकर्तृकत्वस्योक्तत्वादवान्तरप्रयोगैकवाक्यत्वावगतेर्बाधान्नोपवेशनम् । इदानीं तु विरोधाभावाद्ब्रक्ष्यमाणस्य ब्रह्मापेक्षत्वादुपवेशनम् । पूर्वोक्तानां सूत्रैक्येऽपि सुखबोधार्थं सूत्रावच्छेदः कृतः । रुद्रभा.

परिस्तरणकल्पात्रयः

**पश्चाद्दर्भानास्तीर्य दक्षिणतः प्राचीं प्रकर्षेदुत्तरतश्च ॥**

अग्नेः पश्चात् प्रागग्रान् दर्भान् निरन्तरानास्थण्डिलमुदगपवर्गान् प्रकीर्य दक्षिणतः प्रकीर्णानग्रेषु गृहीत्वा प्राचीं प्रकृष्य तथोत्तरतश्च प्रकर्षेत् । यथाऽग्नेः पुरस्तादग्राणि संगतानि स्युः । अयमेकः कल्पः । रुद्रभा.

**अप्रकृष्य वा ॥**

पश्चात्स्तरणमात्रमेवैकः कल्पः । रुद्रभा.

**पूर्वोपक्रमं प्रदक्षिणमग्निं स्तृणुयान्मूलान्यग्रैश्छादयंस्त्रिवृतं पञ्चवृतं वा ॥**

अग्नेः पुरस्तात् पूर्वं ततो दक्षिणतस्तत उत्तरतस्ततः पश्चात् । ननूत्तरतः समापनीयम्, 'प्रदक्षिणम्' इति वचनात् । न, 'मूलान्यग्रैश्छादयन्' इति वचनात् । उदगपवर्गे हि मूलैरग्राणि छादितानि स्युः । ननु अग्राण्युत्क्षिप्य किमिति न स्तरणम्, 'छादयन् स्तृणुयात्' इति स्तीर्यमाणावस्थायामेव स्तीर्यमाणैश्छादनोपदेशात् । एवं तर्हि 'मूलान्यग्रैश्छादयन्' इत्यनेनैव सिद्धत्वात् 'पूर्वोपक्रमं प्रदक्षिणम्' इत्यनर्थकम् । न, अन्यदपि यत् प्रतिदिशं तत्पूर्वोपक्रमं प्रदक्षिणमिति ज्ञापनार्थम्, यथा 'प्रतिदिशमुपलिम्पेत्' इति । अत्रापि स्पष्टीकरणार्थ-

---

* यद्यपि खादिरसूत्रे सर्पबलिरिति कर्मसमाख्या नास्ति, शब्दोऽप्ययं नास्ति, तथापि 'श्रावण्यां पौर्णमास्यां०' ( खागृ. ३।२।१–१३ ) इत्यादिसूत्रैर्यद्बलिकर्म विहितम्, यस्य गोभिलीये श्रवणाकर्मेति समाख्या, तदेवात्र सर्पबलिपदेन समाख्यातम्, 'यः प्राच्यां दिशि सर्पराज एष ते बलिः' इति मन्त्रलिङ्गादिति ध्येयम् ।

त्वात् अत्रैवोक्तम् । अत्र तु 'प्रथमं दक्षिणतस्तत उत्तरतः' इत्यपि प्रदक्षिणशब्दस्यार्थोऽवगन्तुं शक्यते । इदं स्तरणं त्रिःकृत्वः पञ्चकृत्वो वा । पूर्वसूत्राभ्यां विहिते सकृत्सकृदेव । पितृयज्ञेष्वाद्यं स्तरणम्, अन्वष्टक्ये द्वितीयम्, इतरत्र तृतीयमित्युपदेशः । तृतीये पञ्चवृतपक्षस्य प्रजाकामपशुकामयोर्निवेशः । रुद्रभा.

### पवित्रकरणम्

**उपविश्य दर्भाग्रे प्रादेशमात्रे प्रच्छिनत्ति, न नखेन, 'पवित्रे स्थो वैष्णव्यौ' इति ॥**

उपविश्येति इतः परं दर्भासनार्थम् । प्रच्छिनत्ति न पाणिना । 'ओषधिमन्तर्धाय' इति गृह्यान्तरे । रुद्रभा.

**अद्भिरुन्मृज्य 'विष्णोर्मनसा पूते स्थः' इति ॥**

उत् ऊर्ध्वम् । रुद्रभा.

### आज्यसंस्कारः

**उदगग्रे अङ्गुष्ठाभ्यामनामिकाभ्यां च संगृह्य त्रिराज्यमुत्पुनाति— 'देवस्त्वा सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः' इति ॥**

मन्त्रस्यापि त्रिरावृत्तिः, प्रदेशान्तरे 'द्विस्तूष्णीम्' इति यत्नान्तरात् । उत्पुनाति प्राचीमूर्ध्वं क्षिपति । अच्छिद्रेण पवित्रेणेति संश्लिष्टयोः समुदायमाह । रुद्रभा.

**अभ्युक्ष्यैते अग्नावनुप्रहरेत् ॥**

अद्भिरभ्युक्ष्य पवित्रे उदगग्रे अग्नौ प्रक्षिपेत् । अन्विति उत्पवनेऽनुगते, उदगग्रे इत्यर्थः । रुद्रभा.

**आज्यमधिश्रित्योत्तरतः कुर्यात् ॥**

अग्नेरुत्तरे भागे स्थाल्या सहाऽऽज्यमुपनिधाय कुर्यात् । किं कुर्यात् ? शास्त्रान्तराद्गम्यते— द्विरुल्मुकेनाभिज्वाल्य द्वे दर्भाग्रे प्रक्षिप्य त्रिरुल्मुकेन प्रदक्षिणं परिहृत्य उत्तरतो बर्हिषि निदध्यादित्यर्थः । रुद्रभा.

### पर्युक्षणम्

**दक्षिणजान्वक्तो दक्षिणेनाग्निम् 'अदितेऽनुमन्यस्व' इत्युदकाञ्जलिं प्रसिञ्चेत् ॥**

दक्षिणेन जानुना भूमिगतो ब्रह्माग्न्योरन्तरेण उदकपूर्णमञ्जलिमवसिञ्चेत् । रुद्रभा.

**'अनुमतेऽनुमन्यस्व' इति पश्चात्, 'सरस्वत्यनुमन्यस्व' इत्युत्तरतः ॥**

होमाङ्गानामप्युत्तरतः । रेखावदञ्जलिसेकः, दृष्टानुगुण्याददृष्टे कल्पना यतः । रुद्रभा.

**'देव सवितः प्रसुव' इति प्रदक्षिणमग्निं पर्युक्षेदभिपरिहरन् हव्यम् ॥**

प्रसिञ्चेदिति प्रकृते पर्युक्षेदित्येतावत एव पर्युक्षणसंज्ञार्थं 'पर्युक्षणवर्जम्' (खागृ. १।५।१६) इत्यत्र । होमाङ्गं सर्वमन्तर्भावयन् प्रागुपक्रममुदकाञ्जलिं पर्युक्षेत् । रुद्रभा.

**सकृत्त्रिर्वा ॥**

सकृन्मन्त्रमुक्त्वा त्रिर्वा पर्युक्षेत् । रुद्रभा.

### इध्माधानम्

**समिध आधाय ॥**

औदुम्बराः खादिराः पालाशा वा तदभावे यज्ञियाः पञ्चदश समिधोऽग्नावाधाय एकामुत्तरतो बर्हिषि निदध्यादित्यध्याहारः, शास्त्रान्तरात् । अनन्तरमग्नेरर्चनमाचारात् । रुद्रभा.

### प्रपदजपः

**प्रपदं जपित्वोपताम्य कल्याणं ध्यायन् वैरूपाक्षमारभ्योच्छ्वसेत् ॥**

'तपश्च तेजश्च' इत्यारभ्य 'ब्रह्मणः पुत्राय नमः' इत्येवमन्तस्य प्रपदशब्दो वाचकः । जपित्वेति जपन्नित्यर्थः, 'विरूपाक्षोऽसि' इत्यस्य प्रपदमध्यपातित्वात् पौर्वापर्यानुपपत्तेः । कल्याणशब्दोऽपवर्गवाचकः । निरुच्छ्वासो भूत्वा प्रपदं जपन् 'भूर्भुवः स्वरोम्' इत्योङ्कारे परमात्मज्ञानं मे भूयादिति ध्यायन् यथासामर्थ्यमोङ्कारं प्लावयित्वा 'विरूपाक्षोऽसि दन्ताञ्जिः' इत्युच्छ्वसेदित्यर्थः । नित्येष्वेवम् । रुद्रभा.

**प्रतिकामं काम्येषु ॥**

काम्येष्वाह– प्रतिकाममिति । काम्यग्रहणमुपलक्षणं प्रज्ञातसाध्यविशेषवतां कर्मणाम् । तेषु विशेषमेव परामृश्य इदं मे भूयादिति ध्यायन्नित्यर्थः । रुद्रभा.

**सर्वत्रैतद्धोमेषु कुर्यात् ॥**

सर्वत्रेति व्याप्त्यर्थम् । एतत् उपलेपनादि प्रपदान्तं सर्वं पदार्थजातं सर्वत्र होमात्मके कर्मणि तत्तद्विशेषेभ्यः प्रागेव कुर्यात् । यानि तु धृतेऽग्नौ तस्मिन्नेव देशे क्रियन्ते तेषु अर्थलोपादग्न्युपसमाधानान्तस्य निवृत्तिः । रुद्रभा.

महाव्याहृतिहोमः

**[1]सर्वत्रोपरिष्टान्महाव्याहृतिभिः ॥**

सर्वत्रेति व्याप्त्यर्थम् । प्रतिकर्म विशेषविहितं कृत्वा 'भूः स्वाहा, भुवः स्वाहा, स्वः स्वाहा' इत्याज्यं जुहुयात् प्रपदान्तवत्स्वेव, प्रयुक्ताज्यलाभात् । नात्रान्वारम्भः । रुद्रभा.

प्राजापत्यहोमः

**प्राजापत्यया च ॥**

'प्रजापते न त्वदेतानि' इति प्राजापत्यया । चशब्दः सर्वत्रोपरिष्टादित्यस्यानुकर्षणार्थः ।

रुद्रभा.

प्रायश्चित्तहोमः

**प्रायश्चित्तं जुहुयात् ॥**

प्राजापत्ययेति वर्तते । यत्रान्तरितविपर्यासादौ प्रायश्चित्तापेक्षा तत्र प्राजापत्यया स्रुवेणाऽऽज्यं जुहुयात् संधानार्थमिति सूत्रार्थः । अन्तरिते अन्तरितं कृत्वा प्रायश्चित्तम् । संनिपत्योपकारकाङ्गान्तराये उपकार्ये निवृत्तप्रयोजने प्रायश्चित्तमेव, नान्तरितस्य पुनः करणम् । पदार्थविपर्यासे प्रायश्चित्तमेव, न क्रमार्थं पुनरावृत्तिः । आज्यसंस्कारात् पूर्वं चेत् निमित्तं स्यात् संस्कृते आज्ये प्रायश्चित्तं कुर्यात् । उत्तरकाले चेन्निमित्तं परिज्ञानानन्तरमेव । वाक्यशेषात् सिद्धे जुहुयादिति अग्न्यनुगतादावप्येतदेव प्रायश्चित्तमित्येवमर्थम् । इतरथा प्रकृतत्वात् प्रपदान्तवत्सु कर्मस्वेव स्यात् । बहिस्तन्त्रे तु आज्यतन्त्रेण परिचरणतन्त्रेण वा प्रायश्चित्तहोमः । तन्त्रमध्ये तु तत्तत्तन्त्रमेवोपजीवति । मन्त्रलिङ्गादपि सर्वत्र प्रायश्चित्तार्थता गम्यत एव । अयं मन्त्रार्थः– हे प्रजापते, यान्येतानि निमित्तानि प्रजातानि तानि त्वत्तोऽन्यो न कश्चिदपि प्रतिसमाधाने परि ता बभूव न पदार्थीकर्तुं समर्थः । अतो यत्समाधानकामा वयं तुभ्यं जुहुमः तदस्माकमस्तु । तत्समाधानाच्च रयीणां धनतुल्यानां च पुरुषार्थानां वयं स्वामिनः भूयास्मेति । स्वद्रव्यत्यागलक्षणानां कर्मणां कालात्यये 'यत्कुसीदम्' इति होमः प्रायश्चित्तम्, मन्त्रलिङ्गात् । प्रपदान्तवत्कर्मलोपे आज्यतन्त्रम्, इतरत्र परिचरणतन्त्रम् । अयं मन्त्रार्थः– यत्कुसीदम् ऋणतुल्यमवश्यं प्रदेयमप्रदत्तं मया इह जन्मनि, येन अप्रदत्तेन निधिना निधितुल्येन यमस्य सदने यथेष्टं चरामि, तत्प्रदेयमिदमेवाऽऽज्यं तत्कार्यकरं हे अग्ने, जीवन्नेवाहं तुभ्यं तत्प्रति तत्प्रदेयं प्रति तत्समाधानाय ददामीत्यर्थः । सर्वत्राङ्गभ्रेषे प्रयोगसमाप्त्युत्तरकालं यदि स्मरेत् तत्र न पुनः करणम्, नापि प्रायश्चित्तम्, प्रधानसंबन्धायोगात् विगुणमेव तदस्तु । प्रधानभ्रेषे तु साङ्गस्य पुनरावृत्तिः । बहुप्रधानके तु भ्रष्टस्यैव प्रधानस्य साङ्गस्य पुनरावृत्तिः; नाभ्रष्टस्य । एवमकरणे- शाट्यायनिप्रोक्तं प्रायश्चित्तं प्राजापत्यया यत्कुसीदमित्यनेन सर्वत्र विकल्पते । पूर्ववत्तन्त्रनियमः ।

आज्यतन्त्राणां प्रकृतिर्विवाहः । परिचरणतन्त्राणामौपासनहोमः । चरुतन्त्राणां दर्शपूर्णमासौ । पशुतन्त्राणामष्टकापशुः । आज्यतन्त्रे वरणस्याप्रवृत्तिः, तस्य प्रदानार्थत्वात् । अर्थलोपादाप्लवनस्यापि 'समानयामुम्' इति मन्त्रलिङ्गात् भर्तृसंबन्धार्थत्वादप्रवृत्तिः । लेखाचतुर्थीहोमयोरपि न पुनराप्लवनम्, कृतस्यैव सकलविवाहशेषत्वात् । होमत्रयात्मको विवाहः । वरणवदुदकसेचनम् । उदकुम्भस्य मूर्ध्न्यवसेकार्थत्वादप्रवृत्तिः । 'स्नातामहतेनाऽऽच्छाद्य' इत्यस्य पुंसवनादौ पुनः

(१) खागृ. १।३।१३–१५.

प्रतिप्रसवादप्रवृत्तिः । 'सोमोऽददत्' इत्यस्य च वधूदानप्रकाशनार्थत्वात्, 'प्र मे पति या नः' इत्यस्य च भर्तृसंबन्धार्थमार्गक्लृप्तिपरत्वादप्रवृत्तिः । लेखाचतुर्थीहोमयोरपि न पुनः क्रिया, होमत्रयात्मकस्य मार्गस्यैकत्वात् । दृषत्पुत्रस्य चाऽऽक्रमणार्थत्वादप्रवृत्तिः । शूर्पलाजानां च लाजहोमार्थत्वान्न निधानम् । आज्यतन्त्रेष्वन्वारम्भस्तु संस्कारकर्मसु संस्कार्येण कर्तव्य एव, संस्कारार्थत्वात्, नान्येषु । होमानामप्रवृत्तिः उपरिष्टाद्धोमान् वर्जयित्वा, प्रधानत्वात् । भवतु वा व्याहृतिहोमानामङ्गत्वम्, तथाऽपि दर्शपूर्णमासयोरप्येतत्प्रकृतित्वात् सर्वेषु प्राप्तानामुपघातादिसूचनम् 'एवं चौलोपनयनगोदानेषु' इति च नियमार्थं भविष्यति । प्रयोगमध्ये 'नाऽऽज्यभागौ' इत्यादेः सर्वार्थस्य विधानस्यैतत्प्रयोजनम्— कथं नामैतत् प्रागुक्तानामेवेतिकर्तव्यतात्वेन प्रदेशान्तरे प्रवृत्तिः, न परस्ताद्वक्ष्यमाणानां 'हुत्वोपोत्तिष्ठतः' इत्येवमादीनामपि । रुद्रभा.

हविर्निर्वापः

**[1]हविर्निर्वपेत् 'अमुष्मै त्वा जुष्टं निर्वपामि' इति देवताश्रयं सकृद्यजुषा द्विस्तूष्णीम् ॥**

यद्धविः शास्त्रान्तरे प्रज्ञातं व्रीहितण्डुला यवतण्डुला वा तद्धविः पाणिना गृहीत्वा मुष्टिपूर्णम् 'अग्नये त्वा जुष्टं निर्वपामि' इति निर्वापवद्यथादैवतं चरुस्थाल्यां सकृदावपेत् द्विरमन्त्रकम् । ब्रह्मोपवेशनान्तं कृत्वा निर्वापः, अस्यापि ब्रह्मापेक्षत्वात् । रुद्रभा.

हविःप्रक्षालनम्

**त्रिर्देवेभ्यः प्रक्षालयेत् ॥**

उदकेन प्रक्षालनम् । प्रकृतत्वात्सिद्धे देवेभ्य इत्यन्यत्रापि यद्देवेभ्यः प्रक्षालनं तत् त्रिरेवेत्येवमर्थम् । यथौपासनहोमे । रुद्रभा.

**द्विर्मनुष्येभ्यः ॥**

अथ प्रक्षालनप्रसङ्गादुच्यते— द्विरिति । भोजनार्थे पाके द्विः प्रक्षालनम् । असत्यपि पाके यत्र प्रक्षालनं विहितं तत्रापि द्विरेव । रुद्रभा.

**सकृत् पितृभ्यः ॥**

श्राद्धेऽन्वष्टक्यादौ च असत्यपि पाके पूर्ववत् । रुद्रभा.

हविःश्रपणम्

**मेक्षणेन प्रदक्षिणमुदायुवं श्रपयेत् ॥**

अथ प्रकृतमाह— मेक्षणेनेति । मेक्षणं दर्वी । यथा पक्तिवैषम्यमुदकस्य वा बहिर्निर्गमनं न भवेत् तथोदायुवं पचेत् । यदि बहिर्निर्गच्छेदुदकं 'ययोरोजसा' इत्यप आसिञ्चेत्, 'यद्यत्र उल्बणं क्रियते तदप उपनिनयेत्' 'ययोरोजसा स्कभिता रजांसि वीर्येभिर्वीरतमा शविष्ठा । या पत्येते अप्रतीता सहोभिर्विष्णू अगन्वरुणा पूर्वहूतौ स्वाहा ॥' (षब्रा. १।५) इति श्रुतेः । रुद्रभा.

हविरभिघारणप्रत्यभिघारणे

**शृतमभिघार्योदगुद्वास्य प्रत्यभिघारयेत् ॥**

अस्मिन् काले परिस्तरणम्, आज्यसंस्कारश्च, संस्कारापेक्षत्वात् शृताभिघारणस्य । तत आह— शृतमिति । स्रुवेणाऽऽज्येनाभिघारणम् । रुद्रभा.

उक्तकल्पातिदेशो होमान्तरेषु

**सर्वाण्येवं हवींषि ॥**

सर्वाणीति व्याप्त्यर्थम् । एवं निर्वापादि । हवींषीति भोजनार्थे श्राद्धार्थे कृसरस्थालीपाकादौ च निवृत्त्यर्थम् । न हि तेषु पाकावस्थायां हविष्ट्वम्, देवतोद्देशाभावात् । औपासनवैश्वदेवहोमयोरप्येकदेशस्यैव देवतोद्देशेनोपादानम्, 'अन्नस्य' इति षष्ठीनिर्देशात् । अतस्तयोरपि पाकावस्थायां न हविष्ट्वम् । रुद्रभा.

पात्रासादनम्

**बर्हिषि साद्य ॥**

साद्यानीत्यर्थः । छान्दसः शेर्लुक् । बहुवचनात् सर्वाण्येव होमाङ्गानि साद्यानि, आज्यं चरुः स्रुवः जुहूः इध्म इति । बर्हिषीति सिद्धवन्निर्देशात् स्तरणावस्थायामेव तथा

(१) खागृ. २।१।९-११.

स्तरणं यथा तत्र सादनं भवेत् । इतरेतरयोगात् च हविःसादनावस्थायामेव उत्तरतः सर्वेषां सादनम् । बहुलवचनाल्लुक् कृतोऽस्य बहुविषयत्वं गमयितुम् । अतो विवाहादिष्वपि होमाङ्गानामेव सादनम् । औपासनादिषु दर्भाभावादुत्तरतो भूमावेव सादनं प्राक् पर्युक्षणात् । एवं प्रयोगक्रमः— प्रातराहुतिं हुत्वा ब्रह्मोपवेशनान्तं कृत्वा चरुं श्रपयित्वा परिस्तीर्य दर्भेषूपविश्याऽऽज्यं संस्कृत्याभिघार्य हवींष्युत्तरतः सर्वाणि सादयित्वा परिषेचनादि प्रपदान्तं कुर्यात् । रुद्रभा.

आज्यभागौ

**आज्यभागौ जुहुयाच्चतुर्गृहीतमाज्यं गृहीत्वा । पञ्चावत्तं भृगूणां जामदग्न्यानाम् । 'अग्नये स्वाहा' इत्युत्तरतः 'सोमाय स्वाहा' इति दक्षिणतः ॥**

तत आह— आज्येति । आज्यभागाविति संज्ञा व्यवहारार्था । स्रुवेणाऽऽदायाऽऽज्यं जुह्वामासिच्य जुह्वैव चतुर्गृहीतं जुहुयात्, 'स्रुवेण स्रुच्याज्यं गृह्णीयात्' इति परिभाषादर्शनात् । गृह्यान्तरदर्शनाच्च स्रुवजुह्वोः प्राप्तिः । स्रुवस्य तु विवाहप्रकृतित्वादपि प्राप्तिरस्त्येव । गृहीत्वेति प्रत्येकं चतुर्ग्रहणार्थम्, पौनःपुन्येऽपि क्त्वाविधानात् । रुद्रभा.

**विपरीतमितरे ॥**

'सोमाय स्वाहा' इति दक्षिणतो हुत्वा 'अग्नये स्वाहा' इत्युत्तरत इत्यन्य आचार्या आहुः । रुद्रभा.

अवदानधर्मः

**आज्यमुपस्तीर्य हविषोऽवद्येन्मेक्षणेन मध्यात् पुरस्तादिति ॥**

स्रुवेण जुह्वामुपस्तीर्य हविषोऽङ्गुष्ठपर्वपृथुमात्रमवखण्ड्य हस्तेन जुह्वां निदध्यात् । इतिशब्दः पक्षसमाप्त्यर्थः । रुद्रभा.

**पश्चाच्च पञ्चावत्ती ॥**

भृगुजामदग्न्यादयः । रुद्रभा.

**अभिघार्य प्रत्यनक्त्यवदानस्थानानि ॥**

स्रुवेण जुहूस्थं हविरभिघार्य आज्येन अवदानस्थानानि यथाक्रममवनक्त्याज्येन । रुद्रभा.

**न स्विष्टकृतः ॥**

स्विष्टकृतोऽवदायावदानस्थानं न प्रत्यनक्ति । प्रत्यञ्जनप्रतिषेधादेवेदं सर्वं स्विष्टकृतोऽपि तुल्यमिति गम्यते । रुद्रभा.

प्रधानहोमः

**'अमुष्मै स्वाहा' इति जुहुयाद्यद्दैवत्यं स्यात् ॥**

'अग्नये स्वाहा' इतिवत् यथादेवतमग्निमध्ये जुह्वा जुहुयात् । एतत्प्रधानम्, अत एतद्व्यतिरिक्तं सर्वं चरुतन्त्रेषु प्रवर्तते । रुद्रभा.

स्विष्टकृद्धोमः

**स्विष्टकृतः सकृदुपस्तीर्य द्विर्भृगूणां सकृद्धविषो द्विरभिघार्य 'अग्नये स्विष्टकृते स्वाहा' इति प्रागुदीच्यां जुहुयात् ॥**

शोभनमिष्टं द्रव्यप्रतिपत्तिद्वारेण करोतीति स्विष्टकृद्यागः । अतोऽप्रधानमिदम् । सकृदुपस्तीर्येत्यनूद्यते भृगूणां जामदग्न्यानां द्विरुपस्तरणविशेषं विधातुम् । मध्यात् पुरस्तात् पश्चादित्येतेषां प्रत्याम्नायः सकृद्धविष इति । उत्तरार्धादवदानम्, 'उत्तरार्धात्स्विष्टकृतः' इति श्रुतेः, गृह्यान्तरविधानाच्च । द्विरभिघार्येति सकृत्प्रत्याम्नायः । प्रागुदीच्यामिति मध्यप्रत्याम्नायः । अथोपरिष्टाद्धोमः आज्येन व्याहृतिभिः तिसृभिः प्राजापत्यया च । रुद्रभा.

समिदाधानम्

**समिधमाधाय ॥**

तत आह— समिधमिति । परिषिञ्चेदित्यध्याहारः, 'समिधमाधायानुपर्युक्षेत्' इति गौतमीयवचनात् । पूर्वनिहितां समिधमग्नावाधाय 'अदितेऽन्वमंस्थाः, अनुमतेऽन्वमंस्थाः, सरस्वत्यन्वमंस्थाः, देव सवितः प्रासावीः' इति पूर्ववत्परिषेचनम् । गृह्यान्तरान्मन्त्रप्राप्तिः । रुद्रभा.

यज्ञवास्तु

**दर्भानाज्ये हविषि वा त्रिरवधायाग्रमध्यमूलानि 'अक्तं रिहाणा वियन्तु वयः' इत्यभ्युक्ष्याग्नावनुप्रहरेत्– 'यः पशूनामधिपती रुद्रस्तन्तिचरो वृषा। पशूनस्माकं मा हिंसीरेतदस्तु हुतं तव स्वाहा ॥' इति ॥**

प्रतिपत्तिकर्मेदम्, दर्भानिति द्वितीयानिर्देशात्। अत एव स्तृतान् सर्वान् दर्भान् शिष्ट आज्ये हविषि वा सकृन्मन्त्रमुक्त्वा अग्राणि मध्यानि मूलानि च क्रमशः संमृज्य पुनश्चैवं द्विः संमृज्याद्भिरभ्युक्ष्याग्रपूर्वं प्रक्षिपेत्। रुद्रभा.

**तद्यज्ञवास्तु ॥**

तत् पूर्वसूत्रोक्तं कर्म यज्ञवास्तु। संज्ञा व्यवहारार्था। रुद्रभा.

**सर्वत्र कुर्यात् ॥**

समिद्दर्भवत्सु कर्मसु सर्वत्र कुर्यात्। अध्याहारात्सिद्धे कुर्यादिति वामदेव्यगानार्थम्। रुद्रभा.

ब्रह्मणे हविःशेषदानम्

**हविरुच्छिष्टमुदगुद्वास्य ब्रह्मणे दद्यात् ॥**

हविर्ग्रहणमाज्यव्युदासार्थम्। उच्छिष्टमिति स्वयं किंचित्प्राश्यावशिष्टस्य दानार्थम्। पूर्वमेवोदग्देशस्थितत्वे सिद्धे उदग्ग्रहणमुदग्देशात्स्थाल्या सहोद्वासनार्थम्, अन्यथा स्थाल्या ओदनस्योद्वासनमाशङ्क्येत। चतुर्थ्यैव सिद्धे दद्यादिति स्वयंब्रह्मत्वेऽप्यन्यस्मै दानार्थम्। रुद्रभा.

दक्षिणादानम्

**पूर्णपात्रं दक्षिणा ॥**

ओदनेन तण्डुलैर्वा तदभावे फलैर्वा संपूर्णं पात्रं ब्रह्मणे दक्षिणां दद्यात्। स च तूष्णीम् ओमिति वा प्रतिगृह्णीयात्। रुद्रभा.

**यथोत्साहं वा ॥**

यथा ब्रह्मा उत्साही भवति तथा दद्यात्। तदभिलषितं दद्यादित्यर्थः। आज्यतन्त्रेष्वपि यथोत्साहमेव दक्षिणा। रुद्रभा.



## जैमिनीयगृह्यसूत्रम्

स्थण्डिलकरणम् अग्निस्थापनं च

**[1]अथातोऽग्निं प्रणेष्यन् प्रागुदक्प्रवणमभ्युक्ष्य स्थण्डिलं लक्षणं कुर्यात्। मध्ये प्राचीं रेखामुल्लिख्योदीचीं च संहितां पश्चात्तिस्रो मध्ये प्राच्योऽभ्युक्ष्याग्निं प्रतिष्ठापयेद् 'भूर्भुवः स्वः' इति। लक्षणावृदेषा सर्वत्र ॥**

अथेति मङ्गलार्थम्, अत इत्यारम्भार्थम्। अग्निं प्रणयिष्यन् प्रदेशान्तरे स्थापयितुमिच्छन्, विहितकर्मण इति शेषः। प्रागुत्तरप्रदेशावनतं स्थण्डिलं कृत्वाऽभ्युक्ष्य तस्य मध्ये वक्ष्यमाणपञ्चरेखात्मकलक्षणं दर्भादिना लिखेत्। गोमयेनोपलिप्य त्रिरुद्धृत्यावोक्षितायां भुवि पञ्चप्रस्थमिताभिः सिकताभिर्मृद्भिर्वा कृतमरत्निचतुरश्रं धिष्ण्यं स्थण्डिलमिति पूर्वाचार्यसंज्ञा। स्थण्डिलमध्यात् प्राङ्मुखीं रेखामुल्लिख्य तस्याः पश्चात्तया संहितां संयुक्तामुदङ्मुखीम् अरत्न्यायतां रेखामुल्लिख्य तस्याः पश्चात्तस्या मध्ये समासये तिस्रः प्राङ्मुख्यो रेखाः प्रादेशायामा उल्लिखेरन्। तथा च प्रत्यङ्मुखशूलाकृति लक्षणं भवति। श्रीव्या.

पात्रासादनं पात्रप्रोक्षणं च

**दक्षिणतोऽग्नेः पूर्णपात्रमुपनिदधाति स्रुवं चापां पूर्णम्। उत्तरतोऽग्नेरिध्माबर्हिः। 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रोक्षामि' इति प्रोक्षितमुपक्लृप्तं भवति, सकृद्यजुषा द्विस्तूष्णीम् ॥**

पूर्णपात्रस्य दक्षिणात्वं वक्ष्यति (जैगृ. १।४)। तद्योग्ययथाशक्तिव्रीह्यादिपूर्णं पात्रमित्यर्थः। पूर्णपात्रस्य पुरस्तात्खादिरादिमयं जलपूर्णं स्रुवं चोपनिदधाति। इध्मश्च बर्हिश्चेध्माबर्हिः। उपलक्षणमेतत्। अनिर्दिष्टस्थानं सर्वमुत्तरत उपनिदधाति। प्रोक्षणीनामग्नेः पश्चादुपनिधानमाचारात्। श्रीव्या.

(१) जैगृ. १।१–४.

आचमनम्

**पश्चादग्नेराचमनम् ॥**

प्राग्विहितस्याऽऽचमनस्य प्रदेशनियमोऽयम् । श्रीव्या.

**त्रिराचामेत् । द्विः परिमृजेत् । सकृदुपस्पृशेत् । पादावभ्युक्ष्य शिरश्च शीर्षण्यान्प्राणानुपस्पृशेत् ॥**

प्रसङ्गात् सार्वत्रिकस्याऽऽचमनस्यायमनुष्ठानक्रम उच्यते । शीर्षण्यान् प्राणान् चक्षुषी नासिके श्रोत्रे चेत्यर्थः । श्रीव्या.

भूमिजपः

**अप उपस्पृश्य पश्चादग्नेरुपसमाहितस्योपविश्य दक्षिणेन पाणिना भूमिमारभ्य जपति– 'इदं भूमेर्भजामह इदं भद्रं सुमङ्गलम् । परा सपत्नान्बाधस्वान्येषां विन्दते धनम् ॥' इति । वस्वन्तं रात्रिश्चेत् ॥**

रात्रिश्चेन्मन्त्रजपकालः धनमिति पदमपोह्य तत्स्थाने वस्विति ब्रूयात् । श्रीव्या.

परिसमूहनम्

**इमं स्तोम्येन तृचेनाग्निं परिसमूहेदाद्यया वा त्रिः ॥**

परिसमूहनं नाम आर्द्रेण पाणिना अग्निं परितः संमार्जनम्, तच्च प्रत्यृचमन्ते सकृत्सकृत् भवति । श्रीव्या.

परिस्तरणम्

**प्रस्तरमुपसंगृह्य प्रतिदिशं परिस्तृणाति दक्षिणपुरस्तादुपक्रम्याग्रैर्मूलानि छादयन् । पश्चाद्द्वोपस्तीर्योलपराजिभ्यामुपहरेद्दक्षिणोत्तरः संधिः ॥**

प्रस्तरमुपसंगृह्य सप्रस्तरेण पाणिना प्रतिदिशं प्राग्दक्षिणादिक्रमेण दक्षिणपुरस्तादुपक्रम्य प्राचीनानां मूलानि दक्षिणोत्तराग्रैस्तन्मूलानि च प्रतीचीनाग्रैश्छादयन् सर्वत्र प्रागग्रैर्दर्भैः पूर्वपश्चिमयोः प्रादेशमात्रैरितरेतरयोररत्निमात्रैः परिस्तृणाति । पश्चिमतो वा प्रथमं परिस्तीर्यानन्तरं द्वाभ्यामुलपराजिभ्यां दर्भमुष्टिभ्यामरत्निमात्राभ्यां पश्चिमपरिस्तरणदक्षिणोत्तरयोः संसक्तमूलाभ्यां पूर्वस्यां मध्ये संहिताग्राभ्यामुपहरेत् परिस्तृणीयात् । पूर्वस्यामुक्तः परिस्तरणसंधिस्तु दक्षिणोत्तरो भवति । दक्षिणपरिस्तरणमुत्तरमुपरि गतं यस्मिन् तादृशो भवतीत्यर्थः । पक्षद्वये प्रथमश्चतुरश्रः द्वितीयस्त्रिकोण इति वेदितव्यम् । श्रीव्या.

पवित्रकरणम्

**प्रस्तरात्पवित्रे गृह्णाति प्रादेशमात्रे समे अप्रशीर्णाग्रे अनन्तर्गर्भे अङ्गुष्ठेनोपकनिष्ठिकया च धारयन्न नखेन छिनत्ति 'पवित्रे स्थो वैष्णव्यौ' इति । त्रिरूर्ध्वमद्भिरनुमार्जयेत् 'विष्णोर्मनसा पूते स्थः' इति सकृद्यजुषा द्विस्तूष्णीम् ॥**

पूर्वगृहीतात्प्रस्तरात्पवित्रसंज्ञे भाविनी तृणे अप्रशीर्णाग्रे अच्छिन्नाग्रे अनन्तर्गर्भे अन्तस्तृणान्तररहिते प्रादेशमात्रे ते गृह्णाति । श्रीव्या.

आज्य–हविः–प्रणीता–स्रुवाणामुत्पवनम्

**पात्रस्योपरिष्टात् पवित्रे धारयन्नाज्यमासिच्योत्तरेणाग्निमङ्गारान्निरूह्य तेष्वधिश्रित्यावद्योत्य दर्भतरुणाभ्यां प्रत्यस्य त्रिः पर्यग्नि कृत्वोदगुद्वास्य प्रत्यूह्याङ्गारानुदगग्राभ्यां पवित्राभ्यां त्रिरुत्पुनात्याज्यं च हविश्च प्रणीताश्च स्रुवं च 'देवस्त्वा सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः' इति । 'देवो वः' इति प्रणीताः । पुनराहारमाज्यस्य सकृद्यजुषा द्विस्तूष्णीम् ॥**

ते पवित्रे कस्यचित् पात्रस्योपरिष्टाद्वामकरेण धारयन् तस्मिन्पात्रे पवित्रे प्लावयन्नाज्यमासिच्य अग्नेरुत्तरतः परिस्तरणस्यान्तरेव कतिचिदङ्गारान्पृथक्कृत्य तेषु तदाज्यमारोप्य दर्भज्वालया प्रदीप्य दर्भाग्राभ्यां क्षिप्त्वा त्रिर्दर्भज्वालया प्रदक्षिणीकृत्य परिस्तरणादुत्तरत आज्यमवरोप्याङ्गारानग्नौ संयोज्य उदगग्राभ्यां पवित्राभ्यामाज्यं च हविश्च प्रणीताश्च स्रुवं चानेन यजुषा त्रिरुत्पुनाति प्रागपवर्गम् । मन्त्रोक्तिः सकृत्सकृदिति वक्ष्यति । देवः सविता त्वा त्वाम् उत्पवनीयं वस्तु पुनातु पवित्रीकरोतु अच्छिद्रेण पवित्रेण आदित्येन । 'असौ वा आदित्योऽच्छिद्रं पवित्रम्' इति ब्राह्मणम् । वसोस्तेजस्विनः सूर्यस्य

रश्मिभिश्चोत्पुनात्विति मन्त्रार्थः। आज्यस्य विहित-मुत्पवनं पश्चिमतः पवित्रे पुनराहृत्याऽऽहृत्य कर्तव्यम्। तथा च पवित्रे प्रागानीय पश्चान्नीत्वा प्रागानेतव्ये इति सिद्धम्। श्रीव्या.

प्रणीताप्रणयनं विरूपाक्षजपश्च

**उत्तरतोऽग्नेः प्रणीताः प्रणीय दर्भैः प्रच्छाद्य दक्षिणतोऽग्नेः प्रस्तरं निधाय प्रस्तरस्योपरिष्टात् पवित्रे निधाय विरूपाक्षं जपति— 'ओं तपश्च तेजश्च सत्यं चाऽऽत्मा च धृतिश्च धर्मश्च सत्त्वं च त्यागश्च ब्रह्मा च ब्रह्म च तानि प्रपद्ये। तानि मामवन्तु। भूर्भुवः स्वरों महान्तमात्मानमध्यारोहामि। विरूपाक्षोऽसि दन्ताञ्जिः। तस्य ते शय्या पर्णे। गृहा अन्तरिक्षे ते विमितं हिरण्मयम्। तद्देवानां हृदयान्ययस्मये कुम्भे अन्तः संनिहितानि तानि। बलभृच्च बलधा च रक्ष णः। मा प्रमदः। सत्यं ते। द्वादश पुत्रास्ते त्वा संवत्सरे संवत्सरे कामप्रेण यज्ञेन याजयित्वा पुनर्ब्रह्मचर्यमुपयन्ति। त्वं देवानां ब्राह्मणोऽस्यहं मनुष्याणाम्। ब्राह्मणो वै ब्राह्मणमुपधावति। तं त्वोपधावामि। जपन्तं मा मा प्रतिजाप्सीः। जुह्वन्तं मा मा प्रतिहौषीः। कुर्वन्तं मा मा प्रतिकार्षीः। त्वां प्रपद्ये। त्वया प्रसूत इदं कर्म करिष्यामि। तन्मे समृध्यताम्। विरूपाक्षाय दन्ताञ्जये ब्रह्मणः पुत्राय ज्येष्ठाय श्रेष्ठायामोघाय कर्माधिपतये नमः' इति॥**

प्रणीतार्थमुत्पूता अपः परिस्तरणाद्बहिरुत्तरतोऽग्नेः प्रतिष्ठाप्य दर्भैः प्रच्छाद्य तथा दक्षिणतोऽग्नेः पूर्णपात्र-स्रुवयोरुत्तरतः प्रस्तरं निधाय तदुपरिष्टात् पवित्रे निधाय विरूपाक्षदैवतमिमं मन्त्रं जपति। परिस्तरणादौ प्रस्तरोपसंग्रहणस्य प्रणीताप्रणयनानन्तरं प्रस्तर-निधानस्य च विधानात् तदन्तर्विहितानि कर्माणि प्रस्तर-पाणिना कर्तव्यानीति गम्यते। तप इत्यादि दश पदार्थाधिदैवतानि विरूपाक्षविभूतिभूतानि पूर्वं प्रपद्ये। तानि मामवन्तु महादेवभजनशक्तं कुर्वन्तु। अनन्तरं भूर्भुवः स्वः त्रैलोक्यात्मतया वर्तमानमोमिति प्रणवान्त-वेद्यशुद्धचैतन्यरूपं महान्तमपरिच्छिन्नमात्मानं परमात्मानं त्वामध्यारोहामि शरणीकरोमि। त्वं भक्तेषु प्रकटित-रौद्रवेषतया विरूपाक्षोऽसि भयंकरनेत्रोऽसि। दन्ताभ्यां दंष्ट्राभ्यामनक्ति व्यक्तीभवति प्रकाशते इति दन्ताञ्जि-रसि। तादृशस्य ते शय्या निवासः पर्णे पर्णपटलाच्छन्न-तया दुर्गमे कान्तारे भवति। 'नमः पर्ण्याय च पर्ण-शद्याय च' (तैसं. ४।५।९) इति श्रूयते। परमार्थ-स्वरूपस्य ते तव तु गृहा गृहं निवासस्थानमन्तरिक्षे विशुद्धहृदयदहराकाशे। तच्च विमितं विगतमानमपरिच्छि-न्नम्। हिरण्मयं हितं च रमणीयं च, आदित्यवर्णमिति वा। यस्मादेवं तस्माद्देवानां सर्वेषां तानि हृदयानि सारांशा अयस्मये कुम्भे इवाच्छिदुरस्वभावे त्वयि अन्तः तदन्त-र्भागे संनिहितानि संगृहीतानि। 'नमो वः किरिकेभ्यो देवानां हृदयेभ्यः' (तैसं. ४।५।९) इति श्रूयते। सर्व-देवतात्माऽसीति यावत्। बलभूर्बलाकरश्च त्वं बलधा च भजतां बलपोषकश्च रक्ष णः अस्मान्। णत्वमार्षम्। मा प्रमदः प्रमादादन्तरा मा त्याक्षीः। सत्यं खलु ते तव स्वरूपमेव, कथमन्तरा त्यागो भवेदिति भावः। द्वादश ते तव कालरूपस्य पुत्राश्चैत्रादिमासरूपाः, यदङ्गेषु वसन्तादिषु सर्वोऽपि यज्ञः, त्वां संवत्सरे संवत्सरे, कामं प्राति पूरयतीति कामप्रः कामपूरकः, तादृशेन दर्शपूर्ण-मासादिना यज्ञेन सर्वेण याजयित्वा पुनः पुनर्ब्रह्मचर्यं दीक्षां यष्टुमेवोपयन्ति। पुनः पुनः परिवर्तमानैः चैत्रादिभि-र्यजनादेवमुच्यते। त्वमेव खलु सर्वकामात्मा सर्व-यज्ञानामाधारभूतो यजनीयश्चेति यावत्। लौकिकदृष्ट्या साजात्येनापि विशेषरक्षणीयतामाह— त्वं देवानामित्यादि। उपधावति शरणीकरोति। जपन्तमित्यादि। कृतस्य प्रतिकरणं प्रतिहननम्, तन्मा कार्षीरिति भावः। त्वा-मित्यादि। प्रसूतोऽनुज्ञातः। शिष्टं स्पष्टम्। श्रीव्या.

स्रुवसंमार्गः, जन्तुपाते पुनराज्यसंस्कारः

**स्रुवं प्रणीतासु प्रणीय निष्टप्य दर्भैः संमृज्य संमार्गानभ्युक्ष्याग्नावाधाय दक्षिणं जान्वाच्या-**

**मेध्यं चेत्किंचिदाज्येऽवपद्येत घुणस्त्र्यम्बुका मक्षिका पिपीलिकेत्या पञ्चभ्य उद्धृत्याभ्युक्ष्योत्पूय जुहुयात् ॥**

स्रुवगता अपः प्रणीतास्वासिच्य स्रुवं निष्टप्य दर्भैः संमृज्य संमार्गान् संमार्जनसाधनभूतान् दर्भानभ्युक्ष्याग्नौ क्षिप्त्वा जानु दक्षिणमाच्य अवनम्य घृतं निरीक्ष्य तस्मिन्नाज्ये घुणस्त्री अम्बुका पिपीलिका इत्यादिजन्तुजातममेध्यम् अपवित्रं किंचिदा पञ्चभ्यः पञ्चानधिकमवपद्येत संभाव्येत चेत्तदुद्धृत्य 'देवस्य त्वा' इत्यभ्युक्ष्यैताभ्यामेव पवित्राभ्यां प्राग्वदुत्पूय होतव्यं जुहुयात् । अधिकाशुद्धावन्यदाज्यमुपादाय यथाविधि संस्कार्यमिति भावः ।

श्रीव्या.

परिधिपरिधानम्

**परिधीन् परिदधाति मध्यमं स्थवीयसं पश्चाद्दीर्घं मध्यमं दक्षिणतः कनीयसमुत्तरतः संस्पृष्टान् ॥**

स्थवीयसं स्थवीयांसं स्थूलतमं मध्यममायामेन न्यूनमग्नेः पश्चाद्भागे । दीर्घं मध्यमं स्थौल्येन न्यूनमग्नेर्दक्षिणतः । कनीयसं कनीयांसमायामेन स्थौल्येन कनीयांसमग्नेरुत्तरतः । एवं त्रीन् परिधीन् परस्परसंस्पृष्टान् परिदधाति । विहितशुक्लसुमनोभिरग्न्यायतनमलंकुर्यात् ।

श्रीव्या.

परिषेचनम्

**दक्षिणतोऽग्नेरपां कोशं निनयति– 'अदितेऽनुमन्यस्व' इति । 'अनुमतेऽनुमन्यस्व' इति पश्चात् । 'सरस्वतेऽनुमन्यस्व' इत्युत्तरतः । 'देव सवितः प्रसुव' इति त्रिः प्रदक्षिणमग्निं परिषिञ्चेत् । 'देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय दिव्यो गन्धर्वः केतपूः केतं नः पुनातु वाचस्पतिर्वाचं नः स्वदतु' इति सकृद्यजुषा द्विस्तूष्णीम् ॥**

कोशं धारां निनयति सिञ्चति ।

श्रीव्या.

इध्माधानम्

**अथेध्ममादाय स्रुवेणाऽऽज्यं गृहीत्वाऽभिघार्याग्नावभ्यादधाति– 'अयं त इध्म आत्मा जातवेदस्तेन वर्धस्व चेध्यस्व चेन्धि वर्धय चास्मान् प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधय स्वाहा' इति ॥**

हे जातवेदः, अयमिध्मः ते आत्मा शरीरम् । तेन इध्मेन वर्धस्व च इध्यस्व च दीप्यस्व च, अस्मानिन्धि दीपय वर्धय च, प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन च समेधय संपन्नान् कुरुष्व च ।

श्रीव्या.

आघारौ आज्यभागौ च

**मनसाऽऽघारौ जुहोति संततमक्ष्णया 'प्रजापतये स्वाहा' इत्युत्तरं परिधिसंधिमन्ववहृत्य स्रुवम्, 'इन्द्राय स्वाहा' इति दक्षिणं परिधिसंधिमन्ववहृत्य । आघारौ हुत्वाऽऽज्यभागौ जुहोति 'अग्नये स्वाहा' इत्युत्तरतः 'सोमाय स्वाहा' इति दक्षिणतः ॥**

अग्नावेव । उत्तरं परिधिसंधिमनुगताद्देशात् वायुकोणादारभ्येत्यर्थः । अक्ष्णया विदिङ्मुखतया यावदाग्नेयकोणमित्यर्थः । स(? सं)ततं निरन्तरमाज्यमासिञ्चन् 'प्रजापतये स्वाहा' इति मनसोच्चरन् स्रुवमवहृत्य नीत्वा । अथ दक्षिणं परिधिसंधिमनुगताद्देशात् 'इन्द्राय स्वाहा' इति मनसा मन्त्रमुच्चरन्प्राग्वद्यावदीशानकोणं स्रुवं नीत्वा । एवमाघारौ नाम द्वे आहुती जुहोति ।

श्रीव्या.

आहुतिदेशः व्याहृतिहोमश्च

**तावन्तरेणाऽऽहुतिलोकः– 'भूः स्वाहा, भुवः स्वाहा, स्वः स्वाहा, भूर्भुवः स्वः स्वाहा' इति ॥**

तावाज्यभागदेशावन्तरेण, तयोर्मध्य इत्यर्थः । आहुतीनामासां चतसृणां वक्ष्यमाणानां च लोकः स्थानं भवतीति । एतावदग्निमुखं नाम सर्वाग्निकर्मणां पूर्वाङ्गम् ।

श्रीव्या.

पूर्वपूर्वाहुत्यपेक्षयोत्तरोत्तराहुतिदेशः

**उत्तरपूर्वामुत्तरपूर्वामाहुतिं जुहोत्यनभिजुह्वदाहुत्याऽऽहुतिं प्रत्यक् सौविष्टकृतस्थानात् ॥**

इदमादीनि परिभाषासूत्राण्या खण्डसमाप्तेः । स्विष्टकृत्संबन्धिनः स्थानात् प्रत्यक् आहुत्याऽऽहुतिमनभिजुह्वदसंयोजयन् हुतस्य हुतस्य उत्तरपूर्वामुत्तरपूर्वामाहुतिं जुहोति । श्रीव्या.

स्विष्टकृद्धोमः

**नित्योऽग्निः पुरस्तात्स्विष्टकृदन्तेऽन्यत्र वपाहोमाज्यहोमाभ्याम् ॥**

'लाजान्वपति' इति विधानात् वपनरूपहोमो लाजहोमः । लाजहोमाज्यहोमाभ्यामन्यत्र सर्वाहुतीनामन्ते सर्वाहुतीनामुत्तरपूर्वभागे स्विष्टकृदग्निर्नित्यः । 'अग्नये स्विष्टकृते स्वाहा' इति तदीयाहुतिर्नित्या सार्वत्रिकेत्यर्थः । श्रीव्या.

**न स्विष्टकृतं प्रत्यभिघारयति ॥**

अवदानानन्तरं स्थालीस्थे हविषि यत्प्रत्यभिघारणं विधास्यते तत्स्विष्टकृतमवदाय न कुर्यात्, शेषस्य स्विष्टकृत्प्रकारस्य अनभिधानात् । श्रीव्या.

अवदानधर्मः

**स्रुवे सकृदाज्यमुपस्तृणाति । द्विर्हविषोऽवद्यति । सकृदाज्येनाभिघार्य प्रत्यभिघारयति । अङ्गुष्ठेनाङ्गुलिभ्यां च मांससंहिताभ्यां द्विर्हविषोऽवद्यति । द्विराज्येनाभिघार्य प्रत्यभिघारयति । जामदग्न्यानां तद्धि पञ्चावत्तं भवति ॥**

उपस्तीर्य सकृदवदाय द्विरभिघारणमिति दर्शपूर्णमासत आनीयते द्विरवदानमपि पञ्चावत्तिनामिति च । प्रत्यभिघारयति स्थालीस्थं हविरिति शेषः । अङ्गुष्ठेन संनिधानात्तर्जनीमध्यमाभ्यां चाङ्गुलिभ्याम् । जामदग्न्यानां भार्गवाणाम् । तद्धि पञ्चावत्तं भवतीति पूर्वाचार्यमतानुवादः । प्रत्यभिघारणं विना स्रुवोपस्तरणेन सह पञ्च संख्या । श्रीव्या.

उपस्तरणाभिघारणसाधनम्, होमकल्पातिदेशः

**अङ्गुल्या तृणकूर्चेन वा । एषा होमावृत्सर्वत्र ॥**

विहितमुपस्तरणमभिघारणं चाङ्गुल्या तर्जन्या दर्भकूर्चेन वा कर्तव्यमित्यर्थः । श्रीव्या.

प्रस्तर—तृणानुप्रहरणम्

**सपवित्रं प्रस्तरमादत्ते । तस्याग्राणि स्रुवेऽनक्ति— 'दिव्यङ्क्ष्व' इति । मध्यमाज्ये 'अन्तरिक्षेऽङ्क्ष्व' इति । मूलानि हविषि 'पृथिव्यामङ्क्ष्व' इति । प्रस्तरात्तृणं निरस्यति— 'आयुषे त्वा' इति । प्रस्तरमग्नावनुप्रहरति— 'अग्नयेऽनुमतये स्वाहा' इति । पश्चात्तृणमनुप्रहरति— 'द्विषन्तं मेऽभिधेहि तं चैव प्रदह स्वाहा' इति ॥**

निरस्यति निष्कर्षति । अनुप्रहरति जुहोति । द्विषन्तं मे अभिधेहि जानीहि तं प्रतिदह चेति । श्रीव्या.

समिदाधानम्, प्रायश्चित्ताहुतयः

**घृतेनाक्ताः समिध आदधाति— 'समृद्ध्यै स्वाहा' इति । भूमिमारभ्य शीर्षण्यान् प्राणानुपस्पृशेत् । अप उपस्पृश्य द्वादश प्रायश्चित्ताहुतीर्जुहोति— 'आकूत्यै स्वाहा । कामाय स्वाहा । समृद्ध्यै स्वाहा । ऋचा स्तोमं समर्धय गायत्रेण रथन्तरम् । बृहद्गायत्रवर्तनि स्वाहा ॥ उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यं स्वाहा ॥ चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आ प्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च स्वाहा ॥ उद्वयं तमसस्परि स्वः पश्यन्तो ज्योतिरुत्तरम् । देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमं स्वाहा ॥ प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव । यत्कामास्ते जुहुमस्तन्नोऽस्तु वयं स्याम पतयो रयीणां स्वाहा ॥ भूः स्वाहा । भुवः स्वाहा । स्वः स्वाहा । भूर्भुवः स्वः स्वाहा ।' इति ॥**

दिक्षु अपामुत्सेकः

**अथाऽऽस्तीर्णान् दर्भानानीय प्रणीतानां च स्रुवस्य चोपरिष्टात् कृत्वाऽपस्नावयन् जपति– 'सदसि सन्मे भूयाः सर्वमसि सर्वं मे भूयाः पूर्णमसि पूर्णं मे भूया अक्षितमसि मा मे क्षेष्ठाः' इति । प्रतिदिशमप उत्सिञ्चति– 'प्राच्यां दिशि देवा ऋत्विजो मार्जयन्ताम्' इति । प्राचीनावीती– 'दक्षिणस्यां दिशि मासाः पितरो मार्जयन्ताम्' इति । यज्ञोपवीती भूत्वाऽप उपस्पृश्य –'प्रतीच्यां दिशि गृहाः पशवो मार्जयन्ताम्' इति । 'उदीच्यां दिश्याप ओषधयो वनस्पतयो मार्जयन्ताम्' इति । 'ऊर्ध्वायां दिशि यज्ञः संवत्सरो यज्ञपतिर्मार्जयन्ताम्' इति ॥**

दर्भान् परिस्तरणानि । सदसि शुभकरमसीति प्रणीताचमसं प्रति । ऋत्विजो देवाः पृथिव्यादयः । 'पृथिवी होता' इत्येवमादि श्रूयते । मासास्तु व्रताः । गृहा गेहाधिष्ठात्र्यः ।

श्रीव्या.

अपां निनयनम्, अक्षिविमार्जनम्, अग्नौ दर्भपरिध्याधानम्, वामदेव्यगानम्, पर्युक्षणम्

**'समुद्रं वः प्रहिणोमि' इत्यपो निनीय 'समुद्रं वः प्रहिणोम्यक्षिताः स्वां योनिमपि गच्छत । अरिष्टा अस्माकं वीराः सन्तु मा परासेचि नः स्वम् ॥' इति । 'यदप्सु ते सरस्वति' इत्यङ्गुष्ठेनोपकनिष्ठिकया चाक्षिणी विमृजेत् –'यदप्सु ते सरस्वति गोष्वश्वेषु यन्मधु । तेन मे वाजिनीवति मुखमङ्ग्धि सरस्वति ॥' इति । दर्भान् परिधींश्चाग्नावाधाय वामदेव्येन शान्तिं कृत्वा त्रिः पर्युक्षेत्सहविष्कं प्रदक्षिणम् । 'अन्वमंस्थाः, प्रासावीः' इति मन्त्रान्तान् संनमयेत् ॥**

दक्षिणादानम्

**पूर्णपात्रमुपनिहितं सा दक्षिणा । यथाश्रद्धदक्षिणाः पाकयज्ञाः पूर्णपात्रं वा ॥**

यथाश्रद्धं दक्षिणा येषां ते यथाश्रद्धदक्षिणाः इमे सर्वे पाकयज्ञा भवन्ति । विहितहिरण्यादौ ब्राह्मणविहितेतरदानं च यथाश्रद्धं भवेदित्यर्थः । विहितहिरण्यादिदानाशक्तौ सर्वपाकयज्ञेषु पूर्णपात्रमात्रं वा दक्षिणा भवति । दक्षिणा चाध्यापकाय तदभावे श्रोत्रियायेति वक्ष्यति ।

श्रीव्या.

## कौशिकगृह्यसूत्रम्

अविपर्यावृत्तिः अव्यवायः सुन्नजानुता च कर्तृधर्माः

**[1] 'नाग्निं विपर्यावर्तेत ॥**

**नान्तरा यज्ञाङ्गानि व्यवेयात् ॥**

**दक्षिणं जानु प्रभुज्य जुहोति ॥**

अग्निं पृष्ठतो नावसेत । दाकेंटी.

तण्डुलकरणार्थं कृष्णाजिनास्तरणं पवित्रकरणं च

**'कर्मणे वां वेषाय वां सुकृताय वाम्' इति पाणी प्रक्षाल्यापरेणाग्नेर्दर्भानास्तीर्य तेषूत्तरमानडुहं रोहितं चर्म प्राग्ग्रीवोत्तरलोम प्रस्तीर्य पवित्रे कुरुते ॥**

**दर्भावप्रच्छिन्नप्रान्तौ प्रक्षाल्यानुलोममनुमार्ष्टि – 'विष्णोर्मनसा पूते स्थः' इति ॥**

हविषो निर्वापः प्रोक्षणं च

**[2] 'त्वं भूमिमत्येष्योजसा त्वं वेद्यां सीदसि चारुरध्वरे । त्वां पवित्रमृषयो भरन्तस्त्वं पुनीहि दुरितान्यस्मत् ॥' इति पवित्रे अन्तर्धाय हविर्निर्वपति– 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याममग्नये जुष्टं निर्वपामि' इति ॥**

**निरुप्तं पवित्राभ्यां प्रोक्षति 'अमुष्मै त्वा जुष्टम् (प्रोक्षामि)' इति यथादेवतम् ॥**

अवघातः

**उलूखलमुसलं शूर्पं प्रक्षालितं चर्मण्याधाय व्रीहीनुलूखल ओप्यावघ्नंस्त्रिर्हविष्कृता वाचं विसृजति– 'हविष्कृदा द्रवेहि' इति ॥**

---

(१) कौसू. १।२६–२८, ३६–३७.

(२) कौसू. २।१, १.

चरुश्रपणम्

अपहृत्य सुफलीकृतान् कृत्वा त्रिः प्रक्षाल्य तण्डुलान् 'अग्ने चरुर्यज्ञियस्त्वाऽध्यरुक्षत्' इति चरुमधिदधाति ॥

'शुद्धाः पूताः' इत्युदकमासिञ्चति ॥

'ब्रह्मणा शुद्धाः' इति तण्डुलान् ॥

'परि त्वाऽग्ने पुरं वयम्' इति त्रिः पर्यग्नि करोति ॥

मेक्षणेन त्रिः प्रदक्षिणमुदायौति ॥

अत ऊर्ध्वं यथाकामम् ॥

इध्माबर्हिषोरासादनं प्रोक्षणं च

उत्तरतोऽग्नेरुपसादयतीध्मम् ॥

उत्तरं बर्हिः ॥

'अग्नये त्वा जुष्टं प्रोक्षामि' इतीध्मम् ॥

'पृथिव्यै' इति बर्हिः ॥

दर्भमुष्टिनिधानम्

दर्भमुष्टिमभ्युक्ष्य पश्चादग्नेः प्रागग्रं निदधाति– 'ऊर्णम्रदं प्रथस्व स्वासस्थं देवेभ्यः' इति ॥

ब्रह्मासनस्थापनम्

दर्भाणामुपादाय 'ऋषीणां प्रस्तरोऽसि' इति दक्षिणतोऽग्नेर्ब्रह्मासनं निदधाति ॥

'भूपते' इति ब्रह्मवरणम् । तथा च गोभिलब्राह्मणम्– 'प्रत्यक्षं वा दर्भमयं वा आसनं वा उदककमण्डलुं वा ब्रह्मस्थापने वा कुर्यात्' । दाकेटी.

परिस्तरणम्

पुरस्तादग्नेरास्तीर्य तेषां मूलान्यपरेषां प्रान्तैरवच्छादयन् परिसर्पति दक्षिणेनाग्निमा पश्चार्धात् ॥

'परिस्तृणीहि' इति संप्रेष्यति ॥

'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रसूतः प्रशिषा परिस्तृणामि' इति ॥

एवमुत्तरतोऽयुजो धातून् कुर्वन् ॥

यत्र समागच्छन्ति तद्दक्षिणोत्तरं करोति ॥

स्तीर्णं प्रोक्षति– 'हविषां त्वा जुष्टं प्रोक्षामि' इति ॥

कर्मसंनिपतितस्य संस्कारावश्यकता

नानभ्युक्षितं संस्तीर्णमुपयोगं लभेत ॥

नैधोभ्याधानम् ॥

नानुत्पूतं हविः ॥

नाप्रोक्षितं यज्ञाङ्गम् ॥

पात्रासादनम्

तस्मिन् प्रक्षालितोपवातानि निदधाति ॥

स्रुवमाज्यधानीं च ॥

आज्यसंस्कारः

विलीनपूतमाज्यं गृहीत्वाऽधिश्रित्य पर्यग्नि कृत्वोदगुद्वास्य पश्चादग्नेरुपसाद्योदगग्राभ्यां पवित्राभ्यामुत्पुनाति ॥

'विष्णोर्मनसा पूतमसि' ॥

'देवस्त्वा सवितोत्पुनातु' ॥

'अच्छिद्रेण त्वा पवित्रेण शतधारेण सहस्रधारेण सुप्वोत्पुनामि' इति तृतीयम् ॥

तूष्णीं चतुर्थम् ॥

हविःसंस्कारः

शृतं हविरभिघारयति– 'मध्वा समञ्जन् घृतवत्कराथ' इति ॥

अभिघार्योदश्चमुद्वासयति– 'उद्वासयाग्नेः शृतमकर्म हव्यमासीद पृष्ठममृतस्य धाम' इति ॥

पश्चादाज्यस्य निधायालंकृत्य 'समानेन' उत्पुनाति ॥

'अदारसृत्' इत्यवेक्षते ॥

'उत्तिष्ठत' इत्यैन्द्रम् ॥

इध्माधानम्

'अग्निर्भूम्याम्' इति तिसृभिरुपसमादधाति 'अस्मै क्षत्राण्येतमिध्मम्' इति वा ॥

[1] 'युनज्मि त्वा ब्रह्मणा दैव्येन हव्यायास्मै वोढवे जातवेदः । इन्धानास्त्वा सुप्रजसः सुवीरा ज्योग्जीवेम बलिहृतो वयं ते ॥' इति ॥

'युनज्मि त्वा' इत्येभिः पञ्चभिरिध्ममुपसमादधाति ।

दाकेटी.

उदपात्रासादनम्

दक्षिणतो जाङ्मायनमुदपात्रमुपसाद्याभिमन्त्रयते– 'तथोदपात्रं धारय यथाऽग्रे ब्रह्मणस्पतिः । सत्यधर्मा अदीधरद्देवस्य सवितुः सवे ॥' इति ॥

जाग्मा( ? ङ्मा )यनमुदपात्रं कांस्यपात्रमुपसाद्य ।

दाकेटी.

अथोदकमासिञ्चति– 'इहेत देवीरमृतं वसाना हिरण्यवर्णा अनवद्यरूपाः । आपः समुद्रो वरुणश्च राजा संपातभागान् हविषो जुषन्ताम् ॥ इन्द्रप्रशिष्टा वरुणप्रसूता अपः समुद्राद्दिवमुद्वहन्तु । इन्द्रप्रशिष्टा वरुणप्रसूता दिवस्पृथिव्याः श्रियमावहन्तु ॥' इति ॥

पर्युक्षणं प्रपदनं च

'ऋतं त्वा सत्येन परिषिञ्चामि जातवेदः' इति सह हविर्भिः पर्युक्ष्य जीवाभिराचम्योपोत्थाय वेदप्रपद्भिः प्रपद्यते– 'ओं प्रपद्ये भूः प्रपद्ये भुवः प्रपद्ये स्वः प्रपद्ये जनत् प्रपद्ये' इति ॥

'जीवास्थ' इति सूक्तेन त्रिराचामति । 'सत्यं बृहत्' इति नवभिः, 'शन्तिवा' इत्यृचा, 'उदायुषा' इति द्वाभ्यामुत्तिष्ठति ।

दाकेटी.

ब्रह्मोपवेशनम्

प्रपद्य पश्चात्स्तीर्णस्य दर्भानास्तीर्य 'आहे दैधिषव्योदतस्तिष्ठान्यस्य सदने सीद योऽस्मत्पाकतरः' इति ब्रह्मासनमन्वीक्षते ॥

'निरस्तः परावसुः सह पाप्मना निरस्तः सोऽस्तु योऽस्मान् द्वेष्टि यं च वयं द्विष्मः' इति दक्षिणा तृणं निरस्यति ॥

तदन्वालभ्य जपति– 'इदमहमर्वाग्वसोः सदने सीदाम्यृतस्य सदने सीदामि सत्यस्य सदने सीदामीष्टस्य सदने सीदामि पूर्तस्य सदने सीदामि मामृषदेव बर्हिः स्वासस्थं त्वाध्यासदेयमूर्णम्रदमनभिशोकम्' ॥

'विसृग्वरीम्' इत्युपविश्याऽऽसनीयं ब्रह्मजपं जपति– 'बृहस्पतिर्ब्रह्मा ब्रह्मसदन आसिष्यते बृहस्पते यज्ञं गोपाय यदुदुद्रत उन्निवतः शकेयम्' इति ॥

स्रुवसंस्कारः

दर्भैः स्रुवं निर्मृज्य 'निष्टप्तं रक्षो निष्टप्ता अरातयः प्रत्युष्टं रक्षः प्रत्युष्टा अरातयः' इति प्रतप्य ॥

मूले स्रुवं गृहीत्वा जपति– 'विष्णोर्हस्तोऽसि दक्षिणः पूष्णा दत्तो बृहस्पतेः । तं त्वाऽहं स्रुवमाददे देवानां हव्यवाहनम् ॥ अयं स्रुवो विदधाति होमाञ्छताक्षरश्छन्दसा जागतेन । सर्वा यज्ञस्य समनक्ति विष्ठा बार्हस्पत्येष्टिः शर्मणा दैव्येन ॥' इति ॥

ग्रहग्रहणम्

'ओं भूः शं भूत्यै त्वा गृह्णे भूतये' इति प्रथमं ग्रहं गृह्णाति ॥

'ओं भुवः शं पुष्ट्यै त्वा गृह्णे पुष्टये' इति द्वितीयम् ॥

'ओं स्वः शं त्वा गृह्णे सहस्रपोषाय' इति तृतीयम् ॥

'ओं जनच्छं त्वा गृह्णेऽपरिमितपोषाय' इति चतुर्थम् ॥

राजकर्माभिचारिकेषु 'अमुष्य त्वा प्राणाय गृह्णेऽपानाय व्यानाय समानायोदानाय' इति पञ्चमम् ॥

पुरस्ताद्धोमः

'अग्नावग्निर्हदा पूतं पुरस्ताद्युक्तो यज्ञस्य चक्षुः' इति जुहोति ॥

---

(१) कौसू. ३।१-२०.

पश्चादग्नेर्मध्यदेशे समानत्र पुरस्ताद्धोमान् ॥

उदपात्रे संपातानयनम्

दक्षिणेनाग्निमुदपात्र आज्याहुतीनां संपातानानयति ॥

पुरस्ताद्धोम आज्यभागः संस्थितहोमः समृद्धिः शान्तानामिति ॥

आज्यभागौ

एतावाज्यभागौ ॥

[1] 'वृष्णे बृहते स्वर्विदे अग्नये शुल्कं हरामि त्विषीमते । स नः स्थिरान्बलवतः कृणोतु ज्योक् च नो जीवातवे दधात्वग्नये स्वाहा ॥' इत्युत्तरपूर्वार्धे आग्नेयमाज्यभागं जुहोति ॥

दक्षिणपूर्वार्धे– 'सोमाय त्वं सोम दिव्यो नृचक्षाः सुगा अस्मभ्यं पथो अनुख्यः । अभि नो गोत्रं विदुष इव नेषोऽछा नो वाचमुशतीं जिगासि सोमाय स्वाहा ॥' इति ॥

प्रधानाहुतिदेशः

मध्ये हविः ॥

अवदानधर्मः

उपस्तीर्याऽऽज्यं संहताभ्यामङ्गुलिभ्यां द्विर्हविषोऽवद्यति मध्यात् पूर्वार्धाच्च ॥

अवत्तमभिघार्य द्विर्हविः प्रत्यभिघारयति ॥

यतो यतोऽवद्यति तदनुपूर्वम् ॥

एवं सर्वाण्यवदानानि ॥

अन्यत्र सौविष्टकृतात् ॥

साधारणाहुतयः

'उदेनमुत्तरं नय' इति पुरस्ताद्धोमसंहतां पूर्वाम् ॥

'उदेनमुत्तरं नय' इति त्रिभिर्ऋग्भिः 'प्रजापते न त्वद्' इति चतसृश्चर्वाहुतीर्जुहोति । 'त्वामग्ने' इत्यृचा चतस्र आज्याहुतीर्जुहोति । दाकेटी.

(१) कौसू. ४।१–१८.



आहुतीनां संहतत्वं देशश्च

एवं पूर्वां पूर्वां संहतां जुहोति ॥

स्वाहान्ताभिः प्रत्यृचं होमाः ॥

यामुत्तरामग्नेराज्यभागस्य जुहोति रक्षोदेवत्या सा, यां दक्षिणतः सोमस्य पितृदेवत्या सा ॥

तस्मादन्तरा होतव्या देवलोक एव हूयन्ते ॥

यां हुत्वा पूर्वामपरां जुहोति साऽपक्रामन्ती, स पापीयान् यजमानो भवति ॥

यां परां परां संहतां जुहोति साऽभिक्रामन्ती, स वसीयान् यजमानो भवति ॥

यामनग्नौ जुहोति साऽन्धा, तया चक्षुर्यजमानस्य मीयते, सोऽन्धभावुको यजमानो भवति ॥

यां धूमे जुहोति सा तमसि हूयते, सोऽरोचको यजमानो भवति ॥

यां ज्योतिष्मति जुहोति तया ब्रह्मवर्चसी भवति, तस्माज्ज्योतिष्मति होतव्यम् ॥

पार्वण– प्रधान– समृद्धि– होमस्थानम्

[1] प्राक् स्विष्टकृतः *पार्वणौ होमौ समृद्धिहोमाः काम्यहोमाश्च ॥

'पूर्णा पश्चात्' इति पौर्णमास्याम् ॥

'यत्ते देवा अकृण्वन् भागधेयम्' इत्यमावास्यायाम् ॥

* यद्यपि पार्वणेति समाख्यया 'पूर्णा पश्चात्' 'यत्ते देवा अकृण्वन्' इति पार्वणहोमयोः पार्वणस्थालीपाकाङ्गतैव प्रतीयते, तथाऽपि अथर्ववेदप्रथममन्त्रसायणभाष्ये दारिलकेशवटीकायां चोत्तरत्र संगृहीतायामुक्ते सामान्यतन्त्रे तयोः समावेशात् सर्वहोमसाधारणाङ्गतां प्रतिपद्यामहे । अत एवोत्तरं सूत्रद्वयमत्र संगृहीतम् । भाष्ये टीकायां च 'पार्वणहोमः' इत्येकवचनं तु जात्यभिप्रायं व्यवस्थाभिप्रायं वेति चिन्तनीयम् ।

(१) कौसू. ५।४–१२.

साधारणाज्यहोमः

'आकूत्यै त्वा स्वाहा। कामाय त्वा स्वाहा। समृधे त्वा स्वाहा। आकूत्यै त्वा कामाय त्वा समृधे त्वा स्वाहा। ऋचा स्तोमं समर्धय गायत्रेण रथन्तरम्। बृहद्गायत्रवर्तनि स्वाहा' ॥

'पृथिव्यामग्नये समनमन्' इति संनतिभिश्च ॥

'प्रजापते न त्वदेतान्यन्यः' इति च ॥

स्विष्टकृद्धोमः, सर्वप्रायश्चित्तीयहोमाः, प्रायश्चित्तहोमाः

उपस्तीर्याऽऽज्यं सर्वेषामुत्तरतः सकृत्सकृदवदाय द्विरवत्तमभिघारयति ॥

न हवींषि ॥

'आ देवानामपि पन्थामगन्म यच्छक्नवाम तदनु प्रवोढुम्। अग्निर्विद्वान् सं यजात् स इद्धोता सोऽध्वरान् स ऋतून्कल्पयात्यग्नये स्विष्टकृते स्वाहा॥' इत्युत्तरपूर्वार्धेऽवयुतं हुत्वा सर्वप्रायश्चित्तीयान् होमाञ् जुहोति ॥

'स्वाहेष्टेभ्यः स्वाहा' 'वषडनिष्टेभ्यः स्वाहा' 'भेषजं स्विष्ट्यै स्वाहा' 'निष्कृतिर्दुरिष्ट्यै स्वाहा' 'दैवीभ्यस्तनूभ्यः स्वाहा' 'अयाश्चाग्नेऽस्यनभिशस्तिश्च सत्यमित्त्वमया असि। अयासा मनसा कृतोऽयास्यं हव्यमूहिषे। अया नो धेहि भेषजं स्वाहा॥' इति, 'ओं स्वाहा' 'भूः स्वाहा' 'भुवः स्वाहा' 'स्वः स्वाहा' 'ओं भूर्भुवः स्वः स्वाहा' इति ॥

'स्वाहेष्टेभ्यः' इत्येवमादिभिरेकादशभिः सर्वप्रायश्चित्तीयान् जुहोति। 'यन्मे स्कन्नम्' 'पुनर्मैत्विन्द्रियम्' इति च द्वाभ्यामृग्भ्याम्। दाकेटी.

[1]'यन्मे स्कन्नं मनसो जातवेदो यद्वा स्कन्दद्धविषो यत्र यत्र। उत्प्रुषो विप्रुषः संजुहोमि सत्याः सन्तु यजमानस्य कामाः स्वाहा॥' इति ॥

'यन्मे स्कन्नम्' 'यदस्मृति' इति च स्कन्नास्मृतिहोमौ ॥

संस्थितहोमाः

'यदद्य त्वा प्रयति' इति संस्थितहोमाः ॥

चतुर्गृहीतहोमः

'मनसस्पते' इत्युत्तमं चतुर्गृहीतेन ॥

बर्हिरनुप्रहरणम्

बर्हिराज्यशेषेऽनक्ति— 'पृथिव्यै त्वा' इति मूलम्, 'अन्तरिक्षाय त्वा' इति मध्यम्, 'दिवे त्वा' इत्यग्रम् ॥

एवं त्रिः ॥

'सं बर्हिरक्तम्' इत्यनुप्रहरति यथादेवतम् ॥

संस्रावहोमः

स्रुवमग्नौ धारयति ॥

यदाज्यधान्यां तत्संस्रावयति— 'संस्रावभागास्तविषा बृहन्तः प्रस्तरेष्ठा बर्हिषदश्च देवाः। इमं यज्ञमभि विश्वे गृणन्तः स्वाहा देवा अमृता मादयन्ताम्॥' इति ॥

स्रुवनिधानम्

'स्रुवोऽसि घृतादनिशितः। सपत्नक्षयणो दिवि षीद। अन्तरिक्षे सीद पृथिव्यां सीदोत्तरोऽहं भूयासमधरे मत्सपत्नाः॥' इति स्रुवं प्राग्दण्डं निदधाति ॥

समिदाधानम्

'विमुञ्चामि ब्रह्मणा जातवेदसमग्निं होतारमजरं रथस्पृतम्। सर्वा देवानां जनिमानि विद्वान् यथाभागं वहतु हव्यमग्निरग्नये स्वाहा॥' इति समिधमादधाति ॥

'एधोऽसि' इति द्वितीयाम्, 'समिदसि' इति तृतीयाम् ॥

मुखनिमार्जनम्

'तेजोऽसि' इति मुखं विमार्ष्टि ॥

(१) कौसू. ६।१-३३.

विष्णुक्रमक्रमणम्

दक्षिणेनाग्निं त्रीन् विष्णुक्रमान् क्रमते– 'विष्णोः क्रमोऽसि' इति। दक्षिणेन पादेनानुसंहरति सव्यम् ॥

आदित्यदर्शनम्

'सूर्यस्याऽऽवृतम्' इत्यभिदक्षिणमावर्तते ॥

'अगन्म स्वः' इत्यादित्यमीक्षते ॥

'अगन्म स्वः' इति पर्यायद्वयेन। दाकेटी.

बर्हिषि उदपात्रनिनयनम्

'इन्द्रस्य वचसा वयं मित्रस्य वरुणस्य च। ब्रह्मणा स्थापितं पात्रं पुनरुत्थापयामसि ॥' इत्यपरेणाग्निमुदपात्रं परिहृत्योत्तरेणाग्निम् 'आपो हि ष्ठा मयोभुवः' इति मार्जयित्वा बर्हिषि पत्न्याञ्जलौ निनयति– 'समुद्रं वः प्रहिणोमि' इति, 'इदं जनासः' इति वा ॥

'वीरपत्न्यहं भूयासम्' इति मुखं विमार्ष्टि ॥

समिदाधानम्

'व्रतानि व्रतपतये' इति समिधमादधाति ॥

परिषेचनं शेषहविरुद्वासनं च

'सत्यं त्वर्तेन' इति परिषिच्योदश्चि हविरुच्छिष्टान्युद्वासयति ॥

दक्षिणा

पूर्णपात्रं दक्षिणा ॥

'नादक्षिणं हविः कुर्वीत, यः कुरुते कृत्यामात्मनः कुरुते' इति ब्राह्मणम् ॥

तस्मान्नादक्षिणम्। हविःशब्देनाऽऽज्यतन्त्रं पाकतन्त्रं चोच्यते। कर्ममात्रमभिमन्त्रणाद्यदक्षिणं न कुर्यात्। पाकतन्त्रे पूर्णपात्रं माणकं सेतिका प्रस्थद्रोणाढकादि। पूर्णपात्रं यजमानशक्त्यपेक्षम्, 'शक्त्या वा दक्षिणां दद्यान्नातिशक्तिर्विधीयते।' इत्युक्तं नवमे। आज्यतन्त्रे धेनुः। दाकेटी

ब्राह्मणभोजनम्

अन्वाहार्यं ब्राह्मणान् भोजयति ॥

यद्वै यज्ञस्यानन्वितं भवति तदन्वाहार्येणान्वाह्रियते ॥

एतदन्वाहार्यस्यान्वाहार्यत्वम् ॥

ईडया वा अन्ये देवाः सपर्येण्या अन्ये देवाः। ईडया देवा ब्राह्मणाः सपर्येण्याः ॥

यज्ञेनैवेड्यान् प्रीणात्यन्वाहार्येण सपर्येण्यान् ॥

तेऽस्योभे प्रीता यज्ञे भवन्तीति ॥

उक्ततन्त्रातिदेशः पाकयज्ञेषु

इमौ दर्शपूर्णमासौ व्याख्यातौ ॥

दर्शपूर्णमासाभ्यां पाकयज्ञाः ॥

आज्यतन्त्रे पाकतन्त्रे दर्शपूर्णमासधर्मा भवन्ति। पूर्वतन्त्रं च उत्तरतन्त्रं च सर्वेषु पाकतन्त्रेषु। सर्वमाथर्वणं कर्म पाकयज्ञशब्देनोच्यते। दाकेटी.

होमेषु व्युद्धारकल्पः

अथाप्यपरो हवनयोगी भवति ॥

कुम्भीपाकादेव व्युद्धारं जुहुयात् ॥

अधिश्रयणपर्यग्निकरणाभिघारणोद्वासनालंकरणोत्पवनैः संस्कृत्य ॥

आज्यतन्त्रमुच्यते– 'अध्यचसश्च', बर्हिर्लवनम्, वेदिः, उत्तरवेदिः, अग्निप्रणयनम्, अग्निप्रतिष्ठापनम्, व्रतग्रहणम्, पवित्रकरणम्, पवित्रेणेध्मप्रोक्षणम्, इध्मोपसमाधानम्, बर्हिःप्रोक्षणम्, ब्रह्मासनम्, ब्रह्मस्थापनम्, स्तरणम्, स्तीर्णप्रोक्षणम्, आत्मासनम्, उदपात्रस्थापनम्, आज्यसंस्कारः, स्रुवग्रहणम्, पुरस्ताद्धोमाः, आज्यभागौ, अभ्यातानान्तं पूर्वतन्त्रम्। अथ उत्तरतन्त्रमुच्यते– अभ्यातानादि, पार्वणहोमः, समृद्धिहोमाः, स्विष्टकृद्धोमः, सर्वप्रायश्चित्तीयहोमाः, स्कन्नहोमः, पुनर्मैत्विन्द्रियहोमः, स्कन्नास्मृतिहोमौ, संस्थितहोमाः, चतुर्गृहीतहोमः, बर्हिर्होमः, संस्रावहोमः, विष्णुक्रमाः, व्रतविसर्जनम्, दक्षिणादानम्, ब्रह्मोत्थापनम्, 'यस्मात्कोशात्' इत्येतदुत्तरतन्त्रम्। दाकेटी.

यथायज्ञविस्तारं यज्ञशालाविस्तारः

[1]यथावितानं यज्ञवास्त्वध्यवसेत् ॥

वेदिकरणम्

वेदिर्यज्ञस्याग्नेरुत्तरवेदिः ॥

उभे प्रागायते किंचित्प्रथीयस्यौ पश्चादुद्यततरे ॥

अपृथुसंमितां वेदिं विदध्यात् ॥

षट्शमीं प्रागायतां चतुःशमीं श्रोण्याम् ॥

त्रीन्मध्येऽर्धचतुर्थानग्रतः ॥

त्रयाणां पुरस्तादुत्तरवेदिं विदध्यात् ॥

द्विःशमीं प्रागायतामृज्वीमध्यर्धशमीं श्रोण्याम् ॥

'ग्रीष्मस्ते भूमे' इत्युपस्थाय ॥

'विमिमीष्व पयस्वतीम्' इति मिमानमनुमन्त्रयते ॥

'बृहस्पते परिगृहाण वेदिं सुगावो देवाः सदनानि सन्तु । अस्यां बर्हिः प्रथतां साध्वन्तरहिंस्रा णः पृथिवी देव्यस्तु ॥' इति परिगृह्णाति ॥

'यत्ते भूमे' इति विखनति ॥

'यत्त ऊनम्' इति संवपति ॥

'त्वमस्यावपनी जनानाम्' इति ततः पांसून्न्यतोदाहार्य ॥

'बृहस्पते परिगृहाण वेदिम्' इत्युत्तरवेदिमोप्यमानां परिगृह्णाति ॥

'असंबाधं बध्यतो मानवानाम्' इति प्रथयति ॥

'यस्याश्चतस्रः प्रदिशः पृथिव्याः' इति चतुरस्रां करोति ॥

रेखाकरणम् अग्निस्थापनं च

'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे' इति लेखनमादाय यत्राग्निं निधास्यन्भवति तत्र लक्षणं करोति ॥

'इन्द्रः सीतां निगृह्णातु' इति दक्षिणत आरभ्योत्तरत आलिखति ॥

प्राचीमावृत्य दक्षिणतः प्राचीम् ॥

अपरास्तिस्रो मध्ये ॥

तस्यां व्रीहियवावोप्य ॥

'वर्षेण भूमिः पृथिवी वृताऽऽवृता' इत्यद्भिः संप्रोक्ष्य ॥

'यस्यामन्नं व्रीहियवौ' इति भूमिं नमस्कृत्य ॥

अथाग्निं प्रणयेत्—'त्वामग्ने भृगवो नयन्तामङ्गिरसः सदनं श्रेय एहि । विश्वकर्मा पुर एतु प्रजानन्धिष्ण्यं पन्थामनु ते दिशाम ॥' इति ॥

'भद्रश्रेयःस्वस्त्या' वा ॥

'अग्ने प्रेहि' इति वा ॥

'विश्वंभरा वसुधानी प्रतिष्ठा' इति लक्षणे प्रतिष्ठाप्य ॥

इध्माधानम्

अथेध्ममुपसमादधाति ॥

'अग्निर्भूम्यामोषधीषु, अग्निर्दिव आ तपति, अग्निवासाः पृथिव्यसितजूः (? ज्ञूः), एतमिध्मं समाहितं जुषाणः, अस्मै क्षत्राणि धारयन्तमग्ने' इति पञ्चभिः स्तरणम् ॥

दर्भसंस्तरणम्

अत ऊर्ध्वं बर्हिषः ॥

'त्वं भूमिमत्येष्योजसा' इति दर्भान्संप्रोक्ष्य ॥

'ऋषीणां प्रस्तरोऽसि' इति दक्षिणतोऽग्नेर्ब्रह्मासनं निदधाति ॥

पुरस्तादग्नेरुदक्संस्तृणाति ॥

तथा प्रत्यक् ॥

प्रदक्षिणं बर्हिषां मूलानि च्छादयन्तो(? यन्तो = यन् आ उ)त्तरस्या वेदिश्रोणेः पूर्वोत्तरतः संस्थाप्य ॥

ब्रह्मोपवेशनम्

'अहे दैधिषव्योदतस्तिष्ठान्यस्य सदने सीद योऽस्मत्पाकतरः' इति ब्रह्माऽऽसनमन्वीक्षते ॥

(१) कौसू. १३७।१-४३.

'निरस्तः पराग्वसुः सह पाप्मना निरस्तः सोऽस्तु योऽस्मान्द्वेष्टि यं च वयं द्विष्मः' इति दक्षिणा तृणं निरस्यति ॥

तदन्वालभ्य जपति— 'इदमहमर्वाग्वसोः सदने सीदाम्यृतस्य सदने सीदामि सत्यस्य सदने सीदामीष्टस्य सदने सीदामि पूर्तस्य सदने सीदामि मामृषदेव बर्हिः स्वासस्थं त्वाध्यासदेयमूर्णम्रदमनभिशोकम्' ॥

'विमृग्वरीम्' इत्युपविश्याऽऽसनीयं ब्रह्मजपं जपति— 'बृहस्पतिर्ब्रह्मा ब्रह्मसदन आसिष्यते बृहस्पते यज्ञं गोपाय यदुदुद्वत उन्निवतः शकेयम्' ॥

'पातं मा द्यावापृथिवी अद्यान्नः' इति द्यावापृथिव्यौ समीक्षते ॥

सर्वकर्मणामाद्यन्तयोरभ्यातानहोमः

'सविता प्रसवानाम्' इति कर्मणि कर्मण्यभितोऽभ्यातानैराज्यं जुहुयात् ॥

व्याख्यातं सर्वपाकयज्ञियं तन्त्रम् ॥

## वैखानसगृह्यसूत्रम्

स्थण्डिलकरणम् अग्निस्थापनं च

'अथाग्न्यायतनम्। प्राक्प्रवणे वोत्तरप्रवणे वा शुद्धे देशे गोमयेनोपलिप्ते शुद्धाभिः सिकताभिः प्राक्पश्चिमं दक्षिणोत्तरं च द्वात्रिंशदङ्गुल्यायतं द्व्यङ्गुलोन्नतं यथालाभोन्नतं वा स्थण्डिलमग्न्यायतनं भवति ॥

अथाऽऽघारविधानम्। ब्राह्मं प्राङ्मुखमासीनः 'एतो न्विन्द्रम्' इत्यग्न्यालयं प्रोक्ष्य 'मयि देवाः' इत्यादिभिश्चतुर्दिशं दर्भानुक्षयेत्। उद्धन्यमानमिति मध्यपूर्वापरयमाग्निनिर्ऋतिसोमेशानमरुतो बर्हिषा खनति। 'तथा पूत ह्यातन' इति षड्रेखा लिखित्वा 'अष्टावन्धम्' इति वक्रितं दर्भं दक्षिणपश्चिमस्यामुत्सृज्य रेखा गायत्र्या प्रोक्ष्य 'जातवेदो भुवनस्य' इत्यरणिं गृहीत्वा मथितं लौकिकं वाऽग्निमादायाऽऽहरेत। 'घृतप्रतीकः' इति प्रज्वाल्य 'आयुर्दा' इति प्रणम्य 'उपावरोह' इति निधाय 'अग्न आ याहि' 'अयं ते योनिः' इति प्रज्वाल्य 'मयि गृह्णामि' इत्यभिवन्द्य 'कर्मणे वाम्' इति करौ प्रक्षालयति ॥

वेदिपरिमार्जनम्

'इदमापः शिवाः' इत्यपोऽभिमन्त्र्य 'अदितेऽनुमन्यस्व दक्षिणतो वेदिं परिमृजामि' इति दक्षिणवेदिं नैर्ऋत्याद्यन्तम्, 'अनुमतेऽनुमन्यस्व पश्चिमतो वेदिं परिमृजामि' इति तथा पश्चिमवेदिम्, 'सरस्वतेऽनुमन्यस्वोत्तरतो वेदिं परिमृजामि' इत्युत्तरवेदिं वायव्याद्यन्तम्, 'देव सवितः प्रसुव पुरस्ताद्वेदिं परिमृजामि' इति पूर्ववेदिं चाऽऽग्नेयाद्यन्तमङ्गुलीरास्तीर्य साधावेन पाणिना कूर्चेन वा परिमृज्य गायत्र्या वेदीः प्रोक्षयति ॥

ब्रह्मसोमयोर्वरणं प्रोक्षणं च

ब्रह्मसोमावृत्विजौ वरयित्वाऽध्वर्युः 'ओं भूपते भुवनपते' इति प्रत्येकं प्रेक्ष्य ताभ्याम् 'अहं भूपतिः' इत्युक्ते 'ब्रह्मन् सोम प्रोक्षिष्यामि' इत्यन्तं तथोक्त्वा पुनस्ताभ्यां 'प्रोक्ष' इत्युक्तस्तथा प्रोक्षयति ॥

बर्हिरादिप्रोक्षणं परिस्तरणं परिधानं च

पात्रादाधावमादाय 'पवित्रे स्थः' इति वेद्यां बर्हिषः स्थापयित्वा तान् 'परशुरसि' इति प्रोक्ष्य समिधो मुक्तबन्धाः 'कृष्णोऽसि' इति, 'वेदिरसि' इति वेदिम्, स्रुवादीन् बर्हिषः 'बर्हिरसि स्रुग्भ्यः' इति, बर्हिषोऽग्रं 'दिवे त्वा' इति, मध्यम् 'अन्तरिक्षाय' इति, मूलं 'पृथिव्यै त्वा' इति प्रोक्षयति। 'पोषाय त्वा' इत्यपो बर्हिर्बन्धने संस्राव्य 'स्वधा

(१) वैगृ. ११८, ९–२१.

पितृभ्यः' इति सापसव्यं दक्षिणतः प्रोक्ष्यापां शेषं पश्चिमस्यामुत्तरान्तम् 'ऊर्भव' इति स्रावयेत्। 'उभाभ्याम्' इति पाणी प्रक्षालयति। 'पूषा ते' इति बर्हिर्बन्धं विसृज्य मूलादूर्ध्वम् 'आदित्यं व्यञ्जनमसि' इत्यभिमृश्य पश्चिमतो वेद्यधस्तादुत्तराग्रम् 'ऊर्णाम्रदसम्' इति दर्भैः परिस्तीर्य 'स्वासस्थं देवेभ्यः' इति प्रागग्रं स्वासने चैकं निधाय 'विष्णोः स्तूपोऽसि' इति प्राच्यां 'दक्षिणतः' इति याम्याम् 'उत्तरतः' इत्युदीच्यां 'पश्चिमतः' इति प्रतीच्यां प्रागुत्तराग्रं परिस्तृणात्युत्तराग्रमैशान्यामूर्ध्वं कृत्वा। 'गन्धर्वोऽसि' इति पश्चिमस्याम् 'इन्द्रस्य' इति याम्यां 'मित्रावरुणौ' इत्युदीच्यां वेद्यां प्रागुत्तराग्रान् परिधीन् परिदधाति॥

परिषेचनम्, प्रणीताप्रणयनसंस्कारः, प्रणीताप्रणयनम्

वायव्यामुत्तराग्रमूर्ध्वं करोति। 'सूर्यस्त्वा' इति प्राच्यामुत्तरान्तम् 'उपरिष्टात्' इत्यूर्ध्वम् 'अधस्ताद्भूमाः' इत्यधश्च परिषिच्य 'वीतिहोत्रम्' इत्यग्न्यालये समिधावग्नीशयोर्दिशोरूर्ध्वाग्रे निदधाति। 'परिस्तीर्यम्' इत्यादिनैन्द्राद्यमुदगन्तमार्षेणापो दत्त्वा 'सृतासि' इत्यादिभिर्दक्षिणादि तेनैव प्रागन्तमुत्तरान्तं च परिषिच्य 'तरुणासि' इत्याग्नेयादीशानान्तं प्रदक्षिणमाग्नेयान्तमद्भिः परिषिञ्चति। 'वानस्पत्योसि' इति प्रणिधी प्रक्षाल्य 'पृथिव्यापो ग्रहीष्यामि' इति साक्षतमद्भिरापूर्य 'वसूनां पवित्रम्' इत्युदगग्रे पवित्रे प्रक्षिप्य दक्षिणेन पाणिनाऽग्रमितरद्वामेन गृहीत्वा 'देवो वः सविता' इति त्रिरुत्पूय तथा निदधाति। 'ब्रह्मन्नपः' इति 'सोमापः' इति च ब्रह्मसोमावृत्विजौ प्रत्येकं प्रेक्ष्य ताभ्यां तथा 'प्रणय' इत्युक्तः 'को वः' इति प्रणीय वेद्यां दक्षिणोत्तरयोः प्रणिधी निधाय 'संविशन्ताम्' इति कूर्चेन जलं संस्राव्य गायत्र्या स्रुवं प्रोक्षयेत्॥

स्रुवसंस्कारः, आज्यसंस्कारः, समित्स्थापनादि

'भूः स्रुवं गृह्णामि' इति स्रुवं गृहीत्वा 'वर्षिष्ठे अधि नाके' इति वेद्यधस्तात्समिधौ न्यस्य 'अहीनो निर्वपामि' इति स्रुवं प्रक्षाल्य 'निर्दग्धम्' इति पर्यग्नि कृत्वा 'निष्टप्तम्' इति समिधोर्निदध्यात्। 'अदितिरस्यच्छिद्रा' इत्याज्यस्थालीं गृहीत्वोत्तरे 'भूतकृतः स्थोपोढम्' इत्यङ्गारं न्यस्य 'सगराः स्थ' इति विन्यस्य 'महीनाम्' इति पचति। पूर्ववत्पवित्रेण त्रिरुत्पूयाऽऽज्यस्थाल्याः पृष्ठभस्म 'इदं विष्णुः' इति वेदेन शोधयित्वा 'उद्भवः स्थोदहम्' इति बर्हिर्दग्ध्वाऽङ्गारम् 'अन्तरितम्' इत्याज्यस्य दर्शयति। दक्षिणतोऽङ्गारं गायत्र्या न्यस्य तथैव चरुस्थालीमधिश्रित्य दर्भोल्केन पक्त्वाऽवतारयति। पवित्रेणाऽऽज्यं पात्रे त्रिरुत्पूय 'घर्मोऽसि' इति ग्रन्थिं विसृज्योत्तरपश्चिमे निधायाद्भिः प्रोक्ष्य 'आप्यायन्ताम्' इति पवित्रं जुहोति। 'वीतिहोत्रम्' इति समिदग्रं घृताक्तं वायव्येऽग्नौ स्थापयित्वा 'देवस्य त्वा' इति स्रुवेण होम्यं द्विधा विहरति॥

देवतावाहनम्, निर्वापादि

दक्षिणप्रणिधौ ब्राह्मेण तीर्थेन प्रजापतिपुरोगान् 'आवाहयामि' इत्युत्तरप्रणिधौ दैवेनाग्न्यादीन् 'औपासनयज्ञं यज्ञदैवतविश्वान्देवान् सर्वदेवानावाहयामि' इत्यन्तं पैतृके 'वैश्वदेवयज्ञं यज्ञदैवतविश्वान्देवानावाहयामि' इत्यन्तमावाहयेत्। यथावाहनं स्रुवेणाऽऽज्यमूर्ध्वं नीत्वा 'जुष्टं निर्वपामि' इति निर्वापं करोति। तृण्यधिद्वयेन द्विधाऽग्नौ होम्यं दर्शयित्वाऽग्निर्ज्योतिर्द्वयेन समिदुल्केन द्विधा दहति। 'समिदसि स्वाहा' इति समिधं जुहोति। स्रुवेणाऽऽज्यं गृहीत्वा 'अमृतमसि' इत्यनुत्तानम् 'अन्तरितम्' इत्युत्तानं 'प्रत्युष्टम्' इत्यनुत्तानं होम्यं प्रदक्षिणमभि-

मन्त्र्याऽऽज्यं गृहीत्वोत्तानं स्वतो दक्षिणतो वामतः प्रणीतायां संधाय चित्पतिस्त्वादिभिस्त्रिभिरेव त्रिधाऽग्नौ संवपति ॥

पर्युक्षणम् , इध्महवनम् , चन्द्रमआप्यायनम्

गायत्र्या समिधः प्रोक्ष्यैकविंशतिराहुतिप्रमाणाः करसंपूर्णा वा समिधो गृहीत्वा मूलाग्राभ्यां घृतं स्पर्शयित्वाऽभ्यचर्याक्षताज्यचरुभिः 'इमा मे अग्ने' इति मूलमध्याग्राणि स्पृशन्नधो नीत्वोर्ध्वभागे मध्ये च संदधाति। दैवेन तीर्थेन दक्षिणस्यामद्भिः प्रागन्तम् 'अदितेऽनुमन्यस्व' इति पश्चिमस्यामुत्तरान्तम् 'अनुमतेऽनुमन्यस्व' इत्युत्तरस्यां प्रागन्तं 'सरस्वतेऽनुमन्यस्व' इति 'देव सवितः प्रसुव' इति पूर्वस्यामुदगन्तमाग्नेयान्तं सर्वतश्च प्रदक्षिणं परिषिञ्चति। 'षष्टिं शता' इत्यभिमन्त्र्य 'अयं त इध्मः' इतीध्मानशता' इत्यभिमन्त्र्य संकुलाञ्छरोऽङ्गारेऽग्नौ जुहुयात्। यस्यै देवतायै हविर्निरुप्यते तां देवतां मनसा ह वै ध्यायन्निर्वपेत्। 'यथा ह वाऽस्य सुषुम्ना ज्योतिष्मती प्राणवती रेतोधाः' इत्येता हुतं गृहीत्वा 'रश्मयश्चतस्रः पृश्नौ संदधीरन् स ह वा शुद्धामृतवहा चितुही दिव्या लोकपावनी' इत्येताभिश्चन्द्रमसमाप्याययति। 'असौ नु राजा सोम आप्यायितो मूलगामी वपायन्यमृतोद्गारी सुरप्रिया' इत्येताभिरमृतेन तां देवतां तर्पयति ॥

आघाराज्यभागाज्याहुतिरूपमग्निमुखम् , आज्याहुतयः

स्रुवेणाऽऽज्यं स्रावयन्परिधी स्पृष्ट्वा वायव्याद्याग्नेयान्तं 'प्रजापतये स्वाहा' इति नैऋत्यादीशानान्तम् 'इन्द्राय स्वाहा' इत्याघारौ जुहुयात्। चक्षुषी बुद्ध्वा 'अग्नये स्वाहा' 'सोमाय स्वाहा' इत्याज्यभागावुत्तरदक्षिणयोर्जुहोति। 'युक्तो वह' इति पश्चिमादिसौम्यान्तं 'या तिरश्ची' इति सौम्यादीन्द्रान्तं 'संराधन्यै देव्यै स्वाहा' इतीन्द्रादियाम्यान्तं 'प्रसाधन्यै देव्यै स्वाहा' इति याम्यादिवारुणान्तं स्रावयन् हुत्वा मध्यमास्यमिति बुद्ध्वा तत्र व्याहृतीर्जुहोति। तदग्निमुखमिति ब्रह्मवादिनो वदन्ति। 'सत्येन' इत्यभिमृश्याऽऽज्येन जुहोति 'अग्नये स्वाहा, सोमाय स्वाहा, अग्नीषोमाभ्यां स्वाहा, प्रजापतये स्वाहा, ब्रह्मणे स्वाहा, इन्द्राय स्वाहा, वसुभ्यः स्वाहा, मरुद्भ्यः स्वाहा, रुद्रेभ्यः स्वाहा, विष्णवे स्वाहा, बृहस्पतये स्वाहा, मित्राय स्वाहा, वरुणाय स्वाहा, आदित्येभ्यः स्वाहा, अश्विभ्यां स्वाहा, पूष्णे स्वाहा, कक्षाय स्वाहा, कक्षदैवतसोमाय स्वाहा, औपासनयज्ञाय स्वाहा, यज्ञदैवतविश्वेभ्यो देवेभ्यः स्वाहा, सर्वदेवेभ्यः स्वाहा' इत्यन्तं हुत्वा दर्व्याऽभिघार्य चरुं सावित्र्या गृहीत्वा जुह्वा व्याहृतीर्जुहोति। 'अतो देवाः' 'इदं विष्णुः' इत्याज्यं समृद्ध्यै जुहुयात्। पैतृके 'वैश्वदेवयज्ञाय स्वाहा, यज्ञदैवतविश्वेभ्यो देवेभ्यः स्वाहा' इत्यन्तं हुत्वा पक्वं जुहुयात्। इति सर्वहोमानामादिराघारो विज्ञायते ॥

सामान्यतः क्रियाया होममन्त्राः

अथ सामान्यतः क्रियाया होममन्त्राः। 'धाता ददातु नो रयिम्' 'धाता प्रजायाः' 'धाता ददातु नो रयिं प्राचीम्' 'धाता ददातु दाशुषे' 'अनु नोऽद्यानुमतिः' 'अन्विदनुमते त्वम्' 'आ मा वाजस्य' 'समाववर्ति' 'अनुमन्यताम्' 'यस्यामिदम्' 'राकामहम्' 'यास्ते राके' 'सिनीवालि' 'या सुपाणिः' 'कुहूमहम्' 'कुहूर्देवानाम्' इति धातादि षोडश ॥

'इमं मे वरुण' 'तत्त्वा यामि' 'त्वं नो अग्ने' 'स त्वं नो अग्ने' 'त्वमग्ने अयास्ययासन्' इति पञ्च वारुणम्। 'प्रजापते न त्वत्' 'प्रजापतिर्जयान्' इत्युपांशुयाजे प्राजापत्ये ॥

जयहोमः

'चित्तं च चित्तिश्चाऽऽकूतं चाऽऽकूतिश्च विज्ञातं चाविज्ञानं च मनश्च शक्करीश्च दर्शश्च पूर्णमासश्च बृहच्च रथंतरं च स्वाहा' इति चित्तादि द्वादश जयाः ॥

अभ्यातानहोमः

'अग्निर्भूतानामधिपतिः स माऽवत्विन्द्रो ज्येष्ठानां यमः पृथिव्या वायुरन्तरिक्षस्य सूर्यो दिवश्चन्द्रमा नक्षत्राणां बृहस्पतिर्ब्रह्मणो मित्रः सत्यानां वरुणोऽपां समुद्रः स्रोत्यानामन्नं साम्राज्यानामधिपति तन्माऽवतु सोम ओषधीनां सविता प्रसवानां रुद्रः पशूनां त्वष्टा रूपाणां विष्णुः पर्वतानां मरुतो गणानामधिपतयस्ते माऽवन्तु पितरः पितामहाः परेऽवरे' इत्यष्टादशाग्निर्भूतादयोऽभ्यातानाः ॥

राष्ट्रभृद्धोमः

'ऋताषाडृतधामाऽग्निर्गन्धर्वस्तस्यौषधयोऽप्सरस ऊर्जो नामेति संहितो विश्वसामा सूर्यो गन्धर्वस्तस्य मरीचयोऽप्सरस आयुवो नामेति सुषुम्नः सूर्यरश्मिश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसो बेकुरयो नामेति भुज्युः सुपर्णो यज्ञो गन्धर्वस्तस्य दक्षिणा अप्सरसः स्तवा नामेति प्रजापतिर्विश्वकर्मा मनो गन्धर्वस्तस्यर्क्सामान्यप्सरसो वह्नयो नामेति इषिरो विश्वव्यचा वातो गन्धर्वस्तस्यापोऽप्सरसो मुदा नामेति भुवनस्य पत इति परमेष्ठ्यधिपतिर्मृत्युर्गन्धर्वस्तस्य विश्वमप्सरसो भुवो नामेति सुक्षितिः सुभूतिर्भद्रकृत्सुवर्वान्पर्जन्यो गन्धर्वस्तस्य विद्युतोऽप्सरसो रुचो नामेति दूरेहेतिरमृडयो मृत्युर्गन्धर्वस्तस्य प्रजा अप्सरसो भीरुवो नामेति चारुः कृपणकाशी कामो गन्धर्वस्तस्याऽऽधयोऽप्सरसः शोचयन्तीर्नामेति स नो भुवनस्य पते' इति । ऋताषाडृतादि भुवनस्य स न इति वर्जयित्वा प्रत्येकं ताभ्योऽन्ता राष्ट्रभृतो द्वादश । इति प्राजापत्यादि मूलहोमः । बभूवपैतृकयच्छान्ते व्याहृतिः ॥

स्विष्टकृद्धोमः, प्रायश्चित्ताहुतयः, समिदाहुतयः, पूर्णाहुतिः, चर्वाहुतिः, संस्रावहोमः, आज्यशेषाहुतिः

अथान्ते होममन्त्राः । 'यदस्याग्नये स्विष्टकृतेऽग्नयेऽन्नादायाग्नयेऽन्नपतये प्रजापतय इन्द्राय विश्वेभ्यो देवेभ्यः सर्वाभ्यो देवताभ्यः'। सर्वत्रैव 'अग्नये स्विष्टकृते वास्तुपते' इति स्विष्टाकारः । 'यन्म आत्मनः' 'पुनरग्निश्चक्षुः' इति मिन्दाहुती । 'इष्टेभ्यः' इत्यादि दशान्ते व्याहृतिरित्यृद्धिः । 'आश्रावितम्' 'ब्रह्म' 'यदकर्म' इति कृतान्तम् । 'यत्प्रमत्तः' 'मनो ज्योतिः' 'अयाश्चाग्ने' 'यदस्मिन्' 'स्वस्ति नः' 'यत इन्द्र' इति विच्छिन्नम् । 'एधोऽस्येधिषीमहि स्वाहा' बैल्वम् । 'समिदसि तेजोऽसि तेजो मयि धेहि स्वाहा' पालाशम् । 'यमस्य धीमहि मृत्योर्मे पाहि स्वाहा' नैयग्रोधम् । 'सूर्यस्य धीमहि चक्षुर्मे पाहि स्वाहा' आश्वत्थम् । 'सोमस्य धीमहि चित्तं मे पाहि स्वाहा' औदुम्बरम् । 'वायोर्धीमहि प्राणान्मे पाहि स्वाहा' शमीम् । 'ब्रह्मणो धीमहि बुद्धिं मे पाहि स्वाहा' खादिरमिति सप्त समिधः । 'सप्त ते अग्ने, ऋतुधा न' इति पूर्णाहुती । 'अग्निर्भुक्तम्' इत्युपजुह्वामाज्यं गृहीत्वा 'अग्निर्जीर्णम्' इति जुह्वा चरुमवदाय हुत्वा 'समङ्क्तां बर्हिः' इति स्रावयञ् जुहोति । ततो वामेन स्रुवं गृहीत्वा दक्षिणेनाऽऽज्यपात्रं संगृह्याग्नेरुपरि धारयन्नाज्यशेषम् 'इन्द्राय स्वाहा' इति जुहुयात् ॥

तर्पणम्

तत्पात्रेणाऽऽधावमादाय स्रुवेणान्तरितम् 'अग्निस्तृप्यतु' इत्युपाग्नि पश्चिमतः, 'वेदिस्तृप्यतु' इति वेद्याम्, 'द्यौस्तृप्यतु' इत्याकाशे,

'पृथिवी तृप्यतु' इति भूमौ, 'ब्रह्माद्यास्तृप्यन्ताम्' इति दक्षिणस्यां तर्पयति। प्रणीतायां दक्षिणस्यां दैवेनापो गृहीत्वा 'ओषधिवनस्पतिगन्धर्वाप्सरसश्चैव तृप्यन्ताम्' इत्युत्तरस्यां वेद्यां तर्पयति। तथोत्तरस्यां प्रणीतायां सापसव्यमपो गृहीत्वा पैतृकेण दक्षिणतः 'पितरः पितामहाः प्रपितामहाश्चाक्षय्यमस्तु तृप्यन्ताम्' इति दक्षिणस्यां तर्पयति॥

प्रवाहणम्, पवित्रहोमः, दिक्परिषेकः, आधावस्रावः, प्रणिधिजलस्रावः, प्रणिधिविसर्जनम्

'प्रासावीः' इत्यन्तैश्चतुर्भिः प्रवाहणं कृत्वा दक्षिणादिप्रणिध्योरुपान्ताङ्गुष्ठानामिकाभिः पवित्रमक्षतं गृहीत्वा 'पवित्रमसि' 'पूर्णमसि' 'सदसि' 'सर्वमसि' इति पर्यायतो जुहोति। 'अक्षितमसि' इति प्रणिधिमुत्तरां चालयित्वा तदाधावेन 'प्राच्यां दिशि' 'दक्षिणायां दिशि' 'प्रतीच्यां दिशि' 'उदीच्यां दिशि' 'ऊर्ध्वायां दिशि' 'अधोधराधरैः' इति यथादिशं परिषिच्य 'माऽहं प्रजाम्' इति गृहीत्वा दक्षिणप्रणिधौ स्वल्पमाधावं स्रावयित्वा 'स्वां योनिम्' इति दक्षिणप्रणिध्यां जलमुदकपात्रे स्रावयति। आपो हि ष्ठादिना तदद्भिः प्रोक्ष्य प्रणिधी विसर्जयति॥

स्रुवविसर्जनम्, वर्षिष्ठसमिदादिहोमाः, अविच्छिन्नदाहः, विभूतिधारणम्, प्रोक्षणम्, अग्न्यादित्योपस्थानम्, अग्निविसर्जनम्

'पुनर्देवेभ्यो हव्यं वह' इत्यग्नेर्दर्शनेन स्रुवं विसृज्य 'वर्षिष्ठा गह्वरेष्ठोऽग्रम्' इति वर्षिष्ठसमिधौ जुहुयात्। 'ऊर्ध्वं यज्ञं नयतम्' इत्यूर्ध्वेसमिधौ। 'पश्चिमतः परिधिमपनय' इत्येवं 'दक्षिणतः' 'उत्तरतः' (इति) च परिधीन्। 'पश्चिमतो विष्णोः सदनमसि' इत्येवं 'दक्षिणतः' 'उत्तरतः' 'प्राच्याम्' इति च परिस्तरणबर्हिषः सर्वान्परिसमूह्य 'आप्यायन्ताम्' इति जुहोति। 'शुध्यन्तां पितृषदनं शुध्यन्तां देवसदनम्' इत्यविच्छिन्नमास्तीर्य नैर्ऋते दहेत् 'अविच्छिन्नेन ब्रह्मवर्चसाय' इति। 'भूतिः स्म' इति भस्म गृहीत्वा ललाटहृद्बाहुकण्ठादीन् 'आदित्यः सोमो नमः' इत्यूर्ध्वाग्रमालिप्य 'आपो हि ष्ठा' इति प्रोक्ष्य 'ओं च मे स्वरः' इति 'बालकृतं वा' इति चाग्निं पूर्ववदादित्यं चोपस्थाय पुनर्वेदिमूलमासाद्याग्निं वैश्वानरसूक्तेनोपस्थाय प्रणामं कुर्यादिति क्रियान्ते होमः। 'ओं च मे स्वरः' इति लौकिकाग्निविसर्जनमिति विज्ञायते॥

क्रियालोपादिनिमित्तकप्रायश्चित्तानि

'सर्वस्याऽऽदावाघारे क्रियालोपे विपर्यासे च व्याहृतीर्महाव्याहृतीर्गायत्रीं सावित्रीं मिन्दाहुती वैष्णवं च द्विरावर्त्य हुत्वा पुनराघारं जुहोति। स्थण्डिले परिस्तरणादिसंभारे च प्रमाणवर्जिते हीने मिन्दाहुती सावित्रीं व्याहृतीश्च जुहुयात्। ऋत्विजोरभावे दक्षिणोत्तरयोः प्रागग्रं कूर्चं निधाय ब्रह्मसोमौ संकल्पयति। सर्वं युग्मं प्राच्यामुदीच्यां वाऽग्रमन्तं च दैविके करोति। सर्वमयुग्मं दक्षिणस्यां पश्चिमस्यां वाऽग्रमन्तं च पैतृके करोति। होमे न्यूनेऽतिरिक्ते च पूर्णाहुती मिन्दाहुती जुहोति। विशेषेऽनुक्ते स्रुवेण होतव्यमाज्यं हविर्व्याहृतिर्मन्त्रम् (? न्त्रः)। प्रायश्चित्तेऽनुक्ते वैष्णवं प्रायश्चित्तम्। अन्नावाज्ये चरौ वा होमे मक्षिककृमिरोमपिपीलिकादिपतने तद्व्यपोह्य बर्हिषोद्दीप्य प्राजापत्यमाग्नेयम्। अग्न्यायतने गोवराहश्वसर्पमण्डूकमार्जाराद्यैर्गमने तत्पदानि 'इदं विष्णुः' इति प्रोक्ष्य वैष्णवं रौद्रं च। परिस्तरणादिसंभाराणां दाहे भेदे छेदे नाशे च तत्तत्स्थाने संयोज्य मिन्दाहुती

(१) वैगृ. ६।१.

द्विरावर्त्य जुहुयात् । आघारे कृते तस्मिन्नग्नौ समुत्सन्ने अग्निं ध्यात्वा तद्भस्म 'अयं ते योनिः' इति समिधमारोप्य 'उद्बुध्यस्व' इति लौकिकाग्नौ समिधं निधायोज्ज्वाल्य परिषिच्य 'मनो ज्योतिः' 'अयाश्चाग्ने' मिन्दाहुती व्याहृतीश्च जुहुयात् । सर्वहोमानामन्ते स्विष्टकृत्प्रभृत्यन्तहोमे हीने विष्णोर्नुकादिमिन्दाहुत्याश्चावितादीञ् जुहुयात् ॥

## गृह्यान्तरम्

पुनर्भूसंस्कारः

[1]समुह्य, उपलिप्य, उल्लिख्य, उद्धृत्याभ्युक्षयेत् । एष संस्कारोऽनुगतो( ते ? )ऽग्नौ भूयः ॥

यद्यग्निस्थापनानन्तरं कर्मकाले वृष्ट्यादिशङ्कया संस्कृताग्निरन्यत्राऽऽनीयते तदा पुनर्भूसंस्कारः कर्तव्यः, 'समुह्य उपलिप्य०' इति गृह्यान्तरात् । संत. ८६०

परिस्तरणम्

[2]सकृत् त्रिर्वा प्रतिदिशं प्रदक्षिणमग्निं परिस्तृणाति ॥

आज्यहविषोरासादनस्थानम्

[3]होत्रग्न्योरन्तरा आज्यहविषी आसादयेत् ॥

होमे स्रुक्स्रुवयोरुपयोगः

[4]अनेन गृहीतं जुह्वा जुहोति ॥

स्रुवेण स्रुचि चतुर्धा गृहीतमाज्यम् । संत. ८७७

## परिशिष्टम्

सधूमाग्नौ होमे दोषः

[5]अथाऽबुधः सधूमे तु जुहुयाद्यो हुताशने ।
यजमानो भवेदन्धः सपुत्र इति च श्रुतिः ॥

(१) संत. ८६०.

(२) संत. ८६८.

(३) संत. ८७१.

(४) संत. ८७६.

(५) चदा. १३८ बह्वृचपरिशिष्टे.

## ऋग्विधानम्

पूर्णाहुतिः

[1]समुद्रादूर्मिरितिसूक्तेन यः सदा जुहुयाद् घृतम् ।
पूर्वोक्तेनैव कल्पेन संयतात्मा जितेन्द्रियः ॥
[2]विज्योतिषेति ज्वलयेद्यत्रेच्छेज्जातवेदसि ।
तमग्निः सर्वतः पाति भद्रेण द्रविणेन च ॥

अग्न्यर्चनम्

[3]विश्वानि न इति द्वाभ्यामृग्भ्यां यो वह्निमर्चति ।
स तरत्यापदः सर्वा यशः प्राप्नोति चाक्षयम् ॥

अग्न्यलंकरणे मन्त्र उच्यते ऋग्विधाने— विश्वानि न इति । प्रपा. ४६

अग्न्युपस्थानम्

[4]हुत्वा वह्निमुपस्थाय प्राणार्थं हव्यवाहनम् ।
अग्ने त्वमितिसूक्तेन धनमायुश्च वाञ्छता ॥

## हारीतः

इन्धनदोषाः

[5]नाशुचिक्लिन्नपूतिभिर्दारुभिरग्निमिन्धीत ॥

## बौधायनः

अन्तरागमननिषेधः

[6]न मन्त्रवता यज्ञाङ्गेनाऽऽत्मानमभिपरिहरेत् ॥

(१) ऋग्वि. २५१ ; प्रपा. ५१ ( समुद्रादूर्मिःसूक्तेन संयतात्मा जितेन्द्रियः । ) एतावदेव ; विपा. ६५३ ( समुद्रादूर्मिसूक्तेन संयतात्मा जितेन्द्रियः । ) एतावदेव.

(२) ऋग्वि. २५२ ; प्रपा. ५१ वेदसि ( वेदसम् ) द्रविणेन च ( द्रविणेन वा ) ; विपा. ६५३ यत्रेच्छेज्जातवेदसि ( पूर्णाहुत्या हुताशनम् ) पू.

(३) ऋग्वि. २५३ ; प्रपा. ४६ प्राप्नोति ( आप्नोति ).

(४) ऋग्वि. २५४ ; प्रपा. ५३ प्राणार्थं ( प्राणार्थे ) धनमायुश्च वाञ्छता ( आयुष्यं वाञ्छितं लभेत् ) शौनकः .

(५) अप. १।१५४ पृ. २२५ ; कुर. ६१ ; गृर. ११८ ; निप्र. १९४ नाशुचि ( नाशुष्क ) क्रमेण मरीचिः .

(६) बौध. १।१५।७-१०.

मन्त्रवत् यज्ञाङ्गं स्रुक्स्रुवादि । तेनाऽऽत्मानं नाभिपरिहरेत् आत्मनो बहिर्न कुर्यात्, अग्नेः पात्रस्य चान्तरतः स्वयं न भवेदिति यावत् । बौवि.

**अभ्यन्तराणि यज्ञाङ्गानि ॥**

तत्र कारणमाह— अभ्यन्तराणीति । ऋत्विगपेक्षयेति शेषः । बौवि.

**बाह्या ऋत्विजः ॥**

प्रयोगाङ्गत्वात् यज्ञाङ्गापेक्षयेति शेषः । बौवि.

**पत्नीयजमानावृत्विग्भ्योऽन्तरतमौ ॥**

फलप्रतिग्रहीतृत्वादनयोः । उदाहरणानि वैसर्जनानि दाक्षिणानि च । बौवि.

आहुतिमानम्

[1]**व्रीहीणां वा यवानां वा शतमाहुतिरिष्यते ॥**

शतसंख्यधान्यस्य एका आहुतिरित्यर्थः । संर. ६१०

## आपस्तम्बः

अप्रोक्षितेन्धनाधाननिषेधः

[2]**नाऽप्रोक्षितमिन्धनमग्नावादध्यात् ॥**

श्रौते स्मार्ते लौकिके वाऽग्नौ अप्रोक्षितमिन्धनं नाऽऽदध्यात् न प्रक्षिपेत् । केचिल्लौकिके नेच्छन्ति । उ.

रेखाकरणम्

[3]**यत्र क्वचाग्निमुपसमाधास्यन् स्यात्तत्र प्राचीरुदीचीश्च तिस्रस्तिस्रो रेखा लिखित्वाऽद्भिरवोक्ष्याग्निमुपसमिन्ध्यात् ॥**

होमप्रसङ्गादिदमुच्यते— यत्र क्वच गार्ह्ये सामयाचारिके वा कर्मणि गृहेऽरण्ये वाऽग्निमुपसमाधास्यन् प्रतिष्ठापयिष्यन् स्यात्तत्र पूर्वं प्राचीः प्रागग्रास्तिस्रो रेखा विलिखेत् । तत उदीचीः उदगग्रास्तिस्रः । एवं तिस्रो रेखा लिखित्वाऽद्भिरवोक्षेत् । अवोक्ष्याग्निं श्रोत्रियागारादाहृत्य प्रतिष्ठाप्योपसमिन्ध्यादुपसमिन्धीत काष्ठैरभिज्वलयेत् । तत्र 'पुरस्तादुदग्वोपक्रमः, तथाऽपवर्गः' (आपगृ. १।५, ६) इति परिभाषितम् । उपदेशक्रमाच्च प्राच्यः पूर्वं लेखा लेखनीयाः, ततश्चोदीच्यः । 'प्राचीः पूर्वमुदक्संस्थं दक्षिणारम्भमालिखेत् । अथोदीचीः पुरःसंस्थं पश्चिमारम्भमालिखेत् ॥' । अन्ये तु प्राचीरुदगारम्भं दक्षिणान्तमालिखन्ति । *उ.

अवोक्षणशेषोदकोत्सेकः

[1]**उत्सिच्यैतदुदकमुत्तरेण पूर्वेण वाऽन्यदुपदध्यात् ॥**

(१) एतदवोक्षणशेषोदकमग्नेरुत्तरतः पूर्वतो वा उत्सिञ्चेत् । उत्सिच्यान्यदुदकं पात्रस्थमुपदध्यात्तत्रैव ।

पाके तु क्रिया न भवति, 'उपसमाधास्यन्' इति लिङ्गस्य विवक्षितत्वात् । 'आर्याः प्रयताः' (आध. २।३।१) इत्यादौ भवतीति । उ.

(२) उत्सिच्य उदकं यस्यां कस्यांचिद्दिशि । गृर. ११२

(३) अवोक्षणोदकादन्यदुदकं कर्मपर्याप्तमवोक्षणपात्रस्थं कृत्वा स्वसमीपे निदध्यात् । अथवा शुद्धजल-

(१) स्मृच. १६३ ; पमा. २९१ ; प्रपा. ३९२ ; गभा. ११४ ; प्रर. १२२ ; मुक्ता. ३६२ ; संग. ३१० ; संर. ६१०.

(२) आध. १।१५।१२ ; हिध. २६।४।७१ ; स्मृच. २३ ; कृर. ६१ ; गृर. ११७ ; प्रपा. ३२ ; निप्र. १९५ (इन्धनं०) ; प्रर. ५० ; पप्र. ४४९ ; मुक्ता. ९८,३६० ; संग. ६८ (नाप्रोक्षितां समिधमग्नावादध्यात्) ; आन. ६८० ; संर. ६०.

(३) आध. २।१।१३ ; हिध. २७।१।१३ यत्र क्वचाग्नि (यस्मिन्देशेऽग्नि) दीचीश्च (दीचीः) रेखा (लेखा) लिखित्वा ... ... ... ...न्ध्यात् (लिखित्वाऽवोक्ष्य) ; गृर. १११–११२ क्वचाग्नि (क्वचनाग्नि) (स्यात्०) रेखा (लेखा) रवोक्ष्या (रभ्युक्ष्या) ; मुक्ता. ३५४ ; संर. ५४ यत्र क्वचाग्नि (यस्मिन्देशेऽग्नि) लिखित्वा ... ... ...न्ध्यात् (लिखित्वाऽवोक्ष्य).

* गृर., संर. उज्ज्वलागतम् ।

(१) आध. २।१।१४ ; हिध. २७।१।१३ दकमु (दकशेषमु) दुपद (दुपनिद) ; गृर. ११२ ; मुक्ता. ३५४ ; संर. ५४ च्यैत (च्य त) शेषं हिधवत्.

पूरितकलशस्थमुदकमत्रोक्षणोत्सेचनार्थं पात्रान्तरे गृहीत्वा तेनोदकेनावोक्षणोत्सेचने कृत्वाऽन्यदवशिष्टं कलशपात्रस्थमुदकं कर्मार्थं स्वसमीपे निदध्यात्। अर्थत एव समीप उदकनिधाने सिद्धेऽत्र वचनमुत्सेचनोत्तरमेव यस्मात् कलशादवोक्षणोत्सेचनार्थमुदकं गृहीतं तस्य कलशस्य स्वसमीपे स्थापनार्थम्। तेनोत्सेचनपर्यन्तं गृहमध्य एव कलशो भवेदिति सिद्धं भवति। अथवा तावत्पर्यन्तं भूमौ तत्कलशस्थापनं वारयितुमत्र वचनम्। न चैतस्यादृष्टार्थत्वमेवास्त्विति वाच्यम्, प्रणीताद्युदककार्यनिष्पादनरूपे दृष्टे संभवत्यदृष्टकल्पनाया अन्याय्यत्वात्। उत्सेचनाभावेऽपि आवश्यकत्वादेतद्भवत्येव। रेखालेखनावोक्षणोत्सेचननिधानानां धर्मसूत्रे विधानं परिसंख्यानबलादग्निकार्यादिषु परिषेकादिव्यतिरिक्तगृह्यविहिततन्त्रनिवृत्तौ तद्विहितत्वाद्रेखालेखनावोक्षणोत्सेचननिधानानामपि निवृत्तिः स्यात्सा मा भूदित्येतदर्थम्। गृह्योक्ते कर्मण्येतेषामनावश्यकत्वार्थं वा। उदकनिधानं त्वावश्यकत्वाद्भवत्येव। वैश्वदेवे तु नैतदपि भवति, 'यथोपदेशं कुरुते' इति विशेषवचनेन बाधात्। रेखालेखनाद्युदकनिधानान्तमुद्धननात्प्रागेव कर्तव्यम्, न तूद्धननावोक्षणयोर्मध्ये, 'उद्धत्यावोक्ष्य' इति ल्यपा बोधितस्योद्धननावोक्षणयोरव्यवधानस्य बाधापत्तेः। उद्धननावोक्षणयोरव्यवधानं बाधित्वा मध्य एव कर्तव्यता तदा वक्तव्या, यदा धर्मसूत्रोक्तोल्लेखनादीनां मध्ये कर्तव्यतायां प्रमाणमुपलभ्येत। तदेवात्र नास्ति। प्रत्युतोद्धननावोक्षणयोरव्यवधानं बहुषु दृष्टमस्ति। न च शिष्टाकोपन्यायेन वेदकरणवेदिकरणयोर्मध्ये क्षुते यथोभयोरव्यवहितत्वबाधस्तथाऽनयोरपि सोऽस्त्विति वाच्यम्, तत्र क्षुतक्रमयोरेकदोपस्थितत्वेनानयोः किं बाध्यमिति विचारे प्राप्ते पदार्थधर्मरूपक्रमपेक्षया पदार्थरूपक्षुतनिमित्ताचमनस्य प्राबल्यादव्यवहितत्वबाधस्य जैमिनिना स्वीकृतत्वात्, प्रकृते उद्धननानन्तरमेवोल्लेखनं कर्तव्यमित्येतादृशेऽर्थे प्रमाणाभावेनैतयोरव्यवहितत्वबाधस्याकल्पनात्। न च मातृदत्तेनोद्धननोत्तरमेवोल्लेखनादीनां प्रदर्शनात् तदनन्तरमेवानुष्ठानमिति वाच्यम्, पुनरित्यादिभाष्यग्रन्थस्योल्लेखनावोक्षणोत्सेचनोदकनिधानान्यपि धर्मशास्त्रोक्तत्वात् कर्तव्यानीत्येवंरीत्या संग्रहमात्रपरताया एव ल्यब्बोधिताव्यवहितानन्तर्यबाधापरया कल्पनात्। न चास्त्वव्यवहितानन्तर्यबाधः, तथा च क्रमबोधकत्वमेव पुनरित्यादिग्रन्थस्येति वाच्यम्, अव्यवहितानन्तर्यानुगुण्येनैव निर्वाहे तदितरकल्पनाया अनुचितत्वात्। उद्धत्येत्यस्य संस्कार्यपदार्थसाधनपदार्थप्रदर्शनार्थमात्रमुक्तिः, न त्ववोक्षणनिवृत्त्यर्था, अन्यथा सूत्रविरुद्धत्वेन भाष्यग्रन्थस्याप्रयोजकत्वापत्तेः। अवोक्षणानुक्तिस्तु स्पष्टत्वात्। 'पुनर्धर्मशास्त्रे दर्शनात्' इत्यत्र पुनःशब्देन तत्सत्त्वं सूचितम्। कथम्? पुनरित्यस्याऽऽवृत्तिबोधकत्वेनोद्धननस्य धर्मसूत्रोक्तानामुल्लेखनादीनां वाऽऽवृत्त्यभावेनोद्धनने उल्लेखनादिषु वाऽन्वयासंभवेनावोक्षणस्य वारद्वयं संभवाद्धर्मसूत्रोक्तावोक्षणात् पूर्वमेव पुनःशब्दस्यान्वये सति अर्थादुद्धननोत्तरमन्यदवोक्षणमस्तीति। एतेनोद्धननावोक्षणोत्तरभावित्वमुल्लेखनादीनामिति शङ्काऽपि निरस्ता। एकमवोक्षणमुत्सेचनादिकं चेदानीं नानुतिष्ठन्ति, पद्धत्यन्तरे लिखितं च नास्ति, तद्भ्रान्तिमूलकमेव। धर्मसूत्रे एतेषां विधानबलादनावश्यकमिति कृत्वा पद्धत्यन्तरे न लिखितमिति यद्युच्यते तदोल्लेखनमपि न लेखनीयम्। उल्लेखनस्यैवावोक्षणोत्सेचनयोरपि एकसूत्रप्रणीतत्वेनोल्लेखनकरणाकरणाधीनत्वेनोल्लेखनं लिखितमवोक्षणादिकं न लिखितमित्यत्र भ्रान्तिरेव मूलं पश्यामः।

* संर. ५४–५६

## वसिष्ठः

### स्थण्डिलकरणम्

**'अथाग्निकार्यं वक्ष्यामि कुण्डे वा स्थण्डिलेऽपि वा॥**

**स्थण्डिलं वालुकाभिर्वा रक्तमृद्रजसाऽपि वा॥**

---

* शेषं उगतम्।

(१) विपा. ६२४.

विभूतिधारणम्

§[१]ऐशान्यामाहरेद्भस्म स्रुचाऽग्रेण स्रुवेण वा ।
चन्दनं कारयेत्तेन शिरःकण्ठांशकेषु च ॥
कश्यपस्येति मन्त्रेण यथानुक्रमयोगतः ॥

शान्तिपाठः, दक्षिणादानम्, अच्छिद्रावधारणम्, देवताविसर्जनम्

ततः शान्तिं प्रकुर्वीत अवधारणवाचनम् ॥
दक्षिणा च प्रदातव्या ग्रहाणां च विसर्जनम् ॥

आचार्यादिवरणम्

[२]यजमानः शुचिः स्नातः श्रद्धायुक्तो जितेन्द्रियः ।
पादशौचार्घवस्त्राद्यैराचार्यादीन् समर्चयेत् ॥

ब्रह्मवरणात् पूर्वमाचार्यवरणं कर्तव्यम्, 'यजमानः ०' इति वासिष्ठवचनेन वरणे आचार्यपूर्वकत्वप्रतीतेः । यत्र स्वयमेव कर्म करोति तत्र नाऽऽचार्यवरणस्यापेक्षाऽपीति बोध्यम् । संदी. २७

## विष्णुः

निर्धूमप्रदीप्ताग्नेर्होमाधिकरणत्वनियमः, अन्यथा दोषफलं च

[३]अप्रबुद्धे सधूमे वा जुहुयाद्यो हुताशने ।
यजमानो भवेदन्धः सोऽमुत्रेति हि नः श्रुतम् ॥
[४]योऽनर्चिषि जुहोत्यग्नौ व्यङ्गारे चैव मानवः ।
मन्दाग्निरामयावी च दरिद्रश्चोपजायते ॥

[१]अतश्च बहुशुष्कैधःसुसमिद्धे हुताशने ।
विधूमे लेलिहाने च होतव्यं कर्मसिद्धये ॥

अग्नेः कर्णाद्यवयवेषु होमे अनिष्टफलम्, जिह्वासु होमविधानम्, कर्णाद्यवयवाभिज्ञापनं च

[२]अग्निकर्णे हुतं रोगं नासिकायां धनक्षयम् ।
चक्षुषोर्निन्दनं कुर्यात्केशे दारिद्र्यकृद्भवेत् ॥
हुतं शिरसि पापं स्यात्तस्माज्जिह्वासु होमयेत् ।
यत्र काष्ठं तु तच्छ्रोत्रं यत्र धूमस्तु नासिका ॥
[३]यत्राल्पज्वलनं नेत्रं यत्र भस्मानि तच्छिरः ।
यत्रैव ज्वलितो वह्निर्जिह्वा तत्रैव कीर्तिता ॥

## याज्ञवल्क्यः

विष्णुस्मरणम्

[४]तद्विष्णोरिति मन्त्रेण स्मर्तव्यः सर्वकर्मसु ।
गायत्री वैष्णवी ह्येषा विष्णुसंस्मरणाय वै ॥

## कात्यायनः

रेखाकरणम्

[५]लक्षणे प्राग्गतायास्तु प्रमाणं द्वादशाङ्गुलम् ॥
तन्मूलसक्ता योदीची तस्या एतन्नवोत्तरम् ॥

'प्रागुदक्प्रवणं देशं समं वा परिसमुह्योपलिप्य मध्यतः प्राचीं लेखामुल्लिख्य उदीचीं च संहतां पश्चान्मध्ये

§ संतव्याख्यानं 'एतद्यज्ञवास्त्वित्याचक्षते' इति गोभिलगृह्यसूत्रे (सं. का. पृ. १४६०) द्रष्टव्यम् ।

(१) संत. ८७९–८८०.

(२) संदी. २७.

(३) स्मृच. १६३; मुक्ता. ३६२ सधूमे (ऽविधूमे); आन. ७०.

(४) स्मृच. १६३; पमा. २९१; मुक्ता. ३६२ व्यङ्गारे चैव (व्यङ्गारिणि च).

(१) स्मृच. १६३ : २१२ पूर्वार्धे (बहुशुष्केन्धने वह्नौ सुसमिद्धे विशेषतः ।) शौनकः; पमा. २९१ अतश्च बहुशुष्कैधः (बहुशुष्केन्धने चाग्नौ); मुक्ता. ३६३ पमावत्; प्रका. २१ (बहुशुष्केन्धने त्वग्नौ सुसमिद्धे विधूमके । साङ्गारे लेलिहाने च होतव्यं नान्यथा क्वचित् ॥) स्मृतिः.

(२) मुक्ता. ३६३.

(३) मुक्ता. ३६३; आन. ७० कीर्तिता (हूयते) उत्त.

(४) प्रपा. ५८.

(५) कास्मृ. १।७७; संत. ८५९ लक्षणे (दक्षिणे) सक्ता (लग्ना) एतन्न (एवं न).

प्राचीस्तिस्र उल्लिख्याभ्युक्षेत् । लक्षणावृदेषा सर्वत्र' (गोगृ. १।१।९-१०) इति सूत्रे लक्षणमुक्तम्, तल्लेखापरिमाणान्तराभिधानेन स्पष्टीकरोति– या प्रथमा प्रागग्रा लेखा तस्याः परिमाणं द्वादशाङ्गुलम्, तन्मूललग्ना योत्तराग्रा तस्या नवाङ्गुलाधिकं द्वादशाङ्गुलमेव प्रमाणम् । एकविंशत्यङ्गुलमित्यर्थः । ¶ प्रकाश.

[1]**उद्गतायाः संलग्नाः शेषाः प्रादेशमात्रिकाः । सप्तसप्ताङ्गुलांस्त्यक्त्वा कुशेनैव समुल्लिखेत् ॥**

(१) उक्तयोरवशिष्टा यास्तिस्र उक्तास्ता उदीच्यां रेखायां संलग्नाः सप्तसप्ताङ्गुलान्तराः प्रादेशप्रमाणाः कुशेनैव समुल्लिखेदिति । कुशेनेति सर्वाभिः संबध्यते । प्रकाश.

(२) एवकारेण शाखान्तरोक्तस्फ्यव्यावृत्तिः । § संत. ८५९

### पात्रसंमार्गः

[2]**तेषां प्राक्शः कुशैः कार्यः संप्रमार्गो जुहूषता । प्रतापनं च लिप्तानां प्रक्षाल्योष्णेन वारिणा ॥**

(१) तेषां व्यक्तिभेदाद्बहूनां पूर्वाभिमुखं मार्जनं कुशैः कार्यम् । घृतादिलेपवतां तु तेषामुष्णेन जलेन प्रक्षालनपूर्वमग्नौ प्रतापनं कार्यम् । $ संप्रमार्ग इति वा पाठः । प्रकाश.

(२) लेपरहितानां तु प्रतापनम्, दर्भैः संमार्जनम्, अभ्युक्षणम्, पुनः प्रतापनम्, उत्तरतो निधानं च कुर्यात् । तथा च कात्यायनः– 'स्रुवं प्रतप्य दर्भैः संमृज्याभ्युक्ष्य पुनः प्रतप्य निदध्यात्' इति । ‡ संत. ८७२

(३) अत्र स्मार्ते वेदाभावेन तदग्रस्याभावात् संमार्गार्थं कुशा एवोपादीयन्ते, वेदस्यापि कुशात्मकत्वेन कुशांशे बाधायोगात् । तथा च छन्दोगपरिशिष्टे कात्यायनः– तेषां प्राक्श इति । § संग. ३७

### पात्रासादनम्

[1]**प्राञ्चं प्राञ्चमुदगग्नेरुदगग्रं समीपतः । तत्तथाऽऽसादयेद्द्रव्यं यद्यथा विनियुज्यते ॥**

(१) स्रुवस्रुगादिद्रव्यमुपयोगसंनिधिक्रमेण स्वसमीपदेशेषु एकस्मात् पूर्वमेकम्, ततः पूर्वमपरम्, इत्येवं क्रमेणाग्नेरुत्तरतः उत्तराग्रं स्थापयेत् । प्रकाश.

(२) एतच्च आसादनं विनियोगक्रमेण । तदाह छन्दोगपरिशिष्टे कात्यायनः– प्राञ्चं प्राञ्चमिति । प्राञ्चं प्राञ्चमिति पुंस्त्वमार्षम् । विशिष्टो नियोगो विनियोगः, मुख्यः प्रयोग इति यावत् । तथा च यत्कार्यार्थं यत्पात्रमुपादीयते तत्कार्यक्रमेण तस्याऽऽसादनम् । § संग. ३१

### इध्मसमित्संख्या

[2]**समिधोऽष्टादशेध्मस्य प्रवदन्ति मनीषिणः । दर्शे च पौर्णमासे च क्रियास्वन्यासु विंशतिम् ॥**

इध्मसमिधां संख्यामाह– समिधोऽष्टादशेति । निगदव्याख्यातम् । प्रकाश.

---

¶ संत. प्रकाशगतम् ।

§ शेषं प्रकाशवत् ।

$ अनेन पाठान्तरं सूचितम् । तत्तु कर्मप्रदीपे मुद्रितत्वात्, 'संप्रमार्ज इति पाठे त्वार्षः प्रयोगः' इति टीकान्तरानुरोधाच्च 'संप्रमार्जः' इति संभवति ।

(१) कास्मृ. १।७८ शेषाः (ज्ञेयाः) लांस्त्यक्त्वा (लानि स्युः); संत. ८५९.

(२) कास्मृ. १।१११ तेषां प्राक्शः (प्राक्शश्चैव); संत. ८७१; संग. ३७ पू.; संदी. ३५ संगवत्.

‡ शेषं प्रकाशवत् ।

§ संदी. संगगतम् ।

(१) कास्मृ. ११२ दगग्ने (दङ्ङग्ने); गभा. ८ पू.; संत. ८६४; संग. ३१ द्रव्यं (पात्रं) : ३२ पू.; संदी. ३० द्रव्यं (पात्रं).

(२) कास्मृ. १।११७; संत. ८६८ विंशतिम् (विंशतिः).

होमादौ होमान्ते च समिदाधानम्

[1]समिदादिषु होमेषु मन्त्रदैवतवर्जिता।
पुरस्ताच्चोपरिष्टाच्च इन्धनार्थं समिद्भवेत् ॥

ब्रह्मचारिणो यत्र सायं प्रातः समिद्धोमस्ततः प्रभृति सर्वेषु होमेषु देवतामन्त्राभ्यां रहिताऽग्निसमिन्धनार्था प्रादेशमात्रा या समिदुक्ता, सा होमात्पूर्वं पश्चाच्च भवेत्। प्रकाश.

इध्मस्याग्निसमिन्धनार्थत्वं निवृत्तेध्मकर्मगणना च

[2]इध्मोऽप्येधार्थमेवाग्नेर्हविराहुतिषु स्मृतः।
यत्र चास्य निवृत्तिः स्यात्तत् स्पष्टीकरवाण्यहम् ॥

चरुपुरोडाशादिरूपहविराहुतिषु इध्मोऽप्यग्निसमिन्धनार्थ एव प्रादेशद्वयमात्रसमिन्मुनिभिः स्मृतः। यतोऽयमपि समिन्धनार्थोऽतो न देवतोद्देशेन त्यजनीय इति अत्रापि मन्त्रदेवतयोरभावः। अतो 'मन्त्रस्य देवतायाश्च' इति वचनानवकाशः। प्रकाश.

[3]अङ्गहोमसमित्तन्त्रसोष्यन्त्याख्येषु कर्मसु।
येषां चैतदुपर्युक्तं तेषु तत्सदृशेषु च ॥

अङ्गहोमाः सीमन्तोन्नयनचूडाकरणादौ विहिताः, तेषु अन्यस्य सीमन्तोन्नयनादेः प्रधानत्वात्। तथा द्विविधा होमाः तन्त्रहोमाः क्षिप्रहोमाश्च याज्ञिकप्रसिद्धाः। तत्र क्षिप्रहोमाः क्षिप्रं हूयन्ते इति व्युत्पत्त्या सायंप्रातर्होमादयः। तन्त्रहोमाश्च परिसमूहनबर्हिःस्तरणाद्यङ्गविस्तारयुक्ताः। तत्र ये समिद्धविष्कास्तन्त्रहोमाः, यश्च सुखप्रसवार्थं सोष्यन्तीहोमः, येषां च वैश्वदेवसायंप्रातर्होमादीनामेतदिध्माख्यं द्रव्यं पश्चात् 'अथेध्मानुपकल्पयते' इत्यनेन सूत्रेणोक्तम्, तेषु तत्सदृशेषु च क्षिप्रहोमेषु इध्मस्य निवृत्तिर्भवेदिति। *प्रकाश.

[1]अक्षभङ्गादिविपदि जलहोमादिकर्मणि।
सोमाहुतिषु सर्वासु नैतेष्विध्मो विधीयते ॥

ऊढाया यानेन वरेण नयनं गृह्योक्तम्। तत्र 'अक्षभङ्गेऽनडुद्(? नद्ध)विमोक्षे यानविपर्यासेऽन्यासु चाऽऽपत्सु यमेवाग्निं हरन्ति तमेवोपसमाधाय व्याहृतिभिर्हुत्वाऽन्यद्द्रव्यमाहृत्य 'य ऋते चिदभिश्रिषः' इत्याज्यशेषेण 'अभ्यञ्ज्यात्' (गोगृ. २।४।३) इति सूत्रेणाक्षभङ्गादियानविपदि तत्समाधानार्थं यो होमो विहितः, यश्च 'पौर्णमास्यां रात्राववविदासिनि ह्रदे नाभिमात्रमवगाह्याक्षततण्डुलानृगन्तेष्वास्येन जुहुयात् स्वाहेत्युदके' इत्यनेन सूत्रेण मुखेन यवमिश्रतण्डुलानां वृक्ष इवेत्यादिपञ्चर्चस्य प्रथमया ऋचा भूमिकामस्य जलहोम उक्तः, याश्च सोमरसाहुतयस्तास्विध्मविधिर्न भवति। अक्षो रथावयवविशेषः। अत्र इध्मविधिनिवृत्तिरित्यभिदधता पर्युदासोऽयमित्युक्तम्, न तु निषेधविधिः, येनाक्षभङ्गादिविषये विहितनिषेधत्वादिध्मविकल्पः स्यादित्यापाद्यम्। जलहोमादीत्यादिपदेन पदवर्त्मक्षित्याधारहोमानां ग्रहणम्। तथा च श्रुतिः— 'पदे जुहोति' 'वर्त्मनि जुहोति' इति। स्मृतिश्च— 'लौकिके वैदिके वाऽपि हुतोच्छिष्टे जले क्षितौ। वैश्वदेवश्च कर्तव्यः पञ्चसूनापनुत्तये॥' इति। * प्रकाश.

क्षिप्रहोमकल्पः

[2]न कुर्यात् क्षिप्रहोमेषु द्विजः परिसमूहनम्।
वैरूपाक्षं च न जपेत्प्रपदं च विवर्जयेत् ॥

क्षिप्रहोमेषु होतृमात्रसाध्येषु अब्रह्मकेषु सायंप्रातःसोष्यन्तीहोमादिषु ब्राह्मणः 'इमं स्तोममर्हते' इत्यादिसमन्त्रकपरिसमूहनं न कुर्यात्। विरूपाक्षप्रपदजपौ च

---

(१) कास्मृ. १।११८; संत. ८७५ समिदादिषु (समिधादिषु).

(२) कास्मृ. १।११९ मेवाग्नेर्ह (माचार्यैर्ह); संत. ८६९ पू.

(३) कास्मृ. १।१२०; संत. ८६९ तन्त्र (तन्त्रं).

* संत. प्रकाशगतम्।

(१) कास्मृ. १।१२१ सोमा (कृत्वा); संत. ८६८.

(२) कास्मृ. १।१२६; संत. ८७४ वैरूपा (विरूपा).

त्यजेत् । प्रपदश्च 'तपश्च तेजश्च श्रद्धा च ह्रीश्च' इत्यादिमन्त्रः । तथा च गृह्यान्तरम्— 'एकसाध्येष्व-बर्हिःषु न स्यात्परिसमूहनम् । नोदगासादनं चैव क्षिप्र-होमा हि ते मताः ॥' इति । ननु सायंप्रातर्विहितक्षिप्र-होम एव 'अग्निमुपसमाधाय परिसमूह्य' इत्यादिना सूत्रेण परिसमूहनमुक्तम् । सत्यम्, किंतु तदमन्त्रकं विक्षि-सावयवानमेकीकरणमात्रमुक्तम् । अयं तु समन्त्रकस्य प्रतिषेध इत्यविरोधः । $ प्रकाश.

उत्तरपर्युक्षणम्, वामदेव्यगानं तत्प्रतिनिधिश्च

[१]पर्युक्षणं तु सर्वत्र कर्तव्यमदितेऽन्विति ।
अन्ते च वामदेव्यस्य गानमित्यथवा त्रिधा ॥

पर्युक्षणमन्ते च वामदेव्यगानं सर्वत्र क्षिप्रहोमेष्वपि कुर्यात् । अथवा गानाशक्तौ त्रिधा 'कया नः' इत्यादि पठेत् । 'गानं कुर्यादृचस्त्रिधा' इति वा पाठः । तदा व्यक्त एवार्थः । शेषं सुव्यक्तम् । प्रकाश.

कर्मविशेषेषु परिस्तरणपरिधिनिषेधः

[२]यान्यधः स्तरणाम्नानान्न तेषु स्तरणं भवेत् ।
एककार्यार्थसाध्यत्वात् परिधीनपि वर्जयेत् ॥

'अग्निमुपसमाधाय कुशैः समन्तं परिस्तृणुयात्' इति स्तरणोपदेशात् पूर्वं यानि सायंप्रातर्होमादीनि गोभिलो-क्तानि, तेषु स्तरणं नास्ति । तथा तेषु परिधीनपि स्तरणवैकल्पिकान् 'परिधीनप्येके कुर्वन्ति' इत्युक्तान् त्यजेत् । हेतुमाह— एककार्येत्यादि । यथा स्तरणस्य होमरूपकार्यार्थकत्वात् अग्निवेष्टनं साध्यम्, तथा परिधीना-मपि । अतस्तुल्यकार्यत्वात् परिधीनामपि निवृत्तिरिति । अथवा होमार्थैकहोमकर्तृमात्रसाध्यत्वेन क्षिप्रहोमत्वात् स्तरणपरिध्योर्निवृत्तिरिति । अतः 'एकसाध्येष्वबर्हिःषु' इति गृह्यान्तरम् । प्रकाश.

$ संत. प्रकाशगतम् ।

(१) कास्मृ. १।१२७ गानमित्यथवा त्रिधा (गानं कुर्यात् तृचेऽर्चिषा); संत. ८८० तु (च) चतुर्थचरणे 'गानं कुर्यादृचस्त्रिधा' इति वा पाठः.

(२) कास्मृ. १।१२९.

आभिचारिकेषु बर्हिरादिनिषेधः

[१]बर्हिः पर्युक्षणं चैव वामदेव्यजपस्तथा ।
कृत्याहुतिषु सर्वासु त्रिकमेतन्न विद्यते ॥

अभिचारहोमेषु सर्वेषु बर्हिरादित्रिकं नास्ति । अतो न कर्तव्यमिति । प्रकाश.

आहुतिमानं दैवतीर्थस्य होमकरणता अग्नेर्होमयोग्यस्वरूपं च

[२]पाण्याहुतिर्द्वादशपर्वपूरिका
कंसादिना चेत्स्रुवपूरमात्रिका ।
दैवेन तीर्थेन च हूयते हविः
स्वङ्गारिणि स्वर्चिषि तच्च पावके ॥

(१) अङ्गुलीनां द्वादशपर्वाणि यया पूर्यन्ते ताव-त्परिमाणा पाण्याहुतिः कार्या । हविष्याभावे दधिपयो-यवागूभिर्यदा होमस्तदा 'कंसेन चरुस्थाल्या स्रुवेण वै वा' (गोगृ. १।३।८) इति सूत्रोक्तकंसादिकमाहुत्यधि-करणम् । सा चाऽऽहुतिः स्रुवपूरपरिमाणा । सर्व एव च होमो देवतीर्थेन हविर्भस्मतापादकाङ्गारयुक्तेऽले-लिहाने(? युक्ते लेलिहाने)ऽग्नौ कार्य इति । 'रसा-

(१) कास्मृ. १।१३०.

(२) कास्मृ. १।१३२; ब्रक. ७१; चव्र. ४२ कंसादिना......मात्रिका (रसादिना चेत् स्रुचिगर्तपूरिका): ७६ प्रथमचतुर्थपादौ; चद्रा. १३८ कंसादिना ........ मात्रिका (रम्भादिना चेत् स्रुचि पर्वपूरिका); क्रुर. ५९ कंसादिना (रसादिना) पूरमात्रिका (मात्रपूरिका); गप. १५६ (=) कंसादिना (द्रव्यादिना) पूरमात्रिका (मात्र-पूरिका) तच्च पावके (पावके च); निप्र. १९१ कंसादिना (द्रवादिना) पूरमात्रिका (मात्रपूरिका); संत. ८७२ पूरमात्रिका (मात्रपूरिका); पप्र. ११२; आन. ६९ पूर्वार्धे (पाण्याहुतिर्द्वादशपर्वपूरिता स्रुवाहुतिश्चेत्स्रुवमात्र-पूरिता।) तच्च (चैव) संग्रहे; संग. ४३ मात्रिका (मात्रकम्) विधानपारिजातादित्युक्तम्; संर. ६११ पाण्या (धान्या) कंसादिना (घृतादिना) पूरमात्रिका (वक्त्रपूरिका) तच्च (तत्र); संदी. ४६ कंसादिना (वसादिना) पूरमात्रिका (मात्रपूरिका).

दिना चेत्' इत्यपपाठः, हविराधारपाणिसाहचर्यविरोधात्। यच्च गद्यव्यासवचनम्— 'उत्तानकरपञ्चाङ्गुल्यग्रैर्बलिं हरेत्। वृषवक्त्राकारेणोत्तानाङ्गुष्ठाङ्गुलिद्वयाग्रपर्वमात्रं प्रपूर्य जुहुयात्', तत् गोभिलीयेतरविषयम्, गोभिलीयानामप्यसंभवविषयम्। 'आर्द्रामलकमानेन कुर्याद्धोमहविर्बलीन्। प्राणाहुतिबलिं चैव मृदं गात्रविशोधनीम्॥' इत्येतस्याप्येषैव व्यवस्था। प्रकाश.

(२) कंसं कांस्यपात्रम्। ‡ पप्र. ११२

अयोग्याग्निहोमफलम्

**'योऽनर्चिषि जुहोत्यग्नौ व्यङ्गारिणि च मानवः।**
**मन्दाग्निरामयावी च दरिद्रश्च स जायते॥**

(१) व्यङ्गारिणि विगताङ्गारे। ब्रक. ७२

(२) उक्ताङ्गारार्चिःशून्ये त्वग्नौ जुहोति यो मानवः, स दीर्घरोगी जायते। शेषं सुगमम्। $ प्रकाश.

योग्याग्निहोमफलम्

**'तस्मात्समिद्धे होतव्यं नासमिद्धे कदाचन।**
**आरोग्यमिच्छताऽऽयुश्च श्रियमात्यन्तिकीं तथा॥**

न केवलं समिद्धे होमे मन्दाग्नित्वादिपरिहारः, किं त्वारोग्यादयः सातिशयसंपत्तयोऽपि प्राप्यन्ते इत्यारोग्यमिच्छतेत्यादिनोक्तम्। प्रकाश.

अग्निधमननियमः

**'जुहूषंश्च हुते चैव पाणिशूर्पस्फ्यदारुभिः।**
**न कुर्यादग्निधमनं न कुर्याद्व्यजनादिना॥**

(१) जुहूषन् होतुमिच्छन्। ब्रक. ७२

(२) होतुमिच्छन् हुते चाग्नौ उद्दीपनं पाण्यादिभिर्न कुर्यात्। स्फ्यः खड्गाकारो यज्ञपात्रविशेषः। व्यजनादिनेत्यादिपदं वस्त्रादिग्रहणार्थम्। प्रकाश.

**'मुखेनैव धमेदग्निं मुखाद्ध्येषोऽध्यजायत।**
**नाग्निं मुखेनेति च यल्लौकिके योजयन्ति तत्॥**

(१) यदा मुखेन धमनं तदा न नलिकादिव्यवधानेन, साक्षादिति ज्ञेयम्। मपा. १७८

---

‡ शेषं प्रकाशवत्।

$ पप्र. प्रकाशगतम्।

(१) कास्मृ. १।१३३; ब्रक. ७१ श्च स जायते (श्चोपजायते); स्मृच. २१२ व्यङ्गारिणि च (व्यङ्गारे चैव) शेषं ब्रकवत्; चप्र. ४३, ७६ श्च स (श्चैव); चदा. १३८ चप्रवत्; कुर. ६० चप्रवत्; प्रपा. ३९३ स्मृचवत्, स्मृत्यर्थसारे; गप. १५६ (=) दरिद्रश्च स (दरिद्रः सोऽभि) जायते + (करीषाग्नौ स जुहुयाद्विषस्तन्यं करोति यः।); निप्र. १९५ यावी (याङ्की) श्च स जायते (श्चाभिजायते); संत. ८७२; पप्र. ११३; विपा. ७६ (भागः २) स्मृचवत्, स्मृत्यर्थसारे; संग. ४१ श्च स (श्चापि); संदी. ४० संगवत्.

(२) कास्मृ. १।१३४ तथा (पराम्); ब्रक. ७२; स्मृच. २१२ कदाचन (कथंचन); चप्र. ४३, ७६ स्मृचवत्; चदा. १३८ स्मृचवत्; कुर. ६० ; संत. ८७२ ताऽऽयुश्च (तामायुः); पप्र. ११३; संग. ४१ ताऽऽयुश्च (श्चायुश्च); संदी. ४०.

(१) कास्मृ. १।१३५ जुहूषंश्च (होतव्ये च) शूर्पस्फ्यदारुभिः (शूर्पास्यदर्विभिः) न कुर्यात् (कुर्याद्वा); अप. १।१३७ शूर्प (सर्पि); ब्रक. ७२; स्मृच. २१२ पूर्वार्धे (जुहुषुश्च बुभूषुश्च पाणिशूर्पास्यदारुभिः।); चप्र. ४३ पूर्वार्धे (जुहुवांश्च हुते चैव पाणिपूर्यस्रुचादिभिः।) न कुर्यात् (कुर्यात्तु) : ७६ जुहूषंश्च (जुहुवांश्च) स्फ्यदारुभिः (स्रुवादिभिः) पू.; चदा. १३८ जुहूषंश्च (जुहूषुश्च) स्फ्यदारुभिः (स्रुचादिभिः) न कुर्यात् (कुर्यात्तु); कुर. ६० हुते (गते) शूर्पस्फ्य (शूर्पास्य) न कुर्यात् (कुर्वीत); मपा. १७८ शूर्पस्फ्य (सूर्पाश्म); निप्र. १९५ हुते चैव (हुतश्चैव) न कुर्यात् (कुर्यात्तु); संत. ८७२ हुते (हुतौ); पप्र. ११३; मुक्ता. ३६२ जुहूषंश्च (जुहूषुश्च) शूर्पस्फ्य (शूर्पास्य); आन. १७ मुक्तावत्, पू.; संग. ४१ शूर्पस्फ्यदारुभिः (शूर्पास्यदर्विभिः) न कुर्याद्व (कुर्याद्वा व्य); संदी. ४० पूर्वार्धं संगवत्, न कुर्याद्व (कुर्याच्च व्य).

(२) कास्मृ. १।१३६ मुखेनैव धमेदग्निं (मुखेनैके धमन्त्यग्निं); अप. १।१३७ द्ध्येषोऽध्यजायत (देष व्यजा-

(२) केन तर्हि धमेदित्यत आह— मुखेनैवेति। मुखेनैव ज्वालयेत्। हि यस्मात् एषः अग्निः मुखादध्यजायत। तथा च पुरुषसूक्तम्— 'मुखादग्निरजायत' इति। अधीति अग्नेः श्रेष्ठता जन्मनः, उत्तमाङ्गमुखस्थानत्वात्। यत्तु 'नाग्निं मुखेनोपधमेत्' इति निषेधवचनम्, तत् लौकिकेऽग्नौ योजयन्ति, न तु संस्कृते इति।

प्रकाश.

(३) हि यस्मात् मुखात् मुखपठितमन्त्रात्। एषः संस्कृतोऽग्निः। ततश्च लौकिके इति तदितराग्निपरम्। एतेन 'लौकिके इति श्रौताग्निभिन्नपरम्' इति मैथिलोक्तं हेयम्, 'जुहूषंश्च हुते चैव' इत्यनेनोपक्रमवचनेन संस्क्रियमाणसंस्कृताग्न्योरेव पाणिशूर्पादिनिषेधमुखेन मुखधमनस्य विहितत्वात्तद्व्यतिरिक्तस्यैव लौकिकशब्देनाभिधारणविधेरौ( ? भिधानस्यौ )चित्यात्, आहितत्वस्यानुपस्थितेश्च। एवमेव गुरुचरणाः। यत्तु 'अग्निस्तु नामधेयादौ होमे सर्वत्र लौकिकः।' इति छन्दोगपरिशिष्टवचने नामकरणाद्यर्थमग्नेर्लौकिकत्वमुक्तम्, तत्, 'न स्वेऽग्नावन्यहोमः स्यात्' इति तस्यैव वचनान्तरेण साग्नेः पितुः स्वीयाग्नौ तत्करणनिषेधात् लौकिकाग्न्यन्तरमादाय तत्कर्तव्यताविधायकम्, न तु तदग्नेः संस्कारानन्तरमपि लौकिकत्वप्रतिपादकमिति। संत. ८७२–८७३

यत) किके (किकं); ब्रक. ७२; उ. १।१५।२० (मुखेनोपधमेदग्निं मुखाद्ध्यग्निरजायत।) पू., स्मृत्यन्तरम्; स्मृच. २१२ ह्येषोऽध्यजायत (देषो ह्यजायत) उत्तरार्धे (नाग्निं मुखेनेति वचो लौकिके योजयेत्तदा॥); चन्न. ४३ ऽध्यजायत (ऽभिजायते) च यत् (तु यत्); चदा. १३८ ऽध्यजा (ऽभ्यजा) च यत् (तु यत्); मपा. १७८ मुखाद्ध्येषोऽध्य (मुखादेष ह्य) च यत् (वचो); निप्र. १९५ षोऽध्यजायत (ष व्यजायत) च यत् (तु यत्); संत. ८७२ जायत (जायते); पप्र. ११३; संग. ४१ कास्मृवत्, पू.; संर. ६० (मुखेनोपधमेदग्निं मुखादग्निरजायत।) पू., स्मृत्यन्तरम्; संदी. ४० कास्मृवत्, पू.

ब्रह्मणे दक्षिणादानम्

[१]ब्रह्मणे दक्षिणा देया यत्र या परिकीर्तिता।
कर्मान्तेऽनुच्यमानायां पूर्णपात्रादिका भवेत्॥

(१) 'गौर्दक्षिणा' (गोगृ. २।८।१८) इति नामकरणान्नप्राशनचूडाकरणादिषु सूत्रोक्ता कस्मै देयेति नोक्तम्। तदाह— कर्मणि यदि दक्षिणोक्ता सा कर्मान्ते ब्रह्मणे देया। अनुपदिष्टायां तु दक्षिणायां 'कंसं चमसं वाऽन्नस्य पूरयित्वा कृतस्य वाऽकृतस्य वाऽपि था फलानामेवैतं पूर्णपात्रमाचक्षते' (गोगृ. १।९।७) इति सूत्रोक्तपूर्णपात्रादिरूपदक्षिणा भवेत्। आदिशब्दात् 'दक्षिणालाभे मूलानां फलानां दक्षिणां ददाति' इति मैत्रावरुणीयपरिशिष्टोक्तस्य ग्रहणम्, पूर्णपात्रालाभविषयत्वात् तद्वचनस्येति। प्रकाश.

(२) होमदक्षिणा च स्वयंहोतृपक्षे ब्रह्मणे देया, 'ब्रह्मणे दक्षिणा देया यत्र या परिकीर्तिता। कर्मान्तेऽनुच्यमानायां पूर्णपात्रादिका भवेत्॥' इति छन्दोगपरिशिष्टात्। गोभिलेनापि दर्शादियागमभिधाय 'पूर्णपात्रो दक्षिणा तं ब्रह्मणे दद्यात्' (गोगृ. १।९।६) इत्युक्तम्। त्रान्तत्वेऽपि पुंस्त्वं छान्दसम्। एतदनुसारात् कर्मान्त इति ब्रह्मसाध्यहोमान्तपरम्, न तु परिशिष्टप्रकाशोक्तनामकरणादिप्रधानकर्मान्तपरम्। अतः प्रधानकर्मदक्षिणां कर्मोपदेष्ट्रे आचार्याय दद्यात्। यजमानेतरहोतृपक्षे तु ब्रह्महोतृभेदेन दक्षिणाविशेषानुपादाने होमदक्षिणैव ब्रह्महोतृभ्यां ग्रहीतव्या। स्वयमेव होतृब्रह्मकरणे अन्यस्मै दद्यात्, 'विदध्याद्धौत्रमन्यश्चेद्दक्षिणार्धहरो भवेत्। स्वयं चेदुभयं कुर्यादन्यस्मै प्रतिपादयेत्॥' इति छन्दोगपरिशिष्टात्। संत. ८८०–८८१

(१) कास्मृ. २।६०–६१ उत्तरार्धे (कर्मान्ते नोच्यमानाऽपि पूर्णपात्रादि कारयेत्॥); निप्र. २०६ यत्र या परिकीर्तिता (या च यत्रोपदिश्यते); संत. ८८०; संदी. ४५ यत्र या (या यत्र).

होतुर्ब्रह्मदक्षिणार्धहरत्वम्, ब्रह्महोत्रोरभावेऽन्यस्मै दक्षिणादानम्

[1]विदध्याद्धौत्रमन्यश्चेद्दक्षिणार्धहरो भवेत् ।
स्वयं चेदुभयं कुर्यादन्यस्मै प्रतिपादयेत् ॥

(१) यत्र कर्मणि या दक्षिणा सा ब्रह्मणे देया । अन्यश्चेद्धौत्रं कुर्यात् होमं कुर्यात् तदा आम्नातदक्षिणार्धं ब्रह्मणे देयम्, अर्धं च होमकर्त्रे । स्वयमुभयं ब्रह्मत्वं होतृत्वं च यदि यजमानः कुर्यात् तदाऽन्यस्मै ब्राह्मणाय दक्षिणां दद्यात् । तेन स्मार्तकर्मसु स्वयंकर्तृत्वं मुख्यमित्युक्तं भवति । निप्र. २०६

(२) यदा यजमानान्यः होमकर्म करोति तदा स होतोक्तदक्षिणाया अर्धं गृह्णीयात् अर्धं च ब्रह्मा, यदा यजमान एव हौत्रं ब्रह्मत्वं च करोति तदाऽन्यस्मै दद्यात् । प्रकाश.

चरुगुणाः

[2]स्वशाखोक्तश्चरुः स्विन्नो ह्यदग्धोऽकठिनः शुभः ।
न चातिशिथिलः पाच्यो न च वीतरसो भवेत् ॥

(१) सम्यग्विकसितः दाहशून्यः कोमलः शोभनः नातिविशीर्णावयवः (अकठिनः शुभ इति प्रसिद्धः ?) न वीतरसः गलितमण्ड इत्यर्थः । 'स्वशाखोक्तश्चरुः स्विन्नः' इति पाठान्तरम् । प्रकाश.

(२) स्वशाखोक्तः स्वशाखोक्तेतिकर्तव्यताकः । स्विन्नः विकसितः । अकठिनः कोमलः । एतादृशश्चरुः शुभः कर्मार्हः । अतिशिथिलः अतिविश्लिष्टावयवः । वीतरसः स्रावितमण्डः । पप्र. १०९

(१) कास्मृ. २।६२-६३ ; निप्र. २०६; संत. ८६४ (स्वयं चेदुभयं कुर्यात्) एतावदेव : ८८०-८८१ ; संदी. ४५.

(२) कास्मृ. २।७२-७३ स्वशाखोक्तश्चरुः स्विन्नो (स्वशाखोक्तश्च सुस्विन्नो) न च वीतरसो भवेत् (न चरुश्चा-रसस्तथा); संत. ८६६ क्तश्चरुः (क्तचरुः) पाच्यो (पाको); पप्र. १०९.

पाण्योर्न्यंकरणप्रकारः

[1]दक्षिणं वामतो बाह्यमात्माभिमुखमेव च ।
करं करेण कुर्वीत करणे न्यञ्चकर्मणः ॥

भूमिजपानुष्ठाने दक्षिणं वामतः करेण वा कुर्यात् । करेणेति षष्ठ्यर्थे तृतीया । करं करमिति पाठान्तरम् । दक्षिणहस्तमधोमुखं वामहस्तपृष्ठोपरिभावेन विपर्यस्तमात्माभिमुखं कुर्यादित्यर्थः । प्रकाश.

परिसमूहनप्रकारः

[2]कृत्वाऽग्न्यभिमुखौ पाणी स्वस्थानस्थौ सुसंहतौ ।
प्रदक्षिणं तथाऽऽसीनः कुर्यात् परिसमूहनम् ॥

'इमं स्तोममिति तृचेन परिसमूहेत्' इत्यनेन सूत्रेण अग्नेर्विक्षिप्तावयवानामेकीकरणं परिसमूहनमुक्तम् । तत्र करविन्यासमाह– अग्निपश्चिमतः आसीनश्चतसृष्वेव दिक्षु सम्यगग्नौ अग्न्यभिमुखौ न न्यञ्चौ किंतु विस्तृतौ, तथैव विक्षिप्तावयवानामेकीकरणस्य स्फुटत्वात्, स्वस्थानस्थौ न भूमिजप इव व्यस्तौ करौ कृत्वा दक्षिणावर्तेन परिसमूहनं कुर्यात् । प्रकाश.

परिधीनां स्वरूपं संख्या विन्यासप्रकारश्च

*[3]बाहुमात्राः परिधय ऋजवः सत्वचोऽव्रणाः ।
त्रयो भवन्त्यशीर्णाग्रा एकेषां तु चतुर्दिशम् ॥

[4]प्रागग्रावभितः पश्चादुदगग्रमथापरम् ।
न्यसेत्परिधिमन्यं चेदुदगग्रः स पूर्वतः ॥

* व्याख्यानं कर्मपरिभाषाप्रकरणे (संका. पृ. १२२३) द्रष्टव्यम् ।

(१) कास्मृ. २।७६-७७ करेण (करस्य); संत. ८६७.

(२) कास्मृ. २।७७-७८ सुसंहतौ (सुसंयतौ); संत. ८६७ पाणी (हस्तौ).

(३) कास्मृ. २।७८-७९ तु (च); पप्र. १०५.

(४) कास्मृ. २।७९-८०.

तेषां विन्यासप्रकारमाह– प्रागग्रावभित इति । अग्नेः पार्श्वद्वये दक्षिणोत्तरतः (प्रागग्रौ) परिधीन् (? धी) विन्यसेत् । पश्चिमेनोत्तराग्रम् । अथापरं चतुर्थम् अन्यं यदि न्यसेत् तदा सोऽग्नेः पूर्वमुत्तराग्रमारोप्य इति ।

प्रकाश.

देवताविपर्यासप्रायश्चित्तम्

[1]देवतानां विपर्यासे जुहोतिषु कथं भवेत् ।
सर्वप्रायश्चित्तं हुत्वा क्रमेण जुहुयात्पुनः ॥

(१) सर्वप्रायश्चित्तं लौगाक्षिराह– 'सर्वाणि प्रायश्चित्तानि मनो ज्योतिरिति सप्तभिः' । अप. १।१३

(२) सर्वप्रायश्चित्तमपि तेनैवोक्तम्– "सर्वप्रायश्चित्तं च पञ्चभिः प्रत्यृचं 'त्वं नो अग्ने' इति द्वाभ्याम्, 'अयाश्चाग्ने', 'ये ते शतम्', 'उदुत्तमम्' इति च" इति । † स्मृच. २४

परिषेचन–परिधान–परिस्तरण–वह्न्यर्चनदेशाः

[2]अष्टाङ्गुलिमिते देशे परिषेचनमाचरेत् ।
नवाङ्गुलिप्रमाणे तु विधिना परिधीन्न्यसेत् ॥
[3]दशाङ्गुलिप्रमाणे तु परिस्तीर्य कुशान् क्रमात् ।
एकादशाङ्गुले देशे गन्धपुष्पाक्षतादिभिः ॥

यच्च कश्यपोक्तम्– 'नवाङ्गुलिप्रमाणेन' इति नवाङ्गुलात्मकपरिधिपरिधानदेशावधिकथनं तत् शाखान्तरविषयम्, न सत्याषाढसूत्रानुसारिविषयम्, भाष्यकृता परिस्तरणानामुपर्येव परिधिपरिधानस्योक्तत्वात् ।

संर. ७१

## व्यासः

होमे हस्तमुद्रा आहुतिपरिमाणं च

[1]वृषवक्त्राकारेणोत्तानेनाङ्गुष्ठाङ्गुलिद्वयाग्रपर्वमात्रं प्रपूर्य जुहुयात् ॥

## देवलः

अग्निधमने वस्त्रादिनिषेधः तत्फलं व्यजनादिविधिश्च

[2]वस्त्रेण वाऽथ पर्णेन पाणिशूर्पास्यदारुभिः ।
न कुर्यादग्निधमनं कुर्याच्च व्यजनादिना ॥
[3]पर्णेन वै भवेद्व्याधिः शूर्पेण धननाशनम् ।
पाणिना मृत्युमाप्नोति चाऽऽयुः क्षीणं मुखाद्धमे ॥
[4]धमनीमन्तरे कृत्वा तृणं वा काष्ठमेव वा ।
मुखेनाग्निं समिन्धीत मुखादग्निरजायत ॥

## भरद्वाजः

स्थण्डिलकरणम्

[5]कुशैः संमार्जयेद्भूमिं शुद्धामादौ शुचिस्ततः ।
हस्तमात्रां चतुरस्रां गोमयेनोपलेपयेत् ॥

## गोभिलः

होमे हस्तमुद्रा

[6]गोवक्त्रवत्करं कुर्यात्तर्जनीकन्यसाद्दृते ।
अधोमुखेन तेनैव व्रीह्यादीन् होमयेत्ततः ॥

---

† मपा. स्मृचगतम् ।

(१) का॰स्मृ. ३।९२ ; अप. १।१३ क्रमेण (क्रमशो); स्मृच. २४ सर्वप्रायश्चित्तं (प्रायश्चित्तमतो) शेषं अपवत्, मैसूरमुद्रितपुस्तके तु 'सर्वप्रायश्चित्तं हुत्वा' इत्येव पाठः ; मपा ३६२ ; संत. ९१२ सर्वप्रायश्चित्तं हुत्वा (सर्वं प्रायश्चित्तं कृत्वा).

(२) प्रपा. ३९ ; संर. ७१ नवाङ्गुलिप्रमाणे तु (नवाङ्गुलप्रमाणेन) उत्त., कश्यपः.

(३) प्रपा. ३९ ; संर. ६२ दशाङ्गुलिप्रमाणे तु (दशाङ्गुलप्रमाणेन) पू., कश्यपः.

(१) प्रकाश. १३७ वृषवक्त्राकारेणोत्तानेना (वृषचक्राधारेणोत्ताना) ; पप्र. ११२ नाङ्गुष्ठाङ्गुलिद्वयाग्रपर्व (नाङ्गुलिद्वयपर्व).

(२) प्रपा. ३१ ; मुक्ता. ३६२ उत्तरार्धे (व्यजनेनाग्निधमनं न कुर्यादिति हि श्रुतिः ॥) ; संर. ६१ कुर्याच्च व्य (न कुर्याद्व).

(३) मुक्ता. ३६२ ; आन. ७० कात्यायनः.

(४) मुक्ता. ३६२ ; आन. ७० मुखेनाग्निं (मुखादग्निं).

(५) संत. ८५८. (६) निप्र. १९१.

होमे कर्तुर्नियमः हस्तमुद्रा च

[1]न मुक्तकेशो जुहुयान्नानिपातितजानुकः ।
अनिपातितजानोस्तु राक्षसैर्ह्रियते हविः ॥
[2]उत्तानेनैव हस्तेन अङ्गुष्ठाग्रेण पीडितम् ।
संहताङ्गुलिपाणिस्तु वाग्यतो जुहुयाद्धविः ॥

## अत्रिः

अग्निप्रणयनम्

[3]पात्रान्तरेण पिहिते ताम्रपात्रादिके शुभे ।
अग्निप्रणयनं कुर्याच्छरावे तादृशेऽपि वा ॥
[4]सौवर्णं राजतं ताम्रं तदभावे तु मृन्मयम् ।
पात्रान्तरेण पिहितमग्निप्रणयने स्मृतम् ॥

## अङ्गिराः

अन्तरागमननिषेधः

[5]दम्पत्योर्विप्रयोरग्न्योर्विप्राग्न्योर्गोद्विजन्मनोः ।
अन्तरे यदि वा गच्छेदहोरात्रेण शुध्यति ॥

एतत् कामतोऽत्यन्ताभ्यासे । सकृत्त्वे त्वेकदिनाभोजनमिति शूलपाणिः । आर. ७

## आश्वलायनः

अग्निस्वरूपं तत्सरणं च

[6]होष्यन्नग्नेर्विजानीयात् स्वरूपं श्रुतिचोदितम् ।
अजानता कृतं कर्म तदल्पफलमिष्यते ॥

श्रुतिचोदितमिति 'चत्वारि शृङ्गा' इत्यनया श्रुत्या चोदितमित्यर्थः । प्रपा. ३२

[1]स्मरेदग्निं द्विजो होष्यन् रक्तं गोवृषरूपिणम् ।
विवृतोर्ध्वाननं मध्ये बृहत्कर्णं सुलोचनम् ॥
[2]चतुःशृङ्गं त्रिपादं च द्विशीर्षं सप्तहस्तकम् ।
द्विपुच्छं च त्रिधा बद्धं चतुर्नेत्रं त्रयीमयम् ॥
[3]शृङ्गाश्चत्वार उद्दिष्टा या ऊर्ध्वसमिधश्च ते ।
वैदिकं तान्त्रिकं वक्त्रे पादाः परिधयस्त्रयः ॥
[4]वक्त्रद्वयं समुद्दिष्टं तान्त्रिकं वैदिकं तथा ।
वैदिके वैदिकं कुर्यात्तान्त्रिके तान्त्रिकं तथा ॥
[5]ऋगाद्याश्च त्रयो वेदाः पुरुषार्थास्तदीक्षणाः ।
छन्दांसि सप्त हस्ताश्च पुच्छौ पक्षौ सितासितौ ॥
[6]रोमाण्यूरूणि तस्याऽऽहुश्चातुर्मास्यानि बन्धनम् ।
संवत्सरोऽनूयाजाख्यसमित्कर्मसु गद्यते ॥
[7]दश पञ्च दिनान्येव समिधः प्राहुरुत्तमाः ।
चातुर्मास्यमयो रज्जुर्बर्हिरोषधयः स्मृताः ॥
[8]तच्च सर्वात्मनो वह्नेरात्मत्वेन निगद्यते ॥

पूर्णपात्रनिनयनं प्रोक्षणं च

[9]गंगाद्याः सरितः सर्वाः पूर्णपात्रे तु संस्थिताः ।
ताभिरभ्युक्षितो यस्तु स पुनीतो भवेद्ध्रुवम् ॥

---

(१) शाम. ५ निपाति (नुपाति) पू.; संर. ६११.
(२) संत. ८७२ अङ्गुष्ठा (ह्यङ्गुष्ठा); शाम. ५; संदी. ४४ (=) नेनैव (नेन तु).
(३) प्रपा. ३१; संत. ८६०; प्रर. ५०.
(४) संर. ५७.
(५) अङ्गिस्मृ. ६१; आर. ७ द्विजन्मनोः (द्विजातिषु) उत्तरार्धे (अन्तरं यदि गच्छेत्तु विप्रश्चान्द्रायणं चरेत् ॥).
(६) आश्वस्मृ. ५।६४; प्रपा. ३२; आन. ६२.

(१) आश्वस्मृ. ५।६५ दग्निं द्वि (दग्नेर्द्वि); प्रपा. ३२ विवृतो (विततो); आन. ६२ रक्तं गो (रक्तगो) बृहत्कर्णं (चलत्कर्णं) : ६९ पाठभेदः पूर्ववत्, पू.
(२) आश्वस्मृ. ५।६६; प्रपा. ३२.
(३) आश्वस्मृ. ५।६७ धश्च ते (धौ च तौ); प्रपा. ३२.
(४) आन. ६२.
(५) आश्वस्मृ. ५।६८ श्च त्रयो (स्तास्त्रयो); प्रपा. ३२ हस्ताश्च (हस्तानि).
(६) आश्वस्मृ. ५।६९; प्रपा. ३२ नूयाजाख्यस (नुयाजाख्यः स).
(७) आश्वस्मृ. ५।७०; प्रपा. ३२ दश (तदा) पू.
(८) प्रपा. ३२.
(९) आश्वस्मृ. ५।७१ पात्रे तु (पात्रेषु); प्रपा. ५२.

[१]कर्मान्ते पूर्णपात्रं तदाकृष्यैवावनिं स्पृशन् ।
बर्हिषि स्थाप्य संतर्प्य स्रावयेद्वारुणीं दिशम् ॥

संतर्प्येति संतर्पणमुत्सेचनम् । प्रपा. ५२

[२]वामं तत्पश्चिमे न्यस्य करं दक्षेण गृह्य च ।
न्यञ्चं कुर्यात्ततः पात्रं पश्चिमाभिमुखं द्विजः ॥

[३]ताः स्मृत्वा विशमानास्तु समुद्रं प्रति पावनीः ।
आत्मानं प्रोक्षयेदन्यांश्चाद्भिस्ताभिः शुभाप्तये ॥

## लघ्वाश्वलायनः

हवनप्रकारः

[४]हविश्च जुहुयादग्नावुद्देशात्यागपूर्वकम् ।
स्वाहान्ते चैव सर्वत्र होमकर्मणि चात्र तु* ॥

स्थण्डिलकरणम् अग्निस्थापनं च

[५]प्राणानायम्य संकल्प्य विधाय स्थण्डिलं शुचिः ॥
हस्तमात्रं चतुष्कोणं गोमयेन विलिप्य च ॥

तण्डुलान्प्रकिरेद्रेखामुदक्संस्थां लिखेदथ ।
प्राक्संस्थे पार्श्वयोर्मध्ये तिस्रश्चैवोदगायताः ॥

निदध्याच्छकलं तत्र प्रोक्ष्य प्राग्रं निरस्य च ।
संप्रोक्ष्य पुनरद्भिश्च तथा चानलमानयेत् ॥

एहीत्यग्निं समादाय स्थापयेद्भूर्भुवः स्वरोम् ।
अग्निनाऽग्निस्ततो जुष्टः प्रनूनं तिस्र एव च ॥

ध्यानम् अग्निसमिन्धनं च

ध्यानं चत्वारि शृङ्गेति कुर्यादग्नेर्यथाविधि ।
विज्योतिषेत्यनेनैव मन्त्रेणाग्निं समिन्धयेत् ॥

अन्वाधानम्

ध्यात्वा रूपं ततो वह्नेर्दर्शयेदेष हीत्यथ ।
धृत्वा तु समिधौ ( * चाग्निमग्नीषोमौ च देवते ) ॥

प्रधानदेवते चोक्त्वा तथा चैवाङ्गदेवताः ।
क्रमेण चरुणाऽऽज्येन सद्यो यक्ष्य इति क्षिपेत् ॥

परिसमूहनपर्युक्षणे

पर्यूहनं ततः कुर्याज्जलेन परिषेचयेत् ।
अनादेशे तु सर्वत्र दक्षिणः पाणिरुच्यते ॥
पाणिना सोदकेनाग्नेः समन्तात्परिमार्जनम् ।
अनुलेपमुदक्संस्थं कुर्यादीशानकोणतः ॥
पर्युक्षणेऽप्युदक्संस्थं पाणिनेशानकोणतः ।
पुनरावर्तयेत्प्रत्यगीशानान्तं हविर्भुजम् ॥

परिस्तरणम्

प्रसारयेदुदक्संस्थान्पूर्वपश्चिमयोः कुशान् ।
दक्षिणोत्तरतश्चैव प्राक्संस्थान् पूर्वतः क्रमात् ॥
मुष्टिमात्रैः कुशैरग्नेः समन्ताद्धोमकर्मसु ।
परिस्तृणीयात्प्रागग्रैश्चतुर्दिक्षु यथाक्रमम् ॥
विन्यसेत् कुशमूलानां कुशाग्रानुपरि क्रमात् ।
दक्षिणोत्तरयोश्चैव चतुष्कोणेषु चैव हि ॥

पात्रासादनम्, इध्मबन्धनम्, प्रोक्षणीप्रणीता-
पात्रसंस्कारः

आस्तीर्याग्नेरुदग्दर्भान्प्रागग्रान्त्रत्निसंमितान् ।
द्वन्द्वमासादयेन्न्युब्जं यज्ञपात्राणि तत्र तु ॥
स्थाली च प्रोक्षणी दर्वी स्रुवः पूर्णाऽऽज्य-भाजने ।
इध्मं( ? इध्मश् ) चैव तथा बर्हिश्चरुहोमे विधीयते ॥
चौलोपनयनोद्वाहे पुनराधान एव च ।
प्रोक्षणीं स्रुवपूर्णाज्यमिध्माबर्हिः स्रुवाज्यके ॥

---

* 'अत्र तु' इत्युत्तरान्वयि । तेन वैश्वदेवबलिहरणे एव स्वाहाकारः, नान्यत्र बलिहरणे इति सिद्धम् । बलिहरणान्तरे तु नमस्कार एव । तदिदं 'स्वाहेत्यथ बलिहरणम्' इत्याश्वलायनगृह्यसूत्रवृत्त्यादौ स्पष्टम् ।

(१) आश्वस्मृ. ५।७२ ; प्रपा. ५२.

(२) आश्वस्मृ. ५।७३ ; प्रपा. ५२.

(३) आश्वस्मृ. ५।७४ ; प्रपा. ५२ दन्यांश्चाद्भि (द्विद्वानद्भि).

(४) लघ्वाश्वस्मृ. १।१३२–१३३.

(५) लघ्वाश्वस्मृ. २।४–१९.

* कंसस्थितं पार्वणस्थालीपाकमात्रविषयम् ।

रज्जुकरणम्

[1]आदायाऽऽदौ कुशांस्त्रींस्त्रीन्मूलैर्मूलानि वेष्टयेत् ।
सव्यावृत्तान्कुशान्कुर्यादधस्तात्तान्नयेदुदक् ॥
वामस्थानितरांस्तद्वत्कुर्याद्रज्जुं त्रिसंधिताम् ।
उपरिष्टान्नयेत्तद्वत्तृतीयावर्तनं च हि ॥
रज्ज्वेध्मं सकृदावेष्ट्य रज्जुमूलं तथैव च ।
वेष्टितायाश्च पूर्वाया रज्ज्वग्रं च नयेदधः ।
रज्जुग्रन्थिमधः कृत्वा प्रागग्रान् सादयेदथ ॥
[2]प्रोक्षणं न्यकपवित्राभ्यां प्रोक्षयेत्सलिलं ततः ।
कृत्वोत्तानं पवित्रे ते निधायापः प्रपूजयेत् ॥
सोदकाभ्यां पवित्राभ्यां त्रिः समुत्पूय चैव हि ।
कुर्यादेकैकमुत्तानं द्वन्द्वं च प्रोक्षयेत् पुनः ॥
विस्रस्येध्मं तथा बर्हिर्निदध्याच्चमसे च ते ।
पवित्रे पूरयेद्वारि गन्धपुष्पाणि च क्षिपेत् ॥

ब्रह्मवरणोपवेशने

निरस्य नैर्ऋतान् दर्भान् निरस्त इति मन्त्रतः ।
कर्ताऽऽचरे( ऽऽ चामे )दिमं मन्त्रमुक्त्वा विष्टः कुशासने ।
ब्रह्माणं वरयेदस्मिन् कर्मणि त्वं भवेरिति ।
ब्रूयाद्ब्रह्माऽहमस्मीति ततः कर्ता तमर्चयेत् ॥

प्रणीताप्रणयनम्

धृत्वा पूर्णं करे सव्ये पिधायोपरि दक्षिणम् ।
ब्रह्मन्नित्युच्चरन्मन्त्रं नीत्वा तन्नासिकाग्रतः ॥
निदध्यादुदगग्रे तन्मन्त्रेणों प्रणयेति च ।
कुशैराच्छादितं कुर्यात् पूर्णपात्रं तदुच्यते ॥

निर्वापः , तण्डुलसंस्कारः , चरुश्रपणं च

शूर्पं पश्चान्निधायाग्नेः पवित्रे स्थापयेच्च ते ।
निर्वपेच्चतुरो मुष्टींस्तानेव प्रोक्षयेदथ ॥
तण्डुलानवहंस्त्रींस्त्रीन् ( ? नवहन्यात्त्री ) कृत्वा तांस्त्रिः फलीकृतान् ।
त्रिः प्रक्षाल्य पचेदग्नेरुदक्चैवाऽऽज्यभाजने ॥

आज्यसंस्कारः

सपवित्रे निषिच्याऽऽज्यं ततोऽङ्गारानपोह्य च ।
तत्राऽऽज्यभाजनं स्थाप्य संस्कुर्यादुल्मुकेन च ॥
निक्षिपेत् कुशयोरग्नेः( ? रग्रे ) पर्यग्निकरणं ततः ।
त्रिः कुर्याज्ज्वलता तेन तत् प्राक्परिहरेदथ ॥
कर्षन्निवोदगुद्वास्य भाजनं घृतपूरितम् ।
कुशाग्रे निक्षिपेदग्नौ स्कन्दायेत्युच्चरन्नथ ॥
धृत्वा तूत्तानपाणिभ्यां पवित्रे चोदगग्रके ।
सवितुष्ट्वेति मन्त्रेण सकृत् तूष्णीं द्विरिष्यते ॥
उत्पूयाऽऽज्यं पवित्रे ते प्रोक्ष्याऽऽग्नौ प्रहरेदथ ।
प्रत्यगासादयेदग्नेर्बर्हिस्तच्चाऽऽज्यभाजनम् ॥

स्रुक्स्रुवसंमार्गः , हविरवेक्षणम्

प्रताप्य सकुशौ दर्वीस्रुवौ दर्वीं निधाय च ।
सव्येन स्रुवमादाय कुशानितरपाणिना ॥
स्रुवस्य बिलमारभ्य यावदग्रं भवेदथ ।
अग्रतो बिलपृष्ठं तु तदारभ्य भवेद्बिलम् ॥
निमृजेत्त्रिस्त्रिरेकं तु कुशाग्रैः सव्यवच्च हि ।
कुशमूलैश्च वै दण्डं कुशैः प्रोक्ष्य प्रतापयेत् ॥
आसादयेत्स्रुवं चाऽऽदौ बर्हिष्युत्तरतो घृतात् ।
संस्कुर्यात्पूर्ववद्दर्वीं निदध्यादुत्तरे स्रुवात् ॥
संमार्जितान् कुशान् प्रोक्ष्य प्रहरेदनले च तान् ।
सम्यगाज्यं निरीक्ष्याथ चरुं पक्वमवेक्षयेत् ॥

हविष उद्वासनं स्थापनं विभाजनं च

अभिघार्य स्रुवेणाऽऽज्यं चरुमुद्वासयेदुदक् ।
हविर्भुगात्मनोश्चैव मध्यतश्चरुमानयेत् ॥
निदध्यात्तां चरोः स्थालीं बर्हिष्याज्यं च दक्षिणे ।
अभिघार्य चरुं चान्यत् पात्रं स्यादुत्तरे चरोः ॥
देवतायै हविः स्थाप्य तत्र तद्विभजेत् क्रमात् ।
अमुष्यै चेदमित्युक्त्वा यथालिङ्गं यथाक्रतु ॥

(१) लघ्वाश्वस्मृ. २-२२-२५.
(२) लघ्वाश्वस्मृ. ३।२७-५८.

अग्न्यर्चनस्तवने

विश्वानीत्यष्टभिः पादैः पूर्वतो दिक्षु चाष्टसु ।
अर्चयेद्गन्धपुष्पाद्यैरग्निं स्तूयादृचाऽन्त्यया ॥

इध्माधानम् आघारौ च

अलंकृत्याभिघार्येध्ममादायायं त इत्यथ ।
हुत्वेध्मं जुहुयादाज्यं तूष्णीं वायव्यकोणतः ॥
ततश्चाऽऽग्नेयपर्यन्तं प्रजापतिपदं स्मरेत् ।
स्वाहेत्युक्त्वाऽथ निर्ऋतिमारभ्येशानकोणतः ॥
गृह्यवद्भिरिमौ मन्त्रावाघाराविति भाषितौ ।
होमे चैव तु सर्वत्र विधिरेष उदाहृतः ॥

आज्यभागौ

अग्निश्चैव तथा सोमश्चक्षुषी जातवेदसः ।
भवेदुत्तरमाग्नेयं सौम्यं चैवाक्षि दक्षिणम् ॥
सक्तुलाजान्नहोमे तु जुहुयादेव चक्षुषी ।
अनुप्रवचनीये च वर्जयेदाज्यहोमके ॥

अवदानधर्मः, प्रधानहोमः, आहुतिदेशश्च

अभिघार्य स्रुवेणेदमाग्नेयं* मध्यतो हविः ।
दर्वीं च हविरादाय विधिना स्थापयेदिह ॥
तर्जनीमध्यमाङ्गुष्ठपर्वमात्रं च वै स्रुचि ।
तत्पुरस्तात्तथाऽऽदाय निदध्यात्तत्तथैव हि ॥
पात्रस्थं चापि दर्वीस्थं पुनरप्यभिघारयेत् ।
पञ्चावत्ती तु पश्चार्धादादाय च हविस्तथा ॥
जुहुयादग्नये स्वाहा दर्व्या मध्ये तु नेत्रयोः ॥

स्वाहाकारान्ते होमः त्यागाकारश्च

[१]मन्त्रमुच्चार्य सर्वत्र स्वाहान्ते जुहुयाद्धविः ।
समुच्चार्य चतुर्थ्यन्तं नामेदं न ममेति च ॥

स्विष्टकृद्धोमः, इध्मसंनहनहोमः, संस्रावहोमः

द्वयोश्चापि हविःशेषं द्वयोश्चापि अवद्य च ।
दर्व्या सकृदवद्याच्च द्विस्ततो वाऽभिघारयेत् ॥

यदस्येत्यनया हुत्वा प्रागुदक्तु हविर्भुजः ।
रुद्राय जुहुयाद्रज्जुं विस्रंस्याच्चेध्मबन्धिनीम् ॥
स्रुक्स्रुवाज्याहुतेः शेषं विश्वेभ्यो जुहुयादथ ॥

प्रायश्चित्ताहुतयः

सर्वत्र जुहुयाद्धोमे प्रायश्चित्ताहुतीरथ ॥
अयाश्चाग्न इदं विष्णुश्चतस्रो व्याहृतीश्च हि ।
ब्रह्माऽपि जुहुयादेताः प्रायश्चित्ताहुतीरिमाः ॥
अनाज्ञातमिति द्वाभ्यां ज्ञाताज्ञातनिवृत्तये ।
सर्वत्रापि हि चैवं स्याद्विधिरेष उदाहृतः ॥
यत्पाकत्रेति मन्त्रेण न्यूनाधिकनिवृत्तये ।
मन्त्रतन्त्राधिकन्यूनविपर्यासविकर्मणः ॥
स्वरवर्णादिलोपोत्थपापनिर्हरणाय च ।
यद्व इत्यनेनात्रैकामाहुतिं जुहुयादथ ॥

पूर्णाहुतिः

सम्यक्पूर्णफलप्राप्त्यै होमस्येह कृतस्य च ।
कर्तैव जुहुयादाज्यं व्याहृतीभिश्चतसृभिः ॥

दिगुत्सेकः, मार्जनम्, प्रोक्षणं च

स्थाल्यादीनि च पात्राणि नीत्वा तूष्णीं निधाय च ।
चमसं पुरतः कृत्वा निधायाथ च बर्हिषि ॥
पूर्णमसीत्यनेनैव तत्पूर्णमभिमन्त्रयेत् ।
दिशः प्रागायतो दर्भैः प्राच्यां मन्त्रेण मार्जयेत् ॥
आपो अस्मानिदमापः सुमित्र्या न इति त्रिभिः ।
शिरसि स्वस्य पत्न्याश्च मार्जयेद्द्विषम इत्यधः ॥
स्वस्य वामेऽञ्जलौ पत्न्या आसीनाया निषिञ्चयेत् ॥
माऽहं प्रजामनेनैव चमसस्थं जलं च हि ॥
जलेन तेन वै होता प्रोक्षयेच्छिरसी तयोः ।
तत्रस्थानक्षतांश्चैव क्षिपेत् प्रणवमुच्चरेत् ॥

परिस्तरणविसर्जनादि, उपस्थानम्, प्रार्थना, दक्षिणादानम्

परिस्तरणदर्भांश्च विसृजेदुत्तरे हि तान् ।
ओं च म इत्यनेनाग्निं नत्वा पूर्ववदुच्चरेत् ॥

---

* इदमाग्नेयपदम्, अग्रे 'अग्नये स्वाहा' इति मन्त्रः, 'द्वयोश्चापि' इति द्वित्वसंख्या चेत्येतत्सर्वं पार्वणस्थालीपाकमात्रविषयम्, आवृत्तु साधारणी ।

(१) लघ्वाश्वस्मृ. २।५९-७८.

पर्यूह्य परिषिच्याथ गन्धपुष्पाक्षतांश्च हि ।
धूपं दीपं च नैवेद्यं दद्यात्ताम्बूलदक्षिणाः ॥
तिष्ठन्नग्नेरुपस्थानं कुर्यादों च म इत्यथ ।
अभिवाद्य जपेद्देवीं कृतं कर्म निवेदयेत् ॥
शुभाशुभक्रियार्थं च दत्तं विप्राय यद्धनम् ।
तत्सर्वं जगदीशस्य प्रीतये निश्चितं भवेत् ॥
हुतशेषं हविश्चाऽऽज्यं होत्रे दद्याच्च दक्षिणाम् ।
सुवर्णं च यथाशक्ति होमसाद्गुण्यहेतवे ॥
होमान्ते ब्रह्मणे दद्याद्यज्ञपात्राणि चैव हि ।
होमे चैव तु सर्वत्र प्रवदन्ति मनीषिणः ॥

## अगस्त्यः

द्रवद्रव्याहुतिमानम्

[1]द्रवद्रव्यस्य मानं स्याद्धारा गोकर्णदीर्घिका ॥

## स्मृत्यन्तरम्

अग्न्यायतनस्याऽऽकारो मानं च

[2]अरत्निमात्रं विज्ञेयमग्नेरायतनं शुभम् ।
श्रौते चौपासने कण्ठखातयोनिविवर्जितम् ॥
मेखलाद्वितयं कार्यं रेखालग्नं तु बाह्यतः ।
बाह्या द्व्यङ्गुलविस्ताराऽभ्यन्तरा चतुरङ्गुला ।
बाह्या षडङ्गुलोत्सेधाऽभ्यन्तरा द्वादशाङ्गुला ॥

साङ्गमायतनं स्मृतावुक्तम्— अरत्निमात्रमिति । औपासनग्रहणं गृह्योक्तलौकिकाग्निसाध्यकर्मोपलक्षणम् ।

संर. ५०

परिषेचन–परिधान–परिस्तरण–पूजनदेशाः

[3]त्रिभिश्चैव चतुर्भिश्च पञ्चभिः षड्भिरङ्गुलैः ।
सेचनं परिधींश्चैव स्तरणं पूजनं तथा ॥

यत्तु स्मृत्यन्तरे उक्तम्— 'त्रिभिश्चैव' इति चतुरङ्गुलात्मकपरिधिपरिधानदेशावधिकथनं तच्छाखान्तरविषयम्, न सत्याषाढसूत्रानुसारिविषयम्, भाष्यकृता परिस्तरणामुपर्येव परिधिपरिधानस्योक्तत्वात् ।

संर. ७१

होमान्तेऽग्न्यर्चनम्

[1]गन्धपुष्पादिभिर्वह्निं होमान्ते परिपूजयेत् ॥

होमान्ते वह्निपूजनमुक्तं स्मृत्यन्तरे— गन्धपुष्पादिभिरिति । गन्धपुष्पादिभिरित्यनेन पूर्वोपचारनिवृत्तिः क्रियते । बहिरग्निमनुलक्ष्यीकृत्य पूजयेत्, 'त्रिभिश्चैव चतुर्भिश्च पञ्चभिः षड्भिरङ्गुलैः । सेचनं परिधींश्चैव स्तरणं पूजनं तथा ॥' इति स्मृत्यन्तरे देशविशेषनियमोक्त्या पूजनबहिर्भावस्यापि उक्तत्वात् । शिष्टानां संप्रदायोऽप्येवम् । आगमशास्त्रे त्वग्नावेव पूजोक्ता । अयं प्रकारो वैदिकैर्नानुष्ठीयत इदानीम् । अग्निपूजने आरक्तगन्धपुष्पादि वर्जयेदिति अभियुक्ताः । दिव्यप्रकरणस्याग्निपूजने रक्तगन्धपुष्पविधानात्तत्र न रक्तगन्धपुष्पनिषेधः । एतेन ज्ञायतेऽन्यत्राऽऽरक्तगन्धपुष्पनिषेध इति । इदं चाऽऽरक्ताक्षताद्युपलक्षणम् ।

संर. ७९

## वायुपुराणम्

स्थण्डिलकरणे उद्धरणकर्तव्यता

[2]वसुंधरा यदा सृष्टा हीना वा यदि वा समा ।
ततः समात्समः कुर्याच्छेषोद्धृत्य बहिः प्लुतः ॥

उद्धरणं रेखातः पांसूनामुद्वापनम् । तच्चोल्लेखनक्रमेण अनामिकाङ्गुष्ठाभ्यां कर्तव्यमिति सांप्रदायिकाः ।

संग. २७

पूर्णाहुतिः

[3]ततो होमावशिष्टेन घृतेनाऽऽपूर्य वै स्रुचम् ।
निधाय पुष्पं तस्याग्रे स्रुवेणाधोमुखेन ताम् ॥
सदर्भेण समाच्छाद्य मूलेनाञ्जलिनोत्थितः ।
वौषडन्तेन जुहुयाद् धारां जवसमन्विताम् ॥

---

(१) प्रपा. ३९२ ; गभा. ११४ ; प्र. १२२ ; संग. २१० ; संर. ६११.
(२) संर. ५०.
(३) संर. ६२, ७१, ७९.

(१) संर. ७९. (२) संग. २७. (३) संदी. ४९.

## ब्रह्माण्डपुराणम्

होमोत्तरमर्चनोत्तरं च पुण्ड्रकरणम्

[1]स्नात्वा पुण्ड्रं मृदा कुर्याद्धुत्वा चैव तु भस्मना।
देवानभ्यर्च्य गन्धेन सर्वपापापनुत्तये ॥

## मार्कण्डेयपुराणम्

होमात्प्रागग्न्यर्चनम्

[2]संपूजयेत्ततो वह्निं दद्याच्चैवाऽऽहुतीः क्रमात् ॥

ध्यानं कृत्वा 'अमुकाग्ने इहाऽऽगच्छ' इत्यावाह्य 'अमुकाग्नये नमः' इति पूजयेत्, 'संपूजयेत् ...' इति मार्कण्डेयपुराणात्। संत. ८७५

## मत्स्यपुराणम्

स्रुवधारणदेशः, देशान्तरधारणफलानि, धारणमुद्रा च

[3]मूले हानिकरं प्रोक्तं मध्ये शोककरं तथा।
अग्रे व्याधिकरं प्रोक्तं स्रुवं धारयते कथम् ॥
कनिष्ठाङ्गुलिमानेन चतुर्विंशतिकाङ्गुलम्।
चतुरङ्गुलं परित्यज्य अग्रे चैव द्विरष्टकम्।
चतुरङ्गुलं च तन्मध्ये धारयेच्छङ्खमुद्रया ॥

द्विरष्टकं षोडश। संदी. ४७

स्रुवमूलस्य संगोपनीयत्वम्

[4]हीयते यजमानो वै स्रुवमूलस्य दर्शनात्।
तस्मात्संगोपयेन्मूलं होमकाले स्रुवस्य तु ॥

पूर्णाहुतिः

[5]पूर्णाहुतिं च मूर्धानं दिव इत्यभिपातयेत् ॥

## विष्णुधर्मोत्तरपुराणम्

हवनप्रकारः

[6]मन्त्रेणोंकारपूतेन स्वाहान्तेन विचक्षणः।
स्वाहावसाने जुहुयाद् ध्यायन् वै मन्त्रदेवताम् ॥

(१) मुक्ता. २९५ ; संर. ७९.
(२) संत. ८७५. (३) संदी. ४६-४७.
(४) संग. ४३ यजमानो वै (यजमानश्चेत्) तु (च) कर्मकौमुद्याम् ; संदी. ४७.
(५) शाम. २० ; संदी. ४९ गोभिलीये.
(६) कुर. ६२ ; निप्र. १९१ स्वाहावसाने (मन्त्रावसाने) ; संत. ८७५ स्मृतिः ; पप्र. ७८ ; संदी. ४३.

## कूर्मपुराणम्

वस्त्रेणोपधमननिषेधः

[1]वस्त्रेण नैवोपधमेत् ॥

## भविष्यपुराणम्

हवनीयत्यागप्रकारः

[2]आहुतिस्तु घृतादीनां स्रुवेणाधोमुखेन च।
हुवेत्तिलाद्याहुतीश्च दैवेनोत्तानपाणिना ॥

हवनविषयकाः केचिन्निषेधाः

[3]भूमौ स्थितेन पात्रेण विष्टब्धेन च पाणिना।
वामेन यदुशार्दूल नान्तरीक्षे तु हूयते ॥

पूर्णाहुतिः

[4]दद्यादुत्थाय पूर्णां वै नोपविश्य कदाचन ॥

## अग्निपुराणम्

पूर्णाहुतिः

[5]मूर्धानं दिवमन्त्रेण संस्रवेण च धारया।
दद्यादुत्थाय पूर्णां वै नोपविश्य कदाचन ॥

## देवीपुराणम्

अग्निप्रणयनम्

[6]ताम्रपात्रे शरावे वा आनयित्वा हुताशनम्।
अग्निप्रणयनं कुर्याद्यजमानसुखावहम् ॥

## आदित्यपुराणम्

होमे त्वरायाः मन्त्राराहित्यस्य अप्रवृद्ध-सधूमाग्न्यधिकरणकत्वस्य च निषेधः

[7]क्षुत्तृट्क्रोधत्वरायुक्तो मन्त्रहीनं जुहोति यः।
अप्रवृद्धे सधूमे वा सोऽन्धः स्यादन्यजन्मनि ॥

(१) निप्र. १९५. (२) संदी. ४७.
(३) चदा. १३८ ; निप्र. १९५ रीक्षे तु (रीक्षेण).
(४) संत. ८७९ भविष्याग्निपुराणयोः.
(५) संत. ८७९ उत्त., भविष्याग्निपुराणयोः ; शाम. २० ; संदी. ४८ वै (तु).
(६) संत. ८६०.
(७) कुर. ५९ मन्त्रहीनं (हीनमन्त्रैः) ; निप्र. १९५ ; रत्न. ९३ त्वरायुक्तो (समायुक्तो) शेषं कुरवत्, ब्रह्मपुराणम्.

क्षुत्तट्क्रोधत्वरायुक्त इति बुभुक्षा–पिपासा–क्रोधनिमित्तत्वरायुक्तः। एतच्च दृष्टप्रयोजननिमित्तत्वरोपलक्षकम्, तेन होमिना त्वरा न कर्तव्या। जुहोतीत्युपलक्षणम्, तेन जपादिष्वप्यदृष्टप्रयोजनेषु त्वरा न कार्येति बोद्धव्यम्। कुर. ६०

होमानर्हा अग्न्यवस्थाः

[1]स्वल्पे रुक्षे सस्फुलिङ्गे वामावर्ते भयानके।
आर्द्रकाष्ठे स्वसंपूर्णे फुत्कारवति पावके॥
कृष्णार्चिषि सुदुर्गन्धे तथा लिहति मेदिनीम्।
आहुतीर्जुहुयाद्यस्तु तस्य नाशो भवेद्ध्रुवम्॥

## पुराणे

स्थण्डिलोपलेपनकर्तव्यता

[2]सर्वत्र वसुधा मेध्या सशैलवनकानना।
अथ विष्णुपदाक्रान्तोपलेपनमिदं कुतः॥
पुरा शक्रो हि(? शक्रेण) वज्रेण वृत्रं हत्वा महासुरम्।
तन्मेदसा हि निर्लिप्ता तदर्थमुपलेपनम्॥

## अनिर्दिष्टकर्तृकवचनानि

स्थण्डिलकरणम् उद्धरणप्रयोजनं च

[3]प्राक्प्रवणमुदक्प्रवणं वा स्थण्डिलं करोति पञ्चाङ्गुलोच्छ्रायं पश्चात् चतुरङ्गुलोच्छ्रायं पुरत एवमेवान्यत्र॥

अन्यत्र उदक्प्रवणत्वे। यद्यपि प्रागुदक्प्रवणपक्षोऽत्र नोक्तस्तथाऽपि देशे प्रागुदक्प्रवणताया दर्शनादत्र प्राप्तिः। संर. ५२

[4]खादिरं स्फ्यं प्रकल्प्याथ तिस्रो लेखाश्च पञ्च वा।
स्थण्डिलोल्लेखनं कुर्यात्स्रुवेण च कुशेन च॥

उल्लेखनं रेखाकरणम्। तच्च स्फ्येन, तदभावे स्रुवेण, 'खादिरं स्फ्यम्' इति वासनाभाष्यधृतवचनात्। चतुर्थपादे चद्वयं वाऽर्थे। संदी. २५

[1]तिस्रः पञ्चाथवा रेखा न भिद्यन्ते कदाचन।
रेखा येन विभिद्यन्ते तमाहुर्ब्रह्मघातकम्॥

रेखाश्च उदक्संस्थाः प्राक्संस्था वा स्थण्डिलायामपरिमिताः प्रागग्रा उदगग्रा वा तिस्रः पञ्च वा कार्याः। संदी. २५

[2]प्रथमा दक्षिणा रेखा द्वितीया मध्यमा भवेत्।
उत्तरा च तृतीया स्यात् त्र्युल्लिख्यैवं सदा बुधैः॥
अङ्गुष्ठाङ्गुलिपर्वाभ्यामुद्धरेत्पांसुमेव हि।
पांसुयुक्ता तु पूर्वेण त्यक्त्वा दारा धनं तथा॥
[3]विचरन्ति पिशाचा ये आकाशस्थाः सुखासनाः।
तेभ्यः संरक्षणार्थाय उद्धृतं चैव कारयेत्॥

णिच् स्वार्थे। संदी. २६

[4]गङ्गादिसर्वतीर्थेषु समुद्रेषु सरित्सु च।
सर्वतश्चाप आदाय अभ्युक्षेच्च पुनः पुनः॥

अग्निध्यानम्

[5]सप्तहस्तश्चतुःशृङ्गः सप्तजिह्वो द्विशीर्षकः।
त्रिपात्प्रसन्नवदनः सुखासीनः शुचिस्मितः॥

---

(१) कुर. ६०; रत्न. ९३ ब्रह्मपुराणम्.
(२) संर. ५३. (३) संर. ५२ शाखान्तरे.
(४) संग. २७ कुशेन च (कुशेन वा); संदी. २५ लेखाश्च (रेखाश्च).

(१) संग. २७ तिस्रः (त्रीणि) रेखा येन विभिद्यन्ते (रेखा रेखाभिर्भिद्यन्ते); संदी. २६.
(२) संग. २७.
(३) संग. २७ सुखासनाः (सुखासिनः) उद्धृतं (उद्धृत्य); संदी. २६.
(४) संग. २८ अभ्युक्षेच्च (अभ्युक्ष्य च); संदी. २६.
(५) प्रपा. ३२.

स्वाहां तु दक्षिणे पार्श्वे देवीं वामे स्वधां तथा ।
बिभ्रद्दक्षिणहस्तैश्च शक्तिमन्नं स्रुचं स्रुवम् ॥
तोमरं व्यजनं वामैर्घृतपात्रं च धारयन् ।
*मेषारूढं जटाबद्धं गौरवर्णं महौजसम् ॥
धूमध्वजं लोहिताक्षं सप्तार्चिः सर्वकामदम् ।
आत्माभिमुखमासीनमेवं ध्यायेद्धुताशनम् ॥

विमुखस्याग्नेर्जलपरिषेकेणाभिमुखीकरणम्

[1]पादौ पश्चिमतो वह्नेः पूर्वतः शिर उच्यते ।
दक्षिणोत्तरबाहुभ्यामूर्ध्ववक्त्रस्त्रिबन्धयोः ॥
अधोमुखस्तूर्ध्वबाहुः प्राङ्मुखो हव्यवाहनः ।
तिष्ठत्यनेन भावेन आहुतिः कुत्र दीयते ॥
तावुभौ प्राङ्मुखौ ज्ञेयावाहुतीः कुत्र जुह्वति ।
करेण तोयमादाय वह्निं कृत्वा प्रदक्षिणम् ॥
एष हि देवेति मन्त्रेण पवित्रोदकहस्तकृत् ।
हव्यवाट् सलिलं दृष्ट्वा भीतः प्रत्यङ्मुखो भवेत् ॥
[2]ऊर्ध्वपादावधोवक्त्रः प्राङ्मुखो हव्यवाहनः ।
ईदृशे वह्निरूपे तु आहुतिः कस्य दीयते ॥
सपवित्राम्बुहस्तेन वह्नेः कुर्यात् प्रदक्षिणम् ।
हव्यवाट् सलिलं दृष्ट्वा विभीतः सन्मुखो भवेत् ॥

अग्निजिह्वाः तासामृषयस्तत्साध्यकर्माणि च

[3]वसिष्ठो वामदेवश्च जाबालिः काश्यपस्तथा ।
कण्वो बृहस्पतिश्चैव रोमपादोऽङ्गिरास्तथा ॥
हिरण्यवर्णा जिह्वा च पश्चिमे दिशि तिष्ठति ।
वसिष्ठोऽस्या ऋषिः प्रोक्तो विवाहादिषु कर्मसु ॥
कनका मध्यमा चैव वामदेवस्य जातके ।
रक्तोत्तरा च जाबालेरौपनायनकर्मणि ॥
कृष्णा च दक्षिणा जिह्वा काश्यपी पितृकर्मणि ।
कण्वस्य सुप्रभा पूर्वा सर्वकर्मसु शस्यते ॥
अतिरक्ताऽग्निदिग्भागे गुरोः शान्तिककर्मणि ।
ऐशाने बहुरूपा स्याद्रोमपादोऽङ्गिरोऽथवा ।
एवं जिह्वाविधिं ज्ञात्वा जुहुयादक्षयं भवेत् ॥

अग्नेः कर्णाद्यवयवाः, तत्र होमस्य फलानि च

[1]यत्र काष्ठमिदं कर्णौ यत्र धूमस्तु नासिका ।
काष्ठमल्पज्वलन्नेत्रं ज्वलनं मूर्ध्नि विन्यसेत् ॥
प्रज्वाला वह्निजिह्वायामेतद्धोमस्य लक्षणम् ।
अग्नौ कर्णाहुतिः कुर्याद्दुर्भिक्षव्याधिपीडनम् ॥
नासिकायां मनोदुःखं चक्षुषि ग्रामनाशनम् ।
मूर्ध्नि स्थानेऽशुभं कुर्याद्राजा राष्ट्रे विनश्यति ।
तस्मात्सर्वप्रयत्नेन जिह्वायां होममाचरेत् ।
जिह्वास्थानं तु न ज्ञात्वा होमं यः कुरुते द्विजः ।
स होमो निष्फलं याति यदि होमस्य दुर्गतिः ॥

प्रणीतापूरणम्

[2]नो भूमौ नैव हस्ते च न काष्ठोपरि संस्थिते ।
उदकं पूरयेत्तत्र आकाशवति संस्थिते ॥

प्रणीतापूरणं मध्यमातर्जन्यङ्गुष्ठाग्रे- 'नो भूमौ नैव०' । आकाशवल्लक्षणमाह अग्निगुह्ये- 'मध्यमा तर्जनीयुक्ता अङ्गुष्ठेन समर्पिता । आकाशसहिता ख्याता प्रणीतापूरणं भवेत् ॥' इति । * संग. ३०

* अयं द्वितीयान्तविशेषणपाठो न सम्यक्, पूर्वश्लोकेषु प्रथमान्तपाठात् । अस्मिन् पाठे 'सप्तार्चिः' इत्यत्र छान्दसत्वं कल्पनीयम्, सर्वकामदपदेन समासो वा कल्पनीयः । प्रयोगग्रन्थेषु संप्रदाये च प्रथमान्तपाठोऽपि समुपलभ्यते । स यथा- 'मेषारूढो जटाबद्धो गौरवर्णो महौजसः । धूम्रध्वजो लोहिताक्षः सप्तार्चिः सर्वकामदः । आत्माभिमुखमासीन एवंरूपो हुताशनः ॥' ।

(१) प्रपा. ३२. (२) संग. ३१.
(३) प्रपा. ४१.

* संदी संगवत्.

(१) प्रपा. ४८.

(२) संग. ३० परि संस्थिते (परि संस्थितिः); संदी. २१.

[1]साङ्गुष्ठे चाङ्गुलि(? चाङ्गुली)त्रीणि प्रणीता सव्यहस्तके।
पूरयेद्दक्षिणा धारा आकाशे शब्दतन्मतम्
(? ऽऽकाशवच्छब्दतो मतम्)॥

प्रणीतापात्रस्थापनदेशः

[2]कुण्डस्योत्तरदिग्भागे प्रणीतास्थापनं भवेत्॥

आज्यसंस्कारदेशः

[3]अग्नेरुत्तरतोऽङ्गारान्निरूह्याऽऽज्यस्य संस्क्रियाम्।
कुर्यात्परिस्तृतेरर्वाङ् न परिस्तरणाद्बहिः॥

पात्रासादनम्

[4]प्रोक्षणपात्रमथ स्रुवयुक्तं पात्रमपां प्रणयेन विशिष्टम्।
भाजनमाज्यहविर्ग्रहणार्थं त्विध्ममथोपरि सादय दर्भान्॥

आज्यसंस्कारः स्रुवसंमार्गश्च

[5]स्थाल्यामाज्यस्य निर्वापोऽधिश्रयन् स्रुवमार्जनम्।
उद्वास्योत्पवनावेक्ष्य स्रुवेणाऽऽहुतिरेव च॥

स्रुवधारणम्

[6]पञ्चाङ्गुलान् बहिस्त्यक्त्वा धारयेच्छङ्खमुद्रया॥

होमकाले पञ्चाङ्गुलान् त्यक्त्वा शङ्खमुद्रया धार्यः स्रुवः। संत. ८७२

विभूतिधारणम्

[7]ततोऽनामिकया कुर्याद्बिन्दुं सघृतभस्मना।
हृदंसयोर्ललाटे च त्र्यायुषेति पदैः क्रमात्॥

ततः स्रुवलग्नसघृतभस्मना त्र्यायुषकरणम्। तत्र च 'ततोऽनामिकया' इति वचनं प्रमाणयन्ति शिष्टाः। पदैः पादैः। संदी. ४९

(१) संग. ३०. (२) संग. ३०. (३) प्रपा. ४४.
(४) प्रपा. ४३. (५) संग. ३८०.
(६) संत. ८७२. (७) संदी. ४९.

## संग्रहकारः (स्मृतिसंग्रहः)

स्थण्डिलकरणम्

[1]चतुरश्रं च सुश्लक्ष्णं तुल्यं सूत्रेण साधयेत्।
समं वेदाङ्गुलोच्छ्रायं प्रागुदक्प्रवणं भवेत्।
अधिकं वेषुमात्रं वा कुर्याद्धोमानुसारतः॥

परिधितः इषुमात्रम्, न तु सर्वत इति ज्ञेयम्। अष्टादशाङ्गुलाष्टादशाङ्गुलात्मकचतुर्श्रं कर्तव्यमिति तात्पर्यार्थः। इषुररत्नित्रयात्मकः, 'त्रिररत्निरिषुः स्मृतः' इत्यापस्तम्बोक्तेः। अरत्निप्रमाणं शुल्बसूत्रे— 'चतुर्विंशत्यङ्गुलयोऽरत्निस्तदर्धं प्रादेश इति क्लृप्तिः' इति। एतत्सूत्रव्याख्याने सार्वत्रिकी चैषा क्लृप्तिरिति सुन्दरकरविन्दाभ्यां व्याख्यातम्। 'कूर्परमारभ्य कनिष्ठिकापर्यन्त आयामोऽरत्निः' इति स्मृत्यन्तरे। शतपथे इषुप्रमाणमन्यथोक्तम्— 'पञ्चप्रादेश इषुर्भवति' इति। अस्मिन्कल्पे पञ्चदशाङ्गुलपञ्चदशाङ्गुलात्मकचतुर्श्रं भवति। संर. ५१

[2]तद्गोमयेनोपलिम्पेत्॥

तत् अग्न्यायतनम्। संर. ५३

अग्निस्थापनम्

[3]कुण्डे वा स्थण्डिले वाऽलं तत्तन्नाम्ना हविर्भुजम्।
स्थापयेन्मध्यदेशे तु ......॥

हविर्भुजम् अग्निम्। अलं पर्याप्तम्। अलमित्यत्र होमायेति शेषः। संर. ५७

अवैधसाधनैरग्निधमने दुष्फलानि साधनविधिश्च

[4]पर्णेन धमने व्याधिः शूर्पेण धननाशनम्।
पाणिना मृत्युमाप्नोति दारुणा कान्तिनाशनम्।
वस्त्रेण स्त्रीविनाशः स्यादास्येनाऽऽयुःक्षयो भवेत्॥

(१) संर. ५१. (२) संर. ५३. (३) संर. ५६.
(४) प्रपा. ३१ धमने (वै भवेत्) दारुणा कान्तिनाशनम् (आयुः क्षीणं मुखे धमे) तृतीयार्धं नास्ति; संर. ६१.

[1]धमनीमन्तरा कृत्वा तृणं वा काष्ठमेव वा ।
मुखेनोपधमेदग्निं मुखादग्निरजायत ॥
वेणोरग्निप्रसूतत्वाद्वेणुरग्नेश्च पावनः ।
तस्माद्वेणुधमन्यैव धमेदग्निं विचक्षणः ॥

यत्तु 'मुखेन धमनक्रिया' इति मुखधमनस्य कलिवर्जनं तत्साक्षान्मुखधमनस्यैव, न तु 'धमनीमन्तरा कृत्वा' इत्यनेन विहितस्यापीति द्रष्टव्यम् । संर. ६१

अग्निध्यानावश्यकता

[2]अग्निमूर्तिमविज्ञाय होमो भवति निष्फलः ।
शुभदा दक्षिणावर्ता ह्यशुभा वामभागतः ॥
घृतभारसहस्राणि काष्ठभारायुतानि च ।
एवं च क्रियते होमो ध्यानहीने न सिध्यति ॥

अग्नेः सप्त जिह्वाः, कर्मभेदेन तद्विधानं च

[3]काली कराली च मनोजवा च
सुलोहिनी या च सुधूम्रवर्णा ।
स्फुलिङ्गिनी विश्वरुचिश्च देवी
लेलायमाना इति सप्त जिह्वाः ॥

[4]विवाहे वारुणी जिह्वा मध्यमा यज्ञकर्मसु ।
उत्तरा चोपनयने दक्षिणा पितृकर्मसु ॥
[5]प्राचीना सर्वकार्येषु आग्नेयी शान्तिकर्मसु ।
ऐशानी चोग्रकार्येषु ह्येतद्धोमस्य लक्षणम् ॥

अग्नेः कर्णाद्यवयवाः तदधिकरणकहोमानां फलानि च

[1]यत्र काष्ठं तत्र कर्णौ हुनेच्चेद्व्याधियुङ्नरः ।
धूमस्थाने शिरः प्रोक्तं मनोदुःखं भवेदिह ॥
[2]यत्रालपज्वलनं नेत्रं यजमानस्य नाशनम् ।
भस्मस्थाने तु केशः स्यात्स्थाननाशो धनक्षयः ॥
[3]अङ्गारे नासिकां विद्यान्मनोदुखं विदुर्बुधाः ।
यत्र प्रज्वलनं तत्र जिह्वा चैव प्रकीर्तिता ।
गजवाजिप्रणादी तु वह्निः शुभफलप्रदः ॥

समिद्धोमलक्षणम्, अपचारे दोषश्च

[4]मूलतः कर्मनाशः स्यान्मध्यतः पुत्रनाशनम् ।
अग्रेण मुञ्चतो व्याधिरेकपाणेर्धनक्षयः ।
मूलमध्यममध्येन समिद्धोमस्य लक्षणम् ॥

(१) अत्र एकपाणिना होमनिषेधेन सव्यपाण्यन्वारब्धदक्षिणपाणिना होमविधिर्गम्यते । प्रपा. ३२

(२) मूलतो मूलेन । मध्यतो मध्येन । मूलतो मध्यत इत्युभयत्रापि 'मुञ्चतः' इत्येतस्यान्वयः । मूलमध्यमप्रदेशयोर्मध्यभागे धृत्वा समिधो होतव्याः । एतदेव समिद्धोमस्य समिदभ्याधानस्य लक्षणं ज्ञेयमिति । § संर. ७२

ब्रह्मणः कर्मपञ्चकम्

[5]निरासश्चोपवेशश्च तथा ब्रह्मजपोऽपि च ।
प्रायश्चित्ताहुतीः संस्था ब्रह्मणः कर्मपञ्चकम् ॥

---

(१) प्रपा. ३१ मन्तरा (मन्तरं) मुखेनोपधमेदग्निं (मुखेनाग्निं समिन्धीत); संर. ६०.

(२) प्रपा. ३२.

(३) प्रपा. ४८-४९; संर. ७७ स्फुलिङ्गिनी (स्फुलिङ्गिनी).

(४) प्रपा. ४९ (=): २२९, ३६१; मुक्ता. ३६३ स्मृतिरत्ने; आन. ७० (=); संर. ७७ (=).

(५) प्रपा. ४९ (=) सर्वकार्येषु (सर्वकामेषु): २२९ सर्वकार्येषु (सर्वकामेषु) ह्येत (पत): ३६१ ऐशानी (ईशानी); मुक्ता. ३६३ प्राचीना सर्वकार्येषु (पूर्वदिक् सर्वकामेषु) स्मृतिरत्ने; आन. ७० (=) प्राचीना सर्वकार्येषु (पूर्वा दिक् सर्वकामेषु) चोग्रकार्येषु (चोग्रकामेषु) चतुर्थचरणो नास्ति; संर. ७७ (=).

§ शेषं प्रपानुवादः ।

(१) प्रपा. ४८ युङ्नरः (कृन्नरः): ३९३ धूमस्थाने (धूमस्थानं); संर. ७६-७७ युङ्नरः (कृन्नरः) धूमस्थाने (धूमस्थानं).

(२) प्रपा. ४८,३९३; संर. ७७ केशः (क्लेशः).

(३) प्रपा. ४८ प्रणादी (प्रणादे): ३९३ प्रणादी (प्रणादे) शुभ (शुद्ध); संर. ७७.

(४) प्रपा. ३३ मुञ्चतो (तूच्यते) पाणेर्ध (पाणिर्ध); संर. ७२.

(५) प्रपा. ४१.

पर्यग्निकरणाग्निप्रतिपत्तिः

[1]पर्यग्निकरणायाग्निमनिरूढाद्यदाऽऽहरेत् ।
बर्हिर्निरस्य त( ? स्येत्त )च्छेषं निरूढाद्यदि योजयेत् ॥

अत्र पर्यग्निकरणतृणनिरसने विशेषमाह संग्रहकारः– पर्यग्नीति । ¶ प्रपा. ४४

पूर्णाहुतिः

[2]एवं यथोचितं शक्त्या हुत्वा पूर्णाहुतिं चरेत् ।
घृतेनाऽऽपूर्य स्रुग्गर्भमूर्ध्ववक्त्रस्रुचि स्रुवम् ॥
[3]निधायाधोमुखं न्यस्य स्रुवाग्रे कुसुमाक्षतम् ।
पश्चाद्वामपुरोदक्षकराभ्यां शङ्खमुद्रया ॥
[4]गृहीत्वा स्रुक्स्रुवौ मन्त्री स्रुवाग्रन्यस्तलोचनः ।
ऋजुकायः प्रसन्नात्मा समपादः समुत्थितः ॥
[5]स्थिरधीर्जुहुयादग्नौ यवसंमितधारया ।
पूर्णाहुतिरियं प्रोक्ता सर्वकर्मप्रपूरणी ॥

## स्मृत्यर्थसारः

अग्निस्थापनम्

[6]कुण्डे वा स्थण्डिले वाऽपि मध्यदेशे हविर्भुजम् ।
दीप्तबह्वङ्गारमयं निर्धूमं स्थापयेद्बुधः ॥

अग्नेर्होमयोग्यता

[1]बहुशुष्केन्धने वाऽग्नौ सुसमिद्धे विधूमके ।
साङ्गारे लेलिहाने च होतव्यं नान्यथा क्वचित् ।
अग्निः प्रदक्षिणावर्तः कर्मदश्च शुभावहः ॥

आहुतेः साधनं मानं च

[2]द्रवं स्रुवेण होतव्यं पाणिना कठिनं हविः ॥
[3]व्रीहीणां च यवानां च शतमाहुतिरिष्यते ।
ओदनो द्विगुणो ग्राह्यो मयूराण्डाकृतिस्तथा ॥
कुक्कुटाण्डप्रमाणस्तु पिण्ड इत्यभिधीयते ।
अङ्गुष्ठपर्वमात्रं स्यादवदानं ततोऽपि च ।
ज्यायः स्विष्टकृदाद्यं तु चतुरङ्गुलसंमितम् ॥
[4]प्रस्थं धान्यं चतुःषष्टेराहुतेः परिकीर्तितम् ।
तिलानां तु तदर्धं स्यात्तदर्धं स्याद्घृतस्य तु ॥

प्रस्थपरिमितधान्यस्य चतुःषष्ट्यंश इत्यर्थः । संर. ६१०

---

¶ संर. प्रपावत् ।

( १ ) प्रपा. ४४; संर. ७०.

( २ ) प्रपा. ५१–५२; विपा. ६५४ स्रुगगर्भ ( स्रुग्गर्त ) ; संदी. ३३५ ( भागः २ ) विपावत्.

( ३ ) प्रपा. ५२; विपा. ६५४ न्यस्य (न्यस्येत् ) ; संदी. ३३५ ( भागः २ ) मुद्रया ( धारया ) शेषं विपावत्.

( ४ ) प्रपा ५२; विपा ६५४; संदी ३६५ ( भागः २ ).

( ५ ) प्रपा. ५२ ; विपा. ६५४ संमित ( प्रमित ) ; संदी. ३३५ ( भागः २ ) विपावत्.

( ६ ) संर. ५७.

( १ ) स्मृसार. ३५; प्रपा. ४९ साङ्गारे ( व्यङ्गारे ) वर्तः कर्म ( वृत्तिः शर्म ) : ३९३ वाऽग्नौ ( चैव ) विधूमके ( हुताशने ); प्रर. ५१ वाऽग्नौ ( चाग्नौ ) तृतीयार्धं नास्ति; विपा. ७६ ( भागः २ ) ने वाऽग्नौ ( नेनाग्नौ ) विधूमके ( हुताशने ) साङ्गारे ( अङ्गारे ).

( २ ) स्मृसार ३५, ४७; प्रपा ४८ द्रवं ( द्रवत् ); मुक्ता. ३६१.

( ३ ) स्मृसार. ३५ ओदनो ( तदन्नं ) ग्राह्यो ( ग्रासो ) ण्डप्रमाणस्तु ( ण्डकमात्रं तु ) ऽपि च ( ऽपि वा ); दाद्यं ( दाज्यं ) मितम् ( मितः ); मपा. १७७ प्रथमार्धमात्रम् ; मुक्ता. ३६२ व्रीहीणां च यवानां च ( व्रीहीणां वा यवानां वा ) बौधायनः.

( ४ ) स्मृसार. ३५; मपा. १७७ प्रस्थं ( यद्वा ) षष्टे ( षष्टि ) स्य तु ( स्य च ); संर. ६१० प्रस्थं धा ( प्रस्थधा ) उत्तरार्धं ( तिलानां च तदर्धं तु तण्डुला व्रीहयः समाः ॥ ).

## सिद्धान्तशेखरे

प्रणेयाग्नियोग्यतातारतम्यम्

[1]उत्तमोऽरणिजन्योऽग्निरुत्तमः सूर्यकान्तजः।
मध्यमः श्रोत्रियागारादधमः स्वगृहादिजः ॥

द्रव्यभेदेन आहुतिमानभेदः

[2]कर्षप्रमाणमाज्यं स्यान्मधु क्षीरं च तत्समम्।
तण्डुलानां शुक्तिमात्रं पायसं प्रसृतेः समम् ॥
कर्षमात्राणि भक्ष्याणि लाजा मुष्टिमिता मताः।
अन्नं ग्राससमं ग्राह्यं शाकं ग्रासार्धमात्रकम् ॥
[3]मूलानां तु त्रिभागः स्यात्कन्दानामष्टमांशकः।
इक्षुः पर्वप्रमाणः स्यादङ्गुलिद्वितयं लता ॥
[4]प्रादेशमात्राः समिधो व्रीहीणां मञ्जरीसमा।
तिलसक्तुकणादीनां मृगीमुद्राप्रमाणतः ॥
[5]पत्रपुष्पफलानां तु स्वमानाहुतिरिष्यते।
चन्द्रश्रीखण्डकस्तूरीकुङ्कुमागुरुकर्दमाः ॥
[6]हरिमन्थसमाः प्रोक्ता गुग्गुलुर्बदरीसमः।
आहुतीनामिदं मानं कथितं वेदवेदिभिः ॥

होमद्रव्यभेदेन आहुतिप्रमाणभेद उक्तः सिद्धान्तशेखरे — कर्षप्रमाणमिति। हरिमन्थः चणकः।

प्रपा. ४८

होमे हस्तमृगीमुद्रा

[1]स्यात्त्रिमुद्रा मृगीमुद्रा होमे सर्वफलप्रदा ॥

## स्मृतिसारे

अग्निप्रणयनम्

[2]कुण्डे वा स्थण्डिले वाऽपि होमकर्म समाचरेत् ॥
[3]कुण्डे वा स्थण्डिले वाऽपि तत्तन्नाम्ना हविर्भुजम्।
व्याहृतीभिर्मध्यदेशे योग्यं स्वाभिमुखं नयेत् ॥

योग्यत्वं च द्वेधा— अरण्यादिजत्वं प्रदीप्तबहुलाङ्गारमयत्वं च।

संर. ५७

[4]शरावे भिन्नपात्रे वा कपाले वोल्मुकेऽपि वा।
नाग्निप्रणयनं कुर्याद्व्याधिहानिभयावहम् ॥

(१) यत्तु स्मृतिसारे— 'शरावे' इति तस्य मुख्यपात्रसंभवे शरावो न ग्राह्य इति तात्पर्यम्, न तु सर्वथा शरावो न ग्राह्य इति, 'शरावे तादृशेऽपि वा' इत्यत्रिस्मरणात्।

प्रपा. ३१

(२) यस्तु— 'शरावे' इति स्मृतिसारोक्तो निषेधः स पुराणशरावपरः, 'तैजसे ताम्रपात्रे वा शरावेऽभिनवे तु वा।' इति नारदपञ्चरात्रवचनेऽभिनवशरावस्य ग्राह्यत्वोक्तेः।

संर. ५७

## शारदातिलके

अग्निध्यानम्

[5]वैश्वानरं स्थितं ध्यायेत्समिद्धोमेषु देशिकः।
शयानमाज्यहोमेषु निषण्णं शेषवस्तुषु ॥

एतच्च तान्त्रिके कर्मणि नियतम्।

संर. ६१

---

(१) प्रपा. ३१ उत्तरार्धे (उत्तमः श्रोत्रियागारान्मध्यमः स्वगृहादिजः ॥); प्रर. ५० उत्तमः सूर्यकान्तजः (मध्यमः सूर्यकान्तजः) शेषं प्रपावत्; संर. ५७.

(२) प्रपा. ४८; प्रर. ४९; प्रका. २५.

(३) प्रपा. ४८; प्रर. ४९ मांशकः (मोंऽशकः) दङ्गुलि (दङ्गुल); प्रका. २५.

(४) प्रपा. ४८ णां मञ्जरीसमा (णामञ्जलेः समाः); प्रर. ५०; प्रका. २६.

(५) प्रपा. ४८ फलानां (लतानां); प्रर. ५० मागुरु (मागरु); प्रका. २६.

(६) प्रपा. ४८; प्रर. ५०; प्रका. २६.

(१) प्रपा. ४८; प्रर. ५०; प्रका. २६.

(२) संर. ५०.

(३) संर. ५७.

(४) प्रपा. ३१; संत. ८६० स्मृतिसागरधृतवचनमिति; मुक्ता. ३५७ पात्रे वा (पात्रे च) वोल्मुकेऽपि वा (चोल्मुके च वा) स्मृतिरत्ने; संर. ५७ वोल्मुके (त्वायसे).

(५) संर. ६१.

## स्मृतिरत्ने

अग्नीन्धने वर्जनीया वृक्षाः

[1]कोविदारं करञ्जं च शिरीषं व्याधिघातकम् ।
श्लेष्मातकमकर्मण्यं वर्जयेदिन्धनं बुधः ॥

अग्नेः सप्त जिह्वाः तत्स्थानानि च

[2]सुवर्णा कनका रक्ता कृष्णा चैव तु सुप्रभा ।
बहुरूपाऽतिरक्ता च सप्त जिह्वाः प्रकीर्तिताः ॥

[3]सुवर्णा वारुणी जिह्वा मध्यमा कनका स्मृता ।
रक्ता चैवोत्तरा जिह्वा कृष्णा याम्यदिशि स्थिता ॥

[4]सुप्रभा पूर्वदिग्जिह्वा ह्यतिरक्ताऽग्निगोचरे ।
ऐशाने बहुरूपा च जिह्वास्थानान्यनुक्रमात् ॥

## पञ्चरात्रे

होमसाधनं मुद्रात्रयम्, तस्य लक्षणानि विनियोगश्च, आहुतिमानं च

[5]होमे मुद्रात्रयं प्रोक्तं मृगी हंसी च शूकरी ।
करसंकोचः शूकरी हंसी मुक्तकनिष्ठिका ॥
मुक्त्वा कनिष्ठातर्जन्यौ मृगीमुद्रा प्रदर्शिता ।
शान्तिपौष्टिककर्मार्थं मृगी हंसी प्रकीर्तिता ॥
आभिचारिककर्मार्थं शूकरी कथिता बुधैः ।
कर्षमात्रं घृतं होमे शुक्तिमात्रं पयः स्मृतम् ॥
उक्तानि पञ्चगव्यानि तत्समानि मनीषिभिः ।
तत्समं मधुदुग्धान्नमर्घ्यपात्रमुदाहृतम् ॥
दधि प्रसृतिमात्रं स्याल्लाजाः स्युर्मुष्टिसंमिताः ।
पृथुकास्तत्प्रमाणाः स्युः श( ? स )क्तवोऽपि तथोदिताः ॥
गुडं पलार्धमानं स्यात् शर्करा हि तथा स्मृताः ।
ग्रासार्धं चरुमानं स्यादिक्षुः पर्वावधिः स्मृतः ॥
एकैकं पत्रपुष्पाणि तथाऽपूपानि कल्पयेत् ।
कदलीफलनारङ्गफलान्येकैकशो विदुः ॥
मातुलुङ्गं चतुःखण्डं पनसं दशधा कृतम् ।
अष्टधा नारिकेलानि खण्डितानि विदुर्बुधाः ॥
त्रिधा कृतं फलं बैल्वं कपित्थं खण्डितं द्विधा ।
उर्वारुकफलं होमे गदितं खण्डितं त्रिधा ॥
फलान्यन्यानि ख( ? न्यख )ण्डानि समिधः स्युर्दशाङ्गुलाः ।
दूर्वात्रयं समुद्दिष्टं गुलुची चतुरङ्गुला ॥
व्रीहयो मुष्टिमात्राः स्युर्मुद्गा माषा यवा अपि ।
तण्डुलाः स्युस्तदर्धांशाः कोद्रवा मुष्टिसंमिताः ॥
गोधूमरक्तकलमा विहिता मुष्टिमानतः ।
तिलाश्चुलुकमात्राः स्युः सर्षपास्तत्प्रमाणकाः ॥
शुक्तिप्रमाणं लवणं मरीचान्येकविंशतिः ।
पुरं बदरमानं स्याद्रामठं तत्समं स्मृतम् ॥

निप्र. १९२

पुरं गुग्गुलम् ।

चन्दनागुरुकर्पूरकस्तूरीकुङ्कुमानि च ।
तिन्तिडीबीजमानानि समुद्दिष्टानि देशिकैः ॥

द्रव्यभेदेनाग्नेः स्थानशयननिषदनावस्थानां ध्येयत्वम्

वैश्वानरं स्थितं ध्यायेत्समिद्धोमेषु साधकः ।
शयानमाज्यहोमेषु निषण्णं शेषवस्तुषु ॥

अग्नेर्मुखे होमविधानम् , कर्णादिहोमे अनिष्टफलानि च

आस्ये तु होमयेद्वह्नेर्विपश्चित्सर्वकर्मसु ।
कर्णहोमे भवेद्व्याधिर्नेत्रेऽन्धत्वमुदाहृतम् ।
नासिकायां मनःपीडा मस्तके धनसंक्षयः ॥

---

(१) मुक्ता. ३६०; आन. ६८.

(२) प्रपा. ४९ (=); मुक्ता. ३६३ बहुरूपाऽतिरक्ता च ( अतिरक्ता बहुरूपा च ); संर. ७७ तिरक्ता ( तिरिक्ता ).

(३) प्रपा. ४९ (=); मुक्ता. ३६३ स्थिता ( स्मृता); आन. ७० (=) ( मध्यमा कनका स्मृता ) एतावदेव ; संर. ७७ (=) मुक्तावत्.

(४) प्रपा. ४९ (=) ; मुक्ता. ३६३ ह्यति ( अति ) गोचरे ( गोचरा ) ऐशाने ( ऐशान्ये ) ; संर. ७७ ( = ).

(५) निप्र. १९१–१९४.

अग्नेः शोभना वर्णध्वनिगन्धाः

स्वर्णसिन्दूरबालार्ककुङ्कुमक्षौद्रसंनिभः ।
हिरण्यरेतसो वर्णः शोभनः परिकीर्तितः ॥
भेरीवारिदहस्तीन्द्रध्वनिर्वह्नेः शुभावहः ॥
नागचम्पकपुंनागपाटलीयूथिकानिभः ।
पद्मेन्दीवरकल्हारसर्पिर्गुग्गुलसंनिभः ।
पावकस्य शुभो गन्ध इत्युक्तं तन्त्रवेदिभिः ॥

अग्नेः शुभदं स्वरूपम्

प्रदक्षिणार्चिर्निष्कम्पश्छत्राभः श्वसनः शिखी ।
शुभदो यजमानस्य राज्यस्यापि विशेषतः ॥

शोभनाशोभनौ धूमवर्णौ

कुन्देन्दुधवलो धूमो वह्नेः प्रातः शुभावहः ।
कृष्णः कृष्णगतेर्वर्णो यजमानं विनाशयेत् ॥

अग्नेरशोभना वर्णध्वनिगन्धशिखाः, तत्फलानि च

श्वेतो राष्ट्रं निहन्याच्च वायसस्वरसंनिभः ।
खरस्वरसमो वह्नेर्ध्वनिः सर्वविनाशनः ॥
पूतिगन्धो हुतवहो होतुर्दुःखप्रदो भवेत् ।
छिन्ना वृत्ता शिखा कुर्यान्मृत्युं धनपरिक्षयम् ॥

अशोभनो धूमवर्णः तत्फलं च

शुकपक्षनिभो धूमः पारावतसमप्रभः ।
हानिं तुरगजातीनां गवां च कुरुते चिरात् ॥

अशोभनाग्निधूमरूपारिष्टे प्रायश्चित्तम्

एवंविधेष्वरिष्टेषु प्रायश्चित्ताय देशिकः ।
मूलेनाऽऽज्येन जुहुयात्पञ्चविंशतिसंख्यया ॥

## मेरुतन्त्रम्

अग्निप्रणयनम्

[1]पात्रान्तरेण पिहिते ताम्रपात्रादिके शुभे ।
अग्निप्रणयनं कुर्याच्छरावे वाऽथ नूतने ॥

## विधानमालायाम्

स्रुवधारणदेशः

[2]अग्रे धृतो विनाशाय धृतो मध्ये प्रजाक्षयी ।
मूले धृतस्तु होतुस्तु मृतिं दद्यात् स्रुवो ध्रुवम् ॥

(१) संदी. २६–२७. (२) संर. ७२–७३.

अग्रान्मध्याच्च मध्ये तु मूलान्मध्याच्च मध्यतः ।
स्रुवः प्रधार्यो विद्वद्भिः सर्वकामार्थसिद्धये ॥

अयमर्थः— दण्डस्य पञ्चभागान् कृत्वा द्वितीयभागे चतुर्थभागे वा स्रुवधारणं कार्यमिति । संर. ७३

## विधानपारिजाते

कुण्डस्थण्डिलोच्छ्रायः

*[1]कार्या शतार्धेऽङ्गुलसंमितोच्छ्रितिः
शताहुतौ द्व्यङ्गुलसंमितोच्छ्रितिः ।
सहस्रहोमे चतुरङ्गुलोच्छ्रिति-
र्वेस्वङ्गुला स्यादयुते समुच्छ्रितिः ॥

नृपाङ्गुला लक्षहुतौ समुच्छ्रिति-
र्विंशाङ्गुला स्यात्प्रयुते समुच्छ्रितिः ।
तत्त्वाङ्गुला कोटिमखे समुच्छ्रिति-
स्ततोऽधिकं नो विदधीत मानकम् ॥

विधानपारिजाते स्थण्डिलोच्छ्राये विशेष उक्तः— 'कार्या शतार्धे०' इति । अथ प्रसङ्गाद्वह्वाहुतिकशान्त्यादिकर्मोपयोगिकुण्डस्थण्डिलयोः परिमाणम् । तत्रैकोनपञ्चाशत्संख्याहुतिपर्यन्तं स्थण्डिलमेव । तच्चाष्टादशाङ्गुलपरिमाणं परितोऽङ्गुष्ठोन्नतम् । अग्रे कुण्डेन सह विकल्पोऽशक्तिशक्तिभ्यां व्यवस्थितः । पञ्चाशदादिनवनवतिसंख्याहुतिपर्यन्तं मुष्टिमात्रम् । मुष्टिः रत्निः । शतादिनवनवत्यधिकनवशताहुतिपर्यन्तमरत्निमितम् । निष्कनिष्ठमुष्टिहस्तोऽरत्निः । सहस्रादिहोमे हस्तमात्रम् । अयुतादौ द्विहस्तम् । लक्षादौ चतुर्हस्तम् । दशलक्षादौ षड्ढस्तम् । कोटिहोमादावष्टहस्तं दशहस्तं वा । चतुर्विंशत्यङ्गुलैर्हस्तः । अङ्गुलं तु तिर्यङ्निहिताष्टयवप्रमाणं स्वमध्यमामध्यपर्वमितं वा ज्ञेयम् । मुष्ट्या वा चतुरङ्गुलानि । अर्धयवोनचतुस्त्रिंशदङ्गुलैर्द्विहस्तम्, सार्धैकचत्वारिंशदङ्गुलैस्त्रि-

* विधानपारिजाते एतत्समार्थकौ द्वौ श्लोकौ वर्तेते, परं तयोरानुपूर्व्याः सुतरां भिन्नत्वादिमौ विधानपारिजातनाम्नैव पृथक्संगृहीतौ ।

(१) संर. ५२.

हस्तम्, अष्टचत्वारिंशदङ्गुलैश्चतुर्हस्तम्, पादोनचतुष्पञ्चाशदङ्गुलैः पञ्चहस्तम्, पादोनैकान्नषष्ट्यङ्गुलैः षड्ढस्तम्, सार्धत्रिषष्ट्यङ्गुलैः सप्तहस्तम्, यवोनाष्टषष्ट्यङ्गुलैरष्टहस्तम्, द्विसप्तत्यङ्गुलैर्नवहस्तम्, षट्सप्तत्यङ्गुलैर्दशहस्तम्, षण्णवत्यङ्गुलैः षोडशहस्तं कुण्डं स्थण्डिलं वा भवति। कुण्डाङ्गानां व्यासखातनाभिकण्ठमेखलायोनीनां सम्यग्ज्ञान एव कुण्डं युक्तं भवति। तत्करणप्रकारस्तु शान्तिप्रकरणे वक्ष्यते। स्थण्डिलं चतुरश्रमङ्गुलोत्सेधं चतुरङ्गुलोत्सेधं वा। समत्वपक्षे स्थूलद्रव्यहोमे तत्तत्परिमाणस्यापर्याप्तौ स्वोत्तरपरिमाणमपि ग्राह्यम्। संर. ५२–५३

## कर्मकौमुद्याम्

हविःप्रक्षेपकालनियमः

[1]स्वाहान्ते जुहुयाद्धोता स्वाहया सह वा हविः।
त्यागान्ते ब्रुवते केचिद्द्रव्यप्रक्षेपणं बुधाः॥

होमकाले स्रुवमूलसंगोपनम्

[2]हीयते यजमानश्चेत्स्रुवमूलस्य दर्शनात्।
तस्मात्संगोपयेन्मूलं होमकाले स्रुवस्य च॥

यम-रुद्र पितृ-मृतीनामाहुत्यन्ते जलस्पर्शः

[3]यमरुद्रपितॄणां च मृतेश्चापि तथैव च।
आहुत्यन्ते च कर्तव्यो जलस्पर्शः सदा बुधैः॥

## प्रयोगार्णवे

स्रुवधारणमुद्रा

[4]कठिनद्रव्यहोमे तु मुष्टिना धारणं स्रुचः।
द्रवद्द्रव्यस्य होमे तु उत्तानाङ्गुलिभिः स्मृतम्॥

स्रुवस्याप्युत्तानाङ्गुलिभिरेव धारणम्। संर. ७३

(१) संग. ४३; संदी. ४३ स्वाहान्ते जुहुयाद्धोता (स्वाहावसाने जुहुयात्).

(२) संग. ४३.

(३) संग. २७४.

(४) संर. ७३.

## रङ्गनाथकृतरुद्रपद्धतौ

विकीर्णहविःप्रतिपत्तिः

[1]ऋत्विजां जुह्वतां वह्नौ बहिः पतति यद्धविः।
स ज्ञेयो वारुणो भागः प्रक्षेप्यो विमले जले॥

## शाकलकारिकाः

स्थण्डिलकरणादिसमिन्धनान्ताः पदार्थाः

$[2]कृत्वा स्थण्डिलमुल्लिख्य ततश्चाग्निं समाह्वयेत्।
एहीत्यग्निं समादाय निदध्याद् भूर्भुवः स्वरोम्॥
अग्निनाऽग्निस्तथा जुष्टो दमूनाः प्रनूनं च हि।
स्तुत्वा तु पञ्चभिर्मन्त्रैः स्थण्डिलस्थं हविर्भुजम्॥

ध्यानं चत्वारि शृङ्गेति कुर्यादग्नेरतः परम्।
विज्योतिषेत्यनेनैव मन्त्रेणाग्निं समिन्धयेत्॥

अग्निध्यानम्

अथाग्निमूर्तिं वक्ष्यामि सर्वाभीष्टप्रदायकम्।
एकदेहं द्विशीर्षं तं जटामुकुटमण्डितम्॥
सुदीप्तं स्वर्णवपुषं शशाङ्कशकलान्वितम्।
चतुःश्रोत्रं द्विनासं च षडक्षं पिङ्गलप्रभम्॥
आस्यद्वयं सुताम्रोष्ठं सप्तजिह्वासमावृतम्।
दक्षिणास्ये चतुर्जिह्वास्तिस्रो वै वामवक्त्रके॥
प्रसन्नं सुस्मितं शान्तं सप्तहस्तसमन्वितम्।
दक्षिणे च चतुर्हस्तं वामभागे त्रिहस्तकम्॥
स्रुक्स्रुवौ शक्तिमिध्मं च दधानं दक्षिणैर्भुजैः।
दधानं तोमरं वामे व्यजनं घृतपात्रकम्॥
त्रिमेखलं त्रिपादं च मेषारूढं वरप्रदम्।
यज्ञसूत्रधरं सौम्यं सर्वाभरणभूषितम्॥

$ पुनःसंधानप्रकरणस्थोऽप्ययमग्निमुखप्रयोगः 'सर्वदा गृह्यकर्मणि' इत्यादिसाधारणतालिङ्गबलादत्र संगृहीतः।

(१) संग. ४४.

(२) शाका. १७५–१९४, १९६, १९९–२०४, २१४–२१७.

रक्ताम्बरधरं देवं रक्तमालाविभूषितम् ।
रक्तचन्दनलिप्ताङ्गं ज्वालाकोटिसमन्वितम् ॥
स्वाहा च दक्षिणे पार्श्वे देवी वामे स्वधा भवेत् ।
एवं संचिन्त्य मनसा वह्निमध्ये समाह्वयेत् ॥

अग्न्यभिमुखीकरणम्

उत्तानौ सजलौ पाणी एष हीति प्रदर्शयेत् ।
अग्निरेवं भवेदेष हविर्भुगभिसंमुखः ॥

अन्वाधानम्

हौम्यानां देवतानां च क्रमेणैवानुपालनम् ।
कृत्वा समिधमन्वग्नौ निदध्याद्भूर्भुवः स्वरोम् ॥

परिसमूहनादिविष्णुस्मरणान्ताः पदार्थाः

मार्जनं प्रागुदक्संस्थं तथा चैव तु पश्चिमे ।
दक्षिणोत्तरयोः कुर्यात्प्राक्संस्थं जलपाणिना ॥
परिषेचनमेवं स्यात्परिस्तरणमेव हि ।
पर्युक्षणं ततः कुर्यात्सर्वदा गृह्यकर्मणि ॥
प्रागग्रैर्दिक्षु सर्वासु कुशैः प्रादेशमात्रकैः ।
परिस्तीर्य पर्युक्ष्याग्निं पात्राण्यासादयेत्क्रमात् ॥
पक्वद्रव्यस्य वै होमे पात्राण्यष्टौ तु कारयेत् ।
अपक्वद्रव्यके होमे षट् तु पात्राणि सर्वदा ॥
आज्यसंस्कारपर्यन्तं कुर्याद्ब्रह्मासनादिकम् ।
सूत्रोक्तविधिनाऽनेन कर्म स्याद्गृह्यकर्मसु ॥
अग्नेरुत्तरतोऽङ्गारेष्ववर्गिव परिस्तरात् ।
तत्रैव आज्यसंस्कारमेकाग्निः कुरुते सदा ॥
निरूढेष्वाज्यसंस्कारमङ्गारेषूत्तरे सदा ।
तत्राऽऽहिताग्निः कुर्वीत सर्वसंस्कारकर्मसु ॥
कुर्यादाघारपर्यन्तं बर्हिरास्तरणादिकम् ।
(*जुहुयादाहुतीः पञ्च) हुत्वा चैवाथ चक्षुषी ॥
ततः स्विष्टकृतं हुत्वा रज्जुग्रन्थिं विमुच्य च ।
रुद्राय जुहुयाद्रज्जुं विश्वेभ्यः स्रुकिस्थतं घृतम् ॥

* कंसस्थितं पुनःसंधानमात्रविषयम् ।

आदौ कर्ता हुनेत् ... प्रायश्चित्ताहुतीरथ ।
ब्रह्मा पुनश्च ता एव जुहुयाद्गृह्यकर्मसु ॥
चतुर्वै पृष्ठतो गत्वा तिष्ठन्वायव्यदेशतः ।
स्वाहान्तमुच्चरेद्ब्रह्मा कर्तेदं न ममेति च ॥
स्वस्थानं तु पुनर्ब्रह्मा समाविश्य तथैव तु ।
आज्याहुतीस्ततः कर्ता जुहुयाद्यज्ञसिद्धये ॥
अनाज्ञातमिति द्वाभ्यां यत्पाकत्रेत्यनेन च ।
यद्वो देवा अनेनैव मन्त्रदोषनिवृत्तये ॥
जुहुयाद्व्याहृतीस्तत्र होमसंपूर्णहेतवे ।
ततः पूर्णमसीत्यादि कृत्वा शेषं समापयेत् ॥
सर्वत्रों चम इत्यग्निमुपस्थायाभिवादयेत् ।
दश देव्या जपेन्मन्त्रं होमसाद्गुण्यकारकम् ॥
मध्याङ्गुलित्रयेणैव धारयेद्धोमभस्म च ।
ललाटे हृदये बाह्वोर्मस्तके मन्त्रपूर्वकम् ॥
मा नः स्तोकेऽथवा चैव बृहत्सामेत्यृचाऽपि वा ।
स्मृत्वा नत्वाऽथ वै विष्णुं कृतं कर्म निवेदयेत् ॥
प्रमादात् कुर्वतां कर्म प्रच्यवेताध्वरे यदि ।
स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः ॥

## शौनककारिकाः

होममन्त्रेषु एकश्रुतिविधानं स्वाहाकारविधानं च

[1]अविज्ञातस्वरा मन्त्राः प्रयोक्तव्याः प्रयोक्तृभिः ।
एकश्रुत्यैव होमेषु विज्ञाताश्च विकल्पतः ॥
यस्मिन्मन्त्रे न पठितः स्वाहाकारो भवेद्यदि ।
स्वाहान्तस्तु प्रयोक्तव्यो होमेषु प्रणवादिकः ॥

स्थण्डिलकरणम् अग्निस्थापनं च

[2]अथ देशे समे शुद्धे स्वासीनः प्राङ्मुखः शुचिः ।
इषुमात्रं चतुर्दिक्षु गोमयेन सवारिणा ॥

(१) शौका. २३–२५ पृ. ३ विज्ञाताश्च विकल्पतः (विज्ञातश्च विकल्पितः) मन्त्रे न (मन्त्रेण) प्रणवादिकः (प्रणवादिना); प्रपा. ५६ स्वाहान्तस्तु (स्वाहान्तेन); प्रर. ४९ मन्त्रे न (मन्त्रेण) शेषं प्रपावत्.

(२) शौका. १ पृ. ३ ; प्रपा. ३० देशे ... ... स्वासीनः (शुद्धे समे देश आसीनः).

[१]उपलिप्य स्थण्डिलं तच्चतुरस्रं तु सर्वतः ।
तस्मिंस्तरोर्यज्ञियस्य शकलेन षडुल्लिखेत् ॥
[२]प्रादेशमात्रा रेखाः स्युः पश्चादेकोदगायता ।
तदन्तयोरसंस्पृष्टे द्वे च प्रागायते लिखेत् ॥
[३]तिस्रो मध्ये तयोर्लेखा लिखेत्प्रागायतास्ततः ।
निधाय शकलं तस्मिन्नभ्युक्ष्य स्थण्डिलं जलैः ॥
[४]निरस्य शकलं प्राच्यां पाणिं प्रक्षाल्य वाग्यतः ।
निर्मथ्य यज्ञियात्काष्ठादानीतं वा द्विजातितः ॥
[५]स्थण्डिलेऽग्निं व्याहृतिभिः प्रतिष्ठाप्य प्रदीपयेत् ॥

अग्निधमनम्

न शूर्पेण धमेदग्निं न वस्त्रेण न पाणिना ॥
मुखेन धमयेदग्निमग्निनाऽग्निः समिध्यते ।
पट्टकेन भवेद्व्याधिः शूर्पेण धननाशनम् ॥
[६]पाणिना मृत्युमाप्नोति कर्मसिद्धिर्मुखेन तु ॥

परिसमूहनपर्युक्षणे, अन्वाधानम् , अग्न्यलंकरणम्

प्रदीतमग्निं संमृज्य संप्रोक्ष्य परितो जलैः ॥
[७]आरब्धकर्माङ्गतया अन्वादध्यात्समिद्द्वयम् ।
काष्ठत्रयं वा संकल्प्य त्वमुं यक्ष्य इति ब्रुवन् ॥
[८]अनेन यक्ष्यमाणाया देवतायाः परिग्रहः ।
अन्वाधानमिदं कार्यमग्निध्यानादनन्तरम् ॥

(१) शौका. २ पृ ३ ; प्रपा. ३० तच्चतुरस्रं तु (तु चतुरस्रं च).

(२) शौका. ३ पृ. ३ ; प्रपा. ३० पूर्वार्धे (उदक्संस्थां लिखेत्पश्चाल्लेखां प्रादेशसंमिताम् ।).

(३) शौका. ४ पृ. ३ ; प्रपा. ३० पूर्वार्धे (तिस्रो मध्ये ततो लिख्य लेखाः प्रागायता अपि ।).

(४) शौका. ५ पृ. ३ ; प्रपा. ३०–३१ प्राच्यां (पश्चात्) द्विजातितः (द्विजालयात्).

(५) शौका. ६–७ पृ. ४.

(६) शौका. ८ पृ. ४ ; प्रपा. ३३ उत्त.

(७) शौका. ९ पृ. ४ ; प्रपा. ३३ आरब्धकर्माङ्गतया (ईशानीं दिशमारभ्य) त्वमुं (अमुं).

(८) शौका. १० पृ. ४ कार्यमग्निध्या (नाम अग्न्याधा) ; प्रपा. ३३.

[१]अक्षताद्यैरलंकृत्य ततः कर्म समारभेत् ॥

इध्माबर्हिषोः संनहनम्

अथेध्मस्य संनहनं बर्हिषश्च विधीयते ॥
[२]यज्ञियैश्च तृणै रज्जू त्रिसंधी त्रिवृते तयोः ।
ग्रन्थिं कृत्वा च संनह्येदिध्माबर्हिरथान्यथा ॥
[३]बर्ही रज्ज्वा द्विरावेष्ट्य इध्मं च सकृदेव तु ।
रज्जुमूलं तदग्रेण त्रिरावेष्ट्य प्रदक्षिणम् ॥
[४]अधस्ताद्दक्षिणः पूर्वं पश्चात्सव्यस्तथा करः ।
त्रिसंधिं त्रिवृतां रज्जुं कुर्याद्द्वादशभिः कुशैः ॥
[५]तदग्रशेषरज्ज्वाधो(?)द्वावप्युपरि धापयेत् ॥

अत्रोपरिनिधानमायतनात्पश्चाद्भागे कार्यम् ।

प्रपा. ३४

इध्मसमिधां परिधीनां च मानं संख्या च

[६]आयामेनेध्मसमिधः प्रादेशद्वयमुच्यते ।
वितस्तिमात्रमथवा संख्यया चैकविंशतिः ॥
[७]त्रयः परिधयोऽत्र द्वे चाऽऽघारसमिधावपि ।
अनूयाजसमिच्चैका आधाने दश पञ्च च ॥
[८]एकविंशतिसंख्यैवमिध्मस्य परिगण्यते ।
तस्मिन्प्रमाणद्विगुणा ग्राह्याः परिधयस्त्रयः ॥

(१) शौका. ११ पृ. ४ ; प्रपा. ३४ उत्त.

(२) शौका. १२ पृ. ४.

(३) शौका. १३ पृ. ४ ; प्रपा. ३४ तदग्रे ...... ष्ट्य (द्विरावेष्ट्य तदग्रेण).

(४) शौका. १४ पृ. ४.

(५) शौका. १५ पृ. ४ ; प्रपा. ३४ शेषरज्ज्वा (शेषं रज्ज्वा).

(६) शौका. १६ पृ. ४ ; समिधः (समिधां) ; प्रपा. ३४.

(७) शौका. १७ पृ. ४ चाऽऽघार (आघार) का आधा (काऽन्वाधा) ; प्रपा. ३४.

(८) शौका. १८ पृ. ४ ; प्रपा. ३४ पू.

[1]ज्येष्ठमध्यकनिष्ठास्ते हीना अङ्गुलिमानतः ।
ह्रसिष्ठोऽनिष्ठ( ? ष्ठोऽणिष्ठः )कानिष्ठः स्थविष्ठो मध्यमस्त्रिषु ॥
द्राघीयानैत्परिधयः कनिष्ठो ज्येष्ठ उच्यते(?) ।
द्रव्येण यज्ञिया वृक्षाः साधयेत्सर्वकर्मसु ॥

बर्हिर्मानम्

[2]यज्ञियानां तृणानां च साग्रैः प्रादेशमात्रकैः ।
प्रच्छिद्य परिगृह्णीयान्मुष्टिमात्रं तु बर्हिषाम् ।
परिस्तरणकार्यार्थं चतुर्मुष्टितृणान्यपि ॥

परिसमूहनपरिस्तरणपर्युक्षणपात्रासादनानि

[3]समिद्धं परिसमुह्य परिस्तीर्य च यज्ञियैः ।
तृणैः पर्युक्ष्य पात्राणि सादयेद्यज्ञसाधनैः ।
पात्राणि सादनाय स्युः सौवर्णानि महीपते ॥
[4]दैवे कर्मणि सर्वत्र रौप्याणि पितृकर्मणि ।
उच्यते सुसमिद्धस्य सोदकेनैव पाणिना ॥
[5]प्रदक्षिणं प्रमार्ष्टि त्रिरेतत्परिसमूहनम् ।
प्रादेशमात्रैर्दर्भाग्रैर्बाहुमात्रैरथापि वा ॥
[6]परितोऽग्नेर्यत्स्तरणं परिस्तरणमुच्यते ।
यदि प्रादेशमात्राः स्युश्चतुर्भिस्तृणमुष्टिभिः ॥
[7]परिस्तृणीयात्प्रागग्रैश्चतुर्दिक्षु यथाक्रमम् ।
तत्पुरस्ताद्दक्षिणतः पश्चादुत्तरतः क्रमात् ॥
[8]उदक्संस्थं दिशि दिशि दक्षिणोत्तरयोस्तृणैः ।
तैरग्रैः स्तीर्यमाणानां तृणमूलानि च्छादयेत् ॥

(१) शौका. १९–२० पृ. ४.

(२) शौका. २५–२६ पृ. ५.

(३) शौका. २९–३० पृ. ५.

(४) शौका. ३१ पृ. ५ ; प्रपा. ३८ उत्त.

(५) शौका. ३२ पृ. ५ ; प्रपा. ३८ प्रमार्ष्टि त्रिरे ( त्रिः संमार्ष्टीत्ये ).

(६) शौका. ३३ पृ. ५ ; प्रपा. ३८.

(७) शौका. ३४ पृ. ५ ; प्रपा ३८ तत्पुरस्ता ( पुरस्ता ).

(८) शौका. ३५ पृ ५ ; तृण ( स्तीर्ण ) ; प्रपा. ३८ च्छादयेत् ( छाद्य च ).

[1]अथ दीर्घैः स्तृणीयाच्चेद्दक्षिणोत्तरयोर्दिशोः ॥
*[2]प्रादेशमात्रैरन्यैर्वा सर्वं प्रागग्रतो (?) भवेत् ।
चतुर्दिक्ष्वथवा दीर्घैः पूर्वपश्चिमयोर्दिशोः ॥
[3]उदगग्रैरितरयोः प्रागग्रैर्यज्ञियैस्तृणैः ।
तृणेभ्यः स्तीर्यमाणेभ्यः पूर्वपश्चिमयोर्दिशोः ॥
[4]दक्षिणान्युत्तराणि स्युरधस्तादुत्तराणि च ।
ऋत्विग्ब्रह्मा वृतश्चेत्स्यादग्नेर्दक्षिणतस्तृणैः ॥
[5]तदासनार्थं प्राक्कूलैः स्तृणीयान्मुष्टिसंमितैः ।
प्रणीतासादनार्थं च पात्राणां सादनाय च ॥
[6]संस्तीर्योत्तरतो वह्नेः पर्युक्षेत हुताशनम् ।
पाणिनोदकमादाय प्रागुदक्त्रिः प्रदक्षिणम् ॥
[7]आरभ्योक्षति यत्तूष्णीमाहुः पर्युक्षणं बुधाः ।
[8]तृणेष्वधोमुखान्येव यज्ञपात्राणि सादयेत् ।
अन्यैश्च साधनैः सार्धं प्राक्संस्थानि यथाक्रमम् ॥

* इदमशुद्धम् । 'प्रादेशमात्रैरन्यत्र सर्वप्रागग्रता भवेत् ।' इति पाठः संभवति । अन्यत्र प्राक्पश्चिमयोः । एवं च पूर्वं 'चतसृषु दिक्षु प्रादेशमात्रैः स्तरणम्' इति पक्ष उक्तः, अत्र 'दक्षिणोत्तरयोर्दीर्घैः, प्राक्पश्चिमयोः प्रादेशमात्रैः' इति पक्ष उच्यते, अग्रे च 'चतसृषु दिक्षु दीर्घैः' इति पक्षो वक्ष्यते इति पक्षत्रयमुपदिष्टमिति प्रतिभाति ।

(१) शौका. ३६ पृ. ५ ; प्रपा. ३८.

(२) शौका. ३७ पृ. ५ ; प्रपा ३८ पूर्वार्धे ( प्रादेशमात्रास्तन्न्यायात्सर्वे प्रादेशसंमिताः । ) क्ष्वथवा (क्षु च वा).

(३) शौका. ३८ पृ. ५.

(४) शौका. ३९ पृ. ६ ; प्रपा ३८ च ( तु ).

(५) शौका. ४० पृ. ६ ; प्रपा. ३८ स्तृणीयात् ( तृणानां ).

(६) शौका. ४१ पृ. ६ ; प्रपा. ३९ पर्युक्षेत ( पर्युक्षेत्त ).

(७) शौका. ४२ पृ. ६ आरभ्योक्षति यत्तूष्णीमाहुः ( पर्युक्षेदग्निमित्येतदाहुः ) ; प्रपा. ३९.

(८) शौका. ४३ पृ. ६ ; प्रपा. ३९.

[1]कर्मण्येकैकशः पित्र्ये द्वन्द्वशो दैवकर्मणि ।
स्वर्णराजतताम्राणामब्जमृद्दारवाश्मनाम् ॥
कृत्वा शौचं यथाशास्त्रं पात्राणां सादनं भवेत् ।
क्रमेणैकैकपात्राणां हस्तेन यज्ञकर्मणि ॥
प्रोक्षपात्रं स्रुवेणैव प्रणीतापात्रमेतया ।
आज्यस्थाल्या सहेध्मं च बर्हिषा द्वन्द्वसादनम् ।
[2]चरुप्रोक्षणयोः पात्रे स्रुवं जुह्वा सहैव तु ।
प्रणीतापात्रमाज्यस्य पात्रेणेध्मं च बर्हिषा ॥

पात्रप्रोक्षणादि, प्रोक्षणीसंस्कारश्च

[3]त्रिरद्भिः प्रोक्ष्य पात्राणि तृणैः प्रच्छाद्य यज्ञियैः ।
कृत्वा पवित्रे आसिच्य वारि प्रोक्षणभाजने ।
उत्पुनीयात्पवित्राभ्यामापस्तूष्णीं त्रिरेव तु ॥
[4]कृत्वोत्तानानि पात्राणि इध्मं विस्रस्य बन्धनात् ।
अद्भिराभिः सह प्रोक्षेत्त्रिरन्यैर्यज्ञसाधनैः ॥

पवित्रस्वरूपम्

[5]तृणं यदप्रच्छिन्नाग्रमन्तर्गर्भविवर्जितम् ।
प्रादेशमात्रं यज्ञीयं पवित्रमिति संज्ञितम् ॥

उत्पवनस्वरूपम्

[6]अङ्गुष्ठानामिकाभ्यां तु पाण्योरुत्तानयोः पृथक् ।
गृहीतमूलतूलाभ्यां श्रावयन्प्राक्प्रकर्षति ॥
[7]उदगग्रपवित्राभ्यामित्युत्पवनमुच्यते ॥

(१) शौका. ४४-४६ पृ. ६.
(२) शौका. ४७ पृ. ६; प्रपा. ३९ सहैव तु (तथैव च).
(३) शौका. ५३-५४ पृ. ६-७; प्रपा. ३९.
(४) शौका ५५ पृ. ७ राभिः सह प्रोक्षेत् (राभ्यां सह प्रोक्ष्य); प्रपा. ३९.
(५) शौका. ५६ पृ. ७.
(६) शौका. ५७ पृ. ७; प्रपा. ३९ उत्तरार्धे (गृहीत्वा मूलतूलाभ्यामित्युत्पवनमुच्यते ॥).
(७) शौका. ५८ पृ. ७; प्रपा. ४१ (अथार्त्विज्ये वरणीये कुलीनं ब्राह्मणोत्तमम् ।).

ब्रह्मणो वरणं कर्माणि च

अथर्त्विजं वरणीयं सर्वलक्षणलक्षितम् ॥
[1]षडङ्गवेदविद्वांसं कुलीनं ब्राह्मणोत्तमम् ।
तत्पाणिं पाणिना गृह्य चन्द्रमा म इति त्वसौ ॥
[2]द्वितीयया विभक्त्या तन्नामाऽऽदिश्य वृणे इति ।
महन्मे वोच इति च तन्मामवतु इत्यमुम् ॥
[3]जपित्वा प्रतिजानीयाच्चन्द्रमास्त इति स्वयम् ।
स्वाग्नौ ब्रह्मा इमामग्न इत्यृचा जुहुयाद्घृतम् ॥
[4]आहिताग्निर्दक्षिणाग्नावेतेनाग्न इति त्वृचा ।
गृहीतमधुपर्कः सन्नग्रेणाग्निं परीत्य च ॥
[5]तस्मिन्नुदङ्मुखः स्थित्वा दक्षिणे चाऽऽसने तृणम् ।
अङ्गुष्ठानामिकाभ्यां तु समादाय निरस्य च ॥
निरस्त इत्यनेनैव तत्प्रत्यग्दक्षिणां दिशम् ।
अपः स्पृष्ट्वेदमहमित्युपविश्य तृणेषु सः ॥
[6]समस्तपाण्यङ्गुष्ठश्च दक्षिणोपर्यवस्थितः ॥

अत्र वामोरूपर्यवस्थितदक्षिणपाद इति व्याख्येयम् । अत्रोपवेशनानन्तरं समस्तपाण्यङ्गुष्ठत्वं ब्रह्मण इति भगवन्मते विशेषः । प्रपा. ४१

(१) शौका. ५९ पृ. ७; प्रपा. ४१ चन्द्रमा म इति त्वसौ (ब्रह्माणं वृणुयात् सुधीः) उत्त.
(२) शौका. ६० पृ. ७; प्रपा. ४१ माऽऽदिश्य (मोद्दिश्य) पू.
(३) शौका. ६१ पृ. ७.
(४) शौका. ६२ पृ. ७; प्रपा. ४१ गृहीतमधुपर्कः सन् (उक्तो वृतोऽसीति वदन्) उत्त.
(५) शौका. ६३-६४ पृ. ७; प्रपा. ४१.
(६) शौका. ६५ पृ. ७; प्रपा. ४१ दक्षिणो (दक्षिणे), वस्तुतस्तु व्याख्यानादादर्शपाठ एव प्रपासंमतः, पू.

बृहस्पतिर्ब्रह्मा इति जपित्वा स उदङ्मुखः ॥
[१]आ होमपरिसमाप्तेर्यच्छेद्वाचं विसृज्य च* ॥

प्रणीताप्रणयनम्

प्रणीतापात्रमानीय पश्चादग्नेस्तृणेषु च ॥
[२]अन्तर्धाय पवित्रे ते संपूर्योत्पूतवारिणा ।
तृणच्छन्नं समुद्धृत्य धृतं प्राणशिरःसमम् ॥
[३]अग्नेरुत्तरतस्तेषु तृणेष्वेव निधाय च ॥

हविषो निर्वापः प्रोक्षणं च

तस्मिन्काले च निर्वापः कर्तव्यश्च यथाविधि ॥
[४]आदावाधाय शूर्पं तु पश्चादग्नेस्तृणेषु तु ।
अन्तर्धाय पवित्रे ते व्रीह्यादीन्निर्वपेत्ततः ॥
चतुरश्चतुरो मुष्टीन् व्रीह्यादीनि पृथक्पृथक् ।
तस्यै तस्यै देवताया एवं निर्वपणं ततः ॥
अभिधाय चतुर्थ्यन्तं प्रत्येकं देवतापदम् ।
त्वा जुष्टं निर्वपामीति मन्त्रं निर्वपणे विदुः ॥
तथैव प्रोक्षयेदद्भिः सपवित्रेण पाणिना ।
निर्वपामिपदस्थाने प्रोक्षामीति प्रयुज्य च ॥

हविषः संस्कारः पाकश्च

अग्नेरुत्तरतः स्तीर्णे कृष्णाजिन उलूखलम् ।
निधायोत्तरलोम्न्येव तस्मिन्व्रीहीनुलूखले ॥
तानोप्य पत्नी मुशलेनावहन्याद्विमुच्य च ।
अनेकेषां निरुप्तं चेत्स एवोप्यावहन्यते ॥

विविच्य शूर्पेण तुषं त्रिः फलीकृत्य तण्डुलान् ।
विभज्याभिमृशेदिदममुष्मा इति तत्पदे ॥
[१]त्रिः प्रक्षाल्य सतोयांस्तान् स्थाल्यामोप्य सहैव तु ।
तस्मिन्नग्नावधिश्रित्य पचेत्काष्ठैर्हविः शनैः ॥

आज्यसंस्कारः

[२]अथाऽऽज्यस्थालीमादाय आज्यं तस्यां निषिच्य तु ।
उदगग्नेर्निरूढेषु त्वङ्गारेषु सभस्मसु ॥
[३]अधिश्रित्य विलाप्यैतदवज्वल्य ज्वलत्तृणैः ।
आज्ये प्रत्यस्य दर्भाग्रे त्वङ्गुष्ठपर्वमात्रके ॥
[४]पुनर्ज्वलद्भिरेतैस्त्रिस्तृणैः परिहरेत्सह ।
ओदनादिहविर्भिस्तैः सन्ति चेदितरैरिति ॥
[५]अद्भिरेनानि संप्रोक्ष्य प्रहृत्याग्नावुदक् कृषन् ।
उद्वास्याऽऽज्यमथाङ्गारान्प्रत्यूह्यापः स्पृशेत् पुनः ॥
[६]ताभ्यामाज्यं त्रिरुत्पूय पवित्राभ्यां यथाविधि ।
सकृन्मन्त्रेण द्विस्तूष्णीमग्नौ ते संप्रहृत्य च ॥

---

* 'विसृज्य च' इत्यनन्वितम् । तेनेदं कल्प्यते– अतः परं वाग्विसर्गनिमित्तकप्रायश्चित्तविधायकमर्धं भ्रष्टमिति । तच्च प्रायश्चित्तमाश्वलायनश्रौतसूत्रात् 'अतो देवा अवन्तु नः' इत्यृचो जपः ।

(१) शौका. ६६ पृ. ७; प्रपा. ४१ मानीय (मादाय) च (तु) उत्त.

(२) शौका. ६७ पृ. ७; प्रपा. ४१ संपूर्योत्पू (संपूर्येत् पू) धृतं प्राण (धृतप्राणः).

(३) शौका. ६८ पृ. ७; प्रपा. ४१ (अग्नेरुत्तरतस्तृणेष्वेतेष्वेव निधापयेत् ।) पू.: ४२ च (तु) उत्त.

(४) शौका. ६९–७५ पृ. ७–८.

(१) शौका. ७६ पृ. ८ तस्मिन् (अस्मिन्); प्रपा. ४२ उत्त.

(२) शौका. ७७ पृ. ८; प्रपा. ४४ आज्यं तस्यां (तस्यामाज्यं) तु (च); संर. ७० प्रपावत्, प्रयोगपारिजाते इति.

(३) शौका. ७८ पृ. ८; प्रपा. ४४ आज्ये (आज्यं) त्वङ्गु (अङ्गु); संर. ७० अधिश्रित्य विलाप्यैतत् (विलाप्यैतदधिश्रित्य) त्वङ्गु (अङ्गु) प्रयोगपारिजाते इति.

(४) शौका. ७९ पृ. ८ स्त्रिस्तृणैः (स्तु तृणैः); प्रपा. ४४ हविर्भिस्तैः (हविर्मिश्रैः).

(५) शौका. ८० कृषन् (कृषेत्) पृ. ८; प्रपा. ४४ रेनानि (रेतानि) पः स्पृशेत्पुनः (प उपस्पृशेत्) उत्तरार्धं संग्रहकारस्य.

(६) शौका. ८१–८२ पृ. ८ सपरि (संपरि); प्रपा. ४४ संग्रहकारः.

बर्हिरास्तरणमाज्यनिधानं च

सपरिस्तरणादग्नेः पश्चात्संप्रोक्षिते स्थले ।
बर्हिःसंनहनीं रज्जुमुदगग्रां निधाय ताम् ॥
[1]तस्यां बर्हिषि संस्तीर्णे प्रागग्रे निहितं भवेत् ॥

स्रुक्स्रुवसंमार्गः

अथाऽऽदाय स्रुवं दर्वीं दक्षिणेन करेण तौ ॥
[2]सव्येन दर्भांश्चाऽऽदाय सहैवाग्नौ प्रतापयेत् ।
संमृज्य त्रिर्बिलं त्वग्रैर्दण्डं मध्ये स्रुवस्य तु ॥
[3]मूलं मूलैश्च दर्भाणां तथा जुह्वा विधीयते ।
सह दर्भैः स्रुवं जुह्वा प्रताप्य प्रोक्षितान् कुशान् ॥

अभिघारणं हविर्निधानं च

[4]प्रहृत्याग्नावुपस्पृश्य हविस्तेनाभिघारयेत् ।
गृहीत्वाऽऽज्यं स्रुवेणैव पक्वे हविषि सेचनम् ॥
[5]अभिघारणमित्याहुस्तथाऽन्येषु हविःषु च ।
उदगुद्वासितं यस्मात्पुनरप्यभिघारयेत् ॥
[6]आज्यस्य दक्षिणे पार्श्वे बर्हिष्यासादयेत्पृथक् ॥

परिधानम्

इध्मान्निष्कृष्य परिधीन्परिदध्यात्क्रमेण तान् ॥
[7]उदगग्रं मध्यमं तदग्नेः पश्चान्निधाय तत् ।
प्रागग्रमुपरि ज्येष्ठमग्नेर्दक्षिणतस्तथा ॥

(१) शौका. ८३ पृ. ८ प्रागग्रे ( प्रागग्नेः ) ; प्रपा. ४४ निहितं ( निहिते ) संग्रहकारः .

(२) शौका. ८४ पृ. ८ सहैवा ( संप्रोक्ष्या ) त्वग्रै ( मूलै ) दण्डं मध्ये ( दण्डमध्ये ) ; प्रपा. ४४ संग्रहकारः .

(३) शौका. ८५ पृ. ८ ; प्रपा. ४४ जुह्वा ( जुह्वां ) प्रोक्षितान् ( प्रोक्ष्य तान् ) ; संग्रहकारः .

(४) शौका. ८६ पृ. ८ ; प्रपा. ४४ त्याग्नावुप ( त्याप उप ) पू. , संग्रहकारः : ४५ उत्त.

(५) शौका. ८७ पृ. ८ यस्मात् ( तस्मात् ) ; प्रपा. ४५.

(६) शौका. ८८ पृ. ८ ; प्रपा. ४५ पू.

(७) शौका. ८९–९१ पृ. ८–९.



कनिष्ठं मध्यमादधो वह्नेः प्रागग्रमुत्तरे ॥

आघारानुयाजसमिन्निधानम्

आघारसमिधोरेकां निदध्यात्पूर्वदक्षिणे ॥
प्राग्दक्षिणां च समिधं तथा पूर्वोत्तरे पराम् ।
पूर्वोत्तराग्रां वोदीच्यामनुयाज्या विधीयते ॥

परिसमूहनाग्न्यलंकरणात्मालंकारेध्माधानानि

[1]अग्निं परिसमुह्याथ गन्धपुष्पैरलङ्कृतम् ।
आत्मानं चाप्यलंकृत्य इध्ममादाय पाणिना ॥
[2]इध्मसंनहनीं रज्जुमनूयाजे निधाय ताम् ।
आदायाऽऽज्यं स्रुवेणैव त्रिरिध्ममभिघारयेत् ॥

अनूयाजे निधाय तामित्यत्र अनूयाजाभावपक्षे तत्रैव दर्भेषु निदध्यादिति बोद्धव्यम् । अग्न्यलंकरणे मन्त्र उच्यते ऋग्विधाने– ' विश्वानिन इति द्वाभ्यामृग्भ्यां यो वह्निमर्चति । स तरत्यापदः सर्वा यश आप्नोति चाक्षयम् ॥ ' इति । प्रपा. ४६

[3]अयं त इति मन्त्रेण त्वग्नाविध्मं निधाय तम् ॥

आघारौ

आघारयेत्तावाज्येन त्वाघारौ द्वौ स्रुवेण तु ॥
[4]पश्चिमोत्तरमारभ्य घृतधारामृजुं ततः ।
आ मध्यतोऽनवच्छिन्नां नयेदापूर्वदक्षिणाम् ॥
[5]प्रत्यग्दक्षिणमारभ्य चैवं पूर्वोत्तरां नयेत् ।
आघाराविति तावेतौ प्राहुर्यज्ञविदो जनाः ॥

आज्यभागौ

[6]अथाऽऽज्यभागौ जुहुयात्पार्श्वेऽग्नेरुत्तरेऽग्नये ।
स्वाहेति दक्षिणे सोमाय स्वाहेति यथाक्रमम् ॥

(१) शौका. ९२ पृ. ९ समुह्या ( समूह्या ) ; प्रपा. ४६.

(२) शौका. ९३ पृ. ९ ; प्रपा. ४६.

(३) शौका. ९४ पृ. ९ तम् ( तत् ) येत्तावा ( येतामा ) तु ( वै ) ; प्रपा. ४६.

(४) शौका. ९५ पृ. ९ ; प्रपा. ४६ ततः ( तथा ) तोऽनव ( तस्तववि ).

(५) शौका. ९६ पृ. ९ चैवं ( एवं ) ; प्रपा. ४६ पू.

(६) शौका. ९७ पृ. ९ ; प्रपा. ४७.

अत्राऽऽज्यभागावग्नेः पूर्वार्धसमतया जुहुयात् ।

प्रपा. ४७

प्रधान–स्विष्टकृदाहुतिदेशः

[१]प्राक्संस्थाम( ? स्था अ )नयोर्मध्य उदक्संस्थां तु ( ? स्थास्तु ) वाऽऽहुतीः ।
प्रत्यक्तरे वा जुहुयात्प्राक्पूर्वं स्विष्टकृद्धविः ॥

हविष उद्धरणविभागौ

सहपाकेऽधुनोद्धृत्य स्थाल्याः पात्रेषु निक्षिपेत् ।
विभज्याभिमृशेत्तानि पूर्ववत्प्रतिदैवतम् ॥

अवदानधर्मः

[२]बिले जुह्वा स्रुवेणैवोपस्तीर्य द्विरवद्यति ।
मध्यात्तद्धविषोऽवद्येत्पूर्वार्धाच्चापि पाणिना ॥
[३]जुह्वा बिले च प्रक्षिप्य हविः प्रत्यभिघारयेत् ।
अभिघार्य द्विरावत्तं जुह्वा पार्श्वेन हूयते ॥
[४]होतव्यं चतुरावत्तं पञ्चावत्तिन उच्यते ।
हविषो मध्यात्पूर्वार्धात्पश्चार्धाच्च अवद्यति ॥
आज्याद्द्विरवदानं च पञ्चावत्तिषु उच्यते ॥

पञ्चावत्तिपरिगणनम्

यजमानो जामदग्न्यः पञ्चावत्तीत्युदाहृतः ॥
[५]जामदग्न्या वत्सविदा आर्ष्टिषेणास्तथैव च ।
भार्गवाश्च्यावना और्वाः पञ्चावत्तिन ईरिताः ॥
[६]एतेभ्योऽन्ये द्विजाः सर्वे ज्ञेयाश्चतुरवत्तिनः ॥

प्रधानहोमः

अवदायावदायैवं स्वैः स्वैर्मन्त्रैर्जुहोत्यथ ॥
[१]स्थालीपाकस्य चाभावे आज्येनैव हुनेत्ततः ॥

स्विष्टकृद्धोमः

अवद्येत्सौविष्टकृतं हविर्भ्यः सकृदेव तु ॥
[२]अवदायोत्तरार्धात्तन्नाभिघार्यं हविः पुनः ।
आज्यावदानैः शेषाणि त्ववदानानि पूरयेत् ॥
[३]तुषान्कणान् समिच्छेषान् संप्रोक्ष्याग्नौ प्रहृत्य च ।
यदस्य कर्मण इति हुत्वा स्विष्टकृदाहुतिम् ॥

अनूयाजसमित्परिध्याघारसमिदिध्मरज्जुप्रहरणम्

[४]स्पृष्ट्वोदकमनूयाजसमिधं तां प्रहृत्य च ।
प्रहृत्य मध्यमं परिधिमितरौ युगपत्तथा ॥
[५]आघारसमिधावग्नौ युगपत्संप्रहृत्य च ।
इध्मबन्धनरज्जुं च विस्रस्याऽग्नौ प्रहृत्य च ॥

प्रायश्चित्ताहुतयः

[६]आसीनो वा स्थितो वाऽपि अग्नेरुत्तरपश्चिमे ।
अयाश्चेत्येकयर्चाऽन्या अतो देवा अवन्तु नः ॥
[७]इति द्वाभ्यां व्याहृतिभिर्हुत्वा चतसृभिर्घृतम् ॥

---

( १ ) शौका. ९८-९९ पृ. ९.

( २ ) शौका. १०० पृ. ९ ; प्रपा. ४७ बिले जुह्वा स्रुवेणैवो ( जुहूं सव्ये समादायो ).

( ३ ) शौका. १०१ पृ. ९ ; प्रपा. ४७ बिले च प्र ( बिलेऽथ नि ) रावत्तं ( रवत्तं ) चतुर्थपादं विना : ४८ जुह्वा ( जुह्वाः ) चतुर्थपादमात्रम् .

( ४ ) शौका. १०२-१०३ पृ. ९.

( ५ ) शौका. १०४ पृ. ९ ; प्रपा. ४७ वाश्च्या ( वच्या ).

( ६ ) शौका. १०५ पृ. ९ ; प्रपा. ४७ पू. : ४८ स्वैः स्वै ( तैस्तै ) उत्त.

( १ ) शौका. १०६ पृ. ९-१० ; प्रपा ४८ चाभावे ( वाऽभावे ) : ५० अवद्येत् ( अवद्य ) उत्त.

( २ ) शौका. १०७ पृ. १० ; प्रपा ५०.

( ३ ) शौका. १०८ पृ. १० ; प्रपा. ५२ समिच्छेषान् ( समुच्छिष्टान् ) पू. : ५० उत्त.

( ४ ) शौका. १०९ पृ. १०.

( ५ ) शौका. ११० पृ. १० ; प्रपा. ५० रज्जुं ( योक्त्रं ) प्रहृत्य ( विहृत्य ) उत्त.

( ६ ) शौका. १११ पृ. १० ; प्रपा. ५० वाऽपि ( वा सन् ) र्चाऽन्या ( र्चा तु ).

( ७ ) शौका. ११२ पृ. १० ; प्रपा. ५०.

पूर्णाहुतिः

*[1]अयाश्चेत्यादिभिर्हुत्वा समुद्रादूर्मिसूक्ततः ।
संततामाज्यधारां तां पूर्णाहुतिमथाऽऽचरेत् ॥

दिगुत्सेकः मार्जनं प्रोक्षणं च

[2]अथाऽऽदाय पूर्णपात्रं बर्हिष्याधाय पाणिना ॥
[3]स्पृष्ट्वा दक्षिणहस्तेन तत् पूर्णमसिमन्त्रतः ।
प्राच्यां दिश्यादिभिर्मन्त्रैः कुशैः प्रागादिषु क्रमात् ॥
उदकं तु प्रतिदिशं प्रोक्ष्याधस्तान्निधाय तत् ।
आपो अस्मानित्यनया इदमाप इति त्वथ ॥
सुमित्र्या न इत्येतेन मन्त्रान्ते मार्जनं ततः ।
दुर्मित्र्या इति मन्त्रेण प्रत्यग्दक्षिणदेशके ॥
[4]तं हन्मीत्येव मन्त्रेण कुशाग्रैः प्रक्षिपेदपः ।
वामपार्श्वे तथाऽऽसीना(?) पत्नी(?) प्रत्यग्घविर्भुजः ॥
[5]आसिच्य पाणौ तत्तोयं माऽहं प्रजामनेन तु ।
तत्पाणिभ्यां गृहीत्वा तु पापमात्मकृतं स्मरन् ॥

[1]आत्मानं यजमानं च होता त्रिः प्रोक्ष्य तैर्जलैः ॥

अग्न्युपस्थानम्

ओं च म इत्युपतिष्ठेताग्नेः प्रत्यगुदक्स्थितः ॥
अत्रोक्तविशेषः श्रौतस्याविरोधित्वात्सर्वैरनुष्ठेयः ।
अत्रान्यस्य होतुरभावाद्धोतृशब्देन ब्रह्मैवोच्यत इति ।
प्रपा. ५३

अग्निप्रार्थना

[2]श्रद्धां मेधां यशः प्रज्ञां विद्यां बुद्धिं श्रियं बलम् ।
आयुष्यं तेज आरोग्यं देहि मे हव्यवाहन ॥
[3]अग्निमेतेन मन्त्रेण प्रार्थयेत द्विजोत्तमः ॥

परिसमूहनपर्युक्षणे, दक्षिणादानम्

ततः पर्युह्य पर्युक्ष्य दद्याद्विप्राय दक्षिणाम् ॥
[4]स्वेषु स्वेष्वेव कल्पेषु या योक्ता सैव दक्षिणा ।
होमोपयोगि यद्द्रव्यं होत्रे दद्यात्सदक्षिणम् ॥
[5]संप्रोक्तदक्षिणालाभे हिरण्यं वा स्वशक्तितः ।
यद्यस्ति हुतशेषं तु देयं विप्राय तद्धविः ॥

पात्राणां क्षालनं ग्रहणं च

[6]प्रक्षाल्य यज्ञपात्राणि गृह्णीयाद्द्वन्द्वशः क्रमात् ॥

ब्रह्मवरणादिवैकल्पिककर्माङ्गसंग्रहः

[7]कृताकृतं ब्रह्मवरणं ब्रह्मा चाऽऽज्यस्य संस्कृतिः ।
संमार्ष्टिश्च स्रुवजुह्वोराज्यभागौ परिस्तृतिः ॥

---

* कारिकेयमादर्शपुस्तकेऽत्र स्थाने नोपलभ्यते, उपलभ्यते तु ऋतुशान्तिप्रकरणे ( शौका. ३३ पृ. ३३ ) । सा चात्र नास्त्येवेति प्रतिपत्तिर्युक्ता, न लेखकप्रमादाद्भ्रष्टेति कल्पना, अनन्तरपूर्वमेव अयाश्चेत्याद्याहुतीनां विहितत्वेन 'व्याहृतिभिर्हुत्वा' इति क्त्वाप्रयोगात् वाक्यस्य पूर्वमसमापितत्वेन च 'अयाश्चेत्यादिभिर्हुत्वा' इति क्त्वान्तेन पुनस्तदनुवादस्यानुपपत्तेः । पारिजाते तु अवान्तरप्रकरणभेदेन पूर्वोत्तरकारिकाभ्यो विच्छिद्य गृहीताया ऋतुशान्तिप्रकरणपठिताया अपि सामान्यरूपतामभिमत्य वा रभसाद्वा अग्निमुखप्रकरणे संग्रह इति भाति । तमनुरुध्यैवास्माभिरत्र संग्रहः कृतः ।

(१) प्रपा. ५१ ; विपा. ६५३ अयाश्चे ( आयाश्चे ).

(२) शौका. ११२ पृ. १० व्याधाय ( व्यादाय ); प्रपा. ५३ अथाऽऽदाय पूर्णपात्रं ( आदाय पूर्णपात्रं तु ).

(३) शौका. ११३–११५ पृ. १० ; प्रपा. ५३.

(४) शौका. ११६ पृ. १० ; प्रपा. ५३ ना पत्नी ( नां पत्नीं ).

(५) शौका. ११७ पृ. १० ; प्रपा. ५३.

(१) शौका. ११८ पृ. १० ; प्रपा. ५३ तैर्जलैः ( तज्जलैः ).

(२) शौका. ११९ पृ. १० ; प्रपा. ५३.

(३) शौका. १२० पृ. १० ; प्रपा. ५३ पर्युह्य ( पर्यूह्य ).

(४) शौका. १२१ पृ. १० ; प्रपा. ५३ स्वेष्वेव ( स्वेषूक्त ) या योक्ता ( यथोक्ता ).

(५) शौका. १२२ पृ. १० ; प्रपा. ५३ संप्रोक्त ( यथोक्त ).

(६) शौका. १२३ पृ. १० ; प्रपा. ५३.

(७) शौका. १२३–१२५ पृ. ११ परिस्तृतिः ( परिस्रुतिः ) ; प्रर. ४९ संमार्ष्टिश्च स्रुवजुह्वोः ( संमार्गः ( स्रुवदर्व्योश्च ).

व्रीहीणामवघातश्च तण्डुलेषु कृताकृतः ।
द्रवीभूतघृतस्यापि विलापनविधिस्तथा ॥

होमतन्त्रोपसंहारः

[१]यज्ञतन्त्रमिदं प्रोक्तमेकाग्नेर्यज्ञकर्मणि ।
[२]प्रयोक्तॄणां प्रयोगार्थं शौनकेन यथाक्रमम् ॥

## जयन्तकारिकाः

अग्निस्थापनम्

[३]उक्ते षट्त्वे पुनः षट्त्वं प्रतिष्ठाऽग्नेर्यथा भवेत् ॥
षण्णामुपरि लेखानामिति सूत्रविदो विदुः ॥

यथानिर्वापक्रमं प्रोक्षणक्रमः

[४]निर्वापस्य क्रमेणैव प्रोक्षणस्य क्रमो भवेत् ॥

## कुमारिलकारिकाः

स्थण्डिलकरणम् अग्निस्थापनं च

[५]प्राणानायम्य संकल्प्य परितः स्थण्डिलं शुचिः॥
अधिकं वेषुमात्रं वा गोमयेनोपलिप्य च ॥
[६]यज्ञियं शकलं किंचिदादीत ततः परम् ।
तेनान्तः शकलेनैव षड्लेखा उल्लिखेत्ततः ॥
[७]अग्निस्थापनदेशस्य पश्चात् प्रादेशसंमिताम् ।
उल्लिखेदुदगायामां तस्या उभयतोऽपरे ॥
[८]पूर्वायते उदक्संस्थे असंसृष्टे च पूर्वया ।
मध्ये तिस्र उदक्संस्थाः पूर्वायामा असंहताः॥
[९]लिखिता येन शकलं यज्ञियं तन्निधाय च ।
अद्भिरभ्युक्ष्य शकलं निरस्याप उपस्पृशेत् ॥

(१) शौका. १२५ पृ. ११ ; प्रपा. ५३.
(२) शौका. १२६ पृ. ११ ; प्रपा. ५३.
(३) प्रपा. ३१. (४) प्रपा. ४१.
(५) कुका. १।१।२ शुचिः (शुचि) ; प्रपा. ३०.
(६) कुका. १।१।३ ; प्रपा. ३० पू.
(७) कुका. १।१।४ ; प्रपा. ३० ; प्रर. ३८ उत्त.
(८) कुका. १।१।५ ; प्रपा. ३० ; प्रर. ३८.
(९) कुका. १।१।६ ; प्रपा. ३० ; प्रर. ३८ पू.

[१]प्रतिष्ठाप्याथ लेखासु होमायालं हविर्भुजम् ।
एतत्तन्त्रं प्रकुर्वीत होष्यन्संस्थापितेऽनले ॥

(१) होमायालं होमपर्याप्तम् । योग्यमिति यावत् । योग्यत्वं च द्वेधा— अरण्यादिजन्यत्वं प्रदीप्तबहुलाङ्गारवत्त्वं च । प्रपा. ३१

(२) तत्र चौलादिहोमो लौकिकाग्नौ । पार्वणस्थालीपाकश्रवणाकर्मादिहोमो गृह्याग्नौ । तत्र लौकिकाग्नौ होमे स्थण्डिलकरणादिरग्निप्रतिष्ठापनान्तो विधिर्नियतः । गृह्याग्निहोमेऽपि गृहप्रवेशवास्तुहोमशूलगवान्वष्टक्यादिषु नियतः, धार्यायतने तदसंभवात् । यदाऽपि समिदादावग्निसमारोपस्तदा गृह्याग्निकर्तव्येऽपि स्थालीपाकादौ नियतः । एतत्सर्वमभिप्रेत्य 'यत्र क्व च होष्यन् स्यात्' (आगृ. १।३।३) इति गृह्योक्ताग्निप्रतिष्ठापनविधेर्विषयं प्रदर्शयितुमाह कारिकाकारः— प्रतिष्ठाप्येति । अन्यथा संस्थापितेऽनले होष्यन्निति व्यर्थं स्यात् । प्रर. ३७

ब्रह्मपरिस्तरणयोः कर्मभेदेन नित्यत्वं विकल्पश्च, आज्यभागयोर्विकल्पः, मन्त्रानादेशे नाममन्त्रः

[२]आज्यैकद्रव्यके होमे स्याच्चेदाज्यपरिग्रहः ।
स्यात्परिस्तरणं तत्र कृताकृतमिति स्थितिः ॥
नोच्चारयति यत्राऽऽज्यपदं कर्मसु सूत्रकृत् ।
अनादिष्टाज्यहोमेषु तत्र नित्या परिस्तृतिः ॥
[३]सर्वस्मिन्पाकयज्ञे स्त आज्यभागौ कृताकृतौ ।
सर्वेषु पाकयज्ञेषु भवेद्ब्रह्मा कृताकृतः ॥
धन्वन्तरिमखे ब्रह्मा नित्यः शूलगवे तथा ।
ऊचे होमं क्वचिन्नाम्ना क्वचिन्मन्त्रेण सूत्रकृत् ॥
[४]नोभयं यत्र तत्रेष्टं हवनं नामधेयतः ।
मन्त्रेण होमो निर्वापस्तूष्णीं नाम्ना समन्त्रकम् ॥

(१) कुका. १।१।७ प्याथ (प्याच) ; प्रपा. ३१ तन्त्रं (दन्तं) ; प्रर. ३७ प्रपावत्.
(२) कुका. १।१।८–९ ; प्रपा. ५३ ; प्रर. ४८.
(३) कुका. १।१।१०–११ ; प्रपा. ५३ ; प्रर. ४८ स्त (तु).
(४) कुका. १।१।१२ ; प्रपा. ५४ पू. ; प्रर. ४८ पू.

कर्मविशेषे निर्वापप्रोक्षणयोस्तूष्णींत्वम् , सहश्रपणम् ,
व्युद्धरणाभावश्च

[१]मन्त्रोक्तदेवतानां च तूष्णीमेवाथ निर्वपेत् ।
चतुरश्चतुरो मुष्टीन्प्रोक्षणं च तथा भवेत् ॥
सहैव श्रपयेत्तत्र नास्ति व्युद्धरणं तथा ॥
आदिष्टमन्त्रहोमेषु सर्वत्रैवं प्रतीयताम् ॥

परिसमूहनपरिस्तरणपरिषेचनानि

[२]...... परितस्त्रिः समूहनम् ॥
[३]पाणिना सोदकेनाग्नेः समन्तात् परिमार्जनम् ।
तत्समूहनमत्रेष्टं जयन्तवचनं यथा ॥

अपराजितां दिशमारभ्य तत्पर्यन्तं सोदकेन पाणिना प्रदक्षिणं त्रिः परिमार्जनं परिसमूहनम् । प्रपा. ३८

[४]पर्यूहपरिषेकौ स्तः सर्वत्र त्रिस्त्रिरम्भसा ।
सर्वासु दिक्षूदक्संस्था प्राच्यादिषु परिस्तृतिः ॥
[५]अग्नेः षोडशभिर्दर्भैः पूर्वादिषु परिस्तृतिः ।
स्तृणेद्दक्षिणतः कांश्चिद्ब्रह्मावस्थायिकर्मसु ॥
[६]कांश्चिदुत्तरतो दर्भानास्तीर्य परिषिञ्चति ॥

पात्रासादनम्

दर्भेषूत्तरतो द्वन्द्वं पात्राणि न्यञ्चि सादयेत् ॥
‡[७]युग्मान् प्रादेशमात्रांश्च पूर्वाग्रान् सर्वदिक्ष्वपि ।
तत्क्रमं भगवानाह श्लोकेनैकेन वृत्तिकृत् ॥

[१]स्थालीं चरोः प्रोक्षणभाजनं च
दर्वीस्रुवौ सादय दर्विहोमे ।
पात्रं प्रणीतार्थमथाऽऽज्यपात्र-
मिध्मं क्रमेण क्रमवित्कुशांश्च ॥

दर्व्या क्रियमाणो होमो दर्विहोमः। सादयेति प्राप्तकाले लोट् । आसादनकालोऽयं प्राप्त इत्यर्थः । हे क्रमवित् यजमान, एवं क्रमेण पात्राण्यसादयेति योजनीयम् ।
प्रपा. ३९

[२]शूर्पकृष्णाजिनाद्यन्यदर्थप्राप्तं च सादयेत् ॥

पवित्रलक्षणम्

अनन्तस्तरुणौ यौ तु कुशौ प्रादेशसंमितौ ॥
[३]अनखच्छेदितौ साग्रौ तौ पवित्राभिधानकौ ।
‡अप्रच्छिन्नाग्रयोर्नैव त्यागः सूत्रे प्रशब्दतः ॥

प्रोक्षणी–प्रणीतासंस्कारः

[४]सिञ्चेन्न्युब्जानि पात्राणि सपवित्रेण वारिणा ।
उत्ताने प्रोक्षणार्थेऽपो निनयेत्सपवित्रके ॥
[५]पवित्राभ्यां त्रिरुत्पूय त्रिः प्रोक्ष्योर्ध्वबिलानि तु ।
विस्रस्येध्मं च चमसं सपवित्रमथाग्रतः ॥

विस्रस्येध्मं चेति पूर्वेण संबन्धः । प्रपा ४१

[६]पूरयित्वा जलैस्तत्र गन्धपुष्पाणि चाऽऽवपेत् ।
ब्रह्मन्नपः प्रणेष्यामीत्याह ब्रह्मा यदा भवेत् ॥

---

‡ अस्यार्धस्य संगतिश्चिन्तनीया । आनन्दाश्रमपुस्तके पादटिप्पण्यां ' युग्मैः प्रादेशमात्रैश्च पूर्वाग्रैः ' इति पाठभेदो दत्तः ।

(१) प्रपा. ५४ ; प्रर. ४८ च तूष्णी ( तु तूष्णी ).

(२) कुका. १।२।१४.

(३) कुका. १।२।१५ ; प्रपा. ३८ नाग्नेः ( नाग्ने ).

(४) कुका. १।२।१६ ; प्रपा. ३८ सर्वत्र त्रिस्त्रि ( सर्वतस्त्रिभि ) सर्वासु दिक्षूद ( दिक्षु पूर्वाऽप्युद ).

(५) कुका. १।२।१७.

(६) कुका. १।२।१८ ; प्रपा. ३८ दर्भानास्तीर्य ( नास्ति न तिर्यक् ) पू. : ३९ उत्त.

(७) कुका. १।२।१९ ; प्रपा. ३९ .

‡ अच्छिन्नाग्रयोरपि अप्रच्छिन्नाग्रत्वात्तयोस्त्यागनिषेधस्य च व्यर्थत्वात् अल्पच्छिन्नाग्रयोरित्यर्थो विवक्षणीयः । तथैव वा मूलपाठस्य संभवः ।

(१) कुका. १।२।२० ; प्रपा. ३९ कुशांश्च ( कुशैश्च ).

(२) कुका. १।२।२१ ; प्रपा. ३९ उत्त ; संत. ८७० उत्त , शौनकः .

(३) कुका. १।२।२२ धानकौ ( धायकौ ) ; प्रपा. ३९ प्रशब्दतः (प्रशस्यते) ; संत. ८७० कुकावत् , पू. , शौनकः .

(४) कुका. १।२।२३ ; प्रपा. ३९ उत्त. , रुद्रदत्तः .

(५) कुका. १।२।२४ त्रिरुत्पूय ( त्रिरुत्पूतैः ) ; प्रपा. ३९ पू. , रुद्रदत्तः : ४१ मथाग्रतः ( मतः परम् ) उत्त.

(६) कुका. १।२।२५–२६ ; प्रपा. ४१.

नीत्वा तन्नासिकादग्रमुदगग्नेर्निधाय च ।
दर्भैः प्रच्छादयेत्पात्रं पूर्णपात्रं तदुच्यते ॥

निर्वापादिः हविःसंस्कारः

[1]पवित्रान्तर्हिते शूर्पे व्रीहिमुष्टिचतुष्टयम् ।
निर्वपेदग्नये ¶ त्वादिमन्त्रेणाऽऽवर्तते च सः ॥
निर्वपेदपरं त्वग्नीषोमाभ्यां त्वेति मन्त्रतः ।
पवित्रान्तर्हितान् व्रीहीन् प्रोक्षेन्निर्वापसंख्यया ॥

पवित्राभ्यामन्तर्हितान् उपरिनिहितपवित्रकानित्यर्थः । प्रपा. ४१

[2]पूर्वमन्त्रद्वयेनैव प्रोक्षामीति विशेषणम् ।
प्रत्यग्ग्रीवं स्तृणात्यूर्ध्वलोम कृष्णाजिनं ततः ॥
तस्मिन्नुलूखलं कृत्वा तत्र व्रीहींस्तथाऽऽवपेत् ।
व्रीहीन् पत्न्यवहन्यात्तांस्त्रिः शुक्लीकृत-तण्डुलान् ॥
[3]त्रिः प्रक्षाल्य पचेदाज्यमासिच्य सपवित्रके ॥

आज्यसंस्कारः

अपोह्योत्तरतोऽङ्गारांस्तेष्वधिश्रित्य तद्घृतम् ।
अधिश्रितमवज्वल्य दर्भाग्रद्वयमस्यति ।
तेनैव ज्वलताऽऽज्यं च त्रिः पर्यग्नि करोत्यथ ॥
[4]कर्षन्निवोदगुद्वास्य चाङ्गारानतिसृज्य च ।
अङ्गुष्ठोपकनिष्ठाभ्यां पवित्रे ते असंहते ॥
[5]गृहीत्वोत्तानपाणिभ्यां त्रिः प्रागुत्पूय तद्घृतम् ।
सवितुष्ट्वेति मन्त्रेण सकृत्तूष्णीं द्विरिष्यते ॥

[1]कृताज्योत्पवने प्रोक्ष्य पवित्रे प्रास्य चानले ।
अनलात्प्रत्यगास्तीर्णे बर्हिष्याज्यं निधाय च ॥

स्रुक्स्रुवसंमार्गः

[2]अथाऽऽदाय स्रुवं दर्वीं दक्षिणेन करेण तु ।
सव्येन दर्भानादाय संयोज्याग्नौ प्रतापयेत् ॥
[3]प्रताप्य सकुशौ दर्वीस्रुवौ दर्वीं निधाय च ।
स्रुवस्य बिलमग्रैस्तु पृष्ठमभ्यात्ममग्रतः ॥
आरभ्य पृष्ठतो यावदुपरिष्टाद्बिलं भवेत् ।
कुशानां मूलतो दण्डमेकैकं त्रिर्मृजीत वै ॥
प्रोक्ष्य प्रताप्य चाऽऽसाद्य बर्हिष्युत्तरतो घृतात् ।
संमृज्य तैः कुशैर्दर्वीमासाद्योत्तरतः स्रुवात् ॥
[4]तान् कुशान् कृतसंमार्गान् प्रोक्ष्याग्नौ प्रहरेदथ ॥

तेषां कुशानामग्नौ प्रक्षेप इति आह आश्वलायन-कारिका– तान् कुशानिति । युक्तं चैतत्, श्रौते दर्शनात् । संग. ३७

हविर्निधानम् इध्माधानं च

[5]अभिघार्य चरुं चोदगुद्वास्य च ततः परम् ॥
[6]अन्तरेणाग्निमाज्यं च नीत्वाऽभ्यासाद्य बर्हिषि ।
आज्याद्दक्षिणतो देशे जयन्तवचनं यथा ॥
[7]केचित्प्रत्यभिघार्येति सूत्रमन्यदधीयते ।
सहश्रपणपक्षे तु पृथगुद्धरणाय वै ॥

---

¶ 'अग्नये' 'अग्नीषोमाभ्याम्' इति देवताविशेषोल्लेखः पार्वणस्थालीपाकविषयः । एवमुत्तरत्रापि ।

(१) कुका. १।२।२७–२८ ; प्रपा. ४१ : ४१६ वर्तते च सः (वर्तयेत्ततः) चतुर्थार्धं नास्ति.

(२) कुका. १।२।२९–३० ; प्रपा. ४१.

(३) कुका. १।२)३१–३२ ; प्रपा. ४२.

(४) कुका. १।२।३३ पवित्रे ते (सपवित्रे); प्रपा. ४२ चाङ्गा (त्वङ्गा).

(५) कुका. १।२।३४ ; प्रपा. ४२.

(१) कुका. १।२।३५ ; प्रपा. ४२ प्रास्य चानले (अनले क्षिपेत्).

(२) कुका. १।२।३६.

(३) कुका. १।२।३७–३९ ; प्रपा. ४२–४३ त्रिर्मृजीत (त्रिर्मृजेत).

(४) कुका. १।२।४० ; प्रपा. ४३ संग. ३७ आश्वलायनकारिका.

(५) कुका. १।२।४० ; प्रपा. ४५.

(६) कुका. १।२।४१ ; प्रपा. ४५ भ्यासा (थाऽऽसा).

(७) कुका. १।२।४२–४३ ; प्रपा. ४५–४६.

निदध्यात्पात्रमितरन्मध्ये चर्वाज्ययोस्ततः ।
अलंकृत्याभिघार्येध्ममाधायायं त इत्यथ ॥

आघारौ

[1]स्रुवेणाऽऽज्यं गृहीत्वाऽग्नेः प्रत्यगुत्तरदेशतः ।
आरभ्य दिशमाग्नेयीमाज्यधारामृजुं हरेत् ॥
[2]नैर्ऋतीं दिशमारभ्य त्वैशानीं पूर्ववद्धरेत् ।
उभयत्र चतुर्थ्यन्तं प्रजापतिपदं स्मरन् ॥
[3]स्वाहेत्याघारयेदेतावाघाराविति भाषितौ ॥

आज्यभागौ

जुहुयादग्नये स्वाहेत्युदगाज्यं स्रुवेण तु ॥
[4]तेनैव जुहुयादाज्यं सोमायेति तु दक्षिणे ॥

हविर्विभागः

उद्धृत्य च चरोरर्धमभिमृश्येदमग्नये ॥
इतीदमग्नीषोमाभ्यामिति त्वभिमृशेत् परम् ॥

अत्राग्नय इत्येतत् प्रधानदेवतानामुपलक्षणार्थम् ।
प्रपा. ४५

अवदानधर्मः प्रधानहोमश्च

[5]दर्व्यामुपस्तृणात्याज्यमाग्नेयचरुमध्यतः ॥
अवद्य हविरङ्गुष्ठपर्वमात्रं तदोप्य च ।
अस्यैव पूर्वतस्तद्वदवद्यास्यां तदावपेत् ॥
[6]पात्रस्थमभिघार्यास्यां स्थितमप्यभिघारयेत् ।
जुहुयादग्नये स्वाहा दर्व्या मध्ये हविर्भुजः ॥

[1]प्रत्यक्करे वा देशे तदाज्यभागावपेक्ष्य च ।
जुहोत्यपिदधदिव दर्व्याः पार्श्वेन याज्ञिकः ॥
[2]उपस्तीर्य द्वितीयस्याप्यवदानादि पूर्ववत् ।
प्राग्वोदग्वाऽग्नीषोमाभ्यां स्वाहेति जुहुयादथ ॥
[3]पञ्चावत्ती तु पश्चार्धादप्यवद्यति वै ततः ।
स्विष्टकृत्युत्तरार्धस्य पुरस्तादप्यवद्यति ॥

हविष उत्तरार्धात्सकृत्सकृदवद्यन् पुरस्तादर्धादप्यवद्यति इत्यर्थः । इतरत्तु समानम् ।   प्रपा. ४९

स्विष्टकृद्धोमः

[4]उपस्तीर्याथ* हविषोर्द्वयोरप्युत्तरार्धतः ।
पूर्वावदानतो भूयः सकृत्सकृदवद्यति ॥
[5]ओप्य द्विरभिघार्य तत्पात्रस्थं नाभिघारयेत् ॥
यदस्येत्यादिना हुत्वा प्रागुदक्च हविर्भुजः ॥

अत्र स्विष्टकृदवदानेऽपि चतुरवत्तिनां तद्धर्मेण भवितव्यम् । तत्रायं क्रमः— दर्व्यामुपस्तीर्य सर्वेभ्यः प्रधानचरुभ्यः सकृदवदाने चतुरवत्तिता न स्यादिति चेन्नैष दोषः । प्रधानदेवतानेकत्ववत्सु कर्मसु देवताभेदेन हविःपृथक्त्वेऽपि स्विष्टकृदर्थत्वाकारेणैकत्वात् सर्वेभ्यो हविर्भ्यः पृथक्पृथगवत्तमप्येकमेवेति न चतुरवत्त्यवदानधर्मभङ्गः ।
प्रपा. ४९

इध्मरज्जुप्रासनम्, प्रायश्चित्ताहुतयः

[6]तामिध्मबन्धनीं रज्जुं विस्रस्य प्रास्य चानले ।
अयाश्चेत्यादिभिर्मन्त्रैर्हुत्वाऽऽज्याहुतिसप्तकम् ॥

(१) कुका. १।२।४४ ; प्रपा. ४६.

(२) कुका. १।२।४५ त्वैशानीं (त्वीशानीं) स्मरन् (स्मरेत्) ; प्रपा. ४६.

(३) कुका. १।२।४६ ; प्रपा. ४६ पू. ; ४७ उत्त.

(४) कुका. १।२।४७–४८ ; प्रपा. ४५ उत्त. : ४७ तु (च) पू.

(५) कुका. १।२।४८–४९ ; प्रपा. ४७.

(६) कुका. १।२।५० ; प्रपा. ४७ स्यां स्थितमप्यभि (थ दर्वीस्थं चाभि) पू. : ४८ उत्त.

* पार्वणस्थालीपाकापेक्षया इयं द्वित्वोक्तिः ।

(१) कुका. १।२।५१ उत्तरार्धे (जुहुत्वभिदधदिव दर्व्या मध्येन याज्ञिकाः ।) प्रपा. ४८ रे वा (रो वा) शे तदाज्य (शोऽयमाज्य).

(२) कुका. १।२।५२.

(३) कुका. १।२।५३ ; प्रपा. ४७ पू., ४९ उत्त.

(४) कुका. १।२।५४ ; प्रपा. ४९ षोर्द्व (षो द्व).

(५) कुका. १।२।५५ ; प्रपा. ४९ र्यं तत् (र्यात्र) पू. : ५० क्च (क्तु) उत्त.

(६) कुका. १।२।५६ ; प्रपा. ५०.

पूर्णपात्रनिनयनम्, मार्जनम्, उपस्थानम्, परिसमूहनपरिषेचने, दक्षिणादानम्

[1]निनयेत् पूर्णपात्रं तन्निहितं त्वथ बर्हिषि।
वामभागे तथाऽऽसीना पत्नी प्रत्यग्घविर्भुजः॥
[2]आसिच्य पाणौ तत्तोयं माऽऽहं प्रजां परासिचम्।
आपो अस्मानयं मन्त्र इदमाप इतीतरः॥
[3]सुमित्र्या न इति त्वन्य एभिर्मार्जनमाचरेत्।
कार्यं पुंसवनादौ तु पत्न्या अपि च मार्जनम्॥
[4]केचिन्निनीतिमेवाऽऽहुरुपस्थायों च मे स्वरः।
पर्युह्य परिषिच्यान्नं हुतशिष्टं घृतं च यत्॥
[5]ब्रह्मणे तदभावे तु ब्राह्मणाय प्रदीयते॥

तन्त्रातिदेशः

[6]एतत्तन्त्रं हुतानां स्यान्नोपवासादिरिष्यते॥
[7]प्रधानदेवतान्यत्वं सद्यस्कालस्तथेष्यते॥

पूर्णाहुतिः

[8]आज्यं द्वादशकृत्वस्तु गृहीत्वा पूरयेत्स्रुचम्।
तया चाऽऽज्याहुतिः कार्या सा पूर्णाहुतिरिष्यते॥
स्रुवपूर्णाहुतिर्वा स्यादित्येके याज्ञिका विदुः॥

अग्नेरायतनाद्बहिर्गमने प्रायश्चित्तम्

[1]अर्वाक् शम्यापरासात्तु बहिरायतनाद्गतः।
प्रायश्चित्तसमाप्त्यन्तं समर्थो जीवितुं यदि॥

शम्यापरासः शम्याप्रमाणम्, 'शम्यापरासः शम्यया परिमितो देशः' इति सूत्रव्याख्याने षड्गुरुशिष्येणोक्तत्वात्। शम्या च षट्त्रिंशदङ्गुला, 'शम्या षट्त्रिंशदङ्गुला' इति आपस्तम्बस्मरणात्। प्रपा. ५०

[2]इदं त इत्यृचा तस्य स्थानेऽग्निं प्रक्षिपेत् पुनः।
आज्याहुतीश्च जुहुयाद्व्याहृत्याख्यैश्च पूर्ववत्॥
[3]अतिक्रान्तो यदा शम्यापरासमनलो भवेत्।
चरुः पथिकृते कार्यः पूर्णाहुतिरथापि वा॥

इध्माधानोत्तरं हविर्दोषे प्रायश्चित्तम्

[4]इध्माधाने कृते दुष्टं प्रधानहविरत्र चेत्।
तत्स्थाने जुहुयादाज्यमदुष्टं च जुहोत्यथ॥
[5]एवं समाप्य यद्दुष्टं तदप्सु प्रक्षिपेत् पुनः।
अन्वाधानादिको यागः पुनः कर्तव्य एव तु॥

इध्माधानात्पूर्वं हविर्दोषे प्रायश्चित्तम्

[6]प्रागिध्माधानतो दुष्टे प्रधानहविषि त्वथ।
तद्धविः पुनरुत्पाद्य पूर्ववत्तत्समापयेत्॥

---

(१) कुका. १।२।५७; प्रपा. ५२ पू.

(२) कुका. १।२।५८ तीतरः (तीरितः); प्रपा. ५२ उत्त.

(३) कुका. १।२।५९ च (तु); प्रपा. ५२.

(४) कुका. १।२।६० पर्यु (पर्यू); प्रपा. ५२ केचिन्निनीतिमेवा (केचिदन्ये नेति चा) च्यान्नं (च्याग्निं).

(५) कुका. १।२।६१; प्रपा. ५२ ब्राह्मणाय (ब्राह्मणेभ्यः).

(६) कुका. १।२।६२; प्रपा. ५२.

(७) कुका. १।२।६३; प्रपा. ५२ प्रधानदेवतान्यत्वं (देवतास्तत्र तत्रोक्ताः).

(८) कुका. ३।१२।५-६; प्रपा. ५१; प्रर. ४६; विपा. ६५३ प्रयोगपारिजाते आश्वलायनकारिका.; संकौ. २२७ चाऽऽज्या (वाऽऽज्या) दित्येके (दिहैके); संदी. ३३५ विधानपारिजाते आश्वलायनः.

(१) कुका. ३।१३।१ गतः (गतम्); प्रपा. ५० मथो (मर्थ) शेषं कुकावत्; प्रर. ४६; संकौ. २२७ गतः (गते) मर्थो (मर्थं).

(२) कुका. ३।१३।२; प्रपा. ५०; प्रर. ४६; संकौ. २२७ हुतीश्च (हुतिं च).

(३) कुका ३।१३।३ कृते (कृतः); प्रपा. ५० पथिकृते (पाथिकृतः); प्रर. ४६.

(४) कुका. ३।१४।१; प्रपा. ५१ धानह (धानं ह); प्रर. ४७; संकौ. २२७ प्रपावत्.

(५) कुका. ३।१४।२ तदप्सु प्र (तदप्यप्सु); प्रपा. ५१; प्रर. ४७; संकौ. २२७-२२८ पेत् पुनः (पेदपि.)

(६) कुका. ३।१५।१; प्रपा. ५१; प्रर. ४७.

हविर्दोषे प्रायश्चित्तम्

[1]अङ्गानां चेद्धविर्दुष्टं तदप्यप्सु क्षिपेत् पुनः ।
स्विष्टकृद्धविषो दोष आज्येनैव समापयेत् ॥

[2]प्रच्युतैस्तु नखैः केशैः कीटैर्वाऽमेध्यसेविभिः ।
वसासृक्शुक्रमज्जास्थिमूत्रविण्मेददूषकैः ॥

[3]श्लेष्माद्यैरपि बीभत्सैर्दुष्टानि स्युर्हवींषि तु ।
भिन्नानि चैव सिक्तानि दुष्टानि स्युः क्षिपेज्जले ॥

पात्र-पवित्रनाशे प्रायश्चित्तम्

[4]स्रुक् चेद्भिद्येत तर्ह्यन्यामाहृत्य जुहुयाद्धविः ।
वानस्पत्यानि भिन्नानि प्राग्दण्डान्यनले क्षिपेत् ॥

[5]स्याच्चेत्पवित्रयोर्नाशः स्यात् पवित्रवते चरुः ॥

अनादिष्टप्रायश्चित्तम्

[6]प्रायश्चित्तविशेषस्य यत्र नोक्तो भवेद्विधिः ।
होतव्याऽऽज्याहुतिस्तत्र भूर्भुवः स्वरितीह तु ॥

(१) कुका. ३।१५।२ ; प्रपा. ५१ तदप्यप्सु (तदप्सु प्र) ; प्रर. ४७ विषो (विषां) शेषं प्रपावत् .

(२) कुका. ३।१६।१ दूषकैः (दूषिकैः) ; प्रपा. ५१ वाऽमेध्य (वा मद्य) सृक् (श्रु) विण्मेद (विट्छेद) ; प्रर. ४७ विण्मेद (विट्स्वेद).

(३) कुका. ३।१६।२ ; प्रपा. ५१ तु (चेत्) ; प्रर. ४७ प्रपावत् .

(४) कुका. ३।१७।१ ; प्रपा. ५१ चेद्भि (च भि) तर्ह्य (चेद) ; प्रर. ४७.

(५) कुका. ३।१९।४ ; प्रपा. ५१ (पवित्रं यदि नश्येचेत्स्यात्पवित्रवते चरुः ।) ; प्रर. ४७ प्रपावत् .

(६) कुका. ३।२०।१ ; प्रपा. ५१ ह तु (ति च) : ३९० षस्य (षेण) ह तु (ति च) ; प्रर. १२२ प्रपा. ३९० वत् ; विपा. ७४ (भागः २) पूर्वार्धे (प्रायश्चित्तं विशेषेण यत्र नोक्तं भवेद्विधिः ।) ह तु (ति च).

स्वयंज्वलनादिप्रायश्चित्तानि

[1]स्वयंज्वलित उद्दीप्यस्वेति द्वाभ्यां समिद्-द्वयम् ।
आधेयमुपघाते तु पुनस्त्वेत्यनया समित् ॥

[2]अन्यच्चाशुचिसंबद्धं मृन्मयं भिन्नमेव वा ॥
भूमिर्भूमिं तु मन्त्रेण प्रक्षिपेदेव तज्जले ॥

[3]आहुतिर्हूयमाना तु बहिः स्कन्देत चेद्यदि ।
देवाञ्जनमगन्यज्ञ इत्यनेनाभिमृश्य ताम् ॥

[4]द्रप्सश्चेत्याहुतिं तां च प्रक्षिपेदनले पुनः ।
देवाञ्जनेति सर्वत्र स्कन्नं त्वभिमृशेद्धविः ॥

[5]निमित्तानन्तरं सर्वप्रायश्चित्तं भवेदिह ॥

प्रायश्चित्तस्याऽऽज्यसंस्कारोत्तरकर्तव्यता

[6]प्रागेवोत्पद्यते दोष आज्यसंस्कारतो यदि ।
प्रायश्चित्तं भवेदाज्यसंस्कारानन्तरं ततः ॥

व्युत्क्रमनिमित्तकप्रायश्चित्तानि

[7]व्युत्क्रमो देवतानां तु संकल्पादौ भवेद्यदि ।
द्रव्याणां व्युत्क्रमः स्याच्चेत्तथा निर्वपणादिषु ॥

[8]मन्त्राणां व्युत्क्रमस्तद्वद्धोमादौ तु भवेद्यदि ।
मध्यात्पूर्वार्धतश्चेति व्युत्क्रमोऽस्य भवेद्यदि ॥

(१) कुका. ३।२०।२ ; प्रपा. ५० ज्वलित उ (ज्वलंश्चेदु) ; प्रर. ४७ ज्वलित उ (ज्वलेच्चेदु).

(२) कुका. ३।२१।३-४ ; प्रपा. ५१ भिन्न (छिन्न) ; भूमिं तु (भूमीति) ; प्रर. ४७.

(३) कुका. ३।२४।१ ; प्रपा. ५० चेद्यदि (वै यदि) ; प्रर. ४६ चेद्यदि (वै यदा).

(४) कुका. ३।२४।२ ; प्रपा. ५० तां च (हुत्वा) ; प्रर. ४६ प्रपावत् .

(५) कुका. ३।२४।३.

(६) कुका. ३।२५।१.

(७) कुका. ३।२५।२ ; प्रपा. ५०.

(८) कुका. अयं श्लोकः आनन्दाश्रमुद्रितपुस्तके अधिकः ; प्रपा. ५० मोऽस्य (मो वा) उक्त.

[1]यद्वो देवा ऋचा ब्रह्मा जुहुयात्तु स्रुवाहुतिम् ।
यन्मुख्यं स्वगृहे द्रव्यं होमकर्त्रे ददाति तत् ॥
[2]यजमानस्तु जुहुयाद्ब्रह्माभावे स्रुवाहुतिम् ।
कस्मैचिद्ब्राह्मणायास्मिन् पक्षे द्रव्यं ददाति तत् ॥
[3]होतव्यैकाऽऽहुतिस्तत्र व्याहृत्याख्यैः समुच्चयात् ।
यागानां व्युत्क्रमं ज्ञात्वा इदं कृत्वा यजेत्ततः ॥
[4]अविज्ञातविपर्यासो विहिता देवताः स्मरन् ।
इष्टवांस्तत ऊर्ध्वं तु व्युत्क्रमेऽवगते सति ॥
[5]प्रायश्चित्तमिदं कृत्वा यागान्नाऽऽवर्तयेत्तदा ।
यदा त्वविहितां देवतां स्मरन्निष्टवांस्तदा ॥
[6]प्रायश्चित्तमिदं कृत्वा यागं त्वावर्तयेत् कृतम् ॥

यागात् प्रागन्वाधाननिर्वापादिषु जातो देवताव्युत्क्रमो यदा ज्ञातस्तदा व्याहृतिभिर्हुत्वा विहितदेवतां यजेत् । यागादूर्ध्वं देवताव्युत्क्रमज्ञाने तु व्याहृतिभिर्हुत्वा तं यागमावर्तयेत् । यदा त्वप्रकृतां कांचित् देवतां यजेत्तदा व्याहृतिभिर्हुत्वा प्रकृतदेवतायै यागमावर्तयेत् । अत्र कारिका— 'प्राग्यागात्' इति । इदं व्याहृतिहोमाख्यम् ।

प्र. ४६

(१) कुका. ३।२५।३ ; प्रपा. ५० यात्तु (याच्च) पू. : ५१ तत् (हि).

(२) कुका. ३।२५।४ ; प्रपा. ५१ तत् (च).

(३) कुका. ३।२५।५ ; प्रपा. ५० व्यैका (व्याऽऽज्या) ख्यैः स (ख्यस) यागानां व्युत्क्रमं ज्ञात्वा (प्राग्यागाद्व्युत्क्रमे ज्ञाते) ; प्र. ४६ व्यैका (व्याऽऽज्या) उत्तरार्धे (प्राग्यागाद्व्युत्क्रमे ज्ञाते इदं कृत्वा यजेत्तदा ॥).

(४) कुका. ३।२५।६ ; प्रपा. ५० सो विहिता देवताः (से विहितां देवतां) मेऽवगते (मावगमे) ; प्र. ४६ प्रपावत्.

(५) कुका. ३।२५।७ ; प्रपा. ५१ गान्ना (गं ना) देवतां स्मरन्नि (कांचिद्देवतामि) ; प्र. ४६ गान्ना (गं त्वा) देवतां स्मरन्नि (कांचिद्देवतामि).

(६) कुका. ३।२५।८ ; प्रपा ५१ गं त्वा (गमा) ; प्र. ४६.

हविरपक्वतादिनिमित्तकप्रायश्चित्तानि

[1]यदा हविरपक्वं स्यात्तेनैव हविषा यजेत् ।
चतुःशरावमात्रैस्तु पचेद्व्रीहिभिरोदनम् ॥
[2]भोजयेत्तेन चान्नेन चतुरो ब्राह्मणानथ ।
बहुदग्धमदग्धं वा किंचिदेव यदा हविः ॥
शिष्टेनेष्ट्वा पुनर्यागः स्यादारभ्याऽऽदितस्तदा ।
कृत्स्नं दग्धं यदा तत्स्यात्पुनरुत्पादयेद्धविः ॥
स एव यागः कर्तव्यः पुनर्यागस्तु नेष्यते ।
मध्यात्पूर्वार्धतोऽवत्तं यदि दुष्टं हविर्भवेत् ॥
तस्यैव हविषोऽवद्येन्मध्यात्पूर्वार्धतः पुनः ॥

## कपर्दिकारिकाः

रेखाकरणम् अग्निस्थापनं च

[3]प्राचीः पूर्वमुदक्संस्थं दक्षिणारम्भमालिखेत् ।
अथोदीचीः पुरःसंस्थं पश्चिमारम्भमालिखेत् ॥
अवाक्करोऽभ्युक्ष्य निधाय वह्निमुत्सिच्यतेऽवोक्षणतोयशेषम् ।
प्राक्तोयमन्यन्निदधात्युदग्वा यथा बहिः स्याच्च परिस्तराणाम् ॥

पात्रासादनम्

दर्व्याज्यपात्रेण सह प्रयोज्या वैकङ्कती प्रोक्षणभाजनी स्यात् ।
प्रणीतिपात्रेण सहेध्मदारूण्युपस्तृतैश्चाभिघृतैश्च दर्व्याम् ॥

आहुतिसाधनम्

दर्वी हुतौ तु सर्वत्र नास्ति चेदन्यचोदना ।
चोदिते तत एव स्याद्यथोद्दिष्टं यथोदितम् ॥

(१) कुका. ३।२६।१ ; प्रपा. ५१ मात्रैस्तु (मात्रं तु) रोदनम् (रोदनः) ; प्र. ४७ मात्रैस्तु (मात्रं तु).

(२) कुका. ३।२६।२–५ ; प्रपा. ५१ ; प्र. ४७.

(३) कका. १।३–१५.

होमतन्त्रव्यवस्था

तन्त्रमोषधिमत्सु दधन्यपि
प्रेष्यते वचनादितरत्र तु ।
स्विष्टकृच्च तथाऽग्निमुखं भवे-
ल्लाजहोममपास्य कपर्दिना ॥
सर्षपेषु तथैव हविष्यभु-
ग्वैश्वदेवफलीकरणे हुतौ ।
यावदुक्तमवेहि जयादिकं
नास्ति यत्र वचः स्म परत्र तु ॥
उत्सृतौ समुपाकरणे व्रते-
ष्विन्धनाग्निमुखं च जयादि च ।
अष्टकाभवसर्व(? सर्प)बलिष्वथ
पार्वणे पितृकर्मणि मासिके ॥
अग्निहोत्रिक एष विधिर्भवे-
दौपवेशमतादपि लेपयोः ।
अन्यकर्मसु साग्निमुखेष्वयं
लेपयोरिति नित्यमपीष्यते ॥

अग्निहोत्रिकतन्त्रम्

प्रज्वाल्य वह्निं परितः समुह्य
पर्युक्ष्य हस्तस्थजलेन सम्यक् ।
दर्भैः परिस्तीर्य यथोक्तमन्य-
त्पश्चाच्च बर्हिः स्तृणुयात्पुरोग्रम् ॥
संपूर्य दर्वीं हविषा प्रधान-
तत्स्विष्टकृत्प्राशनभक्षणार्थम् ।
नेष्टाविहोपस्तरणाभिघारौ
प्रधानहोमांस्तत एव हुत्वा ॥
ततो गृहीत्वा निमृजेच्च लेपं
बर्हिःष्वथ स्विष्टकृतश्च होमः ।
प्राचीनमावृत्य निगृह्य लेपं
निमार्जनं दक्षिणतश्च भूम्याम् ॥
प्राश्याथ एवाऽऽचमनं पुनश्च
निष्क्रम्य शेषस्य भवेच्च भक्षः ।
लेह्या च दर्व्याचमनं पुनश्च
सधर्मकोऽयं विधिराग्निहोत्रः ॥

आशीर्वाचनम्

यदाशिषां स्मृतिविहितं हि वाचनं
तदन्ततो भवति विवाहकादिषु ।
क्रमाय तद्युपनयनादिके वच-
स्तथैव च द्विजवरभोजनं भवेत् ॥

अनादेशप्रायश्चित्तम्

[1]गार्ह्येषु कर्मस्वपराधदृष्टा-
वब्राह्मणोक्तेषु सुनिष्कृतिः स्यात् ।
एकाहुतिर्व्याहृतिभिर्हुताऽसौ
स्मार्तेष्वनादेश इहास्तुयामः ॥

(१) 'गार्ह्येषु ...' इति न्यायेन सर्वप्रायश्चित्तं हुत्वा अनाज्ञातत्रयं च जपं च कृत्वा ... ।
मुक्ता. ९२–९३

(२) 'एकाहुतिं ...' इति न्यायेन सर्वप्रायश्चित्त-मनाज्ञातत्रयं च हुत्वा जपित्वा वा प्राणायामं च कृत्वा ... । आन. १५६

भ्रेषप्रायश्चित्तम्

[2]यत्कर्मणि ब्राह्मणशब्द उक्तो
भ्रेषोऽस्ति चेत्तत्र तथोपनीतौ ।
तत्कर्मवह्नौ भुव आहुतिः
स्याद्भवेदनाज्ञातविधित्रयं वा ॥
आचारलक्षणे यस्मिन्ब्राह्मणग्रहणं स्मृतम् ।
भ्रेषोऽनग्नौ यदि त्वस्मिन्ननाज्ञातजपो भवेत् ॥

स्रुक्स्रुवसाधनकाहुतिविभागः

पूर्वाघारो जयादिश्च प्राजापत्यश्च व्याहृतिः ।
एताः स्रुवेण होतव्या न संदेहः कपर्दिनः ॥
उत्तराघारहोमश्च प्रधानाहुतयस्तथा ।
प्रायश्चित्तं चाऽऽज्यभागौ स्रुचैवेति विनिर्णयः ॥

---

(१) कका. १।१६ ; मुक्ता. ९२ (=) सुनिष्कृ (तु निष्कृ) तृतीयचरणे (एकाहुतिं व्याहृतिभिश्च हुत्वा) ; आन. १५६ (=) मुक्तावत्, उत्त.

(२) कका. १।१७, १८, २१, २२.

संस्रावापवादः

[1]शम्या यत्र विधीयन्ते गार्ह्यकर्मसु सूत्रके ।
संस्रावं न तत्र स्यादधिशब्दविहीनतः ॥

अग्निमुखदेवतासंग्रहः

[2]श्रियः पतिं प्रणम्याथ प्रदर्श्यन्तेऽधुना स्फुटम् ।
आपस्तम्बीयस्य गृह्य( ?म्बीयगृह्य )स्य होम-
मन्त्रोक्तदेवताः ॥
आघारयोः प्रजापतिरपि वेन्द्रः परस्य तु ।
अग्नीषोमौ क्रमात्प्रोक्ते देवते आज्यभागयोः ॥
त्रयोदश जया उक्ता अभ्याताना दशाष्ट च ।
जयाभ्यातानयोराध्या(?)पदोक्ता एव देवताः ॥
परासुराप्सरः( ?परासामप्सरः )शब्दपदपूर्व-
पदोदिताः ।
पूर्वाहुतीनां गन्धर्वपदपूर्वपदोदिताः ॥
तयोः प्रजापतेः पूर्वं विश्वे देवाः परे तथा ।
राष्ट्रभृद्धोमसंख्योक्ता द्वाविंशोत्राहुतिर्द्विके ॥
त्रयोदशान्त्ययोरुक्तो भुवनस्य पतिर्द्वयोः ।
अथवा द्वौ द्वादशके गन्धर्वाप्सरसौ क्रमात् ॥
देवते तु त्रयोदश्यां वातोऽन्त्ये काम उच्यते ।
प्रजापते न त्वदित्यस्य देवता स्यात् प्रजापतिः ॥
भूरादीनां क्रमादग्निवायुसूर्याः प्रचोदिताः ।
यदग्नि (? यदस्य) स्विष्टकृत्सर्वप्रायश्चित्ते
प्रजापतिः ॥
एवमेता जयादीनामष्टपञ्चाशदीरिताः ।
अनाज्ञातत्रयायाश्च चतुर्णामग्निरेव तु ॥

## शुल्बकारिकाः

स्थण्डिलमानम्

[3]कुर्याच्छतार्धेऽङ्गुलिमानमूर्ध्वकं
शताहुतौ द्व्यङ्गुलमानमुच्छ्रयम् ।
वेदाङ्गुलार्धं तु सहस्रहोमके
वस्वङ्गुलान्येव तथैव चायुते ॥

(१) कका. ६।२. (२) कका. (क) ९।१–९.
(३) विपा. ६२४.

लक्षाहुतौ स्थण्डिलकं नृपाङ्गुलं
चोर्ध्वं विदध्यात्प्रयुते च विंशतिम् ।
तत्त्वाङ्गुलं कोटिमखे तथोच्छ्रितं
तथाऽर्बुदेनाधिकमानमाहुः ॥

## रेणुकारिकाः

हविःशेषस्थापनम्

[1]स्रुवहोमे सदा त्यागः प्रोक्षणीपात्रमध्यतः ।
पाणिहोमे सदा त्यागो विना प्रोक्षणिकं द्विज ॥

## परशुरामकारिकाः

पर्युक्षणोत्तरं प्रणीतासु पवित्रकनिधानम्

[2]पर्युक्ष्याग्निं प्रणीतासु निक्षिपेत्तत् पवित्रकम् ॥

हविर्द्रव्यप्रक्षेपणे त्रयः पक्षाः , सप्त अग्निजिह्वाः

[3]स्वाहान्ते जुहुयाद्धोता स्वाहया सह वा हविः ।
त्यागान्ते ब्रुवते केचिद्द्रव्यप्रक्षेपणं बुधाः ॥
वषट्कृते जुहुयात्त्यक्ते वषट्कारेण वा सह ।
इति श्रुतिविकल्पेन स्वेच्छया जुहुयाद्धविः ॥
[4]हिरण्या कनका रक्ता कृष्णा तदनु सुप्रभा ।
बहुरूपाऽतिरिक्ता( ? रक्ता ) च वह्निजिह्वाश्च
सप्त च ॥

दक्षिणजानुनिपातनम्

[5]जान्वाच्य दक्षिणं होम्यं स्रुवेण जुहुयाद्धविः ॥

हविःशेषस्थापने पात्रनियमः

[6]प्रोक्षणीषु त्यजेच्छेषं संस्रवं तु स्रुवाहुतेः ।
हस्ताहुतेर्हविर्यस्य स तत्तस्य प्रकल्पयेत् (?) ॥

पूर्णाहुतावासीनत्वम्

[7]केचिदुत्थाय कुर्वन्ति कात्यायनमतं न तत् ।
तस्मादध्वर्युणा कार्या पूर्णाऽऽसीनेन सर्वथा ॥

(१) संग. ४४. (२) संदी. ३७.
(३) संदी. ४३. (४) संदी. ४८.
(५) संदी. ३९. (६) संदी. ३७.
(७) संदी. ४८.

## ¶अग्निगृह्ये

परिसमूहनम्

[1]गृहीत्वा तु त्रयो दर्भानामिकाङ्गुष्ठमेव च (?) ।
दक्षिणे चोत्तरे कुर्यात् परिसमूह इति स्मृतः ॥
[2]कृमिकीटपतङ्गाद्या भ्रमन्ति वसुधातले ।
तेषां संरक्षणार्थाय कुर्यात् परिसमूहनम् ॥

अग्नेरानयनं स्थापनं च

[3]पात्रद्वये न्यसेद्वह्निं संपुटे धारयेत् करैः (?) ।
प्रणीता दक्षिणे हस्ते वामहस्ते च प्रोक्षणी ॥
सुवासिन्याऽऽनयेद्वह्निं संपुटे पात्रयोर्मृदः ।
विन्यस्याभिमुखं स्वस्य निक्षिपेत् कुण्ड-मध्यतः ॥

ब्रह्माद्यासनदर्भसंख्या

[4]ब्रह्माचार्यप्रणीतानामासनं च त्रिभिः कुशैः ।
न द्वाभ्यां नैकदर्भेण ऋषयो बहवो विदुः ॥

ब्रह्मणो दक्षिणदिगवस्थाने निमित्तम्

[5]उत्तरे सर्वपात्राणि उत्तरे सर्वदेवताः ।
उत्तरेऽपां प्रणयनं किमर्थं ब्रह्म दक्षिणे ॥
यमो वैवस्वतो राजा वसते दक्षिणादिशि ।
तस्मात्संरक्षणार्थाय ब्रह्मा तिष्ठति दक्षिणे ॥

प्रणीताधारणे हस्तमुद्रा

[6]मध्यमा तर्जनीयुक्ता अङ्गुष्ठेन समर्पिता ।
आकाशसहिता ख्याता प्रणीतापूरणे भवेत् ॥

¶ यानि वाक्यानि संस्कारगणपतौ अग्निगृह्यत्वेन गृहीतानि तान्येव संस्कारदीपके अग्निगृह्यत्वेन गृहीतानि ।

(१) संग. २६. (२) संग. २६ ; संदी. २५.

(३) संग. २८–२९.

(४) संग. २९ ; संदी. २७.

(५) संग. २९ ऽपां प्रणयनं (प्रणीता यास्ताः) तस्मात् (तस्य) ; संदी. २७–२८.

(६) संग. ३० ; संदी. २९ समर्पिता (समन्विता) ता ख्या (ताऽऽख्या).

परिस्तरणम्

[1]ईशान्यादिषु पूर्वाग्रैः कुशैः सव्यं परिस्तरः ॥
[2]वह्नितस्तु परित्यज्य द्वादशाङ्गुलतो बहिः ।
परिस्तरणदर्भास्तु षोडश द्वादशापि वा ॥

पात्रासादनम्

[3]आसादयति पात्राणि प्रदेशे वरके बुधः ।
अङ्गुलित्रिप्रमाणेन पात्रात् पात्रान्तरस्थितिः ॥
[4]दर्भास्त्रयः पवित्रे द्वे प्रोक्षणीपात्रमुत्तमम् ।
आज्यस्थाली चरुस्थाली संमार्गोपयमौ कुशौ ॥
[5]पालाश्यः समिधस्तिस्रः स्रुव आज्यं गवेधुकाः ।
तण्डुलाः पूर्णपात्रं च दक्षिणा च वरोऽथ वा ॥

पात्रप्रोक्षणं प्रोक्षणीपात्रनिधानं च

[6]तेन दर्भद्वयेनैव सपवित्रकरेण च ।
क्रमात्पात्रगणं प्रोक्ष्य प्रोक्षणीपात्रवारिणा ॥
[7]निदध्यात्प्रोक्षणीपात्रं सपवित्रमसंचरे ।
यदन्तरं प्रणीताग्न्योरसंचरस्तु स स्मृतः ॥

## गृह्यासंग्रहः

अग्निनामानि, तेषां कर्मसु विनियोगः, श्रावणविधिः, ज्ञानविधिश्च

[8]लौकिकः पावको ह्यग्निः प्रथमः परिकीर्तितः ।
अग्निस्तु मारुतो नाम गर्भाधाने विधीयते ॥

(१) संग. ३१. (२) संग. ३१ ; संदी. २९–३०.

(३) संग. ३१–३२ प्रदेशे वरके बुधः (प्रादेशे करके बुधैः) त्रात् पा (त्रपा) रस्थितिः (रे स्थितिः) ; संदी ३०.

(४) संग. ३२ ; संदी. ३० कारिकायाम्.

(५) संग. ३२ धुकाः (धुका) ण्डुलाः (ण्डुलान्) णा च (णाऽथ) ; संदी. ३०.

(६) संग. ३४.

(७) संग. ३४ त्रमसंचरे (त्रं समाचरेत्) ; संदी. ३४.

(८) गृसं. १।२ ; संत. ८७४ लौकिकः (लौकिके) कीर्तितः (कल्पितः) ; प्रर. ५१ (=) लौकिकः पावको

एवं शास्त्रारम्भं प्रतिज्ञाय प्रथमं तावदग्निनामान्यभिधीयन्ते नवभिः श्लोकैः । हिशब्दो निश्चयार्थः । लौकिकः अग्निः पावकः कथितः । रघुनन्दनस्तु 'लौकिके' इति पठित्वा, लौकिके गृहप्रवेशे इति वर्णयांचकार । गर्भाधाने पुनर्मारुतो नामाग्निर्विधीयते । यद्यपि गोभिलेन तत्राग्निर्नोपदिष्टः, तथाप्यस्माभिस्तत्पुत्रैस्तदुपदिष्टार्थवेदिभिः मारुतो नामाग्निस्तत्र विधीयते । तस्मादस्ति गोभिलोक्तेऽपि गर्भाधानेऽग्निरिति बोद्धव्यम् । 'विधीयते' इति करणाच्चैवमवगच्छामः । यदि नाम केवलं ब्रह्मणा उक्त इति गर्भाधाने अग्निरुच्यते इत्यभिप्रायः, तदा 'परिकीर्तितः' इत्येव कुर्यात्, न 'विधीयते' इति । गृसंभा.

**[1]पुंसवने चान्द्रमसः शुङ्गाकर्मणि शोभनः ।**
**सीमन्ते मङ्गलो नाम प्रागल्भो जातकर्मणि ॥**

पुंसवने चान्द्रमसो नामाग्निः । 'चन्द्रनामा' इति रघुनन्दनः पठति । 'प्रागुदीच्यां दिशि न्यग्रोधशुङ्गामुभयतःफलामस्रामामकृमिपरिसृप्तां त्रिःसप्तैर्यवैर्माषैर्वा परिक्रीयोत्थापयेत्' ( गोगृ. २।६।७ ) इत्यादिगृह्यसूत्रोक्ते शुङ्गाकर्मणि शोभनो नामाग्निः । सीमन्ते सीमन्तकरणे । स्पष्टमन्यत् । गृसंभा.

**[2]नाम्नि स्यात्पार्थिवो ह्यग्निः प्राशने च शुचिस्तथा ।**
**सभ्यनामाऽथ चूडे तु व्रतादेशे समुद्भवः ॥**

नामकरणे पार्थिवो नामाग्निः । अन्नप्राशने शुचिर्नामाग्निः । चूडाकरणे सभ्यो नामाग्निः । 'सत्यनामा' इति रघुनन्दनः पठति । व्रतानाम्, गोदाने विशेषस्य वक्ष्यमाणत्वात् सावित्रव्रतव्रातिकव्रतादित्यव्रतमहानाम्निकव्रतौपनिषदव्रतज्येष्ठसामव्रतानामादेशे उपदेशे समुद्भवो नामाग्निः कथितः । गृसंभा.

**[1]गोदाने सूर्यनामा तु केशान्ते ह्यग्निरुच्यते ।**
**वैश्वानरो विसर्गे तु विवाहे योजकः स्मृतः ॥**

गोदाने गोदानिकव्रते सूर्यनामा अग्निः । गोदानाङ्गे गृह्योक्ते केशान्ते कर्मणि अग्निर्नामाग्निः । विसर्गे, व्रतप्रस्तावात् व्रतानन्तरं करणीये मौञ्जीत्यागे समावर्तनापरनामधेये गृह्योक्ते आप्लावनाख्ये कर्मणि इत्येतत् । 'मौञ्जीविसर्गे त्यागे वैश्वानरो नामाग्निः' इति दीक्षितभाष्यम् । विसर्गे दाने इति केचित् । विवाहे योजको नामाग्निः । गृसंभा.

**[2]चतुर्थ्यां तु शिखी नाम धृतिरग्निस्तथाऽपरे ।**
**आवसथ्ये भवो ज्ञेयो वैश्वदेवे तु पावकः ॥**

चतुर्थ्यां गृह्योक्ते चतुर्थीकर्मणि शिखी नामाग्निः । 'अपरे आचार्यास्तथा चतुर्थीकर्मणि धृतिनामानमग्निमाहुः' इति दीक्षितरामकृष्णः । 'अपरे धृतिहोमादौ धृतिर्नामाग्निः' इति रघुनन्दनः । तत्र ब्रूमः– धृतिहोमे धृतिर्नामाग्निर्युक्तः । कुतः ? शब्दसाम्यात् । धृतिनामा खल्वग्निर्धृतिहोमे आगच्छति हृदयम् । आगच्छति चेत्, न युज्यते विना कारणमुत्स्रष्टुम् । एवं च अग्निनाम्नां सप्तत्रिंशत्संख्याऽप्या-

(पावको लौकिको) परिकी (संप्रकी) मारुतो (मरुतो); संर. ५८ पूर्वार्धं प्रवत्, पारिजाते.

(१) गृसं. १।३ ; संत. ८८४ चान्द्रमसः (चन्द्रमाश्च) प्रागल्भो (प्रगल्भो); प्रर. ५१ (=) पूर्वार्धे (ततः पुंसवने ज्ञेयः पवमानस्तथैव च ।) प्रागल्भो (प्रबलो); संर. ५८ प्ररवत्, पारिजाते.

(२) गृसं. १।४ ; संत. ८७४ सभ्यनामाऽथ चूडे तु (सत्यनामा च चूडायां); प्रर. ५१ (=) स्यात् (वै) च शुचिस्तथा (तु शुचिः स्मृतः) सभ्यनामाऽथ चूडे (सभ्यो नाम स चौले); संर. ५८ पूर्वार्धं प्ररवत्, ऽथ चूडे तु (तु चौले स्यात्) पारिजाते.

(१) गृसं. १।५ ; संत. ८७४ नामा तु (नामा च); प्रर. ५१ (=) (गोदाने सूर्यनामाऽग्निर्विवाहे योजको मतः ।); संर. ५९ (गोदाने सूर्यनामाऽग्निर्विवाहे योजकः स्मृतः ।) पारिजाते.

(२) गृसं. १।६ ; संत. ८७४ पू. ; प्रर. ५१ (=) भवो (द्विजो) पावकः (रुक्मकः) उत्त. ; संर. ५९ नाम (प्रोक्तो) स्तथाऽपरे (रथापि वा) भवो (द्विजो) पावकः (रुक्मकः) पारिजाते.

ञ्जस्येनोपपत्स्यते। मतान्तरत्वे खल्वेतस्य सा नातीव समञ्जसा स्यात्। आवसथ्ये गृह्येऽग्नौ भवो नामाग्निर्ज्ञातव्यः। गृह्यः, औपासनः, आवसथ्य इति ह्यनर्थान्तरम्। वैश्वदेवे कर्मणि पुनः पावको नामाग्निः। गृसंभा.

**[1]ब्रह्मा वै गार्हपत्ये स्यादीश्वरो दक्षिणे तथा।**
**विष्णुराहवनीये तु अग्निहोत्रे त्रयोऽग्नयः॥**

गार्हपत्ये अग्नौ ब्रह्मा नामाग्निः स्यात्। एवमुत्तरत्रापि। दक्षिणे दक्षिणाग्नौ। श्रौते खल्वग्निहोत्रे एते त्रयोऽग्नयो भवन्ति। गृसंभा.

**[2]लक्षहोमे वह्निर्नाम कोटिहोमे हुताशनः।**
**प्रायश्चित्ते विधिश्चैव पाकयज्ञे तु साहसः॥**

प्रायश्चित्ते प्रायश्चित्तहोमे विधिर्नामाग्निः। 'विधुः' इति रघुनन्दनः पठति। पाकयज्ञे साहसो नामाग्निः। श्लिष्टमन्यत्। आह— कः पुनः पाकयज्ञो नाम? उच्यते— यः खल्वेकाग्निसाध्यः यज्ञः, तं पाकयज्ञमाचक्ष्महे। किं कारणम्? 'पाकयज्ञा इत्याचक्षत एकाग्नौ यज्ञान्' इति लाट्यायनसूत्रात्। द्राह्यायणोऽप्येतत् सूत्रयांचकार। 'पाकयज्ञा इत्याख्या यः कश्चैकाग्नौ' इति च छन्दोगगृह्यान्तरम्। 'श्रावण्याश्वयुज्याग्रहायण्यष्टकान्वष्टकैकाष्टकाः पाकयज्ञाः' इति दीक्षितरामकृष्णः। 'पाकयज्ञे पाकाङ्गकयज्ञे वृषोत्सर्गदेवप्रतिष्ठाहोमादौ' इति रघुनन्दनः। पाकयज्ञः प्रशस्तयज्ञः इति शाखान्तरीयगृह्यवृत्तिकृतः। गृसंभा.

**[1]देवानां हव्यवाहस्तु पितॄणां कव्यवाहनः।**
**पूर्णाहुत्यां मृडो नाम शान्तिके वरदस्तथा॥**

निगदव्याख्यातोऽयं श्लोकः। गृसंभा.

**[2]पौष्टिके बलदश्चैव क्रोधाग्निश्चाभिचारके।**
**वश्यार्थे कामदो नाम वनदाहे तु दूतकः॥**

पौष्टिके शरीरस्य धनस्य वा पुष्टिजनके कर्मणि बलदो नामाग्निः। पुष्टिः उपचयः। अभिचार एवाभिचारकः, तस्मिन्नभिचारके कर्मणि क्रोधाग्निः। अभिचरणम् अभिचारः मारणमित्येतत्। वश्यं वशीकरणम्। तदर्थे कर्मणि कामदो नामाग्निः। वनदाहे दूतको नामाग्निः। गृसंभा.

**[3]कोष्ठे तु जठराग्निश्च क्रव्यादो मृतभक्षणे।**
**समुद्रे वाडवो ज्ञेयः क्षये संवर्तको भवेत्॥**

कोष्ठे उदरे। मृतभक्षणे शवदाहे। क्षये सर्वेषां नाशे प्रलये इति यावत्। श्लिष्टमन्यत्। गृसंभा.

***[4]वृषोत्सर्गेऽध्वरो नाम सुचये ब्राह्मणः स्मृतः॥**
**[5]ज्ञात्वैवमग्निनामानि गृह्यकर्म समारभेत्॥**

---

(१) गृसं. १।७; प्रर. ५१ (=) पत्ये स्यात् (पत्यश्च) णे तथा (णस्तथा) नीये तु (नीयः स्यात्); संर. ५९ पत्ये स्यात् (पत्यस्तु) णे तथा (णस्तथा) नीये तु (नीयस्तु) पारिजाते.

(२) गृसं. १।८; संत. ८७४ वह्निर्नाम (तु वह्निः स्यात्) विधि (विधु); प्रर. ५१ (=) लक्षहोमे वह्निर्नाम (वह्निनामा लक्षहोमे) विधि (विट) यज्ञे तु साहसः (यज्ञेषु पावकः); शाम. ५ वह्निर्नाम (च वह्निः स्यात्) पू., गोभिलीये; संर. ५९ पूर्वार्धं प्ररवत्, उत्तरार्धे (प्रायश्चिते तु विट् चैव पाकयज्ञेषु पावकः॥) पारिजाते.

* अनयोर्गृह्यासंग्रहत्वेनानुल्लेखेऽपि तद्वचनमध्यपतितत्वादत्र संग्रहः कृतः।

(१) गृसं. १।९; संत. ८७४,९४५ उत्त.; प्रर. ५१ (=) वाहस्तु (वाहश्च) उत्तरार्धे (पूर्णाहुत्यामिलो नाम क्रोधोऽग्निश्चाभिचारिके॥); शाम. ५ तथा (सदा) उत्त., गोभिलीये; संर. ५९ वाहस्तु (वाहश्च) उत्तरार्धे (पूर्णाहुत्यामिडो नाम क्रोधोऽग्निश्चाभिचारिके॥) पारिजाते.

(२) गृसं. १।१०; संत. ८७४ क्रोधाग्नि (क्रोधोऽग्नि) पू.: ९४५ पू.; प्रर. ५१ (=) पूर्वार्धे (शान्तिके वरदः प्रोक्तः पौष्टिके बलवर्धनः।) दूतकः (दूषकः); संर. ५९ प्ररवत्, पारिजाते.

(३) गृसं. १।११; संत. ८७५ जठराग्निश्च (जठरो नाम) पू.; प्रर. ५१ (=) (कुक्षौ तु जाठरो ज्ञेयः क्रव्यादो मृतदाहने। समुद्रे वाडवो ह्यग्निः क्षये संवर्तकस्तथा॥); संर. ५९ प्ररवत्, पारिजाते.

(४) प्रर. ५१ (=).

(५) प्रर. ५१ (=); संर. ५९ पारिजाते.

[1]एतेऽग्नयः समाख्याताः श्रावयेद्ब्राह्मणः सदा ।
सप्तत्रिंशतिविख्याता ज्ञातव्याश्च द्विजेन तु ॥

एवमग्निनामान्यभिधाय तेषां श्रावणं ज्ञानं चेदानीं विधत्ते— एत इति । एते पूर्वोक्ता अग्नयः सम्यक् कथिताः । तानेतान् ब्राह्मणः सदा द्विजं श्रावयेत् । द्विजेन तु सप्तत्रिंशतिविख्याताः । आर्षोऽयं प्रयोगः । सप्तत्रिंशत्संख्यया विशेषेण कथिताः प्रसिद्धा वा अग्नयो ज्ञातव्याः । तदिदमर्थं कर्मस्वविनियुक्तानामप्यग्निनाम्नां पूर्वं परिकीर्तनमिति द्रष्टव्यम् । गृसंभा.

अग्निजिह्वाः, तासां कर्मभेदेन विनियोगश्च

[2]सप्त जिह्वाः स्फुरन्त्येता हुताशनमुखे स्थिताः ।
याभिर्हव्यं समश्नन्ति हुतं सम्यग्द्विजोत्तमैः ॥

अग्निमुखे स्थिता एता वक्ष्यमाणाः सप्तजिह्वाः स्फुरन्ति । द्विजोत्तमैः, निषादस्थपतिवत् कर्मधारयसमासस्यैव युक्तत्वादविशेषाच्च उत्तमद्विजैः, सम्यक् हुतं हव्यं याभिर्जिह्वाभिः समश्नन्ति, दिवौकसः इति वाक्यशेषः । गृसंभा.

[3]काली कराली च मनोजवा च
सुलोहिता चैव सुधूम्रवर्णा ।
स्फुलिङ्गिनी चैव शुचिस्मिता च
लेलायमाना इति सप्त जिह्वाः ॥

इत्येताः सप्त जिह्वा नामतो निर्दिष्टाः । लेलायमानाः हव्यं भक्षितुमीप्सन्त्यः । लल ईप्सायाम् । लेलायमानाः चलन्त्यो वा । गृसंभा.

[4]द्वे शान्तिके पौष्टिके द्वे च तिस्रोऽभिचारिण्यः ।
एताश्चोक्ता विशेषेण ज्ञातव्याश्च द्विजेन तु ॥

तासां खल्वासां जिह्वानां मध्यात् शान्तिके कर्मणि द्वे जिह्वे । पौष्टिके च कर्मणि द्वे जिह्वे । तिस्रश्चाभिचारकर्मण्युपयुक्ताः । एताश्चोक्ता जिह्वा द्विजेन विशेषतो ज्ञातव्याः । गृसंभा.

होमात्पूर्वं विहितनाम्नाऽग्न्याह्वानम्

[1]आहूयैव तु होतव्यं यो यत्र विहितो विधिः ॥

यत्र कर्मणि यो विधिरुक्तः, तत्र तेन विधिना होतव्यम् । किं कृत्वा ? विहितमग्निमाहूय । 'यत्र यो विहितोऽनलः' इति तत्त्रकारः पठति । तत्र च, यत्र योऽनलो विहितस्तत्र तमनलमाहूय होतव्यमिति व्यक्त एवार्थः ।

अग्निस्वरूपाज्ञाने होमवैफल्यम्

[2]अविदित्वा तु यो ह्यग्निं होमयेदविचक्षणः ।
न हुतं न च संस्कारो न च कर्मफलं लभेत् ॥

यः खलु अविचक्षणः अग्निमज्ञात्वा होमयेत्, तेन हुतं न भवति । हुतं होमः । भावे निष्ठा । कृतोऽपि होमो न सिध्यतीत्यर्थः । न च तेन होमेन शरीरस्य संस्कारो भवति । न चासौ कर्मफलं लभते । गृसंभा.

अग्निस्वरूपज्ञाने होमसाफल्यम्

[3]ज्ञात्वा स्वरूपमाग्नेयं योऽग्नेराराधनं चरेत् ॥
ऐहिकामुष्मिकैः काम्यैः सारथिस्तस्य पावकः ।
निःसंशयकरैरर्थैः पुत्रशिष्यहितैषिणः ॥

यः पुनरग्नेरिदमाग्नेयं स्वरूपं वक्ष्यमाणलक्षणं ज्ञात्वाऽग्नेराराधनमाचरति, तस्य पुत्रशिष्यहितैषिणः । इत्याग्नेयं स्वरूपं विदुषः पुत्रशिष्यहितैषित्वं वदन् तदविदुषः पुत्रशिष्यानिष्टमपि द्योतयति । निःसंशयकरैः निःसंशयं

---

(१) गृसं. १।१२.

(२) गृसं. १।१३ ; संदी. ४७ स्फुरन्त्येता ( भवन्त्येता) मुखे स्थिताः ( मुखोद्गताः ) समश्नन्ति ( सदाऽश्नन्ति ).

(३) गृसं. १।१४.

(४) गृसं. १।१५ ; संदी. ४८ ( एताश्चोक्ताः समासेन ज्ञातव्यास्तु द्विजोत्तमैः । ) उत्त.

(१) गृसं. १।१६ ; संत. ८७५ ( आहूय चैव होतव्यं यो यत्र विहितोऽनलः । ) ; शाम. ५ ( आहूय चैव होतव्यो यो यत्र विहितोऽनलः । ) गोभिलीये ; संदी. ४९ विधिः ( भवेत् ) शुभकर्मनिर्णये.

(२) गृसं. १।१६-१७ ; संदी. ४९ न च कर्म ( न स कर्म ) शुभकर्मनिर्णये.

(३) गृसं १।१७-१८ ; संदी. ४९ तृतीयार्धं नास्ति, शुभकर्मनिर्णये.

यथा भवति तथा क्रियमाणैः, काम्यैः कमनीयैः अभिलषणीयैः, ऐहिकामुष्मिकैः इहलोके परलोके च भवैः सौभाग्यस्वर्गादिभिः अर्थैः प्रयोजनैः फलैः इत्येतत् । पावकः सारथिः सारथिवदनुकूलः तत्तत्फलनिर्वाहक इत्यर्थः । तथाविधैरर्थैः पुत्रशिष्यहितैषिणस्तस्य पावकः सारथिः फलदाता इति वा वर्णनीयम् । तदनेन तस्य पुत्रशिष्याणामपि तत्तदर्थाः संपद्यन्ते इत्युक्तं भवति । गृसंभा.

अग्निस्वरूपम्, तत्र जिह्वामानम्, जिह्वाध्यानम्, जिह्वासंख्या, देवताभेदेन जिह्वाविनियोगश्च

[१]**गोभिलाचार्यपुत्रेण कृतं शास्त्रं सुनिश्चितम् ।**
**पावकस्य मुखं वक्ष्ये यदुक्तं पद्मयोनिना ॥**

न चात्र संशयः कर्तव्य इत्याह– गोभिलाचार्येति । शास्त्रं पूर्वोक्तम् अग्निनामादिप्रतिपादकं गोभिलाचार्यपुत्रेण मया सुनिश्चितं कृतमिति गोभिलानुक्तोऽपि मदुक्तोऽग्निगर्भाधानादिष्वस्तीत्यभिप्रायः । उक्तस्यापि पुनरुक्तिः शिष्याणां दृढप्रत्ययार्था आदरार्था वा । अपर आह– शास्त्रं गृह्यासंग्रहाख्यमिति । अथेदानीमहमग्नेर्मुखं वक्ष्ये । व्याख्यातमन्यत् । गृसंभा.

[२]**सप्तजिह्वाप्रमाणं तु प्रादेशं परिकीर्तितम् ।**
**प्रमाणं चतुरस्रं च वर्तुलं मुखमण्डलम् ॥**

पूर्वोक्तानां वक्ष्यमाणानां च सप्तजिह्वानां प्रमाणं प्रादेशं विस्तृततर्जन्यङ्गुष्ठरूपम् । अपर आह– बद्धमुष्टिः करो रत्निः, रत्न्यर्धं प्रादेशमिति । प्रमाणं पूर्वोक्तप्रादेशप्रमाणं चतुरस्रं चतुष्कोणं चाग्निमुखं कथितम् । मुखमण्डलं तु वर्तुलम् । गृसंभा.

[३]**यदर्थं हूयते वह्नौ तां जिह्वां परिकल्पयेत् ॥**

यत्कर्मार्थं हूयते, तां तद्विहितां जिह्वामग्नौ परिकल्पयेत् चिन्तयेदावाहयेद्वा । गृसंभा.

(१) गृसं. १।१९ ; संदी. ४७ उत्त.
(२) गृसं. १।२० ; संदी. ४७–४८.
(३) गृसं. १।२१.

[१]**कराली धूमिनी श्वेता लोहिता महालोहिता ।**
**सुपर्णी पद्मरागी च सप्तैताः परिकीर्तिताः ॥**

पूर्वोक्ताभ्यः सप्तभ्यो जिह्वाभ्योऽन्याः सप्त जिह्वाः आह– करालीति । सप्तैता जिह्वाः कथिताः । ऋज्वन्यत् । गृसंभा.

[२]**करालीं राक्षसाश्नन्ति धूमिनीमसुरास्तथा ।**
**श्वेतां नागाः समश्नन्ति पिशाचा लोहितां तथा ।**
**महालोहितां गन्धर्वाः सुपर्णीं च यमस्तथा ॥**

करालीं कराल्या जिह्वया, करालीं जिह्वां प्राप्येति वा वर्णनीयम् । एवमुत्तरत्रापि व्याख्येयम् । राक्षसाः अश्नन्ति । अत्र विसर्गलोपे संधिः आर्षः । गृसंभा.

[३]**पद्मरागी च विख्याता दिव्या जिह्वा हुताशने ।**
**तस्यां तु होमयेन्नित्यं सुसमिद्धे हुताशने ॥**

यया देवाः समश्नन्ति सा दिव्येत्युच्यते । हुताशने हुताशनस्य । यथाश्रुतो वाऽर्थः । पद्मरागी हुताशनस्य जिह्वा दिव्या विख्यातेत्यर्थः । तस्यां दिव्यायां जिह्वायाम्, पद्मराग्यामित्येतत् । सुसमिद्धे प्रज्वलिते । श्लिष्टमन्यत् । गृसंभा.

होमयोग्यमग्निस्वरूपम्

[४]**विधूमे लेलिहाने च होतव्यं तन्त्रसिद्धये ।**
**न धूमो न तथा ज्वाला विशुद्धो भुवि चक्षुषः ॥**

विधूमे धूमरहिते, लेलिहाने दीप्यमाने चाग्नौ तन्त्रस्य कर्मविस्तारस्य सिद्धये होतव्यम् । तत्र हेतुरुत्तरार्धेनोक्तः । न धूमः चक्षुषो विशुद्धः विशुद्धिहेतुः, अपि तु धूमश्चक्षुषोऽविशुद्धिहेतुरित्यर्थः । तथेति धूमयुक्तेत्यर्थः ।

(१) गृसं. १।२१–२२ ; संदी. ४८ सुपर्णी पद्मरागी (सुवर्णा पद्मरागा).
(२) गृसं. १।२२–२३ ; संदी. ४८ सुपर्णीं (सुवर्णां) यम (यमा).
(३) गृसं. १।२४ ; संदी. ४८ पूर्वार्धे (पद्मरागां तथा देवाः ख्याता जिह्वा हुताशने।).
(४) गृसं. १।२५.

धूमयुक्ता ज्वालाऽपि न चक्षुषो विशुद्धिहेतुः, अपि तु साऽपि चक्षुषोऽविशुद्धिहेतुरेव। तदत्र धूमशब्देन केवलधूमस्य, ज्वालाशब्देन तु धूमयुक्तज्वालाया अपि दोष उक्तः। भुवि इत्यत्रापि ज्वालेत्यनुषज्यते। भुवि ज्वाला न चक्षुषो विशुद्धिहेतुः इति भुवं लिहत्यग्नौ होमो निन्द्यते। तथा च स्मर्यते— 'क्षुत्तृट्क्रोधत्वरायुक्तो हीनमन्त्रं जुहोति यः। अप्रवृद्धे सधूमे वा सोऽन्धः स्यादन्यजन्मनि॥ अल्पे रुक्षे सस्फुलिङ्गे वामावर्ते भयानके। आर्द्रकाष्ठैः सुसंपन्ने फुत्कारवति पावके॥ कृष्णार्चिषि सुदुर्गन्धे तथा लिहति मेदिनीम्। आहुतिं जुहुयाद्यस्तु तस्य नाशो भवेद्ध्रुवम्॥' इति। 'तथाऽज्वालः' इति पाठे अज्वाल इति छेदः। अज्वालः ज्वालारहितः अग्निर्न विशुद्ध इत्यर्थः। तथा च कर्मप्रदीपः— 'योऽनर्चिषि जुहोत्यग्नौ व्यङ्गारिणि च मानवः। मन्दाग्निरामयावी च दरिद्रश्च स जायते॥' इति। 'विशुद्धोष्णविचक्षुषा' (? विशुद्धव्युष्णचक्षुषा) इति पाठे 'विशुद्धेन विगतोष्णेन चक्षुषा यत्राग्नौ धूमो न दृष्टस्तत्र होतव्यम्' इति दीक्षितभाष्योक्तैव वर्णना। गृसंभा.

पूर्णाहुतियोग्यमग्निस्वरूपम्

**'प्रभया भाति यत्रैव भगवांस्तत्र तिष्ठति।**
**तत्र पूर्णाहुतिं दद्यात्सर्वकामप्रसिद्धये॥**

यत्रैव अग्नौ प्रभया भाति ज्वालेत्यर्थः। तत्रैव भगवान् विष्णुस्तिष्ठति। तत्र पूर्णाहुतिं दद्यात् सर्वेषां कामानामभिलषितफलानां प्रकर्षेण सिद्ध्यर्थम्। पूर्णाहुतिदानोपदेशेन होमोऽपि तत्रैव कर्तव्यः इत्यपि भङ्ग्यन्तरेणोपदिशति। अत्र च, यस्मिन् कर्मणि यः कामः शास्त्रेणानुशिष्टः, स एव कामस्तत्र सिध्यति, न पुनरन्योऽपीति द्रष्टव्यम्। तत् कस्य हेतोः? 'सर्वत्वमाधिकारिकम्' इति सिद्धान्तात्। पूर्णाहुतिं तु ऊर्ध्वः सन् दद्यात्, नोपविष्टः। कुतः? 'दद्यादुत्थाय पूर्णां वै नोपविश्य कदाचन' इति भविष्यपुराणात्। एवमेके। गोभिलीयकर्मण्युपविष्ट एव पूर्णाहुतिं दद्यात्, न पुनरूर्ध्वः सन्। कस्मात्? 'आसीन ऊर्ध्वः प्रह्वो वा नियमो यत्र नेदृशः। तदासीनेन कर्तव्यं न प्रह्वेण न तिष्ठता॥' इति कर्मप्रदीपवचनात्। एवमपरे। तदत्र भगवन्तो भूमिदेवाः प्रमाणम्। गृसंभा.

परिसमूहमादिक्रमः

**'भूमेः समूहनं कृत्वा गोमयेनोपलिप्य च।**
**द्रव्याण्युत्तरतः स्थाप्य वृषीं कुर्यादुदङ्मुखीम्॥**

'अनुगुप्ता अप आहृत्य प्रागुदक्प्रवणं देशं समं वा परिसमुह्योपलिप्य' इत्यादिगोभिलोक्तं क्रमं स्पष्टयति— भूमेरिति। यागार्थं भूमेः समूहनं कुशैर्मार्जनं कृत्वा गोमयोदकेनोपलिप्य द्रव्याणि उदकादीनि प्रयोजनोपयोगीनि उपलिप्तायां भूमौ तस्या एव वा उत्तरतः स्थापयित्वा, वृषीम् ऋषीणामासनम्, विहितमासनमित्येतत्। 'उपवेशापरपर्याय आसनविशेषो वृषी' इति नारायणोपाध्यायाः। उदङ्मुखीम् उदगग्रां कुर्यात्। मुख-मग्रम्। तदिदानीं प्रयोजनोपयोगिद्रव्यासादनमस्माकं न ब्रह्मस्थापनाद्यनन्तरमिति द्रष्टव्यम्। कात्यायनस्तु कर्मप्रदीपे अग्नेरुत्तरतो द्रव्याणामासादनमाह। तथा च कर्मप्रदीपः— 'प्राञ्चं प्राञ्चमुदगग्नेरुदगग्रं समीपतः। तत्तथाऽऽसादयेद् द्रव्यं यद् यथा विनियुज्यते॥' इति। अत्र च फलतो न विरोधः। उपलिप्तायां भूमौ तस्या वोत्तरतः द्रव्याणामासादनेऽपि तत् खल्वासादनमग्नेरुत्तरत एव भवतीति सुधीभिर्विभावनीयम्। यद्यप्यग्निरिदानीं न स्थापितः तथाऽपि भविष्यतैवाग्निना 'उदक्' इत्यस्य संबन्धो बोद्धव्यः। 'पुरोडाशकपालेन तुषानुपवपति' इति भविष्यता पुरोडाशेन कपालस्य संबन्धो यथा। गृसंभा.

स्थण्डिलपरिमाणम्

**गोचर्ममात्रं कुर्वीत चतुरस्रमनूषरे।**
**सर्वतो रत्निमात्रं स्यात्सायं प्रातस्तु होमयोः॥**

यज्ञादौ स्थानपरिमाणादिकमाह— गोचर्मेति। ऊषरमिति वालुकामयं स्थानमुच्यते। तत् न भवतीत्यनूषरम्।

(१) गृसं. १।२६.

(१) गृसं. १।३७–३९.

तस्मिन् प्रदेशे, चतुरस्रं चतुष्कोणं गोचर्ममात्रं गोचर्मपरिमाणं स्थानं कुर्वीत । सायंप्रातर्होमयोः पुनः सर्वतो दिक्षु रत्निमात्रं अरत्निमात्रं वा स्थानं स्यात् । उभयत्र परिमाणे मात्रच् । बद्धमुष्टिः करो रत्निः । निष्कनिष्ठः करोऽरत्निः । सार्धद्वाविंशत्यङ्गुलोऽरत्निः । इति केचित् । गृसंभा.

दिग्भेदेन स्थण्डिलनिम्नताफलानि

**[1]प्राङ्नीचं ब्रह्मवर्चस्यमुदङ्नीचं यशोत्तमम् ।**
**पित्र्यं दक्षिणतो नीचं प्रतिष्ठालम्भकं समम् ॥**

( १ ) यशोत्तममित्यत्र ‘ सान्ता अप्यदन्ताः ’ इत्युक्तेरदन्तोऽपि यशशब्दः , ‘ गयाशिरे ’ इतिवत् । संत. ८५८

( २ ) पूर्वतो निम्नं स्थानं ब्रह्मवर्चस्यं ब्रह्मवर्चसविषये साधु भवति । ब्रह्मवर्चसमध्ययनप्रकर्षजं तेजः । उत्तरतो नीचं यशोत्तमम् । उत्तमं यशो यस्मादिति तथाविधम् । राजदन्तादिवत् परनिपातः । ‘ सान्ता अप्यदन्ता ’ इत्युक्तेः यशोत्तममिति निर्देशः साधुः । ‘ पिण्डं दद्याद्गयाशिरे ’ इतिवत् । आर्षो वा विसर्गलोपे संधिः । पित्र्यं स्थानं दक्षिणतो नीचं भवति । समं पुनः प्रतिष्ठाया लम्भकं प्रापकम् । तदनेन ‘ प्रागुदक्प्रवणं देशं समं वा ’ इति गोभिलसूत्रं व्याख्यातम् । तत्त्वकारोऽप्येवमेव श्लोकमिमं पपाठ । ‘ प्रागुदक्प्रवणं देशम् ’ इत्येतद्विवरणपरतयैव चेमं ग्रन्थं वर्णयांचकार । एवमेव पित्र्ये कर्मणि दक्षिणाप्लवनदेशत्वं कर्मप्रदीपाद्यनुशिष्टमनुगृह्यते । केचित्तु ‘ प्राग्ग्रीवं ब्रह्मवर्चस्यमुदग्ग्रीवं यशोत्तमम् । पित्र्यं दक्षिणतो नीचं प्रतिष्ठालम्भुकं समम् ॥ ’ इति अन्यथा श्लोकमिमं पठन्तः ‘ ब्रह्मवर्चसकामस्य प्राग्ग्रीवं प्राङ्मस्तकमासनं कर्तव्यम् , यशस्कामस्य उदङ्मस्तकम् , पित्र्यमासनं दक्षिणतो नीचं कर्तव्यम् , प्रतिष्ठाकामस्य लम्भुकं सुन्दरं( ? ) समम् ’ इत्यासनपरतया वर्णयन्ति । तदसमीचीनमिति लक्ष्यते । कुतः ? अनुद्भिन्नपदार्थगृह्यसूत्रार्थकथनपरत्वाद्ग्रन्थस्य, स्थानप्रस्तावाच्चानुपस्थितासनपरतया वर्णनस्यान्याय्यत्वात् । अन्यथा ‘ वृषीं कुर्यादुदङ्मुखीम् ’ इत्यस्मिन्नेव प्रक्रमे इदमपि कुर्यात् । वर्णनाऽपि तेषां न शब्दमनुसरतीत्यलं विस्तरेण । गृसंभा.

( १ ) गृसं. १४१-४२ ; संत. ८५८.

रेखाकरणं साधन-देवता-मान-वर्णसहितम्

**[1]लक्षणं तत् प्रवक्ष्यामि प्रमाणं दैवतं च यत् ॥**

‘ मध्यतः प्राचीं रेखामुल्लिख्योदीचीं च संहतां पश्चात् ’ ( गोगृ. १।१।९ ) इत्यादिसूत्रेण स्थण्डिले रेखादिकरणमभिधाय ‘ लक्षणावृदेषा सर्वत्र ’ ( गोगृ. १।१।१० ) इति सूत्रेण तेषां लक्षणत्वमुक्तं गोभिलेन । तदिदं विशेषतो विवक्षुः प्रतिजानीते— लक्षणमिति । गोभिलेन रेखाकरणादिरूपं लक्षणमुक्तम् , तदहं प्रकर्षेण वक्ष्यामि । रेखाणां यत् प्रमाणम् , यच्च दैवतं देवता तत्सर्वं प्रवक्ष्यामि । गृसंभा.

**[2]न नखेन न काष्ठेन नाश्मना मृन्मयेन वा ।**
**प्रोल्लिखेल्लक्षणं विप्रः सिद्धिकामस्तु यो भवेत् ॥**

अश्मना पाषाणेन । लक्षणं रेखाम् । निगदव्याख्यातमन्यत् । गृसंभा.

**[3]नखेन कुनखी चैव काष्ठेन व्याधिमृच्छति ।**
**अश्मना धननाशः स्यान्मृन्मयेन कलिर्ध्रुवम् ॥**

नखादिना रेखाकरणे दोषमाह— नखेनेति । ऋच्छति गच्छति प्राप्नोतीत्येतत् । कलिः कलहः । अतिरोहितार्थमन्यत् । गृसंभा.

**[4]फलेन फलनी चैव पुष्पेण श्रियमृच्छति ।**
**पर्णेन धनलाभः स्याद्दीर्घमायुः कुशेन तु ॥**

नखादिना रेखाकरणे दोषमभिधाय अथेदानीं फलादिना रेखाकरणे गुणमाह— फलेनेति । फलेन लक्षणं

( १ ) गृसं. १।४७.

( २ ) गृसं. १।४७-४८ ; संर. ५६ लक्षणं (स्थण्डिलं).

( ३ ) गृसं. १।४८-४९ ; संर. ५६ नखेन कुनखी चैव ( भवेन्नखेन कुनखी ).

( ४ ) गृसं. १।४९-५० ; संर. ५६ फलनी चैव (सुसमृद्धः स्यात्).

लिखन् फलनी स्यात् । फलनं फलम् , तद्विद्यतेऽस्येति फलनी फलवानित्यर्थः । 'फलिनी' इति पाठे फलेन लिखिता रेखा फलिनी फलप्रदा स्यादिति व्याख्येयम् । पर्णेन पत्रेण । सुगममन्यत् । गृसंभा.

**[1]तस्मात् फलेन पुष्पेण पर्णेनाथ कुशेन वा ।**
**प्रोल्लिखेल्लक्षणं विप्रः सिद्धिकामस्तु कर्मसु ॥**

**[2]सव्यं भूमौ प्रतिष्ठाप्य प्रोल्लिखेद्दक्षिणेन तु ।**
**तावन्नोत्थापयेत् पाणिं यावदग्निं निधापयेत् ॥**

सव्यं वामं पाणिं भूमौ प्रतिष्ठाप्य दक्षिणेन पाणिना लक्षणं प्रोल्लिखेत् । यावदग्निं स्थण्डिले स्थापयेत् तावद्वामं पाणिं नोत्थापयेत् , भूमावेव स्थापयेदित्यर्थः । गृसंभा.

**[3]प्राक्कृता पार्थिवी रेखा आग्नेयी चाप्युदक् स्मृता ।**
**प्राजापत्या च ऐन्द्री च सौमी च प्राक्कृता स्मृता ॥**

अथेदानीं रेखानां देवतामाह— प्राक्कृतेति । पार्थिवी पृथिवीदेवताका रेखा प्राक्संस्था आचार्येण कृता । आचार्येण प्राक्संस्था या रेखा प्रथममभिहिता सेयं पार्थिवी इति वक्तव्ये 'प्राक्कृता पार्थिवी रेखा' इति भङ्ग्यन्तरेणाऽऽह । अनेनैव श्लोकशेषो व्याख्यातः । आसां च रेखाणां पाठक्रमेणैवोल्लेखनक्रमो बोद्धव्यः । तदनेन 'मध्यतः प्राचीं रेखामुल्लिख्योदीचीं च संहतां पश्चात् मध्ये प्राचीस्तिस्र उल्लिख्याभ्युक्षेत्' इति सूत्रोक्तानां रेखाणां दैवतमुक्तम् । गृसंभा.

(१) गृसं. १।५०–५१ ; संर. ५६ उत्तरार्धे ( ताम्रशल्कयुतेनाऽऽदौ लिखेत्स्थण्डिलमुत्तमम् ॥ ).

(२) गृसं. १।५१–५२ ; संत. ८५९.

(३) गृसं. १।५२–५३ ; संत. ८५९ ( प्राग्गता पार्थिवी ज्ञेया ह्याग्नेयी चाप्युदग्गता । प्राजापत्या तथा चैन्द्री सौमी च प्राक्कृताः स्मृताः ॥ ) स्मृतिः .

**[1]उत्करं गृह्य रेखाभ्योऽरत्निमात्रे निधापयेत् ।**
**द्वारमेवं तु द्रव्याणां प्रागुदीच्यां दिशि स्मृतम् ॥**

रेखाभ्यः पूर्वोक्ताभ्यः , उत्करं गृह्य गृहीत्वा, अरत्निमात्रे देशे निधापयेत् स्थापयेत् । उद्धृत्य कीर्यते विक्षिप्यते इत्युत्करो रेखोत्कीर्णमृत्तिका भण्यते । कस्यां दिशि निधापयेत् ? उच्यते— प्रागुदीच्याम् ऐशान्यां दिशि । पुनर्द्रव्याणामुत्कराणामेवं द्वारं निधापनद्वारं मुनिभिः स्मृतम् । 'द्वारमेतत् पदार्थानाम्' इति तत्त्वकारपाठेऽपि तथैवार्थः । 'एवमैशान्यां दिशि होमद्रव्याणामानयनार्थं द्वारं स्मृतम्' इति तु दीक्षितरामकृष्णः । गृसंभा.

**[2]पार्थिवी चैव सौमी च लेखे द्वे द्वादशाङ्गुले ।**
**एकविंशतिराग्नेयी प्रादेशिन्ये उभे स्मृते ॥**

रेखाणां मानमाह— पार्थिवीति । पृथिवीदेवताका सोमदेवताका चेति द्वे रेखे द्वादशाङ्गुलपरिमिते । अग्निदेवताका रेखा एकविंशत्यङ्गुलपरिमिता । उभे अवशिष्टे प्राजापत्यैन्द्रीरेखे प्रादेशिन्ये प्रादेशपरिमिते स्मृते । एतदुक्तं भवति— प्रथमं प्राक्संस्थां द्वादशाङ्गुलपरिमितां पार्थिवीं रेखामुल्लिखेत् । ततः उदक्संस्थामेकविंशत्यङ्गुलामाग्नेयीं रेखामुल्लिखेत् । ततः प्राक्संस्थां प्रादेशपरिमितां प्राजापत्यामैन्द्रीं च रेखामुल्लिखेत् । ततः पुनरपि प्राक्संस्थां द्वादशाङ्गुलपरिमितां सौमीं रेखामुल्लिखेत् इति । कात्यायनस्तु कर्मप्रदीपे 'लक्षणे प्राग्गतायास्तु प्रमाणं द्वादशाङ्गुलम् । तन्मूललग्ना योदीची तस्या एवं नवोत्तरम् ॥ उदग्गतायाः संलग्नास्तिस्रः प्रादेशमात्रिकाः । सप्तसप्ताङ्गुलांस्त्यक्त्वा कुशेनैव समुल्लिखेत् ॥' इति प्रकारान्तरं स्मरति । तदनयोः प्रकारयोर्विकल्पो बोद्धव्यः । कुतः ? द्वयोरेव स्वशास्त्रोक्तत्वात् । गृसंभा.

(१) गृसं. १।५३–५४ ; संत. ८५८ मेवं तु द्रव्याणां ( मेतत् पदार्थानां ).

(२) गृसं. १।५४–५६.

**षडङ्गुलान्तराः कार्या आग्नेयीसंहितास्तु ताः ।**
**पार्थिवायास्तु रेखायास्तिस्रस्ता उत्तरोत्तराः ॥**

आग्नेयीलग्नानां रेखाणामन्तरपरिमाणमुल्लेखनप्रकारं चाऽऽह— षडङ्गुलेति । आग्नेय्यामुदक्संस्थायामेकविंशत्यङ्गुलपरिमितरेखायां संहिताः संलग्नाः ताश्चतस्रो रेखाः प्रत्येकं षडङ्गुलव्यवहिताः कर्तव्याः । ' सप्त सप्ताङ्गुलांस्त्यक्त्वा कुशेनैव समुल्लिखेत् ।' इति कर्मप्रदीपोक्तमन्तरं तदुक्तकल्पे बोद्धव्यम् । पार्थिवायाः पार्थिव्या रेखाया अन्या यास्तिस्रो रेखाः ता उत्तरोत्तराः कार्याः । सा खल्वियं पार्थिवी रेखा स्थण्डिलस्य दक्षिणतः स्यात् । कथं ज्ञायते ? अन्यासां तिसृणां रेखाणामुत्तरोत्तरत्वषडङ्गुलान्तरत्वयोरनुरोधात् । गृसंभा.

**[1]शुक्लवर्णा पार्थिवी स्यादाग्नेयी लोहिता भवेत् ।**
**प्राजापत्या भवेत् कृष्णा नीलामैन्द्रीं विनिर्दिशेत् ।**
**पीतवर्णेन सौमी स्याद्रेखाणां वर्णलक्षणम् ॥**

रेखाणां वर्णमाह— शुक्लवर्णेति । पीतवर्णेन इति इत्थंभावे तृतीया । पीतवर्णेन विशिष्टा स्यादित्यर्थः । श्लिष्टमन्यत् । तदित्थमेनं सार्धश्लोकं दीक्षितरामकृष्णः पपाठ व्याचष्टे च । रघुनन्दनस्तु अन्यथेमं ग्रन्थं पठति । तद्यथा— ' पार्थिवी पीतवर्णा स्यादाग्नेयी लोहिता भवेत् । प्राजापत्या भवेत् कृष्णा नीला चैन्द्री प्रकीर्तिता । श्वेतवर्णा च सौमी स्याद्रेखाणां वर्णलक्षणम् ॥ ' इति । भवदेवभट्टोऽप्येवमेव पद्धतौ लिलेख । पीतं रूपं पृथिव्याः , श्वेतं सोमस्य इति तन्त्रान्तरेऽपि दृश्यते । तदत्र भगवन्तो भूमिदेवाः प्रमाणम् । गृसंभा.

**[1]एष लेखविधिः प्रोक्तो गृह्याकर्मसु सर्वसु ।**
**सूक्ष्मास्ता ऋजवः कार्या लेखास्ताः सुसमाहिताः ॥**

लेखविधिः रेखाणामुल्लेखनविधिः । अथवा लिख्यते इति लेखो रेखा भण्यते । तासां विधिरित्यर्थः । सर्वसु इति एत्वाभावश्छान्दसः । ताः पूर्वोक्ता रेखाः सूक्ष्माः , न स्थूलाः , ऋजवः , न वक्राः कर्तव्याः । ताः खल्विमा रेखाः सुसमाहिताः शोभनं सम्यक् यथोक्तप्रकारेणाऽऽहिताः करणीया इत्यादरार्थमुक्तम् । गृसंभा.

**एतानि तत्त्वतो ज्ञात्वा गृह्याकर्मणि कारयेत् ॥**

एतानि परिसमूहनादीनि तत्त्वतो ज्ञात्वा गृह्याकर्मणि कर्तव्ये कारयेत् । एतानि इत्येव । ' गृह्याकर्माणि ' इति पाठे एतानि ज्ञात्वा गृह्याकर्माणि कारयेदिति व्यक्त एवार्थः । गृसंभा.

स्थण्डिलोपलेपनप्रयोजनम्

**विष्णुपादपरिक्रान्ता वाराहेणोद्धृता च या ।**
**शुचिर्मेध्या च पूता च किमर्थमुपलिप्यते ॥**

' प्रागुदक्प्रवणं देशं समं वा परिसमुह्योपलिप्य ' ( गोगृ. १।१।९ ) इति सूत्रेण भूमेरुपलेपनं गोभिलेनोक्तम् । ' गोमयेनोपलिप्य च ' इत्यनेन स्वयमप्येतदनुशिष्टम् । तत्र पृच्छति— विष्णुपादेति । येयं भूमिर्विष्णुपादेन परिक्रान्ता कृतपरिक्रमणा, वाराहेण वराहरूपिणा भगवता प्रलयार्णवादुद्धृता च सेयं शुचिरनुपहता मेध्या यज्ञार्हा च । मेधो यज्ञ इत्यनर्थान्तरम् । पूता पवित्रा च । अथवा, शुचिर्मेध्या पवित्रेति पर्यायशब्दानां कथनभङ्ग्या पवित्रत्वातिशयो भूमेरभिप्रेयते । सा खल्वियं किमर्थं पुनरुपलिप्यते गोमयेन ? । गृसंभा.

**[2]इन्द्रेण वज्राभिहतः पुरा वृत्रो महासुरः ।**
**मेदसा तस्य संक्लिन्ना तदर्थमुपलिप्यते ॥**

---

( १ ) गृसं. १।५६–५७ ; संत. ८५९ शुक्लवर्णा पार्थिवी ( पार्थिवी पीतवर्णा ) लामैन्द्रीं विनिर्दिशेत् ( ला चैन्द्री प्रकीर्तिता ) पीतवर्णेन ( श्वेतवर्णेन ) स्मृतिः .

( १ ) गृसं. १।५८–६०.

( २ ) गृसं. १।६०–६१ ; संत. ८५८ लिप्यते ( लेपयेत् ) ; संग. २७ (=) ( पुरा इन्द्रेण वज्रेण हतो वृत्रो महासुरः । मेदसा व्यापिता भूमिस्तदर्थमुपलेपनम् ॥ ) ; संदी. २५ (=) संगवत् .

अत्रोत्तरमाह— इन्द्रेणेति । पुरा पूर्वस्मिन् काले वृत्रो नाम कश्चिन्महासुरः इन्द्रेण कर्त्रा वज्रेण करणेनाभिहतः । तस्य वृत्रस्य मेदसा धातुविशेषेण संक्लिन्ना आर्द्रा इयं पृथिवी । एतस्मात्कारणादुपलिप्यते गोमयेन । गृसंभा.

[१]**मेदमुद्ध्रियमाणस्य शेषं यत् किंच तिष्ठति ।
अन्तर्धानं मृदा चैव दीयते वेदनिश्चयः ॥**

ननु कस्मिंश्चिदतीते काले वृत्रस्य मेदसा संक्लिन्ना भूमिरासीत् । तदपि मेदः पूर्वमेवोद्धृतम्, तत्किमिदानीमुपलेपनेन ? इत्याशङ्कायामाह— मेदमिति । उद्ध्रियमाणस्य उद्धृतस्य मेदसः शेषम् अवशिष्टं यत्किंच किमपि मेदं मेदः तिष्ठति अस्यात्, मृदा एव तस्य अन्तर्धानं दीयते दत्तम् । उभयत्र कालसामान्ये लट् । अथवा, उद्धृतस्य मेदसोऽवशिष्टं किंचिन्मेदोऽद्यापि तिष्ठत्येव । तिष्ठति चेत् कथं न दृश्यते ? तत्राऽऽह— मृदैव तस्यान्तर्धानमद्यापि दीयते । अतो न दृश्यते इति भावः । इत्ययं वेदस्य निश्चयः । एतस्मात् कारणादिदानीमप्युपलिप्यते इत्यभिप्रायः ।

दीक्षितस्त्वन्यथेमं ग्रन्थं वर्णयांचकार— ' मेदमुद्ध्रियमाणस्य ' इत्यादिम् । वृत्रस्य मेदं रुधिरमुद्ध्रियमाणस्योद्धृतस्य यत् शेषं किंच तिष्ठति, तन्मृदैव मृत्तिकया अन्तर्धानं दीयते स्थण्डिलं क्रियते इत्यर्थ इति । गृसंभा.

अग्निप्रणयने विधिनिषेधाः

[२]**कपालैर्भिन्नपात्रैर्वा न त्वामैर्गोमयेन वा ।
अग्निप्रणयनं कार्यं यजमानभयावहम् ॥**

( १ ) भिन्नपात्रैर्मृन्मयैर्धातुमयैश्च । आमैरित्यत्र योग्यतया मृन्मयानामेव ग्राह्यम् ( ? त्वम् ) । गोमयेन गोमयखण्डेन । संर. ५८

( २ ) अथेदानीं ' भूर्भुवः स्वरित्यभिमुखमग्निं प्रणयन्ति ' ( गोगृ. १।१।११ ) इति सूत्रोक्तमग्निप्रणयनं व्याकुरुते सार्धैश्चतुर्भिः । कपालैर्घटखण्डैः, ' कपालं मृन्मयं पात्रं चक्राघटितमुच्यते ।' इत्युक्तलक्षणैर्वा । भिन्नपात्रैः भग्नपात्रैर्वा । आमैरपक्वपात्रैर्वा । तुशब्दो वाशब्दार्थः । गोमयेन वा अग्निप्रणयनं न कर्तव्यम् । कपालादिपात्रैः कृतं खल्वग्निप्रणयनं यजमानस्य भयमावहति । गृसंभा.

[१]**अल्पः प्रणीतो विच्छिन्नोऽसमिद्धश्चापरिश्रुतः ।
त्वरया पुनरानीतो यजमानभयावहः ॥**

( १ ) अल्पः कर्मापर्याप्तः । विच्छिन्नः कर्मपर्याप्तः प्रणीतोऽपि शिथिलबह्ववयवः । असमिद्धः अप्रदीप्तः । अपरिष्कृतः पात्रान्तरपिधानादिधर्मासंस्कृतः । अल्पत्वात्पुनः पुनरानीतः । संर. ५८

( २ ) अल्पः । विच्छिन्नोऽन्तराच्छेदसहितः, विक्षिप्त इति यावत् । असमिद्धः अप्रदीप्तः । अपरिश्रुतः शास्त्रोक्तेतिकर्तव्यतारहितः । श्रुतं शास्त्रमिति ह्यनर्थान्तरम् । त्वरया चाऽऽनीतः प्रणीतोऽग्निः यजमानस्य भयमावहति । पुनःशब्दः चशब्दार्थः । गृसंभा.

[२]**तस्माच्छुभेन पात्रेण अविच्छिन्नाकृशं बहु ।
अग्निप्रणयनं कुर्याद्यजमानसुखावहम् ॥**

( १ ) अविच्छिन्नाकृशमित्यत्र कर्मधारयः । बह्विति क्रियाविशेषणम् । संर. ५८

( २ ) यस्मादेवम्— ( तस्मात् ) अविच्छिन्नम्, अकृशं समिद्धम्, बहु नाल्पं यथा भवति तथा अग्निप्रणयनं कुर्यात् । गृसंभा.

**शुभं पात्रं तु कर्तव्यं यजमानसुखावहम् ॥**

शुभं पात्रमित्यादरार्थं पुनरुपादानम् । गृसंभा.

[३]**शुभं पात्रं तु कांस्यं स्यात्तेनाग्निं प्रणयेद्बुधः ।
तस्याभावे शरावेण नवेनाभिमुखं च तम् ॥**

( १ ) सौवर्णाद्यभावे कांस्यम् । संर. ५८

---

( १ ) गृसं. १।६१–६२.

( २ ) गृसं. १।६४–६५ ; संर. ५७ गोभिलीयपरिशिष्टे.

( १ ) गृसं. १।६५–६६ ; संर. ५८ रिश्रुतः (रिष्कृतः) गोभिलीयपरिशिष्टे.

( २ ) गृसं. १।६६–६७ ; संर. ५८ सुखा ( शुभा ) गोभिलीयपरिशिष्टे.

( ३ ) गृसं. १।६८ ; संत. ८६० ; शाम. ५ कृत्यरत्नाकरे ; संर. ५८ गोभिलीयपरिशिष्टे.

(२) शुभं पात्रमाह— शुभमिति । तस्य कांस्यस्याभावे नवेन शरावेणाग्निं प्रणयेदिति गतेन संबन्धः । अभिमुखं यथा भवति तथा तम् अग्निं प्रणयेदिति कल्पद्वयेऽपि संबध्यते । यश्च— 'शरावे भिन्नपात्रे वा कपाले वोल्मुकेऽपि वा । नाग्निप्रणयनं कुर्याद्व्याधिहानिभयावहम् ॥' इति शरावनिषेधः स पुरातनशरावविषयः, कांस्यपात्रसद्भावविषयः, गोभिलीयव्यतिरिक्तविषयो वा । गृसंभा.

अग्निस्वरूप

[1]**सर्वतः पाणिपादान्तः सर्वतोऽक्षिशिरोमुखः ।**
**विश्वरूपो महानग्निः प्रणीतः सर्वकर्मसु ॥**

(१) एवं चाग्निप्रणयनानन्तरं 'सर्वतः' इत्यस्य पाठो युज्यते, 'प्रणीतः' इति मन्त्रलिङ्गात् । अन्यथा स्थापनानन्तरमेतदभिधानं व्यर्थं स्यात् । संत. ८४०

(२) अग्नेः स्वरूपमाह— सर्वत इति । अन्तशब्दः स्वरूपार्थः । सर्वतः पाणिपादस्वरूपं यस्य स तथा । सर्वतोऽक्षीणि चक्षूंषि, शिरांसि, मुखानि च यस्य स तथोक्तः । स खल्वयं विश्वरूपो महानग्निः सर्वकर्मसु प्रणीतो भवति । 'ज्ञात्वा स्वरूपमाग्नेयम्' इत्यग्नेः स्वरूपं विदुषः फलवादः पुरस्तादभिहितः । तदेव खल्वग्नेः स्वरूपमनेन श्लोकेनोक्तमिति बोद्धव्यम् । रघुनन्दनस्तु— 'विशेषतो नामाज्ञाने सर्वत्र विश्वरूपो नामाग्निर्भवति' इति कल्पयांचकार । अग्निप्रणयनानन्तरं पठनीयो मन्त्रोऽयमिति चाऽऽचचक्षे । गृसंभा.

अग्निधमनसाधनानि तत्फलानि च

[2]**न वस्त्रेण धमेदग्निं न सूर्पेण न पाणिना ।**
**मुखेनोपधमेदग्निं मुखाद्ध्येषोऽध्यजायत ॥**

वस्त्रेण सूर्पेण पाणिना वा अग्निं न धमेत नोद्दीपयेत्, किंतु मुखेनाग्निमुपधमेत् । तत्र हेतुः— हि यस्मादेषोऽग्निः प्रजापतेर्मुखादध्यजायत उत्पन्नः । मुखादुपजातस्य मुखेनोपधमनं युक्तमिति भावः । मुखादुत्पत्तिश्चाग्नेस्ताण्ड्ये ब्राह्मणे समाम्नायते— 'सोऽकामयत यज्ञं सृजेयेति । स मुखत एव त्रिवृतमसृजत । तं गायत्री छन्दोऽन्वसृज्यताग्निर्देवता ब्राह्मणो मनुष्यो वसन्त ऋतुः । तस्मात् त्रिवृत् स्तोमानां मुखम्, गायत्री छन्दसाम्, अग्निर्देवतानाम्, ब्राह्मणो मनुष्याणाम्, वसन्त ऋतूनाम् । तस्माद्ब्राह्मणो मुखेन वीर्यं करोति, मुखतो हि सृष्टः' इति । 'मुखादग्निश्च वायुश्च' इति च पुरुषसूक्ते । रघुनन्दनस्त्वेतदजानानः 'मुखात् मुखपाठ्यमन्त्रात्' इति यदृच्छयैव कल्पयांचकार, तदनादरणीयम् । तदिदं मुखेनाग्नेरुपधमनं लौकिकाग्निव्यतिरिक्तविषयम् । तथा च कर्मप्रदीपः— 'जुहूषंश्च हुते चैव पाणिसूर्पस्फ्यदारुभिः । न कुर्यादग्निधमनं कुर्याद्वा व्यजनादिना ॥ मुखेनैके धमन्त्यग्निं मुखाद्ध्येषोऽध्यजायत । नाग्निं मुखेनेति च यल्लौकिके योजयन्ति तत् ॥' इति । गृसंभा.

**वस्त्रेण तु भवेद्व्याधिः सूर्पेण धननाशनम् ।**
**पाणिना मृत्युमादत्ते मुखेन सिद्धिभाग्भवेत् ॥**

वस्त्रादिना अग्निधमने दोषम्, मुखेन धमने फलं चाऽऽह— वस्त्रेणेति । मृत्युमादत्ते गृह्णाति, अचिरात् म्रियते इत्यर्थः । अतिरोहितार्थमन्यत् । गृसंभा.

लेखनादिचरुश्रपणान्तपदार्थक्रमः, स्तरणे विशेषः

[1]**लेखनाभ्युक्षणे कृत्वा निहितेऽग्नौ समिद्दत् ।**
**ततो भूमिग्रहं कृत्वा कुर्यात् परिसमूहनम् ॥**

अथेदानीं कर्मक्रममाह— लेखनेति । समिदित्यार्षो विभक्तिलोपः । ददिति शत्रन्तम् । तदयमर्थः— रेखोल्लेखनमभ्युक्षणं च कृत्वा निहिते स्थापितेऽग्नौ समिधं दद्यात् । ततः 'पश्चादग्नेर्भूमौ न्यञ्चौ पाणी प्रतिष्ठाप्येदं भूमेर्भजामह इति' (गोगृ. ४।५।३) इति सूत्रोक्तं भूमिग्रहं कृत्वा 'इमं स्तोममिति तृचेन परिसमूहेत्' (गोगृ. ४।५।५) इति सूत्रोक्तं परिसमूहनं कुर्यात् । गृसंभा.

(१) गृसं. १।६९; संत. ८६०.
(२) गृसं. १।७०, ७१.

(१) गृसं. १८६–८८.

**ब्रह्माणमुपसंकल्प्य चरुश्रपणमारभेत् ।**
**ब्रह्माणं स्तरणं विद्याच्चरुर्यत्र न कल्पितः ॥**

ततो ब्रह्माणमुपसंकल्प्य अग्निसमीपे सम्यक् गृह्योक्तप्रकारेण स्थापयित्वा चरुश्रपणमारभेत । तस्मात् 'भूमिजपादेः पूर्वं ब्रह्मस्थापनम्' इत्यसंगतं वचनम् । यत्र कर्मणि चरुर्न कल्पितस्तत्र ब्रह्माणमेव स्तरणं जानीयात् । न तत्र गृह्योक्तं स्तरणं कुर्यादित्यर्थः । गृसंभा.

ब्रह्मासनस्थाने उदकधारादानम्

[1]**उदग्धारामविच्छिन्नामाग्न्यमारभ्य दक्षिणाम् ।**
**दद्याद्ब्रह्मासनस्थाने सर्वकर्मसु नित्यशः ॥**

(१) तत्र ब्रह्मासनस्थाने आस्तरणात्पूर्वं वारिधारामाह गृह्यासंग्रहः– उदग्धारामिति । संत. ८६२

(२) अग्नेरिदम् आग्न्यं स्थण्डिलमारभ्य दक्षिणां दक्षिणाग्रामिति दीक्षितभाष्यम् । अग्निमारभ्य इति तत्त्वकारः पठति । तदेवं ब्रह्मासनस्य स्थाने अविच्छिन्नामुदकस्य धारां दद्यात् । तदनेन– 'दक्षिणतोऽग्नेर्ब्रह्मासनमास्तीर्य' इति सूत्रोक्तं ब्रह्मासनास्तरणम्, तत्स्थाने इत्थमुदकधारां दत्वा करणीयमिति व्याख्यातम् । प्रागग्रवारिधारादानमिति केचित् । गृसंभा.

कर्मविशेषेषु ब्रह्मनिषेधः

[2]**एकाग्नौ पितृयज्ञे च ब्रह्माणं नोपकल्पयेत् ।**
**सायं प्रातश्च होमेषु तथैव बलिकर्मसु ॥**

एकः अग्निर्यस्मिन्, तस्मिन्नेकाग्नौ पितृयज्ञे इति सामानाधिकरण्येन संबन्धः श्रौतस्य बह्वग्निसाध्यस्य पिण्डपितृयज्ञस्य निरासार्थः । चकारः पुनरर्थः । एकाग्नौ पितृयज्ञे पुनर्ब्रह्माणं नोपकल्पयेत् । पितृयज्ञे अन्वष्टक्यकर्मणि पिण्डपितृयज्ञे च इति दीक्षितभाष्यम् । एकाग्नौ पितृयज्ञे च इत्युभयत्र ब्रह्माणं नेच्छन्त्यन्ये । तदसंगतम्, एकाग्न्योरपि दर्शपौर्णमासयोर्ब्रह्मोपवेशनस्याऽऽचार्येण गृह्येऽभिधानात् । अपिच, एवं खल्वेकाग्निसाध्ये गृह्योक्तकर्ममात्र एव विवाहहोमादौ ब्रह्मा न स्यात् । इष्यते च । लिङ्गं च विवाहहोमे ब्रह्मणः पश्यामः । तथा च वक्ष्यति– 'प्राजग्राहमुदग्राहं ब्रह्माणमृत्विजं तथा । एतानि बाह्यतः कृत्वा शेषाणां तु प्रदक्षिणम् ॥' इति । तस्माद्यथोक्तमेवास्तु । 'राकाग्नौ' इति पाठे राकायां पौर्णमास्यां योऽग्निः तत्र ब्रह्माणं न कल्पयेदित्यर्थः । तथा च गोभिलसूत्रम्– 'पौर्णमास्यां रात्रौ खदिरशङ्कुशतं जुहुयादायुःकामः' (गोगृ. ४।८।९) इति ।

सायंप्रातर्होमेषु, चशब्दादन्येष्वपि क्षिप्रहोमेषु, बलिकर्मसु चैत्यहोमकेष्वित्यर्थः । तदेतेषु ब्रह्माणं नोपकल्पयेत् । तथा च गृह्यान्तरम् 'एकसाध्येष्वबर्हिःषु न स्यात्परिसमूहनम् । नोदगासादनं चैव क्षिप्रहोमा हि ते स्मृताः ॥' इत्येकसाध्यत्वं होतृमात्रसाध्यत्वं क्षिप्रहोमानामाह । गृसंभा.

विहितप्रतिषिद्धायाः प्रणीताया निषेधः

[1]**विहितप्रतिषिद्धां च प्रणीतां नोपकल्पयेत् ॥**

पूर्वं विहिता पश्चात् प्रतिषिद्धा या प्रणीता सेयं विहितप्रतिषिद्धा । तामिमां प्रणीतां नोपकल्पयेत्, 'गृह्यकर्मसु' इति पराचीनमनुषज्य संबन्धनीयम् । आह– केयं विहितप्रतिषिद्धा नाम ? उच्यते । महतः पात्रान्तरस्य सद्भावे अपां पूर्णः स्रुवः । तथा च गोभिलसूत्रम्– 'उत्तरतोऽपां पूर्णः स्रुवः प्रणीता, भावे न वा स्यादित्येके' (गोगृ. १।७।१७–१८) इति ।

गृसंभा.

वैरूपाक्षप्रपदजपविधिः, परिधिस्थाने उदकाञ्जलयः

[2]**वैरूपाक्षं जपेन्मन्त्रं प्रपदं चैव यज्ञवित् ।**
**परिधींस्तु न कुर्वीत गृह्यकर्मसु याज्ञिकः ।**
**उदकाञ्जलयस्तिस्रस्ते वै परिधयः स्मृताः ॥**

'वैरूपाक्षः पुरस्ताद्धोमानाम्' (गोगृ. ४।५।६) इति सूत्रोक्तं वैरूपाक्षं मन्त्रम्, प्रपदं च 'तपश्च तेजश्चेति जपित्वा' इति सूत्रोक्तम्, गृह्यकर्मसु जपेदन्यत्र क्षिप्रहोमेभ्यः । तथा च कर्मप्रदीपः– 'न कुर्यात् क्षिप्रहोमेषु

---

(१) गृसं. १।९०–९१ ; संत. ८६२ माग्न्य (मग्नि) दक्षिणाम् (दक्षिणम्).

(२) गृसं. १।९१–९२.

(१) गृसं. १।९५. (२) गृसं. १।९६–९८.

द्विजः परिसमूहनम् । वैरूपाक्षं च न जपेत्प्रपदं च विवर्जयेत् ॥' इति । 'पूर्वेषु चैके' इत्युपक्रम्य वैरूपाक्षादीनामुक्तत्वात् प्रणीतावद्विहितप्रतिषिद्धतया एतान्यपि गृह्याकर्मसु न कर्तव्यानीति मा प्रसाङ्क्षीदिति खल्वाचार्यपुत्रः 'वैरूपाक्षं जपेत्' इत्याह । परिधींस्तु 'परिधीनप्येके कुर्वन्ति' (गोगृ. १।७।१६) इति सूत्रोक्तान् गृह्याकर्मसु न कुर्वीत । तत्र हेतुः 'अदितेऽनु' इत्यादिमन्त्रैर्ये त्रयः, 'तिस्रः' इति व्यत्ययेन स्त्रीत्वम्, त्रय इत्यर्थः, उदकाञ्जलयः, त एव परिधयोऽस्माकमाचार्यैः स्मृताः । तस्मात् यत्रापि परिस्तरणं नास्ति तत्रापि परिधीन् न कुर्वीत । गृसंभा.

सर्वेषु होमेष्वाद्यन्तयोः समिदाधानम्

**सर्वेषामेव होमानां समिदादौ विधीयते ।**
**कर्मान्ते चैवमेव स्यात् स्वाहां तत्र न कारयेत् ॥**

सर्वेषामेव होमानामाद्यन्तयोः समिदग्नौ दातव्या । तत्र च स्वाहां न कुर्यात् । स्वाहापदं मन्त्रोपलक्षणम् । दैवतमप्यस्या नास्ति । तथा च कर्मप्रदीपः— 'समिदादिषु होमेषु मन्त्रदैवतवर्जिता । पुरस्ताच्चोपरिष्टाच्च इन्धनार्थं समिद्भवेत् ॥' इति । गृसंभा.

इध्मसमित्संख्या

[१]**इध्ममष्टादश दारु प्रवदन्ति विचक्षणाः ।**
**दर्शे च पौर्णमासे च क्रियास्वन्यासु विंशतिः ॥**

'अथेध्मानुपकल्पयते, खादिरान् पालाशान् वा' (गोगृ. १।५।१४) इति सूत्रोक्तानिध्मान् व्याकुरुते— इध्ममिति । दर्शपौर्णमासयोरष्टादशसंख्यकं दारु इध्मं वदन्ति पण्डिताः । अपरासु क्रियासु विंशतिरिध्मा भवन्ति, अन्यत्राङ्गहोमादिभ्यः । तथा च कर्मप्रदीपः— 'अङ्गहोमसमित्तन्त्रसोष्यन्त्याख्येषु कर्मसु । येषां चैतदुपर्युक्तं तेषु तत्सदृशेषु च ॥ अक्षभङ्गादिविपदि जलहोमादिकर्मणि । सोमाहुतिषु सर्वासु नैतेष्विध्मो विधीयते ॥' इति । गृसंभा.

(१) गृसं. १।९८–९९.



तूष्णीं कर्तव्यानि कर्माणि, इध्मस्य निःशेषस्याऽऽधानम्

[१]**इध्मः संनहनादानं चरुश्रपणमेव च ।**
**तूष्णीमेतानि कुर्वीत समस्तं चेध्ममादधेत् ॥**

इध्मः पूर्वोक्तः । संनहनम्— 'कंसमपां पूरयित्वा सर्वौषधीः कृत्वा हस्तावववधाय प्रदक्षिणमाचार्योऽहतेन वसनेन परिणह्येत्' इति सूत्रोक्तं परिणहनमित्यर्थः । कुतः ? तत्रापि संनहनपदप्रयोगात् । तथा च 'अक्षिसंनहनत्यागः' इति तदेव परिणहनं निर्दिशति । संनहनं बन्धनरज्जुः 'तन्तीं प्रसार्यमाणाम्' इत्यादिसूत्रोक्ता इति केचित् । आदानं हविषां ग्रहणम् । चरुश्रपणं च । उपलक्षणं चैतत् । अन्यस्यापि हविषः श्रपणं बोद्धव्यम् । एतानि तूष्णीं कुर्यात् । समस्तं चेध्ममग्नौ दद्यात् । गृसंभा.

उपक्लृप्तद्रव्याणां वीक्षणम् अभ्युक्षणं च

[२]**द्रव्याणामुपक्लृप्तानां होमीयानां यथाविधि ।**
**प्रसिञ्चन् वीक्षणं कुर्यादद्भिरभ्युक्षणमेव च ॥**

यथाविधि 'प्राञ्चं प्राञ्चमुदगग्नेरुदगग्रं समीपतः । तत्तथाऽऽसादयेद्द्रव्यं यद्यथा विनियुज्यते ॥' इति कर्मप्रदीपोक्तविध्यनुसारेण उपक्लृप्तानां समासादितानामित्यर्थः । होमीयानां होमसंबन्धिनां द्रव्याणाम् । षष्ठी चेयं वीक्षणाभ्युक्षणसंबन्धापेक्षया द्रष्टव्या । तथा चोक्तम्— 'प्रधानशक्त्यभिधाने गुणशक्तिरभिहितवत् प्रकाशते' इति । अद्भिः प्रसिञ्चन्, वीक्षणं दर्शनम्, अभ्युक्षणं च, 'उत्तानेनैव हस्तेन प्रोक्षणं समुदाहृतम् । न्यञ्चताऽभ्युक्षणं प्रोक्तं तिरश्चावोक्षणं मतम् ॥' इत्युक्तलक्षणं कुर्यात् । 'एव च' इति निपातसमुदायः समुच्चयवाची । गृसंभा.

(१) गृसं. १।१०१–१०२.

(२) गृसं. १।१०३–१०४ ; संत. ८६४ यथाविधि (यथाक्रमम्) प्रसिञ्चन् (सादयन्) णमेव च (णं तथा) भट्टभाष्ये धृतम्.

संपूयनपदार्थः, तत्पूर्वकत्वमुत्पवनस्य

**[1]पवित्रमन्तरे कृत्वा स्थाल्यामाज्यं समावपेत्।**
**एतत् संपूयनं नाम पश्चादुत्पवनं स्मृतम् ॥**

गोभिलोक्तं संपूयनं व्याकुरुते— पवित्रमिति। अन्तरे मध्ये, पवित्रम् 'अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च। प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् ॥ एतदेव हि पिञ्जूल्या लक्षणं समुदाहृतम्। आज्यस्योत्पवनार्थं यत्तदप्येतावदेव तु ॥' इति कर्मप्रदीपोक्तलक्षणं कृत्वा संस्थाप्य आज्यस्थाल्यामाज्यं प्रक्षिपेत्। तदेतत् संपूयनं नाम स्मृतम्। एतदनन्तरमुत्पवनम्। तथा च गोभिलसूत्रम्— 'संपूयोत्पुनात्युदगग्राभ्यां पवित्राभ्याम्' इति।

गृसंभा.

आज्यप्रतिनिधौ आज्यशब्दप्रयोगः

**[2]घृतं वा यदि वा तैलं पयो वा दधि यावकम्।**
**आज्यस्थाने नियुक्तानामाज्यशब्दो विधीयते ॥**

पयः दुग्धम्। यावकं यवागूः। आज्यस्याभावे आज्यस्थाने नियुक्तानामेषामाज्यशब्दो विधीयते। तदनेन 'आज्यं संस्कुरुते सर्पिस्तैलं दधि पयो यवागूं वा' (गोगृ. १।७।१९–२०) इति गोभिलसूत्रं व्याख्यातम्।

गृसंभा.

दध्नोऽधिश्रयणनिषेधः

**[3]आज्यानां सर्पिरादीनां संस्कारे विधिचोदिते।**
**अनधिश्रयणं दध्नः शेषाणां श्रयणं स्मृतम् ॥**

विधिचोदिते संस्कारे तद्विषये इत्यर्थः। दध्नोऽधिश्रयणं नास्ति, शेषाणामधिश्रयणं स्मृतमाचार्यैः। श्लिष्टमन्यत्। एवं वा— विधिचोदिते संस्कारे कृते सति आज्यशब्दो विधीयते इति गतेन संबन्धः। तत्र विशेषमाह— अनधिश्रयणमित्यादि। पूर्ववद्व्याख्यानम्।

गृसंभा.

(१) गृसं. १।१०४–१०५.

(२) गृसं. १।१०६–१०७; पप्र. ११० वा दधि (दधि च) उत्तरार्धे (संस्कारयोगादेतेषु आज्यशब्दो विधियते ॥) परिशिष्टम्.

(३) गृसं. १।१०७–१०८.

संस्कृताज्यपात्रे निक्षिप्तस्य घृतादेर्न पुनः संस्कारः

**[1]यथा सीमन्तिका नारी पूर्वगर्भेण संस्कृता।**
**एवमाज्यस्य संस्कारः संस्कारे विधिनोदिते ॥**

यथा सीमन्तिका नारी पूर्वगर्भेण प्रथमगर्भेण संस्कृता भवति, द्वितीयादिगर्भे न पुनः सीमन्तकरणसंस्कारो यथेत्यर्थः। तथा च गोभिलसूत्रम्— 'अथ सीमन्तकरणं प्रथमगर्भे' (गोगृ. २।७।१) इति। विधिना उक्ते संस्कारे, तद्विषये इत्येतत्। आज्यस्य संस्कारोऽप्येवमेव भवति। 'संस्कारविधिचोदितः' इति पाठे संस्कारविध्युक्तः आज्यस्य संस्कारोऽप्येवमिति व्याख्येयम्। एतदनेनोक्तं भवति— सीमन्तकरणसंस्कारो गर्भस्य पात्रस्य च इति सकृत्संस्कृतपात्रजातानां सर्वेषां गर्भाणां संस्कृतत्ववत् आज्यसंस्कारोऽप्याज्यस्य तत्पात्रस्य च इति सकृत्संस्कृताज्यपात्रे यान्याज्यानि निक्षिप्यन्ते तानि सर्वाणि संस्कृतानि भवन्ति, न पुनरमीषां पृथक्संस्कारः करणीय इति। तथा चाऽऽश्वलायनगृह्यपरिशिष्टम्— 'सीमन्तोन्नयनं प्रथमे गर्भे, सीमन्तोन्नयनसंस्कारो गर्भपात्रसंस्कारः' इति।

गृसंभा.

आज्यहविरन्तरयोर्मध्ये आज्यसंस्कारस्य प्राथम्यम्

**[2]आज्यस्य हविषां चैव आज्ये पूर्वक्रियाविधिः।**
**तस्य संपवनं पूर्वं चरोः पर्युक्षणं परम् ॥**

एतदेवाह— आज्यस्येति। यस्मादाज्ये आज्यविषये, आज्यसंस्कारविषये इत्येतत्। आज्यस्य आज्यस्थाने गृहीतानां हविषां च मध्ये, पूर्वं प्रथममेव क्रियायाः संस्कारस्य विधिर्विधानम्, तस्मात्तस्य पूर्वं प्रथममेव संपवनं पवित्रीकरणम्, संस्कारः इति यावत्, न पुनः पश्चाद्गृहीतस्यापीत्यर्थः। चरोस्तु परं केवलं परि सर्वतोभावेन उक्षणं प्रोक्षणमेव संस्कार इत्यर्थः। एवं वा— पूर्वमेव तस्य संपवनं संपूयनादि विधिचोदितः संस्कारः। चरोः, उपलक्षणत्वात् पश्चाद्गृहीतस्य हविषः पर्युक्षण-

(१) गृसं. १।१०८–१०९; संत. ८७१ सीमन्तिका (सीमन्तिनी) संस्कारे विधिनोदिते (संस्कारविधिचोदितः).

(२) गृसं. १०९–११०.

मेव परं संस्कारः । पश्चाद्ग्राह्यं हविः संप्रोक्ष्य ग्रहीतव्य-मित्यर्थः । दीक्षितस्त्वाह— चरोः 'देवसवितः' इति पर्युक्षणं परं पश्चात् इति । गृसंभा.

उपघातपदार्थः

[1]पाणिना मेक्षणेनाथ स्रुवेणैव तु यद्धविः ।
हूयते चानुपस्तीर्य उपघातः स उच्यते ॥

अथेदानीं 'पर्युक्ष्य स्थालीपाक आज्यमानीय मेक्षणेनो-पघातं होतुमेवोपक्रमते' (गोगृ. १।८।२) इति सूत्रोक्तमुपघातं व्याकुरुते— पाणिनेति । पाणिना मेक्षणेन वा स्रुवेणैव वा यद्धविर्हूयते, स खल्वयं होम उपघात उच्यते । यत् इति होमक्रियाविशेषणम् । किं कृत्वा हूयते ? अनुपस्तीर्य उपस्तरणमभिघारणं चाकृत्वा । स्रुवेण स्रुचि प्रथमं यदाज्यं दीयते तदुपस्तरणम्, यत् पुनराज्यं चरुमवदाय अनन्तरं दीयते तदभिघारितमित्या-चक्षते याज्ञिकाः । आचार्यपुत्रस्तु पूर्वापरकालकृतमवा-न्तरभेदमनादृत्य उपस्तरणमभिघारणं चोभयमेवोपस्तरणं मन्यमानः 'अनुपस्तीर्य' इत्याह । गृसंभा.

उपघातहोमधर्माः

[2]यद्युपघातं जुहुयाच्चरावाज्यं समावपेत् ।
मेक्षणेन तु होतव्यं नाऽऽज्यभागौ न स्विष्टकृत् ॥

यदि उपघातं जुहुयात्, तदा स्थालीपाके चरौ आज्यं प्रक्षिपेत् । मेक्षणेन होतव्यम् । तुशब्दश्चशब्दार्थः समुच्चये, पूर्वोक्तपाण्यादिकमपि समुच्चिनोति । तत्र च आज्यभागौ न होतव्यौ, न च स्विष्टकृत् होतव्यः । स खल्वयमुपघातहोमः समशनीयचरुपितृयज्ञचर्वोः, अन्यत्रा-पि बहुदैवत्ये चरौ अन्वष्टक्यचरौ च भवति । तथा च कर्मप्रदीपः— 'चरौ समशनीये तु पितृयज्ञचरौ तथा । होतव्यं मेक्षणेनान्यदुपस्तीर्याभिघारितम् ॥' इति । 'चरौ तु बहुदैवत्ये होमस्तस्योपघातवत् ।' इति च परिशिष्टप्रकाशादौ स्मृत्यन्तरम् । तथा अन्वष्टक्यकर्मणि गोभिलसूत्रम्— 'कंसे चरू सम-वदाय मेक्षणेनोपघातं जुहुयात्' (गोगृ. ४।२।२५) इति । वृषोत्सर्गहोमस्य तु बहुदैवतत्वेऽपि नोपघातत्वम् । तदाह कर्मप्रदीपः— 'एतेभ्य एव जुहुयान्मेक्षणेनावदाय च । स्रुच्याहुतीश्चरोः पृथक् सिञ्चेदाज्याभिघारितम् ॥' इति । यत्रापि गोभिलेन 'स्थालीपाकावृताऽन्यत्' (गोगृ. ३।१०।३२) इति सूत्रितम्, तत्रापि होमस्य नोपघातत्वमिति वक्ष्यामः । गृसंभा.

संपातसंज्ञा

[1]हुत्वाऽऽज्यं परिशेषेण यद्द्रव्यमुपकल्पितम् ।
स्रुवेणैव तु तत् (? यत्) स्पृष्टं संपातं चैव तं विदुः ॥

आज्यं हुत्वा होमावशिष्टं यदाज्यद्रव्यं उप समीपे पात्रान्तरे कल्पितं स्थापितं तत् संपातं विदुः । आज्यं हुत्वा होमावशिष्टं यदाज्यं स्रुवेण वध्वा मस्तके स्पृष्टम्, तदपि संपातं विदुः । तथा च चतुर्थीकर्मणि गोभिल-सूत्रम्— 'आहुतेराहुतेस्तु संपातमुदपात्रेऽवनयेत्' (गोगृ. २।५।५) इति । तथोत्तरविवाहे 'आहुतेराहु-तेस्तु संपातं मूर्धनि वध्वा अवनयेत्' (गोगृ. २।३।७) इति । गृसंभा.

'स्थालीपाकावृताऽन्यत्' इति गोभिलसूत्रोक्तस्य पारिभाषिकोऽर्थः

स्थालीपाकावृताऽन्यच्च यत्र संज्ञा निपात्यते ।
तत्राऽऽज्यभागौ हुत्वैव स्रुचमास्तीर्यावद्यति ॥

यत्र यत्र गोभिलेन 'स्थालीपाकावृताऽन्यत्' इतीयं संज्ञा निपात्यते, अयं शब्दः प्रयुज्यते इत्यर्थः । तत्राऽऽ-ज्यभागौ हुत्वा स्रुचमास्तीर्य आज्येनोपस्तीर्य अवद्यति अवदानं गृह्णाति । न पुनस्तत्रोपघातहोम इत्यर्थः । यथा श्रावण्यां प्रदोषे चरोर्बहुदैवतत्वेऽपि 'स्थालीपाकावृताऽ-न्यत्' इति सूत्रणात् तत्रोपघातहोमो न भवति । एव-मन्यत्राप्यनुसंधेयम् । गृसंभा.

(१) गृसं. १।११०–१११ ; संत. ८७५.
(२) गृसं. १।१११–११२ ; संत. ८७५ समावपेत् (समापयेत्) स्विष्टकृत् (स्विष्टिकृत्).

(१) गृसं. १।११२–११४.

स्तृतशेषदर्भैर्यज्ञवास्तुकर्मणः कर्तव्यता

**[1]स्तृतेभ्यो न प्रचिन्वीयाद्यातयामं स्तृतं स्मृतम् ।**
**स्तृतशेषात्ततो गृह्य यज्ञवास्तुक्रिया तथा ॥**

यज्ञवास्तुकर्मणि गोभिलेन 'तत एव बर्हिषः कुशमुष्टिमादाय' (गोगृ. १।८।२७) इति सूत्रितम् । तत्र 'तत एव बर्हिषः' इत्येतदनुद्भिन्नपदार्थं वाक्यं व्याकुरुते—स्तृतेभ्य इति । यज्ञवास्त्वर्थं स्तृतेभ्यः कुशेभ्यः कुशं न चिनुयात् । कस्मात् ? यस्मात् स्तृतं बर्हिर्यातयामं निर्वीर्यं स्मृतमाचार्यैः । स्मरन्ति च— 'स्तरणासनपिण्डेषु षट् कुशान् परिवर्जयेत् ।' इति । यस्मादेवम्, तस्मात् स्तृतशेषाद्बर्हिषः कुशमुष्टिं गृहीत्वा तथा गोभिलोक्तेन प्रकारेण यज्ञवास्तुक्रिया कर्तव्या । स च प्रकारो गृह्यसूत्रादुपलब्धव्यः । अपरे पुनरेतदविद्वांसः स्तृतादेव बर्हिषः कुशमुष्टिमादाय यज्ञवास्तुक्रियां कुर्वन्ति, तदशास्त्रम् ।

गृसंभा.

यज्ञवास्तूत्तरं पूर्णाहुतिः

**[2]यज्ञवास्तुक्रियां कृत्वा विधिदृष्टेन कर्मणा ।**
**आज्यधारामविच्छिन्नां जुहुयात्सार्वकामिकीम् ॥**

विधिदृष्टेन कर्मणा यज्ञवास्तुक्रियां कृत्वा अविच्छिन्नां संततां सार्वकामिकीं सर्वकामप्रदामाज्यधारां जुहुयात् । विधिदृष्टेन कर्मणा सार्वकामिकीमाज्यधारां जुहुयात् इति वा वर्णनीयम् । तदनेन गोभिलानुक्ताऽपि पूर्णाहुतिर्विधीयते । कथं ज्ञायते ? सार्वकामिकीमिति वचनात् । 'पूर्णाहुत्या सर्वान् कामानाप्नोति' इति हि ब्राह्मणम् । सेयं पूर्णाहुतिः 'वसुभ्यः स्वाहा' इति मन्त्रेण होतव्या इति दीक्षितभाष्यम् । 'पूर्णहोमं यशसे जुहोमि' इत्यादिमन्त्रेण इति भवदेवभट्टप्रभृतयः ।

गृसंभा.

व्याहृति—यज्ञवास्तुकर्मणोः परिगणितकर्मसु निषेधः

**[3]सायंप्रातर्वैश्वदेवे पितृयज्ञे तथैव च ।**
**कम्बूके गोमये नित्यं व्रतानां समिधासु च ॥**
**चैत्ये यूपे व्रीहियवे भूमावप्सु च याज्ञिकैः ।**
**व्याहृतीर्न प्रयोक्तव्या यज्ञवास्तुक्रिया तथा ॥**

सायंप्रातर्होमे, वैश्वदेवहोमे, पितृयज्ञे अन्वष्टक्यकर्मणि पिण्डपितृयज्ञे च, कम्बूके 'वृत्त्यविच्छित्तिकामः कम्बूकान् सायंप्रातर्जुहुयात्' (गोगृ ४।९।११) इति सूत्रोक्ते कम्बूकहोमे । कम्बूकाश्च 'कम्बूकाश्च कणाश्चैव फलीकरणकक्कुशाः' इत्युक्तलक्षणाः । गोमये 'वृत्त्यविच्छित्तिकामो हरितगोमयान् सायंप्रातर्जुहुयात्' (गोगृ. ४।८।१६) इति सूत्रोक्ते गोमयहोमे, व्रतानां वेदव्रतानाम्, समिधासु समिद्धोमेषु (हलन्तलक्षणः टाप्प्रत्ययः), चैत्ये चिताकर्मणि, यूपे यूपकर्मणि, व्रीहियवे नवयज्ञोक्ते 'वर्शंगमौ शङ्खश्चेति पृथगाहुती व्रीहियवहोमौ प्रयुञ्जीत' (गोगृ. ४।८।६) इत्यादिसूत्रोक्ते वा व्रीहियवहोमे, भूमौ 'वृक्ष इवेति पञ्चर्चः, तस्मिन् प्रथमं पार्थिवं कर्म' (गोगृ. ४।५।२०, २१) इति सूत्रोक्ते पार्थिवकर्मणि, भूम्यां होमे वा, अप्सु च 'पौर्णमास्यां रात्रावविदासिनि ह्रदे नाभिमात्रमवगाह्याक्षतण्डुलानृगन्तेष्वास्येन जुहुयात् स्वाहेत्युदके' (गोगृ. ४।५।२६) इति सूत्रोक्ते जलहोमे च याज्ञिकैर्व्याहृतयो न प्रयोक्तव्याः, यज्ञवास्तुक्रियाऽप्येषु न कर्तव्या । व्याहृतीः इति छान्दसः पूर्वसवर्णो द्रष्टव्यः ।

गृसंभा.

चरोरभिघारणप्रत्यभिघारणे

**[1]पवित्रान्तर्हितं कृत्वा चरुं प्राज्ञोऽभिघारयेत् ।**
**उद्वास्य चैव विधिना एवं तन्त्रं न लुप्यते ॥**

अथेदानीं 'शृतमभिघार्योदगुद्वास्य प्रत्यभिघारयेत्' इति सूक्तोक्तं चरोरभिघारणं प्रत्यभिघारणं च व्याकुरुते – पवित्रेति । प्राज्ञो बुद्धिमान् उदगग्रेण पवित्रेण चरुमन्तर्हितं व्यवहितं कृत्वा, चरुमध्ये उदगग्रं पवित्रं निधायेत्यर्थः । अभिघारयेत् घृतस्रुवेणाऽऽप्लावयेत् । चरुमुत्तरस्यां दिशि उद्वास्य उत्तार्य च पूर्वोक्तेनैव विधिना पुनरभिघारयेत् । एवं कृते तन्त्रमङ्गविस्तारो न लुप्यते ।

गृसंभा.

---

(१) गृसं. २।१.

(२) गृसं. २।२ ; संदी. ४९ जुहुयात् सार्वकामिकीम् (पातयेदनलोपरि).

(३) गृसं. २।३–४.

(१) गृसं. २।६९.

## कारिकाः

स्थण्डिलमानम्

[१]हस्तमात्रं चतुष्कोणं बाहुमात्रमथापि वा ।
चतुरङ्गुलमुच्छ्रायं स्थण्डिलं सर्वकर्मसु ॥

अत्रोक्तस्य प्रमाणद्वयस्य होमानुसारेण व्यवस्था ज्ञेया ।
संर. ५१

रेखाकरणम्

[२]स्थण्डिलात्तण्डुले रेखा द्व्यङ्गुला द्व्यङ्गुलाधिका ।
एकरेखं द्विरेखं वा अग्निभद्रं तु कारयेत् ॥

पात्रासादनम्

[३]पश्चादुत्तरतो वा स्यात् पात्रासादनमग्नितः ।
उत्तरे चेदुदक्संस्थं प्राक्संस्थं पश्चिमे भवेत् ॥

एतच्च विपुलस्थानसंभवे । असंभवे तु कात्यायनेनोक्तं 'प्राञ्चं प्राञ्चमुदगग्नेरुदगग्रं समीपतः ।' इति देवयाज्ञिकाः ।
$ गभा. ८

[१]प्राग्बिलान्युदगग्राणि प्राक्संस्थान्यग्नितो यदि ।
प्रागग्रोदग्बिलान्यग्नेरुदक्संस्थानि चैव हि ॥

स्रुक्स्रुवसंमार्गः

[२]पुनः प्रतप्य तौ मन्त्री दर्भानग्नौ विनिक्षिपेत् ।
आत्मनो दक्षिणे भागे स्थापयेत्तौ कुशान्तरे ॥

तौ स्रुक्स्रुवौ । स्रुवस्यायं संस्कारो होमार्थः । एवं च दृष्टार्थता तत्संस्कारस्य । अतः संस्कारविस्मरणे प्रायश्चित्तपूर्वकं प्रागन्त्यहोमात् कार्यः । ऊर्ध्वं तु प्रायश्चित्तमात्रम् ।
* संग. ३७

त्यागस्य होमात्प्राक् कर्तव्यता

[३]आदौ द्रव्यपरित्यागः पश्चाद्धोमो विधीयते ।
प्रयोग इदमिन्द्राय न ममेति यथार्थतः ॥
अवत्तं तु त्यजेदन्नं मनसा वचसाऽपि च ।
ततश्च प्रक्षिपेदग्नाविति धर्मः सनातनः ॥
अत्यक्त्वा जुहुयाद्यस्तु मोहेनान्वितमानसः ।
देवा हव्यं न गृह्णन्ति कव्यं च पितरस्तथा ॥
यत्किंचिज्जुहुयादग्नौ तत्सर्वं त्यागपूर्वकम् ।
अन्यथा जुहुयाद्यस्तु नरकं स तु गच्छति ॥

---

$ संग., संदी. गभागतम् ।

(१) संर. ५० गृह्यकारिकासु.

(२) संर. ५३.

(३) गभा. ८ ; संग. ३१ ; संदी. ३०.

* संदी. संगगतम् ।

(१) संग. ३१ ; संदी. ३०.

(२) संग. ३७ (=) ; संदी. ३६.

(३) संदी. ४१ देवयाज्ञिकभाष्ये कारिकायाम्.

## द्वितीयो भागः समाप्तः ॥